श्रीमन्महर्षिकात्यायनप्रणीतं

# कात्यायनश्रौतसूत्रम्

(शुल्बसूत्रवृत्तिः सहितम्)



श्रीविद्याधरशर्मणा

॥ श्रीः ॥

व्रजजीवन प्राच्यभारती ग्रन्थमाला

४६

श्रीमन्महर्षिकात्यायनप्रणीतं

# कात्यायनश्रौतसूत्रम्

( शुल्वसूत्रवृत्तिः सहितम् )

श्रीविद्याधरशर्मणा

विरचितया सरलाख्यया वृत्त्या समेतम् ।




चौखम्बा संस्कृत प्रतिष्ठान

३८ यू. ए., बंगलो रोड, जवाहरनगर

दिल्ली ११०००७

प्रकाशक

**चौखम्बा संस्कृत प्रतिष्ठान**

( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )

३८ यू. ए. बंगलो रोड, जवाहरनगर

पो० बा० नं० २११३

दिल्ली ११०००७

दूरभाष : २३६३९१



द्वितीय संस्करण 2005

मूल्य 700.00

अन्य प्राप्तिस्थान

**चौखम्बा सुरभारती प्रकाशन**

के० ३७/११७, गोपालमन्दिर लेन

पो० बा० नं० ११२९, वाराणसी २२१००१

दूरभाष : ५७२१४

*

प्रधान वितरक

**चौखम्बा विद्याभवन**

चौक ( बनारस स्टेट बैंक भवन के पीछे )

पो० बा० नं० १०६९, वाराणसी २२१००१

दूरभाष : ६३०७६

मुद्रक

**श्रीजी मुद्रणालय**

वाराणसी

VRAJAJIVAN PRACHYABHARATI GRANTHAMALA

46



# THE SRAUTASŪTRA OF KĀTYĀYANA




CHAUKHAMBA SANSKRIT PRATISHTHAN
38 U. A. Bungalow Road, Jawaharnagar
DELHI 110007

श्रीगणेशाय नमः ।

# भूमिका ।

अथेदानीं महर्षिकात्यायनप्रणीतं श्रौतसूत्रं सरलया विबुधमनोरञ्जन्या भावगर्भितया वृत्त्या संयोज्य मुद्रयित्वा प्रकाश्यते । सूत्रमिदमनेकैः पूर्वाचार्यैर्विवृतं भाषितं व्याख्यातं च । तत्र कानि चन इदानीमुपलभ्यन्ते, कानि चन अर्द्धोत्सन्नानि, कानि चनात्यन्तं विलीनानि ।

इदानीं हि मदुपलम्भगोचरं भाष्यचतुष्टमेव । तत्र सर्वोत्तरबुद्धिभिः कर्काचार्यैर्विरचितमेकं भाष्यम् । इदमेव च विद्वत्कुलेन भाष्यान्तरललामतया लाल्यते शिरसा । ततः सम्प्रदायसंज्ञकं भाष्यं द्वितीयां कोटिमाटीकते । यद्यपीदमाचार्यकर्कभाष्यादपि प्राचीनमित्यवगम्यते; यतः कर्काचार्यैरेव अस्य नाम बहुत्रोल्लिखितम् , ( १ ) तथापि गौरवे द्वितीयकक्षामेवावलम्बते । ततोऽनन्तदेवकृतं भाष्यम् । अपरं देवयाज्ञिककृतम् ।

एतेष्वपि भाष्येषु अनन्तदेवकृतं न समग्रमुपलभ्यते । मन्निकटे पञ्चमाध्यायप्रभृति दशमपर्यन्ता अध्यायाः, अष्टादशोऽध्यायः, एकविंशत्यध्यायप्रभृति चतुर्विंशत्यध्यायपर्यन्तम्, (५–१०, १८, २१–२४) आहत्य एकादशाध्याया वर्तन्ते । अवशिष्टं भाष्यत्रयं सम्पूर्णमुपलभ्यत एव ।

इतोऽप्यन्यानि भाष्याणि व्याख्यानानि च प्राचीनान्यासन्, तानि तु अधुना नाममात्रावशिष्टानि, स्वरूपत उच्छिन्नान्येव ।

अनन्तदेवो हि स्वग्रन्थारम्भे—(२)

"मुनिं कात्यायनं कर्कं पितृभूतिं तथाऽऽदिमान् ।
यशोगोपिं भर्तृयज्ञं तथा भाष्यकृतोऽपरान् ।
पद्धत्यादिप्रणेतॄंश्च जनकं वेददान् गुरून् "

---

( १ ) काशी चौखम्भा संस्कृत सीरीज यन्त्रालय मुद्रिते पुस्तके—

| | |
|---|---|
| पृ० १२८ | पृ० ४६८ |
| १४४ | ४७२ |
| १४७ | ४७३ |
| १७४ | ५०८ |
| २४७ | ५३५ |
| २७२ | ५३७ |
| २८५ | ५३९ |
| ३९६ | ५४५ |
| ४१९ | ५८६ |
| ४२५ | ६६९ |
| ४४२ | ७०४ |
| ४६७ | एषु पृष्ठेषु द्रष्टव्यम् । |

( २ ) जर्मनमुद्रितकात्यायनश्रौतसूत्रपुस्तकभूमिकायाम् पृ० २ द्रष्टव्यम् ।

इत्यादिना प्राचीनानां भाष्यादिप्रणेतॄणां नाम उल्लिखति । अग्रे स्वग्रन्थप्रयोजन-दर्शनावसरे च (१) "किं च भर्तृयज्ञभाष्यमल्पन्याख्यायुतं न दृढन्यायनिरूप्यवैकृत-कर्मविवृतिसमर्थम् । पितृभूतिकृतं च श्रुतिमात्रनिरूपणपरम् । तत्र पर्यायोऽपि शब्दान्तरेण काचित्क एव । तस्मात् सम्भावनाऽपि वैकृतसिद्धेर्न घटते । ननु कर्कभाष्यमनेकन्याययुतं युक्तिभिः सुदृढं सर्वसन्दिग्धनिर्णयप्रयोगविध्यपेक्षिततत्तदंशप्रपूरकं भविष्यति । सत्यम्, तदपि जैमिनीयशास्त्रसंस्कृतबुद्धिपरिनिष्पन्नत्वात् त्यक्तसूत्रश्रुत्यभिप्रायम् । जैमिनीयपक्षस्य श्रुतिसूत्रविरुद्धपक्षसमाश्रितं कथमेतच्छाखाप्रमाणप्रमातॄणां तदाश्रित्य कर्मानुष्ठातुं चित्त-मुत्सहते । वसुदेवकृतं कर्कपरिशेष इति स्वयं वसुदेवेनोक्तम् । तत्परिशिष्टत्वात् तदनु-रूपत्वात् तदपि स्वशाखाविरुद्धम् । अतोऽस्यास्त्यवसरः प्रणयने, येनाऽऽर्जवेन सूत्राण्य-र्थपराण्येष्यन्ते, श्रुतिविरुद्धं त्यज्यते, विद्यमानं स्वश्रुतौ विषयवाक्यं परिगृह्यते । छेदयिष्यन्ते घनतराः सन्देहाः, पूर्वभाष्येभ्यो बहुत्रार्थविशेषा निरवशेषयिष्यन्त इत्यारभ्यते भाष्यम्" इति कथयति ।

यथा सम्प्रदायस्योल्लेखः कर्काचार्येण कृतः, एवं पितृभूति (२) यशोगोप्यो (३) र्व्याचार्ययोरुल्लिखिते नामनी । भर्तृयज्ञस्य तु न कुत्रापि नामोल्लिखितं कर्काचार्येण । अतः पितृभूति-यशोगोपि-सम्प्रदायकृतानि भाष्याणि कर्काचार्यात्पूर्वस्मिन्नपि काले प्रसिद्धान्यासन् । अनन्तदेवकालपर्यन्तमपि तेषां प्रचारः समीचीन आसीत् । भर्तृयज्ञस्य भाष्यं परं कर्कभाष्या-दर्वाचीनमवगम्यते ।

सत्स्वप्येषु सर्वेष्वपि भाष्येषु कर्कभाष्यस्यैव सर्वोत्कृष्टतां मनुतेऽनन्तदेवः । यतः पूर्वोक्तश्लोके 'कात्यायनं मुनिं कर्कम्' इति महर्षेः कात्यायनादनन्तरकक्षायामेवाचार्यं कर्कं निक्षिप्तवान् ।

यथा भाष्याण्यारचितानि पूर्वाचार्यैः, एवं पद्धतयोऽपि बह्व्य आरचिताः (४) प्राचीनैराधुनिकैश्चेत्यवगम्यते, यतोऽनन्तदेवेन भाष्यकृताऽपि 'पद्धत्यादिप्रणेतॄंश्च' इत्यादिना बहुवचनान्तपदेन पद्धतिकृत उल्लिखिताः ।

तासु प्राचीनासु पद्धतिषु सम्प्रदायकृता एका, देवयाज्ञिककृता चापरा सम्पूर्णे उपलभ्येते । अर्वाचीना अपि पद्धतयः याज्ञिकवल्लभा-पद्मनाभीया-भाणजीदीक्षितीया-देवभद्रीया च विशकलिता उपलभ्यन्ते (५) ।

एवमधुनाऽपि सत्स्वपि बहुषु भाष्यादिषु उत्सन्नावशिष्टेषु विविधविषयबहुलेषु न तेष्वाधुनिकानां मतिः सारल्यैकपक्षपातिनी कठिनपदगुम्फनदुर्ललिते पथि पदनिक्षेपमसह-माना सुलभं प्रवर्तते, किन्तु इक्षुदण्डमिव गलितरदनो भयात् दूरतः परित्यजति । तत्तादृशा-नत्युत्तमानपि ग्रन्थान् सूत्रार्थापरिज्ञानात्—

---

(१) ,, ,, पृ० ६ द्रष्टव्यम् ।

(२) काशीचौखम्भासंस्कृतसीरीजमुद्रणालयमुद्रितपुस्तके पृ० १२ पं० ४

(३) ,, पृ० १०० पं० १७,

(४) सूत्रभाष्यादौ सूत्रान्तरे चोक्तान् विषयान् प्रकृतोपयुक्तान् एकत्र सगृह्य अनुष्ठेयपदार्थानां तत्क्रमस्य च बोधको ग्रन्थः पद्धतिः ।

(५) सर्वेषां चतुर्णामेषामसमग्रा भागाः सन्ति मन्निकटे ।

"सूत्रार्थे क्लिश्यतश्चैवं दूरे वेदार्थनिर्णयः" ( श्लो० वा० १।३६ )

इति न्यायेन वेदवाक्यार्थनिर्णयः, तदुदितानां कर्मणां यथावत् परिज्ञानमेव च यदा दुःशकमभूदिदानींतनानाम्, तदा तेषामनुष्ठानं सर्वथा लुप्तप्रायमभूदित्यत्र किं वक्तव्यम् ।

बहवो हि जानन्त्येव न—किमग्निहोत्रम्, कौ वा दर्शपूर्णमासौ, कानि च चातुर्मास्यानि, कश्च सोमयाग इति । शास्त्रान्तरेषु पाणिनीयगौतमीयादिषु रात्रिन्दिवं परिश्राम्यन्तोऽपि, तत्र नवनवां कल्पनामाविष्कुर्वन्तोऽपि सुशिक्षितमतयः प्रभाशालिनो विपश्चिद्वरा अपि सर्वथा उपेक्षन्ते विद्यामिमां स्वस्य स्वावलम्बिताया विद्यायाः, स्वसम्पादनीयस्य धर्मकल्पतरोः, स्वप्राण्यस्य पुरुषार्थचतुष्टयस्यापि अवलम्बभूताम् इति तु नितरां दुःखाकरोति विचारशीलानां मनः ।

एवं प्रतिक्षणं ह्रासमुपेयुषीयं विद्या भाययत्यस्मान् कदाचिदचिरेणैवेयमात्मानं तिरोदध्यादस्मत्त इति । या हि धर्मैकतानस्थितौ अस्माकं भारते देशे सर्वत्र सर्वोत्कृष्टतया समुज्ज्वलति स्म प्राचीनेषु कालेषु, यस्याः परिपोषणार्थमेव सर्वाश्च विद्याः, सर्वाणि च शास्त्राणि, सर्वाश्च कला भारते देशे प्रवर्त्तिताः प्रवर्द्धिताश्च, यामेव चोज्ज्वलयितुं जैमिन्यादयः सर्वज्ञकल्पा महर्षयः सर्वप्रकारेण प्रायतन्त, यस्याः परिज्ञानं विना आत्मानं विद्यावन्तमेव न मन्वते स्म प्राचीनतमाः पण्डिताः, यामेव च वयमधुना स्वरूपापरिज्ञानेऽपि श्रुत्यैव परमर्हयामः, तामिमां सर्वाधारभूतां सर्वप्रकारेणाप्यस्मान् रक्षन्तीं सर्वथा पर्यत्यजाम कृतघ्ना इव मातरमिति कियदस्माकं शोकस्थानमिति विभावयन्तु सचेतसः । एवं मर्तुकामामिमां तपस्विनीं विद्यां कथंचिदपि उज्जीवयितुकामोऽहं पूर्वोक्तानि भाष्यादीनि यथावदुपलब्धानि सङ्गृह्य, समीक्ष्य च, तत्रस्थान् परित्यज्य कठिनानंशान्, उपयुक्तानंशानादाय; तांश्च सरलैः शब्दराशिभिः सङ्ग्रथ्य सूत्रव्याख्यारूपेण समयोजयम्, येन च अपरिचितानामपि प्रवृत्तिरत्र सुलभा भवेत्, सूत्राक्षराणि च विना परिश्रममवगम्येरन् ।

विदितमेव हीदमस्मिन् ग्रन्थे परिशीलिनाम्—यत् इमानि सूत्राण्यतिकठिनानि गम्भीरं भावमन्तर्भावयन्ति मीमांसान्यायबहुलानि इति । अत एव बहुभिर्व्याख्यातान्यपि बहुत्रानाविष्कृतात्मभावान्येवाद्यावधि वर्तन्ते । अतो यद्यपि तत्तादृशानां सूत्राणां व्याख्याने प्रवृत्तिर्मादृशानामल्पमतीनाम्—

"मन्दः कवियशः प्रार्थी गमिष्याम्युपहास्यताम् ।
प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः" ( रघु० १।३ )

इति न्यायेन साहसिकतामेवापादयति, तथापि यदधिगतमस्मत्तातपादेभ्योऽखिलविद्यापारदृश्वभ्यो मूर्ताभ्य इव श्रौतविद्याभ्योऽस्मद्गुरुचरणेभ्यः, तदेव चात्र पुनरनुसंहितं दार्ढ्यार्थम् । तेन च यदि कश्चनोपकारलेशोऽप्येतद्विद्यामधिजिगमिषूणां कल्पेत, तदा एतावता कालेन यन्मयाऽत्र परिश्रान्तं तत्साफल्यमधिगच्छेदिति मत्वैव एतत्प्रकाशनार्थमुद्यतोऽहम् । अत्र तत्तत्प्रकरणव्याख्यानावसरे यागादीनां स्वरूपमत्यल्पैरेवाक्षरैर्वर्णितम् । न तावता तेषां स्वरूपं साकल्येनावगन्तुमलम् । अतोऽत्र सुपरिज्ञानार्थं तत्स्वरूपवर्णनादिकमपि भूमिकायामवश्यमापतति । अतो यथामति सूत्रपद्धत्याद्यनुसारेण तेषां स्वरूपमुपवर्णिष्यते । तत्र यस्तावदेषां सर्वेषां कर्मकलापानामावेदको ग्रन्थराशिर्वेदपदाभिधेयः, स कीदृशः, स कथं प्रमाणभूतः, स पुरुषकृतो नित्यो वा, कियांस्तत्र भेद इत्यादिकं सङ्ग्रहेण निरूप्यते ।

## ( वेदपदार्थः )

तत्र कोऽसौ वेदपदार्थ इति प्रथमं निरूप्यते। वेदशब्दो हि विद् धातोः करणप्रत्यये कृते निष्पन्नो भवति। वेद्यन्ते ज्ञाप्यन्ते धर्मादिपुरुषार्थचतुष्टयोपाया येन स वेद इति। अत एव च "इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः" इति सायणाचार्यैः कृष्णयजुर्भाष्यभूमिकायां, ऐतरेयभाष्यभूमिकायां चोक्तम् ( १ )। तदुपोद्बलकत्वेन—

"प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता "

इति प्रमाणमपि प्रदर्शितम्। एवं च प्रत्यक्षादिभिः प्रमाणान्तरैर्योऽर्थोऽनवगतः तादृशमर्थं स्वर्गादिरूपश्रेयःसाधनीभूतं यः शब्दराशिरावेदयति स एव वेदशब्दार्थ इति निश्चेतव्यं भवति। अनेन चैवाशयेन 'मन्त्रब्राह्मणात्मकः शब्दराशिर्वेदः, अलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः' इत्यादिना शब्दसमुदायस्यैव वेदपदाभिधेयतामभ्युपगच्छन्ति प्राचीनग्रन्थकृतः।

## ( वेदशब्दस्य ग्रन्थपरत्वम् )

एवं विद्याशब्दोऽपि ग्रन्थराशौ प्रयुक्तः, त्रयीशब्दोऽपि च। "सैषा त्रय्येव विद्या तपति" (तै० आ० १०प्रपा० १४ अनु०, श० ब्रा० १०।३।६।२,) "त्रयी वै विद्या" (श० ब्रा० ४।६।७।१,) "स यावतीयं त्रयी विद्या तावद्ध जयति" (बृ० ५।१४।२) इत्यादि। एवं च यथा वेदशब्दः अलौकिकार्थावेदकशब्दराशौ प्रयुज्यते, एवं विद्याशब्दोऽपि तत्रैव प्रयुज्यते। अत एव च—

"पुराण-न्याय-मीमांसा-धर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश " ( या०स्मृ० १।२)

इति शब्दराशावेव विद्याशब्दः प्रयुक्तः। अत एव च "द्वे विद्ये वेदितव्ये परा चैवापरा च, तत्र परा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः" ( मुण्ड० १।४ ) इत्यत्र विद्याशब्दसमानाधिकरणो वेदशब्दोऽपि शब्दराशिपरक एवेत्यध्यवसीयते।

"आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती।
विद्या ह्येताश्चतस्रस्तु लोकस्य स्थितिहेतवः "

इत्यपि विद्याशब्दस्य ग्रन्थपरतामवबोधयत्सु तस्य केवलं ज्ञानमात्रपरत्वं स्वमनीषामात्रेण कल्पयन्तः स्वामिदयानन्दप्रभृतयः, तदनुसारिणो वेदसर्वस्वकारादयश्च कथमुपादेयवचना इति विचारयन्तु विमर्शका एव।

श्रुतौ तावत् अकारान्तो वेदशब्दो द्विप्रकारः समुपलभ्यते-आद्युदात्तः, अन्तोदात्तश्च। तस्य अर्थोऽपि द्विविधः। एकः शब्दराशिः, अपरो दर्भमुष्टिरिति ( २ )। तत्र ग्रन्थराशिवाचकः सर्वोऽप्याद्युदात्त एव ( ३ )। कुशमुष्टिवाचकस्तु अन्तोदात्तः ( ४ )। अनयोर्द्वयो-

( १ ) आनन्दाश्रमसंस्कृतसीरीजयन्त्रालये पृ० २ द्रष्टव्यम्

( २ ) दर्शपूर्णमासादिषु कर्मसु पुरोडाशादिलग्नभस्मापोहनादिकार्यार्थं पञ्चाशत्कुशपरिमितो वत्सजान्वाकृतिवद्धः कुशमुष्टिविशेषो वेदः।

( ३ ) अथ० ४।३५।६, ७।५७।१। तै० ब्रा० ३।१०।११।४७, ३।१२।९।४९ द्रष्टव्यम्

( ४ ) अथ० ७।३९।१, द्रष्टव्यम्।

वेदशब्दयोराद्युदात्तान्तोदात्तयोः सिद्ध्यर्थमेव भगवता पाणिनिनाऽपि उञ्छादिगणे (१) वृषादिगणे च (२) वेदशब्दद्वयं पठितम् ।

तत्र कुशमुष्टिवाचको रूढः, (३) तत्रावयवव्युत्पत्तेरसंभवात् । ग्रन्थराशिवाचकस्तु योगरूढ (४) इत्येवाभ्युपगन्तव्यम् । केवलयौगिकत्वस्वीकारे ज्ञानमात्रेऽतिप्रसक्त्या योगरूढेरवश्यमङ्गीकरणीयत्वात् । अमुमेव चार्थं मनसि निधाय 'अलौकिकमर्थं यो वेदयति स वेदः' इति वेदलक्षणमुक्तं सायणाचार्यादिभिः । अतः केवलयौगिकशब्द (५) एव नाभ्युपगन्तुं शक्यत इति कथमिदं कुशकाशावलम्बनं कृतं वेदसर्वस्वकारेणेति न वयं प्रतीमः ।

स च ग्रन्थराशिर्वेदपदाभिधेयः केवलं मन्त्रात्मक ? उत ब्राह्मणभागोऽपि इतीदमत्र किंचिद्विचार्यते ।

## ( ब्राह्मणभागस्यापि वेदत्वम् )

तत्र तावत् अस्मत्प्राचीनतमा महर्षयः कल्पसूत्रादिकारास्तीर्थकृतश्च मन्त्रब्राह्मणयोरुभयोरपि वेदत्वं निःसंशयमभिदधति । भगवता बौधायनेन "मन्त्रब्राह्मणमित्याहुः" (बौ० गृ० २।६।२) इति स्वकीये धर्मसूत्रे, "आम्नायः पुनर्मन्त्राश्च ब्राह्मणानि" (कौ० सू० १।३) इति कौशिकेन, आपस्तम्बकात्यायनाभ्यां च "मन्त्रब्राह्मणयोर्वेदनामधेयम्" (आप० यज्ञप० २४।१।३१, कात्या० प्रतिज्ञाप० १।१) इत्युभयोरपि भागयोर्वेदत्वमभ्युपगतम् । अतिगहने दुरधिगमानेकमार्गगभीरे अपरिमेयान्तःसारे वेदकान्तारे स्वच्छन्दं विहरता जैमिनिकेसरिणाऽप्ययमेवाशयः साधु सङ्कटितः स्वकीये मीमांसादर्शने । एतदुपोद्बलकानि कानिचन तदीयानि सूत्राण्युदाह्रियन्ते—अपौरुषेयत्वाधिकरणे तावत् वेदभागस्य प्रामाण्यनिश्चायके—"वेदांश्चैके सन्निकर्षं पुरुषाख्याः" (जै० १।१।२७) इति प्रथमं सूत्रम् । एके नैयायिकादयो वेदान् सन्निकृष्टकालकृतान् मन्यन्ते । यतस्ते पुरुषाणां कठकलापादीनां नाम्ना व्यवह्रियन्ते इति तदर्थः । तत्र वेदभागस्य सर्वस्यापि पुरुषकृतत्वं पूर्वपक्षितम् । अनन्तरम्—"अनित्यदर्शनात्" (जै० १।१।२८) इत्यपरं सूत्रम् । अनित्यानां जरामरणवतां बबरादीनां पुरुषाणां दर्शनादपि वेदानामनित्यत्वमिति तदर्थः । अनेन सूत्रेण "बबरः प्रावाहणिरकामयत" (तै० सं० ७।२।) "कुसुरुबिन्द औद्दालकिरकामयत" (तै० सं० ७।२।२) इत्यादीनि ब्राह्मणवाक्यान्येवाभिसंहितानीत्यवगम्यते । तथैव चोदाहृतं भाष्यकारादिभिः सर्वैरपि ।

यदि पूर्वसूत्रे जैमिनिर्भगवान् मन्त्रभागस्यैव वेदत्वममंस्यत कथं सूत्रमिदं ब्राह्मणभागसङ्ग्राहकमारचयिष्यत । "वेदसंयोगात्" (जै० ३।४।२२) इति सूत्रेणापि "तस्मात्सुवर्णं हिरण्यं भार्यं दुर्वर्णोऽस्य भ्रातृव्यो भवति" इति वाक्यविहितस्य सुवर्णधारणस्य वेदेन सह संयोगोऽभिधीयते । अत्र हि सुवर्णधारणस्य पुरुषार्थत्वम् (६)

---

(१) पाणि० ६।१।१६० ।
(२) पाणि० ६।१।२०१ ।
(३) यः प्रकृतिप्रत्ययावनपेक्ष्य केवलसमुदायशक्त्या स्वार्थमभिधत्ते स रूढ इत्युच्यते ।
(४) यः प्रकृतिप्रत्ययावपेक्ष्य समुदायशक्त्याऽर्थमभिधत्ते स योगरूढः ।
(५) यः प्रकृतिप्रत्यययोर्योगमात्रेणार्थं प्रतिपादयति स यौगिकः ।
(६) पुरुषाभिलषितफलजनकत्वं पुरुषार्थत्वम् ।

उत क्रत्वर्थत्वम् ( १ ) इति सन्दिह्य वेदे 'आध्वर्यवम्' इति समाख्याते ( २ ) वेदभागे संयोगात्=सम्बन्धात् तस्य चाग्निहोत्रादिधर्मविधायकत्वात् तादृशकर्मधर्म एवेदं सुवर्णधारणमिति पूर्वपक्षाशयः। यदि ब्राह्मणभागस्य वेदत्वं नाभविष्यत् तादृशब्राह्मणवाक्यविहितस्य सुवर्णधारणस्य कथं वेदसंयोग उपापत्स्यत। एवं "वेदो वा प्रायदर्शनात्" (३।३।२) वेदसंयोगान्न प्रकरणेन बाध्येत" (३।३।८) "वेदोपदेशात्पूर्ववद्वेदान्यत्वे यथोपदेशं स्युः" (जै० ३।७।५०) "संस्कारास्तु पुरुषसामर्थ्ये यथावेदं कर्मवद्व्यवतिष्ठेरन्" (जै० ३।८।३) इत्यादीनि सूत्राणि ब्राह्मणभागस्यापि वेदत्वं परिपोषयन्ति। एतेषामर्थो नात्र विस्तरभयाल्लिख्यते। स च शाबरभाष्यादिमीमांसाग्रन्थतोऽवगन्तव्यः। एवं सर्वैरपि सूत्रकारैर्महर्षिभिर्मन्त्रब्राह्मणयोरुभयोरपि वेदत्वं निःशङ्कमभ्युपगतम्।

अत्र केचिदेवं प्रत्यवतिष्ठन्ते—बौधायन-कात्यायनापस्तंबादिमहर्षीणां तावन्न मन्त्रब्राह्मणयोरुभयत्रापि वेदत्वमभिमतमासीत्, तन्मतानुयायिभिश्च सायणादिभिराचार्यैरपि तदेवोररीकृतम्। परन्तु केचिदाधुनिका ब्राह्मणग्रन्थेष्वेव "य एवं वेद" (तै०ब्रा० ३।८।६, श०ब्रा० १।६।३।१३) इति बहुत्र दर्शनाद् ब्राह्मणग्रन्थानामेव प्रथमं वेदपदाभिधेयता उपक्रान्ता। ततो गच्छति महति काले मन्त्रेष्वपि वेदशब्दः प्रयोक्तुमुपक्रान्तः। अस्माभिस्तु मन्त्रभागस्यैव पुराऽऽसीद्वेदपदवाच्यता। ततश्चिराय ब्राह्मणेऽपि स प्रयुक्त आसीत्, यतो हि वेदशब्दो विद्यापरपर्यायः। मन्त्रभाग एव च सर्वासां विद्यानां निदानमासीत्। अतश्च कारणाद् विद्याऽपरपर्यायवेदशब्दवाच्यत्वं मन्त्राणामेवाभिप्रेयते। सूत्रकाले परं मन्त्रब्राह्मणयोरुभयत्रापि वेदशब्दः प्रयुक्त आसीत्—इति। तत्र च ददति च बहूनि प्रमाणानि "वेदेन रूपे व्यपिबत्सुतासुतौ" ( शु. य. १९।७८ ) "यस्मिन्वेदा निहिता विश्वरूपाः" ( अथ० ४।७।६ ) "त्रयो वेदा अजायन्त अग्नेर्ऋग्वेदो वायोर्यजुर्वेदः, सामवेद आदित्यात्" ( ऐ० ब्रा० २५।७ ) "वेदा वा एते, अनन्ता वै वेदाः" ( तै० ब्रा० ३।१०।११।४ ) "स होवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमथर्वाणं चतुर्थम्" ( छां० ७।१।२ ) इत्यादीनि। एवमुदाहृतेषु प्रमाणेषु श्रूयमाणो वेदशब्दस्त्रयीमन्त्रपरकः। अतश्च त्रय्यपरपर्यायो वेदशब्दो मन्त्रभागमेवाभिधत्ते, न ब्राह्मणभागमिति तेषामभिसंहितम्।

अत्रेदं विचार्यते—प्रथमं तावदिदंवादिन एवं पृच्छामः—त्रयीशब्दो मन्त्रमात्रपरक इति कथमेभिरवगतमिति। यान्येभिरुदाहृतानि वाक्यानि "त्रयो वेदा अजायन्त" इत्यादीनि, तेषु वेदशब्दो मन्त्रब्राह्मणोभयपरको नेत्यत्र किं प्रमाणम्। इमान्येव वाक्यान्युदाहृत्य जैमिनिना द्वितीयाध्याये तृतीये पादे प्रथमाधिकरणे विचारितम्—"उच्चैर्ऋचा क्रियत, उपांशु यजुषा, उच्चैः साम्ना" ( ऐ० ब्रा० ५।५।५ ) इत्यादिवाक्यविहितानामुच्चैस्त्वादीनां ऋङ्मात्रधर्मत्वम्, उत ऋग्वेदादिविहितकर्मधर्मता ? इति। तत्र ऋगादिशब्दानामपि ऋग्वेदपरत्वं बहुत्र श्रुतमिति भाष्यकारेणोदाहृतं—यथा "ऋगादयः शब्दाः शक्नुवन्ति वेदमभिवदितुमिति 'ऋग्भिः पूर्वाह्णे देव ईयते, यजुर्वेदे तिष्ठति मध्य अह्नः, सामवेदेनास्तमये महीयते, वेदैरशून्यस्त्रिभिरेति सूर्यः" ( तै० ब्रा० ३।१२।९ ) इति द्वौ वेदौ संकीर्त्य ऋक्शब्दं

---

( १ ) क्रत्वपेक्षितोपकारजनकत्वं क्रत्वर्थत्वम्।

( २ ) श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यारूपेषु षट्सु प्रमाणेषु अन्तिमं प्रमाणं समाख्या। सा च यौगिकशब्दरूपा।

च त्रिषु पादेषु, चतुर्थे पादे उपसंहरति बहुवचनेन, 'वेदैरशून्यस्त्रिभिरेति सूर्य इति" (शा० भा० ३।३।३) इति (१)।

अस्मिन्मन्त्रे प्रथमत 'ऋग्भिः पूर्वाह्ण' इति ऋक्शब्देनोपक्रम्य अनन्तरमुभयत्र वेदशब्दं पठित्वा उपसंहारे च 'वेदैरशून्यस्त्रिभिः' इति वेदत्रयप्रतिपादनात् ऋक्शब्दस्यापि वेदपरकत्वमेवेति भाष्याभिप्रायः। एवं "त्रयी विद्याख्या च तद्विदि" (जै० ३।३।५) इति सूत्रस्थेन "यस्त्रीन् वेदानधीते स त्रयीविद्यः। ऋक्सामयजूंषि इति त्रयो वेदा उच्यन्ते। तद्विदि त्रयीविद्याख्या युज्यते" इति भाष्येण ऋगादिपदानां मन्त्रब्राह्मणात्मकवेदपरत्वं, त्रयीशब्दस्यापि च तत्परत्वमेवेति सुस्पष्टमवगम्यते। यदि त्रयीशब्दस्य मन्त्रमात्रपरत्वं "त्रयो वेदा अजायन्त" (ऐ० ब्रा० २५।७) इति ब्राह्मणवाक्यस्थवेदशब्दस्य च भवदभिप्रेतमन्त्रात्मकत्रयीमात्रपरत्वं सूत्रकारेण भाष्यकारेण वाऽभिप्रेतं स्यात्, तर्हि सिद्धान्ते ऋग्वेदादिविहितकर्ममात्राङ्गत्वमुच्चैस्त्वादीनामिति कथं ताभ्यां सिद्धान्तितं सङ्गच्छेत।

किं च यतो भाष्यकारेणोदाहृतमिदम्-"ऋग्भिः पूर्वाह्णे" इति, सोऽयमनुवाकः "ऋचां प्राची महती दिगुच्यत" (तै० ब्रा० ३।१२।९) इत्यारभ्यते, तत्र इयमानुपूर्वी दृश्यते—"ऋचां प्राची महती दिगुच्यते। दक्षिणामाहुर्यजुषामपाराम्। अथर्वणामङ्गिरसां प्रतीची। साम्नामुदीची महती दिगुच्यते। ऋग्भिः पूर्वाह्णे दिवि देव ईयते। यजुर्वेदे तिष्ठति मध्य अह्नः। सामवेदेनास्तमये महीयते। वेदैरशून्यस्त्रिभिरेति सूर्यः। ऋग्भ्यो जातं वैश्यं वर्णमाहुः। यजुर्वेदं क्षत्रियस्याहुर्योनिम्। सामवेदो ब्राह्मणानां प्रसूतिः" (तै० ब्रा० ३।१२।९) इति।

तत्र प्रथमतः "ऋचाम्" "यजुषाम्" "साम्नाम्" इति ऋगादिशब्दान् प्रयुज्य 'ततऋग्भिः', "यजुर्वेदे" "सामवेदे" इति वेदशब्दसंयुक्ततया पठित्वा अन्ते 'वेदैरशून्यस्त्रिभिरिति वेदशब्दसंवलिततयैवोपसंहृतम्। तत्र पूर्वोत्तरसन्दर्भपर्यालोचनया यजुर्वेदशब्दस्येव ऋग्यजुरादिशब्दानामपि तत्तद्वेदपरत्वमेवेत्यकामेनाप्यभ्युपगन्तव्यं भवति। अत ऋगादिशब्दा ऋग्वेदपरका इत्यत्र इतः परं किमधिकमन्वेष्टव्यं प्रमाणम्। वेदशब्दश्च मन्त्रब्राह्मणोभयपरक इति च निरूपितमधस्तात्। मन्त्रश्चायं वेदत्रयसहचरितत्वं वेदत्रयात्मकत्वं वा भगवतः सूर्यस्यावेदयति इति निर्विवादम्। तैत्तिरीयान्तर्गतः "आदित्यो वा एष एतन्मण्डलं तपति" (तै० आ० १०।१३) इत्युपक्रान्तः सर्वोऽप्यनुवाकोऽमुमेवार्थं सुस्पष्टं निरूपयति। अतश्च 'ऋचां प्राची' इत्यनुवाकस्य अस्य चानुवाकस्य एकार्थतैव प्रतीयते इति तदनुवाकेन भगवतः सूर्यस्य ऋग्वेदादिसहचरितत्वप्रतिपादनात् अत्रापि तदेव प्रतिपादनीयम्। एतदनुवाकान्तर्गतं च वाक्यमेकं श्रूयते "सैषा त्रय्येव विद्या तपति य एषोऽन्तराऽऽदित्ये हिरण्मयः पुरुषः" (तै० आ० १०।१३) इति। वाक्यमिदं पूर्वोक्तार्थस्योपसंहारकम्। अतश्च मन्त्रब्राह्मणात्मकभागमेव त्रयीशब्दोऽप्यभिदधाति न मन्त्रमात्रमिति सुस्पष्टमेतत्प्रमाणेनावगम्यते। एवं बहून्यपि प्रमाणानि वेदादेवोदाहर्तुं शक्यन्ते यद्यपि, तथापि अतिविस्तरभयाद् दिङ्मात्रमिह दर्शितम्। अतो वेदशब्दः, ऋगादिशब्दः, त्रयीशब्दो वा मन्त्रब्राह्मणात्मकस्यैव भागस्याभिधायक इति प्रमाणेन सिद्ध्यति। यानि च तदुदाहृतानिसाभिप्रायावष्टम्भकत्वेन प्रमाणानि, तान्यपि तन्मतं पोषयितुं नेशन्त इति केवलस्य मन्त्रभागस्यैव वेदपदवाच्यत्वमभ्युपगच्छतां न किंचिदाग्रहादन्यत्प्रमाणं पश्यामः।

---

(१) काशीचौखम्भासंस्कृतसीरीजमुद्रितपुस्तके पृ. १९१ द्रष्टव्यम्।

## ( वेदापौरुषेयत्वम् )

इदानीं स मन्त्रब्राह्मणात्मकः शब्दराशिर्वेदपदाभिधेयोऽस्मादृशैः पुरुषैः प्रत्यक्षादि-प्रमाणैरवगतानर्थान् परान् प्रत्याययितुं तदावेदकशब्दान् सङ्ग्रथ्य वेदात्मना विरचितः ? उत ? सर्वज्ञेन सर्वशक्तिमता परमेश्वरेण विरचय्य लोके प्रख्यापितः। अथवा कालाकाशा-दिवत् नित्य एवायं शब्दराशिः केनापि नोत्पादित इति विचार्यते।

तत्र केचिदेवमाशेरतेऽधुनातनाः पाश्चात्याः पण्डिताः—(१) योऽयं मन्त्रब्राह्मणात्मना द्विधा विभक्तो ग्रन्थराशिरार्याणां धार्मिकेषु ग्रन्थेषु उच्चतमां कोटिमधितिष्ठति. स आर्यावर्त-निवासिभिः प्राचीनैर्बहुवेदिभिर्महर्षिभिरेव तात्कालिकीं परिस्थितिमपरोक्षीकृत्य तामेव च ग्रन्थारूढां कर्तुमारचितो ग्रन्थराशिरेव। अत एव यत्र ते न्यवात्सुः, तत्रत्यानां नदीनां पर्वतानां च नामानि बहून्युल्लिखितानि। तत्काले च या या देवतास्तेषां मनसि स्फुरिता आसन् तास्तास्तैः स्तुता मन्त्रेषु। त एव मन्त्रा एकत्र सङ्घीकृता ऋग्वेद इत्युच्यते। अयमेव ऋक्संहिता इति चोच्यते। सर्वापेक्षया प्राथमिकोऽयं ग्रन्थः। गच्छति च कस्मिंश्चन काले ततो यजुर्वेदस्तत्कुलीनैरेव कैश्चिन्महर्षिभिरारचित इत्यादि। तत्रापि च मन्त्रभागानां प्रथमं निर्माणं, पश्चाद् ब्राह्मणभागानाम्। एवं मन्त्रब्राह्मणयोर्महर्षिप्रणीतत्वे सिद्धे कोऽसौ कालो भवितुमर्हति यत्र वेदाः प्रणीता इति जिज्ञासायां समुदितायाम् ईसवीयशताब्द्याश्चतुः सहस्रेभ्यो वर्षेभ्यः पूर्वं नैवासन् वेदाः। तदनन्तरमेव सर्वेऽपि वैदिका ग्रन्थाः समारचिताः। अतश्च ईसवीयाब्दारम्भात्पूर्वं चतुःसहस्रानन्तरकालमेव रचनाय समारब्धो वेदराशिः क्रमशस्तैस्तैर्महर्षिभिरारचितः प्रवृद्धिं गतः। तादृशी च रचना ईसवीयशताब्द्यावधि किञ्चित्कालपर्यन्तमपि अनुवृत्ताऽभूत्। तत्रापि मन्त्राणां रचनं पूर्वं, ततो ब्राह्मणभागस्येति।

अत्रेदमार्यावर्तनिवासिभिः सूक्ष्मेक्षिकया विचारणीयम्। इतो वर्षसहस्रद्वितयात्पूर्वं भगवान् पतञ्जलिरासीत् इति तैरेव पाश्चात्यपण्डितवर्यैर्निर्णीतं बहुत्र बहुभिः। ततोऽपि बहु प्राचीनकालं समलंकृतवान् महर्षिर्जैमिनिः। ततोऽपि प्राचीनतमः कश्चन मीमांसाचार्यः काश-कृत्स्निरासीत् इति भगवत्पतञ्जलिभाष्यालोकनेनैवावगम्यते। यत उक्तं तैः "काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी" (पा० ४।१।१ आ०) इति। पाणिनिसमकालिकेन महर्षिणा कात्यायनेनापि स्वग्रन्थेऽनूदितोऽयं काशकृत्स्निः"। "सद्यस्त्वं काशकृत्स्निः" (४।३।१७) इति। पाणिनिकालश्च खिष्टजन्मतः पूर्वं सप्तमीशताब्दीति तैरङ्गीकृतम्। यद्यपीदं नास्मन्मनो रञ्जयति, यतः सत्यव्रतसामश्रमिणा निरुक्तालोचने कलेरष्टम्यामेव शताब्द्यां खिष्टजन्मतश्च प्राक् चतुर्विंशतिशताब्द्यामिममार्यावर्तं भूषयामास पाणिनिरिति बहुभिः प्रमाणैरुपपादि-तम्, तथापि पाश्चात्यपण्डितोक्तिपर्यालोचनयाऽपि इदं स्पष्टमवगम्यते—भगवान् काश-कृत्स्निराचार्य इतो वर्षसहस्रत्रितयात्पूर्वं भूमिमिमामलञ्चकारेति। तेन च वेदानामपौरु-षेयत्वं साधितमेव भवेदित्यप्यभ्यूह्यते।

यद्ययमभ्यूहः समञ्जसः स्यात्तदा तेनापि काशकृत्स्निना वेदकर्ता कश्चित् नैव श्रुतो न केवलम्, किन्तु अपौरुषेयत्वमेव तदानीं प्रथितमासीत् इत्यप्यभ्युपगन्तव्यम्। यदि नाम तत्कालाद् वर्षसहस्रात्पूर्वं वेदा रचिता अभविष्यन्, तदा कथं नाम नास्मरिष्यन् तदानीन्तनाः पुरुषाः, विशेषतो महर्षिराचार्यः काशकृत्स्निः सर्वज्ञकल्पः। वयमल्पमतयोऽपि यदि नाम इतो

(१) मेकडानलप्रभृति।

वर्षसहस्रत्रितयात् वर्षसहस्रचतुष्टयाद्वा पूर्वकालिकमितिहासमनुमातुं शक्नुयाम, तर्हि को नाम ताडृशो महान् प्रतिबन्ध एषामासीत् स्वपूर्वकालिकेतिहासापरिज्ञाने, येन ते सर्वथा-तमपरिज्ञाय वेदेऽपौरुषेयत्वं साधयन्ति । अन्तेऽपि प्राचीनकालिकैस्तत्तच्छास्त्राणां प्रवर्तयितृ-भिर्महर्षिभिः कैरपि वेदकर्ता न ज्ञात इति पूर्वोक्तैः प्रमाणैरवगम्यते । अत एव चात्र बहु-परिश्रान्तैर्मीमांसकैः प्राचीनैः सूत्रकारैस्ततः किंचिदर्वाचीनैर्भाष्यकारादिभिश्च वेदेऽपौरुषेयत्व-स्वीकरणं विना नान्या गतिरस्तीति मत्वैव तदङ्गीकृतम् ।

जैमिनिर्हि भगवान् पौरुषेयत्वखण्डनप्रस्तावे सूत्रयति—"उक्तं तु शब्दपूर्वत्वम्" ( १।१।२९ ) इति । तस्यायमभिसन्धिः—वयं तावत्पश्यामः, ये नाम अधीयते वेदमिदानींतनाः सर्वेऽपि, ते गुरुमुखादेवाधीयते; ये च तेषामध्यापयितारो गुरवस्तेऽपि स्वगुरोः सकाशाद-धीत्यैवाध्यापयन्ति, न पुस्तकादिकं स्वयं दृष्ट्वा । एवमेव सर्वदाऽपि इयमेवाध्ययनपरम्परा प्रचलति स्म इत्यनुमातुं शक्यते । इदमेव चानुमानमेतत्सूत्राऽभिप्रायभूतं विस्पष्टयति स्म वार्तिककारः—

"वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।
वेदाध्ययनसामान्यादधुनाऽध्ययनं यथा" ( श्लो० वा० वाक्याधि० ३६६ )

इत्यनेन वार्तिकेन ।

एवं च न कदापि तादृशः काल आसीत्, यत्र वेदा वा तदध्ययनं वा नासन् । किन्तु सार्वदिकोऽयं व्यवहारः प्रवर्त्तते स्म ।

किञ्च वयं ग्रन्थराशिमिममध्ययनेनाध्यापनेन वा मात्रामात्रमप्यपरित्यज्य पालयामः । तत्तादृशे सर्वैरीश्वरतुल्यतया संरक्ष्यमाणस्य पूज्यमानस्य ग्रन्थस्य यदि कर्ताऽपि कश्चित्स्यात् तर्हि कथं तं वयं प्रस्मर्तुमीश्महे परित्यक्तुं वेति ।

केचिदाशेरते—पुरुषनिर्मितत्वाङ्गीकारे दौर्बल्यं मन्यमानैस्तत्र दार्ढ्यसम्पादनायैव पौरुषेयत्वं जानद्भिरेव भवद्भिः स कर्ताऽपन्हुत इति ।

नेदं प्रेक्षावतां बुद्धिमनुरञ्जयति । यतो वयं भारतीया धर्मलिप्सवोऽद्यापि भारतभाग-वतादीन् ग्रन्थान् पुरुषकृतत्वेन निःसंशयं जानन्तोऽपि तत्र सुतरामादरातिशयमेव प्रकटीकुर्मः । पुरुषकृतत्वमभ्युपगच्छद्भिरपि व्यासवाल्मीकिप्रभृतिभ्योऽन्यूनमहिमभिरेव महर्षिभि रचितो वेदराशिरित्यभ्युपगन्तव्यं भवति । यद्येवं तादृशेषु महर्षिषु तत्र तेषु वा ग्रन्थेषु को नाम धार्मिकः पुरुषोऽनादरमाविष्कर्तुं प्रभवेत्, तानेकान्ततो विस्मरेद्वा । अतोऽवश्यं स्मर्तव्यानां पुरुषधौरेयाणां वेदकर्तॄणां कदापि यदा विस्मरणमद्यत्वे पूर्वतने वा नासीत्, तदा अस्य वेदराशेर्नास्त्येव कर्तेति निश्चय एव साधीयान् । कर्तुरुच्छेदो हि क्वचिद्देशस्यैवोच्छेदेन वा अध्येतृपुरुषाणां सर्वनाशेन वा भवितुमर्हति । न तदुभयमत्र संभाव्यते । यतो वयं तामेवानुपूर्वीमक्षरराशिं च तादृशमेवेदानीमप्यधीमहे । तत्र कर्ता परं विस्मृत इति साहस-मात्रमिदम् । अत एव दृश्यादर्शनबाधितोऽयं वेदेषु कर्ता ।

ये तावदस्मानेवोपहसन्ति—भवतामेव के चन तीर्थकारा वेदस्येश्वरकृतत्वमुद्घोष्य पौरुषेयतां विस्पष्टं साधयन्ति, कथं भवद्भिरन्यो देशान्तरीय उपालभ्यतेऽस्मिन्विषय इति, तान्प्रति इदमेव प्रतिवक्तुमभिलषामो वयम्, न तैस्तीर्थकारैः सहास्माकं विरोधः । नहि ते अस्मादृशपुरुषकृतत्वमर्वाचीनकालिकत्वं वा वेदस्याभ्युपगच्छन्ति । किन्तु सर्वज्ञस्य सर्व

शक्तिमतः परमेश्वरस्यैव तदङ्गीकुर्वते। नैतावता पञ्चषसहस्रेभ्यो वर्षेभ्यः पूर्वं नासीद्वेदराशिरित्यवगम्यते। न वयं पाश्चात्या इव ततः पूर्वं जगदभाववादिनः। अस्माकं तु कल्पा बहवः, तेऽपि कल्पपूर्वाः। अतोऽस्मिन् कल्पे वेदराशिरयं प्रथमं निर्मित इति केन वा सूक्ष्ममतिनाऽपि वक्तुं शक्यते।

"प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयत"

इति इदमपि पूर्वपूर्वकल्पे श्रुतेरस्तित्वमवबोधयति। पूर्वमन्वन्तरस्थितानुपूर्वीसदृशानुपूर्वीका एतत्कल्पीया श्रुतिरपि इति तु परं युक्तियुक्तमेव। अतो वेदराशेरीश्वरकृतत्ववादिनस्तेऽपि तीर्थकारा अपौरुषेयत्ववादिभ्यो मीमांसकेभ्यो नातिदूरं गच्छन्ति। परन्तु ईश्वरकृतत्वमपि न तैः प्रमाणेन साधयितुं शक्यते। किन्तु शब्दोच्चारणस्य लोके पुरुषकृतत्वदर्शनात् वैदिकस्यापि शब्दराशेः तदानुपूर्व्या वा पुरुषकृतत्वं सामान्यतोऽनुमिमाना अस्मदादेस्तत्र कर्तृत्वासंभवात् ईश्वरमेव कर्तारमभिमन्यते।

मीमांसकास्तु "सर्वोऽप्युत्सर्गः सापवादः, नहि लौकिकशब्दसन्दर्भस्य पुरुषकृतत्वे वैदिकशब्दराशिनाऽपि तथैव भाव्यमिति समस्ति नियमः। सर्वं तु प्रमाणसमधिगम्यम्। यदि वयं प्रमाणेनोपलभामहे तर्हि तत्तथेति निश्चेतुं शक्नुमः। लौकिकेषु शब्दराशिषु सुदृढेन प्रमाणेनोपलभामहे कर्तारमिति तत्र सकर्तृकतामङ्गीकुर्मः। वैदिकेषु च तेषु प्रयत्नेनान्विच्छन्तोऽपि न तं ज्ञानगोचरतामापादयितुमीश्महे इति तत्रापौरुषेयतामेव मन्यामहे। नहि प्रमाणेनानधिगतोऽर्थः स्वमनीषया कल्पयितुं शक्यते। अतः शब्दस्य सकर्तृकत्वे उत्सर्गसिद्धेऽपि वैदिकशब्दे तदपोद्यत इति कर्तारं निषेधन्ति वेदे। अयमेवाशयः "तस्मात्कारणादवगच्छामो, न कृत्वा संबन्धं व्यवहारार्थं केन चिद्वेदाः प्रणीता इति, यद्यपि च विस्मरणमुपपद्येत तथापि न प्रमाणमन्तरेण सम्बन्धारं प्रतिपद्येमहि। यथा विद्यमानस्याप्यनुपलम्भो भवतीति, नैतावता विना प्रमाणेन शशविषाणं प्रतिपद्यामहे" (शा०भा० १।१।५) इति (१)। "येऽपि हि पौरुषेयतां मन्यन्ते तेऽपि नैव परम्परया तत्र कर्तृविशेषस्मरणं शक्नुवन्ति वदितुम्। सामान्यतो दृष्टेन कर्तारमनुमाय स्वाभिमतं कर्तारं तत्र निक्षिपन्ति; केचिदीश्वरम्, अन्ये हिरण्यगर्भम्, अपरे प्रजापतिम्। न चायं नानाविधो विवादः परम्परया कर्तरि मन्वादिवत्स्मर्यमाणे कथंचिदवकल्पते। नहि मानवे भारते शाक्यग्रन्थे वा कर्तृविशेषं प्रति कश्चिद्विवदते। तस्मात्स्मर्तव्यत्वे सति अस्मरणाद्दृश्यादर्शनबाधितं सामान्यतो दृष्टं न शक्नोति कर्तारमवसाययितुम्" (शास्त्रदी० १।१।८) इति च (२) भाष्य-शास्त्रदीपिकादिग्रन्थैर्निपुणतरमुपपादितः। अतोऽस्मत्प्राचीनानामस्माकं च अद्ययावदयमेव निर्णयो— वेदः सर्वथा न कृत्रिम इति।

सति चैवं वेदे मन्त्रभागे ब्राह्मणभागे वा यान्यर्वाचीनानां केषां चन राज्ञामन्येषां वा पुरुषविशेषाणां देशविशेषाणां नद्यादीनां वा नामानि श्रूयन्ते, कथं तेषामुपपत्तिरिति सत्यमिदं प्रतिपत्तव्यमवशिष्यते। तत्र ह्येवमस्मत्प्राचीना अभिसन्दधति—वेदे यानि नामानि श्रूयन्ते, यानि चाख्यानानि, न तानि विशिष्य केषां चिद्राज्ञां पुरुषविशेषाणां वा नामान्यासन् तच्चरितानि वा। किन्तु नित्या श्रुतिः संव्यवहारार्थं प्ररोचनार्थं वा नामाख्यानादीनि परिकल्प्य संव्यवहरति स्म। तानि च वेदारूढानि पवित्रतमानीति कृत्वा तदा तत्रोत्पन्नानां पुरुषधौरेयाणां नामत्वेन तदाचरितत्वेन च तैस्तैः परिकल्पितानि सन्ति। तत्र प्रथमपरिकल्पकः साक्षात्प्रजापतिरेव। तत

(१) चौखम्बासंस्कृतसीरीजमुद्रितपुस्तके पृ० १२ द्रष्टव्यम्
(२) निर्णयसागरमुद्रितपुस्तके पृ० १६२ द्रष्टव्यम्।

इयं रीतिरनुसृता बहुभिः । अतो वेदस्थितान्येव नामानि एभिः स्वनामत्वेन परिकल्पितानि, न तु तदाचरितानि दृष्ट्वा तदनन्तरं वेदो रचित इति । "वेदेन नामरूपे व्याकरोत्सतासती प्रजापतिः",

"सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् ।
वेदशब्देभ्य एवादौ देवादीनां चकार सः" (विष्णु० पु० ५।६२)

इत्याद्याः श्रुतिस्मृतयोऽत्र बह्व्योऽनुकूलाः ।

यद्यपीदमाधुनिकानां पाश्चात्यशिक्षासुशिक्षितमतीनां तत्संसर्गाकलितसंस्कारविशेषाणां केषां चन पण्डितवर्याणामपि न मनसि मनागपि पदं निदधाति, तथापि अत्र परिश्राम्यता मया पूर्वाचार्याणां योऽस्मिन्विषये सुदृढो निश्चय आसीत्, यश्चास्माकमपि पूर्वाचार्येषु अश्रद्दधतामाधुनिकैरुक्तयाभासैरकम्पनीयोऽद्य यावद्वर्वर्त्ति, स प्रेक्षावतां पुरतो निक्षिप्तो दृष्ट्वा इतस्ततः प्रमाणम् ।

## ( वेदचातुर्विध्यम् )

एवं रचयितृत्वेन पुरुषसंबन्धविशेषशून्यो मन्त्रब्राह्मणात्मको वेदः प्रथमं चतुर्धा विभक्तः, ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेद इति । तत्र छन्दोबद्धा मन्त्रा ऋच उच्यन्ते । छन्दोहीना गद्यात्मका अर्थवशेन विभज्यमाना मन्त्रा यजुष्पदवाच्याः । ऋक्षु गीयमानो गानविशेषः सामपदाभिधेयः । छन्दोबद्धा ऋग्विशेषा एव अथर्वाङ्गिरस इत्युच्यन्ते ।

एते मन्त्रा यस्मिन् ग्रन्थसमुदाये बाहुल्येनाम्नायन्ते स ऋग्वेदादिपदैर्व्यपदिश्यते । यथा—यत्र ऋचां बाहुल्यं स ऋग्वेदः । यत्र यजुषां स यजुर्वेद इत्यादि ।

## ( प्रतिवेदं शाखाभेदः )

एवं चतुर्द्धा विभक्तवेदराश्यन्तर्गता ऋग्वेदादयोऽपि बहुशाखाभिन्नाः । तत्र "एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेद, एकविंशतिधा बाह्वृच्यं, नवधाऽथर्वणो वेदः" ( महा० पस्पशा० ) इति महाभाष्यकारो ब्रवीति ।

"एकविंशत्यध्वयुक्तमृग्वेदमृषयो विदुः ।
सहस्राध्वा सामवेदो यजुरेकशताध्वकम् ।
नवाध्वाऽथर्वणोऽन्ये तु प्राहुः पञ्चदशाध्वकम्"

(सर्वानुक्रमणीवृत्तिभूमिका षड्गुरुशिष्यकृता) इत्यनेन पञ्चदशशाखाभेदवत्त्वमप्याथर्वणस्येति केषां चिन्मतं दृश्यते ।

ऋग्वेदादिषु हि वैज्ञानिकादीनां पुरुषबुद्ध्यगोचरान् अतिगभीरान् बहून् विषयानन्तर्भावयतामपि न तत्प्रकाशनमेव मुख्यं प्रयोजनं तेषाम् । किन्तु धर्मैकपथमनुसृत्यैव प्रवृत्तिः तदपेक्षितयावदङ्गपौष्कल्याविष्करणमेव च प्राथमिकं प्रयोजनमिति न्यायवित्समयः । तत्र ब्राह्मणभागानां धर्मस्वरूपावगमकत्वं, मन्त्रभागानां तु तादृशधर्मसंबन्धिद्रव्यदेवताप्रकाशकत्वम् । तत्रापि ऋग्वेदसंहितायां समाम्नातानां मन्त्राणां प्रायशः तत्तत्सोमयागाद्यङ्गभूतेन्द्राग्न्यादिदेवताऽभिधायकशस्त्रादौ याज्यापुरोऽनुवाक्यादौ चोपयोगः । तद्यथा—

सोमयागस्तावत् "य एवं विद्वान् सोमेन यजेत' ( तै० सं० ३।२।२ ) इति यजुर्वेद गतवाक्येन सोमाख्यलताविशेषसाध्यः कश्चन यागो विहितः । तदपेक्षिताश्चान्ये अङ्गकला-

पा इष्टिपश्वात्मकास्तत्संबन्धिनोऽवहनन—पेषणादयः कर्तृकालादयश्चाङ्गकलापाः सर्वेऽपि तत्र विहिताः। लतासाधनकोऽप्ययं यागो न साक्षाल्लतया क्रियते; किन्तु तामभिषुत्य ततो रसं निष्काश्य तेनैव यागः क्रियते। ततो निष्काशितो रसः पात्रविशेषेषु ग्रहाख्येषु तत्र तत्र विहिता देवता उद्दिश्य ग्रहीतव्यः। तत्र यां कां चन देवतामुद्दिश्य रसे गृहीते तां देवतां साममन्त्रेण स्तोतव्यां विदधाति श्रुतिः। 'ग्रहं गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात्' ( तै० सं० ३।१।४ ) इति। तानि च स्तोत्राणि 'आज्यैः स्तुवते, माहेन्द्रेण स्तुवीत' इत्यादिभिर्वाक्यैः सामवेदीयब्राह्मणगतैर्विहितानि। इमानि च तद्वेदपठितैरेव गीतिविशिष्टैर्मन्त्रैरुद्गातृ-प्रतिहर्तृ-प्रस्तोतृसंज्ञकैस्त्रिभिर्ऋत्विग्भिः क्रियन्ते। एवं ग्रहग्रहणानन्तरं तदीयायां देवतायां साममन्त्रैः सामवेदीयैः पूर्वोक्तैर्ऋत्विग्भिः स्तुतायां तामेव देवतां पुनर्ऋङ्मन्त्रेण होतृसंज्ञकेन ऋत्विजा स्तवनीयामभिदधाति वैदिकं वचनं "स्तुतमनु शंसति" इति। (ऐ० ब्रा० ५।२४।५) इदमेव च शंसनं शस्त्रमित्यभिधीयते। तच्च शस्त्रम् आज्य–प्रउग–निष्केवल्यादिभेदेन बहुधा भिन्नम् ऋङ्मन्त्रसमुदायसाध्यकम्। यद्यपि शंसधातोरुत्पन्नं शस्त्रपदं स्तवनमभिदधाति, स्तुधातोरुत्पन्नं स्तोत्रपदमपि तदेव विदधाति इति न स्तोत्रशस्त्रपदयोरर्थे वैलक्षण्यमुचितम्, तथापि साममन्त्रसाध्ये स्तवने गुणिनिष्ठगुणाभिधानात्मके स्तोत्रशब्दं, केवलऋङ्मन्त्रसाध्ये तस्मिन् शस्त्रशब्दं च निरूढलक्षणया (१) याज्ञिकाः प्रयुञ्जते। तदेव चोररीकृतं भगवता जैमिनिनाऽपि "स्तुतशस्त्रयोस्तु संस्कारः" ( जै० २।१।१३ ) इत्यादौ।

एतदतिरिक्ता अपि कुन्ताप-निविदैतशप्रलापादयः शस्त्रस्याङ्गभूताः स्तुतिविशेषा याज्यापुरोऽनुवाक्यारूपाश्च मन्त्राः सन्ति बहुशो, येषां समूह ऋक्संहितापदाभिधेयः।

एतेषामृङ्मन्त्रविशेषाणां तत्र तत्र यागादौ अनुष्ठानप्रकारः, तेषां स्वरादिकं, तेषां कर्मकलापादिकं च यत्र विधीयते स ब्राह्मणभागश्च मिलित्वा ऋग्वेदपदाभिधानीयतामधिगच्छति।

## ( शाखापदार्थः )

एवं यजुर्वेदविहितयागापेक्षितशस्त्रतदङ्गादियावदपेक्षिताङ्गकलापसमर्पक एको भाग ऋग्वेद एका शाखेत्युच्यते। एवमेकविंशतिशाखा ऋग्वेदस्य प्राचीनैः परिगणिताः। एकैकोऽपि भागः समग्र एव, न भागान्तरमपेक्षते। अतो यथा भारतरामायणादौ एकैकं पर्व काण्डं वा न सामग्र्यमनुभवितुमलम्, किन्तु सामग्र्यस्यैकदेशावबोधकत्वादवयव इत्युच्यते न तथेह वक्तुं शक्यत इति नात्र शाखाशब्दो वेदावयववाची भवितुमर्हति। सर्वासामपि शाखानां शाखान्तरनैरपेक्ष्येण यावदपेक्षितार्थावबोधकत्वात्। अत एव च एकशाखाध्ययनेनैव एकस्य वेदस्य समग्राध्ययनं सञ्जातमिति कृत्वा "स्वाध्यायोऽध्येतव्यः" ( शत० ११।३।८।३ ) इत्यध्ययनविधेश्चारितार्थ्यं मन्यन्ते शास्त्रकाराः। अत एव 'स्वाध्यायोऽध्येतव्य' इत्यत्र स्वत्वस्यापि विवक्षामङ्गीकृत्य स्वपरम्परागता एकैव शाखाऽध्येतव्या इत्यपि मीमांसकाभिप्रायः। एवमेकैकवेदगताया एकैकस्याः शाखाया अध्ययनेनापि—

"वेदानधीत्य वेदौ वा वेदं वाऽपि यथा क्रमम्" ( म० ३।२ )

इति शास्त्रचारितार्थ्यमप्यभिप्रयन्ति न्यायविदः। न ह्यन्यथा केनापि पुरुषेण एकस्मिन् जन्मनि अनेकशाखाप्रभिन्न एको वेदः समग्रोऽध्येतुं शक्यत इति सर्ववेदाध्ययनविधिः कुशकाशावलम्बनः स्यात्। अतो वस्तुत एकैव शाखा एको वेद इति वक्तुं शक्यते।

( १ ) अनादितात्पर्यविषयीभूता लक्षणा निरूढलक्षणेत्युच्यते।

एवमेतादृशानां समानप्रकाराणां मन्त्रब्राह्मणकलापानामेकवेदसम्बन्धिनां बहूनां सत्वात्तु तेषां पृथक् पृथग्वेदत्वं नाभ्युपगन्तुं शक्यत इति तेषामवयवेष्वपि शाखाशब्देन गौण्या वृत्त्या व्यवहारः क्रियते। अतो भारतमष्टादशसु पर्वसु यथा पर्याप्तं, न तथा एकविंशत्यां शाखासु ऋग्वेदत्वं पर्याप्तम्, किन्तु एकस्यामेव शाखायां तत्पर्याप्तम्। अत एकविंशतिशाखाभिन्न ऋग्वेद इति वदतां पूर्वाचार्याणामेकविंशत्या प्रकारैर्भिन्न ऋग्वेद इत्येवाशयः प्रतिभाति। यथा एकैव रामकथा तत्तत्कर्तृभेदाद् वाल्मीकीयानन्दरामायणाद्भुतरामायणादिप्रभेदभिन्ना, तद्वदत्रापि, इत्येव वक्तव्यमापतति। परन्तु तत्र कर्तृभेदाद्भेदः, अत्र तु कर्तृत्वेन पुरुषसंबन्धस्य शङ्कितुमप्यशक्यत्वस्य पूर्वं निरूपितत्वात् यथाऽनादिपरम्परासिद्धो वेदराशिः, एवं प्रकारभेदोऽप्ययमनादिपरम्परासिद्ध एव।

व्यासादीनां पैलादीनां च यत्तत्र तत्र वेदविभागकर्तृत्वमितिहासपुराणादौ (भाग० १२।६।२६-३३) श्रूयते, तत् एकतया अवस्थितानां तेषां विभागे प्रपाठकानुवाकादीनां पौर्वापर्यसन्निवेशकरणमात्रे पर्यवस्यति; न तु पदान्यथाकरणे मन्त्रान्यथाकरणे वा तेषामासीदधिकारः। अतो यत्कैश्चिदुच्यते—एकस्माद्गुरोर्बहवः शिष्या वेदमेकमृग्वेदादिसंज्ञकमधीयते स्म, अधीत्य च ते बहून् शिष्यानध्यापयामासुः, तेन चाध्यापनेन क्रमशः क्वचित् क्वचिन्मन्त्राणां वैपरीत्यं, न्यूनाधिकभावः, पदान्यथाभावश्च समजनि, तेन च बह्व्यः शाखाः सञ्जाता इति, तत् अद्य यावत् एकैकामपि शाखां मात्रामात्रस्याप्यपरित्यागेन परिपालयतां मनसि न मनागपि पदं निदधाति। यदि गुरुमुखादधीतान् मन्त्रान् मन्त्रैकदेशं वा अन्यथयितुं तेषां सामर्थ्यमधिकारो वाऽस्ति, तर्हि नवीनस्यापि मन्त्रस्य रचनायां कुतो न तेषामधिकारः। यदि च अधीतमन्त्रगतपूर्वपदपरित्यागेन स्वमनीषाकल्पितपदविशिष्टस्य भागस्य मन्त्रत्वमभ्युपगम्येत सर्वथा नूतनतया रचितस्य तद्ग्रन्थस्य कुतो न वेदत्वम्।

आमिति चेत् तद् वेदानां पौरुषेयत्वे पर्यवसितम्। तत्तु शङ्कितुमप्यशक्यमिति पूर्वमेव यथामति सोपपत्तिकं निरूपितमिति नात्रापि पुनःपिष्टं पिष्यते। अतोऽध्यापनेन शाखाभेदः सञ्जात इति न प्रमाणपथमारोहति। एवमेव यजुर्वेदादिष्वपि शाखाभेदः सञ्जात इत्यवगन्तव्यम्।

## ( ऋग्वेदीयशाखाभेदः )

पूर्वमृग्वेद एकविंशतिशाखाप्रकारभिन्न इत्युक्तम्। तत्रेदानीं शाखाद्वयमेवोपलभ्यते। तत्रैका बाष्कलशाखा, अपरा शाकला इति। ते अपि न परस्परं विविक्ते उपलभ्येते, अल्पीयानेव भेदस्तत्रापि। यत्र मण्डलसूक्तादिना विभागः कृतः सा शाकलसंहिता, यत्र च अध्यायवर्गादिना विभागः सा बाष्कलसंहितेति (१)। परन्तु अर्वाचीनकाले तयोर्भेदमुपेक्ष्यैव मण्डलसङ्ख्याऽध्यायसङ्ख्या चैकत्रैव निवेशिता। अन्याः शाखा इदानीं कालवशाद्विनष्टाः।

## ( ऋग्वेदीयं ब्राह्मणद्वयमारण्यकद्वयं च )

एतदृग्वेदसंबन्धिब्राह्मणद्वयमिदानीमुपलभ्यते, ऐतरेयं, कौषीतकी शाङ्खायनापरपर्यायं चेति। तत्र यदिदानीमुपलभ्यते ऐतरेयं ब्राह्मणं, तत् शाकलशाखासंबन्धी इत्यध्येतॄणां सुदृढो विश्वासः। परन्तु तत्वतो विचार्यमाणे न केवलमेकामेव शाखामवलम्ब्य

(१) ऋग्वेदे चतुःषष्ट्यध्याया, अष्टावष्टकानि, दश मण्डलानि, षड्युत्तरं सहस्रद्वयं वर्गाः, सहस्रं सूक्तानि, पञ्चाशीतिरनुवाकाः, दश सहस्राणि चत्वारिंशदधिकानि चतुःशतं च मन्त्राः।

प्रवृत्तमिदम्, किन्तु शाखान्तराण्यप्यत्रलम्बत इति। अत्र हि ब्राह्मणे "ब्रह्म यज्ञानं प्रथमम्" (ऐ० ब्रा० १।४।२) "त्वमग्ने व्रतभृत्" (आ० श्रौ० ३।१२) इति मन्त्रौ प्रतीकग्रहणेन विनियुक्तौ। नेदं मन्त्रद्वयं शाकलसंहितायां समाम्नातम्। एवं सन्त्यन्ये मन्त्रा विनियुक्ता बहवः प्रतीकग्रहणेन, येषां नोपलभ्यते पाठः शाकलशाखामध्ये। केषां चन "आ ते पितः" (२।७।१६) इत्यादीनां मन्त्राणां शाकलशाखान्तर्वर्तिनां नोक्तो विनियोगः, सैव ऋक् शाखान्तरोक्ताऽत्र विनियुक्ता। ब्राह्मणभागस्य सूत्राणां वाऽयं नियमो, यद् यामेकां शाखामवलम्ब्य तानि प्रवर्तन्ते तदा तत्रन्यान् मन्त्रान् प्रतीकमात्रं गृहीत्वा विनियुञ्जते, शाखान्तरस्थानां सत्यावश्यके विनियोगप्रसङ्गे समग्रं मन्त्रं पठित्वैव विनियुञ्जत इति। अत्र तु ब्राह्मणे शाखान्तरीया अपि मन्त्राः प्रतीकमात्रग्रहणेन विनियुक्ताः। अतो न एकामेव शाखामेकान्ततोऽवलम्बते ब्राह्मणमिदम्, किन्तु शाखान्तराण्यपीति स्पष्टमवगम्यते। तत्र या इतरा बाष्कलशाखोपलभ्यते, तत्रत्या मन्त्रा अत्र विनियुक्ता एवेति तच्छाखावलम्बित्वमप्यस्य सुस्पष्टमेव। अयमेवाशय ऋग्वेदकल्पद्रुमकारेणाप्याहृतः। तदितरासां शाखानामनुपलम्भादेव न तत्र निर्णयः कर्तुं पार्यते। अन्यच्च शाङ्खायनं ब्राह्मणं शाङ्खायनशाखामवलम्ब्य प्रवृत्तम्। अत्र शाङ्खायन ब्राह्मणस्य कौषीतकिब्राह्मणमित्यपि कचिन्नामोपलभ्यते। "कौषीतकिनः समामनन्ति" (आप० श्रौ० १०।१।१०) इति कौषीतकित्वेन शाङ्खायनस्यानुवादात्। एतदतिरिक्त आरण्यकभागोऽप्यस्ति। तच्च ऐतरेयारण्यकम् कौषीतकारण्यकमिति द्वयम्।

## ( यजुर्वेदीयशाखाभेदः )

यजुर्वेदस्तावत् शुक्लकृष्णभेदेन द्विधा विभक्तः। उभयात्मकस्यैव यजुर्वेदस्य प्राचीनाचार्यैरेकोत्तरशतसङ्ख्याकशाखाप्रभेदभिन्नत्वमुक्तम्। परन्तु सर्वास्ता विलुप्ताः, पञ्चैव परं शाखा इदानीमुपलभ्यन्ते। तत्र कृष्णे तावत् तैत्तिरीयशाखा, कठी, मैत्रायणीति त्रयमुपलभ्यते। शुक्ले काण्वा माध्यन्दिनीति शाखाद्वयमेवोपलभ्यते।

## ( कृष्णत्वशुक्लत्वयोर्हेतुः )

यजुर्वेदगतानां केषां चन यजुषां शुक्लत्वं केषां चन कृष्णत्वं चाभ्युपगम्य तादृशैः कृष्णैर्यजुर्भिः सन्दब्धस्य ग्रन्थविशेषस्य कृष्णयजुर्वेदत्वम्, शुक्लयजुर्भिः सन्दब्धस्य च शुक्लयजुर्वेदत्वमिति कथा का चित् अनादिः प्रचलति। तत्र कारणान्वेषणे प्रवृत्ताः सङ्ख्यावन्तः प्रमाणैरेवमुपपादयन्ति—व्यासशिष्यस्य वैशम्पायनस्य याज्ञवल्क्यादयो बहवः शिष्या आसन् यजुर्वेदमधीयानाः। अध्ययनकाले केनापि कारणेन गुरोः पापं किञ्चित्संलग्नमभूत्। तदपनोदार्थं गुरुर्वैशम्पायनः स्वशिष्यानाज्ञापयामास—मदर्थं यूयं व्रतं चरतेति (१)। तदा याज्ञवल्क्योऽभिमानेन प्राह—गुरो किमेभिर्वराकैः, अहमेक एव भवदर्थं व्रतं चरिष्यामि, येन भवन्तः पापान्मुक्ता भवेयुरिति। तादृशं ब्राह्मणाधिक्षेपमसहमानेन वैशम्पायनेन क्रुद्धेन याज्ञवल्क्यो भगवानाज्ञप्तः। यत औद्धत्येन मच्छिष्यानन्यानेवमवज्ञातवानसि, अतो मत्तोऽधीतं सर्वमपि उद्वमेति। याज्ञवल्क्यस्तु तथेति स्वीकृत्य समनन्तरमेव गुरूपदिष्टं सर्वमपि यजुर्जातमुद्गीर्य भगवन्तमादित्यं तपसा परितोष्य ततो वाजिरूपधरेण तेनोपदिष्टानि अयातयामानि यजूंषि अद्य यावत् केनाप्यविदितानि लब्धवान्। लब्ध्वा च स्वशिष्यानध्यापयामास। तानीमानि शुक्लान्युच्यन्त इति "आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते" (श० १४।७।५।३३) इति शतपथं वाक्यमप्यमुमर्थं पुष्णाति।

(१) स्कं० सूतसं० कालीखं० अ० १७ द्रष्टव्यम्

"एवं स्थितः स भगवान् वाजिरूपधरो हरिः ।
यजूंष्ययातयामानि मुनयेऽदात्प्रसादतः" (भाग० २।६।३३)

इत्यादिभागवतवचनानि चात्रानुकूलानि । यानि च याज्ञवल्क्येन वान्तानि, कृष्णानि तान्यभूवन् इति ।

आधुनिकास्तु कृष्णयजुर्वेदे मन्त्रब्राह्मणयोः सङ्कीर्णत्वात् विविच्य बोद्धुं दुःशकत्वमभिप्रेत्य तस्य कृष्णत्वं, शुक्लयजुर्वेदे च मन्त्रब्राह्मणयोः पृथग्दर्शनाद्विस्पष्टतोऽवगन्तुं शक्यत्वेन शुक्लत्वमित्यभिप्रयन्ति । परन्तु विशयेऽत्र बह्वन्विष्यता मया प्राथमिके एव पक्षे प्रमाणान्युपलब्धानि । द्वितीयपक्षे यावत्प्रमाणोपलम्भं निर्णयो न सुशक इत्यत्रैव विषयमिमं परित्यज्य विषयान्तरे व्याप्रियते ।

## ( कृष्णयजुषः शाखाभेदः )

तत्र कृष्णयजुर्वेदे या इदानीमुपलभ्यन्ते तिस्रः शाखाः, तासु सर्वास्वपि न मन्त्रब्राह्मणभागौ पृथग्विभक्तौ । संहितायामेव प्रथमतो मन्त्रानाम्नाय तस्मिन्नेव प्रपाठके ब्राह्मणमप्याम्नातम्, क्वचित्प्रपाठकान्तरे, क्वचित् काण्डान्तरे । तत्र तैत्तिरीयशाखायां तावत् संहिता, ब्राह्मणम् इति सत्यपि भागद्वये न तौ वस्तुतः पृथग्विवेचितौ । मन्त्रा अपि बहवो ब्राह्मणभाग गताः, ब्राह्मणवाक्यान्यपि बहूनि संहिताभागगतानि । केचन मन्त्राः संहितायां यस्मिन् प्रपाठके आम्नाताः, तस्मिन्नेव तदीयं ब्राह्मणमाम्नातम्, क्वचिच्च प्रपाठकान्तरे, क्वचिच्च काण्डान्तरे । तस्य स्वरूपं किंचिदिव वैशद्यार्थं निरूप्यते—संहितायां प्रथमकाण्डे द्वितीयप्रपाठके सोमयागीयदीक्षामन्त्राः "आप उन्दन्तु" (१।२।१) इत्यादयः, अन्ये च बहवः सोमयागाङ्गभूता मन्त्रा आम्नाताः, तृतीये च पाशुका मन्त्राः । एतेषां ब्राह्मणवाक्यानि तु संहितायामेव षष्ठकाण्डे प्रथमादिषु त्रिषु प्रपाठकेषु आम्नातानि । चतुर्थकाण्डे अग्निचयनाङ्गभूता मन्त्राः संहितायां समाम्नाताः । तत्रैव च पञ्चमकाण्डः समग्रोऽग्निचयनब्राह्मणरूपः । एवं प्रथमे काण्डे षष्ठप्रपाठके दार्शपौर्णमासिका मन्त्राः के चन पठिताः, तेषामेव ब्राह्मणं तत्रैव सप्तमप्रपाठकात्मकम् । प्रथमकाण्डे एव पञ्चमप्रपाठके केषु चिदनुवाकेषु तदीयं ब्राह्मणम् ।

एवं तैत्तिरीयब्राह्मणपदाभिधेयेऽपि भागे प्रथमाष्टके प्रथमप्रपाठके आधानब्राह्मणम्, तत्रैव द्वितीयस्मिन् प्रपाठके आधानमन्त्राः, राजसूयविधयः केचन संहितायां प्रथम काण्डाष्टमप्रपाठकान्तर्गताः, के चन ब्राह्मणभागगतप्रथमाष्टकसप्तमाष्टमप्रपाठकान्तर्गताः । एवमाश्वमेधिकाः पदार्था, मन्त्रा, ब्राह्मणानि च संहिताभागगताः, केचन ब्राह्मणभागगताः । अतो नैकान्ततया इदं ब्राह्मणम् इयं च संहिता इति विवेक्तुं शक्यते ।

संहिताभागे मन्त्राणामाधिक्यात् ब्राह्मणभागे च ब्राह्मणानामाधिक्यात्तु संहिता ब्राह्मणमिति पृथग्व्यपदेशः ।

यच्चावशिष्टं शाखाद्वयं मैत्रायणीसंहिता, कठसंहिता चेति, तत्र संहिताभागमुपलभ्यते, न ब्राह्मणभागः । यस्तु तैत्तिरीयब्राह्मणस्य तृतीयाष्टकस्यान्ते दशमैकादशद्वादशप्रपाठकात्मको भागः काठकपदाभिधेयः, स न वस्तुतः कठशाखावलम्बी, किन्तु तैत्तिरीयब्राह्मणान्तर्गतस्तैत्तिरीयारण्यकान्तर्गतो वा । तैत्तिरीयाध्येतारः सर्वेऽपि प्रपाठकत्रयात्मकमिममपि भागं नियमेनाधीयते । यदीदं शाखान्तरगतं स्यात् तर्हि तच्छाखीयानन्यान् भागान् परित्यज्य एतन्मात्राध्ययने कारणकल्पनं दुष्करं स्यात् । यद्यपि भाष्यकारौ सायण—भट्टभास्करावुभावपि भागमिमं प्रपाठकत्रयात्मकं ब्राह्मणभागेऽन्तर्भावयन्ति, तथापि अध्येतारोऽध्यापयितारो वा तमारण्यक एवान्तर्भाव्याध्यापयन्त्यधीयते च ।

उपलब्धयोः संहितयोरपि तैत्तिरीयसंहितावदेव मन्त्रा ब्राह्मणानि च सङ्कीर्णान्येवोपलभ्यन्ते।

अनयोः संहितयोः सादृश्यं परं परस्परं बह्वस्ति। विषया अपि प्रायशः समाना एवो भयत्रापि।

तैत्तिरीयसंहिता तु ताभ्यां सह न तावत्सादृश्यमनुभवति इति तत्तच्छाखापरिशी-लिनां सुविदितमेव स्यादिति नात्र विव्रियते ग्रन्थगौरवभिया।

तैतिरीयसंहितायां काण्डः, प्रपाठकः, अनुवाक इति विभागः कृतः। तत्र संहितायां सप्त काण्डानि। ब्राह्मणे काण्डत्रयम्। ब्राह्मणभागतानां काण्डानामष्टकानीत्यपि व्यपदेशा-न्तरम्। संहितायां चतुश्चत्वारिंशत्प्रपाठकाः, अनुवाकाश्च एकपञ्चाशदुत्तरषट्शतानि। ब्राह्मणे पञ्चविंशतिः प्रपाठकाः, अनुवाकाश्च अष्टोत्तरत्रिशतानि।

कठसंहितायां तं तं विषयमवलम्ब्य स्थानकनाम्ना विभागः कृतः, पुरोडाशस्थानकम्, अध्वरस्थानकमिति। तानि च स्थानकानि अष्टादश (१) तत्र सन्ति।

मैत्रायणीयसंहितायां तु काण्डचतुष्टयम्। प्रपाठकाश्च (२) चतुः पञ्चाशत्। एतदरिक्त

---

(१)

| स्थान० | मन्त्रसङ्ख्या | | मन्त्रसङ्ख्या | | मन्त्रसङ्ख्या |
|---|---|---|---|---|---|
| १ पुरोडाशस्थानकम् | १२ | ७ आलोभीस्थानकम् | १७ | १४ वाजपेयस्थानकम् | १० |
| २ अध्वरस्थानकम् | १५ | ८ दिशास्थानकम् | १७ | १५ राजसूयस्थानकम् | १३ |
| ३ ज्योतिरकस्थानकम् | १० | ९ उन्सीदनस्थानकम् | १९ | १६ अग्निवीशिकास्थानकम् | २१ |
| ४ ग्रहस्थानकम् | १६ | १० आग्नावैष्णवस्थानकम् | १३ | १७ ध्रुवक्षितिस्थानकम् | १९ |
| ५ यजमानस्थानकम् | ६ | ११ मारुतस्थानकम् | १३ | १८ चमसस्थानकम् | २१ |
| ६ अग्निहोत्रब्राह्मण स्थानकम् | ११ | १२ पयःस्थानकम् | १५ | | २६४ |
| | | १३ पशुवन्धस्थानकम् | १६ | | |

(२)

| प्रथमकाण्डे प्रपा० | मन्त्रसङ्ख्या | द्वितीयकाण्डे | | तृतीयकाण्डे | | चतुर्थकाण्डे | |
|---|---|---|---|---|---|---|---|
| १ पूर्णदर्शमासप्रपाठकः | ३१ | १ काम्येष्टिप्र० | १२ | १ अग्निचितिब्राह्मणप्र० | १० | १ पुरोडाशब्राह्मण-प्रपाठकः | १४ |
| २ अध्वरप्र० | १८ | २ ,, | १३ | २ ,, | १० | २ गोनामिकप्र० | १४ |
| ३ ग्रहप्र० | ३९ | ३ ,, | ९ | ३ ,, | १० | ३ राजसूयब्राह्मणप्र० | १० |
| ४ यजमानब्राह्मणप्र० | १५ | ४ ,, | ८ | ४ ,, | १० | ४ राजसूयप्र० | १० |
| ५ अग्न्युपस्थानप्र० | १४ | ५ काम्यपशुप्र० | ११ | ५ ,, | १२ | ५ अध्वरादित्रयविधिप्र० | ९ |
| ६ आधानप्र० | १३ | ६ राजसूयप्र० | १३ | ६ अध्वरादिविधिप्र० | १० | ६ ,, | ९ |
| ७ पुनराधानप्र० | ५ | ७ अग्निचितिप्र० | २० | ७ ,, | १० | ७ ,, | ९ |
| ८ अग्निहोत्रब्राह्मणप्र० | १० | ८ ,, | १४ | ८ ,, | १० | ८ ,, | १० |
| ९ चतुर्होतृप्र० | ८ | ९ ,, | १० | ९ ,, | ८ | ९ प्रवर्ग्यप्र० | ७ |
| १० चातुर्मास्यप्र० | २० | १० ,, | ६ | १० ,, | ७ | १० याज्यानुवाक्याप्र० | ६ |
| ११ वाजपेयप्र० | १० | ११ ,, | ६ | ११ सौत्रामणीप्र० | १२ | ११ ,, | ६ |
| | १६५ | १२ ,, | ६ | १२ अश्वमेधप्र० | २१ | १२ ,, | ६ |
| | | १३ ,, | २३ | १३ ,, | २० | १३ ,, | १० |
| | | | १५१ | १४ ,, | २१ | १४ ,, | १८ |
| | | | | १५ ,, | ११ | | |
| | | | | १६ ,, | ५ | | |
| | | | | | १८० | | |

आरण्यकभागोऽप्यस्ति, यत्र द्वादश प्रपाठकाः सन्ति तैत्तिरीयशाखायाम्। अध्येतृपरम्परानुसारेण काठकपदाभिधेयं प्रपाठकत्रयमपि संयोज्य संख्येयमिति विभावनीयम्। इतरत्र तु शाखाद्वये स नोपलभ्यते।

## ( काण्व-माध्यन्दिनशतपथयोर्वैलक्षण्यम् )

पूर्वं शुक्लयजुर्वेदे शाखाद्वयमेवोपलभ्यते माध्यन्दिनी काण्वा चेत्युक्तम्। उभयोरपि शाखयोर्ब्राह्मणद्वयं शतपथसंज्ञकं पृथक् पृथगुपलभ्यते। तत्र माध्यन्दिनीये शतपथे आनवमं काण्डं संहिताक्रमेणैव ब्राह्मणक्रम उपलभ्यते पिण्डपितृयागमेकं वर्जयित्वा। संहितायां हि पिण्डपितृयज्ञसंबन्धिनो मन्त्रा दर्शपूर्णमासानन्तरं पठिताः। ब्राह्मणे आधानानन्तरं तद्विधिः इत्येतावानेव भेदः। अन्यत्र क्रमे कोऽपि संहिताब्राह्मणयोर्भेदो नोपलभ्यते। काण्वसंहितायां प्रथमं दर्शपूर्णमाससम्बन्धिनो मन्त्राः पठिताः, ब्राह्मणं त्वाधानतः प्रारभ्यते। अन्यच्च—ये तावद्विषया माध्यन्दिनीये शतपथे द्वितीयस्मिन् काण्डे समाम्नाताः, ते सर्वेऽपि अत्र प्रथमकाण्डे एव समाम्नाताः। एवं च तयोर्ब्राह्मणयोः प्रथम—द्वितीयकाण्डे विपर्यस्ते दृश्येते। अतो ये नाम विषया अग्न्याधेय-पुनराधेयाग्निहोत्राऽऽग्रयण-पिण्डपितृयज्ञ-दाक्षायणाद्युपस्थान-प्रवत्स्यदुपस्थानागतोपस्थान-चातुर्मास्यादिरूपा माध्यन्दिनीये शतपथे द्वितीये-काण्डे क्रमशः समाम्नाताः, त एव काण्वे प्रथमे समाम्नाताः। अन्ये च ये विषया विपर्यस्ताः, तेऽप्यत्र टिप्पण्यां निरूपिता द्रष्टव्याः (१)

---

( १ ) माध्यन्दिनीये शतपथे—

कां०

१ दर्शपूर्णमासेष्टिः

२ आधानम्, पुनराधेयम्, अग्निहोत्रम्, उपस्थानम्, प्रवत्स्यदुपस्थानम्, आगतोपस्थानादिकम्, पिण्डपितृयज्ञः, आग्रयणम्, दाक्षायणयज्ञः, चातुर्मास्यानि।

३ सोमयागो दीक्षाभिषवान्तः।

४ सोमयागः—सवनत्रयगतं कर्म, षोडश्यादिसंस्था, द्वादशाहः, त्रिरात्राहीनदक्षिणा, सत्रधर्माः।

५ वाजपेय—राजसूयौ।

६ उखासंभरणम्, विष्णुक्रम-वात्सप्रोपस्थाने, वनीवाहनम्।

७ चयनम्, गार्हपत्यचयनम्, निर्ऋतिचयनम्, अग्निक्षेत्रसंस्कारः, दर्भस्तंबाद्यपस्यासादनान्तम्।

८ प्राणभृदादि चयनसमाप्तिः।

९ शतरुद्रियहोमादि, धिष्ण्यचयनम्, पुनश्चितिः, चित्युपस्थानम्।

१० चितिसम्पत्तयः, चयनस्य सर्वयज्ञात्मना स्तुतिः, चित्यस्य पक्षपुच्छविचारः, सप्तविधाद्येकशतविधाग्नेर्वेदिमानम्, सप्तविधाद्येकशतविधसङ्ख्यासम्पत्तिः, चयनकालादिविचारः, चित्याग्नेश्छन्दोभिरवयवसम्पत्तिः, संवत्सरादिमुहूर्तपर्यन्तं चयनसम्पत्तिः, यजुष्मतीलोकम्पृणानां संख्या, अग्न्युपासना उपनिषद्रूपेण, मनःसृष्टिविषयः, लोकादिरूपेण अग्न्युपासना, अग्नेः सर्वतोमुखत्वम्, सम्प्रदायप्रवर्तकर्षिवंशकथनम्, अग्निरहस्यम्।

११ अग्न्याधानकालः, दर्शपूर्णमास—दाक्षायणयज्ञयोरनुष्ठानावधिः, दाक्षायणयज्ञः, पथिकृदिष्टिः, अभ्युदृष्टेष्टिः, दर्शपूर्णमासार्थवादः, प्रयाजानुयाजानुमन्त्रणम्, इडा-स्विष्टकृत-सूक्तवाक-शंयुवाक-पत्नीसंयाज-वेदयालम्भ-समिष्टयजुः-प्रधानयागादिविषयोऽर्थवादः, अग्निहोत्रार्थवादः, ब्रह्मचारिकर्तव्यम्, मित्रविन्देष्टिः, हविषः समृद्धिः, चातुर्मास्यार्थवादः, पञ्च महायज्ञाः, स्वाध्यायप्रशंसा, प्रायश्चित्तम्,-अश्वदाभ्यग्रहौ, अध्यात्मविद्या, पशुबन्धप्रशंसा, हविर्यज्ञविध-सत्रविधयोर्लक्षणम्, षड्ढोतारहोमः।

१२ दीक्षाक्रमः, सत्राणि, पृष्ठ्याऽभिप्लव-स्वरसाम-विषुवन्महाव्रतादिनिरूपणम्, गवामयनम्, अग्निहोत्रप्रायश्चित्तम्, मृतकाग्निहोत्रम्, मृतस्य दाहः।

## ( काण्वमाध्यन्दिनयोः शतपथपदाभिधेयत्वम् )

ब्राह्मणयोरनयोः शतपथपदाभिधेयता कथं प्रवृत्ता, इत्यंशोऽप्यत्र किञ्चिदिव विचारणीयो भवति। शतं पन्थानो यस्य स इति व्युत्पत्या शतमार्गवत्त्वमस्येत्यवगम्यते। के च ते मार्गा इति जिज्ञासायां मार्गशब्दस्य अध्यायपरत्वमङ्गीकृत्य शतमध्याया (१) यत्र स

---

१३ अश्वमेधः, तद्गतं प्रायश्चित्तम्, पुरुषमेधः, सर्वमेधः दशरात्रः, पितृमेधः।

१४ प्रवर्ग्यः, घर्मः, महावीरः, प्रवर्ग्योत्सादनम्, प्रवर्ग्यकर्तृनियमः, बृहदारण्यकम्, काम्यहवनादि, गर्भाधानादि, जातकर्म, वंशब्राह्मणमिति।

काण्वे शतपथे—

कां०

१ आधानम्, पुनराधेयम्, अग्निहोत्रम्, आग्रयणम्, पिण्डपितृयज्ञः, दाक्षायणयज्ञः, उपस्थानम्, प्रवत्स्यदुपस्थानम्, चातुर्मास्यानि।

२ दर्शपूर्णमासेष्टिः।

३ अग्निहोत्रार्थवादः, दर्शपूर्णमासार्थवादः।

४ सोमयागः-दीक्षा, अभिषवादिश्च।

५ सोमयागः, सवनत्रयगतं कर्म, षोडश्यादिसंस्था, द्वादशाहः,त्रिरात्राहीनदक्षिणा, चतुस्त्रिंशद्धोमः, सत्रधर्माः।

६ वाजपेयः।

७ राजसूयः।

८ उखासम्भरणम्।

९–१२ चयनम्।

१३ आधानकालः, पथिकृत, प्रयाजानुयाजानुमन्त्रणम्, शंयुवाकः, पत्नीसंयाजाः, ब्रह्मचर्यम्, दर्शपूर्णमासशेषः, पशुबन्धः।

१४ दीक्षाक्रमः, पृष्ठ्याभिप्लवादिः, सौत्रामणी, अग्निहोत्रप्रायश्चित्तम्, मृतकाग्निहोत्रम्।

१५ अश्वमेधः।

१६ प्रवर्ग्यः।

१७ बृहदारण्यकम्।

(१) माध्यन्दिनीयशतपथब्राह्मणे—

| काण्डानि | अध्यायाः | प्रपाठकाः | ब्राह्मणानि | कण्डि० |
|---|---|---|---|---|
| १ | ९ | ७ | ४० | ८३७ |
| २ | ६ | ५ | २४ | १०४ |
| ३ | ९ | ७ | ३१ | ८५९ |
| ४ | ६ | ५ | ३८ | ६४८ |
| ५ | ५ | ४ | २५ | ४७१ |
| ६ | ८ | ५ | २७ | ५३० |
| ७ | ५ | ४ | १२ | ३९८ |
| ८ | ७ | ४ | २७ | ४३७ |
| ९ | ५ | ४ | १५ | ४०२ |
| १० | ६ | ४ | ३० | ३६९ |
| ११ | ८ | ४ | ४२ | ४३७ |
| १२ | ९ | ४ | २९ | ४५९ |
| १३ | ८ | ४ | ४३ | ४३२ |
| १४ | ९ | ७ | ४६ | ७९६ |
| | १०० | ६८ | ४३६ | ७१७९ |

काण्वशतपथब्राह्मणे

| काण्डानि | अध्यायाः | ब्राह्मणानि | कण्डिका |
|---|---|---|---|
| १ | ६ | २२ | ३७६ |
| २ | ८ | ३२ | ५३२ |
| ३ | २ | २२ | १२४ |
| ४ | ९ | ३६ | ६४९ |
| ५ | ८ | ३८ | ९७४ |
| ६ | २ | ७ | ७०० |
| ७ | ५ | १९ | २८९ |
| ८ | ८ | २७ | ५११ |
| ९ | ५ | १६ | २५७ |
| १० | ५ | २० | २४३ |
| ११ | ७ | २० | ४३७ |
| १२ | ६ | २८ | २८६ |
| १३ | ८ | ३१ | २४१ |
| १४ | ९ | २८ | ३९२ |
| १५ | ८ | ४४ | ३०८ |
| १६ | २ | ८ | १९२ |
| १७ | ६ | ४७ | २९५ |
| | १०४ | ४३५ | ६८०६ |

शतपथ इति शताध्यायवत्वात् शतपथत्वम् इति व्यलिखित् एग्लिङ् महाशयः स्वकृतायां शतपथब्राह्मणभूमिकायाम् ( १ ), तदस्माकमप्यभिमतमेव।

यच्चान्यदपि तेनोच्यते—"माध्यन्दिन इति शब्दो मध्यमवाची शाखाया अस्याः प्राचीनतानिश्चयं प्रतिबध्नाति। माध्यन्दिनशतपथश्चतुर्दशभिः (२) काण्डैर्विभक्तः, तत्र बहुभिः कारणैरिदं निश्चेतुं शक्यते, यत् तत्र बहूनि काण्डानि अर्वाचीनकाले नियोजितानि। प्रथमतो द्वादशं काण्डं मध्यमत्वेन व्यवह्रियते। अनेनेदमवगम्यते—दशमप्रभृति चतुर्दशपर्यन्तानि पञ्चैव काण्डानि कदाचित् प्रधानान्यासन्। अनन्तरं च इतराण्यपि काण्डानि पूर्वत्र संयोजितानि" इति।

अत्र केवलं मध्यमशब्दमेकमवलम्ब्य एवमभ्यूहनं नातीव हृदयं गच्छति विचारशीलानाम्। मध्यन्दिनशब्दस्य मध्यमवाचित्वं केन प्रमाणेनावगतं तेन महाशयेन इत्यपि न वयं ज्ञातुमीश्महे। मध्यन्दिनशब्दस्य मध्यमवाचित्वे वा अर्वाचीनत्वं ब्राह्मणस्यास्य कथमवगम्यत इत्यपि न ज्ञायते। अतो वयमिदमेव निश्चिनुमः—यथा कण्वेन महर्षिणा दृष्टा काण्वी इत्युच्यते, एवं मध्यन्दिनेन महर्षिणा दृष्टा माध्यन्दिनी इत्येव युक्तमुत्पश्यामः। अयमेवाशयो महीधरेणापि प्रथममन्त्रव्याख्याने आदृतः। अन्यथा मध्यन्दिनशब्दस्य काण्वव्यावर्तकत्वं कथं सिद्ध्येत्। अपि च संहिताम्नातमन्त्रविनियोजकानि ब्राह्मणवाक्यानि, संहिता तु दर्शपूर्णमासतः प्रवृत्ता, ब्राह्मणवाक्यैरपि तत एव प्रवृत्तैरवश्यं भाव्यम्, यदि च नैवं स्यात् तर्हि प्रथमपठितानामुत्तरक्रतून्प्रति अवश्यमपेक्षितानां मन्त्राणां विनियोगमनुक्त्वा तत्संबन्धिनो दर्शपूर्णमासादिकांश्च यागानविधाय कथं दशमकाण्डादिकाण्डपञ्चकं चयनस्तावकमश्वमेधाद्युपरितनमहाक्रतुविधायकं प्रथमतः प्रवृत्तं भवेत्। न हि दर्शपूर्णमाससोमयाग-पशु-चयनयागादीन्, तेषामङ्गकलापं विध्यादिकं च यथावदपरिज्ञाय

---

( १ ) शतपथब्राह्मणभूमिका पृ० ८० आक्सफर्डमुद्रिता।

( २ ) शतपथब्राह्मणे काण्डनामानि

१—हविर्यज्ञकाण्डम्
२—एकपात्काण्डम्
३—अध्वरका०
४—ग्रहकां०
५—सवकां०
६—उखासंभरणकां०
७—हस्तिघटकां०
८—चितिकां०
९—संचितिकां०
१०—अग्निरहस्यकां०
११—अष्टाध्यायीकां०
१२—मध्यमकां०
१३—अश्वमेधकां०
१४—बृहदारण्यका०

काण्वब्राह्मणे काण्डनामानि

१—एकपात्काण्डम्
२—हविर्यज्ञकां०
३—उद्धारिकां०
४—अध्वरका०
५—ग्रहकाण्डम्
६—वाजपेयका०
७—राजसूयकां०
८—उखासंभरणका०
९—हस्तिघटका०
१०—चितिकाण्डम्
११—साग्निचितिका०
१२—अग्निरहस्यका०
१३—अष्टाध्यायीकां०
१४—मध्यमकां०
१५—अश्वमेधकां०
१६—प्रवर्ग्यकां०
१७—बृहदारण्यकां०

प्रथमतोऽश्वमेधे पुरुषेण प्रवर्तितुम् अन्ततस्तत्स्वरूपं वा ज्ञातुं पार्यते । अतो मन्त्रक्रममनुसरता ब्राह्मणभागेनापि दर्शपूर्णमासतो वा आधानादितो वा प्रवृत्तेनैव भाव्यमिति बलादप्यभ्युपगन्तव्यं भवतीति दशमादीनां पञ्चानां काण्डानां प्राथम्यम्, आदितो नवानां काण्डानां तदर्वाचीनत्वं च न कदाचिदपि सङ्गतिमेति । अत एग्लिङ् महाशयोक्तं न समूलमित्यप्यभ्युपगन्तुं शक्यते ।

यथा च ग्रन्थेऽत्र शतपथशब्दः प्रयुक्तः, एवं षष्टिपथशब्दोऽपि प्रयुक्त आसीदित्यनुमीयते । "क्रतूक्थादिसूत्रान्ताट्ठक्" (पा० ४।२।६०) इति सूत्रे "शतषष्टेः षिकन् पथः" इति वार्तिकेन शतशब्दात् षष्टिशब्दाच्च परो यः पथिन् शब्दः, तदन्तात् षिकन् वाच्य इत्यादिकेन शतशब्दादिव षष्टिशब्दादपि षिकन् प्रत्ययं विदधता शतपथमधीते शतपथिक इतिवत् षष्टिपथमधीते षष्टिपथिक इत्यपि शब्दो व्युत्पाद्यते । अतश्च षष्टिपदवाच्येन केनापि ग्रन्थेन अवश्यं भाव्यम् ।

अत्र एग्लिङ् महाशयो ब्रवीति—"प्रथमप्रभृति नवमकाण्डपर्यन्तो भागः षष्ट्यध्यायात्मकः । एवं च पतञ्जलिसमये आदितो नव काण्डानि कया चिद्दृ दृष्ट्या प्रधानभूतान्यासन् । तावत्पर्यन्तमधीत्य उपरितनानि पञ्च काण्डानि पर्यत्यजन् केचित् । ते षष्टिपदवाच्यान्यभूवन् इत्यवगम्यत" इति ।

तत्रेदं विचारणीयम् । शतपथस्यैव ब्राह्मणस्य आदितो नवकाण्डात्मको यो भागः स एव भागः षष्ट्यध्यायात्मकः, स षष्टिपदवाच्योऽभूत् इत्यत्र किमन्यत्प्रमाणमुपलभ्यते । कुतो वा तावदध्यायपरिमितः कश्चिच्छाखान्तरीयो ग्रन्थो न भवेत् । अतो नेदमपि मनो रञ्जयति विमर्शशीलानाम् ।

यदि तु एतद्विरुद्धप्रमाणोपलम्भपर्यन्तमस्या अपि युक्तेर्ग्राह्यत्वे न काऽपि हानिरिति सहृदया अभ्युपगच्छेयुः, तदा उपपत्तिरेवमस्या वक्तुं शक्यते । अत्र हि माध्यन्दिने शतपथे नवमे काण्डे अग्निचयनं सपरिकरं परिसमाप्यते, यत् संहितायामष्टादशेऽध्याये समाप्तिमुपगच्छति । यद्यपि च दशमेऽपि काण्डे चयनसंबन्धिनो विषयाः के चन प्रतिपाद्यन्ते, तथाऽपि ते न तावन्मुख्यतया ग्रहीतुं शक्यन्ते । तत्र हि चितिसम्पत्तिः, तस्याश्च सर्वयज्ञात्मना स्तुतिः इत्यादयो विषयाः प्रतिपादिताः । ते तु नैकान्ततया चयनानुष्ठानायोपयुक्ताः, किन्तु प्रवृत्तिमात्रप्रयोजकाः । अतस्तं विनाऽपि नवमकाण्डे चयनसमाप्तिं मन्वानैश्चयनान्तस्यैव क्रतुकलापस्य विशेषत आर्यावर्ते प्रचारमप्यवगच्छद्भिः कैश्चिद्दृ याज्ञिकैस्तावानेव भागोऽधीतोऽध्यापितश्च स्यात् ।

चयनग्रन्थपर्यन्तमध्ययनप्रणाली प्राचीनकालेऽप्यासीत् इत्यवगम्यते "अव्ययं-विभक्ति समीप०" (पा० २।१।६) इति सूत्रस्थान्तशब्दोदाहरणे 'अग्निग्रन्थपर्यन्तमधीते साग्नि' इत्युदाहरणं दृश्यते । अग्निशब्दश्चात्र तद्बोधके ग्रन्थे वर्तत इति तद्व्याख्यातारः । स च ग्रन्थः शतपथे नवमकाण्डपर्यन्तः षष्ट्यध्यायात्मकः । अतः प्राचीनकालेऽपि समग्रस्य शतपथस्य सत्वम्, अध्येतॄणां च केषां चित् समग्राध्ययनं, केषां चित् षष्ट्यध्यायात्मकमध्ययनं चासीदिति निश्चेतुं शक्यते ।

## ( सामवेदस्य शाखाविभागः )

एवं सामवेदस्यापि सहस्रभेदभिन्नत्वे पूर्वाचार्याणां सिद्धेऽपि इदानीमुपलभ्यमाना-

स्तिस्र एव शाखाः, कौथुमी, जैमिनीया राणायनीया चेति। तत्र दक्षिणदेशे द्राविडदेशेषु शाखात्रयमुपलभ्यते, तत्राधिकं कौथुमी, ततोऽल्पं राणायनीया, अल्पतरं च जैमिनीया। गुर्जरदेशेषु कौथुम्येव प्रचलिता, महाराष्ट्रदेशेषु राणायनीया। चरणव्यूहव्याख्यात्रा ( खं० ३ ) महीदासेन तु सामवेदस्य षोडश शाखा अवगम्य एतासामेव तिसृणां शाखानामस्तिताऽङ्गीकृता। यद्यपि अद्य यावत् कौथुमी शाखैकैव मुद्रिता, तथापि तिसृणां शाखानामध्येतारोऽद्यापि द्रविडदेशे समुपलभ्यन्ते। अतो वेदसर्वस्वकारेण यदुक्तम् "इदानीं तास्तिस्रः शाखा नोपलभ्यन्ते" इति तत् तच्छाखाध्येतृपरिचयाभावकृतमित्येव मन्यामहे।

सामवेदे १८२४ मन्त्राः सन्ति, तत्र भागद्वय—छन्दः संहिता, उत्तरसंहिता चेति। पूर्वार्चिकमुत्तरार्चिकमित्यप्यभिधानं तयोः। पूर्वार्चिके षट्, उत्तरार्चिके त्रयः प्रपाठकाः। यज्ञे, तथा ईश्वरोपासनायां भक्तिरसे निमग्नैर्जनैर्ये मन्त्रा ऋत्सु गीयन्ते ते सामपदवाच्याः। आभ्यन्तरप्रयत्नजन्यो वागिन्द्रियव्यापारविशेषो गानम्। गानस्य पूर्णरूपं "षड्जश्च ऋषभश्चैव गान्धारो मध्यमस्तथा। पञ्चमो धैवतश्चैव निषादः सप्तमः स्वरः" ( ना० शि० २।५ ) इति सप्तभिः स्वरैः क्रियते।

गानसमये मन्त्राणां स्वरूपपरिवर्त्तनं भवति, तत्राष्टौ कारणानि—विकारः, विश्लेषः, विकर्षणम्, विरामः, अभ्यासः, लोपः, आगमः, स्तोभश्चेति। विद्यमानस्य वर्णस्य स्थाने वर्णान्तरोच्चारणं विकारः, सन्धिविच्छेदो विश्लेषः, ह्रस्वस्थाने दीर्घस्य, दीर्घस्थाने प्लुतस्योच्चारणं विकर्षणम्, विश्रामो विरामः, द्विस्त्रिरुच्चारणमभ्यासः, वर्णस्यानुच्चारणं लोपः, अधिकवर्णस्योच्चारणमागमः, अनर्थस्यानन्वितस्य शब्दस्योच्चारणं स्तोभः "ऋचो यदधिकं किञ्चित् द्विरुक्तं वाऽपि दृश्यते। स्तोभत्वं तस्य मन्यन्ते क्रमशः शास्त्रचिन्तकाः" ( स्तोभानुसंहारपरि० १।१६ )

स च स्तोभस्त्रिविधः—वर्णस्तोभः, पदस्तोभः, वाक्यस्तोभश्चेति। तत्र वर्णस्तोभ इकारादिः, पदस्तोभो हाई, हाउ आदिः। वाक्यस्तोभो नवविधिः—अशस्तिः, स्तुतिः, संख्यानम्, प्रलयः, परिदेवनम्, प्रैशः, अन्वेषणम्, सृष्टिः, आख्यानमिति। एतेषां लक्षणादिकं स्तोभग्रन्थादवगन्तव्यम्। उक्तैः कारणैः परिवर्त्तितो मन्त्रसमुदायो गानम्। गानसंहिता—गेय, ऊह, ऊह्य, आरण्यकभेदैश्चतुर्द्धा।

## ( सामवेदस्य ब्राह्मणानि )

सामवेदे अष्टौ ब्राह्मणानि—ताण्ड्य-षड्विंश-मन्त्र-दैवत-आर्षेय-सामविधान-संहितोपनिषद्-वंश-जैमिनीयनामभिः प्रसिद्धानि। तत्र सर्वापेक्षया ताण्ड्यब्राह्मणमेव महत्। अत एव तन्महाब्राह्मणमित्यपि कथ्यते। प्रौढब्राह्मणं, पञ्चविंशब्राह्मणमित्यप्यस्य नाम।

## ( अथर्ववेदस्य शाखाविभागः )

अथर्ववेदस्य संहिताद्वयमुपलभ्यते, पैप्पलादसंहिता, शौनकसंहिता चेति। शौनकसंहितायां मुद्रितायां विंशतिः काण्डानि, ७५९ सूक्तानि, ५९७७ मन्त्राः। ब्राह्मणं तु एकमेव गोपथाभिधमुपलभ्यते।

## ( विलुप्तानि ब्राह्मणानि )

एवमन्यान्यपि ब्राह्मणानि सर्वथा विलुप्तानि महर्षिभिर्बौधायनापस्तंबादिभिः सूत्रकारैस्तत्र तत्रोद्धृतानि-भैक्षायनि-(आप० श्रौ० ५।१।१।१८) शैलालि (आप० श्रौ० ६।७।४)-शाट्यायनि

(शाङ्करभा० ३।३।२५) काठक (महाभा० ७।१।१३) मैत्रायणीय० (बौ० श्रौ० ३०।८) जाबालब्रा० (शाङ्करभा० ३।४।२०) खाण्डिकेयब्रा० (भाषि० सू० ३।२६) औखेयब्रा० (भाषि० ३।२६) हारिद्रविकब्रा० (ऋग्वेदभा० ५।४०।०) आह्वरक ब्रा० (नार० शि० टी० काशी चौखंभासं० पृ० ३६७) कङ्कतिब्रा० (आप० श्रौ० १४।२०।४) गालवब्रा० (महाभा० १।१।३४) भाल्लविब्रा० (महाभा० ४।२।१०४) शाट्यायन ब्रा० (ऋक्सर्वा० ३।३२) कालबविब्रा० (आप० श्रौ० २०।६।६) रौरुकी ब्रा० (गो० गृ० ३।२।५) तुम्बरुब्रा० आरुणेयब्रा० (महाभा० ४।२।१०४) सौलभब्रा० (महा० ४।२।६३) पराशरब्रा० (तन्त्रवा० चौखम्भा सं० पृ० ६६४) माषशराविब्रा० (द्राह्यायण श्रौ० ८।२।३०) कापेयब्रा० (सत्याषाढश्रौ० १।४) प्रभृतीनि आसन् बहूनीत्यनुमीयते।

## (ब्राह्मणभागानां कार्यम्)

एवं मन्त्रब्राह्मणात्मना च प्रभिन्नः सर्वोऽपि वेदराशिः श्रौतं धर्मं विवरीतुं, तत्र च पुरुषं प्रवर्तयितुमेव प्रवृत्त इति तु न तिरोहितम्। तत्रापि ब्राह्मणभागानां कर्मस्वरूपावबोधकत्वं, तदपेक्षितद्रव्यदेवताद्यङ्गकलापविधायकत्वं, तस्य च कर्मणः सत्यपि कालान्तरे पुरुषाभिलषितफलजनकत्वे कष्टात्मके तत्र तदानीमलसस्वभावानां पुरुषाणां स्वरसतः प्रवृत्त्यनुदयात् तत्सम्पादनार्थं विहितकर्मस्तावकत्वं ब्राह्मणभागानां कार्यमिति पूर्वाचार्याणामभिप्रायः।

## (विधिभेदः)

एवं च तत्तत्कार्यार्थं प्रवृत्तो ब्राह्मणभागस्तेन तेन भेदेन विभक्तो विध्यर्थवादाद्यात्मना। तत्र यानि वाक्यानि इदं कर्म एवं कर्तव्यमिति कर्मस्वरूपमात्रावबोधने प्रवृत्तानि, तानि उत्पत्तिविधय इत्युच्यन्ते, यानि तु तद्वाक्यविहितकर्मसंबन्धि द्रव्यदेवतादिविधायकानि, तानि गुणविधयो विनियोगविधय इति वोच्यन्ते, यानि च तत्तादृशेषु कर्मसु कस्याधिकारः किम्फलमुद्दिश्य तत् कर्तव्यम्। इत्यादिकमवबोधयन्ति तान्यधिकारविधय इत्युच्यन्ते, एतेषामनुष्ठानक्रमादिकं योऽवबोधयति स प्रयोगविधिरित्युच्यते। एवं विधिभागश्चतुर्धा विभक्तः।

## (अर्थवादभेदः)

अस्यैव शेषभूतोऽर्थवादभागः। येन च विधिसन्निहितेन विहितं स्तूयते, निषिद्धं च निन्द्यते। सोऽपि-निन्दा-प्रशंसा-परकृति-पुराकल्पभेदेन चतुर्धा विभक्तः। निन्दा—"यो बर्हिषि (१) रजतं ददाति पुराऽस्य संवत्सराद् गृहे रुदन्ति" (तै० सं० १।५।१) इति। दर्शपूर्णमासाद्याखिष्टिषु दक्षिणात्वेन प्रसक्तस्य रजतदानस्य निषेधः 'बर्हिषि रजतं न दद्यात्' (तै० सं० १।५।१) इत्यनेन क्रियते। तत्समीपे श्रुतेनानेनार्थवादेन रजतदानं निन्द्यते। यदि कश्चिन्निषेधमतिक्रम्य रजतं दद्यात्, तस्य गृहे संवत्सरात्पूर्वं रोदनं भविष्यतीति। प्रशंसा तु—"वायुर्वै क्षेपिष्ठा देवता" (तै० सं० २।१।१) इत्यादि। पूर्वं "वायव्यं श्वेतमालभेत भूतिकामः" (२।१।१) इति वाक्येन वायुदेवताको भूतिफलकः पशुद्रव्यकः कश्चन यागो विहितः। तत्सन्निहितेनानेन वाक्येनार्थवादेन तदेव कर्म प्रशस्यते शीघ्रगामिवायुदेवताकमिदं कर्म शीघ्रफलदम्, अतोऽतिप्रशस्तमिति।

---

(१) अत्र बर्हिःशब्देन तत्संबन्धिकर्मोपलक्ष्यते, न तु कुशाः। अतो बर्हिःसाध्येषु दर्शपूर्णमासादिषु कर्मसु रजतं दक्षिणात्वेन न दद्यादित्यर्थः।

अयमेवार्थवादो निन्दारूपः प्रशंसारूपो वा अन्यकृत इति यत्रोपवर्ण्यते स परकृतिरित्युच्यते। यथा—"अग्निर्वा अकामयत अन्नादो देवानां स्याम्" ( तै० ब्रा० ३।१।४ ) "बबरः प्रावाहणिरकामयत"(तै० सं० ७।१।१०) "उल्मुकैः सहाजघ्नुः" ( श० ब्रा० ३।४।२२ ) इत्याद्यन्यकर्तृकोपाख्यानं परकृतिः।

"पुरा ब्राह्मणा अभैषुः" ( तै० सं० १।५।७ ) "इदं वा अग्रे नैव किञ्चनासीत्" ( तै० ब्रा० २।२।६।१ ) "माषान् मे पचतेति ह स्माह वर्कुर्वार्ष्णिः" ( श० ब्रा० १।१।१।८ ) इत्यादि पुरावृत्तकथनं पुराकल्पः।

इदं सर्वमभिप्रेत्य भगवताऽऽपस्तम्बेनापि स्वयज्ञपरिभाषायां सूत्रितम्—"कर्मचोदना ब्राह्मणानि, ब्राह्मणशेषोऽर्थवादो, निन्दा-प्रशंसा-परकृति-पुराकल्पश्च" इति ( आप० श्रौ० यज्ञप० २४।१।३१-३३ )।

इतोऽपि विधिभेदः—

"हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः।
परक्रिया पुराकल्पो व्यवधारणकल्पना।
उपमानं दशैते तु विधयो ब्राह्मणस्य तु।
एतद्वै सर्ववेदेषु नियतं विधिलक्षणम्" (शावरभा० २।१।८)

इत्यादिना शबरादिभिर्ब्राह्मणभेदा निरूपिताः, ते तत एवावगन्तव्याः।

## ( मन्त्रलक्षणं तद्भेदश्च )

मन्त्रा अपि ये नाम अनुष्ठेयार्थं प्रकाशयन्ति ते उच्यन्ते। तत्तत्कर्म कुर्वाणा ऋत्विजो हि स्वैरनुष्ठेयं कर्म स्मृत्वा कुर्वन्ति, तच्च स्मरणं तत्तत्क्रतुप्रकरणविशेषे पठितैर्वाक्यैरेव सम्पादनीयमिति समस्ति नियमः। तान्येव वाक्यानि मन्त्रा इत्युच्यन्ते।

एतेषां मन्त्राणां लक्षणं नानुगमरूपेण वक्तुं शक्यते, यतो बहुप्रकारास्ते कयाऽपि रीत्या नानुगमयितुं शक्यन्ते। अत एव ब्राह्मणलक्षणं मन्त्रलक्षणं च कथयितुं प्रवृत्तो भगवानापस्तम्बः "कर्मचोदना ब्राह्मणानि" इति ब्राह्मणलक्षणमुक्त्वा "ब्राह्मणशेषोऽर्थवादः" इति ब्राह्मणशेषभूतमर्थवादमपि लक्षयित्वा "अतोऽन्ये मन्त्राः" (आप. श्रौ. २४।१।३४) इत्येव मन्त्रलक्षणमूचिवान्। भगवान् जैमिनिरपि "तच्चोदके मन्त्राख्या" (२।१।७) इति प्रायिकमेव लक्षणमवोचत्।

इमे च मन्त्राश्चतुर्धा विभक्ताः—करणमन्त्रः, क्रियमाणानुवादिमन्त्रः, अनुमन्त्रणमन्त्रः, जपमन्त्रश्चेति।

तत्र यस्य मन्त्रस्योच्चारणानन्तरमेव कर्म क्रियते स करणमन्त्रः। यथा—याज्या-पुरोऽनुवाक्यादिकम्।

कर्मानुष्ठानसमकालमेव यो मन्त्रः पठ्यते स क्रियमाणानुवादी मन्त्रः। यथा—'युवा सुवासा'(ऋग्वे० ३।१।३) इत्यादिः। अत्र हि यूपपरिव्याणं यदा क्रियते तदैव मन्त्रोऽयं पठ्यते।

कर्मसमनन्तरं यो मन्त्रः पठ्यते सोऽनुमन्त्रणमन्त्रः। यथा—"एको मम एका तस्य योऽस्मान् द्वेष्टि" ( श. ब्रा. १।५।५।७ ) इत्यादिः। अयं हि मन्त्रो यजमानेन द्रव्यत्यागात्मके यागे कृते समनन्तरमेव तेन पठ्यते।

एतदतिरिक्तो यो नाम "मयीदमिति यजमानो जपति" (३।४।१८) इत्यादिना विहितः सन्निपत्योपकारकरूपः, स जपमन्त्रः। पूर्वोक्तानां त्रयाणामनुष्ठेयार्थस्मारकत्वरूपं दृष्टं प्रयोजनम्। जपमन्त्राणां तु अदृष्टमात्रं प्रयोजनमिति याज्ञिकानां मीमांसकानां च सिद्धान्तः।

## ( सूत्रस्यावश्यकता )

एवं कर्मस्वरूपस्य बहुप्रकारभिन्नस्य सर्वांशे पौष्कल्यमादधतीं मन्त्रब्राह्मणात्मिकां त्रयीं यथावत् सनियमं गुरुमुखादधीत्य, अधिगम्य च तदर्थं तेषु कालेषु तानि तानि कर्माणि यथावदन्ववतिष्ठन्नसत्पूर्वतनाः पुरुषाः। तेषां च कुशाग्रधिषणत्वात् बहुज्ञत्वाच्च वेदभागेभ्य एव सर्वाणि कर्माणि यथावदवगम्यानुष्ठातुं शक्तिरभूत्, तदा नैव श्रौतसूत्राणामपेक्षाऽऽसीत्। यदा च शक्तिः क्रमशो ह्रासमुपयातुमारब्धा, अल्पज्ञपुरुषेषु च पदमाधातुं प्रवृत्ता, तेन च कारणेन अतिगभीरेभ्य इतस्ततो विप्रकीर्णेभ्योऽर्थवादबहुलेभ्यो विधिभागेभ्यः कर्मस्वरूपं यथावदवगन्तुमनीशा जनाः सञ्जाताः, तदाताननुजिघृक्षवः करुणामयमूर्तयो महर्षयस्तस्मिन् तस्मिन् वेदे तत्तच्छाखाध्यायिनः पुरुषान् प्रति तां तां शाखामवलम्ब्य कल्पसूत्राणि (१) श्रौतसूत्रापरपर्यायाण्यरीरचन्। विधिभागा हि प्रायशोऽर्थवादसंवलिता एव संदृश्यन्ते। तत्र कोऽसौ विधिः, कश्चार्थवादः, कुत्र विधेस्तात्पर्यम् इत्यादि विवेक्तुं मन्दमतीनां मतिर्न समर्थाऽभूत्।

एवं शाखान्तरेष्वपि बह्वन्यङ्गानि आम्नातानि यानि स्वशाखायां नोपलभ्यन्ते। तत्र शाखान्तरीयाणामङ्गानां कियतामुपादानं, कियतां च त्याग इत्येतद्विवेचनमपि दुःशकमभूत्।

एवमितस्ततो विप्रकीर्णानां क्रमशः सङ्कलनमपि यदा दुर्घटमभूदेतेषां, तदैव सूत्रकाराः सूत्राण्यारचयितुमुपाक्रमन्। अस्मिन्नेव काले सर्वेष्वपि वेदेषु तां तां शाखामवलम्ब्य सूत्राणि तत्तच्छाखाध्यायिनामुपकाराय बहुभिर्महर्षिभिरारचितानि। एतेषामेव सूत्राणां मध्ये अध्येत्रभावात् कर्मानुष्ठानाभावात् वैदिककर्मणि श्रद्धादिवैकल्याच्च शाखाप्रलयवत् बहूनि प्रलीनानि, कतिचिदेव तत्तच्छाखासूपलभ्यन्ते। यानि चोपलभ्यन्ते तान्यत्रानुक्रमिष्यामः।

## ( ऋग्वेदे उपलब्धं श्रौतसूत्रद्वयम् )

तत्र ऋग्वेदसंबन्धि तावत् श्रौत्रसूत्रद्वयमुपलभ्यते—आश्वलायनं (२) शाङ्खायनं (३) चेति।

---

(१) "अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखम्। अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः" इति सूत्रलक्षणम्।

(२) आश्वलायनश्रौतसूत्रे-द्वादशाध्यायाः, तत्र प्रथमेऽध्याये-परिभाषा, दर्शपूर्णमासेष्टिः। द्वितीये-अग्न्याधेयम्, अग्निहोत्रहोमः, उपस्थानम्, पिण्डपितृयज्ञः, अन्वारम्भणीया, आग्रयणम्, काम्या इष्टयः, वैमृधेष्टिः, लोकेष्टिः, मित्रविन्दा, पवित्रेष्टिः, कारीरीष्टिः, वैश्वानरीष्टिः, इष्ट्यध्ययनम्, सांवत्सरिकाणि, तुरायणम्, दाक्षायणयज्ञः, याज्या-पुरोऽनुवाक्यालक्षणम्, चातुर्मास्यानि। तृतीये-पशुः, पशुयाज्यापुरोऽनुवाक्याः, निरूढपशुः, सौत्रामणी, प्रायश्चित्तानि। चतुर्थपञ्चमयोरग्निष्टोमः। षष्ठे-उक्थ्यः, षोडशी, अतिरात्रस्य नैमित्तिकम्, सोमप्रायश्चितानि, दीक्षितमरणप्रायश्चित्तादि, सोमयागशेषः, अनूबन्ध्या, अवभृथः, उदयनीयादि। सप्तमे-सत्रधर्माः न्यूङ्खादि च। अष्टमे-शस्त्राणि, प्रतिगरादिः, पृष्ठ्यादिः। नवमे-राजसूयः, एकाहाः, वाजपेयः। दशमे-अहीनानि, द्वादशाहः, अहीनसत्रयोः समाना धर्माः, अश्वमेधः। एकादशे-रात्रिसत्राणि, गवामयनम्। द्वादशे-आदित्यानामयनम्, अङ्गिरसामयनम्, दृतिवातवतोरयनं, कुण्डपायिनामयनम्, तापश्चितामयनम्, प्रजापतेर्द्वादशसंवत्सरम्, सारस्वतसत्राणि, मित्रावरुणयोरयनम्, सत्रोत्थानम्, सवनीयपशवः, सत्रिधर्माः, प्रत्यानि, सवनीयपशुविभाग ऋत्विजाम्, प्रवराः, सत्राणि, पृष्ठ्यशमनीय इति।

(३) अत्राष्टादशाध्यायाः। तत्र प्रथमे-परिभाषा, दर्शपूर्णमासौ। द्वितीये-अग्न्याधेयम्, अन्वारम्भणीया, पुनराधेयम्, अग्निहोत्रम्, उपस्थानम्, अग्निसमारोपः। तृतीये-वैमृधेष्टिः अभ्युदितेष्टिः, अभ्युद्दृष्टेष्टिः,

आश्वलायनसूत्रमाश्वलायनमहर्षिणा कृतम्, शाङ्खायनं च तन्नाम्ना महर्षिणा। तत्र पुरोऽनुवाक्या (१) याज्यादीनां (२) तत्तच्छस्त्राणां (३) चानुष्ठानप्रकारः, तद्देशकाल-कर्त्रादीनां विधानं, स्वर-प्रतिगर (४) न्यूङ्ख (५) प्रायश्चित्तादीनां च विधानं प्राधान्येनाभिहितम् । तत्सम्बन्धीनि कानि चनाङ्गानि च तत्र तत्र विधीयन्ते । इमे च पदार्था

---

प्रायश्चित्तेष्टयः, मित्रविन्दा, दाक्षायणयज्ञः, सार्वसेनयज्ञः, वसिष्ठयज्ञः, आग्रयणम्, चातुर्मास्यानि, अग्निहोत्रप्रा०। चतुर्थे-प्राजमानम् , पिण्डपितृयज्ञः, ब्रह्मत्वम्, मृतकाग्निहोत्रादि, शूलगवः, मधुपर्कः ।

पञ्चमाद्यष्टमान्तेषु-अग्निष्टोमः। नवमे-चयनम्। दशमे-द्वादशाहः। एकादशे-द्वादशे च चतुर्विंशाद्यहीनानां हौत्रम् । त्रयोदशे-पाशुकं सौमिकप्रायश्चित्तम्, गवामयनम्, सत्राधिकारिणः, उत्सर्गिणामयनम्, आदित्यानामयनम्, अङ्गिरसामयनम्, दृतिवातवतोरयनादि । चतुर्दशे-एकाहाः, पाशुकचातुर्मास्यानि, सौत्रामणी। पञ्चदशे वाजपेयः, अप्तोर्यामः, सर्वस्वारः, राजसूयः। षोडशे-अश्वमेधः, पुरुषमेधः, सर्वमेधः, वाजपेयशेषः, राजसूयशेषः, अश्वमेधशेषः, अहीनाः। सप्तदशे—महाव्रतम्, अष्टादशे-महाव्रतीयं कर्म, गवामयनशेषः, सारस्वतसत्राणि, दार्षद्वतसत्राणि इति।

(१) देवतायै हविः प्रदानकाले देवताया आवाहनार्थं या ऋक् पुरः यागात्पूर्वं देवतामनुकूलयितुमनूच्यते सा देवतास्मरणार्था 'पुरोऽनुवाक्या' इत्युच्यते।

(२) आवाहनानन्तरं यया ऋचा देवता इज्यते, सा देवतायै हविः समर्पणार्था ऋक् 'याज्या' इत्युच्यते। "सर्वेषामग्रेऽनुवाक्यास्ततो याज्याः" ( आश्व. श्रौ. ३।७।३ )

(३) साम्ना स्तुताया देवतायाः पुनः ऋङ्मन्त्रेण सामरहितेन होत्रा क्रियमाणं स्तवनं शस्त्रमित्युच्यते "स्तुतमनुशंसति" ( तां. ब्रा. ९ )

(४) यज्ञे शस्त्रं प्रयुञ्जानस्य होतुरुत्साहजनकमध्वर्योर्वचनं प्रतिगरः।

(५) न्यूङ्खः। नितराम् अत्यन्तविषमप्रकारेण ऊङ्खनमुच्चारणं न्यूङ्खः। "गवामयनस्य चतुर्थेऽहनि प्रातरनुवाकं प्रतिपद्यर्द्धर्चाद्यो न्यूङ्खो द्वितीयं स्वरमोकारं त्रिमात्रमुदात्तं त्रिः, तस्य चोपरिष्टादपरिमितान्, पञ्च वार्द्धौकाराननुदात्तानुत्तमस्य तु त्रीन् पूर्वमक्षरं निहन्यते न्यूङ्खयमाने" ( आश्व० श्रौ० ७।११।१-५ )। अस्यायमर्थः। चतुर्थेऽह्नि प्राप्ते सति प्रातरनुवाकस्य येयमृक् प्रथमाऽस्ति, तस्या ऋचो यौ द्वावर्द्धर्चौ, तयोरर्धर्चयोर्यावादी, तयोराद्ययोर्न्यूङ्खः कर्तव्यः। तद्यथा-"आपो रेवतीः क्षयथा" ( ऋ० १०।३०।१२ ) इति प्रातरनुवाकस्य प्रतिपत्। तस्याः पूर्वार्धस्यादौ योऽयं द्वितीयः स्वर ओकारः पकारादूर्ध्वभावी, तं त्रिमात्रोपेतम् उदात्तस्वरयुक्तं त्रिवारमुच्चारयेत्, त एते त्रय ओङ्काराः सम्पद्यन्ते। तत्रैकैकस्य ओकारस्योपरि पुनरप्योकारा अर्धस्वरूपा ह्रस्वमात्रा अपरिमिताः पञ्चोच्चारणीयाः। ते चार्द्धौकाराः, सर्वेऽप्यनुदात्ताः। उत्तमस्य तु त्रिमात्रस्यौकारस्योपरि त्रीनर्द्धौकारानुच्चारयेत्, तेष्वर्द्धौकारेषु प्रथममक्षरं निहन्यात्=अत्यन्तनीचस्वरेणानुदात्तं कुर्यात्। एवं सति उदात्तास्त्रिमात्रास्त्रय ओकारा अर्द्धौकारास्त्रयोदश, इत्येवमोकाराः षोडश सम्पद्यन्ते। प्रथम—द्वितीययोस्त्रिमात्रयोर्मध्ये पञ्चानुदात्ता अर्द्धौकाराः, तृतीयस्य त्रिमात्रस्योपरिष्टादनुदात्ता अर्द्धौकारास्त्रयः, सोऽयमुच्चारणविशेषो न्यूङ्ख इत्युच्यते। "तदपि निदर्शनायोदाहरिष्यामः—आपो ३ ओ ओ ओ ओ ओ ओ३ ओ ओ ओ ओ ओ३ ओ ओ ओ रेवतीः क्षयथा हि वस्वः क्रतुं च भद्रं बिभृथामृतं च। रायो ३ ओ ओ ओ ओ ओ ओ३ ओ ओ ओ ओ ओ ओ३ ओ ओ ओश्च स्थः स्वपत्यस्य पत्नीः सरस्वती तद् गृणते वयो धो३मापो ३"-इति (आश्व. श्रौ. ७।११।७)। "न्यूङ्खाः षोडश ओकाराः, तत्र केचिदुदात्ताः केचिदनुदात्ताः" ( पा० १।२।३४ ) इति। न्यूङ्खयन्ते शब्दविशेषं कुर्वन्ति इति न्यूङ्खाः इति सायणः ( ऋ. १०।९४।३ ), शाङ्खाय. ब्रा. २२।६; २५।१३, शाङ्ख. श्रौ. १०।५।२१, १२।१३।१, ५, ७ कात्या. श्रौ. १।८।१९। ऐ. ब्रा. ५।१।३, ६।१९।२९। ह्रस्वैस्त्रयोदशभिरोकारैर्युक्ता दीर्घास्त्रय ओकारा मिलित्वा न्यूङ्खा भवन्तीति निष्कर्षः। मन्त्रेषु प्रथमपादस्य तृतीयपादस्य च द्वितीयस्वरे त्रयोदशभिरोकारैस्तत्र चावसानं कृत्वा त्रयाणां त्रिमात्राणामोकाराणामुच्चारणं न्यूङ्खः।

होतृसंज्ञकेन ऋत्विजा इष्टिषु दर्शपूर्णमासादिषु, उपरितनेषु च क्रतुषु सोमादिषु होत्रा तत्पुरुषैर्मैत्रावरुण-ब्राह्मणाच्छंस्यच्छावाकैश्च प्रतिनियतत्वेन वक्तव्यतया विहिताः।

## ( कृष्णयजुष्युपलब्धश्रौतसूत्राणि )

यजुर्वेदे तावत् कृष्णाख्ये-बौधायनीयापस्तंबीय (१) सत्याषाढीय-मानव-भारद्वाज-वैखानसाख्यानि तत्तदृषिप्रणीतानि षट् सूत्राण्यद्योपलभ्यन्ते। तत्र बौधायनीयापस्तंबीयहिरण्यकेशीय-भारद्वाजीय-वैखानसाख्यानि पञ्चापि सूत्राणि तैत्तिरीयशाखामवलम्ब्य प्रवृत्तानि। मानवं तु मैत्रायणीयसंहितामवलम्ब्य प्रवृत्तम्। अत्र बौधायनीये परं सूत्रान्तरापेक्षया वैलक्षण्यं प्रयोगबाहुल्यं शाखान्तरेभ्यः पदार्थसङ्ग्रहणं चाधिकमुपलभ्यते। इतरेषां सूत्राणां प्रायश ऐकरूप्यम्, आनुपूर्व्यामपि च क्वचिदधिकं सादृश्यमस्ति। रचनापर्यालोचनया च सर्वेभ्यः सूत्रेभ्यः प्राचीनतमं बौधायनीयमेवेत्यवगम्यते। विशेषतः कालनिर्णयं त्वेतेषामग्रे करिष्यामः।

एतेषु सूत्रेषु आपस्तम्बीयं, वैखानसं, मानवं चेति त्रितयं समग्रं मुद्रितम्। हिरण्यकेशीयं तु सोमयागान्तमेव मुद्रितम् (२)। बौधायनीयमप्यसमग्रमेव। भारद्वाजस्य त्वद्य यावन्न मुद्रणं सञ्जातम्।

## ( शुक्लयजुर्वेदे उपलब्धं श्रौतसूत्रम् )

शुक्लयजुर्वेदस्य कात्यायनीयमेकमेव श्रौतसूत्रमुपलभ्यते। कर्काचार्येणापि स्वव्याख्यायां न सूत्रान्तरकारस्य नामोल्लिखितम्। अन्यैरपि व्याख्यातृभिराधुनिकैर्विचारशीलैः पाश्चात्यपण्डितैरपि न सूत्रान्तरास्तित्वे किंचिदपि विचारितम्। प्रत्युत मेक्डानलमहाशयेन शुक्लयजुर्वेदस्य एकमेव कात्यायनश्रौतसूत्रमित्युक्तम्, तदेवास्माभिरपि यावद्विरुद्धप्रमाणानुपलम्भं स्वीक्रियते।

## ( सामवेदे उपलब्धं श्रौतसूत्रत्रयम् )

सामवेदे एकं लाट्यायनश्रौतसूत्रम्, अपरं द्राह्यायणश्रौतसूत्रं मकशसूत्रं चेत्युपलभ्यन्ते। परिशिष्टानि तु द्विपञ्चाशदुपलभ्यन्ते।

## ( अथर्ववेदे उपलब्धसूत्रम् )

अथर्ववेदे एकमेव सूत्रं कौशिकाभिधमुप लभ्यते। एतच्च नैकान्ततः श्रौतविषयमवलम्ब्य प्रवृत्तम्, किं तु प्रायशो गार्ह्यानेव विषयानुपजीवति। वितानसूत्राभिधः कश्चिदेतद्वेदमवलम्ब्य प्रवृत्तः श्रौतविषयानवबोधयति। परिशिष्टानि तु षड्विंशतिरुप लभ्यन्ते। तेषु सङ्कीर्णा विषया विरलाः श्रौता अधिकाः स्मार्ताश्च निरूपिताः।

---

(१) आपस्तंबश्रौतसूत्रे १–३ अध्यायेषु दर्शपूर्णमासौ, वैमृधेष्टिः, दाक्षायणयज्ञः, ब्रह्मत्वम्। चतुर्थे-याजमानम्। पञ्चमे-अग्न्याधेयं, पुनराधेयं च। षष्ठे-अग्निहोत्रम्, उपस्थानम्, आग्रयणं च। सप्तमे-पशुबन्धः। अष्टमे-चातुर्मास्यानि। नवमे-उक्तकर्मणां प्रायश्चित्तानि। १०–१३ सोमः। चतुर्दशे-सोमसंस्थाः। क्रतुपशवः, ऐकादशिनः, सोमब्रह्मत्वम्, सोमप्रायश्चित्तानि। पञ्चदशे-प्रवर्ग्यः, तत्प्रायश्चित्तं च। १६–१७ चयनम्। अष्टादशे वाजपेयो, राजसूयश्च। एकोनविंशे-सौत्रामणी, कौकिलसौत्रामणी, नचिकेतादिचयनम्, काम्याः पशवः, काम्या इष्टयश्च। विंशेऽश्वमेधः, पुरुषमेधः, सर्वमेधः, दशरात्रः। एकविंशे-द्वादशाहः, गवामयनम्, उत्सर्गिणामयनम्। द्वाविंशे एकाहाः। त्रयोविंशे सत्राणि। चतुर्विंशे-यज्ञपरिभाषेति चतुर्विंशतिरध्यायाः।

(२) श्रूयतेऽस्योपरितनोऽपि भागो मुद्रणायारब्ध इति।

## ( कातीयश्रौतसूत्रविषयः )

सूत्रमिदं शुक्लयजुर्वेदसंबन्धिनीः पञ्चदश शाखा अधिकृत्य प्रवृत्तमपि (चरव्यू० कं० २) विशेषतः काण्व-माध्यन्दिनीयशाखाद्वयमधिकृत्यैव प्रवृत्तमिति पूर्वमुपवर्णितम्। शाखाद्वये च यः क्रम आदृतः कर्मणां, तमेव क्रममवलम्ब्य प्रवृत्तमिदं सूत्रम्। प्रथमेऽध्याये द्वितीयाद्युपरितनेष्वध्यायेषु वक्ष्यमाणानां पदार्थानां सुखावबोधाय पारिभाषिका विषया विचारिताः।

द्वितीयतृतीययोर्दर्शपूर्णमासौ साङ्गौ निरूपितौ। चतुर्थे पिण्डपितृयागो, दर्शशेषा वत्सापाकरणादयः, विकृतिषु दर्शपूर्णमासयोर्धर्माणामतिदेशः, दाक्षायणयज्ञः, आग्रयणेष्टिः, अन्वारम्भणीयेष्टिः, अग्न्याधानम्, पुनराधेयम्, अग्निहोत्रं चेति निरूपितानि। पञ्चमे—चातुर्मास्यानि, मित्रविन्देष्टिश्च। षष्ठे—प्रतिवर्षमनुष्ठेयो निरूढपशुः। सप्तमप्रभृतित्येकादशपर्यन्तेषु पञ्चस्वध्यायेषु सोमयागः। द्वादशे-द्वादशाहो द्वादशसुत्याकः सत्रसंज्ञको यागविशेषः। त्रयोदशे-गवामयनम्। चतुर्दशे-वाजपेयः। पञ्चदशे राजसूयः। षोडशादिषु त्रिषु महाग्निचयनम्। एकोनविंशे सौत्रामणी नाम पशुविशेषः (१)। विंशेऽश्वमेधः। एकविंशे पुरुषमेध-सर्वमेध पितृमेधाः। एकाहा द्वाविंशे, त्रयोविंशे द्विरात्रप्रभृत्येकादशरात्रपर्यन्ता अहीनाः। चतुर्विंशे सत्रान्तराणि, पञ्चविंशे प्रायश्चित्तम्, मृताग्निहोत्रादि च। षड्विंशे-प्रवर्ग्य इति। अयमेव क्रमः प्रायशो ब्राह्मणेऽप्यादृत इति स्पष्टं प्रेक्षकाणाम्।

## ( कातीयश्रौतसूत्रस्य जैमिनिसूत्रसधर्मता )

एवं सर्वेष्वपि सूत्रकारेषु तत्तच्छाखामवलम्ब्य सूत्राणि रचयितुं प्रवृत्तेषु तत्तच्छाखागतानां केषां चिच्छाखान्तरगतानां चानुष्ठेयपदार्थानां मन्त्रक्रमाद्यवबोधनार्थं सूत्राणि प्रणिनीषुर्महर्षिरयं कात्यायनस्तेभ्यो विलक्षणमेव स्वग्रन्थमिमं मीमांसान्यायशबलितमरीरचत्। विशेषोऽयमस्यैवासाधारणः। प्रायशो जैमिनीयसूत्रस्याऽऽनुपूर्व्यप्यत्र ग्रन्थे बहुत्र बहुलं तत्तद्विचारस्थलेषु स्वीकृताऽनेन महर्षिणा (२)। तद्यथा—

| कात्यायनश्रौतसूत्राणि— | जैमिनिसूत्राणि— |
|---|---|
| रथकारस्याधाने १।१।८ | वचनाद्रथकारस्य ६।१।४४ |
| विष्णुर्वाऽमावास्यायां हौत्राम्नानात् ३।३।२४ | विष्णुर्वा स्याद्धौत्राम्नानात् १०।८।५३ |
| अहर्गणे सुब्रह्मण्यायाः सर्वोपलक्षणं प्रकृतिवत् १।७.६ | सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणं प्रकृत्यन्वयात् ११।४।२८ |
| परार्थेष्वेकः कृतत्वात् १२।१।१४ | परार्थेष्वेकः १२।४।३२ |
| अर्थद्रव्यविरोधेऽर्थसामान्यं तत्परत्वात् १।३।२६ | अर्थद्रव्यविरोधेऽर्थः १।३।३९ |
| चैत्र्यानन्तर्यात् १३।१।५ | आनन्तर्यात्तु चैत्री स्यात् ६।५।३१ |
| माघी वा क्रयश्रुतेः १३।१।५ | माघी वैकाष्टकाश्रुतेः ६।५।३२ |
| छागं मन्त्राम्नानात् ६।३।१८ | छागो वा मन्त्रवर्णात् ६।८।३१ |
| सोमाच्चाभृथे ४।३।५ | तथाऽवभृथः सोमात् ७।३।१२ |
| प्रकृतेर्वाऽनामत्वात् ५।४।५ | प्रकृतं वाऽनामत्वात् ७।३।२१ |

---

(१) सौत्रामणीति कर्मनामधेयम्। तच्चेष्टिपशुसमुदायस्य। कर्काचार्यैस्तु त्रिपशोर्नामधेयमिति साधितम्।

(२) इह पूर्वमीमांसाशास्त्रप्रणेता ग्राह्यः। ज्योतिःशास्त्राचार्यस्त्वसाज्ञिकः।

| विषये लौकिकमयुक्तत्वात् ४।३।७ | विषये लौकिकः स्यात् ७।३।३० |
|---|---|
| दध्नः सङ्घातात् ४।३।१२ | दध्नः सङ्घातसामान्यात् ८।२।२४ |
| द्वादशाहः सत्रमहीनश्च १२।१।४ | सत्रमहीनश्च द्वादशाहः ८।२।२४ |
| होता वा वचन-मन्त्रवर्णकारणेभ्यः ।६।११।१२ | होता वा मन्त्रवर्णाद्वचनाच्च कारणानुपूर्व्याच्च ३।५।३७-३९ |
| उपगादर्शनाच्च ६।७।३ | उपगाश्च लिङ्गदर्शनात् २।७।३० |
| स तद्धर्मा कर्मयोगात् १।६।१२ | स तद्धर्मा स्यात्कर्मसंयोगात् ६।३।२६ |
| कालान्तरेऽर्थवत्त्वं स्यात् १।८।६ | कालान्तरेऽर्थवत्त्वं स्यात् १२।३।५। एवमादि |

अर्थतः संवादीनि विचारबहुलान्यपि सूत्राणि बहुश उपलभ्यन्ते। तद्यथा—

| आहवनीययजतयो ध्रुवायाः १।८।३७ | ध्रौवाद्वा सर्वसंयोगात् १०।८।४८ |
|---|---|
| सङ्ख्याविकल्पो दानसंयोगे कृतत्वात् १।८।२० | सङ्ख्यासु तु विकल्पः स्यात् १२।४।६ |
| विक्रयी त्वन्यः शूद्रसंयोगात् ६।७।४ | विक्रयी त्वन्यः कर्मणोऽचोदितत्वात् ५।१।११ |
| श्रुतिः क्रमादानुमानिकत्वात् १।५।६ | श्रुतिलक्षणमानुपूर्व्यं तत्प्रधानत्वात् ५।१।१ |
| एवं प्रवृद्धौ समं विभजेत् ८।३।३ | विवृद्धिः कर्मभेदात् ५।३।१ |
| कालातिक्रमे नियतक्रिया प्राप्तकालत्वात् ७। | दीक्षाकालस्य शिष्टत्वादतिक्रमे नियतानामनुत्कर्षः प्राप्तकालत्वात् ६।[illegible]।३८ |
| पशोः साम्नाय्यस्य तदुक्तम् ४।३।१४ | साम्नाय्यं वा तत्प्रभवत्वात् ८।[illegible]।१३ |
| हिरण्यगर्भ इत्यृचा स्रुवाघारः १६।२।३। | हिरण्यगर्भः पूर्वस्य मन्त्रलिङ्गात् १०।३।१३ |
| नित्यानुवादोऽनुयाजप्रतिषेधः ७।४।२६ | नित्यानुवादो वा कर्मणः स्यात् १०।७।३६ इति। |

## ( सूत्राणां प्रस्थानत्रयम् )

धार्मिकं विषयमवलम्ब्य सूत्राणि रचयितुं प्रवृत्ताः सूत्रकाराः प्रायशस्त्रिष्वपि प्रस्थानेषु सूत्राण्यरीरचन्। तानि च सूत्राणि श्रौतसूत्र-गृह्यसूत्र-धर्मसूत्रात्मना प्रथितानि। तत्र वेदोक्तानां त्रेतासाधनानां कर्मणामनुष्ठानक्रमबोधकानि श्रौतसूत्राणि। जातकर्मादिसंस्कारकर्मणामेकाग्निसाध्यानां कर्मणां प्रतिपादको ग्रन्थो गृह्यसूत्रम्। साधारणवर्णाश्रमधर्मप्रतिपादको ग्रन्थो धर्मसूत्रमिति। प्रस्थानत्रयमिदं क्वचिदेकेनैव महर्षिणा निर्मितं, क्वचिच्च भिन्नैः। यथा—श्रौतसूत्राणि गृह्यसूत्राणि धर्मसूत्राणि च त्रीण्यपि आपस्तम्ब-वराह-बौधायन-मानवै रचितानि। इतरैश्चाश्वलायन-शाङ्खायन-हिरण्यकेशिभिः श्रौतसूत्राणि गृह्यसूत्राणि चेति प्रस्थानद्वयमेव निर्मितं, न तु धर्मसूत्राणि। वसिष्ठ-गौतमाभ्यां धर्मसूत्राण्येव रचितानि। महर्षिकात्यायनेन तु (१) गृह्य-धर्मविषये न प्राधान्येन प्रक्रान्तम्, किन्तु श्रौतसूत्रेषु परिशिष्टविषयप्रतिपादने च प्रवृत्तिरस्यासीत्। अनेन निर्मिता ग्रन्था इमे—

| श्रौतसूत्रम् | छागल० |
|---|---|
| प्रातिशाख्यम् | कूर्मल० |
| ऋक्सर्वानुक्रमसूत्रम् | प्रतिज्ञासू० |
| शुक्लयजुः सर्वानुक्रमसूत्रम् | अनुवाकसू० |

---

(१) "गुजराती प्रेस" मुद्रितभाष्यपञ्चकोपेतपारस्करगृह्यसूत्रभूमिकायां महादेवभट्टैः पारस्कर इति भगवतः कात्यायनस्यैवाभिधानान्तरमित्युदङ्कितम्। अपि च "प्रोष्येत्य गृहानुपतिष्ठते पूर्ववत्" (पा० गृ० कां० १ कं० १८) इत्यादिस्थलेषु वत्प्रत्ययनिर्देशादुक्तिः कथमपि सङ्गच्छते।

| | |
|---|---|
| सामसर्वानु० | चरणव्यूहप० |
| अथर्वसर्वा० | शुल्बसू० |
| त्रिकण्डिकासूत्रम् | पार्षदसू० |
| मूल्याध्यायः ( स्नानसूत्रम् ) | ऋग्यजुःपरि० |
| वार्तिकपाठः | इष्टकापूरणसू० |
| कर्मप्रदीपः ( छन्दोगपरिशिष्टम् ) | प्रवराध्यायः |
| कात्यायनस्मृतिः | उक्थशास्त्रम् |
| गृह्यपरिशिष्टम् | क्रतुसंख्याप० |
| श्राद्धसूत्रम् | निगमप० |
| रुद्रसूत्रम् | यज्ञपार्श्वप० |
| प्राकृतमञ्जरी | हौत्रप० |
| यूपलक्षणपरिशिष्टम् | प्रसवोत्थानम् |
| उपग्रन्थसूत्रम् | भाषिकसूत्रम् |

ग्रन्था इमे कात्यायनप्रणीततयैव प्रसिद्धा इदानीन्तनपण्डितलोके। परन्तु सर्वे ग्रन्था इमे महर्षिकात्यायनेनैव प्रणीताः, अथवा तच्छिष्येण केन चित् इति न वक्तुं शक्नुमः।

एवं योऽसौ वैयाकरणो वार्तिकरचयिता कात्यायनः, स एवास्मत्सूत्रकारोऽपीत्यत्रापि महान् सन्देहः। पाश्चात्यदेशीयैरपि विद्वद्भिर्विषयेऽस्मिन् सन्दिहानैरेव स्थीयतेऽद्ययावत्। अष्टादशानां परिशिष्टानां कर्ता कात्यायन इति तु चरणव्यूहकारैरुक्तम्। ( कं. २ ) तद्वद्यथा तु व्याकरणवार्तिककर्ता कात्यायनोऽस्मत्सूत्रकाराद् भिन्नो न वा इति तु न स्पष्टं प्रतीयते।

## ( सूत्रकारस्यास्य कालः )

सर्वे इमे सूत्रप्रस्थानरूपा धार्मिकग्रन्थाः प्रायश एकस्मिन्नेव द्वित्रिशतवत्सरपरिमिते काले रचिता इति तु प्रायशः सर्वेऽभ्युपगच्छन्त्येव। तत्रापि सूत्रान्तरकारेषु विचाररीतिं परित्यज्य पदार्थतत्क्रममात्रं प्रतिपादयत्सु महर्षिरयं कात्यायनो विचारशबलितामेव यदा निरमात् तदा इदमवगम्यते—मीमांसासूत्रेण साकं कालतोऽस्य सन्निहितः कश्चन सम्बन्ध आसीदिति। तत्रापि जैमिनीयसूत्रैः साकमेव विशेषतः संवादात् तत्सूत्रसमकालिकानि किंचिदिव पूर्वोत्तरकालिकानि वा इमानीति प्रतीयते। तत्रापि सूत्राणाममीषां क्रमे कस्मिंश्चन विचार्यमाणे विचारशबलितानि सूत्राणि प्रथमं रचितानि, ततो विचारेण सिद्धं विषयमात्रमवलम्ब्य तदनुष्ठानक्रममात्रबोधनार्थं विचाररहितानि सूत्राणि तैस्तैः सूत्रकारैरारचितानि इति युक्ततरं प्रतिभाति। एवं च विचाररहिताद्यापस्तम्ब-बौधायनादिसूत्रकाराद्यपेक्षया विचारशबलितमिदं सूत्रं प्राचीनतरमित्यभ्युपगन्तव्यं भवति। तेन चापस्तंबाद्यपेक्षयाऽस्य प्राचीनत्वं सिद्धं भवति। आपस्तंबस्य च कालो विक्रमसंवत्सरात्पूर्वं दशमशताब्दी इति आपस्तम्बगृह्यसूत्रभूमिकायां काशी-चौखम्भामुद्रितायां मीमांसककेसरिभिः श्रीचिन्नस्वामिशास्त्रिभिर्युक्त्या साधितम्।

ततः पूर्वकालिकेनानेन वैक्रमात्संवत्सरात्पूर्वमेकादशशताब्दीगतेन द्वादशशताब्दीगतेन वा भाव्यमिति भाति। यद्येवमस्माद्वार्त्तिकप्रणेता भगवान् कात्यायनोऽन्य एवेति बलादायाति।

वार्तिककारोऽयं वैक्रमाब्दात्पूर्वं चतुर्थ्यां पञ्चम्यां वा शताब्द्यामासीदिति निर्णीतं विमर्शकैः ( भण्डारकर विल्वलकर इत्यादिभिः )। अतो वैक्रमाब्दात्पूर्वमेकादशशताब्दीगतेनास्मत्सूत्रकारेण कथं वररुचेः कात्यायनस्यैकत्वं भवितुमर्हति । उक्तयुक्त्या इतो वर्षसहस्रत्रितयात्पूर्वमस्मत्सूत्रकारो भूमिमिमामलंचकारेति गम्यते ।

## ( विज्ञप्तिः )

एवमीश्वरकृपया समाप्तस्यास्य ग्रन्थस्य विषये येभ्योऽहमधमर्णोऽतितरां, तेषां मध्ये प्रथमतोऽस्मत्तातपादानां सर्वतन्त्रापरतन्त्राणामपरेषामिव कात्यायनानां जगत्पूज्यचरणानां विद्वल्ललामभूतानामस्मद्गुरुचरणभूतानां महामहोपाध्यायानां **श्री १०८ प्रभुदत्तशास्त्रिणा** माहिताग्नीनां चरणकमलेऽस्मदनुग्रहैकपरायणे अन्यत्कर्तुमनीशानः केवलं मनःकुसुमेनानवरतमर्चयामि । यत्प्रज्ञापारावारेऽनवरतमुल्लसन्त्या वैदिकविद्यावीचिपरम्पराया लेशमात्रमधिगम्य प्रभुरभवमेतद्व्याख्याकरणे ।

आदितो यावदन्तं ग्रन्थस्यास्य विलेखने भूमिकादौ च येषामुपकारोऽवर्णनीय आसीत्, किं बहुना—ग्रन्थस्यास्य समापनमेव न सुशकमभूत्, तान् श्रीमतः श्रीचिन्नस्वामिशास्त्रिमहोदयान् काशीविश्वविद्यालयाध्यापकान् मीमांसकप्रवरान् , कदाचिदपि न विस्मर्तुमीशे। अतस्तेभ्यो महतीं कृतज्ञतां प्रकटयामि ।

ग्रन्थस्यास्य मुद्रणविषये महान्तमपि व्ययभारमविगणय्य गैर्वाणीवाणीप्रणयिभ्यो, धार्मिकग्रन्थोद्धरणेऽनवरतमाविष्कृतादरेभ्यो, वैदिकपथप्रतिष्ठापने निबद्धकक्षेभ्यः, सुरभारतीसेवायामेव समर्पितनिजकरणत्रयेभ्यः, तदेव च परं पुरुषार्थं मन्वानेभ्यो, विनयावनम्रेभ्यो, गुणैकनिधिभ्यः, सनातनधर्मैकमयजीवितेभ्यः, श्रेष्ठिवर्येभ्यः, श्रीगौरीशङ्करगोयेनकामहोदयेभ्यो महतीमाशीःपरम्परां हृदयेन वितरामि, प्रार्थयामि च भगवन्तं लोकगुरुमुमापतिम्, सुरभारतीसमुद्धरणैकफलेन इतोऽप्यधिकैश्वर्येण तादृशा चायुषा समेधयत्वेनानिति ।

## ( समर्पणम् )

येषां गुरुचरणानामसीमकृपया ग्रन्थोऽयं निर्विघ्नेन परिसमाप्तिमवाप, तेषामेव श्री विश्वनाथसदृशानामस्मत्तातपादानां महामहोपाध्यायानामग्निहोत्रिणां श्री १०८ मतां प्रभुदत्तशास्त्रिणां चरणकमलयोरेव ग्रन्थमिमं समर्पयामि, तेन च मन्ये भगवान् विश्वेश्वरोऽपि प्रीतो भवेदिति ।

शोधनादिव्यापारेऽत्यन्तं जागरूकेण स्थितवतोऽपि मम प्रथमप्रवृत्तिरूपेऽस्मिन् कार्ये बह्व्योऽशुद्धयस्तथैव स्थिताः। अतो विद्वज्जनान् विनम्रः प्रार्थये—पुनर्मुद्रणावसरे ते साक्षिगोचरीभूता अशुद्धीर्मह्यं निवेद्य मामनुगृह्णन्त्विति, मयापि इतोऽप्यधिकतरमवहितेन ताः समीकरिष्यन्त इति ।

ग्रन्थेऽत्र महर्षिणा निरूपितानां यागानां स्वरूपस्य सुखावबोधार्थं सङ्ग्रहेण तेषां स्वरूपमत्र विशदीक्रियते—

## ( यज्ञादिस्वरूपम् )

तत्र श्रुतौ तावत् वैदिकानि कर्माणि पञ्चधा विभक्तानि। "स एष यज्ञः पञ्चविधोऽग्निहोत्रं, दर्शपूर्णमासौ, चातुर्मास्यानि, पशुः, सोमः" ( ऐ० ब्रा० ) इति। स्मृतौ तु "औपासनहोमः, वैश्वदेवम्, पार्वणम् , अष्टका, मासि श्राद्धम्, श्रवणा, शूलगव इति सप्त पाकयज्ञसंस्थाः; अग्निहोत्रम् , दर्शपूर्णमासौ, आग्रयणम् , चातुर्मास्यानि, निरूढपशुबन्धः

सौत्रामणी, पिण्डपितृयज्ञादयो दर्विहोमा इति सप्त हविर्यज्ञसंस्थाः; अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी, वाजपेयः, अतिरात्रः, अप्तोर्याम इति सप्त सोमसंस्थाः (गौ० ध० ८।१८) इति श्रौतानि स्मार्तानि मिलित्वा एकविंशतिरुक्तानि। तत्र स्मार्ताः सप्तपाकयज्ञसंस्थाः स्मृतौ गृह्ये वा निरूपिता इति न सूत्रकारेण तासामत्र निरूपणं कृतम्। तथाऽपि तेषामपि स्वरूपमतिसङ्क्षेपेण निरूप्यते किञ्चिदिव। तत्र या इमाः स्मार्ताः संस्थाः, ता गृहीतस्मार्ताग्निना पुरुषेण स्वाग्नावनुष्ठेयाः।

## (स्मार्ताग्न्याधानकालः)

स्मार्ताग्निश्च "आवसथ्याधानं दारकाले दायाद्यकाल एकेषाम्" (पा० गृ० १।२।१-२) "भार्यादिरग्निर्दायादिर्वा" (गौ० ध० ५।७) इत्यादिवचनबलाद् विवाहप्रभृति दायप्रभृति वा सम्पादनीयो भवति। तत्र वैवाहिकचतुर्थीहोमानन्तरम् "आवसथ्याधानं दारकाले" (पा० गृ० १।२।१) इत्यनेन विधिना सम्पादितोऽग्निः स्मार्ताग्निरित्युच्यते। गृह्यः, आवसथ्यः, औपासन इति चानर्थान्तरम्। यदि तु दैवान्मानुषाद्वा कस्माच्चिदपराधात् न ग्रहणं सुशकं, तदा दायकाले तेनैव विधिना सम्पादनीयो भवति। इमौ द्वौ कालौ मुख्यत्वेन परिगणितौ। यदि च कालद्वयेऽप्यस्मिन् नाहितोऽग्निस्तदा यावान् कालोऽतीतस्तत्कालोक्तं प्रायश्चित्तमनुष्ठाय, तत आधातव्यः। अत्र च पितुरगृहीताग्निकत्वे पुत्रस्य स्मार्ताग्निग्रहणेऽधिकारः समस्त्येव। एवं गृहीतेऽग्नौ औपासनहोमादिकाः सप्त पाकयज्ञा अनुष्ठेयाः।

## (स्मार्त्तेऽग्नौ कर्त्तव्यं कर्म)

अत्र यद्यपि "कर्म स्मार्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही। दायकालाहृते वाऽपि श्रौतं वैतानिकाग्निषु" (या० स्मृ० १।९७) इति याज्ञवल्क्यादिस्मृतिमवलम्ब्य शान्तिकपौष्टिकादिकमपि गृह्येऽग्नौ कुर्यादित्युक्तं देवयाज्ञिकेन, (का. श्रौ. १।१।२०) तथापि शान्तिकपौष्टिकादि कर्मणो बहिःशालायामनुष्ठानविधानेन विना वचनमावसथ्याग्नेः स्वायतनाद् बहिर्नयने लौकिकत्वापत्त्या बहिःशालायां विहितानि सर्वाणि सीमन्तादीनि लौकिकाग्नावेवानुतिष्ठन्ति शिष्टाः। अतः पाकयज्ञा ये चात्मसंस्कारास्ते सर्वे गृह्येऽग्नौ क्रियन्ते। अन्यत्सर्वं पुत्रसंस्कारकं शान्तिकपौष्टिकादि च लौकिकाग्नावेवेति।

## (पाकयज्ञेषु प्रथम औपासनहोमः)

अत्र सायं प्रातः "दध्ना तण्डुलैरक्षतैर्वा" (पा. गृ. १।८।३) इति द्रव्यैर्हस्तेन क्रियमाणो होम औपासनहोम इत्युच्यते। तत्र सायंकाले अग्निः प्रधानदेवता, प्रजापतिश्च स्विष्टकृत्स्थानीयाऽङ्गदेवता (श. ब्रा. २।३।१।२३)। एवं प्रातः सूर्यः प्रधानदेवता, प्रजापतिरङ्गदेवता। अयं च होमः सायमारम्भणीयः सायमादिप्रातरन्तमेकं कर्म। तेन सङ्कल्पे सायंप्रातर्होमं करिष्ये इत्युल्लेखः क्रियते। कालद्वयानुष्ठेययोर्होमयोरेकत्वाच्च मिलितयोरेकं फलं, न पृथक्। अत एव च कारणादुभयत्रापि द्रव्येण कर्त्रा च एकेनैव भाव्यम्। एककाले चानुष्ठाय कालान्तरेऽननुष्ठाने च न फलप्राप्तिरित्यपि। अयं होमो जीवता सपत्नीकेन पुरुषेण यावज्जीवमनुष्ठेयः। अकरणे प्रत्यवायश्रवणात्।

## (वैश्वदेवकर्म)

पाकयज्ञेषु द्वितीयं वैश्वदेवम्। वैश्वदेवमिति च कर्मणो नामधेयम्। विश्वे सर्वे देवा अत्रेज्यन्त इति। अस्यैव च नामान्तरं पञ्च महायज्ञा इति। "देवयज्ञो भूतयज्ञः पितृयज्ञो

मनुष्ययज्ञो ब्रह्मयज्ञः" (श ब्रा. ११।५।५।१) इति । इदमपि च नित्यं गृहमेधिनः। परन्तु शाखान्तरे सायंप्रातः कर्तव्यत्वेन विहितोऽपि अस्माकं प्रातःकाल एव विधानादेकस्मिन्नेव प्रातःकालेऽनुष्ठेयम् ।

### ( पार्वणम् )

पार्वणं तु षट्पुरुषोद्देश्यकं प्रत्यमायां कर्तव्यं कर्म । इदमपि च नित्यम् ।

### ( अष्टकाश्राद्धम् )

अष्टकाश्राद्धमपि "ऊर्ध्वमाग्रहायण्यास्तिस्रोऽष्टकाः" ( पा. गृ. ३।३ ) इति सूत्रेण हेमन्त-शिशिरसंबन्धिनीषु चतसृषु कृष्णपक्षाष्टमीषु अपूप-गोमांस-शाकैरिन्द्र-विश्वदेवप्रजापति-पितॄनुद्दिश्य क्रियमाणं कर्म। अस्य च "अप्यनडुहो यवसमाहरेत्, अपि वा कक्षमुपोषेत्, न त्वेवानष्टकः स्यात्" (आश्व० गृ०२।४।११) इति साग्निकस्यावश्यकर्तव्यताबोधनेऽपि तत्र गोमांसस्य द्रव्यत्वेन विधानात्, कलौ च गवालम्भस्य निषिद्धत्वात् तत्प्रतिनिधित्वेन च द्रव्यान्तरस्याविधानात् लोप एवास्मच्छाखीयानाम् । शाखान्तरीयाणां तु येषां मांसस्य न विधानं तेषां नित्यतयैवानुष्ठानम् ।

### ( मासिश्राद्धम् )

मासि श्राद्धं मासि मासि क्रियमाणम् । "मासि मासि वोऽशनम्" ( श० ब्रा० ) इति श्रुतेः ।

### ( श्रवणाकर्म )

श्रवणाकर्म श्रावणपौर्णमास्या आरभ्याऽऽमार्गशीर्ष्याः प्रतिदिनं सायं सर्पेभ्योऽर्थं क्रियमाणं बलिकर्म "अथातः श्रवणाकर्म ( पा. गृ. २।१४ ) इत्यादिना विहितम् । इदं च सकृत्कार्यम्, कालसंयोगाभावात् ।

### ( शूलगवः )

शूलगवोऽपि "अथ शूलगवः" (पा. गृ. ३।८ ) इत्यादिना विहितो गोद्रव्यकः कर्मविशेषः । अस्यापि कलौ निषिद्धत्वादननुष्ठानमेव । शाखान्तरीयाणाम् "ईशानाय स्थालीपाकं श्रपयित्वा" (आप. गृ. ९।१३) इति गोः स्थाने स्थालीपाकविधानादनुष्ठानम् । इदमपि सकृत् ।

### ( श्रौताधानकालः, तत्राधिकारी च )

ततः श्रौताः सप्त हविर्यज्ञसंस्थाः । आसु संस्थासु अग्रे निरूप्यमाणासु सोमसंस्थासु च गृहीतश्रौताग्नेरेव सपत्नीकस्याधिकारः । अग्निग्रहणं तु आधानेनैव भवति । आधानं च "वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यो, वर्षासु वैश्यः इत्यादिवाक्यै स्त्रैवर्णिकान्प्रति तत्तद्वर्णोद्देशेन "अमावास्यायामग्न्याधेयम्" ( का. श्रौ. ४।७।१ ) इत्यादिना तत्तत्काले विहितं कर्म । तच्च गार्हपत्याहवनीयदक्षिणाग्निसभ्याग्निचतुष्टयसम्पादकं तत्तदायतनेषु मन्त्रपुरःसरमग्नीनां स्थापनरूपम् । अनेनैव चाधानेन श्रौतानामग्नीनां सिद्धिः । "जातपुत्रः कृष्णकेशोऽग्नीनादधीत" इत्यादिश्रुत्या पञ्चविंशतेरुपरि चत्वारिंशतो वर्षेभ्यः पूर्वं सपत्नीकेन पुरुषेणानुष्ठेयम्, ततो यावज्जीवं धारणं च । यदि केन चित्कारणेन मध्ये विच्छेदस्तदा पुनराधानविधिना पुनरग्नीन् सम्पाद्य तत्र दर्शपौर्णमासादयः पूर्ववदनुष्ठेयाः ।

अस्मिंश्चाधाने पितरि जीवति तस्याहिताग्नित्वे सत्येव पुत्रस्याधिकारः । अन्यथा परिवित्तिपरिवेत्तृदोषः शास्त्रे समुक्तः । पितुरनन्तरं तु अधिकारी भवत्येव । स चाधिकारो द्वादशाहे सपिण्डनपक्षे तस्मिन्नेव दिनेऽहनि । अनन्तरं वा प्रथमेऽब्देऽपि ।

## ( अग्निहोत्रे द्रव्यं देवता च )

एवमाधानसिद्धेषु वैतानिकाग्निषु अग्निहोत्रादीनि कर्माण्यनुष्ठेयानि। तत्राग्निहोत्रं नाम अग्न्युद्देशेन सायं प्रातः क्रियमाणो होमविशेषः। अत्र द्रव्याणि पयआदीनि बहून्याम्नातानि। तत्र पयो मुख्यं द्रव्यं क्रत्वङ्गतयाऽऽम्नातम्, इतराणि च यवागू-तण्डुल-दधि-घृतरूपाणि द्रव्याणि काम्यानि श्रुतावाम्नातानि। स्मृतौ तु—

"तैलं दधि पयः सोमो यवागूरोदनं घृतम्।
तण्डुलाः फलमापश्च दश द्रव्याण्यकामतः" ( स्मार्त्तोल्लासे )

इत्यकामसंयोगेनैव नित्यतयाऽऽम्नातानि। अत्रापि अग्निर्मुख्या देवता, प्रजापतिरङ्गदेवता स्विष्टकृत्स्थानीया सायंकाले, प्रातश्च सूर्यो मुख्या देवता, प्रजापतिरङ्गदेवता। अत एव चाग्निदेवताकत्वं प्रवृत्तिनिमित्तमादाय अग्निहोत्रशब्दः कर्मनामधेयम्। अस्यैव च श्रौतस्य कर्मणोऽग्निहोत्रमिति संज्ञा, न तु स्मार्तस्यौपासनहोमस्य (१)

अस्य चाग्निहोत्रस्य महत्प्राशस्त्यम्, अकरणे च महान् प्रत्यवायो जन्मनो वैयर्थ्यं च बहु प्रतिपादितं श्रुतौ स्मृतौ च। उत्तरक्रतूनां दर्शपूर्णमासादीनां यथावदनुष्ठानसौकर्याभावेऽपि अग्निहोत्रस्य परमापद्गतेनापि पुरुषेणावश्यमनुष्ठानं, तेनैव च इतरक्रत्वनुष्ठानं च बहुश उद्घोषयन्ति श्रुतयः स्मृतयश्च।

इदं च कर्म यावत्सम्भवं यजमानेन स्वयं कर्तव्यम्। तदशक्तौ च ऋत्विजाऽपि कारयितुं शक्यते, "तस्यैतस्याग्निहोत्रस्य यज्ञक्रतोरेक ऋत्विक्" ( तै० सं० २।३।६ ) इति श्रुतो ऋत्विक्कर्तृकत्वावबोधनात्। स च ऋत्विगध्वर्युः।

## ( दर्शपूर्णमासयागः )

ततो दर्शपूर्णमाससंज्ञकौ यागविशेषौ अमायां पूर्णिमायां च यथाक्रमं कर्तव्यौ। अमायां पूर्णिमायां चानुष्ठेयत्वादेव चानयोः कर्मणोर्दर्शपूर्णमासाविति संज्ञा। अत्र यद्यपि दर्शपूर्णमासाविति द्विवचनमेव सर्वत्रोपलभ्यते, तथापि पौर्णमास्यामाग्नेयोऽष्टाकपालः पुरोडाशयागः, अग्नीषोमीय उपांशुयाग आज्यद्रव्यकः, अग्नीषोमीय एकादशकपालः पुरोडाशयाग इति यागत्रयम्। अमायां च आग्नेयः पुरोडाशयाग एकः, इन्द्रदेवताको दधिद्रव्यको यागो द्वितीयः, इन्द्रदेवताकः पयोद्रव्यको यागश्चापर इति यागत्रयम्, उभयत्र मिलित्वा षड् यागाः। एकैककालकर्तव्यं यागत्रयमपि एकं समुदायमङ्गीकृत्य समुदायद्वयरूपेण दर्शपूर्णमासाविति द्विवचनान्तेनानुवादः। इदं च यागषट्कं सान्नाय्ययाजिनः। अत्र पूर्वोक्तौ दधिपयोयागावेव हि सान्नाय्यपदाभिधेयौ। सान्नाय्ययागे च सोमयाजिन एवाधिकारः। अर्थात् आधानानन्तरं यः सोमेनेष्टवान् तस्य सान्नाय्ययागो नित्यः। इतरस्य तु "कामादितरः" (का० श्रो० सू०

---

(१) अग्निहोत्रशब्दोऽयं तत्प्रख्यन्यायेन कर्मनामधेयमित्युक्तं पूर्वमीमांसायाम् ( १।४।४ )। स च कर्मविशेषः "उद्धरेति यजमानो ब्रूयात्" ( ४।१३।१ ) इत्यादिना विधीयमानः श्रौत एव, न तु स्मार्तस्यौपासनहोमस्याग्निहोत्रपदवाच्यता। अत एव च "अनाहिताग्नेरप्येषः" ( ४।१।२९ ) इत्यनेन स्मार्ताधानवतोऽपि अनाहिताग्नित्वमेवोक्तं सूत्रकारेण। "एवंविहितस्यानाहिताग्नेरौपासने श्रपणधर्मा होमश्च" ( आप० श्रौ० १।१०।१७-१८ ) इति भगवताऽऽपस्तम्बेनाप्यनाहिताग्नेः पिण्डपितृयज्ञं विदधता तस्यौपासने श्रपणधर्मान् होमं च विदधता औपासनवानपि स्मार्ताग्निरनाहिताग्निरेवाभिप्रेतः। ग्रन्थेषु कुत्रापि च अग्निहोत्रशब्द औपासनहोमे न प्रयुक्तो दृष्टः। अतो यदिदानीं स्मार्ताग्निमन्तमपि पुरुषमग्निहोत्रिशब्देन व्यवहरन्ति, तत्र भ्रान्तिं विना नान्यत्किञ्चन निदानमुपलभामहे।

अ० ४। कं० १ सू. २७) इत्यनेनैच्छिकः। एवं च यो नाम असोमयाजी सान्नाय्येन यष्टुं नेच्छति तस्य पौर्णमास्यां त एव यागाः। अमायां परमाग्नेयेन सह वैष्णव अग्नीषोमीयो वा आज्यहविष्को यागः, ऐन्द्राग्नश्च द्वादशकपालपुरोडाशयागोऽस्माकं माध्यन्दिनीयानां शाङ्खायनानां च। इतरेषां तु अमायाममसन्नयत आग्नेय ऐन्द्राग्न इति द्वावेव यागौ। अत्र यद्यपि सामान्यतः पौर्णमास्यमावास्याकालिकत्वमुक्तम्, तथापि पौर्णमास्याममायां वाऽग्न्यन्वाधानं नियमाश्चानुष्ठीयन्ते, यागः परं प्रतिपद्येव। अतो दिनद्वयसाध्यमिदं कर्म। तत्रापि दर्शे दिनद्वयानुष्ठेयत्वं नित्यम्। पौर्णमासयागे तु सद्यस्कालत्वे विकल्पः, पौर्णमास्यामन्वाधाय नियमादिकमनुष्ठाय प्रतिपदि यष्टव्यम्, अथवा प्रतिपद्येव सर्वमनुतिष्ठेद्यावद्यागं च नियमान् धारयेत्। कालद्वयानुष्ठेयं कर्मषट्कमपि एकफलसाधनमिदमेकं कर्मेति व्यवह्रियते। अतोऽन्यतरकालसाध्यं कर्मत्रयमनुष्ठाय न फलभाग्भवति।

## ( आधानानन्तरमादौ पौर्णमासस्यानुष्ठानं, ततो दर्शेष्टिः )

अनुष्ठानं च पौर्णमासारम्भमेव भवति। अत आधानानन्तरं दर्शे आपतितेऽपि न तत्र यागः, किन्तु आगामिन्यां पूर्णिमायां प्रारभ्य तत्र पौर्णमासमनुष्ठाय ततो दर्शोऽनुष्ठेयः। अस्य च कर्मणः सपत्नीकेन यजमानेन सह चत्वार ऋत्विजोऽध्वर्यु-ब्रह्म-होत्र-ग्नीध इति। "तस्माद्दर्शपौर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विजः" ( तै० सं० २।३।६, ) इति।

## ( दर्शपूर्णमासौ सर्वासामिष्टीनां प्रकृतिः )

एते षड् यागाः सर्वासामिष्टीनां प्रकृतयो भवन्ति। "दर्शपूर्णमासाविष्टीनां प्रकृतिः" ( आप. श्रौ. २४।३।३२ ) "इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात्" (जै० ८।१।११) इति स्पष्टमुक्तत्वात्। श्रुतौ हि तत्तत्फलोद्देशेन तत्तन्निमित्तोद्देशेन च "ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकामः" ( तै० सं० २।२।१ ) "यस्याहिताग्नेरग्निर्गृहान्दहेत्सोऽग्नये क्षामवतेऽष्टाकपालं पुरोडाशं निर्वपेत्" (तै. सं. २।२।२) इत्यादिना परःसहस्रमिष्टयो विहिताः, तासां सन्निधौ तत्तदपेक्षितान्यङ्गानि न पठितानि, परन्तु पूर्वनिरूपितेषु दर्शपूर्णमासाख्येषु षट्सु यागेषु सर्वानङ्गकलापानभिधाय तत एव तासु तासु विकृतिषु अङ्गानामतिदेशः कर्तव्यः। अत एव च अपेक्षितसर्वाङ्गोपदेशाद्दर्शपूर्णमासयागौ प्रकृतिरित्युच्यते, इतरास्त्विष्टयो विकृतय इति। यत्र समग्राङ्गोपदेशः सा प्रकृतिः, यत्र चान्यतोऽङ्गप्राप्तिः सा विकृतिरिति तयोर्लक्षणमुद्घोषयन्ति न्यायविदः। प्रकृतितो विकृतौ धर्मप्राप्तावपि प्राकृतो द्व्यहकालो न विकृतौ प्राप्नोति। "य इष्ट्या पशुना सोमेन यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेत" (काठ० सं०) इति विशेषविधिना सर्वा विकृतीरतिदिश्य सद्यस्कालताविधानात्।

## ( दर्शपूर्णमासयागीयपदार्थाः )

अत्र यद्यपि बहवः पदार्था अनुष्ठेयाः, तेषां सर्वेषां निरूपणं विस्तरापेक्षमिति मुख्याः केचन निरूप्यन्ते। पौर्णमास्यां प्रथमतोऽग्न्युद्धरणम्, (१) अग्न्यन्वाधानं, (२) ब्रह्मवरणं, प्रणीताप्रणयनं, (३) परिस्तरणं, (४) पात्रासादनं, शूर्पाग्निहोत्रहवण्योः

---

(१) प्रणयनार्थं गार्हपत्यादाहवनीयदक्षिणाग्न्योः पृथक्करणमग्न्युद्धरणम्।
(२) गार्हपत्याहवनीयदक्षिणाग्निषु "ममाग्ने वर्च" इति षट्समिदाधानरूपं कर्म अग्न्यन्वाधानम्।
(३) चमसे संगृहीता आपः प्रणीताः, तासां प्रणयनं स्वस्थाने स्थापनं प्रणीताप्रणयनम्।
(४) अग्नीनां परितः कुशैराच्छादनं परिस्तरणम्।

प्रतपनम्, अग्नि होत्रहवण्यां (१) शकटात् इडापात्रीतो (२) वा हविर्ग्रहणादिकम्, पवित्रकरणादिकम्, (३) पात्र-हविःप्रोक्षणम्, हविषः कण्डनादिफलीकरणान्तम्, (४) तस्य पेषणम्, कपालोपधानम्, (५) उपसर्जनीनां हविषश्चाधिश्रयणम्, (६) आप्त्येभ्यो-ऽङ्गुलिप्रक्षालननिनयनम्, वेदिकरणादिकं, स्तम्बयजुर्हरणादिकम्, (७) स्रुव-जुहू-(८) पभृद् (९) ध्रुवादीनां (१०) संमार्गः, पत्नीसन्नहनम्, (११) इध्म-वेदि-बर्हिषां प्रोक्षणम्, (१२) प्रस्तरग्रहणम्, (१३) वेदेः स्तरणम्, परिधिपरिधानम्, (१४) इध्मयोराधानम्, विधृत्योः स्थापनम्, (१५) जुह्वादीनां वेद्यां स्थापनादि, पञ्चदशसामिधेन्यनुवचनम्, (१६) अग्निसम्मार्गः, आघारौ, (१७) होतृवरणादिकम्, पञ्च प्रयाजाः, (१८) आज्यभागौ (१९) प्रधानयागः, (२०) स्विष्टकृत्, (२१) प्राशित्रावदानम्, (२२) इडावदानादिकम्, भागप्र-

---

(१) अग्निहोत्रं हूयतेऽनया साऽग्निहोत्रहवणी।

(२) वारणकाष्ठनिर्मिताऽरत्निमात्रदीर्घा द्व्यङ्गुलगर्ता प्रान्तेषु द्व्यङ्गुलपरिधिमती मध्ये सङ्कुचिता चतुरङ्गुलदण्डा पात्री इडाया आधारत्वात् इडापात्रीत्युच्यते।

(३) अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च। प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्" इति छन्दोगप० (२।१०)।

(४) तण्डुलानां कणादिनिरसनेन शोधनं फलीकरणम्।

(५) कपालानां विहितक्रमेण स्थापनं कपालोपधानम्। कपालानि तु पुरोडाशपाकार्थं मृत्तिकानिर्मितानि वह्नौ पक्वानि द्व्यङ्गुलोच्छ्रायाणि यस्मिन् पुरोडाशे यावन्ति विहितानि तानि सर्वाणि मिलित्वा गार्हपत्यस्य पश्चाद् भूमौ गार्हपत्यायतनान्तः पश्चिमभागे उपधीयमानानि त्र्यङ्गुलवृत्तानि षडङ्गुलविपुलानि। सर्वाणि कपालानि एतत्क्षेत्रान्तरेव सम्पादनीयानि।

(६) पिष्टसंयवनार्थास्तप्ता आप उपसर्जन्यः।

(७) दर्शपूर्णमासादौ यजुर्मन्त्रेण छिन्नो दर्भः स्तम्बयजुः।

(८) पलाशकाष्ठनिर्मिता बाहुमात्री हंसमुखप्रणालिका स्रुक् जुहूः। हूयतेऽनयेति तद्व्युत्पत्तिः।

(९) अश्वत्थकाष्ठनिर्मिता जुहूसदृशी उप समीपे भ्रियते ध्रियते इति व्युत्पत्त्या अध्वर्युणा होमार्थं धृतदक्षिणहस्तसंबन्धिजुह्वाः समीपे धारणादुपभृदित्युच्यते।

(१०) विकङ्कतकाष्ठनिर्मिता जुहूसदृशी यागसमाप्तिपर्यन्तं वेद्यां विद्यमानतया स्थिरत्वदर्शनात् ध्रुवति अप्रचलिता भवतीति ध्रुवा।

(११) मुञ्जरज्जुनिर्मितः पत्नीबन्धनार्थो रज्जुविशेषः पत्नीसन्नहनम्।

(१२) पलाशादिवृक्षाणामरत्निमात्रा अष्टादश समिध इध्मः (छन्दो० प० ८।१९-२०)।

(१३) प्रस्तरः कुशमुष्टिः।

(१४) आहवनीयस्य परितो निधीयन्ते इति परिधयः पलाशादिसमिधो बाहुमात्र्यः।

(१५) विशेषेण धृतिर्धारणं प्रस्तरादीनां ययोस्ते विधृती कुशौ।

(१६) सम्यगिध्यते ज्वाल्यतेऽग्निर्याभिर्ऋग्भिस्ताः सामिधेन्यः "प्र वो वाजा अभिद्यव इत्याद्याः (तै० ब्रा० ३।५।२।१) एकादश, तासां पठनं सामिधेन्यनुवचनम् (शत० १।३।२।१३)।

(१७) वन्हेः कश्चिद्देशमारभ्य देशान्तरपर्यन्तं समन्त्रकमाज्यधारया आहरणं प्रक्षेपणमाघारः।

(१८) प्रकर्षेण इज्यन्ते देवता एभिस्ते प्रयाजाः।

(१९) आज्यं भागो ययोस्तौ आज्यभागौ अग्नीषोमौ, तत्संबन्धाद्धोमावप्याज्यभागौ।

(२०) फलोद्देशेन विहिता देवता प्रधानदेवता। तदर्थं यागः प्रधानयागः।

(२१) प्रधानयागस्य सुष्ठु इष्टं करोतीति स्विष्टकृत्, कृतस्य प्रधानस्य पौष्कल्यापादक इति यावत्।

(२२) प्राशित्रं ब्रह्मणो भागः, तस्यावदानमहणं प्राशित्रावदानम्।

शनादिकम्, अन्वाहार्यो दक्षिणा, (१) त्रयोऽनुयाजाः, (२) व्यूहनम्, (३) सूक्तवाकः, (४) शंयुवाकः, (५) पत्नीसंयाजाः, (६) दक्षिणाग्निहोमः, बर्हिर्होमः, प्रणीताविमोकादि, विष्णुक्रमादि (७) याजमानम्, व्रतविसर्गः, ब्राह्मणतर्पणं चेति।

इमौ दर्शपूर्णमासौ यावज्जीवमनुष्ठेयौ। तावत्कर्तुमशक्तश्चेत् त्रिंशद्वर्षाणि कृत्वा विरमेत्। दाक्षायणयाजिनस्तु पञ्चदश वर्षाणि दाक्षायणयज्ञः कर्तव्यः। दाक्षायणयज्ञो नाम एकैकस्मिन् प्रयोगे द्विर्द्विरनुष्ठेयो यागविशेषो दर्शपौर्णमासयाग एव गुणविकृतिभूतो न कर्मान्तरम्। तेन दाक्षायणयज्ञानुष्ठानपक्षे दर्शपूर्णमासयोरक्रिया (का०श्रौ० ४।४।३)।

## ( चातुर्मास्ययागः )

ततश्चातुर्मास्यानि। चतुर्षु मासेषु अनुष्ठेयत्वात् चातुर्मास्यानीति संज्ञा कर्मणाम्। अत्र हि चत्वारि पर्वाणि। वैश्वदेवं, (८) वरुणप्रघासाः, (९) साकमेधाः, (१०) शुनासीरीयं (११) चेति। तत्र प्रथमं पर्व फाल्गुन्यां पूर्णिमायामनुष्ठेयम्। ततश्चतुर्षु मासेषु गतेषु आषाढ्यां पूर्णिमायां द्वितीयं पर्व, ततश्चतुर्षु मासेषु गतेषु कार्तिक्यां तृतीयं पर्व। ततश्चतुर्षु मासेषु गतेषु फाल्गुनशुक्लप्रतिपदि, एवं पुनः पुनरावर्तयितव्यम्।

## ( प्रथमं वैश्वदेवं पर्व )

अत्र प्रथमे पर्वणि आग्नेयोऽष्टाकपालः पुरोडाशः, सौम्यश्चरुः, सावित्रोऽष्टाकपाला द्वादशकपालो वा पुरोडाशः, सारस्वतश्चरुः, पौष्णः पैष्टश्चरुः, केवलेभ्यो मरुद्भ्यः, स्वतवद्गुणविशिष्टेभ्यो वा मरुद्भ्यः सप्तकपालः पुरोडाशः, वैश्वदेवी पयस्या, (१२) द्यावापृथिवीय एककपाल इत्यष्टौ हवींषि। इमे च यागा दर्शपूर्णमासप्रकृतिभूता इति न पृथग्धर्मा अतिदिश्यन्ते। प्रयाजानुयाजेषु परं "नव प्रयाजं नवानुयाजम्" (५।२।७) इति सूत्रान्नवत्वम्, "त्रीणि समिष्टयजूंषि (५।२।८), वाजिदेवताको वाजिनयागश्चेति विशेषः। अस्यैव वैश्वदेवपर्वणो धर्मा उत्तरयोः पर्वणोः प्रवर्त्तन्ते (४।३।४)

---

(१) अन्वाहरति यज्ञसंबन्धि दोषजातं परिहरति अनेनेति अन्वाहार्यो नाम ऋत्विग्भोजनीय ओदनः (शत० साय० १।३।३।५)

(२) अनु पश्चात् प्रधानयागानन्तरमिज्यते यैरिति व्युत्पत्त्या होत्रा पठ्यमाना याज्यामन्त्रा अनुयाजाः।

(३) जुह्वाः प्राच्याम्, उपभृतः प्रतीच्यामपसारणं व्यूहनम्।

(४) "इदं द्यावापृथिवी" (का० हौ० प० १।१३) इत्यनुवाकप्रतिपाद्यो मन्त्रविशेषः सूक्तवाकः।

(५) तच्छंयोरावृणीमहे (का० हौ० प० ११२) इति मन्त्रस्य शयुनामबृहस्पतिपुत्रस्तुतिरूपत्वात् शंयुपदघटितत्वाच्च शंयुवाक इति नाम।

(६) पत्नीदेवताका दर्शपूर्णमासाङ्गभूताश्चत्वारो यागविशेषाः पत्नीसंयाजाः।

(७) विष्णुपादबुध्या भूमौ स्वपादप्रक्षेपा विष्णुक्रमाः।

(८) विश्वे देवा अपश्यन् यत्पर्व तद्वैश्वदेवं पर्व।

(९) प्रकृष्टो घासो भक्ष्यविशेषो येषु हविर्विशेषेषु ते प्रघासाः। वरुणमुद्दिश्य प्रघासाः, वरुणस्य पाशरूपं कर्म घ्नन्तीति वा वरुणप्रघासाः।

(१०) साकमेधन्ते वर्द्धन्ते देवता एभिर्हविर्विशेषैरिति साकमेधाः।

(११) शुनो वायुः, सीर आदित्यः, तौ देवते अस्येति शुनासीरं पर्व।

(१२) गव्यं पयस्तप्तं कृत्वा तापविशिष्टे एव पयसि दधि प्रक्षिप्तं चेत् तद् द्विधा भवति, द्रवीभूतं घनीभूतं च। तत्र यो द्रवीभूतोंऽशः स पयस्या आमिक्षेति च पदैर्व्यवह्रियते, द्रवीभूतो वाजिनमिति।

तत्रापि यो वैश्वदेव आमिक्षायागः स इतरेषामामिक्षायागानां प्रकृतिः। एवं द्यावा पृथिवीय एककपालोऽपि सर्वेषामेककपालानां प्रकृतिरित्यापस्तम्बमतम् ( आप० श्रौ० २४।१। ) कर्काचार्यमतं च ( ४।६।४ )। जैमिनीया अप्येवमेवाभिप्रयन्ति ( जै० ७।१।२३ )। आमिक्षायागस्य तु दाक्षायणान्तर्गतामिक्षायागविकृतित्वमिच्छन्ति कर्काचार्याः ( ५।१।१८ ) इति। अत्र ऋत्विजो यथादर्शपूर्णमासम्।

## ( वरुणप्रघासाख्यं द्वितीयं पर्व )

अथ वरुणप्रघासाः। ते चाषाढ्यां कर्तव्याः। तत्र वैश्वदेवे यानि हवींषि, तेषु आदितः पञ्च हवींषि अत्राप्यनुष्ठेयानि। ततोऽधिकानि चत्वारि। ऐन्द्राग्नो द्वादशकपालः, वारुण्यामिक्षा, मारुत्यामिक्षा, काय एककपाल इति (१)।

अत्र च वेदिद्वयं, दक्षिणा वेदिरुत्तरा वेदिश्च। ऋत्विजो यथावैश्वदेवपर्व। एकः प्रतिप्रस्थाताऽधिकः। स एव दक्षिणवेद्यामनुष्ठीयमानकर्मणां कर्ता भवति। एवं च आग्नेया-दीन्यष्टौ हवींषि उत्तरस्यां वेद्यां साङ्गान्यध्वर्युणा प्रचर्यन्ते। मारुतीमामिक्षां परं दक्षिणे विहारे प्रतिप्रस्थाता प्रचरति। यानि यान्यङ्गानि अध्वर्युणोत्तरस्यां वेद्यामनुष्ठीयन्ते तानि सर्वाणि प्रतिप्रस्थाता दक्षिणस्यामनुतिष्ठति। "प्रणीता-पत्नीसन्नहना-ऽग्निमन्थना ऽऽश्रुत-प्रत्याश्रुत-प्रैष-यजमानवाचन-होतृषदन-वरण-प्राशित्रा-ऽङ्गुलिपर्वाञ्जना-ऽवान्तरेडाभागा-ऽपरा-न्यवभृथान्प्रति प्रस्थाता" (का० श्रौ० ५।४।३३) इति सूत्रात् एतावन्तः पदार्थाः प्रतिप्रस्थातुर्निवर्त्तन्ते। अस्मिन् पर्वणि साकमेधपर्वणि ( महाहविषि ) चोत्तरवेदिरग्निप्रणयनं चाधिकम्।

एवं करम्भपात्रनिर्माणं (२) तद्धोमश्चाधिकोऽस्मिन्पर्वणि। तत्र पूर्वेद्युश्चतुर्दश्यां यवपिष्टेन वर्तुलानि चत्वारि पात्राण्यध्वर्युः कुर्यात्, पूर्णिमायां मेषमध्वर्युः, मेषीं च प्रति-प्रस्थाता। पत्नी तानि शूर्पे निधाय स्वमूर्द्धनि कृत्वा दक्षिणेऽग्नौ जुहुयात्। मेषीहोमश्चात्रैव प्रतिप्रस्थातृकर्तृकः। मेषहोमोऽध्वर्युकर्तृक उत्तरस्यां वेद्याम्।

अत्र कश्चिद्विशेषः श्रुतिसिद्धः ( श० ब्रा० २, ५।२।२० तै० ब्रा० १।६।५, का० श्रौ० ) करम्भपात्रहोमार्थमागच्छन्तीं पत्नीं दृष्ट्वा प्रतिप्रस्थाता पृच्छति 'केन चरसि' इति। परिणीतं भर्तारं विहाय जारा अपि ते सन्ति यदि, तान् ब्रूहीति प्रश्नाभिप्रायः। यदि स्युः केचन, तानवश्यं ब्रूयादिति। साध्वीनामपि कदाचिन्मानसिकदोषसंभवमभिप्रेत्येदम्, न तु वस्तुतो जारसत्त्वमभिप्रेतमिति। अस्मिन्पर्वण्यवभृथेऽप्येको विशेषः। अत्र सौमिकानां धर्माणां प्राप्तिः (का० श्रौ० ४।३।५), परन्तु तूष्णीं, न गमनमन्त्रादयः ( श० ब्रा० २।५।२।४६ )। एवं च वारु-ण्यामिक्षानिष्काषेण सहावभृथस्थलमेत्य षडाहुतीर्दशाहुतीर्वाऽनुष्ठाय ( का० श्रौ० १०।८ २६-३१ ) दम्पती तीर्थे स्नातः। अस्य पर्वणो दक्षिणा—धेनुः, अश्वः, षड् द्वादश वा गाव इति विकल्प्यन्ते।

## ( साकमेधाख्यं तृतीयं पर्व )

कार्तिक्यां साकमेधाख्यपर्वानुष्ठानम्। तत्र पूर्वेद्युः प्रातरनीकवतीष्टिरुद्धरणादि-कर्मापवर्गान्ता। तत्राग्निरनीकवान्देवता, अष्टाकपालः पुरोडाशो द्रव्यम्, अन्वाहार्यो दक्षिणा। मध्याह्ने **सान्तपनेष्टिः**। तत्र सान्तपना मरुतो देवताः, चरुर्द्रव्यम्, दक्षिणाऽन्वाहार्यः। सायं **गृहमेधीयेष्टिः**। तत्र गृहमेधिनो मरुतो देवताः। पयसि पक्वश्चरुर्द्रव्यम्, ऋषभो दक्षिणा। अत्र गृहमेधीयाशेषस्य पायसस्य उपनीतैर्यजमानगृह्यैः, अन्यैर्ब्राह्मणैश्च भक्षणं कर्तुं शक्यते

---

(१) कशब्दोऽकारान्तो ब्रह्मवाची। कायो ब्रह्मदेवताक एककपालश्रपितपुरोडाशद्रव्यको याग इत्यर्थः।

(२) दीपपात्रसदृशानि यवपिष्टनिर्मितानि पात्राणि करम्भपात्राणि।

( का० श्रौ० ५।६।३० )। अत्र प्रयाजानुयाजादयो नानुष्ठीयन्ते, किन्तु आज्यभागादीनि यावदुक्तान्येवाङ्गानि। अत्र सायं प्रातरग्निहोत्रहोमो यवाग्वा कार्यः। ततः श्वः पूर्णिमाया-मुद्धरणादि कर्मापवर्गान्तः **प्रातर्दर्विहोमः**। सोऽपि यावदुक्त एव। अत एवात्र सर्वाः क्रियास्तूष्णीं कर्तव्याः। ऋषभो दक्षिणाऽत्र।

ततः **क्रीडनीयेष्टिः**। तत्र मरुतः क्रीडिनो देवताः। द्रव्यं पुरोडाशः। दक्षिणाऽन्वा-हार्यः। **ततोऽदितीष्टिः**। तत्र अदितिदेवताकश्चरुः, दक्षिणाऽन्वाहार्यः।

ततो **महाहविःसंज्ञकेष्टि**रुत्तरस्यां वेद्यां कार्या। तत्र वैश्वदेवे यानि हवींषि, तेष्वा-दितः पञ्च। इतराणि च—ऐन्द्राग्नो द्वादशकपालः, माहेन्द्रश्चरुः, वैश्वकर्मण एककपाल इति। दक्षिणा ऋषभः।

ततः **पितृयज्ञः** (पित्र्येष्टिः)। एतदर्थं दक्षिणस्यां दिशि दक्षिणामुखस्य विहारस्य सम्पा-दनम्। तन्मध्ये दक्षिणाग्निखरः, तत्र दक्षिणाग्निः। तत्रैव सर्वे होमाः। पितरः सोमवन्तः, सोम पितृमान्वा, पितरो बर्हिषदः, पितरोऽग्निष्वात्ता इति देवताः। षट्कपालः पुरोडाशः, धानाः, मन्थ इति यथाक्रमं द्रव्याणि। भर्जिता यवा धाना इत्युच्यन्ते। मृतवत्सायाः परकीयवत्सेन दुह्यमानाया गोर्दुग्धे सक्तुं प्रक्षिप्य यत्सम्पाद्यते द्रव्यं, स मन्थः। अत्र प्रयाजाश्चत्वारो, द्वाव-नुयाजौ, दक्षिणाऽन्वाहार्यः।

**ततस्त्र्यम्बकेष्टिः**। अत्र रुद्रः ( त्र्यम्बको ) देवता, चत्वार एकपालाः पुरोडाशा द्रव्यम्, एक एवाध्वर्युर्ऋत्विक्, सर्वं तूष्णीं कार्यम्। अत्रोदङ्मुखः सर्वं कुर्यात्। अतश्चो-दीची प्राचीवदिति दिग्विपर्यासो बोध्यः। ऋषभो दक्षिणा। अत्र दक्षिणाग्न्युल्मुकमादाय चतुष्पथे गत्वा पञ्च भूसंस्कारान् कृत्वा तं संस्थाप्य तत्र पलाशपत्रेण जुहूस्थानीयेन पुरोडाशत्रयतोऽवदाय होमः। चतुर्थस्य तु आखूत्करे प्रक्षेपः। ततस्तमग्निं यजमान-सपरिवारः प्रदक्षिणीकृत्य अनन्तरमवशिष्टान् पुरोडाशान् हस्ताभ्यामुपरि प्रक्षिपेदुच्छालयेत्। एततस्तान् हस्तेन गृहीत्वा समं विभज्य शिक्ययोः कृत्वा वंशयष्ट्यामाबध्य वीवधवत्कृत्वो-त्तरस्यां दिशि स्थाणौ वृक्षे वंशे वल्मीके वा रोपयेत्।

## ( शुनासीरीयसंज्ञकं चतुर्थं पर्व )

ततः शुनासीरीयसंज्ञकं चतुर्थं पर्व। अत्र पौर्णमासधर्माः। अत्रापि पञ्च हवींषि वैश्वदेवपर्वोक्तानि पूर्ववत्। अथेतराणि—शुनासीराभ्यां द्वादशकपालः, वायव्यं पयो यवा-गूर्वा, सौर्य एककपाल इति। दक्षिणा च षड्गवयुक्तो हलो, महान्तौ बलीवर्दौ वा। सौरस्य श्वेतोऽश्वो गौर्वेति।

## ( चातुर्मास्ययागे पक्षद्वयम् )

अत्र च पक्षद्वयमस्ति, उत्सर्गपक्षो यावज्जीवपक्षश्चेति। सकृच्चातुर्मास्यैरिष्ट्वा ततः पशुसोमादिना यो यजति न पुनश्चातुर्मास्यैः स उत्सर्गपक्षः। चातुर्मास्यैरेव प्रतिवर्षं यावज्जीवं यष्टव्यं स यावज्जीवपक्षः। तत्रोत्सर्गपक्षे साकमेधपर्वानन्तरं फाल्गुनशुक्लप्र-तिपदि शुनासीरीयेणेष्ट्वाऽऽगामिन्यां पौर्णमास्यामग्निष्टोमः पश्वादिर्वाऽनुष्ठेयः। यावज्जी-वपक्षे तु फाल्गुन्यां चतुर्दश्यां शुनासीरीयेणेष्ट्वा पूर्णिमायां वैश्वदेवपर्व। ततः पूर्ववद्वरुण-प्रघासादि। एवं यावज्जीवम्।

## ( चातुर्मास्यानां त्रैविध्यम् )

त्रिविधानि चातुर्मास्यानि—ऐष्टिकानि पाशुकानि सौमिकानि चेति । तत्र पूर्वोक्तान्यैष्टिकानि । तानि त्रिविधानि—सांवत्सरिकाणि, पञ्चाहिकानि, ऐकाहिकानि चेति । सांवत्सरिकाणि पूर्वं निरूपितानि । पञ्चभिरेव दिवसैः साध्यानि यानि तानि पञ्चाहिकानि । तत्र देवतादिकं सर्वं पूर्ववदेव । तान्येव यदा एकस्मिन्नेव दिनेऽनुष्ठीयन्ते तदा ऐकाहिकानि भवन्ति । तत्रापि तावत्यो देवतास्तान्येव हवींषि । परन्तु सर्वेषां पर्वणामेककालिकत्वात् अङ्गानां संभवतां तन्त्रेणानुष्ठानम्, असंभवतां त्वावृत्तिरेव । तत्र वारुणप्रघासिकमेव तन्त्रं, महत्वात् । इमान्येव पशुसहितानि पाशुकान्युच्यन्ते । तत्र पशुतन्त्रस्यैव प्राधान्यम् । अत एकादश प्रयाजा एकादशानुयाजाश्च भवन्ति । प्रथमे पर्वणि वैश्वदेवः पशुः, द्वितीये वारुणः, तृतीये माहेन्द्रः, चतुर्थे शुनासीरीयः । एतेषां पशूनामैष्टिकैर्हविर्भिः सह समानतन्त्रेणानुष्ठानमित्येकः पक्षः । तत्तत्पर्वारम्भे पृथक् तन्त्रेणानुष्ठाय तत ऐष्टिकानामनुष्ठानमिति द्वितीयः, पर्वणोऽन्ते पृथक् तन्त्रेण वेति तृतीयः । सौमिकेषु तु वैश्वदेवपर्वस्थानेऽग्निष्टोमसंस्थमहः । वरुणप्रघासस्थानेऽग्निष्टोमसंस्थमुक्थ्यसंस्थं वा प्रथममहो, द्वितीयमहरुक्थ्यसंस्थम् । साकमेधपर्वस्थाने प्रथममहोऽग्निष्टोमसंस्थं षोडशिसंस्थं वा, द्वितीयमहरुक्थ्यसंस्थम्, तृतीयमहोऽतिरात्रसंस्थम् । शुनारीयस्थाने ज्योतिष्टोमः । सप्तसु दिनेषु क्रमेण वैश्वदेवः, वारुणः, मारुतः, आग्नेयः, ऐन्द्राग्नः, ऐकादशिनाः, वायव्य इति पशवः । अवभृथः प्रतिपर्वेति ।

## ( निरूढपशुबन्धः )

ततो निरूढपशुबन्धः । सोऽपि प्रतिसंवत्सरं वर्षर्तौ कार्यः । अस्य चोदगयनारम्भे दक्षिणायनारम्भे चेति वारद्वयमनुष्ठानं विकल्पेन चोदितम् । अत्र च द्रव्यं छागः, सोऽपि न साक्षात, किन्तु वपा, (१) हृदयं, जिह्वा, वक्षः, सव्यस्य बाहोः प्रथमं नडकमंसादधोवर्तमानम्, पार्श्वद्वयम्, यकृद्, वृक्कौ, (कुक्षिस्थौ गोलकौ), गुदमध्यं, दक्षिणा श्रोणिः (इमानि जौहवानि) । सव्यं दोः, सव्या श्रोणिः, गुदतृतीयम् (इमान्यौपभृतानि)। देवता चात्र इन्द्राग्नी, सूर्यः, प्रजापतिर्वा वैकल्पिकी । मैत्रावरुणषष्ठाः पूर्वोक्ता ऋत्विजः । सूत्रकारैः सर्वैरपि यद्यप्यत्रैव धर्माः समाम्नातास्तथापि श्रुत्यनुसारेण ज्योतिष्टोमाङ्गभूताग्नीषोमीयपशुयागप्रकृतिरेवायं यागः । यूपः पशुबन्धनार्थं निखातव्यः काष्ठविशेषः खदिरबिल्वादिभिर्निर्मातव्यः । स च त्र्यरत्निश्चतुररत्निर्वा तष्टत्वक् अष्टकोणश्च भवति । ऋत्विग्भ्योऽतिरिक्तेन येन केनचित्पशुं संज्ञप्य (२) ततः प्रथमतो वपामुत्खिद्य तां च वपाश्रपण्योरा हवनीये श्रपयित्वा सकृदवदाय निरवशेषां समग्रां हुत्वा ततो हृदयादीन्यङ्गान्यवदाय शामित्रसंज्ञकेऽग्नौ तेषु श्रप्यमाणेषु यद्देवताकः पशुयागस्तद्देवताकं पुरोडाशं निरूप्य तेन तस्यै देवतायै यागे कृते ततः शृतानि हवींष्यादाय तानि स्वधितिना जुह्वामवदाय अष्टौ हृदयादीन्यङ्गानि तस्यै देवतायै हुत्वा ततस्त्र्यङ्गैः स्विष्टकृतं हुत्वाऽनुयाजादिकमनुतिष्ठेत् । अत्र च एकादश प्रयाजास्तावन्त एवानुयाजाः । इष्टिषु हविरासादनानन्तरं प्रयाजा इज्यन्ते । पशौ तु यूपसमीपे पशौ तिष्ठत्येव सति दश प्रयाजा इज्यन्ते । एकादशस्तु विशसनादनन्तरमेवेति विशेषः । दक्षिणा चात्र गवादिपशुः, धेनुर्वरो वेति विकल्पः ।

---

(१) वपा नाम पशोरामाशयस्योपरि तमाच्छाद्य वर्तमानोऽतिसूक्ष्मश्वेतवस्त्राकृतिरूपोऽङ्गविशेषः ।

(२) यागीयपशोः शस्त्रघातादिकं विना मुखबन्धनेन श्वासं निरोध्य यत्प्राणैर्वियोजनं तत्पशुसंज्ञपनमित्युच्यते ।

अयं चाग्नीषोमीयप्रकृतिक इत्युक्तम्। अयमेवाग्नीषोमीयः पशुयागः सर्वेषां काम्यानां सवनीयस्य च प्रकृतिभूतः। सवनीयो हि सोमयागे यस्मिन् दिने सोमरसः अभिषुत्य ग्रह-चमसादिषु पात्रेषु गृहीत्वाऽनुष्ठीयते तस्मिन्नेव दिनेऽनुष्ठेयतया विहितः पशुः। स च ज्योतिष्टोमेऽग्निष्टोमसंस्थाके एकः, उक्थ्यसंस्थाके द्वौ, षोडशिनि त्रयः, अतिरात्रे चत्वारः, वाजपेये पञ्च। सत्रादिषु तु इतोऽप्यधिकं विवर्द्धन्ते। अनेन साकं ज्योतिष्टोमे पश्वेकादशिन्यपि विकल्प्यते। सवनीयपशुस्तु एकादशिनानां प्रकृतिभूतः। ऐकादशिनास्तु प्राजापत्यपशुगणस्य वाजपेयाङ्गभूतस्य, इतरेषां च पशुगणानाम्। पशुयागश्चाग्नीषोमीयः सर्वपशुयागप्रकृतिभूतोऽपि सान्नाय्यविकृतिभूतः। तत्रापि पयोयागविकृतिरिति।

## ( आग्रयणेष्टिः )

तत आग्रयणेष्टिः ( अग्रे नवान्नोत्पत्यनन्तरमयनमाचरणं यस्य तदाग्रयणम् )। सा च शरदि वसन्ते च कर्तव्या। अत्र द्रव्यं पुरोडाशश्चरुश्च। इन्द्राग्निभ्यां पुरोडाशो, द्यावापृथिवीभ्यामपरः। चरुर्वैश्वदेवो यावः। अयं पयसि श्रपणीयः। नवा व्रीहयो यवाश्चात्र प्रधानद्रव्याणि। दक्षिणा चात्र भग्नः सम्पुनः संस्कृतो रथः, क्षौमं मधुपर्कौ वर्षाधृतं वा वासः। इयमिष्टिर्नित्या। अनयेष्ट्वा इष्ट्वाऽऽहिताग्निर्नवान्नमश्नीयात्। अनाहिताग्नेरौपासनिकस्यापि गृह्योक्तरीत्या कर्त्तव्यमिदं कर्म। व्रीह्याग्रयणं कृत्वा यवाग्रयणपर्यन्तं व्रीहिभिरेव सर्वे यागाः कर्तव्याः। एवं यवाग्रयणं कृत्वा व्रीह्याग्रयणं यावत् यवैरेवेति। नवान्नेष्टिरित्यप्यस्य नामधेयम्।

## ( सौत्रामणी )

सौत्रामणी नाम पशुयागः ( सुत्राम्ण इयं सौत्रामणी )। स च स्वतन्त्रोऽङ्गभूतश्चेति द्विविधः। चयनानन्तरं तदङ्गत्वेनानुष्ठीयमाना सौत्रामण्यङ्गभूता। स्वातन्त्र्येण विहिता च प्रधानभूता। सा नित्या, काम्या, नैमित्तिकी चेति त्रिविधा। तत्र फलमनुद्दिश्य विहिता नित्या हविर्यज्ञान्तर्गता। सैव च ऋद्धिफलोद्देशेन विधीयमाना काम्या। सोमवमनादिषु निमित्तेषूत्पन्नेषु तदनन्तरमनुष्ठेयतया विहिता नैमित्तिकी। स्वतन्त्रसौत्रामण्यां ब्राह्मणस्यैवाधिकारः। अङ्गभूतायां क्षत्रियवैश्यावप्यधिकारिणौ। तत्र त्रयः पशवः—अजो, मेष, ऋषभश्च। देवताश्च यथाक्रममश्विनौ, सरस्वती, इन्द्रश्च। एतस्यैव पशुसमुदायस्य सौत्रामणीति संज्ञा। शाखान्तरे च इन्द्रस्थाने इन्द्रः सुत्रामा देवता। इमामेव च त्रिपशुकां सौत्रामणीं नित्योमभिदधात्यापस्तम्बः (प्र० १९)। अन्या च काचित् कौकिलसौत्रामण्याख्या पञ्चपशुका विहिता। तत्र—प्रथमः पशुरैन्द्रः, अन्तिमश्च वायोधसः। सेयं कौकिलसौत्रामण्येवास्मदाचार्यैर्मुख्यतयाऽङ्गीकृता। तेनेदमवगम्यते—आपस्तम्बस्य त्रिपशुका नित्या। अस्माकं तु पञ्चपशुका नित्येति। तत्र प्रथमत आदित्यश्चरुः, तत ऐन्द्रः पशुः। वैपरीत्येन वाऽनयोरनुष्ठानम्। दिनचतुष्टयानुष्ठेयोऽयं क्रतुः। अध्वर्युः, ब्रह्मा, होता, अग्नीत्, प्रतिप्रस्थाता, मैत्रावरुण इति षड्त्विजः। अत्र त्रयः पयोग्रहाः, त्रयः सुराग्रहाश्च भवन्ति। ग्रहाणां देवताः—अश्विनौ, सरस्वती, इन्द्रः सुत्रामा चेति। अत्र होमार्थं सुराऽपि प्रयोगमध्ये निष्पादनीया।

तत्र प्रथमदिने द्वादश्यां प्रातरग्निहोत्रं हुत्वा अदितिदेवताकश्चरुः। स च ऐन्द्रपशुना सह क्रमे विकल्प्यते—ऐन्द्रमनुष्ठाय चरुरनुष्ठेयः, चरुमनुष्ठाय ऐन्द्रो वेति। अयं चरुरन्तेऽप्यनुष्ठेयः। त्रिपथदेशाद्दक्षिणत ऐन्द्रपशोरनुष्ठानम्।

अत्र सौत्रामण्यां पयोग्रहैः साकं सुराग्रहाणां विहितत्वेऽपि स्मृतिपुराणादौ सुराग्रह-मात्रस्य कलौ सर्वथा निषिद्धत्वात् "सौत्रामण्यामपि सुराग्रहणस्य च सङ्ग्रहः" "सौत्रामण्यां सुराग्रहः" इत्यादिनिर्णयसिन्धुकारप्रभृतिभिर्निबन्धकारैरपि तत्तद्वचनोल्लेखनपुरःसरं तेषां निषेधकरणात् आसेतुहिमाचलं शिष्टैरननुष्ठानाच्च तदनुष्ठानं निन्द्यमिति कृत्वैव तदनुष्ठान-प्रकारः सूत्रकारोक्तोऽपि नास्माकमुपकाराय कल्पत इति कृत्वा तन्निर्माणप्रकारोऽनुष्ठानप्रकारश्च नात्र विवेचितः। सौत्रामण्यनुष्ठानं तु "पयोग्रहा वा स्युः" (आप० श्रौ० १९।२।२३) इत्यापस्त-म्बेन सुराग्रहविकल्पतया पयोग्रहाणां विधानात् तैरेव कर्तुं शक्यत इति तत्रास्त्येवाधिकारः। तथैव चानुतिष्ठन्त्यापस्तंबानुयायिनः। अस्माभिरपि 'अनुक्तमन्यतो ग्राह्यम्' इति न्यायेन तमेव पक्षमवलम्ब्य सौत्रामण्यनुष्ठीयते। एवं वाजपेयेऽपि सुराग्रहस्य सूत्रकारैर्विहितस्यापि अनेनैव वाक्येन कलौ निषेधात् न तत्रापि तदनुष्ठानं युक्तम्। "सौत्रामण्यां सुराग्रहः" इति वाक्ये सुराग्रहे सौत्रामणीसम्बन्धस्य उद्देश्यविशेषणत्वेन ग्रहैकत्वन्यायेनाविवक्षिततया सुराग्रहमात्रस्य निषेधप्रतीतेः। तत्र तु सूत्रकारैः कैरपि विकल्पद्रव्यस्यानभिधानात् कलौ तत्राधिकार एव नास्तीति निर्णयसिन्धुकाराः। उक्तं हि तैः—"सौत्रामण्यां तु 'पयोग्रहा वा स्युः' इत्यापस्तम्बोक्तेर्वैकल्पिकपयोग्रहैरप्यधिकारः। वाजपेये तु तत्प्राप्तौ मानाभावात् सोम-सुरयोः सहत्यागेनांशे सुराद्रव्यत्वात्तत्प्रत्यक्षतया यागनामत्वेन तां विना संज्ञायोगात् कलौ नाधिकार इति युक्तं प्रतीम" इति। याज्ञिकास्तु ताम्रपात्रस्थितस्य गोपयसः सुरासमत्वप्रति-पादनात् ताम्रपात्रे गोपयो गृहीत्वा तस्य च सुराप्रतिनिधित्वं मन्वानास्तत्सहितेन सोमग्रहेण वाजपेयमनुतिष्ठन्ति।

सौत्रामण्यङ्गभूतपशुपुरोडाशयागे इतरयागीयपशुपुरोडाशयागवत् न पशुयागीया देवताः, किन्तु इन्द्रो वरुणः सविता च। इयं पञ्चपशुका सौत्रामणी कौकिलीति व्यवहृता-ऽऽपस्तम्बेन (प्र० १९)। अन्या चास्येका चरणसौत्रामणी नाम। सा राजसूयाङ्गभूता। तत्र त्रयः पशवः (का० श्रौ० १५।१०)। अन्यत्सर्वं समानम्। इति सौत्रामणी।

इति हविर्यागानां सङ्ग्रहेण स्वरूपनिरूपणम्।

---

## अथ सोमयागनिरूपणम् ।

### ( अग्निष्टोमः )

अत्रानुष्ठाने कल्पद्वयम् । यदा सोमेन यियक्षति, तदा कस्मिंश्चिद्वसन्तेऽग्नीनाधाय समनन्तरमेव सोमेनेष्ट्वा ततो दर्शपूर्णमासादिकमनुतिष्ठेदित्येकः । आधानानन्तरं दर्शपूर्णमासादिकमिष्ट्वैवानन्तरं सोमेन यजेतेत्यपरः । अत्र च द्रव्यं सोमरसः । सोमो नाम लताविशेषः । तं कस्माच्चित्पुरुषात् क्रीत्वा ततो रसं निष्काश्य तेन च होमः क्रियते । अत एवास्य सोमयाग इति व्यवहारः । इयं तु लता नेदानीं भारते देशे समुपलभ्यते, पूर्वमपि न सर्वत्रोपलब्धाऽभूत्, किन्तु पवित्रे देशविशेषे एव । तानि च स्थानानि पूर्वाचार्यैः सगृहीतानि।

इदानीमस्या अनुपलम्भात् तत्स्थाने पूतीकसंज्ञकं लतान्तरं गृहीत्वा तत्रैव सोमे क्रियमाणान् सर्वानपि संस्कारानुनुष्ठाय तद्रसेनैव यागः क्रियते । यागोऽयं यद्यपि दिनैकसाध्यः, तथापि स्वाङ्गैः सहितः पञ्चभिर्दिनैरनुष्ठीयते । तत्र ऋत्विजः षोडश । ते च गणचतुष्टयेन विभक्ताः—अध्वर्युगणः, ब्रह्मगणः, होतृगणः, उद्गातृगणश्चेति । एकैकस्मिन् गणे चत्वारश्चत्वार इति मिलित्वा षोडश सम्पद्यन्ते । ते च गणा यथा –

| अध्वर्युगणः— | ब्रह्मगणः— | होतृगणः— | उद्गातृगणः— |
|---|---|---|---|
| १ अध्वर्युः | १ ब्रह्मा | १ होता | १ उद्गाता |
| २ प्रतिप्रस्थाता | २ ब्राह्मणाच्छंसी | २ मैत्रावरुणः(प्रशास्ता) | २ प्रस्तोता |
| ३ नेष्टा | ३ आग्नीध्रः | ३ अच्छावाकः | ३ प्रतिहर्त्ता |
| ४ उन्नेता | ४ पोता | ४ ग्रावस्तुत् | ४ सुब्रह्मण्यः |

लेखनक्रमानुसारेण सङ्ख्यानमप्यस्ति-प्रथमः, द्वितीयः, तृतीयः, चतुर्थ इति । यथा– अध्वर्युगणे अध्वर्युः प्रथमः, प्रतिप्रस्थाता द्वितीय इत्यादि । तदनुसारेण दक्षिणायामप्यस्ति क्रमः । यावत्यो गोरूपा दक्षिणा देयत्वेनोक्ताः, ताः समशश्चतुर्धा विभज्य एकैकस्मै गणाय एकैकं भागं दद्यात् , तत्र एकैकभागार्थं दीयमाना दक्षिणाऽपि विषमशो विभज्य देया ।

यथा–अध्वर्युर्यावतीर्गाः प्राप्नुयात् , ततोऽर्द्धं प्रतिप्रस्थाता, अध्वर्युभागतस्तृतीयं नेष्टा, चतुर्थमुन्नेता । अत एवैषामर्धिनस्तृतीयिनः पादिन इत्यपि संज्ञा । एवमेव गणान्तरेऽपि द्रष्टव्यम् ।

"यज्ञं व्याख्यास्यामः स त्रिभिर्वेदैः" ( आप० श्रौ० २४।१।१-२ ) इति वेदत्रयसाध्यत्वं यदुक्तमाचार्येण, तदस्यैव सोमयागस्य, न ततः पूर्वमनुष्ठेयानामग्निहोत्रपशुदर्शपूर्णमासादीनाम् । अग्निहोत्रं तु एकेनैव यजुर्वेदेन साध्यते । दर्शपूर्णमासाद्या इष्टयः कैश्चिदृग्वेद-यजुर्वेदाभ्यामनुष्ठीयन्ते कैश्चिद्यजुर्वेदेनैव । पशुयाग ऋग्वेदयजुर्वेदाभ्यां सर्वैरेव । सोमयागात्प्रभृत्येव च वेदत्रयसम्बन्धः । अत एव वेदत्रयसम्बन्धिन ऋत्विजोऽत्र व्रियन्ते तत्तद्वेदसम्बन्धिकर्मकरणार्थम् । तत्राध्वर्युगणो याजुर्वैदिकः, होतृगणो बाह्वृच्यमनुष्ठातुम्, उद्गातृगणश्च सामवैदिकमनुष्ठातुम् । एतद्गणत्रयेणानुष्ठीयमानं कर्म अवेक्षितुं ब्रह्मगणः, इति चतुर्णां गणानामुपयोगः । विशेषस्तत्र तत्र निरूपयिष्यते । अयं सोमयागोऽग्निष्टोमसंस्थाकत्वादग्निष्टोम इत्युच्यते । अग्निष्टोम इति साम्नः संज्ञा । सामवेदे 'यज्ञायज्ञा वो अग्नये' इत्यृचि गेयत्वेन विहितं साम अग्निष्टोम इत्युच्यते । संस्थाशब्दश्च समाप्तिवाची । एतदेवात्र क्रतावन्तिमं साम, न ततः सामान्तरमस्ति इति अनेनैव समाप्यमानत्वादयमेव क्रतुरग्निष्टोमसंस्थाकोऽग्निष्टोम इत्युच्यते । सोमयागस्य येन साम्ना समाप्तिस्तन्नाम्ना व्यवहारः श्रुतौ बहुधा दृष्टः, यथा—

उक्थ्यः षोडशीत्यादि । अतोऽग्निष्टोमसाम्ना समाप्यमानत्वात् अस्य अग्निष्टोम इति युक्ता संज्ञा। इयं च ज्योतिष्टोमस्य प्रथमा संस्था ।

तस्य हि चतस्रः संस्थाः—अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रश्चेति अग्निष्टोमसाम्ना समाप्यमानस्य क्रतोरग्निष्टोमशब्दवाच्यत्वमित्युक्तम् (१) । अग्निष्टोमसामानन्तरं यत्रोक्थ्याख्यसाम्ना स्तूयते न ततः परमस्ति किंचित्साम, स उक्थ्यसंस्थाको ज्योतिष्टोमः(२)। उक्थ्यस्तोत्रानन्तरं यत्र षोडश्याख्यं स्तोत्रं क्रियते स षोडशिसंस्थाको ज्योतिष्टोमः (३) । षोडशिस्तोत्रानन्तरं यत्र अतिरात्रसंज्ञानि सामानि गीयन्ते सोऽतिरात्रसंस्थाको ज्योतिष्टोमः। एवं सङ्ख्याचतुष्टयविशिष्टस्य क्रतोर्ज्योतिष्टोम इति संज्ञा । त्रिवृत् पञ्चदशः सप्तदश एकविंश इति चत्वारः स्तोमा (४) ज्योतिःपदेनाभिधीयन्ते ज्योतींषि स्तोमा यस्य स ज्योतिष्टोमः । एतत्पदनिर्वाचके ब्राह्मणे हि एवमेव निरुक्तमस्ति । "त्रिवृत्पञ्चदशः सप्तदश एकविंश एतानि वाव तानि ज्योतींषि य एतस्य स्तोमाः" ( तै० ब्रा० १।५।११ ) इति । एतासामेव चतसृणां संस्थानां कचिदावापोद्वापादिना अपरास्तिस्रः संस्थाः सम्पाद्यन्ते. अत्यग्निष्टोमः, वाजपेयः, अप्तोर्यामश्चेति । अग्निष्टोमस्तोत्रानन्तरमुक्थ्यमकृत्वा यत्र षोडशी क्रियते सोऽत्यग्निष्टोमसंज्ञकः क्रतुः ।

---

(१) अग्निष्टोमसाम्ना यज्ञायज्ञियाख्येन यज्ञसमाप्तिर्यत्र सोऽयमग्निष्टोमः । तत्रैवाग्निष्टोमे राजन्यस्य षोडशिनं गृह्णीयात् इति आग्निमारुतादूर्ध्वं षोडशिग्रहस्य स्तुतशस्त्रे यदा भवतस्तदा सोऽत्यग्निष्टोम इत्युच्यते।

(२) उत्थाप्यते सोमोऽनेनेत्युक्थ्यः । उक्थ्यनामकानि अग्निष्टोमीयेभ्यो द्वादशस्तोत्रेभ्य उपरितनानि त्रीणि स्तोत्राणि यस्मिन् क्रतौ स उक्थ्यः क्रतुः । तेनोक्थ्ये पञ्चदश स्तोत्राणि तावन्त्येव शस्त्राणि ।

(३) षोडश शस्त्राणि अस्मिन् क्रतौ स क्रतुः षोडशी । अयं न स्वतन्त्रः क्रतुः अतोऽग्निष्टोमादिवन्नायं पृथगनुष्ठातुं योग्यः । किन्तु पृष्ठ्यषडहचतुर्थेऽहनि प्रयुज्यते "न वै षोडशी नाम यज्ञोऽस्ति, यद्वा व षोडशꣳ षोडशꣳ स्तोत्रं तेन षोडशी" ( तै० सं० ६।६।११।१ )। अग्निष्टोमसंस्थो ज्योतिष्टोमो द्वादशशस्त्रोपेतः। "द्वादशाग्निष्टोमस्य स्तोत्राणि" ( तां० ब्रा० ६।३।३ )। तद्गर्भित उक्थ्यसंस्थस्त्रिभि स्तोत्रैरधिकः। तस्मादुक्थ्ये पञ्चदश स्तो[illegible]णि भवन्ति। तद्गर्भितः षोडशिसंस्थ एकेन स्तोत्रेणातिरिच्यते। ततः स्तोत्राणां मध्ये एतत्स्तोत्र प्रयोग षोडशसंख्यापूरको भवति। एवं षोडशी ग्रहः षोडशिशस्त्रं चास्ति। "एतत्त्रयं सह क्रियते ग्रहः स्तोत्रं शस्त्रम्" ( शत० ब्रा० ८।१।३।४ इति। षोडशिशस्त्रं ( ऋ० १।८४।१-२० ) इत्यादिकम् , आश्व० श्रौ० 'असावि सोम इन्द्र ते' ६।२।१२ )।

(४) तिस्रो वृतः त्रिरूपावयवा यस्य स्तोमस्य स त्रिवृत् (तै० ब्रा० १।५।१०, वा० सं० १०।१०) "उपास्मै, दविद्युतत्या, पवमानस्य ते" ( उ० आ० १०।१।१-३ ) इति त्रिषु तृचात्मकेषु सूक्तेषु वक्ष्यमाणानां नवानामृचां त्रिभिः पर्यायैर्गानं कर्तव्यम् । तत्र प्रथमे पर्याये त्रिषु सूक्तेषु आद्यास्तिस्र ऋचो गातव्याः । द्वितीये पर्याये मध्यमास्तिस्रः, तृतीयेऽन्तिमास्तिस्रः । अस्य गानस्य त्रिवृत्स्तोमस्तोत्रमिति नाम । एकस्मिंस्तृचे वर्तमानास्तिस्र ऋचो ब्राह्मणोक्तेनावृत्तिविशेषेण पञ्चदशसङ्ख्याका यस्मिन् स्तोमे सम्पाद्यन्ते स स्तोमः पञ्चदशः । अत्र त्रिचात्मकमेकं सूक्तं त्रिरावर्तनीयम् । तत्र—प्रथमावृत्तौ प्रथमामृचं त्रिः पठेत्, इतरे सकृत्सकृत् । द्वितीयावृत्तौ मध्यमां त्रिः, इतरे सकृत्सकृत् । तृतीयावृत्तावन्तिमां त्रिः, इतरे सकृत्सकृदिति पञ्चदशस्तोमः ( ताण्ड्य० ब्रा० २।४।१ )। एकस्मिन् तृचे वर्तमानास्तिस्र ऋचो ब्राह्मणोक्तेनावृत्तिविशेषेण एकविंशति संख्याका यस्मिन् स्तोत्रे सोऽयमेकविंशस्तोमः । तृचात्मकमेकं सूक्तं त्रिरावर्तनीयम् । तत्र प्रथमपर्याये तृचस्यान्तिमाया ऋचः सकृत्पाठ इतरयोस्त्रिस्त्रिः । द्वितीये पर्याये प्रथमायाः सकृत्पाठ इतरयोस्त्रिस्त्रिः । तृतीये पर्याये मध्यमायाः सकृत्पाठ इतरयोस्त्रिस्त्रिरित्येकविंशस्तोमः ( तां० ब्रा० २।१४।१ ) । स्तोत्रविशेषः स्तोमः । सामसाध्यस्तुतिः स्तोमः । त्रिवृत्-पञ्चदश-सप्तदशै-कविंश-त्रिणव-त्रयस्त्रिंश-चत्वारिंश-चतुश्चत्वारिंशा-ऽष्टाचत्वारिंशशब्दैः साम्न आवृत्तिभेदेन निष्पन्नाः स्तोमा उच्यन्ते । त्रिवृत्स्तोमे साम्न आवृत्त्यभावेऽपि ऋचां नवत्वात् संख्यासाम्यम् ( साय० तै० सं० १।३।१ )।

इमा एव सप्त संस्थाः स्मृतौ नित्यतया विहिताः। तत्राग्निष्टोमसंस्थाके ज्योतिष्टोमे द्वादश स्तोत्राणि, द्वादश शस्त्राणि। बहिष्पवमानस्तोत्रमेकम् (१), चत्वार्याज्यनामकानि स्तोत्राणि (२), चत्वारि पृष्ठ्यनामकानि स्तोत्राणि (३), एकं माध्यन्दिनपवमानाख्यम् (४), एकमार्भवपवमानम् (५), एकमग्निष्टोमस्तोत्रम् (६) इति। अत्यग्निष्टोमे, उक्थ्ये, षोडशिनि, वाजपेये, अतिरात्रे, अप्तोर्यामे सर्वेष्वपि सोमयागेषु यावन्ति स्तोत्राणि भवन्ति तावन्त्येव शस्त्राणि (७)। स्तोत्रशस्त्राणां स्वरूपं पूर्वमुक्तम्। सर्वत्र हि "ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति" (तै०सं० ३।१।१२) इति शास्त्रेण यस्यै देवतायै ग्रहश्चमसो वा गृह्यते तद्देवताकं स्तोत्रं तद्ग्रहचमसग्रहणानन्तरमेव क्रियते उद्गात्रादिभिस्त्रिभिर्ऋत्विग्भिः। तत्प्रकारश्चैवम्। सामवेदे एकस्यामृचि एकैकं सामोत्पन्नम्। यज्ञकाले तस्य साम्नस्तिसृषु ऋक्षु गानं विहितम्। एकं साम यस्मिन् तृचे क्रियते तत् स्तोत्रीयमित्युच्यते। तत्र प्रथमा ऋक् योनिरित्युच्यते। उपरितने च द्वे ऋचौ उत्तरे इत्युच्येते। "यद्योन्यां तदुत्तरयोर्गायति" इति। तत्रैव च गाने त्रिवृत्पञ्चदशादयः स्तोमा अपि विहिताः, ते च स्तोमास्तिसृषु ऋक्षु सम्पादनीयाः। तद् यत्र पञ्चदशस्तोमता विहिता, तत्र प्रथमायामृचि तत्साम त्रिः पठित्वा द्वितीयस्यां तृतीयस्यां च सकृत्सकृत्पठेत्। अयं प्रथमः पर्यायः। अस्मिन् पर्याये मिलित्वा पञ्चत्वसंख्या सम्पन्ना। द्वितीये पर्याये प्रथमामृचं सकृत्पठित्वा द्वितीयां त्रिः प्रपठ्य तृतीयां सकृत्पठेत्। अत्रापि पञ्चसङ्ख्या सम्पन्ना। तृतीये पर्याये प्रथमद्वितीये सकृत्सकृत्पठित्वा तृतीयां त्रिः पठेत्, अत्रापि पञ्चसङ्ख्या संवृत्ता। मिलित्वा पञ्चदश। अयमेव पञ्चदशः स्तोमः। एवं सप्तदशादिषु नेयम्। तत्रापि एकैकं साम पञ्चधा विभज्यते— प्रस्तावः, उद्गीथः, प्रतिहारः, उपद्रवः, निधनमिति। तत्र सर्वस्यापि साम्नो गातारस्त्रय

---

(१) सामगानामुत्तराग्रन्थे तृचात्मकानि सूक्तान्याम्नातानि (साम० उ० १।१।१-९)। तत्र 'उपास्मै' इत्याद्यं सूक्तम्। 'दवि द्युतत्या' इति द्वितीयम्, 'पवमानस्य ते' इति तृतीयम्। ज्योतिष्टोमस्य प्रातःसवनानुष्ठाने तेषु त्रिषु सूक्तेषु गायत्रं साम गातव्यम्। तदिदं सूक्तत्रयगानसाध्यं स्तोत्रं बहिष्पवमानमित्युच्यते। तत्र स्थितानामृचां पवमानार्थत्वाद्बहिः संबन्धाच्च।

(२) आ समन्ताजयन्त्येभिरित्याज्यानि (ऐ० ब्रा० २।५।४, तां० ७।२)। उत्तराग्रन्थे बहिष्पवमानसूक्तेभ्यस्त्रिभ्य ऊर्ध्वं यानि चत्वारि सूक्तान्याम्नातानि, तान्येव प्रातःसवने गायत्रसाम्ना गीयमानानि चत्वारि आज्यस्तोत्राणीत्युच्यन्ते (तां० ब्रा० २।४।६)।

(३) बृहत्, रथन्तरम्, वैरूपम्, वैराजम्, शाक्वरम्, रैवतम् इति षट् सामानि पृष्ठानीत्युच्यन्ते (तां० ब्रा० ७।६।७, तै० ब्रा० १।२।२।३)। पृष्ठानां समूहः पृष्ठ्यः (पा० वा० ४।२।४२)। स्पृशति प्राप्नोति स्वर्गो लोकोऽनेन सामषट्केन इति पृष्ठ्यः "स्वर्गं लोकमस्पृशंस्तस्मात्पृष्ठ्यः" (श० ब्रा० १२।२।२।११)। रथन्तरादीनि षट् स्तोत्राणि पृष्ठ्यस्तोत्राणीत्युच्यन्ते। न तु सप्तमं पृष्ठ्यस्तोत्रं किंचिदप्यस्ति (तै० सं० साय० १।१५)।

(४) उत्तराग्रन्थे आज्यस्तोत्रेभ्य ऊर्ध्वं यानि त्रीणि सूक्तानि, तान्येव माध्यन्दिने सवने गायत्राऽऽमहीयव-रौरव-यौधाजयौ-शनसामभिर्गीयमानानि पञ्च माध्यन्दिनसवनस्तोत्राणि। तत आम्नातेषु चतुर्षु सूक्तेषु रथन्तर-वामदेव्य-नौधस-कालेयसामभिः सम्पाद्यानि चत्वारि पृष्ठस्तोत्राणि माध्यन्दिनसवनीयान्येव (तां० ब्रा० ७।३।५)।

(५) तृतीयसवने गेयानि गायत्र-संहित-शफ-पौष्कल-श्यावाश्व-गान्धीगवसामभिर्निष्पाद्यानि आर्भवपवमानस्तोत्राणि ऋभुनामकैर्देवैर्दृष्टानि षट् (तां० ब्रा० ८।४।५)।

(६) येन साम्ना अग्निष्टोमसंस्था समाप्यते तदग्निष्टोम (साम) स्तोत्रम्।

(७) अग्निष्टोमे द्वादश शस्त्राणि १२, अत्यग्निष्टोमे त्रयोदश, उक्थ्ये १५, षोडशिनि षोडश, वाजपेये १७, अतिरात्रे पञ्चविंशतिः, अप्तोर्यामे त्रयस्त्रिंशदिति।

ऋत्विजः—प्रस्तोता, उद्गाता, प्रतिहर्ता चेति । तत्र प्रथमभागः प्रस्तावाख्यः प्रस्तोत्रा प्रस्तूयते । द्वितीयो भाग उद्गीथाख्यः उद्गात्रा गीयते । तृतीयः प्रतिहाराख्यः, प्रतिहर्त्रोपगीयते। चतुर्थपञ्चमौ सर्वैः। एवमेव सर्वत्र स्तोत्रकरणम्। एवं स्तोत्रे समापिते यद्देवताकं स्तोत्रं तद्देवताकं शस्त्रं होता शंसति। "स्तुतमनुशंसति" (तां० ब्रा० ६।८।१०) "स्तोत्रमग्रे शस्त्रात्" (आश्व. श्रौ. ६।५०) "स्तुवतेऽथ शंसति" (श० ब्रा० ८।१।३।३) इति वचनात् । क्वचिन्मैत्रावरुणाच्छावाकयोरपि शस्त्राणि विहितानि ।

अतो यावन्तो ग्रहास्तावन्त्येव स्तोत्राणि तावन्त्येव शस्त्राणीति सिद्धम् । तत्र प्रातः सवने बहिष्पवमानं, चत्वारि आज्यानि इति पञ्च स्तोत्राणि। माध्यन्दिने सवने चत्वारि पृष्ठानि माध्यन्दिनपवमानमेकं चेति पञ्च । तृतीयसवने आर्भवपवमानमग्निष्टोममिति द्वे । अग्निष्टोमसंस्थैव इतरासां षण्णां संस्थानाम् एकाहानां द्वादशाहस्य च प्रकृतिः । सोमयागा हि एकाहप्रभृति सहस्रसंवत्सरपर्यन्ता विहिताः । एकाहा नाम एकदिनसाध्याः क्रतवः (१) । दिनद्वयानुष्ठेयसुत्याको यागो द्विरात्रः। एवं च प्रथमेऽह्नि अभिप्लवादिष्टोमान्ता ये यागा अनुष्ठितास्तेषामेव द्वितीयस्मिन्नपि दिने यत्र विधिविशेषसहितमनुष्ठानं स द्विरात्र इत्युच्यते। इदं च प्रधानमात्रे। उपसद्दीक्षाद्यङ्गानुष्ठानं तु तत्र तत्र यथाविधि द्वित्रिचतुःपञ्चादिदिवसेषु । एवमेव त्रिरात्रप्रभृति क्रतुष्वपि ज्ञेयम्। एवं रीत्या द्विरात्रप्रभृत्येकादशरात्रपर्यन्ताः क्रतवोऽहीना इत्युच्यन्ते । त्रयोदशरात्रप्रभृति सहस्रसंवत्सरपर्यन्तानि सत्राणीत्युच्यन्ते । तत्रापि त्रयोदशरात्रप्रभृति शतरात्रपर्यन्तं रात्रिसत्राणि (२) ततः

---

(१) एकाहा द्वाविंशेऽध्याये सूत्रकारेण पठिताः, ते यथा—ज्योतिः १गौः २आयुः ३अभिजित् ४विश्वजित् ५ सर्वजित् ६ ज्योतिः साहस्रः ७ विश्वज्योतिःसाहस्रः ८ सर्वज्योतिःसाहस्रः २ त्रिरात्रसम्मितः साहस्रः १० । साद्यस्क्रनामानः षट् एकाहाः ११-१६ ( तत्र अनुक्रीः, विश्वजिच्छिल्पः, श्येनः इति त्रयाणां संज्ञा, इतरेषां त्रयाणां साद्यस्क इत्येव संज्ञा ) व्रात्यस्तोमाश्चत्वारः १७-२० अग्निष्टुत् २१, ( इन्द्रस्तुत, सूर्यस्तुत )। त्रिवृतनामकाश्चत्वार एकाहाः, ते च-ईप्सुयज्ञः २२ बृहस्पतिसवः २३ इषुः २४ सर्वस्वारः २५ । ऋत्विगपोहनीयसंज्ञकास्त्रय एकाहाः २६-२८ तत्रैकः सर्वस्तोमः। वाचस्तोमाश्चत्वारः २९-३२। चातुर्मास्याः सौमिकाः ३३–३६। अग्न्याधेयपुनराधेयाऽग्निहोत्र-दर्शपूर्णमास-दाक्षायणा-ऽऽग्रयण-पशुबन्धाः सौमिकाः षट् ३७–४२। सप्तदशसंज्ञकाः पञ्च एकाहाः–४३–४८ तत्र प्रथम उपहव्यः, द्वितीय ऋतपेयः, दूणासः, वैश्यस्तोमः, तीव्रसुत्। अथ द्वन्द्वयज्ञाः–अत्र एकमनुष्ठायानन्तरमेव द्वितीयमवश्यमेवानुष्ठेयम्। तत्र राट् विराट् इत्येकं द्वन्द्वम् ४९ औपशदः पुनस्तोम इत्यपरम् ५० द्वौचतुष्टोमौ इति तृतीयम् ५१ उद्भित् बलभित् इति तुरीयम् ५२ अपचिती द्वौ ५३ अग्ने स्तोमौ द्वौ ५४ ऋषभः मरुत्स्तोम इति षष्ठम् ५५ ऐन्द्रकुलायः द्वियज्ञ इति सप्तमम् ५६ इन्द्रस्तोमः इन्द्राग्न्यो स्तोमः इत्यष्टमम् ५७। घन-विघनौ द्वौ ५८ सन्दंशः वज्र इति दशमम् ५९। आश्वलायनश्रौतसूत्रे अन्येऽप्येकाहा उक्ताः ते यथा–विष्णुवत्स्तोमाः, १ धृतिः २ उशनसस्तोमः ३ (पुनः स्तोमः) भूमिस्तोमः ४ वनस्पतिस्तोमः ५ भूस्तोमः ६ सद्यस्क्रिया ७ अनुक्रिया ८ परिक्रिया ९ एकत्रिकः १० त्र्येकः ११ गोतमस्तोमः १२ अजिरम् १३ इन्द्रस्तुत् १४ तीव्रस्तोमः १५ क्रान्तिः १६ अतिमूर्तिः १७ ( बहुसुवर्णः) सूर्यस्तुत् १८ विश्वदेवस्तुत् १९ पञ्चशारदीयः २० विवधः २१ गोसवः २२ शदः २३ उपशदः २४ वाजपेय एकाहः, सप्तदशापवर्गो वा ) २५ । आपस्तम्बश्रौतसूत्रेऽन्येप्युक्तास्ते तत एवावधेयाः।

(२) तत्र आङ्गिरसः १ चैत्ररथः २ कापिवनः ३ इति त्रयो द्विरात्राः ( द्व्यहाः )। गर्गः बैदः २ छन्दोमः, ३ अन्तर्वसुः, ४ पराकः ५ इति पञ्च त्रिरात्राः ( त्र्यहाः । अत्रिचतुर्वीरः १ जामदग्न्यः २ वसिष्ठसंसर्पः ३ विश्वामित्रः ४ इति चत्वारश्चतूरात्राः ( चतुरहाः )। ( अत्र जामदग्न्ये उपसदः पुरोडाशिन्यो भवन्तीति विशेषः । देवपञ्चाहः १ पञ्चशारदीयः २ व्रतवान् ३ इति त्रयः पञ्चरात्राः ( पञ्चाहाः )। ऋतुषडहः १ पृष्ठ्या घलम्बः २ त्रिकद्रुकाः ३ इति त्रयः षड्रात्राः ( षडहाः ) । जनकसप्तरात्र एकः सप्ताहः १ । अष्टरात्र

केवलसत्राणि (१)। द्वादशाहस्तूभयात्मकः सत्रात्मकोऽहीनात्मकश्च। अयमेव सत्राणाम-हीनानां च प्रकृतिभूतः। तत्र सत्रात्मकः सत्राणाम्, अहीनात्मकश्चाहीनानामित्यपि विवेकः।

अयं सोमयागः सर्वसोमयागप्रकृतिभूत इत्युक्तम्। अत एवास्मिन् सोमयागे सर्वतो-भावेनावगते सर्वेऽप्येतदुपरितनाः क्रतवः प्रायशोऽवगता भवन्ति। अत एतत्परिज्ञानं नितरामावश्यकमुपरितनान् क्रतून् जिज्ञासूनाम्, अन्येषां च सोमयागस्वरूपमधिजिगमिषताम्। अतो यद्यप्यस्य स्वरूपं सर्वांशेन निरूपयितुमस्त्यपेक्षाऽऽवश्यकता च, तथाऽपि विस्तरभ-याश्चात्र सर्वे तदीयाः पदार्था निरूप्यन्ते। ते च तत्प्रकरणस्थसूत्रावलोकनेन यथावदधिगन्तुं शक्यन्त एव सेमुषीमताम्। अत्र तु प्रधानभूताः परं केचन पदार्थाः सङ्गृह्यन्ते सुखाव बोधार्थम्। ते यथा—प्रथमं वसन्ते यस्मिन् कस्मिंश्चित्पुण्याहे आभ्युदयिकपूर्वं प्रारम्भः। प्रायशः शुक्लैकादश्यां प्रारभ्य पूर्णिमायां समापनमिति सम्प्रदायः। आभ्युदयिकानन्तर-मृत्विग्वरणम्। तत्र सोमप्रवाकनामानमृत्विजं प्रथमतो वृणुयात्। वृतः सोमप्रवाकोऽध्वर्य्वा-दीनां गृहं गत्वा तान् प्राह—अमुकशर्मणो यज्ञो भविष्यति तत्र भवताऽऽर्त्विज्यं कर्तव्य-मिति। तेन चाध्वर्य्वादिना आधानादिषु के ऋत्विजोऽभूवन्, ते च कुत्र गताः, किमर्थ-मस्मानिदानीं मृगयसे, अपि यजमानेन कल्याण्यो दक्षिणा दीयन्ते इत्यादिपृष्टे यथावत्तान् प्रतिब्रूय तैः सह यजमानगृहमागच्छेत्। आगतेषु तेषु तान्वृणीते। शाखान्तरे सदस्यवरणमप्युक्तम् (आप० श्रौ० १०।१। ६–१०), अस्माकं तु तत् श्रुतौ निषिद्धम् (श०ब्रा० १०।४।१।१६)। वृतेभ्यो ऋत्विग्भ्यो मधुपर्कदानम्। एतावद्गृहे कृत्वा ततोऽग्नीन् समारोप्य यत्र सोमेन यक्ष्यन् स्यात् तं देशं गच्छेत्, गत्वा च तत्र शालां विमितं वा निर्माय तत्र वितानं साध-यित्वाऽरणी मथित्वा तत उत्थितानग्नीन् तत्तत्कुण्डेषु स्थापयेत्। अपराह्णे दम्पत्योरभीष्टभोजनं, न वा। अस्मिन्नेव दिनेऽनयोर्भोजनं, ततश्चतुर्षु दिनेषूपवास एव। अवभृथानन्तरमेव पुनरनयोर भीष्टभोजनम्। मध्ये तु व्रतप्राशनमेव यावदुक्तम्। ततो वपनं यजमानस्य। ततः स्नानम्, ततो दीक्षणीयेष्टिः—तत्राग्नावैष्णव एकादशकपालः पुरोडाशो द्रव्यम्, अग्नाविष्णू देवता। इष्ट्यन्ते नवनीतेन दम्पत्योः शिरस आरभ्य पादपर्यन्तमभ्यञ्जनम्। ततस्तयोर्मुष्टिबन्धनम्। तत्र बन्धनकाले हस्तद्वयेऽपि सर्वा अङ्गुलीर्बद्ध्वा ततोऽङ्गुष्ठप्रदेशिन्यौ विसृजेताम्, इतरो बद्धा एव (वस्त्रादिना) भवेयुः। माध्यन्दिनसवनं यावत् न तान्विसृजेत्। बद्धमुष्टिभ्यामेव दम्पतिभ्यां कार्याणि सम्पादनीयानि। तत औद्ग्रभणहोमाः। ततः कृष्णाजिनादिदीक्षा।

---

एकोऽष्टाहः १। नवरात्र एको नवाहः १। त्रिककुप् १ कौसुरुविन्दः २ पृष्ठ्योमः ३ छन्दोमदशाहः ४ इति चत्वारो दशरात्राः। पौण्डरीक एक एकादशरात्रः।

द्वादशरात्रः, ततस्त्रयोदशरात्रसंज्ञकं सत्रद्वयम्। चतुर्दशरात्राणि त्रीणि। पञ्चदशरात्राणि चत्वारि। षोडशरात्रं, सप्तदशरात्रं, अष्टादशरात्रम्, एकोनविंशतिरात्रम्, विंशतिरात्रम् इति प्रत्येकमेकैकम्। एकविंशति रात्रे द्वे। द्वाविंशतिरात्रम्, त्रयोविंशतिरात्रम्, चतुर्विंशतिरात्रे द्वे, पञ्चविंशतिरात्रम्, षड्विंशतिरात्रम्, सप्तविंशतिरात्रम्, अष्टाविंशतिरात्रम्, एकोनत्रिंशद्रात्रम्, त्रिंशद्रात्रम्, एकत्रिंशद्रात्रम्, द्वात्रिंशद्रात्रम्, त्रीणि त्रयस्त्रिंशद्रात्राणि, चतुस्त्रिंशद्रात्रम्, पञ्चत्रिंशद्रात्रम्, षट्त्रिंशद्रात्रे द्वे, सप्तत्रिंशद्रात्रम्, अष्टत्रिंशद्रा-त्रम्, एकोनचत्वारिंशद्रात्रम्, चत्वारिंशद्रात्रम्, एकान्नपञ्चाशद्रात्राणि सप्त, एकषष्टिरात्रम्, शतरात्रमिति रात्रिसत्राणि।

(१) आदित्यानामयनम्, अङ्गिरसामयनम्, दृतिवातवतोरयनम्, कौण्डपायिनामयनम्, सर्प-सत्रम्, तापश्चितम्, महातापश्चितम्, क्षुल्लकतापश्चितम्, सहस्रसाव्यम्, प्रजापतिसत्रम्, शाक्त्यानामयनम्, साध्यानामयनम्, विश्वसृजामयनम्, सारस्वतसत्राणि, दार्षद्वतसत्राणि, तुरायणमिति। एवमन्यान्यपि सत्राणि सूत्रान्तरतो बोध्यानि।

तत्र कृष्णाजिनमारुह्य मेखलां बद्ध्वा उष्णीषेण शिरसः प्रावरणं कुर्यात्, पत्न्याः कृष्णाजिनाभावः । मेखलायोक्त्रयोरन्यतरस्य बन्धनम्, शिरसि जालस्य बन्धनमुष्णीषस्य वा पत्न्याः । कण्डूयनार्थं कृष्णमृगशृङ्गं परिधानीयवाससोऽन्ते बध्वा रक्षेत्, कण्डूयने प्राप्ते तेनैव तत्कुर्यात् । ततो दण्डग्रहणं यजमानस्य । ततः सायं 'दीक्षितोऽयं ब्राह्मण' इति प्रतिप्रस्थातोच्चैर्निवेदयेत् । राजन्यवैश्ययोरपि यजमानयोर्ब्राह्मण इत्येवावेदनम् । इतः प्रभृति यावदवभृथं दन्तधावन-स्नाना-ऽग्निहोत्रहोम-दर्शपूर्णमासादि-वैश्वदेवार्थपाक-स्मार्तौपासनानुष्ठान-दान-( १२।१०।१४ आप० श्रौ० ) शूद्रसम्भाषण-प्रत्युत्थानाभिवादन-जलावगाहनानि न कर्तव्यानि ।

ततः प्रवर्ग्यार्थं महावीरसम्भरणम् (१) । अग्रे प्रवर्ग्याख्यो होमविशेषो वक्ष्यते तदर्थं यत्पात्रं स महावीर इत्युच्यते । तन्निर्माणमिदानीं कर्तव्यम् । तच्च पात्रमुलूखलाकृति प्रादेशमात्रमुच्चं नवाङ्गुलोपरि मेखलाविशिष्टं मध्यसंगृहीतं गर्तवत् दध्यादिप्रक्षेपणयोग्यं च भवेत् । केवलया मृदा, वल्मीकोत्थया मृदा, वराहोत्खातया मृदा, पूतीकाभिः, अजाक्षीरेण, गवेधुकाभिश्च मिलितैरयं महावीरो निष्पाद्यते । ततो यूपच्छेदनार्थं वनं प्रति गमनं तन्निर्माणादिकं च । ततोऽस्तमिते व्रतभक्षणम् । अत्र व्रतशब्देन पय आदि उच्यते—तत्र ब्राह्मणस्य पयः पानं, राजन्यस्य यवागूः, वैश्यस्यामिक्षा । तत्सम्पादनप्रकारश्चैवम् । प्रथमदिने व्रतदोहनार्थमेकां गां शालासमीपमानीय तस्या एकमेव स्तनं दुह्यात्, ततो यावत्पयो लभ्यते तद् द्विधा कृत्वा गार्हपत्ये यजमानार्थं, दक्षिणाग्नौ पत्न्यर्थं च श्रपयित्वा प्रयच्छेत्, तौ च तत्पिबेताम् । द्वितीयतृतीयदिवसयोर्मध्याह्ने रात्रौ चेति वारद्वयं व्रतप्राशनं, तत्र द्वितीयदिने स्तनद्वयदुग्धं पयोव्रतम्, तृतीयदिने स्तनत्रयदुग्धम्, चतुर्थपञ्चमयोर्दिवसयोस्तु केवलं हविःशेषभक्ष एव ( का० श्रौ० अ० ८ कं० ७ सू० २२ ) न पयआदि व्रतम् । ततो भूमौ दक्षिणतोऽग्निमुखः शयीत । एतावत्पर्यन्तं प्रथमदिनकृत्यम् ।

**अथ द्वितीयदिने**—प्रायणीयेष्टिः, (२) तत्र पञ्च देवताः-अदितिः, पथ्या स्वस्तिः, अग्निः, सोमः, सविता च । अदित्यै चरुः, अवशिष्टेभ्य आज्यं द्रव्यम् । इष्ट्यन्ते सलेपां चरुस्थालीं मेक्षणं चोदयनीयार्थं निदध्यात् । ततः सोमक्रयः । केनचन कौत्सगोत्रेण ब्राह्मणेन शूद्रेण वा सोममानाय्य ततस्तं क्रीणीयात् । क्रयणं चानेकैर्द्रव्यैः—( का० श्रौ० अ० ७कं० ८ सू० १४-१५ )

क्रीतं तमध्वर्युः शकटे निधायानडुद्भ्यामूढं शकटं शालायामानाय्य तं सोममौदुम्बर्यामासन्द्यां निधाय शालायां स्थापयेत् । तत आतिथ्येष्टिः-तत्र विष्णुर्देवता, नवकपालः पुरोडाशो द्रव्यम् । इयं खण्डेष्टिः । अतः प्रभृति मदन्तीसंज्ञकाभिस्तप्ताभिरद्भिः सर्वाण्युदककार्याणि यजमान-दम्पतिभ्यां कर्तव्यानि । न शीतोदकस्पर्शः । ततः सर्वेषामृत्विजां यजमानस्य च तानूनप्त्रसंज्ञकाज्यस्य स्पर्शः, अयं च स्पर्शो यावदवभृथं परस्परमद्रोहार्थः शपथरूपः (३) ।

---

( १ ) तप्ते घृते पयः प्रक्षेपादिना प्रणीयते 'घर्मः' खाद्यविशेषः, स एव प्रक्षेपः प्रवृञ्जनमुच्यते । तादृशप्रवृञ्जननिबन्धनैवास्य कर्मणः समाख्या प्रवर्ग्य इति । तत्र च घर्मपाकाय मृन्निर्मित उलूखलाकारपात्रविशेषो महावीरः । गौण्या तु वृत्त्या घर्मः, प्रवर्ग्यः, महावीरः—इति त्रीण्येव पदानि समानार्थानीति विवेकः । तै० भा० साय० ५।१।१।१ शत० ब्रा० १४।१।१०—११ ।

( २ ) प्रयन्ति स्वर्गमनया सा प्रायणीया । अनयेष्ट्या सोमयाग आरभ्यते ( का० श्रौ० ७।५।१३ आप० श्रौ० ४।२।१८, ४।३।१, यदहः सोमः क्रीयते तदहः प्रायणीया नामेष्टिः कार्या ( तै० सं० ६।१।५।१ ) श० ब्रा० ३।२।३।२, निरु० ११।१।७ ।

( ३ ) अध्वर्युप्रभृति षोडशर्त्विजो यजमानश्च मिथो द्रोहशून्या भवन्त एकमत्या यज्ञकार्यं सम्पाद-

ततः प्रवर्ग्यानुष्ठानम्। प्रवर्ग्यश्चाग्निष्टोमप्रथमप्रयोगे विकल्प्यते। प्रयोगान्तरे तु नित्यः। प्रवर्ग्याख्यं कर्म पत्न्या नावेक्षितव्यम्। अत्र गार्हपत्याहवनीयावुत्तरेण द्वौ खरौ हस्तमात्रा वङ्गुलोत्सेधौ, दक्षिणतस्ततीयं तावन्मात्रं सिकताभिः कृत्वा सम्राडासन्दीमाहवनीयं पूर्वेण संस्थाप्य तत्र द्वौ महावीरौ आसादयेत्। ततो मुञ्जनिर्मितानिण्डूनादीप्य तान् खरे संस्थाप्य तत्राज्यपूर्णं महावीरं निधाय होत्रा मन्त्रगणे पठ्यमाने प्रतिप्रणवं स्रौवाज्यमासिञ्चेत्। ततो रौहिणपुरोडाशयोः प्रचारः। तत्रादौ दक्षिणं पुरोडाशं हुत्वा गां दुग्ध्वा परीशासाभ्यां महावीरमादाय तत्राजापयः प्रक्षिप्य शान्ते पयसि गोपयः प्रक्षिपेत् अयं घर्म इत्याचक्षते। तत उत्तरं रौहिणं जुहुयात्। एवमपराह्णेऽपि प्रवर्ग्यानुष्ठानम्। तत उपसदिष्टिः। तत्राज्यं द्रव्यम् अग्निः सोमो विष्णुश्च देवताः। ततः स्रुवेण प्रातरुपसद्धोमः। एवं सायमित्येकैकस्मिन्नहनि द्वे उपसदौ। त्रिषु द्वितीयतृतीयचतुर्थदिवसेषूपसदः क्रियन्ते, प्रवर्ग्यश्च। मिलित्वा ज्योतिष्टोमे षडुपसदः। एतावत्पर्यन्तं द्वितीयदिनकृत्यम्।

**तृतीयदिने**—प्रातः प्रवर्ग्यमुपसद हुत्वा सौमिकीं महावेदिं निर्माय आपराह्णिक्यौ प्रवर्ग्योपसदौ प्रचरेदिति तृतीयदिनकृत्यम्।

**ततश्चतुर्थदिने**—ऽग्नीषोमीयः पशुः। अनेनैव पशुना सह दौर्ब्राह्मण्यनिवृत्त्यर्थः पशुरपि समानतन्त्रेणाधुनैव कर्तव्यः। यस्य हि पिता पितामहश्च सोमपीथिनौ न स्यातां स दुर्ब्राह्मण उच्यते। तेन तद्दोषनिवारणार्थं योऽनुष्ठीयते स दौर्ब्राह्मण्यनिवृत्त्यर्थः पशुः। ततस्तद्दैवत्यं पशुपुरोडाशमन्यानि च पश्वङ्गानि यथावदनुष्ठाय तद्वपामार्जनान्ते वसतीवरीग्रहणार्थं बहिर्गत्वा यत्रापः स्यन्दन्ते ताः वसतीवरीः पात्रे गृह्णीयादस्तमयात्पूर्वम्। सोमाभिषवकाले रसवृद्ध्यर्थं या आपस्तत्र प्रक्षिप्यन्ते ता वसतीवर्य इत्युच्यन्ते। ता गृहीत्वा येन पथा तदानयनं विहितं तेनैव ता आनीयाग्नीध्रे ता निदध्यात्। एतावच्चतुर्थदिनकृत्यम्।

**पञ्चमदिनकृत्यम्**—अयमेव दिवसः सुत्यादिवस इत्युच्यते (१)। अत्रैव सोमाभिषव ग्रहग्रहण-तद्धोमादीनामनुष्ठानम्। इदमेव च प्रधानं दिनम्। तत्र चतुर्थदिनस्यापररात्र एव सौम्यकर्मकरणार्थं यजमानपुरुषा ऋत्विजोऽवबोधयेयुः। अवबुध्य च ऋत्विजः स्नाता आज्यासादनान्त कृत्वा सोमं द्वेधा विभज्य उपरवोपरि निक्षिप्तानां ग्राव्णां मुखे सोमं निदध्युः।

ततः प्रातरनुवाकस्य (२) शस्त्रं होता पठेत्। तच्च पक्षिणां वागुत्थानात्पूर्वमेवारब्धव्यम्। तत्काले जाग्रदेवाध्वर्युर्होतृसमीपे आसीत। ततः प्रातःसवनीयपुरोडाशानां निर्वापोऽग्नीत्कर्तृकः। तत्र पञ्च हवींषि, पञ्च च देवताः। ऐन्द्र एकादशकपालः, इन्द्राय हरिवते धानाः, इन्द्राय पूषण्वते करम्भः, इन्द्राय सरस्वतिमते दधि, इन्द्राय मित्रावरुणवते पयस्येति। एवं

---

यितुं घृतस्पर्शनपूर्वकं समन्त्रं यत् शपथकरणं तदेव 'तानूनप्त्रं कर्म' परस्परेर्ष्याद्वेषादिशून्या एव वयं यथाविधि यागकार्यसम्पादनाय यतिष्याम इत्याकारः स्वीकारः।

(१) यस्यां क्रियायां सोमोऽभिषूयते सा सुत्या।

(२) रात्रौ निद्रां कुर्वन्तः पक्षिण उषःकाले प्रबुध्य वदन्ति तस्माद्वादात्प्राक् प्रातःकाले होत्राऽनूच्यः पठनीय ऋक्समूहः प्रातरनुवाकः (का. श्रौ. ९।१।१०, आश्व० श्रौ. ४।१३।१-६, तै. सं. ६।४।३।१, श. ब्रा. ४।१२।३।१४-१५, ऐ. ब्रा. २।२।५)।

पुरोडाशादिनिर्वापान् पयस्यां च प्रातरनुवाकशस्त्रकाल एवाग्नीत् यथावत्सम्पाद्य तत उन्नेता ऐन्द्रवायवादीनि पात्राणि योजयेत्। एवं यथावत्पात्रेषु योजितेषु चत्वार ऋत्विजः सोमाभिषवार्थमधिषवणफलकयोः सर्वत उपविशेयुः। तत्रोपवेष्टार अध्वर्यु-प्रतिप्रस्थातृ-प्रस्तोतृ-प्रतिहर्तृ-यजमानाः, ब्रह्मा च। तत्रोत्तरतोऽध्वर्युयजमानौ, दक्षिणतो ब्रह्मा, प्रतिप्रस्थात्रुन्नेतृ-नेष्टारश्च। अभिषवार्थानां पदार्थानामीषान्तरेणैवानयनम्।

ततोऽध्वर्युरधिषवणफलके उपांशुसवनाख्यं पाषाणं ( मध्ये निहितं ) निधाय तदुपरि पञ्चकृत्वः सोमं मिनुयात्। तत्र प्रातःसवनपर्याप्तस्य अर्धाधिकस्य सोमस्य मानं कर्तव्यम्। अभिषवस्तावदयं द्विविधः। क्षुल्लकाभिषवो महाभिषवश्चेति। प्रथमं महाभिषवस्ततः क्षुल्लकाभिषवः। तत्र क्षुल्लकाभिषवार्थं पूर्वं मितात्सोमादल्पानंशूनपकृष्य, होतृचमसस्थाज्जलाग्निग्राभ्यासंज्ञकात् किंचिद् गृहीत्वा तच्च पात्रान्तरे पृथक्कृत्वा यत्नेन स्थापयेत्।

## अथ महाभिषवः।

तत्राध्वर्यु-प्रतिप्रस्थातृ-नेष्टृ-उन्नेतारः कर्तारः। ते मितं सोमं चतुर्धा विभज्य चत्वारोऽपि तत्र प्रहरेयुः। प्रहारश्चापरिमितकृत्वः। एवं यावता रसप्रच्युतिर्भवेत्तावत्पर्यन्तं निग्राभ्या आसिच्याभिषुणुरिति महाभिषवः।

## अथ क्षुल्लकाभिषवः।

स एवोपांश्वभिषव इत्युच्यते। तत्राध्वर्युरेक एव कर्ता। तत्र पूर्वापकृष्टानंशून्, पात्रान्तरे स्थापिता निग्राभ्याश्च होतृचमसे कृत्वा सोमोपरि आसिच्य अष्टकृत्वः प्रहरणम्। अभिषवान्ते प्रतिप्रस्थाता उपांशुग्रहपात्रं स्वहस्ते धारयेत् (१)। अध्वर्युर्मुष्टिनाऽभिषुतं सोमं निष्पीड्य उपांशुग्रहं गृह्णीयात्। ग्रहणकाले पूर्वगृहीतानामंशूनां मध्ये द्वौ द्वावंशू ग्रहस्योपरि धारयेत। पुनः पूर्ववत् त्रिपर्यायोऽभिषवः। अत्र एकादशकृत्वः प्रहृत्य पूर्ववत्प्रतिप्रस्थाता पात्रे गृहीतेऽध्वर्युः अंशुद्वये तदुपरि तेन धारिते गृह्णीयात्। एवं तृतीयवारमपि द्वादशकृत्वः प्रहृत्य पूर्ववद् गृह्णीयात्। अङ्गुल्यन्तरे धृतान् षडंशून् सोमेऽन्तर्दध्यात्। ततः प्रतिप्रस्थातृहस्तादध्वर्युर्ग्रहमादाय दशापवित्रेण परिमृज्य भूमावनिधाय ग्रहहस्तः सन्नेव हविर्धानान्निष्क्रम्य उपांशुग्रहं सशेषं तिष्ठन् जुहुयात्। हुत्वा चाग्रयणस्थाल्यां शेषैकदेशमासिच्य अंशुपात्रमासादयेत्, तत्समीपे उपांशुसवनं च निध्यादिति शुष्काभिषवः।

---

(१) ज्योतिष्टोमे उपांशुः, अन्तर्यामः, ऐन्द्रवायवः, मैत्रावरुणः, आश्विनः, शुक्रः, मन्थी, आग्रयणः, उक्थ्यः, ध्रुवः, ( वैश्वानरो वैकल्पिकः ) ऋतुग्रहौ, ऐन्द्राग्नः वैश्वदेवश्चेति प्रातः सवने त्रयोदश ग्रहाः। माध्यन्दिने सवने—शुक्रः, मन्थी, आग्रयणः, उक्थ्यः, त्रयो मरुत्वतीयाः, माहेन्द्रः, दधिग्रहश्चेति नव ग्रहाः। तृतीयसवने—आदित्यः, सावित्रः, वैश्वदेवः, पात्नीवतः, हारियोजन इति पञ्च ग्रहाः। तत्र गृह्यते इति कर्म व्युत्पत्त्या सोमरसः, गृह्यतेऽस्मिन्निति व्युत्पत्त्या च तदाधारभूतं पात्रमुच्यते। तत्र उपांशुः अन्तर्यामः, ऐन्द्रवायवः, मैत्रावरुणः आश्विनः, शुक्रः, मन्थी, उक्थ्यः, आदित्यः इति नवैव ग्रहा उलूखलाः। आग्रयणः, उक्थः ध्रुवः आदित्य इति चतस्रो मृन्मय्यः स्थाल्यः, स्थालीग्रहा इति यावत्। ऋतुग्रहौ द्वावेव न तु द्वादश, द्वादशवार ग्रहणाद् द्वादश ग्रहा इति व्यवहारः। ऐन्द्राग्न-वैश्वदेव-मरुत्वतीय-माहेन्द्राणामृतुपात्रेणैव ग्रहणम्। दधिग्रहस्याग्निहोत्रहवण्या। सावित्र-वैश्वदेव-पात्नीवतानामुपांश्वन्तर्यामयोरन्यतरेण, हारियोजनस्य द्रोणकलशेन ग्रहणं होमश्च। अतो नवौलूखलाश्चतस्रः स्थाल्यो द्वौ ऋतुग्रहौ शुङ्मुखाकृती उभयतोमुखौ इति मिलित्वा पञ्चदश पात्राणीति।

अत्रैव च ऋत्विजां यजमानस्य च सन्ध्यावन्दनम्। ततः सूर्योदयानन्तरमन्तर्यामसंज्ञकस्य ग्रहस्य ग्रहणं होम आसादनं चोपांशुग्रहवत्। ततो धाराग्रहाणां ग्रहणम्। ते च षट्। तत्र प्रथममैन्द्रवायवः। स च वारद्वयं गृह्यते। प्रथमं वायवे गृहीत्वा धारातो विच्छिद्य पुनस्तत्रैव ऐन्द्रवायुभ्यां ग्रहणम्। एवं गृहीत्वा खरे आसादयेत्। ततो मैत्रावरुणाभिधानस्य ग्रहस्य। ततः शुक्रस्य, ततो मन्थिनश्च ग्रहणम्। तत आग्रयणस्य धाराद्वयेन ग्रहणम्। आग्रयणस्थाल्यां ग्रहणकाले यः सोमोऽस्ति तस्यैका धारा होतृचमसस्था, सोमस्था चैका धारा इति धाराद्वयेन ग्रहणम्, तत उक्थ्यस्य। ततो ध्रुवग्रहणम्। ततो वैश्वानरग्रहग्रहणं विकल्पेन।

एवं ग्रहेषु गृहीत्वा स्वस्वस्थाने आसादितेषु सत्सु अध्वर्य्वादयः परस्परं कटिदेशे समन्वारब्धाः प्रह्वीभूता हविर्द्धानान्निष्क्रामन्ति। ततस्त एव षड् विप्रुड्ढोमं कृत्वा बहिष्पवमानस्तोत्रार्थं चात्वालदेशं प्रति गच्छेयुः। गत्वा चोपविशेयुः।

उपवेशनप्रकारश्च—उदङ्मुखः प्रस्तोता, दक्षिणामुखः प्रतिहर्ता, प्रत्यङ्मुखावध्वर्युप्रतिप्रस्थातारौ। उपविष्टेषु तेषु पवमानस्तोत्रारम्भार्थमध्वर्युः प्रस्तोतृसंज्ञकाय ऋत्विजे तृणं कुशमुष्टिं वा प्रयच्छेत्। ते च स्तोत्रं पठेयुः। तच्च स्तोत्रम् "उपास्मै गायता नर" इत्यादिभिर्नवभिर्ऋग्भिः कर्तव्यम्। नवानामृचामनावृत्त्यैव पाठः, नतु स्तोत्रान्तरेष्विवावृत्त्या गानम्। गाने च प्रस्तोतृद्गातृप्रतिहर्तॄणां त्रयाणां संबन्धः। एवं सर्वेष्वपि द्रष्टव्यम्। तेषु स्तुवत्सु सत्सु उन्नेताऽऽधवनीयस्थं सोमं पूतभृत्यासिञ्चेत्। स्तोत्रान्ते सवनीयहविरलङ्करणार्थं सवनीयपश्वर्थं वा अग्नीत्प्रतिप्रस्थातारौ प्रेष्यत्यध्वर्युः। तत आग्नीध्रीयादङ्गारान् धिष्ण्येषु निर्वपेदाग्नीध्रः। तत आश्विनग्रहणम्। तदनन्तरं ग्रहाणामवेक्षणं यजमानेन कारयितव्यम्।

## ततः सवनीयः पशुः।

तत्र पक्षद्वयमस्ति—स्तोमायनं पश्वेकादशिनी च। चतस्रः सोमसंस्था इत्युक्तं प्राक्। तत्र अग्निष्टोमसंस्थायामाग्नेयः सवनीय एक एव पशुः। उक्थ्यसंस्थायामाग्नेय ऐन्द्राग्नश्चेति पशुद्वयम्। षोडशिनि तु पूर्वोक्तेन पशुद्वयेन सह ऐन्द्रो वृष्णिस्तृतीयः पशुः। अतिरात्रसंस्थायां सारस्वती मेषी चतुर्थः पशुः। इमे पशव एव स्तोमायनमिति सूत्रकारेण व्यवहृतम्। अनेन सह पश्वेकादशिन्या विकल्पः। पश्वेकादशिनी नाम आग्नेयः, सारस्वतः, सौम्यः, पौष्णः, बार्हस्पत्यः, वैश्वदेवः, ऐन्द्रः,

वारुणः इत्येकादश पशवः। एतेषां च नियोजनार्थमेको यूपो यूपैकादशिनी वा। एकयूपपक्षे तस्मिन्यूपे आग्नेयं पशुं नियुज्य तस्य गले अन्यं, तस्य गलेऽन्यमिति क्रमशः सर्वान्नियोजयेत्। यूपैकादशिनीपक्षे च पृथक् पृथक् एकैकस्मिन्यूपे एकैकः पशुर्नियोक्तव्यः। अस्मिन्पक्षे पश्वेकादशिन्यपि नियता। एकादशयूपनिखननार्थं च वेदिवृद्धिरपि सम्पादनीया।

एवं सवनीयपशोर्वपामार्जनान्ते कृते धिष्ण्याद्युपस्थानम्। एतदेव सर्पणमित्युच्यते। ततः पूर्वं श्रपितानां पुरोडाशादीनां प्रातःसवनीयहविषां प्रचारः। ततस्त्रयाणामैन्द्रवायवमैत्रावरुणाश्विनानां द्विदेवत्यग्रहाणां प्रचारः। तेषु त्रिषु हुतेषु उन्नेता नव चमसानुन्नयेत् (१) ततः शुक्रामन्थिग्रहयोः प्रचारः। शुक्रग्रहमध्वर्युः, मन्थिग्रहं च प्रतिप्रस्थाता जुहुयात्। तौ च तं तं ग्रहं हस्तेन गृहीत्वा यूपसमीपे गत्वा तिष्ठन्तौ आत्मनोऽरत्नी सन्धत्तः।

---

(१) होतृचमसः पोतृचमसः नेष्टृचमसः ब्रह्मचमसः ब्राह्मणाच्छंसिचमसः आग्नीध्रचमसः मैत्रावरुणचमसः अच्छावाकचमसः यजमानचमस इति नव, उद्गातृ-प्रतिहर्तृ-प्रस्तोतृणामेक इति दश चमसाः। एषु अच्छावाकचमसोन्नयनमग्रे भविष्यति।

इदं च सन्धानं न ग्रहान्तरेष्वस्ति। ततो होमार्थं तयोः प्रवृत्तयोः सतोश्चमसाध्वर्यवो नव चमसान् गृहीत्वा ताभ्यां सह जुह्वति प्राङ्मुखास्तिष्ठन्तः। एवं च शुक्रामन्थिग्रहयोश्चमसानां च युगपद्धोमः। तत्र ब्रह्म-होतृ-उद्गातृ-यजमानचमसानां वषट्कारेऽनुवषट्कारे च होमः। अवशिष्टानां चमसेषु प्रथमवषट्कारस्य होमः। अतश्च ते पञ्चापि चमसाध्वर्यवः स्वहस्तस्थितान् चमसान् प्रथमवषट्कारे सकृद् हुत्वा पुनरुन्नयनार्थं द्रोणकलशसमीपे चमसान् स्थापयेयुः। ततः पञ्चापि चमसान् प्रशास्तृ-ब्राह्मणाच्छंसि-पोतृ-नेष्टृ-अग्नीत्संबन्धिनोऽध्वर्युरेव जुहुयात्।

## ततो द्विदेवत्यभक्षः।

तत्र कात्यायनानामस्माकं होमकर्तुः प्रथमं भक्षः, ततो वषट्कर्तुः। अतश्च अध्वर्युप्रतिप्रस्थात्रोः सर्वत्र होमाभिषवकर्तृत्वात् तन्निमितं सकृद्भक्षः, ततो वषट्कर्तृभक्षणम्, ततः समाख्यानिमित्तो भक्षः। उद्गातृचमसे तु उद्गातुरेव भक्षो नान्यस्य। सर्वत्र यस्य यस्य ऋत्विगादेर्येन येन चमसेन ग्रहेण वा सम्बन्धस्तस्य तदनुज्ञामुपहवाख्यामध्वर्य उपह्वयस्व ब्रह्मन्नुपह्वयस्व इति पृष्ट्वा तेन तेन उपहूत इत्यनुज्ञातः सन्नेव तत्तद्ग्रहचमसादीन् भक्षयेत्। "नानुपहूतेन सोमः पातव्य" इति वचनात् ( )। ततश्चायं भक्षणप्रकारः। ऐन्द्रवायवं होत्रा समर्पितमध्वर्युर्गृहीत्वा सकृत्सशेषं स्वल्पं भक्षयित्वा गात्रालम्भनादिकं कृत्वा स्पृष्टोदको होतृचमसे ग्रहशेषैकदेशमवनीय ग्रहं होत्रे प्रदद्यात्। होता च तं ग्रहं गृहीत्वाऽध्वर्युमुपहूय स्वसूत्रोक्तविधिना भक्षयेत्। भक्षयित्वा स्वचमसे शेषैकदेशे तेनासिक्ते पुनरध्वर्योः सकृद्भक्षणम्। अनेनैव क्रमेण मैत्रावरुणाश्विनग्रहावपि अध्वर्युणा होत्रा च भक्षणीयौ। अत्रैव पुरोडाशादिहविःशेषभक्षणम्।

## ततश्चमसभक्षः।

तत्र होतृचमसे शुक्रामन्थिग्रहशेषसहितेऽध्वर्युप्रतिप्रस्थात्रोर्होमाभिषवनिमित्तं सकृद्भक्षणम्। होतुस्तु वषट्कारनिमित्तं भक्षणद्वयम्। एवं ब्रह्मयजमानचमसयोरपि। प्रशास्त्रादीनां पञ्चसु चमसेषु तु प्रशास्त्रादीनां वषट्कारकर्तृत्वात् अनुवषट्कारे तेषां होमाभावात् सकृदेव तेषां भक्षणम्।

भक्षप्रकारश्चेत्थम्। अध्वर्युर्होतृचमसं होतृप्रतिप्रस्थातारावुपहूय प्रथमं भक्षयेत्। ततः प्रतिप्रस्थाताऽध्वर्युहोतारावुपहूय तमेव सकृद् भक्षयेत्। ततो होताऽध्वर्युप्रतिप्रस्थातारावुपहूय तमेव द्विर्भक्षयेत्। ततो होता ब्रह्मचमसे ब्रह्माणं स्पृष्ट्वा द्विर्भक्षयेत्। ब्रह्मा च होतारमुपहूय तमेव चमसं द्विर्भक्षयेत्। एवं यजमान-प्रशास्तृ-ब्राह्मणाच्छंसि-पोतृ-नेष्टृ-अग्नीच्चमसान् तत्तच्चमसिन उपहूय भक्षयेत्। तत्र यजमानचमसे द्विर्भक्षणमितरत्र तु सकृत्सकृत्। चमसिनश्च स्वं स्वं चमसं पोत्रध्वर्यूपह्वानपूर्वकं सकृत्सकृद् भक्षयेरन्। सर्वत्र च सशेषं भक्षणम्। अन्ते च पुनर्होता अध्वर्युप्रतिप्रस्थातारावुपहूय समाख्यानिमित्तं सकृद् भक्षयेत्। अयमेव भक्षो महाभक्ष इत्युच्यते।

येषु येषु चमसेषु पुनरभ्युन्नयनं कृतं तेषु तेषु तन्निमित्तो भक्षः करणीयः। अयमेव पुनरभ्युन्नीतभक्ष इत्युच्यते। तत्राध्वर्युः पञ्चसु चमसेषु होतारं तं तं चमसिनं चोपहूय सकृद् भक्षयेत्।

ते ते चमसिनो होत्रध्वर्यू उपहूय वषट्कारद्वयनिमित्तं भक्षणद्वयं कुर्युः। अनेनैव च भक्षणेन समाख्याभक्षणस्यापि प्रसङ्गात्सिद्धिः। अत्रापि पूर्ववत्सशेष एव भक्षः। भक्षणानन्तरं चमसान् पुनः पूरयित्वा तान् हविर्धानस्य दक्षिणस्य पश्चादधो निदधति, तेषां नाराशंस इति संज्ञा। सर्वत्र भक्षणानन्तरं सर्वेऽपि भक्षयितारो मन्त्रेण गात्रालम्भनं कुर्युः। ततोऽच्छावाकचमसस्य उन्नयनहोमोपह्वानभक्षणादि सर्वं पूर्ववत्कर्तव्यम्। तत ऋतुग्रहाः—

ऋतुग्रहा नाम ऋतुदेवताका ग्रहा उच्यन्ते। अत्र वसन्तादिषडृतवः, तत्तदृत्वन्तर्गता श्चैत्रादयो मासाश्च देवताः। अतश्च यद्यपि द्वे एव पात्रे, तयोरेकमध्वर्युहस्ते अपरं च प्रतिप्रस्थातुः पाणौ, तथापि अध्वर्युणा वारषट्कं, प्रतिप्रस्थात्रा च वारषट्कमिति द्वादशवार ग्रहणात् द्वादश ग्रहा इत्यपि संव्यवहारः। तत्र त्रयोदशोऽपि ऋतुग्रहो विकल्पेन विधीयते। तत्र प्रथमौ ग्रहौ युगपद् ग्रहीतव्यौ, एवमन्तिमौ च। मध्ये येऽष्टौ ग्रहास्ते व्यत्यासेन। अर्थात् यदाऽध्वर्युर्गृहीत्वा जुहोति तदा प्रतिप्रस्थाता गृह्णीयात्। यदा च प्रतिप्रस्थाता स्वं गृहीत्वा होमायोद्युङ्क्ते तदाऽध्वर्युः समनन्तरं ग्रहं गृह्णीयादिति। अतश्च यदाऽध्वर्युः स्वं ग्रहं गृहीत्वा हविर्धानमण्डपान्निष्क्रामेत्तदा प्रतिप्रस्थाता मण्डपं प्रविशेत्। यदा च प्रतिप्रस्थाता ग्रहं गृहीत्वा मण्डपाद्बहिर्निर्गच्छति तदाऽध्वर्युर्हुत्वा पुनरन्तः प्रविशति। तयोश्च मेलनं द्वारि भवति। अत्र द्वादश ग्रहा निरवशेषं हूयन्ते, अन्त्यौ द्वौ सशेषावित्येकः पक्षः। सर्वेषां सशेषहोम इत्यपरः। तदा च पूर्वशेषे उत्तरस्य ग्रहणम्। हुतेषु तेषु पात्रयोरन्यतरस्मिन् शेषौ कृत्वा रिक्तेन पात्रेण ऐन्द्राग्नं ग्रहं प्रतिप्रस्थाता गृह्णीयात्। गृहीत्वा चासाद्य ऋतुग्रहभक्षार्थं पात्रं गृहीत्वाऽध्वर्युप्रतिप्रस्थातारौ सदस्युपविशतः। अत्र दशानां सर्वहुतत्वपक्षेऽध्वर्युप्रतिप्रस्थातृहोतारः क्रमशः स्वेतरावुपहूय सकृत्सकृद्भक्षयेयुः। अध्वर्युप्रतिप्रस्थात्रोः सशेषभक्षणम्। होतुस्तु सर्वभक्षणमिति विशेषः।

सर्वेषामहुतत्वपक्षे भक्षणप्रकारः सूत्रव्याख्यानावसरे भक्षणप्रकरणे एव मया टिप्पण्यां विशदीकृतस्तत एवावगन्तव्यो विस्तरभयान्नेह प्रपञ्चयते। ततः पूर्वगृहीतस्य ऐन्द्राग्नस्य पूर्वमासादितैर्नाराशंसचमसैः साकं भक्षान्ते कर्मणि कृते वैश्वदेवं ग्रहं गृहीत्वाऽऽसाद्याग्नीध्रेण सवनीयहविःषु निरुप्तेषु वैश्वदेवं स्तोत्रमुपाकुर्यात्। तदीययोः स्तोत्रशस्त्रयोः समाप्तयोश्चमसकम्पनेन साकं वैश्वदेवे ग्रहे हुते तेन साकं चमसानां सर्वभक्षणं कार्यम्। भक्षितेषु ग्रहेषु दशसु चमसेषु च तान् प्रक्षाल्य स्वे स्वे स्थाने सादयेत्। तत उक्थ्यं त्रेधा विभज्य गृह्णीयात्। तत्रैकः प्रशास्तुरपरो ब्राह्मणाच्छंसिनः, तृतीयोऽच्छावाकस्य। तं तमुक्थ्यं गृहीत्वाऽऽसाद्य तत्तत्संबन्धिनां शस्त्राणां काले दशापि चमसान् स्वस्वस्थानस्थितानेवोन्नयेदिति। यस्य द्विग्रहस्तस्य चमसं पूर्वमुन्नयेत्।

ततस्तेषु उक्थ्येषु चमसेषु हुतेषु तत्तद्ग्रहचमससंबन्धिनः सर्वानुपहूय तत्तन्निमित्तं भक्षणं पूर्ववत् निरवशेषं सकृत् द्विरित्यादि तत्र तत्तद्भागानुसारेण कुर्युः। एवं ग्रहेषु चमसेषु अनुष्ठितेषु प्रशास्तः प्रसुहि इत्यध्वर्युरुक्त्वा तेन च प्रसुताः सदसो मध्यान्निष्क्रामेयुः। एतावता प्रातःसवनिकं कर्म समाप्तम्।

## अथ माध्यन्दिनं सवनम्।

तत्रादौ लोकद्वारिसाम्नो गाने कृते सयजमाना ऋत्विजः प्रातःसवनवत्सर्पणं कुर्युः। ततोऽध्वर्युणा यजमानेन च सदोऽभिमर्शनादौ कृते माध्यन्दिनसवनार्थं सोममभिषुण्वन्ति प्रातःसवनवत्। अभिषुते सोमे ग्रहान् गृह्णीयादध्वर्युः। तत्र शुक्रामन्थ्याग्रयणमरुत्वतीयो-

कथ्यानां पञ्चानां प्रथमं ग्रहणम्। ततो होत्रध्वर्युब्रह्म-प्रस्तोतृसुब्रह्मण्यः प्रातःसवनवत्समन्वारब्धा माध्यन्दिनपवमानार्थं प्रसर्पेयुः। तत्र प्रातःसवनवत्सर्वं कृत्वा सर्वेषु सदस्युपविष्टेषु माध्यन्दिनपवमानमुपाकुर्यादध्वर्युः। ततो यदि सोमः सप्रवर्ग्यस्तदा दधिघर्मस्य भक्षणान्ते कर्मणि कृते सवनीयपशुपुरोडाशस्य तन्त्रं प्रक्रमेत्। तत्रापि यथोक्तेन पथा षड्भिरध्वर्युहोतृब्रह्माग्नीध्रयजमानमैत्रावरुणैः पशुपुरोडाशेडाभक्षणे कृते सवनीयहविषां निर्वपणादिकमाग्नीध्रेण प्रातःसवनवत् पयस्यावर्जं कर्तव्यम्। ततः सर्वेषां हविषां प्रातःसवनवदेव होमान्तं कर्म। ततस्तामिडां हुत्वा होतृधिष्ण्ये निधाय शुक्रामन्थिग्रहयोर्होमादिभक्षणान्तः प्रचारः सचमसः कर्तव्यः। तत्र सर्वं प्रातःसवनवदेव। भक्षणे परं नेष्टुरुत्तरमच्छावाकनिवेश इति विशेषः। सशेषं भक्षितानाप्यायितांश्च चमसान् प्रातःसवनवदेव स्वस्थाने संस्थाप्य सवनीयहवींषि तदृत्विजो भक्षयेयुः। तत ऋत्विग्भ्यो देयत्वेन सङ्कल्पकाले प्रतिज्ञाताया दक्षिणाया दानम्। तद्विभागप्रकारः पूर्वमेव निरूपितः। तदतिरिक्तं वस्त्रादिकमपि सूत्रोक्तं देयम्। ततो मरुत्वतीयग्रहं गृहीत्वा यथावद्धुत्वाऽभक्षयित्वैव प्रतिप्रस्थातुर्हस्ते पात्रं प्रदाय पुनः ऋतुपात्रेण महामरुत्वतीयं ग्रहं गृहीत्वाऽऽसाद्य पूर्वंहुतं मरुत्वतीयं भक्षयेदध्वर्युर्होता च। ततो मरुत्वतीये शस्त्रे होत्रा प्रारब्धे तस्य पुरस्तादुपविष्टोऽध्वर्युः प्रतिगृणीयात्। शस्त्रान्ते प्रतिप्रस्थाता तृतीयं कुण्ठमरुत्वतीयं ग्रहं गृहीत्वाऽध्वर्युणा सह होमस्थानं गत्वा तेन च महामरुत्वतीये हूयमाने तमनु कुण्ठमरुत्वतीयं जुहोति। ततो यथावत्सर्वेषां भक्षणम्। कुण्ठमरुत्वतीये प्रतिप्रस्थातुरेव भक्षणमनुपहवश्च। ततो नाराशंसचमसभक्षणम्। ततो माहेन्द्रं ग्रहं गृहीत्वाऽऽसाद्य पृष्ठस्तोत्रोपाकरणम्। ततः पूर्वाभिषुतं निष्काशितरसं सोमम- भिषुणुयुः। अयं च शुष्कत्वात्सोमस्य, निग्राभ्याजलासेचनाभावाच्च शुष्काभिषव इत्युच्यते। एवमभिषुत्य उद्गात्रादिभिः पृष्ठे स्तूयमाने आधवनीयकलशेऽभिषुतं शुष्कं सोममवदध्यात्। ततस्तृतीयसवनीयहविषां निर्वापोऽग्नीत्कर्तृकः। अत्र वारुण एककपालः सौम्यश्चरुश्चाधिकौ। अन्यत्सर्वं प्रातःसवनवत्। विशेषः सूत्रादवगन्तव्यः। पृष्ठस्तोत्रसमाप्तौ होत्रा तस्मिन्नेव शस्त्रे शंसिते पूर्वमासादितं माहेन्द्रं ग्रहमादाय हुत्वा तदानीं कम्पितैर्नाराशंसैश्चमसैः साकं भक्षणम्। तत्र ग्रहेऽध्वर्योः सकृत् सशेषं भक्षणम्। होतुस्तु द्विर्निःशेषम्। ततश्चमसिनां चमसभक्षणमुपहववर्जम्। सर्वभक्षाश्चमसाः कर्तव्याः।

भक्षयित्वा प्रक्षाल्य निहितेषु ग्रहेषु चमसेषु च प्रातःसवनवदुक्थ्यग्रहाणां प्रचारः। ततः प्रशास्त्रा प्रसुताः सर्वर्त्विजः सदसो बहिर्निष्क्रामेयुरिति प्रसूतान्तं माध्यन्दिनं सवनम्।

## अथ तृतीयसवनम्।

तत्र प्रथममादित्यग्रहः। तं गृहीत्वाऽऽदित्यस्थाल्या तमपिधाय होमस्थानं गत्वा तं स्थालीं च सशेषं हुत्वा प्रतिप्रस्थात्रे शेषौ दद्यात्। ततो लोकद्वारिसामगानं यजमानेन कर्तव्यम्। अत्र सर्पणं सवनादिभूतं सदोऽभिमर्शनादि च पूर्ववत्कुर्युः। तत आग्रयणस्य ग्रहणमुक्थ्यस्य च। ततः समन्वारब्धा आर्भवपवमानोपाकरणार्थं सदसो निष्क्रामेयुः। कृते आर्भवपवमाने सवनीयहविषां पश्वङ्गानां च प्रचारः। ततश्चमसानामुन्नयनादि भक्षणान्तं कर्म। भक्षिताप्यायितानां तेषां हविर्धाने निधानम्। तत ऋत्विजः पिण्डपितृयज्ञवद्यजमानपितृभ्यः पिण्डान्दद्युः। ततः सावित्रग्रहग्रहणम्। तमनासाद्य निरवशेषं होमान्ते कर्मणि कृते तेनैवाभक्षितेन पात्रेण महावैश्वदेवं ग्रहं ग्रहीत्वा वैश्वदेवशस्त्रान्ते चमसानां कम्पनेन साकं तं हुत्वाऽध्वर्युः सकृत्सशेषं होता च द्विर्भक्षयेत्। चमसिनश्चानुपहूय सर्वं भक्षयेयुः।

ततः सौम्यचरोः प्रचारः। ततः पात्नीवतस्य ग्रहस्य प्रचारः प्रतिप्रस्थातृकर्तृकः। ततो यज्ञायज्ञियस्तोत्रस्याग्निष्टोमाख्यस्यारम्भः। अग्निष्टोमस्तोत्रानन्तरमाग्निमारुते शस्त्रे होत्रा कृते ध्रुवं ग्रहं होतृचमसेऽवनीय (यदि वैश्वानरो ग्रहो गृहीतस्तदा तं यजमानचमसेऽवनीय) तं च हुत्वा भक्षणं तस्य। चमसिनां च स्वस्वचमसानां सकृत्सर्वं भक्षणम्। ततः प्रशास्त्राऽनुज्ञाता निष्क्रमणरूपं सवनान्तभूतं सर्पणं कुर्युः। ततोऽनुयाजादि। वाजिन होमो भक्षणं च तस्य। ततो द्रोणकलशे हारियोजनं ग्रहं निरवशेषं गृहीत्वा तत्र च धानाः प्रक्षिप्य तमुन्नेता स्वमूर्द्धनि कृत्वा तेनैव सर्वं जुहुयात्। अत्र भक्षणे विकल्पः, भक्षणपक्षे सर्वंहोमः। ततः पत्नीसंयाजादि सर्वं पाशुकं कर्म। एतावता तृतीयसवनं समाप्तम्।

## ततोऽवभृथः।

तत्र यावन्ति सोमलिप्तानि पात्राणि ग्रह-चमस-स्थाली-पूतभृदाधवनीयादीनि, तान्यादाय यत्रावभृथेष्टिं चिकीर्षति तज्जलं गत्वा तत्र जले सर्वाणि पात्राणि प्रक्षिपेत्। गमनप्रारम्भेऽर्द्धमार्गे जलान्तिके च सामगानम्। तत्र वरुणप्रघासावभृथवदवभृथेष्टिं कृत्वा तत्रैव सयजमाना ऋत्विजः स्नात्वा देवयजनमागत्य उदयनीयेष्टिं प्रायणीयावत्कुर्युः। ततो मित्रावरुणदेवताकं पशुयागमग्नीषोमीयपशुवत्कुर्यात्। अयं च पशुः स्त्रीगवी बन्ध्या भवति। अस्याश्च यज्ञमनु बध्यमानत्वादनूबन्ध्या इति संज्ञा। वशाभावेऽनड्वान्, तदभावे पयस्या वा कार्या। अत्र गवालम्भस्य कलौ निषिद्धत्वात् गवोक्षाणौ वर्जयित्वा पयस्यैव तत्र द्रव्यत्वेन स्वीकार्या। तत उदवसानीयेष्टिः-तत्राग्नेयः पञ्चकपालः पुरोडाशो द्रव्यम्। तत्करणाशक्तौ तत्स्थाने "उरु विष्णविति चतुर्गृहीतेनाज्येन होमः। ततः सायंकालीनाग्निहोत्रादिनित्यक्रियाकरणम्। सहस्रब्राह्मणभोजनसङ्कल्पश्चेति।

कल्पोऽयं ब्राह्मणयजमानके सोमयागे ऽग्निष्टोमसंस्थाके उक्तः। कर्मणां त्रैवर्णिकाधिकारित्वात् राजन्यवैश्यावप्यत्राधिक्रियेते इति तु निर्विवादमेव। एवं च यदि राजन्यो वैश्यो वाऽग्निष्टोममाजिहीर्षति तदा न तत्र सोमो द्रव्यं भवितुमर्हति, किन्तु न्यग्रोधवृक्षस्य अङ्कुराणि फलानि वाऽऽहृत्य तानि च सम्यक् पेषयित्वा लौकिकेन दध्ना साकं संमेल्य तदेव च द्रव्यं सोमस्थाने कृत्वा यजेरन्। सोमे क्रियमाणाः सर्वेऽपि संस्काराः क्रयादयोऽत्रापि भवन्त्येव। मन्त्राणामपि सोमपदघटितानामनूहेनैव प्रयोगः। यजमानेन चास्यैव भक्षणं कार्यम्। ऋत्विग्भिस्तु सोमस्यैव। अतः सोमेन साकं न्यग्रोधस्तिभीनामपि क्रयणादिकं विधेयम्। तस्य च फलचमसमित्यपि नाम कुर्वन्ति याज्ञिकाः। अयं सर्वतोमुखोऽपि क्रियते। तत्र चतसृष्वपि दिक्षु चतस्रो महावेद्यो, देवयजनान्यपि चत्वारि, गार्हपत्यः परमेकः, चत्वार आहवनीयाश्चत्वारो दक्षिणाग्नयः। ऋत्विजश्च प्रतिवेदि षोडश, इति चतुःषष्टिः। एको यजमानः। अत्र पूर्वदक्षिणयोर्वेद्योरग्निष्टोमसंस्था, पश्चिमोत्तरयोः षोडशिसंस्था क्रियते याज्ञिकैरिति सोमयागः।

## (द्वादशाहयज्ञः)

अथेदानीं द्वादशाहस्वरूपं (१) निरूप्यते—स उभयात्मकः, सत्ररूपोऽहीनरूप-

(१) अत्र सत्रेऽहीने वा योऽहःशब्दो रात्रिशब्दो वा श्रूयते स सर्वोऽप्यहोरात्रसमुदायवाचकः। तेन द्वादशरात्रो द्वादशाह इति समानार्थक एव।

श्चेति (१)। सत्रात्मको ब्राह्मणकर्तृक एव भवति। तत्रापि समानकल्पा आहिताग्नयोऽनुष्ठिताग्निष्टोमसंस्थाः सप्तदशप्रभृति चतुर्विंशतिपर्यन्ता अधिकारिणः। अत्र सर्वे यजमाना एव। सत्रजन्यं फलं सर्वेषामेव। अतो दक्षिणा नास्त्यत्र। सर्वेषां यजमानत्वेऽपि सप्तदशपक्षे एको गृहपतिवाच्यः, अन्ये च ब्रह्मत्वादिकं कार्यं कुर्वन्ति. गृहपतिश्च याजमानं करोति। चतुर्विंशतिपक्षे षोडशभिर्ऋत्विक्कार्यम्, अवशिष्टैर्गृहपतिकार्यं क्रियते, न सप्तदशन्यूना न चतुर्विंशतितोऽधिका ऋत्विजोऽत्र । सर्वे च सत्रोपयोगि स्वं द्रव्यं समभागमेकीकृत्य तेन यजेरन् (२)। दीक्षादिकं यजमानकार्यं सर्वेषामेव।

अहीनात्मको द्वादशाह एक-द्वि-बहुयजमानकः। तत्राग्निष्टोमवदध्वर्य्वादय ऋत्विज एव कार्यकर्तारः। अत एवैषां दक्षिणाऽप्यस्ति, सा च गवां सहस्रं किंचिदधिकम्। फलं तु यजमानानामेव।

सत्रात्मकाद् द्वादशाहाद्गवामयनादिषु सत्रेषु धर्मातिदेशः। अहीनादहीनेषु द्विरात्रादिषु एकादशरात्रपर्यन्तेषु । अहीनेषु इष्टप्रथमयज्ञानामेवाधिकार इति न नियमः। उभयत्रापि द्वादश दीक्षा, द्वादशोपसदो, द्वादश सुत्या इति षट्त्रिंशद्दिनसाध्योऽयं यज्ञः (जै ११।३)। अयं साग्निचित्यो निरग्निचित्यश्च भवति । तत्र सर्वेषामग्नीनेकीकृत्यैव कर्माण्यनुष्ठेयानि। दीक्षादिवसे सर्वे गृहपत्यादयः स्वान् स्वानग्नीनरण्योः समारोप्य देवयजनमागत्य मथित्वा पृथक् पृथक् गार्हपत्यखरे स्थापयेयुः। ततो ब्रह्मादयः स्वगार्हपत्यादेकैकमुल्मुकमादाय गृहपतेर्गार्हपत्ये क्षिपन्ति । एवं साधारणीकृताद्गार्हपत्यादाहवनीयं दक्षिणाग्निं च विहरेत्। अतो गार्हपत्याः पृथक् आहवनीयो दक्षिणाग्निश्चैकः। अत्रान्यदपि पक्षद्वयमस्ति विस्तरभया न्नात्र विव्रियते ।

साग्निचित्यानुष्ठानपक्षे प्रथममिष्टकापशुः प्राजापत्योऽनुष्ठेयः। तस्य च दीक्षादिन एवानुष्ठानं स्वकाले वा। स्वयमेव प्रवृत्तत्वादत्र नर्त्विग्वरणम्। अत्र दीक्षायां विशेषः—सर्वेषां यजमानत्वात् सर्वैरपि दीक्षितव्यम्। तत्र ज्योतिष्टोमे अध्वर्योरेव दीक्षाकर्तृत्वात् अत्र स तत्पुरुषाश्च दीक्षाकर्तारो भवेयुः। तत्रायं क्रमः—अध्वर्युः प्रथमतो गृहपतिं दीक्षयित्वा ब्रह्मोद्गातृहोतॄन् दीक्षयेत्। ततोऽध्वर्योरनन्तरः प्रतिप्रस्थाता अध्वर्युब्राह्मणाच्छंसि-प्रस्तोतृ-मैत्रावरुणान्, ततो नेष्टा प्रतिप्रस्थात्रग्नीत्प्रतिहर्त्रच्छावाकान्, तत उन्नेता नेष्टृ-पोतृ-सुब्रह्मण्य-ग्रावस्तुतः क्रमेण दीक्षयेयुः। उन्नेतारमन्यः कश्चित्।

यो यो यं यं दीक्षयति स स तं तमनु तत्पत्नीरपि दीक्षयेत्। अन्यत्सर्वं ज्योतिष्टोमवत्। क्वचित् क्वचिदल्पो विशेषः। साग्निचित्ये तु उखासंभरणमिष्टकोपधानादिकं च सर्वं चयनवत्।

सवनीयपशुषु विशेषः—प्रत्यहमैन्द्राग्नः पशुः, स्तोमायनं वा, एकादशिना वा प्रत्यहम्, अथवा एकस्या एकादशिन्याः प्रत्यहमेकैकपश्वनुष्ठानेन एकादशसु दिनेष्वनुष्ठानं, द्वादशे पुनराग्नेयस्य। द्वादशदीक्षानन्तरमुपसद्दिवसेषु यस्मिन् कस्मिंश्चिद्दिवसे सोमक्रयः।

---

(१) ब्राह्मणकर्तृकोऽदक्षिण उभयतोऽतिरात्रसंस्थाकः सोमयागविशेषः सत्रम्। त्रैवर्णिकाधिकारिकः सदक्षिणोऽन्तेऽतिरात्रसंस्थाक एकद्वित्रि चतुराद्यनेकयजमानकर्तृकः सोमयागोऽहीनः।

(२) अत्र पात्राणि साधारणान्यन्यान्येवोत्पादनीयानि "समांशं द्रव्यमेकत्र कृत्वाऽऽत्मीयांशदानतः। पात्राण्यन्यानि पूर्वेभ्यः साधारणतया भजेत्" इति वचनात्।

सुत्यायां विशेषः। तत्राहःक्लृप्तिरुच्यते—प्रायणीयं प्रथममहः (१) (प्रथमत आरभ्यते इति प्रायणीयम्) ततः पृष्ठ्यः षडहः, ततस्त्रयश्छन्दोमाः, ततोऽविवाक्यम् (२), तत उदयनीयोऽतिरात्रश्चेति। तत्र प्रथमदिनमतिरात्रसंस्थम्, द्वितीयप्रभृति सप्तमदिनपर्यन्ताः षडहाः पार्ष्ठिकाः। रथन्तर-बृहद्-वैरूप-वैराज-शाक्वर-रैवताख्यानि सामानि षट्स्वप्यहःसु क्रमेण पृष्ठाख्यस्तोत्रसाधनीभूतानि इति पृष्ठ्यः षडह इति व्यवह्रियते।

एकैकमप्यहः पत्नीसंयाजान्तमवतिष्ठतेऽन्त्यं दिनं वर्जयित्वा। सर्वान्तेऽवभृथः। षडहेषु द्वितीय-तृतीयेऽहनी उक्थ्यसंस्थाके, चतुर्थमहः षोडशिसंस्थम्, पञ्चम-षष्ठे उक्थ्यसंस्थे, ततस्त्रिषु दिनेषु छन्दोमा उक्थ्यसंस्था एव। प्रथमदिने चतुर्विंशस्तोमः, द्वितीये चतुश्चत्वारिंशस्तोमः, तृतीयेऽष्टाचत्वारिंशस्तोमः।

चतुर्विंशतिः संख्या गायत्र्यक्षराणाम्, चतुश्चत्वारिंशत्संख्या त्रिष्टुबक्षराणाम्, अष्टाचत्वारिंशत्संख्या जगत्यक्षराणाम् इति त्रिभिर्गायत्रीत्रिष्टुब्जगतीरूपैश्छन्दोभिर्मीयन्ते इति इमानि त्रीण्यहानि छन्दोमा इत्युच्यन्ते। तत एकादशमहोऽत्यग्निष्टोमसंस्थम्, द्वादशमह उदयनीयमतिरात्रसंस्थम्।

अत्र द्वादशाहेऽतिग्राह्याणां त्रयाणां, षोडशिनः, अंश्वदाभ्ययोश्च ग्रहणमधिकम्। अयं च द्वादशाहो व्यूढ-समूढात्मना द्विविधः। व्यूहनं चाग्रतायाम् (जै० १०।५।३३-२४)। तच्च यथा—ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, दशमं चाहः, अथ नवानामह्नां मध्ये ऐन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रमथाग्रयणाग्रम्, अथैन्द्रवायवाग्रमथ शुक्राग्रमथाग्रयणाग्रम्, अथैन्द्रवायवाग्रमथ शुक्राग्रमथाग्रयणाग्रमिति (आप० श्रौ० २१।२४।२-३)। अयमेव ऐन्द्रवायवादीनां क्रमशोऽत्र समूहनात्सैषा त्र्यनीका साम्येनोढा यत्र स समूढ इत्युच्यते। वैषम्योनोढा यत्र स व्यूढः। व्यूढप्रकारस्तु "ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, अथेतरेषां दशानामन्हामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथ द्वे आग्रयणाग्रे, अथैन्द्रवायवाग्रम्, अथ द्वे शुक्राग्रे, अथाग्रयणाग्रम्, अथ द्वे ऐन्द्रवायवाग्रे" (आप०श्रौ० २१।२४।५) इति। सहस्रब्राह्मणभोजनमत्र। इति द्वादशाहः।

## (गवामयनसत्रम्)

अथ गवामयनम्। गोभिरनुष्ठितत्वाद्गवामयनमिति व्युत्पत्तिस्तदुपष्टम्भिकाऽऽख्यायिका (तै० सं० ७।४।८, ऐ० ब्रा० ४।३।३, तां० ब्रा० ४।११) चोपलभ्यते। अस्य माघकृष्णाष्टम्यां माघशुक्लैकादश्यां फाल्गुन्यां पौर्णमास्यां चैत्र्यां वा प्रारम्भः। प्रारम्भदिनमारभ्य द्वादश दीक्षा द्वादशोपसदः। एवं चतुर्विंशतिरहानि भवन्ति। आरम्भदिने एवेष्टकापशुरुखा संभरणं च। ततोऽन्तिमोपसद्दिनेऽग्नीषोमीयं पशुमनुष्ठाय तद्दिने एव सुत्यारम्भः कार्यः। सुत्याश्चात्र एकषष्ट्यधिकशतत्रयात्मिकाः (तां० ब्रा० १२।३।३।११)। महाव्रतेऽतिग्राह्यसंज्ञकानां त्रयाणां ग्रहाणां ग्रहणम्। अत्र मार्जालीयस्य दक्षिणतो बहिर्वेदि परिवृतमध्ये अनियतजाती स्त्रीपुरुषौ मैथुनं कुर्वीयाताम्। तिस्रोऽनूबन्ध्याः। सपत्नीकानां यजमानानां सशिखं

---

(१) प्रकृष्टमयनमारम्भो यत्रेति व्युत्पत्त्या प्रायणीयशब्दो द्वादशाहस्य प्रथमदिनवाचकः।

(२) अविवाक्यमिति न गुणविधिः, अतो न नामधेयमेतत्, संव्यवहाराभावात्, अतोऽत्र न विवेक्तव्यं किंचित्साधु असाधु कृतमिति। इदं कृतमिदं न कृतमित्येवं गुणविधिरिति देवयाज्ञिकाः।

वपनं वचनात् । ततोऽग्नीन् विभज्य सर्वे दीक्षिताः पृथक् पृथक् पृष्ठशमनीयसंज्ञकमग्निष्टोमं कुर्युः (१)। शेषं द्वादशाहवत्।

अत्र अशीत्युत्तरं सुत्याः पूर्वं पक्षः। एवमुत्तरं पक्षः (ऐ० ब्रा० ११२१३११–२)। द्वयोः पक्षसोर्मध्ये विषुवान् नाम अहः। एवं संवत्सरसाध्यत्वात् संवत्सररात्रमित्यप्यस्य नाम। एवं च दीक्षोपसद्दिनानां चतुर्विंशत्या सह पञ्चाशीत्यधिकशतत्रयदिनानुष्ठेयमिदं सत्रम्। तत्र प्रतिदिनं सवनत्रयाधिकं ग्रहचमसादिकं स्तोत्रशस्त्रादिकं च यथाप्रकृति भवन्त्येव। विशेषः परमत्र निरूप्यते। तत्राह्नां क्लृप्तिरेवम्। अग्नीषोमीयपश्वनुष्ठानानन्तरं प्रायणीयं प्रथममहोऽतिरात्रसंस्थम्। (तां० ब्रा० ४।१।४)। ततश्चतुर्विंशमग्निष्टोमसंस्थाकमुक्थ्यसंस्थाकं वा द्वितीयमहः। तस्मिन्नहनि यावन्ति स्तोत्राणि तत्र सर्वत्रापि चतुर्विंशस्तोमकता इति तदहश्चतुर्विंशमित्युच्यते ( ऐ० ब्रा० ४।२।६ )। इमे द्वे अहनी नात्र प्रथममासमध्ये गण्येते, किन्तु षष्ठमासस्य मध्ये। अनुष्ठानक्रमः परमयमेव। ततश्चत्वारोऽभिप्लवाः षडहाः ( २ )। ततस्त्रिवृदादिस्तोमषट्कसाध्य एकः पृष्ठ्यः षडहः ( ३ )। एवं पञ्चभिः षडहैस्त्रिंशद्दिनात्मक एकः सावनो मासो भवति। एवमेव तेषामेव षडहानामावृत्त्या द्वितीयस्तृतीयश्चतुर्थः पञ्चमश्च मासः सम्पादनीयः। षष्ठे मासे प्रथमतस्त्रयोऽभिप्लवाः षडहाः, एकः पृष्ठ्यः षडहः। मिलित्वा चतुर्विंशतिरहानि। ततोऽभिजित्संज्ञकोऽग्निष्टोमसंस्थः। ततस्त्रयः स्वरसामसंज्ञकानि त्रीण्यहानि, (४) तानि अग्निष्टोमसंस्थान्युक्थ्यसंस्थानि वा, इत्यष्टाविंशतिरहानि। आद्याभ्यामहोभ्यां सह त्रिंशद्दिनात्मक एको मासः। एते षण्मासाः पूर्वं पक्षः। ततो विषुवान् नाम अग्निष्टोमसंस्थाकमहः। इदं च गवामयनमध्यम्। अस्य चान्हो न मासमध्ये संवत्सरमध्ये वा गणना। तदनन्तरमुत्तरस्य पक्षस आरम्भः। तत्र येन क्रमेण पूर्वस्मिन्पक्षसि अन्हां क्लृप्तिरासीत् तद्वैपरीत्येन उत्तरस्मिन् पक्षसि अहःक्लृप्तिः। तद्यथा—प्रथमं तावत् प्रतिलोमास्त्रयः स्वरसामानः, ततो विश्वजिन्नामकोऽग्निष्टोमः, ततः प्रतिलोमतस्त्रयस्त्रिंशदारम्भणः पृष्ठ्यः षडहः ( ५ ), ततस्त्रयोऽभिप्लवाः षडहाः, मिलित्वा अष्टाविंशतिरहानि। सत्रस्यान्तिमयोर्द्वयोर्दिनयोरनुष्ठेयौ महाव्रतोदयनीयौ अस्मिन् मासे परिगण्येते। सर्वे मिलित्वा एको मासः संवृत्तः। द्वितीये मासे प्रतिलोमतः प्रथमं त्रयस्त्रिंशदारम्भण एकः पृष्ठ्यः षडहः। ततश्चत्वारोऽभिप्लवाः षडहाः। मिलित्वा एको द्वितीयो मासः। एवमेव तृतीयश्चतुर्थः पञ्चमश्च मासो भवति। षष्ठे मासि प्रथमतस्त्रयोऽभिप्लवाः षडहाः। ततो गोष्टोमसंज्ञकमुक्थ्यसंस्थाकमहः। तत आयुष्टोमसंज्ञकमुक्थ्यसंस्थाकमहः। ततो द्वादशाहिकः ( १२।३।१,२१-२२ )। प्रथमोत्तमदिनवर्जितो दशरात्र इति मिलित्वा षष्ठो मासः। एतदनन्तरं महाव्रतमहः ( ६ ) उदयनीय-

---

(१) रथन्तरम्, बृहत्, वैरूपम्, वैराजम्, शाक्वरम् रैवतम्, इति षट् पृष्ठानि। तेषां सत्रनियुक्तानामुपजातश्रमाणां शमनं करोतीति पृष्ठशमनीय इति देवयाज्ञिकः।

( २ ) प्रथमोऽग्निष्टोमः, ततश्चत्वार उक्थ्याः, पुनः षष्ठोऽग्निष्टोमः, एवं विधस्याह्नां षट्कस्य अभिप्लव इति संज्ञा तै० सं० सा० ७।४।११।१७, ऐ० ब्रा० ४।३।१ )।

( ३ ) त्रिवृत्-पञ्चदश-सप्तदशै-कविंश-त्रिणव-त्रयस्त्रिंशाः षट स्तोमाः प्रथमदिवसप्रभृति षट्सु दिनेषु क्रमेण कार्याः।

( ४ ) "यज्ञा यज्ञा" ( ४।८।१ ) इत्यस्यां योनावुत्पन्नानि चत्वारि सामानि स्वरसंज्ञकानि येषु ते स्वरसामानः।

( ५ ) अत्रोक्तानां षण्णां स्तोमानां वैपरीत्येन त्रयस्त्रिंशप्रभृत्यनुष्ठानम्।

(६) महाव्रतं यज्ञस्यान्तिममहः। महानवर्तिष्ट अनेन कर्मणा इति महाव्रतम् ( तै० ब्रा० सा० १।२।६ )।

संज्ञकं सत्रस्यान्तिमाहश्च भवतः ( ऐ० ब्रा० ४।२।८, आप० श्रौ० २१।१५ कं० १-२, तां० ब्रा० ४।१।१ भाष्ये ) अनयोरह्नोः प्रथमे मासि न गणना कृतेति गवामयनसत्रम् ।

## ( वाजपेययज्ञः )

अथ वाजपेयस्वरूपमुच्यते—स च ब्राह्मण—क्षत्रियमात्रकर्तृको न वैश्याधिकारिकः। एतदतिरिक्ते सप्तसंस्थान्तर्गते वाजपेये तु वैश्योऽप्यधिकारी । कालश्चास्य शरदृतुः। स चायमुभयतो बृहस्पतिसवः। एवं च आश्विन्यां वाजपेयसुत्यानुष्ठानं, ततः पूर्वस्यां भाद्रपद्यां कार्तिक्यां च बृहस्पतिसवद्वयं कार्यम्। अयमेकः पक्षः। बृहस्पतिसवस्थानेऽग्निष्टोमसंस्थो ज्योतिष्टोमो भवतीति द्वितीयः पक्षः। अथवा वाजपेयस्य द्वादशसु शुक्लपक्षेषु द्वादशानां यागानामनुष्ठानम्, तत्रायुग्मेषु षट्सु शुक्लपक्षेषु अग्निष्टोमसंस्थो ज्योतिष्टोमः। युग्मेषु तु षट्सु क्रमशः पृष्ठ्यषडहसंबन्धीन्यहानि क्रमात् रथन्तर-बृहत्-वैरूप-वैराज-शाक्वर-रैवताख्यसामषट्कसाध्यानि स्तोत्राणि एकैकस्मिन्नहनि। स्तोमाश्च त्रिवृत्-पञ्चदश-सप्तदशै-कविंश-त्रिणव-त्रयस्त्रिंशरूपाः क्रमात् एकैकस्मिन्दिवसे। वाजपेयानन्तरं च युग्मेषु शुक्लपक्षेषु ज्योतिष्टोम एव। अयुग्मेषु षट्सु पूर्वानुष्ठानवैपरीत्येन पृष्ठ्यस्तोत्राणामनुष्ठानमिति तृतीयः पक्षः। अथवा वाजपेयस्य पुरस्तात् नवसु शुक्लपक्षेषु पौषीप्रभृतिषु भाद्रपद्यन्तेषु राजसूयान्तर्गतानां पवित्रा-ऽभिषेचनीय-दशपेय-केशवपनीय-व्युष्टिद्विरात्र-क्षत्रधृति-त्रिष्टोम-ज्योतिष्टोमानां क्रमशोऽनुष्ठानम् । उपरि च तेषामेव प्रातिलोम्येनानुष्ठानमिति तुरीयः पक्षः। एतेषां पश्वादिकं ग्रहग्रहणादिकं सर्वमपि स्वस्वप्रकरणाधीतं द्रष्टव्यम्।

कार्तिक्यामाश्वयुज्यां वाऽमायां राजसूयस्य सुत्या कार्या। कार्तिकामायां सुत्यापक्षे आश्विनशुक्लदशम्यां मातृपूजादि। तदारभ्य सप्त दीक्षाः। कार्तिककृष्णद्वादश्यां प्रायणीयेष्टिः, तस्मिन्नेव दिने सोमस्य क्रयः, सुराद्रव्यस्यापि । सुरासाधनीभूतानि द्रव्याणि तत्साधन प्रकारश्च सौत्रामण्यामुक्तः। ततस्त्रिषु दिनेषु सायं प्रातः प्रवर्ग्योपसदौ। चतुर्दश्यामग्नीषोमीयः पशुः, सप्तदशारत्निरेको यूपः। तस्य सप्तदशभिर्वासोभिर्वेष्टनम्। पूर्णिमायां पात्रयोजने षोडशिपात्रमधिकम्। सुराग्रहार्थानि सप्तदश पात्राणि। द्वाविंशतिः सवनीयाः पशवः। तत्र प्रथम आग्नेयः, द्वितीय ऐन्द्राग्नः, तृतीय ऐन्द्रः, चतुर्थी मेषी सारस्वती, पञ्चमी वशा गौः, तत्स्थानेऽजा। ततः सप्तदशसंख्याकाः प्राजापत्याः पशवः श्यामाः शृङ्गहीनाः प्रजननसमर्थाः। आग्नेयादीनां पञ्चानां पशूनां वपायाः पृथक् पृथग्घोमो देवताभेदात्। प्राजापत्यानां तु सप्तदशानामपि सकृदेव वपाहोमः। सवनीयहविर्निर्वापकाले धानादिभिः पञ्चभिर्हविर्भिः सह सप्तदशशरावपरिमितस्य बार्हस्पत्यचरोरपि निर्वापः कर्तव्यः। दक्षिणादानान्ते मरुत्वतीयहोमानन्तरं माहेन्द्रग्रहात्पूर्वमाग्नीध्रीयसमीपेऽध्वर्यू रथस्योपरि द्वितीयं रथं स्थापयित्वा मन्त्रेण तमवतार्य तं धुरि गृहीत्वा वेदिसमीपमानीय तत्र चतुरोऽश्वान्नियोज्य, एवं षोडशसु रथेषु चतुरश्चतुरोऽश्वान्नियोजयेत्। तत आग्नीध्रस्य पश्चात् स्तंभद्वयं पूर्वापरं निखाय तयोरुपरि सप्तदशशङ्कुसंयुक्तं काष्ठमेकं प्रागग्रं निधाय तेषु शङ्कुषु सप्तदश दुन्दुभीन् क्रमेणासजेत्। ततः सर्वान्दण्डेन वादयेत्। तत एकः क्षत्रियश्चात्वालोत्करयोरन्तरालादारभ्योदीच्यां दिशि सप्तदशसंख्यानिषून् निरस्येत्। तत्र प्रथममेकमिषुं बलात्प्रास्य यावति दूरे स पतितस्तत्र गत्वा तत्र स्थित्वा द्वितीयमिषुं प्रास्येत्। एवं रीत्या सप्तदशानामिषूणां प्रासनम्। सप्तदशस्येषोः पतनस्थानेऽवधिभूतामौदुम्बरीं शाखां निखनेत्। ततो यजमानो रथमारोहेत्। अन्ये च स्वं स्वं रथमारोहेयुः। ततः पूर्वनिखाता-

मौदुम्बरीं शाखामुद्दिश्य सर्वे स्वान् स्वान् रथान् प्रधावयेयुः। इदमेवाजिधावनमित्युच्यते। तेषां गमनसमये ब्रह्मा रथचक्रोपरि उपविश्य साम गायन्नास्ते। तत्र यथा यजमानोऽग्रतो गच्छेत्तथा गन्तव्यम्। ततः सर्वे तामौदुम्बरीं प्रदक्षिणीकृत्य देवयजनं प्रत्यागच्छेयुः। आगतेषु सर्वेषु ब्रह्मा रथचक्रादवरोहेत्। ततो दुन्दुभीनवतारयेत्। ततो यजमानः स्वीयं रथमध्वर्यवे दत्वाऽवशिष्टेषु यो यो यस्य रथस्तं तं तस्मै दद्यात्।

ततो मधुग्रह—सौरग्रहयोः प्रचारः। ततो यजमानः पत्नी च पूर्वं निष्पादितायां यूपोपरि शायितायामार्द्रकाष्ठनिर्मितैकविंशतिसंख्याकसोपानयुक्तायां निश्रेण्यामारोहतः। ततोऽधःस्थिता यजमानस्य पुत्रपौत्रादयः सप्तदशसंख्याकैरश्वत्थपर्णबद्धक्षारमृत्तिकापुटैर्यजमानं विध्येयुः। इदमेव स्वर्गारोहणमुच्यते।

तत एकमन्त्रं वर्जयित्वा ग्राम्यानामारण्यानां सर्वेषामन्नानां होमः सप्तभिर्मन्त्रैः सप्तवारम्। होमावशिष्टेनान्नेनासन्द्यामुपविष्टस्य यजमानस्याभिषेकः। तत आज्याहुतयः। ततो वशाप्रचारादिः। अत्रोदयनीयास्थाने त्रैधातवीया भवति। इति वाजपेयः।

## ( राजसूययज्ञः )

अथ राजसूयः—अत्राभिषिक्तस्य क्षत्रियमात्रस्याधिकारो नेतरयोर्ब्राह्मणवैश्ययोः। अत्रानुमत्याद्या इष्टयः, मल्हाद्याः पशुयागाः, पवित्राद्याः सोमयागाश्च भवन्ति। ते च समप्रधाना एव, न परस्परमङ्गाङ्गिभावः। फाल्गुनशुक्लप्रतिपदि तस्यारम्भः। तत्र प्रथमं पवित्राख्यः सोमयागः। तत्र चतस्रो दीक्षास्तिस्र उपसद एका सुत्या। अष्टदिनसाध्यायोऽयं यागः फाल्गुनशुक्लाष्टम्यां परिसमाप्यते। अस्य राजकर्तृकत्वात्तस्य सोमभक्षणनिषेधात् न्यग्रोधस्य सफलाङ्कुरानादाय तस्य सोमेन साकं क्रयणादीन् संस्काराननुष्ठाय दध्ना सह संमेल्य चमसोन्नयनकाले यजमानचमसे तमेव रसं गृह्णीयात्। होमकाले च तं हुत्वा तमेव भक्षयेत्। इतरेषु चमसेषु सोमरसग्रहणं तस्यैव होमो भक्षणं च। अतोऽत्र फलचमस ( न्यग्रोधस्तिभि ) निर्मितो रसो यजमानस्यैव, नेतरेषाम्। अवभृथान्ते तिस्रोऽनूबन्ध्याः। उदवसानीयास्थाने त्रैधातवीया।

ततो दशम्यामनुमतीष्टिः, तत्राष्टाकपालः पुरोडाशो द्रव्यम्। एकादश्यामाग्नावैष्णवो द्वादश कपालः, द्वादश्यामग्नीषोमीय एकादशकपालः। त्रयोदश्यामैन्द्राग्नो द्वादशकपालः। चतुर्दश्यां यवाग्रयणं व्रीह्याग्रयणं चेति पञ्चेष्टयः। ततः फाल्गुन्यां पूर्णिमायां राजसूयान्तर्गतचातुर्मास्यप्रयोगः। तत्र प्रथमं पूर्णिमायां वैश्वदेवपर्व। ततश्चैत्रकृष्णप्रतिपत्प्रभृति चैत्रामान्तं प्रत्यहं पौर्णमासेष्टिः प्रकृतिवत्। ततश्चैत्रशुक्लप्रतिपत्प्रभृति चैत्रशुक्लपौर्णमासीपर्यन्तं प्रत्यहं दर्शेष्टिः प्रकृतिवत् पिण्डपितृयज्ञं वर्जयित्वा। प्रतिपदि तु राजसूयेष्ट्यनन्तरं नित्यदर्शपूर्णमासेष्टिः, नित्यः पिण्डपितृयज्ञश्च। ततो वैशाख-ज्येष्ठा-ऽऽषाढ-मासेषु एवमेव कृष्णपक्षेषु पौर्णमासेष्टिः, शुक्लपक्षेषु दर्शेष्टिः। तत्र प्रतिपत्सु नित्येष्टयोऽपि कर्तव्याः। प्रतिवर्षं चातुर्मास्यानुतिष्ठतो यजमानस्य तत्तत्पर्वकाले तानि तानि नित्यानि पर्वाणि पूर्वमनुष्ठायैव अनन्तरं राजसूयिकानि पर्वाण्यनुष्ठेयानि।

आषाढ्यां पूर्णिमायां वरुणप्रघासाः। ततः प्रभृति कार्त्तिकीपर्यन्तं प्रतिदिनं पूर्ववदेव दर्शपूर्णमासेष्टीनामनुष्ठानम्। ततः कार्त्तिक्यां साकमेधाः। तेषां द्व्यहकालत्वात् चतुर्दश्यां राजसूयिकं दर्शं समाप्य अनीकवत्याद्यनुष्ठानम्। पूर्णिमायां त्रैयम्बकान्तं कृत्वा दर्शेष्ट्यारम्भः। ततो मार्गशीर्षकृष्णप्रतिपत्प्रभृति फाल्गुनामान्तं दर्शपौर्णमासेष्टीनामनुष्ठानं प्रतिदिनं पूर्ववत्।

ततः फाल्गुनकृष्णामायामेव शुनासीरीयं राजसूयिकम्। ततस्तस्मिन्नेव दिने पञ्चवातीयसंज्ञको होमः, इन्द्रतुरीयाख्या इष्टिश्च। तत्र—आग्नेयोऽष्टाकपालः, वारुणो यवमयश्चरुः, रौद्रो गावेधुकश्चरुः, वहिन्या दधि ऐन्द्रम् इति चत्वारि हवींषि। या गौः शकटेनोह्यते सा वहिनीत्युच्यते। ततस्तस्मिन्नेव दिनेऽपामार्गहोमः।

ततः फालगुनशुक्लप्रतिपदि त्रिषंयुक्ताख्येषु त्रिषु कर्मसु प्रथमेष्टिस्त्रिषंयुक्ता। तत्र वैष्णवस्त्रिकपालः प्रथमं हविः, ऐन्द्रावैष्णवश्चरुर्द्वितीयं हविः, वैष्णवश्चरुस्तृतीयम्।

ततश्चतुर्थ्यां द्विहविष्केष्टिः—तत्र वैश्वानरो द्वादशकपालः, वारुणो यावश्चरुः। ततस्तस्मिन्नेव दिने द्वादश रत्नहविःसंज्ञका इष्टीः प्रारभेत्। चतुर्थीप्रभृति फाल्गुनशुक्लपूर्णिमान्तमेकैकस्मिन्दिवसे राजसंबन्धिन एकैकस्य पुरुषस्य गृहे एकैकेष्टिरनुष्ठया। तत्र सेनान्यो गृहे प्रथमा। तत्राग्नयेऽनीकतेऽष्टाकपालः पुरोडाशः। पुरोहितगृहे द्वितीया, तत्र बार्हस्पत्यश्चरुः। यजमानगृहे तृतीया, तत्र ऐन्द्रश्चरुः। महिष्या गृहे चतुर्थी, तत्रादित्यै चरुः। अश्वसारथेर्गृहे पञ्चमी, तत्र वारुणो यावश्चरुः। ग्रामनेतुर्गृहे षष्ठी, तत्र मारुतः सप्तकपालः। मन्त्रिणो दूतस्य वा गृहे सप्तमी, तत्र सावित्रोऽष्टाकपालः। रथयोजयितुर्गृहे नवमी, तत्राश्विनो द्विकपालः। परिवेषणकर्तुर्गृहे दशमी, तत्र पौष्णश्चरुः। द्यूतपतेर्हालिकस्य वा गृहादानीतैरारण्यगोधूमै रौद्रश्चरुर्यजमानगृहे, इयमेकादशी। पतिपुत्ररहितायाः कस्याश्चित् स्त्रिया गृहे द्वादशी, तत्र निर्ऋतिदेवताको नखनिर्भिन्नः कृष्णव्रीहिचरुः।

ततस्तस्मिन्नेवाहनि सोमारौद्रश्चरुर्मैत्राबार्हस्पत्यश्चरुश्च। चैत्रकृष्णपक्षे किमपि कर्म न भवति। चैत्रशुक्लप्रतिपदि अभिषेचनीय-दशपेयाख्ययोः सोमयागयोर्युगपदारम्भसंकल्पः। (अत्र सोमयागा अष्टौ-पवित्रः, अभिषेचनीयः, दशपेयः, केशवपनीयः, व्युष्टिद्विरात्रः, क्षत्रस्य धृतिः, त्रिष्टोमः, अग्निष्टोम इति। तत्रारम्भे पवित्राख्यसोमयागः कृतः, अत्र च द्वौ, अवशिष्टा अग्रे भविष्यन्ति)

अत्र सहैव सोमक्रयणम्, सोमेन सह न्यग्रोधस्तिभिक्रयणं च। देवयजनद्वयम्। पञ्चदनसाध्योऽयमभिषेचनीयः प्रकृतिवत्। तत्र विशेषः—अग्नीषोमीयपशुसन्निधौ देवसूहवींषि। तानि-द्वौ पुरोडाशौ, षट् चरव इत्यष्टौ। तत्र विरूढव्रीहिसम्पाद्यः सवितृसत्यप्रसवदेवताकोऽष्टाकपालः, आशुव्रीहि (पक्षत्रयपक्वव्रीहि) सम्पाद्योऽग्नये गृहपतयेऽष्टाकपालः, श्यामाकश्चरुः सोमाय वनस्पतये, बृहस्पतये वाचे नैवारश्चरुः, इन्द्राय ज्येष्ठाय रक्तशालिचरुः, रुद्राय पशुपतये गावेधुकश्चरुः, मित्राय सत्याय स्वयं जातव्रीहिचरुः, वरुणाय धर्मपतये यावश्चरुरिति। ततो राज्ञोऽभिषेकाय सप्तदशप्रकाराणामुदकानामानयनम्। ततः सपरिकरो राजाभिषेकः। ततः शौनःशेपकथाश्रवणम्। ततो वाजपेयवद्रथावरोहणादि। तत औदुम्बर्यामासन्द्यामक्षदेवनार्थमुपवेशिताय यजमानायाक्षदानम्। ततो देवनम्। देवन कर्तारश्च यजमानः, (राजा) राजभ्राता, सूतः, ग्रामणीः, तद्भ्राता चेति पञ्च। ततः संसृपां हवींषि। तानि च षष्ठीमारभ्य षट्सु दिनेषु षट्, द्वादश्यामवशिष्टानि चत्वारि। ततो द्वादश्यामेव दशपेयस्य द्वितीयदिनादारभ्य चैत्र्यां सुत्या (प्रथमदिनकर्म दीक्षादिकमभिषेचनीये कृतम्)। तत्र विशेषः—

यजमानचमसे न्यग्रोधस्तिभिरसः, इतरत्र तु सोमः। एकैकं चमसं दश दश ब्राह्मणा भक्षयेयुः। तत्रैकैक ऋत्विक्, इतरे नवाप्रकृताः। यजमानचमसेऽपि ब्राह्मणा एव भक्षकर्तारः। ततो वैशाखे किमपि कर्म न भवति। वैशाखशुक्लपूर्णिमायां पञ्चबिलसंज्ञश्चरुः। तत्र पञ्च हवींषि। ततो द्वादश प्रयुग्हवींषि इष्टयः। तानि मासान्तरालानीत्येकः पक्षः। अथवा प्रथमे-

ष्टिमनुष्ठाय ततः शम्यां यावत्स्वबलं प्रास्येत्, यत्र सा पतति तस्मिन्नेव स्थाने तदहरेव द्वितीया। एवमेव द्वादशापि इति द्वितीयः पक्षः। अथवा वैशाखपूर्णिमायामेव समानतन्त्रेण प्रातः षट्, अपराह्णे च षडिष्टय इति तृतीयः पक्षः। पक्षद्वयेऽप्येकदिनसाध्यानीमानि। ततो ज्येष्ठामायां पशुबन्धद्वयम्। ततो ज्येष्ठशुक्लैकादशीमारभ्य पञ्चसु दिनेषु अतिरात्र संस्थस्य केशवपनीयाख्यसोमस्यानुष्ठानं प्रकृतिवत्। तत आषाढकृष्णप्रतिपदि व्युष्टिद्विरात्रस्य संकल्पः, तस्य चाहीनत्वात् षोडश दीक्षाः, द्वादशोपसदः, द्वे सुत्ये इति मासेन समाप्योऽयं क्रतुः। ततः श्रावणकृष्णप्रतिपदि क्षत्रस्य धृतिरारभ्यते सोऽपि मासापवर्गः पूर्ववत्। एवं भाद्रपदि त्रिष्टोमो मासापवर्गः पूर्ववत्। आश्विनकृष्णप्रतिपदि अग्निष्टोमो मासापवर्गः पूर्ववत्। कार्तिक्यां राजसूयाङ्गभूता चरकसौत्रामणी त्रिपशुका। एवं राजसूयः परिसमाप्यते। अत्र राजसूये यजमानपत्नी चण्डातकं वासः परिधत्ते। "अर्द्धोरुकं विलासिन्या वासश्चण्डातकं विदुः" ( अम० २।६।११६ ) इति। अत्र मिलित्वा ४४६ इष्टयः, द्वौ पशुयागौ, अष्टौ सोमयागाः, सप्त दर्विहोमाः एते मिलित्वा राजसूयशब्दवाच्या भवन्ति। एते चात्र प्रधानयागाः। एतदतिरिक्तास्तत्तत्सोमाङ्गभूता इष्टयः पशवः सौत्रामणी चानुष्ठेयाः। कालश्चास्य एकविंशतिर्मासाः। प्रयुग्घविषां मासानुष्ठानपक्षे त्रयस्त्रिंशन्मासा भवन्तीति राजसूयः।

---

## अथ सोमयागाङ्गभूतमग्निचयनं निरूप्यते।

चयनं नाम इष्टकाभिः सम्पादित स्थलविशेषः। केवलस्य सोमयागस्य या उत्तरवेदिः तां वर्धयित्वा तत्रैव इष्टकाभिश्चयनं सम्पाद्य तदुपरि आहवनीयं निक्षिप्य तत्रैव होमः क्रियते। अग्न्याधारत्वादस्य स्थण्डिलस्य अग्निचयनमिति संज्ञा। केचिदग्निपदेनापि केवलेन व्यवहरन्ति। यद्यपीदं सोमयागाङ्गं तथापि ज्योतिष्टोमस्य प्रथमप्रयोगे न भवति। द्वितीयादिषु प्रयोगेषु तु भवत्येव। सर्वत्रापि विकल्पेनैव प्राप्नोति न नित्यतया। अस्य च सोमयागत्वाद्वसन्तः कालः। तत्र प्रथमदिने इष्टकानिर्माणाङ्गभूतः पशुरनुष्ठेयः। तत्र पुरुषाश्वगोऽव्यजाः पञ्च पशव इति प्राथमिकः पक्षः। केवलः प्राजापत्यः पशुरनुष्ठेय इति द्वितीयः, वायव्यो वेति तृतीयः। तत्र सर्वत्रापि यागोपयुक्तावशिष्टं पशुशरीरं स्थावरे जले प्रक्षिप्य तत एवोखार्थं मिष्टकार्थं च मृदं जलानि च गृह्णीयात्। यस्मिन्पर्वणि इष्टकापशुः क्रियते तदनन्तराष्टम्यामुखासंभरणं कर्तव्यम्। अग्रे च संवत्सरादिकालेषु यजमानस्याग्निधारणं वक्ष्यते, तदाधारभूतः पात्रविशेष उखेत्युच्यते। तदर्थं च पात्रनिर्माणयोग्यं मृत्पिण्डं गृहीत्वा तत्र वल्मीकमृदम्, अजलोमानि, लोहाश्मचूर्णानि, शर्कराः पर्णकषायपक्वजलेन संयुत्य तत्र सिकतामुपकीर्य ऊर्ध्वतस्तिर्यक् च प्रादेशमात्रीमेकपशुपक्षे, ऊर्ध्वतः प्रादेशमात्रीं, तिर्यक्तः प्रादेशमात्रीं पञ्चपशुपक्षे चतुरस्रामुखां निर्माय तस्या बहिःप्रदेशे उपरितने वितृतीयभागे समन्ततो वर्तिमेकां तिर्यक् कृत्वा प्रतिदिशमेकैकां द्वे द्वे वा वर्तिके ऊर्ध्वे पूर्वतनवर्तिकासंस्पृष्टे कृत्वा एकैकस्या वर्तिकाया अग्रे स्तनाकारं च चिन्हं कृत्वा तां चाग्नौ दीपयेत्। तथा साकमषाढाख्यामिष्टकां द्वादशाङ्गुलसमविस्तारां स्थानत्रयेऽङ्गुल्याकारचिन्हयुक्तामेकाम्, विश्वज्योतिर्नाम्नीश्च तिस्र इष्टकाः पचेदित्युखासंभरणम्।

ततश्चयनार्थानामिष्टकानां करणम्। ताश्च चतुर्दशविधा भवन्ति—पद्या, अर्द्धपद्या, पादभागा, पादोनपद्या, जङ्घामात्री, अध्यर्द्धा, अर्द्धोत्सेधा पद्या, अर्द्धोत्सेधा अर्द्धपद्या, पादभागा, त्रिग्राहिणी, अर्धपादभागा, बृहती, वक्रा, अर्द्धबृहती, चतुर्भागा, इति। तत्र द्वादशाङ्गु-

लसमचतुरस्राः पद्याः, द्वादशाङ्गुलदीर्घाः षडङ्गुलविस्तृता अर्द्धपद्याः, द्वादशाङ्गुलसमचतुरस्राः एकेन पादेन (कोणेन) न्यूनाः=त्रुटिताः पादोनपद्याः, अष्टादशाङ्गुलसमचतुरस्रा जङ्घामात्र्यः, अष्टादशाङ्गुलदीर्घा द्वादशाङ्गुलविस्तृता अध्यर्द्धाः, द्वादशाङ्गुलसमचतुरस्रा-त्र्यङ्गुलोच्चा द्व्यङ्गुलोच्चा वा अर्द्धोत्सेधापद्याः, द्वादशाङ्गुलदीर्घाः षडङ्गुलविस्तृतास्त्र्यङ्गुलोच्चा द्व्यङ्गुलोच्चा वा अर्द्धोत्सेधा अर्द्धपद्याः, षडङ्गुलसमचतुरस्राः पादभागाः, चतुर्विंशत्यङ्गुलदीर्घा अष्टादशाङ्गुलविस्तारास्त्रिग्राहिण्यः, षडङ्गुलदीर्घास्त्र्यङ्गुलविस्तृता अर्द्धपादभागाः, चतुर्विंशत्यङ्गुलसमचतुरस्रा बृहत्यः, चतुर्विंशत्यङ्गुलदीर्घा द्वादशाङ्गुलविस्तृता अर्द्धबृहत्यः, त्र्यङ्गुलसमचतुरस्राश्चतुर्भागा इति। उच्चता तु षडङ्गुलमिता सर्वासां चतुरङ्गुलमिता वा। अर्धोत्सेधापद्याऽर्द्धपद्ययोस्तु द्व्यङ्गुलं त्र्यङ्गुलं वोच्चत्वम्।

वक्राणां प्रमाणसाधनोपायस्त्वेवम्। पूर्वमर्द्धव्यामेन व्याममात्रप्रमाणं वृत्तं विलिख्य तन्मध्ये चतुर्विंशत्यङ्गुलं समचतुरस्रं साधयित्वा तस्य कोणेषु कोणादारभ्य वृत्तं यावद्रेखाः कुर्यात्, एवं चतुरस्रस्य दिश आरभ्य वृत्तं यावत् रेखा दद्यात्। एवं कृते अष्टौ वक्रा विभागा जायन्ते। एतादृशं क्षेत्रं विलोक्य वक्रदारुघटनेन वक्रेष्टकानां प्रमाणं निष्पादनीयम्।

सर्वासु इष्टकासु अङ्गुलिकाष्ठादिना त्रीणि त्रीणि चिन्हानि कार्याणि। तानि च चिन्हानि वक्राणि, ऋजूनि, तिरश्चालिखितानि च तासु तास्विष्टकासु कार्याणि। तत्र वक्राणि चिन्हानि ◡◡◡ एतादृशानि भवन्ति। ऋजूनि च ।।। एतादृशानि, तिरश्चालिखितानि च--- एतादृशानि कार्याणि।

अथेष्टकानां सङ्ख्या—तत्र एकादश सहस्राणि एकशतं च सप्तत्यधिकं समग्रा इष्टकाः ११९७०। तत्र दश सहस्राणि अष्टौ शतानि च लोकम्पृणाः १०८००। त्रीणि शतानि सप्तत्यधिकानि यजुष्मत्यः ३७०। (शतपथे तु दर्भस्तंब-दूर्वेष्टका-स्वयमातृण्णा-कूर्मोलूखलाद्याः पञ्चविंशतिसङ्ख्या इष्टका आसां मध्येऽधिकाः पठित्वा त्रीणि शतानि पञ्चनवतिर्यजुष्मत्य उक्ताः। एताः पञ्चविंशतिरिष्टकास्तिस्रो नैर्ऋत्यश्चोक्तसङ्ख्यातोऽधिकाः)। उक्तेष्टकानां मध्ये नव सहस्राणि द्वे शते द्वाषष्ट्यधिके ९२६२ पादभागाः। तत्र वक्रालिखिताः पादभागाः १७३२, ऋज्वालिखिताः पादभागाः ७५३०। अर्द्धपादभागाः षट् शतान्यष्टसप्तत्यधिकानि ६७८। तत्र—वक्रालिखिता अर्द्धपादभागाः २६२, ऋज्वालिखिता अर्द्धपादभागाः ४१६, चतुर्भागा द्वादश। तत्र वक्रालिखिताश्चत्वारः, ऋज्वालिखिता अष्टौ। पद्याः सप्तशतानि सप्तसप्तत्यधिकानि ७७३। तत्र—पूर्णोत्सेधाः पद्याः ७५९; अर्द्धोत्सेधाः पद्याः १८। अर्द्धपद्या अष्टाशीतिशतम्। तत्रार्द्धोत्सेधा द्वादश। तत्र चतस्रस्तिरश्चालिखिताः, अष्टौ ऋज्वालिखिताः। तिरश्चालिखिताः सप्तविंशतिः २७। तासां मध्ये चतस्रोऽर्द्धोत्सेधाः, त्रयोविंशतिः पूर्णोत्सेधाः। शेषा ऋज्वालिखिताः, वक्रालिखिते अर्धपद्ये पूर्णोत्सेधे द्वे इति। जङ्घामात्र्यः ५०, त्रिग्राहिण्यः ७०, वक्राः ८, अध्यर्द्धाः १११, बृहत्यः ६ वा ७, अर्द्धबृहत्यः ४, पादोने २ इति।

इयमिष्टकानां सङ्ख्या उपधानकालीना। निष्पादनकाले सर्वा इष्टका उक्तसङ्ख्यातोऽधिकाः कारयितव्याः, यथा भेदनादिनाऽल्पा न भवेयुः।

अत्र द्वादशविधा इष्टकाः पञ्चसु चितिषूपधीयन्ते, चतुर्भागा-वक्राणां तु होतृधिष्ण्य-गार्हपत्ययोः क्रमेणोपधानम्। एतासु काश्चन मन्त्रैरुपधीयन्ते काश्चन तूष्णीम्। या नाम मन्त्रैरुपधेयास्ता यजुष्मत्य इत्युच्यन्ते। याश्च तूष्णीं ता लोकम्पृणा इत्युच्यन्ते। तत्र इष्टका निर्माणकाले येन प्रमाणेन निर्मीयन्ते शुष्काः सत्यस्ततो द्वात्रिंशद्भागेन ह्रसन्ते। अतो यत्र यत्प्रमाणमुक्तं तत्र द्वात्रिंशतितमं भागं वर्द्धयित्वा इष्टका निर्मातव्याः। तत्र

प्रथमायां चितौ एतावत्य इष्टकाः २००६, तत्रापि यजुष्मत्यः ७७, शेषा लोकम्पृणा १९२९ एतत्सङ्ख्याकाः । द्वितीयायां चितौ समग्रा इष्टकाः १९९१, तत्र यजुष्मत्यः ४१, लोकम्पृणाः शेषाः १९५० । तृतीयायां चितौ इष्टकाः २०२०, तत्र यजुष्मत्यः ७० शेषा लोकम्पृणाः १९५० । चतुर्थ्यां चितौ इष्टकाः १९९७, तत्र यजुष्मत्यः ४७, शेषा लोकम्पृणाः १३५० । पञ्चम्यां चिताविष्टकाः ३०५३, तत्र यजुष्मत्यः १३४, शेषा लोकम्पृणा २९२२ एतत्परिमाणा इति । मिलित्वा यजुष्मत्यः ३६०, लोकम्पृणाः १०७०९, उभयं मिलित्वा ११९७० ।

ततो यजमानः सौवर्णं रुक्मं वर्तुलाकारं कण्ठे धारयेत् । ततः शिक्यस्थमुख्यमग्निं कण्ठे धृत्वाऽवतार्याऽऽसन्द्यां निदध्यात् । एवं संवत्सरपर्यन्तमुखारणं, विष्णुक्रमाः, वनीवाहनं, वात्सप्रोपस्थानं च कार्याः । अत्र षण्मासदीक्षापक्षः एकदीक्षापक्षश्चास्ति । एकदीक्षापक्षे तस्यामेव रात्रौ विष्णुक्रमादयो वेदिमानमग्निक्षेत्रमानं च कार्याणि । वेदिश्च चयनयागचित्यनुसारं वर्धनीया, सा च चत्वारिंशत्पदा भवति ( का० श्रौ० १७।३।१४ ) तत्राग्निक्षेत्रं निर्मातव्यम् । तच्च सार्द्धसप्तपुरुषात्मम् । तत्र मध्ये द्विपुरुषायामं द्विपुरुषविस्तारं स्थण्डिलं निर्माय तत्संलग्नमेव दक्षिण-पश्चिमोत्तरभागेषु त्रीण्यपि एकैकपुरुषविस्तारं, दक्षिणोत्तरयोः पार्श्वयोः सारत्निकैकैकपुरुषायामं, पश्चिमे च सवितस्तिकपुरुषायामं स्थण्डिलत्रयं निर्मातव्यम् । स्थण्डिलमिदं प्राङ्मुखं निर्मातव्यम् । तस्य दक्षिणोत्तरयोर्ये स्थण्डिले, तयोः क्रमाद्दक्षिणोत्तरौ पक्षौ इति संज्ञा । पश्चिमस्य च पुच्छमिति व्यवहारः । मध्यमस्य चात्मेति । इत्थं स्थानं प्रकल्प्य तच्च रज्वा वेष्टयित्वा तस्य समन्तात् खातं कृत्वा तत्र एकषष्ट्यधिकशतद्वयसंख्याकान्, चतुर्णवत्यधिकशतत्रयसंख्याकान्वा पाषाणान् इष्टकान्वा निरन्तरं परस्परसंलग्नात् निखनेत् । ततः स्थण्डिलस्य वायव्यकोणे त्रयः पाषाणा जङ्घा-नाभि-मुखमात्राः क्रमशो निखातव्याः । अस्यैव चयनस्य पञ्चनवतिवारपर्यन्तमावृत्याऽनुष्ठानमपि सूत्रकारेणोक्तम् । तत्र प्रथमावृत्तावग्निक्षेत्रप्रमाणमुक्तम् । द्वितीयाद्यावृत्तौ तु प्रतिचयनमेकैकपुरुषप्रमाणं वर्द्धयित्वाऽग्निक्षेत्रं मापयेत्पञ्चनवतितम चयनपर्यन्तम् । तदनुसारेण इष्टका अपि परिमाणतो वर्द्धनीया, न सङ्ख्यातः । सर्वत्र प्रथमायां चितौ यावत्य इष्टकास्तावतीभिरेव पञ्चनवतितमाऽपि चितिः सम्पादनीया, परिमाणं परं वर्द्धते इत्यवगन्तव्यम् । अत्र चावृत्तौ न क्रमनियमः, स्वेच्छया यां कांचिच्चितिं कर्तुं शक्नोति ।

तत आदौ गार्हपत्यस्याग्नेः स्थण्डिलं निर्मातव्यम् । तच्चैकचितिकं त्रिचितिकं वा । विस्तारस्तु चतुररत्निमात्रो मण्डलाकारश्च । एकैकस्यामपि चितौ एकविंशतिरिष्टका भवन्ति । तत्रार्द्धबृहत्यश्चतस्रः, पद्याः सप्त, द्वे अर्द्धपद्ये, अष्टौ वक्रा इति । आसां प्रमाणं पूर्वमेवोक्तम् । उपधानप्रकारः पद्धतितोऽवगन्तव्यः, पुस्तकस्यास्यान्ते संयोजितायाश्चितिप्रतिकृतेरप्यवगन्तुं शक्यते ।

स्थण्डिलस्यास्य परितः परिश्रितोऽप्येकविंशतिसंख्याकास्त्र्यङ्गुलविस्तृताः पाषाणा निखातव्याश्चितेरवष्टम्भनार्थम् । एवं निर्मितं गार्हपत्यस्थण्डिलं चात्वालानीतया मृदा विलिप्य तदुपरि उख्यमग्निं स्थापयेत् ।

ततो नैर्ऋत्यां दिशि दूरं गत्वा कृष्णवर्णास्तुषपक्का निर्ऋतिसंज्ञकास्तिस्र इष्टकाः श्वभ्रादौ निधाय तत्रैव शिक्यं रुक्मं पाशमासन्द्यादिकं च निरस्यागच्छेत् ।

ततः शालायामागत्य प्रायणीयेष्टिं हविष्कृदाह्वानान्तां कृत्वा षड्गवं द्वादशगवं चतुर्विंशतिगवं वा हलं सज्जीकृत्य तेनाग्निक्षेत्रभूमिं कृषेत् । ( अत्र हलकर्षणे दोषाभावः ) ततः प्रायणीयाशेषं समाप्यातिथ्येष्टिं चानुष्ठाय ततः प्रवर्ग्योपसदौ प्रकृतिवत्कुर्यात् ।

ततोऽग्निक्षेत्रेऽश्वमारोह्य परिहरेत्। ततोऽग्निक्षेत्रमध्ये कुशस्तम्बं निधाय तत्र कमलपत्रं निधाय तदुपरि उख्यधारणकाले यजमानधृतं रुक्ममुपधाय तदुपरि सुवर्णनिर्मितां पुरुषाकारां प्रतिमां प्राक्शिरसं निधाय तदुपरि स्वयमातृण्णामुपदध्यात्।

स्वयमातृण्णा नाम पाककाले स्वतः सम्पन्नछिद्रयुक्ता इष्टकोच्यते। तस्याः पूर्वभागे दूर्वामयीमिष्टकामुपदध्यात्। एवं येन क्रमेण इष्टकानां यजुष्मतीनामुपधानं सूत्रे विहितं तेनैव क्रमेण ता उपधाय ततोऽवशिष्टे स्थले लोकम्पृणा उपदध्यात्। यजुष्मतीनां क्रमः, तासां नामानि सङ्ख्याश्च चयनपद्धतिकायां प्रदर्शितास्तत एवावगन्तव्याः।

एवमात्मसंज्ञकं चितेर्मध्यभागमुपधाय ततो दक्षिणं पक्षं तत उत्तरपक्षं ततः पुच्छं चोपदध्यात्। एवं रीत्या तस्मिन् दिने प्रथमां द्वितीयां चितिं चोपधाय तत आपराह्णिक्यौ प्रवर्ग्योपसदौ कुर्यात्। तदनन्तरदिने प्रातः प्रवर्ग्योपसदनन्तरं तिस्रोऽपि चितय उपधातव्याः। तृतीयदिवसे पुरीषनिवापादिः। अयं चैकाहपक्षे। षडुपसत्के क्रतौ तु प्रतिदिनमेकैका चितिः, षष्ठे दिवसे पुरीषनिवापः। एवं निर्मितं स्थण्डिलं हिरण्यशकलसहस्रेण प्रोक्षेत्।

ततः शतरुद्रियहोमः। ततः पूर्वं ये पाषाणा स्थण्डिलस्य वायव्यकोणे परिश्रित्संज्ञका निखातास्तानेवाहवनीयस्थाने कृत्वा तथैवाग्न्यन्वाधानादिकमनुष्ठाय जुहूस्थानेऽर्कपत्रेण "नमस्ते रुद्र मन्यव इति" ( १६।१–२६ ) षड्विंशत्या मन्त्रैरजाक्षीरेण, जर्तिलमिश्रैरारण्यगोधूमनिर्मितैः सक्तुभिर्वा तिष्ठन्नुदङ्मुखो जुहुयात्। अयं होमः सन्ततधारया कार्यो, नात्र धाराविच्छेदः कार्यः। आदितस्तृतीयानुवाकपर्यन्तं जानुमात्र्यां परिश्रिति जुहुयात् तदन्ते स्वाहाकार एकः। ततश्चतुर्थ—पञ्चमानुवाकाभ्यां ( १६।२७–३६ ) नाभिमात्र्यां परिश्रिति जुहुयात् तदन्ते स्वाहाकारः। ततो मुखमात्र्यां परिश्रिति नमोऽस्तु ( १६।३७–६३ ) इत्यतः प्राक् जुहुयात् तदन्ते स्वाहाकारः। ततो नमोऽस्तु इति मन्त्रत्रयेण ( १६।६४–६६ ) मुख-नाभि-जानुमात्रीषु परिश्रित्सु पूर्वकृतविपर्यासेन होमः। ततः सायं प्रवर्ग्योपसदौ कुर्यात्। ततस्तृतीयदिने प्रातः सायं प्रवर्ग्योपसदौ कुर्यात्। ततस्तृतीयदिने प्रातः सायं प्रवर्ग्योपसदौ कृत्वा प्रवर्ग्यमुत्साद्याहवनीयतोऽग्निं प्रणीय स्थण्डिलदेशं गत्वा स्थण्डिलदेशे स्थापितायाः स्वयमातृण्णायाः समीपे प्रतिप्रस्थात्राऽग्नौ धार्यमाणे शुक्लवत्साया गोः पयसा स्वयमातृण्णाया उपरि हुत्वा ततः संभारान् न्युप्य तत्राग्निं स्थापयेत्। ततो वैश्वानरं द्वादशकपालं, मारुतं सप्तकपालं च हविर्निरुप्यानुतिष्ठेत्। तत औदुंबर्या स्रुचि आज्यं गृहीत्वा वाजश्च म इत्यष्टभिरनुवाकैः सन्ततमाज्यधारया जुहुयात्। पूर्ववदत्रापि धाराविच्छेदो न कार्यः। ततो राजसूयिकान् षट् पार्थहोमान्, वाजप्रसवीयांश्च वाजपेयिकान् होमान्, आग्निकांश्च वाजप्रसवीयान् जुहुयात्। ततो यजमानस्याभिषेकः। पुनः पार्थहोमः, राष्ट्रभृद्धोमः, वातहोमः, नवाहुतयः। ततो होत्रीयादीनां सप्तानां चयनम्। तत्राग्नीध्रीय होत्रीय–नेष्ट्रीया-ऽच्छावाकीयेषु अष्टावष्टाविष्टकाः, होत्रीये एकविंशतिः, ब्राह्मणाच्छंसीये एकादश, मार्जालीये षट्, इतीष्टकानां सङ्ख्या। अत्र सर्वेषु धिष्ण्येषु गार्हपत्यादिस्थण्डिलवत् न परिश्रितां खननं, किन्तु निधानमेव परितः। परिश्रित्संख्या च तत्तदिष्टकासंख्यामनुसृत्यैव। ततोऽग्नीषोमीयः पशुः। तत्र राजसूयान्तर्गताऽभिषेचनीयाख्यसोमयागस्य धर्माः। पशुपुरोडाशानन्तरमष्टानां देवसूहविषां निर्वापः। ततः सुत्या। सा च प्रकृतिवत्। अवभृथान्ते उदयनीयेष्टिः। ततो मैत्रावरुणी वशाऽनूबन्ध्या। तत्र विशेषः— पशुपुरोडाशनिर्वापानन्तरं पञ्चानां देविकाहविषां निर्वापः प्रचारश्चेति चयनयज्ञः।

## ( अश्वमेधयज्ञः )

अथाश्वमेधाख्यः सोमयागः । सोमयागत्वेऽप्यस्याश्वस्य सवनीयपशुत्वादश्वमेध-इति संज्ञा । अत्रापि अभिषिक्तः सार्वभौमो राजाऽधिकारी । फाल्गुनशुक्लस्याष्टम्यां नवम्यां वा ग्रीष्मे वा तस्यामस्यारम्भः ।

आरम्भदिने वरणानन्तरं प्रथमं ब्रह्मौदनपाकः । पाकस्य च चतुर्भ्यो महर्त्विग्भ्यो दानम्, ते तं प्राश्नीयुः । तेभ्यः प्रत्येकमेकैकं गवां सहस्रं चत्वारि शतमानानि च दद्यात् ।

ततो यजमानस्य चतस्रः पत्न्यो मुक्तामणिविभूषाद्यैरलङ्कृतकण्ठ्यः प्रत्येकमनुचरीणां शतेनानुसृता राज्ञः पुरत आच्छेयुः—तत्र प्रथमा महिषी, द्वितीया परिणीता स्त्री वल्लभा, तृतीयाऽवल्लभा, चतुर्थी दूतपुत्री परिणीता । अनुचर्यश्च महिष्या राजपुत्र्यः, द्वितीयायाः क्षत्रियजातिमात्रपुत्र्यः, तृतीयस्या अश्वपोषकग्रामनेत्रोर्दुहितरः, चतुर्थ्याः क्षत्तृपुत्र्यः ।

आगताभिस्ताभिः सह यजमानः सायमग्निहोत्रे हुते रात्रौ उदक्शिरः कृत्वा शयानाया वल्लभायाः पत्न्या ऊर्वोरन्तराले उदक्शिराः शेते । इतराश्च पत्न्यः परितः शेरते । ब्रह्मचर्यं नियमेन रक्षेत् । उदितेऽग्निहोत्रं हुत्वा पूर्णाहुतिः । ततः पथिकृदिष्टिः । तत्राग्नये पथिकृतेऽष्टाकपालः ।

ततोऽश्वरशनां दर्भमयीं द्वादशारत्निं त्रयोदशारत्निं वा घृतेनाभ्यज्याश्वबन्धनार्थं ब्रह्माणं पृच्छेत्, तेनानुज्ञातोऽश्वं बध्नाति ।

अश्वलक्षणम्—अश्वश्च पूर्वभागे कृष्णः, अपरभागे शुक्लः, ललाटे शकटाकारपुण्ड्रत्रयोपेतोऽनन्यसदृशो गोसहस्रमूल्यलभ्यो नीलवर्णलाञ्छनयुक्तो भवेत् । तमश्वं तडागादिस्थावरजलमध्यं प्रापय्य तेन प्रोक्षेत् । ततः शूद्राद्वैश्यायां जातेन पुंसा चतुरक्षं श्वानं सिध्रकमुसलेन ( अक्ष्णोरुपरि अक्षिसदृशचिन्हयुक्तः श्वा चतुरक्ष इत्युच्यते) मारयित्वा वेतसकटेनाश्वस्याधस्ताज्जलमध्ये प्लावयेत्, ततः प्रतिनिवृत्य होमः ।

ततस्त्रयो भिन्नतन्त्रा द्वादशकपालाः पुरोडाशाः । एता एव तिस्रः सावित्र्य इष्टय उच्यन्ते । तासामिष्टीनां प्रयाजेष्वनुष्ठीयमानेषु ब्राह्मणः कश्चिदृत्विगितरो यजमानस्य दानयागादिकं स्वयंकृताभिस्तिसृभिर्गाथाभिर्वीणायां गायेत् ।

ततोऽध्वर्युयजमानौ गतयौवनैरश्वैः शतेन साकं यज्ञियमश्वमीशान्यामुत्सृजेताम् । भ्रमणार्थं प्रस्थितस्याश्वस्य पृष्ठतः चतुःशतसंख्याकान् युद्धार्थं धनुर्बाणादियुक्तान् चतुःशतान् रक्षिणः प्रेषयेत् । तत्र शतं राजपुत्राः, शतं क्षत्रियजातिमात्राः, शतं सूतपुत्राः, शतं क्षत्तारः । तांश्चैवं प्रेषयेत्—अश्वस्य वडवातः स्नानीयादुदकाच्च वारणं कर्तव्यम् । यश्च ब्राह्मण आश्वमेधिकं कर्म न जानाति ततो वृत्तिरुपादेया । रथकारगृहे रात्रौ वसतिर्विधेया । एवंविधान् प्रैषान् प्राप्य संवत्सरं यावदप्रमत्ता अश्वं भ्रामयित्वाऽऽगच्छेयुर्न ततः प्राक् । ततः पारिप्लवं शंसति । ततोऽश्वप्रक्रमान् धृतीश्चोद्दिश्य प्रक्रमहोमो धृतिहोमश्च कार्यः । धृतिहोमसमये राजन्यो यजमानविजयादीनि स्वनिर्मिताभिस्तिसृभिर्गाथाभिर्वीणायां गायेत् । एतावत्पर्यन्तं प्रथमदिनकृत्यम् ।

एवं संवत्सरपर्यन्तं वावातया सह शयनं, सावित्र्यस्तिस्र इष्टयः, गानं, पारिप्लवाख्यानं, प्रक्रमहोमा धृतिहोमाश्च भवन्ति । अत्र अर्धमास-मास-त्रैमास-षण्मासपक्षा अपि विकल्प्यन्ते ।

ततश्चैत्र्यां पूर्णिमायामुखासंभरणमिष्टकापशुश्च। तस्मिन्नेव दिने दीक्षणीयेष्टिमारभ्य षट्सु दिनेषु प्रतिदिनमेकैकया इष्ट्या वैशाखकृष्णषष्ठ्यां सप्तमीं दीक्षणीयां समापयेत्। ततस्तस्मिन्नेव दिने दीक्षामारभ्य द्वादशसु दिनेषु वैशाखशुक्लतृतीयापर्यन्तं द्वादश सुत्याः समापनीयाः। ततस्तृतीयायामेव सोमक्रयः। ततः प्रभृति चतुर्दशीपर्यन्तं द्वादशोपसदः। चतुर्दश्यामेवाग्नीषोमीयाः पशवः। अत्रैकविंशतिर्यूपा विभिन्नजातीया एकविंशत्यरत्नयः। एको राज्जुदालो, द्वौ पैतुदारवौ, षड् बैल्वाः, षट् खादिराः, षट् पालाशाः।

आहवनीयस्य पुरतो राज्जुदालः, तमभितो द्वौ। एवमवशिष्टानां बैल्व-खादिर-पालाशानां क्रमेण व्यत्यासेन निखननम्। पशवोऽप्यग्नीषोमीया एकविंशतिर्भवन्ति।

नियोजनं तु पशूनां दक्षिणत आरभ्योदक्संस्थम्। पशूनामनेकत्वेऽपि पशुपुरोडाश एक एव। चयनसंवलितत्वात्तदनुसारेण प्रक्रमं वर्धयित्वा वेदिरपि वर्धनीया इष्टकाश्च।

अनन्तरस्मिन्नहनि प्रथमा सुत्या, सा चाग्निष्टोमसंस्थाका। तत्र सवनीयाः पशवो द्वे एकादशिन्यौ।

तेषां यूपेषु नियोजनक्रमः—मध्ये राज्जुदालौ द्वावाग्नेयौ नियुज्य शेषाणां क्रमशो दक्षिणोत्तरतो व्यत्यासेन नियोजनं। दक्षिणोत्तरयोर्द्वावित्यादिरूपेण।

तत्र दक्षिणायां विशेषः। पूर्वं विजयसमये यद्धनमवाप्तं पूर्वदिक्तः, तत् त्रेधा विभज्य भागमेकं होत्रे दद्यात्। दक्षिणदिग्लब्धस्य तृतीयांशं ब्रह्मणे, प्रतीच्यामुपलब्धस्य तृतीयांशमध्वर्यवे, उत्तरदिग्लब्धस्य तृतीयांशमुद्गात्रे, अवशिष्टमंशद्वयमनन्तरयोः सुत्यादिवसयोरेवमेव दद्यात्, अन्यत्सर्वं प्रकृतिवत्।

ततोऽस्तमिते, तस्यां रात्रौ आज्य-सक्तु-धाना-लाजानामेकैकं द्रव्यमादाय क्रमशः प्रतिप्रहरं प्राणाय स्वाहेत्यादिभिर्द्वादशभिर्मन्त्रैर्द्वादशस्वनुवाकेषु पठितैर्यावद्रात्रि जुहुयात् (यजु० सं० २२।२३-३४)।

ततो द्वितीयमहरुक्थ्यसंस्थाकम्। तत्र सौवर्ण-राजतनिर्मितयोः पात्रयोर्महिमग्रहयोर्ग्रहणम्। बहिष्पवमानार्थं प्रसर्पणमश्वमन्वारभ्य कर्तव्यम्। उपाकरणकाले एकादशिन्योरुपाकरणानन्तरमश्वस्योपाकरणम्। तत एकविंशतियूपेषु द्वावेकादशिन्यौ पूर्ववन्नियुज्य अश्व-तूपर गोमृगान् अग्निष्ठे राज्जुदाले नियुञ्ज्यात्। तूपरः शृङ्गहीनश्छागः, गोमृगो गवयः। ततोऽश्वस्य ललाटादिषु तत्तदङ्गेषु द्वादश पशवो नियोजनीयाः ते पर्यङ्ग्या इत्युच्यन्ते।

पशुनियोजनार्थं च अश्वस्य शरीरं सर्वमपि रज्जुभिर्वेष्टयित्वा तत्तत्स्थानगतायां रज्जौ पशूनुपायेन बध्नीयात्। तस्यायं क्रमः—आग्नेयं कृष्णग्रीवमजं ललाटे, हन्वोरधस्तात्सारस्वतीं मेषीम्, आश्विनौ बाह्वोः, सौमापौष्णं श्यामं नाभ्याम्, पार्श्वद्वये सौर्यं श्वेतं, यमदेवत्यं कृष्णम्, पश्चात्पादयोस्त्वष्टृदेवत्यौ लोमशावजौ, वायव्यै-न्द्र-वैष्णवान् पुच्छे श्वेतवेहद्वामनानिति। इमे पशवोऽश्व-तूपर-गोमृगैः सहिताः पञ्चदश सम्पन्नाः, पूर्वाभ्यामाग्नेयाभ्यां सह सप्तदश मध्यमे यूपे। इतरेषु विंशतियूपेषु रोहितादयः पञ्चदश पञ्चदश पशवो नियोजनीयाः। पूर्वमेकादशिन्या एकैकः पशुर्बद्धः, मिलित्वा एकैकस्मिन् यूपे षोडश षोडश पशवः सम्पन्नाः, सर्वे मिलित्वा ३३७। एते ग्राम्याः पशवः (य० सं० २४।१-२०)।

अथारण्याः पशवो यूपान्तरालेषु नियोजनीयाः। ते च यत्र यत्र पञ्जर-नीड-जलादिषु धारयितुं शक्यन्ते तथा तत्र तत्रोपायेन स्थापयित्वा धारणीयाः। न त्वेतेषां यूपेषु नियोजनमसंभवात्।

यूपे बद्धान् पशून् संज्ञप्य तेषां वपादीन्यङ्गानि हूयन्ते। कपिञ्जलादीनामारण्यानां तु उपालंभनक्रमेण तत्तद्देवतोद्देशेनोत्सर्गं कृत्वा तथैव तेषां त्यागः पञ्जरादिना। ततोऽश्वे संज्ञप्ते मृतस्य सवनीयाश्वस्य त्रिः परिक्रमणम्। ततो राज्ञो महिषी मृतस्याश्वस्य समीपे शेते। तत्रैवाध्वर्यु-कुमार्योर्वादप्रतिवादः। ततो ब्रह्म-महिष्योः संवादः। ततो होतृ-परिवृक्तयोः, ततः प्रतिहार-पालागल्योः क्रमेण संवादः। ततो महिष्यां पत्नीभिरुत्थापितायां महिषीप्रभृतयः पत्न्योऽश्वशरीरे एकाधिकशताः सीस-ताम्र-सुवर्णादिनिर्मिताः सूचीः प्रवेशयन्ति।

अश्वस्य वपाभावात् तत्स्थाने तस्य मेद उद्धृत्य कार्ष्मर्यमयाभ्यां शूलाभ्यां श्रपयित्वा होमः।

ततो ब्रह्मोद्यवदनम्। तत्राध्वर्यु-ब्रह्मो-द्गातृ-प्रतिप्रस्थातृ-यजमानाः प्रश्न-प्रतिवचन-कर्तारः। तत एकादशिनीनां वपाप्रचारः। ततो वनस्पतियाजानन्तरमश्वशूलस्य पशुशेषं सर्वमवदाय होमः। तत आज्येन शादादिदेवताभ्यो दन्ताद्यश्वाङ्गेभ्यश्च होमः। ततः पत्नीसंयाजान्तं कृत्वा तावदेव तदहः संस्थापयेत्।

प्रातर्द्वितीयायामतिरात्रसंस्थाकं तृतीयमहः। अत्र सर्वं षोडशिग्रहणादिकमपि कार्यमतिरात्रसंस्थाकत्वात्।

ततोऽवभृथः। एकविंशतिरनूबन्ध्याः पशवः। तत्र सप्त वारुण्यः, सप्त वैश्वदेव्यः, सप्त बार्हस्पत्याः। एकैकस्मिन्यूपे एकैकस्य पशोर्नियोजनम्। त्रय एव पशुपुरोडाशाः। उदवसानीयान्ते पालागल्यनुचरीणामध्वर्यवे दानम्, महिष्यनुचरीणां ब्रह्मणे, वावातानुचरीणामुद्गात्रे, परिवृक्तानुचरीणां होत्रे। ततः प्रभृति द्वादशदिनपर्यन्तं प्रत्यहमेकैक आग्नेयः पुरोडाशो भवति ब्रह्मौदनं वा। ततो यावद्वत्सरं प्रत्यृतु षट् षट् पशवस्तन्त्रेणालम्भनीयाः। तत्र वसन्ते षडाग्नेयाः, ग्रीष्म ऐन्द्राः, वर्षासु पार्जन्याः, शरदि मैत्रावरुणाः, हेमन्ते ऐन्द्रावैष्णवाः, शिशिरे ऐन्द्राबार्हस्पत्याः। अन्यत्सर्वं निरूढवदित्यश्वमेधः।

## ( पुरुषमेधयागः )

अथ पुरुषमेधो ब्राह्मण-राजन्यकर्तृकस्त्रयोविंशतिदीक्षो द्वादशोपसत्कः पञ्चसुत्याकश्चत्वारिंशद्दिनसाध्यः। चैत्रशुक्लदशम्यामस्यारम्भः। अत्रैकादश यूपाः। अग्नीषोमीयाः पशव एकादश। सर्वेषामेक एव पुरोडाशः।

सुत्यासु प्रथम-पञ्चमेऽहनी अग्निष्टोमसंस्थे, द्वितीयचतुर्थे उक्थ्यसंस्थे, तृतीयमतिरात्रसंस्थम्। सुत्यासु प्रतिदिनमैकादशिनाः पशवः। ब्राह्मणकर्तृके सर्वमेधे सर्वस्वं दक्षिणा, क्षत्रियकर्तृके तु अश्वमेधवद्दक्षिणा। तृतीयेऽतिरात्रसंस्थेऽहनि प्रतियूपमैकैकमेकादशिनं नियुज्य मध्यमे यूपे ब्राह्मणादीनष्टचत्वारिंशत्सङ्ख्याकान् संहितोकान् पुरुषान् नियुञ्ज्यात्, इतरेषु दशसु यूपेषु एकादशैकादश पुरुषान् नियुञ्ज्यात् (३२-५-२२)। अत्र द्वितीये यूपे सप्तत्रिंशत्पुरुषा नियुज्यन्ते। तेन मिलित्वा १८४ पुरुषाः संबद्धाः। एवं बन्धनानन्तरं पुरुषसूक्तेन सर्वानुपतिष्ठेत। ततः सर्वान् पुरुषानुत्सृजेत्।

ततो यां यां देवतामुद्दिश्य यो यः पुरुषो नियुक्तस्तस्यै तस्यै देवतायै एकैकामाज्याहुतिं जुहुयात्।

तत आत्मन्यग्नी समारोप्य उत्तरनारायणेन सूर्यमुपस्थाय पश्चादनवलोकयन्नरण्यं गत्वा वानप्रस्थो भवेत्, न पुनर्ग्रामं यावज्जीवमागच्छेत्। अथ यदि पुनर्ग्रामवासेच्छा स्यात्तदा अरण्योरग्नी समारोप्य गृहे एव वसेदग्निहोत्रादिकं च कुर्याद्यावज्जीवमिति पुरुषमेधः।

## ( सर्वमेधयागः )

अथ सर्वमेध उच्यते। अत्र द्वादश दीक्षा द्वादशोपसदो दश सुत्या भवन्ति। चतुस्त्रिंशद्दिनसाध्योऽयं यागः। अत्र प्रथममहरग्निष्टोमसंस्थम्, ततो दिनत्रये इन्द्रस्तुत् सूर्यस्तुद्वैश्वदेवस्तुतः क्रमेणोक्थ्यसंस्थाः २-४। ततो महाव्रतमहः ५, ततो वाजपेयः ६, तत अप्तोर्यामः ७ ततस्त्रिणवस्तोम उक्थ्यः ८, ततस्त्रयस्त्रिंशस्तोम उक्थ्यः ९ ततो विश्वजित्सर्वपृष्ठोऽतिरात्र १० इति। चैत्रशुक्लषष्ठ्यामिष्टकापशुरुखासंभरणं च। एकशतविधोऽग्निरत्र। एको यूपः सप्तदशारत्निः। अत्र दशस्वप्यहःसु स्तोमायनं सवनीयाः पशव इति सर्वमेधः।

## ( पितृमेधयागः )

अथ पितृमेधस्य स्वरूपमुच्यते—अत्र त्रैवर्णिकोऽधिकारी। एक एवात्राध्वर्युर्ऋत्विक्। अत्र मृतस्य पित्रादेरस्थीन्यरण्ये हृत्वा तैरस्थिभिर्यस्याङ्गस्य यदस्थि, तेन तत्तदङ्गकल्पनेन पुरुषाकृतिं कृत्वा शेवल-कुशादिना तान्याच्छाद्य ग्रामं प्रत्यागत्य स्नात्वा गृहमागच्छेदित्येतावानेव विधिरिति पितृमेधः।

## ( एकाहयागः )

अथैकाहानां स्वरूपं लिख्यते। एकदिनसाध्यसुत्याक एकानेकदीक्षाकत्र्युपसत्को वा द्वादशोपसत्को वा सोमयाग एकाह इत्युच्यते। ते चैकाहा द्वाविंशेऽध्याये भूप्रभृतिवज्रान्ताः सप्तसप्ततिसङ्ख्याका निरूपिताः सूत्रकारेण।

यद्यपीमेऽस्माकं ब्राह्मणे शतपथे न पठितास्तथापि छन्दोगब्राह्मणे ताण्ड्यादौ पठितास्तत एवोद्धृत्यात्र सूत्रकारेण निवेशिताः। अत्र यजमान एक एव। ऋत्विजः षोडश। अग्निष्टोमाद्यन्यतमसङ्ख्याका इमे भवन्ति। क्रतोरग्निष्टोमसंस्थाकत्वे सवनीयः पशुराग्नेय एकः, उक्थ्यसंस्थाकत्वे आग्नेयैन्द्राग्नौ द्वौ, षोडशिसंस्थाकत्वे आग्नेयैन्द्राग्नैन्द्रा इति त्रयः, अतिरात्रसंस्थाकत्वे पूर्वोक्तत्रयेण सह सारस्वती मेषी चतुर्थी। तत्र प्रथमं भूर्नामैकाहोऽग्निष्टोमसंस्थः १ द्वितीयो ज्योतिरग्निष्टोमसंस्थः २ तृतीयो गौरुक्थ्यसंस्थः ३ चतुर्थ आयुरुक्थ्यसंस्थः ४ पञ्चमोऽभिजित् ५ षष्ठो विश्वजित् ६, एतावग्निष्टोमसंस्थौ। अनयोः पृथक् गथगनुष्ठानं सहैव वेति पक्षद्वयम्। अत्र विश्वजिति सर्ववेदसदक्षिणा सहस्रदक्षिणया सह विकल्पिता। ततः सर्वजिदग्निष्टोमसंस्थः संवत्सरदीक्षः सप्तसुत्याकत्र्युपसत्कः सप्तमः ७, ततो ज्योतिः ८ विश्वज्योतिः ९ सर्वज्योतिः १० त्रिरात्रसम्मित ११ इति चत्वार एकाहाः, तत्र तृतीय उक्थ्यसंस्थः, इतरेऽग्निष्टोमसंस्थाः।

ततः षडेकाहा १२-१७ अग्निष्टोमसंस्थाः साद्यस्क्राख्याः। सद्यो दीक्षादिवसे एव क्रयप्रभृति अभिषवान्तं कर्म भवति येषु ते साद्यस्क्रा इत्युच्यन्ते। अत्र प्रथम-द्वितीययोर्न विशेषसंज्ञा; इतरे चत्वारः क्रमेण अनुक्री-विश्वजिच्छिल्प-श्येन-एकत्रिकसंज्ञकाः। अत्र सवनीयपश्वालम्भकाले एवाऽग्नीषोमीय-सवनीयाऽऽनूबन्ध्यानां त्रयाणामालम्भः। सोमक्रयणीभूताया गोः स्थाने त्रिवत्सः साण्डः, सस्यवती भूमिर्वेदिरत्र, खलेवाली यूपस्थानीया पशुबन्धनार्थम् (१)।

---

(१) खले तृणतो धान्यनिष्काशनार्थं मध्ये शङ्कुमेकं निहत्य तत्र रज्जुमेकां बध्वा तस्यां च ऋषभादिकं बध्वा भ्रामयन्ति, तद्भ्रामणार्थं निखातः शङ्कुः खलेवालीत्युच्यते।

श्येनयागे विशेषः—यूपश्चषालवर्जितः (१) तिल्वलवृक्षनिर्मितः, विभीतकवृक्षकाष्ठानीन्धनस्थानीयानि, कुशस्थाने शराः, शववाहनार्थमुपयुक्ते काष्ठेऽधिषवणफलके, आज्यं भस्त्रानिष्पादितं नवनीतम्, हविर्द्धानशकटस्थाने रथः।

प्रचरणकाले ऋत्विजो लोहितोष्णीषा निवीतिन आरोपितधन्वानो भस्त्रावन्तो भवेयुः। दक्षिणानिर्दिष्टा गावः काणत्वादिदोषयुक्ता भवेयुः। दानकाले कण्टकैरेनास्तुदेत्।

ततश्चत्वारो व्रात्यस्तोमसंज्ञका एकाहाः। इमे च गणयागाः। येषां पूर्वजा अकृतोपनयनसंस्काराः पतितसावित्रीकास्ते व्रात्याः। यदि ते उपनयनमभिलषन्ति तदा व्रात्यस्तोमेनेष्ट्वा उपनयनादिसंस्कारमर्हन्ति। अत्र "येषां पितामतादि" इत्यापस्तंबसूत्रमनुसृत्य स्वस्मात्पुरुषत्रयपर्यन्तमकृतसंस्कारेष्वेव पूर्वजेषु सत्सु प्रायश्चित्तरूपमिदं प्रवर्तते, न ततोऽधिकेषु इत्येव केचिदभिप्रयन्ति। अत्र अस्मत्सूत्रकारेण पारस्करेणावधेरनुक्तत्वात्त्रिपुरुषाधिकानामपि व्रात्यस्तोमेन शुद्धिरिति बहवः। ते चतुर्विधाः, तत्र प्रथमतृतीय-चतुर्था अग्निष्टोमसंस्थाः, द्वितीय उक्थ्यसंस्थः। व्रात्यानां पूर्वमग्नेरभावाल्लौकिकेष्वग्निषु तेषामनुष्ठानमिति कात्यायनमतम्। छन्दोगसूत्रे तु एतदर्थमाधानमुक्तम्। व्रात्याश्चतुर्विधाः—हीना, निन्दिताः, कनिष्ठा, ज्येष्ठाश्चेति। तत्र—आचारहीनाः प्रथमेऽधिक्रियन्ते, निन्दिता द्वितीये, कनिष्ठास्तृतीये, ज्येष्ठाश्चतुर्थे। विहिताकरण-निषिद्धाचरणादिना ये भ्रष्टास्ते हीनाः, मनुष्यैरभिशंसनेन पापारोपेण च गर्हितास्ते निन्दिताः, ज्ञातिभिर्बहिष्कृताः कनिष्ठाः, निवृत्तपुत्रोत्पादनसामर्थ्या ज्येष्ठाः। अन्यत्सर्वं प्रकृतिसुल्यावत्।

ततोऽग्निष्टुदग्निष्टोमसंस्थः २२, ततस्त्रिवृत्स्तोमकाश्चत्वार एकाहा अग्निष्टोमसंस्थाः। ते च ईप्सुयज्ञः, बृहस्पतिसवः, इषुः, सर्वस्वार इतिनामानः। तत्र सर्वस्वारे विशेषः—अयं च मरणकामस्यैव। अत्र तृतीयसवने आर्भवपवमाने स्तूयमाने दक्षिणेनौदुम्बरीं दक्षिणशिराः प्रावृतो यजमानः शयीत मरणमुद्दिश्य, ततः प्रभृति मृतश्च भवेत्। तदैव स कर्मणो महिम्ना स्वेप्सितं फलं मरणं प्राप्नोति, कदाचिज्जीवति च। यदि मृतस्तदौर्ध्वदैहिकं कुर्यात्, यदि जीवेत्तदाऽ- भोजनेन मुमूर्षेत्। सूत्रान्तरे तु "ब्राह्मणाः समापयत मे यज्ञमिति प्रेष्याहवनीयं प्रविशति" इत्याहवनीये प्रवेश उक्तः।

तत ऋत्विगपोहनीयसंज्ञकास्त्रय एकाहाः--तत्र प्रथमः सर्वस्तोमसंज्ञोऽग्निष्टोमसंस्थः, द्वितीय-तृतीयावुक्थ्यसंस्थौ क्रमेण चतुश्चत्वारिंशस्तोमाष्टाचत्वारिंशस्तोमकौ।

ततो वाचस्तोमसंज्ञकाश्चत्वार एकाहाः अग्निष्टोमसंस्थाः। अत्र "सर्वा ऋचः सर्वाणि यजूंषि सर्वाणि सामानि वाऽत्र स्तोमे पारिप्लवं शंसन्ति" इति वचनात् बह्वृचैः सामगैश्च सर्वासामृचां सर्वेषां साम्नां च शंसनं स्तवनं च कर्तव्यमिति विशेषः।

अथ पृष्ठ्यस्तोमसंज्ञका एकाहाः षडग्निष्टोमसंस्थाः। तत्र क्रमशस्त्रिवृदादयस्त्रयस्त्रिंशान्ताः स्तोमाः कार्या एकैकस्मिन्नेकाहे।

ततः सौमिकानि चातुर्मास्यानि—४०, तत्र वैश्वदेवस्थाने प्रथमं पृष्ठ्यमहः, नात्र यूपः, परिधावेव पशुनियोजनम्। एवं च पशुनियोजनसमर्थो मध्यमः परिधिः स्थूलः

---

(२) "चषालो यूपकटकः" (अम०)।

सम्पादनीयः । द्वितीयो द्विदिवाख्यो द्व्यहो वरुणप्रघासस्थाने । तृतीये साकमेधस्थाने त्र्यहः पार्ष्ठिकः—तत्रान्तिममहोऽतिरात्रसंस्थाकम् । शुनासीरीयस्थाने ज्योतिष्टोम एकाहः ।

अथ प्रतिकर्मसोमाः । ते चाग्न्याधेय-पुनराधेया-ऽग्निहोत्र-दर्शपूर्णमास-दाक्षायणा-ऽऽग्रयणेष्टिस्थानेषु षट् सोमयागा भवन्ति । पशुमपि उक्थ्यसंस्थं केचनाभिप्रयन्ति ।

ततः सप्तदशसंज्ञकाः पञ्चाहीनाः—तत्र चत्वारोऽग्निष्टोमसंस्थाः, पञ्चम उक्थ्य-संस्थः—ते च उपहव्योऽनिरुक्तः, ऋतपेयः, दूणाशः, वैश्यस्तोमः, तीव्रसुच्चेति ।

अथ द्वन्द्वस्तोमाः—तत्र द्वयोर्मध्ये एकमनुष्ठाय द्वितीयोऽप्यवश्यमनुष्ठेयः । तत्र राट् विराट् इति प्रथमं द्वन्द्वम्, औपशदः पुनस्तोम इति द्वितीयं द्वन्द्वम्, द्वौ चतुष्टोमौ तृतीयं द्वन्द्वम्, उद्भिद्वलभिदौ चतुर्थं द्वन्द्वम्, द्वावपचिती पञ्चमं, द्वावग्ने स्तोमौ षष्ठं द्वन्द्वं, पञ्ची ज्योतिश्चेति नामानौ ऋषभगोसवौ सप्तमं द्वन्द्वम्, तत्र गोसव उक्थ्यसंस्थः ।

ततो मरुत्स्तोमो गणयज्ञोऽग्निष्टोमसंस्थः, तत ऐन्द्राग्नकुलायोऽग्निष्टोमसंस्थः । तत इन्द्रस्तोमो राजयज्ञ उक्थ्यसंस्थः । तत इन्द्राग्न्यो स्तामोऽग्निष्टोमसंस्थः । ततो विघनौ द्वावग्निष्टोमसंस्थौ, ततः सन्दश-वज्रावग्निष्टोमसंस्थौ । अत्र ये गणयज्ञास्तान्वर्जयित्वाऽन्यत्र एक एव यजमानः । गणयज्ञे तु गणस्यैवाधिकारः । इत्येकाहाः ।

## ( अहीनयागः । )

अथाहीना निरूप्यन्ते । अहीनशब्दश्च "अह्नः खः क्रतौ" इति वार्तिकात् अहन्शब्दात् खप्रत्यये कृते निष्पन्नोऽनेकदिनसाध्यक्रतुवाचको भवति । तत्रापि द्व्यहप्रभृति द्वादशाहपर्यन्ता अहीना इत्युच्यन्ते । ततः सत्राणि सहस्रसंवत्सरपर्यन्तानि । तेषां स्वरूपमग्रे निरूपयिष्यते । अस्मिन्नध्याये तु सूत्रकारेण द्विसुत्याका द्व्यहास्त्रयः, त्रिसुत्याकाः पञ्च, चतुःसुत्याकाश्च-त्वारः, पञ्चसुत्याकास्त्रयः, षट्सुत्याकास्त्रयः, सप्तसुत्याकाः सप्त, एकोऽष्टसुत्याकः, द्वौ नवसुत्याकौ, चत्वारो दशसुत्याकाः, एकादशसुत्याक एकः पौण्डरीक इति मिलित्वा त्रयस्त्रिंशत्सङ्ख्याका अहीना उक्ताः । द्वादशाहाख्योऽहीनो द्वादशसुत्याकोऽनेकविधः । एतेषां सर्वेषां द्वादशोपसत्कत्वं मासापवर्गता च । अत्र षोडश दीक्षाः, द्वादशोपसदः, एका सुत्या चेति मासैकसाध्यता द्व्यहस्याहीनस्य । एवमितरत्र यथा सुत्या वर्धते तथा दीक्षादिनं न्यूनीभवति । यथा त्रिसुत्याके पञ्चदश दीक्षाः, चतुःसुत्याके चतुर्दश दीक्षा इत्यादि । तत्रापि द्वादशाह-जामदग्न्य-चतूरात्राणां न मासापवर्गता, किन्तु तदतिरिक्तानामेव । द्वादशाहस्य तु द्वादश दीक्षा द्वादशोपसदो द्वादश सुत्या इति षट्त्रिंशद्दिनसाध्यत्वम् ।

तत्रादौ त्रयोदशातिरात्रसंस्थाका अहीनास्तत्तत्फलमुद्दिश्य सूत्रकारेणोक्ताः, तत्रादित श्चत्वारः षोडशिग्रहवर्जिताः, अन्ये सषोडशिका एव । तत्र-नवसप्तदशः, विषुवान्, गौः, आयुः, ज्योतिष्टोमः, विश्वजित्, त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः, अप्तोर्यामः, अभिजित्, सर्व-स्तोम इति तेषां क्रमशः संज्ञा ।

ततो द्व्यहास्त्रयः—आङ्गिरस-चैत्ररथ—कापिवननामानः षोडशदीक्षा द्वादशोपसत्का द्विसुत्याकाः । अत्राङ्गिरसोऽग्निष्टोमसंस्थः, इतरावषोडशिकावतिरात्रसंस्थाकौ ।

ततस्त्र्यहाः पञ्च—गर्ग-बैद-छन्दोमाऽन्तर्वसु-पराकनामानस्त्रिसुत्याः पञ्चदशदीक्षा द्वादशोपसत्काः । तत्र प्रथमोऽग्निष्टोमसंस्थः, द्वितीय उक्थसंस्थः, तृतीयोऽतिरात्रसंस्थः चतुर्थपञ्चमयोः संस्था गर्गत्रिरात्रवत् ।

चत्वारश्चतुरहाश्चतुःसुत्याका अत्रिचतुर्वीर-जामदग्न्य-वसिष्ठसंसर्प-विश्वामित्र नामानश्चतुर्दशदीक्षा द्वादशोपसत्काः । अत्रोपसदः पुरोडाशिन्यो भवन्तीति विशेषः ।

ततस्त्रयः पञ्चाहाः पञ्चसुत्याका द्वादशोपसत्कास्त्रयोदशदीक्षाका—देवपञ्चाहः, पञ्चशारदीयः, व्रतवानितिनामानः ।

ततः षडहास्त्रयः क्रतवो द्वादशदीक्षाका द्वादशोपसत्काः षट्सुत्याकाः । तत्र प्रथम-द्वितीययोः ऋतुप्रथमः, पृष्ठ्यावलम्ब इति क्रमेण संज्ञा । तृतीयस्य तु न काऽपि विशेषसंज्ञा । प्रथमे पार्ष्ठिकानि पञ्चाहानि, षष्ठो विश्वजिदतिरात्रः । प्रत्यहमैन्द्राग्नः सवनीयः पशुः स्तोमायनं वा । एवमग्रेऽपि ।

ततः सप्त सप्ताहा अहीना द्वादशोपसत्का एकादशदीक्षाः सप्तसुत्याकाः । तत्र क्रमेण ज्योतिः, गौः, आयुः, अभिजित्, विश्वजित्, सर्वजित्, सर्वस्तोम इति सप्ताहानि । एषु ज्योतिः, अभिजित्, विश्वजिदित्यग्निष्टोमसंस्थाः । गौः आयुः इत्युक्थ्यसंस्थे, सर्वजित्समहाव्रतः, सर्वस्तोमोऽतिरात्र इति ।

अष्टाह एक एकाहो द्वादशोपसत्कोऽष्टसुत्यो दशदीक्षः । अत्र पृष्ठ्यः षडहः, ततो महाव्रतं, ततोऽतिरात्र इत्यहःक्लृप्तिः ।

ततो नवाहौ द्वावेकाहौ द्वादशोपसत्कौ नवसुत्यौ नवदीक्षौ । अत्र पृष्ठ्यः षडहः, ततस्त्रयस्त्रिकद्रुकाः । द्वितीये नवरात्रे प्रथमं त्रिकद्रुकास्त्रयः, ततः पञ्चाहानि पार्ष्ठिकानि, ततोऽतिरात्र इति ।

चत्वारो दशरात्रा एकाहा द्वादशोपसत्का दशसुत्याका अष्टदीक्षाः । चतुर्णां क्रमेण त्रिककुप्, कौसुरुबिन्दः, पूर्दशरात्रः, छन्दोमदशाह इति संज्ञा । तत्र प्रथमे प्रथम-तृतीय-चतुर्थ-षष्ठ-सप्तम नवमान्यहान्यग्निष्टोमसंस्थानि, दशमोऽतिरात्रः, शेषाण्युक्थ्यसंस्थानीति ।

द्वितीये दशरात्रे—प्रथमतस्त्रयोऽग्निष्टोमसंस्थाः, ततः षडुक्थ्याः, दशमोऽतिरात्र इति ।

तृतीये दशरात्रे—प्रथम-तृतीय पञ्चमसप्तम-नवमेषु अग्निष्टोमसंस्था, दशमेऽतिरात्र-संस्था, शेषेषूक्थ्यसंस्थेति ।

चतुर्थे दशरात्रे—प्रथमः पृष्ठ्यावलम्बः, ततः पञ्चाहः पृष्ठ्यः, ततश्चत्वारो दशरात्राः, दशमोऽतिरात्र इति । एकादशरात्र एकोऽहीनो द्वादशोपसत्क एकादशसुत्यः सप्तदीक्षोऽयुत-दक्षिणाक इत्यहीनाः ।

## ( सत्राणां निरूपणम् )

अथ सत्राण्युच्यन्ते । सत्रलक्षणं पूर्वमुक्तम् । द्व्यहप्रभृति एकादशरात्रपर्यन्ता यागा अहीनाः, द्वादशरात्रं चाहीनात्मकं सत्रात्मकं चेति पूर्वं निरूपितम् । तत्र द्वादशाहः पूर्वमुक्तः । अत्र त्रयोदशरात्रप्रभृति रात्रिसत्राण्युच्यन्ते ।

तत्र सर्वेषु रात्रिसत्रेषु द्वादश दीक्षा द्वादशोपसदश्च भवन्ति । सुत्यास्तु त्रयोदशः रात्रिसत्रे त्रयोदश, चतुर्दशरात्रे चतुर्दश, पञ्चदशरात्रे पञ्चदश, एवमेकैकवृद्ध्या चत्वारिंश-द्रात्रिपर्यन्तेषु सत्रेषु चत्वारिंशत्सुत्या भवन्ति । तेन त्रयोदशरात्रः सप्तत्रिंशद्दिनसाध्यः, चतुर्दशरात्रोऽष्टत्रिंशद्दिनसाध्य इत्येवं चत्वारिंशद्रात्रसत्रं यावदेकैकाहस्य वृद्धिर्बोध्या । तत एकान्नपञ्चाशद्रात्राणि सप्त सत्राणि, ततः शतरात्रसंज्ञकमेकं सत्रमिति सप्तत्रिंशत्संख्याकानि रात्रिसत्राणि सन्ति ।

तत्र त्रयोदशरात्रसंज्ञकं सत्रत्रयम्। तत्र प्रथमे-त्रयोदशरात्रे-प्रायणीयोऽतिरात्रः १, ततः पृष्ठ्यः षडहः २-७, ततः सर्वस्तोमोऽतिरात्रः ८, ततश्चत्वारश्छन्दोमाः ९-१२, तत उदयनीयोऽतिरात्र १३ इत्यहःक्लृप्तिः।

द्वितीये त्रयोदशरात्रे—प्रायणीयोऽतिरात्रः १, पृष्ठ्यः षडहः २-७, चत्वारश्छन्दोमाः ८-१२, महाव्रतम्, १२ उदयनीयोऽतिरात्र इति क्रमः।

तृतीये त्रयोदशरात्रे—प्रायणीयोऽतिरात्रः १, चतुर्विंशमहः २, अभिजित् ३, त्रयः स्वरसामानः ४-६, विषुवान् ७, त्रयः स्वरसामानः ८-१०, विश्वजित् २, महाव्रतम् १२, उदयनीयोऽतिरात्र १३ इति।

ततश्चतुर्दशरात्रसंज्ञकं सत्रत्रयम्। तत्र-आदौ प्रायणीयोऽतिरात्रः, १, ततः पृष्ठ्यौ षडहौ २-१३, तत उदयनीयोऽतिरात्र १४ इति क्रमः।

द्वितीये चतुर्दशरात्रे—प्रायणीयोऽतिरात्रः १, ज्योतिः २, आयुः, ३, गौः ४ पृष्ठ्यः षडहः ५-१०, गौः ११, आयुः १२, ज्योतिः १३, उदयनीयोऽतिरात्र १४ इति।

तृतीये चतुर्दशरात्रे—प्रायणीयः १, गौः २, आयुः ३, पृष्ठ्यः षडहः ४-९, चत्वार-श्छन्दोमाः १०-१३ उदयनीय १४ इति।

ततः पञ्चदशरात्रसंज्ञं सत्रचतुष्टयम्। तत्र प्रथमे प्रायणीयः १, पृष्ठ्यः २-७ महाव्रतम् ८, पृष्ठ्यः ९-१४, उदयनीय १५ इति क्रमः।

द्वितीये—प्रायणीयः १, अग्निष्टुत् २, ज्योतिर्गौरायुः ३-५, पृष्ठ्यः ६-११, आयुर्गौ-र्ज्योतिः १२-१४ उदयनीय १५ इति क्रमः।

तृतीये—प्रायणीयोऽग्निष्टुत् १, ज्योतिरायुर्गौः २-४, पृष्ठ्यः ५-१०, चत्वारश्छन्दोमाः १२-१४, उदयनीय १५ इति क्रमः।

चतुर्थे पञ्चदशरात्रे—प्रायणीयेऽतिरात्रः १, शेषं तृतीयवत् २-१५ इति।

षोडशरात्रे—प्रायणीयः १, ज्योतिर्गौरायुः २-४, पृष्ठ्यः ५-१०, चत्वारश्छन्दोमाः ११-१४, महाव्रतम् १५, उदयनीय १६ इति।

अष्टादशरात्रे प्रायणीयः १, अभिप्लवः २-७ पृष्ठ्यः १-९३, चत्वारश्छन्दोमाः १४-६७, उदयनीय १८ इति।

एकोनविंशतिरात्रे—प्रायणीयः १, अभिप्लवः षडहः २-७, शेषं पूर्ववत्।

विंशतिरात्रे—प्रायणीयः १, अभिप्लवः षडहः २-७, अभिजित् ८, विश्वजित् ९, पृष्ठ्यः षडहः १०-१५, चत्वारश्छन्दोमाः १६-१९, उदयनीय २० इति विंशतिर्दिनानि।

एकविंशतिरात्रसंज्ञकं सत्रद्वयम्। तत्र—प्रथमे—अषोडशिकः प्रायणीयोऽतिरात्रः १, अभिप्लवौ षडहौ ९-२०, उदयनीय २१ इति।

द्वितीये—प्रायणीयः १, पृष्ठ्यः २-७, त्रयः स्वरसामानः ८-१०, विषुवान् ११, त्रयः स्वरसामानः १२-१४ पृष्ठ्यः १५-२०, उदयनीय २१ इति।

द्वाविंशतिरात्रे सत्रे—प्रायणीयः १, ज्योतिर्गौरायुः २-४, अभिप्लवः ५-१०, पृष्ठ्यः ११-१६, चत्वारश्छन्दोमाः १७-२०, महाव्रतम् २१, उदयनीय २२ इति।

त्रयोविंशतिरात्रे सत्रे—प्रायणीयः १, अभिप्लवस्य पञ्चाहः २-६, अभिप्लवः ७-१२, पृष्ठ्यः १३-१८ छन्दोमाः १९-२२, उदयनीय २३ इति।

प्रथमे चतुर्विंशतिरात्रे सत्रे प्रायणीयः १, अभिप्लवौ द्वौ २-१३, पृष्ठ्यः १४-१९, छन्दोमाः २०-२३, उदयनीय २४ इति दिनानि ।

द्वितीये चतुर्विंशतिरात्रे—प्रायणीयः १, पृष्ठ्यस्तोमः षडहः (२-७) अग्निरुक्तोऽग्निष्टोमः ८, पृष्ठ्यस्य षडहस्य त्रीण्युत्तराण्यहानि प्रतिलोमानि ९-११, ( ६ ५, ४ ) तान्येवानुलोमानि १२-२४, ( ४, ५, ६ ), अनिरुक्तोऽग्निष्टोमः १५, पृष्ठ्यस्तोमः षडहः ( १६-२१ ) अग्निष्टोमावनिरुक्तौ २२-२३, उदयनीय २४ इति ।

पञ्चविंशतिरात्रे—प्रायणीयः, १ अभिप्लवौ-२-१३, पृष्ठ्यः १३-१९, छन्दोमाः २०-२३, महाव्रतम् २४, उदयनीय २५ इति ।

षड्विंशतिरात्रे—प्रायणीयः १, गो-आयुषी २-३, अभिप्लवौ ४-१५, पृष्ठ्यः १६-२१, छन्दोमाः २२-२५ उदयनीय २६ इति क्रमः ।

सप्तविंशतिरात्रे—प्रायणीयः १, ज्योतिर्गौरायुः २-४, अभिप्लवौ ५-१६, पृष्ठ्यः १७-२२ छन्दोमाः २३-२६, उदयनीय २७ इति ।

अष्टाविंशतिरात्रे—प्रायणीयः १, ज्योतिर्गौरायुः २४, अभिप्लवौ५-१६, पृष्ठ्यः १७-२२ छन्दोमाः २३-२६ महाव्रतम् २७ उदयनीय २८ इति क्रमः ।

एकोनत्रिंशद्रात्रे—प्रायणीयः १, अभिप्लवस्य पञ्चाहः २-६, अभिप्लवौ ७-१८, पृष्ठ्यः १९-२४ छन्दोमाः २५-२८, उदयनीय २९ इति ।

त्रिंशद्रात्रे—प्रायणीयः १, त्रयोऽभिप्लवाः २-१९, पृष्ठ्यः २०-२५, छन्दोमाः २६-२९, उदयनीय ३० इति ।

एकत्रिंशद्रात्रे—छन्दोमानन्तरं महाव्रतमधिकम्, अन्यत्पूर्ववत् ।

द्वात्रिंशद्रात्रे—प्रायणीयः १, गो-आयुषी २-३, त्रयोऽभिप्लवाः ४-२१ पृष्ठ्यः २२-२७, छन्दोमाः २८-३१ उदयनीय ३२ इति ।

ततस्त्रयस्त्रिंशद्रात्रं सत्रत्रयम् । तत्र प्रथमे प्रायणीयः १, त्रयोऽभिप्लवस्य पञ्चाहाः २-१६, विश्वजिदतिरात्रः १७, ततश्चतुर्थः पञ्चाहः १८-२२, पृष्ठ्यः २३-२८ छन्दोमाः २९-३१, उदयनीय ३३ इति ।

द्वितीये—प्रायणीयः १, अभिप्लवः २-७, अतिरात्रम् ८, अभिप्लवः ९-१४, अतिरात्रः १५, अभिप्लवः १६-२१, पृष्ठ्यः २२-२७, छन्दोमाः २८-३१, महाव्रतम् ३२, उदयनीय ३३ इति ।

तृतीये—प्रायणीयः १, त्रयोऽभिप्लवस्य पञ्चाहाः २-१६, विश्वजिदतिरात्रः १७ त्रयः पञ्चाहाः १८-३२, उदयनीय ३३ इति ।

चतुस्त्रिंशद्रात्रे—प्रायणीयः १, ज्योतिर्गौरायुः २-४, त्रयोऽभिप्लवाः ५-२२, पृष्ठ्यः २३-२८, छन्दोमाः २९-३२ महाव्रतम् ३३, उदयनीयश्चेति ३४ ।

पञ्चत्रिंशद्रात्रे—प्रायणीयः १, अभिप्लवस्य पञ्चाहः २-६, त्रयोऽभिप्लवाः ७-२४ पृष्ठ्यः २५-३०, छन्दोमाः ३१-३४, उदयनीयश्चेति ३५ ।

षट्त्रिंशद्रात्रे—प्रायणीयः १, चत्वारोऽभिप्लवाः २-२५, पृष्ठ्यः २६,-३१, छन्दोमाः ३-३५, उदयनीय ३६ इति ।

सप्तत्रिंशद्रात्रे—प्रायणीयः १, चत्वारोऽभिप्लवाः २-२५, पृष्ठ्यः २६-३१ छन्दोमाः ३२-३५, महाव्रतम् ३६, उदयनीय ३७ इति ।

अष्टत्रिंशद्रात्रे—प्रायणीयः १, गो-आयुषी २-३, चत्वारोऽभिप्लवाः ४-२७, पृष्ठ्यः २८-३३ छन्दोमाः ३४-३७, उदयनीय ३८ इति ।

एकोनचत्वारिंशद्रात्रे—प्रायणीयः १, ज्योतिर्गौरायुः २-४, चत्वारोऽभिप्लवाः ५-२८ पृष्ठ्यः २९-३४, छन्दोमाः ३५-३८, उदयनीय ३९ इति।

चत्वारिंशद्रात्रे—छन्दोमानन्तरं महाव्रतमधिकम्। अन्यत्पूर्ववदिति।

एकान्नपञ्चाशद्रात्रसंज्ञकानि सप्त सत्राणि। तत्र प्रथमे—प्रायणीयः १, कौसुरुबिन्द-त्र्यहः २-४, अतिरात्रः ५, नवोक्थ्याः ५-१४, एकः षोडशी १५, अतिरात्रः १६, द्वादशोक्थ्याः १७-२८, अतिरात्रः २९, पृष्ठ्यः ३०-३५, अतिरात्रः ३६, द्वादशोक्थ्याः ३७-४८, उदयनीय ४९ इति।

द्वितीये—प्रायणीयः १, अभिप्लवौ द्वौ २-१३, गो-आयुषी १४-१५, अभिप्लवौ १६-२७, अभिजिद्विश्वजितौ २८-२९, अभिप्लवः ३०-३५, सर्वस्तोमः ३६, नवसप्तदशः ३७, पृष्ठ्यः ३८-४२, छन्दोमाः ४४-४७, महाव्रतम् ४८, उदयनीय ४९ इति।

तृतीये—प्रायणीयः १, चत्वारोऽभिप्लवाः २-२५, सर्वस्तोमः २६, अभिप्लवौ २७-३८, पृष्ठ्यः ३९-४४, छन्दोमाः ४५-४८, उदयनीय ४९ इति।

चतुर्थे—प्रायणीयः १, चतुर्विंशमहः २, त्रयोऽभिप्लवाः ३-२; नवरात्रः २१-२९, अभिप्लवः ३०-३५, आयुः ३६ गौः ३७, दशरात्रः ३८-४७ महाव्रतम् ४८, उदयनीय ४९ इति।

पञ्चमे—प्रायणीयः १, चत्वारो नवरात्राः २-३७, दशरात्रः ३८-४७, महाव्रतम् ४८, उदयनीय ४९ इति—

षष्ठे सप्तमे च—प्रायणीयः १, चत्वारोऽभिप्लवाः २-२५, महाव्रतम् २६, अभिप्लवौ २७-३८, दशरात्रः ३९-४८, उदयनीय ४९ इति।

शतरात्रे सत्रे—प्रायणीयः १, त्रिकद्रुकाः २-४, चतुर्दशाऽभिप्लवाः ५-८८, दशरात्रः ८९-९८, महाव्रतम् ९९, उदयनीय १०० इति।

ततः संवत्सरसाध्यमादित्यानामयननामकं सत्रम्। तत्र प्रायणीयः १, चतुर्विंशमहः २, अभिप्लवौ ३-१४, पृष्ठ्यः १५-२०, अभिप्लवौ २१-३२, एवं प्रथमो मासः। एवमेव द्वितीय-तृतीय-चतुर्थ-पञ्चमाः। षष्ठे त्रयोऽभिप्लवाः १८, पृष्ठ्यः १९-२४, बृहस्पतिसवः २५, स्वरसामानस्त्रयः २६-२८ इति।

ततोऽङ्गिरसामयननामकं सत्रं संवत्सरसाध्यम्। तच्च गवामयनवत्।

एवं दृति वातवतोरयननामकं सत्रं संवत्सरसाध्यम्। तदपि गवामयनवत्।

ततः कुण्डपायिनामयननामकं संवत्सरसाध्यं सत्रम्। अत्र मासं यावद्दीक्षाः, ततो मासं यावदग्निहोत्रम्, ततो मासं यावद्दर्शपूर्णमासौ, ततो मासं यावद्वैश्वदेवं पर्व, ततो मासं वरुणप्रघासाः, ततो मासं साकमेधाः ततो मासं शुनासीरीयम्। एवं मास षट्केऽतीते उत्तरान् षट् मासान् दृतिवातवतोरयनस्य पूर्वेण पक्षेणानुतिष्ठेत्। अत्र होत्रुद्गातृमैत्रावरुणप्रस्तोतृप्रतिप्रस्थातारः पञ्चर्त्विजो, नान्ये। तत्र होता आध्वर्यव—पोत्रीय-हौत्राणि कुर्यात्। एवमुद्गाता नेष्टृच्छावाकीये, मैत्रावरुणो ब्रह्मत्वप्रतिहर्त्रे, प्रस्तोता ब्राह्मणा-च्छंसिग्रावस्तोत्रीये, प्रतिप्रस्थाताऽऽग्नीध्रोन्नेत्रे कुर्यात्।

ततः सर्पसत्रं संवत्सरसाध्यम्। तत्र सर्वं गवामयनमेव भवति। अथवा पूर्वं प्राय णीयं कृत्वा ततो द्वन्द्वसोमानां द्वितीयो विराडेकाहोऽग्निष्टोमसंस्थः, तथा कौसुरुबिन्दस्य यद् द्वितीयं त्रिवृदग्निष्टोमः, एतदहर्द्वयं व्यत्यस्य व्यत्यस्य प्रयुञ्जानः सर्वं सूत्रं पूरयेत्।

ततस्तापश्चिताख्यं सत्रं त्रिसंवत्सरसाध्यम्। अत्र सवंत्सरं दीक्षाः, संवत्सरमुपसदः, संवत्सरं सुत्याश्च भवन्ति। सर्वमत्र गवामयनवत्।

ततो महातापश्चितं पञ्चसंवत्सरसाध्यम्। अत्र संवत्सरत्रयं यावदुपसदः, शेषं तापश्चितेन समानम्।

ततः क्षुल्लकतापश्चितं सत्रम्। तत्र चतुर्भिश्चतुर्भिर्मासैर्दीक्षा उपसदः सुत्याश्च भवन्ति।

ततोऽग्निसत्रं नाम सहस्रसुत्याकम्। तत्र—प्रायणीयः, १, त्रिकद्रुकाः २-४ चतुःषष्टं शतमभिप्लवाः ५-६८८ पृष्ठ्यः ६८६-६६८, छन्दोमाः ६६५-६६८ महाव्रतम् ६६६ उदयनीय १००० इति क्रमः।

ततस्त्रिसंवत्सरं नाम सत्रम्। अत्र षष्टिर्दीक्षाः संवत्सरमुपसदः, त्रिसंवत्सरं सुत्याश्च भवन्ति।

ततश्चत्वारि महासत्राणि-तत्र प्रजापतिसत्रं प्रथमम्। तत्र द्वादशसंवत्सरं सुत्याः, उपसदो दीक्षाः।

ततः शाक्त्यानामयनसंज्ञं सत्रं द्वितीयम्। तत्र षट्त्रिंशत्संवत्सरं सुत्याः।

ततः साध्यानामयनसंज्ञकं सत्रं तृतीयम्। तत्र शतसंवत्सरं सुत्याः। ततो विश्वसृजामयनसंज्ञं सत्रं तुरीयम्। तत्र सहस्रं सुत्याः।

ततः सारस्वतसत्राणि यात्सत्राणि इति वा प्रसिद्धानि त्रीणि सत्राणि। एषां दीक्षाः सरस्वतीसमुद्रसङ्गमे प्रभासक्षेत्रे भवन्ति। अत्र चतुर्थस्य सारस्वतसत्रस्य दार्षद्वतमिति संज्ञा।

ततस्तुरायणं नाम सत्रमिति।

एवं ग्रन्थे प्रविविक्षूणां ग्रन्थपरिश्रमं विनैव पूर्वं सामान्यतः पदार्थमधिजगमिषतां छात्राणां पदार्थज्ञानं सम्पादयितुकामेन मया ग्रन्थस्था एव विषयाः सङ्ग्रहेण निरूपिताः। विशेषतस्तु तत्तत्प्रकरणादेवागन्तव्या इति शम्।



श्रीहरिः

# कात्यायनश्रौतसूत्रस्य

## विषयानुक्रमः ।

### अथ प्रथमाध्यायः

विषयः—

पृष्ठम्

इति परिभाषाऽध्यायः प्रथमः।

---

# अथ द्वितीयाध्यायः

## ( दर्शपूर्णमासेष्टिः ) तत्रादौ यजमानकर्तृककर्मनिरूपणम्



### ब्रह्मकर्तृककर्मनिरूपणम्

विषयः— पृष्ठम्

विषयः— पृष्ठम्

विषयः— पृष्ठम्



इति द्वितीयोऽध्यायः

---

## अथ तृतीयोऽध्यायः

विषयः— पृष्ठम्

विषयः— पृष्ठम्

इति पूर्णमासप्रयोगः

इति तृतीयोऽध्यायः।

---

## चतुर्थोऽध्यायः

### अमायां विशेषः—

विषयः— पृष्ठम्



इति चतुर्थोऽध्यायः।

---

## अथ पञ्चमोऽध्यायः

इति पञ्चमोऽध्यायः

---

## अथ षष्ठोऽध्यायः

विषयः— पृष्ठम्

इति षष्ठोऽध्यायः ।

---

## अथ सप्तमोऽध्यायः

विषयः— पृष्ठम्

॥ इति सप्तमोऽध्यायः ॥

---

## अष्टमोऽध्यायः

विषयः— पृष्ठम्

विषयः—

पृष्ठम्

इत्यष्टमोऽध्यायः ।

---

## नवमोऽध्यायः ।

विषयः— पृष्ठम्

इति नवमोऽध्यायः

---

# अथ दशमोऽध्यायः

विषयः— पृष्ठम्

इति दशमोऽध्यायः ।

---

## एकादशोऽध्यायः



इत्येकादशोऽध्यायः

---

## द्वादशोऽध्यायः

विषयः— पृष्ठम्

## त्रयोदशोऽध्यायः



## चतुर्दशोऽध्यायः

विषयः— पृष्ठम्



---

## पञ्चदशोऽध्यायः ।

## षोडशोऽध्यायः

---

## अथ सप्तदशोऽध्यायः

विषयः—

पृष्ठम्

## अष्टादशोऽध्यायः



---

## अथ एकोनविंशोऽध्यायः ।



---

## अथ विंशोऽध्यायः ।

विषयः— पृष्ठम्

---

## एकविंशोऽध्यायः



---

## द्वाविंशोऽध्यायः

---

## त्रयोविंशोऽध्यायः

# चतुर्विंशोऽध्यायः ।

विषयः—

---

## पञ्चविंशोध्यायः

विषयः— पृष्ठम्



---

## षड्विंशोऽध्यायः



इति शम् ।

---

श्रीगणेशाय नमः

सरलवृत्तिसहितम्

# कात्यायन-श्रौतसूत्रम्

जगदम्बावलम्बाय, निगलम्बाय शूलिने।
जगत्त्रयकुटुम्बाय, नमः साम्बाय शम्भवे ॥ १ ॥
जनकं ज्ञानदं नत्वा प्रभुदत्ताग्निहोत्रिणम्।
तद्दर्शितपथीं कुर्वे वृत्तिं शिशुविबोधिनीम् ॥ २ ॥
श्रीमत्कात्यायनप्रोक्त-श्रौतसूत्रं यथामति।
व्याख्यातुमेष यत्नस्तत्-प्रीयतां परमः पिता ॥ ३ ॥

[ अधिकारनिरूपणप्रतिज्ञा ]

**अथातोऽधिकारः ॥ १ ॥**

अथ वेदाध्ययनानन्तरम्, अतः वेदाध्ययनस्य वृत्तत्वाद्धेतोः अधिकारः कर्तृव्यापारः फलभोक्तृत्वसमानाधिकरणो व्याख्यास्यते इति शेषः। वेदाध्ययने वृत्ते तदनन्तरं तादृशवेदप्रतिपादितेषु कर्मसु अधिकारः अनुष्ठानरूपो व्यापारः कस्य इति विचार्यते इति भावः ॥ १ ॥

[ कर्मणां फलवत्त्वम् ]

नन्विदमयुक्तम्। फलवत्स्वेव कर्मसु प्रधावतां प्रवृत्तिदर्शनात्, वेदविहितेषु कर्मसु तादृशफलस्य कस्याप्यश्रवणात्। न च 'दर्शपूर्णमासाभ्यां यजेत स्वर्गकामः' (आप० श्रौ० ३।१४।८) इत्यादि—वाक्यगतैः स्वर्गकामादिपदैः फलमेव प्रतिपाद्यत इति वाच्यम्। तेषां पुरुषविशेषणत्वेन फलप्रतिपादकत्वाभावात् इत्याशङ्क्याह—

**फलयुक्तानि कर्माणि ॥ २ ॥**

सर्वाण्यपि कर्माणि वेदोक्तानि फलजनकान्येवेत्यर्थः। एवं च स्वर्गकामादिपदं पुरुषविशेषणं सदपि विशेषणीभूतस्वर्गादिबोधकमर्थाद् भवति। अन्यथा अफले कर्मणि पुरुषस्य प्रवृत्त्यनुदयाद् वेदवाक्यस्य प्रवर्त्तकत्वमेव भज्येत। अतश्च यत्रापि फलं न श्रूयते तत्रापि फलं कल्पनीयमेवेति भावः ॥ २ ॥

[ मनुष्याणामेव कर्मस्वधिकारः ]

एवं कर्मणां फलजनकत्वे साधिते तेषु केषामधिकार इति संशये पूर्वपक्षयति—

**सर्वेषामविशेषात् ॥ ३ ॥**

देव-मनुष्य-रक्षः-पिशाच-तिर्यगादीनां सर्वेषामेवाधिकारः, फलार्थित्वाविशेषात्. सर्वे हि फलमभिलषन्ति ॥ ३ ॥

एवं प्राप्ते सिद्धान्तयति—

**मनुष्याणां वाऽऽरम्भसामर्थ्यात् ॥ ४ ॥**

वाशब्दः पूर्वपक्षव्यावर्त्तक, एवकारार्थो वा । मनुष्याणामेव कर्मस्वधिकारः । तेषामेव हि अनुष्ठानसामर्थ्यमस्ति । देवादीनां तु देवतान्तराद्यभावात्, तिर्यगादीनां कर्मानुष्ठानाशक्तेश्च न तेषामधिकारः ॥ ४ ॥

[ शूद्राणामङ्गहीनादीनां च नाधिकारः ]

एवं सर्वेषां मनुष्याणामधिकारे सिद्धे तदपवादमाह—

**अङ्गहीनाऽश्रोत्रियषण्ढशूद्रवर्जम् ॥ ५ ॥**

पूर्वसूत्रात् 'आरम्भसामर्थ्यात्' इत्यनुवर्त्तते । अङ्गहीना अन्ध-पङ्गु-बधिरादयः, अश्रोत्रियोऽनधीतवेदः, षण्ढो नपुंसकः, शूद्रः प्रसिद्धः, एतद्वर्जितानामेव मनुष्याणामधिकारः । अन्धस्य आज्यावेक्षणादि-कर्मानुष्ठानासम्भवात्, पङ्गोर्विष्णुक्रमादावसम्भवात्, बधिरस्य मन्त्रश्रवणादावशक्तेः, मूकस्य मन्त्रोच्चारणादावसमर्थत्वात्, षण्ढस्याशुचित्वाच्च नाधिकारः ॥५॥

ननु शूद्रस्य त्रैवर्णिकत्वात् फलार्थित्वाऽविशेषात् द्रव्यवत्वात् समर्थत्वाच्च कुतो नाधिकार इत्यत आह—

**ब्राह्मण-राजन्य-वैश्यानाᳪ श्रुतेः ॥ ६ ॥**

ब्राह्मणादीनां त्रयाणामेव वर्णानामधिकारः । कुतः ? श्रुतेः । तेषामेवाध्ययनश्रवणात्, आधानश्रवणाच्च । न शूद्रस्य, तस्याधानाभावादध्ययनाभावाच्च । अयं भावः—'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यो, वर्षासु वैश्यः'(शत० २–१–३–५)'वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यम्, शरदि वैश्यम्' (आप० धर्म० १–१–१–१९) इति त्रैवर्णिकानामेव उपनयनम् आधानं च विधीयते । उपनीतस्यैव 'तमध्यापयीत' इति अध्ययने विनियोगः । अधीतवेदस्यैव च यागादावधिकार इति शूद्रस्य आधानाभावेन न तत्राधिकारः । एवमाधानाग्निसिद्धाग्निमत एव उत्तरक्रतुष्वधिकार इति शूद्रस्य तदभावान्नाधिकारः ॥६॥

[ पुंसा सहैव स्त्रिया अधिकारनिरूपणम् ]

आधानवाक्ये पुंस्त्वश्रवणात् स्त्रिया वेदाध्ययननिषेधाच्च तस्या अनधिकारे प्राप्त आह—

**स्त्री चाऽविशेषात् ॥ ७ ॥**

स्त्री चाधिक्रियते । कुतः ? अविशेषात्, श्रूयमाणस्य पुंस्त्वरूपलिङ्गस्य विशेषकत्वाभावात्, व्यावर्त्तकत्वाभावादित्यर्थः । अत्र श्रूयमाणमपि लिङ्गमुद्देश्यविशेषणत्वाद् ग्रहैकत्ववद् अविवक्षितमिति भावः ॥७॥

---

१ ज्योतिष्टोमे वाक्यान्तरेण श्रूयते "दशापवित्रेण ग्रहं सम्मार्ष्टि" (श० ४।२।२।११) इति। सोमरसाधारभूताः पात्रविशेषा ग्रहा इत्युच्यन्ते । तानि पात्राणि वासःखण्डेन सम्मृज्जेदित्यर्थः । तत्र यावन्तो ग्रहाः सन्ति तेषां सर्वेषां सम्मार्गः ? उत एकस्यैव ? इति सन्देहे ग्रहस्य उद्देश्यत्वेन प्राधान्यात् तद्विशेषणीभूतस्य एकत्वस्यापि विवक्षायां कृतायामनेकोद्देश्यत्वकृतो वाक्यभेदो दुष्परिहर इति कृत्वा ग्रहत्वमेव विवक्षितम्, एकत्वं तु अविवक्षितमिति निर्णीतं पूर्वमीमांसायाम् । (३।१ ७) तद्वदत्रापि स्वर्गकामस्य पुरुषोद्देश्यत्वेन प्राधान्यात् तद्विशेषणीभूतस्य पुंस्त्वस्यापि विवक्षायामनेकोद्देश्यत्वकृतो वाक्यभेदो दुष्परिहर इति कृत्वा स्वर्गकामविशेषणीभूतं पुंस्त्वमप्यविवक्षितम् । स्त्री वा पुरुषो वा स्वर्गकामनानाधिकारीति ।

दर्शनाच्च ॥ ८ ॥

'मेखलया यजमानं दीक्षयति योक्त्रेण पत्नीम्' ( तै० सं० ६।१।३ ) "आज्यमुद्वास्य पत्नीमवेक्षयति" ( का० श्रौ० २।७।४ ) इत्यादिना तस्या अप्यधिकारदर्शनादित्यर्थः। अयं चाधिकारः स्त्रिया भर्त्रा सहैव, न स्वातन्त्र्येण। सहत्वं सर्वकर्मसु—

"नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम्।
शुश्रूषयति भर्त्तारं तेन स्वर्गे महीयते"—( मनुः ५.५५)

इत्यादिना साहित्यश्रवणात्, पृथक्त्वनिषेधाच्च ॥ ८ ॥

[ रथकारस्याधानमात्रे एवाधिकारः ]

एवं त्रयाणां वर्णानामङ्गहीनादिवर्जं स्त्रिया सह अधिकारे सिद्धे अन्यत्रापि क्वचित्तत्प्राप्त्यर्थं सूत्रमारभते—

रथकारस्याधाने ॥ ९ ॥

रथकारस्य माहिष्येण करण्यामुत्पादितस्य त्रैवर्णिकात्किञ्चित् न्यूनस्य अनुलोमसङ्कर जातिविशेषस्य आधाने अधिकारोऽस्तीति शेषः। क्षत्रियाद्वैश्यायां जातो माहिष्यः। वैश्येन शूद्रायां जाता करणी। माहिष्येण करण्यां जातो रथकारः। "माहिष्येण करण्यान्तु रथकारः प्रजायते" इति याज्ञ० (१।९२) स्मृतेः ॥ ९ ॥

ननु रथकारशब्दो न जातिविशेषवाची-किन्तु रथं करोतीति व्युत्पत्त्या त्रैवर्णिकवाची। एवं च सति 'वर्षासु रथकार आदधीत' ( आप० श्रौ० ५।३।१८ ) इति वाक्ये कालमात्रविधानाद्वाक्यभेददोषोऽपि परिहृतो भवति। अन्यथा जात्यन्तरवाचित्वे तस्याधानसम्बन्ध ऋतुसम्बन्धश्च इत्युभयमपि विधातव्यं भवतीति वाक्यभेददोषो दुष्परिहरः स्यात् इत्याशङ्क्याह—

नियतं च ॥१०॥

चशब्दो वा-शब्दार्थे पक्षव्यावृत्तौ। नियतं = रूढं, रथकारपदं जातिविशेषे रूढम्। रूढिश्च योगाद्बलीयसी। अतो जातिविशेष एव रथकारो न त्रैवर्णिकः। यदुक्तं वाक्यभेद इति, तत् कालविशिष्टाधानविधाने न दोषः ॥१०॥

एवमपि विशिष्टविधाने गौरवमस्त्येव। तदपेक्षया ऋतुमात्रविधाने लाघवात् इत्याशङ्क्याह—

नाभावादिति वात्स्यः ॥११॥

न त्रैवर्णिको रथकारः। कुतः ? यौगिकशब्दस्य रूढिबाधने सामर्थ्याभावात्। वात्स्यग्रहणं स्वमतदृढीकरणार्थम् ॥११॥

[ स्थपतिनिषादस्य गावेधुकेष्टावधिकारः ]

निषादस्थपतिर्गावेधुकेऽधिकृतः ॥१२॥

निषादश्चासौ स्थपतिश्चेति निषादस्थपतिः। निषाद-जातिरूपोऽधिपतिश्च यो भवति स गावेधुके-"यस्य रुद्रः पशून् शमयेत् स गावेधुकं चरुं निर्वपेत्" (मैत्रा० २·४·२)—इति विहिते यागेऽधिकृतो भवति। अत्र निषादानां स्थपतिरिति षष्ठीतत्पुरुषाङ्गीकारे यद्यपि त्रैवर्णिक एव कश्चिदधिकारी भवति, तथापि तत्पुरुषाङ्गीकारे पूर्वपदे लक्षणा-रूपदोषापत्त्या तां लक्षणानापादकः कर्मधारय एवाङ्गीकृतः ॥१२॥

[ ब्रह्मचारिणः स्त्रीसङ्गे गर्दभेज्या आज्याहुती वा प्रायश्चित्तम् ]

वाऽवकीर्णिनो गर्दभेज्या ॥१३॥

ब्रह्मचारी सन् यः स्त्रियमुपैति सोऽवकीर्णी। तस्य गर्दभयागो नैमित्तिक इति शेषः। अत्र वा-शब्दो विकल्पवाची, पारस्करगृह्ये ( का० ३। कं० १२ ) आहुत्योर्विधानात्। ताभ्यां सह गर्दभयागस्य विकल्प इत्यर्थः ॥१३॥

[ स्थपतीष्टौ अवकीर्णिपशौ च लौकिकाग्न्यादीनामङ्गत्वम् ]

अनन्तरोक्तयोः स्थपत्यवकीर्णिनोराधानाभावेन अग्न्यभावात् कुत्र ताभ्यां यागः कार्य इति शङ्कायां वैदिकत्वाऽविशेषात् दर्शपूर्णमासतोऽङ्गग्रहणाच्च तद्वदाधानसंस्कृते एव अग्नौ कर्तव्यः, तदर्थं चाधानमपि ताभ्यां कर्त्तव्यमेवेति प्राप्ते आह—

लौकिके ॥१४॥

एतदुभयमपि लौकिकेऽग्नौ स्यात न त्वाधानसिद्धे आहवनीयादौ। अयं भावः—सत्यं दर्शपूर्णमासत एवाङ्गग्रहणं, तथापि दर्शपूर्णमासयोर्यान्यङ्गानि तान्येवात्रातिदिश्यन्ते, न त्वाधानमपि। तस्य अनारभ्याधीतस्वतन्त्रविहितत्वेन दर्शपूर्णमासानङ्गत्वात्। अनेन न्यायेन व्रात्यस्तोमा अपि लौकिकाग्नावेव भवन्तीति बोध्यम् ॥१४॥

गर्दभेज्याङ्गभूतपशुपुरोडाशश्रपणस्य दर्शपूर्णमासविकृतित्वात् तत कपालेषु पुरोडाशश्रपणे प्राप्ते तद्बाधित्वा श्रपणस्य स्थानान्तरं विधत्ते—

भूमौ पशुपुरोडाशश्रपणम् ॥१५॥

'यद्देवत्यः पशुस्तद्देवत्यः पुरोडाशः' (शत० ३-८-३-१) इति विधानात् गर्दभपशुसंबन्धिनः पुरोडाशस्य श्रपणं भूमौ अङ्गारेषु कार्यम्, न कपालेषु इत्यर्थः ॥१५॥

अप्स्ववदानहोमः ॥१६॥

अवदानानां हृदय-जिह्वादीनां होमो जले कार्यो नाग्नौ। आघाराज्यभागहोमादिकं तु अग्नावेव कार्यम्, अवदानग्रहणात् ॥१६॥

शिश्नात्प्राशित्रावदानम् ॥१७॥

गर्दभस्य शिश्नात् प्राशित्रस्य ब्रह्मभागस्यावदानं कुर्यात् न हृदयादिभ्यः ॥१७॥

[ स्मार्त्तानां कर्मणामौपासनाग्नौ कर्त्तव्यता नाहवनीयादिषु ]

एवं कर्त्रधिकारं निरूप्य अग्न्यधिकारं निरूपयितुमारभमाणस्तत्र पूर्वपक्षयति—

वैतानिकेषु सर्वं सर्वार्थत्वात् ॥१८॥

वैतानिका वितानार्हा आधानसंस्कृता गार्हपत्याऽऽहवनीयदक्षिणाग्नयः, तेषु सर्वं श्रौतं स्मार्त्तं च कर्म कार्यम्। कुतः? सर्वार्थत्वात्। सर्वकर्मार्थत्वावगमात्। कुत इति चेत्? यद् द्रव्यं येन संयुक्तं सद् विधिना बोध्यते, तस्यैव तदर्थत्वं निर्णेतुं शक्यते। अग्नयस्तु न केनापि विशिष्टाः श्रुताः। किन्तु स्वतन्त्रविधिविधेयाः। अतश्च विशेषाऽदर्शनात् अग्निसाध्येषु सर्वेष्वपि कर्मसु श्रौतानामेवाग्नीनां प्रवर्तनम् इति ॥१८॥

अत्र लिङ्गदर्शनमप्यस्तीत्याह—

दर्शनाच्च ॥१९॥

वैतानिके दक्षिणाग्नौ मांसपाकनिषेधरूपस्य लिङ्गस्य दर्शनादित्यर्थः। अयं भावः—श्रुतौ दक्षिणाग्निं प्रकृत्य "मांसं न पचेयुः" इति निषेधः श्रूयते। प्रतिषेधश्च प्राप्तिसापेक्षः, न चात्र वैदिकस्य मांसपाकस्य प्राप्तिरस्ति, सर्वोऽपि श्रौतो मांसपाकः शामित्रेऽग्नौ विहितः। अतश्च स्मार्त्तस्यैव मांसपाकस्य प्रसक्तिरस्ति तस्यैव प्रतिषेध इति वक्तव्यम्। एवं च अनेन लिङ्गेन स्मार्त्तान्यपि कर्माणि अत्र क्रियन्त इत्यवगम्यते ॥ १९ ॥

एवं प्राप्ते सिद्धान्तयति—

नौपासनश्रुतेः ॥२०॥

न स्मार्त्तमपि वैतानिकेऽग्नौ कर्त्तव्यम्। कुतः ? औपासनश्रुतेः। आहिताग्नेरपि औपासन—( गृह्याग्नि ) श्रवणात्। पितृमेधे "अद्धारेणौपासनं निरस्यति" (का० श्रौ० २१-४-२९) इति वक्ष्यति। राजसूयेऽपि "यः कामयेत राष्ट्रमस्यै प्रजायै स्यादिति तस्यौपासने प्रजुहुयात्" इति। यदि स्मार्त्तान्यपि कर्माणि वैतानिकेष्वेव क्रियेरन्, तर्ह्यौपासनस्य क्वचिदपि प्रयोजनाभावात् तस्य दर्शनं नोपपद्येत इति ॥२०॥

तर्हि किमर्थो मांसप्रतिषेध इत्यत आह—

अधिश्रयणीये मा꣡ꣳसप्रतिषेधः ॥२१॥

यो मांसपाकप्रतिषेधः सोऽधिश्रयणीयाहर्विषयः—यस्मिन्दिने दक्षिणाग्नावधिश्रयणं विहितं तद्विषय इत्यर्थः। अयं भावः—आहवनीय-दक्षिणाग्न्योः सायं प्रातः प्रतिहोमं गार्हपत्यादाहरणं कार्यमित्येकः पक्षः। अथवा नवगृहे यदा वासः ( प्रवेशः ) क्रियते, तदा तस्मिन्नेवाहनि तत्र दक्षिणाग्नेराहरणं कार्यं नाहवनीयवत्प्रतिहोममिति वैकल्पिको द्वितीयः पक्षः। तदा च तस्मिन्नवगृहाहृते दक्षिणाग्नौ पाको विहितः। "नवावसिते वैनमाहरेयुस्तस्मिन्पचेयुस्तद्ब्राह्मणा अश्नीयुः" (शत० २-३-२-८) इति। पाक्यद्रव्यं चाविशेषान्मांसमपि भवतीति तस्यापि पाकप्रसक्तौ तस्यैव प्रतिषेधः। अतश्च स्मार्त्तस्य अप्रसक्तत्वात् केवलं श्रौतान्येव कर्माणि वैतानिकेऽग्नौ कर्त्तव्यानि। स्मार्तानि त्वावसथ्याग्नावेवेति ॥२१॥

इति कातीयश्रौतसूत्रवृत्तौ प्रथमाध्याये अधिकारनिरूपणी प्रथमा कण्डिका ॥१॥

---

एवं कर्मणां फलवत्त्वं तत्राधिकारिणं च निरूप्य इदानीं तस्यैव साङ्गस्य निरूपणं कर्त्तुमारभते—

[ यागस्वरूपनिरूपणप्रतिज्ञा ]

यज्ञं व्याख्यास्यामः ॥१॥

यज्ञस्वरूपं साङ्गं निरूपयाम इत्यर्थः ॥ १ ॥

[ यागस्वरूपनिरूपणम् ]

किं तद्यज्ञस्वरूपमत आह—

द्रव्यं देवता त्यागः ॥२॥

द्रव्यं = दधि-सोम व्रीहि-यवादि। देवता = अग्नीन्द्रादिः। त्यागः = तदुद्देशेन क्रियमाणः

---

१ शामित्रः पशुश्रपणोऽग्निरुच्यते। तथा चापस्तंबः। '–अभिपर्यग्निकृते देश उल्मुकं निदधाति स शामित्रः' ( ७।१६।२-३ )

स्वस्वनिवृत्त्यनुकूलो व्यापारः। इदमेव यागस्वरूपम्। देवतोद्देशेन द्रव्यत्यागरूपस्य यागपदार्थस्य पूर्वाचार्यैर्निरूपणात् ॥ २ ॥

[ अफलयुक्तानामयागहोमरूपाणां यागाङ्गत्वनिरूपणम् ]

**तदङ्गमितरत् समभिव्याहार-प्रकरणाभ्याम् ॥३॥**

यत् फलरहितत्वेन श्रुतं यागहोमादिभिन्नं तत्सर्वं तस्यैव फलवतः प्रधानस्य अङ्गम्। केन प्रमाणेन ? समभिव्याहारात् = वाक्यात्, प्रकरणाच्च। एकस्मिन्वाक्ये शेष-शेषिणोः सहोच्चारणं वाक्यम्। यथा "यस्य पर्णमयी जुहूर्भवति" (तै० ३-५-७) इत्यत्र पर्णताजुह्वोः सहोच्चारणात् पर्णताया जुह्वङ्गत्वम्।

उभयाकाङ्क्षा प्रकरणम्। यथा दर्शपूर्णमासयोरङ्गाकाङ्क्षा। तत्प्रकरणपठितानां च प्रयाजाद्यङ्गानां प्रयोजनाकाङ्क्षा। एवमाकाङ्क्षाद्वयेन अङ्गप्रधानयोः परस्परं संबन्धो भवतीत्यर्थः।

इदं च स्वस्वपूर्वप्रमाणकल्पनेनैव विनियोजकं भवति, तद्यथा—उभयाकाङ्क्षया अङ्गप्रधानयोः संबन्धोऽस्तीत्यवगम्यते। तत्प्रतिपादनार्थं च वाक्यं समभिव्याहाररूपं कल्पनीयम्, दर्शपूर्णमासौ प्रयाजाश्च परस्परं संबद्धा इति। अनन्तरम् असमर्थस्य अभिधानायोगात् सामर्थ्यरूपं लिङ्गं कल्पनीयम् इदमत्र समर्थम् इति। अनन्तरं च विनियोक्त्री श्रुतिः—प्रयाजादिभिर्दर्शपूर्णमासावुपकर्त्तव्यौ इति। एवं सर्वत्रापि उत्तरोत्तरप्रमाणेन पूर्वपूर्वप्रमाणकल्पनद्वारा विनियोजकत्वमवगन्तव्यम् इति। तत्र श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यारूपाणि षट् प्रमाणानि अङ्गाङ्गिभाव बोधकानि उक्तानि जैमिनिना। तेषु द्वयोरेवात्रोपादानं कृतं सूत्रकारेण, इतराणि तु तत्र तत्र सूत्रान्तरे उपादास्यति। अत इतरेषां परित्यागशङ्का न कार्या ॥ ३ ॥

[ यागहोमरूपाणामपि अफलयुक्तानां यागाङ्गत्वम् ]

एवं याग-होमातिरिक्तानामङ्गत्वं प्रतिपाद्य इदानीं यागहोमयोरपि तत्प्रतिपादयति—

**यजतयश्चाऽफल—युक्तास्तदङ्गम् ॥४॥**

यजतयो यागाः, चकाराद्धोमाश्च गृह्यन्ते। ये यागा होमा वा फलसंयुक्तत्वेन अश्रुताः ते सर्वेऽपि तदङ्गं फलसंयुक्त-प्रधानाङ्गमित्यर्थः ॥४॥

पूर्वसूत्रे याग-होमयोः प्रस्तुतत्वात् तयोर्भेदे सन्दिहानः पृच्छति—

**यजति-जुहोतीनां को विशेषः ? ॥५॥**

॥५॥ समाधत्ते—

**तिष्ठद्धोमा वषट्कारप्रदाना याज्या-पुरोऽनुवाक्यावन्तो यजतयः ॥६॥**

तिष्ठता होमो येषु ते, वषट्कारेण प्रदानं येषु ते, तथा याज्यावन्तः पुरोऽनुवाक्यावन्तश्च ये, ते यागा इत्युच्यन्ते ॥६॥

होमलक्षणमाह—

**उपविष्टहोमाः स्वाहाकारप्रदाना जुहोतयः ॥७॥**

उपविष्टेन होमो येषु, स्वाहाकारेण च प्रदानं येषु, ते जुहोतय इत्युच्यन्ते ॥७॥

एवमङ्गत्वस्य लक्षणमुक्त्वा तत्र "शेषमितरे यथाख्यम्" (का० श्रौ० १।७।२२) इत्यन्यत्र ऋत्विक्कर्तृकत्वे निरूपिते, ते ऋत्विजस्त्रैवर्णिका भवेयुः, उत ब्राह्मणा एव इति सन्देहे त्रैवर्णिकानां समर्थत्वात् विद्यावत्वाच्च ते भवेयुरिति पूर्वपक्षे प्राप्ते सिद्धान्तयति—

[ ब्राह्मणानामेवार्त्विज्येऽधिकारः ]

**ब्राह्मणा ऋत्विजो भक्षप्रतिषेधादितरयोः ॥८॥**

ब्राह्मणा एव ऋत्विजो भवेयुः । कुतः ? क्षत्रियवैश्ययोर्भक्षप्रतिषेधात् । अग्निहोत्र-हविःशेषे "तद्वै नाऽब्राह्मणः पिबेत्" (श० २-३-१-३९) इति भक्षणस्य निषेधादित्यर्थः । एवं च भक्षणव्यावृत्त्या कर्तृत्वमपि व्यावर्त्यत इति भावः ॥८॥

**दर्शनाच्च ॥९॥**

"द्वया वै देवा" इति श्रुतौ "आहुतिभिरेव देवान्प्रीणाति दक्षिणाभिर्मनुष्य-देवान्" (श० २-२-२-६) इति मनुष्यदेवपदवाच्यानां ब्राह्मणानामेव दक्षिणासंबन्धदर्शनादित्यर्थः ।

'क्षत्रियो याजको यस्य चण्डालस्य विशेषतः ।
कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः ।' इति ( रामा० बा० का० ५९-१४ )
'राजयाजकयाज्यस्य विनश्यति तथा हविः' इति
स्मृतिश्चात्र प्रमाणम् ॥९॥

[ फलयुक्तकर्मानुष्ठाने याथाकाम्यम् ]

एतावता कर्मणां स्वरूपं, तेषां फलवत्त्वं, तत्राधिकारिणं, ऋत्विजं च निरूप्य इदानीं कर्मणामनुष्ठानविषयश्चिन्त्यते । तत्र फलयुक्तानां कर्मणामनुष्ठानमवश्यं कर्त्तव्यम् ? उत इच्छाधीनम् ? इति सन्देहे पूर्वपक्षयति—

**फलयुक्तानामारम्भे याथाकामी फलार्थित्वात् ॥१०॥**

फलविशिष्टतया श्रुतानां काम्यानां कर्मणामनुष्ठाने याथाकामी भवेत् । सत्यामिच्छाया-मनुतिष्ठेत. अन्यथा नेत्यर्थः । कुतः ? फलार्थित्वात् । फलाभिलाषिणं प्रत्येव विहितत्वात् ॥१०॥

[ नियमादिषु न याथाकाम्यम् ]

एवं सर्वकर्मसु इच्छयाऽनुष्ठानप्राप्तावाह—

**न नियम-निमित्ताग्निहोत्र-दर्शपूर्णमास-दाक्षायणाग्रयण-पशुषु प्रवृत्तेः ॥११॥**

'सत्यवादी स्यात्' 'अधःशायी स्यात्' (श० १-१-६) इत्यादिषु नियमेषु न याथाकाम्यम् । कुतः ? तदुद्देशेनैव शास्त्रस्य प्रवृत्तेः । यदि नियमेनानुष्ठानं न स्यात्, तर्हि विधेर्वैयर्थ्यमापद्येत । एवमेव "यस्याहिताग्नेरग्निर्गृहान् दहेत् सोऽग्नये क्षामवतेऽष्टाकपालं पुरोडाशं कुर्यात्" (तै० २-२-३) इत्यादिनिमित्तसत्त्वे "यावज्जीवमग्निहोत्रं जुहोति" आप० श्रौ० ३।१४।११) इत्यग्निहोत्रहोमे, "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" (आप० श्रौ० ३।१४।११) इति दर्शपूर्ण-मासयोः, दाक्षायणयज्ञे, आग्रयणेष्टौ, निरूढपशुबन्धे च न याथाकाम्यम् । अग्निहोत्र-दर्शपूर्ण-मासयोर्यावज्जीवश्रुतिचोदनात्, आग्रयणादिष्वकरणे प्रत्यवायश्रवणात्, प्रायश्चित्तविधानाच्च न याथाकाम्यमिति ध्येयम् । यद्यपि "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादिना फलार्थ-तयाऽपि श्रवणमस्ति, तथापि स पृथक् काम्यः प्रयोगः । अयं ततो भिन्न इति वेदितव्यम् । तत्र काम्येऽपि क्रियमाणे नित्यस्य तेनैव गतार्थतेत्यपि बोध्यम् ॥११॥

**सोमे चैके ॥ १२ ॥**

सोमेऽपि याथाकाम्यं नेति केचिन्मन्यन्ते । तत्रापि 'वसन्ते वसन्ते ज्योतिषा यजेत' (आप० श्रौ० १०.२५) इत्यभ्यासश्रवणादिति भावः ॥ १२ ॥

चातुर्मास्येषु चर्त्तुमुखश्रुतेः ॥ १३ ॥

चातुर्मास्येष्वपि न याथाकाम्यम् । कुतः ? "ऋतुमुखे ऋतुमुखे चातुर्मास्यैर्यजेत" इति शाखान्तरेऽभ्यासश्रवणात् ॥ १३ ॥

नियतसहपाठात् ॥ १४ ॥

नियतैर्दर्शपूर्णमासादिभिः सह पठितत्वाच्च । एवं च प्रायपाठादपि चातुर्मास्यानां नित्यत्वमिति भावः ॥ १४ ॥

दर्शनाच्च ॥ १५ ॥

गवामयनप्रकरणे-"कथमेषां सोमोऽनन्तरितो भवति ?" इति प्रश्नं कृत्वा "पयस्ययेति ब्रूयात्" (श० १२-३-५-८) इति तत्र समाधानकरणेन नित्यत्वदर्शनादित्यर्थः । अयं भावः— गवामयनं संवत्सरसत्रं, तस्य फाल्गुन्यां दीक्षारम्भे कृते ततः प्रभृति संवत्सरपर्यन्तं साङ्गस्यैव तस्य गवामयनस्यानुष्ठेयतया मध्ये अन्यस्य कस्यचिदनुष्ठाने "वि वा एतस्य यज्ञश्छिद्यते यदन्यस्य तन्त्रे अन्यस्य तन्त्रं प्रतायते" ( आप० श्रौ० ६।४।४ ) इति "दीक्षितो न जुहोति न ददाति" (का० सं० श्रौ० ३।६।५) (आप० श्रौ० १०।१४।३) इति श्रुत्या च मध्ये अन्यस्य करणे दोषापत्त्या चातुर्मास्यानामकरणापत्तौ नित्यस्याकरणे प्रत्यवायापत्त्या कथमेषां स्वरूपसम्पत्तिः कर्तुं शक्यत इति प्रश्नस्याभिप्रायः । गवामयनमध्ये पयस्यायागस्याप्यभिधानात्तेनैव चातुर्मास्यस्वरूपस्य सिद्धत्वान्न पृथगननुष्ठानेऽपि दोष इति समाधानार्थः । एवं च नित्यत्वे सत्येव तेषामनुष्ठाने प्राप्ते प्रकारान्तरेणानुग्रहोक्तिर्युक्तेति भावः ॥१५॥

एवं सिद्धान्तिते पुनः पूर्वपक्षी प्रत्यवतिष्ठते—

नोत्सर्गयोगात् ॥ १६ ॥

न चातुर्मास्यानि नित्यानि भवितुमर्हन्ति । कुतः? उत्सर्गयोगात् । "इति नूत्सृजमानस्य" (श० २-६-३-१२) इति उत्सर्गविधानात् । नित्यत्वे यावज्जीवकर्त्तव्यतया मध्ये उत्सर्गविधानमनुपपन्नं स्यादित्यर्थः ॥ १६ ॥

समाधत्ते—

स्यात् त्रिंशद्वत् ॥ १७ ॥

नित्यत्वे सत्यपि उत्सर्गो भवत्येव । कथम् ? त्रिंशद्वत् । नित्ययोरपि दर्शपूर्णमासयोः "त्रिंशतमेव वर्षाणि यजेत" (श० ११-१-२-१३) इति त्रिंशद्वर्षानन्तरं यथा उत्सर्गो विहितस्तद्वदित्यर्थः ॥ १७ ॥

[ नित्यं कर्म यथाशक्ति साङ्गं कर्त्तव्यम् ]

एवं नित्येषु कर्मसु याथाकाम्याभावे निरूपिते तानि साङ्गानि कर्त्तव्यानि ? उत निरङ्गानि ? इति संशये गुणाम्नानबलात् साङ्गान्येव कर्त्तव्यानीति पूर्वपक्षे प्राप्ते सिद्धान्तयति—

विगुणे फलनिर्वृत्तिरङ्गप्रधानभेदात् ॥१८॥

नित्ये कर्मणि विगुणेऽपि फलोत्पत्तिर्भवत्येव । कुतः ? अङ्गप्रधानभेदात् । "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" (आप० श्रौ० ३।१४।११) इति वाक्येन हि प्रधानयोरेव यावज्जीवरूपनिमित्तसंबन्धः श्रूयते, न त्वङ्गानाम् । अतः प्रधानमात्रकरणे समर्थोऽपि नित्येऽधिकारीति। तर्हि किमर्थमङ्गाम्नानमिति चेत्, काम्यप्रयोगार्थमित्यदोषः ॥१८॥

## प्रायश्चित्तविधानाच ॥१९॥

प्रायश्चित्तविधानादपि नित्यस्य विगुणस्य फलजनकत्वमस्तीत्यवगम्यते । अग्निहोत्रहोमप्रकरणे स्थालीभेदने हविषि स्कन्ने च "भिन्ने जुहोति" "स्कन्ने जुहोति" ( का० श्रौ० २५-२-५ ) इति भेदनादिजन्यदोषनिर्घातार्थत्वेन प्रायश्चित्तं विहितम् । यदि विगुणस्य नित्यस्य फलजनकत्वं न स्यात्, तर्हि अनुष्ठितेऽपि प्रायश्चित्ते वैगुण्यसमाधानाभावेन प्रायश्चित्तविधानमेव नोपपद्येत इति ॥१९॥

## तथा च दृष्टम् ॥२०॥

विगुणमपि कर्म यथा कथंचित्परिश्रुताङ्गत्यागेनापि परिसमापनीयतया दृष्टमेव । 'यत्पयो न स्यात्केन जुहुया' ( श० ११-३-१-३ ) इत्यारभ्य श्रुतद्रव्याभावे येन केनापि यज्ञिय द्रव्येण अनिषिद्धेन होमस्यावश्यकर्त्तव्यतया प्रतिपादनादिति भावः ।

अस्यान्यापि व्याख्या—विगुणेऽपि नित्ये फलनिष्पत्तिर्दृष्टैव । यदि दैवान्मानुषाद्वा कस्माच्चिदपराधान्न सर्वाङ्गानुष्ठानं संभवति, तदा यावन्ति कर्तुं शक्यन्ते तावतां करणेऽपि फलनिष्पत्तिर्भवत्येव । अतो नित्येऽप्यङ्गसंबन्धो भवत्येव ॥२०॥

[ काम्यं कर्म साङ्गमेवानुष्ठेयम् ]

एवं नित्ये कर्मणि यथाशक्त्युपबन्धे निरूपिते तेनैव न्यायेन विगुणस्य काम्यस्यापि अङ्गप्रधानरूपेण भिन्नत्वात्, प्रायश्चित्तदर्शनात् विगुणादपि वृष्टिकामनया (बौ० श्रौ० १३।२६-४०) विहितस्य कारीर्यादेः फलदर्शनाच्च तस्यापि विगुणस्य फलजनकत्वमस्त्येवेति पूर्वपक्षे प्राप्ते आह—

## न श्रुतिलक्षणत्वात् ॥२१॥

विगुणेऽपि काम्ये फलं निष्पद्यत इति न । कुतः ? श्रुतिलक्षणत्वात् । श्रुतौ हि "चित्रया यजेत पशुकाम" ( तै० २-४-६ ) इत्यादौ तृतीयानिर्देशात् धात्वर्थरूपस्य यागस्य फलं प्रति करणत्वमवगम्यते । तच्च करणत्वं स्वसर्वाङ्गविशिष्टस्य एकप्रधानस्य भवितुमर्हति, केवलेन प्रधानेन फलोत्पत्त्यङ्गीकारे अङ्गविधीनां वैयर्थ्यप्रसङ्गात् । अतश्च साङ्गमेव कर्म फलसाधनमित्यवगम्यते । तत्र नित्ये कर्मणि यावज्जीवश्रुतिचोदितत्वात् यावज्जीवं केनापि पुरुषेण साङ्गं कर्मानुष्ठातुं न शक्यत इति तत्र यथाशक्त्युपबन्धकल्पनेऽपि काम्ये तथा उपकल्पने प्रमाणाभावेन तत्र साङ्गस्य फलजनकत्वमिति ॥ २१ ॥

प्रायश्चित्तविधानं तर्हि किमर्थमित्यत आह—

## प्रायश्चित्तं तत्कालम् ॥२२॥

काम्यारम्भोत्तरं फलप्राप्तावपि तस्यावश्यं परिसमाप्तिः कर्त्तव्या । अन्यथा शिष्टविगर्हणापत्त्या तत्सूचितदोषपरिहारार्थं प्रायश्चित्तविधानमर्थवदित्यर्थः । ॥२२॥

## दृष्टे तत्परिमाणम् ॥२३॥

यद् विगुणात् कर्मणः फलं दृष्टं, न तत् कर्मफलम्, किन्तु स्वाभाविकम् । अतो यावत् कर्मणः परिमाणं तावदनुष्ठयमेवेत्यर्थः ॥२३॥

इति कातीयश्रौतसूत्रवृत्तौ प्रथमे परिभाषाध्याये साङ्गयज्ञस्वरूपादिनिरूपणी द्वितीया कण्डिका ॥२॥

[ मन्त्रलक्षणम् ]

मन्त्राणामिदानीं लिङ्गाद्विनियोगं वदन् तेषां स्वरूपनिर्णये अध्येतृप्रसिद्धिं विना अन्यत्प्रमाणं किमपि अव्यभिचरितमपश्यन् अध्येतृप्रसिद्धिमेव शरणीकुर्वाणस्तत्प्रसिद्धानेव मन्त्राननुवदति—

ऋचो यजूंषि सामानि निगदा मन्त्राः ॥ १ ॥

पादैश्छन्दोभिश्च बद्धा ऋचः। अनियताक्षराण्यपादबद्धानि च यजूंषि। प्रगीता मन्त्राः सामानि। 'ऋच्यध्यूढं साम गीयते' ( छा० १-६-३ ) इत्यनेन ऋगक्षराणामुपरि सामानि गीयन्ते। तत्र गीत्यंशानामेव सामशब्दवाच्यत्वम्, न ऋगक्षराणामपि। गीतेस्तत्र विशेषणत्वात्। आकृत्यधिकरणे ( पू० मी० १-२-१४ ) विशेषणे एव शक्तेः स्थापितत्वात्। अतएव रथन्तरादिशब्दानां गीतिमात्रवाचित्वम्, नतु तद्विशिष्टऋगक्षराभिधायित्वम्। 'अग्नीदग्नीन्विहर' (श०४-२-५-११) इत्यादयः प्रैषा निगदशब्देनोच्यन्ते। इमे एव मन्त्रा इत्यर्थः ॥१॥

[ यजुषां लक्षणम् ]

ऋक्सामयोर्वाक्यरूपत्वादेव तत्र कियदवधि वाक्यमित्याशङ्काया अभावात्, यजुषां तथात्वाभावेन तत्र वाक्यव्यवस्थासंशये वाक्यलक्षणमाह—

तेषां वाक्यं निराकाङ्क्षम् ॥ २ ॥

तेषां यजुषां यावति पदसमूहे उच्चारिते पदान्तराकाङ्क्षा न उदेति तावत्पर्यन्तमेकं वाक्यम्। यथा 'देवस्यत्वे त्यादि अग्नये जुष्टं गृह्णामि' ( शु० य० १. १० ) इत्येतत्पर्यन्तम्। तत्र हि एकस्यापि पदस्य परित्यागे साकाङ्क्षमेव भवत्यन्यत्पदजातम्। उक्ते तु तस्मिन् निराकाङ्क्षं भवति ॥ २ ॥

[ अध्याहारो मन्त्रेषु कार्यः ]

मिथः संबद्धम् ॥ ३ ॥

यत्र श्रूयमाणैः पदैराकाङ्क्षाशान्तिर्न भवति तत्र तच्छामकं तैः संबद्धं योग्यं पदमध्याहर्त्तव्यमित्यर्थः ॥ ३ ॥

[ अर्थानुसारेण मन्त्रविनियोगः ]

एवं मन्त्रस्वरूपे उक्ते तेषां कुत्र विनियोग इत्याकाङ्क्षायामाह—

तेषामारम्भेऽर्थतो व्यवस्था तद्वचनत्वात् ॥४॥

तेषां मन्त्राणां तत्तत्प्रकरणाम्नातानामारम्भे विनियोगे अर्थतः तत्तन्मन्त्रप्रतिपाद्याऽर्थानुरोधेन व्यवस्था कर्त्तव्या। कुतः ? तद्वचनत्वात्। तादृशार्थप्रतिपादकत्वात् ॥ ४ ॥

[ मन्त्रान्ते कर्म कर्त्तव्यम् ]

मन्त्रान्तैः कर्मादिः सन्निपात्योऽभिधानात् ॥५॥

अनुष्ठेयार्थस्मरणार्थत्वेन विनियुक्तानां मन्त्राणामनुष्ठानकाले प्रयुज्यमानानामन्तैः सह कर्मणामादिः संवन्धनीयः। मन्त्रमुच्चार्य तत्समाप्तिक्षणे एव यागादिक्रियाऽनुष्ठेयेत्यर्थः। कुतः ? अभिधानात्, समग्रमुच्चरितस्यैव मन्त्रस्य अर्थाभिधाने सामर्थ्यादित्यर्थः ॥ ५ ॥

अनियमं वात्स्यः ॥६॥

वात्स्य आचार्योऽस्मिन्विषये अनियमं मनुते। आदौ मन्त्रमुच्चार्य वा कर्मानुष्ठीयताम्, कर्म कृत्वा वा मन्त्र उच्चार्यताम्। नात्र नियमः कश्चिदित्यर्थः ॥६॥

**आदिं त्वाचार्याः ॥७॥**

आचार्याः मन्त्रान्ते एव कर्मणामादिं संबन्धनीयं युक्तं मन्वते। तदानीमेव मन्त्रेण स्मृत्वा कर्त्तव्यं कर्म सङ्गतं भवति। अन्यथा मन्त्रस्यादृष्टार्थताऽऽपद्येतेत्यर्थः ॥७॥

[ सूत्रे मन्त्रस्यादिमात्रोपादाने सर्वो मन्त्रः प्रयोज्यः ]

**त आद्युक्ताः ॥८॥**

ते मन्त्राः सूत्रमध्ये आदिमात्रेण प्रतीकेनोक्ताः सन्तः प्रयोगकाले सकलाः प्रयोज्याः। न तु सूत्रमध्ये यावानवयव उपात्तस्तावानेव इति ॥८॥

[ उत्तरमन्त्रस्यादिना पूर्वमन्त्रसमाप्तिः ]

**परादिना पूर्वान्तः ॥९॥**

परस्य मन्त्रस्य सूत्रोपात्तेन आदिना चिन्हभूतेन पूर्वस्य मन्त्रस्यान्तो ज्ञेयः ॥ ९ ॥

[ऋक्साममन्त्राणामुच्चैः पाठः याजुर्वैदिकानामुपांशु]

**उपांशु प्रयोगः श्रुतेः ॥१०॥**

यजुर्वेदमन्त्राणामग्निहोत्रादौ प्रयुज्यमानानामुपांशु उच्चारणं कार्यम्। कुतः। श्रुतेः, 'उच्चै र्ऋचा क्रियते उच्चैः साम्ना उपांशु यजुषा' (सत्या० सू० १-१-१). (का० सं० ३।६।५) इति श्रवणादित्यर्थः। इष्टि-पशु-सोमेषु विशेषस्य वक्ष्यमाणत्वान्न तेष्वस्य सूत्रस्य प्रवृत्तिः ॥१०॥

[ प्रैषाणामुच्चैः पाठः ]

**न सम्प्रैषाः ॥११॥**

'प्रोक्षणीरासादय' ( शु० य० १-२८ ) इत्यादिका याजुर्वैदिका अपि प्रैषा उपांशु नोच्चार्याः ॥११॥

[ बर्हिःशब्दो जातिनिमित्तो न संस्कारनिमित्तः ]

यत्र वेदे बर्हिःशब्दः श्रुतो 'बर्हिस्तृणाति' ( श० १-३-६-७ ) इत्यादौ, तत्र बर्हिः शब्दो लवनादिसंस्कारसंस्कृतार्थवाची ? उत दर्भत्वजातिमात्रवाची ? इति सन्देहे याज्ञिकैः संस्कृतेष्वेव तृणेषु बर्हिः शब्दप्रयोगात् तस्य संस्कारवाचित्वमेव। यद्यपि 'बर्हिरादाय गावोगता' इति जातिमात्रेऽपि क्वचित्प्रयोगो दृश्यते, तथापि तत्र तादृशदर्भसादृश्यात् प्रयोग इति पूर्वपक्षे प्राप्ते सिद्धान्तयति—

**कौशं बर्हिः ॥१२॥**

कुशा एव कौशम्। स्वार्थेऽण्। कुशा एव बर्हिः शब्देनोच्यन्ते न संस्काराः। संस्काररहितेषु केवलेष्वपि बर्हिःशब्दप्रयोगात्। जातिमपहाय केवलसंस्कारेषु क्वापि प्रयोगाऽदर्शनात्। एवं चिन्तायाः प्रयोजनं, पशुयागे "बर्हींषि प्राचीनाग्राणि चोदीचीनाग्राणि चावस्तृणाति" (श० ३-७-१-७) इति श्रुतं यूपावटस्तरणं केवलैरेव दर्भैः कर्त्तव्यं न संस्कृतैरिति १२॥

[ परिमाणानुक्तौ सामर्थ्यानुसारेण तत्कल्प्यम् ]

**अर्थात्परिमाणम् ॥१३॥**

यत्र बर्हिर्हविर्द्रव्य-वेदि-स्रुगादीनां किमपि परिमाणं नोक्तं तत्र यावता परिमाणेन प्रयोजनं सिद्ध्यत् तावत्परिमाणं कल्पनीयम्। यथा—वसोर्द्धाराहोमे स्रुक्परिमाणस्य अनुक्तत्वात् तत्र शुष्केष्टिवत् प्रयोगाद्बहिरेव "वाजश्चम इत्यत आरभ्य वेद् स्वाहा" (शु० य० १८, १—२९) इत्यन्तं पठता कस्मिंश्चित्पात्रे सन्ततं घृतं पातनीयम्, तस्याज्यस्य तोलनाद्युपायेन परिमाणं निश्चित्य तावदाज्यपरिमाणा स्रुक्कार्येति भावः ॥१३॥

यूननिर्माणप्रकारमाह—

**अयुग्धातूनि यूनानि ॥१४॥**

यूञ् बन्धने। यूनं सन्नहनम्, यज्ञियकाष्ठानां बर्हिषां च बन्धनार्था कुशनिर्मिता रज्जुरिति यावत्। सा च रज्जुर्विषमसङ्ख्याकतृणमुष्टिभिर्निर्मातव्या। यागे वेद्यामास्तरणीयस्य बर्हिषो बाहुल्यात् तद्बन्धनार्था रज्जुरपि बहुभिः कुशमुष्टिभिरयुग्मसङ्ख्याकैर्निर्मातव्येति भावः। अयुञ्जि धातूनि तृणमुष्टिप्रक्षेपा येषु तानीति। साम्प्रतं तु याज्ञिकैर्नवभिः कुशैर्यूनं निष्पाद्यते ॥१४॥

बर्हिषो बन्धनप्रकारमाह—

**प्रागग्रे यून उदगग्रं बर्हिराचिनोति ॥१५॥**

प्रागग्रां रज्जुं प्रसार्य तत्र उदगग्रं बर्हिर्निधाय बन्धनीयम् ॥१५॥

इध्मबन्धनप्रकारमाह—

**उदगग्रे प्रागग्रमिध्मम् ॥१६॥**

हस्तमिताः पलाशादि-वृक्षीयाः अष्टादश समिधः इध्मशब्देनोच्यन्ते। उदगग्रं यूनं प्रसार्य तत्र प्रागग्रमिध्मं निधाय बध्नीयात् ॥१६॥

**प्रत्यग्ग्रन्थीनवगूहति ॥१७॥**

इध्मं बर्हिश्च यूनेन गाढं बद्ध्वा यूनस्याग्रमूले एकीकृत्य एकीकृते अग्रमूले इध्मबर्हिषोः पश्चाद् (मूल) भागेन रज्ज्वा अधः प्रोतयित्वा प्रेरयेत् ॥१७॥

इध्मलक्षणमाह—

**अष्टादशेध्मं परिधिवृक्षाणाम् ॥१८॥**

परिधिवृक्षाणां वक्ष्यमाणानाम् ( का० श्रौ० २. ८. १ ) सम्बन्धीनि हस्तमितान्यष्टादश काष्ठानि इध्मः प्रत्येतव्यः ॥१८॥

**एकविंꣳशतिं वा ॥१९॥**

अथवा एकविंशतिसङ्ख्यकाष्ठक इध्मः कर्त्तव्यः ॥१९॥

**ततः परिधीनेके ॥२०॥**

एके आचार्या एकविंशतिसङ्ख्यकाष्ठकादिध्मात् त्रीणि काष्ठानि परिधित्वेनेच्छन्ति। पारिशेष्यादष्टादश काष्ठानि इध्मः। अन्येतु एकविंशति काष्ठानि इध्मः। परिधयस्तु पृथग् बाहुमात्रा इति ॥२०॥

**अपरिमितं प्रणयनीयं त्रियूनम् ॥२१॥**

गार्हपत्यैकदेशस्य आहवनीयं प्रति नयनं प्रणयनम्, तच्च प्रणनयनं चातुर्मास्यादौ इध्मेनाग्निं गृहीत्वा कर्त्तव्यं न कर्परादिनेति वक्ष्यति (का०५।४।२)। प्रणयनार्थमिध्मं प्रागुक्तेध्मकाष्ठसङ्ख्यापेक्षया अधिकतरकाष्ठवन्तं, तिसृभिः सन्नहनरज्जुभिर्बद्धं च कुर्यात् ॥२१॥

[ वेदबन्धनकालः ]

**निरुप्याज्यं वेदोऽसीति यजमानो वेदं करोति ॥२२॥**

दर्शपूर्णमासादौ आज्यनिर्वापानन्तरं वेदबन्धनं कार्यम् ॥२२॥

वेदबन्धनप्रकारमाह—

**कुशमुष्टिरॅ० सव्यावृत्तं वत्सजानुं, त्रिवृतं, मूतकार्यं वा ॥२३॥**

एकपञ्चाशत्कुशपत्राणां मुष्टिं गृहीत्वा वामपाणौ कृत्वा दक्षिणपाणिना प्रदक्षिणावृत्तं कृत्वा मध्यभागे मोटनद्वयकरणेन उपविष्टवत्सजानुसदृशं सम्पाद्य बध्नीयादित्येकः पक्षः। अथवा तं कुशमुष्टिं वेण्याकारेण बध्नीयादिति द्वितीयःपक्षः। अथवा स कुशमुष्टिः मूताकारः कार्यः। धान्यावापपात्रं तृणवर्त्यादिनिर्मितं मूतः तद्वत् क्रियत इति मूतकार्यस्तम् इति ॥२३॥

**पशु-ब्रह्मवर्चसान्नाद्यकामा यथासङ्ख्यम् ॥२४॥**

सव्यावृत्तं वत्सजानुसदृशं वेदं पशुकामः, त्रिवृतं ब्रह्मवर्चसकामः, मूताकारमन्नाद्यकामः कुर्यादित्यर्थः ॥२४॥

[ अवध्यर्थकस्याङोऽभिविध्यर्थकत्वम् ]

**आमुष्मादिति कर्मसु तच्च ॥२५॥**

पश्वादिकर्मसु यत्र यत्र "आप्रयाजेभ्यः" (का० ६. ४. १) इत्यादि सूत्रमध्ये प्रयोक्ष्यते तत्र तत्र आङ्संयुक्तं प्रयाजादिकमपि कर्म कर्त्तव्यं, अवधित्वेन न परित्याज्यमित्यर्थः। सर्वत्राङ् अभिविध्यर्थो न मर्यादार्थ इतिभावः ॥२५॥

[ अन्तत्वनिर्देशोऽपि अभिविध्यर्थः ]

**अन्तवचने च ॥२६॥**

"शंय्वन्तं भवति" ( का० श्रौ० ३.७१.३ ) "इडान्तं भवति" ( का० श्रौ० ५.६.२५ ) इत्यादौ अन्तशब्दप्रयोगेऽपि अन्तशब्दसंयुक्तं शंय्विडादिकमपि कर्त्तव्यं न परित्याज्यम् ॥२६॥

[ प्रतिकर्माहवनीयोद्धरणम् ]

**प्रतिकर्मोद्धरणमप्रसङ्गे ॥२७॥**

सर्वेषु कर्मसु पृथक् आहवनीय-दक्षिणाग्न्योरुद्धरणं कर्त्तव्यम्। यदि अन्यार्थमुद्धृतेन अनपवृक्तेन = असमाप्तकर्मणा अग्निना प्रसङ्गात्सिद्धिर्न स्यात्। यथा प्रतिपदि पौर्णमासेष्ट्या यक्ष्यमाणस्य यजमानस्य पौर्णमास्यां प्रातरन्वाधानार्थमुद्धृतेऽग्नौ सायं प्रातर्होमस्य प्रसङ्गात्सिद्धिः ॥२७॥

**अपवृत्तकर्मा लौकिकोऽर्थसंयोगात् ॥२८॥**

अपवृत्तं समाप्तं कर्म यस्मिन् सोऽपवृत्तकर्मा। यदर्थमुपात्तोऽग्निस्तस्मिन्कर्मणि समाप्ते लौकिकः प्रत्येतव्यः वैदिकमाहवनीयत्वं ततोऽपयातीत्यर्थः। कुतः ? अर्थसंयोगात्। तेनैव प्रयोजनेन संयोगात्। अतश्च प्रतीष्टि पृथगेवोद्धरणमिति ॥२८॥

[ अनारभ्याधीतानां प्रकृतिगामित्वम् ]

सन्ति कानि चिदङ्गानि किंचित्प्रकरणमनारभ्य पठितानि, तेषां प्रकृतिमात्रार्थत्वम् ? उत प्रकृतिविकृत्युभयार्थत्वमिति संशये पूर्वपक्षयति—

**अप्रकरणोत्पत्तिरनारभ्यवाद आश्रयित्वात्सर्वगुणः ॥२९॥**

प्रकरणे उत्पत्तिर्यस्य स प्रकरणोत्पत्तिः तथा न भवतीत्यप्रकरणोत्पत्तिः कस्य चित्फलवतः प्रधानस्य प्रकरणे अपठित इत्यर्थः। अत एव अनारभ्यवादः, स सर्वाङ्गः प्रकृति-विकृत्युभयार्थः स्यात्। कुतः ? आश्रयित्वात्, "पर्णमयी जुहूर्भवति" (तै० सं० का०३ प्र०५ अ०७) 'खादिरः स्रुवः' (का०श्रौ०१३-३३) इत्यादौ जुह्वादिकमाश्रित्यैव पर्णतादीनां प्रवृत्तत्वात्। जुह्वादीनां प्रकृतिविकृत्युभयसाधारण्यादिति भावः। एवं चानारभ्याधीतं सर्वं प्रकृतिविकृत्युभयगामीति फलितम् ॥२९॥

एवं पूर्वपक्षे प्राप्ते सिद्धान्तयति—

**प्रकरणे चाविशेषात् ॥३०॥**

च-शब्दः पूर्वपक्षव्यावृत्तौ। प्रकृतावेवानारभ्याधीतानां निवेशः। कुतः ? अविशेषात्— अविशेषेण जुह्वादिसाधारण्येन पर्णतादीनामपि अतिदेशेनैव विकृतावपि प्राप्तिसंभवात्। विकृतौ पुनर्विधाने पौनरुक्त्यापत्तेरिति भावः ॥३०॥

**दर्शनाच्च ॥३१॥**

अनारभ्याधीतानां प्रकृतिगामित्वे एव विकृतौ प्रयाजादिदर्शनमुपपद्यते। "तस्यै प्रयाजेषु तायमानेषु ब्राह्मणो वीणागाथी दक्षिणत" इत्युपक्रम्य तिस्रो गाथा गायति" (श० १३-४-२-९) इति श्रुतिः। एवं च यदि प्रकृतित एव धर्मा आगच्छेयुः तदानीमत्र प्रयाजदर्शन-मुपपन्नं स्यात्। अन्यथा अनारभ्यविधिसापेक्षत्वे प्रयाजादीनां प्राप्तिरेव तत्र न स्यादिति प्रयाजदर्शनमनुपपन्नं भवेत्।

विचारस्य प्रयोजनं, काम्यानां सामिधेनीकल्पानां (प्रकाराणां) उपदेशेन विकृतावपि प्राप्तत्वात् विकृतावप्यनुष्ठानं पूर्वपक्षे। सिद्धान्ते तु काम्यगुणस्य विकृतावतिदेशाऽभावात्, उपदेशेन च प्राप्त्यभावान्नानुष्ठानम् ॥३१॥

[ स्रुवादिभिन्नानां होमसम्बन्धपात्राणां वैकङ्कतत्वम् ]

**वैकङ्कतानि पात्राणि ॥३२॥**

सर्वाणि यज्ञपात्राणि विकङ्कत-वृक्षकाष्ठघटितानि कर्त्तव्यानि इति उत्सर्गः ॥३२॥

[ स्रुवादीनां खादिरत्वादिकम् ]

अस्यापवादमाह—

**खादिरः स्रुवः ॥३३॥ स्फ्यश्च ॥३४॥**

च शब्दात् खादिर एव भवति ॥३३॥ ॥३४॥

पालाशी जुहूः ॥३५॥

हूयते अनया सा जुहूर्होमसाधनभूता स्रुक् पलाशवृक्षकाष्ठनिर्मिता कार्या ॥३५॥

आश्वत्थ्युपभृत् ॥३६॥

उपभृन्नाम्नी स्रुक् अश्वत्थकाष्ठेन निर्मातव्या ॥३६॥

[ अहोमसंबन्धिनां पात्राणां वारणकाष्ठवत्त्वम् ]

वारणान्यहोमसंयुक्तानि ॥३७॥

यैः पात्रैर्होमो न क्रियते तानि पात्राणि वारणवृक्षकाष्ठघटितानि स्युः ॥३७॥

[ स्रुगादीनां लक्षणानि ]

बाहुमात्र्यः स्रुचः पाणिमात्रपुष्करास्त्वग्बिला हंसमुखप्रसेका मूलदण्डा भवन्ति ॥३८॥

सर्वा अपि स्रुचो जुहूपभृद्ध्रुवाप्रचरण्यग्निहोत्रहवण्याद्याः बाहुप्रमाणाः, पाणिप्रमाणमुखाः, त्वक्प्रदेशे बिलवत्यः, हंसमुखसदृशैकप्रणालिकाः, मूलदण्डा (अर्थादग्रमुखाः) कर्त्तव्याः ॥३८॥

अरत्निमात्रः स्रुवोऽङ्गुष्ठपर्ववृत्तपुष्करः ॥ ३९ ॥

अङ्गुष्ठपर्वप्रमाणेन वृत्तमुखः स्रुवः कार्यः ॥३९॥

स्फ्योऽस्याकृति,रादर्शाकृति प्राशित्रहरणं चमसाकृति वा ॥ ४० ॥

खड्गसदृशो वज्रः कार्यः । प्राशित्रं ब्रह्मणोभागः, तद् ह्रियते ऽनेनेति प्राशित्रहरम्, तत् दर्पणसदृशं वृत्तं भवति । तत्रावदान-विधानात् किञ्चित्खातवच्च भवति । अथवा चमसवत् चतुरस्रं भवतीति ॥ ४० ॥

[ ऋत्विजां गमनागमनमार्गः सोत्तरवेदिकयागेषु ]

चात्वालोत्करावन्तरेण सञ्चरः ॥ ४१ ॥

वरुणप्रघास-महाहविः—पशु-सोमादौ चात्वालोत्करयोरन्तरालेन सर्वेषां विहितकार्यार्थं गमनागमनमार्गो भवति ॥ ४१ ॥

[ ऋत्विजामिष्टिषु गमनागमनमार्गः ]

प्रणीतोत्कराविष्टिषु ॥ ४२ ॥

दर्शपूर्णमासादिषु प्रणीतोत्करयोरन्तरालेन सर्वैर्गन्तव्यम् ॥४२॥

इति कातीयश्रौतसूत्रवृत्तौ तृतीया कण्डिका ॥३॥

[ काम्ये प्रतिनिधिर्नास्ति ]

काम्ये कर्मणि विहितद्रव्यस्य अभावे तत्सदृशेन द्रव्यान्तरेण यागः कर्त्तव्यः ? उत तदलाभे अननुष्ठानम् ? इति संशये पूर्वपक्षयति—

चोदिताभावेऽनारम्भस्तत्सिद्धित्वात्तस्य ॥ १ ॥

विहितस्य द्रव्यस्याभावे काम्यकर्मणोऽनारम्भः, कुतः? तस्य विहितस्य कर्मणस्तेनैव द्रव्येण सम्पत्तुं युक्तत्वात्। द्रव्यदेवतयोरेव कर्मस्वरूपत्वात्, अन्यतराभावे तस्यानिष्पत्तेरिति भावः ॥ १ ॥

[ नित्ये कर्मणि प्रतिनिधिः ]

अनेनैव न्यायेन नित्येऽपि कर्मणि विहितद्रव्यालाभे अननुष्ठाने प्राप्तेतदप वादार्थमाह—

नियते सामान्यतः प्रतिनिधिः स्यात् ॥ २ ॥

नित्ये कर्मणि विहितद्रव्याभावे तत्स्थाने तत्सदृशद्रव्यान्तरस्य ग्रहणं स्यादेव। कुतः? सामान्यतः सादृश्यादित्यर्थः ॥ २ ॥

[ आरब्धे काम्ये प्रतिनिधिः ]

विहितद्रव्यलाभेन प्रथमतः काम्ये कर्मण्यारब्धे अनन्तरं च तस्यापचारे जाते तत्कर्म प्रतिनिधिना समापनीयम्? उत न? इति संशये सिद्धान्तमाह—

आरम्भान्नियमः ॥ ३ ॥

काम्यस्य कर्मण आरब्धत्वात् नियमः, प्रतिनिधिनापि समाप्तिरवश्यं कर्त्तव्येत्यर्थः। ततश्च अवश्यसमापनान्यथानुपपत्त्या प्रतिनिधिरपि भवतीत्यभिप्रायः ॥ ३ ॥

किंच—

दोषश्चासमाप्तौ स्यात्सामान्यात् ॥ ४ ॥

आरब्धस्य काम्यस्य कर्मणोऽसमाप्तौ दोषोऽपि भवतीति गम्यते। कुतः? सामान्यात्, शिष्टविगर्हणसामान्यादित्यर्थः। यथैव नित्याननुष्ठाने शिष्टा विगर्हन्ते एवमारब्धस्यापि काम्यस्य अपरिसमापने शिष्टा निन्दन्ति। नहि दोषाभावे शिष्टविगर्हणं भवितुमर्हति ॥ ४ ॥

दर्शनाच्च ॥५॥

दर्शनमप्यत्रास्ति। "यदि सोमं न विन्देत्पूतीकानभिषुणुयात्" (ता० ब्रा० ९-५-३) इति। सोमाभावे पूतीकेन समाप्त्यभिधानमप्यत्र लिङ्गम् ॥५॥

दर्शनमाक्षिपति—

अन्यार्थं दर्शनं, न पुनर्ग्रहणात् ॥६॥

यद्दर्शनं तदन्यार्थं भवति इदं तु न तथा। कुतः? पुनर्ग्रहणात्, द्रव्यान्तरस्य पूतीकस्य पुनर्विधानादित्यर्थः। यथा ब्रह्मवर्चसकामनया विहिते सौर्ययागे होमार्थं प्रवृत्ते वाक्ये प्रयाजदर्शनं "प्रयाजे प्रयाजे कृष्णलं[1] जुहोति" (तै० सं० २।३।२।) इति। एवं पूतीकविधानार्थमेव प्रवृत्तमिदं वाक्यं कथं दर्शनं भवितुमर्हति, कथं वा इदमवलम्ब्य असमाप्तौ दोष उद्भावयितुं शक्यत इति भावः ॥६॥

---

१ कृष्णलशब्देन मापपरिमित-सुवर्णस्य पञ्चमांश उच्यते ( याज्ञ० स्मृ० आचा० ३९३ )।

एवमाशङ्किते समाधत्ते—

अन्यार्थं पुनर्ग्रहणम् ॥७॥

इदं पूतीकस्य[1] पुनर्ग्रहणं पुनर्विधानमन्यार्थमेव भवितुमर्हति। अयं भावः—यजेतेत्यनेन देवतोद्देश्यकद्रव्यत्यागरूपस्य यागस्य विधानात् यागस्यावश्यकर्त्तव्यता प्राप्ता। तत्र विहितस्य सोमस्याभावे प्रतिनिधिशास्त्रेण सुसदृशानां विसदृशानां च द्रव्याणां प्राप्तिर्भवति। सोमाभाव इति पूर्वोक्तवाक्येन तत्र द्रव्यविशेषो नियम्यते। एवं च यथा कथंचित् समाप्तेः कर्त्तव्यतायां प्राप्तायां तत्र विसदृशस्यापि द्रव्यस्य पूतीकस्य नियमः क्रियते इति कृत्वा इदमपि समाप्तौ दर्शनमेव ॥७॥

[ पयोव्रतादावपि प्रतिनिधिरस्ति ]

सोमयागे—"पयो व्रतं ब्राह्मणस्य, यवागू[2] राजन्यस्य, आमिक्षा[3] वैश्यस्य" (तै० आ० प्र० २ अनु० ८) इति श्रुतेर्ब्राह्मणादीनां पयोयवाग्वामिक्षा आहाराः उक्ताः, तत्र व्रन्यालाभे व्रतकरणाऽशक्तौ च प्रतिनिधिरस्ति न वा ? इति संशये उच्यते—

व्रते प्रसङ्गो न नियमशब्दात् ॥८॥

सूत्रमिदं पूर्व-पक्ष-परतया सिद्धान्तपरतया च आवृत्या योजनीयम्। तत्र पूर्वपक्षे प्रसङ्गशब्देन नञ् अन्वेति। सिद्धान्ते च नियमशब्देन सह नञोऽन्वयः। तथा चायमर्थः—पूर्वपक्षे व्रते पयोव्रतादौ प्रतिनिधेः प्रसङ्गः प्राप्तिर्न भवति। कुतः ? नियमशब्दात् "व्रतꣳ ह्येवास्यातोऽशनं भवति" (श० ३-१-२-१) इति एवकारश्रवणादित्यर्थः। एवं च एवकारेण द्रव्यान्तरव्युदासात् प्रतिनिधिमन्तरा अन्यस्य कस्यचिदविहितत्वेन निषेधायोगात् प्रतिनिधिरेव एवकारेण व्युदस्यते इति। एवं प्राप्ते सूत्रावृत्त्या सिद्धान्तयति—व्रते प्रसङ्गो न नियमशब्दात्। व्रते प्रतिनिधेः प्राप्तिर्भवति। कुतः ? न नियमशब्दात् नियमशब्दाभावादित्यर्थः। व्रतं ह्येवेत्यत्र एवकारो नियमबोधकः अर्थान्तरव्युदासको न, किन्तु पूर्वोक्तस्य "पुरा केशश्मश्रोर्वपनाद्यत्कामयेत तदश्नीयात्" (श० ३-१-२-१) इति इष्टाशनस्य स्तावकः। अतः प्रतिनिधिरस्त्येवेति भावः ॥८॥

[ प्रतिनिहितद्रव्यस्य श्रुतद्रव्यशब्देनैवाभिधानम् ]

विहितस्य छागादेरभावे तत्सदृशद्रव्यान्तरे मेषे प्रतिनिहिते "छागस्य वपाया मेदसो जुषेताꣳ हविर्होतर्यज" (य. २१-४१) इत्यादिषु मन्त्रेषु किं छागशब्द उच्चारणीयः ? उत मेषशब्द उच्चारणीय ? इति संशये प्रतिनिधिबोधकशब्दो मेष एवोच्चारणीय इति पूर्वपक्षः। मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वं प्रयोजनमुक्तं, तत्त्वं च शक्त्या स्मरणीयार्थप्रतिपादकत्वमिति निर्णीतं नवमे। शक्त्या प्रतिपादनं च न श्रुतशब्देन भवितुमर्हति। अतश्च शक्त्या प्रतिपादनसिद्ध्यर्थं श्रुतद्रव्यशब्दं परित्यज्य प्रतिनिधिबोधकशब्देनैव प्रतिनिधिर्विधेय इति उत्सूत्रे[4] पूर्वपक्षे प्राप्ते सिद्धान्तमाह—

---

१ दिविष्ठस्य सोमस्य गायत्र्या भूलोकं प्रति समाह्रियमाणस्य यः खण्डो भूमौ पतितः स पूतीको नाम लताविशेष इत्युक्तं ताण्ड्ये—"तस्य ये ह्रियमाणस्यांशवः परापतंस्ते पूतीकाः समभवन्" (८।४।५।३) इति।

२ 'तण्डुलैः शिथिलपक्वा यवागूः, इति कर्कः।

३ पयस्तप्तं कृत्वा तापविशिष्टे एव तस्मिन् पयसि दधनि प्रक्षिप्ते सति तत्पयो द्विधा जायते घनीभूतं द्रवीभूतं च। तत्र यो घनीभूतोंऽशः सा आमिक्षा। द्रवीभूतं तु वाजिनम्।

४ उत्क्रान्तः सूत्रमुत्सूत्रः। यः पूर्वपक्षः सूत्रकारेण नोक्तः स उत्सूत्र इत्युच्यते।

**शब्देऽविप्रतिपत्तिः ॥९॥**

मन्त्रगतद्रव्यबोधकशब्दे अविपरिणामः ऊहो न कार्यः। श्रुतद्रव्यशब्दस्यैवोच्चारणं कार्यमिति भावः। अयमाशयः—यत्र श्रुतद्रव्याभावे तत्स्थाने द्रव्यान्तरं विहितं तत्रैव द्रव्यान्तरबुद्धिरुदेति, प्रतिनिधिस्थाने तु न तथोदेति। प्रतिनिधिमुपाददानाः पुरुषाः तत्र यत्स्थाने प्रतिनिधिरुपात्तस्तद्बुद्धिमेव कुर्वते। यथा गुरुपुत्रे गुरुप्रतिनिधौ गुरुबुद्धिं कुर्वन्ति। एवं प्रकृतेऽपि श्रुतद्रव्यबुद्ध्यैव प्रतिनिधेरुपादानात् श्रुतद्रव्यशब्देनैव प्रतिनिध्युच्चारणम् ॥९॥

[ पूतीकानां सोमशब्देनैवाभिधानम् ]

नन्वेवमस्तु यत्र द्रव्यान्तरबुद्धिर्नास्ति तत्र श्रुतशब्देनैवोपलक्षणम्, यत्र तु विधिनैव द्रव्यान्तरमुपात्तं यथा "सोमाभावे पूतीकानभिषुणुयात्" ( ता०९.५.३ ) इत्यादौ, तत्र तु विशेषवचनात् प्रतिनिधिशब्देनैव विधानमस्तु इत्याशङ्कायामाह—

**सोमेन, जात्यभावात् ॥१०॥**

तत्रापि सोमशब्देनैवोच्चारणम्। कुतः? जात्यभावात्, तत्र विहितद्रव्यपरित्यागेन जात्यन्तरस्य विध्यभावात्। द्रव्यान्तरबुद्ध्या पूतीकस्य नात्र विधानं, किन्तु यागविधिशास्त्रेणैव सर्वेषां द्रव्याणां प्राप्तौ पूतीकानां नियमनमात्रम्। अतः पूतीकानामपि सोमबुद्ध्यैव विधिना उपादानात् सोमशब्देनैवोच्चारणम् ॥१०॥

[ पृषदाज्यस्याज्यशब्देनैवाभिधानम् ]

यद्येवं यत्र द्रव्यान्तरस्यैव वचनाद्विधानं यथा पृषदाज्ये, ( दधिमिश्रितमाज्यं पृषदाज्यमुच्यते ) तत्र तद्बोधकेषु "देवाँ आज्यपाँ आवह" ( का. हौ. प. १।२ ) इत्यादिषु मन्त्रेषु देवान् आज्यपृषदाज्यपान् इत्येवोच्चारणं भवतु, युक्तं हि तत्र आज्यदध्नोः संमिश्रणाद् द्रव्यान्तरत्वम्। श्रूयते च—"द्वयं वा इदं सर्पिश्चैव दधि च" ( श० ३·८ ४·७ ) इति। एवं प्राप्ते आह—

**आज्ये चादर्शनात् ॥११॥**

आज्ये च विपरिणामो न कार्यः। कुतः? तत्रापि द्रव्यान्तरस्यादर्शनात्। न पृषदाज्यं नाम द्रव्यान्तरम्, किन्तु आज्ये दधिपृषत्तारूपो गुणो विधीयते। द्वयं वेत्यादि अपि गुणभूतस्य दध्नः प्रशंसापरमेव। अतश्च न शब्दान्तरस्यात्रापि प्रक्षेपः ॥११॥

अत्र लिङ्गमप्यस्तीत्याह—

**पशौ मन्त्रवर्णात् ॥१२॥**

पृषदाज्यसाधनके पशुयागेऽपि 'स्वाहा देवा आज्यपान् (शु० म० २१·४०) इत्येव मन्त्रः पठ्यते, नतु स्वाहा देवा आज्य-पृषदाज्यपानिति। अतो मन्त्रवर्णादपि न शब्दान्तरस्य प्रक्षेपः ॥१२॥

**श्रुतेश्च ॥१३॥**

"अथ पृषदाज्यं गृह्णाति" ( श० ३·८·४·७ ) इति एकवचनश्रवणादपि अयमर्थो गम्यते। यद्यत्र दध्नोऽपि प्राधान्यं स्यात्तदा द्विवचनं श्रूयेत, न च श्रूयते ॥१३॥

[ वैकल्पिकोपात्तद्रव्यापचारे प्रतिनिधेरेवोपादानम् ]

अथ यत्र कर्मणि विकल्पेन व्रीहियवादीनां विधानं तत्र एकं द्रव्यमुपादाय कर्मणि प्रवृत्ते कर्ममध्ये च तस्मिन्द्रव्ये नष्टे अनन्तरं वैकल्पिकस्य द्रव्यान्तरस्य उपादानं भवितु मर्हति? अथवा श्रुतद्रव्यसदृशस्यैव उपादानम्? इति संशये 'अश्रुतौ ह्यनुमानं स्यात्' इति

न्यायेन वैकल्पिकस्यापि श्रुतद्रव्यस्य अलाभे सत्येव प्रतिनिध्युपादानं युक्तम्, ? न तु श्रुतद्रव्यस्य वैकल्पिकस्य सत्वे इति प्राप्ते आह—

**विकल्पे प्रवृत्तं, कर्मान्तरत्वात् ॥ १४ ॥**

विकल्पस्थले यद् द्रव्यमुपादाय पूर्वं कर्म प्रवृत्तं तस्यैव प्रतिनिधिरुपादेयः । कुतः ? द्रव्यान्तरोपादाने द्रव्यान्तरबुद्ध्या कर्मान्तरबुद्ध्यापत्तेः ।

"रूपं[1] कालोऽनुनिर्वापः श्रपणं देवता तथा । आदौ ये विधृताः पञ्चास्त इमे सर्वदा स्मृताः" ( त्रिका० मं० का० २६ )

इति न्यायेन वैकल्पिकस्थले प्रथमं यद् द्रव्यमुपादत्ते यजमानस्तदेव यावज्जीवं तस्य द्रव्यं भवति । तद्बुद्ध्या वैकल्पिकं द्रव्यमेव नास्ति । तत्तु द्रव्यान्तरमेव । अतश्च तद्ग्रहणे कर्मान्यत्वमेवापद्येत ॥ १४ ॥

[ प्रतिनिधिनाशे श्रुतसदृशस्योपादानं न प्रतिनिधिसदृशस्य ]

यदि कंचित्प्रतिनिधिमुपादाय कर्मण्यारब्धे मध्ये च तस्य नाशे अनन्तरं प्रतिनिधिसदृशमेव द्रव्यान्तरमुपादेयम् ? उत श्रुतद्रव्यसैवोपादेयम् ? इति संशये पूर्वन्यायेन प्रतिनिधिसदृशस्यैव द्रव्यस्योपादाने प्राप्ते आह—

**प्रतिनिधौ, तत्कालात् ॥ १५ ॥**

प्रतिनिहिते द्रव्ये नष्टे न तत्सदृशमुपादेयम् । कुतः ? तत्कालात् । श्रुतद्रव्याभावे सत्येव हि तस्य प्रतिनिधिः प्रवर्त्तते । तत्सत्वे तु श्रुतमेव द्रव्यमुपादेयम् ॥ १५ ॥

[ कार्यासमर्थश्रुतद्रव्यसत्वेऽपि तत्समर्थप्रतिनिधेरेवोपादानम् ]

यत्र 'खादिरः स्रुवः' (का० श्रौ० १।३।३३। 'खादिरो यूपः'[2] (आप० श्रौ० ७।१।१६) इत्यादिना विहितं खदिरादि मुख्यं द्रव्यं होमादिकार्यासमर्थमनुपलब्धं वा वर्त्तते, प्रतिनिधिद्रव्यमुदुम्बरादि च होमादिकार्यसमर्थमस्ति, तदा किं मुख्यं द्रव्यं ग्राह्यम् ? उत प्रतिनिधिद्रव्यम् ? इति संशये 'मुख्यामुख्ययोर्मुख्ये संप्रत्यय' इति न्यायेन मुख्यस्यैव ग्रहणे प्राप्ते आह—

**अर्थ-द्रव्यविरोधेऽर्थसामान्यं तत्परत्वात् ॥ १६ ॥**

कार्य-मुख्यद्रव्ययोर्विरोधे कार्यसिद्धिसमर्थं प्रतिनिधिद्रव्यं ग्राह्यम् न मुख्यम् । कुतः ? तत्परत्वात्—द्रव्यस्य प्रयोजनार्थत्वात् । अतः कार्यासमर्थं मुख्यमपि द्रव्यं न ग्राह्यम् ॥१६॥

[ विहितगुणकेऽपि प्रतिनिधौ अविहितगुणकस्यापि श्रुतस्यैवोपादानम् ]

राजसूये नैर्ऋतयागे "कृष्णव्रीहीणां नखनिर्भिन्नानां दर्विहोमः" (का० श्रौ० १५।३। १४ । इति कृष्णानां व्रीहीणां होमो विहितः, तत्र मुख्यस्य विहितव्रीहिद्रव्यस्याकृष्णत्वं, प्रतिनिधिभूतस्य नीवार[3]द्रव्यस्य च कृष्णत्वम्, तत्र किं व्रीहयो ग्राह्या ? उत नीवारा ? इति संशये गुणानुरोधेन नीवाराणामुपादाने प्राप्ते आह—

---

१ रूपं कर्मस्वरूपं दाक्षायण-पौर्णमासेष्ट्यादिकम् । कालः उदितानुदितादिः । अनुनिर्वापः वैमृधादिष्टौ । श्रपणं हविषः गार्हपत्ये वा ऽऽहवनीये वा । देवता ऐन्द्रं भवति माहेन्द्रं वेति । एते पञ्चादिविकल्पाः । अन्ये सर्वे इच्छाविकल्पाः ।

२ छेदन-तक्षणादिभिर्दृष्टसंस्कारैः प्रोक्षणादिभिरदृष्टसंस्कारैश्च साध्यः पशुबन्धनार्थः काष्ठविशेषो यूपः।

३ व्रीहिसदृशो धान्यविशेषो नीवारः । यः खलु ऋषिपञ्चमीव्रतादौ भक्ष्यते । 'तिन्नी' इति भाषायां प्रसिद्धः ।

**गुण-द्रव्ययोर्द्रव्यं प्रधानयोगात् ॥ १७ ॥**

गुण-मुख्यद्रव्ययोर्विरोधे गुणमनादृत्य मुख्यद्रव्यमेव ग्राह्यम्। कुतः? प्रधानयागेन सह द्रव्यस्य संबन्धात्। अतः सन्निकृष्टं यागस्य द्रव्यं, विप्रकृष्टो गुणः ॥ १७ ॥

एवं प्राप्ते आह—

**न समत्वात् ॥ १८ ॥**

न द्रव्यमेव प्रधानयोगि, किन्तु गुणोऽपि। कुतः? सदृशत्वात्। यथा श्रुतत्वाद् द्रव्यं प्रधानयोगि, तथैव श्रुतत्वाद् गुणोऽपीति। अन्तरा पूर्वपक्षोऽयम् ॥ १८ ॥

एवं प्राप्ते उक्तमेव सिद्धान्तं स्थापयति—

**गुणानुग्रहात् ॥ १९ ॥**

गुणविशिष्टं द्रव्यमेव प्रधानयोगि। गुणस्तु तत्र विशेषणमिति ॥ १९ ॥

इति कातीयश्रौतसूत्रे वृत्तौ-प्रथमाध्याये चतुर्थी कण्डिका ॥ ४ ॥

---

[ श्रुत्यर्थपाठैः क्रमनियमः ]

यत्र एकप्रधानोद्देशेन अनेकान्यङ्गानि विहितानि, तत्र अङ्गानुष्ठाने कश्चित् क्रमविशेष आस्थेयः? अथवा अनियमेन कर्त्तव्यान्यङ्गानि? इति संशये पूर्वपक्षयति—

**कर्मणामानुपूर्व्यं न, युगपद्भावात् ॥१॥**

अङ्गकर्मणामनुष्ठाने क्रमो नास्ति। कुतः? युगपद्भावात्—युगपदेव प्रधानेन संबन्धादित्यर्थः। अयं भावः। प्रधानं फलोद्देशेन विहितम् अङ्गानुपकृतं सत् फलजनने सामर्थ्यमनुपलभमानं स्वोपकारकाण्यङ्गान्यपेक्षते। अङ्गान्यपि तत्प्रकरणे पठितानि प्रयोजनमाकाङ्क्षन्ति। तत्र नष्टाश्व[1]दग्धरथन्यायेन अ[2]ङ्गप्रधा[3]नयोः संबन्धो भवति। तत्रापि कस्याङ्गस्य प्रधानेन सह प्रथमं संबन्धः, कस्य चानन्तरमित्यपेक्षायाम्, एकप्रकरणपठितानां क्रमकल्पने प्रमाणाभावात् एकस्मिन्नेव क्षण प्रधानेन सह संबन्धस्यापेक्षणाच्च यद्यपि युगपदेव संबन्धो भवति, तथापि अनुष्ठानसमये परिमितैः कर्तृभिस्तावतां बहूनामङ्गानां युगपदनुष्ठानाशक्तेः अवश्यं कस्मिंश्चित् क्रमे आश्रयणीये अनियमेन यः कश्चित् क्रम आश्रयणीयः ॥१॥

हेत्वन्तरमप्यस्तीत्याह—

**अर्थनिर्वृत्तेश्च ॥२॥**

येन केनचित् क्रमेण अङ्गानुष्ठाने क्रियमाणे अङ्गकलापनिष्पत्तिः सुखेन भवेत्। क्रम विशेषस्याश्रयणे तु विलम्बः स्यात्। तस्मादङ्गानुष्ठाने क्रमनियमो न ॥२॥

एवं प्राप्ते सिद्धान्तयति—

**स्याद्वाऽऽनुपूर्व्यनियमः श्रुत्यर्थक्रमेभ्यः ॥३॥**

---

१ द्वौ रथिनौ स्वं स्वं रथमारुह्य मृगयार्थं वनं गतौ। तत्र एकस्य अश्वा विनष्टाः, अपरस्य रथो ऽग्निनादग्धः, तावुभावपि मिलित्वा तवाश्वा विनष्टाः मम रथो नष्टः उभावपि संयोक्ष्यावहे इति प्रतिज्ञाय एकस्य रथे अपरस्य अश्वान् संयोज्य गृहमागतौ। अयं नष्टाश्व-दग्धरथन्यायः।

२ यत् प्रधानोपकारकं तदङ्गम्।

३ फलोद्देशेन यद् विहितं तत्प्रधानम्।

वा शब्दः पक्षव्यावृत्तौ । अङ्गकर्मणामनुष्ठाने श्रुत्युक्तः क्रम आश्रयणीयः । कुतः ? श्रुतेः, अर्थात्, क्रमाच्च । श्रुतेस्तावत्—"तेषां गृहपतिः प्रथमो दीक्षते, अथ ब्रह्माणं दीक्षयति, अथो-द्गातारम्" (श० १२·१·१·१·११) इत्यादि । द्वादशाहसत्रे—"ये यजमानास्त एवर्त्विजः सत्रेषु" (का० श्रौ० १२·१·८) इत्युक्तत्वात् सर्वेषां यजमानत्वात् सर्वेषां दीक्षा विधीयते, तत्र क्रमविधा-यिका इयं श्रुतिरिति ।

आदौ अवघातः ( कण्डनादिः ) ततः पेषणमिति क्रमोऽर्थाद्बोध्यः ।

क्रमो द्विविधः, श्रुति (ब्राह्मण) पाठक्रमो मन्त्र-पाठक्रमश्च । उभयविधोऽपि क्रमः क्रमनि-यमे कारणमित्यर्थः । तस्माद् ब्राह्मण—पाठक्रमेण मन्त्र-पाठक्रमेण च कर्मानुष्ठानम् ॥३॥

अत्र हेत्वन्तरमप्यस्तीत्याह—

## प्राकृतं च विकृतौ ॥४॥

[1]प्रकृतिवद्वि[2]कृतिः कर्त्तव्येति नियमेन विकृतौ सर्वे प्रकृतिधर्मा आगच्छन्ति । तेषां च प्राकृतानां पदार्थानां महापितृ-यज्ञादौ प्राकृतपाठक्रमेणैवानुवादो दृश्यते । यदि पाठक्रमेणानु ष्ठानं न स्यात् तदा तेन क्रमेणानुवादो न स्यात् । अतो नियतक्रमेणैवाङ्गकर्मणामनुष्ठानम् ।४॥

[ पाठक्रमादर्थक्रमस्य बलीयस्त्वम् ]

पयोयागे विहितगोदोहनार्थम् आदौ पलाशशाखां छित्वा ततस्तया छिन्नशाखया वत्सानां निवारणमिति वत्सापाकरणाय शाखाच्छेदनं निहितम् । "स वै पर्णशाखया वत्सानपाकरोति तामाच्छिनत्ति" (श० १·६·४·१ इति वाक्येन तु वत्सापाकरणानन्तरं शाखाच्छेदनं प्राप्यते । तत्र किं पाठक्रमेणानुष्ठानम् ? उत अर्थक्रमेण ? इति संशये आह—

## विरोधेऽर्थस्तत्परत्वात् ॥ ५ ॥

पाठक्रमार्थक्रमयोर्विरोधे अर्थक्रमो बलवान्, न पाठक्रमः । कुतः ? पाठस्यार्थपरत्वात् । अतः पूर्वं छेदनं पश्चाच्छिन्नया तया वत्सापाकरणम् ॥ ५ ॥

[ श्रौतक्रमस्य सर्वापेक्षया बलवत्त्वम् ]

सꣳस्थिते यज्ञे ब्राह्मणं तर्पयितवै ब्रूयात् (श० ६·७·३·२८) इति श्रुत्या यज्ञसमाप्त्यनन्तरं "ब्राह्मणं तर्पयितवै" इति प्रैषोऽध्वर्युणा देय इति प्राप्नोति । उक्तायाः श्रुतेः पाठस्तु स्विष्टकृ द्याग—प्राशित्रावदानयोर्मध्ये वर्त्तते । अतः पाठक्रमात् स्विष्टकृत्समनन्तरं प्रैषः प्राप्नोति । तत्र किं समाप्तौ प्रैषो देय ? उत स्विष्टकृदन्ते ? इति संशये आह—

## श्रुतिः क्रमादानुमानिकत्वात् ॥ ६ ॥

श्रुतिपाठक्रमाच्छ्रुतेरेव बलीयस्त्वम् । कुतः ? पाठक्रमस्यानुमानिकत्वात् । यतोऽनेन क्रमेण पाठः, अतः अनेन क्रमेण पदार्था अनुष्ठेया इति पाठक्रमे अनुमानम्, तच्च संस्थिते यज्ञे इति प्रत्यक्षश्रुतितो दुर्बलम् ॥ ६ ॥

[ चोदनापाठान्मन्त्रपाठो बलवान् ]

'सोऽसावाज्यमधिश्रयति इषेत्वेति, तत्पुनरुद्वासयत्यूर्जेत्वेति' (श० १·२·६·६) इति श्रुति पाठेन आज्याधिश्रयणानन्तरमेव आज्योद्वासनं प्राप्नोति । मन्त्रपाठेन तु इषेत्वेति आज्याधि-

---

१ यत्र कृत्स्नाङ्गोपदेशः सा प्रकृतिः ।

२ यत्र विशेषाङ्गमात्रमुपदिश्यते अङ्गान्तराणि तु प्रकृतेरतिदिश्यन्ते सा विकृतिः ।

श्रयणमन्त्रानन्तरं घर्मोऽसीत्यादि (शु० य० १. २२) पत्नीसन्नहनान्तं मन्त्रजातमुक्त्वा ऊर्जेत्वा (शु० य०१. ३०) इति आज्योद्वासनमन्त्रस्य पाठात् पत्नीसन्नहनानन्तरम् आज्योद्वासनं प्राप्नोति इत्येवं ब्राह्मणपाठ—मन्त्रपाठयोर्विरोधे किं कर्त्तव्यम् ? इति संशये आह—

**मन्त्रचोदनयोर्मन्त्रबलं प्रयोगित्वात् ॥ ७ ॥**

मन्त्रपाठ—ब्राह्मणपाठयोर्विरोधे मन्त्रपाठो बलवान् न ब्राह्मणपाठः। कुतः ? मन्त्रपाठस्य प्रयोगे उच्चार्यमाणतया अन्तरङ्गत्वात् ॥ ७ ॥

एवं प्राप्ते अन्तरा पूर्वपक्षयति—

**न समत्वात् ॥ ८ ॥**

मन्त्रपाठो बलवानिति यदुक्तं तन्न। कुतः ? समत्वादुभयोः। कर्मणि करिष्यमाणकर्मणः स्मरणार्थं मन्त्रः प्रयुज्यते। विधिवाक्यं तु कर्मणो विधायकम्। अतो विधिवाक्येन पूर्वं पदार्थे विहिते सति पश्चात्तत्स्मरणार्थं मन्त्रः प्रयुज्यते। अतः सममेतत् ॥८॥

एवं प्राप्ते सिद्धान्तयति—

**गुणानां तु भूयस्त्वात् ॥ ९ ॥**

तुशब्दः पक्षनिरासाय। मन्त्रेषु श्रुतिपाठापेक्षया गुणानां बाहुल्यात् मन्त्रपाठ एव बलवान्। मन्त्राणां प्रयोगकाले उच्चारणविधानात् मन्त्रा उत्तरमुत्तरं पदार्थं झटिति स्मारयितुं शक्नुवन्ति। विधिपाठस्य तु मन्त्रवदुच्चारणाभावात्, अर्थवादादिना व्यवधानाच्च मन्त्रवत्स्मारयितुमशक्यत्वम्। अतो मन्त्रपाठे गुणभूयस्त्वम् ॥ ९ ॥

[ पदार्थानुसमयः ]

इदानीमिदं विचार्यते—यत्र बहूनि प्रधानानि एककाले अनुष्ठेयत्वेन विहितानि तत्र सर्वेषां प्रधानानां स्वैः स्वैरङ्गैः सह सम्बन्धस्य प्राप्त्या एकैकं प्रधानं प्रति तेषामेवाङ्गानामावृत्त्याऽनुष्ठाने प्राप्ते तत्र एक-प्रधानसंबन्धि सर्वमङ्गमनुष्ठाय ततः प्रधानान्तरसंबन्धि तदेव अङ्गजातमावर्त्तनीयम् इति काण्डानुसमयः कर्त्तव्यः ? अथवा एकमेकमङ्गं सर्वेष्वपि प्रधानेष्वनुष्ठाय पुनरङ्गान्तरं तेषु सर्वेष्वावर्त्तनीयम् इति पदार्थानुसमयः कर्तव्य ? इति संशयः। एकं प्रधानमुद्दिश्य तत्तत्संबन्धिना यावत्पदार्थकाण्डेन अनुसमयः अनुष्ठानं काण्डानुसमयपदार्थः। अनेकप्रधानोद्देशेन एकैकेन पदार्थेन आवृत्तेन अनुसमयः अनुष्ठानं पदार्थानुसमयपदार्थः। तत्र काण्डानुसमय एव कर्त्तव्यः न पदार्थानुसमयः। पदार्थानुसमये आश्रीयमाणे कस्मिंश्चिदङ्गिनि प्रथमक्षणे कंचित्पदार्थं प्रथममनुष्ठाय द्वितीयस्मिन्नङ्गिनि द्वितीयक्षणे स एव पदार्थोऽनुष्ठेयो भवति। एवं च सति अङ्गिनः स्वप्रथमपदार्थानुष्ठानानन्तरं द्वितीयपदार्थानुष्ठानं द्वितीय क्षणे यत्प्राप्तं तद्बाधितं भवति। तत्तु न युक्तम्। अतः तदबाधाय काण्डानुसमय एवाङ्गीकार्य इति पूर्वपक्षे प्राप्ते आह—

**तुल्यसमवाये सामान्यपूर्वमानुपूर्व्ययोगात् ॥१०॥**

तुल्यानां प्रधानानां सहानुष्ठाने कर्त्तव्ये यदङ्गं सर्वसाधारणं तत्पूर्वं कर्त्तव्यम्। एकं पदार्थं सर्वत्र प्रथममनुष्ठाय अनन्तरं द्वितीयः पदार्थस्तथैवानुष्ठेय इति पदार्थानुसमय एव कर्त्तव्य इत्यर्थः। कुतः ? आनुपूर्व्ययोगात्, तदानीमेव आनुपूर्व्येण पदार्थानां संबन्धो भवति।

अर्थात् उपाकरणा[1]नन्तर्यं विनियोज[2]नस्य, विनियोजनानन्तर्यं च पर्यग्निकर[3]णस्य भवतीत्यर्थः। अन्यथा सर्वं गुणकाण्डमेकत्रानुष्ठाय पुनः द्वितीयस्मिन् प्रधाने तस्यावृत्तौ क्रियमाणायाम् उत्तरपदार्थसमाप्त्यनन्तरं पूर्वपदार्थकरणपरया पौर्वापर्यं भज्येतेति भावः। यदुक्तं प्रधानस्य द्वितीयलक्षणे द्वितीयपदार्थेन सह संबन्धाभावः पदार्थानुसमये, इति। तन्न। तस्य सहत्व-विधानेन बाधात्। एवं च तादृशद्वितीयलक्षणप्राप्तिः एकप्रधानविषया एव। यत्र प्रधानबाहुल्यं तत्र पदार्थानुसमय एव ॥१०॥

[ चतुर्मुष्टिकनिर्वापस्य एकपदार्थत्वं न मुष्टेः ]

यत्र आग्नेयाग्नीषोमीयादीनां पुरोडाशयागानां सहानुष्ठानं प्राप्तं, तत्र तत्तदङ्गभूत-निर्वापस्यापि युगपत्कर्त्तव्यतायां प्राप्तायां, प्रथमम् आग्नेययागसंबन्धिहविर्निर्वापं मुष्टिचतुष्टय-परिमितं कृत्वा अनन्तरम् अग्नीषोमीयस्यापि मुष्टिचतुष्टयस्य निर्वापः कार्यः ? अथवा आग्नेय संबन्धिहविषां प्रथमां मुष्टिं निरूप्य अग्नीषोमीयस्यापि प्रथममुष्टिनिर्वापं कृत्वा पुनराग्नेयस्य द्वितीयमुष्टिनिर्वापः तत अग्नीषोमीयस्य द्वितीयमुष्टिनिर्वापः इत्येवं क्रमेण निर्वाप ? इति संशये पूर्वोक्तन्यायेन आग्नेयस्य प्रथमं मुष्टिं निरूप्य अग्नीषोमीयस्य प्रथमो मुष्टिर्निर्वप्तव्य इति एकैकेन मुष्टिना अनुसमयः ( अनुष्ठानं ) कार्यं इति प्राप्ते आह—

**नैककर्मणि, संबन्धात् ॥११॥**

न एकैकेन मुष्टिना अनुसमयः कर्तव्यः। कुतः ? एककर्मणि चतुर्मुष्टिके एकपदार्थ-रूपे निर्वापे एकमुष्टिनिर्वापस्य अवयवरूपेणैव संबन्धादित्यर्थः। अयं भावः—नात्र एकैकमुष्टि-निर्वाप एकः पदार्थः, किन्तु चतुरो मुष्टीन्निर्वपतीति वाक्येन चतुर्मुष्टिनिर्वापस्यैव एकपदार्थत्वाभिधानात् स एव एकः पदार्थः, स एव कर्त्तव्यः। तत्र चैकपदार्थनिर्वापोऽवयव-भूतः। नचावयवेन समयः कुत्राप्युक्तः। अतश्च चातुर्मुष्टिकैकपदार्थ-निर्वापमाग्नेयस्य कृत्वा अनन्तरं तथैव अग्नीषोमीयस्य कर्त्तव्यः।

न चानेनैव वाक्येन मुष्ट्युद्देशेन सङ्ख्याया अपि विहितत्वात् एकैकमुष्टिनाऽपि अनु-समयः कुतो न स्यादिति वाच्यम्। नात्र मुष्ट्युद्देशेन सङ्ख्याया विधानम्। तथात्वे सङ्ख्यां प्रति मुष्टीनामुद्देश्यत्वम्, निर्वापं प्रति च मुष्टीनां विधेयत्वम् इति एकदैव मुष्टिषु परस्परविरुद्धोद्देश्यत्व-विधेयत्वरूपधर्मसमावेशात्मकं वैरूप्यं प्रसज्येत। तत्तु न युक्तम्। अतश्च सङ्ख्याया मुष्टीनां च निर्वापोद्देशेनैव प्रथमतो विधाने कृते अनन्तरम् अत्र विहिता क्रमसङ्ख्या किं संबन्धिनी स्यात् इत्यपेक्षायां पश्चात्स्ववाक्योपात्त-मुष्टिभिः साकं संबन्ध इत्यवगम्यते। अत एव मुष्टीनां सङ्ख्यासंबन्धेऽपि चतुरो मुष्टीन्निर्वपतीति श्रुतस्य वाक्यस्य तत्र तात्पर्याभावेन न वाक्यभेदरूपो दोषो भवति ॥ ११ ॥

[ ग्रहणावदानयोः क्रमेण सादन—प्रदानान्तत्वम् ]

एवं सर्वत्र पदार्थानुसमये प्राप्ते क्वचिदपवादमाह—

**ग्रहण-सादनावदानप्रदानेषु तु वचनात् ॥ १२ ॥**

सोमरसस्य ग्रहपात्रे ग्रहणं कृत्वा तस्य खरे सादनं स्थापनं कार्यम्। अर्थात् एकं ग्रहं गृहीत्वा तं खरे स्थापयित्वा अनन्तरमेव द्वितीयं ग्रहं गृह्णीयात्, नतु ग्रहणानन्तरं वामहस्ते संस्थाप्य पुनर्दक्षिणहस्तेन ग्रहान्तरं ग्रहीतव्यम्।

---

१ तृणेन संस्पर्शनपूर्वकं देवतार्थत्वेन पशोः समर्पणमुपाकरणम्।

२ पशोर्यूपे बन्धनं नियोजनम्।

३ पशोः परितोऽङ्गारेण प्रदक्षिणं भ्रामणं पर्यग्निकरणम्।

एवं पुरोडाशपाव्यादौ प्रतिष्ठापितात् पुरोडाशादेर्हविषः "द्विर्हविषोऽवद्यति (का० श्रौ० १।९।१२) इत्यादिना विहितमवदानं[1] कृत्वा तत्तद्देवतायै प्रदाय अनन्तरमेव हविरन्तरादवदानं कार्यम्, न त्वेकं हविरवदाय तस्य प्रदानादिकमकृत्वा हविरन्तरादवदानं कार्यम्। एवं च ग्रहणं सादनान्तम्, अवदानं प्रदानान्तम् इति काण्डानुसमय एवेति भावः ॥ १२ ॥

[ अनेकाभिन्नदेवताक-दधिपयोयागादौ नावदानं प्रदानान्तम् ]

अनेन न्यायेन सर्वत्र हविषि अवदानादिप्रदानान्तस्यैव अनुष्ठाने प्राप्ते तदपवादमाह—

**न द्रव्यभेदे, गुणयोगादिति वात्स्यः ॥१३॥**

यत्र द्रव्यं भिन्नं देवता त्वेकैव तत्र न पूर्वोक्तन्यायः। कुतः? गुणयोगात्। सर्वेषामङ्गानां प्रधानं प्रति गुणत्वेन संबन्धात्। तद्यदि एकैकमवदाय प्रदाय च पुनर्द्रव्यान्तरेऽवदानं क्रियेत, तर्हि यावद्द्रव्यं प्रधानस्यावृत्तिः कर्त्तव्या भवेत्। गुणानुरोधेन च प्रधानावृत्तिरन्याय्या। अतः सर्वेभ्यो हविर्भ्यः अवदायैव प्रदानं कर्त्तव्यम्। यथा—वाजपेये सप्तदशसु प्राजापत्यपशुषु ( श० ५।१।३।७ ) एकदेवताकत्वात् सर्वेभ्यो हृदयादिभ्योऽऽवदायैव युगपत् प्रदानम्। एवमनेकहविष्के स्विष्टकृद्यागे च सर्वेभ्यो हविर्भ्य उत्तरार्द्धादवदाय युगपद्धोम इति ॥१३॥

[ प्रक्रान्तेऽसमाप्तेऽपि नित्यस्य स्वकालेऽनुष्ठानम् ]

इदमत्र विचार्यते। किंचित्कर्म प्रक्रान्तं दैवान्मानुषाद्वाऽपराधात् स्वकालेऽपरिसमापितम्, तावता च नित्यस्य कर्मणः काल आयातः तदानीं नित्यस्य कालं बाधित्वाऽपि प्रक्रान्तमेव कर्म परिसमाप्यैव अनन्तरं नित्यमनुष्ठेयम्? उत नित्यं कर्म स्वकाले अनुष्ठाय अनन्तरं प्रक्रान्तं परिसमापनीयम्? इति संशये कर्ममध्ये कर्मान्तरानुष्ठानस्य दोषाधायकत्वात् प्रक्रान्तं परिसमाप्यैव नित्यमनुष्ठेयं न तु मध्ये नित्यस्यानुष्ठानम् इति पूर्वपक्षे प्राप्ते आह—

**प्रवृत्ते नियतं, दोषविशेषात् ॥ १४ ॥**

कस्मिंश्चित्कर्मणि प्रवृत्ते सति नित्यस्य काले आयाते नित्यमेव कर्त्तव्यम्। कुतः? दोषविशेषात्, नित्यस्याकरणे प्रत्यवायश्रवणादित्यर्थः ॥ १४ ॥

[ षोडशिस्तोत्रस्योक्थ्यविग्रहोत्तरमेवानुष्ठानं न स्वकाले ]

ज्योतिष्टोमाख्ये सोमयागे सोमरसग्रहणार्थं सन्ति बहवो ग्रहाः। तन्मध्ये उक्थ्यषोडशिनावपि ग्रहविशेषौ। तत्र षोडशिनः कालनियमो विहितः "समयाध्युषिते सूर्ये षोडशिनः स्तोत्रं प्रारभते" (बौ० श्रौ० १७।३) "तं वै पुराऽस्तमयादुपाकरोति" "तं पराञ्चमुक्थ्येभ्यो विगृह्णाति षोडशिनम्" ( श० ब्रा० ।४।५।३।११ ) इति उक्थ्यपरभावः षोडशिन आम्नातः। तत्र यदि केनचित्कारणेन उक्थ्याः ( त्रयो ग्रहाः ) स्वकाले न परिसमापिताः, षोडशिनश्च काल अर्द्धास्तमयरूप आगतः, तदानीमुक्थ्यग्रहाणामुत्कर्षं ( स्वस्थानात्स्थानान्तरप्राप्तिं ) कृत्वा स्वकालप्राप्तं षोडशिनमनुष्ठाय तत उक्थ्यानुष्ठानम्? अथवा उक्थ्यान् परिसमाप्यैव षोडशिनमनुतिष्ठेत्? इतिसंशये पूर्वाधिकरणन्यायेन षोडशिनोऽनुष्ठाने प्राप्ते आह—

**षोडशिनि त्वानुपूर्व्यभूयस्त्वात् ॥ १५ ॥**

षोडशिसंज्ञके ग्रहे न पूर्वन्यायः संभवति। कुतः? आनुपूर्व्ययोगात्। क्रमस्य आधिक्यात्। पूर्वत्र च पौर्वापर्यस्य कस्यचिदविहितत्वात् मध्ये नित्यस्यानुष्ठानेऽपि वैगुण्याभावात्। इहतु "तं पराञ्चमुक्थ्येभ्यो विगृह्णाति" इति शास्त्रेण षोडशिनः उक्थ्यपरभावस्यापि विहितत्वेन तत्परित्यागे क्रमत्यागरूपदोषापत्तेरुक्थ्यपरिसमापनानन्तरमेव षोडश्यनुष्ठानम् ॥१५॥

---

१ हविषो होमार्थं स्रुवादिना ग्रहणमवदानम्।

[ प्रधानकर्मसु क्रमोऽनियतः ]

यानि अग्निहोत्र-दर्शपूर्णमास-चातुर्मास्यादीनि परस्परमङ्गाङ्गिभावमापन्नानि, तेषां तत्तत्पाठक्रममनुसृत्यैव अर्थात् यस्य कर्मणोऽनन्तरं यत्कर्म पठितं तस्य पूर्वमनुष्ठानं कृत्वैव अनन्तरोक्तं कर्मानुष्ठेयम् ? उत अनियमेन ? इति संशये आह—

**अनियमः फलसंयुक्तेषु ॥१६॥**

फलसंयुक्तेषु प्रधानकर्मसु इष्टि-पशु-सोमादिषु अनुष्ठाने पाठतः क्रमनियमो नास्ति॥१६॥

यद्येवमनियमः, तर्हि तत्र क्रमेण पाठः किमर्थं इत्याशङ्कायामाह—

**क्रमो विद्ध्यर्थः, कर्मण्यसंभवात् ॥१७॥**

तत्र क्रमो विधानार्थः। सर्वेषां कर्मणां विधेयत्वेन पाठे कस्यचित्कर्मणः किंचित्कर्मानन्तर्यं वर्जनीयमेव, न तत्र क्रमविवक्षा। कुतः? सर्वस्वाराख्ये कर्मणि असंभवात्—आनुपूर्व्यस्य सम्पादयितुमशक्यत्वात्। अस्ति सर्वस्वारो नाम यज्ञः। सच "मरणकामः सर्वस्वारेण यजेत" (आप० श्रौ० २२।७।२४) इत्यनेन मरणाभिलाषिणं प्रति विहितः। तत्र "औदुम्बर्यां वेष्टितायां ब्राह्मणाः समापयत मे यज्ञम्" इति प्रैषं कृत्वा "अग्निं प्रविशति" (आप० श्रौ० २२।७।२४) इति अग्निप्रवेशो विहितः। यदि कर्मणां क्रमेणैवानुष्ठानं, तर्हि सर्वस्वारे यजमानस्य मृतत्वेन तदनन्तरपठितानां सर्वेषां कर्मणां विधिरनर्थक एव स्यात् ॥१७॥

इति कातीयश्रौतसूत्रवृत्तौ पञ्चमी कण्डिका ॥ ५ ॥

---

[ अवत्तस्य हविषो नाशे हविरन्तरमुत्पाद्यम् ]

अवदानानन्तरम् अवत्तस्य होमार्थं जुह्वां गृहीतस्य हविषः केनचित् कारणेन नाशे सति पुनर्हविरन्तरमुत्पाद्यैव यागः, अवशिष्टस्य च हविषस्त्यागः कर्त्तव्यः ? उत हविरन्तरमनुत्पाद्यैव अवशिष्टादेव हविषः पुनरवदाय यागः क्रियताम् ? इति संशये सिद्धान्तेनोपक्रमते—

**अवत्तनाशेऽन्यद्, गुणानुग्रहात् ॥ १ ॥**

होमार्थं गृहीतस्य ह्यवदानमात्रस्य हविषो नाशे हविरन्तरमेवोत्पादनीयम्। कुतः ? गुणानुग्रहात्, तदानीमेव गुणानामनुग्रहः कृतो भवति। अन्यथा गुणहीनेन यागः कृतः स्यात्। प्रोक्षणा—वघातादयो ये संस्कारास्ते अवदानार्थमेव कृताः। अवदाने कृते तेनैव सह आगताः, तद्विनाशे च विनष्टा एव। अवशिष्टे च हविषि न कश्चित्संस्कारोऽस्तीति संस्कारहीनमेव तद्धविः। अतश्च न तेन यागः कार्यः। किन्तु हविरन्तरमुत्पाद्यैवेति भावः ॥ १ ॥

एवं प्राप्ते इमं सिद्धान्तमाक्षिपति पूर्वपक्षी—

**न, पूर्वशेषात् ॥ २ ॥**

न हविरन्तरमुत्पादनीयम्; किन्तु पूर्वशेषादेव यागः कार्यः। यदर्थं संस्कारा अनुष्ठितास्तन्निष्पत्तावेव संस्काराणामपवर्गो भवति नान्यथा। अतश्च यागार्थमनुष्ठिताः संस्कारा यागनिष्पत्तावेवापवृक्ता भवन्ति इति अवत्तनाशेऽपि यागानुष्ठानाभावेन संस्काराणामनपवर्गात् अवशिष्टेऽपि हविषि संस्कारसत्त्वात्तस्मादेव यागः कार्यः ॥ २ ॥

युक्त्यन्तरमाह—

**अचोदितत्वाच्च ॥ ३ ॥**

अवत्तस्य हविषो नाशे हविरन्तरमुत्पादनीयम् इत्येवंविधस्य विधेरभावाच्च पूर्वशेषादेव हविषो यागः कार्यः ॥ ३ ॥

किंच—

**स्विष्टकृद्वदानुपूर्व्ययोगात् ॥ ४ ॥**

एवं कृते एव हविः स्विष्टकृद्विशिष्टं भवति । कुतः ? आनुपूर्व्ययोगात्, प्रधानयाग—स्विष्टकृद्यागयोः परस्परं सम्बन्धलाभादित्यर्थः । यस्माद्धविषः प्रधानयागार्थमवदानं कृतं, तत एव स्विष्टकृद्यागार्थमवदानं कार्यम् । स्विष्टकृ[1]द्यागस्योपयुक्त—हविःसंस्कारार्थत्वात् । अतश्च यदि अस्माद्धविषः प्रधानार्थं नावदानं क्रियेत, तर्हि स्विष्टकृदर्थमप्यवदानं नारमाद्भवितुमर्हतीति सर्वथा हविषो वैयर्थ्यमेव स्यादिति भावः ॥४॥

इममाक्षेपं परिहरति सिद्धान्ती—

**गुणहानौ तु, शेषभावात् ॥५॥**

तु शब्दः पूर्वपक्षं व्यावर्त्तयति । नेत्यध्याह्रियते । गुणहानौ सत्यां न पूर्वस्माद्धविषोऽवदानं कार्यम् । कुतः ? शेषभावात् । संस्काराणामवदानाङ्गत्वादेवेत्यर्थः । संस्काराणां हविष्मसम्पादनार्थत्वात्, अवदीयमानस्यैव हविष्ट्वाच्च तन्नाशे संस्काराणां नष्टत्वादेव न[2] पूर्वस्माद्धविषोऽवदानमिति भावः ॥५॥

[ अग्नि—शब्द—देवता—क्रियाणां प्रतिनिधिर्नास्ति ]

**न देवता—ऽग्नि—शब्द—क्रियाः, परार्थत्वात् ॥६॥**

देव[3]तानामिन्द्रादीनाम्, अग्नीनामाहवनीयादीनाम्, शब्दानां मन्त्राणा[4]मिषेत्वेत्यादीनाम्, क्रिया[5]णां प्रोक्षणा—ऽवघात—प्रयाजादीनां विस्मरणादौ प्रतिनिधिर्न भवति । कुतः ? परार्थत्वात्, अदृष्टार्थत्वा[6]दित्यर्थः[7] ॥६॥

**कामं देवताम् ॥७॥**

देवतादीनामप्रतिनिधेयत्वस्य दृढीकरणार्थमिदं सूत्रम् । प्रतिनिदध्यादिति शेषः । योऽन्यादीन्प्रतिनिधातुं यतते स तत्सामान्यात् देवतामपि प्रतिनिदध्यादेव । तत्तु न कदाऽपि

---

१ प्रधानयागं सुष्ठु इष्टं करोतीति स्विष्टकृत् यागः । इष्टमिति यजे रूपम् । कृतस्य प्रधानयागस्य पौष्कल्यापादक इति यावत् ।

२ एतच्च पूर्वमीमांसायां षष्ठेऽध्याये चतुर्थपादे प्रथमाधिकरणे विचारितम् ।

३ तत्तद्विधिबोधितत्वे सति त्यज्यमानद्रव्योद्देश्यत्वं देवतात्वम् ।

४ कर्माङ्गभूत—द्रव्यदेवतास्मारकत्वं मन्त्रत्वम् ।

५ क्रियन्ते इति क्रियाः । ताश्च द्विप्रकाराः, दृष्टार्था अदृष्टार्थाश्च । तत्र अवहनन—पेषणाद्या दृष्टार्थाः । प्रयाज—प्रोक्षणाद्या अदृष्टार्थाः ।

६ अयं भावः—यत्र दृष्टं प्रयोजनमुद्दिश्य द्रव्यादिकं विधीयते तत्र विहितद्रव्यालाभे द्रव्यान्तरेणापि तत्सदृशेन श्रुतद्रव्यनिष्पाद्यं प्रयोजनं सम्पाद्यते इति कृत्वा श्रुतद्रव्यस्थाने द्रव्यान्तरं प्रतिनिधातुं शक्यते । यानि तु अदृष्टार्थानि देवताग्न्यादीनि, तेषामदृष्टरूपप्रयोजनमुद्दिश्यैव विहितत्वात् तादृशं श्रुतद्रव्यजन्यमदृष्टरूपं प्रयोजनं प्रतिनिधेयेन द्रव्येण सम्पाद्यत इत्यत्र प्रमाणाभावात् न अदृष्टार्थानां प्रतिनिधिर्भवितुमर्हतीति ।

७ एतच्च पूर्वमीमांसायां षष्ठेऽध्याये तृतीयपादे पञ्चमाधिकरणे विचारितम् ।

युज्यते । यत्र त्यज्यमानद्रव्योद्देशेन अग्न्यादिः विधिना बोधितः, स एव तत्र देवता भवितुमर्हति । अन्यस्य अविहितत्वादेव न तत्र देवतात्वम् । अतश्च तदुद्देशेन त्यागे कृतेऽपि न देवतोद्देशेन त्यागः कृत इति यागस्वरूपमेव न निष्पन्नं स्यात् । अतः सर्वथा न देवतायाः प्रतिनिधिरस्ति । तद्वददृष्टार्थत्वाविशेषादग्नि-शब्दादीनामपि न प्रतिनिधिरिति भावः । एतच्च पूर्वमीमांसायां षष्ठेऽध्याये तृतीयपादे षष्ठाधिकरणे स्पष्टम् ॥७॥

[ निषिद्धानां माषादीनां प्रतिनिधित्वं नास्ति ]

श्रुतद्रव्यापचारे द्रव्यान्तरं प्रतिनिधेयमिति निरूपितं पुरस्तात्, तेनैव न्यायेन देवतादीनामपि अपचारे संवृत्ते तत्रापि प्रतिनिधिः स्यादिति प्राप्ते आह—

## प्रतिषिद्धं, प्रत्यवायात् ॥८॥

प्रपूर्वस्मात्सूत्रात् नेत्यनुवर्त्तते । विहितस्य द्रव्यस्यालाभे निषिद्धो माषादिर्न प्रतिनिधेयः । कुतः? प्रत्यवायात् । "अयज्ञिया उ वै कोद्रव-वरटा अयज्ञिया वै माषाः" (कठसं० २०।८। मै० सं० ३।२।७) इत्यादिना निषिद्धानामाचरणे दोषादित्यर्थः । एतत् (६।३।६, जैमिनीये निर्णीतम् ॥८॥

[ यजमानस्य प्रधानकार्ये प्रतिनिधिर्नास्ति ]

## स्वामी, फलयोगात् ॥९॥

नेति वर्त्तते । स्वामिनि मृते, प्रोषिते, कार्यान्तरव्यापृते वा तत्स्थाने अन्यः प्रतिनिधिर्न कार्यः । कुतः? फलयोगात् । पुरुषान्तरेण क्रियमाणानां ब्रह्मचर्य-द्रव्यत्यागादीनां मृते-प्रोषिते वा यजमाने फलसम्पादनायोगादित्यर्थः । एतदपि ( ६।३।७ ) जैमिनिना विचारितम् ॥९॥

[ यजमानस्य गुणकार्ये प्रतिनिधिर्भवत्येव ]

एवं सर्वत्र प्रतिनिध्यभावे प्राप्ते क्वचित्तदपवादमाह—

## गुणेषु प्रतिनिधिः, परार्थत्वात् ॥१०॥

पात्रासादन-वेदबन्धनाऽऽज्यावेक्षणादिषु यज्ञाङ्गभूतेषु यजमानकर्त्तव्येषु पदार्थेषु यजमानस्य प्रतिनिधिर्भवति । कुतः? परार्थत्वात् । पात्रासादनादीनां क्रत्वङ्गत्वात् । अन्येनापि कृते पदार्थस्वरूपनिष्पत्या वैगुण्यासंभवात् ॥१०॥

[ सत्रेषु वचनात्स्वामी प्रतिनिधीयते ]

## सत्रेषु[1] तु, श्रुतेः ॥११॥

सत्रेषु तु श्रुतिबलात् यजमानस्य प्रतिनिधिर्भवति । एवं हि श्रूयते—"यदि दीक्षितानां कश्चित्प्रमीयेत तस्य यो नेदिष्ठी स्यात्तमुपदीक्ष्य तेन सह यजेरन्" (ता० ९।८।१) इति ॥११॥

[ सत्रेषु प्रतिनिहितस्य नेदिष्ठिनो यजमानसंस्कारयोगः ]

## स तद्धर्मा, कर्मयोगात् ॥१२॥

सत्रे प्रतिनिहितो यो नेदिष्ठी तस्य यजमानसंस्कारा वपनादयो भवन्त्येव । कुतः?

---

१ ब्राह्मणैकाधिकारिकाः चतुर्विंशतिपरमसप्तदशावरयजमानकर्तृकाः अदक्षिणाकाः "आसीरन्" ( आप० श्रौ २३।१।१ ) "उपेयुः" ( आप० श्रौ० २३।१।१७ ) इत्यादिचोदनाचोदिताः त्रयोदशरात्रप्रभृति सहस्रसंवत्सरपर्यन्ताः सोमयागाः सत्रपदाभिधेयाः । अत्र सर्वे यजमानाः । अत एव च नात्र दक्षिणा । यजमाना एव तत्तदृत्विक्कर्म कुर्युः ।

कर्मयोगात्, यजमानकर्मणा तस्य नेदिष्ठिनः संबन्धात्। एतच्च जैमिनिसूत्रे ( ६।३।१० ) प्रतिपादितम् ॥१२॥

[ सत्रेषु ब्राह्मणानामेवाधिकारः ]

सत्रेषु ब्राह्मणानामेवाधिकारः ? उत त्रयाणामपि इति संशये विद्यावत्त्वात् त्रयाणामेवाधिकार इति प्राप्ते सिद्धान्तयति—

**सत्राणि ब्राह्मणाना, मृत्विक्श्रुतेः ॥१३॥**

सत्राणि ब्राह्मणानामेव, ब्राह्मणकर्त्तव्यान्येवेत्यर्थः। कुतः ? ऋत्विक्श्रुतेः। "ये ऋत्विजस्ते यजमानाः" इति श्रुतेरित्यर्थः। अयं भावः—ये ऋत्विजस्ते यजमाना इत्यत्र ऋत्विजां यजमानसंस्कारा विधातुं न शक्यन्ते। तथात्वे केवलादृष्टार्थत्वापत्तेः। अतः ऋत्विक्शब्देन ऋत्विक्कर्तृकाणि कार्याणि लक्षयित्वा तदुद्देशेन यजमानानां विधानमङ्गीकर्त्तव्यम्। एवं च ऋत्विक्कार्ये यजमानविधानात् ऋत्विक्कार्यस्य ब्राह्मणेनैव कर्त्तव्यत्वस्य पूर्वं स्थापितत्वात् ब्राह्मणानामेव सत्रेऽधिकारः। एतच्च ( ६।६।३ ) जैमिनीये विचारिम् ॥१३॥

[ एककल्पानामेव सत्रेऽधिकारः ]

**एककल्पाना, मवैगुण्यात् ॥१४॥**

एकस्तुल्यः कल्पः पक्षो येषां ते एककल्पाः। सत्रे एककल्पानामेवाधिकारः। कुतः ? अवैगुण्यात्, तदानीमेवावैगुण्यस्याभावादित्यर्थः। अयमाशयः—"वसिष्ठ-शुनकात्रिवध्र्यश्व-कण्व-कश्यप-संकृति-राजन्य-वैश्य-प्रजा-पशुकामानां द्वितीयः प्रयाजः[1] स्तनूनपादन्येषाम्" (का० हौ० प० ११४ ) इति वाक्येन राजन्य-वसिष्ठादीनां नराशंसाख्यो द्वितीयः प्रयाजो विहितः। तद्भिन्नगोत्राणां च तनूनपात्प्रयाजो द्वितीयः। येषां यो द्वितीयः प्रयाजो विहितस्तेषां तदनुष्ठाने एवावैगुण्यं भवति। यदि भिन्नभिन्नगोत्रा यजमाना भवेयुस्तदा तनूनपात्प्रयाजानुष्ठाने वसिष्ठादिगोत्राणां स्वप्रयाजानुष्ठानाभावेन वैगुण्यमापद्येत। एवं नराशंसानुष्ठाने वसिष्ठानां स्वप्रयाजाननुष्ठानजनितं वैगुण्यं भवेत्। तत्तु न युक्तम्। अतस्तत्परिहारार्थं सर्वे यजनानास्तनूनपात्कल्पा वा भवेयुः, अथवा सर्वे नराशंसकल्पा भवेयुः, न तु तनूनपान्नराशंकल्पानां मिलितानामधिकारः। एतच्च पूर्वमीमांसायां षष्ठाध्याये षष्ठपादे चतुर्थाधिकरणे विचारितम् ॥१४॥

[ अतुल्यप्रमाणानामपि सत्रेऽधिकारः ]

उक्तन्यायेन "यजमानसम्मितौदुम्बरी[2] कार्या" (श० ३।६।१।६) इति वाक्येन औदुम्बरी शाखा यजमानप्रमाणा कार्येति विधीयते। सत्रे सर्वेषां यजमानत्वात् यजमानानां च तुल्यप्रमाणत्वाभावात् यस्यैव यजमानस्य सम्मिता औदुम्बरी न भवेत् तस्यैव वैगुण्यं स्यात्। अतस्तुल्यप्रमाणानामेव यजमानानां सत्रेऽधिकारः, न भिन्नप्रमाणानां दीर्घ-ह्रस्वानामित्याशङ्क्य सिद्धान्तयति—

**न, परार्थत्वात् ॥१५॥**

तुल्यप्रमाणानामेव यजमानानां सत्रे ऽधिकार इति यदुक्तं, तन्न। कुतः ? परार्थत्वात्= यजमानस्य स्वार्थसाधनत्वाभावात्। अतो येन केनचिद्यजमानेन सम्मिता औदुम्बरी कार्या। अतो भिन्नप्रमाणानामपि यजमानानां सत्रे ऽधिकारः ॥१५॥

---

१ समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहा यजति, (तै० सं०२।६।१) इति पञ्च प्रयाजयागा विहिताः सन्ति। तत्र केषां चित्तनूनपात्प्रयाजः, केषां चित् नराशंस इति विधीयते।

२ सोमयागे सदोनामकमण्डपमध्ये उद्गात्रादीनां सामगाने अवलम्बनार्थं निखात औदुम्बरकाष्ठविशेष औदुम्बरी शाखा।

[ सत्रसम्बन्धि-गृहपतिकार्येऽपि क्षत्रियादीनामनधिकारः ]

ऋत्विक्कार्ये यजमानानां विधानात्, तत्र राजन्यवैश्ययोरधिकाराभावेऽपि [1]गृहपति-कार्ये (इदमिन्द्राय न मम इति) द्रव्यत्यागादौ क्षत्रियवैश्ययोरधिकारो भवतु इत्याशङ्क्य निराकरोति—

## वैश्य—राजन्ययोर्गार्हपते ॥१६॥

वैश्यराजन्ययोर्गृहपतिकार्येऽपि सत्रे नाधिकारः। कुतः? भिन्नकल्पत्वादेवेति भावः। द्वादशाहाख्यसत्रे ब्रह्मसामाख्ये स्तोत्रे ब्राह्मण-राजन्यादीनां सामविशेषः परस्परं भिन्नो विहितः। यथा—"बार्हद्[2]गिरं ब्राह्मणस्य, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य" (ता० १३।४।१८) इति। ब्राह्मणयजमानके कर्मणि बार्हद्गिरेण साम्ना ब्रह्मसामाख्यं स्तोत्रं सम्पादयेदिति तदर्थः। यदि क्षत्रियवैश्ययोरपि गृहपतित्वमङ्गी क्रियेत, तर्हि बार्हद्गिर—पार्थुरश्मयोः परस्परं विरोधादे-कस्यानुष्ठाने इतरस्य वैगुण्यं स्यात्। तत्परिहारार्थं गृहपतिकार्येऽपि ब्राह्मणानामेवाधिकारः॥१६॥

[ संवत्सरशब्दस्य दिनपरत्वात्सहस्रसंवत्सरसत्रे मनुष्याणामेवाधिकारः ]

अस्ति सहस्रसंवत्सरसाध्यः विश्वसृजामयनसंज्ञः सत्रविशेषः। स च "पञ्च[3] पञ्चा-शतस्त्रिवृतः संवत्सराः, पञ्च पञ्चाशतः पञ्चदशाः, पञ्च पञ्चाशतः सप्तदशाः, पञ्च पञ्चाशत एकविंशा विश्वसृजामयनꣳ सहस्रसंवत्सरम्" (ता० ब्रा० २५।१८।१) इत्यनेन विहितः। तत्र मनुष्याणामधिकारः कथंचिद् भवति न वा इति विचार्यते—

## सहस्रसंवत्सरममनुष्याणा, मसम्भवात् ॥१७॥

सहस्रसंवत्सरसाध्ये विश्वसृड्नामके सत्रे मनुष्याणां नाधिकारः। कुतः? तेषां तावदायुष्यस्यासम्भवात्। न हि सहस्रसंवत्सरायुषो मनुष्याः श्रुतपूर्वा दृष्टपूर्वा वा। देवानां स्वयष्टव्यदेवान्तराभावेन अवाप्तकामत्वाच्च न यागादौ तेषामधिकार इति नास्मिन्सत्रे केषाम-प्यधिकार इति भावः ॥१७॥

## स्या, देहानित्यत्वात् ॥१८॥

अथवा मनुष्याणाम् अधिकारः सत्रेषु स्यादेव। कुतः? देहानित्यत्वात्, देहस्या युषः अनियतपरिमाणत्वात्। न हि नियमोऽस्ति मनुष्याणां शतमेवायुरस्ति। अपरिमितायुषां मनुष्याणां बहुतरं दर्शनात् ॥१८॥

---

१ सत्रे यजमानकार्यं त्यागादिकं यः करोति स गृहपतिरित्युच्यते।

२ "इन्द्रो मदाय" (ऋ० १।६।१) इत्यस्यामृचि (योनौ) गेयं साम पार्थुरश्मं बार्हद्गिरं चोच्यते। "स्वादोरित्था" (ऋ० १।६।६) इत्यस्यामृचि (योनौ) गेयं साम रायोवाजीयम्।

३ ज्योतिष्टोमे चत्वारः स्तोमा विहिताः (स्तोत्रगतसङ्ख्याविशेषः स्तोमः। सामसाध्यस्तुतिः स्तोत्रम्) त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंश इति। ते च द्वादशाहद्वारा अस्मिन्नपि सत्रे आगताः। तेषां च चतुर्णामपि स्तोमानामेकैकस्मिन्नपि सुत्यादिने बहिष्पवमानादिषु स्तोत्रेषु अनुष्ठानप्रसक्तौ तद् बाधित्वा सार्द्धद्विशतसङ्ख्याकदिनसाध्यसोमयागसंबन्धिस्तोत्रेषु केवलं त्रिवृत्स्तोमा एव, ततस्तावत्सङ्ख्याकदिवस-साध्यस्तोत्रेषु पञ्चदश स्तोमाः, ततस्तावत्सु सप्तदश स्तोमाः, ततस्तावत्सु एकविंशतिः स्तोमाः। एवं सहस्रदि-नसाध्यं कर्म 'विश्वसृजामयनम्' इति नाम्ना व्यपदिश्यते। पञ्चगुणितानि पञ्चाशद्दिनानि पञ्च-पञ्चाशतः। एवमग्रेऽप्यर्थो बोध्यः।

यावन्ति स्तोत्राणि सोमयागे विहितानि तावन्ति सर्वाण्यपि सदोनामकमण्डपमध्यस्थितैरुद्गा-त्रादिभिर्गेयानि। बहिष्पवमानस्तोत्रं तु सदसो बहिश्चात्वालदेशे गेयम्। अत एव सदसो बहिः क्रियमाणत्वात् पूतत्वसम्पादकत्वाच्च बहिष्पवमानमिति कथ्यते।

कथं तेषामपरिमितायुष्ट्वमित्यत आह—

**तस्य च कार्यत्वात् ॥१९॥**

तस्य आयुषः कार्यत्वात्, आयुःप्रापकेन कर्मणा यावदभिलाषं जन्यत्वात्। मित्रविन्दादिना रसायनादिना च कर्त्तुं शक्यत्वादिति भावः ॥१९॥

**ना, संभवात् ॥२०॥**

रसायनादिनाऽपि सहस्रायुष्ट्वं न संभवति। प्रायः शतायुषः पुरुषा दृश्यन्ते, न सहस्रायुषः ॥२०॥

**शास्त्रसंभवादिति भारद्वाजः ॥२१॥**

"मित्रविन्दया (इष्ट्या) आयुष्कामो यजेत" (का० श्रौ० ५।१३।१) इति शास्त्रेण कर्मविधानात् सहस्रायुष्ट्वस्य संभवादित्यर्थः। भारद्वाजग्रहणं पूजार्थम् ॥२१॥

**ना,ऽदर्शनात् ॥२२॥**

शास्त्रसंभवादिति यदुक्तं तन्न। कुतः? सहस्रायुष्काणां मनुष्याणामदर्शनात्। मित्रविन्दादीनि तु आयुःप्रापकाणि, रसायनादीनि च अपमृत्युनिरासार्थानि, नायुर्वर्द्धकानि ॥२२॥

**कुलसत्रमिति कार्ष्णाजिनिः ॥२३॥**

कुलस्य पितृ-पुत्र-पौत्र-तत्पुत्रादिरूपस्य वंशस्य सहस्रसंवत्सरं सत्रं भवति, नैकस्य कस्यचित्। आरब्धस्य अवश्यसमापनीयत्वात् समाप्तिश्चैकेन न शक्यते कर्त्तुम्। अतो बहवस्तत्कुलीनाः कुर्युः। तेन केनचिदारब्धं केचित्समापयिष्यन्तीति कुलसत्रम् इति कार्ष्णाजिनिर्मन्यते ॥२३॥

**साम्युत्थानमिति लौगाक्षिः ॥२४॥**

अन्येन आरब्धस्य अन्येन समापनरूपं कार्ष्णाजिनिमतं न युक्तम्। कुतः? अवयवात् क्वचिदपि फलोत्पत्त्यदर्शनात्। एवं च निष्फलस्य कर्मणोऽनुष्ठानापेक्षया सत्रस्य मध्ये अद्ध एवोत्थानं वरम् ॥२४॥

सिद्धान्तमाह—

**अह्नां वा ऽशक्यत्वात् ॥२५॥**

वाऽवधारणे। अह्नामेतत्सहस्रमङ्गीकार्यं, न वत्सराणाम्। कुतः? अशक्यत्वात्, अन्यथा तावत्कालसाध्यस्य कर्मणो मनुष्यैरनुष्ठातुमशक्यत्वादित्यर्थः। न मनुष्यैरेतत्सत्रं कर्त्तुं शक्यते। अतो मुख्यार्थासम्भवे गौणी वृत्तिराश्रीयते। अतश्च अत्रत्यं संवत्सरपदम् अहःपरतया नेयम् ॥२५॥

संवत्सरशब्दस्य दिनवाचकत्वे किं प्रमाणमित्यत आह—

**श्रुतिसामर्थ्यात् ॥२६॥**

"अहर्वै संवत्सर" इति श्रुतावुक्तत्वात् संवत्सरशब्दो ऽहर्वाचकः ॥२६॥

**प्रकृत्यनुग्रहाच्च ॥२७॥**

सत्राणां प्रकृतिर्द्वादशाहः[1]। तत्रान्ह्नामेव प्रतिपादनादिहापि अह्नां सहस्रमङ्गीकार्यम्। एवं च द्वादशाहरूपा प्रकृतिरनुगृहीता स्यात्। तस्मात्सहस्रदिनात्मकं विश्वसृजामयनसंज्ञकं

[1] द्वादश दीक्षाः, द्वादशोपसदः, द्वादशसुत्याः इति षट्त्रिंशद्दिनसाध्यः सोमयागविशेषो द्वादशाहः। अत्र प्रधानभूतसुत्याया द्वादशत्वात् द्वादशाह इति संज्ञा।

सत्रं मनुष्याणामेव भवति। एतच्च पूर्वमीमांसायां षष्ठाध्याये सप्तमपादे त्रयोदशाधिकरणे विचारितम् ॥२७॥

इति कातीयश्रौतसूत्रवृत्तौ षष्ठी कण्डिका ॥६॥

[ प्रधानकर्मणां सहप्रयोगे प्रयाजाद्यङ्गकर्मणां तन्त्रम् ]

यत्र बहूनि प्रधानानि सहानुष्ठीयन्ते तत्र अङ्गानां यावत्प्रधानावृत्तिः करणीया ? उत तावत्प्रधानोद्देशेन सकृदेवानुष्ठानम् ? इति संशये एकैकस्य प्रधानस्य स्वस्वाङ्गेन सह पृथक् पृथगेव सबन्धात् तत्सिद्ध्यर्थं यावत्प्रधानं पृथगेवाङ्गान्युष्ठेयानि। एवं च दर्शे पौर्णमासे च सहानुष्ठीयमानेषु त्रिषु प्रधानेषु प्रयाजादीनां वारत्रयमावृत्तिः करणीयेति पूर्वपक्षे प्राप्ते सिद्धान्तयति—

## कर्मणां युगपद्भावस्तन्त्रम् ॥१॥

प्रधानकर्मणां यत्र युगपद्भावः=सहानुष्ठानं, तत्र अङ्गानामपि सकृदेवानुष्ठानं भवति ॥१॥

तदेव हेतुभिः साधयति—

## शक्य-पुरुषार्थकृतत्वै-कार्थसमवायश्रुतिभ्यः ॥२॥

शक्यत्वात्, पुरुषार्थकृतत्वात्, एकार्थसमवायश्रुतेरिति विभागः। अङ्गानां तन्त्रमिति यदुक्तं तद्युक्तमेव। सकृत्कृतेनापि अङ्गेन अदृष्टोपकारकेण अनेकेषां प्रधानानामदृष्टरूप उपकारः सम्पादयितुं शक्य एवेत्यर्थः।

पुरुषार्थकृतत्वात्, प्रयोग[1]विधिना च अङ्गप्रधानयोः साहित्यं विहितम। तच्च पुरुषेण सम्पादनीयम्। अतो ऽङ्गप्रधानयोः संबन्धकरणं पुरु[2]षार्थः। स च सकृत्कृतैरेवाङ्गैः सम्पाद्यत एवेति भावः।

एकार्थसमवायश्रुतेः, एकस्मिन् फले सम्पादनीये अङ्गानां प्रधानानां च सम्बन्धश्रवणादित्यर्थः। अर्थात् फलजनकीभूतैरनेकैः प्रधानैः सह अङ्गानां सकृदनुष्ठानस्यैव श्रवणात्। यथा—दर्शपूर्ण[3]मासयोः "ता एकविंशतिराहुतयो द्वावा[4]घारौ, पञ्च प्रया[5]जा, द्वावाज्य[6]भागौ, आग्नेयः पुरोडा[7]शस्तद्दश, अग्नीषोमीय उपांशुया[8]जो,ऽग्नीषोमीयः पुरोडाशो,

---

१ पदार्थान्तराव्यवधानेन अविलम्बेन साङ्गप्रधानानुष्ठानबोधको विधिः प्रयोगविधिः।

२ पुरुषाभिलषित-फलसाधनत्वेन विहितत्वं पुरुषार्थत्वम्।

३ "दर्शश्च पूर्णमासश्च यागौ पक्षान्तयोः पृथक्" ( अम० २।७।४८ ) इति कोशात् अमायामग्न्यन्वाधानं कृत्वा यः प्रतिपदि यागः क्रियते स यागो दर्श इत्युच्यते। एवं पौर्णमास्यामन्वाधाय प्रतिपदि क्रियमाणो यागः पौर्णमास इत्युच्यते।

४ वह्नेः कस्मिद्देशमारभ्य देशान्तरपर्यन्तं समन्त्रकमाज्यधारया नयनमाहरणमाघारः।

५ प्रधानयागात्पूर्वमिज्यते यैस्ते प्रयाजाः।

६ आज्यं भागो ययोस्तौ आज्यभागौ अग्नीषोमदेवते। लक्षणया तद्देवतो होमोऽपि आज्यभाग शब्देनोच्यते।

७ व्रीहिपिष्टैर्यवपिष्टैर्वा निर्मितः पक्वः पिण्डविशेषः पुरोडाशः।

८ उपांशु इज्यते इति उपांशुयाजः। "जिह्वोष्ठौ चालयेत् किंचिद्देवतागतमानसः। निजश्रवणयोग्यः स्यादुपांशु स जपः स्मृतः" ॥ स्वयंग्रहणयोग्यः किंचिच्छब्दवानुपांशुरिति तदर्थः।

ऽग्निः स्वि[1]ष्टकृ, दिडा[2], त्रयो ऽनुया[3]जाः, सूक्त[4]वाकश्च, शंयो[5]र्वाकश्चा, ऽथ यद्देवादः पत्नीसंया[6]जेषु सम्प्रगृह्णाति, समिष्ट[7]यजुश्च," ( श० ११·२-६·१० ) इत्यादिना सकृदनुष्ठितान्यङ्गानि सङ्ख्यायैव प्रधानैः सह एकविंशतिसङ्ख्यासम्पत्तिरुपवर्णिता। सा चाङ्गानां तन्त्रेणैवानुष्ठाने संभवतीति भावः ॥२॥

कथं कुत्र वा प्रधानानां सह प्रयोग इत्यपेक्षायामाह—

**फल-कर्म-देश-काल-द्रव्य-देवता-गुणसामान्ये ॥३॥**

सामान्यशब्दः एकत्ववाची प्रत्येकं संवध्यते। फलसामान्ये कर्मसामान्ये इत्याद्यर्थः। यत्र एकफलोद्देशेन अनेकेषां प्रधानानां विधानं, यथा—"वैश्वदेवेन प्रजाकामं याजयेत्" (श० २।५।१।२२) इत्यादौ, तत्र आग्नेया[8]दीनामष्टानां सह प्रयोगः। एवं कर्मसामान्ये अङ्गभूतानां कर्मणामपि यत्र सामान्यं पञ्चप्रयाजता त्र्यनुयाजतेत्येवमादि, तत्रापि सह प्रयोगः।

यत्र देशस्यैक्यं यथा—"प्राचीनप्रवणे वैश्वदेवेन यजेत," "समे दर्शपूर्णमासाभ्यां यजेत" (आप० श्रौ० १।६७) इत्यादौ, तत्रापि सह प्रयोगः।

एवं कालसामान्येऽपि "पौर्णमास्यां पौर्णमास्या ( आग्नेयादिप्रधानसमुदायेन ) यजेत" ( आप० श्रौ० १।६।७ ) इत्यादौ, तत्रापि सह प्रयोगः। एवं दक्षिणासामान्ये गुणसामान्ये ऽपि सह प्रयोगः ॥३॥

[ श्री—राष्ट्रादिफलादिभेदे मित्रविन्दाग्नेयादीनां भेदः ]

**तद्भेदे भेदः ॥ ४ ॥**

तेषां पूर्वोक्तानां फलादीनां भेदे प्रयोगस्यापि भेदो बोध्यः ॥ ४ ॥

[ साङ्गवैश्वदेवादेरेव प्राचीनप्रवणादिदेशादिविधानान्नाङ्गकालविरोधः ]

प्रधानानां सह प्रयोगे अङ्गानि तन्त्रेणानुष्ठेयानीत्युक्तं तन्न सङ्गच्छते। अङ्गप्रधानयोः क्वचिद्देशकालादौ परस्परविरोधात्। वैश्वदेवे हि पर्वणि प्रधानानां प्राचीनप्रवणो देशो विहितः। तदङ्गानां प्रयाजादीनां समो देशः प्रकृतितो ऽतिदेशेनागतः। एवं च अङ्गप्रधानयोर्देशविरोधात् कथं सहानुष्ठानम्। एवं काले ऽपि विकृतीनां सर्वासामपि "य इष्ट्या पशुना सोमेन यजेत स पौर्णमास्याममायां वा यजेत" ( आप० श्रौ० १०।२।८ ) इति वाक्येन पौर्ण-

---

१ प्रधानयागानन्तरं प्रधानयागस्य पौष्कल्यापादकः स्विष्टकृदग्निदेवताको यागः स्विष्टकृत्।

२ प्रधानयागसमनन्तरम् इडापात्र्यां विधिना गृहीतम् अवशिष्टं हविः इडा इत्युच्यते।

३ अनु पश्चात् प्रधानयागानन्तरमिज्यते यैस्ते अनुयाजाः मन्त्राः, होमाः, देवाश्च।

४ "इदं द्यावापृथिवी" ( का० हौ० प० ११३ ) इत्यनुवाकप्रतिपाद्यो मन्त्रविशेषः सूक्तवाकः। आवाहन—प्रधानयागादौ या देवताः पूर्वमुक्ताः, ताः पुनरनेनापि मन्त्रसमुदायेन उच्यन्ते इति सूक्तवाकः।

५ "तच्छंयोरावृणीमहे" ( का० हौ० प० ११९ ) इति मन्त्रस्य शंयुनाम-बृहस्पतिपुत्रस्तुतिरूपत्वात् ( शंयुपदघटितत्वात् ) शंयुवाक इति नाम।

६ देवपत्नीदेवताकाः पत्नीकर्तृका दर्शपूर्णमासाङ्गभूता यागविशेषाः पत्नीसंयाजाः।

७ प्रधानयागादौ सम्यक् इष्टाः देवता इज्यन्ते अनेन स होमः समिष्टयजुः, मन्त्रश्च।

८ वैश्वदेवयागे—आग्नेयोऽष्टाकपालः, सौम्यश्चरुः, सावित्रोऽष्टाकपालः, सारस्वतश्चरुः, पौष्णश्चरुः प्रपिष्टानाम्, मारुतः स्वतवसः सप्तकपालः, वैश्वदेवी पयस्या, द्यावापृथिवीय एककपाल इति अष्टौ प्रधानानि। अयमेव वैश्वदेवयागः वैश्वदेवपर्व इति चोच्यते। (का० श्रौ० ५।१।४–१५)।

मासी अमा च कालो विहितः। अङ्गानां च प्रतिपत्कालो ऽतिदेशेन प्राप्त इत्यङ्ग-प्रधानयोः कालविषये ऽपि विरोधः। अतः कथं सहानुष्ठानमिति प्राप्ते आह—

## देशकालौ विरोधे न, कृत्स्नोपदेशात् ॥ ५ ॥

विरोधे न देशकालौ कारणे भवतः। कुतः ? कृत्स्नोपदेशात्। साङ्गाया एव विकृतेः प्राचीनप्रवणादिरूपे देशे विधानादित्यर्थः। एवं च प्राचीनप्रवणे इति वाक्येन वैश्वदेवप्रधानानामिव तदङ्गानामपि प्राचीनप्रवणरूपदेशविधनात् प्रकृतितः समदेशस्य प्राप्त्यभावेनैव विरोधाभावात्। एवं कालस्यापि विकृतौ साङ्गे एव कर्मणि विधानेन प्रकृतितः काले अप्राप्ते एव विरोधाभावादिति भाव[1]ः ॥५॥

[ द्वादशाहादौ 'द्वादशाहे सुत्यामागच्छ' इत्येवं सकृदेव सुब्रह्मण्यानिगदे सुत्योपलक्षणम् ]

ज्योतिष्टोमे सुब्रह्मण्यानिगदो विहितः। ( इन्द्रा[2]गच्छ हरिव आगच्छेत्यादिर्मन्त्रः सुब्रह्मण्यानिगदः) स च सुब्रह्मण्यसंज्ञकेन ऋत्विजा पठनीयः। स च द्विविधः। एकः सुत्याकालिकः, अपर उपसत्कालिकः। उपसच्च द्वितीय-तृतीय-चतुर्थदिवसेषु अनुष्ठीयते। तत्र प्रथमोपसद्दिने त्र्यहे सुत्यामागच्छ इति पठ्यते। द्वितीयोपसद्दिने द्व्यहे, तृतीयोपसद्दिने श्वः, सुत्या[3]दिने अद्य सुत्यामागच्छेति। केषांचिन्मते चतुरहे सुत्यामागच्छेति प्रयोगः। स च निगदो द्वादशाहे अतिदेशेन प्राप्तः। तत्र च द्वादशोपसदः, द्वादश सुत्यादिनानि। तत्रायं संशयः। प्रथमोपसद्दिने निगदे पठनीये त्र्यहे इति स्थाने द्वादशाहपदं प्रक्षेप्तव्यम्। एवं च 'द्वादशाहे सुत्यामागच्छ' इति सकृदेव सुत्याशब्दोच्चारणम्, अथवा द्वादशे, त्रयोदशे, चतुर्दशे सुत्यामागच्छ इत्यादि यावन्ति सुत्यादिनानि, तावतां सुत्याशब्दानां पाठः कर्त्तव्य इति ?

अयं भावः। सुब्रह्मण्यानिगदविधौ "त्र्यहे सुत्यामागच्छ" इति वा "इत्यहे सुत्यामागच्छ" (श० ३।३४।१८) इति वा श्रुतम्। तत्र त्र्यहे इत्यस्य त्रिषु दिनेषु पूर्णेषु चतुर्थदिनार्थं हे इन्द्र त्वमागच्छ इति दिनपरत्वमङ्गीक्रियेत, तदा द्वादशाहे सुत्यानां बहुत्वात् तावद्दिनप्रकाशनार्थं तत्तद्दिनवाचकपदविशिष्टस्य सुत्याशब्दस्यावृत्तिः कर्त्तव्या भवेत्, यथा द्वादशाहे, त्रयोदशाहे, चतुर्दशाहे सुत्यामागच्छेत्यादि। यदि च नास्य मन्त्रस्य दिनप्रकाशकत्वं, किन्तु देवतारूपस्येन्द्रस्य प्रकाशनमेव अस्य मन्त्रस्य विवक्षितं भवेत्, तर्हि एतावत्सु दिनेष्वतीतेषु हे इन्द्र त्वं यागार्थमागच्छ इति सकृदेव सुत्याशब्दोच्चारणं भवेत्। यथा—द्वादशाहेऽतीते सुत्यामागच्छ इति। एवं संशये प्राप्ते पूर्वपक्षमाह—

## अहर्गणे सुब्रह्मण्यायाः सर्वोपलक्षणं, प्रकृतिवत् ॥६॥

अहर्गणे सुत्यानां बहुत्वे उपसत्कालिके सुब्रह्मण्यानिगदे सर्वेषामह्नां भेदेनोपलक्षणम् = अभिधानं कर्त्तव्यम्। कुतः ? प्रकृतिवत्, तदानीमेव विकृतिरपि प्रकृतिवत् कृता भवेदित्यर्थः। प्रकृतौ हि सुत्यादिनमेकमासीत् इति तदेवोपलक्षितम्। विकृतावपि अह्नामेवोपलक्षणं कर्त्तव्यमिति तद्बहुत्वे तद्वाचकशब्दावृत्तिरवश्यं कर्त्तव्यैव। अन्यथा प्रकृतौ अहरुपलक्षितम्, विकृतौ च देवतोपलक्षितेति वैरूप्यमापद्येत ॥ ६ ॥

---

१ एतच्च पूर्वमीमांसायाम् ११।१।१ विचारितम्।

२ इन्द्रागच्छ हरिव आगच्छ मेधातिथिर्मेष वृषणस्यश्व मेने। गौराव स्कन्दिन्नहल्यायै जार कौशिक ब्राह्मण गौतम ब्रुवाण। त्र्यहे सुत्यामागच्छ मघवन्देवा ब्राह्मणा आगच्छत। ( श० ३।३।४।१८ ) इति सुब्रह्मण्यानिगदः।

३ अभिषवादिसंस्कृतः सोमो यस्मिन् दिने हूयते तत् सुत्यादिनम्।

एवं प्राप्ते सिद्धान्तमाह—

**तन्त्र काल कर्म, प्रत्यहमविधानात् ॥७॥**

तन्त्रेति तृतीयार्थे, कालेति सप्तम्यर्थे लुप्तविभक्तिको निर्देशः। उपसत्कालिकं यत्सुब्रह्मण्या[1]ह्वानं तत्तन्त्रेण सकृत्कर्त्तव्यम्। कुतः? प्रत्यहमविधानात् प्रतिदिनमुच्चारणस्य कर्त्तव्यत्वेन विध्यभावादित्यर्थः। अयं भावः—प्रकृतौ न सुत्यादिनस्य प्रकाशनमभिलषितं, तथात्वे दिनप्रकाशनेनादृष्टार्थत्वापत्तेः। किन्तु यागीयदेवतास्मरणम्। तस्य च करिष्यमाणे यागे उपयोगित्वात् दृष्टार्थत्वं भवति। अत एव दृष्टे सत्यदृष्टकल्पनाया अन्याय्यत्वात् त्र्यहे सुत्यामागच्छ इत्यस्य हे इन्द्र त्वं त्र्यहे अतीते सति सुत्यां प्रत्यागच्छ इत्यर्थमङ्गीकृत्य देवतास्मरणार्थत्वमेवाङ्गीकृतम्। तद्वत् विकृतावपि तस्यैव देवतास्मरणस्य दृष्टस्य कर्त्तव्यतया सकृदुच्चरितेनैव सुत्याशब्देन तल्लाभात् त्र्यहे इति स्थाने द्वादशाहपदं प्रक्षिप्य हे इन्द्र द्वादशसु दिनेष्वतीतेषु सर्वसुत्यां प्रति आगच्छ इति सकृदेव सुत्याशब्दोच्चारणम्। एतच्च पूर्वमीमांसायाम् (११।३।१०-११) विचारितम् ॥७॥

[ एकद्रव्ये कर्मावृत्तौ मन्त्रवचनं सकृत् ]

"स्फ्येन पदं[2] त्रिः परिलिखत्यस्मे रमस्वेति" (का० श्रौ० ७।८।१७) इत्यादौ क्रियावृत्तौ सत्यां प्रतिक्रियं मन्त्रावृत्तिः? उत सर्वादौ सकृदेव मन्त्रोच्चारणम्? इति संशये क्रियायाः प्रधानत्वात्, मन्त्रस्य क्रियाङ्गत्वात् क्रियावृत्तौ सत्यां मन्त्रस्याप्यावृत्तिरिति पूर्वपक्षे प्राप्ते सिद्धान्तयति—

**एकद्रव्ये कर्मावृत्तौ सकृन्मन्त्रवचनं, कृतत्वात् ॥८॥**

'प्रतिप्रधानं गुण आवर्त्तनीय' इति न्यायेन यत्र एकोद्देशेन क्रियाया आवृत्तिर्विहिता, यथा-प्रकृते एवोदाहरणे एकं पदरूपं द्रव्यमुद्दिश्य वारत्रयं परिलेखनं विहितं, तत्र सकृदेव मन्त्रवचनम्। कुतः? कृतत्वात्। मन्त्रस्य हि कार्यमनुष्ठेयक्रियाप्रकाशनरूपम्, तच्च सकृन्मन्त्रोच्चारणेनापि कृतं भवति। अतश्च क्रियाभ्यावृत्तावपि न मन्त्रावृत्तिः ॥८॥

[ हविर्ग्रहण-बर्हिस्तरणादौ मन्त्रावृत्तिः ]

एवं पूर्वोक्तन्यायेन बर्हिर्ग्रहण-बर्हिर्लवनादावपि सकृन्मन्त्रवचने प्राप्ते तदपवादमाह—

**न ग्रहण-लवन-स्तरणा-ऽऽज्यग्रहणेषु तु ॥९॥**

हविर्ग्रहणे, बर्हिर्लवने, बर्हिस्तरणे, आज्यग्रहणे च न सकृन्मन्त्रोच्चारणम्, किन्तु हविर्ग्रहणे प्रतिग्रहणम्, बर्हिर्लवने बर्हिस्तरणे च प्रतिमुष्टि, आज्यग्रहणे प्रतिस्रुवं च मन्त्र आवर्त्तनीयः। एतच्च पूर्वमीमांसायां (१।४।१५) विचारितम् ॥९॥

[ आज्यस्य द्वितीयग्रहणादौ वचनान्मन्त्रनिवृत्तिः ]

तत्रापि विशेषमाह सूत्रद्वयेन—

**वचनादाज्ये ॥१०॥**

---

१ सुब्रह्मण्यसंज्ञकेन ऋत्विजा यदिन्द्राद्यावाहनं क्रियते तत् सुब्रह्मण्याह्वानम्।

२ पदं सोमक्रयण्याः पदनिक्षेपस्थानम्। यज्ञशालायां हि सोमः क्रीयते। तच्च "अरुणयैकहायन्या गवा सोमं क्रीणाति" (श० ३।३।१।१३-१६) इति गवैव विहितम्। गौश्च यजमानगोष्ठे तिष्ठन्ती यदा क्रयणाद्यर्थं शालां प्रत्यानीयते तदा तस्याः सप्तमे पदे यदवस्थानं तत्पदं, तत् स्फ्येन परिलिख्य गृह्णीयात्। तस्य चोपयोगः सोमाधारशकटस्य अक्षाञ्जने भवति (का० श्रौ० ८।३।२८)

आज्यग्रहणे प्रथमग्रहणे एव मन्त्रपाठः । द्वितीयादिग्रहणेषु तु वचनान्मन्त्रनिवृत्तिः। "स एतेन यजुषा सकृज्जुह्वां गृह्णाति द्विस्तूष्णीम्, स एतेनैव यजुषा सकृदुपभृति गृह्णाति सप्तकृत्वस्तूष्णीम्" (श. १।३।५।१८) इत्यादिवचनात् ॥१०॥

[ अन्त्यमुष्टिग्रहणे च वचनान्मन्त्रनिवृत्तिः ]

## मुष्टौ चोत्तमे ॥११॥

हविर्ग्रहणे उत्तमे = चतुर्थे मुष्टौ "चतुर्थं तूष्णीम्" (आप० श्रौ० १।१७।२) इति वचनात् मन्त्रनिवृत्तिः कार्या । ग्रहणत्रयं तु मन्त्रेण कार्यम् ॥११॥

[ अनेकामनोज्ञस्वप्नदर्शनादौ सकृन्मन्त्रवचनम् ]

ज्योतिष्टोमे दीक्षितस्य दुःस्वप्नदर्शने, नदीतरणे, गमनसमये आत्मन उपरि वृष्टिपाते, अनेकामेध्यदर्शने, चयनयागे वनीवाहनप्रयाणे च पृथक् पृथक् प्रायश्चित्तमाम्नातम् । तत्र युगपदनेकस्वप्नादिसन्निपाते सर्वोद्देशेन सकृदेव मन्त्रपाठरूपं प्रायश्चित्तम् ? उत प्रतिनिमित्तं मन्त्रावृत्तिरिति संशये पूर्वन्यायेन आवृत्तौ प्राप्तायामाह—

## स्वप्न-नदीतरणा-ववर्षणा-मेध्यदर्शन-प्रयाणेषु तु सकृत्, काल-द्रव्यै-कार्थत्वात् ॥१२॥

अत्र त्रयो हेतवः—कालैकत्वात्, द्रव्यैकत्वात्, अर्थैकत्वाच्चेति । तत्र युगपदनेकदुःस्वप्नदर्शने, (का० श्रौ० २५।११।२०) युगपदनेकामेध्यदर्शने, (का० श्रौ० २५।११।२४) युगपदनेकवृष्टिधारावर्षणे (का० श्रौ० २५-११-२३) च कालैकत्वात्सकृन्मन्त्रपाठः। नदीतरणे (का० श्रौ०२५।११।२२) अनेकस्रोतसां भेदे = अनेकप्रवाहतरणे द्रव्यैकत्वात्; वनी[1]वाहने विश्रम्य विश्रम्य प्रयाणेऽपि (का० श्रौ १६।६।१८) आसमीहितदेशप्राप्तेरेकं गमनमिति कृत्वा एकार्थत्वात् सकृदेव 'प्रेदग्न' (शु० य० १२।३२) इति मन्त्रपाठो न भेदेन ॥१२॥

[ कालभेदेन निमित्तप्राप्तौ मन्त्रावृत्तिः ]

यत्र तु कालभेदेन पुनस्तस्यैव निमित्तस्य प्राप्तिस्तत्रापि पूर्वन्यायेन सकृन्मन्त्रवचने प्राप्ते आह—

## न, निमित्तभेदात् ॥१३॥

यत्र कालभेदेन पुनस्तानि निमित्तानि समापतेयुस्तदा पुनर्मन्त्रः पठनीयः। कुतः ? निमित्तभेदात्। तद्भेदाच्च नैमित्तिकस्य मन्त्रस्याप्यावृत्तिः। प्रतिनिमित्तं नैमित्तिकावृत्तिरिति [2]न्यायात् ॥१३॥

[ आधानादिसंस्कारस्य प्रतिकर्म नावृत्तिः ]

## अप्रधानकालऽ० सकृद, सन्निपातात् ॥१४॥

प्रधानानुष्ठानकाले एव यस्यानुष्ठानं न विहितं, किन्तु स्वातन्त्र्येणान्यः कालो यस्य विहि-

---

१ चयने उखायामग्निं भृत्वा तस्य "एष संवत्सरभृतो भवति" (शत० ब्रा० ६।७।१।१९) इत्यादिना संवत्सरादिकालेषु धारणं विहितम्। धारणानन्तरम् उख्यमग्निमनसि कृत्वा तदनः अनडुद्भ्यां स्ववसतिपर्यन्तं वाहयति । तत्कर्म वनीवाहनशब्देनोच्यते । ( का० श्रौ १६।६।१४–२१ ) तत्र न प्रतिप्रयाणं मन्त्रपाठः, किन्तु गमनादौ सकृदेव ।

२ एतच्च पूर्वमीमांसायां एकादशेऽध्याये पञ्चमे पादे सप्तदशाष्टादशाधिकरणयोर्विचारितम् ।

तत्तदङ्गमप्रधानकालम् ; यथा—आधा[1]नम् । तस्य हि दर्शपूर्णमासाग्निजनकत्वेऽपि न तत्काले तस्य विधानं, किन्तु "वसन्ते ब्राह्मणोऽग्नीनादधीत" ( श० २।१।३।४ ) इत्यादिना स्वतन्त्र एव कश्चित्कालो विहितः । तादृशमाधानादिकं सकृदेवानुष्ठेयं, न तु प्रयाजादिवत् प्रतिदर्शपूर्णमासम् दीक्ष[2]णीयादिवद्वा प्रतिसोमं तस्यावृत्तिः । कुतः ? असन्निपातात्, केन चित्कर्मणा सह असंबन्धादि[3]त्यर्थः ॥१४॥

[ पश्वनेकत्वेऽपि यूपैक्यम् ]

## यूपः ॥१५॥

यथाऽग्न्याधेयं, तद्वद्यूपोऽपि सकृदेव स्थापनीयः । कुतः ? अप्रधानकालत्वात् । अयं भावः—ज्योतिष्टोमे सन्ति त्रयः पशुयागाः । अग्नीषोमीयः, सवनीय, आनुबन्ध्यश्च । तत्राग्नीषोमीय औपव[4]सथ्येऽहनि अनुष्ठीयते, सवनीयः सुत्यादिने, आनुबन्ध्यश्चान्ते । अत्र च अपेक्षितो यूपः सकृदेव सम्पाद्यः । यूपो हि न पशुप्रयोगमध्ये विहितः । तस्य च "दीक्षासु[5] यूपं छिनत्ति" (आप० श्रौ० १०।५।१४) इति वाक्येन दीक्षाकाले एव विधिः । स च न प्रधान भूतस्य पशोः कस्य चित्कालः । अतः अप्रधानकालो यूपोऽपि दीक्षाकाले सम्पादितः सर्वेषां पशूनामुपकरोति । पूर्वन्यायेनैव गतार्थोऽप्ययं "पशवे वै यूपमुच्छ्रयन्ति" (श० ३।७।२।४) इति वाक्येन प्रतिपशु यूपप्राप्ताशङ्काया निरासार्थो वेदि[6]तव्यः ॥१५॥

[ यूपस्येव स्वरोरैक्यम् ]

## स्व[7]रुश्च, संस्थावचनात् ॥१६॥

यूपार्थं काष्ठस्य छेदने क्रियमाणे प्रथमच्छेदनेन यः शकलः परापतति स स्वरुः । (श० ३।६।४।११) सोऽपि स्वरुर्यूपवत् त्रयाणां पशूनां साधारणः । कुतः ? संस्थावचनात् । "स्वरुहोमेन हि यूपः संस्थाप्यत" इति वचनेन स्वरुहोमादेव यूपस्यापि अपवृक्तिः श्रूयते । यदि प्रथमपशावेव स्वरुर्हूयेत तदानीमेव यूपस्यापि अपवृक्त्या = लौकिकत्वेन पशुत्रयसाधारण्यं यूपस्य न स्यात् । अतः स्वरुहोमस्त्रयाणामन्त एव कार्य इति स्वरुरपि त्रितयार्थः । अपवृक्तिः समाप्तिः ॥१६॥

## तन्निर्वृत्तेश्च ॥१७॥

तत एव यूपात्स्वरोर्निष्पद्यमानत्वादेकत्वसङ्ख्याविशिष्टाद्यूपादेकरयैव स्वरोर्निष्पत्तिर्युक्तरूपा । अतोऽप्येक एव स्वरुः कार्यः । एतच्च पूर्वमीमांसायां ( ११।३।५ ) विचारितम् ॥ १७ ॥

---

१ गार्हपत्या—ऽऽहवनीय-दक्षिणाग्नीनां तत्तदायतनेषु सूत्रोक्तविधिना स्थापनमाधानम्, अग्न्याधानमिति चोच्यते । गार्हपत्यादि—नामव्यपदेशस्तु भाविसंज्ञामादायेति बोध्यम् ।

२ दीक्षणीया नाम सोमयागे प्रथमेष्टिः । दीक्षणीया दीक्षाप्रयोजनेष्टिः इति नारायणी वृत्तिः ( आश्व० श्रौ० ४।१ )

३ एतच्च पूर्वमीमांसायां (११।३।१०—११) विचारितम् ।

४ सुत्यादिवसात्पूर्वमहः औपवसथ्यम् ।

५ सोमयागाङ्गभूतयमनियमपरिग्रहो दीक्षा ।

६ एतच्च जैमिनीये (११।३।३) विचारितम् ।

७ यूपतक्षणकाले पतितं शकलं यूपे रशनायां गुह्यमानं स्वरुपदवाच्यम् ।

[ दक्षिणाऽऽम्नानात् ऋत्विजां गुणकर्मत्वम् ]

दर्शपूर्णमासादिकर्मणां फलार्थिनो विधानात् तानि कर्माणि साङ्गानि स्वयं यजमानेनैवानुष्ठेयानि इति प्राप्ते आह —

**कर्माणि पुरुषाणाम् ॥ १८ ॥**

दर्शपूर्णमासादौ होत्रध्वर्य्वादीनां कर्तृत्वं संभवति। कुतः? दक्षिणाऽऽम्नानात् इति शेषः। दर्शपूर्णमासादिषु हि "अन्वाहार्यो दक्षिणा" (श० ११।१।३.७) "गौर्दक्षिणा" (श० २।४।३।१३) इत्यादिना दक्षिणा विधीयते। सा च कर्मकरेभ्य एव दीयते भृतित्वेन। यदि यजमान एव सर्वं कार्यं कुर्यात्तर्हि स्वस्य स्वयं भृतिदानासंभवात्तदाम्नानमनर्थकमेव स्यादिति भावः ॥१८॥

[ स्वामिनो द्रव्यपरिग्रहादि—प्रधानकर्मकर्तृत्वम् ]

एवं सर्वत्र प्राप्ताविदमुच्यते—

**प्रधानँ स्वामी, फलयोगात् ॥१९॥**

यत्प्रधानं द्रव्यत्यागादिरूपहविस्त्याग-दक्षिणादानादि, तद्यजमान एव कुर्यात्। कुतः? फलयोगात्। प्रधानस्यैव फलेन संबन्धात्। तस्य स्वेनैव करणे स्वस्य फलभोक्तृत्वसंभवात् ॥१९॥

[ आशीःप्रार्थनमन्त्रजप—मुण्डनसंस्कारादिकं यजमानकर्तृकम् ]

एवम् आत्मगामिन आशीर्वचनरूपा मन्त्रा, वपन-पावनादयः फलिसंस्काराश्च यजमानेनैव कर्त्तव्या इत्याह—

**पुरुषयोगिमन्त्र-संस्कारयोस्त्यागे, सामर्थ्यात् ॥२०॥**

पुरुषसंम्बन्धी यो मन्त्रः "तनूपा अग्ने ऽसि तन्वं मे पाहि" (शु० य० ३।१७) इत्यादिः आत्मगामिफलप्रार्थनारूपः, यश्च संस्कारो वपनादिः, तावुभावपि त्यागे[1] यजमाने भवतः। ( त्यागशब्देनात्र यजमानो लक्ष्यते ) कुतः? सामर्थ्यात्। यजमान एव हि स्वीयमाशीःप्रार्थनं स्वयमेव कर्त्तुं समर्थः। संस्कारो ऽपि यजमाने एव फलभोक्तरि कृतः तत्रैव फलभोक्तृत्वरूपां योग्यतामाधातुं समर्थः। एतच्च जैमिनिना ( ३।८।७ ) निर्णीतम् ॥२०॥

[ वाचनिकं शुक्रग्रहान्वारम्भादिकं च यजमानकर्तृकम् ]

**वचनादन्यत् ॥२१॥**

उक्तव्यतिरिक्तेष्वपि कर्मसु वचनाद्यजमानस्य कर्तृत्वं भवति। यथा "यजमान उखां करोति" ( का० श्रौ० १६।३।२३) "यजमानो वेदं करोति" ( का० श्रौ० १।३।२२) इति ॥२१॥

[ ऋत्विजां समाख्यानुरोधेन कर्मकरणम् ]

**शेषमितरे यथाख्यम् ॥२२॥**

यजमानकर्त्तव्यावशिष्टं सकलमङ्गजातम् इतरे ब्रह्मादयो यथाख्यं स्वस्वसमाख्यानुसारेण कुर्युः। आख्यामनतिक्रम्येति यथाख्यम्। यथा—होता हौत्रं, ब्रह्मा ब्रह्मत्वम्, अध्वर्युराध्वर्यवम् इत्यादि ॥२२॥

---

1 चतुर्थ्यन्तं देवतानाम उद्दिश्य न मम इति यजमानः पठति स त्यागः।

[ धृतब्रह्मसूत्राः कर्म कुर्युः ]

[1]उपवीतिनः ॥२३॥

ये कर्मकरास्ते उपवीतं धृत्वैव कर्म कुर्युः ॥२३॥

[ प्राक्संस्थान्युदक्संस्थानि वा कर्माणि कार्याणि ]

प्राञ्च्युदञ्चि वा ॥२४॥

सर्वाणि कर्माणि पात्रासादनादीनि पश्चादारभ्य प्राक्संस्थानि, दक्षिणत आरभ्य उदक्संस्थानि वा कार्याणि । परिस्त[2]रण—पर्यग्नि[3]करण—[4]पर्युक्षणादिकमप्युत्तरतः समापनीयम् ॥२४॥

[ परिभ्रमण—परिस्तरणादीनि च प्रदक्षिणं कार्याणि ]

आवृत्ति–सामन्तेषु प्रदक्षिणम् ॥२५॥

"सूर्यस्येत्यावर्त्तते" ( का० श्रौ० ३।८।१७) 'आवृत्य वेदिम्" ( का० श्रौ० २।८।५ ) इत्यादौ यत्र आवर्त्तनं = भ्रमणं विहितं, तत्र प्रदक्षिणमावर्तनं कर्त्तव्यम् । एवं समन्ताद्भवेषु पर्यग्निकरण—परिस्तरण–पर्युक्षणादिषु च कर्मसु परिस्तरणादिकं पूर्वत आरभ्य उदक्संस्थं प्रदक्षिणं कर्त्तव्यम् ॥२५॥

[ पित्र्याणि कर्माणि दैवकर्म-विपरीतक्रमेण, सकृत्, दक्षिणसंस्थानि चानुष्ठेयानि ]

विपर्यस्य पित्र्येषु तु, सकृ, दक्षिणा च ॥२६॥

पैतृकेषु कर्मसु विपर्यासेन प्रा[5]चीनावीतिना अप्रदक्षिणं सर्वं कर्तव्यम् । दैवे कर्मणि यदुल्लेखनादिकं कर्त्तव्यतया स्मर्यते, तत् पित्र्ये कर्मणि सकृदेव कार्यम् । पित्र्ये कर्मणि दक्षिणैव च दिग् भवति । अतश्च सर्वं कर्म दक्षिणसंस्थं दक्षिणामुखेन च कार्यम् ॥२६॥

[ क्रियार्थप्रधानद्रव्यनाशे साङ्गावृत्तिः ]

प्रधानद्रव्यव्यापत्तौ साङ्गावृत्ति, स्तदादेशात् ॥२७॥

प्रधानयागाद्यनुष्ठानार्थं यद् द्रव्यमुपात्तं, तस्य द्रव्यस्य तादृशप्रधानानुष्ठानात् पूर्वमेव नाशे सति साङ्गस्यैव प्रधानस्य आवृत्तिर्भवति । कुतः ? तदादेशात् । तेन प्रधानहविषा अङ्गानि प्रोक्षणा-ऽवघात-पेषणादीनि स्वसिद्ध्यर्थमाक्षिप्तानि । तन्नाशे तेषामपि विनाशादित्यर्थः ॥२७॥

इति कातीयश्रौतसूत्रवृत्तौ प्रथमे परिभाषाध्याये सप्तमी कण्डिका ॥७॥

---

१ "उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे" (अम० २।७।४९) इति कोशात् दक्षिणबाहुना उद्धृतं सव्यांसस्थितं स्मृत्युक्तरीत्या निर्मितं यज्ञोपवीतमित्युच्यते ।

२ "अग्नेः षोडशभिर्दर्भैः पूर्वादिषु परिस्तृतिः" इति वचनात् अग्नीनां पूर्वादिक्रमेण दर्भैः स्तरणं परिस्तरणम् ।

३ हविषामासमन्तात् प्रादक्षिण्येन उल्मुकस्य भ्रमणं पर्यग्निकरणम् ।

४ जलसहितेन पाणिना अग्न्यायतनाद्बहिः ऐशानदिशमारभ्य पुनस्तद्दिक्पर्यन्तं दूरतोऽस्पर्शनेन प्रदक्षिणं जलपरिषेकः पर्युक्षणम् ।

५ उपवीतविपरीतं सव्योद्धृतं दक्षिणांसस्थितं प्राचीनावीतम् ।

[ व्रीहि—यवयोरन्यतरेण यागानुष्ठानम् ]

"व्रीहिभिर्यजेत", "यवैर्यजेत" इति वाक्यद्वयेन यत्र एककार्योद्देशेन व्रीहीणां यवानां च विधानं, तत्र किं व्रीहिभिर्यवैर्वा विकल्पेन यागः कर्त्तव्यः ? उत व्रीहिभिर्यवैश्च समुच्चितैः, अथवा व्रीहिभिर्यवैश्च उभयैरपि पृथक् पृथक् एकस्यै देवतायै आवृत्त्या यागः कार्यं ? इति संशये पूर्वपक्षयति—

## गुणानामेकार्थानाꣳ सर्वारम्भ, चोदितत्वात् ॥१॥

पुरोडाशनिष्पत्तिरूपैकप्रयोजनकानां गुणानां व्रीहियवानां विषये सर्वैरेव समुच्चितैः कर्मानुष्ठेयम् । कुतः ? चोदितत्वात्, सर्वेषामपि तदर्थमेव विहितत्वात् ॥१॥

एवं प्राप्ते आह—

## न, कृतत्वात् ॥२॥

न सर्वैः समुच्चितैर्यागः, किन्तु विकल्पेन । कुतः ? कृतत्वात्, एकेनैव व्रीह्यादिद्रव्येण पुरोडाशनिष्पत्तिरूपप्रयोजनस्य सम्पन्नत्वात् । व्रीहिभिर्यजेत इत्यत्र हि तृतीयाश्रुत्या व्रीहीणामितरनैरपेक्ष्येण साधनत्वं श्रूयते । तच्च व्रीहिमात्रनिष्पादितेन पुरोडाशेन यागानुष्ठाने ऽनुगृहीतं भवति । अन्यथा तद्बाध्येतेत्यपि इति भावः ॥२॥

यदि चैवं मन्यते एकेनैव द्रव्येण यागे निष्पन्ने ऽपि विध्यन्तरानुग्रहार्थं द्रव्यान्तरेणापि यागस्यावृत्तिराश्रीयते इति, तत्राह—

## अनारभ्यत्वात् ॥३॥

द्रव्यस्य यागं प्रति गुणभूतत्वेन गुणानुरोधेन प्रधानावृत्तेरन्याय्यतया न श्रुत्यन्तरानुग्रहार्थं यागोऽभ्यसितुमर्हति । अतो विकल्प एव युक्तो, न समुच्चय इति भावः ॥३॥

## दर्शनाच्च ॥४॥

"वर्षवृद्धा उ ह्येवैते यदि व्रीहयो यदि यवाः" (श० १।२।४।२०) इति व्रीहि—यवयोर्विकल्पेन श्रवणाच्च विकल्प एव, न समुच्चयः ॥४॥

## श्रुत्यानर्थक्यमिति चेत् ॥५॥

व्रीहि—यवयोर्विकल्पे अन्यतरश्रुतेरानर्थक्यं भविष्यतीति चेत् ॥५॥

तत्रोत्तरमाह—

## कालान्तरेऽर्थवत्वं स्यात् ॥६॥

कालान्तरानुष्ठेयप्रयोगे शास्त्रान्तरस्य प्रयोजनवत्वं भविष्यतीत्यर्थः । अयं भावः—साग्निकस्य शरदि व्रीह्या[1]ग्रयणं, वसन्ते च यवाग्रयणं विहितम् । (का० श्रौ० ४।६।१) तत्र व्रीह्याग्रयणं कृत्वा यवाग्रयणात्प्राक् व्रीहिभिरेव दर्शपूर्णमासादिकमनुष्ठेयम्, एवं यवाग्रयणं कृत्वा व्रीह्याग्रयणात्प्राक् यवैरेव यागो विधेय इति नियमोऽस्ति (आप० श्रौ० ६।३१।१३) । एवं च व्रीहियागकाले यवश्रुतेरनर्थकत्वे ऽपि यवयागकाले यवश्रुतिः सार्थिकैव, इति व्यवस्थितविकल्पोऽयमिति भावः ।

---

१ अग्रे नवान्नोत्पत्यनन्तरम् आदौ अयनमाचरणं यस्य तदाग्रयणं नाम यज्ञः । एतत् कृत्वैव नवमन्नं प्राद्यते नाकृत्वेति ।

यद्यपि "रूपं कालोऽनुनिर्वापो देवता श्रपणं तथा। आदौ ये विधृताः पञ्चास्त इमे सर्वदा स्मृताः" (त्रिकाण्डमं० २६) इति शास्त्रेण प्रथमप्रयोगे गृहीतद्रव्यस्यैव द्वितीयादिप्रयोगेऽपि ग्रहणावश्यंभावः; तथापि "व्रीहिभिरिष्ट्वा व्रीहिभिरेव यजेताऽऽग्रयणात्, यवैरिष्ट्वा यवैरेवा व्रीह्याग्रयणात्" (आप० श्रौ० ६।३१।१३) इत्यापस्तम्बसूत्रानुसारेण आहिताग्नेः शरदि व्रीह्याग्रयणविधानात्, वसन्ते च यवाग्रयणविधानात् तद्विधिबलात् यवग्रहणावश्यंभावे सति तत्र शास्त्रान्तरस्य चारितार्थ्यं भवतीत्याशयः। एतच्च पूर्वमीमांसायाम् (१२।३।४) स्पष्टम् ॥६॥

[ ऋज्वादिगुणानामाघारे समुच्चयः ]

"ऋजुमाघारयति" "प्राञ्चमाघारयति" "सन्ततमाघारयति" ( तै० स० २।५।११ "दीर्घमाघारयति" ( आप० ३।१२।१८ ) इति आघारसंज्ञकौ होमौ प्रकृत्य ऋज्वादयो धर्मा विहिताः। तत्र तेषां समुच्चय उत विकल्प ? इति संशये उक्तन्यायेन व्रीहि-यववद्विकल्पे प्राप्ते आह—

## धर्ममात्रेषु समुच्चयोऽविरोधे ॥७॥

अदृष्टार्थानामृज्वादीनामङ्गानां मध्ये विरोधाभावे सति समुच्चयः कर्त्तव्यो, न विकल्पः। नहि ऋज्वादीनां परस्परं विरोधोऽस्ति। एतच्च जैमिनीये(११।३।९) विचारितम् ॥७॥

[ होतृका—ऽऽधानमन्त्राणां समुच्चयः ]

अग्निमन्थनकाले होत्रा पठनीया बहवो मन्त्रा आम्नाताः क्रि[1]यमाणानुवादिनः "अभि त्वा देव" इत्यादयस्त्रयोदश ( का० हौ० प० ३।२ )। एवम् अग्निप्रणयनादावपि "प्र देवं देव्या धिया" इत्याद्या अष्ट ऋच आम्नाताः (का० हौ० प० ३।५)। एवमाधानमन्त्रा अपि भूर्भुवः स्वः ( का० श्रौ० ४।८।११ ) इत्याम्नाताः। तत्र सत्स्वपि बहुषु मन्त्रेषु यः कश्चिदेको मन्त्रो विकल्पेन पठनीय उत सर्वे मन्त्राः ? एवमाधानेऽपि भूर्भुवः स्वः इति व्याहृतित्रये विकल्पेन एका व्याहृतिः पठनीया उत व्याहृतित्रितयम् ? इति संशये—मन्त्राणामनुष्ठेयक्रियास्मारकत्वस्य निर्णीततत्रात् एकेनैव मन्त्रेण तन्निष्पत्तेः एको यः कश्चिन्मन्त्रः पठनोय इति प्राप्ते आह—

## होत्रा—ऽऽधानयोः ॥८॥

पूर्वसूत्रात् समुच्चय इत्यनुवर्त्तते। होतृकेषु क्रियमाणानुवादिषु आधानाङ्गभूतव्याहृतिषु च समुच्चय एव। कुतः ? अदृष्टार्थत्वात्। क्रियमाणानुवादिनो हि मन्त्रा अदृष्टार्थाः, अतो न विकल्पः। आधानमन्त्रेष्वपि "त्रिभिरक्षरैर्गार्हपत्यमादधाति पञ्चभिराहवनीयम्" (तै० ब्रा० १।१।५) (श० ब्रा० २।१।४।१४) इति वचनात्समुच्चयः। एतच्च जैमिनीये (१२।३।१६) विचारितम् ॥८॥

पूर्वोक्तन्यायेन सर्वत्र प्राप्तं समुच्चयं क्वचिदपवदति—

## न या[2]ज्या—ऽनुवाक्या[3]सु, विरोधात् ॥९॥

एकस्मिन्प्रकरणे यत्र बह्व्यो याज्या बह्व्यश्च अनुवाक्याः पठिताः, तासु न समुच्चयः।

---

१ मन्त्रास्त्रिविधाः। करणमन्त्राः, क्रियमाणानुवादिनो, जपमन्त्राश्च। यं मन्त्रं पूर्वमुच्चार्य मन्त्रान्ते कर्म क्रियते ते करणमन्त्राः। क्रियाकरणकाले एव यः पठ्यते स क्रियमाणानुवादी मन्त्रः। अदृष्टार्थं कर्मकाले पठनीया मन्त्रा जपमन्त्राः।

२ ये यजामहे इति पूर्विका वषट्कारान्ता हविःप्रदानार्था ऋक् इज्यते अनया इति व्युत्पत्त्या याज्याशब्देनोच्यते।

३ पुरः यागात्पूर्वं देवतामनुकूलयितुं (आह्वातुं) या ऋक् अनूच्यते सा पुरोऽनुवाक्या, अनुवाक्या इति चोच्यते।

अनुवाक्याया देवतास्मरणरूप-दृष्टप्रयोजनत्वात्, याज्यायाश्च हविःसमर्पणार्थत्वरूप-दृष्ट फलकत्वादेकयैव पुरोऽनुवाक्यया, एकयैव याज्यया तत्कार्यसिद्धेः। एतच्च पूर्वमीमांसायां (१२।४।३) विचारितम् ॥९॥

## दर्शनाच्च ॥१०॥

"एकाऽनुवाक्या भवत्येका याज्या" (श० ५।१।३।४) इति लिङ्गाच्च एक एव याज्या—पुरोऽनुवाक्यामन्त्रो भवति, न समुच्चयेन द्वौ वा बहवो वा ॥१०॥

[ एकस्मिन् कर्मणि आम्नातानामनेकप्रायश्चित्तानां समुच्चयः ]

एकस्मिन्निमित्ते यत्र अनेकप्रायश्चित्तविधानं तत्र विकल्पः समुच्चयो वा इति संशये पूर्वपक्षयति—

## प्रायश्चित्तेषु, दोषनाशात् ॥११॥

प्रपूर्वस्मात्सूत्रान्नेति वर्त्तते, समुच्चय इति च। एकस्य कर्मणो दोषनिर्घातार्थं यत्र बहूनि प्रायश्चित्तानि विहितानि तत्र समुच्चयेन न सर्वेषां प्रायश्चित्तानामनुष्ठानं, किन्तु विकल्पेन यस्य कस्यचित् एकस्य प्रायश्चित्तस्यानुष्ठानम्। कुतः? एकेनापि प्रायश्चित्तेन दोषनाशात्। अतो विकल्पः ॥११॥

ननु एकेन प्रायश्चित्तेन दोषनाशे द्वितीयस्य वैयर्थ्यं स्यादित्याशङ्क्य सिद्धान्तमाह—

## ना,ऽश्रुतेः ॥१२॥

प्रायश्चित्तेऽनुष्ठिते दोषनिवृत्तिर्न भवति। कुतः? अश्रुतेः, तथा अविधानादित्यर्थः। अतश्च दोषनिवृत्त्यभावेन दृष्टार्थत्वाभावाददृष्टार्थतैव। तस्मात्समुच्चयः। एतच्च जैमिनिना (१२।३।५) निर्णीतम् ॥१२॥

## प्रत्यक्षाच्च ॥१३॥

"भिन्ने जुहोति" (का० श्रौ० २५।२।५) इति प्रणीतापात्रादिभेदने होमरूपं प्रायश्चित्तं विहितम्। तत्र कृते ऽपि होमे न भिन्नमभिन्नं भवति। अतः प्रत्यक्षेणापि दोषनिवृत्त्यदर्शनात् प्रायश्चित्तानुष्ठानं धर्ममात्रमेव। अतः समुच्चय एव, न विकल्पः ॥१३॥

पुनः पूर्वपक्षी प्रत्यवतिष्ठते—

## स्याद्वा, दर्शनात् ॥१४॥

अथवा अस्तु केषां चित्प्रायश्चित्तानां दोषनिवृत्त्यर्थता। कुतः? दर्शनात्, "स यथा पर्वणा पर्व सन्दध्यादेवं हैव स सन्दधाति य एताभिर्भिषज्यति" (श० ११।५।७।६) इति श्रुत्या सन्धानरूपभैषज्यस्य दर्शनादित्यर्थः। अतो दृष्टार्थत्वाद्विकल्प एवेति भावः ॥१४॥

एवमुपक्षिप्तं पक्षं खण्डयति—

## ना, ऽन्यार्थत्वात् ॥१५॥

यदुक्तं दर्शनाद्विकल्प इति, तन्न। कुतः? अन्यार्थत्वात्, सन्धान—भैषज्ययोर्महाव्याहृतिस्तुत्यर्थत्वादित्यर्थः। इत्थं प्रशस्तो महाव्याहृतिहोमो येन सन्धान—भैषज्ये क्रियेते, अतोऽदृष्टार्थत्वात्समुच्चयः ॥१५॥

[ कर्मणि जपादिवर्जं मन्त्राणामेकश्रुतिः ]

प्रयोगकाले उच्चार्यमाणा मन्त्राः संहितास्वरेण प्रयोज्या, उत ब्राह्मणस्वरेण, उत[1]एक-श्रुत्या इति संशये पूर्वपक्षयति—

**मन्त्रे स्वरक्रिया यथाम्नात, अविशेषात् ॥१६॥**

कर्मणि प्रयुज्यमानो मन्त्रो येन स्वरेण संहितायां पठितस्तेनैव स्वरेण प्रयोज्यः। कुतः? स्वरान्तरस्य विशेषेणोपदेशाभावात् ॥१६॥

द्वितीयं पूर्वपक्षमाह—

**भाषिकस्वरो वा, पपन्नमन्त्रोपदेशात् ॥१७॥**

अथवा प्रयोगकाले ब्राह्मणस्वरेण मन्त्राः प्रयोज्या, न संहितास्वरेण। कुतः? संहिता-स्वरेण युक्तस्य मन्त्रस्य पुनर्ब्राह्मणस्वरेण स्वरान्तरोपदेशात्। अतो न संहितास्वरः। "छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः। उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते" इति शबरभाष्ये (१२।३।७) ॥ १७ ॥

एवं प्राप्ते सिद्धान्तयति—

**तानो वा, नित्यत्वात् ॥१८॥**

वाशब्दः पूर्वपक्षव्यावर्त्तकः। तानः = उदात्तादिस्वररहित एकश्रुतिरेव मन्त्राणां स्वरो भवति, न संहितास्वरो, नापि ब्राह्मणस्वरः। कुतः? नित्यत्वात्, वर्णस्वरूपमात्रोच्चारणाविनाभू-तत्वादित्यर्थः। स्वरान्तरस्यानियतत्वात् ॥१८॥

उक्तेऽर्थे व्याकरणस्मृतिं प्रमाणयति—

**एकश्रुति दूरात्संबुद्धौ यज्ञकर्मणि, सुब्रह्मण्या-साम-जप-न्यूङ्ख-याजमानवर्जम् ॥ १९ ॥**

दूरादाह्वाने, सुब्रह्मण्यानिगद-साम-ज[2]प-न्यूङ्[3]ख-याजमानभिन्ना ये मन्त्रा यज्ञ-कर्मणि प्रयुज्यन्ते, तेषु च एकश्रुतिस्वरः स्यात्। एतच्च जैमिनिना (९।२।७) निर्धारितम् ॥१९॥

---

१ एकश्रुतिर्नाम उदात्तानुदात्तस्वरितस्वराणामभावः। "उदात्तानुदात्तस्वरितानां परः सन्निकर्ष ऐकश्रुत्यम्" इति आश्वलायनश्रौतसूत्रात्। (१।२)

२ जपो मयीदमिति जपति (का० श्रौ० ३।४।१९) इत्यादिः।

३ न्यूङ्खो नाम—सोमयागे प्रातरनुवाकसंज्ञकं शस्त्रं होत्रा शंसनीयत्वेन विहितम्। तत्र एकै-कस्या ऋचः यौ अर्द्धर्चयोराद्यौ भागौ, तत्र प्रथमम् अचं वर्जयित्वा द्वितीयस्य अचः स्थाने ओकारं प्लुतम् उदात्तस्वरविशिष्टं च त्रिःपठेत्। ततः प्रथमवारं पञ्च, ततोऽधिकान् वा अर्द्धौकारान् पठेत्। ततः तमेव ओकारं प्लुतं पठित्वा पुनः पञ्च अर्द्धौकारान् पठेत्। ततः पुनरपि तृतीयवारं तमेव ओकारं प्लुतं पठित्वा पुनः त्रीन् अर्द्धौकारान् पठेत्; स एव न्यूङ्ख इत्युच्यते। यथा—"आपो ३ ॐ ॐ ॐ ॐ ॐ ओ ३ ॐ ॐ ॐ ॐ ॐ ओ ३ ॐ ॐ ॐ रेवतीः क्षयथा हि वस्वः क्रतुं च भद्रं बिभृथामृतं च। रायो ३ ॐ ॐ ॐ ॐ ॐ ओ ३ ॐ ॐ ॐ ॐ ॐ ओ ३ ॐ ॐ ॐ स्थः स्व पत्यस्य पत्नी सरस्वती तद् गृणते वयोधोऽ३मा पो ३।" इति। एतच्च "चतुर्थेऽहनि प्रातरनुवाकप्रतिपद्यर्द्धर्चाद्योर्न्यूङ्खः। द्वितीयस्वरमौकारं त्रिमात्रमुदात्तं त्रिः। तस्य तस्य चोपरिष्टादपरिमितान्पञ्च वाऽर्धौकारानुदात्तान्। उत्तमस्य तु त्रीन्। पूर्वमक्षरं निहन्यते न्यूङ्खमाने" इति (आश्व० श्रौ० सूत्रे ७।१) स्पष्टम्।

[ आम्नातानेकसङ्ख्याकदक्षिणानां विकल्पः ]

आधाने " षड् द्वादश चतुर्विंशतिं दद्यात् " ( श० २।२।२।३ ) इति वाक्येन दीयमानदक्षिणायां सङ्ख्या श्रुता, तत्र विकल्पः ? उत समुच्चयः ? इति संशये विकल्पे कारणाभावात् सङ्ख्यानां समुच्चय इति प्राप्त आह—

**सङ्ख्याविकल्पो दानसंयोगे, कृतत्वात् ॥ २० ॥**

दानसंयोगे या सङ्ख्या श्रुता, तस्या विकल्प एव, न समुच्चयः । कुतः ? कृतत्वात्, एकयैव सङ्ख्यया आनतिरूप—दृष्टप्रयोजनस्य सम्पत्तेः । एतच्च जैमिनीये ( १२ । ४ । ५ ) निर्णीतम् ॥ २० ॥

[ पशुगणे द्रव्यार्थक्रियाणां वसाहोमादीनां समुच्चयः ]

अग्नीषोमीयपशौ "ऊव[1]ध्यमवद्धाति" (का० श्रौ० ६।७।२७) "वसां[2] जुहोति" (श० ३।८।३० ) "अध्यूध्नीं[3] होत्रे प्रयच्छति" ( का० श्रौ० ६।८।५ ) "वनिष्ठु[4]मग्नीधे ददाति" (का० श्रौ० ६।८।४) इत्यादिवाक्यैः श्रुतानाम् ऊवध्यादीनामतिदेशेन वाजपेये "सप्तदश प्राजापत्यानालभते" ( श० ५।१।३।७ ) इत्यादौ पशुगणेन प्राप्तानां प्रतिपशु भेदेनानुष्ठानमुत सकृदेव इति संशये "भूतं भव्यायोपदिश्यत" इति न्यायेन द्रव्यस्य क्रियार्थत्वात् एकेनैव द्रव्येण क्रियाया निर्वर्त्तितत्वात् पुनर्द्रव्यान्तरेणानुष्ठाने प्रयोजनाभावाद् विकल्पेन येन केनचिद् द्रव्येण क्रियाकरणमिति प्राप्त आह—

**ऊवध्य-वसा-ऽध्यूध्नी-वनिष्ठुषु समुच्चयो द्रव्यसंस्कार-तद्भेदाभ्याम् ॥२१॥**

ऊवध्यादिषु समुच्चय एव । अर्थात् सर्वपशूनां सर्वैरूवध्यैः क्रियाऽनुष्ठेया। कुतः ? द्रव्यसंस्कारात्, तद्भेदाच्च । ऊवध्यावधानादीनां द्रव्यसंस्कारकत्वात् । द्रव्याणां च भेदात् । संस्कार्यत्वेन द्रव्याणां प्रधानत्वात् प्रतिप्रधानं गुणावृत्तिन्यायेन यावद्द्रव्यमवधानादिक्रिया कर्त्तव्या । अन्यथा यस्य कस्य चित्पशोरननुष्ठाने तस्य वैगुण्यमापद्येत, तस्मात्समुच्चय एव ।

यत्र च क्रियोद्देशेन द्रव्यमुपदिश्यते तत्रैव "[5]भूतं भव्यायोपदिश्यत" इति न्यायः, तत्रैव विकल्पो ऽपि, नात्रेति भा[6]वः ॥ २१ ॥

[ सोमक्रयसाधनानां हिरण्यादीनां समुच्चयः ]

ज्योतिष्टोमे सोमक्रयप्रकरणे श्रूयते "हिरण्येन क्रीणाति, वाससा क्रीणाति" (तै० सं० ६।१।१०) इत्यादि । तत्रायं संशयः । क्रयार्थं विहितेषु दशस्वपि द्रव्येषु समुच्चय, उत विकल्पः ? । अर्थात् दशसु मध्ये येन केनापि द्रव्येण क्रयणम्, उत सर्वैर्द्रव्यैरिति । तत्र परस्परनिरपेक्षाणामेव द्रव्याणां क्रमोद्देशेन विधानात् एकेनैव द्रव्येण दृष्टस्य क्रयस्याभिनिर्वृत्तेः विकल्पेन येन केन चिद् द्रव्येण क्रयणमिति प्राप्ते सिद्धान्तयति—

---

१ 'उदरगतम् असुरभि शकृदादि ऊवध्यम्' इति "आप० श्रौ. भाष्ये", ७।१६।३ ) ।

२ मांसपाकभाण्डस्थितः स्नेहविशेषो वसा ।

३ "अधिकमूधो यस्याः सा अध्यूध्नी । अत्र ऊधस्थं मांसमध्यूध्नीशब्देनोच्यते" इति आप. श्रौ. भाष्ये ( ७।२२।६ )

४ "स्थूलमान्त्रं वनिष्ठुः" इति आप० श्रौ. भाष्ये ( ७।२६।१० ) ।

५ भावाधिकरणसिद्धोऽयं न्यायः (पू० मी० २।१।२) ।

६ एतच्च पूर्वमीमांसायां (१२।४।६) विचारितम् ।

## चोदनागुणेषु च, प्रक्लृप्त्यु-पबन्धाभ्याम् ॥२२॥

चशब्दः पूर्वसूत्रोक्तं समुच्चयमनुकर्षति। चोदनागुणेषु क्रयविधिषु श्रुतेषु हिरण्यादिषु दशसु गुणेषु विकल्प एव न समुच्चयः। कुतः? प्रक्लृप्तेः, उपबन्धाच्च। प्रक्लृप्तेः पूर्वमेव सोमस्य सन्निहितत्वात्। यदि क्रयः अप्राप्तसोमस्य प्रापकः स्यात्, तर्हि दृष्टार्थता क्रयस्य भवेत्। अत्र च सोमो विध्यन्तरानुसारेण पूर्वमेवानीय स्थापितः। अतश्च केवलादृष्टार्थतैव क्रयस्य। न ह्यदृष्टार्थानां विकल्पो भवितुमर्हति। अतः समुच्चय एव।

एवम् "तं वै दशभिरेव क्रीणीयान्नादशभिः" ( श० ३।३।३।१८ ) इति सङ्ख्योपबन्धादपि समुच्च[1]यः ॥ २२ ॥

[ गार्हपत्याहवनीययोर्मध्ये न गच्छेत्, न चोदपात्रादिकं नयेत् ]

## गार्हपत्याहवनीयौ न व्यवेयात् ॥२३॥

यत्र प्रयोजनार्थं विहारे सञ्चरः प्राप्नोति तत्र विधिमन्तरा गा[2]र्हपत्याह[3]वनीयोर्मध्ये आत्मना पात्रादिना वा व्यवधानं न कुर्यात्, नान्तरा गच्छेत्, न वा पात्रादिकमाहरेदिति यावत् ॥२३॥

[ प्रदक्षिणमप्रदक्षिणं वा ऽऽवृत्येतरथा ऽऽवृत्तिः ]

## विवृत्याऽऽवृत्य वेतरथा ऽऽवृत्तिः ॥२४॥

विवृत्य = यत्र पैतृके कर्मणि अप्रदक्षिणं विहितं तत्र तत्कृत्वा इतरथा ऽऽवृत्तिस्तद्वैपरीत्येन प्रत्यावृत्तिः कार्या। आवृत्य यत्र दैवे कर्मणि प्रदक्षिणं विहितं तत्र तत्कृत्वा प्रत्यावृत्तिः कार्या। दैवेषु कर्मसु प्रादक्षिण्येन कर्मानुष्ठाय तत्कर्मावसाने अप्रादक्षिण्येन प्रतिनिवर्तितव्यम्। एवं पित्र्येषु कर्मसु अप्रदक्षिणं कर्मानुष्ठाय पुनः प्रादक्षिण्येन प्रतिनिवर्त्तितव्यमिति भावः। तद्यथा—परिस्तरणादौ प्रादक्षिण्येन हस्तेन परिस्तरणे कृते यत्र परिस्तरणं समाप्तं तत्स्थानात् परिस्तरणारम्भस्थानं प्रति अप्रादक्षिण्येनैव हस्तस्यानयनमित्यादि ॥२४॥

[ विहितपदार्थानुष्ठानानन्तरं प्रवेशमार्गेण निष्क्रमणम् ]

## अतीत्य निष्क्रमणम् ॥२५॥

यत्र अग्निहोत्रेष्ट्यादौ "अन्तरेणापराग्नी गत्वा" (२-१-११) इत्यादिशास्त्रोपदिष्टमार्गेण प्रवेशः कृतः, तत्र कर्मसमाप्तौ तेनैव मार्गेण निष्क्रमणं कर्त्तव्यम् ॥२५॥

[ अग्न्यायतनादुत्तरतः कर्मणोऽनुष्ठानम् ]

## उत्तरत उपचारो यज्ञः ॥२६॥

यस्य कर्मणो यज्ञे स्थानविशेषो न विहितः, तस्य कर्मणो विहारादुत्तरस्मिन् स्थाने कर वेदितव्यम् ॥२६॥

---

१ एतच्च पूर्वमीमांसायां द्वादशाध्याये चतुर्थपादे तृतीयाधिकरणे विचारितम्।

२ अग्निहोत्रशालायां पश्चिमे भागे सप्तविंशत्यङ्गुलव्यासं वृत्तं द्वादशाङ्गुलोच्च—चतुरङ्गुलविस्तृतमेखलावत्, गार्हपत्यायतनं भवति। तत्र विधिना संस्थापितो ऽग्निर्गार्हपत्यः। अयमेवाग्निराहवनीय–दक्षिणाग्न्योर्योनिः। "यतः प्रणयते स गार्हपत्यः" इति ( आप० श्रौ० ७।७।३ ) सूत्रात्।

३ अरत्निप्रमाणं समचतुरस्रं मेखलावत् आहवनीयकुण्डम्। तत्र स्थापितोऽग्निराहवनीयः। स च आहूयते ऽस्मिन्नित्याहवनीय इति व्युत्पत्त्या "आहवनीये होमाः" ( का. श्रौ० १।८।४३ ) इति सूत्रेण होमाधारभूतः।

[ ब्रह्मयजमानयोर्दक्षिणत उपवेशनम् ]

## दक्षिणतो ब्रह्म-यजमानयोरासनं ॥२७॥

कर्त्तव्ये ॥२७॥

[ यजमानस्य ब्रह्मणः पश्चादुपवेशनम् ]

## पश्चाद्यजमानो वेदिस्पृक् ॥२८॥

यजमानो वेदेर्दक्षिणतो वेदिसंलग्नः पश्चिमत उपविशेत्। अर्थात् यजमानस्य पूर्वतो, वेदेर्दक्षिणतो ब्रह्मोपविशेत् ॥२८॥

[ यजुर्वेदविहितस्य कर्मणो ऽध्वर्युकर्तृकत्वम् ]

## अध्वर्युः कर्मसु, वेदयोगात् ॥२९॥

यजुर्वेदविहितकर्मसु कर्त्तुरनुक्तौ अध्व[1]र्युः कर्त्ता भवति। कुतः? अध्वर्योर्यजुर्वेदेन सम्बन्धात्। यजुर्वेदस्य अध्वर्युवेद इति समाख्यानात्। यजुर्वेदविहितकर्मसु अध्वर्योः कर्तृत्वे सत्येव समाख्या सम्पद्यत इति भावः ॥२९॥

[ यजुर्वेदविहितकर्मणो ऽग्नीदादिकर्तृकत्वं क्वाचित्कम् ]

## वचन-विरोधाभ्यामन्यः ॥३०॥

यत्र तु विशेषवचनमस्ति, यत्र च विरोधोऽस्ति तत्र अध्वर्युव्यतिरिक्तो ऽन्योपि यजुर्वेदविहितकर्मणः कर्त्ता स्यात्। यथा—"मन्थि[2]नं प्रतिप्रस्थाता जुहोति" (४।२।१।१३) इति वचनात् मन्थिग्रहहोमः प्रतिप्रस्थातृकर्त्तृकः। "पेषणोपधाने युगपत्" (२।४।२४) इति पेषणस्य, क[3]पालोपधानस्य च युगपद्विधानात् एकेनाध्वर्युणा युगपत्कार्यद्वयस्य कर्त्तुमशक्यत्वात् अर्थात् पेषणमध्वर्युः, उपधानमग्नीत्कुर्यात् ॥३०॥

[ हविरादीनामन्तरङ्ग-बहिरङ्गभावः ]

## हवि-ष्पात्र-स्वाम्यृ-त्विजां पूर्वं पूर्वमन्तरम् ॥३१॥

हविर्व्रीह्यादि, पात्रं प्रणीतादि, स्वामी यजमानः पत्नी च, ऋत्विजो ब्रह्माद्याः, एतेषामेकत्र समावेशे सति यद्यत्पूर्वं पठितं तत्तदग्निसन्निकृष्टं भवति, परं परं बहिरङ्गं भवति। अर्थात् हविरपेक्षया पात्रस्य बहिरङ्गत्वम्, पात्रापेक्षया च स्वामिनः, स्वाम्यपेक्षया च ऋत्विजाम्। अतश्च पात्रं यदि क्वचित्स्थाने स्थितं स्थानान्तरं प्रति नेयं भवति तदा नाग्निहविषोर्मध्ये नेयम्, किन्तु हविषो बहिरेव नेयम्। तथा स्वामिनो ऽपि वचनादन्यत्र गमने प्रसक्ते हविः पात्राणि च अन्तरं कृत्वा स्वयं बहिर्गच्छेत्, न हविषः पात्राणामग्नेश्चान्तरा। एवमृत्विजो गमने प्राप्ते हविः, पात्राणि, स्वामिनं चान्तरं कृत्वा स्वयं बहिर्गच्छेत्। एवं च ऋत्विक् स्वीये

---

१ अध्वरं युनक्तीति अध्वर्युः। यः कर्मण आरम्भसमाप्ती करोति। एतच्च जैमिनीये ( ३।८।९ ) विचारितम्।

२ मन्थी नाम ग्रहः। स च सोमरसाधारभूतः पात्रविशेषः वैकङ्कतः प्रादेशपरिमाण उलूखलसदृशः उपरि गर्त्तवान्। प्रतिप्रस्थाता ऋत्विग्विशेषः।

३ पुरोडाशभर्जनार्थं मृत्तिकया निर्मितानि वह्नौ परिपक्वानि द्व्यङ्गुलोच्छ्रायाणि यस्मिन् पुरोडाशे यावन्ति विहितानि तानि कपालानि।

हस्ते पात्रं यदि गृहीत्वा गच्छति तदा प्रसारितहस्तः पात्रमग्निसमीपं कृत्वा स्वयं यजमानाद्बहिरर्थात् स्वस्य स्वहस्तस्थस्य पात्रस्य च मध्ये स्वामिनं कृत्वा गच्छेदित्यर्थः ॥३१॥

**ऋत्विजां च यथापूर्वम् ॥३२॥**

ऋत्विजां च वरणक्रमेण अन्तरङ्गता बहिरङ्गता च। तत्र पूर्वपूर्वस्यान्तरङ्गता, परपरस्य बहिरङ्गता ॥३२॥

ननु अयमन्तर्बहिर्भावो ब्राह्मणे कुत्रापि न विहितः। अतश्च किमर्थमत्र परं विधीयते इति इमामाशङ्कां सूत्रेणैवानुवदति—

**न वा ऽचोदितत्वात ॥३३॥**

वेति पक्षव्यावृत्तौ। न ऋत्विजामन्तर्बहिर्भावो भवति। कुतः? अचोदितत्वात्, अस्य अन्तर्बहिर्भावस्य ब्राह्मणे कुत्राप्यविधानात्।

इदमेव सूत्रं समाधानपरतया ऽपि आवृत्त्या योजनीयम्। ब्राह्मणे विस्पष्टमविहितो ऽप्ययमन्तर्बहिर्भावो यदि क्वचिदपि न स्मर्येत तदानीं न स्यात्। स्मर्यते तु। यथा—"तामन्तरेण यूपं चाग्निं च हरन्ति" (श० ब्रा०३।८।२।२०) इत्यत्र अन्तर्बहिर्भावस्य स्पष्टतो विधानाभावेऽपि तात्पर्यगत्या प्रतीतेः। ब्राह्मणे अन्तर्बहिर्भावस्य शब्दतो ऽविधाने ऽपि तात्पर्यगत्या ऽवबोधनात् अस्त्येव स इति ॥३३॥

**गार्हपत्ये संस्काराः ॥ ३४ ॥**

अधि[1]श्रयण-पर्यग्निकरण—प्रतपनादयः संस्कारा गार्हपत्ये कर्त्तव्याः ॥३४॥

**श्रपणं वा ऽऽहवनीये ॥ ३५ ॥**

वा-शब्दः पक्षान्तरपरिग्रहार्थः। हविषां श्रपणमाहवनीये गार्हपत्ये वा कर्त्तव्यमित्यर्थः ॥ ३५ ॥

[ आज्यशब्दो जातिनिमित्तः ]

**घृतमाज्ये, लिङ्गात् ॥ ३६ ॥**

यत्र आज्यशब्दः श्रूयते "आज्येन यूपमनक्ति" (श० ब्रा० ३।७।१।११) इत्यादौ, तत्र सर्वत्र असंस्कृतमेव घृतं ग्राह्यम्। जातिनिमित्तो ऽयमाज्यशब्दो न संस्कारनिमित्त इत्यर्थः। अश्वमेधे "यदाज्यमुच्छिष्यते तेन रशनामभ्यज्यादत्ते" (श० १३-१-१-१) इति ब्रह्मौदनावशिष्टेन असंस्कृते घृते आज्यप्रयोगदर्शनरूपाल्लिङ्गाच्च ॥३६॥

**तस्य होमो ऽनादेशे ॥ ३७ ॥**

तस्येत्यवयवलक्षणा षष्ठी। होमार्थं द्रव्यान्तराविधाने घृतेन होमः कार्यः ॥ ३७ ॥

[ पुरीषं चात्वालाद् ग्राह्यम् ]

**चात्वालात्पुरीषम् ॥ ३८ ॥**

यज्ञे वेद्यादिनिर्माणार्थं यत्र खातायां मृदः प्रयोजनं, तत्र सा मृत्तिका चात्वालाद् ग्राह्या। द्वात्रिंशदङ्गुलमितसमचतुस्रो द्वात्रिंशदङ्गुलखातवान् वेदेरीशानकोणस्थः शुद्धखातमृदा पूरितो गर्त्तविशेषश्चात्वालः ॥ ३८ ॥

---

१ वह्नेरुपरि आज्यादीन् स्थापयित्वा सन्तापनमधिश्रयणम्।

[ आज्यसाध्ययागा ध्रौवाज्येनानुष्ठेयाः ]

आहवनीययजतयो ध्रुवायाः ॥ ३९ ॥

आहवनीये कर्त्तव्यतया विहिता यागा ध्रुवा[1]त आज्यं गृहीत्वा कार्याः, नाज्यस्थालीतः। "सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यम्" (श० ब्रा० ४।३।५।२) इति ध्रौवाज्यस्य साक्षात् यज्ञसाधनत्वेनैव श्रवणात्। एतेन उपस्तर[2]ण-भिघा[3]रण-प्राणदा[4]नादीनि कर्माणि आज्य[5]स्थालीत एव कर्त्तव्यानीत्यर्थात्सिध्यति। एवं च यागसाधनमाज्यं ध्रुवातो ग्राह्यं, संस्कारकमाज्यं स्थालीत इति भावः ॥ ३९ ॥

[ इडादीनामपि ध्रौवाज्येनानुष्ठानं केषांचिन्मते ]

इडा-प्राशित्रा-ऽऽघारांश्चैके ॥ ४० ॥

इडायाः, प्राशि[6]त्रहरणस्य च उपस्तरणाभिघारणे, आघारहोमौ च केचिद् ध्रौवाज्यादभिवाञ्छन्ति। एकग्रहणान्नेदं सर्वसम्मतम्। अतः स्थालीत एव ग्राह्यमिति कर्कः ॥ ४० ॥

प्राञ्चावाघारौ ॥ ४१ ॥

प्रजापतये स्वाहा, इन्द्राय स्वाहा, इत्येतौ पूर्वोत्तराघारौ प्राक्संस्थौ होतव्यौ ॥४१॥

विदिशावेके ॥ ४२ ॥

आहवनीयस्योत्तरश्रोणे[7]रारभ्य दक्षिणांसपर्यन्तं पूर्वाघारं जुहुयात्। दक्षिणश्रोणेरारभ्योत्तरांसपर्यन्तमुत्तराघारो होतव्यः। अर्थाद् वायव्यादारभ्य आग्नेय्यां प्रथमाऽऽघारः परिसमापनीयः। नैर्ऋत्यात्कोणादारभ्य ऐशान्यां दिश्युत्तराऽऽघारः परिसमापनीय इति ॥४२॥

आहवनीये होमाः, श्रुति-समाख्यानाभ्याम् ॥४३॥

विशेषवचनाभावे सर्वे होमा आहवनीये कार्याः। कुतः? "यदाहवनीये जुहोति" (तै० ब्रा० १०।१०।१०) इति श्रुतेः। आ अस्मिन् हूयते इति आहवनीय इति समाख्यानाच्च ॥४३॥

[ दर्शपूर्णमासादिषु जुह्वा होमः ]

जुह्वा ऽवचने ॥ ४४ ॥

अवचने जु[8]ह्वा होमः कार्यो न स्रुवादिना ॥४४॥

---

१ वारणकाष्ठनिर्मिता बाहुमात्री पाणिमात्रमुखी पाणिमात्रबिलवती बिलावशिष्टभागे दण्डयुता हंसमुखसदृशप्रणालिकावती होमाद्यर्थं स्रुवेण गृह्यमाणस्याज्यस्य आधारभूता यागसमाप्तिपर्यन्तं वेद्यां विद्यमानतया स्थिरत्वदर्शनात् ध्रुवति अप्रचलिता भवतीति ध्रुवा।

२ जुह्वां पुरोडाशादिहविषो ग्रहणात्पूर्वमाज्यस्य प्रक्षेप उपस्तरणम्।

३ अवत्तस्य हविष उपरि घृतप्रक्षेप अभिघारणम्।

४ हविषामुद्वासनकाले उद्वासनात्पूर्वं हविषि आज्यप्रक्षेप प्राणदानम्।

५ होमाद्यर्थं यस्यां स्थाल्यामाज्यं गृह्यते सा आज्यस्थाली।

६ प्राशितुर्ब्रह्मण इदं प्राशित्रं, ब्रह्मणो भागः।

७ आहवनीयादीनामाग्नेयैशानकोणावंसौ। नैर्ऋत्य-वायव्यकोणौ श्रोणी।

८ बाहुमात्री पाणिमात्रमुखी तावद्बिलवती दण्डवती हंसमुखप्रसेका हूयते ऽनया इति व्युत्पत्त्या होमसाधना स्रुक् जुहूः।

[ अवचने सकृद्गृहीतेन होमः कार्यः ]

**सकृद्गृहीता, ऽर्थाऽवाप्तेः ॥४५॥**

सकृद्गृहीतेति लुप्तविभक्तिको निर्देशः। अवचने स्रुवेण जुह्वां सकृद् आज्यं गृहीत्वा तयैव जुहुयात्। कुतः? अर्थावाप्तेः, सकृद्गृहीतेनैव आज्येन होमरूपस्यार्थस्य निष्पत्तेः। सति तु वचने चतुर्गृहीतेन पञ्चगृहीतेन वा होमः कार्यः ॥४५॥

किञ्च—

**अवषट्कारातिरेकाच्च ॥४६॥**

वषट्काररहितेषु होमेषु अतिरेकाद् = द्वितीयस्यावदानस्याऽधिकत्वज्ञापनादित्यर्थः। "तद्वै चतुरवत्तं भवतीदं वा अनुवाक्या, अथ याज्या, अथ वषट्कारो, थ ऽसा देवता चतुर्थी यस्यै देवतायै हविर्भवति, अतिरिक्तꣳ ह तदवदानं यत्पञ्चमम्' (श० १।७।२।७) इति श्रुत्या यत्र वषट्कारो ऽस्ति तत्र याज्या एका, पुरोऽनुवाक्या अपरा, वषट्कारस्तृतीयः, देवता चतुर्थी इति चतुरवत्तस्योपपत्तिर्भवति। पञ्चमावदानस्य उपपत्त्यभावादतिरिक्तमेव तत् इत्यर्थिकया यत्र वषट्कारो नास्ति तत्र अनुवाक्यादीनामभावात् द्वितीयस्यैवावदानस्य अतिरिक्तत्वज्ञापनादित्यर्थः। एवं च सवषट्कारहोमेषु चतुरवदानस्यावश्यकत्वे ऽपि तदभावस्थले सकृद्गृहीतेनैव होमनिर्वृत्तेरेतच्छ्रुत्यभिप्रेतत्वात सकृद्गृहीतेनैव होमः कार्य इति भावः ॥४६॥

इति कातीयश्रौतसूत्रवृत्तौ अष्टमी कण्डिका ॥८॥

———

[ हविषश्चोदनायां व्रीहि-यवान्यतरोपादानम् ]

**व्रीहीन्यवान्वा हविषि ॥ १ ॥**

यत्र हविरिति श्रूयते तत्र व्रीहयो यवा वा उपादेयाः ॥ १ ॥

[ देवतोद्देशेन गृहीतस्य द्विस्त्रिर्वा ऽवदानम् ]

**तस्य द्विरवद्यति ॥ २ ॥**

तस्य पुरोडाशादेर्हविषो मध्यात्पूर्वार्द्धाच्च प्रदेशादङ्गुष्ठपर्वमात्रमवदानं कुर्यात्। तत्र मध्यात्प्रथमावदानम्, पूर्वार्द्धाच्च द्वितीयमवदानम् ॥२॥

**त्रिर्जमदग्नीनाम् ॥ ३ ॥**

जमदग्निगोत्रोत्पन्नानां यजमानानां यागे हविषः त्रिरवदानं कुर्यात् ॥ ३ ॥

तृतीयः खण्डः कस्मात्प्रदेशाद् ग्राह्य इत्याह—

[ हविषः पश्चाद् भागात्तृतीयमवदानम् ]

**पश्चात्तृतीयम् ॥ ४ ॥**

तृतीयमवदानं हविषः पश्चाद्भागादवदेयम् ॥४॥

**सर्वेषां वोभय, मविधानात् ॥ ५ ॥**

वा विकल्पे । सर्वेषां जमदग्नीनां तद्व्यतिरिक्तानां च चतुरवत्तं[1] पञ्चावत्तं वा[2] विकल्पेन भवति । कुतः ? जमदग्नीनामेव पञ्चावत्तमिति विशेषस्य अविधानात् । स्वशाखायां "तद्वै चतुरवत्तं भवति, उतो पञ्चावत्तमेव भवति" (श० ब्रा० १।२।७।८) इत्यविशेषेण श्रवणात् । वस्तुतस्तु शाखान्तरे "पञ्चावत्तं जमदग्नीनाम्" (आप० श्रौ० २।१८।२) इति विशेषः श्रूयते । अतो विशेषाध्यवसाय एव युक्तः । तेन जमदग्नीनां पञ्चावत्तमेवेति नियमः, इतरेषां चतुरवत्तं पञ्चावत्तं वेति विकल्पः ॥५॥

[ हविषो मध्यात्पूर्वार्द्धाच्चाङ्गुष्ठपर्वमात्रस्यावदानम् ]

द्विरवदानं कस्मात्प्रदेशाद् ग्राह्यमित्याह--

**मध्यात्पूर्वार्द्धाच्चासम्भिन्दन्नङ्गुष्ठपर्वमात्रमवदानम् ॥ ६ ॥**

यागकाले होमार्थं हविषो मध्यात्, हविषः पूर्वार्द्धाच्च अङ्गुष्ठपर्वमात्रमवदा[3]नं शृतावदानेन सम्पादयेत् । किं कुर्वन्--अवदानयोः परस्परं संभेदं सङ्गतिं मर्यादाभङ्गमकुर्वन् । अवदानयोः सम्भेदे कृते मर्यादाभङ्गः । मर्यादाभङ्गे च मध्यपूर्वार्द्धसंमोहः । स मा भूदिति यत्नः कार्य इत्यर्थः । मर्यादा च शृतावदाननामकेन पात्रेण क्रियते याज्ञिकैः ॥६॥

[ दधिपयसोरपि अङ्गुष्ठपर्वमात्रमवदानम् ]

**मात्रावद्दधिपयसोः ॥ ७ ॥**

दधिपयसोरपि अवदानमङ्गुष्ठपर्वमात्रमेव स्रुवेणावदेयम् ॥ ७ ॥

[ अवदानात्प्राक् पश्चाच्चाज्येनोपस्तरणाभिघारणे ]

**आद्यन्तयोराज्यम् ॥ ८ ॥**

चतुरवत्ततासम्पादनाय हविषो मध्यात्पूर्वार्द्धाच्च द्विरवदानग्रहणात्पूर्वमादौ स्रुवेण जुह्वामाज्यप्रक्षेपः, स एव उपस्तारशब्देनोच्यते । ततो द्विरवदानग्रहणम् । ततः पुनः स्रुवेण हविष उपरि आज्यप्रक्षेपः, अयमेव अभिघारणशब्देनोच्यते । एवमेव पञ्चावत्ततासम्पादनाय आदावन्ते च जुह्वामाज्यग्रहणं, त्रिर्हविषो ऽवदानग्रहणमिति ॥ ८ ॥

[ स्विष्टकृते प्रधानावदानापेक्षया एकं न्यूनमवदेयम् ]

**एकप्रत्यवायꣳ स्विष्टकृतः ॥ ९ ॥**

स्विष्टकृद्यागस्य अवदानं प्रधानयागावदानापेक्षया एकेनावदानेन प्रत्यवैति न्यूनीभवति इति एक-प्रत्यवायम्, कार्यमिति शेषः । अतश्च पञ्चावत्तिनां स्विष्टकृद्यागे हविषो द्विरवदानं, चतुरवत्तिनां सकृदवदानमिति भावः ॥९॥

स्विष्टकृद्यागे अभिघारण विशेषमाह—

[ स्विष्टकृतेऽवत्तस्य द्विरभिघारणम् ]

**द्विश्चाभिघारणम् ॥ १० ॥**

---

१ जुह्वां चतुर्वारमाज्यादीनां ग्रहणं चतुरवत्तम् । यस्य यजमानस्य तद् भवति स चतुरवत्तीत्युच्यते ।

२ "जामदग्न्या वत्सविदावार्ष्टिषेणस्तथैव च । भार्गवाश्च्यवना और्वाः पञ्चावत्तिन ईरिताः" इति वचनात् एतद्वचनोक्तगोत्राणां यजमानानां पञ्चवारमवद्यति तत्पञ्चावत्तम् । यजमानश्च पञ्चावत्ती ।

३ दो अवखण्डने इति धातोः स्थापितहविषः होमपरिमितस्य भागस्य ग्रहणार्थं खण्डनमवदानम् ।

स्विष्टकृद्यागार्थमुपस्तीर्णायां जुह्वां हविष उत्तरार्द्धात्पूर्वोक्तन्यायेन हविषि द्विः सकृद्वा गृहीते तदुपरि द्विरभिघारणं कार्यम् ॥१०॥

[ स्विष्टकृद्भिन्नावदाने कृते हविषः प्रत्यभिघारणम् ]

**अवदाय प्रत्यभिघारणं, प्राक् स्विष्टकृतः ॥ ११ ॥**

प्रधानयागार्थं हविषोऽवदानं गृहीत्वा यस्माद्यस्मात्प्रदेशादवदानं गृहीतं तं तं हविषः प्रदेशमाज्येन प्रत्यभिघारयेत्। इदमेव प्रत्यभिघारणं क्षताभ्यङ्गशब्देनोच्यते। स्विष्टकृद्यागार्थमवदानं कृत्वा तु प्रत्यभिघारणं न कार्यम् ॥११॥

[ एककपालस्य पुरोडाशस्य सर्वस्यैव होमः ]

**सर्वहुत एक-कपालः ॥१२॥**

एकस्मिन् कपाले संस्कृतः पुरोडाश एककपालः। तस्य यत्र होमो विहितस्तत्र सर्वत्रापि मध्य—पूर्वार्द्धादवदानादिकं विनैव सर्वो ऽपि पुरोडाशो निरवशेषेण होतव्यः ॥१२॥

[ अनुब्रूहीति प्रैषे चतुर्थ्यन्तं देवतापदं निर्देष्टव्यम् ]

**अनुवाचनप्रैषो यथादेवत "ममुष्मा अनुब्रूही" ति ॥१३॥**

देवतानामावाहनार्थं याऽऋक् होत्रा पठ्यते साऽनुवाक्या। अनुवाक्याप्रैषो ऽनुवाचनप्रैषः। स च प्रैषः[1] तत्तद्देवतापदं चतुर्थ्यन्तमुच्चार्य अनुब्रूहीत्यन्तः पठनीयः। यथा— "अग्नये ऽनुब्रूहि, सोमायानुब्रूहि" इति ॥१३॥

[ मैत्रावरुणस्य प्रैषे च देवतापदं चतुर्थ्यन्तम् ]

**आश्राव्यप्रैषे च ॥१४॥**

ओश्रावय इत्याश्रावणानन्तरं यत्र सोमादौ मैत्रावरुणोद्देशेन अध्वर्युणा प्रैषः क्रियते, तत्रापि चतुर्थ्यन्तं देवतापदमुच्चार्य अनन्तरं प्रेष्येति पदमुच्चारयेत्, 'अग्नये प्रेष्य' इत्येवं प्रयोगः कार्य इत्यर्थः। तद्यथा—पशौ "ओश्रावय" इति आश्रावणे कृते ततः आग्नीध्रेण अस्तु श्रौषट् इत्यभ्यनुज्ञाते अध्वर्युः "इन्द्राग्निभ्यां छागस्य वपां मेदः प्रेष्य" इति मैत्रावरुणमुद्दिश्य प्रेष्यति। प्रेषितो मैत्रावरुणः तद्देवताकामनुवाक्यां पठित्वा तदन्ते हविर्होतर्यज इति होतारं प्रति प्रेष्यति। ततश्च प्रेषितो होता तद्देवताकामनुवाक्यां पठित्वा तदन्ते 'हविर्होतर्यज' इति होतारं प्रेष्यति। यत्र इष्ट्यादौ मैत्रावरुण ऋत्विग् नास्ति, तत्र 'अमुं यज' इत्येव होतारं प्रति प्रेष्यैदध्वर्युः। यथा—आग्नेये 'अग्निं यज' उपांशुयाजे 'विष्णुं यज' इति ॥१४॥

[ मैत्रावरुणप्रैषभिन्ने प्रैषे द्वितीयान्तं देवतापदम् ]

**'अमुं यज' इति ॥१५॥**

आवाहनानन्तरं यया ऋचा हविः प्रयच्छति सा याज्या इत्युच्यते। होतुर्याज्यावाचनार्थम् अध्वर्युणा आवाहितदेवतापदं द्वितीयान्तमुच्चार्य यज इत्यन्तं पठनीयम्। यथा—"अग्निं यज, सोमं यज" इति ॥१५॥

[ प्रैषसम्बद्धेऽनुवाचने द्रव्यपदं षष्ठ्यन्तम् ]

**प्रैषानुवाचने षष्ठी, वपायै, धानासोमेभ्य इति परिहाप्य ॥१६॥**

यत्र पुरोऽनुवाक्यानन्तरं 'अग्नये प्रेष्य' इति मैत्रावरुणमुद्दिश्य अध्वर्युकर्तृकः प्रैषो भवति, तत्र मैत्रावरुणेन पठनीये पुरोऽनुवाक्याप्रैषे द्रव्यवाचिनि शब्दे षष्ठी विभक्तिः कार्या। देवता-

---

१ 'यज' इत्यादिलोण्मध्यमपुरुषान्तपदघटितेन येन वाक्येन अध्वर्य्वादिना होत्रादिः प्रेर्यते तद्वाक्यं प्रैषः।

वाचिनि तु चतुर्थी उक्ता एव। यथा—'अग्नीषोमाभ्यां छागस्य हविषो ऽनुब्रूहि' (श० ब्रा० ३।८।३।२६) इति। परन्तु वपायै, (का० श्रौ० ६।६।२०) धानासोमेभ्यः (का० श्रौ० १०।८।३) इति प्रैषद्वयं वर्जयित्वा। अर्थात् अत्र द्रव्यवाचिनि शब्दे ऽपि चतुर्थी विभक्तिरेव। इतो ऽन्यत्र षष्ठी विभक्तिरिति ॥ १६ ॥

[ मन्त्रघटकस्य असौ इत्यस्य स्थाने नामादेशः ]

**असावित्यपनोदे ॥ १७ ॥**

यत्र मन्त्रे "अभिषिञ्चाम्यसौ" (६-३०) इत्यादौ असौ इति सर्वनामपदं श्रूयते तत्र तत्सर्वनामपदं निष्काश्य तत्स्थाने यद्विवक्षितं तन्नाम संबुद्ध्यन्तं प्रक्षेप्तव्यम्। यथा—'अभिषिञ्चामि यज्ञदत्तशर्मन्' इति ॥ १७ ॥

[ सवषट्कारहोम आहवनीयदक्षिणतः तिष्ठता ईशानाभिमुखेन कार्यः ]

**सवषट्कारासु तिष्ठन्दक्षिणत, उदङ्प्राङ्, वषट्कृते ॥ १८ ।**

वषट्कारेण सहिताः सवषट्काराः। तास्वाहुतिषु वेदेर्दक्षिणत ईशानाभिमुखो ऽवस्थितो ऽध्वर्युर्होत्रा वौषट् इत्युक्ते सति जुहुयात्, न वषट्कारात्पूर्वम् ॥ १८ ॥

**सह वा ॥ १९ ॥**

अथवा वषट्कारेण सह आहवनीये हविः प्रक्षेप्तव्यम् ॥ १९ ॥

**उभयत आज्यꣳ हविषः ॥२०॥**

होमकाले आदौ स्रुक्स्थमाज्यं किंचिद्धुत्वा ततः पुरोडाशादिहविर्हुत्वा हविष उपरि च किञ्चिदाज्यं होतव्यम् ॥ २० ॥

**सह वा ॥ २१ ॥**

अथवा आज्यं हविश्च युगपदेव होतव्यं नोभयत आज्यम् ॥ २१ ॥

इति कातीयश्रौतसूत्रवृत्तौ नवमी कण्डिका ॥९॥

---

[ अग्नीदग्नीन्विहरेत्यादीनां संबोधनार्थानां मन्त्रत्वम् ]

अग्नीदग्नीन्विहर (श० ४।२।५।११) बर्हिस्तृणीहि (श० ४।२।५।११) इत्यादीनां प्रैषाणां मन्त्रविलक्षणत्वात् एतेषां मन्त्रत्वमस्ति न वा। कुतः संशयः। एतेषामनुष्ठेयार्थस्मारकत्वं न भवति करणमन्त्रवत्। नापि जपमन्त्रवत्केवलमदृष्टार्थता। न वा अग्निमन्थनीयादिवत् क्रियमाणानुवादिता। अतो मन्त्रकार्याभावादत्र मन्त्रत्वमस्ति न वा? इति संशये प्राप्ते पूर्वपक्षयति—

**वर्तमानापदेशा, चोदनाशब्दा, च्छुत्यर्थाभावा, त्तवै चेति वचना, न्निर्देशात्कर्मचोदकः ॥१॥**

वर्तमानस्य अर्थस्य अपदेशात्=उपदेशात् प्रैषो न मन्त्रः, किन्तु कर्मविधायकः। प्रैषस्य ज्ञाते ऽर्थे प्रवर्त्तनमेव व्यापारः। अतश्चाप्रवृत्तप्रवर्त्तनात्मको विधिरेवेति भावः। एवं लिङ्-लोट्-तव्यप्रत्ययादिरूपविधिशब्दसंबन्धात्, विधायकत्वानङ्गीकारे विधायकप्रत्ययस्य लिङ्लोडादेर्वैयर्थ्यापत्त्या, तवै च इत्यादिशब्दानां मन्त्रत्वविरुद्धानां प्रैषेषु दर्शनात्, "अहे

बुध्निय मन्त्रं मे गोपाय" (तै० ब्रा० १३।१) इति वाक्ये "ऋचो यजूंषि सामानि" इति त्रयाणामेव मन्त्रत्वव्यपदेशाच्च कर्मविधायकप्रैषाणां न मन्त्रत्वम् ॥१॥

एवं प्राप्ते सिद्धान्तयति—

## मन्त्रो वा समभिव्याहारात् ॥ २ ॥

वा शब्दः पक्षं व्यावर्त्तयति। एवं जातीयको मन्त्र एव प्रत्येतव्यः। कुतः ? समभिव्याहारात्, वाक्यान्तरेण विहितत्वादित्यर्थः। एवं जातीयको हि मन्त्रो वाक्यान्तरेण विहितः। न च विहितस्य पुनर्विधानं भवितुमर्हति। अतो विधायकत्वासंभवान्मन्त्र एव। अथवा समभिव्याहारादित्यस्य प्रयोगकाले उच्चारणस्य विहितत्वादित्यर्थः। एतेषां हि "अग्नीदग्नीन्विहर" (श० ४।२।५।११) इत्यादिना प्रयोगकाले उच्चारणं विधीयते। यदि इमे कर्मविधायका भवेयुर्नैतेषामुच्चारणं प्रयोगकाले विहितं स्यात्। विधीयते च। अत इमे मन्त्राः।

मन्त्रेष्वपि वर्त्तमानापदेशस्य दर्शनात्, लिङ्-लोट्-तव्यप्रत्ययादीनां प्राप्तकालार्थतायामपि सत्वात्, विधायकत्वाभावे ऽपि प्राप्तकालार्थतामादाय मन्त्रेषु प्रयोगसंभवात्, तथा मन्त्रेषु "कन्या इव वहतुमेतवै" (१७।९७) इति तवैशब्दश्रवणात्, इतिवचनरहितानामपि मन्त्राणां बहुशो दर्शनात्, यजुरन्तर्भावमभिप्रेत्यैव निर्देशस्याकारणात् न पूर्वसूत्रोक्तदोषाणां सम्भव इति भावः ॥ २ ॥

[ प्रयोजनमालोच्य कर्मानुष्ठानात्प्रागेव द्रव्याणां समीपे स्थापनम् ]

## अर्थप्रसङ्ख्यया द्रव्योपकल्पनम् ॥३॥

दर्शपूर्णमासादौ कर्मारम्भात्प्रागेव यावतां द्रव्याणां प्रयोजनमस्ति तावन्ति द्रव्याणि परिसङ्ख्याय समीपे स्थापनीयानि ॥३॥

## चर्माण्युत्तरलोमानि प्राग्ग्रीवाणि ॥४॥

कृष्णाजिनादीनि चर्माणि प्राग्ग्रीवाणि पश्चिमपुच्छानि, ऊर्ध्वलोमानि यथा लोमान्युपरि भवेयुस्तथा कृत्वा प्रयोगकाले स्तरणीयानि ॥४॥

[ हविषां मध्ये पश्चादुक्तस्य पश्चाद् ग्रहणम्, उत्तरतः श्रपणम्, आसादनं च ]

## अवरोक्तमुत्तरꣳ हविषि ॥५॥

"आग्नेयो ऽष्टाकपालः, अग्नीषोमीय एकादशकपालः पुरोडाशः" (आप० श्रौ० ३।१७।६) इत्यादौ हविषि यद्धविः पूर्वमुक्तं तस्य पूर्वं ग्रहणं, दक्षिणतः श्रपणं, दक्षिणत आसादनादि च कार्यम्। पश्चादुक्तस्य द्वितीयादेर्हविषः पश्चाद् ग्रहणम्, उत्तरतः श्रपणमुत्तरत आसादनादि च कार्यम् ॥५॥

[ साज्यस्यैकस्य दक्षिणहस्तस्थस्य जुह्वादेर्वेदेनोपग्रहणम् ]

## एकद्रव्ये साज्ये वेदेनोपग्रहणम् ॥६॥

दर्शपूर्णमासादौ आज्यसहितस्य स्रुक्स्रुवस्थाल्यादिद्रव्यस्य दक्षिणहस्तेन ग्रहणे वामहस्तेनापि वेदः कुशमुष्टिर्ग्रहीतव्यः। साज्ययोर्जुह्वप्रभृतोर्द्वयोर्ग्रहणे तु न वेदोपग्रहः ॥६॥

[ आज्यान्यसहितस्य तादृशस्य स्फ्येनोपग्रहणम् ]

## स्फ्येनान्यत्र ॥७॥

यत्राज्यसंबन्धो नास्ति तदरिक्ते कर्ममात्रे स्फ्येनोपग्रहणं कार्यम् ॥७॥

[ जपोपस्थानादिषु कुशैरुपग्रहणम् ]

## कुशैरसत्सु ॥८॥

जपोपस्थानादिषु स्फ्यस्य वेदस्य च असद्भावे कुशमात्रं वामहस्ते धार्यम् ॥८॥

[ शब्दमकुर्वन्नुपभृति जुहूमादध्यात् ]

**पाणिभ्यां जुहूं परिगृह्योपभृत्याधानमादानकाले ऽसंह्लादयन् ॥९॥**

दर्श-पूर्णमासादौ जुहूपभृतोर्युगपदादानकाले प्रथमतो हस्तद्वयेन जुहूं गृहीत्वा उपभृत उपरि निदध्यात्, ततश्च द्वयोर्ग्रहणम्। किं कुर्वन्, असंह्लादयन् = परस्परविघट्टनेन शब्दमकारयन्नित्यर्थः ॥९॥

[ विश्वजिदादीनां स्वर्गफलकत्वम् ]

**वाच्यफलेषु स्वर्गः सामर्थ्यात् ॥१०॥**

विश्वजिता यजेत (ता० २५।१८) (श० ब्रा० १०।२।५।१६) इत्यादिषु अनुक्तफलेषु कर्मसु फलत्वेन स्वर्गः कल्पनीयः। कुतः? सामर्थ्यात् = सार्थकत्वादित्यर्थः। अन्यथा फलकल्पनाभावे अफले कर्मणि पुरुषस्य प्रवृत्त्यनुदयात् विधिर्व्यर्थ एव स्यादिति भावः। अतः स्वर्गपदमध्याहृत्य विश्वजिता यजेत स्वर्गकाम इतिवाक्यं कल्पनीयमिति भा[1]वः ॥१०॥

[ गुणात् फलाधिक्यम् ]

**एककर्मणि गुणविशेषे फलविशेषः ॥११॥**

यत्र एकस्मिन् कर्मणि विकल्पेन गुणाः श्रुताः, तत्र विशेषगुणानुष्ठाने तदनुसारं फलविशेषो ऽपि भवति। यथा—अग्न्याधेये "षड् द्वादश चतुर्विंशतिं वा ददाति" (श० २।२।२।३) इत्यादिकाः सङ्ख्याविशिष्टा दक्षिणा विकल्पेन श्रुताः। तत्र न्यूनसङ्ख्याकदक्षिणादानापेक्षया अधिकदक्षिणादाने फलाधिक्यम् ॥११॥

[ दानवाचनादिषु यजमानस्य कर्तृत्वम् ]

**दान-वाचना-न्वारम्भण-वर-वरण-व्रत-प्रमाणेषु यजमानं प्रतीयात् ॥१२॥**

दानं = दक्षिणादानादि। वाचनं = यत्र वाचयति (का० श्रौ० ७।४।३३) इति विहितं तत्। अन्वारम्भणं स्पर्शः। व[2]रः = वरं ददाती (का० श्रौ० ४।८।८) त्यादिः। वरणम् = ऋत्विग्वरणादिः। व्रतं = पयो व्रतं ब्राह्मणस्येत्यादिः। प्रमाणम् = पञ्चारत्निर्यूप इत्यादिः। एषु सर्वेष्वपि यजमानमेव कर्त्तारमवबुध्येत। इदं सर्वं यजमानेनैव कर्त्तव्यमित्यर्थः ॥१२॥

[ खातादिषु असंभवे यजुर्मन्त्रेण क्रिया न भवति ]

**खात-लून-छिन्ना-वहत-पिष्ट-दुग्ध-दग्धेषु यजुष्क्रिया सम्भवात् ॥१३॥**

खातं = यूपावटखननादि। लूनं = बर्हिर्लवनादि। छिन्नं = यूपादिकम्। अवहतं = व्रीह्यादीनामवहननम्। पिष्टं = तण्डुलपेषणम्। दुग्धं = होमार्थं गोदोहनम्। दग्धं = महावीरादिदहनम्। एषु सर्वेषु प्रयोगात्पूर्वमनुष्ठितेष्वपि प्रयोगकाले सर्वत्रापि मन्त्रः पठनीयः। कुतः? संभवात् = प्रयोगकाले मन्त्रपठनेनापि तज्जन्यादृष्टस्य संभवात् = उत्पत्तेः। अथवा असंभवात्, एतेषां प्रयोगमध्ये अनुष्ठानस्य असंभवात्। नहि प्रयोगमध्ये यूपावटखनने आरब्धे, महावीरदाहादीनां वा ऽनुष्ठाने आरब्धे यथोक्तसमये इतरेषामङ्गानां परिसमापनं भवितुमर्हति। अतः तानि सर्वाण्यपि पूर्वमेव सम्पाद्य प्रयोगमध्ये तदङ्गभूतमन्त्रमात्रं पठनीयमिति भावः ॥१३॥

[ रौद्रादिमन्त्रमुच्चार्य तत्कर्म च कृत्वा अप उपस्पृशेत् ]

**रौद्ररा०-राक्षस-मासुर-माभिचरणिकं मन्त्रमुक्त्वा पित्र्य-मात्मानं चालभ्योपस्पृशेदप उपस्पृशेदपः ॥१४॥**

---

१ एतच्च पूर्वमीमांसायां चतुर्थाध्याये तृतीयपादे पञ्चमाऽऽधिकरणे विचारितम्।

२ दक्षिणात्वेन दीयमानं धेनुसुवर्णादिकं व्रियते अनेन इति व्युत्पत्त्या वर इत्युच्यते।

रुद्र-रक्षोऽसुर-पितृदेवत्यं मन्त्रमुच्चार्य, च शब्दात् तद्देवताकं कर्म कृत्वाऽपि, तथा—अभिचारफलकं च मन्त्रमुक्त्वा, आत्मानं स्पृष्ट्वा च हस्तेनोदकं स्पृशेत्। अभिचारबुद्ध्या प्रयुज्यमानो मन्त्र आभिचरणिकः। अभिचारो वैरिमरणानुकूलो व्यापारः। द्विरुक्तिरध्यायसमाप्तिसूचनार्था॥१४॥

इति कात्यायनश्रौतसूत्रवृत्तौ दशमी कण्डिका॥१०॥

इति कात्यायनश्रौतसूत्रवृत्तौ परिभाषाऽध्यायः प्रथमः समाप्तः॥१॥



# द्वितीयोऽध्यायः ।

## दर्श-पूर्णमासेष्टिः ।

[ इष्टिपूर्वदिने इष्टिदिने एव वा यमनियमवान् भवेत् ]

प्रथमे ऽध्याये सामान्यधर्मा अनुकीर्त्तिताः। इतः प्रभृति विशेषाननुक्रमिष्यन् सर्व-कर्मणां युगपदभिधातुमशक्यतया अवश्यं कस्मिंश्चित् क्रमे आश्रयणीये श्रुतौ "व्रतमुपैष्यन्" (श० ब्रा० १ । १ । ) इत्यादिना पौर्णमासेष्टेरेव प्रथममारभ्यमाणत्वात्, मन्त्रकाण्डे दार्शिक-मन्त्राणां प्रथमपाठे ऽपि दर्शस्यापि पौर्णमासपूर्वकत्वेन पौर्णमासेष्टिमेव प्रथमनिरूपणीयां मन्वानः सूत्रकारः प्रथमं तामेव निरूपयति—

**पूर्वां पौर्णमासीमुत्तरां वोपवसेत् ॥१॥**

अत्र पौर्णमासीशब्देन तिथिरभिप्रेयते। उपवासशब्देन च यमनियमौ। पूर्वां पौर्णमासीं पञ्चदशीमुपवसेत्। पूर्वस्यां पञ्चदश्यां तिथौ यमनियमवान् भूत्वा प्रतिपदि यजेतेत्यर्थः।

[1]उत्तरा पौर्णमासीत्यनेन लक्षणया प्रतिपदभिधीयते। प्रतिपदि वा उभावपि यम-नियमपरिग्रह—यागौ कुर्यात्। यमनियमार्थं प्रतिपत्पञ्चदश्योर्विकल्पः।

अयं भावः—पौर्णमासेष्टिर्द्व्यहकालकर्त्तव्यतया विहिता। "पक्षान्ता उपवस्तव्याः पक्षा दयो यष्टव्याः" ( गो० गृ० १।५।५ ) इत्यादिना। "सद्यो वा प्रातः" ( का० श्रौ० २।१।१६ ) इत्यनेन सद्यस्कालकर्त्तव्यतयाऽपि विहिता। अनयोः पक्षयोर्विकल्पो ऽङ्गीकर्त्तव्यः। तत्र यद्यपि अन्यत्र उपवासशब्दः प्रसिद्ध्या अनशनमभिदधाति। तथापि नात्र सोऽर्थः परि-ग्रहीतुं शक्यते। उत्तरत्र हि "अपराह्णे व्रतोपायनीयमश्नीतः सर्पिषा ऽसुहितौ" ( का० श्रौ० १ । १ । ८ ) इति सर्पिरादिगुणनियमः क्रियते। यद्यत्र अशननिषेधः क्रियेत, स च व्यर्थ एव स्यात्। उत्तरत्र गुणविधानात्। अशनस्य च अवश्यप्राप्तत्वात्। अतश्च 'चान्द्रायणमुपवसेत्' इत्यादौ यथा यमनियमपरकत्वमुपवासशब्दस्य, तथाऽत्रापि यमनियमपरकत्वमेवाङ्गीकार्यम्।

एवं पूर्वा पौर्णमासी इति पौर्णमासीपदेन मुख्या पौर्णमासी गृह्यते। सा च पञ्चदशी-रूपा। उत्तरा पौर्णमासीत्यनेन पौर्णमासीसादृश्यात् प्रतिपदेव गृह्यते; न तु पूर्वापदेन चतुर्दशी, उत्तरापदेन च पञ्चदशी ग्रहीतुं शक्यते। चतुर्दश्यां पौर्णमासीसादृश्याभावेन पौर्णमासीपदेन लक्षणयाऽपि तस्या अभिधेयत्वाऽसंभवात्। पञ्चदशीप्रतिपदोरेव हि चतुर्दश[2]कलावत्वं साद-

---

१ पूर्वा उत्तरा इति द्वे पौर्णमास्यौ उक्ते। "या पूर्वा पौर्णमासी साऽनुमतिर्योत्तरा सा राका" ( काठ० ११।७। ) इति, "द्वे पौर्णमास्यौ यजते द्वे अमावास्ये" ( श० ब्रा० २।४।४।६ ) इति, "एषा ह संवत्सरस्य प्रथमा रात्रिर्यत् फाल्गुनी पौर्णमासी योत्तरा, एषोत्तमा या पूर्वा (श० ब्रा० ६।२।२।१८।) इति च। सूत्रकारो ऽप्याह "उत्तरस्यां फाल्गुन्याम् ( का० श्रौ० १६।१।५ इति।

२ मासस्य पूरणं पौर्णमासीशब्दस्य प्रवृत्तौ निमित्तम्। तच्चैतच्चन्द्रमसः पूरणं प्रतिपदि पञ्चदश्यां

श्यमस्ति। एवं च पूर्णपर्वणि पञ्चदश्यामुपोष्य प्रतिपदि यागः कर्त्तव्यः। प्रतिपद्येव वा उपो-षणं यागश्च। यदा तु खण्डपर्व तदा "पूर्वोदिते कलाहीने चन्द्रे पूर्वां विचक्षणाः" इति शाखान्तरेण "एतस्य ह्यनुपूरणं पौर्णमासीत्याचक्षते" ( श० ब्रा० ११।२।४।२ ) इति च चतु-र्दश्या अपि पौर्णमासीति व्यपदेशात् तस्मिन्दिने उपोष्य परदिने याग इति निर्गलितोऽर्थः।

पौर्णमासेष्टेर्द्व्यहकालपक्षे पञ्चदश्यां यमनियमपरिग्रहवान् भूत्वा प्रतिपदि यागोऽ-नुष्ठेयः। सद्यस्कालपक्षे च प्रतिपद्येव यागावधि यमनियमवान् भवेदिति चार्थः। खण्ड[1]पर्वणि "पूर्वाह्णे वाऽथ मध्याह्ने यदि पर्व समाप्यते। उपोष्य तत्र पूर्वेद्युस्तदहर्याग इष्यते" इति वचनात् पौर्णमासीशब्देन लक्षणयैव चतुर्दश्यभिधीयत इत्यङ्गीकृत्य पूर्वां पौर्णमासीं चतुर्दशीमुपवसेदित्यर्थोऽङ्गीकार्यः। एवं च पौर्णमास्यां मध्याह्नादर्वाक् पर्वसमाप्तौ चतुर्दश्यामुपोष्य पूर्णिमायामेव पौर्णमासेष्टिः कार्या। दर्शेष्टिस्तु यदा चतुर्दश्याममायां वा अपराह्णे अमालाभस्तदा अपराह्णे एव पिण्डपितृयज्ञं कृत्वा परदिने कार्या। दर्शेष्टौ सद्यः पक्षो नास्ति, किन्तु द्व्यहकालतैव। "पौर्णमासवदन्यदसद्यः" (का० श्रौ० २।१।१७) इति वक्ष्यमाणत्वात् ॥१॥

[अग्न्यन्वाधानं यजमानाध्वर्य्वन्यतरकर्तृकं, देवतापरिग्रहफलकम्, अग्नित्रये क्रियमाणमेकं कर्म]

**अग्न्यन्वाधानमध्वर्युर्यजमानो वा ॥२॥**

अग्न्यन्वाधानसंज्ञकं वक्ष्यमाणं कर्म अध्वर्युणा यजमानेन वा कर्त्तव्यम् ॥२॥

अग्न्यन्वाधानविधिमुपदिशति—

**"ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम। मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाऽध्यक्षेण पृतना जयेम"त्याहवनीये समिधमादधाति ॥३॥**

अध्वर्युर्यजमानो वा गार्हपत्यादुद्धृत्य स्थण्डिलविशेषे स्थापिते आहवनीये ऽग्नौ ममाग्न ( ऋ० ८।७।१५ ) इति मन्त्रेण स्वाहाकाररहितेन एकां [2]समिधं प्रागग्रामादधाति, तदेवा-ग्न्यन्वाधानमित्युच्यते। अत्राध्वर्युकर्त्तृके ऽप्यग्न्यन्वाधाने 'मम' 'मह्यम्' इत्यत्र नोहः कार्यः। ममेत्यनन्तरं यजमानपदमध्याहृत्य मम यजमानस्य वर्च इति, मह्यमित्यनन्तरं तु मदीययज-मानस्येति लक्षणया यजमानस्याभिधातुं शक्यत्वात्। "यां वै कां च यज्ञ ऋत्विज आशि-षमाशासते यजमानस्यैव सा" (श० ब्रा० १।१।१।२६) इति श्रुतेः। सत्रेषु गणयज्ञेषु च यजमानानां बहुत्वात् यजमानकर्त्तृके ऽग्न्यन्वाधाने अस्माकम्, अस्मभ्यम् इत्यूहो भवत्येव। इदं चाग्न्यन्वाधानमृग्वेदे विहितम्। अत एव हौत्रकाण्डान्तर्गतत्वेन समाख्याप्रमाणेन

---

च तुल्यम्;। अन्त्यकलाव्यापारसामान्यात्। अन्त्या हि कला उभयत्र व्याप्रियते। इयांस्तु विशेषः— पूर्णिमायामुपैति, प्रतिपदि अपैति। चतुर्दशकलत्वसामान्याच्च। प्रागन्त्यकलाव्यापाराच्चतुर्दशकलः पञ्चदश्याम्, प्रतिपद्यपि तद्व्यापारोपरमे चतुर्दशकल एव। तदेतत्सादृश्ययुक्ता पञ्चदशीति प्रतिपच्छक्यते वक्तुम्, न चतुर्दशी। सादृश्याभावात्।

[1] एतद्वचनं खर्विकाभिप्रायमिति कर्काचार्याः। खर्विका नाम अल्पिका पौर्णमासी। खर्वशब्दो ऽल्पवाचकः। खण्डपर्व इति यावत्। तदुक्तं क्वचित्। "मध्यन्दिनात्प्रागहनीह यस्मिन् स्यात् पर्वणः सन्धि-रियं तृतीया। सा खर्विका वाजसनेयिमत्या तस्यामुपोष्याथ परेद्युरिष्टिः" इति, "खर्विकां तृतीयां वाज-सनेयिनः समामनन्ति" ( आप० श्रौ० १।६० ) इति च।

[2] समिच्च प्रादेशमात्री। "वेदः समित् पवित्रं च त्रयं प्रादेशसम्मितम्" इति वचनात्।

होतृकर्तृकत्वं प्राप्नुयादत्र; तद्व्यावृत्त्यर्थमत्राध्वर्युग्रहणम्। अतो न समाख्यया होताऽन्वाधानं कुर्यात्, किं तु अध्वर्युरेवेति[1] ॥३॥

तूष्णीं द्वितीयाम् ॥४॥

ततो द्वितीयां समिधं तूष्णीं मन्त्रं विनैवाहवनीये प्रक्षिपेत् ॥४॥

एवमितरयोः ॥ ५ ॥

[2]आहवनीये समिदाधानानन्तरं ममाग्ने इति मन्त्रेण प्रथमां, तूष्णीं द्वितीयाम्, इत्येवं गार्हपत्ये समिद्द्वयमाधाय ततो दक्षिणाग्नौ तथैव समिधावादध्यात् ॥ ५ ॥

अग्न्यन्वाधाने द्वितीयं प्रकारमाह—

महाव्याहृतिभिर्वा प्राक्संस्थम् ॥ ६ ॥

अथवा 'भूर्भुवः स्वः' इति महाव्याहृतिभिः (का० सर्वा० (१।१०।७) प्राक्संस्थम् समिदाधानं कुर्यात्। तत्र "ॐभूः" इति म[3]न्त्रेण आदौ गार्हपत्ये एकां समिधमाधाय तूष्णीं द्वितीयामादध्यात्। एवमेव दक्षिणाग्नौ "ॐ भुवः" इति प्रथमा, द्वितीया तूष्णीमाधेया। तत आहवनीये "ॐ स्वः" इत्येकां, तूष्णीं द्वितीयां प्रक्षिपेदिति भावः। मन्त्रस्थाने एतासां व्याहृतीनां विहितत्वात्, मन्त्रशब्दत्वसामान्याच्च मन्त्रनिवर्त्तकत्वमेतासाम् ॥६॥

तृतीयं पक्षमाह—

तूष्णीं वा यथापूर्वम् ॥ ७ ॥

अथवा येन क्रमेण अग्नीनामुत्पत्तिस्तेन क्रमेण गार्हपत्याहवनीयदक्षिणाग्निषु तूष्णीमेव द्वे द्वे समिधौ युगपदादधीत, न भेदेन। अस्याग्न्यन्वाधानस्य "कस्य देवा गृहानागच्छन्ति, कस्य न, यः पूर्वेद्युर्ममाग्ने इत्यग्नीन् गृह्णाति" इति श्रुतिबलात् देवतापरिग्रहरूपादृष्टफलोपजनकतया अवभृथेष्ट्याम् आहवनीयकार्यापन्नासु अप्सु अपि इदं क्रियते। अतश्च तत्र ममापो वर्चः, वयं व इन्धानाः, युष्माभिरध्यक्षाभिः इत्यूहः कार्यः। अस्य देवतापरिग्रहार्थत्वाद्यस्मिन्नग्नौ देवा इज्यन्ते तत्रैव कार्यम्। अतो ( चातुर्मास्यान्तर्गत-साकमेधपर्वणि )-गृहमेधीयादौ ( का० श्रौ० ५।६।६-२५ ) यावदुक्ते कर्मणि पत्नीसंयाजाद्यभावात् गार्हपत्यदक्षिणाग्न्योरग्न्यन्वा[4]धानं न भवति ॥ ७ ॥

---

१ एतच्च पूर्वमीमांसायां ( ३।८।१३ ) स्पष्टम्।

२ अग्न्यन्वाधानस्य हि कार्यं देवतापग्रिहः। ताश्च पूर्वं गार्हपत्ये ऽभीज्यन्ते, ततो दक्षिणाग्नौ। अतो मुख्यक्रमानुग्रहार्थमयं क्रम आश्रित इति भावः।

३ "भूरिति गार्हपत्यो, भुव इत्यन्वाहार्यपचनः, स्वरित्याहवनीयः" इत्यर्थवादात् प्रतिमहाव्याहृति गार्हपत्यादिक्रमेणाग्न्यन्वाधानम्। सूत्रे समस्तोपदेशो लाघवार्थः।

४ "कस्य देवा गृहानागच्छन्ति कस्य न, यः पूर्वेद्युर्ममाग्न इत्यग्नीन् गृह्णाति" इति श्रुत्या देवतापरिग्रहार्थमग्न्यन्वाधानम्। अत एव सोमयागे आदिभूतायां दीक्षणीयेष्ट्यां कृतेन अग्न्यन्वाधानेनैव अङ्गप्रधानदेवतापरिग्रहस्य निर्वर्तितत्वात् प्रायणीयादिषु दीक्षणीयेष्ट्यनन्तरभाविनीषु अग्न्यन्वाधाननिवृत्तिः सूत्रकारेणोक्ता ( का० श्रौ० ७।७।५ )। एवं चाग्न्यन्वाधानस्य देवतापरिग्रहार्थत्वात्, देवतापरिग्रहस्य च अवभृथेष्ट्यामपि सत्त्वात् तत्रापि अग्न्यन्वाधानं क्रियत एव। अग्नीन्धनरूपदृष्टार्थत्वे तु अबादिषु तदभावात् न क्रियेतेति।

अग्नित्रये समिदाधानरूपमिदमग्न्यन्वाधानम् "अग्न्यन्वाधानम्" ( सू० २ ) इति एकवचनात् परिधिपरिधानवत् एकं कर्म। अतस्त्रिष्वप्यग्निषु अग्न्यन्वाधानान्ते नैमित्तिकस्य प्रवृत्तिः।

[ कर्माङ्गं मांस-मैथुनवर्जनम् ]

**अहनि माꣳस—मैथुने वर्जयेत् ॥८॥**

अस्मिन्दिने मांसभोजनं मैथुनं च यजमानेन न कार्यम्। पर्वणि मांसमैथुनयोः सुतरां निषिद्धत्वात्पुनः क्रतुमध्ये निषेधः क्रत्वर्थत्वबोधनार्थः। अहर्ग्रहणमत्र कर्मोपलक्षणार्थम्। कर्मप्रकरणादेव कर्माङ्गत्वे ऽवगते पुनः अहर्ग्रहणं तस्मिन्नेवाहनि एतन्नियमपरिपालनम्, न पुनः पौर्णमास्यमावास्यारूपप्रयोगद्वयपरिसमाप्तिपर्यन्तमिति ज्ञापयितुम् ॥८॥

[ केश-श्मश्रुवपनं शिखावर्जम् ]

**केशश्मश्रु वपते वा, ऽशिखम् ॥ ९ ॥**

अग्न्यन्वाधानानन्तरं यजमानः केशान् श्मश्रूणि च शिखावर्जं वापयेत्, अथवा न मुण्डयेत्। वपनस्य विकल्पः। वाशब्दो वपतिना संबध्यते, नाशिखमित्यनेन। तत्र हि सम्बन्धे पक्षे सशिखमपि वपनं प्राप्नुयात्। तच्च सर्वथा शास्त्रविरुद्धम्। अतश्च वपतिना संबध्य वपनविकल्पमेव बोधयति ॥ ९ ॥

[ मध्यान्होत्तरं दम्पत्योर्घृतमिश्रमाषादिभिन्नान्नाशनं सति सामर्थ्ये ]

**अपराह्णे व्रतोपायनीयमश्नीतः सर्पिषा ऽसुहितौ ॥१०॥**

व्रतं भोजनं येनान्नेनामाषादिना क्रियते तद् व्रतोपायनीयम्। अन्हो द्वितीयभागे घृतेनोपसिक्तं प्रात[1]र्होष्यमाणद्रव्यातिरिक्तममाषादि हविष्यमन्नं पत्नीयजमानौ अतृप्तौ सन्तौ भुञ्जीयाताम्। अत्र सर्पिषेति नियमविधिरथवा परिसङ्ख्या इति विचार्यते। नियमविधौ परिसङ्ख्याविधौ वा को वा फलविशेष इति चेत्, अयं विशेषः। अप्राप्तांशपूरणं नियमः। इतरव्यावृत्तिः परिसङ्ख्या (पू० मी० १।२।४)। यथा—"व्रीहीनवहन्ति" (का० श्रौ० २।४।१४) इत्यत्र तण्डुलनिर्वृत्तिरूपफलसाधनत्वेन अवहननस्य प्राप्तावपि साधनान्तराणामपि कदाचित्प्राप्तिसंभवेन साधनान्तराप्राप्तिदशायां वा अवहननस्य अप्राप्तिः। तादृशाप्राप्तांशस्य पूरणमनेन विधिना क्रियते व्रीहीनवहन्यादेवेति नियमविधिः।

"पञ्च पञ्च[2]नखा भक्ष्या" (वाल्मी० कि० १७।३९) इत्यत्र पञ्चनखभक्षणे न विधेस्तात्पर्यम्, तस्य रागतः प्राप्तत्वात्। किन्तु पञ्चातिरिक्तपञ्चनखभक्षणव्यावृत्तावेव विधेस्तात्पर्यमिति परिसङ्ख्याविधिः।

प्रकृते च यदि नियमविधिरङ्गीक्रियेत तर्हि इतरनिवृत्तौ विधेस्तात्पर्याभावाद् व्यञ्जनादिसंस्कारकत्वेन तैलस्यापि प्राप्तिर्न निरोद्धुं शक्येत। यदि तु परिसङ्ख्या, तदा विधेरितरतैलादिनिवृत्तावेव तात्पर्याद् घृतप्रापणे विध्यभावात् कदाचिद् घृतं विनाऽपि भोजनं प्राप्नुयात्। किमत्र युक्तमिति चेत्, नियमविधिरेवेति ब्रूमः। नियमविधौ स्वीक्रियमाणे विधेरप्राप्तांशे अप्राप्तप्रापकत्वरूपस्वार्थवृत्तित्वं संभवति। परिसङ्ख्यायां तु इतरनिवृत्तेरेव वक्तव्यतया तस्याः शब्दतः प्रतीत्यभावेन श्रुतस्य शब्दस्य अर्थान्तरपरिकल्पनं, तदर्थं लक्षणास्वीकरणं च दोषः स्यात्। तन्निवृत्त्यर्थं नियमविधिरेवाश्रयणीय इति।

भोजनस्य पुरुषार्थरूपत्वात्तृप्तिरेव दृष्टप्रयोजनम्। अतो रोगादिना ऽसामर्थ्ये अहणादौ च भोजनं न कार्यम् ॥ १० ॥

---

१ "न तस्य सायमश्नीयाद्येन प्रातर्यक्ष्यमाणः स्यात्" ( आप० श्रौ० ४।७।१० ) इति।

२ "शल्यकः श्वाविधो गोधा शशः कूर्मश्च पञ्चमः" (वाल्मी० कि० १७।३९) इति पञ्च पञ्चनखाः।

[ आहवनीयस्य पश्चात्प्राङ्मुखस्तिष्ठन् अग्निं पश्यन् व्रतमुपेयात् ]

**अन्तरेणापराग्नी गत्वा परेणाऽऽहवनीयं प्राङ् तिष्ठन्नग्निमीक्षमाणोऽप उपस्पृश्य व्रतमुपै "त्यग्ने व्रतपत" "इदमह" मिति वा ॥ ११ ॥**

यजमानो गार्हपत्य-दक्षिणाग्न्योरन्तरालेन गत्वा आहवनीयस्य पश्चात्प्राङ्मुखस्तिष्ठन् अग्निं पश्यन् उदकं स्पृष्ट्वा सत्यवदनादिरूपं व्रतम् "अग्ने व्र[1]तपत" इति मन्त्रेण "इद[2]महम्" इति मन्त्रेण वा गृह्णीयात् । इतः प्रभृति आकर्मसमाप्तेः सत्यमेव वदनीयमित्यादिकं नियमं परिगृह्णातीत्यर्थः । अत्र मन्त्रवर्णादेव ईक्षणस्य प्राप्तत्वेऽपि पुनरीक्षमाण इति कथनं वैकल्पिकमन्त्रान्तरपाठेऽपि ईक्षणं यथा स्यादित्येवमर्थम् । एवं प्रोषितस्यापि दिङ्नियमार्थं प्राङ्मुखत्ववचनम् । प्रोषितस्यापि यथासंभवमग्निहोत्रदर्शपूर्णमाससंबन्ध्यात्मसंस्कारकवपनोपस्थानादीनां कर्त्तव्यतया अग्रे ( का० श्रौ० ४।१२।१५ ) वक्ष्यमाणत्वादिति । अत्रापामुपस्पर्शनं स्पर्शमात्रम्, न त्वाचमनम् । तस्यानुपदेशात् ॥११॥

[ कर्माङ्गं सत्यवदनम् ]

**सत्यवाग्यतः ॥ १२ ॥**

अतः परं यजमानः सत्यवादी भवेत् ॥ १२ ॥

ननु "सत्यवदनमेव वा" (पार. गृ० २। ८।८ ) इति सूत्रादुपनयनप्रभृति सत्यवदनस्य प्राप्तत्वात्किमर्थं पुनर्विधानमित्याशङ्कायामाह—

**कर्माङ्गमुत्तरे सत्यवदनम् ॥ १३ ॥**

व्रतोपायनादुत्तरकाले विहितमेतत्सत्यवदनं कर्माङ्गम्, अतः पुनरुपदिष्टमित्यर्थः । एवं चैतदपचारे प्रयाजाद्यपचार इव क्रतोर्वैगुण्यात् कर्माङ्गापचारनिमित्तं श्रौतं प्रायश्चित्तम् । उपनयनसमकालगृहीतसत्यवदनापचारे तु स्मार्त्तं प्रायश्चित्तमिति बोध्यम् ॥ १३ ॥

[ सायमारण्य—वृक्षफलाद्यशनं वैकल्पिकम् ]

**वृक्षाऽऽरण्यौषधीनामश्नीयाद्वा ॥१४॥**

यजमानः पत्नी च सायंकाले आरण्यवृक्षीयान्याम्रादीनि फलानि, आर[3]ण्यौषधीः श्यामाकादिका अश्नीयातां, न वा अश्नीयाताम् । अत्राशनानशनयोर्विकल्पः ॥१४॥

[ गार्हपत्याहवनीयान्यतरगृहेऽध आस्तरणे यजमानशयनम् ]

**आहवनीयगृहशाय्यधो गार्हपत्यस्य वा ॥१५॥**

यजमानः पत्नी च पर्वणि रात्रौ आहवनीयगृहे गार्हपत्यागारे वा अन्यपेक्षया अधस्ताद्दर्भाद्यास्तृतभूमौ शयनं कुरुतो, न खट्वायाम् ॥ १५ ॥

[ प्रतिपद्दिने एव अन्वाधानादि—कर्मापवर्गान्तम् ]

**सद्यो वा प्रातः ॥ १६ ॥**

पौर्णमासेष्टिर्दिनद्वयेन, सद्यो वा कार्येति पक्षद्वयमनेन विधीयते । द्व्यहपक्षे अन्वा-

---

१ "ॐ अग्ने व्रतपते व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताम्" ( शु० य० १।५ ) ।

२ "ॐ इदमहमनृतात्सत्यमुपैमि" (१।५)

३ "स वा आरण्यमेवाश्नीयात्" इति प्रकृत्य "या वा आरण्या ओषधयो यद्वा वृक्ष्यम्" (श० ब्रा० १।१।१० ) इति अविशेषेण श्रवणात् आरण्यशब्द उभयविशेषणम् ।

धानादि शयनान्तं पूर्वदिने कृत्वा परदिने यागः। सद्यः पक्षे तु प्रातः प्रतिपद्येव अग्न्यन्वाधानादि ब्राह्मणतर्पणान्तं कार्यं, न पूर्वेद्युः पूर्णिमायां, नापि द्वितीयायाम्। अतः प्रतिपद्युपवासपक्षे प्रतिपद्येव यागः॥ १६॥

[ प्रातरग्निहोत्रानन्तरं ब्रह्मवरणम् ]

**अग्निहोत्रं हुत्वा ब्रह्माणं वृणीते ब्रह्मिष्ठं "भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमह" इति॥ १७॥**

पूर्वसूत्रात्प्रातरित्यनुवर्तते[1]। सूत्रमिदममावास्याविषयम्। "उदिते सवितरि पौर्णमासस्य तन्त्रं प्रक्रमियादनुदित आमावास्यस्य" ( आप०श्रौ० १।५।१ ) इति शास्त्रात् सूर्योदयात्पूर्वमेव दर्शेष्टेरारम्भविधानात् अमायां प्रातरग्निहोत्रहोमानन्तरमुदयात्पूर्वमेव वेदत्रयविहितकर्मकुशलं ब्रह्माणं यजमानो "भूपत" इति मन्त्रेण वृणुयात्। पौर्णमासेष्टौ तु सूर्योदयानन्तरं ब्रह्मवरणमिति। एतच्च वरणं कर्मण्यप्रवृत्तस्य ब्रह्मणः प्रवर्त्तनार्थम्। अत अग्न्याधेये ब्रह्मण आधानकाल एव वृतत्वेन आधानानन्तरभाविनीषु तदङ्गभूतासु पवमानेष्टिषु ब्रह्मवरणाऽभावः। एवं सोमयागे सङ्कल्पानन्तरमेव ब्रह्मणो वृतत्वात् तदङ्गभूतासु तदुत्तरकालीनासु दीक्षणीयादिषु च वरणं न कर्त्तव्यम्॥ १७॥

[ भूपत इत्यादिना सकलेन मन्त्रेण वृतः सन् 'अहं भूपतिः' इत्यादिमन्त्रं जपेत् ]

**वृतो जपति "अहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिर्भूर्भुवः स्वर्देव सवितरेतं त्वा वृणते बृहस्पतिं ब्रह्माणं तदहं मनसे प्रब्रवीमि मनो गायत्र्यै गायत्री त्रिष्टुभे त्रिष्टुब्जगत्यै जगत्यनुष्टुभे ऽनुष्टुप्प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यो बृहस्पतिर्देवानां ब्रह्माऽहं मनुष्याणाम्" इति॥ १८॥**

भूपत इति वरणमन्त्रोच्चारणानन्तरं ब्रह्मा अहं भूपतिरिति मन्त्रं पठेत्। न तु ब्रह्म-यजमानावुभावपि एककाले पठेताम्। कर्त्तृभेदात्कदाचिद्युगपत्पाठः प्राप्नुयात्, तन्निषेधार्थमिदम्। ब्रह्मवरणाभावे पवमानेष्ट्यादौ जपस्याप्यभावः॥ १८॥

[ यजमानकर्त्तृकं ब्रह्मणः प्रार्थनम् ]

**"वाचस्पते यज्ञं गोपाये" त्याह॥१९॥**

यजमानो वाचस्पत इति प्रैषं ब्रह्माणमुद्दिश्य ब्रूयात्। अयं च प्रैषोऽदृष्टार्थत्वाद्वरणाभावे ऽपि दीक्षणीयादिषु प्रवर्त्तते॥ १९॥

[ उत्तरतो वृतस्य ब्रह्मणो दक्षिणतः स्थापिताऽऽसनगमनार्थं मार्गविकल्पः ]

**अपरेण वाऽऽहवनीयं दक्षिणा ऽतिक्रामति॥ २०॥**

आहवनीयस्य पश्चिममार्गेण पूर्वमार्गेण वा ब्रह्मा दक्षिणस्यां दिशि उपवेशनार्थं स्वस्थानं प्रति गच्छेत्॥ २०॥

[ ब्रह्मणा स्वासनस्येक्षणम् ]

**"अहे दैधिषव्योदतस्तिष्ठाऽन्यस्य सदने सीद योऽस्मत्पाकतर" इति ब्रह्मसदनमीक्षते॥ २१॥**

---

१ सायङ्कालीनाग्निहोत्रहोमानन्तरमेव ब्रह्मवरणं मा भूत् इति प्रातरित्यनुवर्तते। तथात्वे रात्रौ कर्मकरणं स्यात्, तच्च न कुत्रापि विहितम्।

ब्रह्मा कुशास्तृतं काष्ठादिनिर्मितं स्वासनमनेन मन्त्रेण पश्येत्॥ २१॥

[ आसनात्तृणनिरसनम् ]

**ब्रह्मसदनात्तृणं निरस्यति "निरस्तः पाप्मा सह तेन यं द्विष्म" इति॥२२॥**

नैर्ऋ[1]त्यां दिशि तृणं ब्रह्मा प्रक्षिपेत्॥ २२॥

इति कातीयश्रौतसूत्रवृत्तौ द्वितीयाध्याये प्रथमा कण्डिका॥१॥

---

[ ब्रह्मासने उपवेशनम् ]

**"इदमहं बृहस्पतेः सदसि सीदामि प्रसूतो देवेन सवित्रा तद[2]ग्नये प्रब्रवीमि तद्वायवे तत्पृथिव्यै" इति ब्रह्मस[3]दन आहवनीयमभिमुख उपविशति॥१॥**

ब्रह्मा इदमहमिति मन्त्रेण स्वस्थाने आहवनीयाभिमुख उपविशेत्॥ १॥

[ ब्रह्मणे विशिष्टभागार्पणप्रभृति अनुयाजप्रैषान्तं ब्रह्मणो वाग्यमः ]

**वाग्यत आऽनुयाजप्रसवात्॥ २॥**

इत आरभ्य 'ब्रह्मन्प्रस्थास्यामि' (श० ब्रा० १।७।४।२०) इति अनुयाजार्थं प्रैषे कृते 'ॐप्रतिष्ठ' इति यदा ब्रह्मा ऽभ्यनुजानाति तावत्पर्यन्तं ब्रह्मा वाग्यतो भवेत्॥ २॥

**भागपरिहरणादि वा॥ ३॥**

पूर्वोक्तपक्षव्युदासार्थमिदं सूत्रम्। नेत आरभ्य वाग्यमनं कर्त्तव्यम्, किन्तु भाग[4]मस्मै परिहरति (३।४।२५) इति भागपरिहरणमारभ्य अनुयाजप्रसवं यावत् कृतवाग्यमो भवेत्॥३॥

[ नैमित्तिके व्याहृतिहोमे पूर्वमुपस्थिते अपकृष्य ब्रह्मवरणम् ]

**आवृता ऽवषट्कारासु॥ ४॥**

न विद्यते वषट्कारो यासां ता अवषट्कारा महाव्याहृत्याहुत[5]यः। तासु अवषट्कारासु महाव्याहृत्याहुतिषु आवृता – क्रियया मन्त्ररहितेन क्रियामात्रेण ब्रह्मा उत्पाद्यः। अयं भावः। अत्र अवषट्कारशब्देन महाव्याहृतिसम्पाद्या आहुतय उच्यन्ते। यद्यपि अग्निहोत्रा-

---

१ "समानं होत्रा तृणनिरसनम्" (शां० श्रौ० ६।५।४) इति सूत्रात् नैर्ऋत्यामित्युक्तम्। तत्र हि "होतृषदनात्तृणं दक्षिणापरमवान्तरदेशं निरस्यति" (शां० श्रौ० १।६।६) इति विहितम्।

२ अयमग्निशब्दः सौर्यादौ न विपरिणम्यते। वायुना सहोच्चारणेन प्रकृताग्निपरत्वाभावात्।

३ ब्रह्मसदनस्य प्रकृतत्वादेव तत्रोपवेशने सिद्धे ब्रह्मसदनग्रहणमाहवनीयाभिमुखत्वस्य ब्रह्मसदनसंबन्धनियमार्थम्। तेन "आहवनीयं दक्षिणेनास्ते" (का० श्रौ० ११।१।६) इत्यादौ नाहवनीयाभिमुखत्वम्।

४ "अथास्मै ब्रह्मभागं पर्याहरन्ति" इति प्रकृत्य "स वै वाचं यम एव स्याद् 'ब्रह्मन् प्रस्थास्यामी'त्यैतस्माद्वचसः" (श० ब्रा० १।७।४।१९) इति श्रुतेर्विशेषाध्यवसानात्।

५ "यदि याज्यां पुरोऽनुवाक्यां वा न विन्देद् व्याहृतीरेव याज्यायाः पुरोऽनुवाक्यायाश्च स्थाने कुर्यात्" इति याज्याकार्ये व्याहृतीनां विधानात् व्याहृतयः अवषट्कारा इत्युक्तम्।

हुतिरपि अवषट्काराः, तथापि तस्याऽपि "एकर्त्विजमग्निहोत्रम्" ( बौ० श्रौ० ३।३ ) इति एकर्त्विक्साध्यत्वेन सर्वस्यापि तत्रत्यहोमस्य एकेनैव ऋत्विजा कर्त्तुं शक्यत्वेन न तत्र ब्रह्मणः कर्त्रन्तरस्य आक्षेपोऽस्ति, इति नाग्निहोत्राहुतिपरमवषट्कारपदम्। एवं दर्विहोमानाम् (का० श्रौ० ५।८।२६-३४) अवषट्कारत्वे ऽपि तत्र ब्रह्मवरणस्य प्राप्तत्वेन न तेषामपि ग्रहणम्। पूर्णाहुतिहोमानामपि (का० श्रौ० ४।१०।५) अग्निहोत्रन्यायसाम्यात् न तत्रापि ब्रह्मणः प्राप्तिः। अतः परिशेषात इष्टावेव ब्रह्मवरणात्पूर्वं भेदनादिनिमित्ते नैमित्तिकतया होमकर्त्तव्यताप्राप्तिः। त एव होमा अवषट्कारपदेनाऽभिधीयन्ते। तत्रैव पश्चात्कर्तव्यं ब्रह्म-वरणमपकृष्य पूर्वं मन्त्रं विना तूष्णीं कर्त्तव्यम्। "व्याहृतिहोमो ऽनादेशे" (२५।१।४) इति प्रायश्चित्तविशेषानुक्तौ व्याहृतिहोमो विहितः; स च "ब्रह्मा प्रायश्चित्तानि जुहुयादनादिष्टानि" (२५।१४।३५) इति ब्रह्मकर्तृकः। यदि दैवान्मानुषाद्वा ऽपराधात्प्राग्ब्रह्मवरणाद् व्याहृतिहोमनिमित्तं समापतेत्, तर्हि ब्रह्मवरणस्यापकर्षं कृत्वा व्याहृतिहोमः सम्पादनीयः। तच्च ब्रह्मवरणं तूष्णीं क्रिया-मात्रेण कर्त्तव्यं, न मन्त्रैः। न्यायतस्तु समन्त्रिका क्रिया प्राप्नोति, सा ऽनेन वार्यते ॥ ४ ॥

[ ब्रह्मवरणानन्तरं वा व्रतग्रहणम् ]

पूर्वमुक्तस्य ( २।१।११ ) व्रतग्रहणस्य कालान्तरमाह—

**अत्र वा व्रतोपायनम् ॥ ५ ॥**

उक्तावसरे, ब्रह्मवरणोत्तरकालं वा यजमानो व्रतमुपगच्छेत् ॥ ५ ॥

[ ब्रह्मणो वाग्यमलोपे वैष्णवमन्त्रजपः ]

**व्याहृत्य वैष्णवं मन्त्रं जपेत् ॥ ६ ॥**

वाग्यतो ब्रह्मा भ्रान्त्या वैदिकाद्व्यतिरिक्तां संस्कृतामपि वाचमुच्चार्य प्रायश्चितार्थं वैष्णवं मन्त्रं जपेत् ॥ ६ ॥

[ अध्वर्योरपि हविर्ग्रहणकालिकवाग्यमलोपे वैष्णवमन्त्रजपः ]

**अध्वर्युश्च ॥ ७ ॥**

हविर्ग्रहणकाले "वाचं यच्छति" ( २।३।१० ) इत्यध्वर्योरपि वाग्यमनं विहितं, तदपचारे अध्वर्युरपि वैष्ण[1]वं मन्त्रं जपेत् ॥ ७ ॥

[ अपां प्रणयनाय अध्वर्योरनुज्ञानम् ]

**"प्रण[2]य यज्ञं देवता वर्द्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु। सप्त-**

---

१ "स यदि पुरा मानुषीं वाचं व्याहरेत्तत्रो वैष्णवीमृचं वा यजुर्वा जपेत्" (श० ब्रा० १।१।१।४) इति श्रुतिः। स च वैष्णवो मन्त्रः तत्तत्प्रकरणे यो मन्त्रः पठितः स एव ग्राह्यो, न तु अन्यत्र यत्र कुत्रापि पठितः। प्राकरणिकस्य हि प्रकरणादेव कर्मणा सह सामान्यतः संबन्धोऽवगम्यते, मन्त्रो ऽयमनेन कर्मणा संबद्ध इति। तत्र विशेषसम्बन्धः परं कल्पनीय इति कृत्वा लाघवम्। प्रकरणान्तरस्थस्य मन्त्रस्य ग्रहणे तस्य प्रकृतकर्मणा सह सम्बन्धाभावात् सामान्यसम्बन्धो ऽपि अनेन सह कल्पनीयो विशेषसंबन्धश्च इति संबन्ध-द्वयकल्पनकृतं गौरवं स्यात्।

अत्र "उरु विष्णो" ( शु० य० ५।३ ) इति ऋक्। "ध्रुवा असदनृतस्य योनौ ता विष्णो" ( शु० य० २।७ ) इति, "विष्णो हव्यर्ठ॑ रक्ष" (शु० य० १।४) इति वा यजुः।

२ प्रथमं 'प्रणय' इति पदं देवतारूपब्रह्मपरमिति तस्य सर्वत्र विशिष्टत्वात्तन्नोह्यते। द्वितीयमध्वर्यु-परमिति तदनुसारेणोह्यत इति।

ऋषीणाᳫं सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि ओ३म् प्रणय" इति प्रणीताः प्रसौति ॥ ८ ॥

"ब्रह्मन्नपः प्रणेष्यामि" ( का० श्रौ० २।३।२ ) इत्यध्वर्युणा पृष्टो ब्रह्मा प्रणय यज्ञमिति मन्त्रेण प्रणीताप्रणयनार्थमाज्ञां ददाति ॥ ८ ॥

[ ब्रह्मणा हविष इध्मा-बर्हिषोश्च प्रोक्षणायाध्वर्योरनुज्ञादानम् ]

एवमामन्त्रित ओङ्कारेण "प्रोक्ष यज्ञमि"ति हविषी,ध्मा-बर्हिषोश्च ॥९॥

ए[1]वमनेनैव प्रकारेण "ब्रह्मन्हविः प्रोक्षिष्यामि, ( आप० श्रौ० १।१९।१ ) ब्रह्मन्निध्मं प्रोक्षिष्यामि, (आप० श्रौ० २।८।१) ब्रह्मन्बर्हिः प्रोक्षिष्यामि" इत्यध्वर्युणा पृष्टो ब्रह्मा "ॐ प्रोक्ष" इति अनुज्ञां दद्यात् । तत्र हविषामिध्माबर्हिषोश्च प्रोक्षणे प्रणय यज्ञमिति पूर्वोक्ते मन्त्रे 'प्रणय' इत्यस्य स्थाने 'प्रोक्ष' इति पदं प्रयोज्यमिति विशेषः । अत्र प्रणय यज्ञमित्यारभ्य धेहीत्यन्तो मन्त्र उपांशु प्रयोज्यः । 'ॐ प्रणय' इत्यस्य तूच्चैः प्रयोगः, प्रसवार्थत्वात् ॥ ९ ॥

[ वेदिपरिग्रहानुज्ञानम् ]

"बृहस्पते परिगृहाण वेदिᳫं॰ सुगावो देवाः सदनानि सन्त्वस्यां बर्हिः प्रथताᳫं साध्वन्तर्हिᳫंस्रा पृथिवी देवी देव्यस्तु" इति वेदिं परिगृह्णन्तम् ॥१०॥

"ब्रह्मन्पूर्वं परिग्रहं परिग्रहीष्यामि" (आप० श्रौ० २।३।७) इति अध्वर्युणा पृष्टो ब्रह्मा बृहस्पत इति मन्त्रेण वेदेः परिग्रहं कुर्वन्तमध्वर्युमाज्ञां ददाति । गायत्रेणेत्यादिमन्त्रैर्वेदेरियत्तां निश्चेतुं वेदेर्दक्षिणपश्चिमो-त्तरदिक्त्रये स्फ्येन रेखात्रयकरणं पूर्वः परिग्रहः (का०श्रौ० २।६।२३) ॥१०॥

[ सामिधेन्यनुवचनार्थं ब्रह्मणा होतुरनुज्ञानम् ]

"प्रजापते ऽनुब्रूहि यज्ञ" मिति सामिधेनीरनुवक्ष्यन्तम् ॥ ११ ॥

"ब्रह्मन्सामिधेनीरनुवक्ष्यामि" इति होत्रा पृष्टो ब्रह्मा सामिधेनीर्ऋचः पठिष्यन्तं होतारं प्रजापते ऽनुब्रूहि यज्ञमिति मन्त्रेणाऽऽज्ञापयेत् ॥ ११ ॥

[ देवता वर्द्धयेत्यादिधेहीत्यन्तस्य प्रोक्षणाद्यनुज्ञाने ऊहपूर्वकमनुषङ्गः ]

देवता वर्द्धय त्वमिति सर्वत्रानुषजति ॥ १२ ॥

प्रोक्ष यज्ञमित्यादिमन्त्रेषु देवता वर्द्धय त्वमित्यारभ्य धेहीत्यन्तः पूर्वोक्तो मन्त्रः संयोजनीयः । प्रोक्ष यज्ञं देवता वर्द्धय त्वं ना० धेहि । बृहस्पते प० देव्यस्तु देवता वर्द्धय० धेहि । प्रजापतेऽनुब्रूहि यज्ञं देवता० धेहि इत्यादि ।

वरुणप्रघासपर्वणि दक्षिणवेद्यां प्रतिप्रस्थाता, उत्तरवेद्यामध्वर्युरिति कर्त्तृद्वित्वात् प्रोक्षतं यज्ञं, वर्द्धयतं, युवां धत्तम् इत्यादीनामध्वर्युपराणां वचनानां द्विवचनान्तेनोहः का[2]र्यः ।

---

१ तत्र प्रोक्षणानुज्ञायां मन्त्रे ॐ प्रोक्षेति, वेदिपरिग्रहानुज्ञायां च ॐ परिगृहाणेति, सामिधेन्यनुज्ञायां च ॐ अनुब्रूहीत्यपि संयोजनीयम् ।

२ तथा चायं मन्त्रः । "ॐ बृहस्पते परिगृहाण वेदी सुगावो देवाः सदनानि सन्त्वनयोर्बर्हिः प्रथेताᳫं साध्वन्तर्हिᳫंस्रे पृथिव्यौ देव्यौ देव्यौ स्ताम् । देवता वर्द्धयतं युवां नाकस्य पृष्ठे यजमानो अस्तु । सप्तऋषीणाᳫं सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धत्तम्" इति । अहीनादौ अनेकयजमानके यजमानाभिधायिपदानां चोहः कर्त्तव्यः ।

एवं वेदी सुगावो देवाः, सन्त्वनयोः, प्रथेताम्, हिंस्र, पृथिव्यौ, देव्यौ, देव्यौ स्ताम् इत्यादीनां वेदिपराणां च पदानामूहः कार्यः ॥ १२ ॥

[ ब्रह्मा सपात्रं प्राशित्रं प्रतिगृह्याऽऽसाद्य पुनरादाय प्राश्नीयात् ]

**"मित्रस्य त्वा चक्षुषा प्रतीक्षे" इति प्राशित्रं प्रतीक्षते ॥ १३ ॥**

प्रधानयागानन्तरं शिष्टाद् हविषो यवमात्रं पिप्पलमात्रं वा गृहीत्वा अध्वर्युणा स्वस्मै दीयमानमात्मीयं भागं ब्रह्मा मित्रस्येति पश्येत् ॥ १३ ॥

**देव[1]स्यत्वेति प्रतिगृह्णाति ॥ १४ ॥**

वीक्षणानन्तरं ब्रह्मा पात्रसहितं प्राशित्रं देवस्यत्वेति प्रतिगृह्णीयात् ॥ १४ ॥

**पृथि[2]व्यास्त्वेति सादयत्यपोह्य बर्हीᳪंषि ॥ १५ ॥**

ब्रह्मा वेद्या दक्षिणेंऽसे स्तृतानि बर्हींषि हस्तेनापसार्य तत्र भूमौ सपात्रं प्राशित्रं स्थापयेत्। दक्षिणेंऽसे इति "निदधाति वांऽसदेशे" (का० श्रौ० २।२।१७) इति वक्ष्यमाण सूत्रैक-वाक्यतया उक्तम्। प्राशित्रभक्षणस्य कालद्वयं विहितमस्ति; तत्र कालान्तरे भक्षणपक्षे अंसदेशे आसादनं कार्यम्। अत्र भक्षणपक्षे तु नासादनम्। किन्तु आसादनमकृत्वैव भक्षणम् ॥ १५ ॥

**पुनरादाय "देवस्य त्वे" त्यनामिकाङ्गुष्ठाभ्या "मग्नेष्ट्वे[3]ति" प्राश्नाति दन्तैरनुपस्पृशन्नत्र चेत् ॥ १६ ॥**

अस्मिन्नवसरे चेद् ब्रह्मा प्राशित्रं प्राश्नाति तदा प्राशित्रद्रव्यं पात्रादनामिकाङ्गुष्ठाभ्यां देवस्य त्वेति मन्त्रेण पुनरादाय दन्तैरचर्वयन् अग्नेरिति प्राश्नीयात् ॥ १६ ॥

अथोपरिष्टाद्भक्षणपक्षे आह—

**निदधाति वाऽᳪंसदेशे ॥ १७ ॥**

वेदेराग्नेयैशानकोणावंसौ। कालान्तरे भक्षणपक्षे वेदेर्दक्षिणांसे आग्नेयकोणे स्तृतानि बर्हींषि अपसार्य पृथिव्यास्त्वेति मन्त्रेण प्राशित्रं ब्रह्मा ऽऽसादयेत्। "पृथिव्यास्त्वा" ( १५ ) इति पूर्वोक्तसूत्रेणासादनस्योक्तत्वेऽपि स्थानविशेषस्यानुक्तत्वात् स्थानविधानार्थमिदं सूत्रम् ॥ १७ ॥

[ ब्रह्मा प्राशित्रपात्रे प्रक्षाल्य नाभिमालभेत् ]

**प्रक्षाल्य पात्रं नाभिमालभते—"या अप्स्वन्तर्देवतास्ता इदᳪं० शमयन्तु स्वाहाकृतं जठरमिन्द्रस्य गच्छ घसिना मे मा संपृक्था ऊर्ध्वं मे नाभेः सीदेन्द्रस्य त्वा जठरे सादयामि" इति ॥ १८ ॥**

पात्रमिति जातावेकवचनम्। ब्रह्मा उभे अपि प्राशित्राधारापिधानार्थे प्राशित्रहरण [4]पात्रे प्रक्षाल्य या अप्स्विति मन्त्रं पठित्वा मन्त्रान्ते नाभिं स्पृशेत् ॥ १८ ॥

---

१ "ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। प्रतिगृह्णामि (२।११)

२ "ॐ पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थेऽग्ने हव्यᳪं० रक्ष" (१।११)।

३ "ॐ अग्नेष्ट्वाऽऽस्येन प्राश्नामि" (२।११)।

४ यद्यप्यत्रप्रकरणे "प्रक्षाल्य पात्रम्" "तूष्णीं प्राशित्रहरणम्" (का० श्रौ० २।७।४२) इत्यादौ एकमेव पात्रं श्रूयते, तथापि अन्त्येष्टौ "आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च (का० श्रौ० २५।७।१-३७) इति वचनात् यज्ञपात्र साधनकदाहे "कर्णयोः प्राशित्रहरणे" ( का० श्रौ० २५।७।२५ ) इति प्राशित्रहरण-द्वित्वावगमात् अत्रापि पात्रद्वित्वेनैव भाव्यम् इति कृत्वा अत्रायमेकवचनं जात्यभिप्रायमित्युक्तम्।

[ अनुयाजार्थं ब्रह्मणा 'एतं त' इत्यनेनानुज्ञानम् ]

**"एतं त" इति समिदामन्त्रितः प्रसौति ॥१९॥**

"ब्रह्मन्प्रस्थास्यामि" ( आप० श्रौ० ३।४।५ ) इति अनुयाजार्थमध्वर्युणा पृष्टो ब्रह्मा "एतन्त" ( शु० य० २।१२-१३ ) इति मन्त्रद्वयेनाध्वर्युमाज्ञापयेत् । समिच्छब्देन तदर्थत्वाद नुयाजा अभिधीयन्ते ॥१९॥

**[1]प्रतिष्ठेति ब्रूयाद्वा ॥२०॥**

'एतन्त' इति मन्त्रद्वयान्ते प्रतिष्ठ इति क्रियापदमस्ति, तद् ब्रूयान्नवा ब्रूयादिति विकल्पः । प्रतिष्ठेत्यनभिव्याहरणपक्षे प्रणवान्त एव मन्त्रः पठनीय इति भावः ॥२०॥

[ कर्मसमाप्तौ ब्रह्मकर्तृकः समिद्धोमः ]

**कर्मापवर्गे समिधमादधाति जुहोत्युपतिष्ठते वा "नमः कृताय कर्मणे, अकृताय कर्मणे नमः । अयाड् यज्ञं जातवेदा अन्तरः पूर्वो अस्मिन्निषद्य । सन्वठं० सनिठं० सुविमुचा विमुञ्च धेह्यस्मभ्यं द्रविणं जातवेदः स्वाहा" इति [2]यथेतमेत्य ॥ २१ ॥**

इष्टिसमाप्तौ ब्रह्मा वरणोत्तरकालमुपवेशनार्थम् आहवनीयमपरेण पूर्वेण वा येन मार्गेण गतो भवेत्तेनैव मार्गेण प्रत्यागत्य नमः कृतायेति मन्त्रेणाऽऽहवनीये समिधमादधाति । अथवा तेनैव मन्त्रेण सकृद्गृहीतमाज्यं जुह्वा होतव्यम् । अथवाऽनेनैव मन्त्रेणाहवनीयोपस्थानं कार्यम् । मन्त्रश्च सर्वत्र स्वाहान्त एव पठनीयः । होमपक्षे इदं जातवेदसे इति त्यागः कार्यः । पक्षान्तरयोस्तु यागाभावान्न त्यागः ॥२१॥

[ व्रतजपादिकर्मापवर्गसमिद्धोमान्तं ब्रह्मत्वमुक्तमिष्टिपश्वोर्ज्ञेयम् ]

**एतद् ब्रह्मत्वमिष्टि-पश्वोः ॥२२॥**

इष्टिषु पशुषु च एतावदेव ब्रह्मणः कर्म, न कर्मान्तरमित्यर्थः ॥२२॥

इति कातीयश्रौतसूत्रवृत्तौ द्वितीया कण्डिका ।



---

१ प्रपूर्वस्तिष्ठतिरनुयाजार्थे गमने वर्त्तते । प्रतिष्ठ अनुयाजार्थं गच्छ इत्यर्थः । प्रतिष्ठतमिति च वरुणप्रघासेषु विपरिणामः ।

२ अत्र च "अतीत्य निष्क्रमणम्" ( का० श्रौ० १।८।२५ ) इति परिभाषयैव यद्यपि यथेतं प्रत्यागमनं प्राप्नुयात्, तथापि स्वस्थानस्थित एव ब्रह्मा समिदाधानादिकं कृत्वा ततः प्रतिनिवर्त्तेत तन्मा भूत्, किन्तु यथेतं प्रत्येत्यैव समिदाधानं कर्त्तव्यम्; एतदर्थमत्र पुनः 'यथेतमेत्य' इति कथनम् ।

एवं होमपक्षे "स्वाहाकारः सर्वत्र" ( का० श्रौ० ४।४।१५ ) इत्यनेन स्वाहाकारः प्राप्नुयाद्यपि, तथापि उपस्थान-समिदाधानपक्षयोरपि स्वाहाकारान्त एव मन्त्रः पठनीयः । स च न पूर्वोक्तसूत्रेण प्राप्तः । तत्प्राप्त्यर्थं च पुनरत्र स्वाहाकारस्य पाठः ।

अयं च समिदाधानरूपः पदार्थोऽदृष्टार्थत्वात् यावदुक्ताऽन्तापच्छिन्नादिषु निवर्त्तते । सामान्यतः "प्रकृतिवद् विकृतिः कर्त्तव्या" इति शास्त्रेण तत्तत्कर्मणां स्वस्वप्रकृतितः पदार्थानां प्राप्तौ सत्यामपि पुनः यत्र कर्मणि केषांचन अङ्गानामाम्नानं तद्यावदुक्तं कर्म उच्यते । एवं सर्वेषामङ्गानां प्रकृतितोऽतिदेशप्राप्तौ कानिचिदङ्गान्यनुष्ठाय अवशिष्टानां परित्यागो यत्र विधीयते तत् अन्तापच्छिन्नमित्युच्यते । तत्रोभयत्रापि उक्ताङ्गातिरिक्तानामननुष्ठानस्य शास्त्रतात्पर्यविषयभूतत्वेन तादृशानामदृष्टार्थानामङ्गानां परित्यागः कर्त्तव्यः । प्रतिपत्तिरूप-सन्निपत्योपकारकाणां तु तत्तद्द्रव्यादिभिरपेक्षितत्वात् तत्रानुक्तानामपि अनुष्ठानमावश्यकमेव । अत एव प्रकृते समिदाधानादिरूपस्य अर्थकर्मत्वात् यावदुक्तान्तापच्छिन्नादावनिवृत्तिरेवेति । यागादावुपयुक्तस्य कृतकार्यस्य द्रव्यस्य विहितदेशे प्रक्षेपः प्रतिपत्तिः ।

[ सोदकचमसस्य गार्हपत्योत्तरतः स्थापनमालम्भश्च ]

**गार्हपत्यमुत्तरेणोदपात्रं निधायाऽऽलभते "भूतस्त्वा भूत करिष्यामी"ति ॥१॥**

अध्वर्युर्वामहस्तस्थं प्रणीतापात्रं जलेनाऽऽपूर्य गार्हपत्यस्योत्तरतः स्थापयित्वा भूतस्त्वेति मन्त्रेण तत्पात्रं स्पृशेत्। आलम्भश्च पात्रस्यैव नोदकस्य। तेन अभ्युदयेष्ट्यादौ[1] दधिपयसोः प्रणीताकार्ये श्रपणे विनियुक्तत्वेन प्रणीतास्थानापन्नत्वात् तयोः प्रणयने मन्त्रो नोहितव्यः। [2]उदकालम्भे तु त्वाशब्दस्य उदकविषयत्वात्तत्र द्रव्यद्वित्वे विपरिणामः ॥१॥

( अपांप्रणयनार्थं ब्रह्मानुज्ञाप्रार्थनम् )

**'ब्रह्मन्नपः[3] प्रणेष्यामि' 'यजमान वाचं यच्छे' त्याह ॥ २ ॥**

अध्वर्युः। अयं वाग्यमः प्रणयनाभावेऽपि प्रवर्तते। यजमानसंस्कारकत्वात्। प्रैषश्च तादर्थ्यात्।

अत्र प्रणीतानां दृष्टार्थत्वमुत अदृष्टार्थत्वमिति संशये देशनियमात्[4], पात्रनियमात् मन्त्रविधानात्, स्कन्ने प्रायश्चित्तविधानात्, शिरःसंस्तवात्, अन्ते प्रतिपत्तिविधानाच्च अदृष्टार्थत्वमेव तासाम्, इति प्राप्ते क्रियानिवृत्त्यर्थमेव द्रव्याणां विधानात् प्रकृते च उदकसाध्यानां क्रियाणां बह्वनां संयवनादीनां सत्त्वात्, तदर्थं च अन्यस्य कस्यचिदुदकस्य अविधानात्, "प्रणीताभिः संयौति" (आप० श्रौ० १।२४।३) इति लिङ्गदर्शनाच्च संयवनादिरूपदृष्टार्थत्वमेवैतासाम्। यश्च देशादिनियमः स तु वरमदृष्टार्थो भवतु। यथा दृष्टार्थे एव भोजने प्राङ्मुखत्वादीनां

---

[1] अमावास्यायां प्रातरिष्टेरारम्भो विहितः। यदि कश्चिद् भ्रान्त्या अमाबुद्ध्या चतुर्दश्यामिष्टिमारभेत, तदानीं चन्द्रस्याभ्युदितत्वात् तन्निमित्तजन्यदोषनिर्घातार्था इयमिष्टिः 'अभ्युदयेष्टिः अभ्युदृष्टेष्टिरिति चोच्यते।

[2] उदकालम्भे तु उदकस्थानापन्नयोर्द्रव्ययोर्द्वित्वात् मन्त्रो द्विवचनान्तेन विपरिणमयितव्य इति कर्काचार्याः। इदमत्र विचारणीयम्। आलम्भनस्य संस्कारकर्मत्वात् प्रतिप्रधानं गुणावृत्तिन्यायेन यावद्द्रव्यमावृत्तिरवश्यं भाविन्येव। तत्र यत्र अनेकानि द्रव्याणि, तत्र पात्रानेकत्वस्याप्यावश्यकत्वेन यावत्पात्रमालम्भनस्याप्यावर्त्तनीयतया तदङ्गभूतस्य मन्त्रस्यावृत्तिः केन वार्येतेति। अथ "चतुर्होत्रा पौर्णमासीमभिमृशेत्" ( आप० श्रौ० २।११।५ ) इत्यत्र बहूनामपि हविषां सकृदेवाभिमर्शनम्, असंभवतां च मन्त्रावृत्तिः इत्युक्तम्। तद्वदत्रापि बहूनामपि द्रव्याणां सकृदेवालम्भनं भवेत्। तत्र द्रव्याणां द्वित्वे बहुत्वे वा मन्त्रघटकपदानां तद्वाचिनां द्विवचन-बहुवचनान्ततया विपरिणाम आपद्येतेति यद्याशङ्क्येत, तदा पात्रबहुलेऽपि तथा विपरिणाम आपतन् कथं वारयितुं शक्यत इति। चतुर्होत्रेत्यस्यायमर्थः। "पृथिवी होता, द्यौरध्वर्युः, रुद्रोऽग्नीत्, मित्रो बृहस्पतिः" ( तै० आ० ३।२ ) इति चतुर्होतृसंज्ञकेन मन्त्रेण पौर्णमासीम् = पौर्णमासीकालिकानि हवींषि स्पृशेत् इति।

[3] ब्रह्मेत्यृत्विग्विशेषः। स च वरण भरणनिमित्तोऽपि अत्र ब्रह्मत्वकर्त्तरि उपचर्यते। तेन सत्रे वरण-भरणाभावेऽपि ब्रह्मन्नपः प्रणेष्यामीत्येव प्रयोगः, न तु यजमानापः प्रणेष्यामीति विपरिणामः। कुण्डपायिनामयनसंज्ञके सत्रे च "यो होता सोऽध्वर्युः स पोता, य उद्गाता स नेष्टा सोऽच्छावाकः, यो मैत्रावरुणः स ब्रह्मा स प्रतिहर्त्ता, यः प्रस्तोता स ब्राह्मणाच्छंसी स ग्रावस्तुत्, यः प्रतिप्रस्थाता सो ऽग्नीत्स उन्नेता" (आप० श्रौ० २२।११।१२ ) इति मैत्रावरुणस्य ब्रह्मत्वं विहितं, तत्रापि न विपरिणामः।

[4] "उत्तरेणाहवनीयम्" (२।३) इति देशनियमः। कांस्येत्यादिना (का० श्रौ० २।३।५) पात्रनियमः। "कस्त्वेति(श०ब्रा० १।१।१।१३) प्रणयति" इति मन्त्रविधानम्। "स्कन्नाः प्रणीता अभिमृशति "ऐतु राजा" (का० श्रौ० २५।६।२८) इति मन्त्रेण इति स्कन्दनप्रतिपधः। "शिरो ह वा एतद्यज्ञस्य यत्प्रणीताः" (श० ब्रा० १४।२।१।५०) इति शिरःसंस्तवः। "अथ प्रणीता दक्षिणतः परीत्य निनयति" (श०ब्रा० १। ९।२।३२) इति प्रतिपत्तिः।

नियमानामदृष्टार्थता, तद्वत्। तत्रापि न केवलं संयवनार्थता, किन्तु अपेक्षितसर्वकार्यार्थतैव। प्रणीताभिः संयौतीति तु एकदेशकार्यानुवादः ॥ २ ॥

[ आहवनीयोत्तरतः सोदकचमसस्य मन्त्रेण स्थापनम् ]

**अनुज्ञात उत्तरेणाहवनीयꣳ सम्प्रति निदधाति "कस्त्वे"ति[1] ॥ ३ ॥**

ॐ प्रणय इति ब्रह्मणाऽनुज्ञातोऽध्वर्युः प्रणीता गार्हपत्यादाहवनीयसमीपं तूष्णीं नीत्वा आहवनीयस्योत्तरतः सम्प्रति अनन्तिके अनतिदूरे च बहिर्वेदि कस्त्वेति निदध्यात् । निधाने मन्त्रोऽयम् ॥३॥

[ अग्नि-प्रणीतयोर्मध्ये न कश्चिद्गच्छेत् ]

**नान्तरेण गच्छेयुः ॥ ४ ॥**

अग्निप्रणीतयोरन्तरालेन न केनापि गन्तव्यम् ॥ ४ ॥

[ प्रणयनाश्रित-पात्रविशेषात् फलविशेषः ]

**काꣳस्य—वानस्पत्य—मार्त्तिकैरभिचार—ब्रह्मवर्चस—प्रतिष्ठाकामा यथासङ्ख्यम् ॥ ५ ॥**

अभिचारकामः कांस्यपात्रेण[2], ब्रह्मवर्चसकामो वानस्पत्यपात्रेण, प्रतिष्ठाकामो मृन्मयेन प्रणीतापात्रेण प्रणीताप्रणयनं कुर्यात् ॥ ५ ॥

[ अग्नीनां दर्भैः परिस्तरणम्, सर्वेषां पात्राणां द्वन्द्वशः स्थापनं च ]

**तृणैरग्नीन्परिस्तीर्य पुरस्तात्प्रथमं, द्विशः पात्राणि सꣳसादयति ॥ ६ ॥**

अध्वर्युराहवनीय-गार्हपत्य-दक्षिणाग्नीन् क्रमेण कुशैः प्रागग्रैरुदगग्रैश्च आदौ पूर्वस्यां दिशि, ततः प्रादक्षिण्येन परिस्तीर्य द्वे द्वे पात्रे एकेन प्रयत्नेन सहैव निदधाति । पान्ति रक्षन्ति हविरादि एभिरिति पात्राणि । पिबन्त्येभिरिति पात्राणि इति तु न विगृह्यते । तथा सति शूर्पादीनामपात्रता स्यात् । अतः पात्रशब्दः साधनवचन एव । पात्रस्य साधनत्वात् तस्य च "कपालानि च" (श० ब्रा० १।१।१।२२) इति समाम्नानसामर्थ्याच्च कपालसमुदायस्य पात्रता, न प्रतिकपालम् । अतश्च सर्वेषां कपालानामेकपात्रत्वात् पात्रान्तरेणैव सह द्वन्द्वता कार्या सर्वेषाम् । एवं पुरोडाशपात्र्योरपि अन्येन द्वन्द्वता कार्या, कपालवत् । एवं तण्डुलादावपि ।

अत्र "शूर्पं चाग्निहोत्रहवणीं च (श० ब्रा० १।१।१।२२) इत्यादिश्रुत्या पञ्चानां द्वन्द्वानां समाम्नानसामर्थ्यात् समाम्नातानां द्वन्द्वानामेव परस्परं द्वन्द्वता भवतीति नियमः । एवं च चर्विष्ट्यां कपालानामभावात् स्फ्य[3] एक एवासाद्यते । समाम्नानारिक्तानामर्थवदासादितानां पात्राणां तु यदृच्छया द्वन्द्वता कार्या, न तत्र कश्चिद्विशेषः ॥ ६ ॥

---

१ ॐ कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्ति।१।६।

२ अत्र च कांस्यादीनां पात्राणामेव अभिचारादिरूपफलोद्देशेन विधानम् । प्रणयनरूपा क्रिया तु कांस्यादीनामाश्रयभूता । न तु क्रियायाः फलोद्देशेन विधानम् । यथा-"दध्नेन्द्रियकामस्य जुहुयात्" (का० श्रौ० ४।१५।२३) इत्यत्र प्रकृतमग्निहोत्रहोममाश्रित्य इन्द्रियरूपफलोद्देशेन दध्नो विधानम् । अत एव पुरुषाभिलषितफलजनकत्वादस्य गुणस्य पुरुषार्थत्वम् । अतः क्रत्वङ्गत्वाभावात् दर्शपूर्णमासविकृतिषु कांस्यादीनामतिदेशो नास्ति । पुरुषार्थस्य काम्यगुणादेः विकृतौ अनतिदेशस्य पूर्वमीमांसायामष्टमे ऽध्याये प्रथमे पादे पञ्चमाधिकरणे निरूपितत्वात् ।

३ अग्रेतनैः पात्रैः सह द्वन्द्वता तु न क्रियते । तथात्वे यथापाठं द्वन्द्वता न कस्य चित्स्यात् । ननु यदा स्फ्य एक एवासाद्यते तदा स्फ्यस्य द्वन्द्वताऽभावप्रसङ्ग इति चेत्, उच्यते । मा भूद् स्फ्यस्य द्वन्द्वता । अन्येषां तु द्वन्द्वता तदवस्थितेति ।

[ पात्रासादनमध्वर्युकर्तृकं यजमानकर्तृकं वा ]

**यजमानो वा ॥ ७ ॥**

यजमानो वा पात्राण्यासादयेदध्वर्युर्वेति विकल्पः ॥ ७ ॥

पात्राण्याह—

[ पात्राणां विनियोगक्रमेणाऽऽसादनम् ]

**शूर्पाग्निहोत्रहवणि, स्फ्यकपालꣳ०, शम्याकृष्णाजिन, मुलूखलमुसलं, दृषदुपल, मर्थंचच ॥ ८ ॥**

शूर्पादीनि दश पात्राणि यथोपदिष्टं सादयित्वा यस्य यस्य पात्रस्य प्रयोजनं तत्सर्वमासादयेत्। अत्र येषां पात्राणामुपयोगस्तेषां सर्वेषामुपयोगक्रमेणासादनं कार्यमित्यर्थवच्चेत्यनेन बोध्यते । छन्दोगपरिशिष्टे कात्यायनोऽपि—"प्राञ्चं प्राञ्चमुदगग्नेरुदगग्रं समीपतः। तत्तथाऽऽसादयेद् द्रव्यं यद्यथा विनियुज्यते" (६।१५) इति। एवं च विनियोग (कार्य) क्रमेणैव पात्राणामासादनमिति कर्कः।

देवयाज्ञिकास्तु—यस्य पात्रस्य येन क्रमेण प्रथमं कार्यार्थं हस्तेनोपादानं तेनैव क्रमेण तस्यासादनम्। एवं दृष्टार्थता भवति लाघवं च। विनियोगक्रमेणासादने तु तथा न स्यात्। हविर्ग्रहणे पात्र्या हविर्द्रव्यस्य च देशविप्रकर्षात । आज्यनिर्वापे आज्यस्थाल्या आज्यस्य च। तस्मादुपादानक्रमेणैव पात्रासादनमित्याहुः।

विकृतावपि प्राकृतकार्यापन्नानामासादनादि कार्यम्। अप्राकृतकार्यापन्नानां तु उपकल्पनमेव, नासादनं नापि प्रोक्षणम् । चरुपात्रस्य कपालस्थानीयत्वात् प्राकृतकार्यापत्या आसादनादिकमिति कश्चित्। तन्नेति कर्कः। यथा कपालगतेन ऊष्मणा पुरोडाशः पच्यते, न तथा चरुपात्रगतेन ऊष्मणा चरुः पच्यते। चरुपात्रगत ऊष्मा उदकमेव तापयति ततश्चरुसिद्धिर्भवति इति अकपालकार्यापत्तिः । अतश्चरुपात्रस्योपकल्पनमेव नासादनम्। स्मार्त्तकर्मसु याज्ञिकानां चरुस्थाल्यासादनानुष्ठानं कर्कविरुद्धमेवेति बोध्यम् ॥ ८ ॥

[ गार्हपत्यस्य पश्चादुत्तरतो वा पात्रासादनम् ]

**श्रपणस्य पश्चादुत्तरतो वा ॥ ९ ॥**

गार्हपत्यस्य आहवनीयस्य वा पश्चात् प्राक्संस्थं पात्राणामासादनम्। अथवा श्रपणस्योत्तरत उदक्संस्थं पात्रासादनम्। "उत्तरे चेदुदक्संस्थं प्राक्संस्थं पश्चिमे भवेत्" इति देवयाज्ञिकधृतकारिकाकारवचनात् । स्थानसङ्कोचे तु पश्चादपि उदक्संस्थम्, उत्तरेऽपि प्राक्संस्थं पात्रासादनम् । पदार्थस्य प्रधानत्वात् । तदुक्तं "प्राञ्चं प्राञ्चमुदगग्नेरुदगग्रं समीपतः" ( छं० प० ६।१५ ) इति ॥९॥

[ शूर्पाद्यादाय सम्यक्पदार्थानुष्ठानाय वाग्यमः कार्यः ]

**"कर्मणे वा"मिति शूर्पाग्निहोत्रहवण्यादाय वाचं यच्छति ॥१०॥**

अध्वर्युः कर्मण[1] इति मन्त्रेण शूर्पमग्निहोत्रहवणीं च सहैवादाय वाग्यमनं कुर्यात्। अत्र मन्त्रे साकाङ्क्षत्वात् आददे इत्यध्याहर्त्तव्यम्। अस्य संहितावत्प्रयोगो न भवति । अध्याहारस्य लौकिकत्वात् इति कर्कः ( का० श्रौ० ६।४।२ )। समन्त्राग्निहोत्रहवण्यादानस्य हविर्ग्रहणार्थतया पशौ पयस्यायां च हविर्ग्रहणाभावात प्रोक्षण्यर्थतया क्रियमाणमग्निहोत्रहवण्यादानं मन्त्रेण न कार्यं, किन्तु तूष्णीम्।

---

1 ॐ कर्मणे वां वेषाय वाम् आददे ।१।६।

वाग्यमनस्य पदार्थधर्मतया हविर्ग्रहणस्थानीयस्य पदार्थान्तरस्यापि सम्यगनुष्ठेयत्वात् तदर्थमपि वाग्यमस्यावश्यकत्वात् पश्चादावपि भवत्येव वाग्यमनम् ॥१०॥

[ शूर्पाग्निहोत्रहवण्योः प्रतपनं हविर्ग्रहणार्थम् ]

प्रतपनं "प्रत्युष्ट" निष्टप्तमि"ति वा ॥११॥

शूर्पाग्निहोत्रहवण्योर्गार्हपत्येऽग्नौ प्रत्युष्टमिति मन्त्रेण[1], निष्टप्तमिति[2] मन्त्रेण वा प्रतपनं कुर्यादध्वर्युः । प्रतपनं हविर्ग्रहणार्थः शूर्पाग्निहोत्रहवण्योः संस्कारः । तेन हविर्ग्रहणाभावे न कार्यः ॥११॥

[ गार्हपत्यस्य पश्चात् स्थितं शकटमनु गच्छेत् ]

गच्छ "त्युर्वन्तरिक्ष"मिति[3] अपरस्य पश्चादनस्तिष्ठत्समङ्गि ॥१२॥

अपरस्य गार्हपत्यस्य पश्चिमदेशे युग-योक्त्र-वरत्रादिभिः सर्वाङ्गैरुपेतं शकटमवस्थितं भवति, तत्प्रति अध्वर्युर्गच्छेत् । समङ्गीत्यनेन अनडुत्प्राप्तिर्न शङ्कनीया । तयोः केवलं गमनार्थत्वात् । गमनस्य चात्राभावात् ॥१२॥

[ दक्षिणोत्तरयोर्धुरोः क्रमेणाऽभिमर्शनम् ]

"धूरसी"ति धूरभिमर्शनम् ॥१३॥

अध्वर्युर्धूरसीति[4] मन्त्रेण दक्षिणां धुरमभिमृश्य तत उत्तरां धुरमभिमृशेत् । अनडुत्स्कन्धयोरुपरि यौ निधीयेते तौ युगस्य प्रान्तौ युगशम्यान्तरालौ धूःशब्देनोच्येते ॥१३॥

[ अनःसंस्कारत्वादेकस्या एव ईषाया अभिमर्शनम् ]

"[5]देवाना"मित्युपस्तम्भनस्य पश्चादीषाम् ॥१४॥

शकटे प्रागपरायतो दीर्घः काष्ठविशेष ईषा । तदग्रस्य भूमिस्पर्शो मा भूदिति तदाधारत्वेन स्थापितं काष्ठमुपस्तम्भनं, तस्य पश्चाद्भागे तामीषांस्पृशेत् । मन्त्रोऽयं प्रयोगसमवेतार्थस्मारकत्वात् पितृयज्ञे ऽतिदिष्टः सन् तत्र पितॄणां प्रकाशनार्थं पितॄणामसीत्यूह्यते । अत्रत्यदेवशब्दस्य देवपरत्वात् पितृयज्ञे च पितॄणां देवत्वाभावात् तत्प्रकाशनार्थं देवपदस्थाने पितृपदं प्रयोक्तव्यमेव । एवमेकदेवत्यायां विकृतौ देवस्यासीत्याद्यूहः कार्यः । केचित्तु अत्र देवशब्दस्य बहुवचनान्तत्वात् देवयोश्च अग्नीषोमयोरुभयोरेवात्र सत्वाद् बहुवचनान्तेन देवशब्देन तयोः प्रकाशनासंभवादसमवेतत्वेनादृष्टत्वार्थत्वमेव मन्त्रस्य । अतश्च एकदेवत्यायां विकृतौ देवशब्दस्य ऊहो नास्ति इति वदन्ति, तन्न । अत्रापि अग्निरेकः अग्नीषोमौ च द्वौ इति बहूनां देवतानां सत्वात् तत्प्रकाशकत्वेन मन्त्रस्य समवेतार्थत्वसम्भवात् ।

न च नात्र देवशब्देन देवोऽभिधीयते, किन्तु देवता । देवता च त्यज्यमानोद्देश्यत्वरूपा । देवत्वं तु मनुष्यत्वादिवज्जातिविशेषः । तादृशं च देवतात्वं तद्धितेन चतुर्थ्यन्तेन वा बोध्यते । प्रकृते च आग्नेयमिति तद्धितेन अग्नेरेकं देवतात्वम्, अग्नीषोमीय इति तद्धिता-

---

१ ॐ प्रत्युष्ट᳘ᳲ रक्षः प्रत्युष्टा अरातयः ।१।७।

२ ॐ निष्टप्त᳘ᳲ रक्षो निष्टप्ता अरातयः १।७।

३ ॐ उर्वन्तरिक्षमन्वेमि १।७।

४ ॐ धूरसि धूर्व धूर्वन्तं धर्वं तं योऽस्मान् धूर्वति तं धूर्व यं वयं धूर्वामः ।

५ ओं देवानामसि वह्नितमᳲ सस्नितमं पप्रितमं जुष्टतमं देवहूतमम् । अह्रुतमसि हविर्धानं दृᳲहस्व माह्वार्मा ते यज्ञपतिर्ह्वार्षीत् १।८-९।

त्वेन च अग्नीषोमयोर्मिलितयोर्व्यासज्यवृत्ति एकं देवतात्वम् इति देवतात्वद्वयस्यैव सत्वात् कथं बहुवचनस्योपपत्तिरिति वाच्यम्।

यद्यपि अग्नीषोमयोर्व्यासज्यवृत्ति देवतात्वं, तथापि अग्निः सोमश्च पृथक् पृथक् शब्देन अभिधातुं शक्येते। अस्ति च मन्त्रवर्णौ "देवोऽअग्निः," (शु० य० २१।५८) "देवः सोम" (ऋ० ७।१।३२) इति।

अत एव "अग्नीषोमाभ्याम्," (१।१०) "अग्नीषोमयोः", (२।१५) इत्यादि द्विवचनान्त-प्रयोगो मन्त्रेषु सङ्गच्छते। अतो देवतात्वस्य द्वित्वेऽपि देवानां बहुत्वात् तेषामपि यागे समवेतत्वेन तत्प्रकाशनेन मन्त्रस्य प्रकृतसमवेतार्थप्रकाशकत्वरूपदृष्टार्थत्वस्य प्रकृतावपि संभवेन तादृशकार्यार्थं वचनस्यापि एकदैवत्ययागे विपरिणामो युक्त एव। यदि च देवशब्देन देवतैवाभिधीयेत तर्हि पितॄणामपि तादृशत्वात् देवशब्देनैव पितॄणामपि प्रकाशनावश्यकतया देवशब्दस्यापि न विपरिणामः सिद्ध्येत्। तत्तु भवतो नेष्टम्।

यदि च पितृयज्ञे पितृशब्देनैव तेषां चोदितत्वात् तत्र तेनैव शब्देन तेषामभिधानं युक्तमित्युच्येत, तर्हि अग्न्यादीनामपि आग्नेयादिशब्देनैव चोदितत्वात् तेष्वपि देवशब्दप्रयोगो दुर्लभः स्यात्। नाप्यवयवयोगाद्देवशब्दप्रयोगः। तेनैव योगेन पितॄणामपि देवत्वापातात् पुनस्त द्दोषतादवस्थ्यापत्तेः।

न चैवमपि अग्निरेकः सोमश्चापर इति देवतयोर्द्वित्वात् कथं बहुत्वमिति वाच्यम्। एकत्र केवलोऽग्निः, अपरः सोमसहितोऽग्निरिति वैशिष्ट्यभेदाद्भेदमङ्गीकृत्य बहुवचनान्तेन प्रयोगः। अतो देवशब्दस्य बहुवचनान्तस्य सर्वथा प्रकृतौ समवेतत्वेन विकृतावपि एकदेवतायां देवस्यासि, द्विदेवतायां देवयोरसि इत्यूहः कार्यः। एवं वचनवत् लिङ्गस्यापि प्रकृतौ समवे-तत्वात स्त्रीदेवताकायां विकृतौ अदितीष्टौ देव्या असीत्यूहः कार्यः॥ १४॥

[ शकटसंबन्धि—दक्षिणचक्रारोहणम् ]

## "विष्णुस्त्वे"त्यारोहणम्॥ १५॥

विष्णुस्त्वेति[1] मन्त्रेणानसो दक्षिणं चक्रमारोहेदध्वर्युः॥ १५॥

[ हविषः प्रेक्षणम् ]

## प्रेक्षत "उरु वातायेति" हविष्यान्॥ १६॥

आरोहणानन्तरमध्वर्युः शकटस्थान् व्रीहीन् यवान् वा हविरर्थान् पश्येत्। अत्र मन्त्रे साकाङ्क्षत्वाद् भव इत्यस्याध्याहारः। इदं प्रेक्षणं हविः संस्कारार्थम्। अतो हविषः प्रधानत्वम्, कर्मणश्च गुणत्वम्। एवं च यत्र व्रीहियवादीनि भिन्नानि द्रव्याणि सन्ति तत्र संस्कार्याणां द्रव्याणां बहुत्वात् प्रतिप्रधानं गुणावृत्तिन्यायेन यावद्द्रव्यं वीक्षणमावर्त्तितव्यम्। तदङ्गत्वाच्च मन्त्रस्याप्यावृत्तिः॥ १६॥

[ हविर्व्यतिरिक्तलोष्टादिनिरासः ]

## "अपहत"मिति निरस्यत्यन्यत्॥ १७॥

तत्र व्रीहियवेभ्योऽन्यत्तृणलोष्टादिकं यदि स्यात्, तदनेन[3] मन्त्रेण निरस्येदध्वर्युः। नानाबीजेष्वथा बीजमध्यस्थान्यपद्रव्याणि तत्तद्बीजेभ्यो गृहीत्वा ततोऽनेन मन्त्रेण युगपदेव निरसनं कर्त्तव्यम्॥ १७॥

---

१ ॐ विष्णुस्त्वा क्रमताम् १।९।

२ ॐ उरु वाताय भव १।९।

३ ॐ अपहतꣳ रक्षः ।१।९।

[ लोष्टादेरभावे हविषोऽभिमर्शनम् ]

**अविद्यमानेऽभिमृशेत् ॥ १८ ॥**

यदि तत्र तृणलोष्टादिकमपद्रव्यं नास्ति तदाऽनेन मन्त्रेण व्रीह्यादीनभिमृशेत् । नानाबीजेष्ट्यां प्रतिबीजं मन्त्रावृत्त्याऽभिमर्शनं कार्यम् ॥ १८ ॥

[ हविष आलम्भः ]

**"यच्छन्ता"मित्यालभते ॥१६॥**

यच्छन्तामिति[1] मन्त्रेणाध्वर्युर्हविष्यान् स्पृशेत् । नानाबीजेषु भेदेन मन्त्रावृत्त्या स्पर्शः । स्पर्शस्य हविः संस्कारत्वात् ॥१६॥

[ आग्नेययागार्थं चतुरो मुष्टीन् निर्वपेत् ]

**"देवस्य त्वे"ति गृह्णात्याग्नेयं चतुरो मुष्टीन् ॥ २० ॥**

अध्वर्युर्मुष्टिना अग्निदेवतं व्रीह्यादिकं हविस्तूष्णीमादाय देवस्य[2]त्वेति मन्त्रेण शूर्पेऽग्निहोत्रहवण्यां प्रक्षिपेत्[3] । एवं चतुरो मुष्टीन्निर्वपेत् । तत्र मुष्टित्रयनिर्वापः समन्त्रकः । चतुर्थमुष्टिनिर्वापस्तु तूष्णीमित्युक्तम् ( १।७।११ ) । यद्यन्यत्र सूत्रपर्यालोचनया ग्रहणे मन्त्र इति प्रतीयते, तथापि "अग्निहोत्रहवण्यां चतुरो मुष्टीन्निर्वपति" (आप० श्रौ० १।१७।१०) इति शास्त्रेण निर्वापरूपप्रक्षेप एव मन्त्रस्याङ्गतापतीतेस्तदनुरोधेनात्रत्यं गृह्णीयादिति पदं लक्षणया प्रक्षेपपरमङ्गीकर्त्तव्यम् । चतुर्मुष्टिकाग्नेयहविर्ग्रहणानन्तरं चाग्निहोत्रहवण्याः सकाशात् शूर्पे हविः पृथक् पृथक् प्रक्षेपणीयम् । एवं शूर्पादानस्यापि दृष्टार्थता भवति । अग्निहोत्रहवण्यां च हविरन्तरं ग्रहीष्यन्ते, आपश्च तत्र करिष्यन्ते ॥२०॥

[ अग्नीषोमीययागार्थं च चतुर्मुष्टिनिर्वापः ]

**एवमग्नीषोमीयम् ॥२१॥**

हविर्गृह्णीयादध्वर्युः[4] ॥२१॥

**यथादेवतमन्यत् ॥२२॥**

अन्यदैन्द्राग्नादिकं हविर्यथादेवतं ग्रहीतव्यम् ॥२२॥

[ हविष्यशेषाभिमर्शनं शेषसंस्कारार्थम् ]

**"भूताय त्वे"ति शेषाभिमर्शनम् ॥२३॥**

अनसि स्थितस्य गृहीतावशिष्टस्य हविषोऽभिमर्शनं भूताय त्वेति[5] कार्यम् । नानाबीजेषु प्रत्येकं समन्त्रकमभिमर्शनम्[6] । अत्र मन्त्रे परिशेषयामीत्यध्याहारः, साकाङ्क्षत्वात् ॥२३॥

---

१ ॐ यच्छन्तां पञ्च ।१।९।

२ ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । अग्नये जुष्टं गृह्णामि ।१।१०

३ अत्र निर्वापस्य समाख्ययाऽध्वर्युकर्तृकत्वात् मुष्टिरध्वर्योरेव बोध्यो, न तु याजमानः । पदार्थस्य प्राधान्यात् । यजमानपरिमाणं तु "पञ्चारत्निं परिवासयेत्" ( श० ब्रा० ३।४।४।१८ ) इत्यादौ ग्राह्यम् ।

४ ॐ देवस्य त्वा स० हस्ताभ्याम् । अग्नीषोमाभ्यां जुष्टं गृह्णामि ।१।१०।

५ ॐ भूताय त्वा नारातये परिशेषयामि ।१।११।

६ स चायं शेषसंबन्धेऽपि सति हविष एव संस्कारः । प्रयोजनवत्त्वात् । न च शेषेण संस्कृतं नास्ति प्रयोजनम् । अतः स्रङ्मालापनयनवच्छेषिसंस्कारः प्रतिपत्तव्यः । तद्यथा स्रङ्माला देवदत्तीयेति कृत्वा शुचौ देशे व्यवस्थाप्यते । अपगतदेवदत्तसंबन्धाया अपि मालायाः संस्कारो देवदत्तस्यैवानिष्टपरिहारार्थो, न मालायाः, एवमिहापि । प्रयोजनं शेषिसंस्काराभिसंबन्धार्थतया सशेषं ग्रहणं कर्त्तव्यमिति ।

[ प्राचीक्षणं श्रमापनोदार्थम् ]

"स्व"रिति प्राङीक्षते ॥२४॥

अध्वर्युः "स्वरभिविख्येषम्" (१।११) इति पूर्वस्यां दिशि विलोकयेत् । एतच्चेक्षणं दृष्टिनिरोधजनितश्रमापनोदार्थम् । अतो यत्र निर्वापो नास्ति तत्र श्रमाभावात् द्वारलोपान्निवर्त्तते। पित्र्येष्टौ दक्षिणस्यामीक्षणम्, दिग्विपर्ययेण तस्यास्तत्र प्राचीत्वात् ॥२४॥

[ हविर्गृहीत्वा शकटादवरोहणम् ]

"दृꣳहन्ता"मित्यवरोहति[1] ॥२५॥

अनसोऽवतरेदध्वर्युः ॥२५॥

[ गार्हपत्यस्योत्तरतो गत्वा पश्चिमे हविर्द्रव्यस्थापनम् ]

गच्छ"त्युर्वन्तरिक्ष"मिति[2] ॥२६॥

अनसोऽवतीर्य यत्र हविषः सादनं क्रियते तमुत्तरदेशं प्रति गच्छेदध्वर्युः ॥२६॥

श्रपणस्य पश्चात्सादयति "पृथिव्यास्त्वे"ति[3] ॥२७॥

श्रप्यन्ते हवींष्यस्मिन्निति श्रपणो गार्हपत्योऽग्निः । तस्य पश्चात् शूर्पस्थानि हवींषि सादयेदध्वर्युः ॥२७॥

[ पात्रीतो वा निर्वापः ]

पात्र्यां वा स्फ्योपहितायाम् ॥२८॥

अथवा स्फ्योपरि निहितायामिडापात्र्यामेव इदमनः संबन्धि सर्वं कर्म प्रतिपत्तव्यम् । पूर्वाग्रामिडापात्रीमुदगग्र-स्फ्योपरि निधाय हविषा पूरितां ताम् अनःस्थानीयां कृत्वा तत एव निर्वापादिकं कार्यमिति भावः ॥२८॥

[ पात्रीपूर्वार्द्धमभिमृश्य धूरभिमर्शनादिमन्त्राणां जपः ]

इडापात्रीतो हविर्ग्रहणपक्षे धू- रीषा-ऽऽरोहणानामभावात्तदङ्गभूतानां मन्त्राणां किं प्रयोजनमित्यत आह—

धूरीषाऽऽरोहणानि पात्रीबिले जपति ॥२९॥

पात्रीतो हविर्ग्रहणपक्षे धूरीषाऽऽरोहणमन्त्रान्[4] इडापात्र्या मुखे गत जपेदध्वर्युः। इडापात्रीमुखं हस्तेन स्पृष्ट्वा मन्त्रत्रयं जपेदित्यर्थः ॥२९॥

[ शकटादवरोहणस्थानीयमुत्थानम् ]

इडापात्रीतो हविर्ग्रहणपक्षे अवरोहणमन्त्रेण किं कर्त्तव्यमित्यपेक्षायामाह—

"दृꣳहन्ता"मित्युत्थानम् ॥३०॥

दृꣳहन्तामिति मन्त्रेणाध्वर्युरासनादुत्तिष्ठेत् ॥३०॥

---

१ ॐ दृꣳहन्तां दुर्याः पृथिव्याम् ।१।११।

२ ॐ उर्वन्तरिक्षमन्वेमि ।१।११।

३ ॐ पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थेऽग्ने हव्यꣳ रक्ष ।१।११।

४ विलिङ्गानामपि मन्त्राणाम् "अनन्तरायमु तर्हि यजूꣳषि जपेत्" ( श० ब्रा० १।१।२।८ ) इति वचनसामर्थ्याद्विनियोगः ।

[ पवित्रयोश्छेदनेन सम्पादनम् ]

**कुशौ समावप्रशीर्णाग्रावनन्तर्गर्भौ कुशैश्छिनत्ति "पवित्रे[1] स्थ" इति ॥३०॥**

कुशशब्द एकतृणपरः। कुशौ=द्वे दर्भतृणे, समौ मूलादारभ्याग्रपर्यन्तं तुल्यप्रमाणौ, अप्रशीर्णाग्रौ = अग्रवन्तौ, न विद्यते अन्तर्मध्ये[2] गर्भो ययोस्तौ, गर्भे हि सति सङ्ख्यान्तरं स्यात्) कुशैश्छिनत्ति मूलछेदनेन प्रादेशप्रमाणौ करोति। अर्थात् अध्वर्युः कुशपत्रद्वयं वामहस्ते कृत्वा अग्रतः प्रादेशमात्रं परिमायं मूले तयोरुपरि कुशत्रयमुदगग्रं निधाय तत्कुशत्रयं तयोर्मूलभागेन प्रादक्षिण्येन परिवेष्टय तयोः प्रादेशमात्रमग्रभागं वामहस्ते कृत्वा अवशिष्टं मूलभागं, कुशत्रयं च दक्षिणहस्ते धृत्वा दक्षिणहस्तेन छिन्द्यात् त्रोटयेत्। अत्र पवित्रयोरेव समत्वोक्तेश्छेदनेन पवित्रे एव समे कार्ये। न तु समप्रमाणौ कुशौ छिन्द्यादित्यत्राग्रहः। भिन्नप्रमाणावपि कुशौ समौ कार्याविति तात्पर्यम् ॥३०॥

**त्रीन्वा ॥३१॥**

अथवा त्रीन् कुशान् कुशैस्तथैव छिनत्ति। इदं पक्षान्तरम्। अत्र "न प्रकृतावूहोऽस्ती"ति (का० श्रौ० ४।४।२१) न्यायेन मन्त्रगतस्य द्विवचनान्तपदस्य ऊहाभावेन यथाश्रुतस्य मन्त्रस्य वा पाठः क्रियताम्, अथवा मन्त्रस्य परित्याग ? इति अन्यतरस्मिन्नवश्यकर्त्तव्ये गुणभूतसङ्ख्यानुरोधेन प्रधानभूतप्रातिपदिकपरित्यागस्यान्याय्यत्वात् 'गुणे त्वन्याय्यकल्पना' ( जै० ६।३।सू० १५ ) इति न्यायेन द्विवचनस्यैव बहुत्वे लक्षणामङ्गीकृत्य द्विवचनान्तस्यैव मन्त्रस्यानूहितस्य पाठः कर्त्तव्य इत्यवगन्तव्यम् ॥३१॥

[ अग्निहोत्रहवण्यामपः कृत्वा पवित्राभ्यामुत्पवनम् ]

**हविर्ग्रहण्यामपः कृत्वा ताभ्यामुत्पुनाति "सवितुर्व"[3] इति ॥३२॥**

हविर्गृह्यते यस्यामिति हविर्ग्रहणी अग्निहोत्रहवणी। तस्यामध्वर्युरुदकं प्रणीतमासिच्य तदुदकं हस्तद्वयस्यानामिकाङ्गुष्ठगृहीताभ्यां पवित्राभ्यां सकृदूर्ध्वं क्षिपेत्। "अग्निहोत्रहवण्यां चतुरो मुष्टीन्निर्वपति" (आप० श्रौ० १।१७।१०) इति सूत्रात् हविर्ग्रहणीशब्देन अग्निहोत्रहवणी उच्यते। तेन पयस्यादौ हविर्ग्रहणाभावेऽपि प्रोक्षणार्थतया अपां निधानमत्र भवत्येव ॥३२॥

[ प्रोक्षणीषु पवित्रनिधानम् ]

**ता स्थानं तयोः ॥३३॥**

इत आरभ्य तयोः पवित्रयोरग्निहोत्रहवणीस्थास्ता आप एव स्थानं वेदितव्यम्। "पवित्रे निधाय प्रणीतासु"(का०श्रौ० २।७।१८) इत्यस्मात्प्राक् पवित्रयोरत्रैव निधानं कार्यमित्यर्थः ॥३३॥

[ प्रोक्षणीपात्रं सव्ये कृत्वा दक्षिणेनापामूर्ध्व चालनम् ]

**सव्ये कृत्वा दक्षिणेनोदिङ्गयति "देवीराप"[4] इति ॥३४॥**

अध्वर्युः सव्यहस्ते अग्निहोत्रहवणीस्थाः प्रोक्षणीः = अपो निधाय सव्यहस्तस्था एव

---

१ ॐ पवित्रे स्थो वैष्णव्यौ ।१।१२।

२ यस्य एकपत्रात्मककुशस्य मध्ये कुशान्तरं नास्ति सोऽनन्तर्गर्भः। तादृशौ द्वौ दर्भौ प्रादेशमात्रावादाय यदि प्रादेशमात्राद्धिकं तदा तावत्प्रमाणं छित्वा पवित्रे सम्पादयेत्।

३ ॐ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ।१।१२।

४ ॐ देवीरापो अग्रेगुवो ऽअग्रेपुवोऽग्र इममद्य यज्ञं नयताग्रे यज्ञपतिꣳ सुधातुं यज्ञपतिं देवयुवम्। युष्मा इन्द्रोऽवृणीत वृत्रतूर्ये यूयमिन्द्रमवृणीध्वं वृत्रतूर्ये ।१।१२-१३।

प्रोक्षणीर्दक्षिणहस्तेन मुखपर्यन्तमूर्ध्वाः कुर्यात्। समाचारादेव दक्षिणेनोदिङ्गने प्राप्ते सूत्रे दक्षिणग्रहणं सव्ये स्थितानामेव प्रोक्षणीनामपां दक्षिणेनोदिङ्गनं यथा स्यादित्येतदर्थम्। तेन सव्यहस्तस्थितानामेव उदिङ्गनं क्रियत इति। अत्र वामहस्ते प्रोक्षणीर्निधाय दक्षिणहस्तेन पवित्राभ्याम्प्रोक्षणीनामुदिङ्गनमिति केषांचिदनुष्ठानं सर्वथाऽनाकरम् ॥३४॥

पात्रस्थानामपां तदेकदेशेन प्राणीतेन वा प्रोक्षणम् ]

"प्रोक्षिता स्थे"ति तासां प्रोक्षणम् ॥३५॥

अध्वर्युः प्रोक्षिता स्थेति[1] मन्त्रेण तासां प्रोक्षणीनामपां प्राणीतेन[2] जलेन प्रोक्षणं सकृत्कुर्यात् ॥ ३५ ॥

[ प्रोक्षणीभिराग्नेयादिहविःप्रोक्षणम् ]

हविश्चा "ऽग्नये त्वा[3]," "ऽग्नीषोमाभ्यां[4] त्वे"ति ॥३६॥

आभ्यां मन्त्राभ्यां यथाक्रमं शूर्पस्थे हविषी प्रोक्षेत् ॥ ३६ ॥

यथादेवतमन्यत् ॥३७॥

अन्यदैन्द्राग्नादिकं हविर्यथादेवतं प्रोक्षेदध्वर्युः ॥३७॥

[ प्रतिपात्रं मन्त्रावृत्त्या पृथक् पृथक् प्रोक्षणम् ]

पात्राणि "दैव्याये"ति ॥३८॥

दैव्यायेति[5] मन्त्रेण प्रतिपात्रं मन्त्रावृत्त्या पृथक् पृथक् पात्राणि प्रोक्षेत्। पितृयज्ञे देवशब्दस्थाने प्रधानार्थेषु पात्रेषु शूर्पकपालादिषु पितृशब्दप्रयोगः। अङ्गप्रधानोभयार्थेषु पात्रेषु तु देवपितृशब्दप्रयोगः। केवलं देवकर्मार्थेषु पात्रेषु पितृयज्ञेऽपि दैव्यायेत्येव प्रयोगः ॥३८॥

[ प्रणीताऽऽहवनीयान्तराले प्रोक्षणीनां निधानम् ]

असञ्चरे प्रोक्षणीर्निधाय ॥३९॥

"नान्तरेण गच्छेयुः" ( २।२४ ) इत्युक्ते प्रणीताहवनीयान्तराले असञ्चरे वेदिमध्ये प्रोक्षणीर्निदध्यादध्वर्युः ॥३९॥

इति कातीयश्रौतसूत्रवृत्तौ द्वितीयाध्याये तृतीया कण्डिका।

---

१ ॐ प्रोक्षिता स्थ ।१।१३।

२ "प्रोक्षितास्थेति तासां प्रोक्षणम्" (का० श्रौ० २।३।३५) इति सूत्रकारेण स्पष्टमेव प्रोक्षणविधानात्, "हविश्च" (३६) इत्युत्तरसूत्रे तदनुकर्षणाच्च मन्त्रपाठमात्रपक्षस्य सूत्रस्वरससिद्धत्वात् प्रोक्षणकर्मत्वेन तासां प्रोक्षणसाधनत्वानुपपत्तेः प्रणीतानां सर्वार्थत्वात् ताभिरेव अग्निहोत्रहवणीस्थानामपां प्रोक्षणमित्यभिप्रायेण प्राणीतेन प्रोक्षणमभिहितम्।

३ ॐ अग्नये त्वा जुष्टं प्रोक्षामि ।१।१४।

४ ॐ अग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामि ।१।१४।

५ ॐ दैव्याय कर्मणे शुन्धध्वं देवयज्यायै यद्वोऽशुद्धाः पराजघ्नुरिदं वस्तच्छुन्धामि ।१।१४।

[ कृष्णस्य मृगविशेषस्याजिनमादद्यात् ]

**"शर्मासी"ति[1] कृष्णाजिनादानम् ॥ १ ॥**

शर्मासीति मन्त्रेण कृष्णाजिनस्यादानं कुर्यादध्वर्युः । कृष्ण इति मृगविशेषः । तस्य अजिनं कृष्णाजिनम् । एतदादानस्य हविषांऽवघ्रातार्थत्वात्तदभावेऽभावः ॥ १ ॥

[ कृष्णाजिनं पात्राण्यतिक्रम्य नीत्वा सकृदवधूनयेत् ]

**अपेत्य पात्रेभ्योऽवधूनोत्यवधूतमिति[2] ॥ २ ॥**

अध्वर्युस्तत्कृष्णाजिनमासादितेभ्यः पात्रेभ्यः पृथक्कृत्य उत्करे गत्वा तत्र तदवधूनोति । तल्लग्नं धूल्यादिकं कृष्णाजिनकम्पनेन उत्करे पातयतीत्यर्थः ॥२॥

[ उपरिलोमप्रत्यग्ग्रीवकृष्णाजिनास्तरणम् ]

**प्रत्यग्ग्रीवमास्तृणा"त्यदित्यास्त्वगि"ति[3] ॥३॥**

प्रतीच्यां ग्रीवा यस्य तत् प्रत्यग्ग्रीवं कृष्णाजिनमास्तृणुयादध्वर्युः ॥३॥

[ वामपाणिस्पृष्टे कृष्णाजिने उलूखलनिधानम् ]

**सव्याशून्ये निदधात्युलूखल"मद्रिरसि,"[4] "ग्रावासी"ति[5] वा ॥ ४ ॥**

वामहस्तेन स्पृष्टे कृष्णाजिने उलूखलमन्यतरमन्त्रेण[6] स्थापयति ॥ ४ ॥

**"प्रति त्वे"त्युभयोः ॥ ५ ॥**

'अद्रिरसि' 'ग्रावासि' इति मन्त्रद्वये 'प्रतित्वाऽदित्यास्त्वग्वेत्तु' इति मन्त्रः संयोजनीयः ॥ ५ ॥

[ उलूखले हविर्द्रव्यप्रक्षेपः ]

**हविराप"त्यग्नेस्तनू"रिति[7] ॥ ६ ॥**

उलूखले हविः प्रक्षिपेत् । अवभृथे अपां तनूरिति विपरिणामः । पितृयज्ञे पितृवीतये इति विपरिणामः ॥ ६ ॥

[ उलूखले हविषः प्रक्षेपोत्तरकाले हविष्कृदाह्वानकाले वाऽध्वर्युयजमानयोर्वाग्विसर्गः ]

**वाचं विसृजते ॥ ७ ॥**

हविर्ग्रहणकाले गृहीतां वाचमिदानीमध्वर्युर्विसृजेत् ॥ ७ ॥

**यजमानश्च ॥ ८ ॥**

वाचं विसृजेत ॥ ८ ॥

**हविष्कृता वा ॥ ९ ॥**

हविष्कृन्मन्त्रेण वा वाग्विसर्गः कार्यः । एवं च हविष्कृदेहीति मन्त्रमुच्चारयन्नेव वाचं

---

१ ॐ शर्माऽसि ।१।१५।

२ ॐ अवधूतꣳ रक्षोऽवधूता अरातयः ।१।१४।

३ ॐ अदित्यास्त्वगसि प्रतित्वाऽदितिर्वेत्तु ।

४ ॐ अद्रिरसि वानस्पत्यः प्रति त्वाऽदित्यास्त्वग्वेत्तु ।१।१५।

५ ॐ ग्रावाऽसि पृथुबुध्नः प्रति त्वाऽदित्यास्त्वग्वेत्तु ।१।१५।

६ अत्र अद्रि-ग्रावशब्दौ उलूखलं स्तोतुं प्रयुज्येते । नहीदमश्ममयमुलूखलम् । वानस्पत्य इति विरोधात् । अत उपचारवृत्त्या अद्रि-ग्रावशब्दौ ।

७ ॐ अग्नेस्तनूरसि वाचो विसर्जनं देववीतये त्वा गृह्णामि ।१।१५।

विसृजेत् इति अस्मिन्काले वाग्विसर्गो, हविष्कृदाह्वानकाले वा वाग्विसर्ग इति विकल्प इति-भावः ॥ ९ ॥

[ नानाबीजेषु अन्त्यहविरावपनानन्तरं वाग्विसर्गः ]

यत्र विकृतौ नानाबीजानि व्रीहयो यवाश्च । तत्र एकस्य हविषः कृष्णाजिनादानादि तुषविमोकान्तं कृत्वा अपरस्य तद् भवति । तत्राऽऽद्यस्य हविष उलूखले प्रक्षेपोत्तरकाले वाग्विसर्गोऽनुष्ठेयः ? उत अन्त्यस्य हविष आवपनकाले इति संशये सिद्धान्तयति—

**नानाबीजेष्वन्त्ये, सामर्थ्यात् ॥ १० ॥**

नानाबीजेष्वन्त्ये हविरावपनकाले वाग्विसर्गः कार्यो, नात्र । कुतः ? सामर्थ्यात् । हविरावपनस्य यतवाक्त्वनियमसामर्थ्यात् । हविःप्रक्षेपोत्तरकाले वाग्विसर्जनविधान-सामर्थ्यादित्यर्थः । यदि आद्यस्य हविषः प्रक्षेपोत्तरकाले एव वाग्विसर्गः क्रियेत तदा द्वितीयस्य हविष उलूखलप्रक्षेपे यतवाक्त्वनियमो भज्येत । तस्मादन्त्ये वाग्विसर्ग इति भावः ॥१०॥

[ मुसलमादाय हविष्येषु अवदधाति ]

**"बृहद्ग्रावे"ति[1] मुसलमादत्ते ॥ ११ ॥**

**"स इदमि"त्यवदधाति ॥ १२ ॥**

स इदमिति[2] आत्तं मुसलमुलूखले स्थापयेत् । अयं मन्त्रो देवानामसीतिवत्पितृयज्ञे एकदेवत्यायां, द्विदेवत्यायां, स्त्रीदेवतायामिष्टौ च विपरिणम्यते ॥ १२ ॥

( अवघातं कुर्वताऽध्वर्युणा पत्न्याः अग्नीधो वा ऽऽह्वानम् )

**"हविष्कृदेही"ति त्रिराह्वयति ॥ १३ ॥**

अध्वर्युर्हविष्कण्डनं कुर्वन् हविष्कृदेहि[3] इति मन्त्रेण त्रिवारं हविष्कर्त्रीं पत्नीं, हविष्कर्तारमग्नीधं वाऽऽह्वयति । अध्वर्युस्त्रिवारं मन्त्रं पठेत्, कण्डनं च त्रिवारं कुर्यात् ॥ १३ ॥

[ आह्वानानन्तरं पत्न्या अग्नीधा वाऽवघातः ]

**अतः पत्न्यवहन्त्यन्यो[4] वा ॥१४॥**

आह्वानादूर्ध्वं पत्नी वा अग्नीद्वा व्रीहीनवहन्यात् ॥ १४ ॥

[ अध्वर्यौ हविष्कृदाह्वानं कुर्वति अग्नीद् दृषदुपले समाहन्यात् ]

**आह्वयत्याहन्त्यन्यो दृषदुपले "कुक्कुटोऽसी"ति[5] त्रिः [6]शम्यया द्विर्दृ-षदठं॰ सकृदुपलाम् ॥ १५ ॥**

---

१ ॐ बृहद्ग्रावाऽसि वानस्पत्यः ।१।१५।

२ ॐ स इदं देवेभ्यो हविः शमीष्व सुशमि शमीष्व ।१।१५।

३ ॐ हविष्कृदेहि हविष्कृदेहि हविष्कृदेहि ।१।१५।

४ अत्र अन्यशब्देन ऋत्विजां परिक्रीतत्वात्, सन्निकर्षात्, समाख्यानुग्रहाच्च अध्वर्व्यतिरिक्तोऽग्नीद् गृह्यते, न ब्रह्मा । तस्य वेदत्रयविहितकर्मसंबन्धेन समाख्यानुग्रहाभावात् । अग्नीधस्तु अध्वर्युसमाख्यानं युज्यते । "आश्विनमध्वर्यवो भक्षयन्ति" इति प्रकृत्य "त्रय आश्विनं भक्षयन्ति अध्वर्युः प्रतिप्रस्थाताऽऽग्नीध्रश्च" ( श० ब्रा० ८।४।१।२५ ) इति श्रुतेः ।

५ ॐ कुक्कुटोऽसि मधुजिह्व इषमूर्जमावद त्वया वयठं॰ सङ्घातठं॰ सङ्घात जेष्म ।१।१६।

६ अत्र त्रिरित्यस्य कुक्कुटोऽसीत्यत्रान्वयो न हननक्रियायाम् । तत्र तु द्विर्दृषदं सकृदुपलाम् इत्यनेनैव त्रित्वसिद्धेः । त्रिर्ग्रहणाभावे "एकद्रव्ये कर्मावृत्तौ" (का० श्रौ० १।७।८) इति न्यायेन सकृन्मन्त्रवचनं स्यात् । अतो मन्त्राभ्यासार्थं त्रिर्ग्रहणम् ।

पत्नीमग्नीधं वाऽध्वर्यावाह्वयति सति अन्योऽग्नीत् शम्यया करणभूतया दृषदुपले कुट्टयति। तत्र विशेषः। द्विर्दृषदं सकृदुपलां शम्ययाऽऽहन्यात्। कुक्कुटोऽसीति मन्त्रस्तु त्रिः प्रयोज्यः। न तु "एकद्रव्ये कर्मावृत्तौ" (का० श्रौ० १।७।८) इति सकृन्मन्त्रवचनमिति भावः।

अत्राहन्त्यन्य इति वचनादाहनने ऽग्नीधः कर्तृत्वं भवति, न तु विरोधात्। तेन पश्चादाव्यापृते ऽध्वर्यौ अग्नीध एवावहननम्। आहननस्यादृष्टोपकारकत्वाद्यावदुक्ते निवृत्तिः॥१५॥

[ अग्नीच्छूर्पमादाय तस्मिन् हविरुद्वपेत् ]

"वर्षवृद्धमसी"ति[1] शूर्पमादत्ते ॥ १६ ॥

अवहननकर्त्ता अग्नीत्, पत्नी वा ॥ १६ ॥

"प्रतित्वे"ति[2] हविरुद्वपति ॥ १७ ॥

अवहतं हविरुलूखलादादाय शूर्पे प्रक्षिपेत् ॥ १७ ॥

[ अग्नीत् निष्पूय तण्डुलान् कणांश्च पृथक् करोति ]

"परापूतमि"ति[3] निष्पुनाति ॥ १८ ॥

शूर्पं चालनोत्थेन वायुना तुषान्पृथक्कृत्याधः पातयेदग्नीत्। विविक्तान् तुषान् अध्वर्यवे समर्पयेत्। ऊर्ध्वशूर्पेण निष्पवनम् ॥१८॥

अध्वर्युर्विवेकीकरणानन्तरं तुषान्निरस्येत् ]

"अपहतमि"ति तुषान्निरस्यति ॥ १९ ॥

अपहतमिति[4] मन्त्रेण अग्नीधा समर्पितान् तुषानध्वर्युरुत्करे निरस्येत्। अस्य प्रतिपत्तित्वात्तदभावे निरसनस्याप्यभावः। इदं च तुषनिरसनं वायुर्व इति वक्ष्यमाणे विवेकीकरणे कृते ज्ञेयम्। विवेकीकरणं च तण्डुलानां कणानां च पृथक्करणम्। तुषेषु पृथग्भूतेषु तन्निरसनं युक्तं, सामर्थ्यात्। अतश्च पाठक्रमार्थक्रमयोर्विरोधे अर्थक्रमस्य बलीयस्त्वात् पूर्वं विवेकीकरणं, ततस्तुषनिरसनमिति क्रमोऽवसेयः ॥ १९ ॥

"वायुर्व"[5] इति विविनक्ति ॥ २० ॥

तण्डुलान् कणांश्च वितुषीकरणाय पृथक्करोति अग्नीत्। तिर्यक्शूर्पेण विवेचनम्। नानाबीजेष्ट्यां हविरावपन-मुसलयोजन-अवघातश्च कृष्णाजिनादानादितुषविमोकान्तः। शेषं तन्त्रेण ॥ २० ॥ हविरुद्वपन-निष्पवन-विवेकीकरणानि भेदेन मन्त्रवन्ति कार्याणि।

[ पात्र्यां हविष्यान् कृत्वा मन्त्रं पठन्ननामिकया स्पृशेत् ]

"देवो व"[6] इति पात्र्यामोप्याभिमन्त्रयते ॥ २१ ॥

तण्डुलान् तूष्णीमिडापात्र्यां शूर्पेण प्रक्षिप्य देवो व इति अनामिकाग्रेण स्पृशन्नभिमन्त्रयेताध्वर्युः। नानाबीजेष्ट्यां तन्त्रेणाऽभिमन्त्रणम्। आभिमुख्येन मन्त्रपाठोऽभिमन्त्रणम् ॥२१॥

---

१ ॐ वर्षवृद्धमसि ।१।१६।

२ ॐ प्रति त्वा वर्षवृद्धं वेत्तु ।१।१६।

३ ॐ परापूतꣳ रक्षः परापूता अरातयः ।१।१६।

४ ॐ अपहतꣳ रक्षः १।१७।

५ ॐ वायुर्वो विविनक्तु ।१।१६।

६ ॐ देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना ।१।१६।

[ त्रिः फलीकरणम् ]

**त्रिःफलीकरोति, "देवेभ्यः शुन्धध्वं देवेभ्यः शुन्धध्व"मित्येके ॥२२॥**

उलूखले हविष्करणं, कण्डनं, मुद्धापो, निष्पवनं, विवेचनं, कणनिष्काशनमिति फलीकरणम्। तच्च वारत्रयं कार्यम्। अर्थात् यदवहननादि एकवारं मन्त्रैरनुष्ठितं तदेव वारद्वयं पुनस्तूष्णीमावर्त्तनीयम्। तद्यथा—तूष्णीं त्रिः कण्डनम् शूर्पादानं, हविरुद्वपनं, निष्पवनम्, विवेकीकरणं, कणनिधानम् इति।

एके आचार्याः "देवेभ्यः शुन्धध्वम्" इत्यावृत्तेन मन्त्रेण कण्डनमिच्छन्ति। अन्यत् शूर्पादानादिकं तु सर्वं तूष्णीमिच्छन्ति। तत्र कण्डनत्रये देवेभ्यः शुन्धध्वमिति मन्त्रस्यावृत्तिः कार्या, न तु "एकद्रव्ये कर्मावृत्ता"विति ( का० श्रौ० १।७।८ ) न्यायोऽत्र प्रवर्त्तते। एतन्न्याय-बाधनार्थमेव देवेभ्य इति वीप्साकरणम्। पितृयज्ञे पितृभ्यः शुन्धध्वमिति विपरिणामः ॥२२॥

[ फलीकृत्य फलीकृत्य कणनिधानम् ]

**फलीकृत्य कणान्निदधाति ॥ २३ ॥**

फलीकृत्य फलीकृत्य प्रतिफलीकरणं कुत्रचित्पात्रे कणनिधानं कार्यम् ॥ २३ ॥

[ अध्वर्य्वग्नीधोर्युगपत्पेषणोपधानानुष्ठानम् ]

**पेषणोपधाने युपगत् ॥२४॥**

तण्डुलानां पेषणं कपालानामुपधानं च एकस्मिन्नेव काले सहैवानुष्ठेयम्। तत्रान्त-रङ्गत्वात्पेषणमध्वर्युः,[1] बहिरङ्गत्वाच्चोपधानमग्नीत्कुर्यात् ॥ २४ ॥

[ उपवेषाख्यं काष्ठमादाय तेन गार्हपत्याङ्गारान् प्राच्यां प्रेरयेत् ]

कपालोपधानमुपदिशति—

**"धृष्टिरसी"त्युपवेषमादाया"ऽपाग्न" इत्यङ्गारान्प्राचः करोति ॥ २५ ॥**

अङ्गारापोहनसमर्थं हस्ताकृतिकाष्ठमुपवेषः। तच्च धृष्टिरिति[2] मन्त्रेणाऽग्नीदाय तेन गार्हपत्यखरस्थान् अपरभागीयानङ्गारान् खरस्य पूर्वभागे अपाग्न[3] इति प्रेरयेत्। खर-स्यापरार्द्धे कपालोपधानविधानात् अपरार्द्धरिक्तीकरणायैतदङ्गारापोहनम्। तेन चर्विष्टयां धानाभर्जने च नाङ्गारापोहनं, किन्तु अपरार्द्धे अङ्गारेष्वेव चर्वादीनामधिश्रयणम् ॥ २५ ॥

आदावष्टाकपालोपधानक्रममाह—

[ गार्हपत्यस्य दक्षिणभागेऽङ्गारं निधाय कपालेनाऽवच्छादयेत् ]

**"आदेवयज"मित्यङ्गारमाहृत्य कपालेनावच्छादयति "ध्रुवमसीति" ॥२६॥**

आदेवयजमिति[4] मन्त्रेण पूर्वस्यां दिशि अपोढानामङ्गाराणां मध्ये एकमङ्गारमुपवेषेण

---

१ अध्वर्योः पेषणकार्ये व्यापृतत्वात्। ततश्च यत्र विरोधो नास्ति यथा वरुणप्रघासेषु अध्वर्यो र्मेषकरणे, प्रतिप्रस्थातुश्च करम्भपात्र–मेषीकरणे, ( का० श्रौ० ५।३।२।६ ) तत्रोभयोर्यथास्वं स्वयमेव कर्परोपधानं, नाग्नीधः।

२ ॐ धृष्टिरसि ।१।१७

३ ॐ अपाग्ने अग्निमामादं जहि निष्क्रव्यादर्ठं० सेध ।१।१७।

४ ॐ आ देवयजं वह १।१७।

पुरोडाशश्रपणस्थाने आनीय स्थापयित्वा ध्रुवमसीति[1] मन्त्रेण तस्याङ्गारस्योपरि एकं कपालं[2] स्थापयेदग्नीत्। धानाभर्जने,[3] चरुस्थाल्यां च नैतद्भवति। पितृयज्ञे च आपितृयजं वहेत्यादि विपरिणामः पूर्ववद्बोध्यः ॥२६॥

## अमुष्येति द्विषच्छब्दे ऽभिचरन् ॥२७॥

वैरिमरणानुकूलो व्यापारो ऽभिचारः। तं फलत्वेनाऽभिलषन् ध्रुवमसीति मन्त्रमध्ये वैरिवाचकस्य भ्रातृव्यशब्दस्य स्थाने षष्ठ्यन्तस्य शत्रुनाम्न उच्चारणं कार्यम्। अभिचाराभावे तु भ्रातृव्यस्य वधायेति यथोक्तमेव प्रयोगः ॥२७॥

## अन्यत्रापि ॥२८॥

न केवलमत्रैव द्विषच्छब्दे शत्रुनामोच्चारणम्। किन्तु अन्यत्रापि "द्विषतो वधोऽसि" (१।२८) इत्यादौ यत्र यत्र द्विषच्छब्दः श्रूयते तत्र सर्वत्रापि द्विषच्छब्दमपनीय शत्रुनाम गृह्णीयादभिचरन् ॥२८॥

[ वामाङ्गुलिस्पृष्टे कपाले ऽङ्गारनिधानम् ]

## सव्याङ्गुल्या ऽशून्ये ऽङ्गारं निदधा"त्यग्ने[4] ब्रह्मे"ति ॥२९॥

वामहस्तस्यानामिकाङ्गुल्या स्पृष्टे कपाले अङ्गारं निदध्यादग्नीत्। अङ्गारनिधानं च कपालसंस्कारकम्। अतः प्रतिकपालं तदावर्त्तनीयम्। मन्त्रोऽपि तदङ्गत्वादावर्त्तनीयः। धानाभर्जने (का० श्रौ० ५।८।१६) धानानामुपरि अङ्गारनिधानम्, अदृष्टार्थत्वात्। कपालस्थानापन्नत्वाभावात् न चरौ कपालधर्माणां प्रवृत्तिः ॥ २९ ॥

[ मध्यमकपालात्पश्चाद् द्वितीयकपालोपधानं, तत्राङ्गारनिधानं च ]

## "धरुणमि"ति पश्चात् ॥ ३० ॥

धरुणमिति[5] मन्त्रेण मध्यमस्य कपालस्य पश्चात् द्वितीयं कपालं प्रथमोपहितेन कपालेन संश्लिष्टमुपदध्यात् ॥ ३० ॥

[ मध्यकपालात्पूर्वस्यां, दक्षिणस्यां च क्रमेण तृतीय—चतुर्थयोः कपालयोरुपधानम् ]

## पुरस्ता"द्धर्त्रमि"ति ॥ ३१ ॥

अग्नीन्मध्यमस्य कपालस्य पुरस्ताद्[6] धर्त्रमिति तृतीयं कपालं संश्लिष्टमुपदध्यात ॥३१॥

## "विश्वाभ्य"[7] इति दक्षिणतः ॥ ३२ ॥

प्रथमकपालस्य दक्षिणभागे संश्लिष्टं चतुर्थं कपालमुपदध्यात् ॥ ३२ ॥

---

१ ॐ ध्रुवमसि पृथिवीं दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युप दधामि भ्रातृव्यस्य वधाय ।१।१७।

२ "तं मध्यमेन कपालेनाभ्युपदधाति" ( श० ब्रा० १।१।५।६ ) इति वचनात् मध्यमस्य कपालस्यायं धर्मो न कपालमात्रस्येति ।

३ अभ्यूहनस्य कपालसन्तापनार्थत्वात् धानाभर्जनस्य (का० श्रौ० ५।८।१६) ( कर्परस्य ) नाङ्गारैरभ्यूहनम्। प्रसिद्ध्यभावात्। अधस्ताद्धि तस्य तापनं प्रसिद्धम्।

४ ॐ अग्ने ब्रह्म गृभ्णीष्व ।१।१८।

५ ॐ धरुणमस्यन्तरिक्षं दृꣳह ब्रह्म० य ।१।१८।

६ ॐ धर्त्रमसि दिवं दृꣳह ब्रह्मव० य ।१।१८।

७ ॐ विश्वाभ्यस्त्वाशाभ्य उपदधामि ।१।१८।

[ मध्यकपालस्य दक्षिणत उत्तरतश्च प्रदक्षिणक्रमेणोपदध्यात् ]

**समं विभज्य द्वे दक्षिणत, एवमुत्तरत "श्चितस्थे" ति ॥३३॥**

अष्टसु कपालेषु चतुर्णामुपहितत्वात् अवशिष्टानि चत्वारि समं विभज्य द्वे दक्षिणतो, द्वे उत्तरतश्चितस्थेति[1] मन्त्रावृत्या प्रादक्षिण्येनोपदध्यात्। तत्र एकं चतुर्थात्पूर्वम्, अपरं चतुर्थादपरम्। तत उत्तरतः पश्चादेकं, ततः पूर्वं द्वितीयमिति ॥३३॥

**तूष्णीं वा ॥३४॥**

अथवा चतुर्भ्यो ऽधिकानि सर्वाणि कपालानि तूष्णीमेवोपधेयानि, न चितस्थेति मन्त्रेण ॥ ३४ ॥

[ अग्नीषोमीये एकादशानां कपालानामुपधानमेवमेव ]

अथैकादशकपालोपधानक्रममाह—

**एवमेकादशाग्नीषोमीयस्य ॥ ३५ ॥**

अग्नीषोमीयस्य पुरोडाशस्य एकादश कपालानि उक्तेनैव प्रकारेणोपधेयानि ॥३५॥

इयांस्तु विशेषः—

**अधिकं दक्षिणतः ॥ ३६ ॥**

अष्टाकपालोपधानवत् चतुर्णां कपालानामुपधानानन्तरमवशिष्टानां सप्तकपालानां समशो विभागे क्रियमाणो यदधिकं सप्तमं विभक्तुं न शक्यते तस्य दक्षिणत उपधानं कर्त्तव्यम्। तेन चतुर्णामुपधानानन्तरं चत्वारि दक्षिणे, त्रीण्युत्तरत उपधेयानि। एवमेकादश कपालान्युपधेयानीति भावः ॥३६॥

[ उपहितानां कपालानामङ्गारैस्तापनम् ]

**"भृगूणामि"[2] त्यङ्गारैरभ्यूहति ॥३७॥**

अङ्गारैः कपालान्याच्छादयेदग्नीत्। एककपाले तप्यस्व, द्विकपाले तप्येथामित्यूहः ॥३७॥

इति कातीयश्रौतसूत्रवृत्तौ द्वितीयाध्याये चतुर्थी कण्डिका ॥४॥

---

[ पिष्टसंयवनार्थानामपां गार्हपत्ये ऽधिश्रयणम् ]

**उपसर्जनीरधिश्रयति ॥१॥**

उपसर्जनीः पिष्टसंयवनार्था अपो ऽग्नीद्गार्हपत्येऽधिश्रयेत्। अत्र उपधानानन्तरं पेषणमविधाय उपसर्जन्यधिश्रयणं विदधत्सूत्रकारो ज्ञापयति उपसर्जन्यधिश्रयणस्य पेषणसमकालतैव यथा स्यादिति। तेन तदानीं पेषणेऽध्वर्योर्व्यापृतत्वादुपसर्जन्यधिश्रायणस्य आग्नीध्रकर्त्तृकत्वं प्राप्नोति। यत्र तु चर्विष्ट्यादौ पेषणं नास्ति तत्राध्वर्योर्व्यापारान्तराभावादुपसर्जन्यधिश्रयणमध्वर्युरेव कुर्यादिति ॥१॥

---

१ ॐ चित स्थोर्ध्वचितः ।१।१८।

२ ॐ भृगूणामङ्गिरसां तपसा तप्यध्वम् ।१।१८।

[ पेषणार्थमपि कृष्णाजिनादि कार्यम् ]

पेषणप्रकारमाह—

**कृष्णाजिनमादत्ते, पूर्ववत्प्रतिकृष्णाजिनम् ॥२॥**

अध्वर्युः फलीकरणानन्तरमेव कृष्णाजिनमादत्ते। कृष्णाजिनं प्रति पूर्ववत् अवहनन इव आदानं, अवधूननं, आस्तरणं, सव्याशूल्यकरणं चेत्येतेषां विधिर्भवति। तच्चैतत्पेषणार्थत्वात्पेषणे न भवति ॥२॥

[ कृष्णाजिने शिलानिधानम् ]

**तस्मिन्दृषदं "धिषणाऽसी"ति[1] ॥३॥**

सव्याशूल्ये तस्मिन् कृष्णाजिने दृषदं स्थापयेदध्वर्युः ॥३॥

[ शिलायाः पश्चादधस्तादुदगग्रां शम्यां प्रेरयेत् ]

**पश्चाच्छम्यामुपोहत्युदीचीं "दिव" इति ॥४॥**

दिव[2] इति मन्त्रेण दृषदः पश्चाद्भागे उदगग्रां शम्यां द्वादशाङ्गुलां दृषदोऽधस्तात्प्रवेशयेदध्वर्युः। तेन पश्चाद्भागे उच्चा, अग्रतो निम्ना दृषद्भवति ॥४॥

[ शिलायां शिलापुत्रकस्य निधानम् ]

**दृषद्युपलां "धिषणाऽसी"ति[3] ॥५॥**

पेषणार्थं दृषद उपरि उपलां स्थापयेत् ॥५॥

[ शिलायां तण्डुलावापपूर्वकं तेषां पेषणम् ]

**[4]"धान्यमसी"ति[5] तण्डुलानोप्य पिनष्टि "प्राणायत्वे"ति[6] प्रतिमन्त्रम् ॥६॥**

---

१ ॐ धिषणाऽसि पर्वती प्रति त्वाऽदित्यास्त्वग्वेत्तु ।१।१९।

२ ॐ दिव स्कम्भनीरसि ।१।१९।

३ ॐ धिषणाऽसि पार्वतेयी प्रति त्वा पर्वती वेत्तु ।१।१९।

४ अत्र धान्यशब्दो लक्षणया तण्डुलवाचकः। (तण्डुलशब्देन ओदनो यवाश्च गृह्यन्ते) अतो यवपेषणेऽपि मन्त्रोऽयं प्रवर्त्तते। एवम् अस्ति कश्चन सत्रविशेषः षट्त्रिंशत्संवत्सरसाध्यः शाक्त्यानामयनसंज्ञकः। तत्र प्रतिदिनं गृहपतिसंज्ञको यजमानो मृगयार्थं गच्छति। तत्र तेन ये हता मृगाः, तेषां मांसमानीय तेन सवनीयाः पुरोडाशाः सम्पादनीया इत्युक्तमापस्तंबसूत्रे—"सꣳस्थिते ऽहनि गृहपतिर्मृगयां याति तत्र यान् मृगान् हन्ति तेषां तरसमयाः सवनीयाः पुरोडाशा भवन्ति" (आप० श्रौ० २३।११।१३) (का० श्रौ० २४।६।१९) इति। तत्र पुरोडाशप्रकृतिभूतानां मांसानां तण्डुलस्थानापन्नत्वात् पेषणमपि प्राप्नोति। तदङ्गत्वाच्च धान्यमसीति मन्त्रस्यापि प्राप्तौ सत्याम् धान्यपदं परित्यज्य तत्स्थाने तरसपदं प्रक्षेपणीयम्। प्रकृतौ यद्यपि धान्यशब्दः सतुषद्रव्यपरो लक्षणया तण्डुले प्रयुक्तस्तथापि विकृतौ न लाक्षणिकस्य मृगशब्दस्य प्रयोगः समुचितः। 'स्वाधीने शब्दप्रयोगे किमिति लाक्षणिकं प्रयुञ्ज्महे' (शब० भा० टुप्टी० ९।१।३) इति न्यायात्। अतो धान्यपदस्थाने तरसशब्दः प्रयोक्तव्यः।

वस्तुतस्तु पिष्टपिण्डरूपस्य पुरोडाशस्य मांसेन कर्त्तुमशक्यत्वात् तदर्थस्य पेषणस्य तत्र प्राप्तिरेव नास्तीति दूरे तदङ्गभूतमन्त्रप्रवृत्तिः। तथापि कृत्वा चिन्तेयम्। न्यायव्युत्पादनार्थमिदमित्युक्तं पूर्वमीमांसायां तृतीयाध्याये ऽष्टमपादे द्वात्रिंशे ऽधिकरणे। केचित्तु केवलेन मांसेन पुरोडाशकरणासंभवेऽपि तण्डुलमिश्रितेन पुरोडाशः सम्पादयितुं शक्यते। अतश्च तण्डुलमिश्रितस्य मांसस्य पुरोडाशार्थं पेषणं भवत्येव। तदर्थं च मन्त्रस्य प्राप्तिस्तत्र भवतीति तत्र पदान्तरप्रक्षेपरूप ऊहो ऽस्त्येवेति वदन्ति।

५ ॐ धान्यमसि धिनुहि देवान् ।१।२०।

६ ॐ प्राणाय त्वा पिनष्मि ।१।२०। ॐ उदानाय त्वा पिनष्मि ।१।२०।१७ ॐ व्यानाय त्वा पिनष्मि ।१।२०।

दृषद उपरि तण्डुलान्प्रक्षिप्य पिंष्यादध्वर्युः। देवम्, देवौ इति यथायथमूहो विहृतौ। पितृयज्ञे च पितॄनित्यूहः। पेषणमन्त्रेषु पिनष्मीत्यध्याहर्त्तव्यं, साकाङ्क्षत्वात् ॥६॥

[ शिलायां पिष्टानि प्रक्षिप्य कृष्णाजिने प्रक्षिप्य ईक्षेत ]

"दीर्घा"मिति[1] कृष्णाजिने प्रोहति ॥७॥

पिष्टानि हवींषि उपलया कृष्णाजिनोपरि पातयेदध्वर्युः। नानाबीजेषु कृष्णाजिनादानादि प्रोहणान्तमेकत्र कृत्वा ततोऽपरत्र कर्त्तव्यम् ॥७॥

"चक्षुषे त्वे"तीक्षते ॥८॥

ईक्षे इत्यध्याहृतेन चक्षुषे त्वा[2] इति मन्त्रेण पिष्टानि पश्येदध्वर्युः। चर्विष्ट्यां तण्डुलानामपीक्षणम् ॥८॥

[ पिष्यमाणेषु तण्डुलेषु ब्रह्माऽऽज्यस्थाल्यामाज्यं निर्वपेत् ]

पिष्यमाणेषु निर्वपत्यन्यो "महीना[3]"मित्याज्यम् ॥९॥

तण्डुलेषु पिष्यमाणेषु अन्यो ब्रह्मा गृहीतवेदः पात्रान्तरादाज्यस्थाल्यामाज्यं क्षिपेत्। अत्र अन्यशब्देन 'परिक्रीतत्वादृत्विग्वन्यतमोऽभिधेयः। तत्र अध्वर्य्वग्नीधोः पेषणादौ व्यापृतत्वात् ब्रह्मैवान्यशब्देनाभिधीयते ॥९॥

[ सपवित्रायां पात्र्यां संयवनार्थं पिष्टावापः ]

पात्र्याᳫं सपवित्रायां पिष्टान्यावपति "देवस्य[4] त्वे"ति ॥१०॥

अध्वर्युः प्रोक्षणीतः पवित्रे आदाय इडापात्र्यामुदगग्रे निधाय तदुपरि कृष्णाजिनस्थानि पिष्टानि कृष्णाजिनेनैव पातयेत्।

पात्र्यामावपनं संयवनार्थम्। अतश्चर्विष्ट्यां संयवनाभावात् तण्डुलानां न पात्र्यामावपनम्। सपवित्रता तु चरावपि प्रवर्त्तते, अदृष्टार्थत्वात् ॥१०॥

[ अध्वर्युर्गार्हपत्यस्य पश्चादुपविशेत् ]

अपरस्य पश्चादुपविशत्यन्तर्वेदि वा ॥ ११॥

सपवित्रां पात्रीमादाय गार्हपत्यस्य पश्चादुपविशति। अथवा वेदेः पश्चात्संलग्नः सपवित्रां पात्रीं वेदिमध्ये आसाद्योपविशेदध्वर्युः ॥ ११ ॥

( आग्नीध्रस्तप्ता अपः संयवनार्थमानयेत् )

उपसर्जनीरानयत्यन्यः ॥१२॥

आग्नीध्रस्तप्ता उपसर्जनीरुद्धास्य पात्रीस्थपिष्टानामुपरि निनयेत्।

आनयतिरत्र निनयनार्थकः। तप्ते पयसि दध्यानयतीतिवत् ॥ १२ ॥

[ अध्वर्युरानीता अपो मन्त्रेण गृहीत्वा पिष्टेषु मिश्रयेत् ]

पवित्राभ्यां प्रतिगृह्णाति "समाप" इति ॥ १३ ॥

---

१ ॐ दीर्घामनु प्रसितिमायुषे धां देवो वः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना ।१।२०।

२ ॐ चक्षुषे त्वा ईक्षे ।१।२०।

३ ॐ महीनां पयोऽसि ।१।२०।

४ ॐ देवस्य त्वा स० भ्याम्। संवपामि ।१।२०।

अग्नीधाऽऽनीयमानास्ता उपसर्जनीः समाप[1] इति मन्त्रान्ते ऽध्वर्युः पवित्राभ्यां प्रतिगृह्णीयात् । उपसर्जन्यानयनं चरावपि भवति । उदककार्यस्य विद्यमानत्वात् । समाप इति मन्त्रो गृहमेधीयादौ (का० श्रौ० ५ ६।६-२५) सम्पय इति विपरिणम्यते । एवं दधनि घृते च विपरिणामो बोध्यः ॥१३॥

**संयौति "जनयत्यै त्वे"ति[2] ॥ १४ ॥**

पिष्टान्यद्भिः सम्यक् श्रुतावदानेन मिश्रयति ॥ १४ ॥

[ पिण्डद्वयं समं सम्पाद्य 'इदमग्नेः' 'इदमग्नीपोमयोः इत्यालभते ]

**समं विभज्यासꣳहरिष्यन्नालभत' 'इदमग्ने'' 'रिदमग्नीषोमयो''रिति ॥१५॥**

संयुतानि पिष्टानि द्वौ पिण्डौ कृत्वा तयोः पुनर्मिश्रणमकरिष्यन् क्रमेणैतौ पिण्डौ मन्त्रद्वयेनालभेत । आलम्भस्तु देवतानिर्देशरूपदृष्टप्रयोजनार्थः । तेन यत्र देवतानेकत्वं तत्रैव तत्तद्देवतानिर्देशार्थं विभागस्य आलम्भनस्य चावश्यकत्वम् । अतश्च यत्र एकैव देवता न तत्र विभागो, नापि देवतानिर्देशः । असंहरिष्यन्निति वचनाद्विभागानन्तरं यदा पुनर्मिश्रीकरणस्य प्रसङ्गो नापतेत्, तदानीमेवालम्भः कार्यो, न ततः पूर्वम् । एवं च चरौ नावघातानन्तरमेव विभागः कार्यः । तदा पुनः फलीकरणार्थं मिश्रणस्य कर्त्तव्यत्वापातात् । अतश्च पुरोडाशैः सह चरूणां विभागे अवघातादिफलीकरणान्तं कृत्वा अनन्तरमेव चरूणां निर्देशः । चरूणां परस्परं विभागे तु ईक्षणान्ते निर्देशः । पौष्णस्यावेक्षणान्ते, पुरोडाशानां संयवनान्ते निर्देशः ॥ १५ ॥

**यथादेवतमन्यत् ॥१६॥**

अन्यदैन्द्राग्नादिकं हविर्यथादेवतं नामोच्चारणेनाऽऽलभेत ॥ १६ ॥

[ ब्रह्माऽऽज्यमधिश्रयेत् ]

**"इषे[3] त्वे"त्याज्यमधिश्रयत्यन्यः ॥ १७ ॥**

अत्राधिश्रयामीत्यध्याहारः, साकाङ्क्षत्वात् । अन्यो ब्रह्मा । अध्वर्योः पुरोडाशाधिश्रयणे व्यापृतत्वात् । तेनाव्यापृतेऽध्वर्यौ अध्वर्युरेवाज्याधिश्रयणं विकृतौ ॥ १७ ॥

[ पत्न्यां रजस्वलायामाहवनीयश्रपिण आहवनीये आज्याधिश्रयणम् ]

**अपत्नीकस्याऽऽहवनीये तच्छ्रापिणः ॥ १८ ॥**

रजोदोष–प्रसवादिना असन्निहितपत्नीकस्य आहवनीये हविःश्रपणं कुर्वतो यजमानस्याहवनीये आज्याधिश्रयणं कार्यम् आहवनीयश्रपिणोऽपि सन्निहितायां पत्न्यां गार्हपत्ये एवाज्याधिश्रयणम् । अपत्नीकः ऽविद्यमानपत्नीक इति इति तु नार्थः । तस्याधिकाराभावादिति कर्कः ॥ १८ ॥

[ अध्वर्य्वग्नीधौ युगपद् आग्नेयाग्नीषोमीयौ पुरोडाशावधिश्रयेताम् ]

**"घर्मोऽसी"ति[4] पुरोडाशौ युगपत् ॥१९॥**

---

१ ॐ समापऽ ओषधीभिः समोषधयो रसेन । सꣳ रेवतीर्जगतीभिः पृच्यन्ताꣳ सम्मधुमतीर्मधुमतीभिः पृच्यन्ताम् ।१।२१।

२ ॐ जनयत्यै त्वा संयौमि ।१।२२।

३ ॐ इषे त्वाऽधिश्रयामि ।१।२२।

४ ॐ घर्मोऽसि विश्वायुः ।१।२२।

तत्राध्वर्युराग्नेयमधिश्रयति । अग्नीषोमीयमग्नीत् । बहुहविष्कायामिष्टौ अन्यैरप्यधिश्रयणं कार्यम् ॥१९॥

[ आग्नेयाग्नीषोमीयपुरोडाशयोरध्वर्य्वग्नीद्भ्यां प्रथनम् ]

"उरु-प्रथा"[1] इति प्रथयति यावत्कपालमनतिपृथुम् ॥२०॥

अधिश्रितं पुरोडाशं यावत्परिमाणानि कपालानि तावत् पृथुं कुर्यात्, नातिविपुलम् । यावत्कपालमित्यनेनैवानतिपृथुत्वे सिद्धे पुनरनतिपृथुग्रहणं कपालानां श्रुत्युक्तं परिमाणं ज्ञापयितुम् । श्रुतौ हि "तन्न सत्रा पृथुं कुर्यादश्वशफमात्रं कुर्यादित्यु हैक आहुः" (श० १।२।२।९-१०) इत्युक्तम् । चरौ न प्रथनम् । यः पुरोडाशो येनाधिश्रितः तेनैव तस्य प्रथनं, वक्ष्यमाणमभिमर्शनं च कर्त्तव्यम् ॥२०॥

[ तयोरेवाद्भिरभिमर्शनम् ]

"अग्निष्ट"[2] इत्यद्भिरभिमृशति सकृत्, त्रिर्वा ॥२१॥

पुरोडाशं सोदकेन हस्तेन सर्वतः स्पृशेत् । चरौ नाभिमर्शनम् । अभिमर्शनानन्तरमनुक्तमपि पात्र्यङ्गुलिप्रक्षालनं, पिष्टलेपापनयनं च "पात्र्यङ्गुलिप्रक्षालनमास्येभ्यो निनयति" (२।५।२६) "पिष्टलेपाञ्जुहोति" (३।८।१) इति सूत्राभ्यामग्रे प्रतिपत्तिविधानात्कर्त्तव्यम्, उत्पत्तिमन्तरा प्रतिपत्त्यसंभवात् ॥२१॥

[ पुरोडाशमाज्यं च परितो ज्वलदङ्गारभ्रामणम् ]

पर्यग्निकरो"त्यन्तरितꣳ रक्षोऽन्तरिता अरातय" इति सहाज्यम् ॥२२॥

आज्यसहितौ पुरोडाशौ उल्मुकेन पर्यग्निकुर्यात् । पुरोडाशसंयोगेन पर्यग्निकरणस्य विहितत्वात् पुरोडाशाज्यानि परित उल्मुकं भ्रामयेत् । सान्नाय्ये पर्यग्निकरणाभावः ॥२२॥

[ पुरोडाशोपरि अग्निं दद्यात् ]

देवस्त्वेति[3] श्रपणम् ॥२३॥

पुरोडाशस्य धानानां चोपरि अङ्गारान्निदध्यात् । चरुपात्रस्य तु अधस्तादङ्गारनिधानम् ॥२३॥

[ श्रुताश्रुतज्ञानार्थमालभते पुरोडाशौ ]

"मा भे"रित्यालभते[4] ॥२४॥

मा भेरिति मन्त्रावृत्त्या पुरोडाशावालभेत । अभिमर्शनस्य श्रुताश्रुतज्ञानार्थत्वाच्चरावपि प्रवृत्तिः, न धानासु । तत्र दर्शनात्पाकज्ञानसंभवात् ॥२४॥

[ श्रुतौ पुरोडाशौ भस्मना ऽऽच्छादयेत् ]

"अतमेरु"रिति[5] श्रुतावभिवासयति भस्मना वेदेनोपवेषेण वा ॥२५॥

श्रुतौ पुरोडाशौ अतमेरुरिति मन्त्रावृत्त्या वेदेन उपवेषेण वा भस्म गृहीत्वा तेन भस्मना ऽऽच्छादयेत् । चरौ न भस्मनाऽभिवासनं, विरोधात् ॥२५॥

---

१ ॐ उरु-प्रथा उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम् ।१।२२।

२ ॐ अग्निष्टे त्वचं मा हिꣳसीत् ।१।२२।

३ ॐ देवस्त्वा सविता श्रपयतु वर्षिष्ठेऽधि नाके ।१।२२।

४ ॐ मा भेर्मा संविक्थाः १।२३ ।

५ ॐ अतमेरुर्यज्ञोऽतमेरुर्यजमानस्य प्रजा भूयात् १।२३।

[ पात्र्यङ्गुलिप्रक्षालनजलमाप्त्येभ्यो निनयेत् ]

**पात्र्यङ्गुलिप्रक्षालनमाप्त्येभ्यो निनयत्यभितप्य प्रत्यगस१ँस्यन्दमानं "त्रिताय त्वे"ति प्रतिमन्त्रम् ॥ २६ ॥**

पिष्टलिप्तपात्रीप्रक्षालनजलं पिष्टलिप्ताङ्गुलिप्रक्षालनजलं च पात्रीस्थमेव गार्हपत्यादाहृतेनोल्मुकेन तापयित्वा पूर्वत आरभ्य प्रत्यक्संस्थमुत्करसमीपे भूमौ परस्परमसंलग्नमाप्त्येभ्यस्तिसृभ्यो देवताभ्यो निनयेदध्वर्युस्त्रिताय त्वेति[1] प्रतिमन्त्रम् । आप्त्यानां देवतात्वात्तदुद्देशेन त्यागश्च कार्यः । अत्र त्रिष्वपि मन्त्रेषु निनयामीत्यध्याहारः ॥ २६ ॥

[ अन्वाहार्यमोदनं दक्षिणाग्नावधिश्रयेत् ]

**अन्वाहार्यं दक्षिणाग्नावधिश्रयति ॥ २७ ॥**

अन्वाहार्य इति दर्शपूर्णमासयोर्दक्षिणार्थस्यौदनस्य संज्ञा । अन्वाहार्यसंज्ञकं दक्षिणार्थमोदनं चतुर्णामृत्विजां तृप्तिक्षमं दक्षिणाग्नावधिश्रयेदध्वर्युः । अयं च प्रणीतेन लौकिकेन वोदकेन पच्यते । प्राशित्रप्रहरणपात्रप्रक्षालनं, अध्वर्युपाण्योरवनेजनं च प्रणीतेनोदकेनैव कर्त्तव्यं, तस्य सर्वार्थत्वात् ॥ २७ ॥

**अत्र वा व्रतोपायनम् ॥ २८ ॥**

इति कात्यायनश्रौतसूत्रवृत्तौ द्वितीयाध्याये पञ्चमी कण्डिका ॥ ५ ॥

---

[ वेदिखननप्रकारः ]

**अपरेणाऽऽहवनीयं वेदिं खनति[2] त्र्यङ्गुलखातां, व्याममात्रीं पश्चात्, त्र्यरत्निं प्राचीमपरिमितां वा, प्राक्प्रवणामुदग्वा, मध्यसङ्गृहीता, मग्निमभितोऽंसौ ॥ १ ॥**

अरत्निमात्रं चतुरस्रमाहवनीयखरं द्वादशाङ्गुलोच्च—चतुरङ्गुलविस्तीर्णमेखलं पूर्वस्यां निर्माय तत्पश्चिमतः त्र्यङ्गुलखातां, अरत्नित्रयप्रमाणेन पूर्वापरायतां, पश्चिमभागे चतुर्भिररत्निभिर्दक्षिणोत्तरायतां, पूर्वभागे अरत्नित्रयप्रमाणेन दक्षिणोत्तरायतां, (त्रयः पुरस्तात् (५।३।१२) इत्यग्रे वक्ष्यमाणत्वात् ) विषमचतुरस्राम्, अथवा उक्तप्रमाणव्यतिरेकेण यजमानकल्पितप्रमाणाम्[3], पूर्वभागे उत्तरभागे वा किञ्चिन्निम्नां, "अखातौ सङ्ग्रहौ मतौ" इति परिशिष्टवचनात्

1 ॐ त्रिताय त्वा निनयामि १।२३। ॐ द्विताय त्वा निनयामि १।२३। ॐ एकताय त्वा निनयामि १।२३

2 खनतिरत्र करोत्यर्थः । अग्रे ( का० श्रौ० २।६।२२ ) खननस्य पृथग्विधानात् ।

3 यद्यपि अन्यत्र अपरिमितशब्दः पूर्वोक्तप्रमाणापेक्षया अधिकप्रमाणे रूढः । तथापि अत्र नञ् समासेन विग्रहीतव्यः, न परिमिता अपरिमिता इति । कुतः । "नात्र मात्रास्ति यावतीमेव स्वयं मनसा मन्येत तावतीं कुर्यात्" ( श० १।२।३।१४ ) इति श्रुतेः । एवम् "अपरिमितेष्टको वा" इत्यत्रापि तथैव । "अपरिमितेष्टको वा" इत्युपक्रम्य "न वै मे सर्वाणि रूपाण्युपधत्ताति वैव रेचयथ न वा ऽभ्यापयथ" ( श० ब्रा० १०।४।३।६ ) इति अनवाप्तिरपरिमाणपक्षे एवोपपद्यते । अन्यथा व्यतिरेक एव स्यात् । एवं च श्रौते एतत्स्थलद्वये एव अपरितशब्दे नञ्समासः । अन्यत्र "द्वादश दीक्षा अपरिमिता वा" (का० श्रौ० ७।१।२४) इत्यादौ "अपरिमितं प्रमाणाद् भूयः" ( का० शु० प० १।२३ ) इति वचनबलात् उक्तप्रमाणादधिके ऽर्थे अपरिमितशब्दो रूढ इत्यवगन्तव्यम् ।

मध्ये अखातसङ्ग्रहवर्ती वेदिं कुर्यादध्वर्युः। अग्निमभितोऽंसौ च कुर्यात्। आग्नेयैशकोणावंसौ ( आप. श्रौ० २।३।१ )। अर्थात् आहवनीयखरस्य दक्षिणभागे उत्तरभागे च वेदिमभिव्याप्य यौ भूप्रदेशौ तावंसौ, तयोरपि वेदिशब्दवाच्यत्वात्तत्रापि त्र्यङ्गुलं खातं विधाय तावपि वेद्यां संयोज्याविति भावः।

सङ्ग्रहशब्देन यजतिस्थानं जुहोतिस्थानं चोच्यते। सङ्ग्रहौ च दक्षिणे उत्तरे च नैर्ऋत्य-वायव्यकोणयोः दशाङ्गुलमितां भूमिं परित्यज्य एकोनविंशत्यङ्गुलकर्कटकभ्रामणेनार्द्धवृत्तेन सम्पादनीयौ। तौ चाखातौ भवत इत्युक्तम्। उभयत्र दशाङ्गुलमिता अवशिष्टा भूमिः श्रोणिश-ब्दवाच्या ( आप. श्रौ० २।३।१ )भवति[1] ॥ १ ॥

खनने प्रकारान्तरमाह—




१ गार्हपत्यमध्यादाहवनीयस्य मध्यपर्यन्तं मध्ये ऽन्तरमष्टौ, एकादश, द्वादश वा पदानि। गार्हपत्यम-ध्यत्वेन कल्पितं स्थानं केन्द्रं परिकल्प्य सार्द्धत्रयोदशाङ्गुलमितरज्वा वृत्तं कार्यम्। इदं गार्हपत्याग्नेः स्थानम्। आहवनीयस्थानमायामतो विस्तारतश्च हस्तमितम्। गार्हपत्याहवनीयान्तरस्य द्वादशपदपरिमितत्वपक्षे तदन्त-रस्य षड्ढस्तात्मकत्वात् षड्ढस्तां रज्जुं तदीयषष्ठभागेन हस्तात्मकेन संयोज्य, अर्थात् सप्तहस्तां रज्जुं गृहीत्वा, तस्या अन्तयोः पाशौ कृत्वा, मध्ये च तृतीये तृतीये भागे चिन्हं कृत्वा एकं पाशं गार्हपत्यमध्यशङ्कौ आसज्य

**आमूलोच्छेदनादोषधीनाम् ॥२॥**

यस्मिन् देशे वेदिः परिमीयते तत्र रूढानामोषधीनां मूलं यावता खननेन उच्छिद्येत तावत् खातव्यम् । अयं पक्षः पूर्वोक्तेन त्र्यङ्गुलखातेन विकल्प्यते । त्र्यङ्गुलखात-मूलोच्छेदनयोः समुच्चयासंभवात् । अतश्च अनुक्तो ऽपि विकल्पः सामर्थ्यादाश्रयणीय एव । न च दर्शपूर्णमासयोर्वेद्यां मूलानामभावात् तदुच्छेदनस्य सुतरामसम्भव इति वाच्यम् । ओषधिमूलोत्पाटने यावत्परिमाणं खननमुचितं भवेत्, तावत्खननमित्यर्थस्यात्र विवक्षितत्वात् ॥ २ ॥

**ओषधीनां मूलान्युच्छेत्तवै ब्रूयात् ॥ ३ ॥**

ओषधिमूलोच्छेदनखातपक्षे 'ओषधीनां मूलान्युच्छेत्तवै' इति प्रैषमध्वर्युं प्रति आग्नीध्रो ब्रूयात् ॥ ३ ॥

[ पशुकामस्य पुरीषान्तरग्रहणम् ]

**आहार्यपुरीषां पशुकामस्य ॥ ४ ॥**

पशुकामस्य यजमानस्य वेदिमाहार्यपुरीषां कुर्यात् । अर्थात् वेदिपुरीषमपनीय अन्यत्पुरीषं तत्र प्रक्षिपेत् । पुरीषं खाता मृत् ॥ ४ ॥

[ अग्नीद्वेदिं परिसमुह्य वेदेः पूर्ववितृतीये उत्करं कुर्यात् ]

**वेदिं परिसमुह्य वितृतीये ऽग्नीदुत्तरत उत्करं करोति ॥ ५ ॥**

अग्नीद् वेदिं कुशैः परिसमुह्य आहवनीयादुत्तरतः पूर्ववितृतीये[2] देशे सङ्ग्रहे त्र्यङ्गुलवृत्तं षडङ्गुलविस्तारमेकाङ्गुलगर्त्तमुत्करं पांस्वादिप्रक्षेपस्थानं कुर्यात् ॥५॥

( वामहस्तस्थितं सतृणं स्फ्यं दक्षिणेनालभ्य इन्द्रस्येत्यादि अग्नीज्जपेत् )

**"देवस्य त्वे"ति स्फ्यमादाय सतृणꣳ सव्ये कृत्वा दक्षिणेनालभ्य जपती"न्द्रस्य बाहु"रिति ॥ ६ ॥**

---

द्वितीयपाशमाहवनीयमध्यशङ्कौ आसञ्जयेत् । रज्जुमध्यवर्त्तिनोर्द्वयोश्चिन्हयोः पश्चिमचिह्नस्थाने रज्जुं गृहीत्वा दक्षिणत आकर्षयेत्, यत्र तच्चिन्हं पतति तत्र तच्चिह्नं कृत्वा तस्मात्स्थानात् उत्तरतः सार्द्धनवाङ्गुलव्यवहिते देशे शङ्कुर्देयः । शङ्कुस्थानं केन्द्रत्वेन परिकल्प्य यवाधिकोनविंशत्यङ्गुलमितरज्ज्वा वृत्तं कार्यम् । वृत्तमध्ये केन्द्रसंलग्ना परिधिपूर्वभागमादाय परिधिपश्चिमं यावत् सरलरेखा कार्या । रेखात उत्तरभागस्य त्यागः कार्यः । वृत्तस्य दक्षिणार्धं दक्षिणाग्निस्थानम् । पूर्वोक्तयोश्चिन्हयोः पूर्वचिन्हस्थाने रज्जुं गृहीत्वा उत्तरत आकर्षणे यत्र चिह्नं पतति तदुत्करस्थानम् । आहवनीयमध्यशङ्कुसकाशात् पश्चिमतस्त्र्यरत्निव्यवहिते देशे शङ्कुर्देयः । आहवनीयप्राचीशङ्कुसकाशात् सार्द्धारत्निव्यवहिते देशे दक्षिणत उत्तरतश्च शङ्कुर्देयः । चतुर्षु कोणस्थशङ्कुषु सूत्रार्पणाद् विषमचतुरस्रं भवति । प्राचीशङ्कुमारभ्य पश्चिमशङ्कुपर्यन्तं कोणद्वयवेष्टनेन सूत्रं प्रदेयम् । तत्सूत्रार्धपरिमितेन सूत्रेण प्राचीशङ्कुमारभ्य दक्षिणकोणस्थशङ्कुवेष्टनेन दक्षिणतः, उत्तरकोणस्थशङ्कुवेष्टनेन उत्तरतश्च शङ्कुर्देयः । ताभ्यां शङ्कुभ्यां पूर्वोक्तसूत्रार्द्धचतुर्थांशेन वेदिमध्ये सङ्ग्रहौ कार्यौ । द्वादशाङ्गुलं पदम् । अष्टयवमङ्गुलम् । चतुर्विंशत्यङ्गुलो हस्तः । इति वेद्यादिसाधनप्रकारः ( का० शु० प० १।२६–३० ) ।

२ वितृतीये इत्यस्यायमर्थः । गार्हपत्याहवनीयान्तरस्य द्वादशपदपरिमितत्वपक्षे तदन्तरस्य षड्ढस्तात्मकत्वात् षड्ढस्तां रज्जुं तदीयषष्ठभागेन हस्तात्मकेन संयोज्य अर्थात् सप्तहस्तां रज्जुं गृहीत्वा तस्या अन्तयोः पाशौ कृत्वा मध्ये च तृतीये तृतीये भागे चिन्हं कृत्वा एकं पाशं गार्हपत्यमध्यशङ्कौ आसज्य द्वितीयपाशमाहवनीयमध्यशङ्कौ आसञ्जयेत् । रज्जुमध्यवर्तिनोर्द्वयोश्चिन्हयोः पूर्वस्थाने रज्जुं गृहीत्वा उत्तरत आकर्षणे यत्र चिन्हं भवति स वितृतीयो देशः, तदुत्करस्थानम् ( का० शु० प० १।३० ) इति ।

देवस्य[1] त्वेति मन्त्रेण सतृणं स्फ्यमादाय तं वामहस्ते निधाय वामहस्तस्थमेव सतृणं स्फ्यं दक्षिणेन स्पृष्ट्वा इन्द्रस्येति[2] जपेत्। पितृयज्ञे देवपितृभ्य इति विपरिणामः। एतत्स्फ्यादानं, जपश्च स्तंबयजुर्हरणार्थत्वात्तदभावे न भवति । प्रहरणादिपुरीषनिवपनान्तं वक्ष्यमाणं कर्म स्तंबयजुर्हरणशब्देनोच्यते ॥ ६ ॥

[ स्तंबयजुर्हरणात्प्राक् वज्रेण पृथिवीमात्मानं च न स्पृशेत् ]

नोपस्पृशेत्पृथिव्यात्मानौ तेन स्तंबयजुर्हरिष्यन् ॥ ७ ॥

स्तंबयजुर्हरणं करिष्यन्नध्वर्युस्तेन वज्रेण पृथिवीमात्मानं च नोपस्पृशेत् ॥ ७ ॥

[ वेद्यामुदगग्रं तृणं निदध्यात् ]

स्तंबयजुर्हरणप्रकारमाह—

वेद्यां तृणं निदधात्युदक् 'पृथिव्यै वर्मासी'ति ॥८॥

वेदिरिति भावि संज्ञामादाय । यस्मिन्देशे वेदिः निर्मापयिष्यते तस्मिन्देशे वेद्यामध्वर्युरुदगग्रं तृणं स्फ्येन सहगृहीतं निदध्यात् ॥ ८ ॥

[ निहिते तृणे प्रहरेद्वज्रेण ]

"पृथिवि देव-यजनी"ति[3] तृणे ऽन्तर्हिते प्रहरति ॥ ६ ॥

तृणेनान्तर्हितायां भूमौ वज्रेण ( आप० श्रौ० २।१।५ ) प्रहारं कुर्यात्। तृणे एव प्रहरणमिति सम्प्रदायः ॥ ६ ॥

[ वज्रोद्धृतपुरीषादानम् ]

"व्रजं गच्छे"ति[4] पुरीषमादत्ते ॥ १० ॥

वज्रेणोद्धृतां मृदं गृह्णीयात् ॥ १० ॥

[ वेदिं प्रेक्ष्य आत्तं पुरीषमुत्करे प्रक्षिपेत् ]

"वर्षतु त"[5] इति वेदिं प्रेक्षते ॥ ११ ॥

"बधाने"त्युत्करे[6] करोति ॥ १२ ॥

गृहीतां मृदमुत्करे क्षिपेत् ॥ १२ ॥

प्रहरणशेषो वाऽविशेषोपदेशात् ॥१३॥

प्रहरणशब्देन प्रहरणाङ्गभूतो मन्त्र उच्यते। स च पृथिवि देव—यजनीत्यादिः। तस्यैव व्रजं गच्छेत्यादि मन्त्रत्रयमपि शेषभूतमित्यर्थः। कुतः ? अविशेषात्, वाजसनेयिशाखायां शतपथब्राह्मणे ( १।२।२।१६ ) प्रहरणे एव अविशेषेणोपदेशात्। अयं भावः। पृथिवि देवयजनी-

---

१ ओं देवस्य त्वा स० म्। आददेऽध्वरकृतं देवेभ्यः १।२४।

२ ओं इन्द्रस्य बाहुरसि दक्षिणः सहस्रभृष्टिः शततेजा वायुरसि तिग्मतेजा द्विषतो वधः १।२४।

३ ओं पृथिवि देवयजन्योषध्यास्ते मूलं मा हिꣳसिषम् ।१।२५।

४ ओं व्रजं गच्छ गोष्ठानम् १।२५।

५ ओं वर्षतु ते द्यौः १।२५।

६ ओं बधान देव सवितः परमस्यां पृथिव्याꣳ शतेन पाशैर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मस्तमतो मा मौक् १।२५।

त्यत्र मन्त्रचतुष्टयमस्ति । तत्र प्रथममन्त्रः प्रहरणे, द्वितीयः पुरीषाऽऽदाने, तृतीयो वेदिप्रेक्षणे, चतुर्थ उत्करे पांसुनयने विनियुक्तः । अस्मिन्पक्षे सर्वोऽपि पृथिवि देवयजनीत्यारभ्य मा मौगित्यन्तो मन्त्रः एकस्मिन्नेव प्रहरणे विनियुज्यते । तथैव शतपथे अविशेषेणोपदेशात् । पुरीषादानादिकं तु तूष्णीमेव कार्यम् ।

वस्तुतस्तु स्वशाखायामविशेषोपदेशेऽपि शाखान्तरे (तै० ब्रा० ३।२।९।) विशेषोपदेशसत्वात् विशेषे प्रवृत्तेरुचितत्वात् "सामान्यविधिरस्पष्टः संह्रियेत विशेषतः" ( तन्त्रवा० ३।४।४७ ) इति न्यायेन अवयवश एव मन्त्रस्य विशेषे विनियोगः ॥१३॥

[ प्रहरणादि उत्करे पुरीषप्रक्षेपान्तं द्वितीयवारं कर्त्तव्यम् ]

**"अपाररु"मिति[1] द्वितीयं प्रहरणादि ॥ १४ ॥**

प्रहरणमारभ्य उत्करे करोतीत्यन्तं पुनः पूर्ववत्कुर्यात् । पितृयज्ञे देवपितृयजनाद्वध्यासमिति प्रयोगः ॥ १४ ॥

[ अग्नीदुत्करं हस्तद्वयेनाभिन्यसेत् ]

**अभिन्यस्यत्यग्नीदुत्कर"मररो दिव"मिति[2] ॥ १५ ॥**

अग्नीत् हस्तद्वयेन उत्करमभिमृशेत् ॥ १५ ॥

[ प्रहरणादि पूर्वोक्तं तृतीयवारं कार्यम् ]

**"द्रप्सस्त" इति[3] तृतीयम् ॥ १६ ॥**

तृतीयवारं प्रहरणादि उत्करकरणान्तं कार्यम् ॥ १६ ॥

[ सतृणं पुरीषं चतुर्थवारं तूष्णीमुत्करे प्रक्षिपेत् ]

**तूष्णीं चतुर्थꣳ सतृणम् ॥ १७ ॥**

चतुर्थवारं प्रहरणाद्युत्करकरणान्तं सर्वं कर्म तूष्णीं कुर्यात् । पुरीषं च तृणेन सहैव चतुर्थवारं क्षिपेत् ॥ १७ ॥

[ वेदेर्दक्षिणतः पश्चादुत्तरतश्चाध्वर्युः स्फ्येन परिग्रहं कुर्यात् ]

**पूर्वं परिग्रहं परिगृह्णाति दक्षिणतः, पश्चादुत्तरतश्च स्फ्येन "गायत्रेणे" ति[4] प्रतिमन्त्रम् ॥ १८ ॥**

वेदेरियत्तां निश्चेतुं दक्षिणादिदिक्त्रये स्फ्येन रेखाकरणं पूर्वः परिग्रहः ( आप. श्रौ. २।३।७ ) । तं कुर्यादध्वर्युः ॥ १८ ॥

[ अध्वर्युर्वेद्यां त्रिरुल्लिख्य 'हर त्रिः' इति प्रैषमन्त्रं पठेत् ]

**वेद्यां त्रिरुल्लिख्याऽऽह "हर त्रि"रिति ॥ १९ ॥**

अध्वर्युर्वेद्यां प्रागायतास्तिस्रो रेखाः स्फ्येन कृत्वा 'हर त्रिः' इति प्रैषमग्नीधं प्रति ब्रूयात् । हर त्रिरिति त्रिशब्दघटित एव मन्त्रो विवक्षितः अतश्च वरुणप्रघासेषु यत्र वेदि-त्रि

---

१ ॐ अपाररुं पृथिव्यै देवयजनाद्वध्यासम् ।१।२६।

२ ॐ अररो दिवं मा पप्तः ।१।२६।

३ ॐ द्रप्सस्ते द्यां मा स्कन् ।१।२६।

४ ॐ गायत्रेण त्वा च्छन्दसा परिगृह्णामि ।१।२७। ॐ त्रैष्टुभेन त्वा च्छन्दसा प० ।१।२७। ॐ जागतेन त्वा च्छ० ।१।२७।

त्वं तत्र त्रिशब्दमविपरिणमय्यैव 'हर त्रिस्त्रिः' इति मन्त्रः पठनीयो, न तु त्रिशब्दस्थाने षट्कृत्व इत्यूहः ॥ १९ ॥

[ यथोल्लिखिताभ्यो लेखाभ्यः पांसूनुद्धृत्याग्नील्लेखाः संमृशेत् ]

**हृत्वाऽग्नील्लेखाः संमृशति ॥ २० ॥**

अग्नीत्ताभ्यो लेखाभ्यः पांसून् त्रिर्हृत्वा उत्करे प्रक्षिप्य लेखाः संमृशति संमर्शनेन समीकरोति जलं प्रक्षिप्य लेपयतीत्यर्थः ॥ २० ॥

**पितृयज्ञाग्निचित्ययोर्वा, तत्र दर्शनात् ॥ २१ ॥**

अथवा लेखाहरणं संमर्शनं च पितृयज्ञे अग्निचयने च कर्त्तव्यं, नात्र। कुतः? तत्रोभयत्रैव दर्शनात्, विधानादित्यर्थः। "लिखति, हरति यत् हार्यं भवति" ( श० ब्रा० २।६।१।१२ ) इति पितृयज्ञे, "लिखित्वाऽऽह हर त्रिरिति, हरति त्रिरग्नीध्र" ( श० ब्रा० ७।२।२।१ ) इति चयने च तयोर्विधानम्। कर्काचार्यास्तु यद्यपि लेखाहरण-संमर्शने श्रुतौ नात्र विहिते, तथापि विकृतौ तयोर्दर्शनात्प्रकृतौ तयोरुपदेशो ऽनुमीयते। अतः प्रकृतौ ते भवत एवेत्याहुः ॥२१॥

[ प्रकारद्वययेनोक्तं वेदिखननमधुना कार्यम् ]

**अत्र वेदिकरणं यथोक्तम् ॥ २२ ॥**

प्रकारद्वयेनोपदिष्टं वेदिखननमस्मिन्काले कार्यम् ॥ २२ ॥

[ पूर्ववद् वेदिखननं पुनः कुर्यात् ]

**उत्तरं परिग्रहं परिगृह्णाति "सुक्ष्मा" "स्योना" "ऊर्जस्वती"ति[1] प्रतिमन्त्रं पूर्ववत् ॥२३॥**

वेदिकरणानन्तरं स्फ्येन पूर्ववद्दिक्त्रये रेखाकरणमुत्तरः परिग्रहः। तं कुर्यादध्वर्युः ॥२३॥

[ वज्रेण वेदिं समीकुर्यात् ]

**"पुरा क्रूरस्ये"त्यनुमार्ष्टि[2] ॥ २४ ॥**

वज्रेण वेदिं समीकुर्यादध्वर्युः पुरेति मन्त्रेण ॥ २४ ॥

[ वेदेरुपरि प्रोक्षणीर्धारयेत् ]

**अध्यधिवेदि प्रोक्षणीर्धारयति ॥ २५ ॥**

अध्वर्युर्वेदेरुपरि समीपे एव हस्तद्वयेन प्रोक्षणीर्धारयेत् ॥ २५ ॥

[ धार्यमाणासु प्रोक्षणीषु अग्नीत् वज्रमुद्यम्य प्रोक्षणीरासादयेत्यादीन् सर्वान् प्रैषान् युगपत्पठेत् ]

**अन्योऽथ स्फ्यमुद्यम्याह—"प्रोक्षणीरासादय, इध्मं बर्हिरुपसादय, स्रुचः संमृड्ढि, पत्नीं सन्नह्याज्येनोदेही" ति यदीच्छेत् ॥ २६ ॥**

अग्नीदध्वर्युं प्रति प्रैषचतुष्टयं निरवसानं दद्यात्। यदीच्छेदित्यनेन प्रैषकरणस्य विकल्पः। प्रैषचतुष्टयस्य निरवसानतासिद्ध्यर्थं, प्रोक्षणीधारण—वज्रोद्यमनयोरेककालतासिद्ध्यर्थं च अत्राथशब्दग्रहणम्। इध्म-बर्हिःशब्दौ वरुणप्रघासेषु न विपरिणमय्येते। जातिवाचित्वात्।

१ ॐ सुक्ष्मा चासिशिवा चासि १।२७ ॐ स्योना चासि सुषदा चासि १।२७। ॐ ऊर्जस्वती चासि पयस्वती च १।२७।

२ ॐ पुरा क्रूरस्य विसृपो विरप्शिन्नुदादाय पृथिवीं जीवदानुम्। यामैरयंश्चन्द्रमसि स्वधाभिस्तामु धीरासो अनुदिश्य यजन्ते १।२८।

गृहमेधीयादौ ( का० श्रौ० ५।८।६-२५ ) स्रुगेकत्वे स्रुचं सम्मृड्ढीत्यादि विपरिणामः। वरुणप्रघासेषु प्रोक्षणीरासादयेतमिति विपरिणामः। पत्नीबहुत्वेऽपि पत्नीशब्दस्य न विपरिणामः।

अत्र मन्त्रगत आज्यशब्दः आज्यजातिवाचकः। तेन अग्रे वरुणप्रघासादौ यत्र आज्यानेकत्वं तत्रापि आज्येनोदेहीत्येव मन्त्रः प्रयुज्यते, न तु द्विवचनान्तेन विपरिणम्यते ॥२६॥

[ प्रैषार्थकर्तृत्वमग्नीध इति पूर्वपक्षः ]

प्रैषेषु "प्रोक्षणीरासादय" (शु. य. १।२८) इत्यादिषु, तदर्थेषु च प्रोक्षण्यासादनादिषु उभयत्रापि अध्वर्युकर्तृकत्वे विरोधात् प्रैषमन्यः कुर्यात्, प्रैषार्थं चान्य इति प्राप्ते आह—

## यथाप्रेषितमन्यः, पराऽधिकारात् ॥२७॥

अत्रान्यशब्दो ऽग्नीद्वाचकः। कुतः ? प्रैषसामर्थ्यादेव अन्यकर्तृकत्वस्य सिद्धेः। अतोऽन्यः करोति अग्नीत्करोतीत्यर्थः। अस्य प्रैषस्य निकृष्टविषयत्वात् अग्नीधा च प्रैषानुष्ठाने, अध्वर्युणा प्रैषार्थकरणे निकृष्टप्रेषणरूपप्रैषत्वविरोधापत्या अध्वर्युः प्रेषयेत्। अग्नीच्च प्रैषार्थमनुतिष्ठेत् ॥ २७ ॥

[ प्रैषार्थकर्तृत्वमध्वर्योरन्तरङ्गत्वादिति सिद्धान्तः ]

एवं प्राप्त आह –

## स्वयं वा ऽविरोधात् ॥ २८ ॥

वाशब्दः पक्षं व्यावर्त्तयति। स्वयमेवाध्वर्युः प्रैषार्थं कुर्यात्। कुतः ? विरोधाभावात्। प्रैषत्वे सति हि विरोधः स्यात्। नायं प्रैषः। किन्तु अध्येषणेयम्। अध्येषणा च उत्कृष्टविषया। एवं च निकृष्टेनाग्नीधा उत्कृष्टं प्रति अध्येषणायां कृतायामपि विरोधो नास्तीति कृत्वा प्रैषार्थानुष्ठाने अध्वर्युरेव कर्त्ता ॥ २८ ॥

हेत्वन्तरमाह—

## सम्प्रैषावचनाच्च ॥ २९ ॥

यथा "अग्नीदग्नीन्विहर" (श० ब्रा० ४।२।५।११) इत्यादौ संप्रैषवचनमस्ति, न तथा प्रोक्षणीरासादयेत्यादौ। अत एतादृशेषु प्रैषेषु अध्वर्युः कर्त्ता। न च प्रैषस्य अध्वर्युकर्तृकत्वे प्रैषार्थस्य अग्नीत्कर्तृकत्वे उभयत्रापि साक्षात्परम्परया वा कर्तृत्वं संभवति। तेन आध्वर्यवसमाख्यापि अनुगृहीता भविष्यति। अतश्च प्रैषे अध्वर्युकर्तृकत्वमेव कुतो न स्यादिति वाच्यम्। एवं तर्हि प्रैषार्थेषु अध्वर्योः साक्षात्कर्त्तृत्वं न स्यात्। अन्यस्य साक्षात्कर्तुराग्नीध्रस्य तत्र सत्वात्। न च परम्परया कर्त्तृत्वसिद्धिरस्त्येवेति वाच्यम्। मुख्यकर्त्तृत्वस्यैवात्राभिप्रेतत्वात्। परम्पराकर्त्तृत्वं तु कर्त्तृत्वातिदेशरूपत्वात् गौणमेव भवतीति कृत्वा न समाख्यानुग्राहकं भवति तत्। अतः प्रैषे ऽग्नीत्, प्रैषार्थे चाध्वर्युः कर्त्तेत्येव समुचितम् ॥ २९ ॥

## प्राक् स्तरणाद्वेदिं नाऽवमृशेत् ॥३०॥

वेद्यां बर्हिस्तरणात्प्राक् तस्याः स्पर्शो न कार्यः ॥३०॥

## शृतानि च हवींष्याप्रचरणात् ॥३१॥

प्रधानयागावदानात्पूर्वं पक्वहविषां च स्पर्शो न कार्यः ॥३१॥

[ काष्ठेन हस्तेन वा पुरोडाशमवद्यति ]

## अङ्गुष्ठाङ्गुलिभ्यां मांससंहिताभ्यामवद्यन्त्येके ॥३२॥

मांससंबद्धाभ्याम् = अनखसंलग्नाभ्याम् अर्थात् काष्ठादिकं विना साक्षादेव अङ्गुष्ठाङ्गु-

लिभ्यां केचिदवदानं कुर्वन्ति। एके इत्यनेन पक्षान्तरमपि विहितं भवति। तथा च्वोक्तम्। "सामर्थ्यात्स्वधितिर्मांसे द्रवद्रव्ये स्रुवः स्मृतः। हस्तकाष्ठे पुरोडाशमवदातुं प्रकल्पिते" ( जै० १।४।१९ ) इति।

[ स्तरणकाले तृणकाष्ठादेर्वेदितो निरसनम् ]

**आपन्नश्च स्तृणन् निरस्येत् ॥३३॥**

स्तृणन् स्तरणं कुर्वन्नध्वर्युः वेद्यां पतितं तृणकाष्ठादिकं निरस्येत्। वेद्यां पतितमपि तृणादिकं स्तरणकाले एव निरसनीयं, न ततः प्राक् इति भावः ॥३३॥

[ स्फ्यमुदगग्रं प्रहरेत् ]

**"द्विषतो वध"[1] इति स्फ्यमुदञ्चं प्रहरति ॥३४॥**

प्रैषार्थमुद्यतं वज्रमध्वर्युरुदगग्रमुत्करे क्षिपेत् ॥३४॥

[ पाणी प्रक्षाल्य प्रणीतानामपरतः स्फ्यनिधानम् ]

**अवनिज्य पाणी, अपरेण प्रणीता स्फ्यं निदधाति ॥३५॥**

अध्वर्युः हस्तौ प्राणीतेन जलेन प्रक्षाल्य प्रणीतानां पश्चिमत उदगग्रं स्फ्यमासादयेत् ॥३५॥

[ प्रणीताऽऽहवनीयान्तरालेनाहृत्य प्रणीताताः पश्चात्पूर्वमिध्मं निधाय बर्हिर्निदध्यात् ]

**इध्मा-बर्हिश्च ॥३६॥**

इध्मं बर्हिश्च प्रणीतानां पश्चादासादयति ॥३६॥

समासोक्तयोः क्रमापरिज्ञाने सत्याह—

**पूर्वमिध्मम् ॥३७॥**

आदौ इध्मं, ततो बर्हिरित्येवं क्रमेण उदक्संस्थं प्रागग्रमुभयमप्यासादयेत् ॥३७॥

**प्रणीता दक्षिणेन वाऽऽहृत्य ॥३८॥**

अथवा प्रणीतानां दक्षिणेन अर्थात् प्रणीतानामाहवनीयस्य चान्तरालेन प्रदक्षिणमिध्माबर्हिरानीय निदध्यात् ॥३८॥

[ स्रुवस्य, स्रुचां, प्राशित्रहरणादीनां च प्रतपनपूर्वकं वेदाग्रैः संमार्जनं कृत्वा अग्नीधे समर्पणम् ]

**स्रुवं प्रतप्य पूर्ववद्वेदाग्रै, रन्तरतः प्राक्संमा "र्ष्ट्यनिशित" इति, विपर्यस्य बर्हिर्मूलैः प्राङुत्क्रम्य ॥३९॥**

अध्वर्युः गार्हपत्यस्य पश्चादुपविश्य पूर्ववत् प्रत्युष्टं निष्टप्तमिति वा मन्त्रेण स्रुवं प्रतप्य उपविष्ट एव किंचिदिव प्राग्देशं गत्वा स्रुवं वामहस्ते कृत्वा वेदाग्रैः अग्रे ( सू०४३ ) वेदाग्राणां प्रतिपत्तिविधानाच्छेदनेन वेदात्पृथग्भूतैः मूलादारभ्य मुखपर्यन्तमुपरिदेशे स्रुवं संमार्ष्ट्यनिशित इति[2] मन्त्रेण। अध्वर्युः पुनः किंचित् प्राङ् गत्वा बहिर्बाह्यतः स्रुवस्य पृष्ठदेशे विपर्यासेन अग्रादारभ्य मूलपर्यन्तं वेदमूलैरनिशित इति संमृज्यात्। इदं चोत्क्रमणं सम्मार्गार्थमेव कर्त्तव्यं, न तु प्रतपनार्थमपि। "तस्मादु तथैव संमृज्याद्यथा ऽग्निं नाभिव्युक्षेत्प्राङि वैवोत्क्रम्य" ( श० १।२।४।१० ) इति श्रुतौ उत्क्रमणस्य संमार्गार्थताया एव श्रवणात् ॥३९॥

---

१ ॐ द्विषतो वधोऽसि १। २८।

२ ॐ अनिशितोऽसि सपत्नक्षिद्वाजिनं त्वा वाजेध्यायै संमार्ज्मि १। २९।

**प्रतप्य प्रतप्य प्रयच्छति ॥४०॥**

अध्वर्युः प्रत्युष्टमिति पुनः स्रुवं प्रतप्य अग्नीधे प्रयच्छेद्वेद्यां निधानार्थम् । इदं च प्रतपनमध्वर्युणा स्वस्थाने प्रत्यागत्य कार्यं, संमार्गमात्रे प्रागुत्क्रमणविधानात् । वीप्सा च स्रुगादिविषया । तेन स्रुगादीनां संमार्गोत्तरं प्रपनं कार्यम् । पूर्वं प्रतपनं तु स्रुवस्यैव । स्रुवं प्रतप्य पूर्ववदिति विशेषविधानात् ॥४०॥

**"अनिशिते"ति[1] स्रुचः ॥४१॥**

जुह्वुपभृद्ध्रुवास्तथैव स्रुववत्संमृज्यात् ॥४१॥

**तूष्णीं प्राशित्रहरणं०, शृतावदानं, पात्रीं च ॥४२॥**

तूष्णीं सम्मार्गः, तूष्णीं प्रतपनं चैतेषां भवति । प्रागुत्क्रमणं च नात्र । तस्य मन्त्रसंयोगेन विधानात् । पात्रीशब्देनाविशेषात् पुरोडाशपात्र्योरिडापात्र्याश्च ग्रहणम् ॥४२॥

[ संमार्जनानां वेदाग्राणामुत्करे प्रासनम् ]

**संमार्जनान्यपास्यति ॥४३॥**

संमार्जनसाधनानि वेदाग्राणि उत्करे क्षिपेत् ॥४३॥

**आहवनीये प्रासनमेके ॥४४॥**

एके वेदाग्राणामाहवनीये ऽग्नौ प्रक्षेपं वदन्ति ॥४४॥

इति कातीयश्रौतसूत्रवृत्तौ द्वितीयाध्याये षष्ठी कण्डिका ॥ ६ ॥

---

[ त्रिवृता मुञ्जयोक्त्रेण पत्नीसन्नहनम् ]

**पत्नीं सन्नह्यति प्रत्यग्दक्षिणत उपविष्टां गार्हपत्यस्य, मुञ्जयोक्त्रेण त्रिवृता, परिहरत्यधीवासो "ऽदित्यै रास्ने"ति[2] ॥१॥**

अध्वर्युर्गार्हपत्यस्य निर्ऋतिकोणे पूर्वतः समुपविष्टामीशानाभिमुखीं यजमानस्य पत्नीं त्रिगुणितेन मुञ्जतृणविशेषनिर्मितेन योक्त्रेण नाभेरधः कटिप्रदेशे बध्नाति अदित्यै इति मन्त्रेण । तद्योक्त्रं परिहितस्य वाससो बहिरुपरि परितो वेष्टयेत् । एतत्पत्नीसन्नहनं तत्संस्कारात्प्रतिपत्नि कर्त्तव्यम् ॥१॥

[ दक्षिणं पाशमुत्तरे प्रतिमुच्य उत्तरमुत्तरत आनीयोद्गूहेत्, न ग्रन्थिं कुर्यात् ]

**दक्षिणं पाशमुत्तरे प्रतिमुच्योर्ध्वमुद्गूहति "विष्णोर्वेष्प" इति[3] ॥२॥**

अध्वर्युः योक्त्रस्य दक्षिणाग्रस्थितं पाशमुत्तराग्रस्थितस्य पाशस्य मध्ये उपरितः प्रवेश्य अध आकृष्य शङ्कुस्थानीये प्रोतयित्वा ( ततः सामर्थ्यात् पाशं द्विगुणं वेष्टयित्वा ) दक्षिणं

---

१ ॐ अनिशिताऽसि सपत्नक्षिद्वाजिनीं त्वा वाजेध्यायै संमार्ज्मि १ । २९ ।

२ ॐ अदित्यै रास्नाऽसि १ । ३० ।

३ ॐ विष्णोर्वेष्पोऽसि । १।३० ।

पाशमूर्ध्वमुद्गूहति योक्त्रमध्ये एव प्रेरयति। ऊर्ध्वं योक्त्रमध्ये गूहनसामर्थ्याद् द्विर्वेष्टनम्। एकवेष्टने उद्गूहनस्याशक्यत्वादिति देवयाज्ञिकः[1] ॥२॥

न ग्रन्थिं करोति ॥३॥

[ आज्यमुद्वास्याध्वर्युणाऽध्येषिता पत्नी मन्त्रेणाऽऽज्यमवेक्षते ]

"ऊर्जेत्वे" त्याज्यमुद्वास्य पत्नीमवेक्षय "त्यदब्धेने"ति ॥४॥

उद्वासयामीत्यध्याहृतेन ऊर्जेत्वेति[2] मन्त्रेण अध्वर्युराज्यमुद्वास्य पत्नीमवेक्षयेत्। णिजन्तोपदेशात् 'पत्न्याज्यमवेक्षस्व' इत्यध्येषणा। अनेकपत्नीकेऽपि परार्थत्वादेकैवाज्यावेक्षणं कुर्यात्, द्रव्यसंस्कारत्वात्। पत्न्यभावे पितृयज्ञे, रजस्वलायां प्रोषितायां वाऽध्वर्युरेवावेक्षेत ॥ ४ ॥

[ वेद्यामासादिताभ्यः प्रोक्षणीभ्यः पश्चादाज्यासादनम् ]

वेद्यां करोत्यपरं प्रोक्षणीभ्यः ॥ ५ ॥

अध्वर्युस्तदाज्यं प्रोक्षणीनां पश्चाद्वेद्यां स्थापयेत् ॥ ५ ॥

[ आहवनीयश्रापिण आहवनीये आज्याधिश्रयणम् ]

आहवनीये वा कृत्वा तच्छ्रापिणः ॥ ६ ॥

आहवनीयश्रापिणो यजमानस्य पत्न्यवेक्षणानन्तरं आज्यमाहवनीयेऽधिश्रित्य पुनरुद्वास्य प्रोक्षणीभ्योऽपरं वेद्यां निदध्यात् ॥ ६ ॥

[ आज्यस्य प्रोक्षणीनां चोत्पवनम् ]

"सवितुस्त्वे"त्याज्यमुत्पुनाति प्रोक्षणीश्च पूर्ववत् ॥ ७ ॥

अध्वर्युः पवित्राभ्यामाज्यं प्रोक्षणीश्चोत्पुनाति सवितुस्त्वा[3], सवितुर्वः[4] इति मन्त्राभ्यां, प्रतिमन्त्रम् ॥ ७ ॥

[ अध्वर्योर्यजमानस्य वाऽऽज्यावेक्षणम् ]

आज्यमवेक्षते "तेजोसी"ति[5] यजमानो वा ॥ ८ ॥

[ जुह्वां स्रुवेण चतुर्वारमाज्यग्रहणम् ]

स्रुवेणाज्यग्रहणं चतुर्जुह्वां "धामनामे"ति[6] सकृन्मन्त्रः ॥ ९ ॥

---

१ विष्णोर्वेष्प इत्यत्र 'विष्लृ व्याप्तौ ( जुहो० १२ ) इति धातोः "पा-नी-विषिभ्यः पः" (३१०) इत्यौणादिकसूत्रेण पप्रत्यये वेष्प इति रूपं निष्पद्यते। अत्र वेष्य इति पाठकल्पनम् एतदौणादिकसूत्राज्ञानमूलकम्। पवर्गीयघटितपाठस्य आसेतुहिमाचलं संप्रदायसिद्धत्वात्। अन्तस्थघटितलेखस्य लेखकप्रमादेन भाष्यादिपुस्तकेषु च सञ्जातत्वात्। एतद्व्युत्पादनं च लखनऊमुद्रितभाष्ये स्पष्टमुपलभ्यते इति ततो निरसनीयः संशयः सन्दिहानैरिति।

२ ॐ ऊर्जे त्वा ऽदब्धेन त्वा चक्षुषाऽव पश्यामि। अग्नेर्जिह्वासि सुहूर्देवेभ्यो धाम्ने धाम्ने मे भव यजुषे यजुषे १।३०।

३ ॐ सवितुस्त्वा प्रस० रश्मिभिः १।३१।

४ ॐ सवितुर्वः प्रस० भिः १।३१।

५ ॐ तेजोऽसि शुक्रमस्यमृतमसि १।३१।

६ ॐ धाम नामाऽसि प्रियं देवानामनाधृष्टं देवयजनमसि १।३१।

स्रुवेण जुह्वां चतुर्वारमाज्यं गृह्णीयात्, चतुरः स्रुवान् पूर्णान् गृह्णीयादित्यर्थः। तत्र मन्त्रः प्रथमस्रुवग्रहण एव प्रयोज्यः ॥ ९ ॥

[ उपभृति अष्टकृत्व आज्यद्रव्यकानुयाजसहिते कर्मणि स्रुवेणाज्यग्रहणम् ]

**अष्टावुपभृत्यल्पीयोऽनुयाजाश्चेत् ॥ १० ॥**

चेद्यदि अनुयाजाः स्युस्तदा उपभृत्यष्टौ स्रुवान् अपूर्णान् गृह्णीयात्। दर्शपूर्णमासयो-रनुयाजानामवैकल्पिकत्वाद्विकृत्यर्थश्चेच्छब्दः ॥ १० ॥

"यदष्टौकृत्व उपभृति गृह्णाति प्रयाजानुयाजेभ्यस्तद् गृह्णाति" (तै० ब्रा० ३।३।५) इति श्रुतेरौपभृतस्याज्यस्य प्रयाजानुयाजोभयार्थत्वात् उपभृति अष्टगृहीतमाज्यमर्द्धं प्रयाजेषूप-युज्यते, अर्द्धमनुयाजेषु। तेन यत्रानुयाजानामभावः, यत्र वा द्रव्यान्तरेण पृषदाज्यादिना अनु-याजा विहिताः, तत्र च किमुपभृति चतुर्गृहीतं ग्राह्यम् उताष्टौ कृत्व ? इति संशये सिद्धान्तमाह—

**चतुरन्यत्र, प्रतिविभागात् ॥ ११ ॥**

अनुयाजाभाववति, अन्यद्रव्यानुयाजके च कर्मणि विकृतौ चतुर्गृहीतमेवाज्यं ग्राह्यम्। कुतः ? प्रतिविभागात्। औपभृतस्याज्यस्य प्रयाजेष्वनुयाजेषु च विभागेनोपयोगात्। अत औपभृतस्योभयार्थत्वम्, तेनाऽनुयाजाभावे प्रयाजार्थमेव चतुर्गृहीतं कर्त्तव्यमिति भावः ॥११॥

हेत्वन्तरमप्याह—

**पश्वातिथ्ययोर्दर्शनाच्च ॥ १२ ॥**

पशौ अन्यद्रव्यकेष्वनुयाजेषु, आतिथ्यायामननुयाजके कर्मणि च उपभृति चतु-र्गृहीतस्याज्यस्य दर्शनाच्चायमर्थो गम्यते, यदनुयाजाभावे प्रयाजार्थमेव चतुर्गृहीतं ग्राह्यम्। पशौ तावत् "जुह्वां चोपभृति च चतुर्गृहीतं गृह्णाति (आप० श्रौ० ७।१।९) इति शास्त्रम्। आतिथ्यायां "सर्वाण्येव चतुर्गृहीतान्याज्यानि गृह्णाति न ह्यत्रानुयाजा भवन्ति" ( श० ब्रा० १।३।२।९ ) इति श्रुतिः ॥१२॥

अत्र प्रतिपक्षी पुनः प्रत्यवतिष्ठते—

**न, कृत्स्नोपदेशात् ॥ १३ ॥**

यदुक्तमौपभृतस्याज्यस्योभयार्थतेति, तन्न। कुतः ? कृत्स्नोपदेशात्। "अथ यदष्टौ कृत्व उपभृति गृह्णाति अनुयाजेभ्यो हि तद् गृह्णाति" (श० ब्रा० १।३।२।९) इति श्रुतौ उपभृति अष्टगृहीतस्याज्यस्य कृत्स्नस्य अनुयाजार्थत्वेनोपदेशादित्यर्थः। यदुक्तं प्रतिविभागादिति अर्द्धस्य प्रयाजेषूपयोगोऽर्द्धस्यानुयाजेष्विति । अनुयाजार्थमेवाष्टगृहीतस्याज्यस्य वचनात्प्रया-जेषूपयोगः। यथा प्रयाजार्थं जुह्वां गृहीतस्याज्यस्य वचनादुत्तराघारे विनियोगो भवति ॥१३॥

[ पश्वातिथ्ययोर्वचनादुपभृति चतुराज्यग्रहणम् ]

यदुक्तं पश्वातिथ्ययोर्दर्शनादिति, तत्रोच्यते—

**पश्वातिथ्ययोर्वचनात् ॥ १४ ॥**

यदा "अनुयाजेभ्यो हि तद् गृह्णाति" (श० ब्रा० १।३।२।९) इति वाक्येन सकलस्यौप-भृतस्यानुयाजार्थत्वं, तदा यत्र पशौ द्रव्यान्तरेणानुयाजाः, यत्र चातिथ्यादौ अनुयाजाभावो ना (श० ब्रा० ३।४।१।१४) तत्र सर्वत्रापि उपभृत्यग्रहणे प्राप्ते वचनाच्चतुर्गृहीतं विधीयते। अतो विधानमेतत्, न दर्शनम्। प्राप्तिपूर्वकं हि दर्शनं भवति। न चेह प्राप्तिरस्तीत्यतो वचनमिदम् :

एवं प्राप्ते सिद्धान्तयन्ति भाष्यकाराः "यदष्टौ कृत्व उपभृति गृह्णाति प्रयाजानुयाजेभ्यस्तद् गृह्णाति" ( तै० ब्रा० ३।३।८ ) इति शाखान्तरवचनात् औपभृतस्याज्यस्य उभयार्थविधानमेवाङ्गीकार्यम्। "अनुयाजेभ्यो हि तद् गृह्णाति" (श० ब्रा० १।३।२।६) इति त्वनुवादः। अतः कृत्स्नस्यानुयाजार्थत्वेनोपदेशाभावात् उभयार्थतैवौपभृतस्य। पश्वातिथ्ययोरपि वचनं तदैव स्याद्यदा औपभृतस्योभयार्थता न स्यात्। अस्ति तूभयार्थता। एवं सिद्धायामुभयार्थतायां प्राप्तिपूर्वकत्वाद्दर्शनमेव तत्, न विधानम्। तेन अनुयाजाभावे, अन्यद्रव्यानुयाजके कर्मणि च उपभृति चतुर्गृहीतमेव ग्राह्यमिति सिद्धम् ॥ १४ ॥

[ ध्रुवायां च चतुराज्यग्रहणम् ]

**ध्रुवायां च जुहूवत् ॥१५॥**

ध्रुवायामुपभृति च सकृन्मन्त्रेणाज्यग्रहणम्। ग्रहणत्रयं तु तूष्णीं कार्यम् ॥१५॥

[ इध्म-वेदि-बर्हिषां प्रोक्षणम् ]

**इध्मं प्रोक्षति विस्रꣳस्य, वेदिं च, बर्हिः प्रतिगृह्य वेद्यां कृत्वा पुरस्ताद्ग्रन्थि "कृष्णोऽसी"ति (१) प्रतिमन्त्रम् ॥१६॥**

अध्वर्युरिध्मं तत्रस्थमेव विस्रंस्य कृष्णोऽसीति प्रोक्षेत्। वेदिरसीति वेदिं प्रोक्षेत्। अग्नीधा समर्पितं बर्हिर्हस्तेनादाय वेद्यां पुरस्ताद्ग्रन्थि यथा स्यात्तथोदगग्रमासाद्य बर्हिरसीति प्रोक्षेत्। अग्न्यभावे अवभृथेष्ट्यां परिश्रित्सु च नेध्मस्य प्रोक्षणम्। एवं गृहमेधीये (का० श्रौ० ५।८।८।२५) बर्हिस्तरणाभावे वेदेर्न प्रोक्षणम्। अत्र स्रुग्भ्य इति बहुवचनं स्रुग्द्वित्वादौ विपरिणम्यते ॥ १६ ॥

[ प्रोक्षणीशेषेण बर्हिर्मूलोपसेचनम् ]

**शेषं मूलेषूपसिञ्च "त्यदित्यै व्युन्दन"मिति (२) ॥१७॥**

प्रोक्षणीशेषं बर्हिर्मूले निनयेदध्वर्युः ॥ १७ ॥

[ पवित्रे प्रणीतासु निधाय बर्हिषः पुरस्तात्प्रस्तरग्रहणम् ]

**पवित्रे निधाय प्रणीतासु, बर्हिर्विस्रꣳस्य पुरस्तात्प्रस्तरग्रहणं "विष्णो"रिति (३) ॥१८॥**

अध्वर्युर्हस्तेन प्रणीतासु पवित्रे निधाय बर्हिर्विस्रंस्य बर्हिषः पूर्वभागात्प्रस्तरस्य = कुशमुष्टेर्ग्रहणं कुर्यात्। पूलकात्प्रस्तरस्य पृथक्करणे मन्त्रोऽयम्। तेन यत्र पितृयज्ञे प्रस्तरस्य पृथक्करणं नास्ति तत्र "प्रस्तर उपसन्नद्धः" ( का० श्रौ० ५।२।२० ) इति वक्ष्यमाणत्वादादितो बद्ध एव प्रस्तरो गृहीतो भवति। अतस्तत्र मन्त्रस्य निवृत्तिः ॥१८॥

[ वेद्यां बर्हिषा त्रिवृत् स्तरणम् ]

**ब्रह्मणे प्रदाय, सन्नहनं विस्रꣳस्य दक्षिणस्यां वेदिश्रोणौ निधायान्यैरवच्छाद्य वेदिꣳ स्तृणा "त्यूर्णम्रदस"मिति (४) त्रिवृत् ॥१६॥**

---

(१) ओं कृष्णोऽस्याखरेष्ठोऽग्नये त्वा जुष्टं प्रोक्षामि २। १। ॐ वेदिरसि बर्हिषे त्वा जुष्टं प्रोक्षामि २। १। ॐ बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामि २। १।

(२) ॐ अदित्यै व्युन्दनमसि २। २।

(३) ॐ विष्णो स्तुपोऽसि २। २।

(४) ॐ ऊर्णम्रदसं त्वा स्तृणामि स्वासस्थां देवेभ्यः २। २।

अध्वर्युः प्रस्तरं ब्रह्मणे समर्प्य बन्धनरज्जुं विस्रंस्य रज्जुरूपत्वं परित्याज्य दक्षिणस्यां वेदिश्रोणावुदगग्रं निधाय अन्यैस्तृणैः सन्नहनावच्छादनैः सन्नहनं प्रच्छाद्य ऊर्णम्रदसमिति मन्त्रावृत्या त्रिवृत्=त्रिधातु प्रागग्रं वेदिमाच्छादयेत्। धातवस्तृणमुष्टिप्रक्षेपाः पितृयज्ञे देवपितृभ्य इत्यूहः ॥१६॥

उपपत्या वा बहुलम् ॥२०॥

अथवा न त्रिवृत् स्तृणाति, किन्तु यावतीभिरावृत्तिभिर्वेदेः स्तरणं भवेत् तावतीभिर्घनं यथा स्यात्तथा स्तरणं कर्त्तव्यम् ॥२०॥

[ मूलानि अधस्तात् कृत्वा पश्चादपवर्गं स्तृणाति ]

अधरमूलम् ॥२१॥

अधराणि मूलानि यस्य तदधरमूलं स्तृणीयात्। पूर्वस्तृतस्य बर्हिषो मूलानि पश्चात्स्तीर्यमाणबर्हिषोऽग्रैः प्रच्छादनीयानीत्यर्थः ॥ २१ ॥

पश्चादपवर्गम् ॥२२॥

पश्चादपवर्गः समाप्तिर्यस्य। वेदेः पूर्वभागादारभ्य पश्चिमे यथा समाप्तिर्भवेत्तथा स्तृणीयात्। अयमेकः पक्षः ॥२२॥

[ प्रागपवर्गं निष्कृष्य निष्कृष्य स्तरणम् ]

पक्षान्तरमाह—

प्रबृहं वा ॥२३॥

बृह उद्यमे। प्रबृहमिति णमुल्। सौत्रो गुणाभावः। तेनाभीक्ष्ण्यार्थलाभः। श्रुतौ तु "प्रबर्हं स्तृणीयात्" ( श० ब्रा० १।२।६।१० ) इति गुणघटित एव प्रयोगो दृश्यते। अथवा न पश्चादपवर्गं स्तृणीयात्, अपि तु प्रागपवर्गमित्यर्थः। प्रागपवर्गपक्षे पूर्वपूर्वस्तृतबर्हिषोऽग्रैः पश्चात्स्तीर्यमाणमूलानामाच्छादनं कार्यम्। पूर्वस्तृतबर्हिषोऽग्राणि यष्ट्यादिना ऊर्ध्वमुत्थापयन् तेषामग्राणामधस्ताद् द्वितीयमुष्टेरप्यग्राणि स्तृणीयात्। एवं च प्रागपवर्गमेव स्तरणं सम्पन्नमिति भावः ॥ २३ ॥

[ आहवनीयकल्पनात्पूर्वं हविषामुद्वासनम् ]

अत्रोद्वासनमाहवनीयश्रापिणः ॥२४॥

आहवनीयश्रापिणो यजमानस्यास्मिन् काले हविषामुद्वासनम्। यदि इदानीमुद्वासनं न क्रियेत तदाऽऽहवनीयकल्पने सति हवींषि दह्येरन्। अत एव कपालोद्वासनमप्यत्रैव कार्यम्। गार्हपत्यश्रापिणस्त्वग्रे (२।८।१४) वक्ष्यते ॥ २४ ॥

[ आहवनीयस्य समित्प्रक्षेपेण समर्थीकरणम् ]

इध्मात्समिधमादायाहवनीयं कल्पयत्युपर्युपरि प्रस्तरं धारयन् ॥२५॥

इध्मादेकां समिधमादाय ब्रह्मणः सकाशात्प्रस्तरं चार्थादादाय आहवनीयोपरिष्टात्समीपे एव प्रस्तरं धारयन् समिधा समिदाघातेन इन्धनादिकं ज्वलनसमर्थं करोति। एतत्समर्थीकरणं दृष्टार्थत्वादग्नेरेव, न तत्कार्यपक्षानामपां परिश्रितां वा। अतः अप्सु परिश्रित्सु च न भवति ॥२५॥

[ अनुयाजार्थमुल्मुकयोराहवनीयान्निष्काशनम् ]

उल्मुके उदूहत्यनुयाजार्थेत् ॥२६॥

यदि अनुयाजा अनुष्ठीयन्ते तदाऽनुयाजार्थं द्वे उल्मुके आहवनीयात्पृथक् स्थापयेत्

अनुयाजानुष्ठानकाले पुनस्ते आहवनीये प्रदक्षिणानुयाजाननुतिष्ठेत्। आतिथ्या (का० श्रौ० ८।१।१) गृहमेधीयादा (का० श्रौ० ५।८।८।२५) वनुयाजाभावे उल्मुकोदूहनस्याप्यभावः। अवभृथेष्टावुदकेऽपि उल्मुकोदूहनमदृष्टसंस्कारकत्वाद् भवति ॥ २६ ॥

इति कातीयश्रौतसूत्रवृत्तौ द्वितीयाध्याये सप्तमी कण्डिका ॥७॥



[ आहवनीयस्य पश्चिमे, दक्षिणे, उत्तरे च क्रमेण परिधिपरिनिधानम् ]

**परिधीन्परिदधात्यार्द्रानेकवृक्षीयान् बाहुमात्रान् पालाश-वैकङ्कत-कार्ष्मर्य-बैल्वान्पूर्वालाभे पूर्वालाभ उत्तरान् खादिरौदुम्बरान्वा मध्यम दक्षिणोत्तरान् "गन्धर्व" इति प्रतिमन्त्रम् ॥ १ ॥**

गन्धर्वं (१) इत्यादिमन्त्रत्रयेण आर्द्रान् एकवृक्षोद्भवान् बाहुप्रमाणान् पलाशादिवृक्षीयान् पूर्वपूर्वालाभे उत्तरान् मध्यमे दक्षिणे उत्तरे च इत्येवंक्रमेण त्रीन्परिधीन्परिदध्यादध्वर्युः।

अत्र त्वाशब्दस्य परिध्येकवाक्यतया परिधिपरत्वात् अवभृथेष्टौ अग्निस्थानापन्नानामपां बोधनाय युष्मानिति न विपरिणामः। इन्द्रस्य बाहुरसि दक्षिण (शु. य. २।३) इति मन्त्रे न दक्षिणदिक्स्थत्वाद्दक्षिणत्वम्। किंतु इन्द्रदक्षिणबाहुत्वमौपचारिकम्। तेन पितृयज्ञे पश्चिम इत्येवं न विपरिणामः। मित्रावरुणौ त्वोत्तरत इति मन्त्रे पितृयज्ञे पूर्वत इति विपरिणामः। समवेतार्थत्वात् ॥ १ ॥

**प्रथमं परिधिꣳ समिधोपस्पृश्य "वीतिहोत्र"मित्यादधाति (२) ॥ २ ॥**

अग्निकल्पनार्थं गृहीतया समिधा प्रथमं परिधिमुपस्पृश्य उत्थाय तां समिधमाहवनीये प्रक्षिपेत्। उपस्पर्शनस्य अवभृथेऽपि प्रवृत्तिः। अग्नौ समिदाधानस्य तु दृष्टार्थत्वात् न तत्र प्रवृत्तिः। अतोऽवभृथेष्टौ उपस्पर्शनमात्रं कार्यम्, नाप्सु समित्प्रक्षेपः ॥२॥

**अनुपस्पृश्य द्वितीयाꣳ "समिदसी"ति (३) ॥ ३ ॥**

इध्माद् द्वितीयां समिधमादाय अनुपस्पृश्याहवनीये प्रक्षिपत्यध्वर्युः ॥ ३ ॥

[ आहवनीयमीक्षमाणः सूर्यस्त्वेति जपेत् ]

**"सूर्यस्त्वे"ति (४) जपत्याहवनीयमीक्षमाणस्तद्वचनत्वात् ॥ ४ ॥**

सूर्यस्त्वेति मन्त्रस्याहवनीयपरत्वात् आहवनीयं विलोकयन्नमुं मन्त्रं संहितास्वरेण पठेदध्वर्युः। त्वाशब्दोऽग्निपरत्वादवभृथे विपरिणम्यते। पुरस्ताच्छब्दश्च दिक्परत्वात्पितृयज्ञे विपरिणम्यते ॥ ४ ॥

(१) ॐ गन्धर्वस्त्वा विश्वावसुः परिदधातु विश्वस्यारिष्ट्यै यजमानस्य परिधिरस्यग्निरिड ईडितः २।३। ॐ इन्द्रस्य बाहुरसि दक्षिणो विश्व० तः २।३। ॐ मित्रावरुणौ त्वोत्तरतः परिधत्तां ध्रुवेण धर्मणा विश्व० तः २।३।

(२) ॐ वीतिहोत्रं त्वा कवे द्युमन्तꣳ समिधीमहि। ॐ अग्ने बृहन्तमध्वरे २।४।

(३) ॐ समिदसि २।५।

(४) ॐ सूर्यस्त्वा पुरस्तात्पातु कस्याश्चिदभिशस्त्यै २।५।

[ उदगग्रयोर्विधृत्योर्वेद्यां निधानम् ]

**आवृत्य वेदिं बर्हिषस्तृणे तिरश्ची निदधाति "सवितु"रिति (१) ॥ ५ ॥**

अध्वर्युर्वेदिं प्रत्यागत्य स्तृतस्य बर्हिष उपरि उदगग्रे द्वे तृणे निदध्यात् ॥ ५ ॥

[ अप्रकृतयोस्तृणयोर्निधानम ]

तृणे निदधातीत्युक्तं, ते तृणे किं वेदेर्ग्राह्ये उत अन्ये इति संशये आह—

**अन्ये वाऽयुक्तत्वात् ॥ ६ ॥**

वाऽवधारणे । अन्ये एव तृणे उपादेये, न वेदिसंबन्धिनी । कुतः ? अयुक्तत्वादन्येषाम् । न च विनियुक्तं वचनमन्तरेणार्थान्तरे विनियोगमर्हति । तस्मादन्ये तृणे आदाय वेद्यां निदध्यादिति सूत्रार्थः ॥ ६ ॥

**अन्यत्रापि तृणार्थे ॥ ७ ॥**

अतोऽन्यत्रापि पवित्र-पशूपाकरण-ग्रहोपस्पर्शनाग्निमन्थनादौ तृणकार्ये अन्यान्येव तृणानि ग्रहीतव्यानि, न वेदिसंबन्धिनी ॥ ७ ॥

[ यूपाञ्जनं स्थालीस्थाज्यान्येनाज्येन कार्यम् ]

**यूपाञ्जने च सर्पिः ॥ ८ ॥**

यूपाञ्जनं घृतमन्यदेव लौकिकं ग्राह्यं, न स्थाल्यमाज्यम् ॥ ८ ॥

[ पुरोडाश–पयस्या–धानानां संस्कृतानां लौकिकानां वोपादानम् ]

**पुरोडाश–पयस्या–धानासु चेच्छन् ॥ ९ ॥**

"पुरोडाशमात्रामैन्द्रवायवे प्रास्यति, पयस्यां मैत्रावरुणे, आश्विने धानाः" (का० श्रौ० ९।११।२५) इति ज्योतिष्टोमे पुरोडाशादीनामैन्द्रवायवादिग्रहेषु प्रक्षेप उक्तः। ते च पुरोडाशादयः इच्छया लौकिका ग्राह्याः, इच्छया प्राकृता इति विकल्पः ॥ ९ ॥

[ विधृत्योरुपरि प्रस्तरस्तरणम् ]

**तयोः प्रस्तरꣳ स्तृणा"त्यूर्णम्रदस"मिति (२) ॥१०॥**

तयोर्विधृत्योरुपरि प्रागग्रं प्रस्तरं स्थापयेत् । पितृयज्ञे देवपितृभ्य इत्यूहः ॥१०॥

[ प्रस्तरं पाणिद्वयेनाभिन्यसेत् ]

**अभिनिदधा"त्यात्वा वसव" (३) इति ॥११॥**

अध्वर्युर्हस्तद्वयेन प्रस्तरं पीडयेत् ॥११॥

[ प्रस्तरं सव्येन स्पृशन्नेव तस्मिन् जुहूं प्रतिगृह्य निदध्यात् ]

**सव्याशून्ये जुहूं प्रतिगृह्य निदधाति "घृताची"ति (४) ॥१२॥**

अध्वर्युरग्नीधा समर्पितां जुहूमादाय सव्यहस्तेन अविमुक्ते प्रस्तरे प्रागग्रामासादयीत (५) ॥१२॥

---

(१) ॐ सवितुर्बाहू स्थः २ । ५ ।

(२) ॐ ऊर्णम्रदसं त्वा स्तृणामि स्वासस्थं देवेभ्यः २ । ५ ।

(३) ॐ आ त्वा वसवो रुद्रा आदित्याः सदन्तु २ । ५ ।

(४) ॐ घृताच्यसि जुहूर्नाम्ना सेदं प्रियेण धाम्ना प्रियꣳ सद आसीद २ । ६ ।

(५) गृहमेधीये ( का० श्रौ० ५।६।६–२५ ) आज्यरहितजुह्वासादने घृताच्यसीति पदद्वयं न प्रयोज्यम् । घृतमच्यते निधीयते यस्यामिति व्युत्पत्या घृताचीशब्दस्य समवेतार्थत्वात् ।

[ जुह्वपेक्षया नीचामुपभृतं, ततो नीचां ध्रुवां स्थापयेत् ]

**एवमितरे उत्तराभ्यां प्रतिमन्त्रं (१) बर्हिष्युपभृतं, ध्रुवां चावकृष्टेऽनुपूर्वम् ॥१३॥**

एवं प्रतिगृह्य जुह्वा इतरे द्वे स्रुचौ उपभृतं ध्रुवां च बर्हिषि अनुक्रमेण अवकृष्टे देशे जुह्वपेक्षया अधोदेशे उपभृतं, उपभृदपेक्षया अधो ध्रुवां चोत्तराभ्यां मन्त्राभ्यां प्रतिमन्त्रमासादयेत् ॥१३॥

[ पात्र्यां स्थानद्वये घृतेनोपस्तीर्य, पुरोडाशौ घृतेनाभिघार्योद्वुद्वास्योपस्तीर्णे निधाय घृतेनानक्ति ]

**पुरोडाशावभिघार्योद्वास्योपस्तीर्णे निधायाऽनक्ति "यस्ते प्राणः पशुषु प्रविष्टो देवानां विष्ठामनु यो वितस्थे। आत्मन्वान् सोम घृतवान्हि भूत्वाऽग्निं गच्छ स्वर्यजमानाय विन्दे"ति ॥१४॥**

अध्वर्युर्गार्हपत्यसमीपे गत्वा पुरोडाशौ घृतेनाभिघार्योद्वास्य पूर्वतरमुपस्तीर्णयोः पुरोडाशपात्र्योर्निधाय यस्त इति मन्त्रेणाऽऽवृत्याऽनक्ति। पुरोडाशपदं हविर्मात्रस्योपलक्षकम् ॥१४॥

**यथादेवतमन्यत् ॥१५॥**

अग्निं गच्छेत्यस्य 'स्थाने अग्नीषोमौ गच्छ' 'इन्द्राग्नी गच्छ'इत्यादि यथादेवतं प्रयोज्यम् ॥१५॥

[ कपालानां प्रत्येकं समन्त्रकममन्त्रकं वा घृतेनैपदञ्जनम् ]

**प्रत्यनक्ति कपालानि "यानि घर्मे कपालान्युप चिन्वन्ति वेधसः। पूष्णस्तान्यपि व्रत इन्द्रवायू विमुञ्चता"मिति ॥१६॥**

उपधानक्रमेण मन्त्रावृत्त्या प्रत्येकमञ्जनं कार्यम्। बहुवचनं पूजार्थम् ॥१६॥

**तूष्णीं वा ॥१७॥**

तूष्णीं वा कपालाञ्जनं, न मन्त्रेणेति विकल्पः ॥१७॥

**सङ्ख्ययोद्वासयति ॥१८॥**

प्रथममुद्वासयामि, द्वितीयमुद्वासयामि, तृतीयमु० इत्येवं सर्वेषां कपालानां सङ्ख्ययोद्वासनं कुर्यात्। एककपालेऽपि प्रथममुद्वासयामीति प्रयोगः प्रवर्त्तत एवेति कर्कादयः ॥१८॥

[ हवींषि मुख्यक्रमेण निधायाऽऽलभेत ]

**"प्रियेण धाम्ने"ति हवीꣳषि वेद्यां कृत्वा "ध्रुवा असद"न्निति सर्वाण्यालभते ॥१९॥**

प्रियेणेति मन्त्रेण (२) आवृत्त्या आज्यपुरोडाशादीनि हवींषि ध्रुवाया उत्तरतो वेद्यामासाद्य ध्रुवा (३) इति मन्त्रावृत्त्या आज्यस्थालीस्थाज्यस्य, जुहूपभृद्ध्रुवास्थस्याज्यस्य, पुरोडाशयोश्च उपयोगक्रमेणाऽऽलम्भनं कुर्यात् ॥१९॥

---

(१) ॐ घृताच्यस्युपभृन्नाम्ना से० द २। ६। ॐ घृताच्यसि ध्रुवा नाम्ना से० द २। ६।

(२) ॐ प्रियेण धाम्ना प्रियꣳ० सद आसीद। २। ६।

(३) ॐ ध्रुवा असदन्नृतस्य योनौ ता विष्णो पाहि पाहि यज्ञं पाहि यज्ञपतिम् २। ६।

[ अध्वर्युरात्मसंस्कारार्थमात्मानमालभेत ]

**"पाहि मा"मित्यात्मानम् (१) ॥२०॥**

अध्वर्युरात्मानमालभेत । हृदयं स्पृशेदित्यर्थः ॥२०॥

**अत्र वा व्रतोपायनमत्र वा व्रतोपायनम् ॥२१॥**

अस्मिन्नवसरे वा व्रतग्रहणं भवति पूर्वत्र वेति विकल्पः ॥२१॥

**इति कात्यायनश्रौतसूत्रे वृत्तौ द्वितीयोऽध्यायः ॥२॥**

---

(१) ॐ पाहि मां यज्ञन्यम् २ । १ ।

# तृतीयोऽध्यायः ।

[ वेद्या उत्तरश्रोणेरुत्तरतो होतृषदनं कुशास्तीर्णं संस्थाप्य समिधमादाय सामिधेन्यनुवचनार्थं होतारं प्रेष्येत् ]

**होतृषदनं कृत्वाऽपरेण वेदिᳬ श्रोणिं वोत्तरेणेध्मात्समिधमादायाऽ "ग्नये समिध्यमानायानुब्रूही" त्याह ॥१॥**

अध्वर्युर्वेदेः पश्चिमभागे वेदिश्रोणेरुत्तरभागे (१) वा होतुरुपवेशनार्थमुदगग्रं वारणादिवृक्षजं पीठं स्थापयित्वा इध्मादेकां समिधमादाय "अग्नये(२) समिध्यमानायानुब्रूहि" इति होतारं ब्रूयात्। होता सीदति यस्मिन् तद्धोतृषदनम्। करोतिरत्र स्थापनार्थो, न तूत्पादनार्थः। अपरेण वेदिमित्यनेन प्रदेशमात्रनिर्देशावगमात्। मध्ये क्रियान्तरकरणे प्रकरणविहित पदार्थानां पौर्वापर्यविच्छेदापत्तेश्च ॥ १ ॥

**होतरिति चैके ॥ २ ॥**

'अग्नये समिध्यमानाय होतरनुब्रूहि' इति प्रैषमेके वदन्ति ॥ २ ॥

[ स्विष्टकृतः प्राक् ऋचां निगदानां च प्रथमस्वरेण पाठः ]

**(३) प्रथमस्थानेन प्राक् स्विष्टकृतः ॥ ३ ॥**

स्विष्टकृद्यागानुष्ठानात्पूर्वं सर्वे ऋङ्मन्त्रा, निगदमन्त्राश्च उपांश्वपेक्षया(३) किञ्चिदुच्चैर्वक्तव्याः ॥ ३ ॥

[ स्विष्टकृतः प्रभृति इडान्तं तेषां मध्यमेन पाठः ]

**मध्यमेनेडायाः ॥ ४ ॥**

स्विष्टकृत्प्रभृति इडान्तं सर्वे मन्त्रा मध्यमेन स्वरेण प्रयोज्याः ॥ ४ ॥

[ इडात उत्तरं तेषामुत्तमेन पाठः ]

**शेषमुत्तमेन ॥ ५ ॥**

इडाप्रभृति कर्मसमाप्त्यन्तं सर्वे मन्त्रा उत्तमेन स्वरेण प्रयोज्याः ॥ ५ ॥

[ यजमानः "सन्तन्निव" इति मन्त्रं पठेत् ]

**"सन्तन्वन्निव मेऽनुब्रूही" त्याह यजमानः ॥ ६ ॥**

यजमानो ऽनेन मन्त्रेण होतारं प्रेषयेत्। प्रोषिते यजमाने अध्वर्युणाऽयं प्रैषो वाच्यः। सत्रेषु चैक एव वदेत्। एकेनैव प्रयुक्तेन होतृसंबोधनरूपस्य कार्यस्य प्रयुक्तत्वात् ॥ ६ ॥

---

(१) अपरेण वेदिम् इत्यस्य "एष वां लोक इत्युदङ्ङेजति" (श० ब्रा० १।५।१।२५) इति प्रकृत्य "अन्तरा वा एतदाहवनीयं च गार्हपत्यं चास्ते" (श० ब्रा० १।५।१।२५) इति लिङ्गावगतत्वात्, श्रोणेरुत्तरभागस्य च श्रुत्यवगतत्वात् श्रुत्या लिङ्गं बाधित्वा वेदिश्रोणेरुत्तरत एव होतृषदनं स्थापनीयमिति कर्काशयः।

(२) अत्र मन्त्रगतोऽग्निशब्दः अग्नित्वजातिवाचकः। अतो वरुणप्रघासादौ यत्र समिध्यमानाग्न्यनेकत्वं, तत्रापि अग्नये समिध्यमानायेत्येव मन्त्रः प्रयुज्यते। एवम् 'अग्निं संमृड्ढी' ( का० श्रौ० २।१।१२ ) त्यादौ सर्वत्रापि द्रष्टव्यम्।

(३) उपांश्वपेक्षया किञ्चिदुच्चैः स्वरेणोच्चारणं प्रथमस्थानम्। उपांशुलक्षणं च—"जिह्वोष्ठौ चालयेत् किञ्चिद्देवतागतमानसः। निजश्रवणयोग्यः स्यादुपांशु स जपः स्मृतः" इति।

[ पाद्याभ्यामङ्गुष्ठाभ्यां भ्रातृव्यावबाधनं क्रत्वर्थम् ]

**अङ्गुष्ठाभ्यां चावबाधते पाद्याभ्यां वेदमहममुमवबाध इति द्वेष्यम् ॥७॥**

यजमान इदमहमिति मन्त्रेण पादयोरङ्गुष्ठाभ्यां (शत्रुं मनसा स्मृत्वा) भूमिं पीडयेत् । वाऽवधारणे । अमुमित्यस्य स्थाने शत्रुनामोच्चार्यम् । सत्रे त्वेकः कुर्यात्(१) ॥ ७ ॥

[ द्वेष्याभावे भ्रातृव्यपदप्रयोगेणावबाधनम् ]

**अभावे द्विषन्तं भ्रातृव्यमिति वा ॥८॥**

द्वेष्यस्याभावे द्विषन्तमवबाधे, भ्रातृव्यमवबाध इति वा प्रयुञ्ज्यात् ॥ ८ ॥

[ सामिधेनीसङ्ख्यां ज्ञात्वा तत्सङ्ख्यापूरणप्रत्ययान्तं पञ्चदशेनेत्यादिकमवबाधनमन्त्रे प्रयोज्यम् ]

**यावत्सामिधेनि वेदेदमहं तावतिथेन वज्रेणेति ॥ ९ ॥**

यावत्यः सामिधेन्योऽस्मिन्कर्मणि इति यावत्सामिधेनि । अनुष्ठेयकर्मणि सामिधेनीगता सङ्ख्या यावती अस्ति इति जानाति अर्थात् सामिधेन्य ऋचः यावत्सङ्ख्याकाः सन्ति तावत्सङ्ख्यावाचकं पदमिदमहमित्यनन्तरमुच्चारयेत् । अयं भावः—इष्टिविशेषेषु क्वचित्पञ्चदश, क्वचिदेकविंशति सामिधेन्यः इति संख्याविशेषाः श्रूयन्ते । तत्र यत्र कर्मणि या सङ्ख्या, तद्वाचकं पदं तस्मिन्मन्त्रे संयोज्य उच्चारयेत् । यथा दर्शपूर्णमासेष्टौ इदमहं पञ्चदशेन, पश्वादौ इदमहं सप्तदशेन, प्राजापत्यपशौ इदमहमेकविंशेन, इष्टकापशौ इदमहं चतुर्विंशेनेति प्रयोगः । सूत्रे च तावतिथशब्देन तत्सङ्ख्याबोधकपूरणप्रत्ययान्तपदोच्चारणमभिप्रेतम् । अतः यत्र यत्र पित्र्येष्टौ (आश्व० श्रौ० २।१९) सामिधेनीत्रयम्, यत्र वा उपसत्सु सामिधेनीनवकं (आश्व० श्रौ० ४।८) तत्रापि तृतीयेन, नवमेनेत्यैव यथाक्रमं प्रयोगः ।

इदमहमित्यस्यापि क्रत्वर्थत्वात् एकेनैव करणेऽपि क्रतूपकारस्य जायमानत्वात्, पुरुषाभिलषितफलजनकत्वाभावाच्च एकः अविपरिणमय्यैव कुर्यात् ॥ ९ ॥

[ सामिधेन्यन्ते होत्रा क्रियमाणप्रतिप्रणवप्रयोगकालेऽध्वर्युरिध्माधानं कुर्यात् ]

**प्रतिप्रणवमाधानम् ॥१०॥**

होता सामिधेनीर्ऋचः पठन् एकैकस्या ऋचः अन्ते प्रणवं ब्रवीति । यदा स पठति तदा तदा अध्वर्युणा अग्नौ इध्माधानं कर्त्तव्यम् (२) ॥१०॥

["समिद्धो अग्न आहुत" इत्येतत्सामिधेन्यनुवचनात्पूर्वम् अनुयाजघटितेष्टौ एकवर्जमिध्मजातमग्नावभ्यादध्यात्]

**समिद्ध इति प्रागतः सर्वमिध्ममेकवर्जमनुयाजाश्चेत् ॥११॥**

समिद्ध इति प्रतीकात्प्राग्यः प्रणवस्तस्मिन्प्रणवे एकमिध्मकाष्ठं वर्जयित्वा अवशिष्टं सर्वमिध्ममाहवनीये प्रक्षिपेत् । पञ्चदशसामिधेनीपक्षे "प्रवो वाजा" (का० हौ० प० १।३) इत्यादयः एकादश सामिधेनीमन्त्रा भवन्ति । आद्यन्तमन्त्रयोस्त्रिस्त्रिरावृत्तिर्भवति । तेन पञ्चदश मन्त्राः

---

(१) यद्यपि माध्यन्दिनीयशाखायां "यं द्विष्यात्तमङ्गुष्ठाभ्यामवबाधेत" (श० ब्रा० १।३।५।७) इति सामान्यत उक्तं, तथापि कण्वशाखायाम् "पाद्याभ्यामङ्गुष्ठाभ्यामवबाधेत" (का० ब्रा० २।३।३।५) इति विशेषस्मरणात् सामान्यस्य विशेषे सङ्कोचस्यावश्यकत्वात् पाद्याभ्यामङ्गुष्ठाभ्यामेव द्विषतोऽवबाधनं कर्त्तव्यम् । अतश्च सूत्रस्थो वाशब्दो न विकल्पबोधकः । किन्तु अवधारणार्थ इति बोध्यम् ।

(२) इदं च सामिधेन्यनुवचनं,समिदाधानं च अग्न्यर्थम् । अतो न परस्परमङ्गाङ्गिभावः । अन्यर्थयोरनयोरत्र एककालिकत्वं विधीयते । अतश्च मानुपादपचारादनुक्तायां सामिधेन्यां सर्वेषु काष्ठेषु प्रक्षिप्तेष्वपि सामिधेन्यनुवचनं कर्त्तव्यमेव । अग्नीन्धनार्थत्वाच्चानयोः यत्राग्नीन्धनाभावोऽवभृथादौ, तत्रोभयोर्निवृत्तिः ।

सम्पद्यन्ते। अत्र वीतिहोत्रमिति (का० श्रौ० २।८।२) क्षिप्ता प्रथमा समित्, द्वितीया समिदसीति (२।८।३) प्रक्षिप्ता। ततो दशभिः सामिधेनीभिर्दश समिधः क्षिप्त्वा समिद्ध इति द्वादश्या ऋचा पञ्चेध्मानि प्रक्षिपेत्, एकं चानुयाजार्थमवशेषयेत्। इत्थमष्टादशानामिध्मानां (१) विनियोगः कार्य इति भावः। समिद्धो अग्न आहुतेति ऋचं यदा होता पठितुमारभते ततः पूर्वमेव अनुयाजार्थमेकां समिधमवशेष्य अवशिष्टान् सर्वानपि इध्मानग्नौ प्रक्षिपेदध्वर्युः। प्रकृतौ अनुयाजानां विकल्पाभावात् चेदिति शब्दो विकृतिविषयः।

यत्र च सामिधेनीविवृद्धिस्तत्र विवृद्धसङ्ख्यापूरणार्थमग्निदेवताकानामृचामानयनं क्रियते। आनीतानामृचां द्वादश-त्रयोदशमन्त्रयोर्मध्य एव पाठः। द्वादशो मन्त्रः समिध्यमानपदघटितः। त्रयोदशो मन्त्रः समिद्धपदघटितः। अतस्तयोः समिध्यमान-समिद्धवती इति संज्ञा। "समिध्यमानवतीं समिद्धवतीं चान्तरेण धाय्याः स्युः" ( तै० सं० ५।३।४।५।३।३ ) इति वचनात् ॥११॥

[ सामिधेन्यनुवचनान्ते वेदेनाहवनीयस्य त्रिरुपवाजनमदृष्टार्थं, स्रुवेण पूर्वाघारः, अग्निसंमार्गश्च ]

**अनुवचनान्ते वेदेनाहवनीयं त्रिरुपवाज्य स्रुवेण पूर्वमाघारमाघार्याऽऽहा'ऽग्निमग्नीत्संमृड्ढी'ति ॥१२॥**

सामिधेन्यन्ते वेदेन व्यजनस्थानापन्नेनाहवनीयमग्निं त्रिरुपवाज्य स्रुवेण प्रथमाघारं हुत्वा "अग्निमग्नीत्सम्मृड्ढि" इति प्रैषमग्नीधं प्रति ब्रूयात्। उपवाजनस्यादृष्टार्थत्वादवभृथे जलादावपि प्रवृत्तिः। अपोऽग्नीत्समड्ढीति तत्र प्रैषः। एवं यावदुक्तेऽपि प्रवृत्तिः। यावदुक्तस्वरूपं पूर्वमुक्तम् ( २।२१ टिप्पण्याम् ) संस्कारकत्वाच्चोपवाजनं यावदुक्ते प्रवर्त्तते। अत्र च प्रजापतिर्देवता। साऽपि त्यागमात्र एव। स्वाहाकारोऽत्र न भवति। "न स्वाहा" (श० ब्रा० १।४।६।५) इति निषेधात्। प्रधानकर्मत्वात्पूर्वाघारो यावदुक्ते न भवति ॥१२॥

[ इध्मसन्नहननदर्भैः परिक्रम्य परिक्रम्य परिधिमनुलक्ष्याग्निं प्रदक्षिणक्रमेण त्रिस्त्रिरग्नीत्संमार्ष्टि ]

**इध्मसन्नहनैरनुपरिधि सम्मा"ष्ट्यग्ने वाजजि"दिति(२) त्रिस्त्रिः परिक्रामम्॥१३॥**

इन्ध्मबन्धनार्थैस्तृणैरग्नीत् पूर्वेण परिक्रम्य यजतिस्थानस्थः संमार्ज्य द्विस्तूष्णीं मार्जयेत्। ततोऽप्रादक्षिण्येन यजतिस्थानमागत्य पश्चिमपरिधिमुदक्संस्थं सकृन्मन्त्रेण द्विस्तूष्णीं संमार्जयेत्। ततः पुनः प्रदक्षिणं परीत्य जुहोतिस्थानमागत्य उत्तरपरिधि सन्निधावग्निं प्राक्संस्थं तथैव सम्मार्जयेत्। पुनरप्रादक्षिण्येन परिक्रम्योत्तरतः स्थित्वा मध्ये तूष्णीं त्रिः संमार्जयेत् (३)। यावदुक्तेऽप्ययं सम्मार्गः, आहवनीयसंस्कारत्वात्। अदृष्टार्थत्वादबादावपि भवति। तत्र आपो वाजजितो वाजं वः सरिष्यन्तीर्वाजजितः सम्माज्र्मीत्यूहः। अनुपरिधीति परिधिसमीपे इत्यर्थः। अग्निं संमृड्ढि इति प्रैषबलात्, सूत्राच्च अयं सम्मार्गः केवलमग्निसंस्कारक एव। न तु कल्पान्तरवत् परिधिसंस्कारकोऽपि। आपस्तंबस्तु "अग्नीत्परिधींश्चाग्निं च त्रिस्त्रिः संमृड्ढीति संप्रेष्यति" (२।१२।१०) इति परिधीनां संस्कारकत्वमप्यभिप्रैति। एवमग्रेऽपि (३।५।४) सकृत्सम्मार्गोऽग्नेरेव द्रष्टव्यः ॥१३॥

---

( १ ) अत्र ऋग्विवृद्धावपि काष्ठवृद्धेर्निष्प्रमाणकत्वात्, सामिधेनीनामिध्मकाष्ठस्य च परस्परमङ्गाङ्गिभावाभावाच्च 'समिद्धो अग्न' इत्यतः प्रागेव सर्वेषां काष्ठानामग्नौ प्रक्षेपणमिति।

( २ ) ॐ अग्ने वाजजिद्वाजं त्वा सरिष्यन्तं वाजजितं॰ संमार्ज्मि २।७।

( ३ ) "तूष्णीमुपरि" इति वक्ष्यमाण सूत्रे "परिक्रामम्" इति णमुल्वचनानुवृत्तिसामर्थ्यात्परिक्रम्येत्यत्रापि भवति इति कर्कोक्त्या त्रिवारं परिक्रमणं बोध्यते।

[ मध्ये तूष्णीं संमार्गः ]

तूष्णीमुपरि ॥१४॥

पुनरप्रादक्षिण्येन परिक्रम्य उत्तरतः स्थित्वा मध्ये तूष्णीं त्रिः प्राक्संस्थं सम्मार्जयेत् ॥१४॥

[ आहवनीयस्य पश्चिमतो देवेभ्यः पुटाञ्जलिं करोति, दक्षिणतः पितृभ्य उत्तानं सव्येनैव ]

अपरमाहवनीयादञ्जलिं करोति 'नमो देवेभ्यः' 'स्वधा पितृभ्य' इति दक्षिणत उत्तानम् ॥१५॥

अध्वर्युर्जुहूपभृतोः पुरस्तादाहवनीस्य पश्चात् "ॐ नमः देवेभ्यः" (शु० य० २।७) "ॐ स्वधा पितृभ्यः (७।२) इति अञ्जलिपुटं निदधाति। तस्मादञ्जलिकरणस्थानाद्दक्षिणतो द्वितीयमञ्जलिमुत्तानं करोति। "स स्रु चोत्तरमाघारमाघारयिष्यन् पूर्वेण स्रुचावञ्जलिं निदधाति" (श० ब्रा० १।४।४।२) इति श्रुतेरञ्जलिकरणद्वयस्यापि उत्तराघारार्थत्वावगमात् यत्र उत्तराघाराभावः, तत्र अञ्जलिकरणस्याप्यभावः ॥१५॥

[ जुहूपभृतावादाय जुहूमुत्तरां कृत्वा होमार्थं यागस्थानं गच्छेत् ]

अप(१) उपस्पृश्य "सुयमे (२) म" इति(३) जुहूपभृतावादायोत्तरां जुहूं कृत्वा दक्षिणाऽतिक्राम"त्यङ्घ्रिणा विष्ण"विति(४) ॥ १६ ॥

प्रथमं हस्ताभ्यां जुहूमादाय उपभृत उपरि निधाय ततः सुयमे म इति मन्त्रान्ते जुहूपभृतौ सहैव दक्षिणेन गृहीत्वा दक्षिणस्यां दिशि यजतिस्थानं गच्छेत् ॥ १६ ॥

[ सर्वहोमार्थं परिधिपश्चिमतो गच्छेत् ]

परिधीनपरेण सञ्चरो होष्यतः ॥ १७ ॥

परिधीनां पश्चात् स्रुचां पूर्वेण होमं करिष्यतोऽध्वर्योर्गमनागमनमार्गो वेदितव्यः॥१७॥

[ यागदेशं गच्छन् सव्येन पादेनाऽतिक्रामेत्, प्रत्यागच्छन् दक्षिणेन पादेनातिक्रामेत् ]

सव्येनेतो, दक्षिणेनामुतः ॥१८॥

इतो जुहोतिस्थानाद्यजतिदेशं गच्छन्नध्वर्युः सव्येन पादेन गच्छेत्। अमुतो यजतिदेशात्प्रत्यागच्छन्दक्षिणेन पादेनाऽऽगच्छेत्। एकैकेन पादेन गन्तुमशक्यत्वात् तस्य प्रथमप्रवृत्तिर्विवक्षिता। उत्तरतो जुहोतिस्थानम्, दक्षिणतो यजतिस्थानं भवति ॥ १८ ॥

[ अवस्थायैवोत्तराघारं जुहुयात् ]

"वसुमतो"मित्यवस्थाय(५) ॥ १९ ॥

यजतिदेशे ईशानाभिमुखस्तिष्ठेदध्वर्युः ॥१९॥

इति कातीयश्रौतसूत्रवृत्तौ तृतीयाध्याये प्रथमा कण्डिका ॥१॥

---

(१) पित्र्यत्वादेव प्राप्तस्य अपामुपस्पर्शनस्य विधानमपसव्यादिनिवृत्त्यर्थम्। तेन पित्र्यञ्जलिकरणं सव्यादिनैव भवति।

(२) "सुयमे मे" इति मन्त्रेण स्रुगादानमुत्तराघारावान्तरप्रकरणात्तदर्थमेव। एवम् "अङ्घ्रिणा विष्णो" इति मन्त्रेण दक्षिणातिक्रमणं "वसुमतीम्" इत्यवस्थानं च उत्तराघारार्थमेव। तदीयावान्तरप्रकरणात्। ततश्च अन्यकर्मणि स्रुगादानं, दक्षिणातिक्रमणम्, अवस्थानं च अमन्त्रकमेव भवतीति बोध्यम्।

(३) ॐ सुयमे मे भूयास्तमस्कन्नमद्य देवेभ्य आज्यꣳ संभ्रियासम् २।७-८।

(४) ॐ अङ्घ्रिणा विष्णो मा त्वाऽवक्रमिषम् २।८।

(५) ॐ वसुमतीमग्ने ते च्छायामुपस्थेषं विष्णो स्थानमसि २।८।

"इत इन्द्र" इति जुहोत्युत्तराघारम् ॥ १ ॥

अत्र च देवता इन्द्रः। 'इत इन्द्र' इति (१) मन्त्रे इन्द्रस्यैव विधानात्। अतो दर्विहोमेषु इन्द्राय स्वाहेति प्रयोगः। दर्विहोमेषु स्थाल्याज्यादेव एकगृहीतेन स्रुवेण होमः। अयमपि अदर्थत्वाद्यावदुक्ते न भवति (२) ॥ १ ॥

[ उत्तराघारमाघार्य स्रुचौ परस्परमसंस्पर्शयन् यागस्थानादेत्य ध्रुवां जुहूस्थितेनैवाज्येन समनक्ति ]

आघार्यासꣳस्पर्शयन् स्रुचावेत्य जुह्वा ध्रुवाꣳ समनक्ति "सञ्ज्योतिषे"ति (३) ॥ २ ॥

आघारानन्तरं जुहूप्रभृतोः परस्परं स्पर्शमकुर्वन्नेव यजतिस्थानाद्वेदेः पश्चादागत्य जुहूस्थेनाज्येन ध्रुवास्थमाज्यं जुह्वैव समञ्ज्यात्। ध्रौवाज्यमध्ये जुह्वाऽऽज्यबिन्दुं पातयेदित्यर्थः। अत्र गच्छतामित्यध्याहारः। यद्यपि इदं ध्रुवासंस्कारः, तथापि उत्तराघारे सत्येव प्रवर्त्तते। उत्तराघारलोपे तु तल्लोप एव ॥ २ ॥

[ इध्मसन्नहनाद्यादायाध्वर्युराश्रावयेत् ]

निधायेध्मसन्नहनान्यादा 'योश्रावये' त्याह ॥ ३ ॥

स्रुचौ स्वस्थाने निधाय अध्वर्युर्होतारमुत्तरेण गत्वा उत्करस्य पश्चात्प्राङ्मुखः स्थित इध्मसन्नहनानि गृहीत्वा 'ओ३श्रा३वय' इति ब्रूयात् ॥ ३ ॥

[ अग्नीत्प्रत्याश्रावयेत् ]

'अस्तु श्रौष' डित्यग्नीत् ॥ ४ ॥

अध्वर्योरुत्तरतो दक्षिणामुखः स्थितोऽग्नीत् अस्तु श्रौ३षट् इति ब्रूयात् ॥ ४ ॥

[ वेदिबर्हिरादाय वा, इध्मशकलमपच्छिद्याऽऽदाय वा ऽऽश्रावयेत् ]

वेदिबर्हिरिध्मशकलमपच्छिद्यैके ॥ ५ ॥

एके आचार्याः वेद्यां स्तृतं बर्हिर्गृहीत्वा आश्रावयेत्, अथवा इध्मशकलमपच्छिद्य गृहीत्वा वा आश्रावयेदिति वदन्ति ॥ ५ ॥

[ सर्वत्राऽऽश्रावणमध्वर्युः प्रत्याश्रावणमग्नीत्कुर्यात् ]

एवꣳ सर्वत्राऽऽश्रुत—प्रत्याश्रुतेषु ॥ ६ ॥

एवं सर्वत्राऽऽश्रावणमध्वर्युः, प्रत्याश्रावणमग्नीत्कुर्यात्। उपग्रहद्रव्याणि इध्मसन्नहनादीनि तु होतृवरणे एव ग्राह्याणीति कर्कः ॥ ६ ॥

[ गृहीतेध्मसन्नहन एवाध्वर्युराश्रावण-प्रत्याश्रावणोत्तरं होतृसंस्काराय प्रवृणीते अग्निर्देव इत्यादिना ]

अथ प्रवृणीते "ऽग्निर्देवो दैव्यो होता देवान्यक्षद्विद्वांश्चिकित्वान्मनुष्व-द्भरतवत् ॥ ७ ॥

---

(१) ॐ इत इन्द्रो ऽवीर्यमकृणोदूर्ध्वोऽध्वरऽ आस्थात्। अग्ने ऽवेर्होत्रं वेर्दूत्यमव तां त्वां द्यावापृथिवीऽअव त्वं द्यावापृथिवी स्विष्टकृद्देवेभ्यऽ इन्द्रऽ आज्येन हविषा भूत्स्वाहा २। ८-९।

(२) "चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्य त्रिरितः प्राचीनं प्रयाजान्यजति" (आप० श्रौ० ३।५।१) "स यच्चतुर्जुह्वां गृह्णाति प्रयाजेभ्यो हि तद् गृह्णाति" (श० ब्रा० १।३।२।८) इति वचनात् प्रयाजार्थद्रव्यादेव आघारस्य क्रियमाणत्वावगमात् यत्र तदभावस्तत्र आघारस्य परमवश्यकर्त्तव्यत्वात् स्थाल्याज्यादेव सकृद्गृहीतेन होमः।

(३) ॐ सं ज्योतिषा ज्योतिः गच्छताम् २। ९।

अध्वर्युः अग्निर्देव इति मन्त्रेण होतारं वृणुयात् । अग्निर्देव इत्यत्र मानुषस्यैव होतुः स्तुतये देवतात्वारोपो, न तु प्रधानाग्नेः स्विष्टकृदग्नेर्वा तत्रोपादानम् । यष्टुरग्नेरग्निसादृश्यासंभवात् । ततश्च सौर्यादौ अवभृथेष्टौ च अविकृतस्यैव पाठः ॥ ७ ॥

[ यजमानार्षेयाणि वृणीते ऽध्वर्युः ]

**अमुवदमुवदिति यजमानार्षेयाण्याह परस्तादर्वाञ्चि त्रीणि ॥ ८ ॥**

अध्वर्युर्भरतवत् इत्यन्तं पूर्वमन्त्रमुक्त्वा अमुवदित्यस्य स्थाने यजमानसंबन्धीनि पूर्वजभूतानि परस्तात्पितृस्थानीयादर्वाञ्चि पितृ-तत्पुत्र-तत्पौत्ररूपाणि त्रीणि ऋषेरपत्यानि वृणुयात् । अर्थात् ये यस्य यजमानस्य मन्त्रकृतस्तेषां मध्ये त्रयाणां नाम गृहीत्वा वरणं कुर्यात् । यथा गोतमगोत्रिणो यजमानस्य गोतमवत् भरतवत् अङ्गिरोवत् इत्युच्चार्य ब्रह्मण्वदा च वक्षदिति वक्ष्यमाणं मन्त्रं ब्रूयात् ॥ ८ ॥

**यावन्तो वा मन्त्रकृतः ॥ ९ ॥**

अथवा यजमानस्य कुले यावन्तो मन्त्रद्रष्टारः प्रवराध्याये श्रुतास्तेषां सर्वेषां नाम वृणुयात् , न त्रीण्येवेति नियमः । मन्त्रकृतश्च केषांचिदेकः, केषांचिद् द्वौ, केषांचित् त्रयः, केषांचित्पञ्चेत्यादि । तेन यस्य यावन्त उक्तास्तावन्तो वरणीयाः ।

अयं भावः । आर्षेयप्रकरणे "आर्षेयं वृणीते" इत्याम्नाय अनन्तरं "एकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते, न चतुरो वृणीते, न पञ्चातिवृणीते" (आप० श्रौ० २।१६।८) इति श्रूयते। तत्र त्रीन् वृणीत इत्यस्यैव यदि विधायकत्वमङ्गीक्रियेत तर्हि त्रयाणामेव वरणं प्राप्तमिति कृत्वा पूर्वसूत्रं प्रवृत्तम् । यदा तु आर्षेयं वृणीते इत्यस्यैव विधायकत्वमङ्गीक्रियते तदा एकं वृणीत इत्यादीनामर्थवादत्वमङ्गीकार्यम् । एवं च सर्वेषां मन्त्रदृशां वरणं प्राप्तमिति कृत्वा उत्तर-सूत्रं प्रवृत्तम् ॥९॥

[ राज्ञः स्वार्षेयेण पुरोहितार्षेयेण वा वरणम् ]

**पुरोहितार्षेयेण वा ॥ १० ॥**

अध्वर्युः राज्ञो यजमानस्य पुरोहितार्षेयाणि वा, राज्ञः आर्षेयाणि वा वृणुयात् ॥१०॥

**क्षत्रियवैश्ययोश्च नित्यम् ॥११॥**

अभिषेकक्रियारहितस्य क्षत्रियस्य वैश्यस्य च नित्यं पुरोहितार्षेयेण वरणम् ॥११॥

[ सर्वेषां ब्राह्मणादीनां मनुवदिति वा वरणम् ]

**मनुवदिति वा सर्वेषाम् ॥ १२ ॥**

अथवा सर्वेषां ब्राह्मणादीनामार्षेयस्थाने मनुवत् इत्येतत्पदं सकृत्प्रयोज्यम् ॥१२॥

[ यजमानार्षेयप्रवरणान्ते "ब्रह्मण्वत्" इत्यादिकं होतृनामग्रहणान्तं मन्त्रं ब्रूयात् ]

**"ब्रह्मण्वदा च वक्षद् ब्राह्मणा अस्य यज्ञस्य प्रावितारोऽसौ मानुष" इति होतृनामग्रहणम् ॥१३॥**

आर्षेयोच्चारणानन्तरं ब्रह्मण्वदित्यादि मन्त्रशेषं ब्रूयात् । असौ मानुष इत्यस्य स्थाने अमुकशर्मा होता मानुष इति ब्रूयात् ॥१३॥

[ उपांशु वा होतुर्नाम गृह्णीयात् ]

**उपाᳬशु वा ॥१४॥**

होतृनामग्रहणमुपांशु उच्चैर्वा कुर्यात्। होतृवरणं होतुरदृष्टसंस्कारः। अतो यावदुक्तेऽपि प्रवर्त्तते ॥१४॥

[ होत्रा संमृष्टौ अध्वर्य्वग्नीधौ उपविशतः ]

**सम्मृष्टा उपविशतः ॥१५॥**

वरणानन्तरं होता अध्वर्युमग्नीध्रं चांसदेशे संमृशति। तौ चाध्वर्य्वग्नीधौ होत्रा सम्मृष्टौ सन्तौ उपविष्टौ भवेताम् ॥१५॥

[ अग्निर्होतेति स्रुगादापनमन्त्रस्य अवान्तरप्रकरणरूपसन्निधेः प्रयाजाङ्गत्वम् ]

**अग्निर्होतेति स्रुगादापनं प्रयाजेषु, सन्निधेः ॥१६॥**

"अग्निर्होता" (का० हौ० प० १।४) इति मन्त्रे होत्रा पठ्यमाने अध्वर्युणा स्रुचोरादानं कार्यम्। अन्यत्र तु तूष्णीमेव स्रुगादानं न मन्त्रपाठ इति भावः। कुतः ? प्रयाजसन्निधौ स्रुगादापनस्य पाठात्। अतः पश्चावेकादशप्रयाजोत्कर्षे(१) पुनरुच्चारणम् ॥१६॥

[ घृतवतीमिति मन्त्रे होत्रा पठिते अध्वर्युः स्रुचावादायातिऽऽक्रम्याऽऽश्राव्य 'समिधो यज' इति प्रेष्य होत्रा वषट्कृते समिद्धतमे जुहुयात् ]

**घृतवतीमित्युक्ते स्रुचावादायाऽतिक्रम्याऽऽश्राव्याह 'समिधो यजे'ति पञ्च प्रयाजान्त्समिद्धतमे ॥१७॥**

होत्रा "घृतवतीम" (का० हौ० प० १।४) इति मन्त्रे उक्ते अध्वर्युः स्रुचौ गृहीत्वा यजतिदेशं गत्वा औश्रावय इत्युक्त्वा समिधो यज इति होतारं ब्रूयात्। पञ्च(२)प्रयाजान् पुरोऽनुवाक्या (३) रहितान् सकृदतिक्रान्त एव समिद्धतमेऽग्नौ जुहुयात् ॥१७॥

[ द्वितीयादिप्रयाजेषु यज यजेत्येव प्रैषः ]

**यज यजेति शेषम् ॥१८॥**

द्वितीयप्रभृतिप्रयाजेषु यज यज इत्येव प्रैषं होतारं प्रति ब्रूयात् ॥१८॥

[ एकत्रैव तिष्ठन् समिद्धतमे पञ्चापि प्रयाजान् जुहुयात् ]

**ध्रुवस्तिष्ठन् ॥१९॥**

एकस्मिन् स्थाने स्तंभ इव तिष्ठन् पञ्च प्रयाजान्यजेत। अपक्रमकारणे सत्यपि नापक्रामेदित्यर्थः ॥१९॥

---

(१) अयं मन्त्रः प्रयाजसन्निधानात्प्रयाजाङ्गभूतस्रुगादानार्थं एव। अतश्च अन्यत्र तूष्णीं स्रुगादानम्। पशुयागे च एकादश प्रयाजा विहिताः (का० श्रौ० ६।४।७।)। तत्र प्रथमतो दश प्रयाजानिष्ट्वा (का० श्रौ० ६।४।९) एकादशप्रयाजार्थं जुह्वामाज्यमवशिष्य स्थापनीयम्। स च एकादशः प्रयाजो वपाभिघारणानन्तरं कर्त्तव्यः (का० श्रौ० ६।७।१८)। तदर्थं च पूर्वं स्थापिता जुहूर्ग्रहीतव्या। तद्ग्रहणकालेऽपि अग्निर्होतेति मन्त्रः पठनीयः।

(२) "समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहा यजति" (तै० सं० २।६।१) इति पञ्च प्रयाजाः। अत्र तनूनपान्नाराशंसयोर्विकल्पः। शतपथे विशेषाश्रवणेऽपि का० होत्र परिशिष्टे (१।४) विशिष्य विधानात्।

(३) "अथ यदपुरोऽनुवाक्यकाः प्रयाजा भवन्ति" (श० ब्रा० ११।४।१।१२) इति श्रुतेः।

पक्षान्तरमाह—

**पूर्वं पूर्वं वा ऽभिक्रामम् ॥२०॥**

अथवा प्रतिप्रयाजमाहवनीयसम्मुखं गत्वा गत्वा पूर्वं पूर्वं प्राक्संस्थपङ्क्त्या। पञ्चापि प्रयाजान् पृथक्पृथक्स्थाने प्राक्संस्थान् जुहुयात् ॥२०॥

[ जुह्वां चतुर्गृहीतेन त्रीन् प्रयाजान् हुत्वा चतुर्थ पञ्चमप्रयाजार्थं जुह्वामुपभृत आनयति ]

**उपभृतो जुह्वामानयत्यनवमृशंश्चतुर्थम् ॥ २१ ॥**

उपभृति गृहीतस्य मध्ये, अर्द्धाज्यस्य प्रयाजार्थत्वाच्चतुर्थप्रयाजं प्रति उपभृतः सकाशादर्धमाज्यं जुह्वामासिञ्चेत् उपभृता जुह्वाः स्पर्शमकुर्वन् ॥२१॥

[ प्रयाजवृद्धौ चतुर्थे चतुर्थे उपभृतः समानयनम् ]

**एवं प्रवृद्धौ ॥२२॥**

एवं प्रयाजवृद्धौ चतुर्थे समानीय चतुर्थमारभ्य पुनश्चतुर्थे = सप्तमे, पुनश्च सप्तममारभ्य चतुर्थे = दशमे समानयनं कार्यम् ॥२२॥

[ अनुयाजवृद्धौ च चतुर्थे चतुर्थे समानयनम् ]

**अनुयाजेषु च ॥२३॥**

अनुयाजवृद्धावपि चतुर्थ-सप्तम-दशमेषु समानयनं कार्यम् ॥२३॥

[ जुहूमध्युह्याध्युक्ष्य प्राचीमवतार्य सर्वत्र जुहुयात् ]

**उत्तरां जुहूमध्युह्य प्राचीमवहृत्य जुहोति ॥२४॥**

उपभृत उपरि स्थितां जुहूमुपभृदग्रेणावतार्य प्रथमं प्रयाजमिष्ट्वा पुनस्तेनैव मार्गेण उपभृत उपरि निधाय पुनस्तथैव अवहृत्योत्तार्य द्वितीयं जुहुयात्। एवं प्रति प्रयाजमध्युह्याध्युह्य जुहुयात्, न सकृदवतारितया होम इत्यर्थः। अध्यूहनमुपभृत उपरि निधानम्। अवहरणमुत्तारणम् ॥२४॥

**एवठं० सर्वत्र ॥२५॥**

न प्रयाजमात्रे एवैतदवतारणमध्यूहनं च, किन्तु होममात्रे ॥२५॥

इति कातीयश्रौतसूत्रवृत्तौ तृतीयाध्याये द्वितीया कण्डिका ॥२॥

---

[ जुहूपभृतोः सर्वहोमेषु नाभिदेशे धारणम् ]

**नाभिदेशे धारणम् ॥ १ ॥**

सर्वत्र होममात्रे जुहूपभृतोर्नाभिदघ्ने देशे धारणं कार्यम् ॥१॥

**प्रयाजानुमन्त्रण "मेको ममैका तस्य योऽस्मान्द्वेष्टि यं च वयं द्विष्म" इति ॥२॥**

कुर्यादिति शेषः। प्रथमे प्रयाजे इष्टे यजमानः एको ममेति पठेत् ॥२॥

**एवं मिथुनैर्यथासङ्ख्यम् ॥३॥**

एवं मिथुनैः = द्वौ मम द्वे तस्येत्यादिभिर्यथासङ्ख्यमनुमन्त्रयेत्।

द्वितीय-तृतीय-चतुर्थप्रयाजेषु इष्टेषु क्रमेण द्वौ मम द्वे तस्य योऽस्मा० ष्मः, त्रयो मम तिस्रस्तस्य यो०, चत्वारो मम चतस्रस्तस्य यो० इत्यादिकमनुमन्त्रणं कुर्यादित्यर्थः ॥३॥

**न तस्य किञ्चनेति पञ्चमे ॥४॥**

पञ्चमे प्रयाजे इष्टे 'पञ्च मम न तस्य किञ्चन यो० द्विष्म' इति मन्त्रं यजमानो ब्रूयात् ॥४॥

**त्विषिमान, पचितिमान्, यशस्वी, ब्रह्मवर्चस्य, न्नाद इति च ॥५॥**

पञ्चसु प्रयाजेषु एको ममेत्यादिकमेकैकं मन्त्रमुक्त्वा ततः प्रतिमन्त्रं क्रमेण त्विषिमान् इत्यादिभिः पञ्चभिर्मन्त्रैरनुमन्त्रणं कुर्यात्। पञ्चसु मन्त्रेषु भूयासम् इत्यध्याहारः। एतेन प्रतिप्रयाजमनुमन्त्रणद्वयं कार्यम्। अतश्च असंहितावत्प्रयोगः। अनुमन्त्रणस्याराद्‌दुपकार-कत्वेनादृष्टार्थत्वात् प्रोषितोऽपि यजमानस्तत् कुर्यात् ॥ ५ ॥

[ प्रयाजवृद्धौ आगन्तूनां प्रयाजानां पञ्चमधर्मसंबन्धः ]

यत्र प्रयाजादौ प्रकृतिसङ्ख्यातोऽधिकसङ्ख्या नवैकादशत्वादिका विकृतौ विहिता, तत्र सर्वेषां प्रयाजानामावृत्तौ प्राप्तायाम् आगन्तूनां प्रयाजानां सर्वप्रयाजधर्मप्राप्तौ इदमुच्यते—

**आगन्तूनां चतुर्थपञ्चमाभ्यां, स्थानात् ॥ ६ ॥**

आगन्तूनां प्राकृतसङ्ख्यातोऽधिकानां विकृतिमात्रविहितानां प्रयाजानां चतुर्थात् पञ्चमाच्च प्रयाजात् यो धर्मः प्राप्तः अनुमन्त्रणादिरूपः, स धर्मो विज्ञातव्यः। अर्थात् प्रथम-द्वितीय-तृतीयानां प्रयाजानामनुमन्त्रणं प्रकृतिवत्कृत्वा चतुर्थप्रयाजानुमन्त्रणेन चतुर्थप्रभृति सप्तम-प्रयाजपर्यन्ताननुमन्त्र्य शेषान् पञ्चमप्रयाजानुमन्त्रणेनानुमन्त्रयेत्। कुतः ? स्थानात्, तत्रैव आगन्तूनां पाठादित्यर्थः ॥ ६ ॥

पक्षान्तरमाह—

**प्रथम–चतुर्थाभ्यां वा यथालिङ्गम् ॥ ७ ॥**

प्रथमात् चतुर्थाच्च यो धर्मः प्राप्तस्तेन सह इतरेषां प्रयाजानां धर्मसंबन्धः कर्तव्यः। अर्थात् प्रथमस्य बहुदेवत्यत्वात् आगन्तुषु ये बहुदेवत्याः प्रयाजास्तेषां प्रथमप्रयाजधर्मः। चतुर्थप्रयाजस्यैकदेवत्यत्वात् ये एकदेवत्याः प्रयाजास्ते चतुर्थधर्मकाः कार्याः ॥ ७ ॥

सिद्धान्तमाह—

**सर्वान्वोत्तमेनोपायित्वात् ॥ ८ ॥**

वाशब्दः पक्षं व्यावर्त्तयति। अथवा अन्तिमप्रयाजधर्मेण सह सर्वान् प्रयाजान् संब-ध्नीयात्। कुतः ? उपायित्वात्। तमेव पञ्चमं प्रयाजं प्रति आगन्तूनामागतत्वात्। आगन्तूनाम न्तेऽभिनिवेश (पू० मी० ५।२। सू० १९) इति न्यायादिति भावः। अतश्च नवप्रयाजपक्षे एका-दशप्रयाजपक्षे च चतुरः प्रयाजान्प्रकृतिवदिष्ट्वा शेषेषु प्रयाजेषु पञ्च ममेत्येवानुमन्त्रणम् ॥ ८ ॥

[प्रयाजान् हुत्वा यागस्थानादेत्य जुह्वा ध्रुवाया आग्नेयादिहविषामुपभृतश्चाभिघारणं जुह्वरिक्ततार्थं, न स्थाल्याः]

**एत्य जुह्वाऽभिघारणं ध्रुवाया हविष उपभृतश्च ॥ ९ ॥**

यजतिस्थानाद्वेदेः पश्चादागत्योपविश्य जुह्वस्थेनाज्यशेषेण जुह्वैव ध्रुवायाः, आग्नेयाग्नी-

षोमीययोः पुरोडाशयोः, उपभृतश्च क्रमेणाभिघारणं (१) कुर्यात्। ध्रुवादीनामुपादानं स्थाली-व्युदासार्थम्। तेन स्थाल्याज्यस्य नाभिघारणम्। अभिघारणं च प्रयाजशेषप्रतिपत्तिः। आज्य-भागार्थं जुह्वा रिक्तीकरणरूपदृष्टार्थत्वात्। हविःसंस्कारार्थत्वे अदृष्टार्थत्वात्। अतोऽसन्निहित-पशुपुरोडाशाभिघारणार्थं न प्रयाजशेषः स्थापनीयः ॥ ६ ॥

[ प्रयाजानन्तरमाज्यभागानुष्ठानम् ]

**आज्यभागाभ्यां चरत्याग्नेयेन सौम्येन ॥ १० ॥**

आज्यभागसंज्ञकं कर्म करोति। तत्र एकोऽग्निदेवत्यः, अपरः सोमदेवत्यः ॥ १० ॥

[ सवषट्कारास्वाहुतिषु चतुरवत्तं होतव्यम् ]

**चतुरवत्तꣳ सवषट्कारासु ॥ ११ ॥**

सवषट्कारास्वाहुतिषु स्रुवेण चतुर्गृहीतमाज्यं जुहुयात् ॥११॥

[ 'आप्यायताम्' इति मन्त्रेण ध्रुवामभिघारयेत् ]

**अनिधायावदायावदाय ध्रुवामभिघारय''त्याप्यायतां ध्रुवा हविषा घृतेन यज्ञं यज्ञं प्रति देवयद्भ्यः। सूर्याया ऊधो अदित्या उपस्थ ऽउरुधारा पृथिवी यज्ञे ऽअस्मि''न्निति ॥१२॥**

अध्वर्युः जुहूपभृतौ स्वस्थाने अनिधाय वामहस्ते धृत्वैव चतुरवत्तिनश्चतुर्वारं, पञ्चा-वत्तिनः पञ्चवारं ध्रुवातो जुह्वामाज्यं तूष्णीमवदायाऽवदाय तत आज्यस्थाल्यास्तूष्णीं स्रुवेणाज्यं गृहीत्वा आप्यायतामिति मन्त्रेण ध्रुवामभिघारयेत्। वीप्सा प्रतिस्रुवमाप्यायनविधानार्था। अन्यथा चतुरवदानान्ते सकृदाप्यायनं प्राप्नोति। तच्च नोपपद्यते, मूलत्वयात्। अत्र याज्ञिकाः चतुर्वारं पञ्चवारं वाऽऽप्याय्य पञ्चमं षष्ठं वा पुनर्ध्रुवायां प्रक्षिपन्ति। तत्र मूलमन्वेष-णीयम् ॥१२॥

**अनुब्रूहीत्युक्त्वा नापव्याहरे,द्धोता चाऽऽश्रवणात् ॥१३॥**

अनुब्रूहि इति प्रैषानन्तरमध्वर्युर्होता च ओश्रावय इत्याश्रावणपर्यन्तं किमपि नोच्चरेत् ॥१३॥

**आश्राविते ऽग्नीदाप्रत्याश्रवणात् ॥१४॥**

अध्वर्युणा ओश्रावय इति उक्ते अग्नीत् अस्तु श्रौषट् इति प्रत्याश्रवणात्पूर्वं किमपि न व्याहरेत् ॥१४॥

**प्रत्याश्राविते ऽध्वर्युराहोतृप्रैषात् ॥ १५ ॥**

अस्तु श्रौषट् इति प्रत्याश्रवणानन्तरमध्वर्युः होतारमुद्दिश्य क्रियमाणात् यज इति प्रैषात्पूर्वं नापव्याहरेत् ॥१५॥

**होता ऽऽवषट्कारात् ॥१६॥**

---

(१) मुख्यक्रमेण पूर्वमाग्नेयस्य पुरोडाशस्याभिघारणं, तत अग्नीषोमीयस्य। दर्शे तु ऐन्द्राग्नस्य। "ध्रुवायां हविष उपभृतश्च" ( का० श्रौ० २।३।९ ) इति सूत्रे ध्रुवादीनामुपादानं स्थालीव्युदासार्थम्। तेन स्थाल्याज्यस्यानभिघारणम्। अभिघारणं च प्रयाजशेषप्रतिपत्तिः। आज्यभागार्थं जुह्वा रिक्तीकरणरूपदृष्टार्थत्वात्। हविःसंस्कारार्थत्वे अदृष्टार्थत्वप्रसङ्गात्। अदृष्टार्थत्वं च सति दृष्टार्थे न युक्तम्। एवं प्रयाजशेषेणेति तृतीया द्वितीयार्थे, हवींषीति द्वितीया च सप्तम्यर्थे। दृष्टार्थत्वानुरोधात्। ततश्च असन्निहितपशुपुरोडाशाभिघारणार्थं न प्रयाजशेषः स्थापनीयः।

यजेति प्रैषानन्तरं होता वषट्कारात्प्राक् न व्याहरेत् ॥१६॥

**सोमे च ग्रहं गृहीत्वोपाकरणात् ॥१७॥**

सोमयागे अध्वर्युर्ग्रहं(१) गृहीत्वा स्तोत्रारंभात्पूर्वं नापव्याहरेत्। सोमरसाधारभूतः पात्रविशेषो ग्रहः। उद्गातृभिः क्रियमाणस्य स्तोत्रस्य प्रारम्भ उपाकरणम् ॥१७॥

**उपाकृत उद्गातार आहोतृप्रैषात् ॥१८॥**

उद्गातृभिस्तैस्तैः स्तोत्रैः स्तुत्वा अन्तिमायाः स्तोत्रियाया ऋचः प्रस्तावे कृते, प्रस्तोता "होतरेषोत्तमा" (ला० श्रौ० २।६।११) इति होतारमुद्दिश्य प्रेष्यति, तावत्पर्यन्तमुद्गातारो न व्याहरेयुः ॥१८॥

**होता ऽऽवषट्कारात् ॥१९॥**

सोमयागे होता ग्रहसंबद्धहोमवषट्कारात्पूर्वं न व्याहरेत् (२) ॥१९॥

**आग्नेयमुत्तरपूर्वार्द्धे, दक्षिणपूर्वार्द्धे सौम्यम् ॥२०॥**

आहवनीयस्यैशानभागे अग्निदेवताकमाज्यभागं,तस्यैवाग्नेयकोणे सौम्यं च जुहुयात् ॥२२॥

पक्षान्तरमाह—

**समिद्धतमे वा ॥२१॥**

अथवा न स्थानविशेषापेक्षा, यत्र अग्निर्ज्वलति तत्स्थाने जुहुयात् ॥२१॥

**हविर्भ्यां च ॥२२॥**

आग्नेयाग्नीषोमीयपुरोडाशावपि सामद्धतमे जुहुयात् ॥२२॥

**पुरोडाशावन्तरेणाग्नीषोमा उपांꣳश्वाज्यस्य ॥२३॥**

आग्नेयाग्नीषोमीयपुरोडाशयागयोर्मध्ये आज्येनोपांशु अग्नीषोमौ पूर्णिमायां यजेत ॥२३॥

**विष्णुर्वा ऽमावास्यायाꣳ हौत्राम्नानात् ॥२४॥**

दर्शेष्टौ आग्नेयैन्द्राग्नपुरोडाशयागयोर्मध्ये अग्नीषोमौ आज्येनोपांशु यजेत। अथवा विष्णुमाज्येनोपांशु यजेतेति देवताविकल्पः। व्यवस्थितोऽयं विकल्पः। सान्नाय्ययाजिनो ऽग्नीषोमयागः। असान्नाय्ययाजिनो विष्णुर्देवता। शाङ्खायनसूत्रे (१।८।८) तथैवोक्तत्वा-दिति देवः ॥२४॥

---

(१) येन शस्त्रेण शंसनं करोति तच्छस्त्रीयग्रहहोमसंबधिवषट्कारोच्चारणात्पूर्वं होता नापव्याहरेत्। ऋग्वेदमन्त्रैः होत्रा क्रियमाणं देवतानिष्ठगुणाभिधानं शंसनं शस्त्रं वोच्यते।

(२) अनन्तरोक्तसूत्रत्रयस्यायमाशयः—सोमाभिषवानन्तरं तत्तद्देवताभ्यः सोमरसस्तत्तत्पात्रेषु अध्व-र्युणा गृह्यते। ग्रहणानन्तरमुद्गातॄन्प्रति स्तोत्रोपाकरणार्थं प्रेष्यति "ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपा कुर्यात्" (तै० सं० ३।१।२) इति श्रुतेः। प्रेषितार उद्गातारः तद्ग्रहसंबधिनीं देवतां तद्देवताकैः सामभिः स्तुत्वा स्तोत्रान्तिमाया ऋचः प्रस्तावानन्तरं होतारं प्रति "होतरेषोत्तमा" (ला०श्रौ० २।६।११) इति प्रैषं ददति। एवं प्रेषितो होता पूर्वोक्तदेवताकं शस्त्रमारभते। समाप्ते शस्त्रे पूर्वगृहीतं ग्रह होतुमध्वर्युः प्रारभते। ततः अध्वर्युणा प्रेषितो होता याज्यां पठति। पठित्वा तदन्ते वषट्करोति। वषट्कृते चाध्वर्युर्जुहोति। तत्र अध्वर्युः सोमग्रहणानन्तरमुपाकरणात्प्राक् नकिंचिदपि व्याहरेत्। उपाकरणे कृते उद्गातारो होतृप्रैषात्पूर्वं नापव्या-हरेयुः। होता च ग्रहीयवषट्कारात्पूर्वमिति। सोमलतातो रसनिःसारणमभिषवः।

हौत्रकाण्डे "वैष्णवश्चेदिदं विष्णु" (का० हौ० प० १।४) रिति अनुवादबलेन विकल्पेन वैष्णवयागस्य अनुष्ठेयताप्रतीतेः ॥ २४ ॥

[ ध्रुवाज्यातिरिक्तानां सर्वेषां हविषामुत्तरादवदायोत्तरतः स्विष्टकृद्धोमः ]

**यावद्धविरुत्तरार्द्धात्स्विष्टकृतः ॥ २५ ॥**

यावन्ति हवींषि भवेयुस्तेषां सर्वेषामुत्तरप्रदेशात्स्विष्टकृद्यागार्थमवद्येत्। तत्र जमदग्नीनां द्वे अवदाने, इतरेषामेकम्। "एकप्रत्यवायथं स्विष्टकृत" (१।६।६) इत्युक्तत्वात्। अत्र सर्वेषां हविषामुत्तरार्द्धादवदाय सर्वैरेकं प्रदानं कर्त्तव्यम्। "न द्रव्यभेदे गुणयोगादिति वात्स्य" (१।५।१३) इत्युक्तत्वात्। अयं च स्विष्टकृद्यागो द्रव्यांशे प्रतिपत्तिकर्म। यागे उपयुक्तस्य पुरोडाशादेर्हविषः संस्कारकत्वात्। यागांशे च अदृष्टार्थोऽर्थकर्म। अतश्च यावदुक्ते कर्मणि प्रतिपत्तिं समादाय प्रवर्त्तत एव ॥ २५ ॥

**तत एव होमः ॥ २६ ॥**

अग्नेरुत्तरार्द्ध एव स्विष्टकृदवदानानां होमः कार्यः ॥ २६ ॥

[ ध्रौवस्याज्यशेषत्वात् न ततः स्विष्टकृदवदानम् ]

यावद्धविरित्युक्तत्वात् उपांशुयाजाज्यशेषादपि स्विष्टकृदवदाने प्राप्त आह—

**नाज्यादशेषात् ॥ २७ ॥**

उपांशुयाजो हि ध्रौवादाज्यात् क्रियते। तस्मिन् कृते सति ततः ध्रौवादाज्यात्स्विष्टकृदर्थं नावद्येत्। कुतः? अशेषात्। अशेषत्वादित्यर्थः। न ह्येतदुपांशुयाजस्य शेषभूतम्। "सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यम्" (श० ब्रा० ४।३।५।२) इति वाक्येन ध्रौवाज्यस्य सर्वार्थत्वावगमात् ॥ २७ ॥

[ अन्याहुतिभिरसंसृष्टां स्विष्टकृदाहुतिं जुहुयात् ]

**असꣳसृष्टामाहुतिभिः ॥ २८ ॥**

स्विष्टकृदाहुतिं पूर्वकृताभिराहुतिभिरसंबद्धां पूर्वहुतेन द्रव्येण अकृतसम्पर्कामिति यावत्। जुहुयादिति शेषः ॥ २८ ॥

**निधाय ॥ २९ ॥**

स्रुचौ स्वस्थाने सादयित्वा वक्ष्यमाणं कर्म कुर्यादिति संबन्धः ॥ २९ ॥

इति कातीयश्रौतसूत्रवृत्तौ तृतीयाध्याये तृतीया कण्डिका ॥३॥



[ स्रुचौ निधाय अनुयाजार्थं सञ्चरमभ्युक्ष्य उपस्तीर्य आग्नेयस्य मस्तकादन्यस्माच्च प्राशित्रं द्विर्यवमात्रमवदायाऽभिघारयेत् ]

**सञ्चरमभ्युक्ष्य प्राशित्रमवद्यति यवमात्रं पिप्पलमात्रं वा, ऽन्यतरत आज्यमुभयतो वा ऽऽग्नेयात् ॥ १ ॥**

वेदगृहीतैरद्भिः सञ्चरमुदक्संस्थमभ्युक्ष्य(१)प्राशित्रहरणपात्रे आज्येनोपस्तीर्णे सति तत्र प्राशित्रं ब्रह्मभागं यवप्रमाणं पिप्पलफलप्रमाणं वा आग्नेयपुरोडाशस्य मस्तकात् अग्नीषोमीयस्य पुरोडाशस्य तु यतःकुतश्चित्प्रदेशाद् द्विरवद्यति। आज्यस्थाल्याज्येन स्रुवेणोपरिष्टादभिघारयेच्च। प्राशित्रस्यान्यतरत आज्यं भवति उपस्तृणाति वा अभिघारयति वेत्यर्थः। उभयतो वा। अथवा प्राशित्रावदाने उपस्तारो ऽभिघारणं चेत्युभयमपि कार्यम्। सञ्चराभ्युक्षणस्यानुयाजार्थत्वात्त-दभावेऽभावः ॥ १ ॥

**भागांश्च ॥ २ ॥**

वक्ष्यमाणान् षडवत्त-ब्रह्म-यजमानभागांश्च आग्नेयाद् गृह्णीयात्। अयं पूर्वपक्षः। सिद्धान्तस्तु प्राशित्रावदानं भागहरणं चोभाभ्यामेव कर्त्तव्यं, नाग्नेयात् इति उभौ वा ऽविशेषा-दित्यत्र ( ३. ४. १२ ) वक्ष्यते ॥ २ ॥

[ ब्रह्मणे प्राशित्रं प्रदाय उपस्तीर्य सर्वं हविर्दक्षिणतो मध्याच्च द्विरवदाय द्विरभिघार्येडां पञ्चावत्तां कुर्यात् ]

**अध्वर्युसञ्चरेण ब्रह्मणे प्रदाय, पूर्वेणैके, ऽपऽ उपस्पृश्येडां पञ्चावत्तां दक्षिणतो मध्याच्च यावद्धविः स्विष्टकृद्वदाज्यम् ॥ ३ ॥**

अध्वर्युरवत्तं प्राशित्रमध्वर्युसञ्चरेण = परिधीनामपरेण ब्रह्मणे समर्प्य, आहवनीयस्य पूर्वेण वा समर्प्य, अप उपस्पृश्य इडापात्र्यां घृतेनोपस्तीर्य सर्वेषां हविषां दक्षिणतो मध्याच्च इडामवदाय स्विष्टकृद्वद्विर्द्विरभिघारयेत्। एवमिडां पञ्चावत्तां कुर्यात्। स्विष्टकृद्वदाज्यमि-त्यनेनैव पञ्चावत्तत्वे सिद्धे पुनः पञ्चावत्तग्रहणं पत्नीसंयाजेडायामपि पञ्चावत्तत्वज्ञापनार्थम् ॥ ३ ॥

[ आग्नेयाद् ग्राह्यत्वेनोक्तान् आग्नेयादिभागानस्मिन्नवसरे गृह्णीयात्। तत्र यजमानभागं ध्रुवायाः पुरस्ताद्बर्हिर्निदध्यात् ]

**यजमानभागं पूर्वार्द्धाद्दीर्घं प्रशीर्य पुरस्ताद् ध्रुवायाः करोति ॥ ४ ॥**

अध्वर्युः पुरोडाशयोः पूर्वार्द्धाद्यजमानभागं दीर्घं महान्तं त्रोटयित्वा ध्रुवायाः पूर्वभागे बर्हिष उपरि स्थापयति ॥४॥

---

( १ ) सञ्चरमभ्युक्ष्येति। पशुयागे च प्रथमतो वपाहोमः, ततः पश्वङ्गभूतः पुरोडाशयागः, ततस्तदङ्गभूतः स्विष्टकृद्यागः, ततो हृदयाद्यङ्गयागः, ततः पाशुकस्विष्टकृद्यागः "त्र्यङ्गैः स्विष्टकृतं यजति" (आप. श्रौ०) ७।२२।६ इति विहितः। तत्र वपाहोमात्पूर्वमेव पश्वङ्गभूताः प्रयाजा इज्यन्ते। पाशुकस्विष्टकृद्यागानन्तरं च अनुयाजा इज्यन्ते। मध्ये पुरोडाशयागे कृतेऽपि न तदर्थं प्रयाजा अनुयाजा वा इज्यन्ते। पाशुकैरेव प्रयाजानुयाजैः पुरोडाशयागे ऽपि प्रसङ्गादुपकारसिद्धेरिति स्थितिः। अतश्च सञ्चराभ्युक्षणस्य अनुयाजार्थत्वात्, पशुयागे च स्विष्टकृदुत्तरमेव अनुयाजानुष्ठानात् तदानीमेव अभ्युक्षणं कार्यम्, न तु पुरोडाशस्विष्टकृदनन्तरमेव। ज्योतिष्टोमे च "आग्निमारु-तादूर्ध्वमनुयाजैश्चरन्ति" इति तृतीयसवने विहितस्य आग्निमारुतशस्त्रस्य अनन्तरमेव अनुयाजविधानात् तदनन्तरमेव सञ्चराभ्युक्षणम्। दक्षिणं दोः, सव्या श्रोणिः गुदस्य तृतीयोंऽश इति त्र्यङ्गानि ( आप० श्रौ० ७।२२।६ )।

[ इडां होत्रे प्रदाय तामविसृजन् दक्षिणाऽतिक्रामेत् ]

इडाᳬं होत्रे प्रदायाऽविसृजन्दक्षिणाऽतिक्रामति ॥५॥

इडां होत्रे प्रदाय हस्तेनेडामविमुञ्चन् होतारं प्रदक्षिणीकृत्य होतुः पुरस्तादागत्य प्रत्यङ्मुख उपविश्य दक्षिणस्यां स्वस्थाने आगच्छेत् ॥५॥

[ इडाग्रेण होतुरङ्गुलिपर्वणी अञ्ज्यात् ]

इडां प्रतिगृह्य होतुरङ्गुलिपर्वणी अनक्ति ॥६॥

अध्वर्युर्होत्रा समर्पितामिडां प्रतिगृह्य इडात एव स्रुवेणाज्यमादाय होतुस्तर्जन्या उत्तमं मध्यमं चेति द्वे पर्वणी स्रुवेण अञ्ज्यात् ॥६॥

[ होतुः पाणौ पञ्चकृत्वः पुरोडाशरूपेडावदानादवद्येत् ]

अवान्तरेडामादधाति पूर्ववत् ॥७॥

अध्वर्युर्होतुर्हस्ते इडापात्रीस्थपुरोडाशावदानादेव पूर्ववत् पञ्चावत्तामवान्तरेडामादधाति । ऐडात्पुरोडाशात्पञ्चावदानानि होतुः पाणौ स्थापयेदित्यर्थः । अत्र पुरोडाशावदानादेव पञ्चावत्तता, नाज्यात् । तस्य संसृष्टरूपत्वेन अवदाने भेदस्य सम्पादयितुमशक्यत्वात् ॥७॥

इडां च ॥८॥

अध्वर्युरिडां च होतुर्हस्ते आदध्यात् ॥८॥

सर्वे ऽन्वारम्भन्ते ॥९॥

"उपहूतं रथन्तरम्" (का० हौ० प० १।६) इत्यनेन मन्त्रेण इडायामुपहूयमानायां सर्वे ऋत्विग्यजमाना होतारमन्वारभेरन् ॥९॥

[ यजमानः आग्नेयं चतुर्धा कृत्वा बर्हिषदं कृत्वा 'इदं ब्रह्मणः' इत्यादिना भागानादिशेत्, न समर्पयेत् ]

इडोपहूतेत्युच्यमान आग्नेयं बर्हिषदं करोति "ब्रह्म पिन्वस्वायुर्मे धुक्ष्व प्रजां मे धुक्ष्व पशून्मे धुक्ष्व ब्रह्म मे धुक्ष्व क्षत्रं मे धुक्ष्व विशो मे धुक्ष्व योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तस्य प्रजया पशुभिराप्यायस्वे" ति तं चतुर्द्धा कृत्वा ॥१०॥

उपहूतᳬं० रथन्तरमित्यस्य इडोपह्वानमन्त्रस्यान्तिमे भागे "इडोपहूता" ( का० हौ० प० १।६ ) इत्येतस्मिन् होत्रा पठ्यमाने यजमानः आग्नेयं पुरोडाशं चतुर्द्धा कृत्वा ब्रह्म पिन्वस्वेति मन्त्रेण बर्हिषि आग्नेयादिषु चतसृषु विदिक्षु चतुरो भागान् निदध्यात् । अत्र आग्नेयमिति निरपेक्षतद्धितश्रवणात् केवलाग्निदेवताकपुरोडाशस्यैव चतुर्द्धाकरणावगमात् यत्र सापेक्षमग्नेर्देवतात्वं यथा अग्नीषोमीयैन्द्राग्नादिषु, न तत्र चतुर्धाकरणम् । तेन द्विदेवत्य-बहुदेवत्ययोश्चतुर्द्धाकरणानामभावः । सत्रेऽपि चतुर्द्धाकरणाभावः ॥१०॥

बर्हिषि ऋत्विग्भ्य आदिशति ॥११॥

बर्हिषि अवस्थितान् पुरोडाशखण्डान् यजमानः इदं ब्रह्मणः, इदं होतुः, इदमध्वर्योः, इदमग्नीध इत्येवमृत्विक्संबन्धेन प्रकाशयेत्स्पृष्ट्वा स्पृष्ट्वा । समर्पणस्याग्रे विधानादत्रादेशः संबन्धप्रकाशनमात्रं वाचनिकम्, न अर्पणम् ॥११॥

[ याज्ञिकानां मते चतुर्द्धाकरणं, प्राशित्रावदानम्, आग्नीध्रादिभागहरणं च उभाभ्याम् । कर्कमते तु प्राशित्रावदानं भागहरणं चोभ्याम्, चतुर्द्धाकरणं तु आग्नेयादेवेति ]

चतुर्द्धाकरणं केवलमाग्नेयस्यैव उताऽऽग्नेयाग्नीषोमयोरिति संशये आशङ्कते—

## उभौ वा, ऽविशेषात् ॥१२॥

उभावेवाग्नेयाग्नीषोमीयौ चतुर्द्धा कर्तव्यौ। कुतः? अविशेषात्। "अथ यत्र प्रतिपद्यते तच्चतुर्द्धा पुरोडाशं कृत्वा बर्हिषदं करोति" ( श० ब्रा० १।८।१।४० ) इति श्रुत्या पुरोडाशसामान्ये एव चतुर्द्धाकरणश्रवणात्। अथवा अविशेषात् आग्नेयवत् अग्नीषोमीयस्यापि चरितार्थत्वेन प्रतिपत्तिसापेक्षत्वाविशेषादित्यर्थः।

एवं प्राप्ते तदेव सूत्रमावर्त्य सिद्धान्तपरतयाऽपि योजयति। उभौ वाऽविशेषात्। यद्यविशेषः स्यात् तर्हि उभौ चतुर्द्धा कर्त्तव्याविति युक्तं स्यात्। न त्वत्र तदस्ति। "आग्नेयं चतुर्द्धा करोति" (आप० श्रौ० ३।३।२) इति आग्नेये एव चतुर्द्धाकरणश्रवणात्। यद्यपि माध्यन्दिनशाखायां पुरोडाशमात्रे श्रवणमस्ति, तथापि शाखान्तरे "आग्नेयं चतुर्द्धा करोति" इति विशेषस्यैव श्रवणात् सामान्यशास्त्रस्य विशिष्टे उपसंहारस्य अवश्यकर्त्तव्यत्वात्। "सामान्यविधिरस्पृष्टः संह्रियेत विशेषत" ( तन्त्रवा० ३।४।४७ ) इति न्यायेन सामान्यस्य पुरोडाशवाक्यस्य विशेषेणाग्नेयवाक्येन आग्नेयमात्रे सङ्कोचनात् आग्नेयस्यैव चतुर्द्धाकरणं, नाग्नीषोमीयस्येति भावः।

पूर्वमीमांसायाम् (३।२।२) आग्नेयमिति पुरोडाशस्यैव ग्रहणात् न पयस्यादेश्चतुर्द्धाकरणम्। चरोस्तु आग्नेयविकारत्वाद् भवति। पश्वादावपि न भवति, आग्नेयविकारत्वाभावात्।

पूर्वत्र आग्नेयात्, भागांश्च इति सूत्राभ्यामाग्नेयादेव प्राशित्र-भागहरणयोरुक्तत्वात् तत्सिद्धान्तार्थमपि इदं सूत्रम्। उभावपि आग्नेयाग्नीषोमीयौ प्राशित्र-भागहरणार्हौ। कुतः? अविशेषात् = हविर्मात्रस्य प्राशित्रावदानश्रवणाद् भागहरणश्रवणाच्च। आग्नेयादिति तु न आग्नेयविधानार्थम्। किन्तु आग्नेयान्मस्तकं विरुज्य इति प्रदेशविधायकविधिमनुसृत्य प्रवृत्तम्। एवं च आग्नेयाद्यत्प्राशित्रावदानं तन्मस्तकप्रादेशादेव कर्त्तव्यम्। अग्नीषोमीयस्य तु यतः कुतश्चित्प्रदेशादिति ध्येयम् ॥१२॥

## "अत्र पितर"(१) इति यजमानो जपति ॥१३॥

चतुर्द्धाकृतं पुरोडाशमालभ्य यजमानो जपेत् ॥१३॥

## विसृज्या"मीमदन्ते"ति ॥१४॥

चतुर्द्धाकृतं पुराडोशं विसृज्य यजमानः सस्वरं मन्त्रं(२) जपेत् ॥१४॥

## एकैकमाहरति ॥१५॥

चतुर्धा कृत्वा आदिष्टानां भागानां मध्ये एकैकं भागं ब्रह्मादिभ्यो भक्षणार्थं यजमानोऽर्पयेत् ॥१५॥

## द्यावापृथिव्योरुपह्वानेऽग्नीधे षडवत्तम् ॥१६॥

"उपहूते द्यावापृथिवी" ( का० हौ० प० १।६ ) इति होत्रा पठ्यमाने अग्नीधे षडवत्तम् = अग्नीद्भागं दद्याद्यजमानः। अत्र षडवत्तशब्दो रूढ्याऽग्नीद्भागवचको, न त्ववयववृत्त्याऽवदानषट्कबोधकः। अतश्च द्विः समर्पणम्, द्विरभिघारणम्, द्विरवदानम् इत्येवं रीत्या षडवत्तसम्पादनमत्र केषांचनाभिप्रेतं न समञ्जसम्(३) ॥१६॥

---

( १ ) ॐ अत्र पितरो मादयध्वं यथा भागमावृषायध्वम् ( २।३१ )।

( २ ) ॐ अमीमदन्त पितरो यथाभागमावृषायिषत ( २।३१ )।

(३) अतश्चोपस्तरणाभिघारणादिकं विनैव अग्नीद्भागं षडवत्तपात्रे कृत्वाऽग्नीद्धस्ते निदध्यादित्यर्थः।

**प्राश्ना "त्युपहूता पृथिवी" ति ॥१७॥**

अग्नीत् षडवत्तमुपहूतेति (१) प्राश्नीयात् । उपहूतो द्यौरिति (२) द्वितीयं भागं प्राश्नीयादित्यपि बोध्यम् । पूर्वं चतुर्धाकरणभागस्य भक्षणं, ततः षडवत्तभागस्य, (३) तत इडाभागस्येति क्रमः ॥१७॥

**आशासने "मयीद" मिति यजमानो जपति ॥१८॥**

"होत्रा भूयसि हविष्करणमुपहूत" (का० हौ० प० १।६) इति आशीःप्रार्थने क्रियमाणे मयीदमिति(४)यजमानः सस्वरं जपेत् । पत्नीसंयाजेडायामपि यजमानस्यैव जपो यथा स्यादित्येवमर्थं यजमानग्रहणम् ॥१८॥

**उपहूतां प्राश्नन्ति युक्ताः ॥१९॥**

उपहूतामिडां समवेता ऋत्विजः प्राश्नीयुः । आदौ चतुर्द्धाकरणभागस्य भक्षणं, तत इडाभागस्य ॥१९॥

**यजमानश्च ॥२०॥**

इडां प्राश्नीयात् । यजमानेन इडाभागस्यैवात्र भक्षणं कार्यम्, यजमानभागस्य च भक्षणमिष्ट्यन्ते विधास्यति सूत्रकारः ( ३. ८. २६ ) । प्राशित्रम्, इडा, भागाश्च यावदुक्ते अन्तापच्छिन्नेऽपि च भवन्ति । द्रव्यसंस्कारत्वात् ॥२०॥

[ वेदेः पश्चादुपविष्टा यजमानोऽध्वर्य्वादयश्च पवित्राभ्यां मार्जयन्ते ]

**पवित्रयोर्मार्जयन्ते ऽपरेण वेदिᳪ० "सुमित्रिया न" (५) इति ॥२१॥**

पवित्रयोरिति सप्तमी तृतीयार्थे । वेदिमपरेणोपविष्टाः ब्रह्मादय ऋत्विजो यजमानश्च पवित्राभ्यामात्मानं शोधयन्ते ॥२१॥

**"यजमानस्य प्राणापानौ पात" मिति प्रस्तरे ते करोति ॥२२॥**

अध्वर्युः पवित्रे प्रागग्रे प्रस्तरे स्थापयेत् । मार्जनस्येडाभक्षणनिमित्तत्वात्तदभावेऽभावः । पवित्रप्रतिपत्तिस्तु तत्रापि भवत्येव । प्रतिपत्तिरूपत्वात् । प्रकृतत्वात्पवित्रप्राप्तौ ते इति ग्रहणं शाखापवित्रव्युदासार्थम् । तस्यापि समस्य मार्जनात्प्राप्तिरतस्ते इति यत्नः क्रियते । मार्जनं तु समस्यैव भवति । प्रतिपत्तिश्च केवलयोरेवेति भावः ॥२२॥

**तूष्णीं वा ॥२३॥**

अथवा तूष्णीमेव पवित्रयोः प्रस्तरे निधानं, मन्त्रेण वेति विकल्पः ॥२३॥

**अत्र वा ब्रह्मा प्राश्नाति ॥२४॥**

अस्मिन्काले वा ब्रह्मा प्राशित्रं प्राश्नीयात् पूर्वत्र वेति भक्षणे कालविकल्पः ॥२४॥

---

( १ ) ॐ उपहूता पृथिवी मातोप मां पृथिवी माता ह्वयतामग्निराग्नीध्रात् स्वाहा २ । ११ ।

( २ ) ॐ उपहूतो द्यौष्पितोप मां द्यौष्पिता ह्वयतामग्निराग्नीध्रात्स्वाहा १ । १२ ।

( ३ ) षडवत्तभागसहरितो ध्रुवापुष्करभागोपरि स्थापितो ब्रह्मभागस्तु अद्यापि न समर्पित इति न तस्यात्र भक्षणम् । किंतु चतुर्धाकरणभागे—डाभागयोरेव ब्रह्मणाऽत्र भक्षणम् । षडवत्तभागसहचरितयजमानभागस्य च भक्षणं "सं यज्ञपतिराशिषेति भागं प्राश्नाति" ( का० श्रौ० ३।८।२६ ) इति सूत्रेण इष्ट्यन्ते विहितमिति यजमानेन इडाभागस्यैवात्र भक्षणम् । प्राशित्रम्, इडा, षडवत्तादिभागश्च यावदुक्तेऽपि प्रवर्तन्ते, द्रव्यसंस्कारत्वात् ।

( ४ ) ॐ मयीदमिन्द्रऽ इन्द्रियं दधात्वस्मान् रायो मघवानः सचन्ताम् । अस्माकᳪ० सन्त्वाशिषः सत्या नः सन्त्वाशिषः २।१०।

( ५ ) ॐ सुमित्रिया न आप ओषधयः सन्तु ६।२२।

[ चतुर्धाकरणव्यतिरिक्तभागं ब्रह्मणे आहवनीयस्य पूर्वतः समर्पयेत् ]

**भागमस्मै परिहरति ॥२५॥**

अध्वर्युरस्मै ब्रह्मणे ध्रुवायाश्चञ्चुभागे स्थापितं ब्रह्मभागमाहवनीयं पूर्वेण समर्पयेत्। ब्रह्मा च इष्ट्यन्ते यजमानेन सह तं भक्षयेत्। कालान्तराविधानात् ॥२५॥

[ अप्रोषिते यजमानाय च तद्भागं समर्पयेत् ]

**यजमानभागं चाऽप्रोषिते ॥२६॥**

यजमाने अकृतप्रवासे सति अध्वर्युः ध्रुवायाः पुरस्तान्निहितं यजमानभागं गार्हपत्यमपरेण यजमानाय दद्यात्। यजमानश्च इष्ट्यन्ते तद्भक्षणं कुर्यात्। तत्रैव भक्षणविधानात्। प्रोषिते यजमाने यजमानभागो ध्रुवायामेवावस्थितो भवति। ब्रह्मा च तं भागं प्रतिगृह्य प्राशित्रे निदधाति। भक्षणकाले एव इष्ट्यन्ते यजमानभागो हूयते ॥२६॥

[ अन्वाहार्यमभिघार्योत्तरत उद्वास्य ब्रह्मयजमानयोर्मध्यतो हृत्वा वेदिमध्ये स्थापयित्वा ऽध्वर्युरालभेत ]

**अन्वाहार्यमभिघार्योद्वास्यान्तरा ब्रह्मयजमानौ हृत्वा वेद्यां निधायाऽऽलभते "प्रजापतेर्भागोऽस्यूर्जस्वान् पयस्वान् प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानव्यानौ मे पाह्यूर्गस्यूर्जं मयि धेह्यक्षितिरसि मा मे क्षेष्ठा ऽअमुत्रामुष्मिन् लोक ऽइह चे"ति ॥२७॥**

अध्वर्युरन्वाहार्यं स्थाल्येनाज्येनाभिघार्य उत्तरत उद्वास्य गार्हपत्यदक्षिणाग्न्योरन्तरालेन प्रत्यङ् नीत्वा दक्षिणाग्नेर्दक्षिणेन ब्रह्मयजमानावन्तरालेन आहवनीयस्य पूर्वेण प्रणीतोत्करावन्तरेण च हृत्वा वेदिमध्ये निधाय स्वस्थाने वेदेः पश्चादुपविश्य प्रजापतेरिति मन्त्रेणालभेत (१)।

विकृतावूर्गसीत्यस्य स्थाने दक्षिणाद्रव्यवाचिपदप्रयोगः कर्त्तव्यो गौरसीति। गोबहुत्वे गावः स्थेति। गोबहुत्वे प्रजापतेर्भागा स्थोर्जस्वत्यः पयस्वत्यः इति, पात इत्यादि च विपरिणामः। गवादिदक्षिणायां 'ऊर्जं मयि' इत्यत्र ऊर्जमित्यस्य न विपरिणामः। ऊर्गसीति दीयमानान्नसारभूतोर्गपेक्षया प्रार्थ्यमानोर्जो भिन्नत्वात्। प्रार्थ्यमानोर्ज एकत्वेऽप्यदोषात्। अभिघारणं तु गवादौ न प्रवर्त्तते। अर्थलोपात्। भुज्यमानौदनादिनिष्ठस्वादुतासंपत्तिर्हि अभिघारणस्य प्रयोजनम्। अन्तराहरणं गोदक्षिणाया न भवति, विरोधात्। वस्त्रदक्षिणायास्तु भवत्येवेति ॥ २७॥

**सा दक्षिणा ॥ २८ ॥**

य एषो ऽन्वाहार्य उक्तः सा दर्शपूर्णमासयोर्दक्षिणा भवति ॥ २८ ॥

[ अन्वाहार्यस्य हविषां च उदगग्नेरवतारणमिति परिभाष्यते ]

**उदगुद्वासयति हविश्च ॥ २९ ॥**

अन्वाहार्यं पुरोडाशादिकं हविश्च उत्करसमीपे बहिर्निष्कासयेत् ॥ २९ ॥

इति कातीयश्रौतसूत्रवृत्तौ तृतीयाध्याये चतुर्थी कण्डिका ॥४॥

---

(१) आलम्भस्याध्वर्युकर्तृकत्वेन मन्त्रपाठोऽपि तस्यैव। आशीस्तु यजमानगतैव। "यां वै कां च यज्ञ ऋत्विज आशिषमाशासते यजमानस्यैव सा" (श० ब्रा० १।३।१।२६) इति लिङ्गात्। एवं च मन्त्रे लक्षणया यजमानाभिधानमाश्रयणीयम्।

**समम्योल्मुके समिधमादायाह "ब्रह्मन्प्रस्थास्यामि, समिधमाधायाग्नि-मग्नोत्सम्मृड्ढी"ति ॥ १ ॥**

अध्वर्युः पूर्वमाहवनीयादुद्धृते उल्मुके आहवनीये एवानुयाजार्थं प्रक्षिप्य अनुयाजार्थ-मवशेषितां समिधमादाय 'ब्रह्मन् प्रस्थास्यामि' इति ब्रह्माणं पृच्छेत् । समिधमाधायाग्निमग्नो-त्सम्मृड्ढि" इति अग्नीधं प्रेष्येत् । अवभृथेष्टौ अपोऽग्नीदिति विपरिणामः । प्रथमप्रैषस्यानु-याजार्थत्वादातिथ्यादौ (का०श्रौ० ८।१।)तदभावे ऽभावः।वरुणप्रघासे प्रस्थास्याव इत्यूहः ॥१॥

[ होता यजमानो वा समिधमनुमन्त्रयेत ]

**"एषा त" इति होता ऽनुमन्त्रयते ॥ २ ॥**

अग्नीधा आहवनीये प्रक्षिप्तां समिधमेषा त (१) इति मन्त्रेण होता ऽनुमन्त्रयेत् । वरुणप्रघासे एते ते अग्ने समिधौ इत्यूहः कर्त्तव्यः ॥ २ ॥

**अजानति यजमानः ॥ ३ ॥**

अनुमन्त्रणं कर्तुं होतरि अजानति यजमान एषा त इति मन्त्रेणानुमन्त्रयेत ॥ ३ ॥

[ अग्नीदनुपरिधि अग्निं सकृत् सकृत् संमृज्यात् ]

**सम्मार्ष्टि पूर्वदपरिक्रामठं० सकृत्सकृ "त्सस्रृवाथ्ंस"मिति ॥ ४ ॥**

अग्नेरुत्तरपार्श्वे स्थित एव दक्षिण-पश्चिमोत्तरपार्श्वेषु क्रमेणाग्निं सकृत्सकृत् प्रतिदिशं मन्त्रावृत्त्या (२) संमृज्यात् । उपरि च तूष्णीं संमृज्यात् सकृत् । अवभृथे आपो वाजजितो वाजं वः सरिष्यन्तीरित्यूहः ॥ ४ ॥

**ब्रह्मानुज्ञातो ऽनुयाजैस्त्रिभिश्चरत्यौपभृतठं० समानीय ॥ ५ ॥**

ॐ प्रतिष्ठ इति ब्रह्मणा ऽनुज्ञातोऽध्वर्युरनुयाजार्थमुपभृत्यवशेषितमाज्यमनुयाजाङ्ग-भूतचतुर्थ्याहुत्यर्थमुपभृति किंचिदवशेष्य अवशिष्टमौपभृतमाज्यं जुह्वां समानीय त्रीननुयाजान् जुहुयात् ॥ ५ ॥

**अतिक्रम्याऽऽश्राव्याह 'देवान्यजे'ति ॥ ६ ॥**

अनुयाजानामनुवाक्याभावाद्याज्यार्थमेव "यज" इति होतारमध्वर्युः प्रेष्येत् ॥ ६ ॥

[ सर्वत्रानुयाजेषु देवान्यजेत्येव प्रैषः ]

**यज यजेत्युत्तरौ ॥ ७ ॥**

उत्तरौ द्वावनुयाजौ प्रति यज यज इत्येव वक्तव्यम् ॥ ७ ॥

एवं प्राप्ते सिद्धान्तमाह—

**देवान्देवानिति वा सर्वत्र, नियमशब्दात् ॥ ८ ॥**

वाऽवधारणे । देवान्यज इत्येव त्रिषु अनुयाजेष्वध्वर्युर्ब्रूयात् । कुतः ? "देवान्यजेत्येवा-ध्वर्युराह" ( श० ब्रा० १।८।२।१४) इति नियमप्रतिपादकस्य एवकारस्य श्रवणात् ॥ ८ ॥

हेत्वन्तरमाह—

**विकृतिदर्शनाच ॥ ९ ॥**

विकृतौ पित्र्येष्ट्यां प्रथमानुयाजाभावेऽपि "सोऽपबर्हिषौ द्वावनुयाजौ यजति देवान्य-

---

(१) ॐ एषा ते अग्ने समित्तया वर्धस्व चा च प्यायस्व । वर्द्धिषीमहि च वयमा च प्यासिषीमहि २।१४।

(२) ॐ अग्ने वाजजिद्वाजं त्वा ससवाथ्ंसं त्वाजजितठं० सम्मार्ज्मि २।२७ ।

जेति" (श० ब्रा० २।६।१।४४) इति उत्तरयोरनुयाजयोर्देवान्यजेति दर्शनात् प्रकृतावपि त्रिष्वप्यनुयाजेषु देवान्यजेत्येव प्रैषः कार्यः। यत्र वरुणप्रघासेषु "यज यज" (श० ब्रा० २।५।२।४१) इति पुनर्वचनं तत्र विशेषविधानाद्यज यजेत्येव प्रयोग इति कर्कः॥ ९॥

प्रतीचो जुहोति ॥ १० ॥

त्रीननुयाजानध्वर्युः प्रत्यक्संस्थान् जुहुयात् ॥ १० ॥

प्रसङ्गादाह—

उपसत्सु च ॥ ११ ॥

ज्योतिष्टोमे उपसत्संज्ञास्विष्टिषु च (का० श्रौ० ८।२) प्रत्यक्संस्थान् होमान्कुर्यात् ॥११॥

[ ध्रुवस्तिष्ठन्ननुयाजान् प्रतीचो जुहुयात् ]

ध्रुवः ॥ १२ ॥

अध्वर्युरेकत्र स्थित एव त्रीननुयाजान् प्रत्यक्संस्थान् जुहुयात्, न प्रत्यनुयाजं प्रत्यगपसरेदित्यर्थः ॥ १२ ॥

[ अनुयाजाङ्गभूतां चतुर्थीमाहुतिं प्राचीं जुहुयात् ]

चतुर्थꣳ समानीय प्राचीम् ॥ १३ ॥

अध्वर्युर्जुहोतिस्थानमागत्योपविश्य औपभृतं जुह्वां समानीय अनुयाजाङ्गभूतां चतुर्थीमाहुतिं प्राक्संस्थां जुहुयात्। अत्र देवेभ्यः स्वाहेति होमः ॥ १३ ॥

अभिचरन्ननुयाजाननुमन्त्रयेत "मशन्यमुं जहि, ह्रादुन्यमुं जह्यु, ल्कुष्यमुंजही" ति ॥ १४ ॥

यजमाने अभिचारकामे सति अध्वर्युः अशन्यमुमित्यादिभिस्त्रिभिर्मन्त्रैः क्रमेण त्रयाणामनुयाजानामनुमन्त्रणं कुर्यात्। समाख्यानादिदमनुमन्त्रणमध्वर्योरेव ॥ १४ ॥

प्रकृतौ अभिचाररूपफलोद्देशेन अनुयाजमाश्रित्य अनुमन्त्रणरूपो गुणो विहितः। विकृतौ च क्वचिदनुयाजप्रवृद्धौ सत्यां तदाश्रित्य अनुमन्त्रणस्यापि वृद्धौ कर्त्तव्यायां केन प्रकारेण वृद्धिरिति संशये पूर्वपक्षयति—

एवं प्रवृद्धौ समं विभजेत् ॥१५॥

अनुयाजानुमन्त्रणप्रवृद्धौ तानि समं विभजेत्। यावन्त्यनुमन्त्रणानि तत्र सर्वेष्वपि प्राकृतानुयाजत्रयानुमन्त्रणधर्माणां समशो विभागः कर्त्तव्यः। अर्थात् नवानुयाजस्थले आदितस्त्रयाणां प्रथमानुयाजधर्माः, ततस्त्रयाणां द्वितीयस्य धर्माः, अवशिष्टानां त्रयाणां तृतीयधर्माः कार्याः। "समं स्यादश्रुतत्वात्" (पू० मी० १०।३।५३) इति न्यायात्। यत्र विभागविशेषे प्रमाणं न श्रुतं, तत्र सममेव विभागः कार्य इति न्यायार्थः ॥१५॥

एवं प्राप्ते सिद्धान्तयति—

स्वस्थानान्त्येन वोपायित्वात् ॥१६॥

विकृतौ पठ्यमानानामनुयाजानुमन्त्रणानां यत्स्वं स्थानं प्रथमान्तर्यादिरूपं, तेनैव सह धर्मसंबन्धः कर्त्तव्यः। कुतः? उपायित्वात्। तमेव देशं प्रति एतेषां प्राप्तत्वात्। इदमुक्तं भवति। प्रथमे ऽनुयाजे ऽनुष्ठिते द्वितीयस्यानुष्ठाने अकृते तस्यां दशायां तस्यैवापेक्षा भवतीति कृत्वा तस्यैवोपस्थितत्वात्तस्यैवावृत्तिः कार्या, न प्रथम तृतीयानुमन्त्रणमन्त्रयोः। द्वितीयस्य समाप्त्यनन्तरं तृतीयस्य स्थानमिति कृत्वा तृतीयस्यैवाभ्यासः। अतश्च द्वितीयप्रभृति पञ्चम-

पर्यन्तं नराशंस्य द्वितीयस्यानुयाजस्याभ्यासः । षष्ठप्रभृति नवमपर्यन्तं तृतीयस्य स्विष्टकृदनुयाजस्याभ्यासः कार्यः ॥१६॥

**एत्य जुहूपभृतौ व्यूह "त्यग्नीषोमयो"रिति जुहूं प्राचीं दक्षिणेनोत्तानेना"ग्नीषोमौ त"मितीतरेणेतरां नीचा प्रतीचीम् ॥ १७ ॥**

यजमानो वेदेः पश्चादागत्य जुहूपभृतौ प्रेरयति । तदेव स्पष्टयति । अग्नीषोमयोरिति-(१)मन्त्रेण दक्षिणहस्तेनोत्तानेन जुहूं प्रस्तरात्प्राचीं प्रेरयेत् । अग्नीषोमाविति (२) मन्त्रेण सव्येन पाणिना अधोमुखेन प्राङ्मुखीमेवोपभृतं प्रतीचीं प्रेरयेत् । विकृतौ "शूर्पेण जुहोति" (श० ब्रा० ५।५।२।२३) इत्यादौ जुहूस्थानापन्नानां शूर्पादीनामपि व्यूहनं भवति ॥ १७ ॥

**यथादेवतमन्यत् ॥ १८ ॥**

[ अध्वर्युर्वा मन्त्रोहेन जुहूपभृतौ पूर्ववद् व्यूहेत् ]

**अध्वर्युर्वा "ऽनूज्जयत्वयं यजमानो व्वाजस्यैन"मिति पूर्वे, "यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टी"त्युत्तरे ॥ १९ ॥**

अथवा अध्वर्युः स्रुचौ व्यूहति । तत्र पूर्वे जुह्वा व्यूहनमन्त्रे, उत्तरे च उपभृद्व्यूहन मन्त्रे विशेषः । व्यूहनस्येष्टदेवतासङ्कीर्त्तनार्थत्वादन्तापच्छिन्ने आतिथ्यादावपि प्रयोगः ॥१९॥

[ जुहूमभ्युक्ष्य तदाज्येन परिधीन् पश्चिमादिक्रमेणाञ्ज्यात् ]

**अभ्युदय जुह्वा परिधीननक्ति यथापूर्वम् ॥ २० ॥**

अध्वर्युः वेदगृहीतैः प्रणीतोदकैर्जुहूमभ्युदय जुहूस्थेनाज्येन पश्चिम-दक्षिणोत्तरपरिधीन् क्रमेणाञ्ज्यात् ॥ २० ॥

इति कातीयश्रौतसूत्रवृत्तौ तृतीयाध्याये पञ्चमी कण्डिका ॥५॥

**"वसुभ्य" इति प्रतिमन्त्रम् ॥ १ ॥**

वसुभ्य(३) इति त्रिभिर्मन्त्रैः परिधित्रयमञ्ज्यादिति पूर्वेण सम्बन्धः । अनज्मीत्यस्य त्रिष्वपि मन्त्रेष्वध्याहारः, साकाङ्क्षत्वात् । मध्यमपरिध्यञ्जनस्य रुद्रदेवताकत्वाभावेन नात्रोदकोपस्पर्शनम् ॥१॥

[ प्रथमं परिधिं गृहीत्वा सूक्तवाकाय होतारं प्रेष्येत् ]

**प्रथमं परिधिं गृहीत्वा ऽऽश्राव्य "इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूही"ति ॥ २ ॥**

अध्वर्युर्मध्यमं परिधिं स्पृष्ट्वा आश्राव्य इषितेति मन्त्रेण होतारं प्रेष्येत् । दर्विहोमेषु प्रैषाभावे परिधेरप्यनालम्भः ॥ २ ॥

---

( १ ) ॐ अग्नेरग्नीषोमयोरग्नीषोमयोरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामि २।१५।

( २ ) ॐ अग्निरग्नीषोमावग्नीषोमौ तमपनुदन्तु यमयं यजमानो द्वेष्टि यश्चैनं द्वेष्टि वाजस्यैनं प्रसवेनापोहामि २।१५।

( ३ ) ॐ वसुभ्यस्त्वा अनज्मि । ॐ रुद्रेभ्यस्त्वा अनज्मि । ॐ आदित्येभ्यस्त्वा अनज्मि ।२।१६।

**पशौ प्रेष्येति ॥ ३ ॥**

पशुयागे 'ब्रूहि' इति मन्त्रघटकपदस्य स्थाने 'प्रेष्य' इति संयोज्य मैत्रावरुणं प्रेष्येत् ॥ ३ ॥

**"सञ्ज्ञानाथा"मिति (१) प्रस्तरादानम् ॥ ४ ॥**

अध्वर्युर्हस्तेन प्रस्तरं गृह्णीयात् ॥ ४ ॥

**विधृती स्थाने कृत्वाऽनक्त्येनं "व्यन्तु व्वय" इति ॥ ५ ॥**

प्रस्तरस्याधारभूते विधृती आहवनीये प्रक्षिप्य प्रस्तरं स्रुचु मन्त्रावृत्या (२) अञ्ज्यात्। उपभृदाद्यभावेऽपि प्रस्तरः स्थालस्थाज्येनाज्यत एव। संस्कारत्वात् ॥ ५ ॥

कथमित्यपेक्षायामाह—

**अग्रं जुह्वा, मुपभृति मध्यं, मूलमितरस्याम् ॥ ६ ॥**

अध्वर्युः प्रस्तरस्याग्रं जुह्वामञ्जित्वा तस्य मध्यमुभृपति अञ्जित्वा तस्य मूलं ध्रुवायामञ्ज्यात् ॥ ६ ॥

[ प्रस्तरात्तृणमादाय सूक्तवाकान्तेऽनुप्रहरेत् ]

**"मरुता"मिति(३) नीचैर्हृत्वा तृणमादायाऽनुप्रहरति ॥ ७ ॥**

प्रस्तरं स्रुचां दक्षिणेनापरेण च प्रादक्षिण्येन भूमिलग्नमिव आहवनीयसमीपे होमार्थमानीय प्रस्तरमध्यादेकं तृणं परिशेष्य प्रस्तरमाहवनीये होतृपठितसूक्तवाकान्ते प्रक्षिपेत् ॥ ७ ॥

**हस्तेनाचरति ॥ ८ ॥**

अध्वर्युः प्रस्तरं हस्तेनैवाहवनीये प्रक्षिपेत्। हस्तशब्देन काष्ठादीनां व्यावृत्तिः। अत्र प्रस्तरस्याहवनीये प्रक्षेपमात्रमेव, न होमः। अतस्त्यागो न कार्यः ॥ ८ ॥

प्रसङ्गादाह—

**यजमानभागं च प्रोषिते ॥ ९ ॥**

कृतप्रवासे यजमाने यजमानभागं चाध्वर्युर्हस्तेनैव जुहुयात्, न जुह्वादिना। अयं च यजमानभागप्रक्षेपो यदा तस्य भक्षणं विहितं व्रतविसर्गकाले, तत्रैव कार्यः ॥ ९ ॥

**क्षत्रियवैश्ययोश्च नित्यम् ॥१०॥**

क्षत्रियवैश्ययोर्यजमानयोः प्रोषितयोरप्रोषितयोर्वा तयोर्भागं हस्तेनैव जुहुयात्। नहि तयोर्भागप्राशनं विहितमस्ति ॥१०॥

त्रयाणां वर्णानां भागहोमे मन्त्रमाह—

**"अहं त्वदस्मि मदसि त्वमेतन्मम त्वं योनिस्तवयोनिरस्मि। ममैव सन्दिवि देवेष्वधि पुत्रः पित्र्ये लोककृज्जातवेदः स्वाहे"ति ॥११॥**

अनेन मन्त्रेण होमः कार्यः ॥११॥

**सूक्तवाकान्ते ॥१२॥**

यत्पूर्वमुक्तं तृणमादायानुप्रहरतीति तत्सूक्तवाकान्ते कार्यम्।

---

(१) ॐ सञ्ज्ञानाथां द्यावापृथिवी मित्रावरुणौ त्वा वृष्ट्याऽवताम् २।१६।

(२) ॐ व्यन्तु वयोऽक्तꣳ रिहाणाः।२।१६।

(३) ॐ मरुतां पृषतीर्गच्छ वशा पृश्निर्भूत्वा दिवं गच्छ ततो नो वृष्टिमावह।२।१७।

सूक्तवाक-प्रस्तरप्रहरणयोः कालार्थः संयोगो, (पूर्वमीमांसायां (३।२।५) तु कालार्थतां पूर्वपक्षीकृत्य अङ्गाङ्गिभाव एव सिद्धान्तितः) नाङ्गाङ्गिलक्षणः। प्रस्तरस्य स्रुग्धारणार्थतया सूक्तवाकस्य चेष्टदेवतासङ्कीर्त्तनार्थतया उभयोरपि परार्थत्वेन परस्परमङ्गाङ्गिलक्षणसंबन्धस्यासम्भवात्। अतश्च आतिथ्यादौ प्रस्तरप्रहरणाभावेऽपि सूक्तवाकः प्रयुज्यत एव ॥१२॥

**अग्नीदाह्वानुप्रहरेति ॥१३॥**

अग्नीत् अध्वर्युम् अनुप्रहर इत्यध्येष्यति ॥१३॥

**प्रास्य तृणं, "चक्षुष्पा" इत्यात्मानमालभते ॥१४॥**

अग्नीधाऽध्येषितोऽध्वर्युः प्रस्तरात्पृथक्कृतं तृणमाहवनीये तूष्णीं प्रक्षिप्य आत्मानं हृदयदेशे चक्षुष्पा(१) इति स्पृशेत् ॥१४॥

**संवदस्वागानग्नीदगञ्छ्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः शंयोर्ब्रूहीत्येतेषाꣳ संवदस्वागञ्छ्रौषडित्यग्नीच्छेषमितरो व्यत्यासं ब्रूतः ॥१५॥**

संवदस्वेत्यादीनां मध्ये संवदस्व, अगन्, श्रौषट् इत्यग्नीद् ब्रूयात्। अगानग्नीत्, श्रावय, स्वगा दैव्या इत्याद्यध्वर्युर्ब्रूयात्। उभावपि न निरन्तरं ब्रूतः, किन्तु व्यत्यासं ब्रूतः। पूर्वं संवदस्वेत्यग्नीत्। ततोऽध्वर्युः अगानग्नीदिति। ततोऽग्नीदगन्निति, ततोऽध्वर्युः श्रावयेति एवं क्रमेणेत्यर्थः। अस्य च शंयोर्वाकार्थत्वात्तदभावे निवृत्तिः। शंयोर्वाकश्चाद्दष्टार्थत्वात् यावदुक्ते निवर्त्तते। तन्निवृत्तौ च संवदस्वेत्यादीनां निवृत्तिः। तेषां तदर्थत्वात् ॥१५॥

[ परिधीननुप्रहरेत् ]

**परिधीननु प्रहरति "यं परिधि"मिति प्रथम, मितरौ च युगप"दग्नेः प्रिय"मिति ॥१६॥**

अध्वर्युर्हस्तेनैव परिधीनाहवनीये प्रक्षिपेत्। तत्र प्रथमं यं परिधिमिति(२) मन्त्रेण। इतरौ च युगपत्सहैवप्रक्षिपेदग्नेरिति(३) मन्त्रेण। प्रतिपत्तित्वाद् यावदुक्तान्तापच्छिन्नयोरप्यस्य प्रवृत्तिः। अवभृथे मन्त्रद्वयघटकाग्निपदयोर्विपरिणामः ॥१६॥

[ संस्रवहोमः ]

**स्रुचौ प्रगृह्णाति "सꣳस्रवभागा"(४) इति सꣳस्रवाञ्जुहोति ॥१७॥**

अध्वर्युर्जुहूपभृतौ तूष्णीमादाय तदुभयसंलग्नमाज्यं ताभ्यामेव जुहुयादुत्तरत उपविश्य। विश्वे देवाश्चात्र देवता। अतश्च यत्र दर्विहोमादौ मन्त्राभावस्तत्र विश्वेभ्यो देवभ्य इत्याहुतिः(५)। संस्रवहोमस्य प्रतिपत्त्यर्थकर्मत्वादन्तापच्छिन्नेऽपि प्रवृत्तिः ॥ १७ ॥

---

(१) ॐ चक्षुष्पा अग्नेऽसि चक्षुर्मे पाहि ।२।१६।

(२) ॐ यं परिधिं पर्यधत्था अग्ने देव पणिभिर्गुह्यमानः। तं त एतमनु जोषं भराम्येष नेत्त्वदपचेतयातै २।१७।

(३) ॐ अग्नेः प्रियं पाथोऽपीतम् २।१७।

(४) ॐ सꣳस्रवभागा स्थेषा बृहन्तः प्रस्तरेष्ठाः परिधेयाश्च देवाः। इमां वाचमभि विश्वे गृणन्त आसद्यास्मिन्बर्हिषि मादयध्वꣳ स्वाहा वाट् २।१७।

(५) अत्र मन्त्रस्थस्वाहापदोच्चारणकाले एव होमः कार्यः। एवं च स्वाहाकारः सर्वत्र साकाङ्क्षत्वात्" (का० श्रौ० ४।४।१५) इति सूत्रेण सामान्यतो मन्त्रान्ते स्वाहाकारोच्चारणस्य विधानेऽपि यत्र मन्त्रे एव स्वाहाकारस्य पाठः आदौ मध्येऽवसाने वा तत्रैव होमः कार्यो, न पुनः स्वाहाकारस्य मन्त्रान्ते संयोजनम्।

अस्य प्रतिपत्त्यर्थकर्मोभयरूपत्वात् प्रतिपत्त्यंशमादायान्तापच्छिन्नेऽपि प्रवृत्तिरस्त्येव। स्रुक्स्थस्याज्यस्य पूर्वमेव निरवशेषितत्वात् संस्रवाणां न यागाङ्गत्वम्। किन्तु पात्रसंलग्नाज्यप्रवृत्त्यर्थतैव। अतश्च यत्र कर्मणि पूर्वकृतहोमसंबन्ध्याज्यं पात्रे संलग्नं भवति तत्र सर्वत्रापि अयं होमो भवत्येव।

[ अनसि चेद् हविर्ग्रहणं, तदा धुरि स्रुचौ निदध्यात् ]

"घृताची" इति धुरि निदधात्यनसि चेद् ग्रहणम् ॥१८॥

यदि अनसो हविः पूर्वं गृहीतं, तदा घृताची(१) इति मन्त्रेणानसो धुरि स्रुचौ स्थापयेत्। द्रव्यसंस्कारत्वात्सर्वत्र प्रवृत्तिः। पशौ स्रुग्बहुत्वे सर्वासां निधानम्। घृताच्य स्थ धुर्यौ पातेत्याद्यूहश्च कार्यः। गृहमेधीयायां ( का० श्रौ० ५।६ ) जुह्वा एकत्वाद् घृताच्यसि धुर्यौ पाहि इत्याद्यूहः ॥१८॥

[ पात्र्यां चेद्धविर्ग्रहणं, स्फ्ये स्रुचोर्निधानम् ]

स्फ्ये पात्र्यां चेत् ॥१९॥

यदि इडापात्र्यां हविर्गृहीतं तदा वेद्या उत्तरांसे स्फ्यमुदगग्रं निधाय तत्र प्रागग्रे जुहूपभृतौ आसादयेत् ॥ १९ ॥

"यज्ञ नमश्च त" इति (२) वेदिमालभते ॥२०॥

अध्वर्युः। स चायं वेद्यालम्भो वेदिसंस्कारोऽपि समिष्टयजुःसाधनीभूतद्रव्यनिक्षेपार्थमेव क्रियते। अतो यत्र समिष्टयजुरभावस्तत्र तत्साधनद्रव्यस्याप्यभावात् न तदर्थो वेद्यालम्भोऽपि कर्त्तव्यः ॥२०॥

[ वेदं, स्रुक्स्रुवम्, आज्यस्थालीं च होत्रध्वर्य्वाग्नीध आदाय गार्हपत्यं गच्छेयुः ]

वेदꣳ होता, स्रुक्स्रुवमध्वर्यु, राज्यस्थालीमग्नीदादाय ॥२१॥

होता वेदमादाय, अध्वर्युः जुहूं स्रुवं चादाय, आज्यस्थालीमग्नीदादाय, गार्हपत्यं गच्छन्तीति अग्रेण संबन्धः ॥ २१ ॥

इति कातीयश्रौतसूत्रवृत्तौ तृतीयाध्याये षष्ठी कण्डिका ॥६॥

---

[ अध्वर्युराहवनीयस्य पूर्वतो गार्हपत्यस्य पश्चिमतो वा तत्रापि पत्न्या मध्यतो वा बाह्यतो वा गार्हपत्यस्यैशानदेशं गत्वोपविश्य दक्षिणं जानु भूमौ निपात्य जुहुयात् ]

पत्नीसंयाजेभ्यो गार्हपत्यं गच्छन्ति ॥१॥

होत्रध्वर्य्वग्नीधः पत्नीसंयाजार्थं गार्हपत्यसमीपे गच्छेयुः ॥ १ ॥

तत्राध्वर्योर्गमनाय मार्गमाह—

अध्वर्युः पूर्वदक्षिणेन गार्हपत्यमेत्य पूर्वेणाऽपरेणाऽन्तरेण पत्नीमेकेषाम् ॥२॥

अध्वर्युः पूर्वदक्षिणेन गार्हपत्यमेत्य = गार्हपत्यदक्षिणाग्न्योरन्तरालेनागत्य, अथवा आहवनीयस्य पूर्वेण वितानस्य दक्षिणेन गार्हपत्यं गच्छेत्। अथवा गार्हपत्यस्य पश्चिमेन गच्छेत्। तत्रापि मार्गद्वयम्। गार्हपत्यदक्षिणाग्न्योर्मध्यतो गत्वा पत्न्या मध्यतो गच्छेत्। अथवा अग्रदक्षिणं गार्हपत्यं गच्छेत्। अस्मिन्पक्षे पत्न्या बाह्यत इत्यर्थात्सिद्ध्यति ॥ २ ॥

उपविश्य दक्षिणं जान्वाच्य ॥३॥

अध्वर्युरुपविश्य दक्षिणं जानु भूमौ पातयित्वा जुहुयात् ॥ ३ ॥

---

( १ ) ॐ घृताचीस्थो धुर्यौ पातꣳ सुम्ने स्थः सुम्ने मा धत्तम् २।१८।

( २ ) ॐ यज्ञ नमश्च त उप च यज्ञस्य शिवे सन्तिष्ठस्व स्विष्टे मे सन्तिष्ठस्व २।१७।

[ उपविष्टहोमः सर्वत्र दक्षिणजानुनिपातपूर्वकः ]

प्रसङ्गादाह—

एवꣳ सर्वत्रोपविष्टहोमेषु ॥४॥

सर्वत्रोपविष्टहोमेषु पूर्वाघार-दक्षिणाग्निहोमादिषु एवमेव उपविश्य दक्षिणं जान्वाच्य होमः कार्यः ॥ ४ ॥

[ चरणशब्दोपादाने सर्वं कर्मोपांशु, अन्यत्रोपांशुत्वश्रवणं देवतामात्रगतम् ]

उपाꣳशु चरन्ति ॥ ५ ॥

पत्नीसंयाजाख्यं कर्म सर्वमुपांशु कुर्युः ॥ ५ ॥

प्रसङ्गादाह—

चरणशब्दे सर्वं देवताऽन्यत्र ॥६॥

यत्र विधिवाक्ये चरतिशब्दः श्रूयते यथा—"उपाꣳशु चरन्ति" (का० श्रौ० ७।२।२९) इति, तत्र सर्वं कर्म उपांशु कार्यम्। यत्र चरणशब्दोपादानं विनैव उपांशुत्वं विधीयते यथा—"विष्णुरुपांशु यष्टव्य" (शां० श्रौ० १।८।८) इति। तत्र देवतामात्रमुपांशु प्रयोज्यम्। अन्यत्सर्वमुच्चैरुच्चारणीयम्। विष्णवेऽनुब्रूहि, विष्णुं यज इत्यादौ देवताबोधकविष्णवादिशब्दमुपांशु पठित्वा अनुब्रूहीत्यादिकमुच्चैः पठनीयमित्यर्थः ॥ ६ ॥

[ स्थाल्याज्येन सोमादीन्यजेत् ]

यजति सोमं, त्वष्टारं, देवानां पत्नीं, रग्निं गृहपतिमिति ॥ ७ ॥

स्थाल्याज्येन चतस्रो देवता यजेदध्वर्युः ॥ ७ ॥

[ देवपत्न्युद्देश्यके तृतीये पत्नीसंयाजे पुरस्तात् कटादिना ऽन्तर्द्धानम्, पत्नीकर्तृकोऽध्वर्योरन्वारम्भश्च। ]

तृतीयेऽन्तर्धानं पुरस्तात् ॥ ८ ॥

तृतीयपत्नीसंयाजानुष्ठानकाले गार्हपत्यस्य पुरतः अन्तर्धानकटाख्येन पात्रेण तिरोधानं कुर्यादध्वर्युः ॥ ८ ॥

पत्न्यन्वारभते ऽध्वर्युम् ॥ ९ ॥

तृतीयपत्नीसंयाजानुष्ठानकाले पत्नी अध्वर्युं कुशैरन्वारभेत। स चायमध्वर्युसंस्कारो द्वितीयानिर्देशात्। अतः पत्न्यभावे ऽपि येन केनचित्कार्यः ॥ ९ ॥

शंय्वन्तं भवतीडान्तं वा ॥ १० ॥

वाशब्दस्य शंय्वन्तपदेन संबन्धः। श्रुतौ (श० ब्रा० १।९।२।१४) तथैव श्रवणात्। तेनायमर्थः। पत्नीसंयाजाख्यं कर्म इडान्तं भवति। तत्र शंयुर्भवति नवेति विकल्पः। पत्नीसंयाजाश्च यावदुक्ते निवर्त्तन्ते, अर्थकर्मत्वात् ॥ १० ॥

शंयुवाककरणपक्षे विशेषमाह—

शंय्वन्ते वेदतृणमादायानक्ति प्रस्तरवत्स्रुचि स्रुवे स्थाल्यां च ॥ ११ ॥

शंयुवाके क्रियमाणे वेदतृणं गृहीत्वा प्रस्तरवत् अग्रं जुह्वां, मध्यं स्रुवे, मूलं स्थाल्यां व्यन्तु वय इति मन्त्रावृत्त्या अञ्ज्यादध्वर्युः ॥ ११ ॥

अग्नीदाहानुप्रहरेति ॥ १२ ॥

अध्वर्युम् ॥ १२ ॥

**प्रास्य तृणादि पूर्ववत् ॥ १३ ॥**

प्रास्य तृणं चक्षुष्पा इत्यादि शंयोर्ब्रूहीत्यन्तं ( का० श्रौ० २।८।१४-१५ ) पूर्ववत्कर्म भवति ॥ १३ ॥

**शंय्वन्ते स्रुक्स्रुवं प्रगृह्य णात्यग्ने "ऽदब्धाय" विति ॥१४॥**

शंयोर्वाकान्ते कर्मणि कृते अध्वर्युः स्रुक्स्रुवं तूष्णीं प्रगृह्य गार्हपत्ये अग्नेऽदब्धायो(१) इति मन्त्रेण जुहुयात्। अस्य पत्नीसंयाजशेषसाध्यत्वाद्यावदुक्ते गृहमेधीयादौ पत्नीसंयाजाभावे ( का० श्रौ० ५।८।१२) अस्याप्यभावः। पशौ पत्नीसंयाजानां जाघनीकरणकत्वात् (का० श्रौ० ६।६।१४) तत्र संस्रवप्रतिपाद्यरूपद्रव्यस्याप्यभावः। यावदुक्तान्तापच्छिन्नयोरपि पत्नीसंयाजानामभावः, अदृष्टार्थत्वादनयोः ॥ १४ ॥

[ दक्षिणाग्नौ होमः ]

**सव्येनावृत्य दक्षिणाग्नौ जुहो"त्यग्नय" इति "सरस्वत्या" इति च ॥ १५ ॥**

अध्वर्युर्गार्हपत्यं प्रदक्षिणं परीत्य दक्षिणाग्नौ सकृद्गृहीतमाज्यमग्नय (२) इति, सरस्वत्या (३) इति च जुहुयात्। अर्थकर्मत्वाद्यावदुक्तान्तापच्छिन्नादौ निवृत्तिरस्य। यदि पूर्वदक्षिणेन गार्हपत्यं प्रविष्टस्तदा सव्येनावृत्तिः कार्या। अन्यथा नेति कर्कादयः ॥ १५ ॥

इति कातीयश्रौतसूत्रवृत्तौ तृतीयाध्याये सप्तमी कण्डिका ॥७॥

[ पिष्टलेपहोमो दक्षिणाग्नावग्न्युद्देशेन ]

**"उलूखले मुसले यच्च शूर्पे ऽआशिश्लेष दृषदि यत्कपाले उत्प्रुषो विप्रुषः संजुहोमि सत्याः सन्तु यजमानस्य कामाः स्वाहे"ति पिष्टलेपाञ्जुहोति ॥१॥**

अध्वर्युः पिष्टलेपान् जुह्वां निधाय दक्षिणाग्नौ जुहुयात्। पिष्टलेपानां प्रतिपाद्यत्वादस्य प्रतिपत्तिकर्मत्वात् इडान्तेऽपि प्रवृत्तिः। अस्य च होमत्वेन देवतापेक्षायां सत्यां पिष्टलेपस्य पुरोडाशसंबन्धित्वात् तदीयदेवतयोः आग्नेयाग्नीषोमयोरुपस्थितावपि एकयैव देवतया कार्याभिनिवृत्तिसिद्धेः प्रथमोपस्थितः अग्निरेव देवतात्वेन संबध्यते। अतश्च अस्मिन् होमे अग्नेर्देवतात्वं प्रकृतौ विकृतौ चेति कर्कसिद्धान्तः ॥१॥

[ पत्न्या वेदयोक्त्रविमोकः ]

**पत्नी वेदं प्रमुञ्चति "वेदो ऽसी"ति, योक्त्रं च "प्र मा मुञ्चामि वरुणस्य पाशाद्येन मा ऽबध्नात्सविता सुशेवः। ऋतस्य योनौ सुकृतस्य लोके ऽरिष्टां मा सह पत्या दधात्वि"ति ॥ २ ॥**

पत्नी वेदं वेदोऽसीति (४) मन्त्रं पठित्वा विस्रंसयेत्। प्रमेति मन्त्रेण योक्त्रं च विस्रंसयेत्। प्रतिपत्तिरूपत्वाद्यन्तापच्छिन्नेऽपि प्रवृत्तिरस्य ॥ २ ॥

---

( १ ) ॐ अग्नेऽदब्धायोऽशीतम पाहि मा दिद्योः पाहि प्रसित्यै पाहि दुरिष्ट्यै पाहि दुरद्मन्या अविषन्नः पितुं कृणु सुषदा योनौ स्वाहा वाट् २।१८।

( २ ) ॐ अग्नये संवेशपतये स्वाहा २।१८।

( ३ ) ॐ सरस्वत्यै यशोभगिन्यै स्वाहा २।२०।

( ४ ) ॐ वेदोऽसि येन त्वं देव वेद देवेभ्यो वेदोऽभवस्तेन मह्यं वेदो भूयाः २।२१।

[ वेदं वेदिं यावत् स्तृणाति होता ]

**स्तृणात्यावेदेः ॥ ३ ॥**

होता गार्हपत्यस्योत्तरत आरभ्य वेदेः पूर्वान्तं यावद्वेदं स्तृणीयात्। अभिविध्यावयमाङ् ॥ ३ ॥

[ ध्रौवाज्यस्य जुह्वा वातोद्देशेन उपविश्य होमः ]

**ध्रौवꣳ समिष्टयजुर्जुहोति "देवा गातुविद"(१) इति ॥ ४ ॥**

अध्वर्युर्ध्रौवमाज्यं जुह्वां गृहीत्वा वातोद्देशेन जुह्वा समिष्टयजुःसंज्ञकं होममाहवनीये कुर्यात्। अर्थकर्मत्वादस्य अन्तापच्छिन्नादावप्रवृत्तिः। अत्र होमे वातस्य देवतात्वमिति कर्कः। अतो दर्विहोमे वाताय स्वाहेति होमः ॥ ४ ॥

[ बर्हिर्होमः ]

**बर्हिः "सम्बर्हि"(२) रिति ॥ ५ ॥**

वेद्यां स्तृतं बर्हिः सर्वं जुह्वां निधायाऽऽहवनीये जुहुयात्। बर्हिषां चरितार्थत्वात्प्रतिपत्तिरूपतया अन्तापच्छिन्नेऽपि बर्हिर्होमः प्रवर्त्तते ॥ ५ ॥

[ अध्वर्युराहवनीयं परितो गत्वा प्रणीता अपो वेद्यां निनयेत् ]

**वेद्यां प्रणीता निनयति परीत्य "कस्त्वे"ति ॥ ६ ॥**

अध्वर्युर्वेदिमध्ये दक्षिणसङ्ग्रहसमीपे प्रणीता आसाद्य स्वयमाहवनीयं प्रदक्षिणीकृत्य ब्रह्मयजमानयोरन्तराले उदङ्मुख उपविश्य कस्त्वेति(३)मन्त्रेण प्रणीता अपो भूमौ निनयेत्। अत्र मन्त्रे निनयामीत्यध्याहारः। प्रणीताप्रणयनं प्रतिपत्तिश्चरितार्थत्वात्। अतश्चान्तापच्छिन्नेऽपि भवति। नाशदोषादौ प्रायश्चित्तमात्रं, न पुनरुत्पत्तिः ॥ ६ ॥

**पुरोडाशकपालेन कणानपास्यत्यधः कृष्णाजिनꣳ "रक्षसा"मिति ॥ ७ ॥**

फलीकरणानन्तरं स्थापितान् कणान् प्रथमकपाले निधाय उत्करस्योपरि समीप एव कृष्णाजिनं सव्येन धारयन् कृष्णाजिनस्याधस्तात् उत्करे कपालेनैव रक्षसामिति (४) मन्त्रेण क्षिपेत्। अत्र देवताबोधकचतुर्थ्यादेरभावेन कर्मणो रक्षोदेवताकत्वाभावात् नात्रोदकस्पर्शः। चर्विष्टौ पुरोडाशश्रपणाभावेऽपि कणापासनार्थं कपालमात्रमुपादेयम्। कणापासने कपालस्य करणत्वश्रवणात् ॥ ७ ॥

**पूर्णपात्रं निनयति परीत्य सन्ततं यजमानोऽञ्जलिना प्रतिगृह्णाति "संवर्चसे"ति ॥ ८ ॥**

अध्वर्युः पूर्णपात्रमादाय आहवनीयं प्रदक्षिणीकृत्य यजमानसमीपे उदङ्मुख उपविष्टो यजमानस्याञ्जलौ पूर्णपात्रस्थं जलमव्यवच्छिन्नं क्षिपेत्। यजमानस्तदुदकं हस्ताभ्यां संवर्चसेति

---

(१) ॐ देवा गातुविदो गातुं वित्वा गातुमित। मनसस्पत इमं देव यज्ञꣳ स्वाहा वाते धाः २।२१

(२) ॐ संबर्हिरङ्क्ताꣳ हविषा घृतेन समादित्यैर्वसुभिः सं मरुद्भिः। समिन्द्रो विश्वदेवेभिरङ्क्तां दिव्यं नभो गच्छतु यत् स्वाहा २।२२।

(३) ॐ कस्त्वा विमुञ्चति स त्वा विमुञ्चति कस्मै त्वा विमुञ्चति तस्मै त्वा विमुञ्चति। पोषाय निनयामि २।२३।

(४) ॐ रक्षसां भागोऽसि २।२२।

गृह्णीयात्। अञ्जलिप्रक्षेपश्च तथा कार्यो यथा यजमानस्य संवर्चसेति(१) मन्त्रपाठान्ते भवेत्। "आघारे धारायां चादिसंयोग" (आप० श्रौ०२४।२।२) इति सूत्रात्। अत्र ग्रहणं प्रधानं, निनयनं तदर्थम्। तेन प्रोषिते यजमाने यत्र यजमानस्तत्रैव पूर्णपात्रनिनयनं केन चित्करणीयं, यजमानेनाञ्जलिना प्रतिग्रहश्च कार्यः। अस्यार्थकर्मत्वादन्तापच्छिन्नादौ निवृत्तिः। द्वादशाहादौ च यजमानानां बहुत्वेन सर्वयजमानार्थं निनयनं कार्यम्। सर्वैरपि यजमानैर्ग्रहणमपि कर्तव्यम् ॥८॥

## मुखं विमृष्टे ॥ ९ ॥

पूर्णपात्रजलेन यजमानस्तूष्णीं मुखं प्रक्षालयेत् ॥ ९ ॥

( विष्णुक्रमान् प्रागुदग्वा क्रामेत् )

## विष्णुक्रमान् क्रमते "दिवि व्विष्णु"रिति प्रतिमन्त्रं "पृथिव्या"मितीत ऽऊर्ध्वो वा ॥ १० ॥

यजमान उत्थाय दक्षिणवेदिश्रोणेरारभ्य आहवनीयादर्वाक् प्राङ्मुखो दिवि विष्णुरिति (२) त्रिभिर्मन्त्रैर्विष्णुक्रमसंज्ञकान् क्रमणान् कुर्यात्। अथवा पृथिव्यामिति प्रथमं क्रामेत्, अन्तरिक्षे इति द्वितीयम्, दिवि विष्णुरिति तृतीयमिति मन्त्रक्रमे विकल्पः। विष्णुक्रमणस्य पदार्थत्वादन्तापच्छिन्ने निवृत्तिः ॥ १० ॥

## "अस्मादन्ना"दिति(३) भागमवेक्षते ॥११॥

यजमानः स्वकीयं भागं पश्येत्। यजमान उत्थित एव पश्यतीत्याचारः। स्वस्थाने उपविश्य पश्येदिति देवयाज्ञिकः। एवं भूम्यवेक्षणेऽपि बोध्यम्। अस्मिन्मन्त्रे, अस्यै प्रतिष्ठाया इति मन्त्रे च निर्भक्त इत्याद्यनुषज्यते, साकाङ्क्षत्वात्। अनुषङ्गस्य वैदिकत्वात्पूर्वमन्त्रेण सह सन्धिर्भवति। भागसंस्कारत्वादस्यान्तलुप्तेऽपि प्रवृत्तिः ॥११॥

## "अस्यै प्रतिष्ठाया" इति(४) भूमिम् ॥१२॥

वेदभूमिं पश्यति यजमानः। भूम्यवेक्षणस्यार्थकर्मत्वादन्तलुप्ते निवृत्तिः। एवं प्राचीक्षणम्, आहवनीयेक्षणं, सूर्यावेक्षणं चान्तलुप्ते निवर्त्तते। अर्थकर्मत्वात् ॥१२॥

## "अगन्म स्व"रिति(५) प्राङ् ॥१३॥

प्राचीं दिशं पश्येद्यजमानः ॥१३॥

## "सञ्ज्योतिषे"(६) त्याहवनीयम् ॥१४॥

पश्यति यजमानः। वरुणप्रघासेषु वेदिद्वयस्यावेक्षणमग्न्योश्च ॥१४॥

---

(१) ॐ संवर्चसा पयसा सं तनूभिरगन्महि मनसा स२ं० शिवेन। त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद्विलिष्टम् २।२३।

(२) ॐ दिवि विष्णुर्व्यक्र२ंस्त जागतेन च्छन्दसा ततो निर्भक्तो योऽस्मान् द्वेष्टि यं च वयं द्विष्मः। ॐ अन्तरिक्षे विष्णुर्व्यक्र२ंस्त त्रैष्टुभेन च्छन्द० द्विष्मः। ॐ पृथिव्यां विष्णुर्व्यक्र२ंस्त गायत्रेण च्छदसा त० द्विष्मः २।२५।

(३) ॐ अस्मादन्नान्निर्भक्तो योऽस्मा० द्विष्मः २।२५।

(४) ॐ अस्यै प्रतिष्ठायास्ततो निर्भक्तो० द्विष्मः २।२५।

(५) ॐ अगन्म स्वः २।२५।

(६) ॐ संज्योतिषाऽभूम २।२५।

"स्वयम्भू"(१)रिति सूर्यम् ॥१५॥

सूर्यं विलोकयेद्यजमानः ॥१५॥

"वर्चोदा" इति यं वा कामं कामयते ॥१६॥

स्वयंभूरिति मन्त्रे वर्चोदा इत्यस्य स्थाने यं कामं कामयेत तद्वाचिपदप्रयोगं वा कुर्यात् । यथा पुत्रदा असि पुत्रं मे देहीत्येवम् ॥१६॥

"सूर्यस्ये"त्यावर्त्तते प्रदक्षिणम् ॥१७॥

सूर्यस्येति(२)मन्त्रेण प्रदक्षिणमावर्त्तेत । नात्रेतरथावृत्तिः, सूत्रे प्रदक्षिणग्रहणात् ॥१७॥

प्रसङ्गादाह—

ग्रहग्रहण-प्रतिगर-होमेषु च ॥१८॥

ग्रहग्रहणानन्तरं, प्रतिगरदानानन्तरं (३) ग्रहहोमानन्तरं, च तूष्णीं प्रदक्षिणमावर्तेत कर्त्ता ॥ १८ ॥

गार्हपत्यमुपतिष्ठतेऽग्ने गृहपत इति,(४)शतꣳ हिमा इति ब्रूयाद्वा ॥१९॥

न वा इति मन्त्रे विशेषः । एतदप्यर्थकर्म । अतोऽन्तलुप्तादौ न भवति ॥१९॥

"सूर्यस्ये"त्यावर्त्तते(५) प्रदक्षिणम् ॥२०॥

यजमानः ॥२०॥

गच्छति "प्राङुरुविष्ण"(६) विति ॥२१॥

गार्हपत्यात्प्राच्यां दिशि गच्छेद्यजमानः । अस्याप्यर्थकर्मत्वादन्तापच्छिन्ने निवृत्तिः ॥२१॥

( आशीर्ग्रहणम् )

"ततोऽसि तन्तुरस्यनु मा तनुह्यस्मिन्यज्ञेऽस्याꣳसाधुकृत्यायामस्मि-न्नन्नेऽस्मिल्लोकऽ इदं मे कर्मेदं वीर्यं पुत्रोऽनु सन्तनोत्वि"ति पुत्रस्य नाम गृह्णाति ॥२२॥

यजमानो वेदेः पश्चादुपविश्य ततोऽसीति मन्त्रेणाऽऽशिषः प्रार्थयेत् । तत्र अमुकशर्मा पुत्रोऽनुसन्तनोतु इति पुत्रस्य नाम ग्राह्यम् । अनेकेषु पुत्रेषु सर्वेषां नामग्रहणम् । प्रतिपुत्रं च ततोऽसीति मन्त्र आवर्त्तनीयः ॥२२॥

आत्मनोऽविद्यमाने, तन्तवे त्वा ज्योतिषे त्वेति वा ॥२३॥

अविद्यमाने पुत्रे यजमान आत्मनो नाम गृह्णीयात् । अमुकशर्माऽहं सन्तनवानीति । एतदप्यर्थकर्म । अतोऽन्तलुप्तादौ निवृत्तिरस्य । अथवा पुत्राभावे 'इदं मे कर्मेदं वीर्यं तन्तवे त्वा ज्योतिषे त्वाऽनु सन्तनोतु' इति प्रयोगो भवति ॥२३॥

---

( १ ) ॐ स्वयंभूरसि श्रेष्ठो रश्मिर्वर्चोदा असि वर्चो मे देहि २।२६।

( २ ) ॐ सूर्यस्यावृतमन्वावर्त्ते २।२६।

( ३ ) ज्योतिष्टोमे होता यदा आज्य-प्रउगादिस्तोत्रान् शंसति तदा मध्ये तस्य अध्वर्युणा प्रोत्साहनं क्रियते स प्रतिगरः । तादृशप्रोत्साहजनकं 'ओथामो दैव' इत्यादि शब्दोच्चारणं प्रतिगरदानम् (का० श्रौ०१०।६।५)

( ४ ) ॐ अग्ने गृहपते सुगृहपतिस्त्वयाऽग्नेऽहं गृहपतिना भूयासꣳ सुगृहपतिस्त्वं मयाऽग्ने गृहपतिना भूयाः । अस्थूरि णौ गार्हपत्यानि सन्तु शतꣳ हिमाः २।२७।

( ५ ) ॐ सूर्यस्यावृतमन्वावर्त्ते २।२७।

( ६ ) ॐ उरु विष्णो विक्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर ५।३८।

**आहवनीयमुपतिष्ठते तूष्णीम् ॥२४॥**

मन्त्राभावाल्लौकिकवागुच्चारणप्रतिषेधः ॥ २४ ॥

[ व्रतविसर्गः ]

**व्रतं विसृजते येनोपेयात् ॥२५॥**

यदि पूर्वमग्ने व्रतपत इति व्रतं गृहीतं तदा अग्ने व्रतपत(१) इति व्रतं विसृजेत । यदि पूर्वमिदमहमिति व्रतमुपेतं तदा इदानीमिदमहमिति(२) विसृजेत ॥२५॥

[ यजमानस्य स्वकीयभागप्राशनम् ]

**'सं यज्ञपतिराशिषे'ति भागं प्राश्नाति ॥ २६ ॥**

अत्र युज्यतामित्यध्याहारः । यजमानः स्वभागं प्राश्नीयात् । ब्रह्मा च स्वभागं प्राश्नीयादत्र । व्रतविसर्ग-भागप्राशनयोरन्तलुप्तादावपि प्रवृत्तिः । प्रतिपत्तिरूपत्वात् ॥ २६ ॥

[ प्रैषप्रयोगपूर्वकं ब्राह्मणं भोजयेत् ]

**ब्राह्मणं तर्पयितवै ब्रूयाद्यज्ञमेवैतत्तर्पयतीति श्रुतेः ॥२७॥**

अध्वर्युर्वेदेः पश्चादुपविष्टो 'ब्राह्मणं तर्पयितवै' इति प्रैषं यजमानं प्रति ब्रूयात् । प्रैषानन्तरं यजमानेन ब्राह्मणो भोजयितव्यः । "यज्ञमेवैतत्तर्पयति" ( श० ब्रा० १ । ७ । ३ । २८ । ) इति श्रुतेः । ब्राह्मणभोजनरूपोऽत्र पदार्थो न प्रैषमात्रमिति ज्ञापयितुं श्रुत्युपादानम् ॥ २७ ॥

इत्यष्टमी कण्डिका ॥८॥

इति कातीयश्रौतसूत्रवृत्तौ तृतीयोऽध्यायः समाप्तः ॥३॥



---

( १ ) ॐ अग्ने व्रतपते व्रतमचारिषं तदशकं तन्मेऽराधि २।२८।

( २ ) ॐ इदमहं य एवास्मि सोऽस्मि २।२८।

# चतुर्थोऽध्यायः

[ अमामां पिण्डपितृयज्ञः ]

**अपराह्णे पिण्डपितृयज्ञश्चन्द्रादर्शनेऽमावास्यायाम् ॥१॥**

अमावास्यायां त्रेधा विभक्तस्य दिनस्य तृतीये भागे चन्द्रादर्शने सति पिण्डपितृसंज्ञकं वक्ष्यमाणं कर्म भवति यावज्जीवम्। चतुर्दश्याममायां वा यदाऽपराह्णे अमालाभस्तदाऽयं यज्ञः, परदिने दर्शेष्टिः। अत्र पिण्डदानं प्रधानं होमादिस्तदङ्गम्। अतः प्रधाने प्रायश्चित्तातिपत्तौ सकलस्याप्यावृत्तिः। अत्र अमावास्याशब्देनापि अमावास्याकालग्रहणोपपत्तौ पुनश्चन्द्रादर्शनग्रहणात् सर्वथा यस्मिन्दिने चन्द्रस्य क्षयो भवति तस्मिन्नेव काले पिण्डपितृयज्ञः। अत एव खर्विकाया ( का० श्रौ० २ । १ । १ ) मपराह्ण एव चन्द्रमसः परमक्षय इति तदानीं पिण्डपितृयज्ञः क्रियत एव। राजसूये च "पौर्णमासेन कृष्णपक्षानेत्यामावास्येन शुक्लानाशुनासीरीयात्" ( का० श्रौ० १५।१।१८ ) इत्यनेन सर्वस्मिन्नपि शुक्लपक्षे दर्शेष्टिविधानात् तत्र यस्मिन्दिने चन्द्रमसः परमक्षयोऽमायाम्, तस्मिन्नेव पिण्डपितृयज्ञो न पक्षमध्ये। तदानीं परमक्षयाभावात् ॥ १ ॥

[ पिण्डपितृयज्ञार्थं दक्षिणाग्नौ चरुश्रपणं, होमश्च ]

**दक्षिणाग्नौ श्रपणꣳ, होमश्च ॥२॥**

पिण्डपितृयज्ञे चरोः श्रपणं दक्षिणाग्नौ कार्यं, न गार्हपत्ये। होमश्च दक्षिणाग्नौ कार्यो, नाहवनीये ॥ २ ॥

[ दक्षिणाग्नेः परिस्तरणं, तस्योत्तरतः पश्चाद्वा अर्थवतां पात्राणामेकश आसादनम् ]

**परिस्तीर्य तं, पूर्ववत्पात्रासादनमेकशः ॥३॥**

अध्वर्युस्तं दक्षिणाग्निं कुशैरप्रदक्षिणं परिस्तीर्य पूर्ववत् दक्षिणाग्नेः पश्चादुत्तरतो वा एकमेकं पात्रमासादयेत्, न पूर्ववद् द्विशः। अग्रे ( ४।१।१५ ) नीविविस्रंसनविधानात्प्रथममेव नीविबन्धनं, ततः परिस्तरणम् ॥३॥

[ गार्हपत्यादपरदिशि व्रीहिभिरपूर्णां चरुस्थालीं स्रुचं वा तूष्णीं गृहीत्वा दक्षिणाग्नेरुत्तरतो गार्हपत्यस्य पुरस्ताद्दक्षिणाभिमुखस्तिष्ठन्नवहन्यात् ]

**अपरेण गार्हपत्यं चरुमपूर्णꣳ स्रुचं वा तूष्णीं गृहीत्वोत्तरेण दक्षिणाग्निमवहन्ति तिष्ठन् ॥४॥**

गार्हपत्यात्पश्चिमतः चरुस्थाली स्रुक् वा यथा व्रीहिभिः पूर्णा न भवेत्तथा चरुस्थाल्यां स्रुचि वा तूष्णीं मौनी भूत्वाऽध्वर्युर्व्रीहीन् गृहीत्वा दक्षिणाग्नेरुत्तरतस्तिष्ठन्दक्षिणामुखोऽवहन्यात् ॥ ४ ॥

[ सकृत्फलीकरणम् ]

**सकृत्फलीकरोति ॥ ५ ॥**

न त्रिः ॥ ५ ॥

[ ईषत्स्विन्नं चरुमभिघार्योद्वास्य मेक्षणेन जुहुयात् ]

**सारतण्डुलमपूर्णꣳ श्रपयित्वाऽभिघार्योद्वास्य मेक्षणेन जुहो"त्यग्नय" इति "सोमाय" इति च ॥ ६ ॥**

"श्रृताश्रृतं पितॄणाम्" इति वाक्यात्सारशब्द ईषत्स्विन्नवाची। तण्डुलमीषत्स्विन्नं, तथा श्रुतेन चरुणा चरुस्थाली पूर्णा यथा न भवेदेवं श्रपयित्वा आज्येनाभिघार्य दक्षिणत उद्वास्य उत्तरत आनीयाऽध्वर्युर्मेक्षणेन कृतापसव्यः अग्नय इति, (१)सोमाय इति च(२)मन्त्राभ्यां द्वे आहुती जुहुयात्। होमस्याऽस्य दैवत्वेऽपि पैतृककर्माङ्गत्वात् अङ्गस्य प्रधानधर्मकत्वावश्यंभावात् प्राचीनावीतिनैव कार्यः ॥ ६ ॥

**प्रास्य तद्दक्षिणेनोल्लिख"त्यपहता"(३)इत्यपरेण वा ॥७॥**

होमानन्तरमध्वर्युर्दक्षिणाग्नौ मेक्षणमपि प्रक्षिप्य दक्षिणाग्नेर्दक्षिणतः पश्चिमतो वा स्फ्येन दक्षिणाग्रां रेखां कुर्यात् ॥ ७ ॥

[ रेखायाः परस्ताद्दक्षिणत उल्मुकं निदध्यात् ]

**उल्मुकं परस्तात्करोति "ये रूपाणी"ति(४) ॥८॥**

अध्वर्युः रेखाया अग्रतः अर्थात् दक्षिणप्रदेशे दक्षिणाग्न्युल्मुकमादाय निदधाति ॥ ८ ॥

[ रेखाया मूलमध्याग्रेषु दक्षिणसंस्थमवनेजननं पिण्डदानाय कार्यम् ]

**उदपात्रेणाऽवनेजयत्यपसव्यꣳ सव्येन वोद्धरणसामर्थ्यात् ॥ ६ ॥**

अध्वर्युरुदकपात्रेण रेखाया मूलमध्याग्रेषु दक्षिणसंस्थमवनेजनमपसव्यं = पितृतीर्थेन दद्यात्। यद्यप्यन्यत्र अपसव्यशब्दः प्राचीनावीतित्वबोधकः, तथापि अस्य पित्र्यत्वादेव प्राचीनावीतित्वप्राप्तेः पुनर्विधाने प्रयोजनाभावादपसव्यशब्देनात्र पितृतीर्थमुच्यते। पितृतीर्थेनेति कुतः। सव्येन वोद्धरणसामर्थ्यात्। अस्यार्थः। पाणौ तीर्थचतुष्टयम्। अग्रे देवतीर्थम्, मूले ब्राह्मतीर्थम्, कनिष्ठिकाप्रदेशे मनुष्यतीर्थम्, अङ्गुष्ठप्रदेशिन्योरन्तराले पितृतीर्थं चेति। तत्र देवतीर्थेन होमादिः क्रियते। ब्राह्मतीर्थेनाचमनादिः। मनुष्यतीर्थेनोद्धरणं परिवेषणापरपर्यायम्। अवशिष्टं पितृतीर्थम्। अतस्तेनैव पित्र्यं कार्यमुचितम्। अतः सव्येन कनिष्ठिकाप्रदेशेन मनुष्येभ्यः उद्धरणरूपात् सामर्थ्यात् पितृतीर्थेनैव पितृभ्योऽवनेजनादिकं कर्त्तव्यमिति भावः। कनिष्ठिकमूले सव्यता। तेन सव्येनोद्धरणं परिवेषणम्। तर्जनीमूलेऽपसव्यता = पितृतीर्थम्। तेनावनेजनमित्यर्थः। एतद्विपरीतेनैवोद्धरणं समर्थं भवति। वाशब्दः पदपूरणः ॥ ६ ॥

**असाववनेनिक्ष्वेति यजमानस्य पितृप्रभृति त्रीन् ॥१०॥**

अध्वर्युरसाविति संबुद्ध्यन्तपदेन गोत्रनामनिर्देशपूर्वकं यजमानस्य पितप्रभृति त्रीनवनेजयेत्। अमुकगोत्र यजमानपितः अमुकशर्मन् अवनेनिक्ष्व इति ॥१०॥

[ अवनेजनक्रमेण रेखायामुपमूलं सकृदाच्छिन्नान् कुशानास्तीर्य पिण्डान्ददात् ]

**उपमूलꣳ सकृदाच्छिन्नानि लेखायां कृत्वा यथावनिक्तं पिण्डान्ददात्यसावेतत्त इति ॥११॥**

---

(१) ॐ अग्नये कव्यवाहनाय स्वाहा २।२९।

(२) ॐ सोमाय पितृमते स्वाहा २।२९।

(३) ॐ अपहता असुरा रक्षाꣳसि वेदिषदः २।२९।

(४) ॐ ये रूपाणि प्रतिमुञ्चमाना असुराः सन्तः स्वधया चरन्ति। परापुरो निपुरो ये भरन्त्यग्निष्टांल्लोकात्प्रणुदात्यस्मात् २।३०।

ततोऽध्वर्युर्मूलसमीपे सकृदेकशस्त्रेण छिन्नानि समूलानि दर्भतृणानि रेखायामास्तीर्य अवनेजनक्रमेण यजमानस्य पितृपितामहप्रपितामहेभ्यः पिण्डान्दद्यात्, अमुकगोत्र अमुकशर्मन् यजमानस्य पितः एतत्ते पिण्डान्नं स्वधा इति प्रयोगेण। कुशोत्पाटनसमये एव मूलस्य अधस्तात् सकृद् एकेनैव शस्त्रप्रहारेण यदुत्पाटितं बर्हिः तत्सकृदाच्छिन्नमित्युच्यते। छेदनसमये मूलस्याधोभागे एव लवितव्या नोर्ध्वभागे इत्यर्थः। अतो ऽमूलं बर्हिः सकृदाच्छिन्नमिति केषांचनोक्तिः परास्ता। आपस्तंबस्तु "अपां मेध्यं यज्ञियमिति समूलं सकृदाच्छिन्नं बर्हिराहरति" ( आप० श्रौ० १।६।३ ) इत्यनेन मूलसहितस्य सकृदाच्छिन्नस्य बर्हिष आहरणमुक्त्वा ततः "सकृदाच्छिन्नानि वा तृणान्युपमूलं दितानि" (१।६।४) इति उपमूलं दितस्य सकृदाच्छिन्नस्यैवाहरणं विकल्पेनाह। अत्र उपमूलं मूलादूर्ध्वमिति रुद्रदत्तस्तद्व्याख्याकृत् ॥११॥

**ये च त्वामन्विति चैके ॥१२॥**

'अमुकगोत्र अमुकशर्मन् यजमानपितः ये च त्वामनु एतत्ते पिण्डान्नं स्वधा' इति वाक्यं केचिन्महर्षयः प्रयोजयन्ति ॥१२॥

[ पिण्डानामाभिमुख्येन अत्र पितर इति जपित्वा अप्रदक्षिणमावृत्योदङ्मुखो भूत्वा ग्लानिपर्यन्तं श्वासं निरुध्य प्रदक्षिणमावृत्य 'अमीदन्त' इति जपेत् ]

**"अत्र पितर" इत्युक्त्वोदङ्ङास्त आतमनात् ॥१३॥**

अध्वर्युः अत्रेति ( २।३१ ) मन्त्रं संहितास्वरेण पठित्वा अप्रदक्षिणमावृत्योदङ्मुखो भूत्वा श्वासं निरुध्य श्वासनिरोधपर्यन्तमुपविशेत् ॥ १३ ॥

**आवृत्याऽ"मीमदन्ते"ति जपति ॥१४॥**

ततोऽध्वर्युः प्रदक्षिणमावृत्य पिण्डाभिमुखो भूत्वा संहितास्वरेण अमीमदन्तेति पठेत् ॥ १४ ॥

[ पुनरवनेजनं कृत्वा नीविविस्रंसनं कृत्वा षट् पुटाञ्जलीन् कुर्यात् ]

**अवनेज्य पूर्ववन्नीविं विस्रꣳस्य "नमो व" इत्यञ्जलिं करोति ॥१५॥**

पूर्ववत्पिण्डोपरि प्रत्यवनेजनं कृत्वा नीविं विस्रंस्य नमो व(१) इति षड्भिर्मन्त्रैः नमस्कारार्थं षड्वारमञ्जलीन् कुर्यादध्वर्युः। "षड् वा नमस्कारान्" (का० श्रौ० ५।९।१९)इति पितृयज्ञे वक्ष्यमाणसूत्रैकवाक्यतया अत्रापि नमस्कारषट्कमभिप्रेतम्। अत्र "गृहान्न इति जपति" (का० श्रौ० ५।९।२०) इति पितृयज्ञोक्तो गृहान्न(२) इत्यस्य जपश्च कार्यः, समानश्रवणात् ॥१५॥

[ प्रतिपिण्डं सूत्राणि, ऊर्णा, दशा वा, यजलोमानि वा समर्पयेत् ]

**"एतद्व" इत्युपास्यति सूत्राणि प्रतिपिण्डम्" ॥१६॥**

एतद्व(३) इति मन्त्रेण सूत्राणीति बहुवचनोपदेशात् प्रतिपिण्डं त्रीणि त्रीणि सूत्राणि निदध्यात् ॥१६॥

पक्षान्तरमाह—

---

( १ ) ॐ नमो वः पितरो रसाय २।३२। ॐ नमो वः पितरः शोषाय २।३२। ॐ नमो वः पितरो जीवाय २।३२। ॐ नमो वः पितरः स्वधायै २।३२। ॐ नमो वः पितरो घोराय २।३२। ॐ नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वः २।३२।

( २ ) ॐ गृहान्नः पितरो दत्त सतो वः पितरो देष्म २।३२

( ३ ) ॐ एतद्वः पितरो वासः २।३२।

**ऊर्णा दशा वा ॥१७॥**

अथवा प्रतिपिण्डमूर्णां निदध्यात्। अथवा वाससो दशां छित्वा निदध्यादिति पक्षद्वयम् ॥१७॥

**वयस्युत्तरे यजमानलोमानि वा: ॥१८॥**

अथवा यदि पञ्चाशत्तमवर्षादूर्ध्ववयस्को यजमानो भवेत्तदा तस्य हृदयस्थानि लोमानि छित्वा सूत्रस्थाने निदध्यात् ॥१८॥

[ अवनेजनावशिष्टं जलं पिण्डेषु पिण्डसमीपे वा निषिञ्चेत् ]

**"ऊर्ज"मित्यपो निषिञ्चति ॥१९॥**

ऊर्जमिति(१) मन्त्रेणाऽध्वर्युः पिण्डमूले पिण्डसमीपे भूमावपो निषिञ्चेत्। तर्पयत मे पितॄनिति लिङ्गादिति कर्कः। पितॄणामधिष्ठानं पिण्डाः। तेन पिण्डानामुपरि निषिञ्चेदिति देवयाज्ञिकः ॥१९॥

[ अध्वर्युणा स्थाल्यामवहितान् पिण्डान् यजमानोऽवजिघ्रति ]

**अवधायाऽवजिघ्रति यजमानः ॥२०॥**

अध्वर्युः स्थाल्यां पिण्डान् स्थापयेत्। यजमानश्च स्थालीस्थान् पिण्डान् जिघ्रेत्। अवघ्राणं यजमानसंस्कारः। अतः प्रोषिते न भवति। अत्र ल्यबादेशः पूर्वकालतामात्रे, न समानकर्तृकतायाम्। "निरुप्याज्यं प्रातर्दोहनम्" ( का० श्रौ० ४।२।३७ ) इतिवत्। सूत्रार्थस्तु अध्वर्यौ पिण्डानवधाय स्थिते सति यजमानोऽवजिघ्रेदिति योजनीयः ॥२०॥

[ सकृदाच्छिन्नान्यग्नावभ्याधाय उल्मुकमभ्यादध्यात् ]

**उल्मुक-सकृदाच्छिन्नान्यग्नौ ॥२१॥**

अध्वर्युः सकृदाच्छिन्नानि अग्नौ प्रक्षिप्य उल्मुकं प्रक्षिपेत्। श्रुतौ (श० ब्रा०४।२।२।२४) तथैव विधानात्। सूत्रे त्वल्पाच्तरत्वादुल्मुकस्य पूर्वनिपातः ॥२१॥

[ ऋतुस्नाता पुत्रकामा पत्नी मध्यमपिण्डं भुञ्जीत ]

**"आधत्ते"ति(२) मध्यमपिण्डं पत्नी प्राश्नाति पुत्रकामा ॥२२॥**

पुत्रकामा यजमानपत्नी पितामहपिण्डं भुञ्जीत ॥२२॥

[ जीवत्पितृकस्य पिण्डपितृयज्ञानुष्ठानम् ]

**प्रेतेभ्यो ददाति जीवपितृकोऽपि जीवान्तर्हिते ऽपि ॥२३॥**

यत्पितृभ्यो दानमुक्तं तन्मृतेभ्यः पितृभ्यो दद्यात्। जीवन् पिता यस्य स जीवपितृको जीवेन पित्रादिना व्यवहितेभ्योऽपि पितामहादिभ्यो दद्यात्। जीवत्पितृकोऽपि पिण्डपितृयज्ञमनुतिष्ठेत्। अनुतिष्ठंश्च पितृपितामहप्रपितामहेषु यः कश्चिज्जीवति तं जीवन्तं परित्यज्य त्रिभ्यः पिण्डान्दद्यात् ॥२३॥

एवं प्राप्त आह—

**जीवपितृकस्य होमान्तम् ॥२४॥**

जीवपितृकस्य यजमानस्य होमान्तमेव पिण्डपितृयज्ञसंज्ञं कर्म स्यात्। न तत ऊर्ध्वं पिण्डदानादि ॥२४॥

---

(१) ॐ ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्। स्वधा स्थ तर्पयत मे पितॄन् २।३४।

(२) ॐ आधत्त पितरो गर्भं कुमारं पुष्करस्रजम्। यथेह पुरुषोऽसत् २।३३।

एवं पक्षद्वयमुपन्यस्य सिद्धान्तमाह—

**अनारम्भो वा ॥२५॥**

वाशब्दः पूर्वपक्षनिरासार्थः । पिण्डदानस्य प्रधानत्वात् तदभावे होमस्याङ्गभूतस्यानुष्ठानं न युक्तम् । अतो जीवत्पितृकेन पिण्डपितृयज्ञो नानुष्ठेयः ॥२५॥

तत्रोपपत्तिमाह—

**न व्यवेते जातूकर्ण्यः ॥२६॥**

जीवेन पित्रादिना व्यवहिते पितामहादौ पिण्डदानं न भवतीति जातूकर्ण्य आह । जातूकर्ण्यग्रहणं प्रत्ययदार्ढ्यार्थम् ॥२६॥

तत्र हेतुमाह—

**न जीवन्तमतीत्य ददातीति श्रुतेः ॥२७॥**

अतो जीवत्पितृस्य प्रधाने पिण्डदाने निषिद्धे अनारम्भपक्ष एव श्रेयान् ॥२७॥

[ पिण्डपितृयज्ञो दर्शाङ्गम् ]

**पूर्वो वाऽङ्गत्वात्पिण्डपितृयज्ञः ॥ २८ ॥**

वाऽवधारणे । पिण्डपितृयज्ञो दर्शयागात्पूर्वमनुष्ठेयः । कुतः ! अङ्गत्वात् । "पूर्वेद्युः पितृभ्यो निष्क्रीय प्रातर्यज्ञं प्रतनुते" (तै० ब्रा० १।३।१०) इति श्रुत्या पूर्वानुष्ठेयाङ्गत्वबोधनात् । अतश्चतुर्दश्युपवासपक्षे चतुर्दश्यामेवाऽपराह्णे पिण्डपितृयज्ञः । अमायां दर्शेष्टिः ॥ २८ ॥

पिण्डपितृयज्ञो दर्शेष्टेरनङ्गमिति पूर्वपक्षयति—

**प्रकरण-काल-लिङ्गा-ऽनुग्रहवचना—ऽनाहिताग्निश्रुतिभ्यो ऽनङ्गम् ॥ २९ ॥**

पिण्डपितृयज्ञो न दर्शेष्ट्यङ्गम् । कुतः । प्रकरणभेदात्, कालभेदात्, लिङ्गात्, अनुग्रहवचनात्, अनाहिताग्निश्रुतेश्च । दर्शयागप्रकरणे अस्य पाठाभावात् , प्रतिपदि पूर्वाह्णे दर्शयागः, अमायामपराह्णे पिण्डपितृयज्ञ इति कालभेदात्, "यदमणा गृहीतः पौर्णमासेन यजेत पितृयज्ञेनैवामावास्यायामवरुन्धे" इति दर्शेष्टिं विनाऽपि नैमित्तिकस्य केवलस्य पितृयज्ञानुष्ठानरूपस्य लिङ्गस्य दर्शनात्, संवत्सरसाध्ये गवामयनसत्रे दर्शादीनां तत्तद्यागानामनुष्ठानाभावात् कथं तदन्तरायजन्यो दोषः परिहृतो भवेत् इति प्रश्न-प्रतिवचनप्रकरणे"कथमेषामामावास्यं हविरन्तरितं भवति" ( शत० ब्रा० १२।३।५।६ ) इति दर्शान्तरायप्रश्नापेक्षया "कथमेषां पिण्डपितृयज्ञोऽनन्तरितो भवतीत्यौपसनैरिति ब्रूयात्" ( श० १२।३।५।५ ) इति पृथगनुग्रहदर्शनात्, "अप्यनाहिताग्निना कार्यं" इति स्मार्त्ताग्निमतः पिण्डपितृयज्ञविधानाच्च पिण्डपितृयज्ञस्य न दर्शाङ्गत्वम् ॥ २९ ॥

एवं प्राप्ते सिद्धान्तयति—

**अङ्गं वा, समभिव्याहारात् ॥ ३० ॥**

वा ऽवधारणे। दर्शाङ्गमेव पिण्डपितृयज्ञः । कुतः ? समभिव्याहात् । पूर्वेद्युः पितृभ्य इति उक्तवाक्यादित्यर्थः । यदुक्तं प्रकरणभेदादनङ्गमिति, प्रकरणान्तरपठितमप्यङ्गं भवति । यथा—प्रवर्ग्यः सोमस्य । एवमग्निहोत्र-दर्शपूर्णमासाद्यर्थमुद्धरणादि भिन्नकालविहितमप्यङ्गं भवति । यदमणा गृहीत इत्यादिलिङ्गं तु वाचनिकम् । किमिव हि वचनं न कुर्यात् । नास्ति वचनस्यातिभारः । एवमनाहिताग्निना कार्यं इत्यपि वचनम् । अनुग्रहवचनं त्वर्थवादप्रायमङ्गत्वे ऽप्युपपद्यते । तस्मादङ्गमेव पिण्डपितृयज्ञः ॥ ३० ॥

अनाहिताग्नेरप्येषः ॥३१॥

एष पिण्डपितृयज्ञः स्मार्त्ताग्निमतोऽपि भवति ॥३१॥

इति कातीयश्रौतसूत्रवृत्तौ चतुर्थाध्याये प्रथमा कण्डिका ॥१॥



[ चतुर्दश्याममायां वा पलाशशाखाच्छेदनम् ]

श्वो नोदेतेत्यदृष्टे वा पर्णशाखां छिनत्ति शमीलीं "इषेत्वे""त्यूर्जे-त्वेति" वा ॥१॥

आगामिनि दिवसे अमायां चन्द्रमा न उदेष्यति इतिज्ञात्वा चतुर्दश्यां पर्णस्य पलाशस्य-शाखाम्, अथवा शमीशाखां(१) इषेत्वेति(२) ऊर्जेत्वेति' वा मन्त्रेण छिन्द्यादध्वर्युः। अथवा अदृष्टे चन्द्रमसि अमावास्यायां शाखां छिन्द्यात्। चतुर्दश्याममायां वा शाखाच्छेदनमिति यावत्। चतुर्दशीपक्षः खर्विकाभिप्रायः ॥ १ ॥

छिनद्मीति वोभयोः साकाङ्क्षत्वात् ॥ २ ॥

उक्तयोरुभयोर्मन्त्रयोश्छिनद्मि इति क्रियापदमध्याहर्त्तव्यम् ॥ २ ॥

द्वितीयमन्त्रे वैकल्पिकमध्याहारान्तरमाह—

सन्नमयामीति वोत्तरे ॥ ३ ॥

अथवा द्वितीयमन्त्रे सन्नमयामि इति क्रियापदमध्याहर्त्तव्यम्। सन्नमनमृजूकरणं शाखालग्नधूल्याद्यपनयनमिति महीधरः। वक्रत्वे शाखाया आर्जवत्वसम्पादनम् इति रुद्रदत्तः ( आप श्रौ० १।१।११ ) ॥ ३ ॥

[ प्राच्या, उदीच्याः, प्रागुदीच्या वा पलाशशाखाया ग्रहणम् ]

बहुलपलाशामशुष्काग्रां प्रागुदीचीमन्यतमां वा ॥ ४ ॥

बहुपत्राम्, आर्द्राग्रां, वृक्षादीशान्यां दिशि प्रसृतां, प्राच्यां वा, उदीच्यां वा प्रसृतां शाखां छिन्द्यादिति पूर्वेण संबन्धः ॥ ४ ॥

[ शाखाच्छेदनात्पूर्वं व्रतोपायनं पौर्णमासवद्वा ]

व्रतमुपैति ॥ ५ ॥

इष्टिपूर्वदिवसे "अग्न्यन्वाधानादि, व्रतोपायनीयमश्नीत" ( का० श्रौ० २।१।२-६ ) इत्यन्तं कृत्वा शाखां छिन्द्यात्। ततो व्रतग्रहणं कुर्यात्। व्रतग्रहणम् अग्ने व्रतपत (१-५) इति मन्त्रोच्चारणपुरःसरं नियमग्रहणम्। तस्य च पूर्वदिने विहितत्वात् शाखाच्छेदनस्य अनि-यतकालस्य कालविधानार्थमिदं सूत्रम्। अतश्च व्रतोपायनाशन-व्रतग्रहणयोर्मध्ये शाखा-च्छेदनं कर्तव्यम् ॥५॥

यथोक्तं वा ॥६॥

यस्मिन् यस्मिन् काले वैकल्पिकं व्रतग्रहणमुक्तं तत्र तत्र काले वा भवति इह वा भवति। न तु अस्मिन्नेवासरे व्रतग्रहणमिति नियमः ॥६॥

---

( १ ) ॐ इषे त्वा छिनद्मि १।१।

( २ ) ॐ ऊर्जे त्वा सन्नयामि १।१।

[ पलाशशाखया वत्सानां स्त्रीपुंसाधारण्येन एकैकस्योपस्पर्शनम् ]

मातृभिर्वत्सान्त्सꣳसृज्य वत्सꣳ शाखयोपस्पृशति "वायवस्थे"ति ॥७॥

अध्वर्युः शाखामादाय यजमानस्य षड्भिर्गोभिः सह स्त्रीपुंससाधारण्येन षड् वत्सान् संसृज्य संमेल्य तान् वत्सान् "वायव स्थ"(१) इति मन्त्रावृत्या तया शाखया प्रत्येकमुपस्पृशेत् । वत्सस्योद्दिश्यमानत्वाल्लिङ्गं वचनं चाविवक्षितम् ॥७॥

उपायवस्थेति चैके ॥८॥

एके शाखिनो "वायव स्थोपायव स्थ" इति मन्त्रं पठन्ति ॥८॥

[ वत्समातृणामेकां पलाशशाखयोपस्पृशेत् ]

"देवो वः"(२)इति मातृणामेकां व्याकृत्य ॥ ९ ॥

प्रपूर्वस्मात्सूत्राच्छाखयोपस्पृशतीत्यनुवर्त्तते । अध्वर्युर्वत्समातृणां षण्णां गवां मध्ये एकां गां स्ववत्सेन वियोज्य तां गां शाखयोपस्पृशेत् । उपस्पर्शनस्यास्य संस्कारकर्मत्वात् या गौरुपस्पृश्यते तस्या एवायं संस्कारः । इतरासां तु विध्यभावान्नैवास्ति संस्कारः । एवं च मन्त्रस्थं बहुवचनं पूजार्थम् । अयं च मन्त्रो न समवेतार्थः । किन्तु अदृष्टार्थनिगदः । अदृष्टार्थत्वादेव च राजसूये "वहिनीदध्यैन्द्रम्" (का० श्रौ० १५।१।१८) इत्यत्र वहिन्या गोरेकत्वेऽपि न एकवचनान्ततया विपरिणामयितव्यः । या गौरनो वहति सा वहिनी । इदं च जैमिनिमतविरुद्धम् । जैमिनिस्तु "नास्यैतां रात्रिं कुमाराः पयो लभन्ते" (आप० श्रौ० १।११।२) इति वचनमवलम्ब्य तिसृभ्यो ऽधिकानां सर्वासामेव गवां दोहनं ( पू० मी० ११।२।७ ) सिद्धान्तितवान् । ॥९॥

[ सान्नाय्ये इन्द्रो महेन्द्रो वा देवता ]

ऐन्द्रं भवति माहेन्द्रं वा ॥१०॥

तत्सान्नाय्यं हविरिन्द्रदेवत्यं महेन्द्रदेवत्यं वा भवति । महेन्द्रदेवत्यपक्षे महेन्द्राय भागमित्यूहः ॥१०॥

[ अग्न्यगारस्य पुरस्तात्पलाशशाखाया उपगूहनम् ]

"यजमानस्य(३)पशू" नित्यग्न्यगारस्यान्यतरस्य पुरस्ताच्छाखामुपगूहति ॥११॥

आहवनीयागारस्य गार्हपत्यागारस्य वा पूर्वभागे शाखां स्थापयेदध्वर्युः । राजसूये वहिनीदधनि पशुं पाहीति विपरिणामः । तत्र गोरेकत्वात् ॥११॥

[ सान्नाय्ये, पुरोडाशे च उपवेषकरणम् ]

मूलादुपवेषं करोति "वेषोऽस्युपवेषो द्विषतो ग्रीवा उपवेविड्ढि त्वेशाँ अग्ने सुभग धारयेह । ऋद्धाः कर्मण्या अनपायिनो यथाऽसन्नि"ति ॥१२॥

वृक्षाच्छिन्नायाः शाखाया अग्रतः प्रादेशप्रमाणां शाखां छित्वा तस्याः शाखाया मूलदेशात् अरत्निप्रमाणमुपवेषं कुर्यात् ॥ १२ ॥

---

(१) ॐ वायव स्थ १।१।

(२) ॐ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणऽ आप्यायध्वमघ्न्याऽ इन्द्राय भागं प्रजावतीरनमीवाऽ अयक्ष्मा मा व स्तेनऽ ईशत माऽघशꣳसो ध्रुवाऽ अस्मिन् गोपतौ स्यात बह्वीः १।१।

(३) ॐ यजमानस्य पशून् पाहि १।१।

## साम्नाय्ये शाखासंयोगात् ॥१३॥

साम्नाय्ये एवोपवेषो भवति नान्यत्र। कुतः? शाखासंयोगात्। "शाखां परिवास्योपवेषं करोति" (आप० श्रौ० १।६।७) इति वचनादुपवेषस्य शाखासंबन्धावगमादित्यर्थः ॥१३॥

सिद्धान्तमाह—

## उपधानाद्वोभयोः ॥१४॥

वाऽवधारणे। उपवेषस्य कपालोपधानार्थत्वादुभयत्रोपवेषो भवति। ततश्च पुरोडाशेष्टौ शाखाया अभावे वारण उपवेषः कार्योऽङ्गारोदूहनार्थम् ॥१४॥

[ शाखां परिवास्य तस्यां कुशद्वयरूपं पवित्रं बध्वा तस्या अग्न्यगारे उपगूहनम् ]

## "वसोः पवित्र"मिति(१) पवित्रमस्यां बध्नाति कुशौ ॥१५॥

अस्यां शाखायां कुशौ एव पवित्रं बध्नीयात्। द्वौ कुशौ कुशत्रयं वा पवित्रमुच्यते ॥१५॥

[ वेण्याकारं वा पवित्रं शाखायां बध्नीयात् ]

## त्रिवृद्वा ॥१६॥

अथवा त्रिवृत् = त्रीणि दर्भतृणान्येव पवित्रं शाखायां बध्नीयात्। एतत्पवित्रबन्धनं शाखोपगूहनात्पूर्वं कर्तव्यम्। पाठक्रमादर्थक्रमस्य बलीयस्त्वात् ॥१६॥

[ साम्नाय्ययाजिनो ऽत्येऽहनि रात्रौ यवाग्वाऽग्निहोत्रहोमो, न पयसा ]

## यवाग्वाऽग्निहोत्रहोमः सन्नयतस्ताᳫं रात्रिम् ॥१७॥

साम्नाय्यं दधिपयोरूपं हविः कुर्वतो यजमानस्य तस्यां रात्रौ अमायां यवागूसंज्ञकेन द्रव्येणाग्निहोत्रहोमः कार्यः। प्रातः प्रतिपदि च यवाग्वैवाग्निहोत्रहोमः। "सायं होमेषु यद्द्रव्यं प्रातर्होमेषु तद् भवेत्" इति यज्ञपार्श्वोक्तेः। तण्डुलैः शिथिलपकायवागूरित्युच्यते ॥१७॥

[ गौर्वत्सेन सङ्गतेति दोग्ध्रा उक्तरिते अध्वर्युः स्थालीमादायाधिश्रित्योदगग्रं पवित्रमस्यां निधाय अधूद्रेण दोहयित्वा यजमाने स्थालीमन्वारब्धे आसिच्यमाने पयसि देवस्त्वेति जपेत् ]

## हुत 'उपसृष्टां प्रब्रूता'दित्याह ॥१८॥

हुतेऽग्निहोत्रे अध्वर्युः "उपसृष्टां प्रब्रूतात्" इति त्रैवर्णिकं दोग्धारं प्रति ब्रूयात्। वत्सेन सङ्गतां गां मां प्रति ब्रूतादिति प्रैषार्थः ॥१८॥

## प्रोक्ते "द्यौरसी"ति(२) स्थाल्यादानम् ॥१९॥

वत्सं संसृज्य 'उपसृष्टा' इति दोग्ध्रा प्रोक्ते अध्वर्युः स्थाल्यादानं कुर्यात्। स्थाल्यादानस्याधिश्रयणार्थत्वाद्वायव्ये पयसि (का० श्रौ० ५।११।५) अधिश्रयणाभावादनादानम्। पशौ स्थालीस्थानापन्नयोर्वपाश्रपण्यो (का० श्रौ० ६।६।११) रादाने 'द्यौ स्थः' 'पृथिवी स्थः' इत्यूहः ॥१९॥

## "मातरिश्वन"(३) इत्यधिश्रयति ॥२०॥

गार्हपत्ये स्थालीं स्थापयेत्। आहवनीयश्रापिण आहवनीये एव ॥२०॥

---

(१) ॐ वसोः पवित्रमसि १।२।

(२) ॐ द्यौरसि पृथिव्यसि १।२।

(३) ॐ मातरिश्वनो घर्मोऽसि विश्वधाऽ असि। परमेण धाम्ना दृᳫंहस्व मा ह्वार्मा ते यज्ञपतिर्ह्वार्षीत् १।२।

**"वसोः पवित्र"मिति(१) पवित्रमस्यां करोत्युदग्वा ॥२१॥**

अध्वर्युः स्थाल्या उपरि शाखापवित्रमुदगग्रं प्रागग्रं वा स्थापयेत् ॥२१॥

**वाग्यतो दोहयत्यशूद्रेण ॥ २२ ॥**

अध्वर्युस्त्रैवर्णिकं दोग्धारं 'गां धुक्ष्व' इति प्रैष्य वाग्यतोऽवतिष्ठेत्। एवं प्रेषितो दोग्धा च गां दुह्यात् ॥ २२ ॥

**स्थाल्यन्वारब्धे "देवस्त्वे"त्यासिच्यमाने जपति ॥ २३ ॥**

स्थालीमन्वारब्धे यजमाने दोग्धा गां दुग्ध्वा स्थाल्यामासिच्यमाने पयसि धृतशाखा-पवित्रोऽध्वर्युर्देवस्त्वेति(२) मन्त्रं पठेत् ॥२३॥

[ 'कामधुक्ष' इति प्रश्ने क्रमेण 'सा विश्वायुः' इत्यादिना प्रतिवचनम् ]

**"कामधुक्ष" इति प्रश्नः ॥ २४ ॥**

कामधुक्ष(३) इति दोग्धारम्प्रति अध्वर्योः प्रश्नः ॥ २४ ॥

**प्रोक्ते "सा विश्वायु"रित्याह ॥ २५ ॥**

दोग्ध्रा अमूम् गङ्गामिति गोनाम्नि प्रोक्ते अध्वर्युः 'सा विश्वायुः'(४) इति मन्त्रं ब्रूयात् ॥ २५ ॥

**एवमितरे उत्तराभ्यां प्रतिमन्त्रम् ॥ २६ ॥**

अनेनैव प्रकारेण गां धुक्ष्व इत्यादिना इतरे द्वे गावौ अध्वर्युरुत्तराभ्यां 'सा विश्वकर्मा,(५) सा विश्वधायाः'(६) इति मन्त्राभ्यां प्रतिमन्त्रमेकैकां गामभिदधद् दोहयेत् ॥२६॥

**विसृष्टवागुत्तरा अनन्वारब्धे ॥ २७ ॥**

तिसृणां दोहनानन्तरमध्वर्युरन्या गाः पूर्ववद्दोहयेत्। तत्र अध्वर्योर्वाग्यमो यजमानस्य स्थाल्यन्वारम्भश्च न भवतः। जपस्तु भवत्येव ॥ २७ ॥

( तिसृणां दोहनम् )

उत्तरा इत्यत्र बहुत्वश्रवणात्सङ्ख्यासन्देहे निर्णयार्थमाह—

**यावत्स्वमधिकारात् ॥ २८ ॥**

यावत्य आत्मीयास्त्रिप्रभृति गावो भवन्ति तावतीः सर्वा दोहनीयाः। कुतः ? अधिकारात्। सर्वास्वपि गोषु यजमानस्य स्वत्वाधिकारादित्यर्थः ॥ २८ ॥

एवं प्राप्ते आह—

**तिस्रो वा नित्यत्वात् ॥ २९ ॥**

वाऽवधारणे। तिस्र एव दोहनीया, नाधिकाः। कुतः। त्रित्वे बहुवचनस्य नियतत्वात् ॥ २९ ॥

---

(१) ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् १।३।

(२) ॐ देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा १।३।

(३) ॐ कामधुक्षः १।३।

(४) ॐ सा विश्वायुः १।४।

(५) ॐ सा विश्वकर्मा।१।४।

(६) ॐ सा विश्वधायाः १।४।

ननु चतुष्ट्वादावपि बहुवचनं नित्यमेव। तत्राह—

**आदिसामर्थ्यात् ॥ ३० ॥**

यद्यपि चतुष्ट्वादावपि बहुवचनं नियतं, तथापि आदिसामर्थ्यात् बहुत्वस्यादौ त्रित्वसंख्यायामेव सत्वात् त्रित्वगतमेव बहुवचनं ग्राह्यम्। प्रथमातिक्रमे कारणाभावात्। तावतैव शास्त्रार्थस्य कृतत्वात् किमर्थमधिकानां दोहनम् ॥ ३० ॥

**दर्शनाच्च ॥ ३१ ॥**

"कृष्णा भौमा, धूम्रा आन्तरिक्षाः, बृहन्तो दिव्याः, शबला वैद्युताः, सिध्मास्तारकाः" (शु० य० २४।१०) इति पञ्च बहुवचनान्यनुक्रम्य "पञ्चदशिन आलभते" (श० १३. २. ५. १) इति अश्वमेधे पशूनां पञ्चदशसङ्ख्योपबन्धनं तदैवोपपद्यते यदा बहुवचनेन त्रित्वसङ्ख्या विशिष्टा एव गृह्यन्ते। अतो लिङ्गदर्शनादपि तिस्र एवात्र गावो दोहनीया नाधिकाः ॥ ३१ ॥

[ परिक्षालनोदकमध्वर्युः स्थाल्यामासिञ्चेत् ]

**परिक्षालनमानयति "सम्पृच्यध्वमृतावरीरूर्मिणा मधुमत्तमाः। पृञ्चतीर्मधुना पयो मन्द्रा धनस्य सातये" इति ॥ ३२ ॥**

अध्वर्युर्दोहनपात्रे किञ्चिज्जलं प्रक्षिप्य पात्रं प्रक्षाल्य तज्जलं स्थाल्यां दुग्धमध्ये आसिञ्चेत् ॥ ३२ ॥

( सायंहोमशेषेण पय आतनक्ति )

**उद्वास्यातनक्ति प्राग्घुतशेषे "ऐन्द्रस्य त्वे"ति(१) ॥ ३३ ॥**

अध्वर्युः पयः श्रपयित्वा उद्वास्य प्राक् पूर्वं चतुर्दश्यां सायं हुतशेषेण दधिभावमापादितेन आतनक्ति कठिनीभवनार्थम्। अर्थाद्दधित्वसम्पत्यर्थं दुग्धमध्ये दधि प्रक्षिपतीत्यर्थः। एतेन सान्नाय्ययाजी चतुर्दश्यां सायं पयसा अग्निहोत्रहोमं कृत्वा शेषभूतं पयो दध्ना संयोज्य उत्तरेद्युरातञ्चनार्थं स्थापयेदित्यायाति। कर्कोपाध्यायो हि "प्रातर्हुतशेषेणेति सम्प्रदायः। नेत्यपरे। तदा प्रातर्हुशेषेणेत्येवावक्ष्यत्। अतः प्राक्शब्दस्य पूर्वकालवाचित्वात् पूर्वं यद्धुतशेषं सायं होमशेषमित्यर्थः" इति व्याख्याय सायं होमशेषग्रहणस्य दृढीकरणाय पुनराह "आतनक्तीति आतञ्चे रूपम्। स च सङ्कोचनार्थः। सङ्कोचः काठिन्यं, तत् सायंहोमशेषेण सुकरम्" इति। सायंहोमशेषभूतं हि पयः दध्यादिसंयुक्तं सत् अहोरात्रात्मकेन कालेन कठिनीभावमापन्नम् अन्यस्य पयसः शीघ्रंकठिनीकरणाय प्रभवति। न तु प्रातर्हुतशेषभूतं पयः दध्यादियुक्तं सत् यामचतुष्टयमात्रेण सम्यक् कठिनीभावमापद्यते। येन तत् अन्यस्य शीघ्रंकठिनीकरणे समर्थं भवेत्। अतः सायंहोमशेषस्यैव ग्रहणमिति कर्काशयः। चतुर्दश्यां दध्नाऽग्निहोत्रहोमस्तु न कर्कसम्मतः। नहि प्रातर्हुतशेषदध्यपेक्षया सायं हुतशेषदध्नः कठिनीकरणाय विशेषो भवितुमर्हति। येन दधिहोमाङ्गीकारे कर्कोक्तिः सङ्गच्छेतेति। देवयाज्ञिकैस्तु चतुर्दश्यां दध्नाऽग्निहोत्रहोम उक्त इति ॥३३॥

[ सोदकेनोत्तानेन अमृन्मयेन पयःस्थालीमपिदध्यात् ]

**सोदकेनापिदधात्यमृन्मयेन "विष्णो हव्य"मिति(२) ॥ ३४ ॥**

सोदकेनामृन्मयेनोत्तानेन पात्रेण दोहस्थालीं ढक्कयेत् ॥३४॥

---

(१) ॐ इन्द्रस्य त्वा भागꣳ० सोमेनातनच्मि १।४।

(२) ॐ विष्णो हव्यꣳ० रक्ष १।४।

**निधाय वत्सापाकरणं पूर्ववत् ॥३५॥**

तां दोहस्थालीं शिक्यादौ निधाय पूर्ववद् वत्सापाकरणं प्रातर्दोहार्थं कुर्यात् । तच्च मातृभिर्वत्सान्त्संसृज्येत्यारभ्य शाखोपगूहनान्तम् ॥ ३५ ॥

[ असोमयाजिनो ऽमायामाग्नेयैन्द्राग्नपुरोडाशौ ]

**प्रातराग्नेय ऐन्द्राग्नश्च द्वादशकपालोऽसन्नयतः ॥ ३६ ॥**

असान्नाय्ययाजिनः प्रातः प्रतिपदि दर्शेष्टौ आग्नेयोऽष्टाकपालः, ऐन्द्राग्नश्च द्वादशकपालः पुरोडाशो भवति ॥ ३६ ॥

[ प्रातर्दोहनं पात्रान्तरे कर्त्तव्यम् ]

**निरुप्याज्यं प्रातर्दोहनमन्यस्मिन् ॥३७॥**

दर्शेष्टौ आज्यनिर्वापानन्तरं सायंदोहपात्रादन्यस्मिन्पात्रे प्रातर्दोहः कार्यः । अन्यस्मिन्निति ग्रहणात्सायंदोहस्य तत्पात्रस्थस्यैवातञ्चनं, न पात्रान्तरे ॥३७॥

( प्रातर्दोहं श्रपयित्वा सायंदोहमाहृत्य प्रातर्दोहमभिघार्य उद्वास्य उभौ दोहावनक्ति )

**परिह्वालनान्तं कृत्वा सायंदोहमाहृत्य प्रातर्दोहꣳ श्रपयित्वाऽभिघार्योद्वास्योभावनक्ति ॥३८॥**

उपसृष्टां प्रब्रूतादित्यारभ्य परिह्वालनमानयतीत्यन्तं ( ४।२।१८-३२ ) सायं दोहवत् कृत्वा सायंदोहं तत्रैवानीय प्रातर्दोहं श्रपयित्वा प्रातर्दोहमभिघार्य उद्वास्य पुरोडाशाञ्जनानन्तरं "यस्त" ( का० श्रौ० २।८।१४ ) इति मन्त्रेण सायंप्रातर्दोहौ क्रमेणाऽनक्ति ॥३८॥

[ दध्नः पूर्वं पाठात् प्राणदानादयस्तस्य पूर्वम् , अवदानं तु श्रुतिवशात् पूर्वं पयस एव ]

**श्रृतस्याग्रेऽवद्यतीति श्रुतेः ॥३९॥**

अवद्यतीत्यन्तमावर्त्तनीयम् । तत्रैकं प्रतिज्ञानिर्देशकम् । द्वितीयं हेतुनिविष्टम् । तेनायमर्थः । श्रृतस्य दुग्धस्य जुह्वामवदानं पूर्वं कार्यम् , पश्चाद्दध्नः । कुतः ? "श्रृतस्याग्रेऽवद्यति" इति श्रुतेः । दध्नः प्रथममुत्पन्नत्वात्पूर्वमवदाने प्राप्ते वचनान्निवार्यते । अतः पूर्वं पयसोऽवदानं पश्चाद्दध्नः । प्राणदानादयः संस्कारास्तु प्रथमं दध्नः कार्याः, पश्चात्पयसः । पाठक्रमात् ॥३९॥

[ प्रणीतापवित्राभ्यां समस्य शाखापवित्रेण भक्षान्ते मार्जयित्वा तत्पुनः शाखायां निधेयम् ]

**समस्य मार्जनम् ॥४०॥**

शाखापवित्रे, प्रणीतानिहितपवित्रे च एकीकृत्य मार्जनं कार्यम् । मार्जनानन्तरं शाखापवित्रं शाखायामेव निधेयं, न प्रस्तरे । मार्जनमात्रे एव श्रवणात् ॥४०॥

**"इन्द्राग्न्यो"रिति व्यूहनम् ॥४१॥**

इन्द्राग्न्योरिति(१)मन्त्रेण जुह्वपभृतोर्व्यूहनं कुर्यात् ॥४१॥

[ प्रस्तरेण सह शाखां प्रहरेत् ]

**सह शाखया प्रस्तराऽनुप्रहरणम् ॥४२॥**

सूक्तवाकान्ते प्रस्तरेण सह शाखामाहवनीये क्षिपेत् ॥४२॥

---

(१) ॐ इन्द्राग्न्योरुज्जितिमनूज्जेषं वाजस्य मा प्रसवेन प्रोहामि २।१५। ॐ इन्द्राग्नी तमपनुदतां योऽस्मान्द्वेष्टि यं च वयं द्विष्मो वाजस्यैनं प्रसवेनापोहामि २।१५।

[ परिध्युपवेषयोर्होमः ]

**परिधिभिः सहोपवेषं जुहोति "जुहोमि त्वा सुभग सौभगाय पुरुतमं पुरुहूत श्रवत्स्य"न्निति ॥४३॥**

उपवेषश्च शाखामूलादुत्पादितो ग्राह्यो, न वारणः। तस्य पौर्णमासप्रकरणेऽभिधानात्। अत्र मन्त्रभेदात्कर्तृभेदः। अतो विरोधादग्नौदुपवेषं जुहुयात्। प्रतिपत्तिरियं चरितार्थत्वात्। अतो नाशदोषादौ सकृद्गृहीतेनाज्येन होमः ॥४३॥

[ सद्योऽन्वाधानव्यतिरिक्तमुक्तादन्यत्सर्वं पौर्णमासवत् ]

**पौर्णमासवदन्यदसद्यः ॥४४॥**

उक्तादन्यत्सर्वं पौर्णमासवद् भवति। एतावान्विशेषः। असद्यः। पौर्णमासे 'सद्यो वा प्रातः' (२।१।१६) इत्युक्तं, तदत्र न भवतीत्यर्थः। अत्र पौर्णमासवदिति नातिदेशबोधकम्। प्रकरणस्य दर्श-पूर्णमासयोरुभयोरप्यविशेषात्। किन्तु पौर्णमासधर्माणामपि पूर्वोक्तातिरिक्तानामत्र विधानार्थमेव। एवं च उभयोरपि प्रकृतित्वाविशेषात् पौर्णमास्यां ये ये गुणकामा विहितास्तेषामप्यत्र प्रवृत्तिरस्त्येवेति ॥४४॥

[ सोमयाजिनः सान्नाय्यनियमः ]

**सोमयाजी सन्नयेत् ॥४५॥**

सोमयाजी अमायां दधिदुग्धरूपं हविर्द्वयं कुर्यात् ॥४५॥

[ सोमयाजिनोऽन्यस्य सान्नाय्यविकल्पः ]

**कामादितरः ॥४६॥**

असोमयाजी तु इच्छया सान्नाय्यं कुर्यान्न वा कुर्यादिति विकल्पः ॥४६॥

[ त्रिंशतं वर्षाणि दर्शपूर्णमासाभ्यां यजेदित्येकः पक्षः ]

**त्रिꣳशतं वर्षाणि दर्शपूर्णमासाभ्यां यजेत ॥४७॥**

तत ऊर्ध्वं न यजेत् ॥४७॥

[ दाक्षायणयज्ञी पञ्चदश वर्षाणि यजेत ]

**पञ्चदश दाक्षायणयज्ञी ॥४८॥**

दर्शपूर्णमासस्थानापन्नो दाक्षायणयज्ञः, न कर्मान्तरमिति वक्ष्यति (४।४।२)। दाक्षायणयज्ञी पञ्चदश वर्षाण्येव यजेत, न त्रिंशतं वर्षाणि ॥४८॥

[ अग्निहोत्रमिव यावज्जीवं दर्शपूर्णमासाभ्यां यजेतेति शिष्टसम्मतः पक्षः ]

**अग्निहोत्रमेव वा जुहुयात् ॥४९॥**

एवशब्द इवार्थे। यथा—अग्निहोत्रं यावज्जीवम्, एवं दर्शपूर्णमासावपि। "स्वर्गकामो दर्शपूर्णमासाभ्यां यजेत यावज्जीवम्, त्रिंशतं वा वर्षाणि, जीर्णो वा विरमेत्" (आप० श्रौ० ३।१४। १२-१३) इति आपस्तंबवचनाद्यावज्जीवादिविकल्प इति देवयाज्ञिकः ॥४९॥

इति कातीयश्रौतसूत्रे चतुर्थाध्याये द्वितीया कण्डिका ॥ २ ॥

[ निर्वापमात्रश्रवणेऽपि द्रव्यदेवतासंयोगाद्यागकल्पना ]

"सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः, (तै० सं० २।३।२) (बौ० श्रौ० १३।१४।१) अग्नीषोमीयमजमालभेत प्रजाकाम" इत्यादौ यथाश्रुतं क्रियान्तरव्यतिरेकेण निर्वापालम्भादिमात्रमेव विधीयते, उत यागवाचका निर्वपत्यालभत्यादयः ? इति संशये निर्वापादिशब्दैर्यावदुक्तं निर्वापादिकमेव विधीयते, न तु यागादिरिति पूर्वपक्षे प्राप्ते सिद्धान्तयति—

## कर्मशब्दो द्रव्यदेवतायुक्तो यजतिः ॥१॥

कर्मशब्दः निर्वपति आलभते इत्यादिः यो द्रव्यदेवतासंयुक्तः, स यजतिर्यागबोधक इत्यर्थः । यद्यपि "इक्श्तिपौ धातुनिर्देशे" (पा० ३।३।१०८) इति वार्त्तिकात् यजतिः यजिः इति धातोरेव निर्देशको, न तु धात्वर्थस्य । तथापि तस्य द्रव्यदेवतासंयोगाभावात् अत्र धात्वर्थ एव गृह्यते । अतो द्रव्यदेवतायुक्तः कर्मशब्दो यागबोधक इति सूत्रार्थः ॥ १ ॥

[ इष्टिषु अग्नीषोमीयपशौ च दर्शपूर्णमासधर्माणामतिदेशः ]

एवमतिदेशसिद्धार्थं निर्वपत्यादिषु यागत्वे साधिते तत्र केवलं यागमात्रमस्ति उत धर्मा अपि ? यदा च धर्माः तदा कस्य धर्माः कुत्र भवन्ति ? इति संशये धर्माणामनाम्नानात् अधर्मका एवेति पूर्वपक्षे प्राप्ते आह—

## दर्श-पूर्णमासधर्मा इष्टि-पशुषु, सामर्थ्यात् ॥ २ ॥

इष्टिषु पशुषु च दर्शपूर्णमासयोर्धर्मा भवन्ति । कुतः । इष्टीनां पशूनां च तत्र शेषीभवितुं समर्थत्वात् ॥ २ ॥

## दर्शनाच्च ॥ ३ ॥

"तस्यै प्रयाजेषु तायमानेषु" इत्युपक्रम्य "तिस्रः स्वयं भृता गाथा गायति" (श० ब्रा० २।४।२।८) इति वाक्येन विकृतिरूपायां सावित्रेष्टौ प्रकृतितः प्राप्तानां प्रयाजानां दर्शनादित्यर्थः ॥३॥

[ चातुर्मास्येषु वैश्वदेवधर्माणामतिदेशः ]

## वैश्वदेवधर्माश्चातुर्मास्येषु, वचन-प्रवृत्तिभ्याम् ॥ ४ ॥

चातुर्मास्ययागे चत्वारि पर्वाणि । तत्र प्रथमे वैश्वदेवपर्वणि दर्शपूर्णमासधर्माः । उत्तरेषु पर्वसु तु वैश्वदेवधर्माः प्रवर्त्तन्ते । कुतः । वचनात्, प्रवृत्तेश्च । "अथैतान्येव पञ्च हवींषि भवन्ति" (श० ब्रा० २।६।३।४) इति वचनम् । एतच्छब्देन शुनासीरीये वैश्वदेवपर्वोक्तान्येव पञ्च हवींषि वरुणप्रघासादौ परामृश्यन्ते । "तस्यावृन्नोपकिरन्त्युत्तरवेदिं, न गृह्णन्ति पृषदाज्यम्" ( श० ब्रा० २।६।३।३ ) इत्यादिनिषेधबलात् । निषेधस्य च प्राप्तिसापेक्षत्वात् प्राप्तिदर्शनादित्यर्थः ॥ ४ ॥

[ वारुणप्रघासिकेऽवभृथे सौमिकावभृथाद्धर्मातिदेशः ]

## सोमाच्चावभृथे, सामप्रतिषेधात् ॥ ५ ॥

वरुणप्रघासावभृथे सौत्रामण्याद्यवभृथे च सौमिकादवभृथाद्धर्माः प्रवर्त्तन्ते । कुतः ? सामप्रतिषेधात् । "तत्र न साम गीयत" (श० ब्रा २।५।२।४६) इति सामगानस्य निषेधात् । सामगानस्य च सौमिके ऽवभृथे एव विधानात् । तत्प्रतिषेधश्च तदैवोपपद्यते यदा सौमिकादवभृथाद्धर्माः स्युः ॥ ५ ॥

[रुधिरापासनं न कणापासनवत्]

## कणवत्पशौ न, मन्त्रोपदेशात् ॥६॥

दर्शपूर्णमासयोः "पुरोडाशकपालेन कणानपास्यत्यधः कृष्णाजिनरुं० रक्षसामिति"

(३।८।७) इति सूत्रेण कृष्णाजिनस्थकपालेन कणप्रक्षेपो मन्त्रेण विहितः। रुधिरापासनेऽपि "तथो एवासृक्पशोः" (श०ब्रा० १।६।२।३५) इति वाक्येन कणापासनवत् इतिकर्त्तव्यताविशिष्टो मन्त्रः प्राप्तः। तत्रोच्यते। पशुयागे कणापासनवत् 'कपालेनाधःकृष्णाजिनम्' इति इतिकर्त्तव्यता न प्रवर्त्तते, किन्तु केवलं मन्त्रमात्रं प्रवर्त्तते। कुतः ? मन्त्रोपदेशात्। "तथो एवासृक्पशोः" इति-वाक्येन समन्त्रकायामितिकर्त्तव्यतायां प्राप्तायां पुनः "रक्षसां भागोसि" ( ६।१५ ) इति मन्त्रो-पदेशसामर्थ्यादिदं ज्ञायते यत् रुधिरापासनमात्रं मन्त्रेण कर्त्तव्यम्। इतिकर्त्तव्यता तु न प्रवर्त्तते ॥६॥

[ आज्यदोहसामगाने लौकिकाग्नेरेवोपधानम् ]

## विषये लौकिकमयुक्तत्वात् ॥७॥

"आज्यदोहेषु सामसु अग्निमुपसमाधाय स्तुवन्ति" इत्यादौ लौकिकोऽग्निर्ग्राह्य उत वैदिक ? इति संशये लौकिकोऽग्निर्ग्राह्यः। कुतः ? लौकिकस्याग्नेः कुत्रापि विनियोगाभावात्। इतरस्य गार्हपत्यादेर्हविःश्रपणादौ विनियुक्तत्वात्। अतः संशये सर्वत्र लौकिकमेव ग्राह्यं, न वैदिकम् ॥७॥

[ विकृतौ प्रधानविशेषे दर्शपूर्णमासीयप्रधानविशेषस्यैव धर्मा देवतैक्यादिसामान्यात् ]

दर्शपूर्णमासधर्माः सौर्यादिष्विष्टिषु, अग्नीषोमीयादिषु पशुषु च अतिदेशेन प्राप्नु-वन्तीति निश्चिते तत्र षण्णां यागानां सत्वात् यतः कुतश्चिद्धर्मप्राप्तिः ? उत नियमोऽस्तीति संशये नियमाभावादनियम इति प्राप्ते सिद्धान्तयति—

## विधिविशेषः कर्मण्येक-द्वि-शब्दपरिमाण-द्रव्य-देवता-गुणसामान्येभ्यः ॥८॥

विकृतौ विधेर्विशेषो भवति। कुतः ? एकत्वसामान्यात्, द्वित्वसामान्यात्, शब्दपरि-माणसादृश्यात्, द्रव्यसादृश्यात्, देवतासादृश्यात्, गुणसादृश्याच्च। तत्र एकदेवताकस्य-कर्मण आग्नेयादेकदेवताकाद्धर्मप्राप्तिः। द्विदेवताके कर्मणि द्विदेवताग्नीषोमीयाद्धर्मप्राप्तिः। शब्दपरिमाणाच्च मारुते यागे ऐन्द्राग्नधर्मप्राप्तिः। द्रव्यसामान्यात् पौरोडाशिके यागे पुरोडाश-धर्मप्राप्तिः। सान्नाय्ये च सान्नाय्यधर्मप्राप्तिः। देवतासादृश्याच्च ऐन्द्रपुरोडाशे ऐन्द्राग्न-धर्मप्राप्तिः ॥८॥

[ वैष्णवे नवकपाले द्रव्यसामान्यात्पुरोडाशधर्मा, नतु देवतासामान्यादुपांशुधर्माः ]

यत्र "आग्नेयं पय" इत्यादौ देवतासामान्यात्पौरोडाशिकधर्मप्राप्तिः, द्रव्यसामान्याच्च सान्नाय्यधर्मप्राप्तिः। तत्र कस्य धर्माः कार्याः ? इति संशये सिद्धान्तयति—

## नियमो द्रव्यदेवताविरोधे द्रव्यस्य, समवायात् ॥९॥

द्रव्यदेवताविरोधे देवतासादृश्यापेक्षया द्रव्यसादृश्यं प्रबलम्। कुतः ? देवतापेक्षया द्रव्यस्य यागनिष्पादकत्वेन सन्निकृष्टत्वात्। अतो द्रव्यदेवतयोर्विरोधे द्रव्यसादृश्यमादा-यैव धर्मप्राप्तिः ॥९॥

अस्ति चामिक्षायागः "सा वैश्वदेव्यामिक्षा" ( मै०सं० १।१०।१० ) इति। (आमिक्षा नाम पयस्तप्तं कृत्वा तप्ते पयसि दधि प्रक्षिपेत्, तत्र स्फोटने सञ्जाते यद् घनीभूतं सा आमिक्षा, द्रवभूतं वाजिनम्) तत्र कस्य धर्माः प्रवर्त्तन्ते ? इति संशये पूर्वपक्षयति—

## आमिक्षायामुभयोस्तन्निवृत्तेः ॥१०॥

आमिक्षाया दधिपयोरूपत्वादुभयधर्माणां प्रवृत्तिः। कुतः ? तन्निवृत्तेः। दधिपयोभ्यामा-मिक्षाया उत्पत्तेरित्यर्थः ॥१०॥

एवं प्राप्त आह—

नैकचोदनात् ॥११॥

नोभयोर्धर्माः प्राप्नुवन्ति । कुतः ? एकचोदनात् । एकस्यैव धर्मणो विहितत्वात् । एकस्याश्चोदनाया उभयधर्मप्रापकत्वाभावात् । अतो दधिपयसोरन्यतरस्य धर्माः कार्याः ॥११॥

तत्रापि दध्नः पयसो वेति संशये पूर्वपक्षयति—

दध्नः, सङ्घातात् ॥१२॥

दध्न एव धर्माः प्राप्नुवन्ति । कुतः ? कठिनत्वसादृश्यात् । दधि कठिनम्, आमिक्षा च कठिनेति ॥१२॥

एवं प्राप्ते सिद्धान्तयति—

पयसस्तद्भावात् ॥१३॥

पयोयागस्यैव धर्माः कार्याः । कुतः ? पयस एवाऽऽमिक्षासमुदयात् । अथवा पयोरसस्यैव माधुर्यस्य तत्र दर्शनात् । प्रयोजनं दधियागविकारत्वे आतञ्चनार्थं दधनि सायंदोहधर्माननुष्ठाय लौकिके पयसि तत्प्रक्षेप्तव्यम् । पयोयागविकारत्वे पयसि प्रातर्दोहधर्माननुष्ठाय तत्र लौकिकं दधि प्रक्षेप्तव्यम् । उभयविकारत्वे दधनि सायं दोहधर्माः, पयसि प्रातर्दोहधर्माश्च शाखापरिवासनादयो ऽनुष्ठेयाः ॥ १३ ॥

( अग्नीषोमीयपशौ सान्नाय्यधर्माः )

अग्नीषोमीये पशौ देवतासादृश्यात् अग्नीषोमीयपुरोडाशधर्मप्राप्तावाह—

पशोः सान्नाय्यस्य, तदुक्तम् ॥ १४ ॥

अग्नीषोमीयस्य पशोः सान्नाय्यस्य धर्माः कार्याः । तत्र प्रागुक्तम् । "नियमो द्रव्यदेवताविरोधे द्रव्यस्य समवायात्" ( ४।३।८) इति ॥ १४ ॥

प्रायश्चित्तश्रुतेश्च ॥ १५ ॥

"पशूखा चेत्स्रवेत्सान्नाय्योखा वा तामभिमन्त्रयेत्" (का० श्रौ० २५।८।१४) इति पशावप्युखा दृश्यते । सा तदैवोपपद्यते यदा पशौ सान्नाय्यधर्मा भवन्ति, नान्यथा । अतः प्रायश्चित्त श्रुतेरपि सान्नाय्यधर्माः पशौ कार्याः ॥ १५ ॥

[ अग्नीषोमीयपशौ पयोधर्माः ]

पशौ सान्नाय्यधर्मा भवन्तीत्युक्तं, तत्र सान्नाय्यं द्विविधं दधि च पयश्च । तत्र सङ्घातत्वसामान्यात्पशौ दध्नो धर्मे प्राप्त आह—

पयसः कालाऽऽनन्तर्य-धर्मानुग्रहेभ्यः ॥ १६ ॥

पशुयागे पयोयागस्यैव धर्माः प्रवर्त्तन्ते । कुतः ? एककालिकत्वात् आनन्तर्यात्, धर्मानुग्रहाच्च । पयसः पशोश्च एककालोत्पत्तिमत्त्वं श्रूयते । "यदा वै योषा रेतो धत्तेऽथ पयो धत्त" "यदा पशुर्जायतेऽथ पयो जायते" इति च । अथवा एककालिकत्वम् एककालवर्त्तमानत्वम् । कालान्तरे विकारदर्शनादित्यर्थः । पयो दोहनानन्तरमेकदिनमविकृतं तिष्ठति । एवं पशुहृदयाद्यपि एकदिनपर्यन्तमविकृतं तिष्ठति । दिनान्तरे तु उभयमपि विकृतं भवति । दधि तु अनेकदिनपर्यन्तमविकृतमेव तिष्ठतीति न पश्वङ्गानां दधिसादृश्यमिति ।

आनन्तर्यात् = पशुतोऽनन्तरं पयसो जायमानत्वात्। दध्नश्च पयसा व्यवधानात्। एवं पशोरपि पश्वानन्तर्यादित्यर्थः। एवं धर्मानुग्रहात्, प्रोक्षणादिरूपधर्माणामेवं सति अनुग्रहसिद्धेः। एतत्कारणत्रयेण पयोधर्मा एव पशौ प्रवर्त्तन्ते, न दध्नः ॥१६॥

[ एतदधिकरणसिद्धान्तलेशः २५ सूत्रे द्रष्टव्यः ]

दर्शपूर्णमासधर्मा इष्टिपशुषु इत्यनेन प्राकृतं पदार्थमात्रं विकृतौ भवतीत्युक्तं, तत्र द्व्यहकालतायामपि विकृतौ प्राप्तायामाह—

**सद्यस्त्वं काशकृत्स्निः ॥१७॥**

काशकृत्स्निराचार्यो विकृतीनां सद्यस्कालत्वं ब्रवीति। "य इष्ट्या पशुनाऽऽग्रयणेन सोमेन यक्ष्यमाणः पौर्णमास्याममावास्यायां वा यजेत" (काठ०-सं० ६।१) इति वचनात् ॥१७॥

**अनुवादः पूर्वस्येति वात्स्यबादरी ॥१८॥**

वात्स्य-बादरी एवमाहतुः। य इष्ट्येत्यनेन विकृतिविषयत्वेन पौर्णमासी वा अमावास्या वा उच्यते। ते च प्रकृतितोऽपि चोदकेन प्राप्ते एव। अतोऽनुवादोऽयं नापूर्वविधिः।

एवं चापूर्वविधेरभावात् उक्तं सद्यस्त्वं वात्स्यबादरिमते न संभवतीति सूत्रद्वयेनाऽसिद्धान्तितमेवैतदधिकरणम्। एतदधिकरणसिद्धान्तस्तु पञ्चविंशतितमे सूत्रे वक्ष्यते। सूत्रकारैरेतदधिकरणस्य सिद्धान्तमकृत्वा स्थानापत्तेरित्यादिना सूत्रषट्केन अन्यदेव प्रक्रान्तम्। ततः पञ्चविंशसूत्रेण सिद्धान्तः कृत इति ॥१८॥

[ प्राकृतकार्यापन्ने मुद्गादौ प्रोक्षणादयो व्रीहिधर्मा भवन्ति ]

"मौद्गं चरुं निर्वपेच्छ्रियै श्रीकाम" इति शास्त्रेण विहितानां 'व्रीहीनवहन्ति' 'व्रीहीन् प्रोक्षति' इति व्रीहिसंयोगेनोत्पन्नानां धर्माणां मुद्गादिष्वभावमाशङ्कमान आह—

**स्थानापत्तेर्द्रव्येषु धर्मलाभोऽविप्रतिषिद्धः ॥१९॥**

वैकृतेषु मुद्गादिषु द्रव्येषु प्राकृतद्रव्यधर्मलाभो विरुद्धो न भवति। प्राकृतद्रव्यधर्माः प्रोक्षणादयो भवन्तीत्यर्थः। कुतः? स्थानापत्तेः, वैकृतस्य द्रव्यस्य प्राकृतकार्यापन्नत्वात् ॥१९॥

[ विकृतावर्थाभिधानायोहः कर्त्तव्यः ]

**यथार्थमूहश्चोदिते ॥२०॥**

विहिते वैकृते द्रव्ये यथा यथा तमर्थं प्रकाशयति तथा तथा विपरिणामः कर्तव्यः। यथा—प्रकृतौ 'अग्नीषोमाभ्यां छागस्य वपायै मेदस' ( श. ब्रा. ३।८।२।२४ ) इति मन्त्रघटकछागपदस्थाने 'मेषस्य' इति भवति यत्र मेषो विहितः। प्रतिनिधिभूते मेषादौ तु नोह इत्युक्तं "शब्देऽविप्रतिपत्तिः" ( १।४।६ ) इति ॥२०॥

[ प्रकृतौ पत्नीशब्दे नोहः ]

एवं सर्वत्रोहे प्राप्ते क्वचिदपवादमाह—

**न प्रकृतावपूर्वत्वात् ॥२१॥**

प्रकृतौ 'पत्नीᳬ सन्नह्याज्येनोदेहि' (२।६।२६) इत्यादौ अनेकपत्नीके यागेऽपि पत्नीशब्दे ऊहो न कार्यः। कुतः? अपूर्वत्वात् प्रकृतेः। न हि प्रकृतेरन्या प्रकृतिरस्ति यद्विक्रियते। अतोऽनेकपत्नीकेऽपि यागे पत्नीमित्येकवचनान्तमेव प्रयोज्यं, नोहितव्यम्। एवं पवित्रे स्थ इति च पवित्रत्रयपक्षेऽपि नोहितव्यमित्युक्तम् (२।३।२०) ॥२१॥

[ विकृतौ वचनादिना कार्याप्रवृत्तिः ]

प्रकृतिवद्विकृतिः कर्त्तव्यनेन सकलधर्मप्राप्तावाह—

**वचना-ऽर्थलोप-विरोधेभ्यो ऽप्रवृत्तिः ॥२२॥**

विकृतौ प्राकृतधर्माणां वचनात्, अर्थलोपात्, विरोधाच्चाप्रवृत्तिः स्यात् । क्रमेणोदाहरणानि । यथा—महापितृयज्ञे "न होतारं प्रवृणीते" (श० ब्रा० १।६।१।२३) इति । मुद्गे त्ववघातस्य, चरौ पेषणस्य चाप्रवृत्तिः ॥ २२ ॥

[ विकृतौ अनुषङ्गसिद्धस्याभावे तत्प्रयोज्यस्याप्यभावः ]

**परार्थोत्पत्तेस्तदभावेऽभावः ॥ २३ ॥**

परार्थमुत्पत्तिर्यस्य स परार्थोत्पत्तिः, तस्य परार्थोत्पत्तेः । तस्य परस्याभावे परार्थोत्पत्तेरप्यभावः स्यात् । प्रकृतौ तण्डुलनिष्पत्तिनिमित्ता कणानामुत्पत्तिस्तण्डुलार्था । अतः परार्थोत्पत्तेः कणादेः, परस्य तण्डुलादेरभावे विकृतौ पयस्यादौ तस्यापि कणादेरभावः । तदभावाच्च तदर्थस्यापासनस्याप्यभावः ॥ २३ ॥

[ परार्थोत्पन्नस्य पराभावेऽपि क्वचिद्वचनात्सत्ता ]

एवं सर्वत्र प्राप्तौ क्वचिदपवादमाह—

**चोदितत्वाद्वा भावः ॥२४॥**

परार्थोत्पन्नस्य पराभावेऽपि विधिबलात्सत्ता स्यात्, नाभावः । यथा "यूपशकलेन ग्रहं संमार्ष्टि" इति श्रुत्या यूपे तक्ष्यमाणे उत्पन्नस्य शकलस्य ग्रहसंमार्गसाधनत्वेन विहितत्वाद्यूपाभावेऽपि शकलमात्रं ग्राह्यं ग्रहसंमार्गसिद्ध्यर्थम् ॥२४॥

[ वैकृतीष्टीनां पौर्णमास्यमावास्याकालनियमः ]

पौर्णमास्याममावास्यायां वा यजेतेत्यनुवादो, ना पूर्वविधिरित्युक्तम् (४।३।१८) । तत्र सिद्धान्तमाह—

**न विपत्ते क्रियाः स्युः, समभिव्याहारात् ॥२५॥**

विपत्ते प्रतिपदि वैकृत्यः क्रिया न स्युः, किन्तु पौर्णमास्याममावास्यायामेव स्युः । कुतः ? य इष्ट्येत्यादिवाक्यात् । यदुक्तमयमनुवाद इति, तन्न । अनुवादत्वे पूर्णिमाऽमावास्याशब्दयोर्गौण्या वृत्त्या प्रतिपदभिधायकत्वेन लक्षणाप्रसङ्गात् । अनुवादस्य अप्रवृत्तिविशेषकरत्वेन वाक्यानर्थक्याच्च । तस्माद्विकृतीष्टयः पूर्णिमायाममावास्यायां वा कार्या, न प्रतिपदि ॥२५॥

इति कातीयश्रौतसूत्रवृत्तौ चतुर्थाध्याये तृतीया कण्डिका ॥३॥

[ दाक्षायणयज्ञ इति दर्शपूर्णमासयोरेव गौणं नाम, न कर्मान्तरम् ]

**दाक्षायणयज्ञः प्रजा-पश्वन्न-यशस्कामस्य ॥१॥**

पर्यायेण एकैकफलसिद्धिः ॥१॥

**नाम-फल-गुणयोगात्कर्मान्तरम् ॥२॥**

अयं दाक्षायणयज्ञो दर्शपूर्णमासतो भिन्नं कर्मान्तरम् । कुतः ? नामभेदात्, फलभेदात्, "मैत्रावरुण्यामिक्षा" ( तै० सं० ४।१ )इत्येवमादिगुणभेदाच्च । अतः कर्मान्तरमेवेदम् ॥२॥

एवं प्राप्ते सिद्धान्तयति—

**गुणविधानं वा, सन्निधि-सम्पद्वचनाभ्याम् ॥३॥**

वाऽवधारणे। दाक्षायणयज्ञ इति गुणविकृतयोर्दर्शपूर्णमासयोरेव गौणं नाम, न कर्मान्तरम्। कुतः। सन्निधेः। दर्शपूर्णमाससन्निधावेव दाक्षायणयज्ञस्य पाठादित्यर्थः। सम्पद्वचनाच्च। अयं भावः। दर्शपूर्णमासयागपक्षे प्रतिपदि एकैको यागो भवति। दाक्षायणयज्ञे अमायां प्रतिपदि चेति दिनद्वये, एवं पूर्णिमायां प्रतिपदि चेति दिनद्वये द्वयोर्द्वयोर्यागयोर्विधानात् "पञ्चदश दाक्षायणयज्ञी अत्र ह्येव सा सम्पत्सम्पद्यत" ( श० ब्रा० ११।१।२।१३ ) इति श्रुत्या दर्शपूर्णमासयागपक्षे त्रिंशद्वर्षैर्या सम्पत्तिर्भवति सा सम्पत्तिर्दाक्षायणयज्ञे पञ्चदशवर्षैरेव भवतीति दाक्षायणयज्ञस्य दर्शपूर्णमासरूपता बोध्यते। तस्माद्दाक्षायण इति दर्शपूर्णमासयोरेव नामान्तरं, न कर्मान्तरम् इति। अतश्च दर्शपूर्णमासानुष्ठानपक्षे दाक्षायणयज्ञस्याक्रिया। दाक्षायणयज्ञानुष्ठानपक्षे च दर्शमासयोरक्रिया ॥३॥

[ दाक्षायणयज्ञानुष्ठानप्रकारः ]

दाक्षायणयज्ञानुष्ठानप्रकारमाह—

**अग्नीषोमीयः पौर्णमास्यामैन्द्राग्नोऽमावास्यायाम् ॥ ४ ॥**

उद्धरणादि कर्मापवर्गान्तः पुरोडाशोऽनुष्ठेयः। केवलस्याग्नीषोमीयस्य विधानात्प्राकृताऽऽग्नेयोपांशुयाजयोर्निवृत्तिः ॥ ४ ॥

**साम्नाय्यवत्प्रातः ॥ ५ ॥**

पौर्णमास्यनन्तरं प्रातः प्रतिपदि आग्नेयः पुरोडाश, ऐन्द्रं दधि चेति हविर्द्वयं भवति। पां ॥ ५ ॥

**अमावास्यायां पयस्या मैत्रावरुणी ॥ ६ ॥**

अमावास्यानन्तरं प्रातः प्रतिपदि आग्नेयः पुरोडाशो, मैत्रावरुणी पयस्या चेति हविर्द्वयं भवति ॥ ६ ॥

प्रातर्विशेषमाह—

**तत्रैव दोहनꣳ श्रृते वा दध्यानयति ॥ ७ ॥**

आज्यनिर्वापानन्तरं प्रथमपुखायां लौकिकं दधि आसिच्य तत्र लौकिकदधन्येव पयस्यार्थं दोहनं कुर्यादध्वर्युः। अथवा पयसि श्रृते सति पश्चात्पयसि दधि प्रक्षिपेत्, न प्रथमम् ॥ ७ ॥

**वाजिनं निषिच्योत्करे करोति ॥ ८ ॥**

तप्ते पयसि दधनि प्रक्षिप्ते कठिनभागः पयस्या, उदकभागो वाजिनमुच्यते। तद्वाजिनं पात्रान्तरेऽवस्थाप्य पात्रान्तरस्थं तद् वाजिनं सर्वहविषामासादनानन्तरमुत्करे स्थापयेत्, न वेद्याम् ॥ ८ ॥

**अनाज्यलिप्तं वा ॥ ९ ॥**

तत्रस्थाभिघारस्यायं विकल्पः। पयस्यायास्तत्रस्थाभिघारे कृते अकृते वा वाजिनं पात्रान्तरे निषिञ्चेत्। प्राणदानं तु भवत्येव ॥ ९ ॥

वाजिनयागस्य कालमाह—

**प्रहृत्य तृणं तेन चरति, विमुच्य वा स्रुचौ ॥१०॥**

प्रस्तरसंबद्धं तृणमग्नौ प्रहृत्य वाजिनयागमनुतिष्ठेत्! अथवा घृताची स्थ (२।१६) इति मन्त्रेण स्रुग्विमोकानन्तरं वाजिनयागः कार्यः ॥१०॥

**बर्हिरवसिञ्चन् गृह्णाति 'तद्दषभेषु रेतो दधाती'ति श्रुतेः ॥११॥**

अध्वर्युः पात्रस्थं वाजिनं तेनैव पात्रेण जुह्वां निनयेद् बर्हिषि वाजिनं पातयन्। कस्मादेवं न्यायविरुद्धं हविषः स्कन्दनमुच्यत इत्यत आह—"यद्बर्हिरवसिञ्चन् गृह्णाति तद्दषभेषु रेतो दधाति" (तै० ब्रा० १।६।३) इति श्रुतिबलादन्याय्यमपि युक्तमेवेति भावः ॥११॥

**वाजिभ्योऽनुवाचयति ॥१२॥**

ग्रहणानन्तरं 'वाजिभ्योऽनुब्रूहि' इति होतारं प्रेष्येदध्वर्युः ॥१२॥

**प्रतिवषट्कारᳫं हुत्वा वाजिनशेषेण दिशो व्याघारयति "दिश" इति प्रतिमन्त्रं प्रदक्षिणं पुरस्तात्प्रथमम् ॥१३॥**

वाजिनयागे होतुर्वषट्कारद्वयस्य (का० हौ० प० २।६) विधानात् वषट्कारद्वयेऽपि अध्वर्युः गृहीतं वाजिनं किञ्चित्किञ्चिद्धुत्वा जुहोतिस्थानमागत्य वाजिनशेषेण दिश इत्यादीनां षण्णां मन्त्राणां मध्ये(१) चतुर्भिर्मन्त्रैः प्रतिमन्त्रं चतसृषु दिक्षु आहवनीयेऽग्नौ प्रदक्षिणक्रमेण दिशोऽभिलक्षीकृत्य पूर्वादिक्रमेण क्षारयेत्। अग्नेश्चतसृषु दिक्षु वाजिनशेषं जुहुयादित्यर्थः ॥१३॥

**उत्तमाभ्यां मध्ये पूर्वार्द्धे च ॥ १४ ॥**

षण्णां मन्त्राणां मध्ये चतुर्थपञ्चमाभ्यां मन्त्राभ्यां(२) क्रमेण अग्नेः मध्ये, पूर्वभागे च वाजिनं जुहुयात् ॥ १४ ॥

अत्रैव विशेषमाह—

**स्वाहाकारः सर्वत्र साकाङ्क्षत्वात् ॥ १५ ॥**

दिश इत्यादिषु षट्सु मन्त्रेषु क्रियापदाभावेन साकाङ्क्षत्वात् स्वाहाकारो ऽनुषञ्जनीयः। तेन दिशः स्वाहेति प्रयोगः। न च स्वाहायोगे चतुर्थ्या भवितव्यमिति वाच्यम्। मन्त्रत्वात्। मन्त्राश्च यथाश्रुता एव प्रयोज्याः। सुपां सु लुगिति (७।१।३९) पाणिनीयसूत्रात्तत्र प्रथमैव चतुर्थ्यर्थे भविष्यति। एवं जयाहोमेऽपि (पा० गृ० १।५।६) चित्तं च स्वाहेत्यादयो मन्त्रा यथाश्रुता एव प्रयोज्याः, न चतुर्थ्यन्ताः ॥१५॥

**शेषमुपह्वयस्वेत्यामन्त्र्यामन्त्र्य भक्षणमुपहूत इति प्रसूतः ॥१६॥**

शेषं वाजिनं भक्षणार्थं हस्ते कृत्वा अमुकोपह्वयस्व अमुकोपह्वयस्व (भक्षणार्थमनुज्ञां देहि) इत्येवं होत्रादीन् सर्वानृत्विजः पृष्ट्वा पृष्ट्वा उपहूतः (अनुज्ञातः) इति तैः अनुज्ञातः सन् शेषभक्षणं कुर्यात् ॥ १६ ॥

व्यावहारिकनामभिर्होत्रादीनामामन्त्रणे प्राप्ते आह—

**युक्तनामभिर्वा ॥१७॥**

वाऽवधारणे। यज्ञे येन कर्मणा सह यः संयुक्तः, तद्बोधकेनैव पदेन अर्थात् होतः, ब्रह्मन्, अग्नीत् इत्यादिभिरेव अनुज्ञातो भक्षणं कुर्यादिति शेषः ॥१७॥

---

(१) ॐ दिशः स्वाहा। ॐ प्रदिशः स्वा०। ॐ आदिशः स्वा०। ॐ विदिशः स्वा० (६।१९)

(२) ॐ उद्दिशः स्वा। ॐ दिग्भ्यः स्वा० (६।१९)

प्रसङ्गादाह—

सोमे च ॥१८॥

सोमयागे ऽपि हुतशेषस्य सोमस्य एवमेव होतरुपह्वयस्व इत्यादिना प्रकारेण प्रश्नं कृत्वा भक्षणं कार्यम्। "नानुपहूतेन सोमः पातव्य" (काठ० सं० ११-१) इति वचनात् ॥१८॥

साधारणेषु वा सामर्थ्यात् ॥१९॥

वाऽवधारणे। साधारणेषु अनेकर्त्विक्साधारणेष्वेव ग्रह-चमसादिषु सोमाधारपात्रेषु सोपहवं भक्षणं कर्त्तव्यम्। कुतः? सामर्थ्यात्। अनुज्ञायाः भागादिशङ्काजन्यकलहनिवृत्तिरूपदृष्टप्रयोजनत्वात्। अयं भावः। सन्ति ज्योतिष्टोमे ग्रहाश्चमसाश्च। ग्रह-चमसशब्दौ रसेऽपि प्रयुज्येते, तदाधारभूतपात्रेऽपि। यदा रसे, तदा गृह्यते इति ग्रहः, चम्यते इति चमस इति कर्मव्युत्पत्या। यदा च पात्रवाचिनौ ग्रह—चमसशब्दौ, तदा गृह्यते अस्मिन् रसः, चम्यते अस्मिन् रस इति व्युत्पत्या। तत्र केचिद् ग्रहचमसाः अनेकर्त्विक्संबन्धिनः, केचित् एकर्त्विक्मात्रसंबन्धिनः। तत्र यत्र अनेकेषां सबन्धोऽस्ति, ते ग्रहाश्चमसा वा होमानन्तरं सर्वैरेव पातव्याः। अतश्च यस्तत्र पिबति, स सर्वेभ्यः संबन्ध्यन्तरेभ्य उपहूत इत्यनुज्ञामादाय पिबेत्। यत्र च एकस्यैव संबन्धस्तत्र अनुज्ञायाः प्रयोजनाभावात् नैवानुज्ञातभक्षणम् ॥१९॥

वाजिनशेषभक्षमन्त्रानाह—

"ऋतूनां त्वा वाजिनां वाजिनं भक्षयामी"ति वा ॥२०॥

"वाज्यहं वाजिनस्योपहूतस्योपहूतो भक्षयामी"ति वा ॥२१॥

"वाजे वाजी भूयास"मिति वा ॥२२॥

एषामन्यतममन्त्रेण वाजिनशेषं भक्षयेयुः ॥२०-२१-२२॥

भक्षयितॄनाह—

होत्रध्वर्युब्रह्माग्नीध्रयजमानाः ॥२३॥

क्रमेण वाजिनं भक्षयेयुः ॥२३॥

भक्षणे क्रमान्तरमाह—

प्रथमो वोभयतस्तु यजमानः ॥२४॥

अथवा यजमानः प्रथमं वाजिनं भक्षयेत्, ततो होत्रध्वर्युब्रह्माग्नीधः। परन्तु अस्मिन्पक्षेऽयं विशेषः। यदि यजमानो भक्षणे प्रथमः स्यात्तदा यजमानेन पूर्वं पश्चाच्च उभयत आदावन्ते च वाजिनभक्षः कार्यः। अस्मिन्पक्षे यजमानः सर्वैः पूर्वं पश्चाच्च वारद्वयं प्रष्टव्य इति पद्धतिकाराः। अत्र मूलं मृग्यम् ॥२४॥

दाक्षायणं वा दक्षिणा ॥२५॥

शतरक्तिकापरिमितं सुवर्णं दक्षिणा, अन्वाहार्यो वेति दक्षिणाविकल्पः ॥२५॥

संवत्सरं वा यजेत ॥२६॥

अथवा दाक्षायणयज्ञेन संवत्सरं यजेत, पञ्चदश वर्षाणि वेति विकल्पः। पञ्चदशभिर्वर्षैः षष्ट्युत्तरत्रिशतमिष्टयो भवन्ति। तावत्संख्याका एव संवत्सरेण सम्पादनीया इत्यर्थः। संवत्सरश्चात्र सावनो गृह्यते। तस्य षष्ट्युत्तरत्रिशतदिनात्मकत्वात् ॥२६॥

**माꣳस-स्त्र्य-नृत-मूत्रकृतवासाꣳसि वर्जयेत् ॥२७॥**

मांसम्, स्त्रियम्, अनृतम्, मूत्रकृतं रजकधौतं वासश्च, वर्जयेत्। 'अहनि मांसमैथुने वर्जयेत्' (२।१।८) इत्युक्त पुनर्मांसस्त्रीति वचनं पौर्णमासीत आरभ्य अमापर्यन्तमन्तराले-ऽनयोर्निषेधार्थम् ॥२७॥

इति कातीयश्रौतसूत्रवृत्तौ चतुर्थाध्याये चतुर्थी कण्डिका ॥४॥

[ कामायैवोत्पन्नस्य व्यक्तैकचोदनाचोदितस्य समानतन्त्रस्य कर्मणो देवताया उपांशुत्वम् ]

**उपाꣳशु काम्यदेवता (१) ॥ १ ॥**

काम्ये कर्मणि देवतावाचकपदमुपांशु प्रयोक्तव्यम् ॥ १ ॥

**आग्रयणे वैश्वदेवः ॥ २ ॥**

नवान्नेष्टौ (४।६।१-६) वैश्वदेवश्चरुरुपांशु अनुष्ठेयः ॥ २ ॥

**एककपालाश्चावारुणाः ॥ ३ ॥**

वारुणवर्जिताः सर्वे एककपालाः पुरोडाशा उपांशु प्रयोक्तव्याः ॥ ४ ॥

**प्राजापत्यः ॥ ५ ॥**

प्राजापत्यः पशुर्वा (का० श्रौ० १६।१।३३) चरुर्वा पुरोडाशो वा (१६।१।३९) आज्यं वा (३।१।१२) सर्वत्र उपांशु कर्त्तव्याः ॥ ५ ॥

**सावित्रश्चातुर्मास्येषु ॥ ६ ॥**

चातुर्मास्येषु वैश्वदेवपर्वणि (५।१।४) यः पुरोडाशो द्वादशकपालोऽष्टाकपालो वा विहितः, स उपांशु कार्यः ॥ ६ ॥

**वैश्वदेवी ॥ ६ ॥**

चातुर्मास्येषु वैश्वदेवपर्वणि विहिता (का० श्रौ० ५।१।१३) वैश्वदेवी पयस्या उपांशु भवति ॥ ६ ॥

**वायव्यम् (२) ॥ ७ ॥**

चातुर्मास्येषु शुनासीरीये पर्वणि (का० श्रौ० ५।११।५) वायव्यं पयो, यवागूर्वा उपांशु भवति। यागसंबन्धि देवतापदोच्चारणमुपांशु कर्त्तव्यमित्यर्थः ॥ ७ ॥

---

(१) उपांशु काम्ये इत्येतावतैवोपपत्तौ पुनर्दैवताग्रहणं यत्र देवताया व्यक्तचोदनाचोदितत्वं तत्रैवोपांशुत्वम्, यत्र तु अव्यक्तता सोमविकारेषु, न तत्रोपांशुत्वमिति ज्ञापयितुम्। अव्यक्तत्वं च स्वार्थचोदितदेवता-राहित्यम्। यत्र यागमुद्दिश्यैव साक्षात् देवताभिधानं नास्ति तदव्यक्तम्, यथा—सोमयागः। तत्र हि न सोमयागोद्देशेन देवताभिधानमस्ति। किन्तु "ऐन्द्रवायवं गृह्णाति" (का० श्रौ० ९।६।६) "मैत्रावरुणं गृह्णाति" (का० श्रौ० ९।६।९) इति ग्रहणोद्देशेनैव देवताया विधानात् तथैव च सो मयागे उपकारसिद्धेर्न तत्र पृथक् देवताविधानम्। तद्भिन्नत्वं व्यक्तत्वम्। सौत्रामण्यां तु व्यक्तत्वेऽपि "सौत्रामण्यामिष्टि-सोम-पशवो भिन्नतन्त्राः कालभेदात्" (का० श्रौ० १९।६।१) इति न तत्रोपांशुत्वम्। एवं राजसूयेऽनुमत्या-दिष्विष्टिष्वपि (का० श्रौ० १५।१।८-१६) सत्यपि व्यक्तत्वादौ यस्य केवलं काम्यतयैव नोत्पत्तिस्तत्रापि नोपांशुत्वम्। यथा प्रजाकामवैश्वदेव (का० श्रौ० ५।२।२०) पञ्चबिलादौ (का० श्रौ०१५।८।१)। अतश्चेदं सिद्धम्। व्यक्तत्वं चोदनैकत्वम्, एकतन्त्रता, केवलकाम्यता च यत्रास्ति तत्रैवोपांशुत्वमिति।

(२) यद्यप्यत्र वायव्यमिति नपुंसकनिर्देशात् पयस एव ग्रहणं भवति, तथाऽपि विधीयमानस्योपांशुत्वस्य पयोधर्मत्वासंभवेन यागधर्मस्याऽवश्यंभावात् तद्यागसंबन्धिनि पाक्षिके यवागूद्रव्येऽपि उपांशुत्वं भवत्येव।

**तनूहवींꣳषि ॥ ८ ॥**

अग्न्याधाने विहिता पवमानेष्ट्यस्तिस्रः तनूहविःसंज्ञकाः । तास्वपि देवतानामुपांशुत्वम् ॥ ८ ॥

**दीक्षणीया–प्रायणीया–ऽऽतिथ्यादेवताः ॥ ९ ॥**

सोमयागे विहितानां दीक्षणीयाप्रभृतीनां तिसृणामिष्टीनां देवता उपांशु यष्टव्याः ॥९॥

**देवसू–देविका–हवींꣳषि ॥ १० ॥**

सन्ति राजसूये देवसुवां हवींषि, (का० श्रौ० १५।४।४) चयने देविका हवींषि (का० श्रौ० १८।६।२१) च । तत्रापि उपांशु यष्टव्यम् ॥ १० ॥

**वायव्योऽग्नौ ॥ ११ ॥**

चयनयागे (का० श्रौ० १६।१।३८) वायव्यः पशुरुपांशु स्यात् ॥११॥

**मैत्रावरुणी च ॥ १२ ॥**

चयनयागे (का० श्रौ० १८।६।२५) मैत्रावरुणी पयस्या चोपांश्वेव भवेत् ॥ १२ ॥

**ऐन्द्रः सौत्रामण्यां प्रथमः ॥ १३ ॥**

सौत्रामणीयागे (का० श्रौ० १९।१।१६) प्रथम ऐन्द्रः पशुरुपांशु भवति ॥ १३ ॥

**वायोधसश्च ॥ १४ ॥**

सौत्रामण्यां (का० श्रौ० १९।३।३) वायोधसः पशुरुपांशु भवेत् ॥ १४ ॥

[ प्रतिकाममाग्नेयानुष्ठानम् ]

**आग्नेयं प्रतिकाममाहरेत् ॥ १५ ॥**

सर्वस्मै कामाय पुत्रधनाद्यास्यै आग्नेयोऽष्टाकपालः पुरोडाशः कार्यः ॥ १५ ॥

[ वृष्टिकामनायां विशेषः ]

वृष्टिकामनायां विशेषमाह—

**वर्षार्थे पुनः प्रकृतौ वा ब्रूयाद् वृष्टिकामोऽस्मीति ॥ १६ ॥**

वृष्ट्यर्थमाग्नेयेष्टौ क्रियमाणायाम्, उद्धरणकाले यजमानः 'वृष्टिकामोऽस्मि' इति ऋत्विजः प्रति ब्रूयात् । अथवा प्रकृताविष्टावेव दर्शपूर्णमासयागयोरेव उद्धरणकाले "वृष्टिकामोऽस्मि" इति वृष्टिरूपं फलमुल्लिखेत् । अतश्च आग्नेयेष्ट्या सह प्रकृतेर्विकल्पः ॥१६॥

**अध्वर्युं ब्रूयात् 'पुरोवातं च विद्युतं च मनसा ध्याये'ति ॥१७॥**

प्रयाजानुष्ठानात्पूर्वं पुरोवातमिति अध्वर्युं प्रति यजमानो ब्रूयात् ॥१८॥

**अभ्राण्यग्नीधम् ॥१९॥**

"अभ्राणि मनसा ध्याय" इत्यग्नीधं प्रति यजमानो ब्रूयात् ॥१९॥

**सर्वाण्येतानीति ब्रह्माणम् ॥२०॥**

"पुरोवातं च विद्युतं च अभ्राणि च स्तनयित्नुं च वर्षं च मनसा ध्याय" इति ब्रह्माणं ब्रूयात् इति कर्कः ॥२०॥

[ अन्वारम्भणीयाऽनुष्ठानप्रकारः ]

**अन्वारम्भणीया ऽग्नावैष्णव एकादशकपालः, सरस्वत्यै चरुः, सरस्वते द्वादश कपालो दर्शपूर्णमासारम्भे ॥२१॥**

दर्शपूर्णमासयोः प्रथमारम्भे अन्वारम्भणीयेष्टिः कर्त्तव्या । तत्र च हविस्त्रयं कुर्यात् । प्रकृतीष्ट्यपेक्षया विकृतीष्ट्यारम्भस्य भिन्नत्वात् तस्या अपि आरम्भेऽन्वारम्भणीया भवत्येवं । आग्रयणे चातुर्मास्येषु च प्रथमारम्भे सकृत्प्रयोगः । क्षामवत्यादिषु (का० श्रौ० २५।४।३५) त्वारम्भभेदात्पुनः प्रयोग इति कर्कः ॥२१॥

**पष्ठौही दक्षिणा, मिथुनौ वा ॥२२॥**

अन्वारम्भणीयेष्टेः पष्ठौही गौर्दक्षिणा भवति, मिथुनौ वा गावौ दक्षिणेति विकल्पः । पृष्ठेन वृषभं वोढुं समर्था गौः पष्ठौही ॥२२॥

[ पौर्णमासानन्तरं वैमृधेष्टेरारम्भविकल्पः ]

**इन्द्राय विमृध एकादशकपालः पौर्णमासमनु ॥ २३ ॥**

पौर्णमासेष्ट्यनन्तरं तदानीमेव इन्द्राय विमृधे एकादशकपालः पुरोडाशः कार्यः ॥२३॥

**आदिविकल्पः ॥ २४ ॥**

आदावारम्भे एव विकल्पो यस्य सः । आरभ्यते न वा । यद्यारभ्यते तदा यावज्जीवं पौर्णमासेष्ट्यनन्तरं क्रियत एव । नो चेत्कदापि न क्रियते ॥ २४ ॥

[अमावास्यानन्तरमादित्यचरोरारम्भविकल्पः ]

**आदित्यश्चरुरामावास्यम् ॥ २५ ॥**

एवं दर्शेष्ट्यनन्तरं तदानीमेव आदित्यश्चरुः कार्यः । आदिविकल्पोऽयमपि ॥२५॥

इति कात्यायश्रौतसूत्रवृत्तौ चतुर्थाध्याये पञ्चमी कण्डिका ॥५॥

---

[ आग्रयणेष्ट्यनुष्ठानप्रकारः ]

**आग्रयणमैन्द्राग्नमग्रपाकस्य ॥ १ ॥**

आग्रयणं नाम वक्ष्यमाणं कर्म प्रथमपाकस्य शरद्वसन्तयोर्भवति । तत्र प्रथमं हविः ऐन्द्राग्नो द्वादशकपालः पुरोडाशः । अस्यैव कर्मणो नवान्नेष्टिरिति च नाम । एतत्कृत्वैव नवमन्नं प्राश्यते नाकृत्वा ॥ १ ॥

**व्रीहीणां यवानां च ॥ २ ॥**

व्रीहिकाले व्रीहीणां, यवकाले यवानां हविः कार्यम् । यवकाले चरुरपि यवमयो यथा स्यादिति यवग्रहणम् । यवानामेव नियमो मा भूदिति व्रीहिग्रहणम् ॥ २ ॥

**वैश्वदेवश्चरुः ॥ ३॥**

द्वितीयं हविर्वैश्वदेवश्चरुरुपांशु भवति ॥ ३ ॥

**पयसि वा ॥ ४ ॥**

वैश्वदेवश्चरुः पयसि उदके वा श्रपणीयः । पयःपदे पयसोऽपि प्रणयनम्, दुग्धोपसर्जनस्याधिश्रयणम्, उपसर्जनीनिनयनमन्त्रे संपय इत्याद्यूहश्च कार्यः ॥ ४ ॥

## द्यावापृथिवीय एककपालः ॥ ५ ॥

तृतीयं हविर्द्यावापृथिवीभ्यामेककपालः (१)पुरोडाश उपांशु कार्यः। अस्य चातुर्मास्यान्तर्गतवैश्वदेविकद्यावापृथिवीयप्रकृतित्वात् अत्रापि त्रेधा बर्हि ( का० श्रौ० ५।२।१६ ) रहतवासःपरिधानयोः ( का० श्रौ० ५।२।१७ ) प्रवृत्तिः। नवप्रयाजादीनां तु न प्रवृत्तिः। ऐन्द्राग्नैः पञ्चप्रयाजैस्तेषां (२) बाधात्। 'आज्यस्य वा यजेत्' इति वक्ष्यमाणद्यावापृथिवीयाऽऽज्ययागपक्षे तु न तयोः प्रवृत्तिः। तत्पर्युपस्थापकस्य पुरोडाशस्याभावात् ॥ ५ ॥

## उद्वास्यान्तांश्छादयेदाज्येन ॥ ६ ॥

द्यावापृथिवीयं पुरोडाशं सर्गत्तायां पुरोडाशपात्र्यामुद्वास्य तस्य अन्ताँल्लौकिकेनाज्येनाच्छादयेत्, पुरोडाशं घृते मज्जयेदित्यर्थः ॥ ६ ॥

## आज्यस्य वा यजेत् ॥७॥

अथवा द्यावापृथिवी आज्येन यजेत्। एककपालेन पुरोडाशेन वेति विकल्पः ॥७॥

## पुराणानां वा चरुः ॥८॥

वैश्वदेवश्चरुः जीर्णानां, नवानां वा व्रीहीणां कर्त्तव्यो, यवानां वा तादृशानामिति विकल्पः ॥८॥

## प्रथमजो गौर्दक्षिणा ॥९॥

व्रीह्याग्रयणस्य यवाग्रयणस्य च यजमानस्य गोष्ठे जातानां यः प्रथमो जातो वत्सः स दक्षिणा ॥९॥

प्रसङ्गादाह—

## वैश्वदेवस्य च ॥१०॥

चातुर्मास्यान्तर्गत-वैश्वदेवपर्वणश्च प्रथमजो गौर्दक्षिणा भवति ॥१०॥

[ शुक्रास्तादिवशादनारब्धदर्शपूर्णमासस्य आग्रयणकालप्राप्तौ अनिष्टिरूपाग्रयणम् ]

## दर्शपूर्णमासानीजानो दक्षिणाग्निपक्वं चातुष्प्राश्यं ब्राह्मणान् भोजयेत् किञ्चिद्दद्यात् ॥११॥

शुक्रास्तादिवशादनारब्धदर्शपूर्णमासस्य आग्रयणकालप्राप्तौ नवं व्रीहिं यवं वा चतुर्भिर्ब्राह्मणैः प्राशितुं योग्यं दक्षिणाग्नौ पक्त्वा चतुरो ब्राह्मणान् भोजयेत्, किञ्चिद्दक्षिणां च दद्यात्। ब्राह्मणाशनेनैवाग्रयणसिद्धिरिति भावः ॥११॥

---

(१) अयं चैककपालो वैश्वदेविकद्यावापृथिवीयैककपालविकृतिः। उत्तरत्र विहिताज्यद्रव्यकयागपरके श्रुतिवाक्ये पुरोडाशेन यागानुष्ठाने तत्र सर्वहोमकरणापत्त्या तस्य निन्दितत्वेन तद्दोषनिवृत्त्यर्थमाज्येनैव यागोऽयं कर्त्तव्य इत्युक्तम्। सर्वहोमो हि वैश्वदेविके एककपाले एव विहितो न त्वत्र। अतश्च ततो यथात्र, धर्मा अतिदेशेनाऽऽगच्छेयुः, तदा सर्वहोमस्याप्यतिदेशात् तत्करणविशिष्टस्यैवातिदेशनिवृत्त्यर्थमाज्यकरणकस्तुतिरूपपन्ना स्यात्। अनेन ज्ञायते वैश्वदेविकयागैककपालविकृतिरयं याग इति।

(२) "ऐन्द्राग्नं द्वादशकपालं निर्वपेत्" ( श० ब्रा० २।४।३।५ ) "वैश्वदेवश्चरुः" ( श० ब्रा० २।४।३।६ ) इति ऐन्द्राग्न-वैश्वदेवयोर्हि दर्शविकृतित्वात् अतिदेशतः पञ्च प्रयाजा आगच्छन्ति इति उभयोरनयोः पञ्चप्रयाजता। द्यावापृथिवीयस्य तु एकस्य केवलस्य नवप्रयाजता। अतश्च नवप्रयाजता-पञ्चप्रयाजतयोर्विरोधे अनेकानुग्रहस्यैव न्याय्यत्वम्। "विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वम्" ( पू० मी० १२।२। सू० २४ ) इति न्यायात्।

[ अग्निहोत्रेणैवाग्रयणसिद्धिमिच्छतो नवान्नेनाग्निहोत्रहोमः, नवान्नाशिताया गोः पयसा वा ]

**अग्निहोत्रायणिनो नवैः सायम्प्रातरग्निहोत्रहोमः ॥१२॥**

अग्निहोत्रहोमेनैव यः अयनम् आग्रयणसिद्धिमिति यावत् । अर्थादाग्रयणं कर्त्तुमिच्छति, अग्निहोत्रहोमेनैव तस्यापि सिद्धिमभिवाञ्छति सोऽग्निहोत्रायणी । तस्य अग्निहोत्रायणिनो यजमानस्य नवैरन्नैः सायम्प्रातरग्निहोत्रहोमः कार्यो, न पृथक् ।

देवयाज्ञिकैस्तु त्रिंशद्वर्षोर्ध्वं दर्शपूर्णमासयोस्त्यागे कृते योऽग्निहोत्रमेव अयनं यज्ञं करोति नान्यानि कर्माणि करोति सोऽग्निहोत्रायणी । तस्य नवैः सायं प्रातरग्निहोत्रहोम इति व्याख्यातम् ॥१२॥

**तदाशिता वा पयसा ॥१३॥**

अथवा तत् नवान्नं खादिताया गोः पयसा सायंप्रातरग्निहोत्रहोमः कर्त्तव्यो,ऽग्निहोत्रहोमेनैवाग्रयणसिद्धिमिच्छतः । नवान्नेन वेत्यनेन विकल्पः ॥१३॥

[ संवत्सरदीक्षादौ यज्ञे प्रारब्धे आग्रयणकालप्राप्तौ दीक्षितव्रतं नवान्नाशिताया गोः पयसा कर्त्तव्यम् ]

**दीक्षितव्रतं च ॥१४॥**

संवत्सरादिदीक्षाके यज्ञे प्रारब्धे मध्ये आग्रयणकालप्राप्तौ दीक्षितव्रतं नवान्नाशिताया गोः पयसा कार्यम् । तेनैवाग्रयणसिद्धिरिति भावः ॥१४॥

**उपसत्सु रौहिणौ कुर्वीत ॥१५॥**

संवत्सरोपसत्कादौ यज्ञे उपसत्सु आग्रयणकालप्राप्तौ नवान्नेन रौहिणौ पुरोडाशौ (का० श्रौ० २६।४।६) कुर्यात् ॥१५॥

**सुत्यासु सवनीयाः ॥१६॥**

संवत्सरसुत्यादौ आग्रयणकालप्राप्तौ नवान्नेन सवनीयाः पुरोडाशाः कर्त्तव्याः ॥१६॥

[ आरण्याग्रयणे शरदि सौम्यः श्यामाकचरुः ]

**सौम्यः श्यामाकचरुरारण्यस्य ॥१७॥**

आरण्यस्य श्यामाकनीवारादेर्धान्यस्य आग्रयणमुच्यते । तत्र सोमदेवत्यः श्यामाकचरुः शरदि कार्यः । गोभिलगृह्यभाष्ये (३।८।२२) अयं वानप्रस्थस्योक्तः ॥१७॥

[ आरण्याग्रयणे ग्रीष्मे वेणुयवमयः सौम्यश्चरुर्वा भवति ]

**वैणवो ग्रीष्मे ॥१८॥**

ग्रीष्मर्त्तौ सौम्यो वेणुमयश्चरुः कार्यः ॥१८॥

[ श्यामाक-वैणवाग्रयणयोर्दक्षिणायां विशेषः ]

**पुनःसंस्कृतो रथो दक्षिणा, क्षौमं, मधुपर्को, वर्षाधृतं वा वासः ॥१९॥**

श्यामाकाग्रयण-वैणवाग्रयणयोः यो रथो भग्नः सन् सज्जीकृतः स दक्षिणा । अथवा क्षौमं वासो दक्षिणा । अथवा मधुपर्को दधिमधुघृतानि दक्षिणा । अथवा यजमानेन वर्षासु परिहितं यद्वासः, तदेव दक्षिणा ॥१९॥

इति कातीयश्रौतसूत्रवृत्तौ चतुर्थाध्याये षष्ठी कण्डिका ॥ ६ ॥



[ आधानकालनिरूपणम् ]

## अमावास्यायामग्न्याधेयम् ॥ १ ॥

"यदहरेवैष न पुरस्तान्न पश्चाद् दृश्येत तदहरुपवसेत्" (श० ब्रा० ११।१।१।२) इति श्रुत्या अमायामुपवासविधानात् अत्रत्यममापदं गौण्या वृत्या प्रतिपद्विषयम्। अतः अमायामुपोष्य प्रतिपद्या धानम्। (उपवासशब्दश्च यमनियमापेक्षः) "यदहरस्य श्वोऽग्न्याधेयं स्यात्दिवैवाश्नीयात्" (श० ब्रा० २।१।४।१)। इत्येवमादिविधानात्। अग्न्याधेयमिति वक्ष्यमाणस्य सकलस्य कर्मणो नाम। अमावास्यायामग्न्यगारकरणादि ब्रह्मौदनान्तमुपक्रम्य प्रतिपद्याधानं कुर्यादिति सूत्रार्थः। शाखान्तरे (आप० श्रौ०५।३।१७) पौर्णमास्यामग्न्याधानमुक्तं, तस्यां क्रियमाणे चतुर्दश्यामुपक्रमः, पूर्णिमायामाधानम्। कृत्तिकादिपक्षे तु तदहरेवाधानम्। तत्रैतादृशस्य वचनस्याभावात् ॥ १ ॥

## कृत्तिका-रोहिणी-मृगशिरः-फल्गुनीषु ॥ २ ॥

अथवा कृत्तिकादिषु अग्नी आदधीत। अमावास्याकालेन सह नक्षत्राणां विकल्पः, नतु अमानक्षत्रयोः समुच्चयः "अथ यो नक्षत्र आधत्ते यथा पिहितायां द्वार्यद्वारा पुरं प्रतिपित्सेत् स जिह्मः स्यादेवं तत्" (श० ब्रा० ११।१।१।३)

इति श्रुतौ अमावास्याविधाने नक्षत्रनिषेधसंस्तवबलात् तयोर्विकल्पप्रतीतेः ॥२॥

## हस्तो लाभकामस्य ॥ ३ ॥

प्रतिग्रहकामस्य ब्राह्मणस्य हस्तो नक्षत्रमाधानकालः ॥ ३ ॥

## चित्रा च क्षत्रियस्य ॥ ४ ॥

लाभकामस्य त्रैवर्णिकस्य क्षत्रियस्य च चित्रानक्षत्रमाधानकालः ॥ ४ ॥

## वसन्तो ब्राह्मण-ब्रह्मवर्चसकामयोः ॥ ५ ॥

निष्कामस्य ब्राह्मणस्य, ब्रह्मवर्चसकामस्यापि ब्राह्मणस्य वसन्त ऋतुराधानकालः ॥५॥

## ग्रीष्मः क्षत्रिय-श्रीकामयोः ॥ ६ ॥

निष्कामस्य क्षत्रियस्य, श्रीकामस्य त्रैवर्णिकस्य च ग्रीष्म ऋतुराधानकालः ॥ ६ ॥

## वर्षाः प्रजा--पशुकाम-वैश्य-रथकृताम् ॥ ७ ॥

प्रजाकामस्य पशुकामस्य त्रैवर्णिकस्य, निष्कामस्य वैश्यस्य, रथकारस्य च वर्षा ऋतुराधानकालो वेदितव्यः ॥ ७ ॥

[ अग्न्यागारनिर्माणादिकमाधानपूर्वाङ्गम् ]

## अग्न्यगारे कुर्वन्ति ॥ ८ ॥

गार्हपत्यगृहम्, आहवनीयगृहं चार्थात्परिमाणमुत्पत्तिक्रमेण कुर्वन्ति। कुर्वन्तीति बहुवचनोपदेशादप्राकृता ऋत्विग्व्यतिरिक्ता अग्न्यगारकरणे इति कर्कः। अध्वर्य्वादय इति याज्ञिकाः। अद्यत्वे तु एकस्मिन्नेव गृहे अग्निद्वयं स्थापयन्ति, नाग्न्यगारद्वयं कुर्वन्ति, समाधानसौकर्यादिति ॥ ८ ॥

## उदग्वꣳशं वाऽपरम् ॥ ९ ॥

अपरं गार्हपत्यागारमुदग्वंशं प्राग्वंशं वा कुर्यात्। आहवनीयगृहं तु प्राग्वंशमेवेति भावः ॥ ९ ॥

## दक्षिण-पूर्वे द्वारे ॥ १० ॥

उत्पत्तिक्रमेण गार्हपत्यागारस्य दक्षिणे द्वारं कुर्यात्, आहवनीयगृहस्य च पूर्वदिशि द्वारं कुर्यात् । गार्हपत्यागारे पूर्वद्वारम्, आहवनीयागारे पश्चिमद्वारं च प्रयोजनवशेन प्राप्तमेव । अतो द्वारद्वयं न विहितम् । गार्हपत्यागारे पूर्वद्वारं विना, आहवनीयागारे पश्चिद्वारं विना च गार्हपत्यादाहवनीयपर्यन्तं विहितस्य (का० श्रौ० ४।१३।१६) धारानिनयनस्य, आहवनीयगृहाद्गार्हपत्यावेक्षणस्य (४।१४।१६) चासंभवापत्तेः । अतः प्रत्यगन्यगारे द्वारद्वयं विधेयम् ॥१०॥

## पौर्णमासवद्वपनम् ॥ ११ ॥

यजमानः पौर्णमासवदशिखं वपनं कुर्यात् ॥ ११ ॥

## क्षौमे वस्ते ऽहते पत्नी च ॥ १२ ॥

क्षौमे वाससी ईषद्धौते यजमानो वस्ते परिधत्ते । पत्नी च परिदध्यात् ॥ १२ ॥

## स७ंस्थितेऽध्वर्यवे देये ॥ १३ ॥

आधाने परिसमाप्ते ते वाससी उभाभ्यामप्यध्वर्यवे दातव्ये ॥ १३ ॥

## गार्हपत्यागारे निर्मथ्याभ्यादधाति ॥ १४ ॥

गार्हपत्यगृहे, सन्निधानात्प्रकृताभ्यामरणिभ्यां निर्मथ्य गार्हपत्यखरेऽग्निं स्थापयेत् ॥१४॥

## वैश्यकुलाम्बरीषमहानसाद्वा ॥ १५ ॥

अथवा वैश्यगृहात् लौकिकमग्निमानीय स्थापयेत् । अथवा अम्बरीषाद् भ्राष्ट्रात्, अथवा महानसात् = लौकिकसत्रादक्षीणाग्ने रिति यावत् ॥ १५ ॥

## दिवाऽश्नाति, रात्रौ वा ॥ १६ ॥

यजमानो दिवा नियमेनाऽश्नीयात् । रात्रावश्नीयान्नवाऽश्नीयादिति रात्र्यशनविकल्पः ॥ १६ ॥

## उपास्तमयं "देवाः पितरः पितरो देवा योऽहमस्मि स सन्यजे । यस्याहमस्मि न तमन्तर्यामि स्वम्म इष्ट७ँ स्व७ं श्रान्त७ं स्व८ं० सुहुतस्त्वि"ति ॥१७॥

अस्तमयसमीपकाले देवा इति मन्त्रेण यजमान आहवनीयागारात्पूर्वस्यां दिश्युपविश्य देवान् पितृंश्च आह्वयति । अस्य मन्त्रस्य श्रुत्याऽऽह्वाने विनियोगात् ॥ १७ ॥

## पूर्वेण प्रविशति, दक्षिणेन पत्नी ॥१८॥

यजमान आहवनीयागारस्य पूर्वेण द्वारेण प्रविशेत्, पत्नी तु गार्हपत्यागारस्य दक्षिणेन द्वारेण प्रविशेत् ॥१८॥

## पश्चादग्नेरुपविशतो दक्षिणतः पत्नी ॥१९॥

अग्नेः = गार्हपत्यस्य ॥१९॥

## अश्वत्थशमीगर्भोऽरणी प्रयच्छति ॥२०॥

शमीवृक्षमध्ये उत्पन्नोऽश्वत्थः शमीगर्भ इत्युच्यते । शम्या गर्भः शमीगर्भः । अश्वत्थश्चासौ शमीगर्भश्चेति तथोक्तः । तादृशस्य शमीगर्भस्य अश्वत्थस्य संबन्धिन्यौ अरणी अध्वर्युर्यजमानाय प्रयच्छेत् ॥२०॥

अभावेऽगर्भस्य ॥२१॥

शमीगर्भस्याश्वत्थस्याभावे अगर्भस्य केवलभूमावुत्पन्नस्य अश्वत्थमात्रस्य अरणी प्राह्ये ॥२१॥

'वाचं यच्छाऽऽपूर्णाहु'तेरित्याहाऽस्तमिते निशायां, पर्युदयं वा प्रधानकालत्वात् ॥२२॥

अध्वर्युरस्तमिते सूर्ये निशायां यजमानं प्रति 'वाचं यच्छाऽऽपूर्णाहुतेः' इति ब्रूयात्। पूर्णाहुतिमग्रे (४।१०।५) स्वयं विधास्यति सूत्रकारः। तावद्वाग्यमनमिति। एवं प्राप्त आह—पर्युदयमिति। वाऽवधारणे। उदयस्य समीपं पर्युदयम्। सूर्योदयसमीपे प्रातरेव उक्तं प्रैषं ब्रूयात्, नास्तमिते। कुतः। प्रधानकालत्वात्। प्रधानस्य अग्न्याधानस्य श्वः कर्त्तव्यत्वातदङ्गभूतस्य वाग्यमस्यापि प्रधानकालतया एवोचितत्वात्। यतवाचा हि यजमानेन सुखेन पदार्थाः कर्त्तुं शक्यन्त इति वाग्यमस्य दृष्टार्थता। इतरथा अदृष्टार्थता स्यात्। इतरे तु रात्रिपर्युदययोः कालयोर्विकल्पमेवेच्छन्ति ॥२२॥

इति कातीयश्रौतसूत्रवृत्तौ चतुर्थाध्याये सप्तमी कण्डिका ॥७॥

---

गार्हपत्यागारेऽजं बध्नाति न वा, विद्यमानं प्रातरग्नीधे दद्यादस्तमिते ॥ १ ॥

अस्तमिते सूर्ये गार्हपत्यागारे अजं बध्नीयात्, अथवा न बध्नीयात्। यदि अस्य निकटे अजः स्यात्तर्हि विद्यमानं तमजं प्रातराग्नीध्राय दद्यात् ॥१॥

रोहिते चर्मण्यानडुहे चत्वारि हविष्यपात्राणि मिमीते तं चातुष्प्राश्यं पचति ॥ २ ॥

रक्तवर्णे आनडुहे चर्मणि चत्वारि व्रीहितण्डुलपूर्णपात्राणि अध्वर्युः स्थापयेत्। तं चर्मणि निक्षिप्तं तुण्डलरूपं हविष्यमृत्विक्चतुष्टयतृप्तिक्षमं गार्हपत्ये एकस्यां स्थाल्यां पचेत् ॥२॥

उद्वास्याऽऽसेचनं मध्ये कृत्वा सर्पिरासिच्याऽऽश्वत्थीस्तिस्रः समिधो घृताक्ता आदधाति "समिधाग्नि"मिति प्रत्यृचम् ॥ ३ ॥

अध्वर्युः ओदनमग्नेरुदगुत्तार्य ओदनस्य मध्ये गर्त्तं कृत्वा तत्र लौकिकं घृतं प्रक्षिप्य तेन गर्भक्षिप्तघृतेन अक्ता आश्वत्थीस्तिस्तः समिधः समिधाग्निमिति (शु० य० ३।१-३) ऋक्त्रयेणाग्नावादध्यात् ॥ ३ ॥

"उपत्वे"ति जपति ॥ ४ ॥

द्वितीयां वाऽध्वर्युः ॥ ५ ॥

अथवा न उपत्वेति-(शु० य० ३।४) जपेत्। किन्तु सुसमिद्धायेति (३।२) द्वितीयामेव ऋचं प्रथम-तृतीयचतुर्थमन्त्रैः क्रियमाणसमिदाधानानन्तरं जपेत्। अध्वर्युग्रहणं पाठक्रमव्युदसार्थम्। अतश्च मध्ये जपो न कार्यः। अपि तु समिदाधानान्ते ॥ ५ ॥

चत्वार ऋत्विजः प्राश्नन्ति ॥ ६ ॥

तमोदनम् ॥ ६ ॥

'राद्धस्ते ब्रह्मौदन' इत्याह ॥ ७ ॥

प्राशनानन्तरं 'राद्धस्ते ब्रह्मौदनः' इति प्रैषमध्वर्युर्यजमानं प्रति ब्रूयात् ॥ ७ ॥

वरं ददाति ॥८॥

यजनमानश्चतुर्भ्य ऋत्विग्भ्यो वरम् ऋत्विगभिलषितं स्वाधीनं वस्तु यथासम्पन्नं हिरण्यादिकं दद्यात् । अत्र वरण—भरणयोर्ऋत्विगानत्यर्थत्वात् ऋत्विजामानतत्वात् न पुनः उपरि क्रियमाणेषु पवमानेष्ट्यादिषु ब्रह्मवरणम् । चातुष्प्राश्याभावपक्षेऽपि अध्वर्य्यादीनामिव ब्रह्मणोऽपि कर्मणि प्रवर्त्तितत्वादेव न वरणम् । वरणस्य हि अप्रवृत्तप्रवृत्तिजनकत्वात् ॥ ८ ॥

संवत्सरं वा पुरस्तात्कुर्या,त्ततः सर्वानादधीत ॥ ९ ॥

अथवा यस्मिन्दिने आधानं चिकीर्षितं, ततः संवत्सरत्पूर्वममायामन्यगारकरणादिवरदानान्तं कुर्यात् । अस्मिन्पक्षेऽपि अशननियमः, आधानपूर्वदिवसेऽजबन्धनम्, जागरणम्, वाग्बन्धश्च इति एते चत्वारः पदार्थाः तस्यैव संवत्सरस्य अन्तिमेऽहनि अर्थात् आधानपूर्वं दिवसेऽमायां कर्त्तव्याः । कुतः ? आधानपूर्वदिने एव एतेषां कर्त्तव्यत्वेन श्रुतौ विधानात् । ततः सर्वानादधीत । एवंविधसंवत्सरसमिदाधानसंस्कृतादेवाग्नेः सकाशात् गार्हपत्यादयस्त्रयः, सभ्यश्च इति चतुरोऽग्नीनादधीत । न तु मन्थादिनाग्नीनुत्पाद्य आधानम् ॥९॥

अत्र अरणी विनैव संवत्सरसमिदाधानेन श्रौताग्निसाधनपक्षे मध्ये गार्हपत्यानुगमने गार्हपत्योत्पत्तिः पुनः कथं कार्येत्याह—

गार्हपत्येऽनुगते ग्रामाग्निमाहृत्य चातुष्प्राश्यं पक्त्वा विहरेत् ॥१०॥

विहरणोपदेशादग्निहोत्रकाले गार्हपत्यानुगमने लौकिकाग्निमाहृत्य तत्र चातुष्प्राश्यं पक्त्वा चतुर्भ्यो ब्राह्मणेभ्यो दत्वा तमेवाग्निमग्निहोत्रहोमार्थं विहृत्याग्निहोत्रहोमं कुर्यात् । चातुष्प्राश्यमिति गुणमात्रविधानेन धर्मानपेक्षणात् तण्डुलमानादिवरदानान्ता धर्मा अत्र न कार्याः । केवलं पाकमात्रं विधेयम् ॥ १० ॥

रात्रिं जागरणधारणे ॥११॥

अस्यां रात्रौ सपत्नीकेन यजमानेन जागरणं कर्त्तव्यम्, अग्नेर्धारणं च कार्यम् ॥११॥

अग्निधारणे करणनियममाह—

शकलैर्वा ॥१२॥

अग्नेर्धारणं काष्ठशकलैः, गोमयपिण्डैर्वा कर्त्तव्यम् । वचनं विनाऽपि अनयोः प्राप्तिसंभवादन्यतरनियमार्थं सूत्रम् । ततश्च न शकलसमुच्चितैर्गोमयपिण्डैर्धारणमिति भावः ॥१२॥

[ उषसि आधानोपक्रमः ]

व्युष्टायामुपशमय्य, दक्षिणा वा स८ंहरेदन्वाहार्यपचनश्चेत् ॥१३॥

रात्रौ अतीतायामुषसि तमग्निम् उपशमय्य, वक्ष्यमाणमुल्लेखनादिकं कुर्यात् । अथवा तमग्निं गार्हपत्याद्दक्षिणस्यां दिशि दक्षिणाग्न्यर्थं स्थापयेत्, यदि दक्षिणाग्निर्नित्योऽभिप्रेतः स्यात् ।

"नित्यो दक्षिणाग्निः" (४।१३।४) इति दक्षिणाग्नेरजस्रधारित्वपक्षं वक्ष्यति। तस्मिन्पक्षे अस्मिन्नेव काले दक्षिणाग्निखरे एतमग्निं स्थापयन्निरन्तरं धारयीत। दक्षिणाग्नेर्नित्यत्वपक्षे गार्हपत्यादाहरणं न भवति। किन्तु अयमेव दक्षिणाग्निर्भवतीत्यर्थः ॥१३॥

**स्थानमुल्लिख्याऽभ्युद्दत्यान्वारब्धे हिरण्यं निधायोषाखूत्करान्निवपत्यन्तेषु शर्कराः ॥१४॥**

उपशमितस्याग्नेः स्थानं स्फ्येनोल्लिख्य अन्वारब्धे यजमाने अभ्युदय हिरण्यं निधाय तत्र ऊषाभिः=क्षारमृत्तिकाभिः, आखुभिरुत्कीर्णैः पांसुभिः, शर्कराभिश्च वृत्तत्रयं सम्पादयेत् क्रमेण। अथ उल्लिख्येत्यनेन पञ्चभूसंस्कारा उपलक्षिताः, ते कर्त्तव्याः। अभ्युक्षणं तु तन्त्रेणैव भवति ॥१४॥

**हिरण्यमुपर्येके ॥१५॥**

एके आचार्याः संभाराणामुपरिष्टाद्धिरण्यनिधानमिच्छन्ति। एके पुरस्तादित्युक्तम् ॥१५

**एवमितरयोः ॥१६॥**

एवमाहवनीयदक्षिणाग्न्योरपि स्थाने पञ्चभूसंस्कारादिशर्करानिधान्तसंस्कारान् कुर्यात्। शर्कराश्च गार्हपत्ये पञ्चाशत्, आहवनीये त्रिसप्ततिः, दक्षिणाग्नेर्द्वाविंशतिर्निधेयाः। (का० शु० प० ६।२६) आहवनीयखरश्चतुरस्रः, गार्हपत्यखरो वृत्तः, इतरोऽर्द्धचन्द्राकृतिः, सभ्यावसथ्यौ च गार्हपत्यवत्। (का० शु० प० ६।२७) तथैवोक्तेः ॥१६॥

आहवनीयस्थानमाह—

**पुरस्तादाहवनीयस्याष्टासु प्रक्रमेष्वेकादशसु द्वादशसु मत्या वा ॥१७॥**

गार्हपत्यखरस्य मध्यात् प्राच्यां दिशि अष्टसु द्वादशाङ्गुलपरिमितेषु पदिकेषु प्रक्रमेषु, अथवा एकादशसु प्रक्रमेषु, अथवा द्वादशसु प्रक्रमेषु, अथवा मत्या उक्तसंख्यातो न्यूनेष्वपि प्रक्रमेषु आहवनीयखरस्य मध्यं कुर्यात्। अष्टप्रक्रमपक्षे दक्षिणाग्नेर्वेदिमध्ये पातःस्यात् अतोऽत्र गार्हपत्यस्य पूर्वान्तात् आहवनीयपश्चिमान्तो ग्राह्यः। यथा दक्षिणाग्निखरो वेदेर्बहिर्भवेत् ॥१७॥

दक्षिणाग्निस्थानमाह—

**इतरस्य वितृतीये दक्षिणतः ॥ १८ ॥**

इतरस्य दक्षिणाग्नेः स्थानं, दक्षिणस्यां दिशि वितृतीये कर्त्तव्यम्। तस्य साधनोपायः शुल्वसूत्रे (का० शु० १।१।२७) द्रष्टव्यः ॥ १८ ॥

**उत्सृप्तेऽग्निमन्थनमनुत्सृप्त एके ॥ १९ ॥**

उदिते अनुदिते वा सूर्येऽग्नेर्मन्थनं कुर्यादध्वर्युः ॥ १९ ॥

**उदिते तूद्धरणम् ॥ २० ॥**

पक्षद्वयेऽपि आहवनीयदक्षिणाग्न्योरुद्धरणं तु उदिते सूर्ये एव कर्त्तव्यम् ॥ २० ॥

**अपरेण गार्हपत्यायतनम् ॥ २१ ॥**

गार्हपत्यस्य पश्चान्मथनं कुर्यादध्वर्युः ॥ २१ ॥

**अश्वमानयेति ब्रूयात् ॥ २२ ॥**

मन्थनं करिष्यन्नध्वर्युः 'अश्वमानय' इतिप्रैषमग्नीधं प्रति ब्रूयात् ॥ २२ ॥

**स्थितेऽश्वे पुरस्तात् ॥ २३ ॥**

अश्वे गार्हपत्यस्य पूर्वतः प्रत्यङ्मुखे स्थिते सति अध्वर्युर्मन्थेत् ॥ २३ ॥

**जाते वरदानम् ॥ २४ ॥**

अग्नौ जाते सति यजमानोऽध्वर्यवे वरदानं कुर्यात् ॥ २४ ॥

**मनसैके ॥ २५ ॥**

एके आचार्याः 'इदानीमहमिदं वस्तु अध्वर्यवे दास्यामि' इति मनसा सङ्कल्प्य पश्चात्कर्मसमाप्तौ वरदानमिच्छन्ति, नेदानीम् ॥ २५ ॥

**तस्याभिश्वासः "प्राणममृते दध" इति ॥ २६ ॥**

तस्य जातस्याग्नेर्यजमानः "प्राणममृते दधे" इति मन्त्रेण अग्निमभिलक्ष्य मुखेन श्वासस्य प्रेरणं फूत्कारं कुर्यात् ॥२६॥

**उच्छ्वासो "ऽमृतं प्राण आदध" इति ॥ २७ ॥**

यजमानः "अमृतं प्राण आदधे" इति मन्त्रेण वह्निज्वालायाः श्वासेन मुखमध्ये ग्रहणं कुर्यात् । मुखे वायूपादानमुच्छ्वासः ।

उच्छ्वासस्य यजमानसंस्कारत्वेनाग्निसंस्कारत्वाभावात्पुनराधेये न भवति । अभिश्वासस्तु भवति । अग्निसंस्कारत्वात् । अभिश्वासस्य जाताग्निमात्रसंस्कारकत्वात् "ततः सर्वानादधीत" ( ४।८।६ ) इत्यत्र तदभावात् न तत्राभिश्वासः । उच्छ्वासस्तु आत्मसंस्काराद्भवत्येव ॥२७॥

इति कातीयश्रौतसूत्रवृत्तौ चतुर्थाध्याये अष्टमी कण्डिका ॥८॥



गार्हपत्याधानमाह—

**दारुभिर्ज्वलन्तमादधाति 'भूर्भुव' (३।५) इति सम्भारे "ऽमुष्य त्वा व्रतपते व्रतेनादध" इति यथर्षि ॥ १ ॥**

जातमग्निं दारुभिर्ज्वलन्तं सम्भाराणामुपरि भूर्भुव इति मन्त्रेण अमुष्य त्वेति मन्त्रेण च स्थापयेत् । मन्त्रे अमुष्य इत्यस्य स्थाने शाखान्तरपठितं तदृषिवाचिपदं प्रयोज्यम् । यथा— यदि अङ्गिराः "भूर्भुवः अङ्गिरसां त्वा देवानां व्रतपते व्रतेनादधे" इति मन्त्रः । यदि भृगवः "भूर्भुवः भृगूणां त्वा देवानां व्र० धे" इति मन्त्रः । उभयातिरिक्तानाम् "भूर्भुवः आदित्यानां देवा० धे" इति मन्त्रः ॥ १ ॥

**वरुणस्य त्वेति क्षत्रियस्येन्द्रस्य त्वेति राजन्यस्य ॥ २ ॥**

ॐ भूर्भुवः वरुणस्य त्वा व्रप० दधे" इति क्षत्रिययजमानस्य मन्त्रः । "ॐ भूर्भुवः इन्द्रस्य त्वा व्रत० धे" इति क्षत्रियायां ब्राह्मणजातस्य राजन्यस्य मन्त्रः ॥ २ ॥

**मनोष्वा ग्रामण्य इति वैश्यस्य, ऋभूणां त्वेति रथकृतः ॥ ३ ॥**

"ॐ भूर्भुवः मनोष्वा ग्रामण्यो व्र० धे" इति वैश्ययजमानस्य गार्हपत्याधाने मन्त्रः । ऋभूणां त्वा देवानां व्रत० धे इति रथकारस्य गार्हपत्याधाने मन्त्रः ॥ ३ ॥

"रथन्तरं गाये"ति प्रेष्यति ॥ ४ ॥

कः प्रेष्येदित्याह—

गानमध्वर्योः ॥ ५ ॥

आधाने सामगानमध्वर्योः स्यात्। समाख्यानात् इति शेषः। सामवेदे उत्पन्नस्यापि आधानसाम्न आध्वर्यवकाण्डे एव आधानाङ्गत्वेन विनियोगात् आध्वर्यवसमाख्यया अध्वर्यु-कर्त्तृकस्यैव प्राप्तत्वात्। अतोऽध्वर्य्वतिरिक्तः प्रेष्येत् ॥५॥

एवं प्राप्त आह—

ब्रह्मा वा वेदयोगात् ॥ ६ ॥

वाऽवधारणे। ब्रह्मा सामानि गायेत्, नाध्वर्युः। कुतः ? वेदयोगात्। ब्रह्मत्वस्य वेदत्रयविहित-त्वेन ब्रह्मणोऽपि अध्वर्युवेदविहितकर्मयोगात्। अतो ब्रह्मा सामगाने। अध्वर्युश्च प्रेषणे ॥६॥

हेत्वन्तरमप्याह—

युक्तत्वाच्चाध्वर्योः ॥ ७ ॥

अध्वर्योः कार्यान्तरे युक्तत्वाच्च ब्रह्मैव गायेत्। तथा च सूत्रान्तरम्—"प्रस्तोता परि-सामानि गायति, अग्न्याधेये सौत्रामण्यां च ब्रह्मा" (आप० श्रौ० ५।१६।६) इति ॥७॥

आहवनीयाधानमुपक्रमते—

इध्मेनोद्धरणमुपयम्य ॥ ८ ॥

अपरिमितकाष्ठकं त्रियूनम् ( का० श्रौ० १।३।२१ ) इध्मं गृहीत्वा तस्य मूलं गार्हपत्ये प्रदीप्य प्रदीप्तस्येध्मस्याग्रं कर्परस्थासु वालुकासु आरोप्य तेनेध्मेन आहवनीयस्योद्धरणं कुर्यात्। अग्रे (१७) इध्मपूर्वार्द्धस्य ग्रहणविधानादत्र मूलस्यादीपनं कार्यम् ॥८॥

यथैनं धूम उपेयात् ॥ ९ ॥

इध्मेनोद्धरणं तथा कार्यं, यथा धूमो यजमानमुपगच्छेत्। व्यजनादिना तथा यत्नः कार्य इत्यर्थः ॥९॥

वामदेव्यमिति प्रेष्यति ॥१०॥

प्रदीप्तमिध्ममुपयम्य 'वामदेव्यं गाय' इत्युध्वर्युर्ब्रह्माणं प्रेष्येत् ॥१०॥

अश्वः पुरस्ताद्युवा तदभावेऽयुवा, ऽश्वाभावेऽनड्वान् ॥११॥

उद्धरणे क्रियमाणे प्रकृतत्वान्मन्थनकाले आनीतो युवा अश्वः अग्नेरग्रतो गच्छेत्। अश्वाभावे अनड्वानग्रतो गच्छेत्। मन्थनकाले एवैतत्पदत्रयम्। अनडुत्पदे अनभिधाना-दश्वमानयेति प्रैषाभावः। प्रकृतित्वाच्चानूहः ॥११॥

सम्भारानधिष्ठाप्य दक्षिणपूर्वपादेन प्राञ्चं नीत्वाऽऽवर्त्य स्थापयति ॥१२॥

एवं प्राङ्मुखेऽश्वे अग्रतो नीयमाने आहवनीयखरसमीपमश्वं प्रापय्य स्वयं चाध्वर्युः उपविश्य आहवनीयादुत्तरतोऽवस्थितस्य प्राङ्मुखस्यैवाश्वस्य दक्षिणपूर्वपादेन अग्रिमदक्षिण-चरणेन ( अग्निकोणस्थेन ) आहवनीयखरस्थान् हिरण्यादिसम्भारानश्वपादेनाक्रमय्य तमश्वं प्राञ्चं नीत्वा आवर्त्य प्रदक्षिणाऽऽवर्त्तनेन प्रत्यङ्मुखं कृत्वा संमुखं स्थापयेत्। अत्र "सम्भारानुत्तरेण प्राञ्चं नीत्वाऽऽवर्त्य स्थापने क्रियमाणे सन्निहितो दक्षिणपूर्वपाद" इति कर्कभाष्यपर्यालोचनया प्रथमतोऽश्वं नीत्वा प्रत्यावर्त्य स्थापनसमये एव पादेनाक्रमणम् इति कर्काशयः प्रतीयते। तत्रस्थेनैव उत्तरग्रन्थेन ( उखासंभरणे १६।१।८ ) "दक्षिणतो नीयमाने सन्निधानात् सव्येनाक्रमणम्" इत्यनेन देवयाज्ञिकानुसारेण, "प्राञ्चमश्वं

नभ्यस्थाद्विश्वा इति दक्षिणेन पदोत्तरतः सम्भारानाक्रमयति" ( आप० श्रौ० ५।१४।१४ ) इति सूत्राच्च अश्वस्य नयनसमये दक्षिणपादेनाक्रमणम् । कर्कभाष्यपङ्क्तिरप्यस्मिन्नेवार्थे नेया ॥१२॥

[ आहवनीयाधानम् ]

**बृहदिति प्रेष्यति ॥ १३ ॥**

'बृहद्गाय' इति ब्रह्माणं प्रेष्येदध्वर्युः ॥ १३ ॥

आहवनीयाधानमाह—

**अग्निना पदं द्विरुपस्पृश्य तृतीयेनादधाति, द्वितीयेन, प्रथमेन वा 'भूर्भुवः स्व' (३।५) रिति पूर्ववत् ॥१४॥**

उपयमनीभिरिध्मं पृथक्कृत्य इध्मस्थेनाग्निना दक्षिणपूर्वपादेन सम्भारस्योपरि कृतमश्वस्य पदं = पदमुद्रां द्विर्वारं स्पृष्ट्वा तृतीयेनोपस्पर्शनेन सह तमग्निमश्वपदे स्थापयेत्, भूर्भुवः स्वः इति मन्त्रेण, पूर्ववत् = अमुष्य त्वेति मन्त्रेण च। अथवा अग्निना पदं सकृदुपस्पृश्य द्वितीयेनोपस्पर्शनेन सहाग्निमादध्यात् । अथवा प्रथमेनैवोपस्पर्शनेन सहाऽग्निमादध्यात् ॥ १४ ॥

**पुरस्तात्परिक्रम्येध्मपूर्वार्द्धं गृहीत्वा "द्यौरिव भूम्ने"त्याह ॥१५॥**

यजमान आहवनीयस्य पूर्वत आगत्य प्रत्यङ्मुखो भूत्वा इध्मस्य पूर्वार्द्धं हस्तेनालभ्य द्यौरिति मन्त्रं (३।५) पठेत् । "इध्मपूर्वार्द्धान्वारम्भण" (४।९।०।३) इत्यन्वारम्भोपदेशाद्यजमान आलम्भने ( का० श्रौ० १।१०।१२ ) ॥ १५ ॥

**"आयं गौ"रिति चोपतिष्ठते सार्पराज्ञीभिः ॥१६॥**

च-शब्दाद्यजमान आयङ्गौरिति तिसृभिः ( शु० य० ३।६।८ ) सार्पराज्ञीनामभिः ऋग्भिरुपतिष्ठेत् ॥ १६ ॥

[ दक्षिणाग्न्याधानम् ]

**दक्षिणाग्निमादधाति ॥१७॥**

गार्हपत्यात् । नित्यपक्षे यः पूर्वं ( ४।८।१५ ) दक्षिणाऽऽहृतस्तमादध्यात् । अस्मिन्पक्षे यावज्जीवमयमेव दक्षिणाग्निः सर्वदा धार्यः ॥१७॥

[ सभ्याधानम् ]

**सभ्यं च निर्मथ्य ॥१८॥**

सभ्यमग्निं निर्मथ्य सभास्थाने स्थापयेत् । यत्र ब्राह्मण उपविश्य शिष्यानध्यापयति सा तस्य सभा ॥१८॥

**'गां दीव्यध्व'मित्याह ॥१९॥**

यजमान ऋत्विजः प्रति "गां दीव्यध्वम्" इति वदेत् । यूयं गां पणं कृत्वा द्यूत कुरुध्वम् इति प्रैषार्थः । इदं द्यूतं प्रकृतत्वात्सभ्याङ्गम् । अतः पुनराधेये न भवति, सभ्यस्य विद्यमानत्वात् । तत्रापि तस्योत्सर्गे कृते तु भवत्येव ॥१९॥

**धारणोपस्थानमतः ॥२०॥**

अत आरभ्य सभ्यस्य धारणम्, उपस्थानं च यावज्जीवं कुर्यात् । उपस्थानं च (४। १५.३३) प्रातरेवेति वक्ष्यते ॥२०॥

इति कातीयश्रौतसूत्रवृत्तौ चतुर्थाध्याये नवमी कण्डिका ॥ ९ ॥



[ श्यैतादिसामगानप्रैषः ]

"श्यैत–वारवन्तीय–यज्ञायज्ञियानी"ति च प्रेष्यति ॥ १ ॥

श्यैतं गाय, वारवन्तीयं गाय, यज्ञायज्ञियं गाय इति अध्वर्युर्ब्रह्माणं प्रेष्येत्। अत्र श्यैतगानोत्तरं वारवन्तीयप्रैषः। तद्गानोत्तरं च यज्ञायज्ञियप्रैष इति ॥१॥

दक्षिणेनाग्नीन्परीत्योदगुत्सृजति ॥ २ ॥

अध्वर्युः सर्वानग्नीन्परिक्रम्य अश्वमुत्तरस्यामुत्सृजेत्। दक्षिणग्रहणमितरथाऽऽवृत्तिव्युदासार्थम् ॥२॥

[ ऋतु–नक्षत्रादिविकल्पः ]

ऋतु-नक्षत्र-सम्भार-साम-वपन-चातुष्प्राश्य-जागरणे-ध्मपर्वाह्वान्वारम्भण-सार्पराज्ञीर्न वा कुर्यात् ॥३॥

एतानि कुर्यान्न वा कुर्यादिति विकल्पः ॥३॥

[ नित्याग्निहोत्रधर्मक-कर्मण आधानाङ्गतया तूष्णीं विधानम् ]

अग्निहोत्रं च तूष्णीꣳ श्रुतेः पूर्णाहुत्यन्ते ॥४॥

वक्ष्यमाणां पूर्णाहुतिं विधाय तदन्ते अग्निहोत्रं च तूष्णीं जुहुयादध्वर्युः। कुतः? श्रुतेः। तूष्णीं हवनस्य श्रुतौ ( तै० ब्रा० १।१।६ ) विधानादित्यर्थः। एतत् तूष्णीमग्निहोत्रं सायारम्भं प्रातरपवर्गं तन्त्रेण कुर्यादेकस्मिन्काले। तत्र प्रधानहुती द्वे। आग्नेयी सौरी च। (पा० गृ० १।६।४५)। तत्र चतुर्गृहीतेनाग्नेयीं हुत्वा पात्रान्तरे तदुन्नीय चतुर्गृहीतान्तरेण सौरीं जुहुयात्। शेषमेकीकृत्योत्तराहुतिः कार्या। परिस्तरणादीन्यङ्गानि तु तन्त्रेण, एककालत्वात्। इदं तूष्णीमग्निहोत्रहवनमाधानाङ्गम् ॥४॥

[ पूर्णाहुतिविधानम् ]

निरुप्याज्यं गार्हपत्येऽधिश्रित्य स्रुक्स्रुवं च सम्मृज्योद्वास्योत्पूयावेक्ष्य गृहीत्वाऽन्वारब्ध एवꣳ सर्वत्र स्वाहेति ॥ ५ ॥

गार्हपत्यस्य संस्कारनिमित्तत्वात् तेषां चोपरि क्रियमाणत्वेन इदानीमभावात् नात्र गार्हपत्यशब्दो मुख्यगार्हपत्यपरः, किन्तु भाविसंज्ञामादाय। एवमाहवनीयशब्देऽपि बोध्यम्। अतश्च अत्र गार्हपत्येऽधिश्रयणविधानादाहवनीयो व्युदस्यत इति न भ्रमः कार्यः। होमसंबन्धाद्वैकङ्कती स्रुक्। खादिरः स्रुवः। सम्मार्जनं दर्भैः कर्त्तव्यम्। उत्पवनं पवित्राभ्याम्। यावत् स्रुक् न पूर्येत तावत्स्रुवेण स्रुचि आज्यस्य ग्रहणम्। यजमानेनान्वारब्धेऽध्वर्युर्जुहुयात्। एवं सर्वत्राव्यक्तजुहोतिचोदनासु अर्थात् जुहोतिशब्दविहितेषु निर्धर्मकेषु होमेषु "यूपाहुतिं जुहोति" (का० श्रौ० ६।१।४) इत्यादिषु निरुप्याज्यमित्यादिविधिना होमः कार्यः। कुतः? तत्रापि जुहोतिशब्दविहितत्वात्, अव्यक्तत्वसामान्याच्च ॥५॥

वरं ददामीति वाग्विसर्जनम् ॥ ६ ॥

कृतस्य वाग्यमनस्य अत्र विसर्गः कार्यः। अन्वारम्भ वरदान-वाग्यमनानि तु अत्रैव प्रवर्त्तन्ते। न तु यूपाहुतिं जुहोतीत्यादिष्विति कर्काचार्याः ॥ ६ ॥

[ तनूहविषां कालविधानम् ]

**द्वादशाहान्ते तनूहवीꣳषि निर्वपति, मासे, द्वितीये, तृतीये, षण्मास्ये, संवत्सरे सद्यो वा, न वा ॥ ७ ॥**

आधानदिवसाद् द्वादशे अहनि वक्ष्यमाणानि तनूहविःसंज्ञकानि हवींषि निर्वपेत्। अथवा मासाद्यनन्तरं निर्वपेत्। अथवा पूर्णाहुत्यनन्तरं तस्मिन्नेव दिने। अथवा न निर्वपेत्। पूर्णाहुत्यन्तमेव कुर्यादिति भावः। तनूहविष्ट्वं चोक्तानां त्रयाणामेव, नाऽऽदित्यस्य। "स एतास्तनूरिति श्रवणात् श० २।२।१।१४) ॥ ७ ॥

तनूहवींष्युच्यन्ते—

[ पवमानादीष्टयः ]

**अग्नये पवमानाय प्रथमा ॥ ८ ॥**

प्रथमा इष्टिः। तत्राष्टाकपालः पुरोडाशः कार्यः ॥ ८ ॥

**अग्नये पावकाया, ऽग्नये शुचये च द्वितीया ॥ ९ ॥**

द्विहविष्केयम्। उभयत्राऽप्यष्टाकपालः पुरोडाशः ॥ ९ ॥

**अदित्यै चरुस्तृतीया ॥ १० ॥**

तनूहविषामुपांशुत्वमुक्तम् (का० श्रौ० ४।५।९ सूत्रे। शाङ्खायने (२।३।१५) आदित्ये-ऽप्युपांशुत्वमुक्तम् ॥ १० ॥

पक्षान्तरमाह—

**आग्नेय एव वा पुरस्तादादित्यस्य ॥ ११ ॥**

अथवा आदित्यस्य चरोः पुरस्तादाग्नेयोऽष्टाकपालः पुरोडाश एव केवलः कार्यो, न प्रागुक्ते द्वे इष्टी। अस्मिन्पक्षे आग्नेयीष्टिम्, अदितीष्टिश्चेति इष्टिद्वयमेव कार्यम् ॥ ११ ॥

तनूहविषां दक्षिणामाह—

**षड् दक्षिणाः प्रतिविभज्य ददाति, द्वादश, चतुर्विꣳशतिं वा ॥ १२ ॥**

आदित्येष्टेर्धेनुर्दक्षिणा इति वक्ष्यति। तेन शेषस्य इष्टिद्वयस्य षड् गावो दक्षिणाः विभागेन देयाः। तत्र प्रथमायास्तिस्त्र, इतरस्याश्च तिस्रो देयाः। द्वादशपक्षे षट् षट्। चतुर्विं-शतिपक्षे द्वादश द्वादशेति। केवलाग्नेयपक्षे विभागासंभवात्सर्वासां तत्रैव दानम् ॥ १२ ॥

**भूयसीश्च यथाश्रद्धम् ॥ १३ ॥**

उक्तसङ्ख्याव्यतिरेकेण यावतीर्दातुमिच्छेत्तावतीरापरार्ध्याद् गा दद्यात्। द्वादशपक्षे त्रयोदश भूयस्यः। चतुर्विंशतिपक्षे पञ्चविंशतिर्भूयस्य इति। अतोऽप्यधिका गा यथाशक्ति दद्यान्नातो न्यूनाः। एताश्च दक्षिणा इष्ट्यङ्गं, नाधानस्य। तेन इष्ट्यभावे तदभावः ॥ १३ ॥

**धेनुरादित्यस्य ॥ १४ ॥**

इमाः पूर्वोक्ता दक्षिणा इष्टिसंबधादिष्टीनामेव, न सकलस्याधानस्य। अतश्च-इष्ट्यभावे एता दक्षिणा अपि निवर्त्तन्ते ॥ १४ ॥

**अनृताऽतिथ्यपनोद-पूतिदार्वाधान-वींसपक्क-नाव्युदकानि वर्जयेत् ॥ १५ ॥**

यजमानः नानृतं वदेत्। "अप्रणोद्योऽतिथिः सायम्" ( मनु० ३।१०५ ) इति। दुर्ग-न्धिदारूणामग्नावप्रक्षेपः। वृबीसे = पृथिव्या गर्त्ते पाचितस्याभक्षणम् "योऽयमृबीसे पृथिव्या-

मग्निः" ( निरु० ३।३६ ) इति यास्कः। नावि अग्निहोत्रार्थमुद्धृतेऽग्नौ तत्समाप्तिं यावदुदकदानं पानं च निषिद्धम्। "नौर्ह वा एषा स्वर्ग्या यदग्निहोत्रम्" (श० २।३।३।१५ ) इति श्रुतिः। नौकायामुदकपानं न कुर्यादिति केचित्। "या अन्तर्नाव्यापस्तासां नाश्नीयात्"। ( सत्या० ६।५ ) इति ॥ १५ ॥

**ब्रह्मचार्यग्निनित्यधारी क्षीरहोम्यग्निमुपशायी द्वादशरात्रꣳ० षड्रात्रं त्रिरात्रमन्ततः ॥ १६ ॥**

यजमान आधानानन्तरं द्वादशरात्रम्, अथवा, षड्रात्रम्, अथवाऽन्तिमपक्षे त्रिरात्रं ब्रह्मचारी भवेत्। गार्हपत्यादीन्नित्यं धारयेत्। दुग्धेनाग्निहोत्रं जुहुयात्। अग्निसमीपे भूमौ शयीत। समाप्तमग्न्याधेयम् ॥ १६ ॥

इति कातीयश्रौतसूत्रवृत्तौ चतुर्थाध्याये दशमी काण्डिका ॥१०॥

[ पुनराधेयम् ]

पुनराधेयमाह—

**पुनराधेयमाधानाप्रतिष्ठातस्य ॥ १ ॥**

धनादिना प्रसिद्धः प्रतिष्ठातः। तद्विपरीतोऽप्रतिष्ठातः। आधानेन निमित्तेन अप्रतिष्ठातः आधानाप्रतिष्ठातः। यः प्रागाधानाल्लब्धप्रतिष्ठोऽपि अग्न्याधानसमनन्तरं संवत्सरादर्वागेव वित्तादिहानेरप्रतिष्ठित इव स्यात्, तस्य पुनराधेयसंज्ञकं कर्म भवति ॥१॥

**राज्ययशस्कामस्य वा ॥ २ ॥**

**त्रिरात्रावरमग्नीनुत्सृज्य ॥ ३ ॥**

यस्मिन्दिने पुनराधेयं चिकीर्षितं, तस्य दिनस्य त्रिरात्र-चतूरात्र-पञ्चरात्र-संवत्सर-पर्यन्तं पुरस्तात्, गार्हपत्याहवनीयदक्षिणानामुत्सर्गः कार्यः। न सभ्यस्योत्सर्ग इति कर्कः। त्रिरात्रमवरमन्तिमपक्षभूतं यस्य कालस्येति त्रिरात्रावरम् ॥३॥

**सद्यो वा ॥४॥**

अथवा यदहः पुनराधेयं क्रियते तदहरेव प्रातरग्नीनुत्सृज्य पुनरादधीत ॥४॥

**पुनर्वस्वोः ॥५॥**

पुनराधेयं भवति ॥५॥

**वर्षासु मध्यन्दिने वा ॥६॥**

वर्षासु ऋतौ पुनराधेयं कुर्यात्। अथवा मध्याह्नकाले कुर्यात्। मध्यन्दिनस्य वर्षाभिः सह विकल्पो, न समुच्चयः ( श० २।२।३।९ ) ॥६॥

**कुशैराधानम् ॥७॥**

गार्हपत्याहवनीययोराधानं कुशैः कार्यम्। न दारुभिः, ( ४।९।१ ) नापीध्मेन ( ४।९।१० ) ॥७॥

सद्योऽग्न्युत्सर्गपक्षे विशेषमाह—

**व्रीह्यपूपमर्कपलाशयोः पक्वं गार्हपत्यस्थाने निदधात्येवमाहवनीयस्य यावरठं० सद्यश्चेत् ॥८॥**

यदि सद्योऽग्नय उत्सृष्टास्तदा अर्कपत्रयोः कपालस्थानीययोः लौकिकाग्निना आवसथ्याग्निना वा पक्वं व्रीहिमयमपूपं गार्हपत्यस्थाने पञ्चभूसंस्कारानन्तरं प्राक् सम्भारेभ्यः स्थापयेत्। एवमाहवनीयस्य स्थाने अर्कपत्रयोः पक्वं यवमयमपूपं निदध्यात्। अपूपस्योपरि हिरण्यसम्भारादिनिधानं पूर्ववत् (१।८।१४) ॥ ८ ॥

**आग्नेयः पञ्चकपाल उपांशु प्रागुत्तमादनुयाजात् ॥ ९ ॥**

पूर्णाहुत्यनन्तरं पवमानेष्ट्यादीनां स्थाने आग्नेयः पञ्चकपालः पुरोडाश उत्तमानुयाजात्पूर्वमुपांशु कर्त्तव्यः । उत्तमानुयाजप्रभृति सर्वमुच्चैः कार्यम्। नात्र पवमानाद्या ( का० श्रौ० ४।१०।८-११ ) इष्टयः ( श० २।३।१४ ) ॥ ९ ॥

**तद्वर्जं वा ॥१०॥**

वाऽवधारणे। उत्तममनुयाजं वर्जयित्वाऽन्यत्सर्वं कर्मोपांशु (श० २।३।३।१७) भवति ॥१०॥

**अग्नीनिति वा प्रथमे प्रयाजेऽनुयाजे च ॥११॥**

वाऽधारणे। प्रथमे प्रयाजे प्रथमेऽनुयाजे च 'अग्नीन्यज' इत्येव ब्रूयात्। न समिधो यज, ( का श्रौ० ३।२।११ ) देवान्यजेति ( श० २।२।३।१८ ) ब्रूयात् ॥११॥

**आज्यभागो द्वितीयोऽग्नये पवमानाये,न्दुमते वा ॥१२॥**

द्वितीय आज्यभागः अग्नये पवमानाय, अग्नय इन्दुमते वा कार्यो, न सोमाय। प्रथमस्त्वाग्नेय एव ॥१२॥

**हिरण्यं दक्षिणाऽनड्वान्वाऽऽग्न्याधेयिकीश्चेच्छन्छ्रुतेः ॥१३॥**

अस्मिन्नाग्नेये हिरण्यं दक्षिणा, अनड्वान्वा। इच्छन् अग्न्याधेयसंबन्धिनीः 'षड् दक्षिणा' (का० ४।१०।१२) इत्यादिकाश्च दद्यात्। कुतः ? श्रुतेः (सत्या० ६।६ पैङ्ग्यब्रा०) ॥१३॥

**अग्न्याधेयवदन्यत्सद्यः ॥१४॥**

पुनराधेये अन्यत्सर्वमग्न्याधेयवत्कुर्यात्। तच्च सद्यः। अग्न्यगारकरणम्, अरणिप्रदानम्, उच्छ्रासश्च न भवति ॥१४॥

पुनराधेये पक्षान्तरमाह—

**अपराह्णे मैत्रावरुणी वशाऽनस्तमिते पुरोडाशेडान्तं कृत्वा रात्रिश्रृतया प्रातश्चरन्ति तत आधानम् ॥१५॥**

पुनराधेयादनस्तात्पूर्वमपराह्णे मित्रावरुणदेवत्या बन्ध्या गौरालब्धव्या। तस्याश्चास्तमयात्प्राक् पशुपुरोडाशेडान्तं कर्म कृत्वा रात्रौ विशसनादिश्रपणान्तं कृत्वा प्रातः प्रचरन्ति। नात्र वशासमाप्त्यनन्तरमग्नीनुत्सृज्य पुनराधेयं कुर्यात्। न त्रिरात्रावरमुत्सर्गो, नाऽपूपौ ॥१५॥

इति कातीयश्रौतसूत्रवृत्तौ चतुर्थाध्याये पुनराधेयनिरूपणी एकादशी कण्डिका ॥ ॥११॥

[ बृहदुपस्थानम् ]

अग्निहोत्रं वदयन् शाखान्तरदृष्टक्रमेण तदङ्गभूतं बृहदुपस्थानं पयोहोमपक्षे आह—

**सायमाहुत्याᳬं हुतायां यजमानोऽग्नी उपतिष्ठते वात्सप्रेण ॥१॥**

अग्नी आहवनीयगार्हपत्यौ वात्सप्रसंज्ञकेनोपस्थानेन वक्ष्यमाणेन "उपप्रयन्त" (३।११) इत्यारभ्य "परि ते" (३।३६) इत्यन्तेन तिष्ठन्नुपतिष्ठेत। इदमेवोपस्थानं बृहदुपस्थानमित्युच्यते। आदावाहवनीयोपस्थानम्। गार्हपत्योपस्थानस्याग्रे वक्ष्यमाणत्वात् ॥१॥

**न वा ॥ २ ॥**

अथवा वात्सप्रेण नोपतिष्ठेतेति विकल्पः ॥२॥

वात्सप्रोपस्थाने विशेषमाह—

**तिसृभि"रुपप्रयन्तो, (३।११) ऽस्य प्रत्नां, (३।१६) परि ते, (३।३६) चित्रावस" (३।१८) विति च ॥ ३ ॥**

तिस्र ऋचः, चित्रावसो इति यजुश्च यथास्थानस्थिता एव त्रिर्जपेत्। नामग्रहणादेव त्रित्वसिद्धेस्तिस्र इति ग्रहणं स्वस्थानस्थितानामेव मन्त्राणां त्रिर्जपप्राप्त्यर्थम् ॥३॥

**"सन्त्व" ( ३।१९ ) मित्युपविश्य ॥ ४ ॥**

जपेत् ॥४॥

**गां गच्छ "त्यन्धस्थे" ति ॥ ५ ॥**

सन्निधानात्कर्माङ्गभूतां गां प्रति गच्छेन्मन्त्रद्वयेन (३।२०-२१)। एवं च पयोहोमपक्षे एव बृहदुपस्थानं, नान्यद्रव्यहोमपक्षे ॥५॥

**"सᳬंहिते" (३।२२) त्यालभते ॥ ६ ॥**

गामेव ॥६॥

**गार्हपत्यं गत्वोपतिष्ठत "उप त्वे"ति ॥ ७ ॥**

उप त्वेति अघायतः समस्मादित्यन्तेन (३।२२-२७) मन्त्रेण। अत्र गार्हपत्यमिति विशेषोपादानात्पूर्वोक्तमुपस्थानमाहवनीयस्य ॥७॥

**गां गच्छती"ड एही" (३।२७) ति ॥ ८ ॥**

तामेव गां प्रति गच्छेत् ॥८॥

**"काम्या एते"त्यालभते (३।२७) ॥ ९ ॥**

तामेव गाम् ॥९॥

**"सोमान"मित्यनुदकं व्रतोपायनवत् ॥१०॥**

अन्तरेणाहवनीयं च गार्हपत्यं च प्राङ् तिष्ठन्नग्निमीक्षमाणो जपति (का० श्रौ०२।१।११) 'सोमानं दास्वुष इत्यन्तम् (३।२८-३६)। नात्रोदकस्पर्शः ॥१०॥

**पौर्णमासवत्पुत्रनामग्रहणम् ॥११॥**

वत्युपदेशात् "ततोऽसि तन्तुरसीति" ( का० श्रौ० ३।८।२२ ) पुत्रस्य नाम गृह्णीयात्। एतदन्तं वात्सप्रम् ॥११॥

क्षुल्लकोपस्थानमाह—

"भूर्भुवः स्व"रिति वाग्नौ ॥१२॥

अथवा भूर्भुवः स्वरिति (३।३७) मन्त्रेणैवाहनीयगार्हपत्यावुपतिष्ठेत्। एतश्च अगो पक्षेऽपि भवति। न ह्यत्र गां प्रति गमनं स्पर्शनं वाऽस्ति ॥१२॥

उपस्थानप्रसङ्गात् श्रुतिमन्त्रक्रमानुसाराच्च प्रवसतो यजमानस्याग्न्युपस्थानमाह—

प्रवत्स्यन्त्सर्वा"न्नर्येति" (३।३७) प्रतिमन्त्रम् ॥१३॥

प्रवासं करिष्यन्यजमान उपस्थानार्थमग्नी उद्धृत्य उत्पत्तिक्रमेण सर्वानग्नीनुपतिष्ठते। सभ्यावसथ्यौ तूष्णीमुपतिष्ठेत। "ग्रामान्तरे नगर्यां वा पल्यां वाऽन्यत्र वा क्वचित्। सीमामतीत्य चेद्रात्रौ वसेः प्रवसनं स्मृतम्" ॥१३॥

गच्छति मत्या वाग्विसर्जनम् ॥१४॥

यथार्थं गृहाद्गच्छेत्। किञ्चिदिव अध्वानं गत्वा यत्र देशे वाग्विसर्गेच्छा स्यात्तत्र वाग्विसर्जनं कुर्यात्। वाग्यमस्तु उपस्थानसमनन्तरमेव कार्यम् ॥१४॥

[ प्रोषितस्य यजमानस्य व्रतग्रहण-विष्णुक्रमणादिकम् ]

प्रवसन्याजमानं कुर्याद्यथाकालमात्मसंस्कारादृ धर्ममात्रत्वाच्छ्रुतेश्च ॥१५॥

प्रोषितोऽपि यजमानो यजमानकर्म कुर्यात्। तदपि यथाकालम्। अग्निहोत्रकाले अग्निहोत्रं, पौर्णमासकाले पौर्णमास्यम्। याजमानपि न सर्वं, किन्तु यदात्मसंस्कारकं व्रतग्रहणमुण्डनादि तत्कर्त्तव्यम्। कुतः। आत्मसंस्कारात्। अयं हेतुरुपदेशश्च। यत आत्मसंस्कारा इमे ततः कर्त्तव्या इति हेतुः। इमे कर्त्तव्या इत्युपदेशः। यजमानस्य ह्यसौ संस्कारः। यद्प्यदृष्टार्थमर्थकर्म तदपि कर्त्तव्यम्। यथा—विष्णुक्रमणं, मयीदमिति जपादि च। कुतः? धर्ममात्रत्वादेव। श्रुतेरप्ययमर्थो ज्ञायते, यत्प्रोषितेनापि याजमानं कर्त्तव्यम्। "मन एवैतदाह मनसैवास्यानपप्रोषितं भवति" (१।१।३।१५-६) इत्यादिश्रुतेः ॥१५॥

प्रवासादागतस्योपस्थानमाह—

एत्य च मत्या वाग्यमनम् ॥१६॥

प्रवा...गृहसमीपमागत्य इच्छाकल्पितदेशे वाचंयमो भवेत् ॥१६॥

[ प्रवासादागतस्य कंचिदप्यनुपेत्य आहवनीयाद्युपस्थानादिकम् ]

समित्पाणिरनुपेत्य कञ्चिदुपतिष्ठत आहवनीय-गार्हपत्य-दक्षिणाग्नी "नागन्मे"ति (३।३८-४०) प्रतिमन्त्रम् ॥१७॥

प्रवासात्स्वगृहमागच्छन् यजमानः समिधः पाणौ कृत्वा कृतवाग्यमः कंचिदपि गुरुपित्रादिकमगत्वैव स्नात्वा अग्नीनुद्धृत्य क्रमेणाग्नीनुपतिष्ठते ॥१७॥

समित्परिसमूहनानि चोपविश्य ॥१८॥

तत उपविश्य तूष्णीं समिदाधानं परिसमूहनं च कुर्यात्। परिसमूहनं तृणानामपनयः। अग्नौ तृणप्रक्षेप इत्यपरे ॥१८॥

प्रवत्स्यदुपस्थाने पक्षान्तरमाह—

तूष्णीं वोपस्थानं पूर्ववत् ॥१९॥

अथवा प्रवत्स्यन् पूर्ववदुत्पत्तिक्रमेण तूष्णीमग्नीनुपतिष्ठेत, न मन्त्रैः ॥१९॥

आगतस्योपस्थाने पक्षान्तरमाह—

एत्य च ॥२०॥

प्रवासादागत्य च पूर्ववत् आहवनीय-गार्हपत्य-दक्षिणाग्नीनां तूष्णीमुपस्थानं कुर्यात् ॥२०॥

"गृहा मा बिभीते"ति (३।४१-४३) गृहानुपैति ॥२१॥

उपतिष्ठते ॥२१॥

"क्षेमाय व" (३।४३) इति प्रविशति ॥२२॥

गृहमध्ये। अतः परं गृह्योक्तं (पा० गृ० १।१८) पुत्रदर्शनजपादि विधेयम् ॥२२॥

न हिꣳस्याद् गृह्यान्कामꣳ श्वः ॥२३॥

गृहागमनदिने गृह्यान् पुत्रभार्याभृत्यादीन् अपराधे सत्यपि अनिष्टादिरूपभाषणताडनादिना न तर्जयेत्। इच्छया द्वितीयेऽहनि हिंस्यात् ॥२३॥

इति चतुर्थाध्याये उपस्थाननिरूपणी द्वादशी कण्डिका ॥१२॥



अग्निहोत्रमाह—

'उद्धरे'ति यजमानो ब्रूयात्सायं प्रातरग्निहोत्रे ॥ १ ॥

वक्ष्यमाणे अग्निहोत्रसंज्ञे कर्मणि सायं प्रातश्च यजमानः 'उद्धर' इति प्रैषमध्वर्युं प्रति ब्रूयात्। एतच्चाध्वर्युकर्तृकहोमपक्षे। स्वयं होमपक्षे तु प्रैषाभावः ॥ १ ॥

गार्हपत्यादाहवनीयस्योद्धरणमनस्तमितानुदितयोः ॥ २ ॥

आहवनीयखरे पञ्चभूसंस्कारान् कृत्वा तत उद्धरणं कृत्वा प्राञ्चं नीत्वा स्थापयेत् ॥२॥

प्रत्यङ्मुखो वा सायं निदध्यात्तस्मिन्त्सायं प्रातर्होममेके ॥ ३ ॥

अथवा सायंकाले प्रत्यङ्मुखोऽग्निं स्थापयेत्प्राङ्मुखो वा। तस्मिन्प्रत्यङ्मुखस्थापितेऽग्नौ सायं प्रातर्होममेके कुर्वन्ति। एके पुनः प्रातरुद्धरन्तीति विकल्पः ॥ ३ ॥

नित्यो दक्षिणाग्निः ॥ ४ ॥

"दक्षिणा वा सर्वꣳहरेदन्वाहार्यपचनश्चेत्" ( ४।८।१३ ) इत्युक्तेः पक्षे दक्षिणाग्निर्गार्हपत्यवत्सदा धार्यो भवति, न प्रतिकर्म आह्रियते ॥ ४ ॥

सर्वे गतश्रियः ॥ ५ ॥

प्राप्तसमृद्धेर्यजमानस्य सर्वेऽग्नयो नित्याः स्युः। "त्रयो ह वै गतश्रियो, ब्राह्मणः शुश्रुवान्, क्षत्रियो विजयी, वैश्यो ग्रामणीः" (तै० सं० २।५।४ ) इति श्रुतेः ॥ ५ ॥

सदा वाऽऽहरणम् ॥ ६ ॥

अथवा दक्षिणाग्नेः सदा आहरणमाहवनीयवत्कार्यम् ॥ ६ ॥

**एकेषामुपवसथे ॥ ७ ॥**

एकेषां मते पौर्णमास्याममावास्यायां च दक्षिणाग्नेराहरणं, न सर्वदा ॥ ७ ॥

**नवाऽवसिते वा ॥ ८ ॥**

अथवा नवगृहे दक्षिणाग्निमाहरेयुः, न सर्वदा, नाप्युपवसथे ॥ ८ ॥

**तस्मिन्पचेयुरमाᳬसम् ॥ ९ ॥**

नवगृहाहृते दक्षिणाग्नौ मांसव्यतिरिक्तं सर्वमन्नं तद्दिने पचेयुः ॥ ९ ॥

**पाक्याभावे गोःपयोऽधिश्रयितवै ब्रूयात् ॥१०॥**

पचनार्हतण्डुलाद्यभावे "गोः पयोऽधिश्रयतवै" इति यजमानोऽध्वर्युं ब्रूयात् ॥१०॥

**"तद् ब्राह्मणं पाययितवै" ब्रूयात् ॥११॥**

अध्वर्युर्यजमानं ब्रूयात् । यजमानस्तत्पयो ब्राह्मणान् पाययेत् ॥११॥

प्रकृतमग्निहोत्रमुच्यते—

**अन्तरेणापराग्नी गत्वा दक्षिणेन वाऽप्रदक्षिणमाहवनीयं परीत्योपविशति यजमानः ॥१२॥**

गार्हपत्याहवनीययोरन्तरालेन दक्षिणतो वा गत्वा अप्रदक्षिणमाहवनीयं परीत्य गार्हपत्याहवनीययोरन्तरालेन स्वासनं प्रति दक्षिणतो गच्छेद्यजमानः ॥१२॥

**पत्नी च पूर्ववत् ॥१३॥**

प्रत्यग्दक्षिणतो गार्हपत्यस्योपविशेत् ( २।७।१ ) ॥१३॥

**अपरेणाऽऽहवनीयं कूर्चं निदधाति, कुशान्वा ॥१४॥**

कूर्चं काष्ठनिर्मितमासनपट्टं प्रागग्रं, कुशान्वाऽऽसनार्थं निदध्यात् । स्रुचोर्निधानार्थमेतदासनं निधीयते ॥१४॥

**परिस्तरणं वा सर्वेषां प्रागुदग्भि, रुदगग्रान्दक्षिणाग्रान्करोतीति श्रुतेः ॥१५॥**

वाऽवधारणे । सर्वेषामग्नीनामाहवनीय-गार्हपत्य-दक्षिणाग्नीनां क्रमेण प्रागग्रैरुदगग्रैश्च कुशैः परिस्तरणं कुर्यात् । सायं प्रातर्होमं करिष्ये इति सङ्कल्प्य रात्रौ यदि यजमानो विपद्येत तदा तत्पुत्रैः प्रातर्होमं कृत्वा तस्य दाहः कार्य इति विधिः । तत्र मृताग्निहोत्रे "उदगग्रान् कुशान्दक्षिणाग्रान्करोति" ( श० ब्रा० ।१२।५।१।१२ ) इति श्रुतावुदगग्रतानुवादस्तदैवोपपद्यते यदा प्रागग्रैरुदगग्रैश्च स्तरणं भवेत् । अतस्तदनुवादबलात् नियताग्निहोत्रे प्रागग्रैरुदगग्रैश्च दर्भैः स्तरणं कार्यम् ॥ १५ ॥

**आहवनीयं पर्युक्ष्योदधारां निनयत्यागार्हपत्यात् ॥१६॥**

उदकधारां च प्रत्यक्संस्थां दद्यात् ॥१६॥

**तं च ॥ १७ ॥**

तं गार्हपत्यं च पर्युक्षेत् ॥१७॥

**ततो दक्षिणाग्निम् ॥ १८ ॥**

पर्युक्षेत् ॥ १८ ॥

हुते च धारावर्जम् ॥१६॥

हुते च अग्निहोत्रे प्रागव्रतविसर्गात् सर्वेषां पर्युक्षणं कुर्यात्। परं तत्र धारां न दद्यात् ॥ १६ ॥

इति चतुर्थाध्याये अग्निहोत्रनिरूपणी त्रयोदशी कण्डिका ॥ १३ ॥



अग्निहोत्रीं दोहयति पुंवत्सामशूद्रेण स्थाल्यामार्यकृत्यामूर्ध्वकपालायां दक्षिणतः प्राचीमुदीचीं वा ॥१॥

अग्निहोत्रिणीं गां पुंवत्सां विहाराद्दक्षिणतः प्राङ्मुखीमुदङ्मुखीं वा स्थितां शूद्रादन्येन दोग्ध्रा त्रैवर्णिकनिर्मितायाम् ऊर्ध्वकपालायां ( न तिर्यक्कपालायाम् ) "न भिद्येत" ( १२।४।१।६ ) इति लिङ्गात् मार्त्तिषयां स्थाल्यां दोहयत्यध्वर्युः। अत्र गवां दिङ्नियमविधानात्सान्नाय्ये गवां दिङ्नियमो नास्ति ॥ १ ॥

पूर्वेणाहवनीयमाहृत्य गार्हपत्येऽधिश्रयत्युत्तरतो निरुह्याङ्गारान् ॥२॥

दुग्धं पयः पूर्वेणाहवनीयमाहृत्य गार्हपत्ये अङ्गारानुत्तरतः पृथक्कृत्य तेषु अङ्गारेष्वधिश्रयेत् ॥ २ ॥

एवमन्यत्रापि होमार्थस्याहरणम् ॥ ३ ॥

अन्यत्रापि होमार्थस्य द्रव्यस्य पूर्वेणाहवनीयमाहरणं कर्त्तव्यम् ॥ ३ ॥

दक्षिणेन वौषधम् ॥ ४ ॥

व्रीहियवादि तु आहवनीयं दक्षिणेन तत्प्रतियोगादुत्तरेण वाऽऽनेयम्। तत्र दक्षिणेनाऽऽनयने प्रदक्षिणोपचारात्स्मृत्यनुग्रहः। उत्तरेण नयने तु "उत्तरत उपचारो यज्ञ" ( का. श्रौ. १।८।२६ ) इति श्रुत्यनुग्रहः। अतः श्रुतेर्बलीयस्त्वादुत्तरेणैवेत्यवधार्यते ॥ ४ ॥

तृणेनावज्योत्याऽऽसिच्याऽऽपः पुनरवज्योत्य निधायं त्रिरुद्वासयन्त्युदक् ॥५॥

अधिश्रितं पयः तृणज्योतिषा अवज्योत्य स्रुवेण पयसि अप आसिच्य पुनरवज्योत्य निधाय निधाय मुक्त्वा त्रिरुदीच्यां दिश्युद्वासयेत्। अवज्योतनस्य श्रृताऽश्रृतज्ञानरूपदृष्टार्थत्वादधिश्रयणाभावे तण्डुलदध्यादावभावः। अपासेकोऽपि दृष्टार्थः। उदकस्य क्षयो यथा स्यान्न पयसः। अतस्तण्डुलादावासेचनाभावः। पुनरवज्योतनस्यापि उदकक्षयसंवित्यर्थत्वात्तण्डुलादावभावः। यवाग्वां, घृते च प्रथमावज्योतनं भवति, नापामासेको, नापि पुनरवज्योतनम् ॥५॥

अस्तमिते जुहोति ॥ ६ ॥

वैकङ्कतꣳ स्रुक्स्रुवं प्रतप्य पाणिना सम्मार्ष्टि ॥ ७ ॥

पुनः प्रतप्योन्नेष्यामीत्याह ॥ ८ ॥

'उन्नेष्यामि' इति यजमानं पृच्छेत् ॥ ८ ॥

ओ३मुन्नयेति यजमानस्तिष्ठन् ॥ ९ ॥

प्रत्याह ॥ ९ ॥

चतुरः स्रुवानुन्नयति ॥ १० ॥

स्थाल्याः सकाशाच्चतुरः स्रुवान् स्रुचि उन्नयेत्। अस्य चतुर्गृहीतस्याहुतिद्वयार्थंत्वात्पूर्वाहुत्यनन्तरं द्रव्यनाशादौ उत्तराहुत्यर्थं पुनश्चतुर्गृहीतं ग्राह्यम्। भक्षार्थस्य नाशादौ भक्षणस्य लोप एव, न तदर्थं पुनर्ग्रहणम्। पञ्चावत्तिनां तु पञ्च स्रुवानुन्नयेत्॥ १०॥

स्थाल्यां परिशिनष्टि तद्ब्राह्मणः पिबेत् ॥ ११ ॥

नायं ब्राह्मणस्य पाने नियमः। किन्तु अब्राह्मणस्य प्रतिषेधार्थोऽयमारम्भः॥ ११॥

उपरि समिधं धारयन्वार्त्तीमध्यधि गार्हपत्यादाहवनीयꣳ हरति मुखमात्रे धारयन् ॥ १२ ॥

चतुर्गृहीतपयस उपरि पलाशादिवृक्षीयां समिधमङ्गुल्यन्तरितां धारयन् अध्यधि गार्हपत्यस्योपरि समीपे एव स्रुचं धारयित्वा ततो मुखमात्रे स्रुचं धारयन्नाहवनीयं प्रति होमार्थं नयेत्॥ १२॥

मध्ये निगृह्योद्गृह्योपविश्य समिधमादधा"त्यग्निर्ज्योतिषं त्वा वायुमतीं प्राणवतीꣳ स्वर्ग्याꣳ स्वर्ग्यायोपदधामि भास्वती" मिति ॥ १३ ॥

गार्हपत्याहवनीययोरन्तराले मुखमात्रधृतां स्रुचं नाभिप्रदेशं यावन्नीचैर्गृहीत्वा पुनर्मुखमात्रे एव गृहीत्वा आहवनीयं प्राप्योपविश्य स्रुचं वामहस्ते कृत्वा दक्षिणेन समिधमादध्यादग्निर्ज्योतिषमिति (कण्व सं० ३।२।१) मन्त्रेण॥ १३॥

प्रदीप्तामभि जुहो"त्यग्निर्ज्योति" (३।९) रिति "सजू"रिति (३।९) वा ॥१४॥

प्रक्षिप्तां समिधं प्रदीप्तामभिलक्ष्य तदुपरि मध्ये अल्पद्रव्येण प्रथमाहुतिं जुहुयात्॥१४॥

अग्निर्वर्च इति (३।९) ब्रह्मवर्चसकामस्य ॥ १५ ॥

प्रथमाहुतिं जुहुयात्॥ १५॥

कूर्चे निधाय गार्हपत्यमवेक्षते होष्यन्नस्मिन् ॥ १६ ॥

अस्मिन् गार्हपत्ये होमं करिष्यन् पूर्वाहुतिहोमानन्तरं स्रुचं कूर्चे निधाय गार्हपत्यमवेक्षेत। होष्यन्नित्युक्तत्वात् मृताग्निहोत्रे "अग्निहोत्रावृता हुत्वा" (२६।६।२०) इत्यत्र वचनात् न गार्हपत्यावेक्षणम्॥१६॥

तूष्णीमुत्तरां भूयसीम् ॥ १७ ॥

द्वितीयामाहुतिं पूर्वाहुतिहोमस्थानादुत्तरस्मिन्प्रदेशे बहुतरद्रव्यकां तूष्णीं जुहुयात्। उत्तराशब्दश्च देशपरः (श० २।३।१।२३) कालपरोऽपि। मन्त्रस्याविधानादेवाप्राप्तत्वात्तूष्णीमिति स्वाहाकारनिवृत्त्यर्थम्। "यदग्नये प्रजापतये च जुहोति" (मै० सं० १।८।७) इति श्रुतेरत्र प्रजापतिर्देवता॥ १७॥

भूयिष्ठꣳ स्रुचि ॥ १८ ॥

भक्षार्थं स्रुचि बहु परिशेषयेत्॥ १८॥

द्विः प्रकम्प्य निदधाति ॥ १९ ॥

स्रुचं द्विरुत्क्षिप्य कूर्चे निदध्यात्। प्रकम्पनमुदिङ्गनम् (श० १२।५।१।१२)॥ १९॥

**उपमृज्य स्रुचं, कूर्चे निमाष्टि नमो देवेभ्यः, स्वधा पितृभ्य इति दक्षिणत उत्तानम् ॥ २० ॥**

स्रुगग्रमधोमुखेन हस्तेन प्रत्यगुपमृज्य कूर्चस्योत्तरप्रदेशे निमार्ष्टि। उत्तानेन हस्तेनाङ्गुल्यधोभागेन पुनः स्रुगग्रं प्रत्यगुपमृज्य कूर्चस्य दक्षिणप्रदेशे भूमौ पाणिं निदधाति ॥ २० ॥

**अप उपस्पृश्य ॥ २१ ॥**

अपामुपस्पर्शनं पित्र्यत्वात्प्राप्तमेव, यत्पुनरुच्यते तत्प्राचीनावीत्यादिव्युदासार्थम् ॥ २१ ॥

**इतरयोश्च पुष्टिकामः स्थाल्याः स्रुवे "एह पुष्टिं पुष्टिपतिर्दधात्विह प्रजाꣳरमयतु प्रजापतिः। अग्नये गृहपतये रयिमते पुष्टिपतये स्वाहे" ति गार्हपत्ये ॥२२ ॥**

गार्हपत्यदक्षिणाग्न्योः पुष्टिकामः, चशब्दादपुष्टिकामश्च स्थाल्याः स्रुवेण जुहुयात्। तत्र गार्हपत्ये इह पुष्टिमिति जुहुयात् ॥ २२ ॥

**तूष्णीं द्वितीयाम् ॥ २३ ॥**

**अग्नयेऽन्नादायाऽन्नपतये स्वाहेति दक्षिणाग्नौ ॥२४॥**

**तूष्णीं द्वितीयाम् ॥२५॥**

**अनामिकया द्विः प्राश्नाति ॥ २६ ॥**

स्रुक्स्थं हुतशेषद्रव्यमेकवारं गृहीत्वा प्राश्याचम्य पुनरप्येवं कुर्यात् ॥ २६ ॥

**उत्सृप्य निर्लेढ्याचम्योत्सिञ्चति, देवाञ्जिन्व, पितॄञ्जिन्व, तृतीयामुदुञ्चति सप्त ऋषीञ्जिन्वेति ॥ २७ ॥**

स्रुक्स्थं हुतशेषं पात्रान्तरे हस्ते वा कृत्वा तद्द्रव्यमाचम्य भक्षयित्वा तत्पात्रं हस्तं वा जिह्वया सकृदास्वादयति। ततः स्रुचं जलेन पूरयित्वा देवाञ्जिन्वेति मन्त्रेण दैवत्वादुत्तरतो जलमुच्छालयेत्। पुनः स्रुचं जलेनापूर्य पितॄञ्जिन्वेति मन्त्रेण पित्र्यत्वाद्दक्षिणत उच्छालयेत्। पुनस्तृतीयवारं जलमापूर्य तज्जलमैशान्यामुच्छालयेत् ॥ २७ ॥

**चतुर्थीं कूर्चस्थाने त्रिर्निषिञ्च "त्यग्नये पृथिवी क्षिते स्वाहा, पृथिव्या अमृतं जुहोमि स्वाहा, ऽमृते ऽअमृतं जुहोमि स्वाहे'ति ॥ २८ ॥**

चतुर्थीं स्रुचं पूरयित्वा कूर्चस्थापनस्थाने त्रिः कृत्वः प्राक्संस्थं नीचैः क्षिपेत्प्रतिमन्त्रम् ॥ २८ ॥

**स्रुक्स्रुवमाहवनीये प्रतप्य निदधाति ॥ २९ ॥**

सहैव प्रतप्य कूर्चे, सुगुप्तदेशे वा निदध्यात् ॥ २९ ॥

**समिध आदधाति सर्वेषु यथापर्युक्षितꣳ० "समिदसि समिद्धो मेऽग्ने दीदिहि समिद्धा ते अग्ने दीद्यासमि"ति ॥ ३० ॥**

पर्युक्षणक्रमेण सर्वेष्वग्निषु तिस्रस्तिस्रः समिधः समिदसीति सकृदादध्यात्। एक एवायं मन्त्र इति कर्कः। त्रयो मन्त्रा इति देवयाज्ञिकाः ॥ ३० ॥

**वाग्यतो दोहप्रभृत्याहोमात् क्षीरहोता चेत् ॥ ३१ ॥**

क्षीरहोतेति योगमनपेक्ष्यैव रूढ्याऽध्वर्युरुच्यते। क्षीरहोता वाग्यतः सन् यदि जुहुयात् तदा दोहप्रभृति वाग्यतो भवेत्। अथवा वाग्यतो न भवेदिति वाग्यमविकल्पः ॥ ३१ ॥

इति चतुर्थाध्याये अग्निहोत्रनिरूपणी चतुर्दशी कण्डिका ॥ १४ ॥

---

प्रातरग्निहोत्रे विशेषमाह—

**प्रातर्जुहोत्यनुदिते ॥ १ ॥**

प्रातःकाले अनुदिते सूर्येऽग्निहोत्रं जुहुयात्। अस्यां कण्डिकायां यत्र यत्र प्रातरित्युच्यते तत्प्रातर्होमे एव भवति। अन्यत्सर्वं साधारणं सायंप्रातर्होमयोः। "सायमादिप्रातरन्तमिदमेकं कर्म। "अग्निहोत्रं सायमुपक्रमं प्रातरपवर्गमाचार्या ब्रुवते" (२४।३०) इति बौधायनः। एककर्मताज्ञापनायैव सूत्रकारेणापि केचिद्धर्माः सायंहोमसन्निधौ पठिताः, केचित् प्रातर्होमसन्निधौ। अत एव "सायमादि प्रातरन्तमेकं कर्म प्रचक्षते। पौर्णमाससादिदर्शान्तमेकमेव विदुर्बुधाः" इत्युक्तं कर्मप्रदीपे (२।६।१)। अत्र च प्रधानकाभेदादङ्गानां भेदेनानुष्ठानम्। एवं च कुण्डपायिनामयने संवत्सरसाध्ये सत्रे "मासमग्निहोत्रं जुहोति" (का० सू० २४।१३२) इति वाक्येन विहितस्य होमस्य प्रातः सकृदेवानुष्ठेयतया विधानात् प्रधानाहुत्योः परं भेदेनानुष्ठाने सत्यपि अङ्गानां कालैक्यात्तन्त्रेणैवानुष्ठानम् ॥ १ ॥

**अन्तरेणाऽपराग्नी गत्वा दक्षिणेन वा प्रदक्षिणं गार्हपत्यं गत्वोपविशति यजमानः ॥ २ ॥**

यजमान आहवनीयस्य पूर्वतः प्रदक्षिणमागत्य गार्हपत्यदक्षिणाग्न्योर्मध्यतो वा, दक्षिणाग्नेर्दक्षिणेन वा, पश्चिमतो वा गत्वा गार्हपत्यं प्रदक्षिणं परिक्रम्य स्वस्थाने उपविशेत्। अयं सञ्चरः सायंप्रातर्होमयोः साधारणः। प्रातरित्यविशेषितत्वात्। अतश्च प्रागुक्तसञ्चरेण सहाऽस्य विकल्पः ॥ २ ॥

**पत्नी च यथादेशम् ॥ ३ ॥**

पत्नी च गार्हपत्यस्य प्रत्यग्दक्षिणतो ( २।६।१ ) दर्शपौर्णमासवदुपविशेत् ॥ ३ ॥

**अप आचामति "वृष्टिरसि वृश्च मे पाप्मानꣳ सत्येन व्रतमुपैम्यापः सत्यं मयि व्रत" मिति ॥ ४ ॥**

सायं प्रातश्च यजमानोऽनेनाचामेत्। पत्नी च तूष्णीम्। व्रतमुपैमीति व्रतशब्देन वाङ्नियमोऽभिधीयते। तेन पूर्वेणाचमनेन वाग्यमनम्। उत्तरेण ( ४।१५।५ ) वक्ष्यमाणेन वाग्विसर्गः। विसर्गस्य ग्रहणपूर्वकत्वात् ॥ ४ ॥

**वाचं विसृज्य पुनराचामति "विद्युदसि वृश्च मे पाप्मानं जह्यपोऽवभृथमभ्युपैमि मयि सत्यं गोषु मे व्रत" मिति ॥५॥**

वाग्यमस्य च पदार्थधर्मत्वात्सर्वान्ते वाग्विसर्गः ॥ ५ ॥

**उन्नयामीत्याह प्रातः ॥ ६ ॥**

प्रातर्होमे उन्नेष्यामीत्यस्य स्थाने उन्नयामीति क्षीरहोता वदेत् ॥ ६ ॥

**प्राक्सᳬस्थᳬ० समित्पर्युक्षणं धारा चोभयत्र वा ॥ ७ ॥**

प्रातरित्यनुवर्तते। 'समिदसि' ( ४।१४।३० ) इत्येतत्समिदाधाने होमात्पूर्वभावि पश्चाद्भावि च पर्युक्षणं, ( ४।१३।१६ ) उदकधारा च ( ४।१३।१६ ) प्राक्संस्थं भवति। तेन प्रथमं गार्हपत्यस्य पर्युक्षणं, ततो दक्षिणाग्नेः, ततो गार्हपत्यादारभ्याहवनीयं यावत्प्राक्संस्था धारा, तत आहवनीयस्य पर्युक्षणम् ॥ ७ ॥

**अग्निशब्दे सूर्यः ॥ ८ ॥**

आहवनीये सायमग्निहोत्रहोममन्त्रे यत्राग्निशब्दस्तत्र सूर्यशब्दः प्रयोक्तव्यः। गार्हपत्यदक्षिणाग्निहोममन्त्रे ( ४।१४।२२-२५ ) अग्निर्ज्योतिषमित्यादिमन्त्रे ( ४।१४।१३ ) च अग्निपदस्य स्थाने सूर्यपदप्रयोगो न भवति ॥ ८ ॥

**रात्र्युषसान्हेति वा ॥ ९ ॥**

प्रातर्होमे 'सजू रात्र्येन्द्रवत्या' (१।१०) इत्यत्र रात्र्या इत्यस्य स्थाने उषसा इति प्रयोगः, अह्ना इति वा प्रयोगः कार्यः ॥ ९ ॥

**"ज्योतिः सूर्य" ( ३।८ ) इति वा प्रातः ॥ १० ॥**

प्रातर्होमोऽनेन मन्त्रेण वा कार्यः ॥ १० ॥

**प्रथमास्तमिते पर्युदयं च स्वर्गकामस्य ॥ ११ ॥**

सायमस्तमितमात्रे, प्रातरुदयसन्निकृष्टे स्वर्गकामः प्रथमामाहुतिं जुहुयात्। कालादेवैतत्फलं, न त्वग्निहोत्रात् ॥ ११ ॥

**तमोऽभ्यये सायं जुहुयाद्व्रियति प्रातरायुष्कामस्य ॥ १२ ॥**

सायमन्धकारस्यागमे, प्रातस्तमसि विगच्छति जुहुयात् ॥ १२ ॥

**अन्तः पशौ पशुकामस्य सायंप्रातः ॥ १३ ॥**

सायं पशुषु ग्राममध्ये समागतेषु, प्रातश्चानिष्क्रान्तेषु जुहुयात् ॥ १३ ॥

**शयाने श्रीकामस्य प्रातः ॥ १४ ॥**

सुप्ते एव समस्तलोके श्रीकामः प्रातर्जुहुयात् ॥ १४ ॥

**प्रथमसमिद्धे धूप्यमाने प्रजासु निहत्येव सहसाऽन्नमत्स्यतः ॥१५॥**

यः क्षत्रियः प्रजाः ताड़यित्वा इव ताभ्यः सकाशाद् बलाद् धनधान्यादि ग्रहीतुमिच्छति, तस्य यजमानस्य प्रथमे ज्वालाप्रादुर्भावे धूप्यमाने अग्नौ जुहुयात् ॥१५॥

**भूयिष्ठार्चिषि गृहीत्वेव सहसा ॥१६॥**

यः क्षत्रियः प्रजा लोहकटकादिना बध्वा इव (न तु निहत्य) बलेन प्रजाभ्यो धनधान्यादि स्वीकर्त्तुमिच्छेत्तस्य बहुज्वालायुतेऽग्नौ होमः ॥१६॥

**प्रदीप्ततमे श्री-यशस्कामस्य ॥१७॥**

**अर्चिःप्रत्यवाये मैत्रेणान्नमत्स्यतः ॥१८॥**

यस्त्रैवर्णिको मित्रभावेन प्रजाभ्योऽन्नमत्तुमिच्छेत्तस्य ज्वालापसरणे जायमाने होमः कार्यः ॥१८॥

**अङ्गारेषु चाकश्यमानेषु ब्रह्मवर्चसकामस्य ॥१९॥**

अङ्गारेषु दीप्यमानेषु ब्रह्मवर्चसकामस्य ब्राह्मणस्य होमः ॥१९॥

**पयसा स्वर्गकामः, पशुकामो वा ॥२०॥**

**यवाग्वा ग्रामकामः ॥२१॥**

**तण्डुलैर्बलकामः ॥२२॥**

**दध्नेन्द्रियकामः ॥२३॥**

**अनधिश्रयणं च श्रुति-सामर्थ्याभ्याम् ॥२४॥**

"न दध्यधिश्रयेत्" इति श्रुत्या, अधिश्रयणे दधिस्वरूपस्य नाशापत्त्या च दध्नोऽधिश्रयणं न कुर्यात् ॥२४॥

**घृतेन तेजस्कामः ॥२५॥**

श्रुतिग्रहणादेव निषेधहेतुलाभे सति सामर्थ्यग्रहणं तण्डुलार्थम् । तेन तण्डुलानामप्यधिश्रयणं न कार्यम् ॥२५॥

**संवत्सरं जुहुयादेतेषामेकैकेन कामसंयोगे ॥२६॥**

उक्तानां कालाद्यवस्थाद्रव्याणां स्वर्गादिकामसिद्ध्यर्थमेकैकेन संवत्सरपर्यन्तं जुहुयात् । संवत्सरेणैकैकस्य कामस्य सिद्धिरिति भावः ( श० ५।५।३।२ ) ॥२६॥

**सायं प्रातर्वा ॥२७॥**

अथवा सायं प्रातः कामसंयोगेन जुहुयात्, न संवत्सरम् ॥ २७ ॥

**दक्षिणेन प्रवेशनमग्निहोत्रेष्टिषु ॥२८॥**

सायं प्रातर्होमे, इष्टिषु च दक्षिणेन द्वारेण गार्हपत्यागारे प्रवेशः कार्यः ॥ २८ ॥

**सायंप्रातराहवनीयस्याऽऽसनोपस्थाने ॥२९॥**

"यदेव सायं प्रातराहवनीयमुप च तिष्ठत उप चास्ते" (श०२।३।२।४) इति वचनात्पूर्वमाहवनीयस्य तूष्णीमुपस्थानम्, पश्चात्तत्समीपे पत्रोपवेशनं कुर्यात् । सूत्रेऽल्पाच्तरत्वादासनशब्दस्य पूर्वनिपातः ॥२९॥

**शय्याऽऽसनं वा गार्हपत्ये ॥ ३० ॥**

ततो गार्हपत्यसमीपमागत्य तत्र शयनं कर्त्तव्यम् । अथवा आसनम् = उपवेशनं कर्त्तव्यम् ॥ ३० ॥

**संव्रजन्मनसोपस्मृत्य दक्षिणाग्निम् ॥३१॥**

प्रागुक्त( ४।१५।१९ ) सञ्चरद्वयमध्ये येन सञ्चरेण प्रविष्टो भवेत्तेनैव सञ्चरेण निष्क्रमणं कुर्वन्दक्षिणाग्निं मनसा ध्यात्वोपतिष्ठेत ॥३१॥

**अनशित्वा प्रातर्मुहूर्त्तꣳ सभाऽऽसनꣳ सभ्यस्य ॥३२॥**

प्रातःकाले भोजनात्पूर्वं सभ्यस्य ( सभाशब्दार्थः पूर्वमुक्तः ४।९।१८ ) सभायां मुहूर्तमुपविशेत् ॥३२॥

**भस्मोद्धृतमुपेयात् ॥३३॥**

गार्हपत्यादिभ्यो यत्र भस्म उद्धृतं भवेत्तत्र गच्छेत् प्रातरेव ॥३३॥

स्वयं वा जुहुयात् ॥३४॥

सर्वदा स्वयं जुहुयात्; अध्वर्युर्वेति विकल्पः ॥ ३४ ॥

उपवसथे नियमः ॥३५॥

पूर्णिमायाममायां च ( श० ११।७।४ ) स्वयं जुहुयादिति नियमो वेदितव्यः ॥ ३५ ॥

इति कात्यायनश्रौतसूत्रवृत्तौ चतुर्थोऽध्यायः समाप्तः ॥४॥



[ चातुर्मास्ययागारम्भकालः ]

एवमग्निहोत्रान्तानां साङ्गानां कर्मणां स्वरूपे निरूपिते इदानीं अन्त्रक्रमात्प्राप्तानां चातुर्मास्यानां प्रयोगं विधातुमुपक्रमते—

चातुर्मास्यप्रयोगः फाल्गुन्याम् ॥ १ ॥

चतुर्षु मासेषु भवानि चातुर्मास्यानि(१)कर्माणि। चातुर्मास्यशब्देन वैश्वदेव-वरुणप्रघास-साकमेध-शुनासीरीयसंज्ञानि चत्वारि पर्वाणि अभिधीयन्ते। तेषामारम्भः फाल्गुन्यां पौर्णमास्यां कर्त्तव्यः। तत्र वैश्वदेवाख्यं प्रथमं पर्व अनुष्ठेयमिति भावः ॥ १ ॥

चातुर्मास्यारम्भे अन्वारम्भणीयेष्टिस्थानीयां वैश्वानरपार्जन्येष्टिं विकल्पेनाह—

वैश्वानर-पार्जन्यौ निरुप्येच्छन् ॥ २ ॥

इच्छन्निति विकल्पद्योतनार्थः(२)। [वैश्वा]नर-पार्जन्यौ, अथवा अन्वारम्भणीयामिष्टिं निरुप्य(३) चातुर्मास्यप्रयोगमारभेदित्यर्थः ॥२॥

वैश्वानर—पार्जन्येष्टौ हविषी आह—

वैश्वानरो द्वादशकपालश्चरुरुत्तरः ॥ ३ ॥

वैश्वानर—पार्जन्येष्टौ अग्नये वैश्वानराय द्वादशकपालः पुरोडाशः कार्यः, पर्जन्याय च चरुः कार्यः ॥ ३ ॥

---

(१) प्रथमपर्वानुष्ठानानन्तरं ततश्चतुर्थे मासि द्वितीयपर्वणोऽनुष्ठानम्। तदनन्तरं चतुर्थे मासि तृतीयं पर्व। एवं चतुर्षु मासेषु अनुष्ठेयत्वात् चातुर्मास्यानीति पर्वणां नामधेयम्। यद्यपि शुनासीरीयस्य पर्वणो न मासचतुष्टयानन्तरमनुष्ठानम्, तथापि वैश्वदेवादिषु त्रिषु पर्वसु चतुर्मासानुष्ठेयत्वात् भूम्ना व्यपदेशश्चतुर्णामपि पर्वणाम्।

(२) सूत्रेऽस्मिन् यद्यपि वैश्वानरशब्द एव देवताबोधकः श्रूयते, तथापि वैश्वानरगुणविशिष्टोऽग्निरेव देवता। एतद्देवताकासु याज्या-पुरोऽनुवाक्यासु तथैव दर्शनात्। किञ्च श्रुतौ यत्र अभ्युदृष्टेष्याम् "अग्नये वैश्वानराय द्वादशकपालं पुरोडाशं निर्वपेत्" (११।१।५।५) इति श्रूयते, तत्रापि सूत्रकारेण (२५।४।४६) वैश्वानर इति गुणवाचकशब्दादेव तद्धितो दर्शितः। एवं च यत्र यत्र केवलवैश्वानरग्रहणं, तत्र सर्वत्रापि अग्नेरेव तद्गुणिर्देवतात्वं बोध्यम्।

(३ )इयं चान्वारम्भणीया, तत्स्थानापन्ना पार्जन्येष्टिर्वा न चातुर्मास्यान्तर्भूता। अन्वारम्भणीयाया दर्शाङ्गत्वेन विहितत्वात् तद्विकृतिभूताग्नेयादौ अतिदेशेन अङ्गतयैव प्राप्तत्वात्। अतश्च दैवात्तस्या अननुष्ठाने अङ्गलोपप्रायश्चित्तं परम्, न तु पुनरनुष्ठानम् ॥२॥

[ चातुर्मास्ययागस्यादिमं वैश्वदेवपर्व ]

वैश्वदेवपर्वणि अष्टौ हवींष्याह—

## आग्नेयः, सौम्यश्चरुः, सावित्रो द्वादशकपालोऽष्टाकपालो वा, सारस्वतश्चरुः, पौष्णश्चरुः प्रपिष्टानाम् ॥ ४ ॥

वैश्वदेवपर्वणि ( श० ब्रा० २।५।१।६ ) अग्निमष्टाकपालेन पुरोडाशेन, सोमं चरुणा, सवितारमष्टाकपालेन द्वादशकपालेन वा पुरोडाशेन, सरस्वतीं चरुणा, पूषणं पैष्टेन चरुणा यजेत । अत्र सावित्रः पुरोडाशः पृथुतरः कार्यः । "स वै वर्षिष्ठः पुरोडाशो भवति" इति श्रुतेः । "सावित्रश्चातुर्मास्येषु" ( ४।५।५ ) इत्युक्तत्वात् उपांशु चायं कार्यः । "योषा वै सरस्वती" ( २।५।१।११ ) इत्यर्थवादादत्र सरस्वत्या एव देवतात्वं, न सरस्वतः ॥ ४ ॥

[ द्विदेवतस्य न पिष्टचरुद्रव्यकत्वम् ]

राजसूये "ऐन्द्रापौष्णश्चरुः" ( १५।२।१२ ) इति द्विदेवत्यश्चरुर्विहितः । स किं प्रपिष्टानाम् ? उत न ? इति सन्देहे पूर्वपक्षयति—

## द्विदेवतोऽपि नियमसामर्थ्यात् ॥ ५ ॥

यत्र देवतान्तरसहितः पूषा, तत्रापि पिष्टानामेव चरुः कार्यः । कुतः ? नियमसामर्थ्यात् । "तस्माद्यं पूष्णे चरुं कुर्वन्ति प्रपिष्टानामेव कुर्वन्ति" (श० १।७।४।७) इति पूष्णो नियमेन पिष्टताविधानात् । इतरस्येन्द्रादेस्त्वनियमः । तत्र कांस्यभोजिन्यायेन (१) नियमानियमयोर्नियमस्य बलवत्वाद् द्विदेवतोऽपि चरुः प्रपिष्टानामेव भवति ॥५॥

एवं प्राप्त आह—

## अर्द्धपिष्टं वोभयसामर्थ्यात् ॥ ६ ॥

वाशब्दः पक्षव्यावृत्तौ । द्विदेवत्यश्चरुरर्द्धपिष्टः कार्यः । कुतः ? उभयसामर्थ्यात् । पूष्णः पिष्टम् , इतरस्य चापिष्टम् इत्युभयोः सङ्गतार्थत्वात् ॥ ६ ॥

अत्र लिङ्गमप्यस्तीत्याह—

## सौमापौष्णदर्शनाच्च ॥ ७ ॥

"सौमापौष्णं चरुं निर्वपेन्नेमपिष्टं पशुकामः" ( मै. सं. २।१।५ ) इति श्रुतिः द्विदेवत्ये अर्द्धपिष्टतां दर्शयति । अतोऽपि द्विदेवत्यश्चरुरर्द्धपिष्टानां कार्यः । "नेम इत्यर्द्धस्य" ( ३।२० ) इति यास्कः ॥ ७ ॥

सिद्धान्तयति—

## अपिष्टो वा देवताऽन्यत्वात् ॥ ८ ॥

वाशब्दः पक्षद्वयव्यावृत्तौ । द्विदेवत्यश्चरुरपिष्ट एव कर्त्तव्यः, न पिष्टो, नाप्यर्द्धपिष्टः । कुतः ? देवताऽन्यत्वात् । केवलस्य पूष्ण अपेक्षया सद्वितीयस्य पूष्णो देवतान्तरत्वात् । "तस्माद्यं पूष्णे चरुं कुर्वन्ति प्रपिष्टानामेव कुर्वन्ति" ( श० १।७।४।७ ) इति श्रुतौ केवलात्पूषशब्दाच्चतुर्थीश्रवणेन निरपेक्षस्य पूष्णो यत्र यत्र देवतात्वं तत्रैव पेषणमित्यवगम्यते । सद्वितीये तु पूष्णि न पूष्णो नैरपेक्ष्येण देवतात्वम् । अन्यसापेक्षत्वात्तस्य । अतश्च "आग्नेयं चतुर्धा

---

( १ ) गुरूच्छिष्टभोजनं शिष्यस्य विहितम् । स च शिष्यः कांस्यपात्रे एव भोजनं कुर्याम् इति नियमं गृहीतवान् । गुरोस्तु अनियमः । एवं च गुरूच्छिष्टभोजिनं कांस्यपात्रभोजनव्रतिनं च शिष्यमनुसृत्य गुरोरपि कांस्यपात्रे एव भोजनं नियम्यते स कांस्यभोजिन्यायः ।

करोति" (का० श्रौ० ३।४।१०) इतिवत् यत्र केवलस्य पूष्णो देवतात्वं तत्रैव पेषणम्। द्विदेवत्ये तु तदभावान्न तत्। तस्माद्यत्र केवलः पूषा तत्रैव पेषणम् ॥ ८ ॥

तर्हि दर्शनस्य का गतिरित्याह—

**सौमापौष्णे वचनात् ॥ ९ ॥**

"सोमापौष्णं चरुम्" (मै० सं० २।१।५) इत्यादिश्रुत्या अप्राप्तस्यैव नेमपिष्टस्या-पूर्वतया विधानम्, न तु दर्शनं तदिति ॥ ९ ॥

**एतानि सर्वत्र ॥१०॥**

एतानि पञ्च हवींषि चतुर्ष्वपि पर्वसु कर्त्तव्यानि ॥१०॥

**मरुद्भ्यः स्वतवद्भ्यः सप्तकपालः ॥११॥**

अयं च सप्तकपालः पूर्वोक्तेभ्यः पञ्चभ्यो हविर्भ्योऽतिरिक्तः षष्ठं हविर्भवति। स्वं तवो बलं येषां ते स्वतवसः। हविर्ग्रहणादौ मरुद्भ्यः स्वतवोभ्यः इति प्रयोगः कार्यः। "तं वै स्वतवोभ्य इति कुर्यात्" (श० २।४।२।१४) इति श्रुतेः। स्वतवद्भ्य इति तु छान्दसं रूपम् ॥११॥

**मरुतो वा ॥१२॥**

अथवा मरुतः सप्तकपालेन पुरोडाशेन यष्टव्या इति विकल्पः ॥१२॥

**वैश्वदेवी पयस्या ॥१३॥**

विश्वान् देवान् पयस्यया यजेत्। इदं सप्तमं हविरुपांशु भवति प्रागुक्तत्वात् (का० ४।५।८)। अस्याश्च पयस्याया दाक्षायणान्तर्गता पयस्या प्रकृतिभूता; तत्रैवाङ्गानां पौष्कल्येनाभिधानात्। अतः सैव सर्वासां पयस्यानां प्रकृतिर्भवितुमर्हति। इयं तु यावदपेक्षिताङ्गपाठरहितत्वात् विकृतिरेव ॥ १३ ॥

**द्यावापृथिवीय एककपालः ॥१४॥**

द्यावापृथिवी एककपालेन पुरोडाशेन यजेत। इदमष्टमं हविरुपांशु। "एककपाला-श्चावारुणाः" (४।५।२) इत्युक्तत्वात् ॥ १४ ॥

**एतद्वैश्वदेवम् ॥ १५ ॥**

एतद्यागाष्टकं वैश्वदेवपर्वसंज्ञकं भवति। संज्ञाकरणं सङ्कल्पादौ व्यवहारार्थम् ॥ १५ ॥

[ वैश्वदेवपर्वणो देशविधानम् ]

**प्राचीनप्रवणे ॥१६॥**

प्राचीनः=प्राग्भवो भागः प्रवणो=निम्नो यस्मिन् सः, तस्मिन् देशे वैश्वदेवेन यजेत ॥१६॥

**अहतवासाः पत्नी च ॥१७॥**

वैश्वदेवपर्वणि यजमानः पत्नी च अहते वाससी परिदधीयाताम्। वस्त्रपरिधाने च 'परिधास्यै, यशसा' (पा० गृ० २।६) इति मन्त्रद्वयं प्रवर्त्तत एव ॥१७॥

**त एव वरुणप्रघासेष्वपि ॥१८॥**

ये वाससी वैश्वदेवपर्वणि परिहिते ते एव वरुणप्रघासार्थमपि यत्नेन संस्थाप्य तदानीं परिधातव्ये। वरुणप्रघासानुष्ठानकाले नाशदोषादौ त्वन्ययोरपि परिधानं कार्यम्। यदि तयो-रेव परिधानं तदा तयोः "पूर्वं दद्यादधिकृतेभ्यो यस्मा इच्छेत्" (५।५।३३) इति विहिता

ऋत्विग्भ्यो दानरूपा प्रतिपत्तिः कर्त्तव्या। यदा तु तन्नाशदोषादिना अन्ययोः परिधानं, तदा नेयं प्रतिपत्तिः ॥१८॥

**त्रेधा बर्हिः सन्नह्य, पुनरेकधा ॥१९॥**

आदौ एकैकेन सन्नहनेन पृथक् पृथक् त्रीन् पूलकान् बध्वा अनन्तरं त्रीनपि पूलकान् चतुर्थेन सन्नहनेन एकत्र बध्नीयात् ॥१९॥

**कुशप्रस्वः प्रस्तर, उपसन्नद्धः ॥२०॥**

प्रसूः पुष्पम् । तद्वन्तः कुशाः कुशप्रस्वः । पुष्पिताः कुशा इति यावत् । तानेव प्रस्तरं कुर्यादित्यर्थः (२।५।१।१८) । स च उपसन्नद्धो भवति । अर्थात् उप बर्हिषः समीपे चतुर्थसन्नहनमध्ये सोऽपि बन्धनीयः ॥२०॥

**आसाद्याऽग्निमन्थनम् ॥२१॥**

'घृताच्यसी'ति ( श० य० २।६ ) हवींषि वेद्यामासाद्य अग्निमन्थनं कर्त्तव्यम् ॥२१॥

[ अग्निमन्थनस्येतिकर्त्तव्यतामाह ]

**"अग्नेर्जनित्र"मिति शकलमादाय तूष्णीं वेद्यां करोति ॥२२॥**

शकलः पालाशी समित् । तं चोदगग्रं वेद्यां निदध्यात् ॥२२॥

**"वृषणा"विति कुशतरुणे तस्मिन् ॥२३॥**

तस्मिन् शकले द्वे दर्भतृणे प्रागग्रे निदध्यात् । "वृषणाविति प्राञ्चौ दर्भौ" ( आप० श्रौ० ७।१२।१२) इति सूत्रम् ॥२३॥

**"उर्वश्यसी"त्यधरारणिं तयोः ॥२४॥**

तयोर्दर्भतरुणयोरुपरि उत्तराग्रामधरारणिं निदध्यात् ॥२४॥

**"आयुरसी"त्युत्तरयाऽऽज्यस्थालीᳪ सᳩस्पृश्य "पुरूरवा" इत्यभिनिधानं तया ॥२५॥**

आयुरसीति मन्त्रेण उत्तरया अरण्या प्रमन्थमूलेन आज्यस्थालीस्थमाज्यं स्पृष्ट्वा पुरूरवा इति मन्त्रेण तया उत्तरया अरण्या अभिनिधानं कुर्यात । अधरारणेरुपरि उत्तरारणिं निदध्यादित्यर्थः ॥२५॥

इति पञ्चमाध्याये प्रथमा कण्डिका ॥ १ ॥

---

**अग्नये मथ्यमानायाऽनुवाचयति ॥१॥**

अध्वर्युः "अग्नये मथ्यमानायाऽनुब्रूहि" इति होतारं सम्प्रेष्यति ॥ १ ॥

**मन्थति "गायत्रेणे"ति प्रतिमन्त्रं त्रिः प्रदक्षिणम् ॥२॥**

अध्वर्युः । अत ऊर्ध्वं प्रदक्षिणमप्रदक्षिणं च मन्थनं भवति ॥२॥

**जाते जातायेति ॥ ३ ॥**

जातेऽग्नौ "अग्नये जातायाऽनुब्रूहि' इत्यध्वर्युर्होतारं प्रेष्येत् । होता च "आयर्ठ० हस्तेन" ( शां० ३।१३।२१ ) इत्यादिमन्त्रान् पठेत् ॥ ३ ॥

**प्रह्रियमाणायेति प्रास्यन् ॥ ४ ॥**

आहवनीयेऽग्नौ जातस्याग्नेः प्रक्षेपं करिष्यन् अध्वर्युः 'अग्नये प्रह्रियमाणायाऽनुब्रूहि' इति होतारं प्रेष्येत् ॥ ४ ॥

"भवतन्न" इति प्रास्यति ॥ ५ ॥

आहवनीये जातमग्निं प्रक्षिपेदध्वर्युः ॥ ५ ॥

"अग्नावग्नि"रिति जुहोति स्थाल्याः स्रुवेण ॥ ६ ॥

स्थाल्याः आज्यं गृहीत्वा स्रुवेण जुहुयादध्वर्युः ॥ ६ ॥

नवप्रयाजं नवानुयाजम् ॥ ७ ॥

वैश्वदेवपर्वणि नव प्रयाजा, नव अनुयाजाश्च भवन्ति ( २।५।१।१० ) ॥ ७ ॥

वरुणप्रघासा महाहविश्च ॥ ८ ॥

वरुणप्रघासपर्वणि, (२।५।२।४) साकमेधपर्वान्तर्गतायां महाहविरिष्टौ च (२।५।४।२) नव प्रयाजा नवानुयाजा भवन्ति। यद्यपि पूर्वसूत्रेणैव वरुणप्रघासेषु महाहविषि च नवप्रयाजतादि प्राप्नोत्येव, तेषां वैश्वदेवधर्मत्वात्। तथापि मारुत्यर्थं नवप्रयाजतायाः पृथग्विधातव्यतया एतद्विध्यभावे वैश्वदेवतोऽतिदेशप्राप्ताया नवप्रयाजताया मारुतीयागमात्रे उपसंहारो भवेत्। तन्मा भूदित्येतदर्थं पुनर्वचनम् ॥ ८ ॥

त्रीणि समिष्टयजूंषि जुहोति "देवा गातुविदो, यज्ञयज्ञ, मेषत" इति ॥९॥

वैश्वदेवपर्वणि त्रीणि (१) समिष्टयजूंषि मन्त्रत्रयेण जुहुयादध्वर्युः। अत्रोपदिष्टमिदं कर्म अतिदेशेन वरुणप्रघासपर्वणि, महाहविषि च प्राप्नोतीति तत्रापि त्रयाणां समिष्टयजुषामनुष्ठानम् ॥ ९ ॥

पशौ च ॥ १० ॥

पशुयागे च एतान्येव त्रीणि समिष्टयजूंषि जुहुयात्। इदं च विधानमग्नीषोमीयेतरपश्वर्थम्। अग्नीषोमीयस्य दक्षिणाग्निहोमान्तताया वचनबोधितत्वेन तत्र समिष्टयजुषामभावात् ॥ १० ॥

"याँ आवह" इति वा पशौ ॥ ११ ॥

पशुयागे "याँ आवह, यथर्ठं० हि त्वा, देवा गातुविदः" इति वा मन्त्रैः समिष्टयजुर्होमान् कुर्यात् ॥ ११ ॥

---

(१) अत्र त्रित्वसङ्ख्या न कर्मबोधिका; किन्तु आवृत्तिमात्रबोधिका। यत्र हि सङ्ख्या एकत्वादिका कर्मोत्पत्तिवाक्ये एव कर्मसमानाधिकरणा श्रुता, सा स्वाश्रयभूतस्य कर्मणो भेदं विना तत्र निवेशमलभमाना सती स्वाश्रयभूतं कर्म भिनत्ति। यथा "आमनमस्याम देवाः इति तिस्र आहुतीर्जुहोति" ( तै. सं. २।३।९ ) इत्यादौ परस्परभिन्नं कर्मत्रयं विधीयते। यत्र तु उत्पत्तिवाक्ये सङ्ख्याया अश्रवणं, किन्तु उत्पन्नवाक्ये सा श्रूयते, तत्र कर्मोत्पत्तिवाक्ये कर्मगतसङ्ख्यापेक्षायां सत्यां 'प्रथमातिक्रमे कारणाभावात्' इति न्यायेन एकत्वसङ्ख्यामनुमाय तद्विशिष्टतया कर्मणि ज्ञाते सति अनन्तरमुत्पन्नवाक्यगतसङ्ख्यायाः पूर्ववाक्यविहितकर्मणि निवेशापेक्षायाम् उपजीव्यभूतोत्पत्तिवाक्यगतसङ्ख्यामबाधित्वैव सा निवेशमर्हतीति कृत्वा उत्पन्नवाक्यगता सङ्ख्या न कर्मगतं भेदं बोधयति, किन्तु कर्मण आवृत्तिमात्रं बोधयित्वा विश्राम्यति। यथा—प्रयाजादिषु उत्पत्तिवाक्यैः पञ्चत्वसङ्ख्यायामवगतायामुत्पन्नवाक्यगतबोधिता एकादशत्वसङ्ख्या आवृत्तिमात्रबोधनेनैव विश्राम्यति, न तु प्रयाजानामेकादशत्वसङ्ख्याकत्वं बोधयति इति मीमांसकसम्प्रदायः। अतएव प्रकृतेऽपि त्रित्वसङ्ख्याया उत्पत्तिवाक्यगतत्वाभावेन न कर्मभेदकत्वम्; किन्तु आवृत्तिमात्रबोधकत्वमिति बोध्यम्।

**एकं वा वैश्वदेवे ॥ १२ ॥**

वैश्वदेवे पर्वणि एकं वा समिष्टयजुर्जुहोति त्रीणि वेति विकल्पः ॥ १२ ॥

**पर्वसछंस्थासु वपनं वा प्रागन्त्यात् ॥१३॥**

वैश्वदेव-वरुणप्रघास-साकमेधपर्वणां समाप्तौ यजमानेन वपनं कार्यं न वा कार्यमिति विकल्पः । अन्त्ये शुनासीरीयपर्वणि तु वपनं नैव भवति ( २।६।४।५-७ ) ॥ १३ ॥

वपनप्रकारमाह—

**अपरेण दक्षिणाग्निं दक्षिणं गोदानमुन्दति "सवित्रा प्रसूता दैव्या आप उन्दतु ते तनूं दीर्घायुत्वाय वर्चस" ( पार० गृ० २।१ ) इति ॥ १४ ॥**

दक्षिणाग्नेरपरस्यां दिशि प्राङ्मुखोपविष्टस्य यजमानस्य दक्षिणकर्णवर्त्तिनं शिरः-प्रदेशमद्भिरार्द्रं कुर्यादध्वर्युः ॥ १४ ॥

**त्र्येण्या शलल्या विनीय त्रीणि कुशतरुणान्यन्तर्दधा"त्योषध" इति ॥१५॥**

अध्वर्युः त्रिषु स्थानेषु एतया श्वेतया सेधाशलाकया क्लिन्नान् केशान् पृथक्कृत्य त्रीणि कुशतृणानि केशेषु निदध्यात् ॥ १५ ॥

**"त्र्यायुष"मिति यजमानो जपति ॥ १६ ॥**

सस्वरं जपः ॥ १६ ॥

**"शिवो नामे"ति लोहक्षुरमादाय "निवर्त्तयामी"ति वपति ॥ १७ ॥**

अध्वर्युः । "लोहित इव ह्यग्निः" ( श० २, ६, ४, ५ ) इत्यर्थवादात् लोहशब्देन ताम्रमुच्यते । लोहमस्ति अस्य इति लोहः = लोहपरिष्कृतः । छेदनं च तृणानामपि कार्यम् । "सकेशानि प्रच्छिद्य" ( पार० २।१। ) इति सूत्रात् ॥ १७ ॥

**एवं पश्चादुत्तरतश्च ॥ १८ ॥**

यथा दक्षिणगोदानस्य उन्दनादि वपनान्तं कृतम्, एवं शिरसः पश्चात्प्रदेशे उत्तर-प्रदेशे सर्वं समन्त्रकमनुष्ठेयम् । क्षुरादानं तु कृतत्वान्न पुनः समन्त्रकं भवति । एवं जपश्च न भवति, कृतत्वादेव ॥ १८ ॥

**गृहेषु पौर्णमासछं० समारूढ-निर्मथितयोस्तथा चेत् ॥ १९ ॥**

अत्र चेदिति यत्र इत्यर्थे । यत्र समारोप-निर्मन्थनयोर्विधानं, तत्र ते कृत्वा तादृशेऽग्नौ पर्व अनुष्ठाय पुनः समारोप-निर्मन्थने कृत्वा तत्र पौर्णमासानुष्ठानं वरुणप्रघासेषु साकमेधेषु च । वैश्वदेवपर्वणि तयोरविहितत्वात् पूर्वतने एव गार्हपत्ये वैश्वदेवपर्व अनुष्ठाय तत्रैव पौर्णमासं कुर्यात् । पर्वसमाप्त्यनन्तरं यदि समारूढनिर्मथितयोरग्न्योः पर्व कृतं, तदा अग्नी समारोह्य पर्व-करणप्रदेशादागत्य गृहेषु अग्नी मथित्वा तत्र पौर्णमासं कुर्यात् । वरुणप्रघाससाकमेधयोः "गृहानित्वा निर्मथ्याग्नी पौर्णमासेन यजेत" ( २।५।२।४८ ) इति श्रूयते । अतः पर्वद्वयान्ते एव अग्निसमारोपं मन्थनं च कृत्वा पौर्णमासानुष्ठानम् । वैश्वदेवशुनासीरीयान्ते तु न समारोपो, नापि मन्थनम् ; (२।६।२।१७) किन्तु गार्हपत्यं स्वस्थानमानीय पौर्णमासमनुष्ठेयमिति ॥१९॥

**प्रजाकामस्यापि वैश्वदेवम् ॥ २० ॥**

प्रजाकामस्यापि ( २।५।१।१७ ) यजमानस्य वैश्वदेवं पर्व केवलं भवति ॥ २० ॥

**एकेऽधःप्राङ्शायी मध्वाश्यृतुजायोपायी ॥ २१ ॥**

वैश्वदेवपर्वानन्तरं वरुणप्रघासान्तीयावभृथस्नानात्प्राक् अधःशायी, मधुमिश्रान्नभोजी, ऋतुकाले भार्यागमनवान् भवेत्। एके विकल्पमिच्छन्ति ॥२१॥

**मांस-स्त्र्यनृतानि वर्जयेदुदकाभ्यवायं (उदकप्रवेशं) च प्रागवभृथात् ॥२२॥**

तथा मांसम्, ऋतुकालादन्यत्र स्त्रियम्, असत्यभाषणं, उदकमध्ये प्रवेशं च वर्जयेत् ॥ अधःशयादीनां सर्वेषां विकल्प इति सम्प्रदायः ॥ २२ ॥

इति कातीयश्रौतसूत्रवृत्तौ पञ्चमाध्याये वैश्वदेवपर्वनिरूपणी द्वितीया कण्डिका । ॥२॥



वरुणप्रघासाख्यं द्वितीयं पर्वाह—

**आषाढ्या 'मथन्ते योनि'रिति समारोह्योदवसाय निर्मथ्य वरुणप्रघासाः ॥१॥**

आषाढपूर्णिमायामथन्ते योनिरिति मन्त्रेण गार्हपत्यमरण्योः समारोप्य स्वस्थानात्प्रदेशान्तरे गत्वा निर्मथ्य वरुणप्रघासा अनुष्ठेयाः। अत्र समारोपो गार्हपत्यस्यैव नाहवनीयस्य। अग्नी इति द्विवचनं तु "अन्तरा गर्भिणी" इति न्यायेन आहवनीयोऽपि तत्रास्तीति बुद्धिकृतम्। वरुणप्रघासा इति बहुवचनमवयवभेदापेक्षया ॥ १ ॥

**पूर्वेद्युर्दक्षिणाग्नौ निस्तुषाऽऽम-भृष्टयवानां करम्भपात्रकरणम् ॥ २ ॥**

आषाढशुक्लचतुर्दश्यां दक्षिणाग्नौ तुषेभ्यो निर्मुक्तानामीषद्भृष्टयवानां करम्भपात्राणि कर्तव्यानि। करम्भो दध्ना संयुक्ताः सक्तवः। तन्मयानि पात्राणि। तानि च "पात्रेषु ह्यशनमतः" इत्यर्थवादाद्यथाऽशनार्थानि भवन्ति तथा कार्याणि। आमा अपक्वाः, भृष्टाः पक्वाः। "गार्हपत्ये संस्काराः" (१।८।३४) इत्युक्तत्वात् पर्यग्निकरणं गार्हपत्यादेव। निस्तुषग्रहणं फलीकरणव्युदासार्थम्।

शमीपत्रमिश्राणि करीराणि करंभः। तद्धारणार्थानि पात्राणि करम्भपात्राणि। तानि च यवमयानि (आप० श्रौ० ८।५।३७) इति व्याख्याकृत् ॥ २ ॥

करम्भपात्राणां सङ्ख्यामाह—

**यावन्तो यजमानगृह्या एकाऽधिकानि ॥ ३ ॥**

यावत्सङ्ख्या यजमानस्य गृह्याः प्रजा-पशु-भृत्य-भार्यादयः, तत एकसङ्ख्याऽधिकानि करम्भपात्राणि कुर्यात्। यथा-पुत्रपश्वादीनां दशत्वे एकादश पात्राणि भवन्ति ॥ ३ ॥

एवं प्राप्त आह—

**प्रजायां वा जातश्रुतेः ॥ ४ ॥**

"यावन्तो गृह्याः स्युः" (श० २।५।२।२२) इति श्रुतेः गृह्यशब्दः प्रजायां वर्त्तमानो ग्राह्यो, न भृत्यभार्यादौ। कुतः? "तद्याश्चैवास्य प्रजा जाता आसन् याश्चाजातास्ता उभयीर्वरुणपाशात्प्रमुञ्चति" (२।५।२।२२) इति विशेषावगमात्। अतः प्रजासम्मितान्येव करम्भपात्राणि कर्त्तव्यानि, न पशुभृत्यादिसम्मितानि ॥ ४ ॥

नन्वेवमनपत्यस्याकरणे, एकापत्यस्य द्व्यपत्यस्य च तत्सङ्ख्याकपात्रकरणे च प्राप्त आह—

**त्रीणि वा नित्यत्वात् ॥ ५ ॥**

वाऽत्रथवार्थे । द्विप्रजैकप्रजाऽप्रजानां त्रीणि कर्त्तव्यानि । कुतः? नित्यत्वात् । "करम्भपात्राणि कुर्वन्ति" ( श० २।५।२। ४ ) इति बहुवचनस्य नित्यमेव श्रवणात् । अतो द्विप्रजादीनां त्रीण्येकाधिकानि चत्वारि कर्त्तव्यानि ॥ ५ ॥

**मेषमिथुनं च ॥ ६ ॥**

मेषप्रतिकृतिं मेषीप्रतिकृतिं च निस्तुषामभृष्टकरम्भेणैव(१) कुर्यात् ॥ ६ ॥

**अनैडकीरूर्णाः प्रक्षाल्याऽऽश्लेषयेत्तयोः ॥७॥**

एडको मेषो मेषाकृतिः पशुः दक्षिणापथे प्रसिद्धः । तस्येमा ऐडक्यः । तद्भिन्ना अनैडक्यः । ता ऊर्णाः अमेषजानि रोमाणि अद्भिः प्रक्षाल्य पिण्डमययोर्मेषमेष्योः शरीरे आश्लेषयेत् । द्विप्रकारा ऊर्णा भवन्ति । ऐडक्यः ( मेषसंबन्धिन्यः ) अनैडक्यश्च । तत्र नियमार्थमिदमुक्तम् ॥ ७ ॥

**कुशोर्णा वाऽभावे ॥८॥**

अनैडकीनामभावे कुशानां मञ्जरीः प्रक्षाल्य तयोराश्लेषयेत् ॥८॥

**आहवनीयस्य पुरस्ताद्वेदी करोति ॥९॥**

अत्राहवनीयशब्दो नाऽऽहवनीयाग्निवाचकः । अधुना एतावताऽपि आहवनीयस्यानिष्पन्नत्वात् । किंतु आहवनीयोद्धरणवाचकः । आहवनीयोद्धरणात्प्राक् द्वे वेदी करोति । तत्र एका दक्षिणतः प्रतिप्रस्थातुः, अपरा उत्तरतोऽध्वर्योः ॥९॥

**प्रादेशोऽन्तरा पृथो वा ॥१०॥**

प्रादेशमात्रं पृथमात्रं वा अन्तरालमुभयोर्वेद्योः कार्यम् । द्वयोर्वेद्योरन्तरालः पश्चिमभागे पृथमात्रः प्रादेशमात्रो वा भवेदिति भावः । प्रसृताङ्गुलिरामणिबन्धाद्धस्तः पृथशब्देनोच्यते ॥१०॥

उत्तरवेदिप्रमाणमाह—

**रथमात्र्युत्तरा ॥११॥**

उत्तरा वेदिः रथप्रमाणा कार्या । दक्षिणा तु प्रकृतिवदेव ( २।६।१ ) । रथप्रमाणं च शुल्बपरिशिष्टे उक्तम् (का० शु० १।२।१-४) । तस्यायं निष्कर्षः । चतुःशतमङ्गुलानि वेदेः पश्चात् प्रमाणम् । षडशीत्यङ्गुलानि वेदेः पुरः प्रमाणम् । अष्टाशीतिशताङ्गुलानि वेदेः पूर्वापरदैर्घ्यप्रमाणमिति ॥११॥

उत्तरवेदेर्द्वितीयं प्रमाणमाह—

**चतुररत्निर्वा पश्चात्, सप्त प्राची षड् वा, त्रयः पुरस्तात् ॥१२॥**

अथवा उत्तरवेदिः पश्चाच्चतुररत्निः कार्या । सप्तारत्निः, षडरत्निर्वा पूर्वापरा कार्या । त्र्यरत्निः पुरस्तात्कार्या ॥१२॥

---

(१) अत्र मेष-मेषीकरणं "पूर्वेद्युः" ( श० ब्रा० २।५।२।१५ ) इति श्रुतेः पूर्वेद्युः केषांचिदिष्टम् । तत्तु कर्काचार्यस्य नाभिप्रेतम् । "तत्रापि मेषं मेषीं च कुर्वन्ति" ( श० ब्रा० २।५।२।१५ ) इति श्रुतौ तत्रेत्ययं शब्दो न पूर्वेद्युरूपकालवाचकः; किन्तु यवपिष्टवाचकः । कालवाचकत्वे उत्तरेद्युः प्रधानयागानुष्ठानात्, अङ्गप्रधानयोरेकप्रधानकालिकत्वबाधात्, "यवमयौ भवत" ( श० ब्रा० २।५।२।१६ ) इत्यर्थवादासङ्गत्यापत्तेश्च ।

तेषां मध्ये शङ्कुः ॥१३॥

पुरस्तात् त्र्यरत्नीनां मध्ये शङ्कुर्निखेयः। तत्र हि शङ्कुना कार्यमस्ति। पूर्वार्द्धं शङ्कुसहितमित्यत्र (का० श्रौ० ५, ३, ३६) ॥१३॥

अपरिमिता वा ॥१४॥

उक्तप्रमाणापेक्षया अधिकप्रमाणा वोत्तरवेदिर्भवेत् ॥१४॥

स्फ्याद्यासम्मर्शनात्करोति ॥१५॥

उभयोर्वेद्योः 'देवस्य त्वेति स्फ्यमादाय सतृणम्' (का० श्रौ० २।६।६) इत्यारभ्य "हृत्वाऽग्नील्लेखाः सम्मृशति" (२।६।२०) इत्येवमन्तं कुर्यात्। अत्र अग्निहोत्रहवणी, वज्रः, पवित्रच्छेदनानि, पवित्रे, अन्तर्द्धानतृणम् इति पञ्चकासादनं कार्यम्। स्फ्यस्य प्रोक्षणम्। प्रोक्षितेन स्फ्येन रेखाहरणादीनि। प्रोक्षणार्थं प्रणीताश्च कार्याः। प्रणीतार्थं ब्रह्मवरणमिति सर्वमपकृष्यते ॥१५॥

उभयोरेक उत्करः ॥१६॥

उभयोर्वेद्योरेक एवोत्कर उत्तरवेदिसमीपे कर्तव्यः ॥१६॥

अपरेण वेदिं प्रतिप्रस्थातुः सञ्चरः ॥१७॥

उत्तरवेदिमपरेण स्तम्बयजुर्हरणाय प्रतिप्रस्थातुर्गमनाऽऽगमनमार्गो भवति ॥१७॥

उत्तरवेदिं निवपत्युत्तरस्याम् ॥ १८ ॥

उत्तरस्यां वेद्यां वक्ष्यमाणप्रकारेणोत्तरवेदिं = द्वात्रिंशदङ्गुलं समचतुरस्रं स्थण्डिलं कुर्यादध्वर्युः। उत्तरवेदिरिति वक्ष्यमाणसंस्कारसंस्कृतस्य चात्वालमृदा कृतस्य स्थण्डिलस्य नाम ॥ १८ ॥

शम्यामादाय चात्वालं मिमीते पूर्वेणोत्करꣳ सञ्चरं परिहाप्य ॥ १९ ॥

द्वात्रिंशदङ्गुलपरिमाणां सगर्त्तां वारणीं शम्यां गृहीत्वा उत्करात्पूर्वस्यां दिशि सञ्चरणार्थं द्वात्रिंशदङ्गुलं मार्गं मुक्त्वा चात्वालं = द्वात्रिंशदङ्गुलं समचतुरस्रं वक्ष्यमाणमानादिसंस्कारसंस्कृतं गर्त्तं मिमीतेऽध्वर्युः। शम्यादानस्याप्राकृतकार्यार्थत्वान्न शम्याया आसादनप्रोक्षणे ॥१९॥

चात्वालस्य मानप्रकारमाह—

शम्यामुदीचीं निदधाति, पुरस्ताच्च ॥ २० ॥

उत्करात्पूर्वस्यां दिशि द्वात्रिंशदङ्गुलमन्तरालं मुक्त्वा उदगग्रां शम्यां निदध्यात्। निधानानन्तरं शम्यापूर्वपार्श्वे शम्याप्रमाणां रेखां स्फ्येन कुर्यात् तप्तायनी इति मन्त्रेण-इत्युत्तरसूत्रेण ( २२ ) संबन्धः। रेखातः पुरस्तात्पूर्वस्यां दिशि च शम्याप्रमाणमन्तरालं परित्यज्य उदगग्रामेव शम्यां निधाय तत्पूर्वतः शम्याप्रमाणां रेखां वित्तायनी मेऽसि इति मन्त्रेण कुर्यात् ॥२०॥

दक्षिणतः प्राचीमुत्तरतश्च ॥२१॥

पूर्वापररेखयोर्दक्षिणत उत्तरतश्च प्रागग्रां शम्यां निधाय स्फ्येन प्रागग्रां रेखां कुर्यात् अवतात् इति मन्त्रद्वयेन ॥ २१ ॥

स्फ्येनान्तर्लिखति "तप्तायनी"ति प्रतिमन्त्रम् ॥ २२ ॥

उक्तोऽर्थः ॥ २२ ॥

"विददेग्नि"रिति चात्वाले प्रहरति स्फ्येनान्वारब्धे ॥ २३ ॥

अध्वर्युमन्वारब्धवति यजमाने अध्वर्युश्चात्वाले स्फ्येन पुरीषखननार्थं प्रहारं कुर्यात् ॥ २३ ॥

"अग्ने अङ्गिर" इति पुरीषꣳ हरति हस्तेन च ॥ २४ ॥

अध्वर्युः खातां मृदं हस्तेन स्फ्येन च गृह्णीयात् ॥ २४ ॥

"योऽस्या"मिति निवपति पूर्वार्द्धे शङ्कुसहितम् ॥ २५ ॥

गृहीतं पुरीषं स्थण्डिलस्य पूर्वभागे प्राङ्निहितशङ्कुसंलग्नं प्रक्षिपेत् ॥ २५ ॥

अग्नीदुत्करवत्तूष्णीꣳ हृतम् ॥ २६ ॥

उद्धृतं पुरीषमग्नीत् उत्करवत् (२।६।२२) तूष्णीं हस्ताभ्यामवबाधेत ॥ २६ ॥

एवं द्विरपरं "द्वितीयस्यां तृतीयस्या"मिति विशेषः ॥ २७ ॥

यथा विददेग्निरिति प्रहरणाद्यारभ्य अभिन्यासान्तमेकवारं कृतम्, एवमपरं द्विर्वारं कर्त्तव्यम् । तत्र 'यो द्वितीयस्याम्' 'यस्तृतीयस्याम्' इति निवपनमन्त्रयोर्विशेषः ॥ २७ ॥

"अनुत्वे"ति चतुर्थं यथार्थमाहृत्य "सिꣳहसी"ति व्यूहत्युत्तरवेदिम् ॥२८॥

चतुर्थवारं यावता पुरीषेण उत्तरवेदिनिष्पत्तिरूपोऽर्थः सम्पन्नो भवेत् तावत्पुरीषं पात्रेण आनीय शङ्कुसमीपे प्रक्षिप्य सिꣳहसीति मन्त्रेण पुरीषं भूलंलग्नमेव हस्तेन सर्वतः प्रसार्य समीकरणेन उत्तरवेदिं निष्पादयेत् ॥ २८ ॥

शम्यामात्रीं वितृतीयामपरिमितां युगमात्रीं यजमानदशपद्यां वा ॥२९॥

वाशब्दः प्रत्येकमभिसंबध्यते । द्वात्रिंशदङ्गुलपरिमाण-शम्याप्रमाणां वा, (श०३।५।१।२४) वेदेस्तृतीयभागसम्मितां वा, युगप्रमाणां वा, यजमानस्य दशपदमितां वा उत्तरवेदिं (स्थण्डिलं) कुर्यात् । "षडशीतिर्युगम्" (का० शु० १।२०) इति षडशीतिरङ्गुलानि युगम् । "द्वादशाङ्गुलं पदम्" (का० श्रौ० १६।८।२१) इति क्षेत्रफलेन दशपदां, सर्वतो वा दशदशपदामिति पक्षद्वयं देवयाज्ञिकैरुक्तम् ॥ २९ ॥

सोमे वोत्तरे व्यपस्फुरणश्रुतेरसम्भवाच्च ॥३०॥

वाऽवधारणे । विकल्पपञ्चकमध्ये 'युगमात्रीम्' 'यजमानदशपद्यां वा' इति अन्तिमे द्वे उत्तरवेदिप्रमाणे सोमे एव वेदितव्ये, नात्र । कुतः ? "व्यपस्फुरेते वा एते वेदिश्चोत्तरवेदिश्च" इति व्यपस्फुरणश्रुतेः । व्यपस्फुरणं स्पर्धा । स्पर्धा च उत्तरवेदेः (स्थण्डिलस्य) अतिमहत्वादुपजायते । यत्र महावेदेरतिमहत्वं तत्रैव स्पर्द्धा युक्ता । यथा सोमे । इह तु तथात्वाभावात् षडरत्निप्रमाणया वेद्या सह उत्तरवेदेः स्पर्द्धाकरणाभावात् । अतश्च प्रमाणद्वयस्य निषिद्धत्वात् त्रीणि प्रमाणानीह भवन्ति । असम्भवाच्च । "उत्तरस्यां वेद्यामुत्तरवेदिं निवपति" (२।४।३।६) इति उत्तरवेद्याधारत्वेन वेदिः श्रुता । न हि षडरत्निपरिमिता वेदिः दशपद्याया उत्तरवेदेराधारो भवितुमर्हति । अतः अन्तिमद्वे वेदिप्रमाणे सोमे एव संभवतो नात्र ॥३०॥

मध्ये नाभिं करोति प्रादेशसमां चतुःस्रक्तिम् ॥३१॥

उत्तरवेदिमध्ये प्रादेशप्रमाणां चतुष्कोणामेकाङ्गुलोच्चां नाभिं कुर्यादध्वर्युः ॥३१॥

**प्रोक्षत्युत्तरवेदिꣳ, सिकताश्च प्रकिरति "सिꣳह्यसी"ति प्रतिमन्त्रम् ॥३२॥**

प्रकिरति प्रक्षिपति ॥ ३२ ॥

इति पञ्चमाध्याये तृतीया कण्डिका ॥३॥

---

**छन्ना वसति ॥१॥**

उत्तरवेदिं यज्ञियेन दर्भतृणकटवस्त्रादिना (१) आच्छादयेत्। छादनस्य उत्तरवेदि-संस्कारत्वादत्र प्रवृत्तिः। वसत्यर्थस्य तु सोमे एव प्रवृत्तिर्नात्र। सद्यः कालत्वाद्विकृतीनाम्। अतोऽत्र त्र्यहकालता नाद्रियते ॥ १ ॥

अग्न्योः प्रणयनप्रकारमाह—

[ सर्वस्याहवनीयस्य द्वयोर्वेद्योर्विभज्य प्रणयनं नेध्मेन ]

**प्रातः पञ्चगृहीतं गृहीत्वाऽग्नी प्रणयतीध्माभ्यामुपयम्य ॥२॥**

अत्रापि प्रातर्ग्रहणं ज्योतिष्टोमार्थमेव। सद्यस्कालत्वादस्य। पञ्चगृहीतं गृहीत्वा आदीप्ताविध्मौ सिकताभिर्गृहीत्वा वेदिद्वयेऽपि स्थापयेत्। अयं भावः। प्रकृतौ इष्ट्यर्थं गार्ह-पत्यात् आहवनीयादि प्रणीयते। तत्रैव प्रधानादि होमादिकमनुष्ठीयते। चातुर्मास्यादौ तु यत्र उत्तरवेदिर्विहिता तत्र दर्शवत् गार्हपत्यादेव उत्तरवेद्यर्थमग्निप्रणयनं केषांचित् सूत्रकारा-णामभिप्रेतम्। यथाहाऽऽपस्तम्बः (८।५।२२) "काले पशुवत् गार्हपत्यादग्नी प्रणयतः" इति। "अत्र पुनर्गार्हपत्यग्रहणं कल्पान्तरोक्तस्य अग्रेणाऽऽहवनीयं वेदिं कृत्वा आहवनीयात् प्रणय-नस्य निवृत्त्यर्थम्, 'इध्माभ्यामुपयम्य सर्वं वा विभज्य प्राकृतत्वात्' इति कात्यायनेन विभा-गस्य दर्शितत्वात्" इति तत्रत्यो व्याख्याकारः। कात्यायनस्य तु आहवनीयात्पूर्वमुत्तरवेदि-करणं विधाय ततः अग्न्योः प्रणयनं विदधतः आहवनीयादेव अग्न्योः उद्धृत्य प्रणयनमिति प्रतीयते।

इदं च प्रणयनं प्रकृतौ यद्यपि सूत्रकारेण स्पष्टतया नोक्तम्, तथापि "गार्हपत्यादाहव-नीयस्योद्धरणमनस्तमितानुदितयोः" (४।१३।२) इति अग्निहोत्रे उद्धरणविधानात् तेनैव प्रणयनमपि सिद्धम्। तदेवोद्धरणं दर्शपूर्णमासयोरपि वेदितव्यम्। एतच्च स्पष्टमाहाऽऽपस्तम्बः "अन्यमाहवनीयं प्रणयति" इति। सत्याषाढेन तु उद्धरणमेवोक्तं न प्रणयनम्। एवं च यैः सूत्रकारैरुद्धरणमात्रमुक्तं तत्र प्रणयनमर्थसिद्धमिति बोध्यम्।

इदं चाऽऽचाहवनीयात् प्रणयनं सशेषभूतम्। अर्थात् आहवनीये इध्मं निक्षिप्य तस्मिन् ज्वलति सति तमेव ज्वलन्तमिध्मं गृहीत्वा उत्तरवेद्यां स्थापयेत्। अतः अवशिष्टः आहवनी-योऽग्निरपादानभूतः स्वायतने अस्त्येवेति सशेषमिदं प्रणयनम् ॥२॥

एवं प्राप्त आह—

**सर्वं वा विभज्य प्राकृतत्वात् ॥ ३ ॥**

न इध्माभ्यां प्रणयनम्। सर्वमेवाहवनीयं गृहीत्वा तं द्वेधा विभज्य वेदिद्वये प्रणयनं

---

(१) यद्यप्यत्र 'छन्ना वसति' (५।४।१) इति सूत्रेण "सा छन्नैताꣳ रात्रिं वसति" (श० ब्रा० ३।५।१।२६) इति श्रुतिरनूद्यते। श्रुत्या च सोमयागे छादनं, रात्रौ वसतिश्च विधीयते। सैव चात्र विनियुज्यत इति कृत्वा रात्रिवसतिरपि प्राप्नोति। तथापि विकृतीनां सद्यस्कालत्वात् वसतेरसंभवात् छादनरूपसंस्कारमात्रमनेन विधीयते, न रात्रिवासः।

कर्त्तव्यम् । कुतः ? प्राकृतत्वात् । प्रकृतौ हि गार्हपत्यादाहवनीयमुद्धृत्य, उद्धृतस्य सर्वस्यैवाहवनीयस्य प्रणयनं कृतम् । अत्र तु आहवनीयात् प्रणयने कृते आहवनीयस्यांश उत्तरवेदिं गतः, अंशान्तरं तु स्वस्मिन्नेवायतने तिष्ठति इति लेशोऽत्र तु न प्राकृतं प्रणयनमिदं भवितुमर्हति। अत आयतनस्थितं सर्वमप्याहवनीयं गृहीत्वा द्वेधा विभज्य वेदिद्वये स्थापयेत् ॥३॥

पुनः प्रत्यवतिष्ठते पूर्वपक्षी—

**प्रणयनꣳ सोमाद्वाच्यत्वात् ॥ ४ ॥**

सौमिकमेवेदं प्रणयनम् । कुतः ? वाच्यत्वात् = अत्र विधीयमानत्वादित्यर्थः । सधर्मकं हि अत्र प्रणयनं विधीयते । यदि प्रकृतित एव अतिदेशतः प्रणयनमागच्छेत् तर्हि धर्मविधानमसङ्गतं स्यात् । सौमिकस्यैवात्र विधानमिति ॥४॥

एवं प्राप्त आह—

**प्रकृतेर्वाऽनामत्वात् ॥ ५ ॥**

प्राकृतमेवेदं प्रणयनम् । कुतः ? अनामत्वात् । प्रणयनशब्दस्य नामत्वाभावादित्यर्थः । अयं भावः । यदि प्राकृतमेव प्रणयनं स्यात् तदा प्रणयनधर्माणां सर्वेषामपि अत्र प्राप्तिर्भवेत् । सौमिकत्वे तु सोम-चातुर्मास्ययोः प्रकृतिविकृतिभावाभावात् प्रणयनस्य अपूर्वतया विधानेऽपि तद्धर्माणां प्राप्तिर्न भवेत् । नच प्रणयनपदस्यैव नामातिदेशविधया कुण्डपायिनामयने "मासमग्निहोत्रं जुहोति" ( २४।१३२ ) इत्यत्राग्निहोत्रशब्दवत् धर्मातिदेशकत्वमस्तु इति वाच्यम् । प्रणयनशब्दस्य प्रकृष्टनयनादिरूपार्थवाचकत्वेन नामत्वाभावात्; प्रायणीयोदयनीयशब्दवत् ॥ ५ ॥

यद्येवं प्रणयनस्य प्राकृतत्वे अतिदेशेनैव तस्य प्राप्तिसम्भवेन "द्वयोः प्रणयन्ति" ( ०५।२।८) इति किमर्थमत्र पुनर्विधानमित्यत आह—

**ग्रहणं गुणार्थमुत्तरवेद्यग्निविधानात् ॥ ६ ॥**

प्रणनस्य ग्रहणं गुणविधानार्थम् । "उत्तरवेदावग्निं निदधाति" इति विधानात् यत्रोत्तरवेदिस्तत्रैव प्रयणनस्य सौमिकत्वेन तद्भितत्र प्रणयननिवृत्त्यर्थं वचनमिदमित्यर्थः । असति हि अस्मिन् वचने अविशेषात् सर्वत्रैव चतुर्ष्वपि पर्वसु प्रणयनं प्राप्नुयात् । तन्मा भूत्, किन्तु द्वयोरेव पर्वणोरुत्तरवेदिमतोः प्रणयनं यथा स्यादित्येवमर्थम् ॥ ६ ॥

**आज्यप्रोक्षणीरुद्यम्याग्नी चाहा'ऽग्निभ्यां प्रह्रियमाणाभ्यामनुब्रू'हीत्येकस्फ्यया'ऽनूदेहीति' ॥ ७ ॥**

पञ्चगृहीतमाज्यम्, प्रोक्षणीर्लौकिका अपः, अग्नी च हस्तेनोद्यम्य अग्निभ्यामिति होतारं प्रेष्येदध्वर्युः । एकस्फ्ययेति प्रतिप्रस्थातारं प्रेष्यति । एकः स्फ्यः साधनमस्याः सेयमेकस्फ्या रेखा । तया युक्तस्त्वं पश्चादुच्छ । प्रतिप्रस्थाता स्फ्येन भूमौ रेखां कुर्वन्नग्निमुपगच्छतीति भावः । अयं रेखाकरणरूपः पदार्थः सौमिकः, न वारुणप्रघासिकः. तत्रैव ३ ५।२ २) विधानात् । अतस्तादर्थ्यात्प्रैषाऽप्ययं सोमे एव भवति, नात्र । तत्र विहितस्य अत्र पुनरुपदेशो वेद्युपनिवपनान्तानां पदार्थानामतिदेशार्थः ॥७॥

**त्रिरुक्तायां यथावेदि हरणम् ॥ ८ ॥**

होत्रा प्रथमायामृचि त्रिरुक्तायां सत्यां स्वस्ववेदिं प्रति अग्न्योर्हरणं कुरुतोऽध्वर्युप्रतिप्रस्थातारौ ॥८॥

**प्रतिप्रस्थाता स्फ्येन लिखत्यावेदिश्रोणेरुत्तरवेदेर्वा ॥ ९ ॥**

प्रतिप्रस्थाता स्फ्येन आहवनीयादारभ्य दक्षिणं वेदिश्रोणिं यावत्, उत्तरवेदिपर्यन्तं वा रेखां कुर्यात्। इदं रेखाकरणं सोमे एव नात्रेत्युक्तं प्राक् ॥९॥

**वेद्यन्तरे स्थित्वोदङ्ङुत्तरवेदिं प्रोक्षती"न्द्रघोषस्त्वे"ति प्रतिमन्त्रं प्रतिदिशं यथालिङ्गम् ॥१०॥**

वेदिद्वयमध्ये स्थित्वा उदङ्मुखोऽध्वर्युश्चतुर्भिर्मन्त्रैर्यथालिङ्गमुत्तरवेदिं प्रोक्षेत् ॥१०॥

**दक्षिणांससहितं बहिर्वेदि शेषं निषिञ्चती"दमहं तप्तं वा"रित्यमुमभिचरन् ॥११॥**

प्रोक्षणशेषमुदकं दक्षिणांससंलग्नमेव वेदिर्बहिःप्रदेशे ( अग्निकोणे ) निनयेत्। तत्र इदमहं तप्तं वारमुं बाह्वर्दा यक्षान्निःसृजामीति मन्त्रं पठेदभिचरन्नध्वर्युः। अमुमित्यस्य स्थाने अभिचर्यमाणस्य द्वितीयान्तं नामाऽऽदिशेत्। कर्मबलेन परस्य पीडनमभिचारः ॥११॥

**नाभ्याः श्रोण्यर्ठ०सेषु पञ्चगृहीतं जुहोत्यक्ष्णया दक्षिणेऽंसे श्रोण्याᳫ श्रोण्यामर्ठ०से मध्ये च हिरण्यं पश्य"न्त्सिᳫह्यसी"ति प्रतिमन्त्रम् ॥१२॥**

अध्वर्युरुत्तरवेदेरुत्तरत उपविश्य नाभ्याः श्रोणिद्वये अंसद्वये मध्ये च निहितं सुवर्णं विलोकयन् अक्ष्णया = कौटिल्येन तत् पञ्चगृहीतमाज्यं जुहुयात्। तत्क्रममाह—आदौ नाभेर्दक्षिणेऽंसे, तत उत्तरश्रोण्याम्, ततो दक्षिणश्रोण्याम्, तत उत्तरेंऽसे, ततो मध्ये इति ॥१२॥

**"भूतेभ्यस्त्वे"ति स्रुचमुद्गृह्णाति ॥१३॥**

होमार्थं नीचैः कृतां स्रुचमूर्ध्वां करोति ॥१३॥

**नाभिं पैतुदारवैः परिदधाति पूर्ववद् "ध्रुवोऽसी"ति प्रतिमन्त्रम् ॥१४॥**

देवदारुवृक्षजैः प्रादेशमात्रैः परिधिभिर्मध्यमदक्षिणोत्तरेषु नाभिं परिदध्यात् ॥१४॥

**"अग्नेः पुरीष"मिति निवपति गुग्गुलु-सुगन्धितेजन-वृष्णेस्तुकाश्चोपरि शीर्षण्या अभावेऽन्याः ॥१५॥**

नाभेरुपरि गुग्गुल्वादीन्निदध्यात्। सुगन्धितेजनं रोहितः। वृष्णेर्मेषस्य स्तुकाः रोमाणि। ताश्च शीर्षणि भवाः। तदभावे अशीर्षण्या अन्यस्मिन्मेषस्य शरीरप्रदेशे जाता इत्यर्थः ॥१५॥

**तेष्वग्निं निदधाति ॥ १६ ॥**

तेषु सम्भारेषु अग्निः स्थापनीयः ॥ १६ ॥

**उद्धतावोक्षिते दक्षिणम् ॥ १७ ॥**

प्रतिप्रस्थाता पञ्चभूसंस्कारवति प्रदेशे दक्षिणमग्निं स्थापयेत्। पैतुदारवादयः सूत्रे उक्ता अपि नात्र निवपनीयाः। तेषां ज्योतिष्टोमिकाग्नेरङ्गत्वेन तत्रैव विहितत्वात्। अत्र च उत्तरवेदिमात्रविधानात्। अत्र पाठस्तु इतरेषां पदार्थानामतिदेशलाघवार्थः। तेन पैतुदारवादि सम्भारनिवपनान्तमत्र न भवति। उत्तरवेदिमात्रविधानात् ॥ १७ ॥

**उपयमनीरुपनिवपति ॥ १८ ॥**

अग्नेरुपयमने उपयुक्ताः सिकताः अग्निसमीपे अग्नेर्नीचैः प्रक्षिपेत् ॥ १८ ॥

प्रणीताद्यतः ॥ १९ ॥

प्रणीत आहवनीयो यस्य कर्मण आदौ तदादि भवति । तच्च अग्न्यन्वाधानम् । अतो-ऽस्मात्परमग्न्यन्वाधानादि भवतीत्यर्थः ॥ १९ ॥

व्रतोपायनं वाऽकृतं चेत् ॥ २० ॥

व्रतोपायनं ब्रह्मवरणादीनां क्रियमाणानां पदार्थानामङ्गम् । ( तदानीमेव ब्रह्मवरणादीनां सावधानेन करणं भवतीति दृष्टार्थता व्रतोपायनस्य) तस्य यत्र प्रकृतौ अनेके काला विहिताः तत्र ब्रह्मवरणात्पूर्वमप्येकः कालः । अस्मिन्पक्षे वरणादिष्वपकृष्यमाणेषु अङ्गत्वादपकृष्यत एव । अपकृष्टत्वाच्च ब्रह्मवरणात्पूर्वमेव कृतं भवेत् । पक्षान्तरावलम्बनेन यदि तदा न कृतं, तदा इदानीं कर्त्तव्यमिति सूत्रार्थः । ब्रह्मवरणादिषु अपकृष्यमाणेषु तदङ्गस्य व्रतोपायनस्याप्यपकृष्यमाण-त्वात् यदि व्रतोपायनं न कृतं, तदा अग्निनिधानानन्तरं तत्कृत्वा कर्त्तव्यम् ॥ २० ॥

नित्येभ्योऽधिकान्यैन्द्राग्नः, पयस्ये, वारुणी, मारुती, काय एककपालः ॥२१॥

नित्येभ्यः पूर्वमुक्तेभ्यः (५, २, १०) आग्नेयादिभ्यः पञ्चभ्य अधिकानि एतानि हवींषि वरुणप्रघासेषु भवन्ति । ऐन्द्राग्नो द्वादशकपालः, वारुणी मारुती च पयस्या क्रमेणाध्वर्युप्रतिप्रस्थात्रोः । काय एककपालः पुरोडाश इति । क-शब्दोऽकारान्तः । को देवता अस्येति कायः ॥ २१ ॥

नानाऽऽज्यनिर्वपणम् ॥ २२ ॥

आज्यनिर्वापः पृथक्पृथगुभयोर्भवति ॥ २२ ॥

दक्षिणं प्रतिप्रस्थातुः ॥ २३ ॥

निर्वापे अधिश्रयणे च प्रतिप्रस्थातुराज्यं दक्षिणतः. अध्वर्योरुत्तरतो भवेत् ॥२३॥

ध्रुवायाः पुरस्तात्पृषदाज्यमाज्यं दधिमिश्रं पञ्चगृहीतं "ज्योतिरसी"ति समिदन्तेन ॥ २४ ॥

जुहूपभृतोराज्यं गृहीत्वा ध्रौवाज्यग्रहणात्प्राक् पृषदाज्यं पञ्चगृहीतं गृह्णीयात् । दधिमिश्रमाज्यं पृषदाज्यमुच्यते ॥ २४ ॥

अनुयाजार्थꣳ सर्वत्र ॥ २५ ॥

एतत्पृषदाज्यग्रहणमनुयाजार्थं सर्वत्र पश्वादौ भवति । अतः (१) पृषदाज्येनाऽनुयाजा अनुष्ठेया इति भावः ॥ २५ ॥

औपभृतासादनम् ॥ २६ ॥

अस्य पृषदाज्यस्य उपभृत्संबन्ध्यासादनं भवति । घृताच्यस्युपभृन्नाम्नेति मन्त्रे-णेत्यर्थः ॥ २६ ॥

"प्रियेण धाम्ने"ति वाऽविशेषोपदेशात् ॥ २७ ॥

अथवा प्रियेण धाम्नेति मन्त्रेण पृषदाज्यस्यासादनं कर्त्तव्यम् । कुतः ? अविशेषेणोपदे-शात् । "प्रियेण धाम्नेति यदन्यद्धविः" (श० १।३।४।१४) इति अविशेषेणाऽयं मन्त्र उपदिश्यते । अतः प्रियेण धाम्नेत्ययमेव मन्त्रः पृषदाज्यासादने ॥ २७ ॥

---

(१) एतच्च पृषदाज्यं पात्रान्तरे स्थापनीयम् । तस्य च पात्रान्तरस्य नोपभृत्स्थानापत्तिः । अतो नोपभृद्धर्माणामत्र प्रवृत्तिः । प्रकृतौ हि उपभृति विहिता धर्मा उपभृत्स्वरूपमुद्दिश्यैव विहिताः, न अनुयाजा-ज्यधारणमुद्दिश्य । अतश्च अस्य पात्रस्य अनुयाजाज्यधारकत्वेऽपि उपभृद्रूपत्वाभावात् न तद्धर्माणां प्राप्तिः ।

**उत्तरं वाऽपरकालत्वात् ॥ २८ ॥**

पृषदाज्यग्रहणं ध्रुवात उत्तरं वा भवति । कुतः ? अपरकालत्वात् । ध्रौवाज्यविनियोगात्पश्चात्पृषदाज्यस्यानुयाजेषूपयोगः । अत उपयोगक्रमेण ध्रौवग्रहणादनन्तरं वा पृषदाज्यग्रहणम् ।

एतच्च शङ्कामात्रं, न सिद्धान्तः । वचनाभावेन 'प्रकृतिवद्विकृतिः कर्त्तव्या' इति न्यायस्य बाधायोगात् । न हि प्रकृतौ अनुयाजार्थमाज्यं ध्रुवात उत्तरं गृहीतं, किन्तु पूर्वमेव । अतो ध्रुवायाम् पूर्वमेव ग्राह्यम् ॥ २८ ॥

**प्रतिप्रस्थाता च ॥२९॥**

प्रतिप्रस्थातापि पृषदाज्यं गृह्णीयात् ॥२९॥

**न वा ॥ ३० ॥**

अथवा प्रतिप्रस्थाता पृषदाज्यं न गृह्णीयात् ॥३०॥

**प्रणीता-पत्नीसन्नहना-ऽग्निमन्थना-ऽऽश्रुत-प्रत्याश्रुत-प्रैष-यजमानवाचन-होतृषदन-वरण-प्राशित्रा-ऽङ्गुलिपर्वाञ्जना-ऽवान्तरेडाभागा-ऽपराग्न्य-वभृथान्न प्रतिप्रस्थाता ॥३१॥**

प्रणीतादीन्प्रतिप्रस्थाता न कुर्यात् ॥३१॥

**कृतानुकरोऽन्यत्र दक्षिणस्याम् ॥३२॥**

उक्तेभ्यः प्रणीतादिभ्योऽन्येषु पदार्थेषु दक्षिणस्यां वेदौ प्रतिप्रस्थाता अध्वर्युणा प्रथमं कृतस्य पदार्थस्य केवलमनुकर्त्तैव भवेत् । ३२॥

**वाजिने निषिच्य ॥३३॥**

यथास्वं द्वयोः पयस्ययोर्वाजिने पृथक्पात्रयोरवस्थापयेत् ॥३३॥

इति पञ्चमाध्याये चतुर्थी कण्डिका ॥ ४ ॥

---

**उभयोः करीराण्यावपति शमीपलाशमिश्राणि ॥१॥**

द्वयोः पयस्ययोर्मध्ये शमीपत्रमिश्रितानि करीरफलानि प्रक्षिपेत् । तानि च शतसङ्ख्यानीति सत्याषाढः ॥ १ ॥

**मेषमिथुनं च ॥२॥**

मेषमेष्योर्युग्मं च पयस्ययोः क्षिपेत् ॥ २ ॥

**मारुत्यां मेषम् ॥३॥**

अध्वर्युर्मारुत्यां पयस्यायां मेषमवदध्यात् । परिशेषात् प्रतिप्रस्थाता वारुण्यां पयस्यायां मेषीं स्थापयेत् ॥३॥

**सर्वाणि हवीᳯ᳭ष्युत्तरस्यामासादयति, मारुतीᳯ᳭ सहाज्यां प्रतिप्रस्थाता दक्षिणस्याम् ॥४॥**

अध्वर्युर्मारुतो-करम्भपात्रवर्जितानि सर्वाण्याग्नेयादीनि हवींषि उत्तरवेदावासादयेत् । प्रतिप्रस्थाता आज्यस्थालीसहितां मारुतीं पयस्यां दक्षिणवेद्यामासादयेत् ॥ ४ ॥

**सम्मार्जनाय प्रेषितेऽसम्मृष्टे प्रतिप्रस्थाता पत्नीमानेष्यन्नाह केन चरसीति ॥ ५ ॥**

**सᳯंस्तुतानाचष्टे ॥ ६ ॥**

भर्तृव्यतिरेकेण ये सङ्गता जारास्तान् पत्नी ब्रूयात् एतावन्तो मे जारा इति ॥ ६ ॥

**तृणानि चोद्गृह्णाति प्रतिसᳯंस्तुतम् ॥ ७ ॥**

यदि लज्जावशात् जारान्न कथयति तदा प्रतिजारमेकैकं तृणोद्ग्रहणं कार्यम् ॥ ७ ॥

**अनाख्यातमहितं ज्ञातिभ्य ( श० २।५।२।२०) इति श्रुतेः ॥ ८ ॥**

जारसङ्गतिरूपं पापं पत्न्या अकथितं सत् स्वबन्धुभ्योऽनिष्टकारि भवति। अतः पत्न्या जारकथनं तृणग्रहणं वाऽवश्यं कर्त्तव्यम् ॥ ८ ॥

**आख्याते "प्रघासिन" इत्येनां वाचयति नयन् ॥ ९ ॥**

पत्न्या असौ मे जार इति प्रतिवचने दत्ते, तृणोद्ग्रहणे वा कृते, अथवा 'भर्तृव्यतिरिक्तेन न केनापि चरामि' इति कथिते सति प्रघासिन इति मन्त्रं प्रतिप्रस्थाता पत्नीं वाचयेत् ॥ ९ ॥

**करम्भ-पात्राणि जुहोति शूर्पेण मूर्द्धनि कृत्वा दक्षिणेऽग्नौ प्रत्यङ्मुखी, जायापती वा, दक्षिणेनाहृत्य तीर्थेन पूर्वेण, वेदिमपरेण वा "यद् ग्राम" इति ॥१०॥**

पत्नी प्रत्यङ्मुखी स्थिता सती मस्तकस्योपरि शूर्पं निधाय शूर्पेण जुहूस्थानापन्नेन दक्षिणेऽग्नौ यवपिष्टमयानि करम्भपात्राणि जुहुयात्। अथवा पत्नीयजमानौ जुहुतो, नैकाकिनी पत्नी। अस्मिन्पक्षे यजमानेन पत्न्या अन्वारम्भः कार्यः। पत्नी च हवनार्थं ब्रह्मयजमानयोरुत्तरतः अग्नेर्दक्षिणेन गच्छेत्। तां नयन् प्रतिप्रस्थाता तु ब्रह्मयजमानयोर्दक्षिणेनैव गच्छेत्। ततो द्वावपि उभयोराहवनीययोः पूर्वतोऽप्रदक्षिणं गत्वा तीर्थेन चात्वालोत्करयोर्मध्येन प्रविश्य उत्तरवेदिचात्वालयोरन्तरालेन उत्तरवेदेः पूर्वतो गत्वा दक्षिणस्याग्नेः पुरस्तादागच्छेताम्। अथवा तीर्थप्रवेशनानन्तरमुत्तरवेदेः पश्चिमतो गत्वा वेद्योरन्तरालेन दक्षिणस्याग्नेः पुरस्तादागच्छेताम्। आगत्य च पत्नी जुहुयात् ॥ १० ॥

**"मोषूण" इति यजमानो जपति ॥ ११ ॥**

**"अक्रन्कर्म" त्येनां वाचयति प्रतिनयन् ॥ १२ ॥**

प्रतिप्रस्थाता एनां पत्नीं करम्भपात्रहोमदेशात् स्वस्थानं प्रति येन मार्गेण पत्नी पूर्वमागता तेनैव मार्गेण नयन् अक्रन्कर्मेति वाचयेत्। प्रतिप्रस्थाता स्वयमपि अग्नेर्यजमानस्य ब्रह्मणश्च दक्षिणत एव गच्छेद्। बहिरङ्गत्वात्। होमार्थं गमने पत्न्या हविर्ग्राहित्वेन हविषश्च यजमानापेक्षया अन्तरङ्गत्वेन अग्नियजमानयोर्मध्येन गमनम्। परावर्त्तने तु तदभावेन, स्वरूपतो यजमानापेक्षया बहिरङ्गत्वेन च यजमानाद्बहिरेव गमनमिति विशेषः ॥१२॥

**आगते सम्मार्जनाद्याज्यभागाभ्याम् ॥१३॥**

पत्नीं स्थाने प्रापयित्वा प्रतिप्रस्थातरि स्ववेदिं प्रत्यागते सति उभयोरग्न्योः सम्मार्जनादि आज्यभागान्तं पृथक् पृथगुभाभ्यामनुष्ठेयम् ॥१३॥

**स्रुक्पाणिरास्ते प्रतिप्रस्थाता ॥१४॥**

आज्यभागानन्तरं प्रतिप्रस्थाता जुहूपभृतौ हस्ते कृत्वा उपविशेत् ॥१४॥

हविर्भिश्चरति ॥१५॥

अध्वर्युराग्नेयादिभिरैन्द्राग्नपर्यन्तैर्हविर्भिः क्रमेण यागाननुतिष्ठेत् ॥१५॥

पयस्याप्रचरणकाले मेषौ व्यतिहरतः ॥१६॥

पयस्यानुष्ठानकाले समागते पूर्वं मारुत्यां निहितं मेषं वारुण्यां पयस्यायां स्थापयेदध्वर्युः। प्रतिप्रस्थाता तु वारुण्यां निहितां मेषीं मारुत्यां स्थापयेत् ॥१६॥

अन्यतरेणावदानेन सह मेषम् ॥१७॥

अध्वर्युर्द्वितीयेन प्रथमेन वा पयस्यावदानेन सह कृत्स्नं मेषं जुह्वां स्थापयेत् ॥१७॥

सव्येन स्रुचौ गृहीत्वा, प्रतिप्रस्थातुर्वासो दक्षिणेन, मरुद्भ्योऽनुवाचयति ॥१८॥

वारुणीयागानन्तरमध्वर्युः सव्येन हस्तेन स्रुचौ गृहीत्वा, दक्षिणहस्तेन प्रतिप्रस्थातुः प्रसारितवस्त्रस्यापरं प्रान्तमन्वारभ्य 'मरुद्भ्योऽनुब्रूहि' इति अनुवाचयेत् ॥१८॥

वारुणीवदवदानम् ॥१९॥

प्रतिप्रस्थाता प्रथमेन द्वितीयेन वाऽवदानेन सह मेषीं स्रुचि अवदध्यात् ॥१९॥

हविर्भिश्चरित उभौ स्विष्टकृत्प्रभृति ॥२०॥

आग्नेयादिकायान्तैः सर्वैर्हविर्भिरध्वर्युणाऽनुष्ठिते सति अध्वर्युप्रतिप्रस्थातारौ स्विष्टकृत्प्रभृति कर्म कुरुतः ॥२०॥

इडामवदाय प्रतिप्रस्थात्रे ॥२१॥

अध्वर्युरिडामवदाय प्रतिप्रस्थात्रे समर्पयति ॥२१॥

तत्र प्रतिप्रस्थाता मारुत्याः ॥२२॥

प्रतिप्रस्थाता तस्यामेवेडायां मारुत्याः पयस्याया द्विरवद्येत् ॥२२॥

स्रुचौ व्यूहतोऽध्वर्यू ॥२३॥

अध्वर्युप्रतिप्रस्थातारौ स्रुचौ व्यूहतः। अध्वर्युग्रहणं यजमानव्युदासार्थम् ॥२३॥

समासिच्य वाजिनभक्षः ॥२४॥

वाजिनयागं यथास्वं कृत्वा वाजिनशेषौ एकत्र कृत्वा तन्त्रेण वाजिनभक्षः कर्त्तव्यः ॥२४॥

अध्वर्युविकारात्प्रतिप्रस्थाता भक्षेषु ॥२५॥

अध्वर्युकर्मकुर्वन्नध्वर्युविकार इत्युच्यते प्रतिप्रस्थाता। सोऽपि पश्विडादिभक्षेषु अधिकारी भवति ॥२५॥

मैत्रावरुणश्च होत्रध्वर्युविकारात् ॥२६॥

मैत्रावरुणश्च होत्रध्वर्युकर्म कुर्वन् उभयविकारत्वात् भक्षेष्वधिकारी भवति। होतारं पुरोऽनुवाक्यानुवचनेन विकरोति, प्रैषेण चाध्वर्युम् ॥२६॥

समिष्टयजूꣳषि तूष्णीं दक्षिणस्याम् ॥२७॥

प्रतिप्रस्थाता जुहोति ॥२७॥

[अवभृथेष्टिः]

**वारुणीनिष्काषेणावभृथम् ॥२८॥**

पयस्यापचनकाले तापवशादधःस्थालीतललग्नः पयस्याशेषो निष्काशः । वारुण्या निष्काषेण ( हविषा ) अवभृथं कर्तुमपः प्रतियन्ति ॥२८॥

**तूष्णीमेत्याऽभ्यवेत्य मज्जय"त्यवभृथे"ति ॥२६॥**

तूष्णीमेत्य इति सोमावभृथे विहितस्य सामगानस्य (का० श्रौ० १०।६।७) प्रतिषेधः। तूष्णीमेव गृहादपः प्रत्यागत्य अपः प्रविश्य निष्काषस्थालीं जलमध्ये मज्जयेत् ॥२६॥

**जायापती स्नातोऽमज्जन्तौ ॥३०॥**

पत्नीयजमानौ जलमध्ये शिरसः प्रवेशनमकुर्वन्तौ स्नानमाचरेताम् ॥३०॥

**अन्योन्यस्य पृष्ठे धावतः ॥३१॥**

तौ जायापती परस्परं पृष्ठमद्भिः प्रक्षालयतः ॥३१॥

**अन्ये वाससी परिदधाते ॥३२॥**

**पूर्वे दद्यादधिकृतेभ्यो यस्मा इच्छेत् ॥३३॥**

पूर्वे पत्नीयजमानाभ्यां परिहिते वाससी वृतेभ्य ऋत्विग्भ्यो यस्मै कस्मैचिद् दातुमिच्छेत्तस्मै एकस्मै ऋत्विजे दद्यात् ॥३३॥

**यथेतमेत्याहवनीये समिदाधानं "देवानाᳬ समिदसी"ति ॥३४॥**

यथागतमेत्य चात्वालोत्करावन्तरेणेति ॥३४॥

**पत्नी च गार्हपत्ये तूष्णीम् ॥३५॥**

समिदाधानं कुर्यात् ॥३५॥

**धेनुर्दक्षिणाऽश्वः, षड् वा, दश वा ॥३६॥**

अस्य वरुणप्रघासकर्मणः सवत्सा गौः, अश्वो वा, षड् गावो वा, दश गावो वा दक्षिणा भवन्ति ॥३६॥

इति पञ्चमाध्याये पञ्चमी कण्डिका ॥५॥

---

[ साकमेधाख्यं तृतीयं पर्व ]

**कार्त्तिक्याᳬ साकमेधा द्व्यहम् ॥ १ ॥**

कार्त्तिक्यां पौर्णमास्यां तत्पूर्वदिने च इति द्व्यहं साकमेधाः कार्याः ॥१॥

[ अनीकवतीष्टिः ]

**पूर्वेद्युः पूर्वाह्णेऽग्नयेऽनीकवते पुरोडाशः ॥ २ ॥**

चतुर्दश्यां पूर्वाह्णे अग्नयेऽनीकवतेऽष्टाकपालः पुरोडाशः कार्यः ॥२॥

[ सान्तपनीयेष्टिः ]

**मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरुः ॥ ३ ॥**

**समिष्टयजुरन्तं भवति ॥ ४ ॥**

सान्तपनीयं कर्म समिष्टयजुरन्तं भवति ॥४॥

**बर्हिरनुप्रहरणवर्जं वा ॥ ५ ॥**

अथवा बर्हिर्होममात्रं वर्जयित्वा अन्यत्सर्वं कर्मापवर्गान्तं कर्त्तव्यम् ॥५॥

[ गृहमेधीयेष्टिः ]

**इध्मस्थाने शकलपरिधि निधाय मरुद्भ्यो गृहमेधिभ्यः सायं चरुः पयसि ॥६॥**

इध्मकार्ये शकलान् परिधींश्च प्राकृतान् आसाद्य मरुद्भ्यो गृहमेधिभ्योऽपराह्णे पयसि चरुः कार्यः ॥ ६ ॥

[ चरुश्रपणसाधनपयसि न सर्वे सान्नाय्यधर्माः, किं तु वाचनिका एव ]

गृहमेधीयहविःश्रपणार्थे पयसि सान्नाय्यधर्मा वत्सापाकरणादय अनुष्ठेया उत न ? इति संशये पूर्वपक्षयति—

**सान्नाय्यवत् ॥ ७ ॥**

तत्पयः सान्नाय्यधर्मविशिष्टं भवति । कुतः ? सान्नाय्यधर्माणामत्रापि श्रवणात् । एवं च सान्नाय्यस्य प्रदेयत्वेन हविष्ट्वात् अस्यापि हविष्ट्वमङ्गीकृत्य तदीयधर्मा वत्सापाकरणदोहनादय अत्र प्राप्नुवन्ति इति पूर्वपक्षाशयः ॥ ७ ॥

एवं पूर्वपक्षे प्राप्ते आह—

**तूष्णीं वा ॥ ८ ॥**

न सान्नाय्यधर्मा अत्राऽनुष्ठेयाः; किन्तु तूष्णीमेव पयः सम्पादनीयम् । अयं भावः । प्रकृतौ हि 'ऐन्द्रं पय' (का० श्रौ० ४।२।१०) इत्यादिना पयसः साक्षादेव प्रदेयत्वं श्रुतम् । अत्र च "पयसि चरुः श्रपयति" ( श० २।४।४।१४ ) इत्यादिना श्रपणाधिकरणत्वमेव विधीयते, न तु प्रदेयत्वम् । अतश्च प्रदेयत्वाभावेन हविष्ट्वाभावात् न प्रदेयधर्मा वत्सापाकरणादयः किन्तु प्रणीतास्विव प्रणीताधर्माः प्रणयनोत्पादनादयोऽत्र भवन्ति ॥ ८ ॥

तत्रैव हेत्वन्तरमाह—

**एकचोदनाच्च ॥ ९ ॥**

एक एवायं विधिरित्यर्थः । "मरुद्भ्यो गृहमेधिभ्यः पयसि चरुः" (श० २।४।४।४ ) इति । अयं भावः । अनेन विधिना एक एव यागो विधीयते । स च यागद्वयविकृतिः कथं भवेत् । अर्थात् चरुदेवताकत्वात् अनेकदेवताकत्वाच्च अग्नीषोमीयविकृतित्वमङ्गीकर्त्तव्यम् । यदि पयसोऽपि प्रदेयत्वमङ्गीक्रियते तर्हि सान्नाय्यविकृतित्वमप्यापततीति नैकस्य यागस्य एकविधिविहितस्य उभयविकृतित्वं भवितुमर्हतीति ॥ ९ ॥

**श्रपयित्वाऽभिघार्योद्वास्य शरावयोरुद्धरति पात्र्योर्वा ॥ १० ॥**

उद्वासितं चरुं द्वेधा विभज्य शरावयोः (१) पात्र्योर्वा उद्धरेदध्वर्युः श्रपयित्वा अभिघार्य ॥ १० ॥

**आसेचने मध्ये कृत्वा सर्पिरासिञ्चत्याज्यार्थम् ॥ ११ ॥**

---

(१) अत्र च शरावयोरपि उपस्तरणं कर्त्तव्यम् "अथ द्वे पिशीले" (श० ब्रा० २।५।३।६) इत्यनेन निर्णेजनरूपसम्मार्गस्य पिशीलयोरपि प्राप्तस्य अन्याऽनुवादात् । न ह्युपस्तरणादीनामसङ्गानां पिशीलयोरप्राप्तौ तन्मध्यपतितनिर्णेजनस्य पिशीलगतत्वेन अनुवादः सङ्गच्छते । अयं च संमार्गो गृहमेधीयहविराधारभूतस्य पिशीलकस्यैव भवति, न सौविष्टकृतस्य । तस्य प्रधानयागोपयुक्तहविःसंस्कारकत्वेन तदङ्गत्वात् स्वातन्त्र्येण धर्मप्रयोजकत्वानुपपत्तेः । अत एव च पशुयागे पृथक् गृह्यमाणानां स्विष्टकृदर्थहविषां स्वातन्त्र्येण अभिघारणादिप्रयोजकत्वं न भवति इति कृत्वा न तेषां तत्र करणम् ।

आसिच्यते प्रक्षिप्यते घृतमस्मिन्नित्यासेचनं गर्त्तः। शरावस्थयोः पात्रीस्थयोर्वा ओदनयोर्मध्ये घृतासेकार्थं गर्तौ कृत्वा तत्र आज्यभागोपस्तरणाद्याज्यकार्यार्थं संस्कृतं सर्पि रासिञ्चेत् ॥ ११ ॥

याबदुक्तमतः ॥१२॥

यतः प्रकृतितः अतिदेशेन प्राप्स्यमानावपि आज्यभागौ पुनर्विधीयेते, अतः कारणात् आज्यभागातिरिक्तं सर्वमप्यारादुपकारकजातं निवर्त्तते। यथा—कुक्कुटाहनन-स्फ्योद्-कप्रहार-ऽऽघार-प्रयाजानुयाज-पत्नीसंयाज-दक्षिणाग्निहोम-पूर्णपात्र-ब्राह्मणतर्पण-कर्मापवर्गादि-कम्। द्रव्यसंस्कार-प्रतिपत्ती तु भवत एव ॥ १२ ॥

स्तरणयजुषा वेदिमभिमृश्य तूष्णीं वा कृतत्वात्परिधिपरिधानम् ॥ १३ ॥

स्तरणमन्त्रेण वेदिं स्पृष्ट्वा अथवा कृतत्वात्तूष्णीमेव वेदिं स्पृष्ट्वा मन्त्रेण परिधिपरिधानं कर्त्तव्यम् ॥ १३ ॥

शकलान्याधाय मत्योद्धृतावासादयति ॥ १४ ॥

इच्छासङ्ख्यानि शकलानि आहवनीये आधाय उद्धृतावोदनौ वेद्यामासादयेत् ॥१४॥

स्रुक्स्रुवं च संमार्ष्ट्यनुद्वास्य वा सम्मार्जनम् ॥ १५ ॥

वाऽवधारणे। चरुमनुद्वास्यैव प्राकृते काले एव पात्राणां संमार्गः ॥ १५ ॥

आज्यभागाभ्यां चरत्याग्नेयं दक्षिणात्सौम्यमुत्तरात् ॥ १६ ॥

दक्षिणौदनस्थगर्त्ताच्चतुराज्यमवदायाऽऽग्नेयमाज्यभागं कुर्यात्। उत्तरौदनस्थगर्त्ता-श्चतुराज्यमवदाय सौम्यमाज्यभागं कुर्यात् ॥ १६ ॥

गृहमेधि-स्विष्टकृतौ चाज्यभागवत्समावदानौ ॥१७॥

आज्यभागवदिति दक्षिणादेकः, अपर उत्तरात्। समावदानाविति। उभयोर्ध्र्यवदानं, नैकप्रत्यवायं स्विष्टकृत (का० श्रौ० १।६।८) इति ॥१७॥

अप्रत्यभिधारणं च ॥१८॥

क्षताभ्यङ्गोऽत्र न भवति ॥ १८ ॥

स्थालीपक्षमाह—

अनुद्धृत्य वा सहितमाज्यमधिश्रयति ॥ १९ ॥

शरावयोः पात्र्योर्वा अनुद्धृत्यैव आसादनादि स्विष्टकृदन्तं कार्यम्। तत्रापि आहवनीय-श्रपिणश्चरुसंलग्नमेवाज्यमाहवनीयेऽधिश्रयेत् ॥ १९ ॥

उद्वास्योभयमासादयति ॥ २० ॥

चरुमभिघार्योद्वास्य आज्यस्थालीं चरुं चेत्युभयं वेद्यामासादयेत्। अत्राज्यस्थाली ध्रुवार्थे वर्त्तते। अतो ध्रुवाकार्यापन्नाया आज्यस्थाल्या आज्यनिर्वापकाले तत्सम्मार्गः क्रियते ॥ २० ॥

न प्राशित्रमिडान्तं भवति ॥ २१ ॥

गृहमेधीयायां पक्षद्वयेऽपि प्राशित्रं न कार्यम्। गृहमेधीयं कर्मेडान्तं भवति। इडान्तता च पूर्वया इडया इति वक्ष्यते (७।५।२२) ॥ २१ ॥

पूर्वे मार्जनमुपहूय ॥ २२ ॥

पूर्वे पक्षे इडामुपहूय प्रथमं मार्जनं, ततो भक्षणं कार्यम् ॥ २२ ॥

प्राश्नन्ति युक्ताः ॥ २३ ॥

इडां प्राश्नन्त्यृत्विजः युक्तग्रहणं यजमानव्युदासार्थम् ॥ २३ ॥

यजमानगृह्या हविरुच्छिष्टाशा ऋत्विजो ब्राह्मणाश्चान्ये बहुश्चेत् ॥ २४ ॥

बहुश्चेदोदनो भवति तदा कृतोपनयना यजमानगृह्याः, ऋत्विजः, अन्ये ब्राह्मणाश्च ओदनं प्राश्नीयुः ॥ २४ ॥

अरिक्ताꣳ स्थालीं निदधाति ॥ २५ ॥

सशेषां स्थालीमपिधाय सुगुप्ते देशे निदध्यात् ॥ २५ ॥

सान्तपनीयाꣳ सꣳस्थाप्य ॥ २६ ॥

गृहमेधीयाशेषसमाप्त्यनन्तरं सान्तपनीयामिष्टिं समाप्य वक्ष्यमाणं कर्म कुर्यात् ॥२६॥

प्रातर्वा शेषभावात् ॥ २७ ॥

वाऽवधारणे। प्रातः पौर्णमास्यामेव दर्विहोमानन्तरं सान्तपनीयां समापयेत्; नेदानीम्। कुतः। शेषभावात्। गृहमेधीयाशेषस्य दर्विहोमस्य विद्यमानत्वात्। तस्मात्प्रातः समाप्तिः ॥ २७ ॥

मातृभिर्वत्सान्त्सꣳसृज्य निवान्या वत्सं बध्नाति ॥ २८ ॥

गृहमेधीयसमाप्त्यनन्तरं गोभिः सह वत्सान् संयोज्य निवान्याया गोर्वत्सं बध्नाति। स्वयं नष्टवत्सा परकीयेण ( ला० ५।१।१२ )। अग्निहोत्रहोमार्थमप्यस्यां रात्रौ पयो न दोग्धव्यमिति द्रव्यान्तरं विधत्तेवत्सेन या गौर्दुह्यते सा निवान्येत्युच्यते ॥ २८ ॥

यवाग्वाऽग्निहोत्रहोमः ॥ २९ ॥

तस्यां रात्रौ यवाग्वा सायंप्रातरग्निहोत्रहोमः कर्त्तव्यः ॥ २९ ॥

प्रातर्हुत्वाऽहुत्वा वा स्थाल्या दर्व्याऽऽदत्ते "पूर्णा दर्वी"ति ॥ ३० ॥

पूर्णिमायां प्रातरग्निहोत्रं हुत्वा अहुत्वा वा सशेषाया गृहमेधीयचरुस्थाल्याः सकाशात्पूर्णा दर्वीति मन्त्रेण दर्व्या ओदनं गृह्णीयात्। अत्र दर्विहोमे होममात्रं भवति, न यजतयः। "परतन्त्रोत्पत्तय" ( ६।१०।२८ ) इति वक्ष्यमाणत्वात् ॥ ३० ॥

ऋषभमाह्वयितवै ब्रूयात् ॥ ३१ ॥

ऋषभो यथा शब्दं करोति तथाऽऽह्वाने प्रयत्नं कुरु इति प्रैषार्थः ॥ ३१ ॥

रुते जुहोति ॥ ३२ ॥

ऋषभे कृतशब्दे सति दर्व्या जुहुयात् ॥ ३२ ॥

अव्याहरति ब्रह्मा जुहुधीत्याह ॥ ३३ ॥

ऋषभे शब्दमकुर्वति सति ब्रह्मा 'जुहुधि' इति ब्रूयात् ॥ ३३ ॥

"देहि म" इति जुहोति ॥ ३४ ॥

दर्व्या गृहीतमोदनं देहि म इति जुहुयात् ॥ ३४ ॥

ऋषभो दक्षिणा ॥ ३५ ॥

यस्य ऋषभस्य रुते हवनं कृतं तमृषभमध्वर्यवे दद्यात् ॥ ३५ ॥

इति कात्यायनकृतश्रौतसूत्रे षष्ठी कण्डिका ॥६॥

[ क्रैडनीष्टिः समानतन्त्रा आदित्येष्टिश्च ]

**मरुद्भ्यः क्रीडिभ्यः सप्तकपालः ॥ १ ॥**

**अदित्यै चरुरन्यत्रापि ॥ २ ॥**

यत्र आदित्यश्चरुरिति श्रूयते तत्रापि अदितेरेव देवतात्वं नादित्यस्येत्यन्यत्रापीत्यस्यार्थः ॥ २ ॥

"अयमेवाङ् प्राण आदित्येष्टिः" ( श० ११।५।२४ ) इति पृथगङ्गसंस्तुत्या, आदित्येष्टिः इति च व्यपदेशादभिन्नतन्त्रत्वे प्राप्ते आह—

**समानबर्हिषी वा कालकर्मैकत्वात् ॥ ३ ॥**

क्रैडनीष्टिः आदित्येष्टिश्च समानतन्त्रे भवतः । कुतः ? कालकर्मैकत्वात् । एकस्मिन्नेव काले द्वयोर्विधानात् , प्रयाजादेः कर्मणः समानत्वाच्च ॥ ३ ॥

[ महाहविरिष्टिः ]

**महाहविरुदवसाय निर्मथ्य ॥ ४ ॥**

अरण्योरग्नी समारोप्य निर्मथ्य महाहविः कर्त्तव्यम् ॥ ४ ॥

**पूर्वेद्युर्वा ॥ ५ ॥**

पूर्वेद्युः साकमेधारम्भे एव समारोपमन्थने कर्त्तव्ये, न महाहविरिष्ट्यर्थं पृथक् समारोपमन्थने कार्ये । "उदवसायैव ह्येतेन यजेत" (श०२।५।२।४८) इति श्रुतेः । अनीकवत्त्वादित्रैयम्बकान्तस्य एकस्य पर्वण आदौ समारोपविधानात् पूर्वेद्युरेव समारोपो मन्थनं च । एतेन साकमेधेन पर्वणा इत्यर्थः ॥ ५ ॥

**नित्येभ्योऽधिकान्यैन्द्राग्नो, माहेन्द्रश्चरु, वैश्वकर्मण एककपालः ॥ ६ ॥**

ऐन्द्राग्नो द्वादशकपालः पुरोडाशः ॥ ६ ॥

**उत्तरवेद्यग्निप्रणयन-मन्थन-पृषदाज्यं च वरुणप्रघासवत् ॥७॥**

महाहविषि उत्तरवेदिकरणम्, अग्निप्रणयनम्, मन्थनम् , पृषदाज्यं च वरुणप्रघासवत्कर्त्तव्यम् ॥ ७ ॥

**ऋषभो दक्षिणा ॥ ८ ॥**

महाहविरिष्टेः ॥ ८ ॥

इति पञ्चमाध्याये सप्तमी कण्डिका ॥७॥

---

[ पित्र्येष्टिः ]

**पितृयज्ञ उपांशु चरणम् ॥ १ ॥**

पित्र्येष्ट्यां सर्वं प्रैषादिकमुपांशु कर्त्तव्यम् ॥ १ ॥

**पुरस्तादुपचारः ॥ २ ॥**

"उत्तरत उपचारो यज्ञः" ( का० श्रौ० १।८।२६ ) इति यद्यदुत्तरतः क्रियते प्रस्तरवरणादिकं, तत्सर्वमाहवनीयस्य पुरस्तात्कर्त्तव्यम् । पित्र्यत्वाद्दक्षिणामुखे कर्मणि दक्षिणा प्राची

बोध्या। पश्चिमा च दक्षिणा, उत्तरा च पश्चिमा, प्राची चोत्तरा इति दिग्विपर्यासोऽनेन सूत्रेण ज्ञाप्यते ॥ २ ॥

ब्रह्मयजमानयोश्च ॥ ३ ॥

ब्रह्मयजमानयोरपि पुरस्तादुपचारो भवति। अतो दक्षिणाग्नेः पुरस्तात्प्राच्यां दिशि ब्रह्मयजमानौ प्रत्यङ्मुखावुपविशेताम् ॥ ३ ॥

पूर्ववद्वा ॥ ४ ॥

अथवा ब्रह्मयजमानौ प्रकृतिवद् दक्षिणाग्नेर्दक्षिणस्यां ( अपरस्याम् ) दिशि प्राङ्मुखावुपविशेताम् ॥ ४ ॥

अपत्नीकः ॥ ५ ॥

यजमान एकाकी भूत्वा पितृयज्ञं कुर्यात्। अतः "पत्नीᳪ सन्नह्य" ( का० २। ) इति प्रैषः, सन्नहनं च न भवति। आज्यावेक्षणं तु आज्यसंस्कारादध्वर्युः करोत्येव ॥ ५ ॥

दक्षिणाग्निराहवनीयवत् ॥ ६ ॥

आहवनीये यत् क्रियते तत्सर्वं दक्षिणाग्नौ कर्त्तव्यम्। वत्युपदेशाद्दक्षिणाग्निविहितं च सर्वमन्वाहार्याधिश्रयणाद्याहवनीये एव भवति 'भुव' इति (का० श्रौ० २५।१।६) नैमित्तिकहोम कर्म चात्रैव भवति। ॥ ६ ॥

पूर्वेणाहवनीयं प्रणीताः परिहरति ॥ ७ ॥

गार्हपत्यस्य पुरस्ताद्दक्षिणाग्रं चमसं निधायाऽऽलभ्य दक्षिणाग्नेः पुरस्तान्निधानार्थं पूर्वेणाहवनीयं प्रणीताः नयेत् ॥ ७ ॥

अर्थवच्च ॥ ८ ॥

अर्थवत् स्रुक्स्रुवादिकमपि पूर्वेणाहवनीयं दक्षिणां वेदिं प्रति नयेत् ॥ ८ ॥

पितृभ्यः सोमवद्भ्यः षट्कपालः ॥ ९ ॥

पक्षान्तरमाह—

सोमाय वा पितृमते ॥ १० ॥

षट्कपालः पुरोडाशो भवति ॥ १० ॥

पितृभ्यो बर्हिषद्भ्यो धानाः ॥ ११ ॥

द्वितीयं हविर्भवति ॥ ११ ।

पितृभ्योऽग्निष्वात्तेभ्यो मन्थः ॥ १२ ॥

मन्थः = क्षीरसंयुतो धानासक्तुस्तृतीयं हविर्भवति ॥ १२ ॥

चतुर्वा ग्रहणम् ॥ १३ ॥

वाऽवधारणे। पित्र्यत्वात्सकृद्ग्रहणे प्राप्ते चतुर्ग्रहणं कार्यमित्युच्यते, ॥ १३ ॥

गार्हपत्यस्य पुरस्तादवहननपेषणे ॥ १४ ॥

कर्त्तव्ये ॥ १४ ॥

दक्षिणार्द्धे कपालोपधानम् ॥ १५ ॥

गार्हपत्यस्य दक्षिणार्द्धे षट् कपालान्युपदध्यात् ॥ १५ ॥

धानाभर्जनं दक्षिणाग्नौ ॥ १६ ॥

श्रपणपेषण-विपर्यासेऽपि धर्माः ॥ १७ ॥

धानानां श्रपणपेषणयोर्विपर्यासेऽपि प्राकृता धर्मा मन्त्रेणाऽधिश्रयण-पर्यग्निकरण-कृष्णाजिनास्तरण-दृषदुपलादानादयो भवन्ति। यतो धर्माः प्रधानायत्ताः। क्रमस्तु गुणभूतः। अतः प्रधानभूतधर्मपरित्यागो न युक्तः। पुरोडाशादौ आदौ पेषणं, ततः श्रपणमिति क्रमः। धानानां तु आदौ श्रपणं ततः पेषणमिति क्रमः। एवं श्रपणपेषणयोर्विपर्यासे तद्धर्मा न भवन्तीत्याशङ्कानिवृत्यर्थमिदं सूत्रम् ॥ १७ ॥

अभिमृश्याधाः पिष्ट्वा निवान्या दुग्धे सक्नन्मथित एकशलाकया मन्थः ॥१८॥

श्रृताश्रृतसंविदर्थं पुरोडाशमभिमृश्य अर्धा धानाः पिष्ट्वा तत्र निवान्यायाः ( स्वयं नष्टवत्सायाः परकीयेण वत्सेन दुह्यमानायाः ) गोर्दुग्धे प्रक्षिप्ते एकशलाकया एकवारमेवाप्रदक्षिणं विलोडितो मन्थो भवति ॥ १८ ॥

अग्रहणं मन्थस्य ततोऽर्द्धाः पिंष्ठन्तीति श्रुतेः ॥ १६ ॥

अग्निष्वात्तोद्देशेन पृथक् स्वतन्त्रचतुर्मुष्टिकग्रहणं मन्थस्य न भवति। कुतः। "अथ पितृभ्यो बर्हिषद्भ्योऽन्वाहार्यपचने धानाः कुर्वन्ति ततोऽर्धाः पिंषन्ति" ( श० २।६।१।५ ) इति श्रुतेः। बर्हिषद्भ्यो गृहीतानामेव मध्यादर्धानां पेषणस्य विधानात्तदर्थं पृथग्ग्रहणं न कार्यम् ॥ १६ ॥

एवं प्राप्त आह—

ग्रहणं वा चोदितत्वात् ॥ २० ॥

वाऽवधारणे। ग्रहणं मन्थस्य भवति। कुतः—"अथ पितृभ्योऽग्निष्वात्तेभ्यो निवान्यायै दुग्धे सकृदुपमथित एकशलाकया मन्थो भवति" ( श० २।५।२।६ ) इति श्रुत्या अवहननश्रपणयोः सहैव क्रियमाणत्वात् तावत्पर्यन्तं न विभागः। अनन्तरं मन्थसम्पत्तये प्रकृतितः प्राप्तस्य समविभागस्यानुवादः 'अर्धाः पिंषन्ति' इति। नत्वेताकता चोदकप्राप्तस्य पृथग्विहितहविषोऽर्थे ग्रहणस्याभावो भवितुमर्हति। तस्मान्मन्थार्थं ग्रहणं कर्त्तव्यमेव ॥ २० ॥

दक्षिणेन दक्षिणाग्निं परिवृतमुदग्द्वारं, तन्मध्ये वेदिं करोत्यवान्तर-दिक्स्रक्तिमाप्त्यान्ते ॥२१॥

आस्येभ्यः पात्र्यङ्गुलिप्रक्षालननिनयनान्ते कृते दक्षिणाग्नेर्दक्षिणस्यां दिशि अर्थात्परिमाणमुदग्द्वारं समचतुरस्रं समन्तात्कट-पटादिनाऽऽवृतं कृत्वा परिवृतस्य मध्ये दर्शपौर्णमासिकीं वेदिम् अवान्तरदिक्कोणकां कुर्यादध्वर्युः ॥ २१ ॥

दक्षिणाग्निं मध्येऽस्याः करोति ॥ २२ ॥

अस्या वेदेर्गर्भे दक्षिणाग्निं कर्परादिनाऽऽनीय स्थापयेत्। अत्रैवाऽन्वाहार्याधिश्रयणम्॥२२॥

प्रणीतानुहरणं ब्रह्मयजमानौ चानुगच्छतः॥ २३ ॥

दक्षिणाग्नौ नीयमाने प्रणीतानामपि नयनं कार्यम् । ब्रह्मयजमानावपि नीयमानं दक्षिणाग्निमनुगच्छेताम् ॥ २३ ॥

स्फ्यादानादि करोति ॥ २४ ॥

"देवस्य त्वेति स्फ्यमादाय सतृणम्" ( का० श्रौ० २।६।६ ) इत्यादिकर्म अध्वर्युः कुर्यात् ॥ २४ ॥

**यज्ञोपवीत्याज्यग्रहणे ॥ २५ ॥**

अध्वर्युर्यज्ञोपवीती भूत्वाऽऽज्यानि गृह्णीयात्। अन्यत्सर्वं पित्र्यत्वात्प्राचीनावीती कुर्यात् ॥ २५ ॥

**द्विर्वोपभृति ॥ २६ ॥**

उपभृति द्वौ स्रुवौ वा, अष्टौ स्रुवान् वा आज्यं गृह्णीयात् ॥ २६ ॥

**प्रागग्रन्थि बर्हिः ॥ २७ ॥**

बर्हिः प्रागग्रन्थ्येव वेद्यां निदध्यात्, न दिग्विपर्ययवशेन दक्षिणग्रन्थ्यासादयेत् ॥२७॥

**विस्रꣳस्य यूनं चाग्रे गृहीत्वा त्रिः स्तृणन्नग्निं पर्येति ॥ २८ ॥**

बर्हिर्विस्रंस्य सन्नहनं च विस्रंस्य उभयमग्रे गृहीत्वा वेदिं वायव्यकोणादारभ्य स्तृणन् त्रिवारमप्रदक्षिणमग्निं परिक्रामत्यध्वर्युः ॥ २८ ॥

**प्रस्तरमात्रꣳ शिष्ट्वा तावत्प्रतिपर्येति ॥ २९ ॥**

प्रस्तरमात्रं बर्हिः परिशेष्य त्रिः प्रदक्षिणं परिक्रामेत् ॥ २९ ॥

**तꣳ स्तृणात्यविधृतिम् ॥ ३० ॥**

तं प्रस्तरं विधृत्योरन्तराले निधानं विनैव दक्षिणाग्रं निदध्यात् ॥ ३० ॥

**प्राक्सꣳस्थꣳ हविरासादनम् ॥ ३१ ॥**

तथा सत्युदक्संस्थं सम्पद्यते। दिग्विपर्ययेण प्राच्या उदीच्यत्वात् ॥ ३१ ॥

**सामिधेनीप्रैषाद्याज्यभागाभ्यां यज्ञोपवीतिनः सर्वे ॥३२॥**

"अग्नये समिध्यमानायानुब्रूहि" ( का० ३।१।१ ) इति सामिधेनीप्रैषमारभ्य आज्यभागपर्यन्तं सर्वे सयजमाना ऋत्विजो यज्ञोपवीतिनो भवेयुः ॥ ३२ ॥

**पश्चात्परीतो ब्रह्मयजमानौ पुरस्तादग्नीत् ॥ ३३ ॥**

ब्रह्मा यजमानश्च दक्षिणाग्नेर्दक्षिणमार्गेण पश्चिमपार्श्वे परिक्रम्य गच्छतः। अग्नीत्तु पश्चिमपार्श्वाद् दक्षिणपार्श्वेन गत्वा दक्षिणाग्नेः पूर्वस्यां दिशि परिक्रम्य गच्छेत् ॥ ३३ ॥

**आश्राव्य सीद होतरित्येव ब्रूयात् ॥ ३४ ॥**

आश्रावणं कृत्वा 'सीद होतः' इत्येव ब्रूयात्, "न अग्निर्देवो दैव्यो होता" (३।२।७) इति प्राकृतम् ॥३४॥

**अपबर्हिषः प्रयाजा अनुयाजाश्च ॥ ३५ ॥**

बर्हिर्वर्जिताश्चत्वारः प्रयाजाः कार्याः। अनुयाजा अपि बर्हिर्वर्जिताः कार्याः। अतो द्वावनुयाजौ कुर्यादिति ॥ ३५ ॥

**असमानयनं वा बर्हिः संयोगात् ॥ ३६ ॥**

अत्र "चतुर्थे प्रयाजे समानयनम्"(३।२।२१) इति विहितं समानयनं न भवति। कुतः ? तस्य बर्हिः संयोगात्। "चतुर्थे प्रयाजे समानयति बर्हिषि" ( श०१।५।३।१६) इति। अथवा समानयनं भवति। समानयनस्य चतुर्थसंयोगात्। "चतुर्थे प्रयाजे समानयति" (श० १।५।३।१६) इति। बर्हिषीत्यनुवाद एव। बर्हिःप्रयाजस्य चतुर्थत्वात्। अतः समानयनं भवत्येवेति कर्कः ॥३६॥

इति पञ्चमाध्याये अष्टमी कण्डिका ॥ ८ ॥

प्रत्यगत्तीत्य जुहोति ॥ १ ॥

अध्वर्युः स्रुचावादाय प्रतीच्यां दिश्यतिक्रम्य प्रयाजाननुयाजांश्च जुहोति ॥ १ ॥

हविर्भिश्चरिष्यन्तः प्रतिविपर्य्यन्ति ॥ २ ॥

आज्यभागानन्तरं हविःप्रचारं करिष्यन्तो ब्रह्मयजमानाग्नीध्राः यत्र पूर्वमुपविष्टास्तत्रैव प्रत्यागच्छन्ति । यदि सामिधेनीप्रैषादौ विपर्ययः कृतः ॥ २ ॥

सर्वेभ्योऽवद्यति यथापूर्वꣳ सोमवद्भ्यो मध्यात्सकृत् सकृत्सहाऽवदधाति ॥३॥

सोमवद्भ्यः पितृभ्योऽर्थे सर्वेषां हविषां मध्यप्रदेशात् एकैकमवदानं निर्वापक्रमेण प्रथमं पुरोडाशात्, ततो धानाभ्यः, ततो मन्थात् गोकर्णाकृतिश्रुतावदानेनावद्यति । अवदाय च त्रीण्यप्यवदानानि सहैव जुह्वां निदध्यादध्वर्युः ॥ ३ ॥

द्विरभिघारणमनतिक्रमणं च ॥ ४ ॥

अवदाय उपरिष्टाद् द्विरभिघारयेत् । यजतिस्थाने नातिक्रामेच्च ॥ ४ ॥

सोमवद्भ्य एवायमवदानप्रकारो मा भूत् इत्याह—

सोमाय वा पितृमते ॥ ५ ॥

अथवा सोमाय पितृमते एव अवदानं कर्त्तव्यम् ॥ ५ ॥

एवं बर्हिषद्भ्य उत्तरतो धाना-मन्थ-पुरोडाशानाम् ॥ ६ ॥

अनेनैव प्रकारेण पितृभ्यो बर्हिषद्भ्योऽर्थे सर्वेषां हविषामुत्तरप्रदेशात् एकैकमवदानं प्रथमं धानाभ्यः, ततो मन्थात्, ततः पुरोडाशात् अवदाय त्रीण्यप्यवदानानि सहैव जुह्वां निदध्यात्, द्विरभिघारयेत्, अतिक्रमणं च न कुर्यात् ॥ ६ ॥

अग्निष्वात्तेभ्यो दक्षिणतो मन्थ-पुरोडाश-धानानाम् ॥ ७ ॥

पितृभ्योऽग्निष्वात्तेभ्योऽर्थे सर्वेषां हविषां दक्षिणप्रदेशात् आदौ मन्थात्, ततः पुरोडाशात्, ततो धानाभ्य इति क्रमेण अवदाय सहैव जुह्वां निधाय द्विरभिघारयेत्, अतिक्रमणं च न कुर्यात् ॥ ७ ॥

पुरस्तादग्नये कव्यवाहनाय यथापूर्वꣳ स स्विष्टकृत् ॥ ८ ॥

अग्नये कव्यवाहनाय सर्वेषां हविषां पूर्वप्रदेशात् एकैकमवदानं निर्वापक्रमेणाऽवदाय सहैव जुह्वां निदध्यात् । अनतिक्रमणं च । सोऽयं कव्यवाहनयाग एवात्र स्विष्टकृद्यागः । अत एतद्व्यतिरिक्तः पृथक् स्विष्टकृद्यागो न कार्य इति भावः ॥ ८ ॥

ओꣳ स्वधेत्यस्तु स्वधेति वाऽऽश्रुतप्रत्याश्रुते, स्वधा नम इति वषट्कारः ॥ ९ ॥

वा विकल्पे । प्रधानयागे स्विष्टकृद्यागे च ओश्रावय इत्यस्य स्थाने ओꣳ स्वधा इति वा प्रयोक्तव्यम् । अस्तु श्रौषट् इत्यस्य स्थाने अस्तु स्वधा इति वा प्रयुञ्जीत । वौषट् इत्यस्य स्थाने स्वधा नम इति वा प्रयोग इति ॥ ९ ॥

मन्थमुपहूय होताऽध्वर्युर्ब्रह्माग्नीदवघ्रायं निदधाति ॥१०॥

इडानिगदेन मन्थमुपहूय आघ्राय स्थापयेयुः । यजमानस्य तु अविहितत्वादवघ्राणमपि न भवन्ति । अस्मिन्पक्षे एतावदेव कार्यं, न प्राशित्रं, नेडा, न षडवत्तादि इति ॥१०॥

पक्षान्तरमाह—

प्राशित्रमवदायेडां वा सर्वे प्राश्नन्ति वा ॥ ११ ॥

अथवा प्रकृतिवदेव प्राशित्रम् इडां चावदाय उपहूय अवघ्राय निदधति, न मन्थोपहवं तदवघ्राणं च कुर्वन्ति । अस्मिन्पक्षे इडाप्राशित्रयोरवघ्राणमेव, न प्राशनम् । प्राशनपक्षमप्याह—अथवा इडां प्राशित्रं चावदाय सर्वे ऋत्विग्यजमानाः प्रकृतिवत् प्राश्नीयुः ॥ ११ ॥

वेदिं त्रिः परिषिञ्चत्युदपात्रेणाध्वर्युर्यजमानो वा ॥ १२ ॥

अप्रदक्षिणं परिषेकः ॥ १२ ॥

स्रक्तिषु पित्रवनेजनं परिषिच्य परिषिच्य पूर्ववदुत्तरापरस्यां प्रथमम् ॥१३॥

वेदिं त्रिः परिषिञ्चतीत्युक्तं, तत्र प्रतिपरिषेकं परिषिच्य परिषिच्य वेदिकोणेषु पितृपितामहप्रपितामहानामवनेजनं करोति । पूर्ववदित्यनेन "असाववनेनिक्ष्वेति यजमानस्य पितृप्रभृति त्रीन्" (का० ४।१।१०) इति, "उदपात्रेणावनेजयत्यपसव्यम्" (का० ४।१।६) इति च लभ्यते । तत्र प्रथमं वायव्यकोणे, ततोऽप्रादक्षिण्येन दक्षिणापरस्याम्, पूर्वदक्षिणस्यां च ॥ १३ ॥

सव्ये समवदाय सर्वेभ्यो यथावनिक्तं पिण्डान्ददात्यसावेतत्त इति ॥१४॥

अवनेज्य सर्वेभ्यो हविर्भ्यः सव्ये पाणौ समवदाय मिश्रीकृत्य त्रीन् पिण्डान् यथावनिक्तं क्रमेण दद्यात् ॥ १४ ॥

उत्तरपूर्वस्यां पाणी निमृष्टे "ऽत्र पितर" इति ॥१५॥

ईशानकोणस्रक्त्यां हस्तगतं लेपं निर्मार्ष्टि ॥ १५ ॥

यज्ञोपवीतिनः सर्वे निष्क्रम्योदञ्चो "ऽत्तन्नमीमदन्ते" त्याहवनीयमुपतिष्ठन्ते द्वाभ्याम् ॥ १६ ॥

निष्क्रम्य परिवृतादित्यर्थः ॥ १६ ॥

"मनो न्वाह्वामह" इति गार्हपत्यं तिसृभिः ॥१७॥

उपतिष्ठन्ते ॥ १७ ॥

प्राचीनावीनी प्रविश्या "ऽमीमदन्तेति" दाता जपति ॥ १८ ॥

उपस्थानानन्तरं सर्वेऽप्यसव्यं कृत्वा परिवृतं प्रविशेयुः । प्रविश्य च पिण्डदाताऽमीमदन्तेति जपेत् ॥ १८ ॥

अवनेज्य पूर्ववत्प्रदक्षिणम् ॥ १९ ॥

पूर्ववत्परिषिच्य परिषिच्य प्रदक्षिणं परिषेकः ॥ १९ ॥

नीवीं विस्रंस्य "नमो व" इत्यञ्जलिं करोति षड् वा नमस्कारान् ॥२०॥

नमो व इति मन्त्रेण एकमञ्जलिं करोति । अथवा षट् नमस्कारान् = नमस्कारार्थान् षडञ्जलीन् कुर्यात् नमो व इति षड्भिर्मन्त्रैः । अञ्जलयश्च नमस्कारार्थत्वात् पुटाः कार्याः ॥ २० ॥

"गृहान्नः पितरो दत्ते" ति च ॥ २१ ॥

जपति ॥२१॥

ब्रह्माऽऽमन्त्रणादि प्राक्स्रुग्व्यूहनात्प्रयाजवत् ॥ २२ ॥

"ब्रह्मन्प्रस्थास्यामि" (का० श्रौ० ३।५।१) इति ब्रह्मामन्त्रणम्। तस्य यदादौ तदादि, उल्मुकसमासादीत्यर्थः। उल्मुकसमासमारभ्य स्रुग्व्यूहनात्प्राक् प्रयाजवत् कुर्युः। प्रयाजवदिति वतिना यज्ञोपवीतं देशगमनं च ब्रह्मयजमानयोरतिदिश्यते ॥२२॥

एवं प्राप्त आह—

यज्ञोपवीतिविपर्ययम् ॥ २३ ॥

स्रुग्व्यूहनादारभ्य पित्र्यत्वात्कर्मणः प्राचीनावीतित्वमेव भवति, न देशविपर्ययोऽविहितत्वात्। शंय्वन्तता च पूर्वया शंय्वन्ततया इति वक्ष्यते (७।५।२२) ॥२३॥

न प्रस्तरमादत्ते ॥ २४ ॥

'सञ्ज्ञानाथाम्' (का० ३।६।४) इति प्रस्तरादानकाले प्रस्तरं न गृह्णाति ॥२४॥

अनुप्रहरेत्युक्ते न किञ्चनानुप्रहरति ॥ २५ ॥

'अनुप्रहर' (३।६।१३) इति अग्नीधा उक्ते अध्वर्युः अग्निमध्ये न किमपि प्रक्षिपति ॥२५॥

तूष्णीमात्मानꣳ० सꣳस्पृशति ॥ २६ ॥

उपस्पृश्य परिधीन्नानुप्रहरति ॥ २७ ॥

तूष्णीं परिधीन् स्पृष्ट्वाऽग्नौ न प्रक्षिपेत् ॥२७॥

शंय्वन्तं भवति ॥ २८ ॥

एतत्कर्म ॥२८॥

बर्हिः परिध्यग्नौ प्रास्यति ॥ २९ ॥

बर्हिर्होमकाले बर्हिः परिधींश्चाग्नौ प्रक्षिपेत् ॥२९॥

हविरुच्छिष्टं च ॥ ३० ॥

अवशिष्टं पुरोडाशधानामन्थरूपं, ध्रौवं च सर्वमग्नौ प्रक्षिपेत् ॥३०॥

अप्सु प्राश्यं वा ॥ ३१ ॥

अथवा अप्सु सर्वं क्षिपेत्। अथवा ऋत्विग्भिरेव सर्वं प्राशनीयम् ॥३१॥

इति पञ्चमाध्याये नवमी कण्डिका ॥ ९ ॥



त्रैयम्बकान्निर्वपति रौद्रानेककपालान् यावन्तो यजमानगृह्या एकाधिकान् ॥१॥

त्रैयम्बका इति वक्ष्यमाणकर्मणो नामधेयम् ॥ १ ॥

चतुरो वा ॥ २ ॥

द्विप्रजैकप्रजाप्रजानां चतुरो वा पुरोडाशान्निर्वपेत् करम्भपात्रवत् (५।३।५) ॥ २ ॥

उदङ्मुखः सर्वम् ॥ ३ ॥

देशांश्च ॥ ४ ॥

आखूत्कर-चतुष्पथ-स्थाणुवृक्ष-वंशादीन् उदङ् प्रतिपद्यते ॥ ४ ॥

जुहोतयोऽवषट्कारान् ॥५॥

त्रैयम्बका जुहोतयो, न यजतयः। अत एव तान् त्रैयम्बकान् अवषट्कारान् प्रतीयात् ॥ ५ ॥

अक्तान्वा ॥ ६ ॥

एतान्पुरोडाशानक्तान् अनक्तान्वा कुर्यात् ॥ ६ ॥

पात्र्यां कृत्वा दक्षिणाग्न्युल्मुकमादाय चतुष्पथे पलाशपत्रमध्यमेन होमः ॥७॥

पुरोडाशान् पात्र्यां निधाय दक्षिणाग्न्युल्मुकमादाय चतुष्पथे गत्वा तत्रोल्मुकं संस्थाप्य तत्र पलाशपत्राणां यन्मध्यमं, तेन जुहूस्थानीयेन होमः कर्त्तव्यः ॥ ७ ॥

सर्वेषामवदानानि सकृत्सकृदतिरिक्तवर्जम् ॥ ८ ॥

मध्यमे पलाशपत्रे रौद्राणां पुरोडाशानामुत्तरार्द्धात् सकृदवदानं कर्त्तव्यम्। अतिरिक्तं तु नावद्येत् ॥ ८ ॥

अक्तेषु मिश्रणम् ॥ ९ ॥

अक्तान्वेति प्राणदानविकल्पः प्रागुक्तः (६)। तत्र प्राणदानपक्षे मिश्रणम् = उपस्तरणम्-अभिघारणं च भवति। प्राणदानाभावपक्षेतु न। मिश्रणशब्देनोपस्तरणाभिघारणे उच्येते। 'यस्ते प्राण' (का० २।८।१४) इति मन्त्रेण पुरोडाशाञ्जनं प्राणदानमुच्यते ॥ ९ ॥

"एष त" इति जुहोति ॥ १० ॥

पुरोडाशान् पलाशपत्रेण मध्यमेन जुहुयात् ॥ १० ॥

अतिरिक्तमाखूत्कर उपकिर"त्येषत" इति ॥११॥

अतिरिक्तं रौद्रं पुरोडाशं मूषकैरुत्कीर्णे पांसुराशौ उपगूहति पांसुभिरन्तर्हितं करोति ॥११॥

आगम्या"ऽव रुद्रमदीमही"ति जपन्ति ॥ १२ ॥

अग्निं त्रिः परियन्ति पितृवत्सव्योरूनाघ्नाना"त्र्यम्बक"मिति ॥१३॥

सर्वेऽप्रदक्षिणं दक्षिणेन पाणिना सव्यानूरूँस्ताडयन्तः परियन्ति ॥ १३ ॥

देववच्चैतेनैव दक्षिणानाघ्नानाः ॥ १४ ॥

एतेन पूर्वेणैव त्र्यम्बकमन्त्रेण दक्षिणानूरून्दक्षिणेन कुट्टयन्तो देववत् प्रदक्षिणं परीयुः ॥१४॥

कुमार्यश्चोत्तरेणोभयत्र पतिकामा भगकामा वा ॥१५॥

यजमानस्यापरिणीताः कुमार्यः पतिं कामयमानाः सौभाग्यकामा वा पितृवद् देववच्च द्वितीयेन त्र्यम्बकमन्त्रेण परीयुः ॥ १५ ॥

रौद्रान्यजमानोऽञ्जलिनोदस्यत्यगोः प्रापणम् ॥ १६ ॥

हुतावशिष्टान् रौद्रान्पुरोडाशान् यजमानोऽञ्जलिना तथा ऊर्ध्वं निःक्षिपेत्, यथा क्षिप्तान् गौर्न प्राप्नुयात्। अन्तरिक्षादधः पतत एनान् यजमान एव हस्ताभ्यां गृह्णीयात् ॥ १६ ॥

किन्तु—

प्रतिगृह्णात्येनान, शक्य उपस्पर्शनम् ॥१७॥

अशक्ये अन्तरिक्षात्पततो ग्रहणे भूमौ पतितानुपस्पृशेत् ॥ १७ ॥

**मूतयोः कृत्वा वेणुयष्ट्यां कुपे वाऽऽसज्योभयतः स्थाणु-वृक्ष-वंश-वल्मीकानामन्यतमस्मिन्नुत्क्षेपणवदासज"त्येतत्त" इति ॥ १८ ॥**

यत्र तृणमये आवपने धान्यं बध्यते तन्मूतम्। वेणुनिर्मितभाजनद्वययुक्तो दण्डविशेषो वीवधापरपर्यायः कुपः। तान् पुरोडाशान् शिक्याकाररज्ज्वा निर्मितयोरारोप्य वेणुयष्ट्याम्=यज्ञियवृक्षजे तुलादण्डे कुपे वा तौ मूतौ उभयतः प्रान्तयोर्बध्वा स्थाणौ वा वल्मीके वा एतत्त इति मन्त्रेण उत्क्षेपणवदगोः प्रापणं देशमवलगयति ॥ १८ ॥

**"कृत्तिवासा" इति ॥१९॥**

मन्त्रमात्रोपदेशात् क्रियाया अनिर्दिष्टत्वात् तन्निश्चलीकरणमात्रक्रियाऽत्र द्रष्टव्या। "निष्वापयत्येवैनमेतत् स्वपन्तु हि न कश्चन हिनस्ति" ( श० २।६।२।१७ ) इति वाक्यशेषात्। अतः कृत्तिवासा इति मन्त्रेण आसक्तान् निश्चलीकुर्यादिति सूत्रार्थः ॥१९॥

**अनपेक्षमेत्योपस्पृशन्त्यपः ॥ २० ॥**

पृष्ठतोऽनवलोकयन्त आगत्योदकमुपस्पृशेयुः ॥२०॥

इति पञ्चमाध्याये दशमी कण्डिका ॥१०॥

---

**शुनासीरीयमतः ॥ १ ॥**

अतः साकमेधानन्तरं तत्कालमेव शुनासीरीयं पर्व कार्यम् ॥ १ ॥

**यदेच्छेत् ॥ २ ॥**

अथवा यदा द्व्यहे वा त्र्यहे वा चतुरहे वा मासे वा चतुर्षु मासेषु वा इच्छेत्तदा कुर्यात् ॥ २ ॥

**पौर्णमासधर्मा बर्हिर्वर्जम् ॥ ३ ॥**

शुनीसीरीये बर्हिर्वर्जं पौर्णमासधर्मा भवन्ति। बर्हिस्तु वैश्वदेवपर्ववत् त्रेधा सन्नद्धं भवति। बर्हिर्ग्रहणं प्राचीनप्रवणदेशा-ऽहतवासःपरिधान-कुशप्रस्वः प्रस्तर इत्यादीनामुपलक्षणार्थम् ॥ ३ ॥

**नित्येभ्योऽधिकानि शुनासीराभ्यां द्वादशकपाल इन्द्राय वा शुनासीराय ॥४॥**

शुनश्च सीरश्च शुनासीरौ, ताभ्याम्। शुनो वायुः, सीर आदित्यः। देवताविकल्पः ॥४॥

**वायव्यं पयः ॥ ५ ॥**

वायुदेवत्यं पयः सप्तमं हविः। तच्चोपांशु (का० श्रौ० ४।५।७) ॥ ५ ॥

**लौकिकम् ॥ ६ ॥**

तच्च लौकिकं क्रयादिना सम्पादनीयम्, न तु दार्शिकपयोवत् प्रयोगमध्ये वत्सापाकरण दोहनादि कर्त्तव्यम् इत्यर्थः ॥ ६ ॥

**प्रतिधुक्श्रुतेः ॥ ७ ॥**

प्रतिधुक्शब्देन (श० ३।३।३।२) धारोष्णं दुग्धमभिधीयते। एवं च धर्मानुष्ठाने सति आज्यनिर्वापकाले दोहः प्राप्नोति, परिक्षालननिनयनं, श्रपणं च। तत्र प्रतिधुक्त्वं विरुध्येत। अतो लौकिकमेव ॥ ७ ॥

एवं प्राप्त आह—

नाऽविरोधात् ॥ ८ ॥

न लौकिकं पयो ग्राह्यम्, किन्तु संस्कृतमेव । कुतः अविरोधात् । नहि धर्मेषु क्रियमाणेषु प्रतिधुक्त्वं विरुध्यते । यागकाले एव दोहः करिष्यते आज्यनिर्वापानन्तरम् । ये च विरुध्यन्ते ते एव न क्रियन्ते परिक्षालन-श्रपणादयः ॥ ८ ॥

प्रकृतिदर्शनाच्च ॥ ९ ॥

यथा प्रकृतौ 'ऐन्द्रं पय' इति तद्धितान्तता दृष्टा, एवमिहापि वायव्यं पय इति तद्धितान्तता दृश्यते । अतः प्रकृतिवद् दोहनादिविशिष्टमेव पयः कर्त्तव्यम् ॥ ९ ॥

यवागूर्वा ॥ १० ॥

तण्डुलैः शिथिलपक्वा यवागूः । सा वा पयो वेति विकल्पः । यवागूश्चोपांशु (४।५।४) ॥१०॥

सौर्य एककपालः ॥ ११ ॥

सीरꣳ षड्योगं दक्षिणा ॥ १२ ॥

षड्भिर्बलीवर्दैर्युक्तं सीरं दक्षिणाऽत्र । युज्यन्त इति योगा बलीवर्दाः ॥१२॥

ओष्टारौ वा ॥ १३ ॥

अथवा वोढारौ महान्तौ बलीवर्दौ दक्षिणा ॥१३॥

श्वेतोऽश्वः सौर्यस्य ॥ १४ ॥

अभावे गौः ॥ १५ ॥

श्वेताश्वाभावे श्वेतो गौर्वा दक्षिणा भवति ॥१५॥

शुनासीरीयमतः, यदेच्छेत् ( १-२ ) इति पूर्वोक्तसूत्रद्वयेन शुनासीरीयस्य कालद्वयमुक्तं चातुर्मास्यानामावृत्तिपक्षे । अथ चातुर्मास्यानामुत्सर्गपक्षे शुनासीयस्य कालान्तरमाह—

संवत्सरेप्सोः फाल्गुन्युद्दृष्टे शुनासीरीयेणेष्ट्वा सोमेन पशुनेष्ट्या वा यजेत पौर्णमास्याम् ॥ १६ ॥

एकस्मिन्नेव संवत्सरे चातुर्मास्यानां सम्बन्धं य इच्छति, अर्थात् द्वितीयसंवत्सरे तेषामावृत्तिं नेच्छति, (श० २।६।३।१२) स संवत्सरेप्सुः । तस्य फाल्गुन्युद्दृष्टे फाल्गुन्याः पूर्णिमाया यस्मिन्दिने चन्द्रमसः प्रथमदर्शनं तत् फाल्गुन्युद्दृष्टं, अर्थात् फाल्गुनशुक्लप्रतितत् । तस्मिन्दिने शुनासीरीयेणेष्ट्वा सोमेन, पशुना इष्ट्या वा तदुत्तरस्यां फाल्गुनपौर्णमास्यां यजेत ॥ १६ ॥

आवृत्तिरनीजानस्य ॥ १७ ॥

सोमेन इष्ट्या पशुना वा यो यष्टुं नेच्छति तस्य पुनश्चातुर्मास्यानामावृत्तिः कर्त्तव्येति शेषः ॥ १७ ॥

आवृत्तिपक्षे विवेचनायाऽऽह—

फाल्गुन्युपवसथे शुनासीरीयं, प्रातर्वैश्वदेवम् ॥ १८ ॥

आवृत्तिपक्षे (श० २।६।३।१३) फाल्गुनशुक्लचतुर्दश्यां शुनासीरीयं पर्वं कृत्वा प्रातः पौर्णमास्यां पुनः वैश्वदेवपर्व कार्यम्, ततो वरुणप्रघासादि यथापूर्वम् ॥१८॥

त्रिविधानि चातुर्मास्यानि ऐष्टिकानि सौमिकानि (का० श्रौ० २२।७।१) पाशुकानि चेति। तत्रैष्टिकान्युक्तानि। सौमिकानि द्वाविंशेऽध्याये वक्ष्यन्ते। अथ पाशुकानि चातुर्मास्यान्याह—

**सपशुषु पशुतन्त्रं प्राधान्यात् ॥ १९ ॥**

यदि चातुर्मास्यानि पशुद्रव्यकाणि, तर्हि तेषु ऐष्टिकेष्वपि पाशुकधर्मा अतिदेष्टव्याः। पशुतन्त्रस्य प्रयाजाद्येकादशविशिष्टस्यैव महत्त्वात्। लघुनि इष्टितन्त्रे महतः पशुतन्त्रस्य प्रक्षेप्तुमनर्हत्वात्। सर्वत्रापि पशुतन्त्रताया एवमुक्तत्वात् ॥ १९ ॥

**पूर्वेद्युर्वैश्वदेवे पाशुकम् ॥ २० ॥**

वैश्वदेवे पर्वणि यत्पाशुकं कर्म यूपाहुत्याद्युत्तरवेदिच्छादनान्तं, तत्पूर्वदिने भवति। अवशिष्टं चैष्टिकं द्वितीयदिने। ऐष्टिके वैश्वदेवे तु नैतदस्ति ॥ २० ॥

**सद्यो वा ॥२१॥**

वाऽवधारणे। विकृतीनां सद्यस्कालत्वात् यूपाहुत्याद्युत्तरवेदिछादनान्तं पाशुकं सद्य एव भवति, न द्व्यहकालतया पूर्वेद्युरिति ॥ २१ ॥

**वैश्वदेवः पशुः ॥ २२ ॥**

वैश्वदेवपर्वणि सपाशुके विश्वेभ्यो देवेभ्यः पशुः कार्यो, न पयस्या ॥२२॥

**पशुपुरोडाशमनु हवीꣳषि निर्वपति ॥ २३ ॥**

पशोर्वपायागे कृते पशुपुरोडाशं निरूप्य तत आग्नेयादीनि पयस्यारहितानि निर्वपेत्, ततो हृदयादिपशुयागः। ततः स्विष्टकृदिति क्रमः ॥२३॥

**तेषाꣳ स्विष्टकृद्, भूयस्त्वात् ॥२४॥**

तेषामाग्नेयादिपर्वहविषां सम्बन्धी स्विष्टकृद्यागो भवति। कुतः ? भूयस्त्वात्, बहुत्वादित्यर्थः। पर्वहवींषि भूयांसि। पशुपुरोडाशश्चैकः। "विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वम्" ( पू० मी० १२। ) इति न्यायेन बहूनामनुग्रहो न्याय्यो, नैकस्येति ॥२४॥

**यथोक्तमविरुद्धम् ॥ २५ ॥**

यत् चातुर्मास्यहविषां संबन्धि क्रियमाणं पशुना सह न विरुध्यते अहतवासःपरिधानं, त्रेधा बर्हिः, प्राचीनप्रवणो देशः, कुशप्रस्वः प्रस्तर एवमादि, तत् यथा चातुर्मास्यानामुक्तं तथा पशोरपि भवति। यच्च विरुध्यते नवप्रयाजादि, तत्पाशुकमेव भवति ॥२५॥

**हृदयशूलान्ते वपनम् ॥ २६ ॥**

पर्वसंस्थासु यद्वैकल्पिकं वचनमुक्तं, तत्सपशुषु चातुर्मास्येषु हृदयशूलसमिदाधानान्ते कर्तव्यम्। सपाशुके वपनं नित्यं, पुनर्वचनसामर्थ्यात् ॥२६॥

**वरुणप्रघासेषु वारुणः ॥ २७ ॥**

पशुर्भवति ॥२७॥

**महाहविषि माहेन्द्रः ॥ २८ ॥**

पशुर्भवति ॥२८॥

**शुनासीराभ्यां चतुर्थः ॥ २९ ॥**

कृतानुकरत्वेन प्रतिप्रस्थातुरपि पशुर्माभूदिति चतुर्थग्रहणम् ॥२९॥

**पुरस्ताद्वा पर्वणः, पर्वणो ऽन्ते वा ॥ ३० ॥**

अथवा पर्वणः पर्वणः पुरस्तात् पृथक्तन्त्रो वैश्वदेवादिकः पशुः कार्यो, न सह

अथवा पर्वणः पर्वणोऽन्ते पर्वसमाप्त्यन्ते पृथक्तन्त्रो वैश्वदेवादिकः पशुः कार्यः। माहेन्द्रः पशुस्तु "महाहविषि माहेन्द्र" (२८) इति वचनात् तस्यैव आदावन्ते वा कार्यो, न साकमेधानामादौ ॥३०॥

इति पञ्चमाध्याये एकादशी कण्डिका ॥११॥

---

[ मित्रविन्देष्टिः ]

**मित्रविन्दा (श० ११।४।२।१-२०) श्री-राष्ट्र-मित्राऽऽयुष्कामस्य ॥ १ ॥**

पर्यायेणैकैकफलसिद्धिः। नैकेन प्रयोगेण सर्वेषाम् ॥ १ ॥

**दशहविः ॥ २ ॥**

दश हवींषि यस्याः सा दशहविर्मित्रविन्देष्टिर्भवति ॥ २ ॥

**आग्नेयः, सौम्यश्चरु,र्वारुणो दशकपालश्चरुर्वा यावो,मैत्रश्चरु, रैन्द्र एकादशकपालो, बार्हस्पत्यश्चरुः, सावित्रो द्वादशकपालोऽष्टाकपालो वा, पौष्णश्चरुः, सारस्वतश्चरु, स्त्वाष्ट्रो दशकपाल एकं प्रदानम् ॥ ३ ॥**

दशानामपि हविषामेकमेव प्रदानं तन्त्रेण भवति, वचनात् ॥ ३ ॥

**समस्याऽनुवाचनम् ॥ ४ ॥**

सर्वेषां देवानां चतुर्थ्यन्तानि पदानि पृथक् पृथक् अविभक्तिलोपेन उच्चार्य अनुब्रूहीति वक्तव्यम्। अग्नये सोमाय वरुणायेत्यादि प्रयोगः ॥ ४ ॥

**यजेति च ॥ ५ ॥**

अग्निं सोमं वरुणं मित्रम् इन्द्रम् इत्याद्यविभक्तिलोपेन उच्चार्य यजेति प्रयोगः ॥ ५ ॥

**प्रैषाश्च ॥ ६ ॥**

प्रैषा अपि देवताः समस्य भवन्ति। ये यजामहे अग्निं सोमं वरुणमिन्द्रं बृहस्पतिमित्यादि प्रयोगः ॥ ६ ॥

**उत्तरे निगमा यथेष्टं जोषणाश्रुतेः ( श० १।६।१।१० ) ॥७॥**

स्विष्टकृत्सूक्तवाकादिषु ये निगमाः = देवतासङ्कीर्त्तनानि, तानि यथेष्टं प्रतिलोमक्रमेणापि उच्चारणीयानि। कुतः ? जोषणाश्रुतेः। "एवं या इष्टा देवता भवन्ति ताः सम्पश्यत्यसौ हविरजुषतासौ हविरजुषत"। (श०१।६।१।१०) इति। इष्टाश्च प्रातिलोम्येन। याज्यायां प्रतिलोमेनाऽभिधानात्। "त्वष्टा रूपाणि ददती सरस्वती पूषा भगम्" (१२) इत्यादि ॥ ७ ॥

**अनुलोमा वा, चोदनागुणत्वात् ॥ ८ ॥**

वाऽवधारणे। अनुलोमा एव निगमा भवन्ति, न प्रतिलोमाः। कुतः ? चोदनागुणत्वात्। चोदनापाठक्रमस्यैव सर्वत्र गुणभावात्। अतो विधिपाठक्रमेण आनुलोम्येनैव देवतासङ्कीर्तनं स्विष्टकृदादाविति ॥ ८ ॥

**पञ्चदश सामिधेन्यः ॥ ९ ॥**

**पुष्टिमन्तावाज्यभागौ-(श० ११।४।३।१०) अग्निना रयिमश्नवत्पोषमेव दिवे दिवे। यशसं वीरवत्तमम् ॥ गयस्फानो अमीवहा वसुवित्पुष्टिवर्धनः। सुमित्रः सोम नो भवेति ॥ १० ॥**

इमौ मन्त्रावाज्यभागावत्र भवतः। क्रमेणैते पुरोऽनुवाक्ये इत्यर्थः ॥ १० ॥

हविषोऽनुवाक्या—अग्निः सोमो वरुणो मित्र इन्द्रो बृहस्पतिः सविता यः सहस्री। पूषा नो गोभिरवसा सरस्वती त्वष्टा रूपाणि समनक्तु यज्ञैरिति ॥ ११ ॥

प्रधानयागानां सह क्रियमाणानां पुरोऽनुवाक्येयम् ॥ ११ ॥

याज्या—त्वष्टा रूपाणि ददती सरस्वती पूषा भगꣳ सविता मे ददातु। बृहस्पतिर्ददिन्द्रो बलं मे मित्रः क्षत्रं वरुणः सोमो अग्निरिति ( श० ११।४।३।७ ) ॥१२॥

तेषामेव यागानां तन्त्रेण क्रियमाणानामियं याज्या ॥ १२ ॥

इति पञ्चमाध्याये द्वादशी कण्डिका ॥१२॥

---

हुत्वा स्थाल्याः स्रुवेणोपजुहो "त्यग्निरन्नादोऽन्नपतिरन्नाद्यमस्मिन्यज्ञे मयि दधातु स्वाहा, सोमो राजा राजपती राज्यमस्मिन्यज्ञे मयि दधातु स्वाहा, वरुणः सम्राट् सम्राट्पतिः साम्राज्यमस्मिन्यज्ञे मयि दधातु स्वाहा, मित्रः क्षत्रं क्षत्रपतिः क्षत्रमस्मिन्यज्ञे मयि दधातु स्वाहा, इन्द्रो बलं बलपतिर्ब्रह्मवर्चसमस्मिन्यज्ञे मयि दधातु स्वाहा, बृहस्पतिर्ब्रह्म ब्रह्मपतिर्ब्रह्मवर्चसमस्मिन्यज्ञे मयि दधातु स्वाहा, सविता राष्ट्रꣳ राष्ट्रपती राष्ट्रमस्मिन्यज्ञे मयि दधातु स्वाहा, पूषा भगं भगपतिर्भगमस्मिन्यज्ञे मयि दधातु स्वाहा, सरस्वती पुष्टिं पुष्टिपतिः पुष्टिमस्मिन् यज्ञे मयि दधातु स्वाहा, त्वष्टा रूपाणाꣳ रूपकृद्रूपपती रूपेण पशूनस्मिन्यज्ञे मयि दधातु स्वाहे"ति ॥१॥

प्रधानावदानानि हुत्वा स्विष्टकृतः प्राक् स्थाल्याः स्रुवेणोपजुहोति दशभिर्मन्त्रैः ॥१॥

विराजौ संयाज्ये ॥ २ ॥

संयाज्याशब्देन स्विष्टकृद्यागस्य याज्यानुवाक्ये अभिधीयेते ॥ २ ॥

सहस्रवत्यौ वा—नू नो रास्व सहस्रवत्तोकवत्पुष्टिमद्वसु। द्युमदग्ने सुवीर्यं वर्षिष्ठमनुपक्षितम् ॥ उत नो ब्रह्मन्नविष उक्थेषु देवहूतमः ॥ शं नः शोचा मरुद्वृधोऽग्ने सहस्रसातम इति ॥ ३ ॥

अथवा नू नो रास्वेति स्विष्टकृतः पुरोऽनुवाक्या, उत न इति याज्या ॥ ३ ॥

दश दक्षिणा सहस्रं वा सहस्रं वा ॥ ४ ॥

अस्या इष्टेर्दश गावः सहस्रं वा गावो दक्षिणा। द्विरभ्यासोऽध्यायसमाप्तिज्ञापनार्थः ॥४॥

इति कात्यायनश्रौतसूत्रवृत्तौ पञ्चमोऽध्यायः समाप्तः ॥५॥

---

एवं चातुर्मास्यान्यनु विधाय तदनन्तरं हविर्यज्ञत्वसाम्यात् मित्रविन्देष्ट्यां निरूपितायां, हविर्यज्ञत्वसाम्यादेव इदानीं निरूढपशुबन्धो निरूप्यते।

श्रुतौ अग्नीषोमीयस्य पशोः सन्निधावेव सर्वेषां पशुधर्माणामुपदेशात् 'यत्र समग्राङ्गोपदेशः सा प्रकृतिः' इति न्यायेन सर्वपशुगणप्रकृतित्वमग्नीषोमीयस्यैव। अतः अस्य निरूढपशुबन्धस्यापि स एव प्रकृतिः। एवं च तत्रस्था एव धर्मा अत्र निरूढपशुबन्धमुररीकृत्य निरूप्यन्ते सूत्रकारेण। अत एव "अग्नीषोमीयस्य पशोस्तन्त्रं प्रक्रमयति, तस्य निरूढपशुवत्कल्पः" ( आप० श्रौ० ) इत्युक्तम्।

अग्नीषोमीयविकृतित्वादेव च अत्र अन्वारम्भणीयाऽपि न भवति। तस्या आरम्भनिमित्तकत्वेन अग्नीषोमीयपशोः सोमाङ्गत्वेन पृथगारम्भत्वाभावात्। अग्नीषोमीयायास्तदङ्गत्वमेव नास्तीति कृत्वा विकृतौ निरूढपशुबन्धे अनङ्गायास्तस्या अतिदेशासम्भवात्। इदं सर्वं मनसि निधाय प्रकृतमभिधत्ते।

[ निरूढपशुबन्धकालः ]

**पश्विज्या संवत्सरे संवत्सरे प्रावृषि ॥ १ ॥**

संवत्सरे इति वीप्सार्थं द्विरुक्तिः। तेन यावज्जीवकर्तव्यता नित्यकर्तव्यता च प्राप्नोति। तेन प्रतिवर्षं यावज्जीवं वर्षर्त्तौ अमायां पौर्णमास्यां वा पशुना यागः कार्य इति सूत्रार्थः ॥ १ ॥

अमावास्यादिकालेन सह विकल्पितं कालान्तरमाह—

**आवृत्तिमुखयोर्वा ॥ २ ॥**

आवृत्तिः = अयनपरिवृत्तिः। सा च द्विधा। दक्षिणायनपरिवृत्तिरुत्तरायणपरिवृत्तिश्च। तयोर्मुखे = प्रथमौ दिवसौ। तयोरावृत्तिमुखयोः।

अत्र सूत्रे मुखयोरिति द्विवचनश्रवणेऽपि न उभयत्रानुष्ठानम्। संवत्सरे इति एकस्मिन् संवत्सरे सकृदनुष्ठानस्यैव विधानात्। अतः सङ्क्रान्तिदिनयोरन्यतरत्र यागः कार्यः। अथवा दक्षिणायनसङ्क्रान्तिदिने उत्तरायणसङ्क्रान्तिदिने वा प्रतिवर्षं यावज्जीवं पशुना यजेत ॥ २ ॥

[ निरूढपशुबन्धदेशः ]

**गृहेषु ॥ ३ ॥**

अयं पशुयागो गृहेषु कार्यः। अग्नीषोमीयस्य देवयजनागारे अनुष्ठानात् अत्रापि स एव देशोऽतिदेशेन प्राप्नुयात् इति शङ्कां निवर्त्तयितुमिदं सूत्रम्। एवं च सूत्रस्यास्य देवयजननिवृत्तावेव तात्पर्यम्, न तु गृहे एव अनुष्ठानमित्यत्रापि।

तत्र अग्निसमारोपस्य अग्निसंस्कारकत्वेन अग्नेश्च अङ्गप्रधानार्थत्वेन ज्योतिष्टोमप्रकरणे पठितस्यापि अस्य पश्वङ्गताया अपि सत्त्वेन निरूढपश्वादावपि अतिदेशेन समारोपः प्राप्नोत्येव। अतश्च उत्तरवेदिः सम्भाराश्च प्रवर्त्तन्त एव ॥ ३ ॥

[ यूपाहुतिः ]

**यूपाहुतिं जुहोति चतुर्गृहीतꣳ स्रुवेण वो"रु विष्णा"विति ॥ ४ ॥**

यूपच्छेदनार्थमरण्यं प्रति गच्छन् स्रुवेण स्रुचा वा चतुर्गृहीतं गृहीत्वा यूपाहुतिमाहवनीये जुहुयात् ॥ ४ ॥

[ यूपच्छेदनार्थं गमनम् ]

**आज्यशेषमादाय सतक्षा गच्छति यूपम् ॥ ५ ॥**

तदणा वर्द्धकिना सहितो हुतशेषमाज्यमादाय यूपच्छेदनाय अरण्यं गच्छेत् ॥ ५ ॥

[ यूपस्याभिमर्शनमभिमन्त्रणं वा ]

**अमभिमृश "त्यत्यन्यानि" ति ॥ ६ ॥**

यूपीयं वृक्षमभिमृशेत् ॥ ६ ॥

**प्राङ् तिष्ठन्नभिमन्त्रयते वा ॥ ७ ॥**

अथवा यूपस्य वृक्षस्य पश्चात्प्राङ्मुखस्तिष्ठन् यूपवृक्षं विलोकयन्नमुं मन्त्रं पठेत् ॥ ७ ॥

[ यूपस्य वृक्षविशेषः ]

**पालाशं बहुलपर्णमशुष्काग्रमूर्ध्वशकलशाखं मध्याग्रोपनतमव्रणम् ॥८॥**

कीदृशं यूपम् । पलाशवृक्षस्य विकारः अवयवो वा पालाशस्तम् । बहुलानि पर्णानि यस्य तम् । अशुष्कमार्द्रमग्रं यस्य तम् । ऊर्ध्वाः शकला वेष्टनत्वचः = शाखाः प्ररोहाश्च यस्य तम् । मध्ये अग्रे च वक्रस्तम् । नास्ति व्रणं ग्रन्थिर्यस्य तम् ॥ ८ ॥

**अभावे खदिर-बिल्व-रौहितकात् ॥ ९ ॥**

निरूढपशौ पलाशयूपस्याभावे खदिरादिवृक्षीयान् यूपान् कुर्यात् । खदिराभावे बिल्वानां रौहितकानां च सोमे एव प्रवृत्तिः । अत्र तु पलाशखदिरयोरन्यतरस्यैव । तत्रापि पूर्वाभावे परस्यैवेति ॥ ९ ॥

निरूढपशुबन्धे एव पूर्वेषामभावे परेषां प्राप्तावाह—

**खदिराभावे सोम इतरान् ॥ १० ॥**

सोमे खदिरस्यालाभे बैल्वान् रौहितकान्वा कुर्वीत ॥ १० ॥

[ छेदनस्थाने स्रुवेणोपस्पर्शनम् ]

**स्रुवेणोपस्पृशति "विष्णवे त्वे" ति ॥ ११ ॥**

घृताक्तेन स्रुवेण छेदनप्रदेशे यूपवृक्षमुपस्पृशेत् ॥ ११ ॥

[ प्रहृत्य यूपच्छेदनम् ]

**"ओषध" इति कुशतरुणं तिरस्कृत्य "स्वधित" इति परशुना प्रहरति ॥ १२ ॥**

कुशपत्रमेकमन्तर्धाय कुठारेणान्तर्हितस्य तृणस्योपरि छेदनाय प्रहारं कुर्यात् ॥ १२ ॥

**प्रथमशकलं निदधाति ॥ १३ ॥**

यूपे छिद्यमाने यः प्रथमः शकलः परापतति तं यूपावटमध्ये प्रक्षेपार्थं क्वचित्सुगुप्ते देशे स्थापयेत् । स्वरवे, शुक्रा-मन्थिग्रहप्रचाराय चान्यानपि शकलान् स्थापयेत् ॥ १३ ॥

**अनक्षस्तम्भं वृश्चति ॥ १४ ॥**

गच्छतः शकटस्याक्षम् छेदनावशिष्टः स्थाणुर्यथा न स्तभ्नाति तथा नीचं यूपवृक्षं छिन्द्यात् । अनसोऽक्षं स्तभ्नातीत्यक्षस्तम्भः । न अक्षस्तम्भोऽनक्षस्तम्भः । एतेन न वृक्षशाखां छित्वा तेन यूपः कार्यः । किन्तु समग्रस्यैव वृक्षस्य नातिस्थूलस्य छेदनमभिप्रेतं भवति ॥१४॥

**एकजम् ॥ १५ ॥**

य एकः असहाय एव भूमेर्जातस्तं वृक्षं वृश्चति ॥ १५ ॥

[ पततो यूपस्याभिमन्त्रणम् ]

**"द्यां मालेखी" रिति पतन्तमभिमन्त्रयते ॥ १६ ॥**

पतन्तं वृक्षं द्याम्मन्त्रं पठेत् ॥ १६ ॥

**न दक्षिणा पतेत् ॥ १७ ॥**

तथा यत्नः कार्यो, यथा स यूपो दक्षिणस्यां दिशि न पतेत् ॥ १७ ॥

**"अयठं० हि त्वे"ति शोधनम् ॥ १८ ॥**

छिन्नस्य यूपवृक्षस्य कुठारेण शाखापर्णादिपातनं कुर्यात् ॥ १८ ॥

**अभिमन्त्रणशेषो वा विशेषोपदेशात् ॥ १९ ॥**

वाशब्दः पक्षव्यावृत्तौ। अयठं० हि त्वेति मन्त्रो न मन्त्रान्तरम्। अतोऽभिमन्त्रणमन्त्रस्य द्यां मा लेखीरित्यस्यैव शेषो, नानेन शोधनं कर्त्तव्यम्। कुतः। विशेषोपदेशात्। "तं प्रच्यवमानमभिमन्त्रयते द्यां मा लेखीः" ( श० ३।६।४।१३ ) इति विशिष्याभिमन्त्रणमुद्दिश्यैव विधानात्। अर्थप्राप्तं शोधनं तु तूष्णीं कार्यम् ॥ १९ ॥

[ स्थाणौ होमः ]

**"अतस्त्व"मित्याव्रश्चने जुहोति ॥ २० ॥**

आवृश्च्यते यूपोऽस्मादित्याव्रश्चनः = यूपापादानस्थाणौ छेदनप्रदेशः। तत्र स्रुवेण जुहुयात् ॥ २० ॥

**यूपे वा तत्संस्कारात् ॥ २१ ॥**

अथवा यूप एव जुहुयात्, न स्थाणौ। कुतः? यूपसंस्कारात्। तत्संस्कारस्य तत्रैव करणौचित्यात् ॥ २१ ॥

[ एवं प्राप्ते सिद्धान्तयति ]

**स्थाणौ श्रुतेश्च ॥ २२ ॥**

स्थाणावेव होतव्यं, न यूपे। कुतः? श्रुतेः,। "अथाव्रश्चनमभिजुहोति" ( श० ३।६।४।१५ ) इति श्रुतेः, च शब्दान्मन्त्रवर्णाच्च। 'अतस्त्वं देव वनस्पते शतवल्शो विरोह' (शु० य० ५ ४३) इति मन्त्रवर्णेन स्थाणुरेवाभिधीयते। अतः स्थाणावेव होमः। श्रुतौ आव्रश्चनशब्देन मन्त्रगतवनस्पतिशब्देन च स्थाणोरेवाभिधानात् ॥ २२ ॥

**परिवास्याच्छेदनं पुनः ॥ २३ ॥**

अपेक्षितपरिमाणविशिष्टं यूपं परिमाय ततोऽधिकस्य अग्रभागस्य छेदने कृते पुनरपि यूपाग्रं न छेत्तव्यम् ॥ २३ ॥

[ त्र्यरत्निश्चतुररत्निर्वा पशुबन्धयूपः ]

**त्र्यरत्निश्चतुररत्निर्वा ॥ २४ ॥**

यूपश्छेदनीयः। अरत्निप्रमाणं यजमानसम्मितमेव ग्रहीतव्यम् ॥ २४ ॥

**एकारत्निप्रभृतीनेके ॥ २५ ॥**

एकारत्न्यादिचतुररत्न्यन्तप्रमाणकानपि यूपानिच्छन्त्येके ॥ २५ ॥

[ यूपस्याष्टाश्रिकरणविधानम् ]

**अष्टाश्रिं करोत्युपरवर्जम् ॥ २६ ॥**

उपरोऽवटः। तत्संबन्धिनं निखननार्हं यूपस्य प्रदेशं मूलतः पञ्चमांशं वर्जयित्वा तं यूपं तक्षा तक्षणेन अष्टकोणं कुर्यात् ॥ २६ ॥

**अग्राच्चषालं पृथमात्रमष्टाश्रि मध्यसङ्गृहीतम् ॥ २७ ॥**

यूपपरिवासनानन्तरं पृथक्कृतादग्रात् चषालं कुर्यात्। प्रसारिताङ्गुलिः पाणिरामणिबन्धात्पृथ इत्युच्यते। पृथः प्रमाणमस्य तत्, दशाङ्गुलमित्यर्थः। अष्टकोणम्। मध्ये उलूखलवत्सङ्कुचितम् ॥ २७ ॥

**द्व्यङ्गुलं त्र्यङ्गुलं वा तद्गर्तातिक्रान्तं यूपस्य ॥ २८ ॥**

यूपस्य अग्रं चूड़ारूपं द्व्यङ्गुलं त्र्यङ्गुलं वा चषालस्य यत्तर्त्म = छिद्रं, तदतिक्रान्तं तदतिक्रम्य ऊर्ध्वं निःसृतं भवेत्। चषालं यूपाग्रादधो द्व्यङ्गुले त्र्यङ्गुले वा यथा स्थितं भवेत्तथा चषालस्य प्रतिमोकः कार्य इत्यर्थः ॥ २८ ॥

[ सोमे पञ्चारत्न्यादिपरिमाणो यूपः ]

**पञ्चारत्निः पञ्चदशपर्यन्तः सोमे, दश-सप्त-चतुर्दशवर्जम्, परिमितो वा ॥२९॥**

सोमाङ्गभूतेऽग्नीषोमीये यूपः कार्यः। अथवा अपरिमितप्रमाणः षोडशारत्निप्रभृतिर्यूपः कार्यः ॥ २९ ॥

**सप्तदश वाजपेये ॥ ३० ॥**

सप्तदशारत्निर्यूपो वाजपेये कार्यः ॥ ३० ॥

**एकविꣳशतिरश्वमेधे ॥ ३१ ॥**

अश्वमेधे सर्वे यूपा एकविंशत्यरत्नयो भवेयुः ॥ ३१ ॥

**यथाकायꣳ स्थविमा ॥ ३२ ॥**

यूपानां स्थूलता लोकप्रसिद्ध्या दीर्घप्रमाणानुसारेण विधेया। अथवा यूपस्य कायो यादृशः स्थूलो भवेत् तथैव कार्यः, नतु अग्रभागः कृशो भवतीति कृत्वा तदनुसारेण सर्वस्यापि यूपस्य कृशता कार्या ॥ ३२ ॥

[ वेदिकरणात्पूर्वं पञ्चगृहीतहोमः ]

**वेदिं करिष्यन् षड्ढोतारं पञ्चगृहीतं मनसाऽनुद्रुत्य जुहोत्येकामाहुतिं पञ्च वा "द्यौष्पृष्ठमन्तरिक्षमात्माङ्गैर्यज्ञं पृथिवीꣳ शरीरैर्वाचस्पतेऽच्छिद्रया वाचाऽच्छिद्रया जुह्वा दिवि देवा वृधꣳ होत्रामैरयन्त्स्वाहे"ति ॥ ३३ ॥**

वेदिकरणात्प्राक् पञ्चगृहीतमाज्यं गृहीत्वा द्यौष्पृष्ठमितीमं षड्ढोतारं मन्त्रं मनसा उच्चार्य एकामाहुतिं जुहुयात्। अथवा तेनैव पञ्चगृहीतेन विभज्य पञ्चाहुतीर्जुहुयात्। अयं होमो निरूढपशावेव, तत्प्रकरणे पाठात्, नाग्नीषोमीये इति ॥ ३३ ॥

इति कातीये श्रौतसूत्रे षष्ठाध्याये प्रथमा कण्डिका ॥ १ ॥



**वेदिं करोति ॥ १ ॥**

एवं होमं कृत्वा ततो वेदिं कुर्यादित्याह—

**वरुणप्रघासवत्स्फ्याद्याग्निनिधानात् ॥ २ ॥**

देवस्य त्वेति स्फ्यमादायइत्यारभ्य तेष्वग्निं निदधातीत्येतदन्तं कर्म वरुणप्रघासवत् कुर्यात्। पशुयागस्य वरुणप्रघासविकृतित्वाभावेन वारुणप्राघासिकानामेतेषां धर्माणामप्राप्तौ प्राप्त्यर्थमिदं वचनम् ॥ २ ॥

[ इध्मेन एकप्रणयनम् ]

**एकमिध्मेन प्रणयति ॥ ३ ॥**

एकमग्निमिध्मेन प्रणयेत्। वरुणप्रघासे द्वयोः प्रणयनमुक्तं कर्परेण च। तस्य च पूर्वसूत्रेण प्राप्तौ तद्बाधित्वा ज्योतिष्टोमिकस्य प्रणयनस्यैव इह प्राप्त्यर्थं वचनम् ॥ ३ ॥

[ व्रतोपायनादीनां विधानम् ]

**व्रतोपायन--प्रणीताऽऽज्यभाग--भागावदान--पूर्णपात्र--विष्णुक्रमान् कुर्याद्धविर्यज्ञविधे ॥ ४ ॥**

व्रतोपायनम् = व्रतग्रहणम् ( का० श्रौ० सू० २।१।११ )। प्रणीताः प्रसिद्धाः ( का० २।३।१—४ )। आज्यभागौ विहितौ ( का० श्रौ० ३।३।१० )। भागावदानं पश्वङ्गानां भागशोऽवदानम् ( का० श्रौ० ६।७।११ )। पूर्णपात्रं विहितम् ( का० श्रौ० ३।८।८ ) विष्णुक्रमणं प्रसिद्धम् ( का० श्रौ० ३।८।८ )। एतानि हविर्यज्ञविधे एव कुर्यात्, न सवविधे। पशुबन्धो हि द्विप्रकारः। एको हविर्यज्ञविधः, अपरः सवविधः। "हविर्यज्ञविधो ह वा अन्यः पशुबन्धः, सवविधोऽन्यः, स वै हविर्यज्ञविधो यस्मिन्व्रतमुपयन्ति यस्मिन्नपः प्रणयन्ति यस्मिन्पूर्णपात्रं निनयति यस्मिन्विष्णुक्रमान् क्रमति, अथ हैष सवविधो यस्मिन्नेतानि न क्रियन्ते" ( श० ब्रा० ११।७।१।३ ) इति श्रुतेः। तत्र हविर्यज्ञविधे एव इमान्यङ्गान्यनुतिष्ठेत्।

अत्र च केषांचित्प्राप्तानां प्रतिषेधः, केषां चित्प्रतिप्रसवः। व्रतोपायन-प्रणीता-ऽऽज्यभागाः सवविधेऽपि अतिदेशतः प्राप्ता अनेन सूत्रेण हविर्यज्ञविधमात्रे तद्विधायकेन सवविधे प्रतिषिध्यन्ते, निरूढे च प्रतिप्रसूयन्ते। अग्नीषोमीये च निषिद्धत्वादेतेषाम्। भागावदानविधानं तु अग्नीषोमीये तेषां निषेधार्थम्। तत्रापि उत्तरत्र ( का० श्रौ० ६।७।११ ) विकल्पविधानात् निरूढे विकल्पः, पश्वन्तरे च नियमः। पूर्णपात्र-विष्णुक्रमयोर्दक्षिणाग्निहोमान्तेऽग्नीषोमीयेऽभावादेव अत्राप्राप्तत्वात् प्राप्त्यर्थं विधानम् ॥ ४ ॥

[ परिस्तरणादीनामुत्तरपरिग्रहादीनां च विधानम् ]

**परिस्तरण-पात्रसं०सादन-प्रोक्षणा-ऽऽज्यनिर्वपणा-ऽधिश्रयणानि कृत्वोत्तरपरिग्रहादि करोत्याज्यासादनात् ॥ ५ ॥**

स्फ्येण धाम्नेत्याज्यासादनात्मालम्भोदकस्पर्शान्तं कुर्यात् ॥ ५ ॥

यद्यपि परिस्तरणादीनामुपरिष्टा ( का० श्रौ. ६।२।५ ) वक्ष्यमाणत्वात् तत्रैव वेदिकरणविधानमुचितं, तथापि उत्तरवेदेर्ज्योतिष्टोमे विहितत्वेन तस्या अङ्गप्रधानार्थत्वात् तदङ्गभूतेऽग्नीषोमीयेऽपि पशौ उत्तरवेदेः प्राप्तत्वात् ततश्च निरूढपशौ प्राप्तत्वात् तस्या इहैव करणमावश्यकम्। वेदिमन्तरा च उत्तरवेदिर्न संभवतीति कृत्वा तत्सिद्ध्यर्थमग्रे वक्तव्यस्यापि वेदिकरणस्य अत्रैव अपकृष्य विधानमिति वेदितव्यम् ॥ ५ ॥

अत्र विशेषः—

**सपृषदाज्यमाज्यग्रहणम् ॥ ६ ॥**

कुर्यादनुयाजार्थम् ॥ ६ ॥

**बर्हिषि प्लक्षशाखाः स्तृणाति ॥ ७ ॥**

स्तीर्णे बर्हिषि वेदेर्दक्षिणभागे ( हृदयाद्यवदानार्थं ) बह्वीः प्लक्षशाखाः स्तृणीयात् ॥७॥

[ यस्मिन्देशे मीयमानस्य यूपस्यार्द्धं वेद्यभ्यन्तरे, अर्द्धं च बहिर्वेदि, तस्मिदेशे गर्त्तकरणार्थमभ्र्या परिलिखेत् ]

**"देवस्य त्वे"त्यभ्रिमादाय यूपावटं परिलिखती"दमह"मित्याहवनीयस्य पुरस्तादन्तर्वेद्यर्द्धम् ॥ ८ ॥**

आज्यासादनानन्तरं देवस्य त्वेत्यभ्रिमादाय आहवनीयस्य पुरस्ताद् यूपनिखननार्थं इद-

महमिति देशं परिलिखेत्(१)। तस्य देशस्यार्धभागो वेद्यामन्तः, भागार्द्धं च वेदेर्बहिर्यथा स्यात्तथा गर्त्तयोग्यं देशं परिलिखेदिति भावः ॥ ८ ॥

[ यूपपञ्चमांशसम्मितं खनेत् ]

**उपरसम्मितं खनति ॥ ९ ॥**

उपरो नाम यूपस्य निखननीयः पञ्चमो भागः। तत्प्रमाणं निम्नमवटं खनेत् ॥ ९ ॥

[ गर्त्तात्पूर्वस्यामुत्खातधूलिनिःसारणम् ]

**प्राचः पांसूनुद्वपति ॥ १० ॥**

खननेनोत्खातान् पांसून् अवटात्प्राच्यां निष्काशयेत् ॥ १० ॥

[ गर्त्तात्पूर्वस्यां प्रागग्रयूपनिधानम् ]

**तदग्रेण यूपं प्राञ्चं निदधाति ॥ ११ ॥**

अवटस्य पुरस्तात्प्रागग्रं यूपं निदध्यात् ॥ ११ ॥

[ यूपे कुशमुष्टिनिधानम् ]

**कुशमुष्टिमुपरि तस्मिन् ॥ १२ ॥**

तस्मिन्यूपे कुशमुष्टिमुपरि निदध्यात् ॥ १२ ॥

[ यूपच्छेदनसमये प्रथममपच्छिन्नं शकलं च यूपोपरि निदध्यात् ]

**प्रथमशकलं च ॥ १३ ॥**

तस्यैव यूपस्योपरि प्रथमच्छिन्नं यूपशकलं निदध्यात् ॥ १३ ॥

**अग्रमुत्तरेण चषालम् ॥ १४ ॥**

यूपाग्रस्योत्तरतः समीप एव चषालं निदध्यात् ॥ १४ ॥

[ यवमतीभिरद्भिर्यूपाग्रमध्यमूलानां प्रोक्षणम् ]

**"यवोऽसी"त्यप्सु यवानोप्य प्रोक्षत्यग्र-मध्य-मूलानि "दिवे त्वे"ति प्रतिमन्त्रम् ॥१५॥**

क्वचित्पात्रस्थासु लौकिकास्वप्सु यवान् प्रक्षिप्य यूपस्य अग्रं मध्यं मूलं च प्रोक्षेत् ॥१५॥

**प्रोक्षामीति सर्वत्र साकाङ्क्षत्वात् ॥ १६ ॥**

दिवे त्वेत्यादिषु त्रिष्वपि मन्त्रेषु निराकाङ्क्षीकरणाय प्रोक्षामीति क्रियापदं प्रयोज्यम्। साकाङ्क्षा ह्येते मन्त्राः, क्रियापदाभावात् ॥ १६ ॥

[ प्रोक्षणशेषं गर्त्ते आसिञ्चेत् ]

**अवटे शेषमासिञ्चति "शुन्धन्ता"मिति ॥ १७ ॥**

प्रोक्षणशेषं गर्त्ते क्षिपेत् ॥ १७ ॥

---

(१) इदं च परिलेखनं न यूपाङ्गम्, किन्तु देशलक्षकम्। अतश्च यूपाङ्गत्वाभावात् तीव्रसुत्याख्ये उक्थ्ये ज्योतिष्टोमविकृतिभूते यूपैकादशिनीपक्षे अग्निष्ठं यूपमारभ्य यूपैकादशिन्यां प्राचीनतया मीयमानायाम् "तीव्रसुत्यग्निष्ठः प्राची च" (का० श्रौ० ८।२२१) इति यावद्यूपं वेदेर्मानं न कर्त्तव्यम्, किन्तु प्रकृतौ यावती वेदिस्तावत्येव। वेदेर्बहिरेव च अग्निष्ठातिरिक्ता यूपा इति प्रयोजनम्। एतच्च पूर्वमीमांसायां तृतीयेऽध्याये सप्तमे पादे षष्ठाधिकरणे विचारितम्।

[ प्रागग्रानुदगग्रांश्च कुशान् गर्ते क्षिपेत् ]

**बर्हींषि प्राञ्च्युदञ्चि च प्रास्यति "पितृषदनमसी"ति ॥ १८ ॥**

प्रागग्रानुदगग्रांश्च कुशान् पूर्वं यूपस्योपरि निहितान् गर्ते प्रक्षिपेत् । अत्र चासंस्कृता एव कुशा ग्राह्या इत्युक्तम् ( का० श्रौ० १।३।१२ ) ॥ १८ ॥

[ यूपगर्ते प्रथमशकलप्रक्षेपः ]

**प्रथमशकलं चा"ऽग्रेणीरसी"ति ॥ १९ ॥**

अवटे क्षिपेत् ॥ १९ ॥

[ स्रुवेण यूपगर्ते स्थाल्याज्यप्रक्षेपः ]

**स्रुवेणावटे जुहोति तूष्णीम् ॥ २० ॥**

तूष्णीमित्यनेन स्वाहाकारस्य निवृत्तिः, मन्त्रान्तराभावात् । इदं प्रजापतय इति त्यागः ॥ २० ॥

[ यूपस्य दक्षिणत उदङ्ङुपविश्य यूपाञ्जनम् ]

**पुरस्तात्परिक्रम्याध्वर्युर्यजमानो वा यूपमनक्त्युदङ्ङुपविश्य ॥ २१ ॥**

अत्र परिक्रमणविधानादञ्ज्यादानाद्यवटहोमान्तमुत्तरत उपविष्टेन कार्यम् । उदङ्ङासीन इत्यनेन सामर्थ्याद्देवाध्वर्योः परिक्रमणं प्राप्तात्येव । यजमानस्य तु न प्राप्नोति । तदर्थमुच्यते पुरस्तात्परिक्रम्येति । मा भूत्सन्निधानादपरिक्रमणमिति ॥ २१ ॥

इति षष्ठाध्याये द्वितीया कण्डिका ॥ २ ॥



**यूपायाऽज्यमानायानुवाचयति ॥ १ ॥**

"यूपायाज्यमानायानुब्रूहि" इति होतारं प्रत्याह ॥ १ ॥

**"देवस्त्वे"त्यनक्ति ॥ २ ॥**

आज्येन यूपमञ्ज्यादुपरवर्जम् । उपरस्याग्रे अञ्जनविधानात् ॥ २ ॥

[ अन्तर्बहिश्च चषालाञ्जनम् ]

**चषालमुभयतः ॥ ३ ॥**

चषालमन्तर्बहिश्चानेनैव मन्त्रेणाञ्ज्यात् ॥ ३ ॥

[ अक्तं चषालं यूपचूडायां प्रतिमुञ्चेत् ]

**अक्तं प्रतिमुञ्चति "सुपिप्पलाभ्य" इति ॥ ४ ॥**

अक्तं चषालं यूपचूडायां ( पूर्वोक्तस्थाने ) प्रतिमुञ्चेत् ॥ ४ ॥

[ उपरस्य अग्निसंमुखयूपप्रदेशस्य च पुनरञ्जनं, नाभिमात्रस्य यूपदेशस्य रशनासंवरणीयस्य समन्ततः परिमर्शनं च ]

**सोपरमग्निष्ठादेशमक्त्वा परिव्ययणदेशꣳ समन्तं परिमृश्याध्वर्युर्नावसृजेदापरिव्ययणात् ॥ ५ ॥**

उपरेण सह वर्तत इति सोपरम् । अग्निसमीपे तिष्ठतीत्यग्निष्ठा = अग्नेरभिमुखीभूता प्रत्यासन्ना यूपस्याश्रिः । यूपस्य सोपरमग्निसंमुखाश्रदेशं पुनस्तेनैव मन्त्रेणाक्त्वा परिव्ययणदेशं = यूपस्य रशनाबन्धनस्थानं सर्वतो हस्तेन गृहीत्वाऽऽपरिव्ययणादध्वर्युर्न विसृजेत । अधुना अग्निसमीपेऽवस्थानाभावादग्निष्ठादेशमित्युक्तम् ॥ ५ ॥

उच्छ्रीयमाणायाऽनुवाचयति। ६ ॥

"उच्छ्रीयमाणायानुब्रूहि" इति होतारं प्रेष्येत् ॥ ६ ॥

"द्यामग्रेणे"त्युच्छ्रयति ॥ ७ ॥

तं नाभिमात्रे सर्वतो गृहीतं यूपमुच्छ्रयेत् ॥ ७ ॥

[ पूर्वं सोपराक्ताग्निमाहवनीयसंमुखां कुर्वन् यूपं गर्ते प्रक्षिपेत् ]

"या त" इति मिनोत्यग्निष्ठा सम्भत्याहवनीयम् ॥ ८ ॥

यूपस्य पञ्चमांशं गर्त्ते प्रक्षिप्य या अश्रिः पूर्वं सापरा अक्ता, तां चिह्नितां कृत्वाऽधुना तामाहवनीयसमीपे कुर्यात् ॥८॥

[ पांसुभिर्यूपगर्त्तपूरणम् ]

"ब्रह्मवनित्वे"ति पांसुभिः पर्यूहति ॥ ९ ॥

यूपावटं पांसुभिः पूरयेत् ॥ ९ ॥

[ पांसूनां गर्त्ताधःप्रवेशनेन दृढीकरणम् ]

"ब्रह्मदृꣳहे"ति मैत्रावरुणदण्डेन समन्तं त्रिः पर्यृषति ॥ १० ॥

पांसुभिः पूरितं गर्त्तं सर्वतस्त्रिः कुट्टयति। कुट्टनेन च पांसूनवटेऽधः प्रवेशयेत् ॥ १० ॥

[ गर्त्तस्याद्भिरुपसेचनं यजमानवाचनं च ]

समं भूमि कृत्वाऽद्भिरुपसिच्य "विष्णोः कर्माणी"ति वाचयति यूपमन्वारब्धम् ॥ ११ ॥

तमवटं परिपिहनेन वर्त्तमानया भूम्या समं कृत्वा लौकाद्भिरुपसिच्य यूपं कृतान्वारम्भं यजमानं विष्णोः कर्माणीति मन्त्रमध्वर्युर्वाचयेत्। यूपमन्वारभस्वेत्यध्येषणा कार्येति कर्कादयः ॥ ११ ॥

"तद्विष्णो"रिति चषालमीक्षमाणम् ॥ १२ ॥

यजमानं वाचयेत् ॥१२॥

[ कौश्या रशनया यूपस्य त्रिवृत्परिव्ययणम् ]

परिवीयमाणायानुवाचयति, त्रिगुणा त्रिव्यामा कौशी रशना तया नाभिमात्रे त्रिवृतं परिव्ययति "परिवीरसी"ति ॥ १३ ॥

यूपाय परिवीयमाणायानुब्रूहि इति होतारं प्रेष्येदध्वर्युः। त्रिगुणिना व्यामत्रयप्रमाणा (प्रसारितयोर्भुजयोरन्तरालं व्यामः) कौशी रज्जुः। तया रज्ज्वा (मध्यभागे वालः परिधानस्थाने) यजमाननाभिसम्मिते यूपस्य प्रदेशे प्रदक्षिणं यूपं त्रिर्वेष्टयेत् ॥ १३ ॥

[ रशनाप्रान्तं रशनाप्रान्तेन संसृज्य गोपायेत् ]

सꣳस्पृश्यान्यतरस्यामन्तं प्रवेशयति ॥ १४ ॥

मध्ये निविष्टायास्तस्या रज्ज्वा अवशिष्टावुभौ प्रान्तौ परस्परं मिश्रीकृत्यान्यतरस्यां रशनाप्रान्तं प्रवेशयेत् ॥ १४ ॥

[ अग्निसंमुखकोणस्योत्तरतः यूपरशनान्तराले यूपशकलप्रवेशः ]

**यूपशकलमस्यामवगूहत्युत्तरेणाग्निष्ठां "दिवः सूनुरसी"ति ॥ १५ ॥**

अग्निष्ठामश्रिमुत्तरेण यूपे त्रिर्वेष्टितायामस्यां रशनायां यूपशकलं=स्वरुम् अधोमुखं रशनायूपान्तराले प्रवेशयेत् ॥ १५ ॥

**बहुषु यथास्वम् ॥ १६ ॥**

यूपैकादशिनीपक्षे, अश्वमेधादौ च बहुषु यूपेषु सत्सु यो यस्य यूपस्य स्वरुस्तं तस्मिन्नवगूहेत् ॥ १६ ॥

[ कुशेन प्रत्यङ्मुखस्य पशोरुपस्पर्शनम् ]

**"उपावीरसी"ति तृणमादाय तेन पशुमुपस्पृश"त्युपदेवानि"ति ॥ १७ ॥**

स्तृतबर्हिषोऽन्यद् दर्भतृणमादाय तेन तृणेन पुरस्तात्प्रत्यङ्मुखमवस्थितं पशुमुपस्पृशेत् ॥ १७ ॥

[ छाग एव पशुर्ग्राह्यः ]

**छागं मन्त्राम्नानात् ॥ १८ ॥**

"होता यक्षदश्विनौ छागस्य" (शु० य० २१।४३) इत्यादिषु मन्त्रेषु छागस्याम्नानादजं पशुमुपाकरोति। तृणेन पशोरुपस्पर्शनमुपाकरणम् ॥१८॥

**पन्नदमव्यङ्गम् ॥ १९ ॥**

पन्नदं=जातदन्तम्, अव्यङ्गम्=अनूनाङ्गम् पशुमुपाकुर्यात्। विगतमङ्गं यस्य स व्यङ्गः। न व्यङ्गोऽव्यङ्गस्तम् ॥ १९ ॥

[ मन्त्रवर्णोक्तमातृमत्त्वपितृमत्त्वादिगुणविशिष्ट एव पशुर्ग्रहीतव्य इति न नियमः ]

**यथामन्त्रवर्णं प्रोक्षणे ॥ २० ॥**

"अनु त्वा माता मन्यताम्" (४।२०) इत्यस्मिन्प्रोक्षणमन्त्रे यादृशः पशुरभिहितस्तादृशं पशुमुपाकुर्यात्। मातृमन्तं पितृमन्तं भ्रातृमन्तं चेत्यर्थः ॥ २० ॥

**नाचोदितत्वात् ॥ २१ ॥**

यदुक्तं तन्न। मातृमन्तं पितृमन्तं वोपाकुर्यादित्येवं विधायकचोदनाया अभावात्। मन्त्राणां चाविधायकत्वात् ॥ २१ ॥

[ वैश्वदेवपर्वोक्तशकलादानाद्यग्नावग्निरिति होमान्तधर्मकं मन्थनं कर्त्तव्यम् ]

**अग्निं मन्थत्याहोमात्करोति ॥ २२ ॥**

अग्निं मन्थति। तत्र अग्नेर्जनित्रमिति शकलमादायेत्यारभ्य अग्नावग्निरिति होमान्तं (५।१।२२-५।२।६) वैश्वदेवपर्ववत्कुर्यात् ॥ २२ ॥

[ सन्नियुक्तयोरुपाकरणमन्थनयोर्विकल्पः ]

**उपाकरण-मन्थने वा ॥ २३ ॥**

विकल्पेन भवतः। सन्नियोगशिष्टत्वात्संयुक्तयोरेवानयोर्विकल्पः। यद्वि भवतस्तदोभे भवतः। न चानयोरेकं भवतीति ॥ २३ ॥

[ दर्भमय्या द्विगुणरज्वा दक्षिणशृङ्गाभिमुखं पाशं प्रतिमुच्य पशुं बध्नीयात् ]

द्विगुणरशनया द्विव्यामया कौश्या पाशं कृत्वाऽन्तरा शृङ्गमभिदक्षिणं बध्ना"त्यृतस्य त्वे"ति ॥ २४ ॥

पाशं = नागपाशं कृत्वा शृङ्गयोरन्तराले पशुं बध्नाति । अभिदक्षिणं शृङ्गसंमुखं पाशं प्रतिमुच्येत्यर्थः ॥ २४ ॥

"देवस्य त्वे"ति यूपे ॥ २५ ॥

रज्जुबद्धं पशुं यूपे बध्नीयात् ॥ २५ ॥

[ पशौ देवताविकल्पः ]

ऐन्द्राग्नः, सौर्यः, प्राजापत्यो वा यमिच्छेत् ॥ २६ ॥

अयं निरूढपशुः इन्द्राग्निदेवतो वा सूर्यदेवतो वा प्रजापतिदेवतो वा भवेत् । एते त्रयो विकल्पाः । प्रथमप्रयोगे यद्देवतं पशुं कर्त्तुमिच्छेत्तं यावज्जीवं कुर्यात्, न प्रतिप्रयोगमिच्छया । अतः प्रथमप्रयोगे इच्छाविकल्पः ॥ २६ ॥

[ संस्कृताभिरद्भिः पशुं प्रोक्षेत् ]

"अद्भ्यस्त्वे"ति पशुं प्रोक्षणीभिः प्रोक्षति ॥ २७ ॥

प्रोक्षणीशब्दश्च यौगिकोऽपि संस्कृतप्रोक्षणीविषयः । प्रोक्षणाऽपादानसामर्थ्यात् ॥२७॥

[ पशोर्जलपायनम् ]

"अपां पेरु"रित्यास्य उपगृह्णाति ॥ २८ ॥

पशोर्मुखे प्रोक्षणीरपः प्रक्षिपेत् । तृडभावेऽपि पाययेत । मुखस्याधस्तात्संलग्ना एव प्रोक्षणीर्धारयेदित्यर्थः ॥ २८ ॥

[ हृदयादिदेशे पशोः प्रोक्षणम् ]

"आपो देवी"रित्यधस्तादुपोक्षति ॥ २९ ॥

पशोरुदरहृदयप्रदेशे प्रोक्षेत् ॥ २९ ॥

इति षष्ठाध्याये तृतीया कण्डिका ॥३॥



[ इध्मप्रैषादिप्राकृतकार्यकरणम् ]

इध्मप्रैषादि करोत्याप्रयाजेभ्यः ॥ १ ॥

अग्नये समिध्यमानायेत्यारभ्य प्रयाजहोमपर्यन्तं प्राकृतं कर्म कुर्यात् ॥ १ ॥

तत्र विशेषः—

[ उत्तराघारानन्तरं पशोः पूर्वं समञ्जनम् ]

उत्तराघारमाघार्य पशुं पूर्वं समनक्ति ललाटाꣳसश्रोणिषु "सन्त" इति प्रतिमन्त्रम् ॥ २ ॥

उत्तराघारहोमानन्तरं ध्रुवासमञ्जनात्प्राक् ललाटे दक्षिणोत्तरस्कन्धयोः दक्षिणोत्तर कट्योश्च जुहूस्थेनाज्येन ( जुह्वैव ) समनक्ति । अंसयोः श्रोण्योश्च मन्त्रावृत्तिः ॥ २ ॥

प्रवृत्य होतारमाश्राव्या"ह्यग्निर्ह दैवीनां विशां पुर एतायं यजमानो मनुष्याणाᳬं सुन्वन्निति सुन्ये, तयोरस्थूरि गार्हपत्यं दीदयच्छतᳬ हिमा-द्वायू राधाᳬसीत्सम्पृञ्चानावसम्पृञ्चानौ तन्व" इति ॥ ३ ॥

प्रकृतिवद्धोतृवरणं कृत्वा पुनराश्राव्याह अग्निर्ह दैवीनामिति मन्त्रं तन्व इत्यन्तमध्वर्युः। अत्र मन्त्रे सुत्येऽहनि सोमयागे द्वौ ऋतुग्रहौ स्तः। तत्सम्बन्धिनि याज्यावरणसंज्ञके मन्त्रे सुन्वन् शब्दः पठनीयः। ऋतुयाज्यार्थं वरणे पुर एतायं यजमानो मनुष्याणां तयोरस्थूरीति सुन्वन्पदरहितः प्रयागः कार्यः। पुनराश्रावणं च मैत्रावरुणार्थम्। "स मैत्रावरुणायै-वाश्रावयति" ( श० ३।७।४।१० ) इति वचनात् ॥ ३ ॥

[ मैत्रावरुणाय दण्डदानम् ]

मैत्रावरुणाय दण्डं प्रयच्छति 'मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा प्रयच्छामी'त्यौदुम्बरं यजमानमुखमात्रम् ॥ ४ ॥

दीक्षितदण्डᳬ सोमे ॥ ५ ॥

मैत्रावरुणाय दीक्षितस्य यजमानस्य दण्डं दद्यादध्वर्युः ॥ ५ ॥

सोमे दण्डप्रदानस्य कालान्तरमाह—

क्रीते वा ॥ ६ ॥

सोमे सोमक्रयणानन्तरं दद्यादस्मिन्नवसरे वा ॥ ६ ॥

[ पशौ एकादश प्रयाजा अनुयाजाश्च अन्त्याभ्यासेनैव सम्पादनीयाः ]

एकादश प्रयाजा अनुयाजाश्च ॥ ७ ॥

अत्र पशौ कर्त्तव्याः ॥ ७ ॥

[ मैत्रावरुणसंयुक्ते कर्मणि यजेत्यस्य स्थाने प्रेष्येति वक्तव्यम् ]

समैत्रावरुणे प्रेष्येत्याह यजस्थाने वचने ॥ ८ ॥

समैत्रावरुणे पशुसंमादौ यजस्थाने प्रेष्य इति वक्तव्यम्, यत्र मैत्रावरुणस्य प्रैषाख्यार्थे प्रैषवचनमस्ति। यथा—आज्यभागादौ अग्नये प्रेष्य, सामाय प्रेष्येति। यत्र पशौ पत्नीसंयाजादिषु प्रैषवचनाभावस्तत्र यजेत्येव वक्तव्यम् ॥ ८ ॥

[ अध्वर्योर्विशासितारं प्रति अस्याहरणप्रैषः ]

दशेष्ट्वा प्रयाजानाह शासमाहरेति ॥ ९ ॥

शासहस्तं विशासितारं प्रत्यध्वर्युर्ब्रूयात्। शासः असिः कट्टारिका, न खड्गः ॥ ९ ॥

[ अक्ताभ्यां स्वरुस्वधितिभ्यां पशुललाटस्पर्शः ]

स्वरुमादायाक्त्वोभौ जुह्वग्रे ताभ्यां पशोर्ललाटमुपस्पृशति "घृतेनाक्ता"विति ॥ १० ॥

विशसित्रा दत्तं शासमादाय यूपात्स्वरुं च स्वयमेवादाय उभौ असिस्वरू जुह्वा अग्रे प्रणालिकायां घृतेनाक्त्वा ताभ्यां स्वरुस्वधितिभ्यां पशोर्ललाटमालभेत् ॥ १० ॥

[ स्वरुं यूपे यथास्थानेऽवगुह्य विशसित्रेऽसिदानम् ]

## स्वरुमवगुह्यासिं प्रयच्छन्नाहैषा ते प्रज्ञानाऽश्रिरस्त्वि'ति ॥ ११ ॥

स्वरुं यूपे यथास्थाने ऽवगुह्य शमित्रेऽसिं प्रयच्छन् सन् ब्रूयात् । एषा अश्रिधारा ते तव चिह्निता भवतु इति वाक्यार्थः। असेर्धाराद्वयं, तत्रैका अक्ता, अपरा अनक्ता। त्वया अनक्तया धारया पशुविशसनं कर्त्तव्यमित्यर्थः । अक्तया तु शृतपशोरवदानं भविष्यति ॥ ११ ॥

## सादयित्वा स्रुचौ, चात्वालमुत्तरेण शामित्रायोल्लिखति ॥ १२ ॥

शामित्राग्नेः स्थापनार्थमुल्लिखति। अत्र उल्लेखनोपलिक्षिताः स्मार्ताः पञ्च भूसंस्काराः प्रवर्त्तन्ते। शामित्रः पशुश्रपणोऽग्निरुच्यते। "अभिपर्यग्निकृते देश उल्मुकं निदधाति स शामित्र" (७।१६।२-३) इत्यापस्तम्बोक्तेः ॥१२॥

इति कातीयश्रौतसूत्रवृत्तौ चतुर्थी कण्डिका ॥ ४ ॥

---

[ अध्वर्योर्मैत्रावरुणं प्रति अनुवचनप्रैषः ]

## पर्यग्नयेऽनुवाचयति ॥ १ ॥

पर्यग्नयेऽनुब्रूहि इति मैत्रावरुणेन वाचनं कारयति। परि सर्वतोऽग्निर्यस्य स पर्यग्निः पशुस्तस्मै। पर्यग्निकुर्यादित्यत्र पर्यग्नि इति आज्यविशेषणं बोध्यं, क्रियाविशेषणं वा। पर्यग्निकरणं चाग्नीत्कर्तृकम् ॥ १ ॥

[ उल्मुकमादायाग्नीध्रः पश्वादीन् पड्, आज्यादींस्त्रीनेव वा परितस्त्रिर्गच्छति प्रदक्षिणम् ]

## आहवनीयोल्मुकमादायाग्नीत् त्रिः समन्तं पर्येति पश्वाज्यशामित्रदेश-यूप-चात्वालाहवनीयान् ॥ २ ॥

अग्नीत् त्रिवारं सर्वतः प्रदक्षिणमेतान् परितो गच्छेत् ॥ २ ॥

## आज्य-पशु-शामित्रान्वा ॥ ३ ॥

अथवा जुह्वादिस्थानि आज्यानि, पशुः, शामित्रं च इत्येतानेव त्रीन् पर्यग्निकरोति, न सर्वान् ॥ ३ ॥

## प्रतिप्रास्योल्मुकं तावत्प्रतिपर्येति ॥ ४ ॥

उल्मुकमाहवनीये प्रतिप्रक्षिप्य अग्नीत् त्रिवारमप्रदक्षिणं पश्वादीन्परितो गच्छेत्। पुनरपीतरथावृत्त्यर्थमेकवारं प्रदक्षिणं परिगमनमिति याज्ञिकाः ॥ ४ ॥

## पुनरादायोदङ् प्रतिपद्यते ॥ ५ ॥

अग्नीत् पुनस्तमेवोल्मुकमादायोदङ्मुखो गन्तुं प्रारभते ॥ ५ ॥

[ उल्मुकहस्तमाग्नीध्रं पशुरनुनीयते ]

## पशुश्चान्वक् ॥ ६ ॥

पशुश्च तस्याग्नीध्रस्य पृष्ठतो गच्छेत्। शमिता पशुरशनां मस्तकादवतीर्य गले बद्ध्वाऽऽग्नीध्रमनु नयेदित्यर्थः। "शमितैनं कण्ठे बध्वा नयति" इति श्रुतेः ॥ ६ ॥

[ नीयमानं पशुं प्रतिप्रस्थाताऽन्वारभते ]

**प्रतिप्रस्थाताऽन्वारभत एनं वपाश्रपणीभ्यां कार्ष्मर्यमयीभ्यां विशाखाऽविशाखाभ्याम् ॥ ७ ॥**

एनं पशुं वपाश्रणीभ्यामन्वारभेत। वपा श्रप्यते आभ्यां ते, ताभ्याम्। कीदृशीभ्याम्, श्रीपर्णीवृक्षनिर्मिताभ्याम्, विशाखाऽविशाखाभ्याम्। 'द्विशृङ्गैकशृङ्गाभ्याम्' इति काठके। द्विशूलैकशूलाभ्यामित्यापस्तम्बः। अतश्च एका विशाखा द्विशृङ्गा द्विशूला मेथ्याकारा सकर्णका इत्यर्थः। द्वितीया अविशाखा ऋज्वी तता एकशृङ्गा एकशूला अकर्णका इत्यर्थः ॥ ७ ॥

**तमध्वर्युर्यजमानोऽध्वर्युम् ॥ ८ ॥**

प्रतिप्रस्थातारमध्वर्युरन्वारभते। अध्वर्युं च यजमानः ॥ ८ ॥

[ होतृप्रैषार्थं मैत्रावरुणस्याध्वर्युणा प्रैषः ]

**वेदितृणेऽध्वर्युरादायाऽऽश्राव्या 'होपप्रेष्य होतर्हव्या देवेभ्य' इति ॥ ९ ॥**

अध्वर्युरास्तृताया वेदेर्द्वे तृणे आदाय आश्राव्य मैत्रावरुणं प्रति प्रैषं ब्रूयात् ॥ ९ ॥

**"रेवति यजमान" इति वाचयति ॥ १० ॥**

यजमानमध्वर्युः ॥ १० ॥

[ प्रतिप्रस्थातारमन्वारभमाणः पशुमनुगच्छन्नध्वर्युः शामित्राग्निस्थानं नातिक्रामेत् ]

**शामित्रं नातीयात् ॥ ११ ॥**

अध्वर्युः पशुमनुगच्छन् शामित्रमतिक्रम्य न गच्छेत्, किन्तु शामित्रसमीपे एव तिष्ठेत् ॥ ११ ॥

**शामित्रेऽग्निं निदधाति ॥ १२ ॥**

अग्नीद्धस्तस्थमुल्मुकमध्वर्युः शामित्रे स्थापयति ॥ १२ ॥

[ अचिरनिर्मथिताग्नेर्निधानं केचिदाहुः ]

**निर्मन्थ्यमेके ॥ १३**

एके शाखिनोऽचिरनिर्मन्थ्यमग्निं शामित्रे निदधति, न प्रकृतमुल्मुकम्। अस्मिन्पक्षे नोल्मुकाहरणम् ॥ १३ ॥

[ शामित्रस्य पश्चात्तृणप्रक्षेपः ]

**पश्चात्तृणमुपास्यति "वर्षो वर्षीयसी"ति ॥ १४ ॥**

शामित्रस्य पश्चात् हस्तस्थयोर्वेदितृणयोर्मध्येऽन्यतरत्तृणं प्रागग्रं प्रक्षिपेत् ॥ १४ ॥

[ पशुविशसनम् ]

**तस्मिन्नेनं निघ्नन्ति प्रत्यक्शिरसमुदक्पादम् ॥ १५ ॥**

तस्मिंस्तृणे एनं पशुं नितरां मारयन्ति। प्रतीच्यां दिशि शिरो यस्यासौ, तम्। उदीच्यां पादौ यस्यासौ, तम् ॥ १५ ॥

**प्राक्शिरसं वा ॥ १६ ॥**

उदक्पादमिति तु स्थितमेव ॥ १६ ॥

सङ्गृह्य मुखं तमयन्त्यवारयमानम् ॥ १७ ॥

श्वासरोधो यथा स्यात्तथा पशोर्मुखस्य दृढग्रहणं कृत्वा, यथा च मार्यमाणः शब्दं न करोति तथा मारयेयुः ॥ १७ ॥

वेष्केण वा ॥ १८ ॥

वेष्को गलाऽऽवेष्टकः । गलं वाऽऽवेष्ट्य मारयन्ति ॥ १८ ॥

एत्याऽऽहवनीयमावृत्याऽऽसते ॥ १९ ॥

शामित्रादाहवनीयसमीपमागत्य तं प्रदक्षिणमावृत्य आसते अध्वर्यु-यजमान-प्रतिप्रस्थात्राग्नीध्राः ॥ १९ ॥

'संज्ञपयान्वग'न्नित्येव ब्रूयात् ॥ २० ॥

इममेव प्रैषं ब्रूयात्, न जहि मारयेत्यादिकम् । अमुं पशुं संज्ञपय, मारय । अयं संज्ञप्तः सन् देवाननुगच्छत्विति प्रैषार्थः ॥ २० ॥

"स्वाहा देवेभ्य" इति जुहोति ॥ २१ ॥

अध्वर्युः सकृद्गृहीतमाज्यं पूर्णाहुतिधर्मेण जुहुयात् ॥ २१ ॥

संज्ञप्तः पशुरिति प्रोक्ते 'शेतां नु मुहूर्त'मित्याहाऽसोमे ॥ २२ ॥

संज्ञप्तः पशुरिति शमित्रा प्रोक्ते अध्वर्युः सोमादन्यत्र निरूढे पशौ शेताम्नु मुहूर्तम् इति ब्रूयात् ॥ २२ ॥

"देवेभ्यः स्वाहे"ति जुहोति ॥ २३ ॥

पूर्णाहुतिसंस्कृतेनैवाज्येन ॥ २३ ॥

न वैते जुहुयात् ॥ २४ ॥

एते परिपशव्याहुती जुहुयात्, न वा जुहुयात् ॥ २४ ॥

[ पशुबन्धनरज्जुं वपाश्रपणीभ्यां चात्वाले प्रास्येत् ]

वपाश्रपणीभ्यां नियोजनीं चात्वाले प्रास्यति "माहिर्भू"रिति ॥ २५ ॥

पशुबन्धनरज्जुं प्रक्षिपेदध्वर्युः ॥ २५ ॥

[ पत्न्यानयनार्थं प्रतिप्रस्थातुः प्रैषः सोमबाह्यपशुषु, नेष्टुः सोमयागे ]

प्रतिप्रस्थातः पत्नीमुदानयेत्याह, नेष्टरिति सोमे ॥ २६ ॥

सोमान्तर्भूतेष्वग्नीषोमीयसवनीयेषु नेष्टः पत्नीमुदानयेति वक्तव्यम् । सोमबाह्येषु पशुषु प्रतिप्रस्थातरिति वक्तव्यम् ॥ २६ ॥

इति षष्ठाध्याये पञ्चमी कण्डिका ॥ ५ ॥



[ पादादिशोधनार्थं जलकलशहस्तायाः पत्न्या वाचनम् ]

पान्नेजनहस्तां वाचयति नम"स्त आताने"ति ॥ १ ॥

पादग्रहणमवयवप्रदर्शनार्थम् । पादौ निज्यतेऽनेनेति पान्नेजनो मुखाद्यवयवशोधनार्थो जलकलशो हस्ते यस्याः सा, तां पत्नीं प्रतिप्रस्थाता नेष्टा वा गार्हपत्यसमीपात् पशुशोधनाय स्वयम् आनयेत् ॥ १ ॥

[ इन्द्रियाधिष्ठानानां वागादीनां पत्न्या शोधनम् ]

**पशोः प्राणाञ्छुन्धति पत्नी ॥ २ ॥**

मृतस्य पशोः प्राणायतनान्यद्भिः पत्नी स्पृशेत् ॥ २ ॥

तान्येवाह—

**मुखं नासिके चक्षुषी कर्णौ नाभिं मेढ्रं पायुं पादान्त्सꣳहृत्य "वाचं ते शुन्धामी"ति प्रतिमन्त्रम् ॥ ३ ॥**

नासिकयोश्चक्षुषोः कर्णयोश्च भेदेनोपस्पर्शनं, युगपदशक्यत्वात्। भेदे च मन्त्रावृत्तिः। पादान् चतुरोऽप्येकत्र कृत्वा शुन्धेत् ॥ ३ ॥

**शेषेण यजमानश्च शिरःप्रभृत्यनुषिञ्चतो "मनस्त" इति शिरः ॥ ४ ॥**

पान्नेजनशेषेण यजमानोऽध्वर्युश्च पशोः शिरःप्रभृत्यङ्गान्यनुषिञ्चेताम्। तत्र मनस्त इति पशोः शिरोऽनुषिञ्चतः। त्रिलिङ्गत्वादस्य विनियोग उक्तः। वाक्त इत्यादिमन्त्राणां तु लिङ्गादेव विनियोगो बोध्यः ॥ ४ ॥

**"यत्ते क्रूर"मित्यङ्गानि ॥ ५ ॥**

सर्वाण्यङ्गान्यनुषिञ्चतः ॥ ५ ॥

**"शमहोभ्य" इति पश्चात्पशोर्निषिञ्चतः ॥ ६ ॥**

पशोर्जघनप्रदेशे पान्नेजनशेषमुभावपि निनयतः ॥ ६ ॥

[ नाभ्यग्रे तृणनिधानादिपूर्वकं वपोत्खेदनम् ]

**उत्तानं पशुं कृत्वाऽग्रेण नाभिं तृणं निदधा"त्योषध" इति ॥ ७ ॥**

अध्वर्युः पशुमुत्तानं कृत्वा नाभेरग्रतो (वपायाः स्थाने) ऽङ्गुलचतुष्टयं त्यक्त्वा प्रागग्रं तृणं निदध्यात् ॥ ७ ॥

**"स्वधित" इति प्रज्ञातयाऽभिनिधाय छित्वाऽग्रꣳ सव्ये कृत्वा दक्षिणेन मूलमुभयतोऽनक्ति लोहितेन "रक्षसा"मिति ॥ ८ ॥**

स्वधित इति मन्त्रेण कृतचिन्हां घृताक्तामसिधारां तृणस्योपरि निधाय तूष्णीं सतृणामुदरत्वचं तिर्यक् पाटयित्वा तृणाग्रं पृथग्भूतं सव्ये हस्ते कृत्वा दक्षिणहस्तेन तृणमूलं द्विगुणीकृत्याग्रे मूले च छेदनस्थाने समुत्पन्नेन पशो रुधिरेणाञ्ज्यात् ॥ ८ ॥

**"निरस्त"मित्यपास्यति ॥ ९ ॥**

रुधिराक्तं तृणमूलमुत्करे प्रक्षिपेत् ॥ ९ ॥

**"इदमह" मित्यभितिष्ठति यजमानः ॥ १० ॥**

उत्करे क्षिप्तं तृणमूलं पादेनाक्रमेद्यजमानः ॥ १० ॥

[ वपया वपाश्रपण्यौ वेष्टयति ]

**वपामुत्खिद्य वपाश्रपण्यौ प्रोर्णौति "घृतेन द्यावापृथिवी"ति ॥ ११ ॥**

पाटितात्पशोरुदराद्वपां निष्काश्य तया वपाश्रपण्यौ प्रकर्षेण छादयेत् ॥ ११ ॥

[ वपाछेदनादिकम् ]

**परिवास्य चात्वालेऽवसिच्य शामित्रे प्रतपति ॥१२॥**

तां वपामुदरसंलग्नां छेदनेन पृथक्कृत्य चात्वाले वपाश्रपणीस्थामेव वपामुदकेन परिषिच्य शामित्रे प्रतपति प्रतिप्रस्थाता ॥१२॥

**शामित्रैकदेशमाहवनीये प्रास्यत्यग्नीत् ॥१३॥**

निर्मन्थ्यपक्षे नैतत्कार्यम् ॥१३॥

**तृणाग्रं चाध्वर्यु"र्वायो वे"रिति ॥१४॥**

सव्यहस्ते कृतं तृणाग्रं चाहवनीयेऽधुना प्रक्षिपेदध्वर्युः ॥१४॥

[ वपाश्रपणम् ]

**उत्तरतस्तिष्ठन्प्रतप्य वपा, मन्तरा यूपाग्नी हृत्वा दक्षिणतः प्रतिप्रस्थाता श्रपयति परीत्य ॥१५॥**

प्रतिप्रस्थाताऽऽहवनीयादुत्तरे तिष्ठन् वपां प्रतप्य ततोऽग्नियूपयोरन्तरालेन वपां हृत्वा स्वयमपि परीत्य ( नतूत्तरतः स्थित एव ) आहवनीयाद्दक्षिणदिश्यासीन आहवनीये एव वपां श्रपयेत् ॥१५॥

[ वपाभिघारणम् ]

**वपाꣳ स्रुवेणाभिघारय"त्यग्निराज्यस्ये"ति ॥१६॥**

आहवनीयस्योपरि धृतां वपां स्रुवेणाभिघारयेत् ॥१६॥

**स्तोकेभ्योऽनुवाचयति ॥१७॥**

स्तोकेभ्योऽनुब्रूहीति मैत्रावरुणं प्रेष्येत् । वपायां श्रप्यमाणायां तापवशोद्भपाया ये बिन्दवः पतन्ति ते स्तोकाः ॥१७॥

**श्रृतायाꣳ श्रृता प्रचरेत्याह प्रतिप्रस्थाता ॥१८॥**

अध्वर्युं प्रति । शृता वपा, त्वं प्रचरेति प्रैपार्थः ॥ १८ ॥

[ उत्तमप्रयाजप्रैषः ]

**स्वाहाकृतिभ्यः प्रेष्येति ॥ १९ ॥**

स्वाहाकृतिभ्यः प्रेष्य इति मैत्रावरुणं प्रेष्येत् । स्वाहाकृतिशब्देनोत्तमः प्रयाज उच्यते ॥ १९ ॥

[ निरूढपशौ आज्यभागकरणपक्षे उत्तमप्रयाजानन्तरं प्रथमं ध्रुवामभिघार्य वपापृषदाज्ययोरभिघारणम् । आज्यभागाननुष्ठानपक्षे वपामभिघार्य ध्रुवापृषदाज्ययोरभिघारणम् ]

**हुत्वा, वपामभिघारयति पृषदाज्यं, ध्रुवां प्रथममाज्यभागौ चेत् ॥ २० ॥**

उत्तमं प्रयाजं ( स्वाहाकृतिभ्यो ) हुत्वा प्रयाजशेषाज्येन प्रथमं वपां, ततो ध्रुवां, ततः पृषदाज्यमभिघारयेत् । निरूढे आज्यभागयोर्वैकल्पिकत्वात् आज्यभागौ चेत्पशौ क्रियेते तदा प्रथमं ध्रुवामभिघारयेत्, ततो वपां, ततः पृषदाज्यमिति क्रमान्यत्वं पशावाज्यभागपक्षे वेदितव्यम् । प्रथमः क्रमस्तु आज्यभागाभावपक्षे बोध्यः ॥ २० ॥

**अत्राज्यभागौ कुर्वन् ॥ २१ ॥**

पश्चादाज्यभागौ कुर्वन्नत्र अवसरे वपाया अभिघारणं करोति। अग्नीषोमीये आज्यभागौ न स्त एवेति कर्काचार्याः ॥ २१ ॥

[ आज्योपस्तारः, हिरण्यशकलावधानम्, वपानिधानञ्च, पुनर्हिरण्यशकलावधानम्, तदुपरि सकृदभिघारणम् इत्येवं पञ्चावत्ता वपा कार्या ]

**वपया चरिष्यन्नुपस्तीर्य हिरण्यमवधाय वपामवद्यन्नाहे'न्द्राग्निभ्यां छागस्य वपायै मेदसोऽनुब्रूही'ति ॥ २२ ॥**

आज्यं जुह्वामुपस्तीर्य तत्र हिरण्यं निधाय आह। सौर्यपशुपक्षे सूर्याय छागस्येति, प्राजापत्यपशुपक्षे प्रजापतये छागस्येति प्रयोगः। अत्राखण्डैव वपा सकृदेव देया ॥ २२ ॥

**हिरण्यमवधाय द्विरभिघारणꣳ सोमे ॥२३॥**

वपावदानानन्तरं पुनरुपरिष्टाद्धिरण्यमवधाय निकद्धे सकृदभिघारणं कुर्यात्। सोमे तु द्विरभिघारयेदिति विशेषः ॥२३॥

[ वपायागप्रैषः ]

**आश्राव्याहे'न्द्राग्निभ्यां छागस्य वपां मेदः प्रेष्ये'ति ॥२४॥**

मैत्रावरुणम् ॥२४॥

**प्रस्थितमि'ति च प्रसुते ॥२५॥**

सवनीये पशौ इन्द्राग्निभ्यां छागस्य वपां मेदः प्रस्थितं प्रेष्येति ब्रूयात् ॥२५॥

[ वपाश्रपण्योराहवनीये प्रासनम् ]

**हुत्वा, वपाश्रपण्यावनुप्रास्यति प्राचीं विशाखां प्रतीचीमितराꣳ "स्वाहाकृते" इति ॥२६॥**

वपां हुत्वा वपाश्रपण्यावाहवनीये प्रक्षिपेत्। प्रक्षेपप्रकारमाह—विशाखां = द्विश्रृङ्गां प्रागग्राम्, इतरामेकश्रृङ्गां प्रत्यगग्रां क्षिपेत् २६॥

**चात्वाले मार्जयन्ते सपत्नीका "इदमापः प्रवहते"ति ॥२७॥**

चात्वालसमीपे षड् ऋत्विजो यजमानः पत्नी चाद्भिरात्मानमभ्युक्षन्ति। पत्नी च मन्त्रेणैव मार्जनं कुर्यात्। "पत्नी च गार्हपत्ये तूष्णीम् (५।५।३५) इति समिदाधानादौ मन्त्रनिवृत्तिदर्शनात्। मार्जयन्त इति स्वार्थे णिच् ॥२७॥

इति षष्ठाध्याये षष्ठी कण्डिका ॥ ६ ॥

---

**निशास्ति पशुमन्यः ॥ १ ॥**

ऋत्विग्भ्योऽन्यः कश्चित्पशु मारयति। संज्ञामेदाम्। अन्या हि संज्ञा शमितेति। "शमितैं कण्ठे बध्वा नयति" इति। शमु हिंसायाम् ॥ १ ॥

एवं प्राप्त आह—

ऋत्विजां वैकोऽप्रक्लृप्तत्वाच्छमित्रे ॥ २ ॥

वाऽवधारणे। ऋत्विजामेव यः कश्चिदेकः पशुं हिनस्ति। कुतः? शमितुः कर्मणि माम्ने वेदे ऋत्विग्व्यतिरिक्तस्य शमितुरनुक्तत्वात्। शमितेति संज्ञा तु यौगिकी। ऋत्विजामेवैकः शमनक्रियायोगाच्छमिता। तस्मादृत्विगेव पशुं विशास्ति ॥ २ ॥

उपगादर्शनाच्च ॥ ३ ॥

ज्योतिष्टोमे उद्गातरि गायति सति तमनुसृत्य ये गायन्ति ते उपगाः। ते चोपगा ऋत्विज एव भवितुमर्हन्ति इति सिद्धान्तिनम्। अथवा "हो इति ऋत्विज उपगायन्ति" इत्यनेन ऋत्विजामपि उपगानकर्तृत्वं दृश्यते। न चायमप्राप्तस्य विधिरिति वक्तुं शक्यते। तथात्वे अप्राप्तप्रापणरूपगौरवापत्तेः। ऋत्विजामपि विधाने वाक्यभेदापत्तेश्च। अतोऽनुवाद एवेत्यङ्गीकार्यम्। अतश्चान्यस्य अप्रक्लृप्तौ ऋत्विजामेव तत्र कर्तृत्वं यथा सिद्ध्यति तद्वत्रापि अन्यस्य अप्रक्लृप्तत्वादृत्विग्देवैकः कर्तेति ॥ ३ ॥

[ सोमविक्रयी ऋत्विगन्य एव ]

विक्रयी त्वन्यः शूद्रसंयोगात् ॥ ४ ॥

सोमविक्रयी तु ऋत्विग्भ्योऽन्य एव भवति। पक्षे शूद्रस्यापि सोमविक्रयित्वेन संयोगात्। "कौत्साच्छूद्राद्वा सोमं क्रीणाति" ( का० श्रौ० ७।८।२ ) इति। शूद्रश्च निःसन्दिग्धमृत्विग्भ्योऽन्य एव। तस्मात्कौत्सोऽप्यन्य एव ॥ ४ ॥

[ अखण्डयन् हृदयादीनि पृथक् कुर्यात् ]

अङ्गान्यवद्यत्यभञ्जन् ॥ ५ ॥

पशुशरीरादध्वर्युर्हृदयादीन्यङ्गानि पृथक्करोति, अङ्गानां हृदयादीनां छेदनमकुर्वन्। सकलान्येवाचेदित्यर्थः। दोऽवखण्डने ॥ ५ ॥

अविशेषात्सर्वाङ्गानामवदाने प्राप्त आह—

हृदयं, जिह्वां, क्रोडं०, सव्यसक्थिपूर्वनडकं, पार्श्वे, यकृद्वृक्कौ, गुदमध्यं, दक्षिणा श्रोणिरिति जौह्वानि ॥ ६ ॥

हृदयादीनि जुह्वामवदानयोग्यानि प्रधानयागसाधनानि। क्रोडं = वक्षो भुजान्तरम्। सव्यस्य बाहोः प्रथमं नडकमंसादधो वर्त्तमानम्। पार्श्वे द्वे = सव्यं दक्षिणं च एकैकं त्रयोदश त्रयोदशवङ्क्रयात्मकम्। वङ्क्रयो = वक्राणि पार्श्वास्थीनि। वृक्कौ कुक्षिस्थौ गोलकौ। एतानि जुह्वामवदेयानि ॥ ६ ॥

दक्षिणसक्थिपूर्वनडकं, गुदतृतीयाणिष्ठं०, सव्या श्रोणिरित्यौपभृतानि ॥७॥

दक्षिणबाहोः प्रथमनडकमंसादधो वर्त्तमानं, गुदस्य आन्त्रस्य योऽतिकृशस्तृतीयो भागः, सव्या कटिः इति त्रोण्युपभृत्संबन्धीनि स्विष्टकृदवदानानि। एतान्यभञ्जन् पशुदेहात्पृथक् कृत्वो गृह्णीयात् ॥ ७ ॥

वर्षिष्ठमुपयड्भ्यः ॥ ८ ॥

यदतिस्थूलं गुदतृतीयं तदुपयड्डामार्थमवद्येत् ॥ ८ ॥

**अवदानकाले प्रभागः ॥ ९ ॥**

गुदतृतीयस्य प्रकर्षेण भागः = वर्षिष्ठमध्याणिष्ठभागेन विभजनं, स जुह्वामवदानकाले भवति नेदानीम्। इदानीं तु समग्रमेवाविभक्तं गुदमवद्यति ॥ ९ ॥

**वनिष्ठु-जाघन्यौ चावद्यति ॥ १० ॥**

वनिष्ठुः = स्थूलान्त्रं, जाघनी = जघनप्रदेशे भवा पशोः पुच्छम् दण्ड इति यावत् ॥१०॥

**क्लोम-प्लीहा-ऽध्यूध्नी-पुरीततं चेच्छन् ॥ ११ ॥**

क्लोमो गलनाडिका। अध्यूध्नी ऊधस उपरि भवति। येन मांसेन हृदयं प्रच्छादितं तत्पुरीतत्। एतानीच्छन्नवद्येत्। एषामत्र निरूढे विकल्पः। अन्यत्र नियमः। अग्नीषोमीये त्वभाव एवेति कर्काचार्याः ॥ ११ ॥

**उदरमेदोऽवशिष्टं गुदे प्रास्यति कृशश्चेत् ॥ १२ ॥**

यदि पशुर्दुर्बलः स्यात्तदा उदरे अवशिष्टं मेदो वपाग्रहणे क्रियमाणे यद्न गृहीतं तद्गुदे आन्त्रमध्ये प्रवेशयेत् ॥ १२ ॥

[ गर्ते पशुपुरीषं निधाय तस्मिन् लोहितनिरसनम् ]

**श्वभ्र ऊवध्यमवधाय तस्मिँल्लोहितꣳ० ''रक्षसा''मिति ॥ १३ ॥**

शामित्रादपरस्याम् उत्करादुत्तरस्यां दिशि वर्त्तमाने गर्त्ते पुरीषं तूष्णीमवधाय तस्मिन्पुरीषे पशो रुधिरं प्रक्षिपेत् ॥ १३ ॥

[ वारणकाष्ठमये शूले हृदयं प्रोतं कृत्वा शामित्रे श्रपणम् ]

**शूले हृदयं प्रतृद्य शामित्रे श्रपयति ॥ १४ ॥**

शूले हृदयं प्रोतयित्वा शामित्रेऽग्नौ श्रपयेत्। शूलं च वारणमरत्निमात्रम् ॥ १४ ॥

[ हृदयातिरिक्तानामवदानानामुखायां श्रपणम् ]

**पशुं चोखायाम् ॥ १५ ॥**

पशुं = पश्ववदानानि हृदयव्यतिरिक्तानि सर्वाणि उखायां श्रपयेत् ॥ १५ ॥

[ निरूढपशुपुरोडाशे एकदेवतत्वादिभिः कपालसङ्ख्या ]

**पशुदेवतायै पुरोडाश एकादशकपालः ॥ १६ ॥**

"यद्देवत्यः पशुर्भवति तद्देवत्यं पुरोडाशमनु निर्वपति" (३।८।३।१) इति श्रुत्या पशुदेवतोद्देश्यको यः पुरोडाशः स एकादशकपाल एव भवितुमर्हति। यद्यपि यागे अग्नीषोमीयस्य पशुपुरोडाशस्य पौर्णमासिकाग्नीषोमीयविकृतित्वात्तत्र एकादशकपालता प्राप्नोति। निरूढस्याप्यग्नीषोमीयविकारत्वादत्रापि ऐन्द्राग्ने सौर्ये प्राजापत्ये च एकादशकपालतैव इति देवतात्रयेऽपि एकादशकपालताप्राप्त्यर्थमिदं सूत्रम् ॥ १६ ॥

**अग्नीषोमीयो वा विशेषोपदेशात् ॥ १७ ॥**

ज्योतिष्टोमाङ्गभूते अग्नीषोमीय एव एकादशकपालता भवितुमर्हति। कुतः? विशेषोपदेशात्। अग्नीषोमीये एव देवताद्वित्वसादृश्यात् पौर्णमासिकाग्नीषोमीयविकृतित्वम्। अतश्च

तत्रैव एकादशकपालता। देवताद्वित्वसादृश्याच्च ऐन्द्राग्नस्याप्येकादशकपालता, नेतरयोः सौर्यप्राजापत्ययोः। तयोस्तु देवतैकत्वसादृश्यादष्टाकपालतैव। अतस्तत्तद्देवतागतसङ्ख्यानुरोधेन कपालसङ्ख्याऽतिदेष्टव्या, न सर्वत्र एकादशकपालतैवेति ॥ १७ ॥

[ हविष्कृदाह्वानमेवास्मिन्नवसरे, दृषदुपलसमाहननं तु पशुपात्रप्रोक्षणोत्तरकालमेव ]

प्रकृतौ "स यत्रैष हविष्कृतमुद्वादयति तदेको दृषदुपले समाहन्ति" ( श० १।४।१३ ) इति वाक्येन हविष्कृदाह्वानस्य दृषदुपलसमाहननस्य च एककालिकत्वमुक्तम्। अत्रापि तथैव अतिदेशेन आह्वानस्य प्राप्तौ सत्यां तत्समकालिकमाहननमपि प्राप्नोतीत्याशङ्कायामाह—

**अत्रैव हविष्कृदाह्वानमिज्यैकत्वात् ॥ १८ ॥**

एवकारो भिन्नक्रमः। अत्र हविष्कृदाह्वानमेव कर्त्तव्यम्, नाहननम्। तत्तु पशुपात्रप्रोक्षणोत्तरकालमेव। कुतः?-आहननस्य पशुयागेन सह एकवाक्यत्वात्। आह्वानं हि हविःसम्पादनार्थं हविष्कर्त्तुः क्रियते। तच्च पुरोडाशनिष्पादनरूपं दृष्टं प्रयोजनं निर्वर्त्तयतीति पुरोडाशयागेन सह एकवाक्यभूतं तदानीं कर्त्तव्यतया प्राप्नोति। आहननं तु केवलमदृष्टार्थमिति कृत्वा पश्वःपूर्वेणैव संबद्धम्। अतश्च पश्वदृष्टार्थभूतपशुपात्रप्रोक्षणादिसमनन्तरकालमेव तस्य प्राप्तिरिति तदानीमेव तदनुष्ठातव्यमित्यर्थः ॥ १८ ॥

[ द्रव्यनिर्देशेन सहानुवाचनं वचनात् ]

**अवद्यन्नाहे'न्द्राग्निभ्यां पुरोडाशस्यानुब्रूही'ति ॥ १९ ॥**

पुरोडाशमवद्यन् मैत्रावरुणं प्रति ब्रूयात् ॥ १९ ॥

[ उपभृति स्विष्टकृदवदानम् ]

**उपभृति चावद्यति स्विष्टकृद्वत् ॥ २० ॥**

उत्तरार्द्धात्सकृदवदानम्, उपरिष्टाद् द्विरभिघारणं, न चताभ्यञ्ज इति वतेरर्थः। चकारात्प्रधानावदानानन्तरमेव स्विष्टकृदर्थमुपभृत्यवदेयम् ॥ २० ॥

[ पशुपुरोडाशप्रैषः ]

**इन्द्राग्निभ्यां पुरोडाशमिति प्रेष्यति ॥ २१ ॥**

इन्द्राग्निभ्यां पुरोडाशं प्रेष्य इति मैत्रावरुणं प्रेष्येत् ॥ २१ ॥

**हुत्वा समानीयाग्नये प्रदाय ॥ २२ ॥**

प्रधानावदानं जुहूस्थं हुत्वा उपभृति यदवत्तं तज्जुह्वां समानीय निर्गुणायाग्नये प्रदानं करोति। प्रदाय च इडामवद्यतीति ( २६ ) वक्ष्यमाणेन संबन्धः ॥ २२ ॥

[ याज्यादौ निर्गुणाभिधानेऽपि स्विष्टकृद्गुणसहितस्याग्नेरेव अनुवाचनादावभिधानम् ]

**सगुणस्थानेऽगुणः ॥ २३ ॥**

सगुणस्य स्विष्टकृत्त्वरूपगुणविशिष्टस्याग्नेः स्थाने अगुणः स्विष्टकृद्गुणरहितः केवलोऽग्निर्देवतात्वेन स्वीकार्यः। यत्र अग्नये स्विष्टकृतेऽनुब्रूहि इत्यादिः प्रैषस्तत्र स्विष्टकृच्छब्दं परित्यज्य अग्नयेऽनुब्रूहीत्येव प्रयोक्तव्यमिति भावः ॥ २३ ॥

कुत एतत्—

**सर्वविकार एकत्वात् ॥ २४ ॥**

सर्वस्मिन्नपि विकृतियागाङ्गभूते याज्यानुवाक्याप्रैषादौ एकत्वात् = निर्गुणस्य केवलस्यैवाग्नेरभिधानात्। तदानीमेव हि होत्रध्वर्य्युपक्रम्यमानयोः प्रैषानुवाक्ययोः सामञ्जस्यं भवति।

अन्यथा अध्वर्युणा गुणविशिष्टस्याग्नेः प्रैषे कृते होत्रा च निर्गुणस्याग्नेर्याज्यया अभिधाने कृते परस्परवैरूप्यं प्रसज्येतेति भावः ॥ २४ ॥

**यथाऽऽम्नातं वा वचिभेदात् ॥ २५ ॥**

यत्र यथा विहितं सगुणः अगुणो वा तत्र तथैव कर्त्तव्यम्। कुतः? वचिभेदात्। स्विष्टकृद्विधायकवाक्यस्य तदङ्गयाज्यापुरोऽनुवाक्यादिविधायकवाक्यस्य च भिन्नत्वात्। विधिना सगुणस्य विधाने सगुणस्यैव प्रदानं कार्यम्। मन्त्राणां तु निर्गुणानां विधाने ते एव स्वीक्रियन्ते। नैतावता देवताया अपि निर्गुणत्वमिति भावः ॥ २५ ॥

[ पशुपुरोडाशे पश्वर्थमनुष्ठितैः प्रयाजादिभिरेवोपकारः, नातिरिक्तप्रयाजाद्यनुष्ठानम् ]

पश्वङ्गभूतः पुरोडाशयागो विहितः "पशुमालभ्य पुरोडाशं निर्वपति" इति। तत्रापि "यद्देवत्यः पशुस्तद्देवत्यः पुरोडाशः" (३।८।३।१) इत्यनेन उभयोः पशुयागपुरोडाशयागयोरेकदेवतात्वमपि विहितम्। तत्र पश्वर्थं प्रयाजादय अनुष्ठीयन्ते तैरेव पुरोडाशयागेऽपि उपकारः सिद्ध्यति इति कृत्वा न पुरोडाशार्थं ते पृथगनुष्ठेयाः? उत पृथगनुष्ठानमिति संशये सिद्धान्तमाह—

**इडामवद्यत्यक्रियान्यस्य समानार्थत्वात् ॥२६॥**

इडाग्रहणं सर्वस्यापि शेषकार्यस्य प्राशित्रभागादेरुपलक्षणम्। पुरोडाशयागे शेषकार्याणि स्विष्टकृदिडावदानादीन्येवानुष्ठेयानि। अन्यस्य अग्न्यन्वाधानादेरदृष्टोपकारकस्य अकरणम्। कुतः? समानार्थत्वात्। पशौ यादृशोपकारजनकत्वं प्रयाजादीनां, तादृशमेवोपकारं पुरोडाशेऽपि ते जनयन्तीति सकृदनुष्ठितैरेव तैरुभयत्रोपकारसिद्धेर्न पृथक् पुरोडाशार्थं प्रयाजाद्यनुष्ठानम् ॥२६॥

एवं पक्षं प्रसाध्य पक्षान्तरमप्याह—

**न, चोदनाभेदात् ॥२७॥**

नैतदस्ति उभयस्यार्थे सकृदेवानुष्ठानमिति। कुतः? चोदनाभेदात्। पशोः पुरोडाशस्य च विधेर्भिन्नत्वात्। पृथग्विधिविधेयत्वात् पृथगेव धर्मानपेक्षते। तेन च एकत्रानुष्ठिते अन्यत्र आकाङ्क्षाया अशान्तत्वात् उभयत्राप्युपकारसिद्ध्यर्थमुभयत्रानुष्ठानम् ॥२७॥

हेत्वन्तरमप्याह—

**कालगुणभेदाच्च ॥२८॥**

पश्वङ्गभूतप्रयाजकालस्य पुरोडाशाङ्गभूतप्रयाजकालस्य च भेदात्। एवं पशुप्रयाजसङ्ख्यायाः पुरोडाशप्रयाजसङ्ख्यायाश्च भेदादपि न सकृदनुष्ठानं प्रसिद्ध्यति। एवं पक्षद्वयेऽप्याचार्येण निरूपिते कोऽत्र पक्षः श्रेयानिति विचारे प्रथमपक्ष एव समुचितः। कुतः? अङ्गानि हि प्रधानोपकारकत्वेन विहितानि। विनश्वराणि च तानि स्वभिन्नकालिकस्य प्रधानस्य स्वरूपतो नोपकारं संपादयितुं समर्थानि। अतः अदृष्टद्वारैव तेषामुपकारकत्वमङ्गीकार्यम्। तच्चादृष्टं तत्तदङ्गानुष्ठानसमनन्तरमेवोपपन्नं सत् प्रधानस्य परमापूर्वोत्पत्त्यनन्तरं नश्यति। तच्च परमापूर्वं प्रधानचरमाङ्गानुष्ठानसमनन्तरमेवोत्पद्यते। एवं च चरमाङ्गानुष्ठानपर्यन्तं प्रयाजादिजन्यानामपूर्वाणां सर्वेषां सत्वात् तन्मध्ये एव च पुरोडाशयागस्याप्यनुष्ठानात् तत्काले च पश्वर्थमनुष्ठितप्रयाजीयापूर्वाणां सत्वात् तैरेव च पुरोडाशनाशेऽप्युपकारसिद्धेर्न पुरोडाशार्थं प्रयाजादीनां पृथगनुष्ठानमिति ॥२८॥

पशुर्दक्षिणा, धेनुर्वरो वा मार्जिते ॥२९॥

पशुपुरोडाशमार्जनान्ते गवादिजातीयः पशुर्दक्षिणा, धेनुर्वा, वरो वा दक्षिणा भवति ॥२९॥

इति षष्ठाध्यायवृत्तौ सप्तमी कण्डिका ॥ ७ ॥

---

[ शमित्रनुशासनम् ]

शमितारꣳ शास्ति "त्रिः प्रच्यावयतात्, त्रिः प्रच्युतस्य हृदयमुत्तमं कुरुता, यत्त्वा पृच्छाच्छृतꣳ हविः शमिता ३ रिति, शृतमित्येव ब्रूतान्न शृतं भगवो न शृतꣳ ह्वीति ॥ १ ॥

अस्यार्थः। हे शमितः? त्वं पशुं त्रिरुत्कालय। त्रिःप्रच्युतस्य ऊर्ध्वमावृत्तस्य पशोर्हृदयमुपरि स्थापय। यदा त्वां कश्चित्पृच्छेत् शृतं हविः शमिताः ३ इति, तदा 'शृतम्' इत्येव ब्रूहि। 'शृतं भगवः' इति ( शृत हि ) इति वा न ब्रूयाः। शृतम् इत्येव वक्तव्यम्, भगवच्छब्दो वा हि शब्दो वा परतो नोच्चारणीय इत्यर्थः ॥ १ ॥

[ शमिता यथाऽनुशासनं करोति ]

त्रिःप्रच्युते हृदयं प्रवृह्योत्तमं करोति ॥ २ ॥

त्रिःप्रच्युते पशौ हृदयं शूलान्निष्काश्य अवदानानामुपरि स्थापयति। प्रच्यावनं चोत्सेचनमुच्यते ॥ २ ॥

शूलं चाभूमौ ॥ ३ ॥

शूलं च भूमौ न स्थापयेत् ॥ ३ ॥

[ शृतहविषः प्रश्नोत्तरे ]

जुह्वा पृषदाज्यस्यादायोपनिष्क्रम्य पृच्छति 'शृतꣳ हविः शमिता ३ रिति त्रिरभिक्रामम् ॥ ४ ॥

जुह्वां पृषदाज्यस्यैकदेशमादाय चात्वालोत्करावन्तरेणोपनिष्क्रम्य शमितुः समीपे गत्वा अभिक्रम्याभिक्रम्य शृतं हविः शमिताः ३ इति त्रिः शमितारं पृच्छेत् ॥ ४ ॥

प्रोक्ते तद्देवानामित्याहोपांꣳशु ॥ ५ ॥

शृतम् इति शमित्रा प्रोक्ते तद्देवानाम् इत्युध्वर्युरुपांशु ब्रूयात्। ततः पुनरभिक्रम्य द्वितीयवारं पृच्छेत्। शृतम् इति शमित्रा प्रोक्ते तद्देवानामित्युक्त्वा पुनरभिक्रमादि ॥५॥

[ हृदयाद्यभिघारणम् ]

"सन्ते मन" इति हृदयमभिघार्य सर्वम् ॥ ६ ॥

जुहूस्थेन पृषदाज्येन पूर्वं सन्त इति हृदयमभिघार्य ततस्तूष्णीं सर्वं पशुमभिघारयेत् ॥६॥

[ वेद्यां प्लक्षशाखासु हृदयादीनां प्रतिप्रस्थात्राऽवदानम् ]

पश्वसी वपावद् धृत्वा दक्षिणतः प्रतिप्रस्थाता वेद्यां प्लक्षशाखास्ववद्यति ॥७॥

पशुं = हृदयादीन्यवदानानि, असिं च अन्तरा यूपाग्नी हृत्वा वेदेर्दक्षिणश्रोणिदेशे बर्हिषि अध्वर्युरासादयति। प्रतिप्रस्थाता तु प्लक्षशाखासु हृदयादीन्यसिना छिनत्ति ॥ ७ ॥

[ जुह्वादिषु घृतेनोपस्तीर्य मनोताऽनुवाक्याप्रैषदानानन्तरं जुहूपभृतोर्हृदयादीनां गुदानीनां चावदानम् ]

**जुहूपभृतोरुपस्तृणीते वसाहोमहवन्यां पात्र्यां च 'मनोतायै हविषोऽवदीयमानस्यानुब्रूही' त्युक्ते स्रुचोरवद्यति यथोक्तं द्विर्द्विः ॥ ८ ॥**

जुह्वाम्, उपभृति, वसाहोमहवन्याम्, इडापात्र्यां चाज्यमुपस्तृणीतेऽध्वर्युः । हूयत इति होमः । वसा चासौ होमो वसाहोमः । स हूयते यया सा वसाहोमहवनी स्रुक् द्वितीया जुह्वः । ततो 'मनो०हि' इति मैत्रावरुणं प्रति उक्ते सति प्रतिप्रस्थाता यथोक्तं द्विर्द्विरिति मध्यात्पूर्वार्द्धाच्च जुहूपभृतोरवद्यति । यथोक्तग्रहणाज्जौहवानि जुह्वाम्, औपभृतान्युपभृत्य वद्येत् । मनांसि ओतानि यस्यां सा मनोता देवता ॥८॥

[ अधस्तादुपरिष्टाद्धिरण्यावदानम् ]

**अशेषे गुदतृतीये ॥ ९ ॥**

गुदतृतीये निःशेषे द्विरवद्यति ॥ ९ ॥

**वपावद्धिरण्यम् ॥ १० ॥**

जुहूपभृतोर्वपावद्धिरण्यमवदधाति । वपावदित्युपस्तारानन्तरं प्रागुपरिष्टादभिघाराच्च ॥ १० ॥

[ उपस्तीर्य वसाहोमहवन्यां वसाग्रहणादिकम् ]

**''रेडसी''ति वसां गृहीत्वा द्विरभिघार्य'' ''प्रयुत''मिति पार्श्वेन सꣳ स्रृजत्यसिना वा ॥११॥**

वसां = मांसपाकरसं वसाहोमहवन्या गृहीत्वा उपरिष्टाद् द्विरभिघार्य पार्श्वेनास्थिना, कट्टारिकया वाऽऽज्यं वसां च मिश्रयेत् ॥११॥

[ वसाशेषमिडापात्र्यामासिच्य क्रोडादीनि प्रक्षिपेत् ]

**शेषमिडापात्र्यामासिच्य क्रोडमनस्थीनि च प्रास्यति श्रोणिवर्जम् ॥१२॥**

वसाशेषमिडापात्र्यां निनीय अवशिष्टं वक्षः, अनस्थीनि = हृदयं, जिह्वां, यकृत्, वृक्कौ चेत्येतानि श्रोणिवर्जं प्रक्षिपति ॥१२॥

[ सुगुप्तस्थाने जाघनींगुदं स्थापयित्वा मैत्रावरुणप्रैषः ]

**जाघनीगुदं निधायाऽऽहे'न्द्राग्निभ्यां छागस्य हविषोऽनुब्रूही'ति ॥१३॥**

जाघनी च गुदं च जाघनीगुदम् । तत् क्वचित् सुगुप्तदेशे स्थापयित्वा मैत्रावरुणं प्रत्याह ॥१३॥

**आश्राव्याहे'न्द्राग्निभ्यां छागस्य हविः प्रेष्ये'ति ॥१४॥**

मैत्रावरुणं प्रत्याह ॥१४॥

**प्रस्थितमिति च प्रसुते ॥१५॥**

सवनीयपशौ हविः प्रस्थितं प्रेष्येति ब्रूयात् ॥१५॥

[ वसाहोमः ]

**अर्द्धर्चान्तरे याज्यायै वसैकदेशं जुहोति ''घृतं घृतपावान'' इति ॥१६॥**

याज्याया अर्द्धर्चयोरन्तराले एकस्मिन्नर्द्धर्चे उक्ते द्वितीये चानुक्ते सति सव्ये स्रुचौ कृत्वा दक्षिणेन वसाहोमहवन्या वसाया एकदेशं जुहुयात् ॥१६॥

[ पृषदाज्यं गृह्णन् अनुवाक्याप्रैषं दत्वा याज्यार्थं प्रैषं दद्यात् ]

**दैवतꣳ हुत्वा प्रदक्षिणमावृत्य जुह्वा पृषदाज्यस्योपघ्नन्नाह 'वनस्पतयेऽनुब्रूही'ति ॥१७॥**

जौहवं प्रधानदेवतासंबन्धि हुत्वा जुह्वां पृषदाज्यं गृह्णन् मैत्रावरुणं प्रेष्यति ॥१७॥

**आश्राव्याह 'वनस्पतये प्रेष्ये'ति ॥१८॥**

मैत्रावरुणम् ॥१८॥

[ स्विष्टकृद्यागः ]

**हुत्वा समानीय सौविष्टकृतम् ॥१९॥**

पृषदाज्यं वनस्पतये हुत्वा उपभृत्यवत्तान्यवदानानि जुह्वां समानीय स्विष्टकृद्यागं कुर्यात् ॥१९॥

[ वसाशेषेण वाजिनवद्दिशां व्याघारणं निःशेषम् ]

**प्रत्येत्य वा दिशो व्याघारयति वसाशेषेण वाजिनवत् ॥२०॥**

यजतिस्थानाज्जुहोतिस्थानं प्रत्यागत्य स्रुचौ सव्ये कृत्वा वसाशेषेणैव वाजिनवत् (४।४।१३) दिग्व्याघारणं कुर्यात् ॥२०॥

इयांस्तु विशेषः—

**सर्वं जुहोति ॥२१॥**

सर्वमपि वसाशेषं जुहोति, न तु भक्षार्थं वाजिनवत् ( ४।४।१६ ) अवशेषयति ॥२१॥

इति षष्ठाध्याये अष्टमी कण्डिका ॥८॥

---

[ उपयुक्तातिरिक्तानां पश्वङ्गानां सम्मर्शनम् ]

**"ऐन्द्रः प्राण" इति पशुꣳ संमृशति ॥ १ ॥**

अवशिष्टानि पश्ववदानानि आलभते ॥ १ ॥

**अवदाय वेडां प्राक्प्रदानात् ॥ २ ॥**

अथवा इडामवदाय प्रदानात्प्राक् आलभते । संमर्शनस्य कालविकल्पोऽयम् ॥ २ ॥

[ इडाधानम् ]

**इडामादधाति ॥ ३ ॥**

इडां होत्रे समर्पयति ॥ ३ ॥

**उपहूतायां वनिष्ठुमग्नीधे ॥ ४ ॥**

दद्यात् ॥ ४ ॥

**अध्यूध्नीꣳ होत्रे ॥ ५ ॥**

समर्पयति ॥ ५ ॥

**अवान्तरेडा वा ॥ ६ ॥**

अवान्तरेडा वा अध्यूध्नी भवति । तदा च होतुः पाणौ अवान्तरेडावदानं न कार्यम् । तत्कार्येऽध्यूध्नीविधानात् । अवान्तरेडाकार्ये अध्यूध्नी कार्येत्यर्थः ॥ ६ ॥

[ अध्वर्योराग्नीध्रादीन्प्रति प्रैषः ]

**मार्जिते प्रेष्य 'त्यग्नीदौपयजानङ्गारानाहरो, पयष्टरुपसीद, ब्रह्मन्प्रस्थास्यामि, समिधमाधायाग्निमग्नीत्संमृड्ढीति ॥ ७ ॥**

उपयष्टरिति प्रतिप्रस्थातारं प्रेष्यति ॥ ७ ॥

[यथाप्रैषमाग्नीध्रोऽनुतिष्ठति]

**शामित्रादङ्गारानाहृत्य वेदिश्रोण्यां निवपत्युत्तरस्याम् ॥ ८ ॥**

अग्नेरुपयड्ढोमार्थं सामर्थ्याद्बर्हिष्य ग्राह्य। वेदेः संस्कृतत्वान्निवापोपदेशाच्च भूसंस्काराणामभाव उत्तरवेदिवदिति याज्ञिकाः ॥ ८ ॥

**आग्नीध्रीयाद्वा सोमे होतृधिष्ण्ये ॥ ६ ॥**

सोमे आग्नीध्रीयाद्वा शामित्राद्वा अङ्गारानाहृत्य अग्नीद्धोतृधिष्ण्ये स्थापयेत् ॥ ६ ॥

[ अनुयाजेषु हूयमानेषु वेदिश्रोण्यां होतृधिष्ण्ये वा न्युप्तेषु अङ्गारेषु प्रतिप्रस्थाता प्रच्छिद्य प्रच्छिद्य एकादशधा हस्तेन गुदकाण्डं तृतीयं जुहोति ]

**प्रतिप्रस्थातोपयजति गुदतृतीयस्य प्रच्छेदमनुयाजेषु "समुद्रं गच्छे"ति प्रतिमन्त्रम् ॥ १० ॥**

औपयजेष्वङ्गारेषु पूर्वं स्थापितं वनिष्ठुं गुदतृतीयम् एकादशधा प्रच्छिद्य प्रच्छिद्य अनुयाजानां वषट्कृते वषट्कृते एकैकं गुदकाण्डं प्रतिप्रस्थाता हस्तेन जुहुयात्। अध्वर्युणा एकैकमनुयाजे हूयमाने पश्चात्प्रतिप्रस्थाता जुहुयात् ॥ १० ॥

**प्रतिवषट्कारं हुत्वा "मनो म" इति मुखोपस्पर्शनम् ॥ ११ ॥**

प्रतिप्रस्थाता प्रतिवषट्कारमेकैकं गुदकाण्डं हुत्वा सर्वान्ते मुखमालभते ॥ ११ ॥

[ धारानुयाजान्ते स्वरुहोमः ]

**अनुयाजान्ते स्वरुं जुहोति "दिवं ते धूम" इति ॥ १२ ॥**

अन्तग्रहणाच्च धारानुयाजान्ते जुह्वां स्वरुमवधाय जुहुयात् ॥१२॥

[स्रुग्व्यूहनम्]

**पशुदेवनावनस्पतिभ्याᳫं स्रुग्व्यूहनम् ॥ १३ ॥**

स्विष्टकृद्विकारत्वाद्वनस्पतेरप्राप्तं सङ्कीर्तनं वचनादभिधीयते। तस्यैव सङ्कीर्तनं मा भूदिति पशुदेवताग्रहणम् ॥ १३ ॥

[ पशुपुच्छेन चत्वारोऽपि पत्नीसंयाजाः ]

**जाघन्या पत्नीसंयाजनम् ॥ १४ ॥**

पशोः पुच्छेन पत्नीसंयाजान्कुर्यात् ॥१४॥

**उत्तानाया देवानां पत्नीभ्योऽवद्यति ॥ १५ ॥**

जाघन्या अधस्तादलामकात्पार्श्वादवद्येत् ॥ १५ ॥

**इडां च ॥ १६ ॥**

उत्तानाया एव जाघन्याः पश्चादुत्तामिडामवद्यति ॥ १६ ॥

**परिवर्त्याग्नये गृहपतयेऽग्नीधे च ॥ १७ ॥**

जाघनीमुत्तानां विपरीतां कृत्वा जाघन्या उपरिभागात्सलोमकादग्नये गृहपतये चतुरवद्यति । अग्नीधे च पूर्वसूत्रोक्ताद् भागादेवावद्यति ॥ १७ ॥

**आज्येन पूर्वे ॥ १८ ॥**

प्रथमे द्वे पत्नीसंयाजदेवते सोमत्वष्टाराावाज्येन यजेत । उत्तरे देवानां पत्नीः, अग्निं गृहपतिं च जाघन्या यजेत् ॥ १८ ॥

एवं प्राप्ते सिद्धान्तयति—

**सर्वा वा जाघन्या,ऽविशेषात् ॥ १९ ॥**

सर्वाश्चतस्रोऽपि देवता जाघन्यैव यष्टव्याः, नाज्येन पूर्वे इति । चतुर्ष्वपि अविशेषेण जाघन्याः श्रवणात् । "ते वै पत्नीः संयाजयिष्यन्तः प्रतिपरायन्ति" इति प्रकृत्य "चतस्रो देवता यजति" ( श० १।१०।१।१.६ ) इति ॥१९॥

इति षष्ठाध्याये नवमी कण्डिका ॥ ९ ॥

[हविर्यज्ञविधे बर्हिर्होमानन्तरम्, आहवनीयोपस्थानान्तरं वोदकं गत्वा शुष्कार्द्रसन्धौ हृदयशूलमुपगूहति । सत्रविधे तु बर्हिर्होमानन्तरमेव ]

**बर्हिर्हुत्वाऽपो गच्छन्ति हृदयशूलमादाय ॥ १ ॥**

सर्वे ऋत्विजः, पत्नी, यजमानश्च तडागादौ गच्छन्ति । अवभृथशब्दश्चात्रोपचारिकः । अपो गमनसम्बन्धात् । अतश्च यागो न भवति । अत एव सूत्रकारः शूलस्यादानमात्रमाह, न शूलेनावभृथम् ॥ १ ॥

सत्रविधेषु पशुषु अयमेव शूलावभृथस्य कालः । हविर्यज्ञविधे वैकल्पिकं कालाऽऽन्तरमाह—

**आहवनीयं वोपस्थाय व्रतादीनि चेत् ॥ २ ॥**

पशौ व्रतोपयनप्रणीतादीनि चेत्प्रयुक्तदाऽऽहवनीयोपस्थानानन्तरं वा बर्हिर्होमान्ते वा गच्छेयुः । एतेन हविर्यज्ञे कालद्वयम् । सत्रविधेषु तु बर्हिर्होमान्ते एवेत्युक्तं प्राक् ॥ २ ॥

**अभ्यवेत्य शुष्कार्द्रसन्धौ हृदयशूलमुपगूहति 'शुगसि तमभिशोच योऽस्मान् द्वेष्टि यं च वयं द्विष्मो, "माऽपो मौषधी"रिति च ॥३॥**

अध्वर्युरुदके प्रविश्य यत्र भूमौ शुष्कस्यार्द्रस्य च सन्धिः स्यात्तत्र हृदयशूलं भूमिमध्येऽधोमुखं बलात्प्रवेशयेत् ॥ ३ ॥

[उदकगमनमनुत्सहन् यूपाग्रे निषिच्य पूर्ववदुपगूहति]

**ग्लायन्नुदपात्रं निषिच्य पूर्वेण यूपं यथोक्तमुपगूहति ॥ ४ ॥**

तडागादौ गन्तुमशक्नुवन् यूपात्पूर्वस्यां दिशि उदकपात्रं निनीय शुष्कार्द्रसन्धावुपगूहति ॥ ४ ॥

[ अप उपस्पर्शनमभिमन्त्रणं वा सर्वेषाम् ]

**"धाम्नो धाम्नः, सुमित्रिया न" इत्युपस्पृशन्त्यपः ॥ ५ ॥**

तडागादिस्थमुदकं, यूपं पूर्वेण निषिक्तं वोदकमालभन्ते मन्त्राभ्यां सर्वे ऋत्विग्यजमानाः ॥ ५ ॥

**उपगूहनशेषो वा पूर्वः ॥ ६ ॥**

अथवा पूर्वो धाम्नो धाम्न इति मन्त्र उपगूहनमन्त्रस्य माऽपो मौषधीरित्यस्य अवयवो भवति । अनेनाप्युपगूहनमेव कार्यमित्यर्थः । वाऽवधारणे ॥ ६ ॥

**अभिमन्त्रणं वोत्तरेण ॥ ७ ॥**

सुमित्रिया न इत्यनेनापामभिमन्त्रणमुपस्पर्शनं वा कार्यम् ॥ ७ ॥

[ अग्नीषोमीयसवनीयव्यतिरिक्तेषु शूलावभृथः ]

**न सोमेऽनूबन्ध्यावर्जम् ॥ ८ ॥**

सोमेऽनूबन्ध्यातोऽन्यत्र अग्नीषोमीयादौ शूलावभृथो न भवति । अनूबन्ध्यायां तु भवत्येव ॥ ८ ॥

**वरुणप्रघासवत्समिदाधानम् ॥ ९ ॥**

तत्र ह्युक्तं "यथेतमेत्याहवनीये समिदाधानं देवानाᳬ समिदसीति, पत्नी च गार्हपत्ये तूष्णीम्" ( ५।५।३५-३६ ) इति । तद्वदत्रापि भवतीत्यर्थः ॥ ९ ॥

[ व्रतविसर्गान्ते अपराग्नीनां पूर्वे समारूढनिर्मथिते वा चतुर्गृहीतहोमः ]

**व्रतं विसृज्यापराग्नीनां पूर्वे चतुर्गृहीतं यूपाहुतिवत् ॥१०॥**

व्रतविसर्गानन्तरमतिप्रणीताग्नितो येऽपरेऽग्नयः, अर्थात् अतिप्रणीतात् पश्चिमभागावस्थिता गार्हपत्यादयस्त्रयोऽग्नयः, तेषां मध्ये यः पूर्वभागावस्थितोऽग्निः प्रथमाहवनीय इति यावत् । तत्र चतुर्गृहीतेनाज्येन यूपाहुतिवज्जुहुयादित्यर्थः । पूर्वमवस्थितान् गार्हपत्यादीन् त्रीन्प्यग्नीनतिक्रम्य पशुहोमार्थं य उत्तरवेद्यां प्रणीतः स अतिप्रणीत औत्तरवेदिकोऽग्निः ॥१०॥

**स विहारोऽतः ॥११॥**

अतः परम् अयमतिप्रणीतोऽग्निर्विहारः = कर्मानुष्ठानस्थानं भवति । अत्र विहारत्वविधिबलात् व्रतविसर्गानन्तरमन्यस्य कस्यचिदनुष्ठेयस्य पदार्थस्याभावात् अस्मिन्नग्नौ कर्मापवर्गो दीयत इति केषांचिदाशयः, स च न समीचीनः । पश्वर्थमेवाग्नेरतिप्रणीतत्वात् तदनङ्गभूतायाः कर्मापवर्गायास्तत्र दानानौचित्यात् । अत एव नित्यं धार्यार्थमयं विधिरित्यत्ये मन्यन्ते । पश्वर्थमतिप्रणीतस्य ह्यग्नेः तदपवर्गे तस्यैव विहारत्वस्य समुचितत्वात् । एतेन अग्निहोत्रार्थमयं विहारः, पशौ समाप्ते अग्निहोत्रतन्त्रमेव विहारस्य धारकमिति पक्षान्तरमपि निरस्तम् । यदर्थं योऽग्निरुपादीयते तस्य समाप्तौ सोऽग्निरपि लौकिको भवतीति कृत्वा अन्यस्य कर्मणः तादृशाग्निधारकत्वस्यान्याय्यत्वात् । अतश्च गतश्रियो धारणार्थमेवायं विधिरिति पक्ष एव श्रेयान ॥११॥

**समारूढनिर्मथिते वा ॥१२॥**

अथवा गार्हपत्यं समारोप्य निर्मथ्याहवनीयमुद्धृत्य तस्मिन् उरु विष्णवित्याहुतिः कर्मापवर्गो च देया, मध्याहवनीये वेति विकल्पः ॥१२॥

यथोत्साहं दद्यादस्याम् ॥१३॥

अस्यामाहुतौ यथाशक्ति अध्वर्यवे हिरण्यादि दद्यात् ॥१३॥

[ निरूढपशौ सदोहविर्धानादिकं न कर्तव्यम् ]

अग्निं प्रणीय सदो-हविर्द्धाना-ऽऽग्नीध्र-होतृधिष्ण्यान् यथोक्तं, गृहीत्वा,ऽऽ-ग्नीध्रप्रणयन, मग्नीषोमीयदर्शनात् ॥१४॥

निरूढपशौ अग्निप्रणयनानन्तरं सद आदीनि येन प्रकारेण सोमे कर्त्तव्यत्वेनोक्तानि तथा कृत्वा आज्यानि गृहीत्वा आग्नीध्रे अग्नेः प्रणयनं कुर्यात्। कुतः ? सदआदीनामग्नीषोमीये दर्शनात्। अस्य अग्नीषोमीयविकारत्वात् ॥१४॥

न सोमार्थत्वात् ॥१५॥

अत्र सदआदिकं न भवति। तेषां सोमार्थत्वात् ॥१५॥

प्रसङ्गाद्दर्शनम् ॥१६॥

अग्नीषोमीये च सद आदीनां दर्शनं प्रासङ्गिकं, न वास्तविकम्। सदोहविर्द्धानादीनां निष्पादनं सोमार्थमेव। अन्यार्थमनुष्ठितस्यान्येनोपजीवनं प्रसङ्गः ॥१६॥

[ दर्विहोमेषु प्रयाजादिव्यतिरिक्ता अनर्थलुप्ता दर्शपूर्णमासधर्माः ]

दर्विहोमाः पौर्णमासधर्मा जुहोत्यविशेषात् ॥१७॥

जुहोति इतिशब्देन विहिता जुहोतयो दर्विहोमाः। ते दर्शपूर्णमासधर्मा भवन्ति। यतो यजतेः सकाशाज्जुहोतेर्विशेषो नास्ति। द्रव्यदेवतयोरुभयत्र तुल्यत्वात्। दर्विहोमशब्देन त्रैयम्बकादयोऽपि गृह्यन्ते ॥१७॥

किं च—

जुह्वदर्शनाच्च ॥१८॥

यजतिधर्माणां जुह्वादीनां जुहोतिषु दर्शनाच्च दर्विहोमाः दर्शपूर्णमासधर्मा भवन्ति ॥१८॥

एवं सर्वधर्मपरिप्राप्ताविदमाह—

तूष्णीमनर्थलुप्ताः ॥१९॥

ते च दृष्टेन अर्थेन लुप्ता न भवन्ति। यथा एकाग्नित्वेऽपि गार्हपत्ये श्रपणादि भवत्येवेति ॥१९॥

एकाग्न्यः ॥२०॥

एकाग्निसाध्या एव पदार्था दर्विहोमे भवन्ति, नापराग्निसंबद्धाः पत्नीसंयाज दक्षिणाग्निहोमाः ॥२०॥

अप्रयाजा अननुयाजा असामिधेनीकाः ॥२१॥

दर्विहोमे प्रयाजा, अनुयाजाः, सामिधेन्यश्च न भवन्ति। मन्त्ररूपाणां सामिधेनीनामृचां तूष्णीमित्यनेनैव निषिद्धत्वात् अनेन इध्मकाष्ठप्रक्षेपोऽपि निषिध्यते ॥२१॥

अनिगदाः ॥२२॥

मन्त्ररूपनिगदानां तूष्णीमित्यनेनैव निषिद्धत्वात् अनेन तत्सम्बन्धिनः स्विष्टकृत्-इडा-प्रस्तरहोमा निषिध्यन्ते ॥२२॥

**प्रतिनिगद्य होमाः ॥२३॥**

देवतापदं चतुर्थ्यन्तमुच्चार्य स्वाहाकारेण होमोऽत्र कार्यः, अग्नये स्वाहेति ॥२३॥

**स्वाहाकारप्रदानाः ॥२४॥**

तूष्णीमित्युक्तत्वात् स्वाहाकारस्याप्यभावो मा भूदत इदमुक्तम्। वषट्कारनिवृत्त्यर्थमिदमिति कर्काचार्याः ॥२४॥

**परतन्त्रोत्पत्तयो जुहोतिमात्राः ॥२५॥**

परेषां तन्त्रं परतन्त्रम्। परतन्त्रे उत्पत्तिर्येषां जुहोतीनां ते परतन्त्रोत्पयः। ते जुहोतिमात्रा होममात्रावसानाः। ये होमा अन्यस्य कर्मणः प्रयोगमध्ये विहिताः तेषां यानि होमस्वरूपसम्पादकद्रव्यादिनिष्पादकानि सन्निपत्योपकारकाण्यङ्गानि, तादृशाङ्गानुष्ठानपूर्वकं ते प्रधानहोमाः कर्त्तव्याः। न तु तदङ्गत्वेन प्रयाजानुयाजाद्यारादुपकारकाङ्गकलापोऽनुष्ठेय इति भावः। यथा—वाजपेये सर्वान्नहोमो विहितः ( १४।१३९ ) तत्र तादृशान्ननिष्पादकानि यानि अवहननपाकादीनि सन्निपत्योपकारकाणि, तदनुष्ठानपूर्वकमत्र होमः कार्यः। न तु तदङ्गत्वेन प्रयाजानुयाजादिकमारादुपकारकमङ्गमनुष्ठेयम् ॥२५॥

[ स्मार्त्तहोमेषु होमार्थमवत्तस्य सशेषस्य होमः ]

**पाकयज्ञेष्ववत्तस्यासर्वहोमः ॥२६॥**

पच्यतेऽन्वहमनेनेति पाको गृहाग्निः। तत्र ये यज्ञाः स्मार्त्ता जुहोतयः पत्न्यादिकर्मौपाकर्म नवान्न श्रवणाकर्मादयः, तेषु होमार्थं स्रुचि स्रुवे वाऽवत्तस्य आज्य-चरु धानादेः सर्वस्य होमो न कार्यः। किन्तु प्रतिहोमं भक्षार्थं किंचित्परिशेषणीयम् ॥२६॥

**हुत्वा शेषप्राशनम् ॥२७॥**

साङ्गं पाकयज्ञं समाप्य सर्वहोमान्ते आज्यादीनि प्राश्नीत्। हस्तहोमे न शेषप्राशनमिति सम्प्रदायः ॥२७॥

कुत एतत्—

**अग्निहोत्रे तदस्य पाकयज्ञस्येवे(२।३।१।२१)ति श्रुतेः ॥२८॥**

अग्निहोत्रप्रकरणे 'अग्निहोत्रं हुत्वा' (२।३।१।२१) इतिविधिसन्निधिपठिते तदस्य पाकयज्ञस्येवेति प्राशनार्थवादे इवशब्देन यथा पाकयज्ञे शेषप्राशनं, तद्वदत्रापि, इति पाकयज्ञे शेषप्राशनस्य सिद्धवदनुवादान्यथानुपपत्त्या शेषप्राशनविधिः कल्पनीय इत्यर्थः ॥२८॥

[ स्मार्त्तपशुषु अग्नीषोमीयाद्धर्माः ]

**अग्नीषोमीयात्पशुषु ॥२९॥**

सवनीयाऽऽनूबन्ध्य निरूढेषु स्मार्तपशुषु च अग्नीषोमीयात्पशोः सोमाङ्गभूतात् धर्माः प्रवर्तन्ते ॥२९॥

एवं प्राणिसाधनकत्वसामान्यात्स्मार्त्तपशुष्वपि धर्मप्राप्तौ विशेषमाह—

**शाखानियोजनम् ॥३०॥**

पाकयज्ञपशुषु शाखायां पशुनियोजनं कार्यं, न यूपे ॥३०॥

[ हृदयादीनां त्रयाणां पञ्चानां सर्वेषां वाऽवदानमिति त्रयो विकल्पाः ]

**वपाꣳ हुत्वा त्रीणि, पञ्च, सर्वाणि वाऽवद्यति ॥३१॥**

पशुशरीरात् हृदयं, जिह्वां, क्रोडमित्येतानि, अथवा हृदयं, जिह्वां, क्रोडं, सव्यसक्थिपूर्वनडकं, पार्श्वं चेत्येतानि पञ्चैव, अथवा सर्वाण्येव हृदयादीन्यवदानान्यवद्यति इति त्रयो विकल्पाः ॥३१॥

[ सर्वावदानाभावे शेषात्स्विष्टकृदवदानम् ]

**सर्वाभावे शेषात्स्विष्टकृतः ॥३२॥**

पूर्वं पक्षत्रयमुक्तम् । तत्र सर्वावदानाभावपक्षे अर्थात् त्र्यवदानपक्षे, पञ्चावदानपक्षे च अवत्तशेषात् हृदयादेः स्विष्टकृतोऽवदानं भवति । स्विष्टकृद्धोमार्थं तेभ्य एवावद्यतीत्यर्थः । सर्वावदानपक्षे तु त्र्यङ्गेभ्य एव ॥३२॥

**स्थालीपाकेन सह प्रदानम् ॥३३॥**

पाकयज्ञे पश्ववदानानां स्थालीपाकेन सह प्रदानं कार्यम् ॥३३॥

**पूर्णपात्रो दक्षिणा, वरो वा वरो वा ॥३४॥**

धान्यादिपूर्णं पात्रं पूर्णपात्रः, वरोऽभीप्सितं वस्तु वा दक्षिणा पाकयज्ञेषु भवति । द्विरभ्यासोऽध्यायसमाप्तिसूचनार्थः ॥३४॥

इति षष्ठाध्याये दशमी कण्डिका ॥१०॥

इति कात्यायनश्रौतसूत्रे विद्याधरशर्मकृतायां वृत्तौ षष्ठो निरूढपशुबन्धोऽध्यायः ॥६॥

# सप्तमोऽध्यायः ।

## सोमयागः ।

[ दर्शपूर्णमासानन्तरमेव सोमयागादिः ]

**दर्शपूर्णमासाभ्यामिष्ट्वाऽन्येन यजेतेति श्रुतेः ॥ १ ॥**

दर्शपूर्णमासाभ्यामिष्ट्वा अन्येन इष्टिपशुसोमादिना यष्टव्यम्, नतु ततः पूर्वम् । कुतः ? श्रुतेः । "एष वै देवरथो यद्दर्शपूर्णमासौ यो दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजते रथस्पष्ट एवावसाने वरे देवानामवस्यति" ( तै० सं० कां० २ प्र० ५ अनु० ६ ) इति श्रुतेरित्यर्थः । यजतिग्रहणाज्जुहोतेर्न निषेधः (१) अतोऽग्निहोत्रहोमो भवत्येव ॥१॥

[ आधानानन्तरमेव वा सोमस्यानुष्ठानम् ]

**सोमेन वोपक्लृप्तसोमः ॥ २ ॥**

उपक्लृप्तं सोमयागाय दक्षिणाज्यघृतसोमादिकं येन स उपक्लृप्तसोमः । सोमार्थं सम्पादितद्रव्यवान् यजमान आधानानन्तरं प्रथमतः सोमेनेष्ट्वा अनन्तरं दर्शपूर्णमासादिभिर्यजेत ॥ २ ॥

---

(१) याग-होमयोः को भेद इति विचारे प्रथमं तावदिदं निर्णीयते—यत्र यजेतेति यजधातुना क्रियाभिधानं जुहोतीति हुधातुना च होमविधानम्, तत्र उभयत्रापि अंशत्रयमस्ति । उद्देशांशः, त्यागांशः प्रक्षेपांशश्च । यत्र देवतामुद्दिश्य इदं न मम इति द्रव्यं त्यज्यते तत्र देवतागत उद्देशांशः, द्रव्यगतस्त्यागांशः, देवतामुद्दिश्य त्यक्तस्य द्रव्यस्य कुत्र प्रक्षेप इत्याकाङ्क्षायां "यदाहवनीये जुहोति" (तै० ब्रा० १०।१०।१०) इत्यादिना आहवनीयादिष्वग्निषु यः प्रक्षेपः क्रियते स प्रक्षेपांशः । एतत् त्रितयमपि यागे होमे च विद्यत एव, तथापि प्रक्षेपांशस्य अङ्गत्वम्, उद्देशांशत्यागांशयोः प्राधान्यं च यत्रास्ति स यागपदार्थः । उद्देशांशत्यागांशप्रक्षेपांशानां यत्र समं प्राधान्यं स होमपदार्थः । अयं च विभागो याज्ञिकैः, जैमिन्यादिभिः सूत्रकारैश्चाङ्गीकृतः । अत एव जैमिनिः "यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात्, तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकः स्यात् ( ४।२।२७-२८ ) इति सूत्रयामास ।

व्याख्यातारश्च "देवतोद्देशद्रव्यत्यागप्रक्षेपेषु समप्रधानेषु जुहोतिपदप्रयोगः । अतश्च प्रक्षेपाङ्कक्रियाद्वयवृत्तिजातिर्यागत्वम्, क्रियात्रयवृत्तिजातिश्च होमत्वम् इति ( भाट्टदीपिकायां ३।४।१८ ) स्पष्टमूचुः ।

अतश्च यजिधातुना विहितो यागः, स च एतादृशस्वरूपः । हुधातुनाऽभिहितश्च होमः, स च एवंरूप इति फलितम् । एवं च यत्र शान्तिकपौष्टिकादिषु कर्मसु यजिधातुना विधानाभावः, तत्र यागत्वं नास्ति इति शतरुद्रियादौ जुहोतिचोदनाचोदितत्वात् होमत्वमेव तेषाम्, इति तत्र सङ्कल्पादौ होमपदस्यैवोल्लेखः कार्यो, नतु यागपदस्य । अतएव अग्निहोत्रे प्रातरग्निहोत्रं होष्यामीत्येवोल्लेखो, न तु यक्ष्ये इति ।

एवं च नवग्रहहोमादिषु होमस्यैव विशेषतोऽभिधानात्तेषां होमत्वमेव, नतु यागता । अत एव शान्तिकपौष्टिकादिहोमेषु नवग्रहधर्मातिदेशोक्तिस्तत्र तत्र ग्रन्थकृतां सङ्गच्छते । यदि नवग्रहहोमस्य यागत्वं स्यात् तर्हि यागीयानां धर्माणां होमे अतिदेशाभावकथनं विरुद्ध्येत । निर्णीतं हि पूर्वमीमांसायाम् ( ४।२ ) होमयागयोः वैसादृश्यं परस्परं धर्मानतिदेश इति ।

एवं च नवग्रहहोमादिषु मख-यज्ञादिशब्दप्रयोगो गौणः । यथा—स एष यज्ञः पञ्चविधः अग्निहोत्रं, दर्शपूर्णमासौ, चातुर्मास्यानि, पशुः, सोमः (ऐ० ब्रा०) इति अग्निहोत्रेऽपि यज्ञशब्दप्रयोगो गौणः, तद्वत् इति ।

कुतः ?—

## आधानस्य सोमप्राधान्यात् ॥ ३ ॥

सोमार्थमेव आधानस्य विहितत्वात् । "यः सोमेन यक्ष्यमाणोऽग्निमादधीत नर्त्तुं पृच्छेन्न नक्षत्रम्" इति श्रुत्या आधानस्य सोमार्थत्वश्रवणादित्यर्थः ॥३॥

एवं प्राप्त आह—

## नाविशेषात् ॥ ४ ॥

यदुक्तमाधानस्य सोमार्थत्वादिति, तन्न । कुतः ? अविशेषात् । अग्नीनामविशेषेण सर्वकर्मार्थत्वात् । आधानस्य चाग्न्यर्थत्वात् । "सोमेन यक्ष्यमाण" इत्यनेन तु आधानस्य सोमाव्यवहितपूर्वकालिकत्वरूपः कालो विधीयते । नैतावता सर्वार्थत्वमपनेतुं शक्यते ॥ ४ ॥

[ सोमयागस्य कालः ]

## वसन्ते ऽग्निष्टोमः ॥ ५ ॥

(१)अग्निष्टोमपदं संस्थाचतुष्टयविशिष्टज्योतिष्टोमपरम् । स ज्योतिष्टोमो वसन्ते कर्त्तव्य इत्यर्थः । अयं भावः । ज्योतिष्टोमस्य चतस्रः संस्थाः । अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रश्चेति । संस्था नाम क्रतूपरमः । अग्निष्टोमादिशब्दा मुख्यतया सामवाचकाः । तद् यत्र अग्निष्टोम साम पठित्वा तदुपरि न किञ्चन साम पठ्यते, किन्तु तत्रैव परिसमाप्यते साऽग्निष्टोमसंस्था । एवमग्निष्टोमसामानन्तरमुक्थ्यं साम पठित्वा तदुपरि सामान्तरं यत्र न पठ्यते सा उक्थ्यसंस्था । एवं षोडश्यादिसंस्था बोध्या । एतत्सङ्ख्याचतुष्टयविशिष्टः(२) सोमयागो ज्योतिष्टोम इत्युच्यते । अग्निष्टोमस्तोत्रोत्तरमुक्थ्यस्तोम अपठित्वा षोडशिस्तोमो यत्र पठ्यते तत्रैव च परिसमाप्यते सा अत्यग्निष्टोमसंस्था । यथाऽवस्थितषोडश्युत्तरं यत्र वाजपेयसंज्ञकं स्तोत्रं पठ्यते सा वाजपेयसंस्था । यत्रातिरात्रे चतुर्थो रात्रिपर्यायो वर्द्धते सा अप्तोर्यामसंस्था । अतिरात्रे त्रयो रात्रिपर्याया भवन्ति ॥ ५ ॥

[ द्विपुरुषासोमपीथिनः प्रायश्चित्तपशुः ]

## ऐन्द्राग्नं पुनरुत्सृष्टमालभ्य द्विपुरुषासोमपीथिनः ॥ ६ ॥

यस्य पित्रा पितामहेन वा सोमयागो न कृतस्तेन दौर्ब्राह्मण्यनिरासार्थं ऐन्द्राग्नं पुनरुत्सृष्टं पशुमालभ्य ततः सोमयागः कर्त्तव्यः । यः पूर्वं वाहकः सन् दौर्बल्याद् वहनकार्यतः परित्यक्तः स पुनरुत्सृष्टः । वहनं च पुंगव्यैव संभवतीति स एवात्र ग्राह्यः । अथवा हिमवत्प्रदेशेषु अजस्यापि वहनकार्ये नियोगात् मन्त्रवर्णानुरोधेन छाग एव ग्राह्यः । अस्य पशोरनुष्ठानमग्नीषोमीयपशुना सहैव, न पृथक् ("पशुः समानतन्त्रः स्यादिति बौधायनोऽब्रवीत्") इति बौधायनवचनात् ॥६॥

---

(१ प्रगीत्यधिकरणीभूतर्क्सङ्ख्यावाची स्तोमशब्दः । स चात्र लक्षणया तत्सम्बद्धयज्ञायज्ञियाख्यस्तोत्रविशेषकरणकस्तुतिपरो ज्ञेयः । अग्नेः स्तोमः स्तुतिर्यस्मिन् सोऽग्निष्टोमः । अग्निस्तुतिसम्पादकेन यज्ञायज्ञियनामकेन स्तोत्रेण संस्था समाप्तिर्यस्य सोऽग्निष्टोमः इति निष्कृष्टोऽग्निष्टोमशब्दार्थः ।

अयं च यज्ञः "स प्रथमः सोमानाम्" ( सत्या ७।१ ) इति सूत्रात् प्रथमः प्रयोज्यः ।

(२) सोमशब्दो लताविशेषपरो, नतु चन्द्रादिपरः । तस्य प्रकृतेऽनुपयोगात् । "श्यामलाऽम्ला च निष्पत्रा क्षीरिणी त्वचि मांसला । श्लेष्मला वमनी वल्ली सोमाख्या छागभोजनम्" इत्यादिसोमस्वरूपमायुर्वेदेनावगन्तव्यम् ।

[ ऋत्विग्वरणम् ]

**षोडशर्त्विजो ब्रह्मोद्गातृ-होत्रध्वर्यु-ब्राह्मणाच्छंसि-प्रस्तोतृ-मैत्रावरुण-प्रतिप्रस्थातृ-पोतृ-प्रतिहर्त्रच्छावाक-नेष्ट्रग्नीत्-सुब्रह्मण्य-ग्रावस्तुदुन्नेतॄन् वृणीते ॥ ७ ॥**

यजमानो ब्रह्मादीन् षोडश ऋत्विजो वृणीते ॥ ७ ॥

**चतुरो वाऽऽद्याँस्तत्पुरुषा इतरे यथावेदम् ॥ ८ ॥**

अथवा आद्यान् ब्रह्मोद्गातृहोत्रध्वर्यून् चतुरो वृणीते न सर्वानिति विकल्पः। सर्वेषामेव वरणं, न चतुर्णामिति कर्काचार्याः। इतरे द्वादश ऋत्विजो यथावेदं तेषां ब्रह्मादीनां पुरुषा =आदेशकारिणः। प्रधानपुरुषवरणेन च तेऽपि वृता एव भवन्ति। तत्र उद्गातृवेदविहित-कर्मकर्तारः प्रस्तोतृ-प्रतिहर्तृ-सुब्रह्मण्याः। मैत्रावरुणाच्छावाक-ग्रावस्तुतो होतृपुरुषाः। प्रतिप्रस्थातृ-नेष्ट्रुन्नेतारोऽध्वर्युपुरुषाः ॥ ८ ॥

**ब्राह्मणाच्छंस्यग्नीत्पोतारो ब्रह्मणः ॥ ९ ॥**

पुरुषाः ॥ ९ ॥

[ यागभूमिनिरीक्षणम् ]

**देवयजनं जोषयन्ते ॥ १० ॥**

सयजमाना ऋत्विजः सकलप्रयोगाङ्गभूतं भूमिप्रदेशं विलोकयन्ति ॥ १० ॥

कीदृशं तदित्याह—

**उच्चतमꣳ सममविभ्रंशि ॥ ११ ॥**

समीपवर्त्तिप्रदेशापेक्षया उच्चतमम्, निम्नोन्नतरहितम्, दृढभूमिकं च ॥ ११ ॥

**अभितो देवयजनमात्रदेशं पुरस्ताद्वर्जम् ॥ १२ ॥**

सर्वदिक्षु देवयजनकरणपर्याप्तो देशो यस्य तत्। प्राच्यां दिशि तु देवयजनमात्रदेशो न परिशेषणीयः, किन्तु तत्र वेद्यादिनिर्माणार्थमधिकं देशं परिशेषयेत् ॥१२॥

**प्राक्प्रवणमुदग्वा, यत्किञ्चानूचानर्त्विजः ॥१३॥**

तद्देवयजनं प्रागुदग्वा निम्नं कार्यम्। अनूचानाः=अनुवचनसमर्था ऋत्विजो यस्य तस्य यजमानस्य यत्किञ्च=अनुक्तलक्षणं, यत्र ऋत्विजामुपवेशनादिकं सुकरं भवति तावन्मात्रमनुन्नतमादिकमपि देवयजनं भवितुमर्हति ॥१३॥

[ विमितकरणम् ]

**उद्धतौषधिमूलेऽपरेऽन्ते विमितं कुर्वन्ति ॥१४॥**

उद्धताः=उत्खाताः ओषधयो मूलानि च यस्मिन् तत्, तस्मिन्देवयजने तस्य पश्चिमभागे विमितं कुर्वन्ति। "विमितं चतुरस्रं स्याद्दशारत्निप्रमाणतः" इति परिशिष्टम् ॥१४॥

कीदृशं विमितमिति सूत्रचतुष्टयेनाह—

**प्राग्वꣳशम् ॥१५॥**

प्रागग्रो वंशः=पृष्ठवंशो मध्यबलो यस्य तत्। यस्य वंशस्योपरि दक्षिणत उत्तरतश्च वंशाः प्रोता भवन्ति स मध्यमो वंशः पृष्ठवंशः ॥१५॥

**पुरस्तादुच्चम् ॥१६॥**

तद्विमितं पूर्वस्यां दिशि उच्चं कर्त्तव्यम् ॥१६॥

**प्रतिदिग्द्वारम् ॥ १७ ॥**

तत्र सर्वासु दिक्षु द्वाराणि कुर्यात् ॥१७॥

**उदग्वर्जं वा ॥१८॥**

वाऽवधारणे । उदीचीं दिशं वर्जयित्वा अन्यासु दिक्ष्वेव द्वाराणि कुर्यात् ॥१८॥

[ शालाकरणं वा ]

**शालां वा ॥१९॥**

अथवा शालां कुर्यादिति विमितेन सह विकल्पः । "विंशत्यरत्निः शाला स्यात्तदर्धेन तु विस्तृता" इति परिशिष्टम् ॥ १९ ॥

[ परिवृतनिर्माणम् ]

**परिवृते चोत्तरापरे ॥ २० ॥**

शालाया विमिताद्वा द्विहस्तान्तराले प्राग्वंशं प्राग्द्वारं पञ्चहस्तं समचतुरस्रं शालाया उत्तरत एकं, पश्चाच्चैकम् इति परिवृत ( गृह ) द्वयं परितः कटादिना वृतं कर्त्तव्यम् ॥ २० ॥

[ दीक्षातः पञ्चमे सप्तमे वाऽहनि सुत्याऽनुष्ठानम् ]

**दीक्षाप्रभृति शुक्लपक्षे पञ्चमीᳬ सप्तमीं वा प्रसुतः ॥२१॥**

शुक्लपक्षे यस्मिन् दिने दीक्षा(१)प्रारभ्यते ततः पञ्चमे सप्तमे वा दिवसे सोमयागः कर्त्तव्यः । अर्थात् एका दीक्षा, तिस्रो दीक्षा इति दीक्षायां पक्षद्वयं विहितम् । "तिस्र एव साहस्योपसदः" (तै० सं० ६।२।५) इति सोमयागे तिस्र उपसदो विहिताः । यदि हि एकदीक्षा पक्षः स्वीक्रियते तर्हि प्रथमदिने दीक्षा, ततो दिनत्रयमुपसदः, पञ्चमेऽहनि सुत्या । यदि वा दीक्षात्रयपक्षः, तर्हि त्रिषु दिनेषु दीक्षा, त्रिषु चोपसदः, सप्तमेऽहनि सुत्या इति ॥२१॥

[ दीक्षितस्य नित्यानामग्निहोत्रहोमादीनां प्रतिषेधो यावद्दीक्षाविमोकम् ]

"दीक्षितो न ददाति न जुहोति न पचति" (मै० ३।६।५) इत्यादिना दीक्षितस्य नित्यानां निषेध उक्तो यावद्दीक्षाविमोकम् । तत्र दैवान्मानुषाद्वाऽपराधात् पञ्चम-सप्तमदिनात्मकस्य सुत्याकालस्यातिक्रमस्तदा तानि षष्ठाष्टमादिदिनेषु अनुष्ठेयानि उत न ? इति संशये पूर्वपक्षयति —

**कालातिक्रमे नियतक्रिया, प्राप्तकालत्वात् ॥२२॥**

सुत्यायाः पञ्चमदिनादिकालातिक्रमे नित्यानामनुष्ठानं भवत्येव । कुतः ? प्राप्तकालत्वात् । पञ्चमीं प्रसुत इत्यादिना पञ्चाहं सप्ताहं वा यजमानस्य दीक्षितत्वात् तावत्कालमेव नित्यानां प्रतिषेधात् । तत्कालातिक्रमे नित्यानां प्राप्तः काल इति अनिषिद्धे षष्ठादिदिने असमाप्तेऽपि यज्ञे सन्ध्या-तर्पण-होमादिकं भवत्येवेति भावः ॥ २२ ॥

---

(१) यमनियमपरिग्रहानुकूलयोग्यतारूपा दीक्षा । तत्कर्तृसंस्कारार्था दीक्षणीया । वक्ष्यमाणानां कृष्णाजिनमेखलादण्डादीनां तु अक्रियारूपत्वाद्दीक्षाभिव्यञ्जकत्वमात्रं, नतु दीक्षणीयेष्टिवद्दीक्षार्थत्वम् । अत इष्ट्यनन्तरमेव 'दीक्षितो न ददाति न जुहोति' ( मै० ३.६।५ ) इत्यादयो दीक्षितधर्माः ।

एवं प्राप्ते सिद्धान्तयति—

**न समत्वात् ॥ २३ ॥**

नैतदेवम् । कुतः ? समत्वात्, दीक्षितत्वरूपनिषेधकारणस्य तदानीमपि सत्वात् । दीक्षितत्वं हि नित्यानां प्रतिषेधे कारणम् । अतिक्रान्तेऽपि सुत्याकाले दीक्षित एव स भवति । अतो यावद् दीक्षितत्वम् नापैति, तावत्कालं नित्यानां प्रतिषेधः ॥ २३ ॥

दीक्षायाः पक्षान्तरमाह—

[ दीक्षापक्षाः ]

**द्वादश दीक्षा अपरिमिता वा ॥ २४ ॥**

स्पष्टोऽर्थः । अतश्च एका, तिस्रः, द्वादश, अपरिमिता वा दीक्षा इति चत्वारो दीक्षा-पक्षा अग्निष्टोमे भवन्ति ॥ २४ ॥

[ श्रुतिबोधिते पुण्याहे सोमयागस्यारम्भसमाप्ती कर्त्तव्ये ]

**पुण्याहे दीक्षा, क्रयः, प्रसव, उत्थानम् ॥ २५ ॥**

दीक्षा, सोमक्रयः, प्रसवः = सुत्या, उत्थानं = समाप्तिः एतानि ज्योतिःशास्त्रोक्ते शुभे दिने कार्याणि ॥ २५ ॥

**प्रक्रमोत्थाने विरोधे ॥ २६ ॥**

प्रक्रम आरम्भः । उत्थानं समाप्तिः । क्रयादौ आरम्भाद्युत्तरादिदिने कर्त्तव्यतया विहिते नियतकालत्वात् श्रुतिविरोधे सति आरम्भोत्सर्जने एव पुण्येऽहनि कर्त्तव्ये । न सोम क्रयो, नापि सुत्या । यदि हि क्रयसुत्ययोः पुण्याहं प्रतीक्ष्येत तर्हि सोमयागस्य नियतदिनसा-ध्यतया श्रुत्युक्तनियतकालविरोधः स्यात् ॥ २६ ॥

**नवाऽचोदित्वात् ॥ २७ ॥**

न चैतदङ्गीकार्यम् पुण्याहे भवत इति । कुतः ? अचोदितत्वात्, वेदे अविधानादि त्यर्थः । स्मृतिश्चेयम् । अतो यत्र श्रुत्यविरोधः, तत्र पुण्याहाद्यादरः । श्रुतिविरोधे तु पुण्या-हमनादृत्य श्रुत्युक्ते मुख्यकाले आरम्भसमाप्ती कर्त्तव्ये ॥ २७ ॥

[ यूपच्छेदनकालः ]

**दीक्षासु यूपच्छेदनं, यूपाहुतिं प्राग्घुत्वा यूपान्ते वाऽग्निं मथित्वा, दीक्षितस्याग्निहोमप्रतिषेधश्रुतेः ॥ २८ ॥**

यूपच्छेदनात्प्राक् यूपाहुतिं हुत्वा दीक्षामध्ये यूपच्छेदनं कर्त्तव्यम् । अथवा यूपसमीपे एव अग्निं मथित्वा तत्र यूपाहुतिः कार्या । अत्र वाशब्दो विकल्पार्थः । "दीक्षितस्याग्निहोत्रहोम प्रतिषेधश्रुतेः" ( मै० ३।६।५ ) इति तु मथित्वेतिमन्थनविधिशेषोऽर्थवादः, न तु दीक्षिताग्नौ होम प्रतिषेधार्थः ॥ २८ ॥

**उच्छ्रयणकाले वोभयठं० होमच्छेदने, सन्निधेः ॥ २९ ॥**

अथवा यूपोच्छ्रयणसन्निधाने = यूपोच्छ्रयणकाले एव होमः, छेदनं चेत्युभयमपि कर्त्तव्यम् । कुतः ? सन्निधेः ? सन्निधौ तयोः श्रुतत्वात् । "यूपं व्रश्चयन् वैष्णव्यर्चा जुहोति" (३।६।४।१) इति । अत्र वाशब्दस्य अर्थान्तरेण सह विकल्पद्योतकत्वमङ्गीकृत्य तादृशार्थान्त दीक्षास्वेव यूपच्छेदनम् । "दीक्षासु यूपं छिनत्ति" ( आप० श्रौ० १०।५।१४ ) इति श्रुत्या उच्छ्रयणकालसन्निधेर्बाधादित्यङ्गीकृतं कर्काचार्यैः ॥ २९ ॥

[ शालाप्रवेशः ]

**समारोह्याग्नी शालास्तम्भं पूर्वार्द्ध्यं गृहीत्वाऽरणिपाणिरा "हेदमगन्मे" ति ॥३०॥**

गृहे अग्नी अरण्योः = समारोप्य देवयजनमागत्य शालाम्प्रविश्य पूर्वार्द्धे भवं शालास्तम्भं गृहीत्वा अरणिपाणिर्यजमान एदमिति (१) पठेत् ।

नित्यधारिपक्षस्य पुरुषार्थत्वात् अत्र क्रत्वर्थत्वेन समारोपविधानात् क्रतुधर्मस्याकरणे क्रतुवैगुण्यापत्त्या पुरुषार्थक्रत्वर्थयोर्विरोधे क्रत्वर्थस्यैवानुष्ठानावश्यम्भावेन च पुरुषार्थं नित्यधारणं बाधित्वा अत्र सोमाधानेऽपि त्रयाणां समारोपोऽवश्यं कर्त्तव्यमेव । देवयजनस्य दूरत्वे सभ्यावसथ्ययोश्च समारोपः ।

गतश्रिपक्षे तु नित्यधारणस्य क्रतुपुरुषोभयार्थत्वात् अरण्योरभावाच्च न तत्र समारोपः । अरणिपाणिरिति विधानात् समारोपणार्थारण्योरभावेऽपि शालास्तम्भप्रपादने लौकिकारणिपाणिर्भवत्येव ॥ ३० ॥

इति कातीयश्रौतसूत्रवृत्तौ सप्तमाध्याये प्रथमा कण्डिका ॥ १ ॥

---

[ आहृतस्य सोमस्य शालायां निधानम् ]

**शालायाᳬ राजानं निदधात्याहृतश्चेत् ॥ १ ॥**

राजानं = सोमं शालामुच्चासनें निदध्यादध्वर्युः । यदि वनात्सोम आनीतो भवेत् ॥१॥

[ सोमायान्नोपहारः ]

**प्राक् क्रयादन्नमुपहरन्त्यस्मै हविष्यममाᳬसम् ॥ २ ॥**

सोमक्रयात्पूर्वमस्मै सोमाय मांसवर्जितं व्रीहियवाद्यन्नमुपहरेत् ॥ २ ॥

[ गार्हपत्यादाहवनीयस्य विहरणम् ]

**अग्निं विहृत्य सप्तसु प्रक्रमेष्वर्द्धव्यामे च साग्निचित्ये ॥ ३ ॥**

सचयने सोमयागे गार्हपत्यखरस्य मध्यात् त्रिपदान् सप्त प्रक्रमान्, ततः परमर्द्धव्याम च मित्वा तत्र निर्मथ्य स्थापिताद् गार्हपत्यादाहवनीयस्य विहरणं कार्यम् । अनग्निचित्ये तु "अष्टासु प्रक्रमेषु" (४।८।१७) इत्यादिप्राकृतपक्षाणां मध्ये येन केचित्प्रमाणेन इच्छयाऽऽहवनीयविहरणम् । अत्र प्रक्रमस्त्रिपदात्मको बोध्यः । "सोमे तु त्रिपदः प्रोक्त" इति वचनात् ॥३॥

[ दीक्षितस्येष्टाशनानशनयोर्विकल्पः ]

**अपराह्णेऽश्नातीष्ट, मुपपन्नं वा, न वा ॥ ४ ॥**

ततो यजमानोऽपराह्णे वाञ्छितमन्नमश्नाति, यथोपपन्नं वाऽश्नाति, न वाऽश्नातीत्यशनविकल्पः ॥ ४ ॥

[ दीक्षाकरणम् ]

**क्रत्वर्थमपदिश्यान्यस्मा, उत्तरे परिवृत उदकुम्भवत्यप्सुदीक्षा ॥ ५ ॥**

यजमानःक्रतुसाधनभूतं धान्यघृतहिरण्यादिद्रव्यं 'क्रत्वर्थं मे गोपाय यथा कालं सम्पादय' इत्येवमन्यस्मै उक्त्वा ततस्तेन अप्सुदीक्षा कार्या । अप्सुदीक्षेति वक्ष्यमाणस्य केशश्मश्रुवपनस्नानादिसंस्कारस्य नामधेयम् । परिवृतमध्ये हस्तमितं गर्तं कृत्वा तत्रोदकुम्भनिधानम् ॥ ५ ॥

---

(१) ॐ एदमगन्म देवयजनं पृथिव्या यत्र देवासो अजुषन्त विश्वे । ऋक्सामाभ्याᳬ सन्तरन्तो यजुर्भी रायस्पोषेण समिषा मदेम ( ४।१ ) ।

नापित उत्तरत उपतिष्ठति नखानि निकृन्तत्यङ्गुष्ठप्रभृतीनि दक्षिणहस्तस्य प्रथमम् ॥ ६ ॥

नापिते वत्तरि उप = समीपे तिष्ठति सति अध्वर्युर्यजमानस्य अङ्गुष्ठप्रभृतीनि नखानि निकृन्तेत्। तत्रापि प्रथमं दक्षिणहस्तस्य ॥ ६ ॥

दक्षिणं गोदानं वितार्योनत्ती "मा आप" (१) इति ॥ ७ ॥

शिरसो दक्षिणं प्रदेशं कङ्कतादिना विविच्य तत्स्थान् केशान् विजटान् कृत्वाऽऽर्द्रीकुर्यात् ॥ ७ ॥

यूपवत्कुशतरुणम् ॥ ८ ॥

केशमध्ये कुशपत्रं दध्यात्। यूपवदोषध इति (२) मन्त्रेणेत्यर्थः ॥ ८ ॥

क्षुरेण चाभिनिधाय ॥ ९ ॥

चशब्दाद् यूपवदेव क्षुरधारनिहिततृणस्योपरि निदध्यात् ॥ ९ ॥

छित्वोदपात्रे प्रास्यति ॥१०॥

"स्वधित" (३) इति सतृणान्केशान् छित्वोदपात्रे क्षिपेत् ॥१०॥

एवमुत्तरं तूष्णीम् ॥११॥

एवमुत्तरपार्श्वस्थान् केशान् तूष्णीं संस्कुर्यादध्वर्युः ॥११॥

नापिताय क्षुरं प्रयच्छति ॥ १२ ॥

एवं कृत्वा ततो नापिताय वप्त्रे केशवापार्थं क्षुरं प्रयच्छेदध्वर्युः ॥ १२ ॥

तेन केशश्मश्रु वपति ॥ १३ ॥

नापितस्तेनाध्वर्युणाऽर्पितेन क्षुरेण शिखां वर्जयित्वा मुण्डयेत्। सत्रे तु सशिखं वपनं, वचनात् ॥ १३ ॥

"आपो अस्मा" निति (४)स्नात्वो"दिदाभ्य" उत्क्रामत्युत्तरपूर्वार्द्धम् ॥१४॥

पूर्वं परिवृते निहितेन उदकुम्भोदकेन स्नात्वा उदिदाभ्य (५) इति उत्तरपूर्वार्द्धं निर्गच्छेत् ॥ १४ ॥

क्षौमं वस्ते 'निष्पेष्टवै ब्रूया'दहतं चेदद्भिरभ्युदय ॥ १५ ॥

स्नानानन्तरं क्षौमं वासः परिदधीत यजमानः। अहतं पूर्वमधौतं वासः 'निष्पेष्टवै ब्रूयात्' इति प्रतिप्रस्थात्रे प्रैषं दत्वा तेन च प्रक्षालितं परिदध्यात्। चेदद्भिरभ्युदय। चेच्छब्दो वाशब्दार्थे। अथवा अद्भिरभ्युक्षणमात्रं कृत्वा परिधत्ते। प्रक्षालनेन सहास्य विकल्पः ॥ १५ ॥

---

(१) ॐ इमा आपः शमु मे सन्तु देवीः ( ४।१ )।

(२) ॐ ओषधे त्रायस्व ( ४।१ )

(३) ॐ स्वधिते मैनꣳ हिꣳसीः ( ४।१ )।

(४) ॐ आपो अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु। विश्वꣳ हि रिप्रं प्रवहन्ति देवीः ( ४।२ )।

(५) ॐ उदिदाभ्यः शुचिरा पूत एमि ( ४।२ )।

**स्नातवस्यं वाऽमौत्रधौतं विचितकेशं प्रसारितदशं "दीक्षातपसो" (१) रिति ॥ १६ ॥**

अथवा प्रत्यहं कृतस्नानेन सदा परिधीयमानं यद् वासस्तत्परिधत्ते । किंभूतम्—अरजकप्रक्षालितम् । विचिताः = निष्कासिताः केशाः = सूत्राणि यस्मात् तत् । प्रसारिता दशा यस्य तत् ॥ १६ ॥

**न नीविं कुरुते ॥ १७ ॥**

अनीविकं वासः परिधत्ते । नीविरुपवर्त्तिका । 'वेष्टितवसनग्रन्थिर्नीविरिति रुद्रदत्तः (आप० श्रौ० १०।९।६) ॥१७॥

[ प्रतिप्रस्थात्रा मन्त्रवर्जं यजमानवत् पत्न्या दीक्षाकरणम् ]

**एवं प्रतिप्रस्थाताऽपरस्मिन्परिवृते पत्नीं तूष्णीम् ॥ १८ ॥**

एवं यजमानदीक्षोक्तप्रकारेण अपरस्मिन्परिवृते प्रतिप्रस्थाता मन्त्रवर्जं पत्नीं दीक्षयेत् ॥ १८ ॥

[ पत्न्या वपनविकल्पः ]

**वपनं वा ॥१९॥**

वपनं भवति न वा । वपनाभावे उन्दनादिसंस्काराणामभावः । नखनिकर्त्तनं तु भवति, स्नानादि च ॥१९॥

[ दीक्षितस्य क्रत्वर्थो मांसप्रतिषेधः ]

**धेन्वनडुहयोर्नाश्नीयात् ॥२०॥**

धेन्वनडुन्मांसं नाश्नीयात् ॥२०॥

अयं च धेन्वनडुन्मांसनिषेधः क्रतुमध्ये कृतत्वात् क्रत्वर्थं एव भवितुमर्हतीति प्राप्त आह—

**पुरुषधर्मो वाऽसम्भवात् ॥२१॥**

पुरुषधर्मं एवायं भवितुमर्हति । कुतः ? क्रतुमध्ये दीक्षितस्य पयोव्रतादेर्विहितत्वेन मांसाशनस्य प्राप्त्यसम्भवात् । प्रतिषेधस्य च प्राप्तिपूर्वकत्वात् । अतो रागप्राप्तस्य मांसाशनस्य पुरुषार्थत्वेन निषेधोऽयम् । केचित्तु दीक्षितस्य पूर्वमिष्टाशनविधानात् (३।१।४।१) तेन प्राप्तस्यात्र प्रतिषेधः क्रत्वर्थ एव । अत एवास्य एतत्प्रकरणे पाठोऽपि सङ्गच्छत इत्याहुः ॥२१॥

**अꣳसलभोजनं वा ॥२२॥**

अंसलः स्थूल उच्यते । अथवा स्थूलयोर्धेन्वनडुहोर्भोजनं भवति ॥२२॥

[ दीक्षणीयेष्टिः, तत्राग्नावैष्णवः पुरोडाशः ]

**प्रपाद्याऽऽग्नावैष्णव एकादशकपालः ॥२३॥**

ततो बाहुगृहीतं यजमानं शालायां प्रवेश्य आग्नावैष्णव एकादशकपालः पुरोडाशः (३।१।३।१) कर्त्तव्यः ॥२३॥

---

(१) ॐ दीक्षातपसोस्तनूरसि तां त्वा शिवाꣳ शग्मां परि दधे भद्रं वर्णं पुष्यन् ( ४।२ ) ।

[ दीक्षणीयेष्टावादित्यचरोर्विकल्पः ]

**आदित्येभ्यो वा चरुः ॥२४॥**

अयं च विकल्पः स्वस्याभावेन, न त्वाग्नावैष्णवेन। अतो दीक्षणीयायाम् आदित्येभ्य श्चरुर्भवति न वा(१)। आग्नावैष्णवस्तु नियमेन भवत्येव ॥२४॥

[ दीक्षणीयेष्टौ समिष्टयजुरन्तता, समिष्टयजुर्वर्जं वा सर्वाङ्गानुष्ठानम् ]

**प्राक् समिष्टयजुषः करोति ॥२५॥**

अत्र दीक्षणीयेष्टौ समिष्टयजुषः प्राक् यान्यङ्गानि तान्येव कुर्यात्, न तत ऊर्ध्वानि ॥२५॥

**समिष्टयजुर्वर्जं वा ॥२६॥**

अथवा समिष्टयजुर्वर्जयित्वा अन्यत्सर्वं कर्मापवर्गान्तं भवति ॥२६॥

[ अग्नीषोमीयात् प्राग्भाविषु कर्मसु उपांश्वादिस्वरस्य विकल्पः ]

**उपांशु चरन्ति प्रागग्नीषोमीयात् ॥२७॥**

सोमसङ्कल्पप्रभृति अग्नीषोमीयात्पशोः प्राक् सर्वं कर्म उपांशु कर्त्तव्यम् ॥२७॥

पक्षान्तरमाह—

**वागन्तेन वा दीक्षणीयां, नीचैस्तरां नीचैस्तरामितरे ॥२८॥**

अथवा वागन्तेन = उच्चैःस्वरेण दीक्षणीयामिष्टिं चरेत्। तत इतरे द्वे इष्टी प्रायणीयाऽऽतिथ्ये नीचैस्तरां नीचैस्तरां कर्त्तव्ये। दीक्षणीयापेक्षया नीचैस्तरां प्रायणीयाम्, ततोऽपि नीचैस्तरामातिथ्यामिति ॥ २८ ॥

**उपांशूपसदः ॥२९॥**

उपसद इष्टय उपांशु कर्त्तव्याः।

प्रपूर्वसूत्रेणैव उपसदामपि उपांशुत्वे सिद्धे पुनरत्र उपसत्सु उपांशुत्वविधानं ज्ञापयति पूर्वोक्तात्पक्षादिदं पक्षान्तरमिति। तेन दीक्षणीयादिषु स्वरविकल्पः सिद्धो भवति। "तस्माद्यत्किञ्च प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ति" इत्यादिश्रुत्या अग्नीषोमीयप्राग्भाववृत्तिषु सर्वेष्वपि पदार्थेषु उपांशुत्वं विधीयते। विशिष्य च दीक्षणीयादौ। "यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयान्मन्द्रं प्रायणीयायां मन्द्रतरमातिथ्यायामुपांशूपसत्सूच्चैः प्रवर्ग्येण" इति विशिष्य स्वरा विहिताः। तत्र दीक्षणीयादिषु उपांशुस्वरः, उत तत्र तत्र विशेषविहितः स्वरः, अथवा विकल्प? इति संशये विशेषस्वरेण सामान्यस्य बाधात् सामान्यस्वरो विशेषविहितस्वरवदतिरिक्तस्थलेषु प्रवर्तते। तथापि 'उच्चैः प्रवर्ग्येण' इति तृतीयाश्रवणात् साङ्गस्यैव प्रवर्ग्यस्य उद्देश्यत्वावगमात् साङ्गे प्रवर्ग्ये उच्चैः स्वरः। दीक्षणीयादिषु तु केवलं प्रधानमात्रे विशेषस्वरस्य प्रवृत्तिः। तत्र सर्वत्र तृतीयानिर्देशाभावात्। अतश्च साङ्गप्रवर्ग्ये, दीक्षणीयादिषु प्रधानमात्रेषु च विशेषविहितानां स्वराणां प्रवृत्तिः। तदतिरिक्तेषु अग्नीषोमीयप्राग्भाविषु पदार्थेषु सामान्यविहित उपांशु स्वरः प्रवर्त्तते। एतच्च जैमिनीये (३।३।१) स्पष्टम् ॥२९॥

[ दीक्षाप्रकारः ]

**शालां पूर्वेण तिष्ठन्नभ्यङ्क्ते कुशेषु नवनीतेन शीर्ष्णोऽध्यनुलोमं सपादको "महीनां पयोऽसी" ति(२) ॥३०॥**

---

चरुस्वरूपं सारसंग्रहे—

(१) "अनिर्गतोष्मा सुस्विन्नो ह्यदग्धोऽकठिनश्चरुः। न चातिशिथिलः पाच्यो न च वीतरसो भवेत्" इति।

(२) ॐ महीनां पयोऽसि वर्चोदाऽ असि वर्चो मे देहि ( ४।३ )

शालायाः पुरस्तात्कुशेषु तिष्ठन्नध्वर्युर्यजमानं गव्येन नवनीतेन शिर आरभ्य अनुलोमं सपादकं = पादविशिष्टं यथा तथाऽभ्यङ्क्ते । सपादकमिति विभक्तिव्यत्ययो बोध्यः ॥ ३० ॥

[ नेत्रयोरञ्जनम् ]

**"वृत्रस्ये" त्यक्ष्यावनक्ति त्रैककुदाञ्जनेन ॥ ३१ ॥**

वृत्रस्येति(१) त्रिकुत्पर्वतीयेन सौवीराञ्जनेन यजमानस्याक्षिणी अञ्ज्यादध्वर्युः ॥३१॥

**अभावेऽन्यत् ॥ ३२ ॥**

त्रैककुदाञ्जनाभावेऽन्यदञ्जनं ग्राह्यम् ॥ ३२ ॥

**द्विर्दक्षिणं त्रिरुत्तरं पराक् ॥३३॥**

दक्षिणं चक्षुर्द्विरञ्ज्यादुत्तरं त्रिः । अत्र चाञ्जनं पराक् कर्त्तव्यम् । अर्थात् अक्ष्णः पूर्वं कोणमारभ्य आऽन्तं सकृदक्त्वा पुनः प्रथमावृत्तिवत् द्विस्त्रिर्वाऽऽवर्तनीयम् , न तु शलाकायाः परावर्त्तनेनाङ्क्तव्यमिति ॥३३॥

**सकृन्मन्त्रः ॥ ३४ ॥**

तत्राञ्जने सकृत्सकृन्मन्त्रः पठनीयः ॥ ३४ ॥

**शरेषीकया साग्रया ॥ ३५ ॥**

सतूलया शरस्याग्रशलाकयाऽञ्ज्यात् ॥ ३५ ॥

इति कात्यायनश्रौतसूत्रवृत्तौ सप्तमाध्याये द्वितीया कण्डिका ॥ २ ॥

---

[ यजमानस्य पावनम् ]

**कुशपवित्रे "चित्पतिर्मे" ति पावयति सप्तभिः सप्तभिः प्रतिमन्त्रमच्छिद्रेणेति सर्वत्र द्विरुपरि नाभ्युन्मृज्य प्रदक्षिणꣳ सकृदवाङ् ॥ १ ॥**

कुशा एव पवित्राणि, तैः सप्तभिः सप्तभिरध्वर्युर्यजमानं शोधयेत् । तत्र सर्वेषु मन्त्रेषु (२) अच्छिद्रेणेत्यनुषञ्जनीयम् । नाभेरुपरि प्रदक्षिणं द्विरुन्मार्जनम् । नाभेरधः सकृदिति ॥१॥

**एकेन, त्रिभिः, सप्तभिर्वा ॥ २ ॥**

एकेन दर्भतृणेन वा, त्रिभिर्वा, सप्तभिर्वा पवित्रैः पुनीयात् ॥ २ ॥

प्रसङ्गादाह—

**एकशतेन वा राजसूये ॥ ३ ॥**

एकोत्तरशतेन दर्भैर्वा राजसूयान्तर्गतसोमेषु पुनाति ॥ ३ ॥

**"आ वो देवास" (३) इति वाचयति ॥ ४ ॥**

यजमानमध्वर्युः ॥ ४ ॥

---

(१) ॐ वृत्रस्यासि कनीनकश्चक्षुर्दाऽ असि चक्षुर्मे देहि ( ४।३ )

(२) ओं चित्पतिर्मा पुनात्वच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः । तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम् । ओं वाक्पतिर्मा पुना० ओं देवो मा सविता पु० ४।४।

(३) ओं आ वो देवास ईमहे वामं प्रयत्यध्वरे । आ वो देवासऽ आशिषो यज्ञियासो हवामहे ४।५

[ मुष्टीकरणम् ]

**"स्वाहा यज्ञ" (१) मित्यङ्गुली अचते नानाहस्तयोः ॥ ५ ॥**

द्वयोर्हस्तयोर्युगपदेकैकां कनिष्ठिके अङ्गुली सङ्कोचयति यजमानः ॥ ५ ॥

**एवठं० शेषं प्रतिमन्त्रम् (२) ॥ ६ ॥**

एवमेवावशिष्टा अङ्गुलीः सङ्कोचयेत्। हस्तद्वयस्यानामिके मध्यमे च क्रमेण सङ्कोचयेदित्यर्थः ॥ ६ ॥

[ वाग्यमः ]

**उत्तमेन मुष्टी कृत्वा "स्वाहे"त्युक्त्वा वाग्यतः ॥७॥**

स्वाहा वातादारभे (३) इति अन्तिममन्त्रेण तर्जनीमङ्गुष्ठं च सङ्कोच्य मुष्टिं कृत्वा 'स्वाहा' (४) इति मन्त्रमुच्चार्य यजमानो वाग्यतो भवेत् ॥ ७ ॥

**अङ्गुष्ठौ तत्सहिते चोत्सृजति ॥८॥**

अङ्गुष्ठौ, तत्संलग्ने ये अङ्गुली तर्जन्यौ, ते च प्रसारयति। अङ्गुलित्रयं तु सङ्कोचयत्येव ॥ ८ ॥

[ यजमानस्य शालाप्रवेशः ]

**वाग्यतं प्रवेशयत्याहवनीय-गार्हपत्यावन्तरेण ॥ ९ ॥**

वाग्यतं, बाहुगृहीतं यजमानं पूर्वद्वारेण शालायामध्वर्युः प्रवेशयति। स च गार्हपत्याहवनीयावन्तरेणागत्य स्वासने उपविशेत् ॥९॥

[ यजमानस्य सञ्चरः ]

**सोऽस्य सञ्चर आ प्रसवात् ॥१०॥**

स = आहवनीयगार्हपत्ययोरन्तरालदेशमार्गोऽस्य = यजमानस्य आसुत्यायाः = अवभृथं यावत् सञ्चरो बोध्यः ॥ १० ॥

[ पत्न्या दीक्षाप्रकारः ]

**एवं प्रतिप्रस्थाता पत्नीमभ्यञ्जनादि तूष्णीम् ॥११॥**

एवं प्रतिप्रस्थाता पत्नीं दीक्षयेत्। तत्राऽभ्यञ्जनादि सर्वं तूष्णीं कुर्यात् ॥११॥

[ पत्न्याः शालाप्रवेशः ]

**अपरेण वा प्रवेशयति ॥१२॥**

प्रतिप्रस्थाताऽऽहवनीयगार्हपत्ययोः पश्चान्मार्गेण, आहवनीयगार्हपत्यावन्तरेण वा पत्नीं प्रवेशयेत्। पत्न्या अप्ययमेव सञ्चरः सुत्यापर्यन्तम् ॥१२॥

[ औद्ग्रभणहोमः ]

**औद्ग्रभणानि जुहोति स्थाल्याः स्रुवेण "ऽऽकूत्या" इति (५) प्रतिमन्त्रम् ॥१३॥**

---

(१) ओं स्वाहा यज्ञं मनस आरभे। ओं स्वाहा द्यावापृथिवीभ्यां यज्ञमारभे।

(२) ओं स्वाहोरोरन्तरिक्षाद्यज्ञमारभे।

(३) ओं स्वाहा वातादारभे यज्ञमारभे। ४।५।

(४) ओं स्वाहा ।४।५।

(५) ओं आकूत्यै प्रयुजेऽग्नये स्वाहा। ओं मेधायै मनसेऽग्नये स्वाहा। ओं दीक्षायै तपसेऽग्नये स्वा०। ओं सरस्वत्यै पूष्णेऽग्नये स्वा०। ओं आपो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवीऽ उरोऽ अन्तरिक्ष। बृहस्पतये हविषा विधेम स्वाहा ४।६

स्थाल्याः सकाशात् स्रुवेण जुहुयादध्वर्युः । एषां मन्त्राणामौदुग्रभणानीति वैदिकी संज्ञा संव्यवहारार्था ॥१३॥

**तृतीयं जपत्येव ॥१४॥**

दोद्याथै तपस इति तृतीयं मन्त्रं जपत्येव, नानेन जुहुयात् ॥१४॥

**पञ्चमं जुह्वां ध्रौवमासिच्य द्विश्च स्थाल्याः स्रुवेण, तृतीयꣳ स्रुवमभिपूरयति, "विश्वो देवस्ये"ति ॥१५॥**

पञ्चममौदुग्रभणसंज्ञकं होमं प्रति ध्रुवास्थमाज्यं जुह्वामासिच्य द्विश्च स्थाल्याः सकाशात् स्रुवेण तत्रैवासिच्य स्थालीतस्तृतीयं स्रुवमभिपूरयेत् । अभिपूर्य जुह्वामेवासिच्य जुहूस्थमाज्यं विश्वो देवस्येति(१) जुहुयात् ॥१५॥

**एतामेव वा पूर्णां जुहुयात् ॥१६॥**

अथवा एतामेवाहुतिं पूर्णां स्रुचं कृत्वा जुहुयात् , न पूर्वाश्चतस्रः ॥१६॥

(इति दीक्षणीयेष्टिः ।)

---

(अथ कृष्णाजिनादिदीक्षा ।)

[ आसनार्थं कृष्णाजिनास्तरणम् ]

**आहवनीयं दक्षिणेन कृष्णाजिने माꣳसꣳसꣳहिते स्यूतान्ते तर्द्मसु पश्चादासञ्जनवती निदधाति ॥१७॥**

दीक्षणीयासमाप्त्यनन्तरमध्वर्युराहवनीयस्य दक्षिणस्यां दिशि द्वे कृष्णाजिने प्राग्ग्रीवे स्तृणीयात् । कीदृशे—मांससंहिते । मांसशब्देन तत्संबद्धो देशो लक्ष्यते । तेन सहिते । उपरि लोमानि यथा भवेयुस्तथेत्यर्थः । तर्द्मसु पश्चात्स्यूतान्ते = तृद्यत इति तर्द्म = छिद्रम् । चर्मणो मृगशरीराद् विकर्त्तनानन्तरं भूमौ कील ग्रन्थिखाय परितश्छिद्राणि कृत्वा तानि कीलकेषु प्रोतयित्वा तरणं क्रियते, यथा तच्चर्म विस्तृतं भवेत् । तदानीं तस्मिश्चर्मणि कृताश्छिद्रा भवन्ति । तत्रेदमुच्यते । चर्मणः पश्चाद्भागकल्पितेषु छिद्रेषु स्यूतान्ते, = स्यूताः दोरकेन तन्तुना परस्परं संश्लेषिता अन्ता ययोस्ते । चर्मणोः पश्चाद्भागे यानि छिद्राणि, तेष्ववश्यं परिषीवणं भवति, नान्यच्छिद्रेषु । आसञ्जनवती = नागदन्तकादावासज्यते येन तदासञ्जनमवलगनरज्जुपाशः । तद्वति ॥१७॥

**एकं चेत्पश्चात्पादद्विगुणम् ॥१८॥**

यद्येकं कृष्णाजिनं भवति तदा कृष्णाजिनं पश्चात्पादद्विगुणं कार्यम् । पश्चात्पादौ मोटनेन द्विगुणीकृतौ संभुग्नीकृतौ यस्य तत् ॥ १८ ॥

[ कृष्णाजिनसमीपे उपवेशनम् ]

**दक्षिणं जान्वाच्यास्ते पश्चादेनयोः ॥१९॥**

दक्षिणं जान्वाच्य भूमिसंलग्नं स्पृष्टं कृत्वा एनयोः पश्चाद्यजमान उपविशेत् ॥१९॥

[ कृष्णाजिनस्पर्शः ]

**शुक्लकृष्णसन्धिमालभत "ऋक्सामयो"(२)रिति ॥२०॥**

यजमानः कृष्णाजिनयोः शुक्लकृष्णसन्धिमालभेत् ॥२०॥

---

(१) ओं विश्वो देवस्य नेतुर्मर्तो वुरीत सख्यम् । विश्वो राय इषुध्यति द्युम्नं वृणीत पुष्यसे स्वाहा ४।७।

(२) ओं ऋक्सामयोः शिल्पे स्थस्ते वामा रभे ते मा पात मास्य यज्ञस्योदृचः ४।८।

[ कृष्णाजिने दक्षिणजानुनाऽऽरोहणम् ]

**दक्षिणजानुनाऽऽरोहति "शर्माऽसी"ति(१) तेनास्तेऽपरेन्ते ॥२१॥**

दक्षिणजानुना भुग्नेन कृष्णाजिने यजमान आरोहेत्। आरुह्य तयोः पश्चिमे भागे दक्षिणेनैव जानुनोपविशेत् ॥ २१ ॥

[ मेखलाबन्धनं यजमानस्य ]

**मेखलां बध्नीते वेणिं त्रिवृतꣳ शणमुञ्जमिश्रामन्तरां वासस "ऊर्गसी"ति (२) ॥ २२ ॥**

अध्वर्युर्यजमानस्य कटिप्रदेशे परिधानवस्त्रस्यान्तः मेखलां प्रदक्षिणं (आ प० १०।६।१५ बध्नीते। कीदृशीम्, वेणिम् = वेण्याकाराम्। त्रिगुणया रज्वा ग्रथिताम्। शणतृणैर्मुञ्जतृणैश्च निर्मिताम् ॥ २२ ॥

[ नीविबन्धनम् ]

**नीविं कुरुते "सोमस्य नीवि" (३) रिति ॥ २३ ॥**

नीविरपवर्त्तिकोच्यते। 'वेष्टितवसनग्रन्थिर्नीविः' (आप० श्रौ० १०।६।६) इति रुद्रदत्तः ॥२३॥

[उष्णीषेण शिरःसंवरणम् ]

**शिरः प्रोर्णुते "विष्णोः शर्मे"ति (४) ॥ २४ ॥**

उष्णीषेण स्वं शिरः प्रदक्षिणम् ( आप० श्रौ० १०।६।६) आच्छादयेद्यजमानः ॥ २४ ॥

[ कृष्णविषाणाबन्धनं, तथैव च कण्डूयनादिकम् ]

**कृष्णविषाणां त्रिबलिं पञ्चबलिं वोत्तानां दशायां बध्नीते ॥ २५ ।**

कृष्णमृगस्य शृङ्गं ग्रन्थित्रययुतं पञ्चग्रन्थियुतं वा प्रादेशमात्रम् ऊर्ध्वाग्रं परिधानीयस्य दशायां बध्नीयाद्यजमानः। बलयः कृष्णविषाणागता उच्चप्रदेशाः ॥ २५ ॥

**तया कण्डूयनम् ॥ २६ ॥**

यदा कण्डूरुत्पद्यते तदा दीक्षितेन स्वाङ्गानां कण्डूयनं तेन शृङ्गेन कार्यम्, न नखैः, काष्ठादिना वा ( ३।२।१।३१ ) ॥ २६ ॥

**उपस्पृशत्येनया दक्षिणस्या भ्रुव उपरी "न्द्रस्य योनि" रिति (५) ॥ २७ ॥**

यजमान एनया कृष्णविषाणया दक्षिणस्या भ्रुव उपरि ललाटं स्पृशेत् ॥ २७ ॥

**भूमौ चोल्लिखति "सुसस्या" इति (६) ॥ २८ ॥**

शृङ्गेण भूमौ रेखां कुर्यात् ॥ २८ ॥

इति कात्यायनश्रौतसूत्रवृत्तौ सप्तमाध्याये तृतीया कण्डिका ॥ ३ ॥

---

(१) ॐ शर्मासि शर्म मे यच्छ नमस्तेऽ अस्तु मा मा हिꣳसीः ४।८।

(२) ॐ ऊर्गस्याङ्गिरस्यूर्णम्रदाऽ ऊर्जं मयि धेहि ४।१०।

(३) ॐ सोमस्य नीविरसि ४।१०।

(४) ॐ विष्णोः शर्मासि शर्म यजमानस्येन्द्रस्य ४।१०।

(५) ॐ इन्द्रस्य योनिरसि ४।१० ।

(६) ॐ सुसस्याः कृषीस्कृधि ४।१० ।

[ दण्डदानं, तदुच्छ्रयणं च ]

**मुखसम्मितमौदुम्बरं दण्डं प्रयच्छति ॥ १ ॥**

अध्वर्युर्यजमानायोदगग्रम् । ऊर्ध्वोष्ठपर्यन्तं मुखम् । तत्सम्मितम् ॥ १ ॥

**"उच्छ्रयस्वे"त्येनमुच्छ्रयति (१) ॥ २ ॥**

यजमानः ॥ २ ॥

**तं दक्षिणत उपधत्ते ॥ ३ ॥**

उच्छ्रितं दण्डं दक्षिणस्कन्धे निदध्याद्यजमानः ॥ ३ ॥

**अत्र वा मुष्टिकरण-वाग्यमने ॥ ४ ॥**

भवतः । पूर्वत्र ( ७।३।५—७ ) वेति विकल्पः ॥ ४ ॥

**एवं प्रतिप्रस्थाता पत्नीं तूष्णीं युगपन्मेखलादि ॥ ५ ॥**

यदा यजमानस्य समन्त्रकं दीक्षामध्वर्युः करोति तत्समकालमेव प्रतिप्रस्थाता तूष्णीं मेखलाबन्धनादिना पत्नीं दीक्षयेत् ॥ ५ ॥

**योक्त्रेण वा ॥ ६ ॥**

योक्त्रेण वा पत्नीं दीक्षयति । मेखलया सह योक्त्रस्य विकल्पः ॥ ६ ॥

**जालं वा शिरसि त्रिपर्यायम् ॥ ७ ॥**

पत्न्याः शिरसि उष्णीषस्थाने जालं वा मत्स्यादिबन्धनाद्याकारं त्रिर्वेष्टितव्यम् । अत्र त्रिपर्यायेण एकपर्यायस्य विकल्पः । तेन त्रिपर्यायं वा वेष्टयेदेकपर्यायं वेति विकल्पः ॥ ७ ॥

[ पत्न्याः कण्डूयनार्थं यज्ञियवृक्षशङ्कुः ]

**पृथुमुखो यज्ञियवृक्षशङ्कुः कण्डूयने ॥ ८ ॥**

पृथुः स्थविष्ठो, मुखम् = अग्रभागो यस्य सः । उदुम्बरपलाशादेः शङ्कुः प्रादेशमात्रः पत्न्याः कण्डूयने उल्लेखने च भवति ॥ ८ ॥

[ पत्न्या मेखलादिना कृष्णाजिनादिना वा दीक्षा ]

**ओल्लेखनात्करोति मेखलादि चेत् ॥ ९ ॥**

यदि पत्न्या मेखलाबन्धनादि कर्म करोति तदा 'भूमौ चोल्लिखति' ( ७।३।२८ ) इति विहितभूम्युल्लेखनान्तं कर्म कुर्यात् । अयं भावः । पत्न्या दीक्षायां पक्षद्वयमभिप्रेतं सूत्रकारस्य । एकः "आहवनीयं दक्षिणेन" (७।३।१७) इत्यादिविहितकृष्णाजिनास्तरणविधानप्रभृति । अन्यश्च "मेखलां बध्नीत" (७।३।२२) इत्यादि । तत्र यदि मेखलादिपक्षस्तदा उल्लेखनपर्य्यन्तं कुर्यात् ।

(१) ओं उच्छ्रयस्व वनस्पत ऽ ऊर्ध्वो मा पाह्यꣳहस ऽ आ ऽस्य यज्ञस्योदृचः ४।१०।

यदि च कृष्णाजिनादिपक्षः क्रियते तदा 'मुखसम्मितम्' ( ७।४।१ ) इति विहितदण्डप्रदानान्तं कर्म कुर्यादिति ॥ ९ ॥

**कृष्णाजिनादि चेद्दण्डान्तम् ॥१०॥**

यदि पत्न्याः कृष्णाजिनादि कर्म करोति तदा दण्डान्तं कर्म कर्त्तव्यम् (१) ॥१०॥

(इति कृष्णाजिनादिदीक्षा)

[ दीक्षितावेदनम् ]

**अन्यो 'दीक्षितोऽयं ब्राह्मण' इत्याह त्रिरुच्चैः ॥११॥**

अध्वर्योरन्यः प्रतिप्रस्थात्रादिः। एकदीक्षापक्षे अत्र महावीरसंभरण-यूपाहुति-यूपच्छेदनानि क्रमेण कार्याणि। दीक्षाबहुत्वे तु यस्मिन् कस्मिंश्चिद्दीक्षादिने तानि ॥११॥

**ब्राह्मण इत्येव वैश्यराजन्ययोरपि, श्रुतेः ॥१२॥**

वैश्यराजन्यकर्तृकेऽपि यज्ञे दीक्षितोऽयं ब्राह्मण इत्येव वक्तव्यम्, न तु दीक्षितोऽयं क्षत्रियो, वैश्यो वेति। कुतः? श्रुतेः। "तस्मादपि राजन्यं वा वैश्यं वा ब्राह्मण इत्येव ब्रूयात्" ( ३।२।१।४० ) इति श्रुतेरित्यर्थः ॥१२॥

[ वाग्यमावधिः ]

**आऽस्तमयाद्वाचं यच्छति ॥१३॥**

मुष्टिकरणानन्तरं विहितं वाग्यमनं ( ७।३।७ ) सूर्यास्तसमयपर्यन्तं कुर्यात् ॥१३॥

[ वाग्विसर्गकालः ]

**अस्तमिते 'दीक्षित वाचं विसृजस्व' 'पत्नि वाचं विसृजस्वे'ति त्रिराह ॥१४॥**

अध्वर्युः ॥१४॥

---

(१) दीक्षाप्रकरणे हि "आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण" इति दीक्षणीयेष्टिः श्रूयते। एवं "कृष्णाजिनेन दीक्षयति" ( आप० श्रौ० १०।८।११ ) इत्यादि च श्रूयते। तत्र आग्नावैष्णवेष्ट्या दीक्षासंस्कारः? अथवा कृष्णाजिनादिभिरेव, अथवा सर्वैरेवेति संशये आग्नावैष्णवेनैव दीक्षासंस्कारः क्रियते। कुतः? "आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाण" इति दीक्षासंबन्धश्रवणात् दीक्षां करिष्यन् इमामिष्टिं निर्वपेदित्यनेन हि दीक्षासंस्कारसम्पादकत्वमेव अस्या इष्टेः प्रयोजनं प्रतीयते। एवं च अनयेष्ट्या दीक्षासंस्कारे कृते कृष्णाजिनादिवाक्यानां तत्र द्रव्यसम्पादकत्वमेव; कृष्णाजिनमस्य सम्पादयतीत्यादि। कृष्णाजिनादीनां च प्रयोजनमास्तरणकण्डूयनादिकम्। अतो दीक्षणीयेष्टेरेव दीक्षार्थत्वमिति प्राप्ते उच्यते—आग्नावैष्णवमिति वाक्येन हि न दीक्षार्थत्वमिष्टेः प्रतिपाद्यते। किन्तु कृष्णाजिनादिभिर्भविष्यन्त्या दीक्षायाः पूर्वमिष्टेरनुष्ठानं परं विधीयते। यथा भोक्ष्यमाण आचामेदित्यत्र आचमनानुष्ठानार्थमुत्तरत्र भविष्यन्ती भोजनक्रिया निर्दिश्यते। यथा वा "सोमेन यक्ष्यमाण आदधीत" इत्यनेन आधानविधानार्थमुत्तरत्र भविष्यन् सोमयागो निर्दिश्यते तद्वत्। अतश्च "कृष्णाजिनेन दीक्षयति" ( आप. श्रौ. १०।८।११ ) "दण्डेन दीक्षयति" इत्यादिषु वाक्येषु द्वितीयानिर्देशात् कृष्णाजिनादीनामेव अदृष्टरूपदीक्षासंस्कार- करत्वं युक्तं; न तु आस्तरणकण्डूयनाद्यर्थत्वं तेषाम्। अदृष्टार्थत्वाच्च नैतेषां विकल्पः।

[ वाग्विसर्जनमन्त्रः ]

**अग्निमभ्यावृत्य "व्रतं कृणुते" ति वाग्विसर्जनं त्रिरुक्त्वा "ऽग्निर्ब्रह्मे" ति च सकृत् ॥१५॥**

आहवनीयाभिमुखो भूत्वा व्रतं कृणुतेति (१) त्रिरुक्त्वा अग्निर्ब्रह्मेति (२) सकृत्पठित्वा वाचं विसृजेत् ॥१५॥

**'भूर्भुवः स्व'रिति वा ॥१६॥**

वाचं विसृजेदिति मन्त्रविकल्पः ॥१६॥

**अत ऊर्ध्वमामुष्टिविसर्गादनस्तमितेऽनुदिते च त्रिराह 'दीक्षित वाचं यच्छ' 'पत्नि वाचं यच्छे'ति ॥१७॥**

**यथोक्तं विसर्जनम् ॥१८॥**

अस्तमिते उदिते चैवमेव यथोक्तं वाग्विसर्जनं ( यावद्दीक्षाविमोकं ) कुर्यात् ॥१८॥

[ व्रतधुग्दोहनं, व्रतकरणं च ]

**व्रतदुघे दोहयति ॥१९॥**

'व्रतदुघे धुक्ष्व' इति प्रैषेण व्रतदुघे गावौ दोहयत्यध्वर्युः ॥१९॥

**तत्क्षीरव्रतौ भवतः ॥२०॥**

तयोर्व्रतदुहोः क्षीरं तत्क्षीरम् । तदेव व्रतं ययोर्दम्पत्योस्तौ तत्क्षीरव्रतौ भवतः ॥२०॥

[ व्रते व्रीह्यादिप्रक्षेपः ]

**प्रथमे व्रते व्रीहियवयोरन्यतरमावपत्युभावेके ॥ २१ ॥**

प्रथमतः पीयते यत्क्षीरं तत्प्रथमव्रतं, तत्र व्रीहियवयोरन्यतरं प्रक्षिपेत् । उभौ व्रीहियवौ प्रक्षिपेदित्येकेषां मतम् ॥ २१ ॥

**तद्व्रतमदोहे ॥ २२ ॥**

यदि व्रतधुक् न दुह्येत तदा तयोरेव व्रीहियवयोरन्यतरं व्रतार्थमुपयुञ्ज्यात् । इदं च प्रथमव्रते एव । अन्यत्र तु प्रतिनिधिः । तदुक्तं "व्रते प्रसङ्गो न नियमशब्दात्" (१।४ ८) इति ॥२२॥

**सर्वौषधꣳ सर्वसुरभि चैके ॥२३॥**

एके शाखिनः प्रथमे व्रते धान्य-व्रीहि-यव-मुद्गादिकं सर्वौषधम्, सर्वसुरभि चन्दनागुरु कर्पूरादिकं चावपन्ति ॥ २३ ॥

[ व्रतश्रपणम् ]

**गार्हपत्ये दीक्षितस्य श्रपणं, दक्षिणाग्नौ पत्न्याः ॥ २४ ॥**

दीक्षितपयसः पत्नीपयसश्च यथाक्रममग्न्योः श्रपणं कार्यम् । व्रतस्थाल्यां नामादि चिन्हमप्यविपर्यासार्थं कार्यम् । व्रतदुघोरपि विपर्यासो न कार्यः ॥ २४ ॥

---

(१) ओं व्रतं कृणुत व्रतं कृणुत व्रतं कृणुत ४।११।

(२) ओं अग्निर्ब्रह्माग्निर्यज्ञो वनस्पतिर्यज्ञियः ४।११।

[ राजन्यवैश्ययोर्व्रते विशेषः ]

## यवागू राजन्यस्यामिक्षा वैश्यस्य ॥ २५ ॥

व्रतं भवति। तण्डुलानां शिथिलः पाको यवागूः। सा लौकिकी राजन्यस्य। तथैवामिक्षा वैश्यस्य व्रतम्। आमिक्षा स्फुटितं दुग्धम् ॥ २५ ॥

[ व्रतप्रदानस्य कालः ]

## व्रतं प्रयच्छत्यनुत्सिक्तमपररात्रे सायन्दोहमपराह्णे प्रातर्दोहम् ॥ २६ ॥

व्रतयतीति व्रतं व्रतार्थं पयः। अनुत्सिक्तं पयो भोजनार्थं यजमानाय समर्पयेदध्वर्युः। तत्र सायन्दोहमपररात्रे दद्यात्? प्रातर्दोहं चापराह्णे। व्रतदुग्धमल्पं दृष्ट्वा यदि कश्चित् स्नेह दयादियुक्तः पुरुषोऽन्यद् दुग्धमानीय व्रतमध्ये निनयति तदुत्सिक्तम्। तद्विपरीतमनुत्सिक्तं, क्षीरान्तरेणासंसृष्टमित्यर्थः ॥२६॥

[ व्रतार्थमाचमनम् ]

## "दैवीं धिय" मिति(१) व्रतायोपस्पर्शनꣳ स्वासने ॥ २७ ॥

कृष्णाजिने उपविष्टो यजमानो व्रतार्थमाचामेत् ॥ २७ ॥

[ व्रतकरणं पात्रविशेषश्च ]

## "ये देवा" इति(२) व्रतयत्यमृन्मये ॥ २८ ॥

स्वासने उपविष्टः कांस्यपात्रे पयः पिबेत् ॥ २८ ॥

## पत्नी लौहे ॥ २९ ॥

ताम्रमये पात्रे पत्नीं व्रतयति। पत्न्या व्रतश्रपण-प्रदाने प्रतिप्रस्थातुः ॥ २९ ॥

[ नाभिस्पर्शः ]

## "श्वात्राः पीता" इति(३) नाभिमालभते ॥३०॥

यजमानः ॥३०॥

[ मूत्रपुरीषोत्सर्गे कर्तव्यं कर्म ]

## मेहन् कृष्णविषाणया लोष्टं किंचिद्वाऽऽदत्त "इयं त" इति(४) ॥ ३१ ॥

मूत्रपुरीषे करिष्यन् यजमानः कृष्णविषाणया लोष्टं = भूमिस्थं मृत्पिण्डं, किंचित्तृणादि कं वा गृह्णाति ॥३१॥

## "अपो मुञ्चामी"ति(५) मेहति ॥ ३२ ॥

"मूत्रं पुरीषं वा कुर्याद्यजमानः ॥ ३२ ॥

---

(१) ओं दैवीं धियं मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञवाहसꣳ सुतीर्था नोऽ असद्वशे ४।११।

(२) ओं ये देवा मनोजाता मनोयुजो दक्षक्रतवस्ते नोऽवन्तु ते नः पान्तु तेभ्यः स्वाहा ४।११

(३) ओं श्वात्राः पीता भवत यूयमापोऽ अस्माकमन्तरुदरे सुशेवाः। ताऽ अस्मभ्यमयक्ष्माऽ अनमीवाऽ अनागसः स्वदन्तु देवीरमृताऽ ऋतावृधः ४।११।

(४) ओं इयं ते यज्ञिया तनूः ४।१३।

(५) ओं अपो मुञ्चामि न प्रजाम्। अꣳहोमुचः स्वाहाकृताः पृथिवीमा विशत ४।१३।

"पृथिव्या सम्भवे"त्यात्तं निदधाति(१) ॥ ३३ ॥

तं लोष्टादिकं निदधाति ॥ ३३ ॥

[ दीक्षितस्य स्वापे स्थानविशेषः ]

"अग्ने त्व" मित्युक्त्वा(२) स्वपित्यधः प्राङ् दक्षिणतः ॥ ३४ ॥

आहवनीयस्य दक्षिणतः प्राङ्मुखो भूमौ स्वपिति यजमानः ॥ ३४ ॥

( इति प्रथम दिनकृत्यम् । अथ द्वितीयदिनकृत्यम् । )

[ विबुद्धस्य दीक्षितस्य मन्त्रवाचनम् ]

अग्निमभ्यावृत्तं विबुद्धमस्वप्स्यन्तं "पुनर्मन" इति वाचयति ॥३५॥

अग्निमभ्यावृत्तो बुद्धश्च यजमानो यदि पुनर्न स्वपितुमिच्छति तदा पुनर्मन (३) इति मन्त्रं वाचयेत् ॥ ३५ ॥

इति सप्तमाध्याये चतुर्थी कण्डिका ॥ ४ ॥

[ क्रोधकरणे अश्लीलभाषणे च वाचनम् ]

"त्वमग्न" इत्याह क्रुध्वाऽव्रत्यं वा व्याहृत्य ॥१॥

यजमानः क्रोधं कृत्वा, व्रतविरुद्धं वा अश्लीलादिकं व्याहृत्य त्वमग्न (४) इति पठेत्प्रायश्चित्तार्थम् ॥ १ ॥

[ द्रव्यप्राप्तौ वाचनम् ]

लब्धमालभ्य वाचयति "रास्वेय"दिति ॥२॥

क्रतौ प्राप्तं धनं स्पृष्ट्वा रास्वेयदिति(५) वाचयेत् ॥ २ ॥

अशक्येऽभिमन्त्रणम् ॥ ३ ॥

आलम्भनाशक्तौ अनेनैव मन्त्रेणाभिमन्त्रणं करोति ॥ ३ ॥

[ यावदवभृथं दीक्षितनियमाः ]

शूद्रसम्प्रवेश-सम्भाषा-प्रत्युत्थाना-ऽभिनादनो-दकावाये-वर्षाणि वर्जयेत् प्रागवभृथात् ॥ ४ ॥

दीक्षितोऽवभृथात्प्राक् शूद्रसंप्रवेशादीनि वर्जयेत् । प्रत्युत्थानं गुर्वादेः । वर्षं वृष्टिः, तत्सम्बन्धि जलं च ॥ ४ ॥

---

(१) ओं पृथिव्या सम्भव ४।१३।

(२) ओं अग्ने त्वꣳ॰ सु जागृहि व्वयꣳ॰ सुमन्दिषीमहि । रक्षा णोऽ अप्रयुच्छन् प्रबुधे नः पुनस्कृधि ४।१४।

(३) ओं पुनर्मनः पुनरायुर्मऽ आगन्पुनः प्राणः पुनरात्मा मऽ आगन्पुनश्चक्षुः पुनः श्रोत्रं मऽ आगन् । वैश्वानरोऽ अदब्धस्तनूपाऽ अग्निर्नः पातु दुरितादवद्यात् ४।१५।

(४) ओं त्वमग्ने व्रतपाऽ असि देवऽ आ मर्त्येष्वा । त्वं यज्ञेष्वीड्यः ४।१६।

(५) ओं रास्वेयत्सोमा भूयो भर देवो नः सविता व्वसोर्दाता व्वस्वदात् ४।१६।

**परिह्वालं वदति ॥ ५ ॥**

मृदुवचनं दीक्षितो वदति ॥ ५ ॥

**विचक्षणचनसितवतीं वाचम् ॥ ६ ॥**

विचक्षणां = संस्कृतां, चनसितवतीं सत्यवतीं वाचं वदेद्यजमानः ॥ ६ ॥

**शालासनास्वप्नौ सन्धिवेलयोः ॥ ७ ॥**

यजमानः सायं प्रातः शालायामुपविष्टो भवेत्, तत्र च स्वप्यात् ॥ ७ ॥

**वेद्याᳬ सुत्यासु ॥ ८ ॥**

सुत्यासु वर्तमानासु वेद्यामासितव्यम् ॥ ८ ॥

**अप्रायश्चित्तमपराधे ॥ ९ ॥**

यदि प्रमादात् पूर्वोक्तयोः कदाचिदपराध्येत तदा तदतिक्रमे नात्र प्रायश्चित्तम् ॥ ९ ॥

**इतरेतरस्मिन्वोपहवमिच्छेरन् ॥ १० ॥**

अथवा पूर्वोक्तनियमातिक्रमे कृतापराधा दीक्षिताः परस्परम् 'दीक्षिता उपह्वयध्वम्' इति अनुज्ञामिच्छेरन् । इदमेव प्रायश्चित्तमित्यर्थः । अप्रायश्चितं वा, इदं वा प्रायश्चित्तमित्यर्थः । अयं चोपहवः सत्रेषु, अनेकयजमानके कर्मणि च भवति, नान्यत्र ॥ १० ॥

**पत्न्यामेकदीक्षी ॥११॥**

एकदीक्षी तु पत्न्यामेवोपहवं कुर्यात्, पत्न्युपह्वयस्व इति । अप्रायश्चित्तं वा, इदं वा प्रायश्चित्तमिति विकल्पः ॥११॥

( इति नियमाः )

[ अथ प्रायणीयेष्टिः ]

**दीक्षान्ते प्रायणीयमदित्यै चरुं निर्वपति ॥१२॥**

दीक्षाभिव्यञ्जकदण्डादिधारणान्ते प्रायणीसंज्ञकामिष्टिं कुर्यात् । तत्रादित्यै चरुं निर्वपेत् ॥१२॥

**आज्यभागाविष्ट्वाऽऽज्येन देवताश्चतस्रो यजति पथ्याᳬ, स्वस्ति, मग्निᳬ सोमᳬ, सवितारं च ॥१३॥**

[ उदयनीयेष्ट्यर्थं प्रायणीयेष्टिसम्बन्धिनां चर्वादीनां स्थापनम् ]

**चरुमेक्षण-बर्हिर्निदधात्युदयनीयायै ॥१४॥**

उदयनीयेष्ट्यर्थं प्रायणीयोपयुक्तां चरुस्थालीं, मेक्षणं, बर्हिश्च सुगुप्ते देशे स्थापयेत् ॥१४॥

तत्र विशेषमाह—

**सलेपं चरुं, प्रमृष्टं मेक्षणम् ॥१५॥**

चरुस्थालीं सलेपाम् = अप्रमृष्टां निदध्यात् । मेक्षणं तु निर्लेपं निदध्यात् ॥१५॥

**प्रक्षालयति वा चरुम् ॥१६॥**

अथवा चरुस्थालीमद्भिः प्रक्षाल्य निदध्यात् ॥१६॥

### अनुप्रहरतीतरे ॥१७॥

चरुस्थालीप्रक्षालनपक्षे (१) इतरे मेक्षणबर्हिषी आहवनीये जुहुयात् ॥१७॥

### त एवर्त्विजः ॥ १८ ॥

ये प्रायणीये ऋत्विजस्त एवोदयनीये भवन्ति ॥ १८ ॥

### विप्रेतेष्वन्येऽपि ॥ १९ ॥

मृतेषु प्रायणीयर्त्विक्षु उदयनीये अन्येऽप्यृत्विजो वरणीयाः ॥ १९ ॥

[ प्रायणीयायाः पूर्वेणैव शंयुना समाप्तिः ]

### शंय्वन्तं भवति ॥ २० ॥

प्रायणीयं कर्म ॥ २० ॥

"तच्छंय्वन्तं भवति" (श० ब्रा० ३।२।३।२३) "तदिडान्तं भवति" (श० ब्रा० ३।४।१।२६) इति प्रायणीयायां पित्र्यायां च क्रमेण श्रूयते। तत्र शंयुद्वयस्य इडाद्वयस्य च विद्यमानत्वात् पूर्वेण शंयुना शंय्वन्तता, उत परेण ? एवं पूर्वया इडया इडान्तता, उत उत्तरेया ? इति संशये सिद्धान्तयति—

### अन्तवचने पूर्वं, प्राप्तेः ॥ २१ ॥

अन्तवचने श्रूयमाणे पूर्वमेव शंय्विडं ग्रहीतव्यं, नोत्तरम्। कुतः? प्राप्तेः। प्रथमे शंय्वादौ कृते शंय्वन्तताप्राप्तेः। तदतिक्रमे कारणाभावादिति भावः ॥ २१ ॥

किञ्च—

### अविशेषश्रुतेः ॥ २२ ॥

नात्र विशेषः श्रूयते, पूर्वमुत्तरं वेति । अतः प्राप्तत्वात्पूर्वमेव शय्विडान्तं ग्रहीतव्यम् ॥ २२ ॥

अन्तरा पूर्वपक्षयति—

### उत्तरं वा, प्रकृत्यनुग्रहा-ऽनुयाजप्रतिषेधाभ्याम् ॥ २३॥

उत्तरं वा शंय्वन्तमिडान्तं च ग्रहीतव्यं, न पूर्वम्। कुतः ? प्रकृत्यनुग्रहात्, अनुयाजप्रतिषेधाच्च। उत्तरे शंयौ गृह्यमाणे प्रकृतिप्राप्तानां बहूनामङ्गानामनुग्रहो भवति। तथासति गुणाधिक्यात्फलाधिक्यं भवेत्। अपि चानुयाजपत्नीसंयाजप्रतिषेधश्च भवति। "तदिडान्तं भवति नानुयाजान्यजन्ति" ( श० ३।४।१।२६ ) "तच्छंय्वन्तं भवति न पत्नीः संयाजयन्ति" ( श० ब्रा० ३।२।३।२३ ) इति। यदि उत्तरे शंयौ उत्तरस्यां चेडायां परिसमाप्तिस्तदा प्रतिषेधद्वयं घटते। प्राप्तिपूर्वकत्वात्प्रतिषेधस्य ॥ २३ ॥

---

(१) अत्र प्रायणीयहविःपाकार्थमुपयुक्तां चरुस्थालीमप्रक्षाल्यैव उदयनीयहविः पाकार्थं निदधाति। एवं मेक्षणं, बर्हिश्च तदर्थं निदध्यात् प्रायणीयोपयुक्तमित्येकः पक्षः। अथवा चरुस्थालीं प्रक्षालयतीत्यपरः। तस्मिन्पक्षे न मेक्षणबर्हिषोऽपि निधानम्, किन्तु तयोरपि तदानीमेव प्रायणीयान्ते आहवनीये प्रक्षेपः। स्थाली तु मृष्टा अमृष्टा वा प्रायणीयचरूपयुक्तैव।

तस्यामेव अमृष्टलेपायां स्थाल्यामुदयनीयार्थं चरुः पच्यते। न तु प्रायणीयावशिष्टेन चरुणा उदयनीयानुष्ठानमिति बोध्यम्।

एवं प्राप्त आह—

**ग्रहणादप्रवृत्तिः ॥२४॥**

शंय्वन्तग्रहणात् इडान्तग्रहणाच्च उत्तरत्राप्रवृत्तिः। कुतः? कृत एव शास्त्रार्थं इति। प्रकृत्यनुग्रहरूपं कारणं तु आनुमानिकत्वाद्दुर्बलं प्रत्यक्षेणान्तवचनेन बाध्यते ॥ २४ ॥

**सन्त्वराश्रुतेश्च ॥ २५ ॥**

सन्त्वराश्रुतेश्चायमर्थो गम्यते, यत्पूर्वमेव शंय्वन्तमिडान्तं च ग्रहीतव्यम्, नोत्तरम्। आतिथ्यं हविर्निरवपन्" इति प्रकृत्याह—"तस्यैडोपहूता साऽप्याजगुस्तस्मात्स यज्ञ इडान्त" ( ३।५।१।२२ ) इति। असुरेभ्यो बिभ्यतो देवाः शंय्वन्तमिडान्तमेव प्रायणीयमातिथ्यं च त्वरमाणाः परित्यक्तवन्तः। त्वराकारिणश्च विना कारणं पूर्वमतिक्रम्य नोत्तरं प्रतीक्षन्ते। अतः सन्त्वराश्रुतेश्च पूर्वमेव शंयुर्ग्रहीतव्यः ॥ २५ ॥

अनुयाजप्रतिषेधस्य तर्हि का गतिरित्याह—

**नित्यानुवादोऽनुयाजप्रतिषेधः ॥२६॥**

यो हि अनुयाजप्रतिषेधः स नित्यस्यानुयाजाभावस्यानुवादः। इडान्तसंस्तवार्थ इत्यर्थः। एवं प्रशस्तमिडान्तं, येनात्रानुयाजा नेज्यन्ते। एवं पत्नीसंयाजप्रतिषेधोऽपि ॥२६॥

इति कात्यायनश्रौतसूत्रवृत्तौ सप्तमाध्याये पञ्चमी कण्डिका ॥५॥

इति प्रायणीयेष्टिः

---

[ प्रतिप्रस्थात्रा सोमस्थापनम् ]

**उपरवदेशे प्रतिप्रस्थाता रोहिते चर्मण्यानडुहे सोमं निवपति ॥ १ ॥**

दक्षिणहविर्धानमण्डपे स्थितस्य दक्षिणहविर्धानशकटस्याधस्ताद्देशः उपरवदेशः। तत्र आनडुहं लोहितवर्णं चर्म प्रसार्य तत्र सोमं स्थापयेत् ॥ १ ॥

[ सोमस्य पर्वशः खण्डनम् ]

**विक्रय्येनं विचिनोति कौत्सः शूद्रो वा ॥ २ ॥**

सोमविक्रयी कुत्सगोत्रः, कुत्सितकर्मा शूद्रो वा एनं सोमं चर्मणि पर्वशोऽवखण्डयति ॥ २ ॥

[ ब्राह्मणाच्छंसिनः सोमसमीपे उपवेशनम् ]

**ब्राह्मण उपास्ते ॥ ३ ॥**

उपरवदेशे सोमनिधाने कृते तस्य समीपे ब्राह्मणाच्छंसी दक्षिणत उपविशेत्। ब्राह्मणो ब्राह्मणाच्छंसी, ब्रह्मपुरुषः ॥ ३ ॥

[ सोमपुरस्तादुदकुम्भस्थापनम् ]

**उदकुम्भश्च पुरस्तात् ॥ ४ ॥**

जलपूर्णः कलशश्च उपरवदेशे स्थापितस्य सोमस्य पुरस्तान्निधेयः ॥ ४ ॥

[ ध्रौवस्याज्यस्य जुह्वां चतुर्ग्रहणम् ]

**शालाद्वार्यण्यपिधाय ध्रौवं जुह्वां चतुर्विगृह्णाति ॥ ५ ॥**

ततोऽध्वर्युः वस्त्रादिना शालाद्वार्यण्यपिधाय ध्रौवमाज्यं जुह्वां चतुर्विगृह्णीयात् ॥५॥

[ वेदितृणबद्धस्य हिरण्यस्य जुह्वामवधानं, पूर्वगृहीतेनाज्येन होमश्च ]

**बर्हिस्तृणेन हिरण्यं बद्ध्वाऽवदधा"त्येषा त" इति (१) ॥ ६ ॥**

आस्तृतस्य बर्हिषः संबन्धिनि तृणे हिरण्यं बध्वा ध्रुवातो गृहीतस्य घृतस्य मध्ये तत् निक्षिपेत् ॥ ६ ॥

**"जूरसी"ति (२) जुहोति ॥ ७ ॥**

चतुर्गृहीतमाज्यमाहवनीये ॥ ७ ॥

[ हिरण्यस्योद्धरणं तृणनिधानं च ]

**"शुक्रमसी"ति (३) हिरण्यमुद्धृत्य वेद्यां तृणं निदधाति ॥ ८ ॥**

तृणबद्धं हिरण्यमुद्धृत्य विस्रंस्य हिरण्यं हस्ते कृत्वा तृणं वेद्यां निदध्यात् ॥ ८ ॥

[ हिरण्ये सूत्रबन्धनम् ]

**सूत्रबद्धᳪ हिरण्यं कुरुते ॥ ९ ॥**

उद्धृतं हिरण्यं सूत्रेण बद्धं कुर्यात् । अत्र प्रायणीयाशेषसमाप्तिः ॥ ९ ॥

( इति प्रायणीया । )

---

[ अथ सोमक्रयः । ]

**चतुर्गृहीतं गृहीत्वा'ऽन्वारभस्व यजमाने' त्याह ॥ १० ॥**

[ अध्वर्युयजमानयोर्निष्क्रमणम् ]

**अपावृतद्वारे निष्क्रामतः ॥ ११ ॥**

विमिते उद्घाटितद्वारे सति विमितादध्वर्युयजमानौ निष्क्रामेताम् ॥ ११ ॥

[ पूर्वद्वारस्य दक्षिणभागे सोमक्रयण्या गोः स्थापनम् ]

**दक्षिणेन द्वारᳪ सोमक्रयणी तिष्ठत्यलक्षिता,ऽव्यङ्गा,ऽप्रवीता,ऽरज्जुबद्धा, बभ्रूः, पिङ्गला, पिङ्गलाभावेऽरुणा,ऽरुणाभावे रोहिण्यश्येताक्षी ॥१२॥**

शालायाः पूर्वद्वारस्य दक्षिणे भागे यया सोमः क्रियते सा गौः स्थिता भवेत् । तामेव विशिनष्टि अलक्षिता = गावो गोस्वामिभिः परिज्ञानार्थं विजातीयेन येन चिन्हेनाङ्किता भवन्ति तेन चिन्हेन रहिता । अव्यङ्गा = अनङ्गरहिता । अप्रवीता = वृषभेणाकामिता । अरज्जुबद्धा = अबद्धा । बभ्रूः कपिलवर्णा । पिङ्गला = पिङ्गाक्षी । तदभावेऽरुणा = अव्यक्तरागा । तदभावे रोहिणी रक्तवर्णा, सापि अरक्ताक्षी ॥१२॥

[ गोरभिमन्त्रणं तदनुगमनं च ]

**"चिदसी"त्येनामभिमन्त्रयते (४) ॥१३॥**

---

(१) ओं एषा ते शुक्र तनूरेतद्वर्चस्तया सम्भव भ्राजं गच्छ ४।१७।

(२) ओं जूरसि धृता मनसा जुष्टा विष्णवे ।१७। तस्यास्ते सत्यसवसः प्रसवे तन्वो यन्त्रमशीय स्वाहा ४।१८।

(३) ओं शुक्रमसि चन्द्रमस्यमृतमसि वैश्वदेवमसि ४।१८।

(४) ओं चिदसि मनाऽसि धीरसि दक्षिणासि क्षत्रियासि यज्ञियास्यदितिरस्युभयतःशीर्ष्णी ४।१९। सा नः सुप्राची सुप्रतीच्येधि मित्रस्त्वां पदि बध्नीतां पूषाऽध्वनस्पात्विन्द्रायाध्यक्षाय । ।१९। अनु त्वा माता मन्यतामनु पिताऽनु भ्राता सगर्भ्योऽनु सखा सयूथ्यः । सा देवि देवमच्छेहीन्द्राय सोमᳪ रुद्रस्त्वा ऽऽवर्तयतु स्वस्ति सोमसखा पुनरेहि ४।२०।

**उदीचीं नीयमानामनुगच्छतो "वस्व्यसी"ति (१) ॥१४॥**

दक्षिणद्वारात् सोमक्रयार्थमुत्तरदेशं प्रति नीयमानामुदङ्मुखीं गामध्वर्युप्रतिप्रस्थाराववनुगच्छेताम्। पत्नी-यजमान-ब्रह्माणस्तूष्णीम् ॥१४॥

[ उत्तरतः प्रस्थितायाः गोः सप्तमपदनिक्षेपस्थाने अध्वर्य्वादीनामुपवेशनम् ]

**षट् पदान्यतीत्य सप्तमं पर्य्युपविशन्ति ॥१५॥**

नीयमाना सोमक्रयणी यत्र पदानि निक्षिपति तानि दक्षिणोत्तराणि गमयित्वा षट् पदान्यतीत्य सप्तमे पदनिक्षेपस्थाने अध्वर्यु-ब्रह्म-यजमान प्रतिप्रस्थातार उपविशेयुः। तत्र दक्षिणतो ब्रह्मयजमानौ, पश्चादध्वर्युः, उत्तरतः प्रतिप्रस्थातेति ॥१५॥

[ सप्तमे पदे हिरण्यनिधानपूर्वकं होमः ]

**हिरण्यमस्मिन्निधायाऽभिजुहो "त्यदित्यास्त्वे"ति (२) ॥१६॥**

अस्मिन् सप्तमे पदे हिरण्यं निधाय जुहुयादध्वर्युः ॥१६॥

[ स्फ्येन सप्तमस्य पदस्य परिलेखनम् ]

**स्फ्येन पदं त्रिः परिलिख "त्यस्मे रमस्वे"ति (३) ॥१७॥**

होमानन्तरमध्वर्युस्तत्पदक्षेपस्थानं त्रिः परिलिखति = परितो रेखां करोति। सकृन्मन्त्रेण द्विस्तूष्णीम् ॥१७॥

[ पदपांसूनां स्थाल्यां प्रक्षेपः ]

**समुद्धृत्य पदꣳ स्थाल्यामावपत्य"स्मे ते बन्धु"रिति (४) ॥१८॥**

हिरण्यमपसार्य निक्षेपस्थानीयान् पदपांसून् हस्तेन गृहीत्वा पांसून् स्थाल्यामावपेत् ॥१८॥

[ यजमानाय पदपांसुसमर्पणम् ]

**अपः स्थाने निषिच्य यजमानाय पदं प्रयच्छति "त्वे राय" इति(५) ॥१९॥**

उद्धृतस्य पदस्य स्थाने भूमावपो निषिच्याध्वर्युर्यजमानाय पदपांसून् प्रयच्छति ॥१९॥

[पदपांसुप्रतिग्रहः ]

**मे राय इति (६) यजमानः प्रतिगृह्णाति पदम् ॥२०॥**

[ आत्मालम्भः ]

**"मा वय" मित्यध्वर्युरात्मानꣳ सꣳस्पृशति (७) ॥२१॥**

---

(१) ओं वस्व्यस्यदितिरस्यादित्याऽसि रुद्राऽसि चन्द्राऽसि। बृहस्पतिष्ट्वा सुम्ने रम्णातु रुद्रो वसुभिरा चके ४।२१

(२) ओं अदित्यास्त्वा मूर्द्धन्ना जिघर्मि देवयजने पृथिव्याऽ इडायास्पदमसि घृतवत्स्वाहा ४।२२

(३) ओं अस्मे रमस्व ४।२२।

(४) ओं अस्मे ते बन्धुः ४।२२।

(५) ओं त्वे रायः सन्तु ४।२२।

(६) ओं मे रायः सन्तु ४।२२।

(७) ओं मा वयꣳ रायस्पोषेण वि यौष्म ४।२२।

[ गृहीत्वा पत्न्यै समर्पणम् ]

[ अध्वर्युणा यजमानहस्तात् स्थालीस्थान् पदपांसून् गृहीत्वा पत्न्यै समर्पणम् ]

**हृत्वा पत्न्यै पदं प्रयच्छति ॥२२॥**

यजमानहस्तात् स्थालीस्थं पदं गृहीत्वाऽध्वर्युः पत्न्यै प्रयच्छेत्। सा च सुगुप्तदेशे स्थापयेत् ॥२२॥

[ पत्न्या वाचनम् ]

**नेष्टा "तोत" (१) इत्येनां वाचयति ॥२३॥**

**सोमक्रयण्या च समीक्षमाणाꣳ "समख्य" इति ॥२४॥**

सोमक्रयण्या गवा समीक्षमाणां पत्नीं समख्य (२) इति मन्त्रं वाचयति नेष्टा ॥२४॥

[ अनामिकायां हिरण्यबन्धनम् ]

**प्रक्षाल्य पाणी हिरण्यं बध्नीतेऽनामिकायाम् ॥२५॥**

हस्तौ प्रक्षाल्य यत् क्रयार्थं हिरण्यं तदनामिकायां बध्नीयादध्वर्युः ॥२५॥

**आप्यायनाभिषवाꣳश्वदाभ्येषु च ॥२६॥**

वक्ष्यमाणे—(८।२।६) सोमाप्यायने, सोमाभिषवे, (६।४।१४) अंशुग्रहणे, (१२।५।६) अदाभ्यग्रहणे (१२।५।६) च अनामिकायां हिरण्यं बध्नीतेऽध्वर्युः। पाणिप्रक्षालनं च करोति। सोमस्य अंशुभिरभिवर्द्धनमाप्यायनम्। अभिषवः कुट्टनेन सोमलतातो रसनिःसारणम्। अंश्वदाभ्यसंज्ञकौ ग्रहविशेषौ ॥२६॥

इति सप्तमाध्याये षष्ठी कण्डिका ॥६॥

---

[ सोमोपहननादिवस्त्राहरणार्थमध्वर्योः प्रैषः ]

**प्रेष्यति च 'सोमोपनहनमाहर, सोमपर्याणहनमाहरो, ष्णीषमाहरेति ॥१॥**

चशब्दादध्वर्युरेव यजमानपुरुषं प्रेष्यति। सोम उपनह्यते बध्यते यस्मिन् तत्सोमोपनहनं वासः। अनसि स्थितस्य वस्त्रबद्धस्य सोमस्योपरि आच्छादनार्थं यत् प्रसार्यते तत्सोमपर्याणहनं वासः ॥१॥

[ वैकल्पिकः सोमनिवापकालः ]

**अत्र वा निवपनम् ॥२॥**

अस्मिन्वा अवसरे उपरवदेशे सोमनिवापः कर्त्तव्यः ॥२॥

[ सोमोपनहनस्य वाससः श्रेष्ठता ]

**शोभनꣳ सोमोपनहनम् ॥३॥**

तेषां वाससां मध्ये सोमोपनहनं वासः शोभनं श्रेष्ठतमं स्यात्। सौममित्यापस्तंबः (१०।२४।७) ॥३॥

---

(१) ओं तोतो रायः सन्तु ४।२२

(२) ओं समख्ये देव्या धिया सं दक्षिणयोरुचक्षसा। मा मऽ आयुः प्र मोषीर्मोऽ अहं तव वीरं विदेय तव देवि सन्दृशि ४।२३

[ उष्णीषाभावे तत्प्रतिनिधिः ]

**उष्णीषाभावे सोमपर्याणहनाद् द्व्यङ्गुलं त्र्यङ्गुलं वोष्णीषायावकृन्तति ॥४॥**

अवकृन्तति पाटयति ॥ ४ ॥

[ अध्वर्युयजमानयोरन्यतरेण सोमोपनहनस्य क्रयदेशं प्रति हरणम् । अन्ययोर्वाससोः प्रतिप्रस्थात्रा ]

**अध्वर्युर्यजमानो वा सोपनहनꣳ हरत्यन्य इतरे ॥५॥**

आहृतानां सोमोपनहनादीनां मध्ये सोमोपनहनं वासोऽध्वर्युर्यजमानो वा क्रयदेशं प्रति नयति । अन्यः = प्रतिप्रस्थाता इतरे = पर्याणहनोष्णीषे नयेत् ॥५॥

[ सोमं प्रति गच्छतो यजमानस्य वाचनम् ]

**सोमं गच्छ "न्त्येषत" इति वाचयति ॥ ६ ॥**

ब्रह्म-यजमानाध्वर्यु-प्रतिप्रस्थातारः सहैवोपरवदेशस्थम् सोमं गच्छन्ति । गच्छन्तं यजमानं मन्त्रं ( १ ) वाचयेदध्वर्युः ॥ ६ ॥

[ सोमालम्भः ]

**प्राङुपविश्या "स्वाकोऽसी" ति (२) सोममालभते ॥ ७ ॥**

सोमस्य पश्चादध्वर्युः, तदुत्तरतः प्रतिप्रस्थाता, दक्षिणेन ब्रह्मयजमानौ, तत्पश्चात्पत्नी चोपविश्य प्राङ्मुखोऽध्वर्युः सोममालभेत् ॥ ७ ॥

[ इतः परं सोमस्याखण्डनम् ]

**न विचिनोत्यत, स्तृणकाष्ठापासनमेके ॥ ८ ॥**

अतः परं सोमविक्रयी सोमं नावखण्डयेत् । एके सोममध्ये पतितानां तृणकाष्ठादीनां निरसनमत्रेच्छन्ति ॥ ८ ॥

[ सोमोपनहनस्यास्तरणम् ]

**सोमोपनहनं द्विगुणं चतुर्गुणं वा स्तृणाति प्राग्दशमुदग्वा ॥ ९ ॥**

सोमोपनहनं द्विगुणं चतुर्गुणं वा कृत्वा यथा तस्य दशा प्राची उदीची वा भवेत् तथा तत् चर्मणि स्तृणीयात् ॥ ९ ॥

[ सोममानम् ]

**तस्मिन्त्सोमं मिमीते दशकृत्वो "ऽभित्य" मिति (३) ॥ १० ॥**

सोमोपनहने वाससि दशकृत्वः सोमं प्रक्षिपेदध्वर्युः । दशसु मन्त्रः । तूष्णीमेकादशम् ॥१०॥

[ सोममानप्रकारः ]

**सर्वाभिः प्रथमम् ॥ ११ ॥**

प्रथमवारं सोमस्य प्रक्षेपः सर्वाभिरङ्गुलीभिः साङ्गुष्ठाभिः कार्यः ॥ ११ ॥

---

( १ ) ॐ एष ते गायत्रो भाग इति मे सोमाय ब्रूतात् ४।२९ ॐ एष ते त्रैष्टुभो भाग इति मे सो० ४।२४। ॐ एष ते जागतो भा० ४।२९। ॐ छन्दोनामानाꣳ साम्राज्यं गच्छेति मे सो० तू। ४।२४

( २ ) ॐ भास्वाकोऽसि शुक्रस्ते ग्रहो विचितस्त्वा वि चिन्वन्तु । ४।२४ ।

( ३ ) ॐ अभि त्यं देवꣳ सवितारमोण्योः कविक्रतुमर्चामि सत्यसवꣳ रत्नधामभि प्रियं मतिं कविम् । ऊर्ध्वा यस्यामतिर्भाऽ अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः ४।२५ ।

**अङ्गुष्ठप्रभृति चैकोत्सगम् ॥ १२ ॥**

द्वितीयादिप्रक्षेपेषु अङ्गुष्ठमारभ्य क्रमश एकैकामङ्गुलिमुत्सृजेत्। अर्थात् द्वितीयः प्रक्षेपोऽङ्गुष्ठवर्जिताभिश्चतसृभिरङ्गुलिभिः, तृतीयोऽङ्गुष्ठतर्जनीवर्जिताभिस्तिसृभिः, चतुर्थोऽनामिका-कनिष्ठाभ्यामिति ॥ १२ ॥

**द्विः कनिष्ठिकया ॥ १३ ॥**

पञ्चमः षष्ठश्च प्रक्षेपः केवलं कनिष्ठिकयैव कर्त्तव्यः ॥ १३ ॥

**एकोपचयं च ॥ १४ ॥**

सप्तमादिदशमान्तः प्रक्षेप एकैकस्या अङ्गुल्या उपचयं कृत्वा कर्त्तव्यः। अर्थात् सप्तमप्रक्षेपोऽनामिकोपचितया कनिष्ठिकया, अष्टमः कनिष्ठानामिकामध्यमाभिः, नवमः प्रदेशिन्यादिचतसृभिः, दशमः साङ्गुष्ठाभिः सर्वाभिरिति ॥ १४ ॥

**अञ्जलिना दशमम् ॥ १५ ॥**

दशमः प्रक्षेपोऽञ्जलिना कर्त्तव्यः । प्रसारितो हस्तः प्रसृतिः । प्रसृतिद्वयमञ्जलिः ॥१५॥

एवं प्राप्ते सिद्धान्तयति—

**अन्यद्वाऽध्यावापश्रुतेः ॥ १६ ॥**

वाऽवधारणे । दशमप्रक्षेपादन्यत् एकादशः प्रक्षेपोऽञ्जलिना कार्यो, न दशमः । कुतः? अध्यावापश्रुतेः । "एतया" (३।३।२।१३) इत्यादिना सर्वाभिरङ्गुलिभिः पृथक् पृथक् दशकृत्वः प्रक्षेपं विधाय ततोऽधिकस्यैव एकादशस्य प्रक्षेपस्य "समस्याञ्जलिनाऽध्यावपति" (श० ब्रा० ३।३।२।१६) इति विधानादित्यर्थः ॥ १६ ॥

[ सोमोपनहनवासस उष्णीषेण बन्धनम् ]

**अन्तान्त्सङ्गृह्योष्णीषेण बध्नाति "प्रजाभ्यस्त्वे"ति (१) ॥ १७ ॥**

अध्वर्युरास्तीर्णस्य प्रक्षिप्तसोमकस्य सोमोपनहनवाससोऽग्रभागानूर्ध्वं समुन्नीय हस्ते गृहीत्वा एकत्र सङ्कलय्योष्णीषेण बध्नीयात् ॥ १७ ॥

[ सोमोपनहनमध्ये अङ्गुल्या विवरकरणम् ]

**अङ्गुल्या मध्ये विवृणोति "प्रजास्त्वानु प्राणन्त्वि"ति (२) ॥१८॥**

बन्धनानन्तरं सोमोपनहनस्यान्तानां मध्येऽङ्गुल्या छिद्रं करोति वायुप्रवेशाय ॥ १८ ॥

**तं विक्रयिणे प्रयच्छति ॥ १९ ॥**

तं बद्धं सोमम् ॥ १९ ॥

इति सप्तमाध्याये सप्तमी कण्डिका ॥७॥

---

[ सोमविक्रयिणो हस्ते सोमसमर्पणम् ]

**पञ्चकृत्वः सोमं पणते ॥ १ ॥**

अध्वर्युः पञ्चवारं सोमं पणते । पणनं च न्यूनेन मूल्येन विक्रेतुः प्रार्थनम् ॥ १ ॥

---

(१) ॐ प्रजाभ्यस्त्वा बध्नामि ४।२५

(२) ॐ प्रजास्त्वाऽनु प्राणन्तु प्रजास्त्वमनु प्राणिहि ४।२५

क्रयप्रकारमाह—

**स आह 'सोमविक्रयिन् क्रय्यस्ते सोमो राजा' इति ॥ २ ॥**

**क्रय्य इत्याह सोमविक्रयी ॥ ३ ॥**

एवं पृष्टः सोमविक्रेता क्रय्य इति प्रत्याह ॥ ३ ॥

[ सोमक्रयार्थं विक्रेत्रा सह व्यवहारः ]

**तं वै ते क्रीणानीति ॥ ४ ॥**

अध्वर्युरनुज्ञां प्रार्थयेत् ॥ ४ ॥

**क्रीणीहीत्याह सोमविक्रयी ॥ ५ ॥**

**कलया ते क्रीणानीति ॥ ६ ॥**

अध्वर्युराह । कला तु गोः षोडशो भागः । गोः षोडशेन भागेनेत्यर्थः । कला जङ्घाया अधोभाग इति रुद्रदत्तः ( आप० श्रौ० १०।२५।४ ) ॥ ६ ॥

**भूयो वा अतः सोमो राजाऽर्हतीत्याह सोमविक्रयी ॥ ७ ॥**

अध्वर्युणा कलया मूल्येन सोमं प्रार्थितो विक्रयी "भूयो वा अत' इत्याद्यध्वर्युं प्रत्याह । अतो भवदुक्तकलातो मूल्यान्मम सोमो राजा अतिशयेन बहुमूल्यमर्हति ॥ ७ ॥

**''भूय एवातः सोमो राजार्हति महांस्त्वेव गोर्महिमेत्यध्वर्युर्गोर्वै प्रतिधुक् तस्यै श्रृतं, तस्यै शर, स्तस्यै मस्तु, तस्या आतञ्चनं, तस्यै नवनीतं, तस्यै घृतं, तस्या आमिक्षा, तस्यै वाजिनमिति । ८ ॥**

सोमविक्रयिणाऽध्वर्युंप्रति भूयो वा अत इत्येवमुक्ते सति अध्वर्युस्तम्प्राह भूय एव इत्यादि । सत्यं यत् मदुक्तान्मूल्यात्त्व सोमो राजा बहुतरमेव मूल्यमर्हति । परन्तु गोरपि महिमा महानेव । यतो गोः प्रतिधुगित्यादि । प्रतिधुक् धारोष्णं पयः । शरो दुग्धमण्डः ॥ ८ ॥

**भूय एवेत्यतःप्रभृति चतुरावर्त्तयति ॥ ९॥**

**एकैकेनान्ते पणते शफेन, पदा,ऽर्द्धेन, गवा ॥१०॥**

**ते क्रीणामीत्यन्ततः ॥११॥**

**प्रश्नान्ते प्रश्नान्ते ॥१२॥**

एवमुक्त्वाऽध्वर्युः पुनः शफेन पणते । एवं पदा, अर्धेन च पणते । तत्र सर्वत्राप्यन्ते ते क्रीणानीत्यनुषजते । शफेन ते क्रीणामि, पदा ते क्रीणामि, अर्धेन ते क्रीणामीति । सोमक्रयिणा च 'भूयो वा अत' इत्याद्युक्ते भूय एवेत्यादिकमध्वर्युः पठति । एवमेकैकस्य प्रश्नस्यान्ते उक्त्वा ततोऽन्त्यपणनं 'गवा ते क्रीणानि' इति कुर्यात् । एवं च भूयो वा इत्यस्य विक्रेत्रा वारचतुष्टयं पठनम् । तत्प्रश्नस्यान्ते भूय एवेत्यस्याध्वर्युणाऽपि वारचतुष्टयं पठनं गवा ते क्रीणानीत्यतः पूर्वमिति फलितम् । शफः खुरः । चतुर्थांशः पत् पादः । अर्द्धं तु स्पष्टम् । शफेन द्वितीयं पणनम्, पदा तृतीयम्, अर्द्धेन चतुर्थम्, गवा पञ्चममिति ॥ ९ ॥१०॥११॥१२॥

[ अन्त्यपणनानन्तरं सोमविक्रयिणा वक्तव्यो मन्त्रः ]

**क्रीतः सोमो राजेत्यन्ते वयांꣳसि प्रब्रूहीत्याह सोमविक्रयी ॥१३॥**

पञ्चकृत्वः पणमानः सोमविक्रयी 'क्रीतः सोमो राजा, वयांसि = अन्यान् पशून् प्रब्रूहि' इत्येवमध्वर्युं ब्रूयात् ॥१३॥

[ अध्वर्युपठनीयो मन्त्रः ]

**स आह 'चन्द्रं ते, वस्त्रं ते, छागा ते, धेनुस्ते, मिथुनौ ते गावौ, तिस्रस्तेऽन्या इति ॥१४॥**

चन्द्र हिरण्यम् । छागा अजा । धेनुः सवत्सा गौः । तिस्रो गावश्च । एतत्सर्वं ते ददामीत्यर्थः ॥१४॥

[ हिरण्यालम्भपूर्वकं वाचनम् ]

**"शुक्रं त्वे"ति (१) हिरण्यमालभ्य वाचयति ॥१५॥**

यजमानमध्वर्युः ॥१५॥

[ सोमविक्रयिणः प्रलोभनम् ]

**"सम्मे त" इति (२) सोमविक्रयिणꣳ हिरण्येनाभि कम्पयति ॥१६॥**

सोमविक्रयिहस्ते हिरण्यं दत्वा दत्वा स्वीकुर्वस्तं निराशं कुर्यात् ॥१६॥

[ यजमानसमीपे हिरण्यनिधानम् ]

**"अस्मे त" (३) इति यजमानसहितं निदधाति ॥१७॥**

यजमानसमीपे हिरण्यं स्थापयेत् ॥१७॥

[ सोमविक्रयिणा हिरण्यादानम् ]

**सोमविक्रय्येतदादत्ते ॥१८॥**

एतद्धिरण्यम् ॥१८॥

[ सोमक्रयसाधनीभूताया अजायाः स्पर्शपूर्वकं वाचनम् ]

**अजां प्रत्यङ्मुखीमालभ्य वाचयति "तपसस्तनू" रिति (४) ॥१९॥**

[ सोमविक्रयिणे सव्यहस्तेनाजां दत्वा दक्षिणहस्तेन स्वयं गृहीत्वाऽध्वर्यौ आगते सति यजमानस्य वैकल्पिकमुत्थानम् ]

**सव्येनाजां प्रयच्छ"न्मित्रो न" इति दक्षिणेन सोममादाया गत उत्तिष्ठति वा ॥२०॥**

सव्यहस्तेन सोमविक्रयिणे मित्रो न (५) इति अजां प्रयच्छन् दक्षिणेन सोममादाय ध्वर्यौ आगते सति यजमानः स्वासनादुत्तिष्ठति, न वेति विकल्पः ॥२०॥

( अपसारितवाससि यजमानस्योरौ सोमनिधानम् )

**दीक्षितोरौ दक्षिणे प्रत्युह्य वासो निदधाती "न्द्रस्योरु" मिति (६) ॥२१॥**

अध्वर्युर्दीक्षितस्य दक्षिणे ऊरौ तत्रस्थं वास अपसार्य सोमं निदध्यात् ॥२१॥

---

( १ ) ॐ शुक्रं त्वा शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेन ४।२५

( २ ) ॐ सम्मे ते गोः । ४।२६

( ३ ) ॐ अस्मे ते चन्द्राणि ४।२६

( ४ ) ॐ तपसस्तनूरसि प्रजापतेर्वर्णः परमेण पशुना क्रीयसे सहस्रपोषं पुषेयम् ४।२६

( ५ ) ॐ मित्रो नऽ एहि सुमित्रधः ४।२७

( ६ ) ॐ इन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तꣳ स्योनः स्योनम् ४।२७

[ यजमानस्य जपः ]

"स्वान भ्राजे"ति (१) जपति सोमविक्रयिणमीक्षमाणः ॥२२॥

यजमानः ॥२२॥

[ उष्णीषापाकरणम् ]

अपोर्णुते दीक्षितः शिरः ॥२३॥

यजमानः स्वं शिर उष्णीषापाकरणेनोद्घाटयेत् ॥२३

पत्नी च ॥२४॥

स्वकीयं शिर उद्घाटयेत् ॥२४॥

[ सोमविक्रयिणः पृष्ठे ताडनम् ]

हिरण्यꣳ सहसाऽऽच्छिद्य पृषता वरत्राकाण्डेनाघ्नन्ति वा ॥२५॥

सोमविक्रयिणः सकाशात् हठात् हिरण्यं गृहीत्वा चित्रेण वंशदण्डेन ('चर्ममयरज्जुकाण्डेन' इति सत्याषाढसूत्रे गोपीनाथः ७।३) सोमविक्रयिणं पृष्ठे ताडयेत् ॥२५॥

इति कात्यायनश्रौतसूत्रवृत्तौ सप्तमाध्याये अष्टमी कण्डिका ॥८॥

---

[ यजमानस्य वाचनम् ]

गृहीतसोमं "परि माऽग्ने" इति (२) वाचयति ॥ १ ॥

[ उत्तरे च कर्मणी यजमानकर्तृके ]

उत्तरे च ॥ २ ॥

उत्थानम्, अनः प्रति गमनं चेत्येते वक्ष्यमाणे द्वे कर्मणी च गृहीतसोमो यजमान एव कुर्यात् ॥ २ ॥

[ उत्थाने प्रकारविशेषः ]

"उदायुषे"त्युत्थानꣳ शीर्ष्णि सोमं कृत्वा पाणिमन्तर्द्धाय ॥ ३ ॥

यजमानः स्वशिरसि अधोमुखं स्वकीयं पाणिं निधाय पाण्यन्तर्हिते शिरसि सोमपोटलिकां निधाय उदायुषेति (३) मन्त्रेणोत्तिष्ठेत् ॥ ३ ॥

[ हविर्द्धानशकटं प्रति गमनम् ]

"प्रतिपन्था"मित्यनोऽभ्येति दक्षिणतस्तिष्ठच्छन्नꣳ, समङ्गि, धौतं, प्रउगाचोद्धृते फलके ॥ ४ ॥

यजमानः प्रतीति (४) मन्त्रेण सोमक्रयणदेशस्य दक्षिणतोऽवस्थितम्, आच्छादितम्, युगयोक्त्रानडुदादिभिः सर्वाङ्गैर्युक्तम्, प्रक्षालितं शकटमभिलक्ष्य तत्संमुखो गच्छेत्। प्रउगा-

---

(१) ॐ स्वान भ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते वः सोमक्रयणास्तान्रक्षध्वं मा वो दभन् ४।२७

(२) परि माऽग्ने दुश्चरिताद्बाधस्वा मा सु चरिते भज ४।२८

(३) ॐ उदायुषा स्वायुषोदस्थाममृताँ अनु ४।२८।

(४) ॐ प्रति पन्थामपद्महि स्वस्तिगामनेहसम्। येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु ४।२९।

दिति। शकटे प्रागपरायतः काष्ठविशेष ईषा, यत्र युगं बध्यते। तस्या ईषायाः पार्श्वद्वयेऽपि काष्ठद्वयं सङ्घटितं भवति। तयोः, ईषायाश्च योऽन्तरालदेशः स प्रउगसंज्ञकः। तस्मात् प्रउगात् ( शकटस्य मध्यभागात् ) उपरि काष्ठमयं फलकद्वयं सन्तर्दनीयम्। - तादृशमन इत्यर्थः॥४॥

[ शकटे कृष्णाजिनास्तरणं तत्र सोमनिधानं च ]

**कृष्णाजिनमस्मिन्नास्तृणा "त्यदित्यास्त्व" गिति (१) ॥ ५ ॥**

अस्मिन्ननसि ॥ ५ ॥

**तस्मिन्त्सोमं निदधा "त्यदित्यै सद" इति (२) ॥ ६ ॥**

तस्मिन् कृष्णाजिने ॥ ६ ॥

[ सोममालभ्य वाचनम् ]

**"अस्तभ्नाद् द्या" मिति (३) सोममालभ्य वाचयति ॥ ७ ॥**

[ सोमं वितत्यानसः पुरस्तात् कृष्णाजिनासञ्जनम् ]

**"वनेषु व्यन्तरिक्ष"मिति (४) सोमपर्याणहनेन परितत्य कृष्णाजिनं पुरस्तादासजति "सूर्यस्य चक्षु" रिति (५) ॥ ८ ॥**

सोमपर्याणहनेन वाससा बद्धं सोममत्यन्तं वेष्टयित्वा आसनार्थयोः कृष्णाजिनयोर्मध्ये एकं कृष्णाजिनं ध्वजस्थानीयं शकटस्य पूर्वभागे युगसमीपे उच्छ्रितदण्डेऽवलगयेत् ॥८॥

[ कृष्णाजिनस्यैकत्वे तस्य ग्रीवा अवकृत्यासञ्जनम् ]

**एकं चेद्ग्रीवा अवकृत्य ॥ ९ ॥**

आसनार्थमेकमेवं कृष्णाजिनं यदि स्यात्, तदा तस्य कृष्णाजिनस्य ग्रीवाः कण्ठं छित्वा शकटस्य पुरस्तादासजेत्। ग्रीवाशब्दो बहुवचनान्त एव प्रायशो वेदे ( १६।५६-५७ ) दृश्यते ॥ ९ ॥

[ अनसि अनडुहोर्योजनम् ]

**अनड्वाहौ युन "क्त्युस्रावेत" मिति युगप,त्तद्वचनत्वात् ॥ १० ॥**

अनसि युगपदनडुहौ योजयेत्। कुतः? तद्वचनत्वात्, उस्रावेतमिति ( ६ ) मन्त्रे द्विवचनश्रवणादित्यर्थः ॥ १० ॥

एवं प्राप्त आह—

**भेदे मन्त्रावृत्तिः सान्निपातितत्वात् ॥ ११ ॥**

भेदेन योजनं कर्त्तव्यं, न सह। कुतः? अनडुहः कण्ठे योक्त्रपरिणहनस्यैव योजन-

---

(१) ॐ अदित्यास्त्वगसि ४।३०

(२) ॐ अदित्यै सदऽ आसीद ४।३०

(३) ॐ अस्तभ्नाद् द्यां वृषभोऽ अन्तरिक्षममिमीत व्वरिमाणं पृथिव्याः। आसीदद्विश्वा भुवनानि सम्राड् विश्वेत्तानि व्वरुणस्य व्रतानि ।४।३०

(४) ॐ व्वनेषु व्यन्तरिक्षं ततान व्वाजमर्वत्सु पयऽ उस्रियासु। हृत्सु क्रतुं व्वरुणो व्विक्ष्वग्निं दिवि सूर्यमदधात्सोममद्रौ ४।३१

(५) ॐ सूर्यस्य चक्षुरा रोहाग्नेरक्ष्णः कनीनकम्। यत्रैतशेभिरीयसे भ्राजमानो व्विपश्चिता ४।३२।

(६) ॐ उस्रावेतं धूर्षाहौ युज्येथामनश्रूऽ अवीरहणौ ब्रह्मचोदनौ। स्वस्ति यजमानस्य गृहान् गच्छतम्। ४।३३

पदार्थत्वात्। तस्य दक्षिणेनैकेन पाणिना युगपत्कर्तुमशक्यत्वात्। भेदेन योजने क्रियमाणे मन्त्रस्यावृत्तिः कर्त्तव्या। कुतः? मन्त्रस्य सन्निपतितत्वात् = समवेतार्थत्वात्। द्विवचनमविवक्षितम्। प्रातिपदिकार्थस्य विवक्षितत्वात् ॥ ११ ॥

[ अनडुहोः पलाशशाखया चालनम् ]

**ईषान्तरे भूमिष्ठः सुब्रह्मण्यः पलाशशाखया प्राजति ॥ १२ ॥**

ईषान्तराले भूमौ तिष्ठन् सुब्रह्मण्यः पलाशशाखया अनड्वाहौ गमनाय प्रेरयेत् ॥१२॥

**पश्चात्परीत्याऽपालम्बं गृहीत्वा सोमाय क्रीतायानुवाचयति, पर्युह्यमाणायेति वा ॥ १३ ॥**

अध्वर्युरनसः पश्चाद्भागे आगत्य तत्र पश्चाद्भागे रज्जुरेका बद्धा वर्त्तते। सा च यदा अनो निम्नदेशेषु शीघ्रं गच्छति तदा तदनो धारयितुमुपयुज्यते। तस्या अपालम्बमिति नाम। अप = पश्चाद्भागे आलम्बनमिति तदर्थः। तद् गृहीत्वा होतारं वाचयेत् ॥ १३ ॥

[ सोमान्वारम्भः ]

**दीक्षितश्चान्वारभते ॥ १४ ॥**

शकटस्थं सोमम् ॥ १४ ॥

[ प्रदक्षिणं शालायां गमनम् ]

**त्रिरुक्तायां प्राङ् यात्वा दक्षिणाऽऽवर्त्य शालां गच्छन्ति ॥ १५ ॥**

होत्रा प्रथमायामृचि त्रिरुक्तायां सत्यां कियन्तमध्वानं गत्वा अनः प्रदक्षिणमावृत्य शालां गच्छेयुः ॥ १५ ॥

**"भद्रो म" इति (१) वाचयति ॥ १६ ॥**

गमनाभिप्रवृत्तं यजमानम् ॥ १६ ॥

[ सुब्रह्मण्याह्वानम् ]

**सुब्रह्मण्यां चाह्वयति सुब्रह्मण्यो३ं सुब्रह्मण्यो३मिति त्रिरुक्त्वा सकृन्निगदं यावदहे सुत्या तथाऽऽह ॥ १७ ॥**

अध्वर्युः सुब्रह्मण्योमिति (२) त्रिरुक्त्वा इन्द्र आगच्छेति सकृन्निगदं ब्रूयात्। यावत्सङ्ख्याकेषु अहःसु व्यतीतेषु सुत्यादिनं भवति, तावन्ति सङ्ख्याय ब्रूयादित्यर्थः। यथा— त्रिषु दिनेषु व्यतीतेषु चतुर्थे दिवसे यदि सुत्या, तदा चतुरहे सुत्यामागच्छेत्यादि ॥ १७ ॥

[ अग्नीषोमीयस्य पशोरानयनम् ]

**शालां पूर्वेण प्रतिप्रस्थाताऽग्नीषोमीयं पशुमादाय तिष्ठति कृष्णसारङ्गं मेध्यमभावे लोहितसारङ्गम् ॥ १८ ॥**

कृष्णवर्णेन सारङ्गं = कर्बुरम्। मेध्यं = मेदुरं मत्तम् ॥ १८ ॥

---

(१) ॐ भद्रो मेऽसि प्रच्यवस्व भुवस्पते विश्वान्यभि धामानि। मा त्वा परिपरिणो विदन्मा त्वा परिपन्थिनो विदन्मा त्वा वृकाऽ अघायवो विदन्। श्येनो भूत्वा परा पत यजमानस्य गृहान् गच्छ तन्नौ संस्कृतम् ४।३४

(२) ॐ सुब्रह्मण्यो३ं सुब्रह्मण्यो३ं सुब्रह्मण्यो३म् इन्द्रागच्छ हरि व आगच्छ मेधातिथिर्मेष वृषणश्वस्य मेने। गौरावस्कन्दिन्नहल्यायै जार कौशिक ब्राह्मण गौतम ब्रुवाण। त्र्यहे सुत्यामागच्छ मघवन्देवा ब्रह्माण आ गच्छताऽऽगच्छताऽऽगच्छत।

"नमो मित्रस्ये"त्येनमालभ्य वाचयति (१) ॥ १६ ॥

एनं पशुम् ॥ १६ ॥

चरति पशौ वाचनमेव ॥ २० ॥

पशौ वनं गच्छति सति केवलं वाचनमेव कार्यम्, नालम्भः ॥ २० ॥

आहवनीयाचोल्मुकमाहृत्यैके ॥ २१ ॥

एके आहवनीयादुल्मुकमानीयानन्तरं वाचनमिच्छन्ति । उल्मुकाहरणं च पशुसन्निधावेव, नार्वागमनपक्षे ॥ २१ ॥

[ शालासमीपे शकटस्योपस्थापनम् ]

समीपेऽन उपस्थाप्योत्तम्भनेनोपस्तभ्नाति "वरुणस्योत्तम्भन" मिति (२) ॥२२॥

शालायाः समीपे शकटमुपस्थाप्य उत्तम्भनकाष्ठेन निरुणद्धि ॥ २२ ॥

[ शम्ययोर्निष्काशनम् ]

शम्ये चोद्बृहति "वरुणस्य स्कम्भसर्जनी स्थ" इति (३) ॥ २३ ॥

शम्ये = युगकीलके ऊर्ध्वं निष्काशयेत् ॥ २३ ॥

[ आसन्द्यानयनम् ]

औदुम्बरीमासन्दीं नाभिदघ्नामरत्निमात्राङ्गीमूतामाहरन्ति चत्वारः ॥२४॥

अध्वर्यु—प्रतिप्रस्थातृ—नेष्टृन्नेतारो ( आप० १०।२६।७ ) नाभिप्रमाणपादयुताम्, अरत्निमात्राङ्गीम्, मुञ्जरज्ज्वा व्यूताम्, औदुम्बरीमासन्दीं = मञ्चिकामानयेयुः ॥ २४ ॥

[ आसन्द्यभिमर्शनं, तत्र कृष्णाजिनास्तरणं, सोमनिधानं च ]

अभिमृशत्येनां "वरुणस्य ऋतसदन्यसी"ति (४) ॥ २५ ॥

हस्तेन स्पृशेत् ॥ २५ ॥

कृष्णाजिनमस्यामास्तृणाति "वरुणस्य ऋतसदनमसी"ति (५) ॥ २६ ॥

तस्मिन्त्सोमं निदधाति "वरुणस्य ऋतसदनमासीदे" ति (६) ॥२७॥

तस्मिन् कृष्णाजिने ॥ २७ ॥

[आसन्दीस्थसोमस्य शालायां प्रवेशनम्]

शालां प्रवेशयन्ति दीक्षितसञ्चरेण ॥ २८ ॥

आसन्दीस्थं सोमं पूर्वोक्तेन यजमानसञ्चरेण ( ७।३।१० ) शालायां नयेयुः ॥ २८ ॥

---

(१) ॐ नमो मित्रस्य व्वरुणस्य चक्षसे महो देवाय तदृतᳪ सपर्यत । दूरेदृशे देवजाताय केतवे दिवस्पुत्राय सूर्याय शᳪसत ४।३५

(२) ॐ व्वरुणस्योत्तम्भनमसि ४।३६

(३) ॐ व्वरुणस्य स्कम्भसर्जनी स्थः ४।३६

(४) ॐ व्वरुणस्यऽ ऋतसन्यसि ४।३६

(५) ॐ व्वरुणस्यऽ ऋतसदनमसि ४।३६

(६) ॐ व्वरुणस्यऽ ऋतसदनमासीद ४।३६

[ यजमानस्य वाचनम् ]

"या त" इति वाचयति (१) ॥ २६ ॥

[ आहवनीयस्य दक्षिणतः सोमसहितासन्दीस्थापनम् ]

आहवनीयं दक्षिणेन स्थापयन्ति ॥ ३० ॥

आसन्दीम् ॥ ३० ॥

[ सोमसमीपे जलपात्रनिधानम् ]

उदपात्रमुप निनयन्त्येके ॥ ३१ ॥

एके शाखिन उदपूर्णं पात्रं सोमसमीपे स्थापयेदित्याहुः।

अत्र धुर्यद्वययुक्तमनः सुब्रह्मण्याय तुभ्यमहं सं प्रददे इति दानमिच्छन्ति। एकं वा धुर्यं दद्यात्॥ ३१ ॥

( इति सोमक्रयः )।

इति कात्यायनश्रौतसूत्रे विद्याधरशर्मकृतायां सरलवृत्तौ सप्तमोऽध्यायः ॥ ७ ॥

---

(१) ॐ या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम्। गयस्फानः प्रतरणः सुवीरोऽवीरहा प्र चरा सोम दुर्यान् ४।३७

# अष्टमोऽध्यायः

[ आतिथ्येष्टिः इडान्ता ]

**आतिथ्यं निर्वपति वैष्णवं नवकपालम् ॥ १ ॥**

नवकपालपुरोडाशद्रव्यकां विष्णुदेवताकामातिथ्यसंज्ञकामिष्टिं कुर्यात् ॥ १ ॥

[ आतिथ्येष्टिः, तत्र सत्वरं हविर्निर्वापः ]

**पत्न्यन्वारब्धस्तूर्णमेकविमुक्ते वा निर्वपे"दग्नेस्तनू"रिति पञ्चकृत्वः प्रतिमन्त्रम् ॥२॥**

अध्वर्युर्यजमानपत्न्या कृतान्वारब्धः सन् सत्वरं जलपानमूत्रोत्सर्गादिकं कर्माऽप्य-कृत्वैव आतिथ्येष्टिं कुर्यात्। अथवा शकटे युक्तयोर्द्वयोरनडुहोर्मध्ये एकस्मिन् दक्षिणे अनडुहि युगबन्धनादिना मुक्ते, सव्ये चाविमुक्ते एवातिथ्येष्टिं कुर्यात्। अस्मिन्पक्षे एकमनडुाहं विमुच्याध्वर्युः शालां प्रविश्य हविर्निर्वापान्तामातिथ्येष्टिं कृत्वा तदनन्तरं द्वितीयानडुद्विमोकादि सोमप्रवेशान्तं कुर्यात्। तत्र अग्नेस्तनूरित्यादिभिः (१) पञ्चभिर्मन्त्रैः प्रतिमन्त्रं पञ्चकृत्वो हवि-र्गृह्णीयात्। अत्र निर्वापशब्दो हविषः पृथक्करणविधायकः। पूर्वसूत्रे कर्मविधायकः ॥ २ ॥

[ अग्नेस्तनूरसीत्युपदिष्टमन्त्रेणैव हविर्निर्वापः, न प्राकृतेन। उभाभ्यामपीति कर्कसिद्धान्तः ]

आतिथ्येष्टेर्दर्शपूर्णमासविकृतित्वेन 'देवस्य त्वा' (१।१०) इति सावित्रस्य निर्वापमन्त्र-स्यातिदेशेन प्राप्तौ सत्यां तन्निवृत्तिमाह—

**सावित्रनिवृत्तिः, श्रुति-विरोधाभ्याम् ॥ ३ ॥**

अत्र सवितृपदघटितस्य मन्त्रस्य निवृत्तिः। कुतः? श्रुत्या मन्त्रान्तरस्य अग्नेस्तनू-रित्यादेर्विहितत्वात्, विरोधाच्च। सावित्रमन्त्रे हि द्रव्याभिधायकस्त्वाशब्दोऽस्ति। अत्रापि च मन्त्रे तादृशस्त्वाशब्दोऽस्ति। यदि सावित्रमन्त्रोऽतिदिश्येत तर्हि एकार्थबोधकं त्वाशब्द-द्वयं विरुध्येत। अतो विरोधादत्रानतिदेश इति।

कर्काचार्यास्तु "स वा अन्येनैव ततो यजुषा गृह्णीयाद्येनो चान्यानि हवींषि" (श. ब्रा. ३।४।१।७) इति श्रुत्या अतिदिष्टोपदिष्टयोर्मन्त्रयोः समुच्चयविधानात् उभयोरपि समुच्चय एव युक्तः। वचनेनैव समुच्चयबोधनादेव च त्वाशब्दद्वयोच्चारणमपि न दोषाय। दृश्यत एव हि त्वाशब्दसमुच्चयः 'श्येनाय त्वा सोमभृते विष्णवे त्वा' (४।१) इत्यादौ। अतो मन्त्रयोरुभयोः समुच्चय एवेत्याहुः। चरममन्त्रयोर्न सावित्रजुष्टशब्दौ। "त्रिषु सावित्रं जुष्टं चानुषजति" ( सत्या० ७।२ ) इति कल्पान्तरात् ॥ ३ ॥

( आतिथ्येष्टौ अग्न्यन्वाधानादीनां निवृत्तिः )

**अग्न्यन्वाधान-व्रतोपायना-ऽऽरण्यभोजन-दान-ब्रह्मवरणादीनि दीक्ष-णीयाप्रभृति प्रागुदवसानीयायाः सोमे कृतत्वात् ॥ ४ ॥**

अग्न्यन्वाधानादीनि कर्माणि सोमयागे = तदङ्गभूतेष्विष्टिपश्वादिषु उदवसानीयेष्टेः प्राग्भाविषु न कर्त्तव्यानि। कुतः? कृतत्वात्। दीक्षणीयायां कृतैरेवैतैरुपकारसिद्धेः। एवं च

---

( १ ) ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नेस्तनूरसि विष्णवे त्वा जुष्टं गृह्णामि ५।१। ॐ देवस्य त्वा स० भ्यांॐ सोमस्य तनूरसि विष्णवे त्वा जुष्टं गृ० मि ५।१। ओं देवस्यत्वा स० भ्यामतिथेरातिथ्यमसि वि० त्वा जुष्टं गृ० ५।१। ॐ श्येनाय त्वा सोमभृते विष्णवे त्वा गृ० मि ५।१। ओं अग्नये त्वा रायस्पोषदे विष्णवे त्वा गृ० मि ५।१।

कृतत्वादित्ययं दीक्षणीयादावसम्भवात् प्रायणीयादिषु उदवसानीयायाः प्राग्भाविषु पदार्थेषु वेदितव्यः। तथा च "प्रायणीयाप्रभृतिष्ववभृथान्तेषु इष्टिपशुबन्धेषु व्रतोपायनं, जागरणं, पत्नीसन्नहनम्, आरण्यभोजनं च निवर्त्तेत" इति स्पष्टमाह—सत्याषाढः ( ७।१ )। तत्र सर्वत्र हि तत्तदपूर्वाणां प्रधानापूर्वोत्पत्त्यनन्तरमेव नाशात् तावत्पर्यन्तं स्थितैस्तत्तदपूर्वैरेव मध्ये क्रियमाणेषु प्रायणीयादिषु उपकारसिद्धेर्न प्रायणीयाद्यर्थमेतेषां पुनरनुष्ठानमिति भावः। उदवसानीयायां ( अवसानेष्ट्यां ) तु सर्वं कर्त्तव्यमेव। ततः पूर्वमेव दीक्षाया विमुक्तत्वात् तत्संबन्धिनामग्न्यन्वाधादीनां, तज्जन्यापूर्वाणां च निवृत्तत्वात् ॥ ४ ॥

**पत्नीसन्नहनं च सयोक्त्रायाः ॥ ५ ॥**

पूर्वं दीक्षणीयायां पत्नीसन्नहनं प्रति मेखलायोक्त्रयोर्विकल्प उक्तः ( ७।४।५-६ )। तत्र यदि सा योक्त्रेण दीक्षिता भवेत्तदा तस्याः पत्नीसन्नहनमपि प्रायणीयातो निवर्त्तते ॥ ५॥

[ यजमानभागस्यानिवृत्तिः ]

**यजमानभागश्च भक्षप्रतिषेधात् ॥ ६ ॥**

"व्रतं ह्येवास्यातोऽशनं भवति" ( श० ब्रा० ३।१।२।१ ) इति श्रुत्या द्रव्यान्तरभक्षणस्य अर्थतः प्रतिषिद्धत्वात् "पयो व्रतं ब्राह्मणस्य" (तै० आ० २।८) इत्यादिना पय आदेर्विधानाच्च तत्र तत्र प्रायणीयात इडादौ यजमानभागश्च निवर्त्तते ॥ ६ ॥

एवं प्राप्ते सिद्धान्तयति—

**न, कर्मगुणत्वात् ॥ ७ ॥**

नेदं भवितुमर्हति यजमानभागो निवर्त्तेत इति। कुतः ? कर्मगुणत्वात्। द्रव्यप्रतिपत्ति द्वारा कर्माङ्गत्वात्। अभक्षिते पुरोडाशादौ हविषि कर्मणो वैगुण्यापातात्। पय एवेति श्रुत्या रागप्राप्ताशनद्रव्ये एव नियमविधानात् ॥ ७ ॥

( उपसर्जनी-मदन्तीनामधिश्रयणम् )

**उपसर्जनीरधिश्रयति मदन्तीश्च व्रतवत् ॥ ८ ॥**

उपसर्जन्यधिश्रयणानन्तरं गार्हपत्ये दीक्षितस्य मदन्तीः, दक्षिणाग्नौ पत्नीमदन्तीरधिश्रयेत्। पत्नीयजमानयोः कृतोश्च दृष्टादृष्टकार्यार्थास्तप्ता आपो मदन्त्य इत्युच्यन्ते। यत्स्पर्शोऽपि शुद्धिकर, एतादृश आपो मदन्त्य इति गोपीनाथः ( सत्या० ७।३ ) ॥ ८ ॥

[ मदन्तीभिरेव मुष्टिविसर्गपर्यन्तमाचमनादिकम् ]

**आमुष्टिविसर्गादुदकार्थस्ततः ॥ ९ ॥**

"अङ्गुलीर्विसृजते" ( ८।७।१७ ) इति मुष्टिविसर्गं वक्ष्यति। ततः पूर्वं यावन्ति कार्याणि पत्नी-यजमानयोः, तानि सर्वाणि तत एव कार्याणि ॥ ९ ॥

[ परिध्यादौ विशेषः ]

**कार्ष्मर्यमयाः परिधय, आश्वबालः प्रस्तर, ऐक्षव्यौ विधृती, बर्हिश्च ॥ १० ॥**

परिधयः पूर्वमुक्ताः (२।८।१)। ते च कार्ष्मर्यमयाः। कार्ष्मर्यः श्रीपर्णी। प्रस्तरः कुशमुष्टिविशेषः पूर्वमुक्तः ( २।७।१८ )। स काशमयः कार्यः। "स वालधौ गृहीतस्तान् बालान्मुक्त्वा विवेश ह। ते बालाः काशतां प्राप्ताः कार्योऽतः प्रस्तरस्तु तैः" इति वाक्यशेषात् अश्वस्य बाला अश्वबालाः। तन्मयः प्रस्तर इति लोकप्रसिद्ध्यपेक्षया वाक्यशेषबोधितोऽर्थ

एव गृह्यते । विधृती पूर्वमुक्ते ( २।८।५ ) । ते इक्षुत्वगात्मिके, इक्षुपत्रात्मिके वा कार्ये । बर्हिश्च प्राकृतमेव कौशं कार्यम् । बर्हिश्च चतुष्टयमध्ये गणनाय पुनरुक्तम् ॥ १० ॥

## एतदेवाग्नीषोमीयोपसत्स्वपि चतुष्टयम् ॥ ११ ॥

यदेतत् आतिथ्यायामासादनप्रोक्षणादिना संस्कृतमुपयुक्तं च कार्ष्मर्यमयपरिध्यादि चतुष्टयं, तत् अग्नीषोमीयपशौ उपसत्सु च विनियोज्यम् । उपसदो वक्ष्यन्ते, ( ८।२।३१ ) अग्नीषोमीयपशुश्च ( ८।७।२३ ) ॥ ११ ॥

[ अग्निमन्थनम् ]

## आसाद्याग्निमन्थनमाहोमात्करोति ॥ १२ ॥

'प्रियेण धाम्ना' ( २।८।१६ ) इति हवींषि वेद्यामासाद्य अरणिमन्थनं होमान्तं वैश्वदेवपर्ववत् ( ५।१।२१ ) कुर्यात् ॥ १२ ॥

[ आतिथ्येष्टौ पूर्वेडान्तता ]

## इडान्तं भवति ॥ १३ ॥

इदमातिथ्यं हविरिडान्तं भवति। अतः खण्डेष्टिरियम्। तेन तदुपरितनान्यङ्गानि निवर्त्तन्ते । इडान्तता च पूर्वया इडया इत्युक्तम (७।५।२०-२१) ॥ १३ ॥

[ व्रतप्रदानपात्रे ध्रौवाज्यग्रहणम् ]

## ध्रौवं व्रतप्रदाने गृह्णा "त्यापतय" इति (१) ॥ १४ ॥

येन पात्रेण यजमानाय व्रतं प्रदीयते तद् व्रतप्रदानम् । तस्मिन् ध्रुवास्थमाज्यं गृह्णीयात्सशेषमध्वर्युः सकृत् ॥ १४ ॥

## द्विश्च स्थाल्याः स्रुवेण "तनूनप्त्रे शाक्वराये" ति "शक्वन ओजिष्ठाये"ति ॥१५॥

स्थालीतोऽपि व्रतप्रदाने पात्रे द्विर्वारमाज्यं गृह्णीयान्मन्त्रद्वयेन ॥ १५ ॥

## गृह्णामीति सर्वत्र साकाङ्क्षत्वात् ॥ १६ ॥

मन्त्रेषु सर्वत्रापि साकाङ्क्षत्वाद् गृह्णामीत्यस्यानुषङ्गः कर्त्तव्यः ॥ १६ ॥

## पूर्वशेषौ वोत्तरौ ॥ १७ ॥

वाऽवधारणे । तनूनप्त्र इत्यादि न पृथङ् मन्त्रद्वयम् , किन्तु पूर्वस्यैव मन्त्रस्य शेषभूताविमौ । कुतः ? पूर्वमन्त्रेणैव सह अनयोरपि मन्त्रयोरेकवाक्यतासम्भवे वाक्यभेदस्यान्याय्यत्वात् । अनेकविशेषणविशिष्टस्य वायोरेव अनेन मन्त्रेण स्तुतेरवगमात् । "यो वा अयं पवते" ( श० ब्रा० ३।४।२।१० ) इति श्रुत्या च एकस्यैव वायोः स्तुतेरवगमाच्च ॥ १७ ॥

## प्रतिपुरुषं च ग्रहणमाज्यानि गृह्णाना इति श्रुतेः ॥ १८ ॥

सर्वैर्ब्रह्मादिभिर्वरणक्रमेणाऽऽज्यग्रहणं कर्त्तव्यम् । कुतः ? "आज्यानि गृह्णाना" ( श० ब्रा० ३।४।२।६ ) इति ग्रहणकर्तृषु बहुत्वश्रवणात् । सर्वेषामाज्यग्रहणं मन्त्रेणैव ॥ १८ ॥

## तानूनप्त्रमेतत् ॥ १९ ॥

एतदाज्यं तानूनप्त्रसंज्ञकं भवति । संज्ञा चेयं वैदिकी ॥ १९ ॥

---

( १ ) ॐ आपतये त्वा परिपतये गृह्णामि तनूनप्त्रे शाक्वराय शक्वनऽ ओजिष्ठाय । ५।५ ।

[ तानूनप्त्राभिमर्शनम् ]

**दक्षिणस्यां वेदिश्रोणौ निधायाऽवमृशन्त्यृत्विजो यजमानश्चाऽ "नाधृष्ट"मिति (१) ॥ २० ॥**

तानूनप्त्रमाज्यं दक्षिणस्यां वेदिश्रोणौ स्थापयित्वा हिरण्यहस्ता वरणक्रमेण ऋत्विजो, यजमानश्च युगपदभि मृशेयुः, न क्रमशः ॥ २० ॥

[ तानूनप्त्रस्पर्शिनां परस्परमद्रोहः ]

**अद्रोहस्तेभ्यो, न सतानूनप्त्रिणे द्रोग्धव्यमिति श्रुतेः ॥ २१ ॥**

यैः सह तानूनप्त्रमाज्यं स्पृष्टं तैः परस्परं द्रोहोऽपकारो न कार्यः । कुतः ? श्रुतेः । ( ३।४।२।८ ) समानं साधारणं तानूनप्त्रमस्य विद्यते इति स तानूनप्त्री, तस्मै ॥ २१ ॥

इति अष्टमाध्याये प्रथमा कण्डिका ॥ १ ॥

---

[ तानूनप्त्रस्य सुगुप्ते देशे निधानम् ]

**पल्यङ्ग्य निदधात्यपिधायामृन्मयेन ॥ १ ॥**

अभिमर्शनानन्तरमध्वर्युस्तानूनप्त्रमाज्यं चालयित्वा मृन्मयभिन्नेन पात्रेण अपिधाय सुगुप्ते देशे स्थापयति ॥ १ ॥

[ दीक्षिताय व्रतमिश्रस्य तानूनप्त्रस्य दानम् ]

तानूनप्त्रस्योपयोगमाह—

**अपराह्णे व्रतमिश्रं दीक्षिताय प्रयच्छति ॥ २ ॥**

एतत्तानूनप्त्रमाज्यं व्रतमिश्रं कृत्वा अर्थात् आज्यस्योपरि व्रतदुग्धं निनीय अपराह्णे दीक्षिताय व्रतभक्षणकाले समर्पयेत् ॥ २ ॥

[ सत्रे गृहपतय एव दानम् ]

**बहुषु गृहपतये ॥ ३ ॥**

सत्रे बहुषु दीक्षितेषु सत्सु गृहपतये एव व्रतमिश्रं तानूनप्त्रं प्रयच्छेन्नान्येभ्यः ॥ ३ ॥

( अथावान्तरदीक्षा )

[ मुष्टिमेखलयोर्दृढीकरणम् ]

**"अग्ने व्रतपा" इत्याहवनीये समिधमादाय मदन्तीरुपस्पृश्य गाढतरं मुष्टि मेखलं कुरुते ॥ ४ ॥**

दीक्षितः अग्ने व्रतपा ( २ ) इति मन्त्रेण आहवनीये समिधमाधाय स्वमदन्तीरुपस्पृश्य

---

( १ ) ॐ अनाधृष्टमस्यनाधृष्यं देवानामोजोऽ नभि शस्त्यभिशस्तिपाऽ अनभिशस्तेन्यमञ्जसा सत्यमुप गेषᳬ स्विते मा धाः ५।५ ।

( २ ) ॐ अग्ने व्रतपास्त्वे व्रतपा या तव तनूरियᳪं० सा मयि यो मम तनूरेषा सा त्वयि । सह नौ व्रतपते व्रतान्यनु मे दीक्षां दीक्षापतिर्मन्यतामनु तपस्तपस्पतिः ५।६

मुष्टिमेखलं दृढतरं कुरुते । एतेन पूर्वं किञ्चित् शैथिल्येन मुष्टौ मेखलायां च बन्धनं कर्त्तव्यमित्यव गम्यते । मुष्टी च मेखला चेति मुष्टिमेखलम् । अवान्तरदीक्षेयमुच्यते ॥ ४ ॥

**पत्नी च गार्हपत्ये तूष्णीम् ॥ ५ ॥**

पत्नी च तूष्णीं गार्हपत्ये समिधमादाय स्वमदन्तीरुपस्पृश्य मुष्टिमेखलं गाढतरं कुरुते ॥ ५ ॥

( इत्यवान्तरदीक्षा )

[ सोमाप्यायनम् ]

**मदन्तीरुपस्पृश्य यजमानषष्ठाः सोममाप्याययन्त्य"ठं०शुरठं०शु" रिति (१) ॥ ६ ॥**

ब्रह्मोद्गातृहोत्रध्वर्य्वाग्नीध्राः, पञ्चर्त्विजः, षष्ठो यजमान इत्येते यजमानषष्ठाः मदन्ती रुपस्पृश्य सोमं स्पृशेयुर्हिरण्यहस्ताः। पञ्चमः प्रतिप्रस्थातेति सम्प्रदायः । अत्र सोमाप्यायनं सोमस्य हस्तेन स्पर्शमात्रम्, न तु सोमान्तरस्य तत्र प्रक्षेप इति कर्कः ॥ ६ ॥

[ आज्यालम्भोत्तरं सोमालम्भे, सोमालम्भोत्तरं वाऽऽज्यस्पर्शे चिकीर्षिते मध्ये उदकोपस्पर्शः ]

**आज्यमालभ्योपस्पृशेदपः सोममालिप्स्यमानस्तथा विपर्यस्य ॥ ७ ॥**

तानूनप्त्राज्यस्पर्शानन्तरं सोमस्पर्शं चिकीर्षुरध्वर्युरुदकं स्पृष्ट्वा सोमं स्पृशेत्, तत आप्यायनं कुर्यात् । तथा सोमं स्पृष्ट्वा आज्यस्पर्शं चिकीर्षन्नपि अप उपस्पृशेत् ॥७॥

[ सोमपरिचरणम् ]

**प्रत्येत्य प्रस्तरे निन्हुवत उत्तानहस्ता दक्षिणोत्ताना वे"ष्टा राय" इति ( २ ) ॥ ८ ॥**

आहवनीयाद्दक्षिणस्यां दिशि सोमः स्थापितोऽस्ति । तस्य सोमस्य समीपे आहवनीयं पूर्वेण गत्वा सोमाप्यायनं कृतम् । ततः प्रत्येत्य तेनैव मार्गेण प्रत्यागत्य सर्वे ब्रह्मादयः षडपि उत्तानहस्ता दक्षिणोत्ताना वा प्रस्तरे सोमं परिचरन्ति । प्रस्तरस्योपरि उभावपि पाणी उत्तानौ कुर्वते। दक्षिणो वोत्तानः। सव्यो नीच एव। निह्नवश्च प्रस्तरे पाण्योः करणम्। तत्रस्थैरेव प्रस्तरे निह्नवो न कार्य इत्येतदर्थं प्रत्यागमनविधानम् ॥ ८ ॥

[ तानूनप्त्रग्रहणादौ कालविकल्पः ]

**व्यूहनपरिध्यञ्जने कृत्वैके ॥ ९ ॥**

जुहूपभृतोर्व्यूहनं, परिधीनामञ्जनं च। तच्चेहातिदेशेनागतम् । तदुभयं कृत्वा एके शाखिनः तानूनप्त्रग्रहणादि कुर्वन्ति । अन्ये तु निह्नवानन्तरं व्यूहनपरिध्यञ्जने कुर्वन्ति । अस्या इष्टेरिडान्तत्वेऽपि संस्कारत्वात् सर्वेषां प्रतिपत्तिकर्मणामत्र प्रवृत्तिर्भवत्येव ॥ ९ ॥

---

( १ ) ॐ अठं०शुरठं०शुस्ते देव सोमाप्यायतामिन्द्रायैकधनविदे । आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्व । आ प्याययास्मान्त्सखीन्त्सन्या मेधया स्वस्ति ते देव सोम सुत्यामशीय ५।७

( २ ) ॐ एष्टा रायः प्रेषे भगाय ऋतमृतवादिभ्यो नमो द्यावापृथिवीभ्याम् ५।७

[ अग्नीधं प्रति अध्वर्योः प्रैषः ]

## समुल्लुप्य प्रस्तरमकृत्वा परिधींश्चादायाहाग्नीन्मदन्त्यापा इति ॥१०॥

प्रस्तरं गृहीत्वा जुह्वादिषु अकृत्वा च, ततः सर्वान्परिधीन् चकाराद्विधृती च हस्तेनादाय "अग्नीन्मदन्त्यापा" इति अग्नीधं प्रति ब्रूयात्। हे अग्नीत् आपो मदन्ति तथा भवन्ति उत नेति प्रश्नः ॥१०॥

## मदन्तीत्यग्नीत् ॥११॥

"मदन्त्याप" इत्याग्नीध्रः प्रत्याह ॥११॥

[ प्रस्तरादीनामग्नीधे समर्पणम् ]

## ताभिरेहीति ब्रुवन्नध्यध्याहवनीयꣳ हृत्वाऽभ्युच्याग्नीधे प्रयच्छति निधानाय ॥१२॥

'ताभिरेहि' इति अद्भिः सह अग्नीधं कथयन्नध्वर्युः प्रस्तरादित्रिकमाहवनीयस्योपरिष्टात्समीपेनैवानीय अग्नीधा अनीताभिर्मदन्तीभिरभ्युद्य सुगुप्तदेशे स्थापनार्थमग्नीधे प्रयच्छेत्। ताभिर्मदन्तीभिः सह त्वं मत्समीपे आगच्छेति वाक्यार्थः ॥१२॥

( इत्यातिथ्येष्टिः )

[ सुब्रह्मण्याप्रैषः ]

## सुब्रह्मण्यां च प्रेष्यति ॥१३॥

सुब्रह्मण्यसंज्ञकमृत्विजं प्रेष्यति, 'सुब्रह्मण्य सुब्रह्मण्यामाह्वय' इति। चकारादातिथ्याशेषसमाप्तिं च करोति। अत्रातिथ्याशेषं परिसमाप्यैव सुब्रह्मण्याह्वानं कर्त्तव्यम्। तस्या आगन्तुकत्वात्। 'आगन्तुकानामन्तेऽभिनिवेश' इति न्यायात् ॥१३॥

[ प्रवर्ग्योपसत्कालः ]

## प्रवर्ग्योपसदावतः ॥१४॥

सुब्रह्मण्याह्वानानन्तरं प्रवर्ग्योपसदौ क्रमेण भवतः। प्रवर्ग्यमुपरिष्टाद् षड्विंशेऽध्याये वक्ष्यति। उपसदिति वक्ष्यमाणाया इष्टेः संज्ञा ॥१४॥

[ प्रथमप्रयोगे उपसन्मात्रता ]

## उपसदेव वाऽप्रवर्ग्ये ॥१५॥

'न प्रथमयज्ञे' ( का० श्रौ० २६।७।५३ ) इति प्रथमसोमयागे प्रवर्ग्यस्य निषेधात् अप्रवर्ग्यशब्देन प्रथमप्रयोगोऽभिधीयते। तत्र उपसदिष्टिरेव कार्या, न प्रवर्ग्यः। अथवा प्रवर्ग्योऽपि कार्यः। वाशब्देन विकल्पाभिधानात्प्रवर्ग्यतदभावयोः प्रथमयज्ञे विकल्पः। "उपसदा चरिष्यन् प्रवर्ग्येण चरति" इति शास्त्रात्प्रवर्ग्यकरणपक्षे अत्र प्रवर्ग्यानुष्ठानम्, तत उपसदिष्टिः। अयं च प्रवर्ग्यः पूर्वाह्णेऽपराह्णे च प्रत्युपसदं कार्यः ॥१५॥

[ वाचस्पतिप्रैषप्रभृत्युपसद आरम्भः ]

## प्रणीताद्युपसत् ॥१६॥

प्रणीताशब्देन तदादिभूतो वाचस्पतिप्रैषो लक्ष्यते। स आदिर्यस्य तत् प्रणीतादि। सामान्ये नपुंसकम्। उपसदिष्टिर्वाचस्पतिप्रैषमारभ्य भवतीत्यर्थः ॥१६॥

[ हविष्कृदाह्वानानन्तरमदृष्टार्थं दृषदुपलाहननम् ]

**हविष्कृतमाहूयानाहननमपेषणे, तीक्ष्णार्थत्वात् ॥१७॥**

प्रकृतौ हविष्कृदाह्वानानन्तरं दृषदुपलयोः कुक्कुटोऽसीति मन्त्रेण यदाहननं क्रियते, तत् अपेषणे कर्मणि विकृतौ न कर्त्तव्यम् । कुतः ? तीक्ष्णार्थत्वात् । दृषदुपलयोस्तीक्ष्णीकरणार्थमिदमाहननं क्रियते । एवं च यत्र पेषणं नास्ति, तत्र तीक्ष्णीकरणस्याप्यभावात् तदर्थमाहननमपि निवर्त्तते ॥१७॥

एवं प्राप्ते सिद्धान्तयति—

**स्याद्वा, धर्ममात्रत्वात् ॥१८॥**

वाशब्दः पक्षव्यावृत्तौ । अपेषणेऽप्याहननं भवत्येव । कुतः ? आहननस्य धर्ममात्रत्वात् । नेदमाहननं दृषदुपलयोस्तीक्ष्णीकरणार्थम् । किन्तु केवलमदृष्टार्थम् । तस्य चात्रापि सत्वात् तदर्थमाहननं कर्त्तव्यमेव ॥१८॥

किञ्च—

**श्रुतेश्च ॥१९॥**

श्रुतेरपि आहननस्यादृष्टार्थतैवावगम्यते । असुरसपलहननार्थं दृषदुपलयोराहननं, न तीक्ष्णीकरणार्थम् । "असुरघ्नी" ( १।१।४।१३ ) इति श्रुतौ तथैव दृष्टत्वात् ॥१९॥

**परिस्तरण-पात्रसंसादन-प्रोक्षणाज्यनिर्वपणाधिश्रयणानि कृत्वा स्फ्यादि करोति ॥२०॥**

[ स्तंबयजुर्हरणस्थाने बर्हिषोऽवयवस्य हरणम् ]

**बर्हिषः प्रच्छेदं हरति ॥२१॥**

स्तम्बयजुर्हरणं पूर्वमुक्तम् (२।६।१८-१७)। तत्र अध्वर्युः वेद्याः पूर्वमेवास्तृतत्वात् स्तीर्णादेव बर्हिषः किञ्चिदादाय तत्प्रच्छिद्य हरेत्, न तु पुरीषम् । तस्याभावात् ॥२१॥

[ 'प्रोक्षणीरासादय' (२।६।१९) इति प्रैषे मदन्तीशब्दस्यापि प्रयोगः ]

**मदन्तीरिति वा प्रेष्यति ॥२२॥**

प्रोक्षणीर्मदन्तीश्चासादयेति प्रैष इति सम्प्रदायपक्षः । कर्कस्तु मदन्तीरासादयेध्मं बर्हिरुपसादयेत्येवं वा, प्रोक्षणीरासादयेति वा प्रेष्येत् इत्याह ॥२२॥

[ इध्मादौ विशेषः ]

**मात्रावदिध्माबर्हिः ॥२३॥**

इध्माबर्हिषोर्या मात्रा उपसद्ब्राह्मणे श्रुता, सैव ग्राह्या । एवं च सामिधेन्यर्थं नव काष्ठानि, स्पृश्यास्पृश्ये चेति एकादश काष्ठानि । बर्हिश्चैकवृत्स्तरणपर्याप्तमिति ॥२३॥

**स्रुवतृतीयाः स्रुचः संमार्ष्टि ॥२४॥**

एका जुहूः, द्वितीयोपभृत, तृतीयः स्रुवः । एवं स्रुवतृतीयाः स्रुचः संमार्ष्टि ॥२४॥

**अष्टगृहीतं जुह्वां, चतुरुपभृति ॥२५॥**

अष्टगृहीतमाज्यं जुह्वाम्, उपभृति च चतुर्गृह्णीयात् । अत्र जुहूपभृतोराज्यग्रहणं न प्रयाजानुयाजानुष्ठानार्थम् । तेषामत्राभावात् । किन्तु प्रधानहोमार्थमेव ॥२५॥

**यथाप्रकृति वा ॥२६॥**

प्रकृतिवदेव वा आज्यं गृह्णीयात् । चतुर्गृहीतं जुह्वामष्टगृहीतमुपभृति ॥२६॥

[ स्तरणे विशेषः ]

एकवृत्स्तरणम् ॥२७॥

एकवारमेवात्र स्तरणं भवेत, न त्रिवृत् ॥२७॥

[ ध्रुवाकार्ये आज्यस्थाली ]

आज्यस्थाली ध्रुवार्थे ॥२८॥

आज्यस्थाली ध्रुवाकार्ये भवेत्। "मूलं ध्रुवायाम्" ( ३।६।६ ) इत्येतत्प्रस्तरमूल-रूपाञ्जनरूपं ध्रुवाकार्यमाज्यस्थाल्यां कार्यमित्यर्थः ॥२८॥

( आश्रावणानन्तरं होतृवरणम् )

स्रुवाघारमाघार्य संमृष्ट आश्राव्य सीद होतरित्येव ब्रूयात् ॥२९॥

स्रुवेण पूर्वाघारमाघार्य अग्निसम्मार्गे कृते आश्राव्य "अग्निर्देवो दैव्यो होता" ( ३।२।१६) इति मन्त्रस्य स्थाने "सीद होतः" इत्येतावदेव ब्रूयात्, नतु "अग्निर्होता" (३।२।१६) इत्यादिना वरणादि ॥२९॥

[ प्रधानयागः ]

प्रसृतोऽतिक्रामन्नग्नयेऽनुवाचयति ॥३०॥

"अग्निर्होता वेतु" (३।२।१६) इति मन्त्रेण होत्रा अनुज्ञातोऽध्वर्युः स्रुचावादाय यजतिदेशं प्रति अतिक्रमणं कुर्वन् "अग्नयेऽनुब्रूहि" इति वाचयति ॥३०॥

अर्द्धं हुत्वा सोमाय, विष्णवे समानीय ॥३१॥

जुह्वामष्टगृहीताज्यग्रहणपक्षे तस्यार्द्धमाज्यमग्नये हुत्वा अपरमर्द्धं सोमाय जुहुयात्। अत्र अग्नि-सोम-विष्णवः प्रधानदेवताः, न त्वग्नीषोमावाज्यभागदेवतेति भ्रमितव्यम्। यथाऽऽह-सत्याषाढः "अग्निः, सोमो, विष्णुर्देवताः" (७.४) इति। औपभृतमाज्यं जुह्वां समानीय विष्णवे जुहुयात् ॥३१॥

[ सोमाप्यायनादिकमातिथ्यावदेव ]

सादयित्वा स्रुचौ सोमाप्यायनाद्यासुब्रह्मण्याप्रैषात् ॥३२॥

स्रुचौ सादयित्वा सोमाप्यायनादारभ्य सुब्रह्मण्याप्रैषान्तमातिथ्यावत्कुर्यात् ॥३२॥

[ उपसद्धोमः ]

अतिदिष्टमध्ये एव विशेष उच्यते—

अकृत्वा प्रस्तरमुपसदं जुहोति स्रुवेण "या त" इत्ययःशयामन्वारब्धे ॥३३॥

जुहूपभृदाज्यस्थालीषु प्रस्तरमकृत्वा परिध्यादानात्पूर्वं स्रुवेणोपभृत्संज्ञकं होमं कुर्यात्, या ते अग्नेऽयःशयामिति (१) मन्त्रेण अन्वारब्धे यजमाने (२) ॥३३॥

---

(१) ॐ या तेऽअग्नेऽयःशया तनूर्वर्षिष्ठा गह्वरेष्ठा। उग्रं वचोऽ अपावधीत्त्वेषं वचोऽ अपावधी-त्स्वाहा ५।८

(२) अत्र प्राकृतस्यैव स्रौवाघारस्य अतिदेशतः पूर्वं प्रवृत्तिमाश्रित्य विधानबलात् कर्मेदमुपसदाख्यं यावदुक्तमपूर्वमित्यवगम्यते। अतो गृहमेधीयेष्टिवत् यावदुक्तमेवानुष्ठानं, न प्राकृतानामनुयाजानुयाजादीनामत्र प्राप्तिः। एतज्ज्ञापयितुमेव अत्र परिस्तरणाद्युपादानमित्यवगन्तव्यम्। एवं च उत्तराघाराऽऽज्यभाग-प्रयाजा-नुयाजादीनामत्रानुष्ठानम्। स्त्र्यादानं तु अप्राप्तमपि अत्रैव विधीयते। पर्यग्निकरणं चाविहितमपि द्रव्यसंस्कारत्वात्प्राप्नोत्येव। एवमाघारे द्रव्यस्यापि आक्षेपात्प्राप्तिः।

द्विरेकया चरति ॥३४॥

एकया प्रथमयोपसदा सायं प्रातश्च चरेत् । ज्योतिष्टोमे उपसत्त्रयं विहितं त्रिषु दिनेषु । तत्र प्रथमामुपसदं प्रथमदिने सायं प्रातश्च आवृत्त्या द्विरनुतिष्ठेदिति भावः । एकैकामुपसदं द्विरभ्यसेदित्यर्थः । प्रतिदिनं द्वे द्वे उपसदौ भवत इति भावः ॥३४॥

सुसायं॰ सुपूर्वाह्णे च ॥ ३५ ॥

तयोर्द्वयोः प्रयोगयोर्मध्ये पूर्वाह्णे प्रथमः प्रयोगोऽपराह्णे द्वितीयः ॥ ३५ ॥

[ द्वितीयतृतीये उपसदौ ]

एवमितरे अन्वहं॰ रजःशयां॰ हरिशयां च ॥ ३६ ॥

इतरे द्वितीयतृतीये उपसदौ एवमेवान्वहं द्वितीयतृतीयदिनयोः कर्त्तव्ये । तत्र रजःशया, (१) हरिशया (२) इति मन्त्राभ्यां क्रमेण होमः । अयःशयादिपदोपलक्षिता उपसत् अयःशयेत्याद्युच्यते । द्वितीयतृतीययोरपि दिनयोर्द्वे द्वे उपसदौ । तत्रापि द्विरेकयेत्येतदस्त्येव । ततश्च षडुपसदो भवन्ति ॥ ३६ ॥

( इत्युपसदिष्टिः )

( इति द्वितीयमहः )

[ ज्योतिष्टोमे तिस्र उपसदः ]

एकाहस्युपसत्कः ॥ ३७ ॥

एकदिनसाध्यसुत्याकः सोमयाग एकाहः । तस्योपसत्त्रयं भवति ॥ ३७ ॥

[ अहीने द्वादशोपसदः ]

द्वादश वा ॥ ३८ ॥

अथवा द्वादशोपसदो भवन्तीत्यर्थः । प्रक्रान्ते एव एकाहे पुनरेकाहग्रहणम् एकाहस्युपसत्क एवेति नियमार्थम् । तेनात्र पठितमपि द्वादशोपसत्कत्वं वाक्यादहीने उत्कृष्यते । तथा च शाखान्तरे । "तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य" इति ॥ ३८ ॥

इति कात्यायनश्रौतसूत्रवृत्तौ द्वितीया कण्डिका ॥२॥

[ प्रथमोपसदि व्रतदुहो दोहनम् ]

त्रिस्तनं प्रथमायां दोहयति ॥ १ ॥

प्रथमदिने व्रतदुहो गोः त्रिभ्य एव स्तनेभ्यो व्रतं = पयो दुह्यात् ॥ १ ॥

[ द्वितीयतृतीययोरुपसदोर्व्रतदुहो दोहनम् ]

एकापचयेनोत्तरयोः ॥ २ ॥

उत्तरयोर्द्वयोरुपसदोरेकमेकं स्तनं न्यूनीकुर्यात्, द्वितीयायां द्विस्तनम्, तृतीयायामेक स्तनमित्यर्थः ॥ २ ॥

(१) ॐ या तेऽअग्ने रजःशया तनूर्व॰ । उग्रं व्व॰ । स्वाहा ५।८

(२) ॐ या तेऽअग्ने हरिशया॰ । उग्रं व्व॰ स्वाहा ५।८

[ चयनभिन्ने क्रतौ पूर्वोक्तस्य दोहनकल्पस्य विपर्यासो वा ]

**विपर्यस्य वाऽनग्निचित्ये ॥ ३ ॥**

अग्निचयनरहिते क्रतौ विपर्यासेन वा व्रतं दोहयेत । प्रथमायामेकस्तनं, द्वितीयायां द्विस्तनं, तृतीयायां त्रिस्तनमिति ॥ ३ ॥

[ उपसत्प्रवृद्धौ दोहनस्य समशो विभागः ]

ज्योतिष्टोमे सन्ति उपसदां बहवः पक्षाः । यथा—तिस्र उपसदः, षडुपदः, द्वादशोपसदः इत्यादि । तत्र त्र्युपसत्पक्षे व्रतदोहनमुक्तम् । तासां प्रवृद्धौ कथं दोहनमिति संशये— आह—

**एवं प्रवृद्धौ समं विभजेत् ॥ ४ ॥**

समं स्तनं विभज्य दोहयेत् । अर्थात् षडुपसत्पक्षे प्रथमयोर्द्वयोरुपसदोरेकं स्तनम् । द्वितीययोर्द्वौ, तृतीययोस्त्रय इत्यादि । अत्र विभागान्तरस्य अश्रुतत्वादेव "समं स्यादश्रुतत्वात्" ( पू० मी० १० । ३ । ) इति न्यायेन समशो विभागः कार्यः ॥ ४ ॥

[ उपसदामावृत्तौ विशेषः ]

यत्र उपसदां प्रवृद्धिस्तत्र आवृत्याऽनुष्ठाने कर्त्तव्ये दण्डकलितवदावृत्या वृद्धिः ? उत स्वस्थानवृद्धिः ? । क्षेत्रमानार्थं गृहीतेन पञ्चषहस्तादिप्रमापकेन दण्डेन यथा क्षेत्रं मीयते तद्वत् त्रित्वसङ्ख्याविशिष्टानामुपसदां सकृदनुष्ठानं कृत्वा पुनस्तिसृणामेकावृत्तिरिति यत्, सा दण्डकलितवदावृत्तिः । एकामेवोपसदं यावदपेक्षितमावृत्य पुनर्द्वितीयस्या आवृत्तिः स्वस्थान विवृद्धिः । अत्र च किं कर्त्तव्यमिति संशये सिद्धान्तयति—

**स्वस्थानविवृद्धिः ॥ ५ ॥**

द्वादशाहादौ उपसत्प्रवृद्धौ स्वस्थानस्थितानामुपसदां वृद्धिः कार्या । कुतः । तदानीमेव मन्त्राणां क्रम अनुगृहीतो भवति । यदि दण्डकलितवदावृत्या क्रमेण त्रिषु दिनेषु तिस्र उपसदः कृत्वा चतुर्थेऽहनि पुनः प्रथमा क्रियते तदा मन्त्रक्रमो बाधितो भवति । हरिशयां कृत्वा पुनरयःशयाकरणात् । तस्मात् स्वस्थानविवृद्धिरेव कार्या, न दण्डकलितवदावृत्तिः । तेन आद्यासु चतसृषूपसत्सु अयःशया । द्वितीयभागे रजःशया । तृतीयभागे हरिशयाऽनुष्ठानम् ॥ ५ ॥

( अथ तृतीयदिनकृत्यम )

[ महावेदिमानम् ]

**औपवसथ्यात्पूर्वेऽहनि पौर्वाह्णिक्या प्रचर्य वेदिं मिमीते ॥ ६ ॥**

यस्मिन् दिने अग्नीषोमीयपशुरनुष्ठीयते तदौपवसथ्यमहः । तच्च चतुर्थं दिनमेकदिनदीक्षापक्षे त्र्युपसत्पक्षे । ततः पूर्वस्मिन्दिने पौर्वाह्णिक्योपसदा प्रचर्य महावेदिं मिमीतेऽध्वर्युः (१) ।

१ आदौ यागयोग्यां भूमिं निश्चित्य तत्र पश्चिमभागे द्वादशभिर्दशभिर्वा अरत्निभिः प्रमितं चतुरस्रं मण्डपमनुदग्द्वारं प्राग्वंशं पञ्चहस्तमितैश्चतुर्भिः स्तम्भैर्युतं सर्वतः उपरि च समाच्छादितं निर्मिमीते । उपरि दक्षिणोत्तरं तृणवल्लिकादिनिधानम् । अयं मण्डपः प्राचीनवंशशब्देन विमितशब्देन च व्यपदिश्यते । प्राचीनः = प्रागग्रो वंशो मध्यवलो यस्येति । अरत्निद्वयविस्ताराणि द्वाराणि सर्वत्र । विमितस्य पूर्वस्मादन्ताद् द्व्यरत्निव्यवहिते देशे शङ्कुर्देयः, स आहवनीयमध्यः । आहवनीयस्थानमायामतो विस्तारतश्च हस्तमितम् । तस्मात्पश्चात् ससारत्निव्यवहिते देशे शङ्कुर्देयः, स गार्हपत्यमध्यः । तत्र सार्द्धत्रयोदशाङ्गुलमितरज्ज्वा वृत्तं कार्यं, स गार्हपत्यः । चतुरङ्गुलविस्तारा द्वादशाङ्गुलोत्सेधा मेखलाः सर्वत्र । आहवनीयमध्यशङ्कोरारभ्य गार्हपत्यमध्यं यावद्वर्त्तमानस्य भूभागस्य ससारत्निपरिमितत्वात् ससारत्नि परिमितां रज्जुं गृहीत्वा

एकादश्यां दीक्षा । द्वादश्यां प्रथमोपसत् । त्रयोदश्यां द्वितीयोपसत् । तदेव पूर्वमहः । चतुर्दश्यां तृतीयोपसत्, अग्नीषोमीयः पशुश्च । पूर्णिमायां सुत्येति ॥ ६ ॥

वेदेः स्थानमाह—

**पूर्वार्द्ध्यात्स्तम्भात्पुरस्तात् त्रिषु प्रक्रमेषु शङ्कुं निहन्ति सोऽन्तःपात्यः ॥ ७ ॥**

शालायाः पूर्वद्वारस्थितात् स्तम्भात् प्राग्भागे पदद्वयात्मकं प्रक्रमत्रयं परित्यज्य शङ्कुं निहन्यात् । स च शङ्कुरन्तःपात्यसंज्ञकः स्यात् ॥ ७ ॥

**तस्मात्पुरस्तात्षट्त्रिꣳशति ॥ ८ ॥**

षट्त्रिंशतीति सप्तम्येकवचनम् । तस्माच्छङ्कोः पूर्वस्यां दिशि षट्त्रिंशत्प्रक्रमानतीत्य तत्र शङ्कुं निहन्ति ॥ ८ ॥

**दक्षिणोत्तरौ च पञ्चदशसु पञ्चदशसु ॥९॥**

तस्मादन्तःपात्याद्दक्षिणस्यां दिशि, उत्तरस्यां च पञ्चदशसु पञ्चदशसु प्रक्रमेषु एकैकं शङ्कुं निहन्ति, ते श्रोणी ॥ ९ ॥

**अर्धसप्तदशेषु वा ॥ १० ॥**

अथवा सार्द्धेषु षोडशसु प्रक्रमेषु शङ्कुं निहन्यात् ॥ १० ॥

**पूर्वार्द्ध्याच्च द्वादशसु द्वादशसु ॥ ११ ॥**

अन्तःपात्याच्छङ्कोः षट्त्रिंशत्प्रक्रमेषु यः शङ्कुर्निखातः स पूर्वार्द्ध्यः । तस्मात् शङ्कोर्द्वादशसु प्रक्रमेषु दक्षिणतो, द्वादशसूत्तरतश्च एकैकं शङ्कुं निहन्यात्, तावंसौ ॥ ११ ॥

**पृष्ठ्यामायम्य स्फ्यादि करोति खादिरेणाच्छादनात् ॥ १२ ॥**

वेदिमध्ये अन्तःपात्यशङ्कुमारभ्य पूर्वार्द्ध्यशङ्कुपर्यन्तमृज्व्वी रेखा क्रियते सा वेदिपृष्ठभवत्वात् पृष्ठ्या इत्युच्यते । तां स्फ्यादिना कृत्वा स्फ्यादानमारभ्य "छन्ना वसति" (५।४।१) इत्येतदन्तं वरुणप्रघासवत् खादिरेण स्फ्येन कुर्यात् । अद्यत्वे तु एकाङ्गुलोच्चा एकाङ्गुलविस्तीर्णा पृष्ठ्या मृदा निर्मीयते ॥ १२ ॥

---

तदीयसप्तमभागेन अरत्न्यात्मकेन संयोज्य, अर्थादष्टहस्तां रज्जुं गृहीत्वा तस्या अन्तयोः पाशौ कृत्वा, मध्ये च तृतीये तृतीये भागे चिन्हं कृत्वा एकं पाशं गार्हपत्यमध्यशङ्कौ आसज्य द्वितीयपाशमाहनीयमध्यशङ्कौ आसञ्जयेत् । रज्जुमध्यवर्तिनोर्द्वयोश्चिन्हयोः पश्चिमस्थाने रज्जुं गृहीत्वा दक्षिणत आकर्षयेत्, यत्र तच्चिन्हं पतति तत्र तच्चिन्हं कृत्वा तस्मात् स्थानादुत्तरतः सार्द्धनवाङ्गुलव्यवहिते देशे शङ्कुर्देयः । शङ्कुस्थानं केन्द्रत्वेन परिकल्प्य यवाधिकोनविंशत्यङ्गुलमितरज्ज्वा वृत्तं कार्यम् । वृत्तमध्ये केन्द्रसंलग्ना परिधिपूर्वभागमादाय परिधिपश्चिमं यावत् सरलरेखा कार्या । रेखात उत्तरभागस्य त्यागः कार्यः । वृत्तस्य दक्षिणार्द्धं दक्षिणाग्निस्थानम् । पूर्वोक्तयोश्चिन्हयोः पूर्वचिन्हस्थाने रज्जुं गृहीत्वा उत्तरत आकर्षणे यत्र चिन्हं पतति स उत्करमध्यः । तत्र त्र्यङ्गुलेन भ्रमणं कार्यम्, एकाङ्गुलो गर्तश्च कार्यः । आहवनीयमध्यशङ्कोः पश्चात् त्र्यरत्निव्यवहिते देशे शङ्कुर्देयः, तस्माद्दक्षिणत उत्तरतश्च द्व्यरत्निव्यवहिते देशे शङ्कू देयौ, ते श्रोणी । आहवनीयपूर्वशङ्कोर्दक्षिणत उत्तरतश्च सार्द्धारत्नि-सार्द्धारत्निव्यवहिते देशे शङ्कू देयौ, तावंसौ । चतुर्षु कोणस्थशङ्कुषु सूत्रार्पणाद्विषमचतुरस्रं भवति । वेदेर्दक्षिणकोणमारभ्य दक्षिणपार्श्वे द्वात्रिंशदङ्गुले शङ्कुर्देयः स सङ्ग्रहमध्यः । तत्र एकोनविंशत्यङ्गुलमितकर्कटेन वेदिमध्ये अर्द्धवृत्तं कार्यम्, स सङ्ग्रहः । एवमुत्तरतोऽपि सङ्ग्रहः कार्यः । त्र्यङ्गुलखाता वेदिः । अखातौ सङ्ग्रहौ मतौ । गार्हपत्यस्योत्तरेऽवकाशं विहाय गार्हपत्यवत्सभ्यायतनं कर्तव्यम् । एवमाहनीयस्योत्तरे आवसथ्यायतनं गार्हपत्यवत् । अयमेव प्राकृतिको विहारः । विशेषस्तु गार्हपत्यमध्यशङ्कोरुदक् सार्धद्व्यरत्निव्यवहिते देशे शङ्कुर्देयः, स खरस्य मध्यः । तत्र चतुर्विंशत्यङ्गुलमितं द्व्यङ्गुलोत्सेधं चतुरस्रं मृदा कुर्यात्, स खरः इत्युच्यते । एवमेवाहवनीयस्योत्तरतो द्वितीयः खरः

[ स्तम्बयजुर्हरणदेशः ]

**उपरवदेशात्स्तम्बयजुर्हरति ॥ १३ ॥**

दक्षिणहविर्द्धानमण्डपमध्ये दक्षिणस्यानसोऽध उपरवदेशः ( ८।४।२६ )। तस्मात् स्तम्बयजुःसंज्ञकान् पांसूनपसारयेत् ॥ १३ ॥

---

कर्त्तव्यः। विमितस्य पश्चादुत्तरतश्च पञ्चारत्निपरिमितं परिवृतद्वयं कर्त्तव्यम्। तत्रैकं पत्नीशाला, अपरं दीक्षास्नानस्थानम, घर्मपात्रपाकस्थानं च। परिवृतद्वयेऽपि उत्तरे द्वारं कार्यम्। विमितपूर्वद्वारमध्यशङ्कोः सकाशात् पूर्वस्यां दिशि द्विपदात्मकप्रक्रमत्रयव्यवहिते देशे शङ्कुर्देयः, सोऽन्तःपात्यः। ( सोमे द्विपदप्रक्रमेणैव मानम्। पदं तु दशाङ्गुलं, द्वादशाङ्गुलं, पञ्चदशाङ्गुलं वेति। ) दशाङ्गुलपदपक्षे सदोमानमरत्निनैव कार्यम्। अन्तःपात्याद्दक्षिणत उत्तरतश्च पञ्चदशसु पञ्चदशसु प्रक्रमेषु शङ्कू देयौ, ते महावेदेः श्रोणी। अन्तःपात्यशङ्कोः सकाशात्पूर्वस्यां दिशि द्विपदात्मकषट्त्रिंशत्प्रक्रमव्यवहिते देशे शङ्कुर्देयः, तस्माद्दक्षिणत उत्तरतश्च द्वादशसु द्वादशसु प्रक्रमेषु शङ्कू देयौ, तावंसौ। अन्तःपात्यशङ्कोः पूर्वस्यां दिशि द्विपदात्मकसार्धप्रक्रमव्यवहिते देशे शङ्कुर्देयः, स सदसः पश्चिमप्रान्तः। तस्माद्दक्षिणत उत्तरतश्च नवारत्निव्यवहिते देशे शङ्कू देयौ, ते सदसः श्रोणी। सदसः पश्चिमशङ्कोः पुरस्तात् नवारत्निनवारत्निव्यवहिते देशे शङ्कुर्देयः, स सदसः पूर्वप्रान्तः। तस्माद्दक्षिणत उत्तरतश्च नवारत्निव्यवहिते देशे शङ्कू देयौ, तावंसौ सदसः। सदसः पश्चिमे पूर्वे च द्वारे कार्ये। अन्तःपात्यात्पूर्वस्यां दिशि षट्सु प्रक्रमेषु शङ्कुर्देयः, तस्मात् दक्षिणतः पञ्चारत्निव्यवहिते देशे शङ्कुर्देयः, तदौदुम्बरीस्थानम्। षट्प्रक्रमान्ते निहितशङ्कोः पूर्वस्यां दिशि एकविंशत्यङ्गुले शङ्कुर्देयः, तद्दक्षिणत एकोनत्रिंशदधिकशताङ्गुलेषु शङ्कुर्देयः, स प्रशास्तृधिष्ण्यमध्यः। एवं पृष्ठ्यात उत्तरतो नवाङ्गुले शङ्कुर्देयः, स होतुर्धिष्ण्यमध्यः। ( वेदिमध्ये वर्त्तमाना प्राचीरेखा पृष्ठ्या) तस्मादुत्तरतः षट्त्रिंशदङ्गुलान्तरालाश्चत्वारः शङ्कवो निखेयाः। ते ब्राह्मणाच्छंसि-पोतृ-नेष्टृ-च्छावाकधिष्ण्यानां मध्याः। शङ्कुषु अष्टादशाङ्गुलानि चतुरस्राणि चतुरङ्गुलोच्चानि स्थण्डिलानि मृदा कर्तव्यानि, तानि धिष्ण्याः उच्यन्ते। यूपावटदेशात्पश्चिमतः पदं त्यक्त्वा शङ्कुर्देयः, तस्मात्पश्चिमतः पञ्चारत्निव्यवहिते देशे शङ्कुर्देयः, तस्माद्दक्षिणत उत्तरतश्च सार्द्धद्व्यरत्नि सार्द्धद्व्यरत्निव्यवहिते देशे शङ्कू देयौ, ते उत्तरवेदेः श्रोणी। एवं पूर्वस्मादंसौ। इयं दशपद्योत्तरवेदिः कार्या। सा च चतुरङ्गुलोच्चा हस्तोन्नता वा। उत्तरवेदेः पश्चात् पदद्वयात्मकप्रक्रमव्यवहिते देशे हविर्द्धानपूर्वद्वारमध्ये शङ्कुर्देयः। तस्मात्पश्चाद्दशसु प्रक्रमेषु पश्चिमद्वारमध्यशङ्कुः। द्वारशङ्कोर्दक्षिणे उत्तरे च पदद्वयात्मकपञ्चपञ्चप्रक्रमव्यवहिते देशे शङ्कुचतुष्टयं देयम्। एवं कृते दशप्रक्रममितश्चतुरस्रश्चतुस्तम्भो हविर्धानमण्डपः संपद्यते। हविर्द्धानमण्डपे समप्रमाणानि चत्वारि कोष्ठकानि भावयित्वा आग्नेयकोष्ठस्य मध्ये चतुर्विंशत्यङ्गुलमितं समचतुरस्रं प्रकल्प्य, तस्य चतुर्षु कोणप्रान्तेषु प्रादेशमात्रविस्तारान् प्रादेशान्तरालान् बाहुमात्रनिम्नान् गर्त्तान् खनेत्। अक्ष्णया संभेदनशक्तौ सम्यक्, तदा पूर्वयोरभेदनम्। तेषामुपरि वारणानि फलकानि भूसंग्नानि स्थपुटयेत्! एते गर्त्ता उपरवशब्देन व्यपदिश्यन्ते। हविर्धानस्य वायव्यकोणादुत्तरे समसूत्रतया पदद्वयात्मकचतुःप्रक्रमव्यवहिते देशे शङ्कुर्देयः, स आग्नीध्रीयस्य नैर्ऋत्यकोणः। तस्मादुत्तरतः पञ्चारत्निव्यवहिते देशे शङ्कुर्देयः, स आग्नीध्रीयस्य वायव्यकोणः। तयोः शङ्क्वोरार्जवेन पुरस्तात् पञ्चारत्निव्यवहिते देशे शङ्कू देयौ, ते आग्नेयैशानयोः कोणे। पञ्चारत्निपरिमितं चतुरस्रमाग्नीध्रीयं कार्यम्। तस्य दक्षिणे पूर्वे च द्वारे कर्त्तव्ये। एवमेव दक्षिणे आग्नीध्रीयस्य समसूत्रतया मार्जालीयागारं पूर्वद्वारवर्जमुदग्द्वारमाग्नीध्रीयवत्कर्त्तव्यम्। उभयोर्मध्येऽष्टादशाङ्गुलपरिमितौ धिष्ण्यौ कर्त्तव्यौ। महावेदेरुत्तरांसादुदक् त्रिंशदङ्गुले शङ्कुर्देयः। तस्मात्प्रत्यक् चतुस्त्रिंशदङ्गुलव्यवहिते देशे शङ्कुर्देयः, स चात्वालमध्यः। द्वात्रिंशदङ्गुलपरिमितश्चतुरस्रश्चात्वालः कार्यः। उत्तरांसात्पश्चाद् द्वादशसु प्रक्रमेषु पृष्ठ्याया उत्तरतश्च चतुर्दशसु प्रक्रमेषु उत्करमध्यः। तत्र षडङ्गुलेन भ्रमणं कार्यम्, चतुरङ्गुलो गर्तश्च कार्यः। चात्वालादुत्तरतः पूर्वद्वारं पञ्चारत्नि शामित्रम्। हविर्द्धानमण्डपस्योपरि छदिस्त्रयेण, सदसो नवभिश्छदिर्भिरुदगग्रैराच्छादनम्। सदोमण्डपे कोणेषु स्तम्भचतुष्टयम्। महावेद्या अवशिष्टांशस्य आच्छादनं भवेन्न वा। उत्तरवेद्यास्तु आच्छादनं क्रियते। सदोहविर्धानयोः परितोऽपि छादनम्। त्र्यङ्गुलखाता महावेदिः। इति सौमिकवेदिनिर्माणप्रकारः।

[ चात्वालस्थानम् ]

## उत्तरांसात्पश्चादध्यर्धे पदे चात्वालम् ॥ १४ ॥

महावेदेर्य उत्तरोंऽसः, ततः पश्चाद्भागे सार्द्धं पदं परित्यज्य तत्र चात्वालं कुर्यात् (का० श्रौ० ५।३।१९) । द्वादशाङ्गुलं पदम् । चात्वालश्च द्वात्रिंशदङ्गुलमितो गर्त्तविशेषः ॥ १४ ॥

## यथोक्तं वा ॥ १५ ॥

अथवा यथा प्रागुक्तं 'पूर्वेणोत्करं० सञ्चरं परिहाप्य' (५।३।१९) इति, तथैव चात्वालं परिलिखेत्। अर्थात् उत्करतः पूर्वस्यां दिशि द्वात्रिंशदङ्गुलमितं सञ्चरणदेशं परित्यज्य चात्वालं कुर्यादिति (१) ॥ १५ ॥

( इति तृतीयमहः )

---

(१) इतः परं तु सौमिक्या वेदेर्मानं मयोच्यते । द्विपदः प्रक्रमस्तत्र पदं तु त्रिविधं मतम् ॥ १ ॥
तिथ्यर्कपङ्क्तिकरजैर्ग्राह्यं यद्धि यथायथम् । अरत्निना सदोमानं सर्वत्र प्रक्रमैर्न हि ॥ २ ॥
पृष्ठ्यां विधाया रेऽन्ते विमितं चतुरस्रकम् । दश द्वादश वा दैर्घ्ये विस्तारे स्युररत्नयः ॥ ३ ॥
शाला वा दशविस्तारा दैर्घ्ये च द्विगुणा मता । तस्यानुदग्दिग्द्वाराणि त्रीणि स्युर्द्विकराणि हि ॥ ४ ॥
तस्मात्पत्यग्बहिस्तद्वत्पश्चाद्धारान्निमितं मितम् । तथैवोदक् स्या, त्तन्मध्ये गर्तश्च करसम्मितः ॥ ५ ॥
तयोस्तु द्वारमेकैकं प्रागुदग्वा यथाविधि । विहारः प्राक् स्तत्सन्निवेशोषस्त्वधुनोच्यते ॥ ६ ॥
पूर्वद्वारमध्यतः पश्चात्प्रक्रमद्वितये भवेत् । मध्य आहवनीयस्य, पश्चात्सप्तान्तरे पुनः ॥ ७ ॥
मध्यः स्याद्गार्हपत्यस्य, शेषं प्राकृतमीरितम् । तन्मध्ययोरुदक् शङ्कू स्यातां सार्द्धकरद्वये ॥ ८ ॥
तौ मध्यौ खरयो, स्तौ च वेदास्तौ करसंमितौ । पात्याद्दक्षिणतः प्रान्ते खर उच्छिष्टसंज्ञकः ॥ ९ ॥
दक्षिणाप्रवणोऽध्यस्तः, सर्वेऽपि त्र्यङ्गुलोच्छ्रिताः । पूर्वद्वारमध्यतः शङ्कुः पुरस्तात्प्रक्रमत्रये ॥१०॥
सोऽन्तःपात्यो महावेदेः पश्चिमप्रान्त इष्यते । तस्मादुभयतः श्रोणी तिथिप्रक्रमसम्मिते ॥११॥
वाऽर्धसप्तदशेषु स्तो वेदेः प्राशस्त्यमिच्छतः । अन्तःपात्यात्पुरः शङ्कुः षट्त्रिंशत्प्रक्रमेषु तु ॥१२॥
तस्मादुभयतः स्यातां द्वादशप्रक्रमेंऽसकौ । अन्तःपात्यात्पुरः सार्द्धप्रक्रमे सदसोऽवधिः ॥१३॥
तस्मादुभयतः श्रोणी नवारत्नौ ततः पुरः । नवारत्नौ ततस्तद्वदंसौ, द्वारद्वयं भवेत् ॥१४॥
पात्यात् षट्सु प्रक्रमेषु पुरः शङ्कुस्ततस्ततः । एकविंशत्यङ्गुलेषु शङ्कू, स्तद्दक्षिणोत्तरा ॥१५॥
पृष्ठ्या, न स्यां धिष्णियाः स्युः, शङ्कोर्दक्षिणतो भवेत् । मध्यः शास्तुस्तु धिष्ण्यस्य त्र्यरत्नौ सनवाङ्गुले ॥१६॥
पृष्ठ्याशङ्कोरुदक्पश्चात्रारत्नौ शङ्कुर्नवाङ्गुले । षट्त्रिंशदङ्गुले तस्मादेवं शङ्कुचतुष्टयम् ॥१७॥
एते मध्या धिष्णियानां, विस्तारोऽष्टादशाङ्गुलः । वेदाङ्गुलाश्च वेदास्राः षड् धिष्ण्याः सदसि स्मृताः ॥१८॥
शङ्कोः प्रक्रमषट्कस्थाद्दक्षिणा तु करत्रये । भवेदौदुम्बरीगर्त्तः, प्रक्रमो हि महानयम् ॥१९॥
षट्त्रिंशत्प्रक्रमे शङ्कौ मध्यो यूपावटस्य तु । तस्मात्पश्चात्पदे शङ्कुः पञ्चारत्नौ पुनस्तथा ॥२०॥
शङ्कोरुभयतो वेदिश्रोण्यंसाः पदपञ्चके । सर्वतः सा दशपदा स्यादुच्चा चतुरङ्गुला ॥२१॥
चतुर्विंशत्यङ्गुला वाऽथवा षट्त्रिंशदङ्गुला । तत्पश्चात् त्रिप्रक्रमान्ते शङ्कुर्दशसु चापरः ॥२२॥
तयोः शङ्कोरुभयतः श्रोण्यंसौ दशभिः पदैः । पूर्वपश्चिमदिग्द्वारं हविर्धानं कटैर्वृतम् ॥२३॥
दशप्रक्रमदीर्घं तच्चतुरस्रं समन्ततः । तस्मिन्दक्षिणपूर्वार्द्धमध्यमध्यं करात्मकम् ॥२४॥
वेदास्रं, मस्तिषु च्छिद्राण्यर्कव्यासानि चाक्षया । संभिद्यात्, ते ह्युपरवाः, सम्यक् चेत्पूर्वयोर्नहि ॥२५॥
खरस्तदग्रे वेदास्रः पात्रार्थोऽरत्निसम्मितः । हविर्धानोत्तरश्रोणेरुदक् क्रमचतुष्टये ॥२६॥
शङ्कुः, सोऽग्नीन्मण्डपस्य स्तम्भो नैर्ऋत्यधिष्ठितः । पञ्चारत्निर्मण्डपः स्या, न्मध्ये कुण्डं तु धिष्ण्यवत् ॥२७॥
मार्जालीयोऽप्येवमेव दक्षिणश्रोणितो भवेत् । तन्मध्ये धिष्ण्यवद्वेदेः प्रान्त उच्छिष्टवत् खरः ॥२८॥

( अथ चतुर्थमौपवसथ्यमहः )

[ उपसदोः समासश्चतुर्थेऽह्नि ]

**प्रातरुपसदौ समस्य पौर्वाह्णिक्या प्रचर्यार्द्धव्रतं प्रयच्छति ॥ १६ ॥**

प्रातरौपवसथ्येऽहनि उपसदौ समस्य पौर्वाह्णिकीमापराह्णिकीं चोपसदं प्रातरेव तन्त्रेण कुर्यात्। तत्रापि पौर्वाह्णिक्या उपसदः समनन्तरमेव पत्नीयजमानाभ्यां स्वे स्वे व्रते अर्द्धं प्रयच्छेत् ॥ १६ ॥

[ चयने सर्वव्रतदानं वा ]

**सर्वं वाऽग्नौ ॥१७॥**

अग्नौ चयने पौर्वाह्णिक्योपसदा प्रचर्य सर्वं वा व्रतं प्रयच्छेदर्धव्रतं वा ॥ १७ ॥

[ प्रवर्ग्यपक्षे उपसदनन्तरं प्रवर्ग्योत्सादनम् ]

**उभाभ्यां चरिते प्रवर्ग्यमुत्सादयति यथोक्तं कुर्याच्चेत् ॥ १८ ॥**

अप्रवर्ग्ये उपसत्समासानन्तरं, सप्रवर्ग्ये प्रवर्ग्योत्सादनानन्तरमग्निं प्रणयेत्। अत्र प्रवर्ग्यशब्देन तत्संबन्धीनि पात्राणि लक्ष्यन्ते। तेषां तत्स्थानात् निष्काशनं प्रवर्ग्योत्सादनम्। तच्च वक्ष्यति सूत्रकारः ( २६।७ )। यदि प्रवर्ग्यमनुतिष्ठेत् तदा औपवसथ्येऽहनि प्रातरुभे उपसदावनुष्ठाय प्रवर्ग्याख्यं कर्म यथा प्रवर्ग्याध्याये (२६।१-६) उक्तं तथा उपसदन्ते कुर्यात्। ततः प्रवर्ग्यमुत्सादयेत्। प्रथमयज्ञे प्रवर्ग्यकरणस्य वैकल्पिकत्वात् ( ८।२१५ ) कुर्याच्चेदित्युक्तम् ॥ १८ ॥

[ अग्निप्रणयनं, हविर्द्धानशकटयोः स्थापनं च ]

**अग्निं प्रणयत्यौपनिवपनात्कृत्वा, हविर्धाने स्थापयति पृष्ठ्यामुभयतो ऽरत्न्यन्तरे, प्रक्षालिते, प्राची, उभयतःशालामावर्त्य वर्षीयो दक्षिणम् ॥१६॥**

---

ऐन्द्रीयाम्योरुत्तरस्मिन् द्वार्द्धयं दक्षिणे ह्युदक्। महावेदेरुत्तरांसादुदक् स्यात्त्रिंशदङ्गुले ॥२९॥
शङ्कु, स्तस्मात्पुनः पश्चाच्छङ्कुः स्यात्त्रिष्वरत्निपु। मध्यश्चात्वालगर्त्तस्य स स्याद् द्वात्रिंशदङ्गुले ॥३०॥
तदुत्तरेण शामित्रं यथायोगं तु।तन्मितिः। वेदेः खातत्र्यङ्गुलः स्यात्पृष्ठ्या भूमिसमा मता ॥३१॥
यूपावटात्प्रत्यगर्कप्रक्रमेपूत्तराननौ। प्रादेशव्यासो गर्त्तः स्यादुत्करो यज्ञिये क्रतौ ॥
इति प्रक्रममानेनेरिता वेदिस्तु सौमिकी। अथैतदुपयोगिन्याः प्राकृत्या मानमुच्यते ॥३२॥
पृष्ठ्यायामधिकव्यासवृत्तं नर्यस्य कल्पयेत्। तन्मध्याद्वसुरुद्रार्कान्यतमप्रक्रमेष्वथ ॥३३॥
हस्तमात्राव्यस्तमध्यः, प्रक्रमो द्वादशाङ्गुलः। कुण्डमध्यान्तरालांशुं सस्त्रपष्ठं भजेत्त्रिधा ॥३४॥
नियम्यान्तौ मध्यशङ्क्वोर्वर्त्मैकं दक्षिणा नयेत्। स मध्य, स्तदुदङ् नन्दाङ्गुले वृत्तं प्रकल्पयेत् ॥३५॥
सपादाष्टत्रिव्यासं तद्दक्षार्धं धनुराकृति। वेदास्त्रमध्यात्पूर्वस्मात्परस्माद्वापि शङ्कुतः ॥३६॥
पश्चाद्वेदिस्त्र्यरत्निस्तच्छ्रोणी उभयतस्ततः। करद्वयमिते अंसौ सार्धहस्तौ तथा पुरः ॥३७॥
श्रोणितः पार्श्वयोर्मध्यौ सार्द्धद्वात्रिंशदङ्गुले। पञ्चचत्वारिंशद्व्यासार्धयोः सङ्ग्रहयोर्मतौ ॥३८॥
सभ्यावसथ्ययोः कुण्डे वृत्ते च नर्यसंमिते। वृत्तवेदास्त्रयोश्चोदग् यथासम्भवमीरिते ॥३९॥
उदगंसात्पश्चिमेनोत्करो गर्त्तः षडङ्गुलः। अर्कोच्छ्रिताश्चतुर्व्यासा मेखलाः कुण्डसन्निभाः ॥४०॥
वेद्याः खातत्र्यङ्गुलादिरखातौ सङ्ग्रहौ मतौ। वेद्यां सर्वौ, बहिः सर्वौ, बहिरन्तश्च भागतः ॥४१॥
त्रिविधोऽस्त्याहवनीयो वेदिः सर्वत्र तावती। वेदास्र आहवनीयो, वृत्तार्धं दक्षिणस्य च ॥४२॥
त्रीणि कुण्डानीतराणि वृत्तान्युक्तानि धीमता। प्राकृतस्य, विहारस्य विज्ञेयैषोपकल्पना ॥४३॥
एवं विहारं सम्पाद्य यज्वा यष्टुं समारभेत ॥ ४४ ॥ इति।

इध्माभ्याधानादि उपयमन्युपनिवपनान्तमग्निप्रणयनाख्यं कर्म कृत्वा (५।४।२-१८) अनसी पृष्ठ्यामुभयतो दक्षिणे उत्तरे च अरत्निद्वयान्तराले प्राङ्मुखे स्थापयेत् ।

हविः सोमो धीयते स्थाप्यते ययोस्ते हविर्धाने शकटे स्थापयति । या पृष्ठ्या रेखा पूर्वमुक्ता, (८।३।१२) तामुभयतो दक्षिणत उत्तरतश्च । द्वौ अरत्नी अन्तरं ययोस्ते । अध्वर्युः स्वकीयमनो वेदिं दक्षिणेन शालाया दक्षिणतश्च नीत्वा प्रदक्षिणमावर्त्य दक्षिणेनैव प्रत्यानीय अन्तः पात्यसमीपे वेदिमध्ये पृष्ठ्यातो दक्षिणतः प्राङीषं स्थापयति । प्रतिप्रस्थाता तु स्वकीयं हविर्द्धानं वेदेरुत्तरेण शालाया उत्तरेण च नीत्वा प्रदक्षिणमावर्त्य शालाया उत्तरेणैव प्रत्यानीयान्तःपात्य समीपे वेदिमध्ये पृष्ठ्याया उत्तरतः प्राङीषं स्थापयति । द्व्यरत्न्यन्तर इति पृष्ठ्यातो दक्षिणतोऽरत्निमात्रे दक्षिणम् । उत्तरतोऽरत्निमात्रे उत्तरमिति परस्परमरत्निद्वयमन्तरालं भवति ।

तयोर्हविर्द्धानयोर्मध्ये यद्वर्षीयो = बृहत्, तद् दक्षिणं स्थापयेत्, कनीय उत्तरतः ॥१९॥

[ हविर्द्धानयोरुपरि छदिरारोपणम् ]

**तयोश्छदिरध्यस्यति ॥२०॥**

तयोर्हविर्धानयोः शकटयोरुपरि हविर्द्धानमण्डपच्छादनार्थमुदगग्रमेकं छदिः = तृणमयं कटं मध्ये नि दध्यात् । उपरि छादनार्थाः कटाश्छर्दींषि । तानि च दशारत्निदीर्घाणि त्र्यंशेन विपुलानि । हविर्धानशकटाच्छादनं तु वस्त्रादिना कुर्वन्ति ॥२०॥

[ हविर्द्धानयोरग्रस्थितवंशे इषीकमय्या रज्ज्वा बन्धनम् ]

**भित्तिं वाऽभावे ॥२१॥**

छदिषोऽभावे छदिषा तुल्यां वेणुशकलैः कृतां भित्तिं वा तयोरुपरि निदध्यात् ॥२१॥

**अन्यत्रापि ॥२२॥**

यत्र यत्रावरणार्थं छदिषो विधानं, तत्र सर्वत्रापि छदिषोऽभावे भित्तिस्तत्कार्यें भवति ॥२२॥

**रराट्यां पुरस्तादासजत्यैषीकीम् ॥२३॥**

हविर्द्धानयोः शकटयोः पुरस्तादिषीकतृणजन्यशलाकारूपां रराट्यां = रज्जुं छदिषो धारणार्थमुपरि निहिते प्रागपरायते वंशे बध्नीयात् । वस्त्रनिर्मितां ललाटपट्टिकामिति देवः । अलिपका वंशस्य धमनी रराट्या इति याज्ञिकाः । या वंशव्यजनेषु भ्रामणार्थं प्रोता भवति । इदं च संवरणादिकं सर्वमपि हविर्धान-शकटयोरेव कर्त्तव्यमित्यापस्तंबः ॥ २३ ॥

[ छदिषो निधानम् ]

**उच्छ्रायीभ्यां परिवार्य छदिः पश्चाच्च ॥२४॥**

उच्छ्रीयेते इत्युच्छ्राय्यौ = पार्श्वस्थौ कटौ दशारत्निप्रमाणौ । ताभ्यां परिवार्य, अवशिष्टदेशस्यावरणार्थं पूर्वनिहितच्छदिषः पश्चात्, चशब्दात् पुरस्ताच्च पूर्वप्रमाणमुदगग्रं छदिर्निदध्यात् । एवं हविर्द्धानमण्डपनिष्पादनसामग्रीं शकटयोरुपरि स्थापयित्वा शालायामागच्छेत् । अद्यत्वे तु पूर्वकृतस्य मण्डपस्य यागकाले स्पर्शमात्रं क्रियते । अतोऽस्मिन्पक्षे न हविर्धानमण्डपनिष्पादनसामग्र्याः शकटयोः स्थापनमिति ॥२४॥

[ शालाद्वार्ये होमः ]

**चतुर्गृहीतं शालाद्वार्ये जुहोति "युञ्जत" इति (१)। ।२५॥**

अस्य चाग्नेः गार्हपत्यमित्याख्यानं ज्योतिष्टोमे कृतमिति ज्योतिष्टोमे तद्विकारेषु सोम-

(१) ॐ युञ्जते मनऽ उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः। वि होत्रा दधे वयुनाविदेकऽ इन्मही देवस्य परिष्टुतिः स्वाहा ५।१४।

यागेषु च अयं भवति। अत एव कुण्डपायिनामयने "मासमग्निहोत्रं जुहुति" ( का श्रौ० २४। अ. १३२ सू० ) इत्येनेन विहिता अग्निहोत्रादिहोमाः पुरातने एव गार्हपत्ये भवन्ति। सोमप्रकरणे विधानाच्च अस्य सोमयागाङ्गत्वमेव, न तु अग्नीषोमीयपश्वङ्गत्वम्। अतः पशुविकारेऽपि नास्य प्रवृत्तिः ॥२५॥

[ शालाद्वार्यस्याग्नेर्गार्हपत्यत्वम् ]

**स गार्हपत्योऽतः ॥२६॥**

अतः परं स शालाद्वार्यो गार्हपत्यो भवति। गार्हपत्यकार्यमत्र कार्यम्। उत्तरवेद्याख्यस्याहवनीयस्य निष्पन्नत्वादयमाहवनीयोऽपि सन् तदपेक्षया स्वयं गार्हपत्यो भवतीत्यर्थः ॥२६॥

[ शकटस्य दक्षिणे वर्त्मनि होमः ]

**अपरं दक्षिणे वर्त्मनि दक्षिणस्यानसो हिरण्यं निधायाऽभिजुहोती "दं विष्णु"रिति ॥२७॥**

पुनरपरमाज्यं शालाद्वार्ये संस्कृत्य चतुर्गृहीतं गृहीत्वा दक्षिणस्यानसो दक्षिणचक्रमार्गे हिरण्यं निधाय समिद्वर्जं सशेषमिदं विष्णुरिति (१) जुहुयात् ॥२७॥

[ पत्न्या अयुगपत् अक्षधुरोरञ्जनम् ]

**दक्षिणया द्वाराऽऽनीता पत्नी पाणिभ्याᳬ शेषं प्रतिगृह्याक्षधुरावनक्ति पराग् "देवश्रुता"विति युगपत्तद्वचनत्वात् ॥२८॥**

शालाया दक्षिणेन द्वारेणाध्वर्युणाऽऽनीता पत्नी प्राग्गतं हस्तं प्रत्यगनपकर्षयन्ती उभाभ्यां हस्ताभ्यां चतुर्गृहीतस्य हुतशेषं प्रतिगृह्य अक्षस्य धुरौ पराक् अनभ्यावृत्तम् ( उत्तानेन दक्षिणेन हस्तेन अनावृत्तेनेति यावत् ) देवश्रुताविति (२) मन्त्रेणाऽऽज्यादुदक्संस्थम्। "न च हस्तमावर्त्तयति" ( ११।६ ) इत्यापस्तम्बः। युगपत् उभयोर्धुरोरञ्जनं कुर्यात्, न पृथक् देवश्रुताविति मन्त्रस्य द्विवचनान्तत्वात् ॥२८॥

एवं प्राप्त आह—

**भेदे मन्त्रावृत्तिः सान्निपातित्वात् ॥२९॥**

भेदेनाञ्जनं, कार्यं न युगपत्। दक्षिणेन पाणिना कर्म विधेयमिति स्मृतिः। न च भिन्न देशमञ्जनमेकेन दक्षिणेन हस्तेन युगपच्छक्यते कर्तुम्। तस्माद्भेदेन। भेदे सति मन्त्रावृत्तिर्भवति। द्विवचनान्तोऽपि मन्त्रः प्रत्यञ्जनमावर्त्तते सान्निपातितत्वात्। सन्निपत्योपकारी हि मन्त्रः। सोऽसन्निपतितो नैवोपकरोतीति पुनरावर्त्तते। यत्तु द्विवचनान्त एकस्याप्रकाशक इति, प्रातिपदिकार्थं प्रकाशयन्नुप करिष्यतीत्यर्थः। तेन दक्षिणां धुरमङ्क्त्वा सव्यहस्तस्थितमाज्यं दक्षिणहस्ते कृत्वोत्तरामनक्ति पूर्ववदित्यर्थः ॥२९॥

**स्रुक्स्थाल्यौ प्रतिगृह्य प्रतिप्रस्थातोत्तरस्ये "रावती"ति पूर्ववत् ॥ ३० ॥**

अध्वर्युणा समर्पिते स्रुक्स्थाल्यौ प्रतिगृह्य उत्तरस्य अनसो दक्षिणे चक्रमार्गे हिरण्यं निधाय इरावती (३) इति चतुर्गृहीतं जुहुयात् ॥३०॥

---

(१) ॐ इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्। समूढमस्य पाᳬसुरे स्वाहा ५।१५।

(२) ॐ देवश्रुतौ देवेष्वा घोषतम् ५।१७।

(३) ॐ इरावती धेनुमती हि भूतᳬ सूयवसिनी मनवे दशस्या। व्यस्कभ्ना रोदसी विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः स्वाहा ५।१६।

**पत्नी चापरेणाग्नीन्परीत्योत्तरस्यानक्ति पूर्ववत् ॥३१॥**

प्रतिप्रस्थात्राऽऽनीयमाना पत्नी शालां प्रविश्य अग्नीनां पश्चिमत आगत्य (पूर्वया द्वारा-निष्क्रम्य ) उत्तरस्य अनस अक्षधुरौ चतुर्गृहीतशेषं दक्षिणेन हस्तेन गृहीत्वा क्रमेणाऽऽज्यांदे-वश्रुताविति मन्त्रावृत्या ॥३१॥

इति अष्टमाध्याये तृतीया कण्डिका ॥३॥

---

**हविर्द्धानाभ्यां प्रवर्त्यमानाभ्यामनुवाचयति ॥ १ ॥**

"हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनुब्रूहि" इत्यध्वर्युर्होतारं सम्प्रेष्येत् ॥ १ ॥

[ अनसो वर्तनकाले उपरि धारणम् ]

**त्रिरुक्तायामुद्गृह्येव वर्त्तनम्॥ २ ॥**

होत्रा प्रथमायामृचि युजे 'वाम्' ( ऋ० ७।६।१३ ) इति त्रिरुक्तायां सत्याम् ऋत्विजः द्वयोरनसोर्भूसंलग्नयोरेव हस्तैरुत्थापनं कृत्वा इव वर्त्तनं = प्राङ् नयनं कुर्युः । भूमिसंलग्नयो-रेवोद्ग्रहणं कार्यं, यथा भारवशाच्चक्रघर्षणजोऽक्षशब्दो नोत्पद्येत। "हस्तैरुद्गृह्णन्तः प्राचीं प्रवर्तयन्ति" इति सत्याषाढ़ः (७।५)॥२॥

**"प्राची प्रेत"मिति वाचयति ॥ ३ ॥**

हविर्धानयोरनसोः प्रवर्त्यमानयोः प्राची प्रेतमिति (१) मन्त्रं यजमानं वाचयेत् ॥३॥

[ खर्जने मन्त्रपाठः ]

**"स्वं गोष्ठ"मिति च खर्जति ॥ ४ ॥**

अनसि चक्रघर्षणजं शब्दं कुर्वति सति स्वं गोष्ठमिति ( २ ) यजमानं वाचयेत् । नैमित्तिकमिदम् । अक्षशब्दाभावे तु नेदं वाचनम् । अत्र कालाहुतिरपि हूयते । सा च वरुणाय स्वाहेति । यज्ञस्य दोह ( ८।६२ ) इति वाचनं च ॥ ४ ॥

[ शकटाभिमन्त्रणम् ]

**पश्चादुत्तरवेदेस्त्रिषु प्रक्रमेषु मत्या वा नभ्यस्थे अभिमन्त्रय-ते"ऽत्र रमेथा"मिति (३) ॥ ५ ॥**

नभ्यं चक्रम् । तत्र फलकत्रयं भवति । तत्र यन्मध्यमं फलकं तन्नभ्यस्थमित्युच्यते । उत्तरवेदिर्वक्ष्यते, यत्र प्रणीत आहवनीयोऽग्निः स्थाप्यते । तस्याः पश्चात् द्विपदात्मकं प्रक्रमत्रयं परित्यज्य तत्र, स्वमतिपरिकल्पिते देशे वा नातिदूरे नातिसमीपे द्वे अपि अनसी युगपत् स्थापिते भवतः। तत्र तत् नभ्यस्थमेकैकस्यापि शकटस्य यथा भवेत्तथा शकटद्वयं संस्थाप्य अभिमन्त्रयेत्। यादृशं चक्रमत्र सूत्रकृता व्याख्यातृभिर्वाऽभिप्रेतं तादृशं चक्रमनो वा नेदानीं प्रचलति ॥ ५ ॥

[ दक्षिणस्यानस उपस्तम्भनम् ]

**उत्तरेण परिक्रम्य दक्षिणमुपस्तभ्नाति "विष्णोर्नुक"मिति (४) ॥ ६ ॥**

---

(१) ॐ प्राची प्रेतमध्वरं कल्पयन्तीऽ ऊर्ध्वं यज्ञं नयतं मा जिह्वरतम् ५।१७।

(२) ॐ स्वं गोष्ठमावदतं देवी दुर्येऽ आयुर्मा निर्वादिष्टं प्रजां मा निर्वादिष्टम् ५।१७।

(३) ॐ अत्र रमेथां वर्ष्मन् पृथिव्याः ५।१७।

(४) ॐ विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजाᳪसि। यो ऽअस्कभायदुत्तरᳪ सधस्थं विचक्रमाणस्त्रेधोरुगायः ५।१८।

अध्वर्युर्द्वयोरप्यनसोरुत्तरेण परिक्रम्य दक्षिणमनो निरुणद्धि। शकटाग्रं ( यत्र युगं बध्यते तत् ) उपस्तम्भनकाष्ठयोरुपरि स्थापयेदित्यर्थः ॥ ६ ॥

[ अनसो दक्षिणपूर्वकोणे स्थूणानिखननम् ]

## दक्षिणतः स्थूणामुपनिहन्ति "विष्णवे त्वे"ति (१) ॥ ७ ॥

शकटस्याग्नेयकोणे ईषाबन्धनार्थं स्थूणाम् = द्वादशाङ्गुलं शङ्कुं मेथीं निखन्यात्। शकटे प्रागपरायतः काष्ठविशेष ईषा। तामीषां रज्ज्वादिना कीले बन्धयेदित्यर्थः ॥ ७ ॥

## "दिवो वे"त्युत्तरं प्रतिप्रस्थाता ॥ ८ ॥

प्रतिप्रस्थाता दिवो वेति (२) उत्तरं हविर्द्धानशकटमुप स्तभ्नीयात् ॥ ८ ॥

## उत्तरतः स्थूणां पूर्ववत् ॥ ९ ॥

मण्डपस्योत्तरतो हविर्धानयोः पश्चिमेन गत्वा हविर्द्धानशकटस्य उत्तरपूर्वकोणे ऽध्वर्युरेव विष्णवे त्वेति (३) स्थूणामुप निहन्यात् ॥ ९ ॥

## उभे वा दक्षिणतः ॥१०॥

अथवा उभे अपि स्थूणे हविर्द्धानस्य दक्षिणपार्श्वे एवाध्वर्युर्निहन्यात्। एकां पूर्वदक्षिणकोणे, अपरां दक्षिणापरकोणे ॥१०॥

## इतरतस्ततः ॥११॥

ततोऽनन्तरं ययोः कोणयोः पूर्वं निखाते ततोऽन्ययोः कोणयोरेकैकां स्थूणां निखन्यात्। यदि प्रथममंसयोर्निखाते तदा श्रोण्योः। यदि प्रथमं दक्षिणतस्तत उत्तरत इति चतस्रोऽपि स्थूणाः प्रादक्षिण्येनोपहताः स्युरिति ॥११॥

## यदु च मानुष इति श्रुतेः ( ३।५।३।२१ ) ॥१२॥

यच्च मानुषे लोकविषये अनसः प्रसिद्धमुपरि बलकानिधान-बन्धना-ऽधिकस्थूणा-निखननादि, यच्च दशारत्निपरिमितहविर्द्धाननिष्पादने बलकानिधानादि प्राप्नोति तदपि दृढीकरणार्थं कुर्यात् ॥१२॥

[ अथ हविर्धानमण्डपकरणम् ]

हविर्द्धानं काष्ठैर्निष्पाद्य उपरि छादनादिकं कुर्यादित्याह—

## "प्रतद्विष्णु"रिति वाचयति मध्यमं छदिरालभ्य ॥१३॥

पूर्वं या हविर्द्धानमण्डपनिर्माणसामग्री शकटयोरुपरि निहिता, तया सामग्र्या हविर्धानमण्डपं चतुस्तम्भं निष्पाद्य तत्र यत् छदिस्त्रयनिधानं कृतं, तत्र यन्मध्यमं छदिः, तत् "मध्यमं छदिरालभस्व" इत्यध्येषणया यजमानेन मध्यमच्छादष आलम्भं कारयित्वा प्रतद्विष्णुरिति (४) यजमानं वाचयेत्। हविर्धानशकटाच्छादनं तु वस्त्रादिना कर्त्तव्यम् ॥१३॥

---

(१) ॐ विष्णवे त्वा उप स्पृशामि ५।१८।

(२) ॐ दिवो वा विष्णऽ उत वा पृथिव्या महो वा विष्णऽ उरोरन्तरिक्षात्। उभा हि हस्ता वसुना पृणस्वा प्रयच्छ दक्षिणादोत सव्यात् ५।१९।

(३) ॐ विष्णवे त्वा उपस्पृशामि ५।१९।

(४) ॐ प्र तद्विष्णुस्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेष्वधि क्षियन्ति भुवनानि विश्वा ५।२०।

उत्तरे च ॥१४॥

उत्तरे च द्वे यजुषी आलभ्यालभ्य वाचयेत् ॥१४॥

"विष्णोरराट"मिति रराट्याम् ॥१५॥

"रराट्यामालभस्व" इत्यध्वेषणया यजमानेन रराट्यां स्पर्शयित्वा वाचयेत् (१) ॥१५॥

"विष्णोः श्नप्त्रे स्थ" इत्युच्छ्राय्यौ ॥१६॥

"उच्छ्राय्यावालभस्व" इत्यध्वेषणया द्वयोरुच्छ्राय्योर्यजमानेनालम्भ कारयित्वा विष्णोः श्नप्त्रे स्थ (२) इति वाचयेत् । आलम्भनस्य युगपत्कर्त्तुमशक्यत्वाद् भेदेन प्रत्येकं रराट्ययोरुच्छ्राय्योश्च वाचन-प्रैषाऽऽलम्भनानि भवन्ति ॥१६॥

[ छदिषामुदगग्रत्वम् ]

उदगग्राणि छदींꣳषि पश्चाच्छ्रुतेः ॥ १७ ॥

त्रीण्यपि छर्दींषि उदगग्राणि कार्याणि । कुतः । श्रुतौ ( ३।५।३।२४ ) "यदिदं पश्चाच्छदींꣳषि" इत्यादिना एकस्य छदिषः छदिरन्तरस्य पश्चाद्विधानादित्यर्थः । अयं भावः । छदिस्त्रयेण हविर्द्धानमण्डस्याच्छादनं कार्यम् । तत्र यदि छदिः पूर्वापरायतं भवेत्तदा छदिरन्तरस्य पूर्वनिहिताच्छदिषो दक्षिणत उत्तरतो वाऽवस्थितिर्भवेत्, न तु पश्चाद्भागे। यदि तु उदगग्राणि छर्दींषि क्रियन्ते तदा पूर्वस्माच्छदिषः पश्चाद्भागे छदिरन्तरं भवितुमर्हतीति ॥१७॥

[ द्वार्याः परिषीवणम् ]

द्वार्याः परिषीव्यति लस्पूजनिप्रतिहृतया रज्ज्वा "विष्णोः स्यू रसीति (३) ॥१८॥

"प्राग्वर्ठ०शर्ठ० हविर्धानम्" ( ८।४।२२ ) इत्यादिना हविर्द्धानमण्डपकरणं वक्ष्यति सूत्रकारः । तत्र पूर्वमपरं च द्वारद्वयं द्व्यरत्निविस्तारं कर्त्तव्यम् । तथा च सत्याषाढः—"पूर्वमपरं च द्वारे कुरुतः" ( ७।५ ) इति । एवं च एकैकस्यापि द्वारस्य द्वारि स्थितं स्थूणाद्वयं भवति । द्वारद्वयस्य च चतस्रो द्वार्याः । ताः, छर्दींषि च लस्पूजन्याम्=बृहत्यां काष्ठमय्यां सूच्यां प्रोतया रज्ज्वा बध्नीयात्=एकीकृत्य दृढाः कुर्यादित्यर्थः (४) ॥ १८ ॥

[ ग्रन्थिकरणम् ]

"विष्णोर्ध्रुवोऽसी"ति ग्रन्थिं करोति (५) ॥ १९ ॥

परिषीवणारम्भे रज्जुमूले ग्रन्थिं कुर्यात् ॥ १९ ॥

---

(१) ॐ विष्णो रराटमसि ५।२१।

(२) ॐ विष्णोः श्नप्त्रे स्थः ५।२१।

(३) ॐ विष्णोः स्यूरसि ५।२१।

(४) पूर्वं काष्ठसूच्या मूलछिद्रे मुञ्जरज्जुं त्रिवृतं प्रोतयित्वा तां काष्ठसूचिगुच्छायां प्रवेश्य तन्मूलप्रोतया रज्ज्वा उच्छ्रायीप्रान्तं स्थूणां च संयोजयति । एवं परिषीवणस्य प्रारम्भं कृत्वा सूचिप्रोतरज्जुमूले ग्रन्थिं बध्नाति । एवं रज्जुमूले ग्रन्थिं कृत्वा तां रज्जुं स्थूणामूले प्रदक्षिणमावेष्ट्य आवेष्टितरज्जुस्थूणान्तरालेनाधः सूचिं प्रवेश्यार्द्धां निष्काशयेत् । एवं पुनः पुनरुच्छ्रायीप्रान्ते रज्जुं प्रवेश्य स्थूणामुच्छ्रायीप्रान्तेन परिषीव्य अन्ते स्थूणया सह रज्जुं बध्वा मूलग्रन्थिविस्रंसनं कुर्यात् । एवं सर्वस्थूणानां प्रदक्षिणं परिषीवणं कार्यम् । पूर्वद्वारा चोत्तरस्यां स्थूणायां परिसमाप्तिः ।

(५) ॐ विष्णोर्ध्रुवोऽसि ५।२१।

**उपक्रान्ते प्रमुञ्चति ॥ २० ॥**

समाप्ते सीवनकर्मणि तं पूर्वकृतं ग्रन्थिं विमुञ्चति। तदित्थम्। पूर्वद्वारस्य दक्षिणद्वार्यायां दर्भमुष्टिं निधाय तत्र सूच्या रज्जुमुपगूहति ओं विष्णोः स्यूरसीति मन्त्रेण। ततस्तयैव रज्ज्वा प्रादक्षिण्येन सर्वाः स्थूणा, अवशिष्टं द्वार्यात्रयं च परिषीव्य पूर्वद्वारदक्षिणद्वार्यायां ग्रन्थिं करोति ओँ विष्णोर्ध्रुवोऽसीति। उत्तरपूर्वस्यां द्वार्यायां परिषीवणसमाप्तिरिति ॥२०॥

**प्राग्वंशवद्धविर्धानम् ॥ २१ ॥**

भवति ॥ २१ ॥

**निष्ठाप्य "वैष्णवमसी"त्यालभते ॥ २२ ॥**

एवं पूर्णं हविर्द्धानं निष्पाद्य वैष्णवमसीति (१) स्पृशेत् ॥ २२ ॥

[ हविर्द्धानमण्डपे भोजनभक्षणयोर्निषेधः ]

**भोजनभक्षणे चास्मिन्न कुर्युः ॥ २३ ॥**

तृप्त्यर्थं भोजनम्, इडा-सोम-चमसादीनां भक्षणं च अस्मिन् हविर्द्धाने न कुर्युः ॥२३॥

[ अद्वारेण सदोहविर्द्धानमण्डपयोरप्रेक्षणम् ]

**अद्वारेण सदोहविर्द्धाने प्रेक्षमाणं ब्रूयान्मा प्रेक्षथा इति ॥ २४ ॥**

अद्वारेण सदः प्रेक्षमाणं, हविर्द्धानं च प्रेक्षमाणं पुरुषं प्रति मा प्रेक्षथा इत्यध्वर्युर्ब्रूयात्। तच्चैतत्सदसि स्तोत्र-शस्त्रकाले, हविर्द्धाने च सोमे स्थिते अपां प्रवेशनादनन्तरं बोध्यम् ॥ २४ ॥

[ द्वारस्थूणानिखननम् ]

**पृष्ठ्यामुभयतो द्वार्ये ॥ २५ ॥**

वेदिमध्ये वर्त्तमाना प्रागग्रा रेखा पृष्ठ्या। तामुभयतो द्व्यरत्न्यन्तरे द्वारस्थूणे भवतः। सदसो हविर्द्धानस्य च पूर्वापरयोर्द्वारयोः। द्वाराणि च द्विकराणि ॥ २५ ॥

( इति हविर्द्धानमण्डपनिष्पादनम् )

---

[ अथोपरवसंस्कारः। तत्रोपरवखननम् ]

**दक्षिणस्यानसोऽधः प्रउगं खनत्युपरवान् ॥ २६ ॥**

दक्षिणस्य हविर्धानशकटस्य अधस्तात् प्रउगं = पूर्वभागे अनसोऽधोभागस्थितां भूमिं द्विधा कृत्वा तत्र पूर्वस्मिन्प्रदेशे इत्यर्थः। उपरवान् = चतुरो गर्त्तविशेषान् खनेत्। उप उपरि ग्राव्णां शब्दो यत्र ते उपरवाः। एतेषामेवोपरि उपांशुसवनसंज्ञकं ग्रावाणं निधाय तत्र सोमाभिषवस्य क्रियमाणत्वात् उपरव (२) इति तेषां संज्ञा ॥ २६ ॥

इति अष्टमेऽध्याये चतुर्थी कण्डिका ॥ ४ ॥

---

खनने विधिमाह—

**अभ्र्यादि करोत्यवटवदापरिलेखनात् ॥ १ ॥**

आहरन्ति अनया मृदम् इति अभ्रिः खनित्रं दारुजम्। यथा पशौ (६।२।८) यूपावटकरणे अभ्र्यादानादि परिलेखनपर्यन्तं कृतं तद्वदिहापि कर्त्तव्यम् ॥ १ ॥

---

(१) ॐ वैष्णवमसि विष्णवे त्वा आलभे ५।२१।

(२) तुर्ये प्राङ् मध्यरेखायां मध्यतश्चतुरस्रके।
द्विप्रादेशमिते क्षेत्रे कोणेषूपरवान् विदुः।

चतुरोऽक्ष्णया व्याघारणवत् ॥ २ ॥

तानुपरवान् चतुःसङ्ख्याकान् व्याघारणवत (५।४।१२) अक्ष्णया तिरश्चीनं परिलिखेत् । अत्र पक्षे प्रथमं दक्षिणापूर्वस्य, तत उत्तरापरस्य, ततो दक्षिणापरस्य, तत उत्तर पूर्वस्येति क्रमः ॥ २ ॥

उत्तरापरं वा प्रथमम् ॥ ३ ॥

अथवा वायव्यकोणे प्रथमं, तत आग्नेय्यां, ततो नैर्ऋत्यां, तत ऐशान्यां परिलिखेदिति क्रमः ॥ ३ ॥

सम्यग्वा ॥ ४ ॥

अथवा सम्यक् ऋजुमार्गेणैव प्रादक्षिण्येन आग्नेयादिक्रमेणोपरवान्परिलिखेदिति क्रमः ॥ ४ ॥

उत्तरपूर्वं त्वन्त्यम् ॥ ५ ॥

सर्वेषु पक्षेषु उत्तरपूर्वमेवान्त्यं परिलेखने स्यात् । पक्षत्रयेऽपि ईशानकोणे एव परिलेखनं समापयेदित्यर्थः ॥ ५ ॥

प्रादेशमात्रां, स्तदन्तरान् ॥ ६ ॥

उपरवाणामन्तरालदेशाः प्रादेशमात्रा भवेयुः । तच्छब्देन प्रादेशः परामृश्यते । परस्परं प्रादेशमात्रान्तरालान् । उपरवमुखानि च प्रादेशमात्राणि भवेयुरित्यर्थः ॥ ६ ॥

"बृहन्नसी"ति(१) यथापरिलिखितं खनति ॥ ७ ॥

लेखनक्रमेणोपरवान् खनेत् । भेदे मन्त्रावृत्तिः ॥ ७ ॥

"इदमह"मित्युत्किरति(२) यथाखातं प्रतिमन्त्रम् ॥ ८ ॥

खननान्तरं खननक्रममनुल्लङ्घ्य सर्वेभ्य उपरवेभ्य उत्खातान्पांसून् बहिः क्षिपेत् ॥८॥

"उत्कृत्यां किरामी"ति पश्चात्सर्वेभ्यः ॥ ९ ॥

आदौ मन्त्रैः(३) पांसून्निष्काश्य पश्चादन्ते उत्कृत्यां किरामीत्यनेनैव मन्त्रेणावृत्तेन सर्वेभ्यो गर्तेभ्यः प्रादक्षिण्येन उत्तरस्यां, पूर्वस्यां वा दिशि पांसूनुत्किरेत् ॥ ९ ॥

बाहुमात्रान् ॥ १० ॥

उपरवान् खनेत् । तूष्णीं खननोत्किरणाभ्यां बाहुमात्रानधः सम्पादयेदित्यर्थः । दीर्घदण्डाकारो भुजपर्यन्तो बाहुः ॥ १० ॥

अक्ष्णया संभिन्द्या, दशक्तौ सम्यक् ॥११॥

उपरवान् तिर्यग्रूपेण अधस्तात् परस्परं छिद्रेण संयोजयेन्नोपरिष्टात् । "सन्तृण्णा अधस्ताद्विधृता उपरिष्टात्"इत्यापस्तंब (७।६) सत्याषाढौ (११।११।५।) । आग्नेयं वायव्यं, तथा नैर्ऋत्यमैशानं च परस्परं संभेदयत् । यद्यक्ष्णया संभेत्तुं न शक्नुयात्तदा ऋजुभावेनैव

(१) बृहन्नसि बृहद्ग्रवा बृहतीमिन्द्राय वाचं वद । रक्षोहणं वलगहनं वैष्णवीम् ५।२३।

(२) ॐ इदमहं तं वलगमुत्किरामि यं मे निष्ट्यो यममात्यो निचखान ५।२३। ॐ इदमहं तं वलगमुत्किरामि यं मे समानो यमसमानो निचखान ५।२३। ॐ इदमहं तं वलगमुत्किरामि यं मे सबन्धुर्यमसबन्धुर्निचखान ५।२३। ॐ इदमहं तं वलगमुत्किरामि यं मे सजातो यमसंजातो नि चखान ५।२३।

(३) ॐ उत्कृत्यां किरामि ५।२३।

संभिन्द्यात्। आग्नेयनैर्ऋत्यौ, नैर्ऋत्यवायव्यौ, वायव्यैशानौ, ऐशानाग्नेयावित्येवं परस्परम्। अत्र पक्षे पूर्वयोः परस्परमसम्भेदनमिति कर्कः ॥११॥

"स्वरा"डित्यवमर्शयति यथाखातं प्रतिमन्त्रम् ॥ १२ ॥

स्वराडिति मन्त्रैः(१)खननक्रमेण 'उपरवानव मृशस्व' इत्यध्येषणया यजमानं संस्पर्शयत्यध्वर्युः ॥ १२ ॥

[ उपरवसम्मर्शः ]

अध्वर्युयजमानौ सम्मृशेते पूर्वदक्षिणेऽध्वर्युरपरोत्तरे यजमानः ॥ १३ ॥

संभेदनमार्गेण द्वयोर्द्वयोरुपरवयोरध्वर्युयजमानौ स्वं स्वं दक्षिणहस्तं प्रवेश्य परस्परं संस्पर्शं कुर्याताम्। तत्र अग्निकोणगे उपरवे अध्वर्युः, वायुकोणस्थे उपरवे यजमानो हस्तं प्रवेशयेत् ॥ १३ ॥

अध्वर्युः पृच्छति यजमान किमत्रेति ॥ १४ ॥

परस्परं गृहीतहस्तयोस्तयोर्मध्ये अध्वर्युर्यजमानं पृच्छेत् 'यजमान किमत्र' इति ॥१४॥

भद्रमित्याह ॥ १५ ॥

एवं पृष्टो यजमानो भद्रम् इति प्रति ब्रूयात् ॥ १५ ॥

तन्नौ सहेत्यध्वर्युरुपांशु ॥ १६ ॥

'तन्नौ सह' इत्यध्वर्युरुपांशु ब्रूयात् ॥ १६ ॥

पुनर्दक्षिणापरेऽध्वर्युः पूर्वोत्तरे यजमानः ॥ १७ ॥

नैर्ऋत्ये उपरवेऽध्वर्युः, ऐशाने यजमानो हस्तं प्रवेशयेत् ॥ १७ ॥

यजमानः पृच्छत्यध्वर्यो किमत्रेति भद्रमिति प्रोक्ते तन्म इति यजमानः ॥१८॥

स्पृष्टहस्तयोस्तयोर्मध्ये यजमानः पृच्छेत्। भद्रम् इत्यध्वर्युणा प्रोक्ते सति तन्मे इति यजमानो ब्रूयात् ॥ १८ ॥

[ उपरवप्रोक्षणम्, अवनयनम्, अवस्तरणं च ]

प्रोक्षत्येनान् "रक्षोहण" इति(२) ॥१९॥

लौकिकोदकेन आग्नेयकोणस्थोपरवादारभ्य प्रदक्षिणं हस्तेनाध्वर्युरुपरवान् प्रोक्षेत् ॥१९॥

भेदे मन्त्रावृत्तिः सान्निपातितत्वात् ॥२०॥

भिन्नदेशानामुपरवाणामेकेन पाणिना युगपत्प्रोक्षणाशक्तेर्भेदेन प्रोक्षणम्। भेदे च मन्त्रस्यावृत्तिः। सन्निपत्य हि करणमन्त्र उपकरोति। एवं च प्रथमे उपरवे प्रयुक्तो मन्त्रो नेतरानभिदध्यात्। बहुवचनं त्वत्राविवक्षितम्। प्रातिपदिकार्थमात्रस्य विवक्षितत्वात् ॥ २० ॥

अवनयनावस्तरणे चावटव"द्रक्षोहणो" "रक्षोहण" इति ॥ २१ ॥

प्रोक्षणशेषोदकस्य खातक्रमेण गर्ते आसेचनमवनयनम्। गर्तानामुपरि लौकिकानां कुशानां खातक्रमेण स्तरणमास्तरणम्। ते च यूपावटवत् कुर्यात् मन्त्राभ्यां (३) क्रमेण ॥ २१ ॥

(१) ॐ स्वराडसि सपत्नहा ५।२४। ॐ सत्रराडस्यभिमातिहा ५।२४। ॐ जनराडसि रक्षोहा ५।२४। ॐ सर्वराडस्यमित्रहा ५।२४।

(२) ॐ रक्षोहणो वो वलगहनः प्रोक्षामि वैष्णवान् ५।२५।

(३) ॐ रक्षोहणो वो वलगहनोऽव नयामि वैष्णवान् ५।२५। ॐ रक्षोहणो वो वलगहनोऽवस्तृणामि वैष्णवान् ५।२५।

[ अधिषवणफलकयोरुपधानं प्रदक्षिणम् ]

**तन्नूपरि कुशान् कृत्वाऽधिषवणे फलके, द्व्यङ्गुलान्तरे, प्रक्षालिते, प्राची, अरत्निमात्रे, सन्तृणे वोपदधाति पर्यूहति च "रक्षोहणौ" "रक्षोहणा" विति (१) ॥ २२ ॥**

उपरवाणामुपरि सूक्ष्मान् कुशान् प्रागग्रानुदगग्रान्वाऽऽस्तीर्य "रक्षोहणौ वां वलगहना उपदधामिति वैष्णवान्" इति मन्त्रेण वैकङ्कते अधिषवणफलके द्वे स्थापयेत्। भेदे मन्त्रावृत्तिः । अधि उपरि अभिषूयते कुट्यते सोमो ययोस्ते अधिषवणे। अधिषवणे च ते फलके = प्रस्तरे चेति अधिषवणफलके वारणे प्रादेशमात्रस्थूले । कीदृशे— परस्परं द्व्यङ्गुलान्तराले, अद्भिः शोधिते, प्रागग्रे, अरत्निमात्रदीर्घे, । सन्तृणे कीलकैः संयोजिते वा। द्व्यङ्गुलान्तरे इत्यनेन सहायं विकल्पः। स च व्यवस्थितः। तत्र अग्निष्टोमे असन्तृणे एव। उक्थ्यादौ, अनेकसुत्ये च सन्तृणे एवेति । ततस्ते अधिषवणफलके पांसुभिस्तदन्तरालं द्व्यङ्गुलं, परितश्च दार्ढ्याय चात्वालमृदा पूरयति रक्षोहणाविति मन्त्रेण। "औदुम्बरे कार्ष्मर्यमये पालाशे वा शुष्के तष्टे" ( ११।१३।१ ) इत्यापस्तंबः। "सन्तर्दनं कपालवत्कीलेनोपश्लेषणम्" इति हरदत्तः (आप० श्रौ० ११।१३।१)। "न सन्तृणात्येकाहे, तत ऊर्ध्वं सन्तृणे" (आप० श्रौ० ११।१३।२) इति । ऊर्ध्वं सत्राहीनादिषु । तथा च श्रुतिः । "न सन्तृणाति. असन्तृणे हि हनू, अथो खलु दीर्घसोमे सन्तृणे" ( मै० सं० ) इति ॥ २२ ॥

[ अधिषवणचर्मणो निधानम् ]

**तयोश्चर्माधिषवणं परिकृत्तꣳ सर्वरोहितं निदधाति "वैष्णवमसी"ति (२)॥२३॥**

तयोरधिषवणफलकयोरुपरि सर्वतो रक्तं परितः कर्त्तनेन समीकृतं प्राग्ग्रीवमुत्तर लोम आनडुहमधिषवणं चर्म निदध्यात्। अधि उपरि सोमः सूयते यत्रेत्यधिषवणम् ॥ २३ ॥

[ चर्मण उपरि ग्राव्णां निधानम् ]

**तस्मिन् ग्राव्णः पञ्च "वैष्णवा स्थे"ति (३)॥२४॥**

तस्मिन् अधिषवणफलके अभिषवार्थान् पञ्च पाषाणान् निदध्यात्। भेदे मन्त्रावृत्तिः॥२४॥

[ उपरवाणां पुरस्तात् खरस्य निर्माणम् ]

**खरं पुरस्तात्करोत्युद्धतावोक्षिते सिकतोपकीर्णे चतुरस्रम् ॥ २५ ॥**

उपरवाणां प्राच्यां दिशि पञ्चचत्वारिंशदङ्गुलान्तरे स्फ्येनोल्लिखिते जलेनाभ्युक्षिते च देशे सिकता = बालुका उपकीर्णाः प्रक्षिप्ता यत्र तत्सिकतोपकीर्णं, चतुष्कोणं, बाहुमात्रम् अरत्निमात्रं वा अर्थपरिमाणं वा, एकाङ्गुलोच्चं चतुरङ्गुलोच्चं वा खरं ( स्थण्डिलं ) पात्रासादनार्थं कुर्यात् ॥ २५ ॥

( इत्युपरवसंस्कारः )

( इति हविर्द्धानमण्डपनिर्माणम् )

---

(१) ॐ रक्षोहणौ वां व्वलगहनाऽ उप दधामि वैष्णवी ५।२५। ॐ रक्षोहणौ वां व्वलगहनौ पर्यूहामि व्वैष्णवी ५।२५।

(२) ॐ व्वैष्णवमसि ५।२५।

(३) ॐ व्वैष्णवा स्थ ५।२५।

( अथ सदःसम्बन्धिसंस्कारः )

[ औदुम्बरीमानम् ]

**अन्तःपात्यात् षट् प्रक्रमान् यात्वा दक्षिणा सप्तमं महान्तं, तत्रौदुम्बरीं मिनोति यजमानमात्रीम् ॥ २६ ॥**

अन्तःपात्यात् शङ्कोः षट् प्रक्रमान् प्राच्यां दिशि गत्वा तत्र शङ्कुं निखन्य तस्मात् सप्तमं। महान्तं प्रक्रमं दक्षिणस्यां दिशि गच्छेत्। स च महान् प्रक्रमः पञ्चारत्न्यात्मकः, त्रिपदप्रक्रमात्मको वा, सार्द्धचतुष्टयारत्न्यात्मको वा, अष्टोत्तरशताङ्गुलात्मको वा। (सदसो दक्षिणार्द्धमध्ये। औदुम्बरी निखेयेति केचित्) तत्र सप्तमपदप्रान्ते यजमानप्रमाणामौदुम्बरीं शाखां गर्त्तं कृत्वा तत्र निखन्यात्। यजमानप्रमाणा च गर्त्तादुपरि कार्या। निखननार्हप्रदेशस्तु पञ्चमांशरूपस्ततोऽधिकः ॥२६॥

**यूपवच्छेते ॥२७॥**

सा चौदुम्बरी यूपवद्भूमौ शयित्वा वर्त्तते। अवटस्य पुरस्तात्प्रागग्रामौदुम्बरीं निधाय तदुपरि कुशमुष्टिं निदध्यादित्यर्थः ( ६।२।११-१२ ) ॥२७॥

**अभ्यादि करोत्यावस्तरणात् ॥२८॥**

अभ्यादानादारभ्य अवस्तरणान्तं कर्म यूपावटवत् ( २।२।८-१८ ) कुर्यात् ॥२८॥

**"उद्दिव" मित्युच्छ्रयति (१) ॥२९॥**

औदुम्बरीमूर्ध्वाग्रत्वेन स्थापयेत् ॥२९॥

**"द्युतान" इति मिनोति ॥३०॥**

द्युतान इति मन्त्रेण (२) औदुम्बरीं गर्त्ते प्रक्षिपेत् ॥३०॥

**पर्यूहणाद्योपसेचनात्कृत्वा "ध्रुवाऽसि"ति वाचयत्यौदुम्बरीमालभ्य प्रजया भूयादिति पशुभिरिति वा ॥३१॥**

अवटे प्रक्षेपानन्तरं पर्यूहणादि = पांसुभिरवटपूरणादि आरभ्य अद्भिरुपसिच्य ( ६।३।६।११ ) इत्येतत्पर्यन्तं यूपवदेव कृत्वा "औदुम्बरीमालभस्व" इत्यध्येषणया यजमानेन औदुम्बर्या आलम्भं कारयित्वा ध्रुवासीति (३) वाचयेत्। ध्रुवाऽसीति मन्त्रे प्रजया भूयादिति प्रयोक्तव्यं, पशुभिर्भूयादिति वा उच्चारयेत्, नोभयं प्रजया, पशुभिरिति ॥३१॥

[ औदुम्बर्या उपरि विशाखे होमः ]

**स्रुवेण विशाखे जुहोति "घृतेन द्यावापृथिवी" इति ॥३२॥**

औदुम्बर्या विशाखे = यत्र द्विधा शाखोत्पत्तिस्तत्र कर्णे बलिकानिधानप्रदेशे हिरण्यं निधाय स्रुवेण जुहुयात् (४)। विगता शाखा यस्मात्स विशाखः ॥३२॥

**भूमिं प्राप्ते स्वाहा करोति ॥३३॥**

औदुम्बर्या विशाखे प्रक्षिप्तमाज्यं यदा भूमिं प्राप्नोति तदा मन्त्रान्ते स्वाहाकारं कुर्यात्। भूमिं प्राप्ते इति पाठः, भूमिप्राप्त इति वा।

---

(१) ॐ उद्दिवᳪ स्तभानान्तरिक्षं पृण दᳪहस्व पृथिव्याम् ५।२७।

(२) ॐ द्युतानस्त्वा मारुतो मिनोतु मित्रावरुणौ ध्रुवेण धर्मणा ५।२७।

(३) ॐ ध्रुवाऽसि ध्रुवोऽयं यजमानोऽस्मिन्नायतने प्रजया पशुभिर्भूयात् ५।२८।

(४) ॐ घृतेन द्यावापृथिवी पूर्य्येथाᳪ स्वाहा ५।२८।

अत्र "उपविष्टहोमाः स्वाहाकारप्रदाना जुहोतय" (१।२।७) इति परिभाषयैव स्वाहाकारस्य प्राप्तत्वात् पुनः स्वाहाकारविधानम् आज्यस्य भूमिप्राप्त्यनन्तरमेव स्वाहा कारोच्चारणार्थम् । एतेनात्र मन्त्रोच्चारणं विलम्बितवृत्त्येत्यवगम्यते ॥३३॥

अत्र मन्त्रान्ते स्वाहाकारस्य प्राप्तौ हेतुमाह—

## सर्वत्र मन्त्रवत्सु जुहोत्युपदेशात् ॥३४॥

अनाम्नातस्वाहाकारेषु मन्त्रवत्सु होमेषु सर्वत्र स्वाहाकारं कुर्यात् । श्रुतौ जुहोतिना-उपदिष्टत्वात् ॥३४॥

## अनाम्नातप्रतिषेधाच्च ॥३५॥

अनाम्नातस्वाहाकारेषु मन्त्रेषु स्वाहाकारस्य प्रतिषेधाच्चैवं निश्चीयते यत् स्वाहाकारः सर्वत्र भवतीति । यथा—"मरुतो यस्य हि (८।३१) इत्यस्वाहान्ते मन्त्रे "न स्वाहा करोति" (५।५।२।१७) इति स्वाहाकारो निषिध्यते ॥३५॥

इत्यष्टमेऽध्याये पञ्चमी कण्डिका ॥ ५ ॥

---

[ सदोनिर्माणम् ]

## नाभिदघ्नꣳ सदः ॥ १ ॥

नाभिप्रमाणं सदोमण्डपं प्रान्तेषून्नतं भवेत् । मध्ये त्वधिकमुच्चं भवत्यौदुम्बरीशाखा-पेक्षया । अयं च मण्डपविशेषो, यत्रोद्गातारः साम गायन्ति, होमावशिष्टं सोमं भक्षयन्ति, धिष्ण्यांश्च कुर्वन्ति ॥ १ ॥

## मत्या वा ॥ २ ॥

इच्छया वा सदसः प्रान्तेषूच्चता कार्या, न नाभिमात्रनियमः ॥ २ ॥

## उदग्वꣳशम् ॥ ३ ॥

मध्यमो वंश उदगायतो भवति ॥ ३ ॥

## नव तिर्यगर्द्धायामो वा ॥४॥

त्रिष्वपि पक्षेषु नवारत्नयो विस्तारप्रमाणं भवति । अथवा आयामस्य दैर्घ्यस्य अर्द्ध-प्रमाणो विस्तारः कार्यः । अष्टादशारत्निपक्षे नव तिर्यक् । एकविंशत्यरत्निपक्षे सार्द्धदशारत्नि तिर्यक् । चतुर्विंशत्यरत्निर्दीर्घपक्षे द्वादशारत्नि तिर्यक्त्वम् ॥४॥

## औदुम्बरीं मध्ये, पृष्ठ्यामेके ॥५॥

सदसस्तिर्यक्प्रमाणस्य मध्ये अर्थात् तिर्यक् प्रमाणं नवारत्नयः । तस्य अर्द्धं सार्द्धच तुररत्नयः । तत्र औदुम्बरी यथा भवति तथा सदोमण्डपं कुर्यादित्यर्थः । एके पृष्ठ्यां मध्यस्थां कुर्वते । वेदेर्मध्यरेखा पृष्ठ्येत्युक्तम् (८।३।१२) । सा रेखा यथा सदसो दैर्घ्यस्य मध्ये भवति तथा मिनुयादित्यर्थः ॥५॥

## अष्टादशारत्न्येकविꣳशतिश्चतुर्विꣳशतिर्वा ॥ ६ ॥

अष्टादशारत्निर्दीर्घं सदः स्यात् । अथवा एकविꣳशतिश्चतुर्विꣳशतिर्वा अरत्नयः सदसो दैर्घ्यप्रमाणानि भवेयुः ॥६॥

"इन्द्रस्य छदि"रिति मध्यमं छदिरारोप्यापरपूर्वे च ॥७॥

सदस उपरि नव छर्दींषि भवन्ति। तानि सर्वाण्युदगग्राण्येव। तत्र दक्षिणतस्त्रीणि, मध्ये त्रीणि, उत्तरतस्त्रीणि इति नवानां छदिषां स्थापनम्। तत्रापि दक्षिणतो यानि छर्दींषि, तेषु मध्यमं छदिर्मन्त्रेणारोप्य ततस्तमेव मन्त्रमनुकृष्य तेनैव मन्त्रेण (१) पूर्वनिहितात् छदिषोऽपर-स्मिन्भागे एकं छदिरारोपयेदुदगग्रम्। एवं पूर्वभागेऽपि एकमुदगग्रं तेनैव मन्त्रेणाऽऽरोपयेदि-त्यर्थः। "नवछदि सदो, नवाग्निष्टोमे, पञ्चदशोक्थ्ये, षोडश षोडशिनि, सप्तदश वाजपेये, एक विंशति सत्राहीनानाम्" इति स्पष्टमेवाहाऽऽपस्तम्बः (११।१०।१२)। "त्रीणि मध्यमानि, त्रीणि दक्षिणानि, त्रीण्युत्तराणि" इति सत्याषाढश्च (७।७) ॥ ७ ॥

त्रिवर्गौ चोत्तरतः ॥ ८ ॥

एवमुत्तरतो यौ त्रिवर्गात्मकौ समुदायौ, तावप्यनेनैव मार्गेणारोपयेत्। एवं च नवकृत्वो मन्त्रः। छदिषां तावत्त्वात् ॥ ८ ॥

"परि त्वे"ति परिवार्य परिषीवण-ग्रन्थ्यभिमर्शनान्यैन्द्रैः ॥ ९ ॥

पूर्वादिक्रमेण कटैः परित्वेति (२) सदोमण्डपं सर्वत आच्छाद्य (प्रतिकटं मन्त्रावृत्तिः)। हविर्द्धानमण्डपे यानि परिषीवण-ग्रन्थ्यभिमर्शनानि पूर्वपश्चिमद्वारद्वये कृतानि, तानि सर्वाणि अत्रापि ऐन्द्रैर्मन्त्रैः (३) कुर्यात् ॥ ९ ॥

(इति सदोमानादिकरणान्तम्)

---

(अथाग्नीध्रमण्डप धिष्ण्यनिर्मितिः)

हविर्द्धानापरान्तमुत्तरेणाग्नीध्रमग्न्यगारद्वारमन्तर्वेद्यर्द्धं, भूयः, सर्वं वा ॥ १० ॥

दशारत्निपरिमाणस्य हविर्द्धानस्य समं द्वेधा विभक्तस्य योऽपरः अन्तः = पश्चिमो भागः, तमुत्तरेण अग्नीधः शरणं गृहम् आग्नीध्रं पञ्चारत्निमितं स्थूणानिखननादिना निष्पादयेत्। तथा कर्त्तव्यं यथा हविर्द्धानस्य आग्नीध्रस्य चापरप्रान्तौ समतया भवतः। कीदृशमाग्नीध्रम्, अग्न्यगारद्वारम्। अग्न्यगारयोरिव दक्षिणपूर्वे द्वारे यस्य। वेदिमध्ये अर्द्धम्, अर्धादर्धं बहिर्वेदि। अथवा अर्द्धाद्बहु अन्तर्वेदि, अल्पं बहिर्वेदि। अथवा सर्वमप्यन्तर्वेदीति ॥ १० ॥

निष्ठाप्य "वैश्वदेवमसी"त्यालभते ॥ ११ ॥

एवमाग्नीध्रीयं सम्पाद्य स्पृशेत् (४) ॥ ११ ॥

---

(१) ॐ इन्द्रस्य च्छदिरसि विश्वजनस्य छाया ५।२८।

(२) ॐ परित्वा गिर्वणो गिरऽ इमा भवन्तु विश्वतः। वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयः ५।२९।

(३) ॐ इन्द्रस्य स्यूरसि ५।३०। ॐ इन्द्रस्य ध्रुवोऽसि ५।३०। ॐ ऐन्द्रमसि ५।३०।

(४) ॐ वैश्वदेवमसि ५।३०।

[ धिष्ण्यानां निवपनम् ]

**धिष्ण्यान्निवपत्युद्धतावोक्षिते पुरीषं निवपति स्फ्येनान्वारब्ध उदङ्ङुपविश्य "विभूरसी"ति (१) प्रतिमन्त्रम् ॥ १२ ॥**

सर्वत्र प्राङ्मुखोऽध्वर्युः पञ्चभूसंस्कारान् कृत्वा पुनरपि उद्धतावोक्षिते देशे धिष्ण्यान् कुर्यात् । तदर्थं च स्फ्येनान्वारब्धे यजमाने होतृधिष्ण्यवर्जमुदङ्ङध्वर्युरुपविश्य एकैकेन मन्त्रेण यथाक्रममेकैकस्मिन्धिष्ण्ये हस्तेनैव चात्वालानीतं पुरीषं निवपेत् ।

इमानि पुरीषाणि चात्वालादानेयानीत्युक्तम् ( १।८।३८ ) । धिष्ण्यः स्थण्डिलविशेषो यत्राग्निं संस्थाप्य होत्रादयः स्वानि शस्त्राणि शंसन्ति ॥१२॥

**आग्नीध्रीयं पूर्वम् ॥१३॥**

तेषां धिष्ण्यानां मध्ये आग्नीध्रीयगृहस्य मध्ये प्रथमं विभूरसीति आग्नीध्रीयं धिष्ण्यं निर्वपेत् ॥१३॥

**सिकताश्चोपरि ॥१४॥**

धिष्ण्यानामुपरि पुरीषनिर्वापानन्तरं तूष्णीं सिकताः प्रक्षिपेत् ॥१४॥

**रौद्रेणेति सर्वत्र ॥१५॥**

विभूरसीत्यादिषु सर्वेषु मन्त्रेषु रौद्रेणेति मन्त्रस्यानुषङ्गः कार्यः ॥१५॥

[ षण्णां धिष्ण्यानां सदसि निवापः ]

एक आग्नीध्रीये न्युप्तः अवशिष्टानां षण्णां धिष्ण्यानां स्थानमाह—

**षट् सदसि ॥१६॥**

सदसि षट् धिष्ण्यान्निवपेत् ॥१६॥

तानेवाह—

**प्रत्यङ्मुखो द्वारमपरेण होतुः ॥१७॥**

सदसः पूर्वद्वारमपरेण एकं प्रक्रमं परित्यज्य पृष्ठ्यामध्य एव यथा पृष्ठ्या मध्ये भवति तथा होत्रीयं निवपेत् प्रत्यङ्मुखोऽध्वर्युर्बर्हिरसीति । "पृष्ठ्यायां होत्रीयम्" (१२।४४। आप० श्रौ०) "पृष्ठ्यायां प्रक्रमे होत्रीयम्" ( सत्या० ७।७ ) इति ॥१७॥

**दक्षिणपूर्वेणौदुम्बरीं मैत्रावरुणस्य ॥१८॥**

औदुम्बर्या आग्नेय्यां दिशि मैत्रावरुणस्य धिष्ण्यमुदङ्मुखो निवपेत् श्वात्रोऽसीति । "होतृधिष्ण्याद्दक्षिणस्यां दिशि अरत्निचतुष्टये सार्द्धे पदाधिके प्रशास्तृधिष्ण्यं निवपेत्" इति मानवे ॥१८॥

**होतृधिष्ण्यमुत्तरेण चतुरः समान्तरान् ब्राह्मणाच्छꣳसि-पोतृ-नेष्टृ-च्छावाकानाम् ॥१९॥**

उत्तरोत्तरक्रमेण । तुल्यान्तरान् । अष्टादशाङ्गुलपरिमिता धिष्ण्याः, तावदन्तरालाश्च । "द्वादशाङ्गुलपरिमाणा धिष्ण्यास्तावदन्तरालाश्च" इति गोपीनाथः ( सत्या० ७।७ ) । तुथोऽसि, उशिगसि, अङ्घारिरसि, अवस्यूरसीति मन्त्राः क्रमेण ॥१९॥

---

(१) ॐ विभूरसि प्रवाहणो रौद्रेणानीकेन पाहिमाऽग्ने पिपृहि माऽग्ने गोपाय मा नमस्तेऽ अस्तु मा मा हिꣳसीः ५।३१। ॐ वह्निरसि हव्यवाहनो रौद्रे० सीः ५।३१। ॐ श्वात्रोऽसि प्रचेता रौ० सीः ५।३१। ॐ तुथोऽसि विश्ववेदा रौद्रे० सीः ५।३१। ॐ उशिगसि कवी रौद्रे० सीः ५।३१। ॐ अङ्घारिरसि बम्भारी रौद्रे० सीः ५।३१। ॐ अवस्यूरसि दुवस्वान् रौद्रे० सीः ५।३२। ॐ शुन्ध्यूरसि मार्जालीयो रौद्रे० सीः ५।३२।

**आग्नीध्राद्दक्षिणर्ठं० सम्प्रति वेद्यन्ते दक्षिणामुखो मार्जालीयम् ॥२०॥**

आग्नीध्राद्दक्षिणस्यां दिशि दक्षिणामुखोऽध्वर्युर्वेद्यन्ते सम्प्रति मार्जालीयं धिष्ण्यं शुन्ध्यूरिति निवपेत् ॥२०॥

[ आहवनीयादीनां मन्त्रेणावलोकनम् ]

**सदोद्वारं पूर्वेण तिष्ठन्ननु दिशत्याहवनीय-बहिष्पवमानदेश-चात्वाल-शामित्रौ-दुम्बरी-ब्रह्मासन-शालाद्वार्य-प्राजहिता "न्त्सम्राडसी"ति प्रतिमन्त्रम् ॥२१॥**

अष्टधिष्ण्यनिवापानन्तरं सदसः पूर्वद्वारस्य पुरस्तात्तिष्ठन्नध्वर्युः सम्राडसीत्यादिभिर्मन्त्रैः (१) प्रतिमन्त्रमाहवनीयादीन्विलोकयेत्। अनुदेशो नाम विद्यमानमेव पदार्थमनु त्वमेवं भवसीति निर्देशः। आहवनीय औत्तरवेदिकः। चात्वालस्य समीपदेशे दक्षिणतोऽन्तर्वेदि बहिष्पवमानदेशो, यत्र ऋत्विजो बहिष्पवमानाख्यं स्तोत्रं स्तुवन्ति। प्राजहितः पुरातनो गार्हपत्यः ॥२१॥

**उत्करर्ठं० "समूह्योऽसि विश्ववेदा ऊनातिरिक्तस्य प्रतिष्ठा" इति ॥२२॥**

उत्करमीक्षेत् ॥२२॥

'( इति सदोमानादि धिष्ण्यानुदेशान्तम्। इति विहारकृतिः )

---

[ अथाग्नीषोमीयः पशुः ]

अथाग्नीषोमीयस्य पशोरुपक्रममाह—

**परिस्तरण-पात्रसर्ठं०सादन-प्रोक्षणा-ऽऽज्यनिर्वपणानि कृत्वोत्तरपरिग्रहादि करोति ॥२३॥**

[ वेदिमार्जने विशेषः ]

**अन्तःपात्यसहितम् ॥२४॥**

वेद्यनुमार्जनमन्तःपात्यसहितं कुर्यात्। अन्तःपात्यशब्देन तत्सम्बन्धिदेशो लक्ष्यते ॥२४॥

**बर्हिरन्तं प्रेष्यति तत्र सर्वमासादयति ॥२५॥**

"प्रोक्षणीरासादयेध्मं बर्हिरुपसादय" एतदन्तं प्रेष्येत्। तत्र अन्तःपात्ये शकटबर्हि-र्ग्राव-द्रोणकलश-सोमपात्राणि-इध्मचतुष्टयं-वपाश्रपण्यौ, रशने, मन्थनचतुष्टयं चेति सर्वमासादयेत्। प्रोक्षणीनां सादनमप्यन्तःपात्य एव ॥२५॥

**अत्रैव प्रोक्षणम् ॥२६॥**

इध्म-महावेदि-बर्हिषामन्तःपात्ये एव प्रोक्षणं कुर्यात्। इध्मस्योपरिष्टादपि प्रोक्षण विधानात् द्विः प्रोक्षित इध्मोऽग्नीषोमीये भवति ॥२६॥

---

(१) ॐ सम्मासिडसि कृशानू रौद्रे० सीः ५।३२। ॐ परिपद्योऽसि पवमानो रौद्रे० सीः ५।३२। ॐ नभोऽसि प्रतक्वा रौद्रे० सीः ५।३२। ॐ मृष्टोऽसि हव्यसूदनो रौद्रे० सीः ५।३२। ॐ ऋतधामाऽसि स्वर्ज्योती रौद्रे० सीः ५।३२। ॐ समुद्रोऽसि विश्वव्यचा रौद्रे० सीः ५।३३। ॐ अजोऽस्येकपाद्रौद्रे० सीः ५।३३ ओं अहिरसि बुध्न्यो रौद्रे० सीः ५।३३। ओं समूह्योऽसि विश्ववेदाऽ ऊनातिरिक्तस्य प्रतिष्ठा रौद्रेणा० सीः ५।३३।

[ अग्नीषोमीयार्थमिध्मनिधानम्, अपराह्णे महावेदेः स्तरणं च ]

**इध्मं निधायाग्नीषोमीयाय, वेदेः स्तरणमग्रहणं प्रस्तरस्यापराह्णे ॥२७॥**

अन्तःपात्यदेशे इध्ममग्नीषोमीयार्थं स्थापयित्वा अपराह्णे महावेदिं स्तृणुयात्। तत्र प्रकृतो यद्विहितं प्रस्तरग्रहणं ( २।७।१८ ) तदत्र न कुर्यात् ॥२७॥

[ अर्द्धव्रतदानं, शालाप्रवेशः, आग्नीध्रीयप्रणयनार्थमिध्माधानं च ]

**अर्द्धव्रते प्रत्ते प्रविश्य प्रणयनीयाधानम् ॥२८॥**

पत्नीयजमानाभ्यामर्द्धव्रते दत्ते सति ततः शालां प्रविश्य शालाद्वार्ये प्रणयनीयस्य इध्मस्याधानं कुर्यात् आग्नीध्रीयाग्नेः प्रणयनार्थम् ॥२८॥

[ यजमानस्य स्वोत्सङ्गे सोमनिधानपूर्वकमुपवेशनम् ]

**आज्याधिश्रयण-स्रुक्सम्मार्जनोद्वासनावेक्षणानि कृत्वा शालाद्वार्यम-परेणास्ते यजमान उपस्थे सोमं कृत्वा ॥२९॥**

यजमानः स्वोत्सङ्गे सोमं निधायोपविशेत् ॥२९॥

[ सोमक्रयणीपदपांसूनां प्रक्षेपः ]

**शालाद्वार्यमपरेण सोमक्रयणीपदं परिकिरति ॥३०॥**

पूर्वं गृहीतान् सोमक्रयण्याः पांसून् नूतनगार्हपत्यस्य पश्चाददूरे परि समन्तात् क्षिपेत् ॥३०॥

[ एकेषां मतं चतुर्द्धा पदप्रक्षेपः ]

**चतुर्द्धैक आहवनीयस्योपयमनीष्वाग्नीध्रीयस्याक्षोपाञ्जने च ॥३१॥**

एके सोमक्रयणीपदं चतुर्द्धा विभज्य चतुर्षु स्थानेषु प्रक्षिपन्ति। तत्रैकं भाग माहवनीयस्योपयमनीषु । द्वितीयमाग्नीध्रीयस्योपयमनीषु । तृतीयम् अक्षधुरावनक्तीत्यत्र अक्षयोरञ्जने। चकाराच्चतुर्थमत्र परिकिरेत् ॥३१॥

[ आज्यप्रोक्षणीनामुत्पवनं, पश्वाज्यग्रहणं च ]

**आज्यप्रोक्षणीरन्तःपात्यदेश उत्पूय पश्वाज्यग्रहणम् ॥३२॥**

अन्तःपात्यदेशे शङ्कोः पश्चात् बहिर्वेदि आज्यं प्रोक्षणीश्च प्रकृतिवदुत्पूय पशुसंब-न्धिनः सपृषदाज्यस्याज्यस्य ग्रहणं कुर्यात् ॥३२॥

[ साज्यानां जुह्वादीनामाहवनीये निनयनार्थं धारणम् ]

**धारयन्त्याज्यानि ॥३३॥**

जौहवादीन्याज्यानि ( अध्वर्युणा समर्पिताः स्रुचः ) आहवनीयं प्रति नयनायान्ये धारयन्ति ॥३३॥

[ यजमानगोत्रजैर्यजमानस्यान्वारम्भः ]

**अपिव्रताश्चान्वारभन्ते यजमानम् ॥३४॥**

अपीति संसर्गे। व्रतमिति कर्मनाम। संसृष्टं साधारणं कर्म येषां ते अपिव्रताः यज-मानस्य गोत्रजा उच्यन्ते। ते अस्मिन् काले यजमानमन्वारभेयुः। अपि समुच्चितं सपिण्डसहकृतं व्रतम् = एकपात्रभोजनं येषां ते अपिव्रता इति गोपीनाथः (सत्या० ७६ ) ॥३४॥

[ गोत्रजानां वस्त्रेणाच्छादनम् ]

**वाससाऽऽच्छादयत्येनान् ॥३५॥**

अध्वर्युः एनान् सयजमानानपित्रतान् अहतेन वाससाऽऽच्छादयेत् । ॥३५॥

[ गोत्रजानां कार्यान्तरव्यापृतत्वे नान्वारम्भावश्यकता ]

**चरत्सु नाद्रियेत ॥३६॥**

इतस्ततो व्यापृतेषु अपिव्रतेषु तेषामन्वारम्भं नाद्रियेत यजमानः ।

"अध्वर्युर्यजमानमन्वारभते, यजमानं पत्नी, पत्नीमितरे पुत्रभ्रातरः" (आप० श्रौ० ११।१०।१४) इति ॥३६॥

इत्यष्टमाध्याये षष्ठी कण्डिका ।

[ प्रचरण्या होमः ]

**प्रदीप्तमिध्मं "त्वꣳ सोमे"ति प्रचरण्याऽभि जुहोति ॥१॥**

. आग्नीध्रे नयनार्थं शालाद्वार्ये निहितस्य प्रदीप्तस्येध्मस्योपरि त्वꣳ सोमेति मन्त्रेण (१) प्रचरण्या स्रुचा सकृद्गृहीतमाज्यं समिद्धजं जुहुयात् । अन्यासु व्यापृतासु तया प्रचर्यत इति प्रचरणी नाम पालाशी स्रुक् जुहूरेव । अग्निहोत्रहवणीति कर्कः । अयमेव होमो वैसर्जनहोम इत्युच्यते ( आप० श्रौ० ११।१७।१५ ) ॥१॥

**"जुषाणो अप्तु" रिति द्वितीयाम् ॥ २ ॥**

प्रदीप्तस्येध्मस्योपरि प्रचरण्या सकृद्गृहीतमाज्यं गृहीत्वा द्वितीयामाहुतिं (२)जुहुयात् ॥ २ ॥

**अग्नये प्रह्रियमाणायानुवाचयति ॥ ३ ॥**

"अग्नये प्रह्रियमाणायानुब्रूहि" इति होत्राऽनुवाचनं कारयति ॥ ३ ॥

**सोमाय प्रणीयमानायेति वा ॥४॥**

प्रैषं ब्रूयात् ॥ ४ ॥

[ ग्रावादीन्यादाय आहवनीयं प्रति गमनम् ]

**आहवनीयं गच्छन्त्यादाय ग्राव-द्रोणकलश-सोमपात्राणी-ध्मचतुष्टयं च सन्नद्धं, वपाश्रपण्यौ, रशने, शकल-वृषण-मरणी च ॥५॥**

ब्रह्मयजमानाध्वर्य्वादयः पञ्च ग्रावाणः सोमकुट्टनार्थाः, द्रुममयः कलशो वैकङ्कतो, यत्र सोमरसः स्थाप्यते । सोमपात्राणि ग्रहपात्राणि । परिप्लवाम् , ऋतुपात्रे, ऊर्णापवित्रे, स्थाल्यः, पूतभृदाधवनीयौ, सोमासन्दी, इत्येवमादीन्यादायाहवनीयं गच्छेयुः । सोमपात्रशब्देनात्र ग्रहपात्राणि गृह्यन्ते, न चमसादीनीति कर्कः ॥५॥

**"अग्ने नये"ति वाचयति ॥६॥**

आग्नीध्रं प्रति गमनार्थं प्रवृत्तं यजमानम् (३) ॥६॥

---

(१) ओं त्वꣳ सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्यऽ उरु यन्तासि वरूथꣳ स्वाहा । ५।३५।

(२) ओं जुषाणोऽ अप्तुराज्यस्य वेतु स्वाहा ५।३५

(३) ओं अग्ने नय सुपथा रायेऽ अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमऽउक्तिं विधेम स्वाहा ५।३६।

[ नीयमानस्याग्नेराग्नीध्रे निधानम् ]

**उत्तरेण सदो हृत्वाऽऽग्नीध्रेऽग्निं निदधाति ॥७॥**

सद उत्तरेण तत्सर्वं हृत्वा आग्नीध्रगृहमध्ये आग्नीध्रीयधिष्ण्येऽग्निं स्थापयेत् ॥७॥

[ ग्रावादीनां च निधानम् ]

**ग्राव-द्रोणकलश-सोमपात्राणि च ॥८॥**

तत्रैव स्थापयेत् । आसन्दीं चाग्नेयकोणे । अग्नीषोमीयं पशुमप्यानीय तत्रैव बध्नाति । शाखान्तरात् ॥८॥

[ आग्नीध्रीये होमः ]

**"अयं न" इति जुहोत्यस्मिन् ॥९॥**

अग्नीध्रीयेऽग्नौ प्रचरण्या सकृद्गृहीतमाज्यं जुहुयात् (१) ॥९॥

[ आहवनीयस्योत्तरत आज्यसोमवर्जमिध्मादीनां स्थापनम् ]

**उत्तरेण परिक्रम्याहवनीयस्योत्तरतो निदधत्यन्यदाज्यसोमवर्जम् ॥१०॥**

आग्नीध्रीयमुत्तरेण परिक्रम्य इध्मादीन्यादाय आहवनीयं प्रति गत्वा तदुत्तरत आज्यानि सोमं च वर्जयित्वा अन्यदिध्मादि सर्वं स्थापयेयुः ॥१०॥

[ अध्वर्योर्धिष्ण्यानां मध्ये गमननिषेधः ]

**धिष्ण्याऽव्यवायोऽध्वर्योः ॥११॥**

अध्वर्युर्धिष्ण्यानां मध्यतो न गच्छेदित्यर्थः आपरिसमाप्तेः ॥११॥

[ इध्मप्रोक्षणादीनां निरूढपशुतोऽतिदेशः ]

**इध्मप्रोक्षणादि करोति ॥१२॥**

पाशुकं कर्म निरूढपशुवत्कुर्यात् ॥१२॥

[ स्तरणे विशेषः ]

**खरोत्तरार्द्धं एकवृत्स्तरणं पश्चाद्वोत्तरवेदेः ॥१३॥**

बर्हिस्तरणकाले खरस्य उत्तरभागे आतिथ्याबर्हिष एकावृत्ति सकृत्स्तरणं कुर्यात् । अथवोत्तरवेदेः पश्चादेकवृत्स्तृणीयात्, न खरोत्तरार्द्धे । "आतिथ्याबर्हिरुपसदामग्नीषोमीयस्य च, तदेव प्रस्तरपरिधी" ( आप० श्रौ० १२।२।११,१२ ) ॥१३॥

[ आहवनीयेक्षणात्पूर्वं होमः ]

**आहवनीयेक्षणात्कृत्वो "रु विष्ण" विति जुहोति ॥१४॥**

सूर्यस्त्वेत्याहवनीयेक्षणान्तं कर्म कृत्वा ( २।८।४ ) सकृद्गृहीतमाज्यं प्रचरण्या आहवनीये जुहुयात् (२) ॥१४॥

**पुरस्ताद्वा, समिधावाधायेति श्रुतेः ॥१५॥**

वाशब्दोऽवधारणे । नाहवनीयेक्षणान्ते होमः । किन्तर्हि आहवनीयेक्षणात्प्रागेव होमः "अभ्याधाय समिधावथ जुहोति" (३।६।३।१४) इति श्रूयते ॥१५॥

---

(१) ओं अयन्नोऽ अग्निर्वरिवस्कृणोत्वयं मृधः पुरऽ एतु प्रभिन्दन् । अयं वाजाञ्जयतु वाजसाता-वयर्ठ०. शत्रूञ्जयतु जर्हृषाणः स्वाहा ५।३७।

(२) ओं उरु विष्णो वि क्रमस्वोरु क्षयाय नस्कृधि । घृतं घृतयोने पिब प्रप्र यज्ञपतिं तिर स्वाहा ५।३८।

[ दक्षिणे हविर्द्धानशकटे सोमनिधानम् ]

**आसाद्याज्यानि दक्षिणेऽनसि कृष्णाजिनमास्तीर्य तस्मिन्त्सोमं निदधाति "देव सवित"रिति (१) ॥१६॥**

उत्तरत्र विसर्गोपदेशात् यजमानान्वारब्धोऽध्वर्युः सोमं निदध्यात् ॥१६॥

[ सोमोपस्थानम् ]

**"एतत्त्व"मिति विसृज्योपतिष्ठते ॥१७॥**

कृष्णाजिनस्योपरि सोमनिधानकाले सोमस्यान्वारम्भं कुर्वन् यजमानः सोमं विसृज्य-हस्तेन मुक्त्वा (२) एतत्त्वमित्युपतिष्ठेत् ॥१७॥

[ अङ्गुलिविसर्गः ]

**"स्वाहा नि" रिति (३) निष्क्रम्या"ग्ने व्रतपा" (४) इत्याहवनीये समिधमाधाय मदन्तीरुपस्पृश्याङ्गुलीर्विसृजते ॥१८॥**

हविर्द्धानान्निष्क्रम्य पूर्वं सङ्कोचिता अङ्गुलीर्विसृजे यजमानः ॥१८॥

**पत्नी च गार्हपत्ये तूष्णीं मदन्तीरुपस्पृश्य ॥१९॥**

पत्नी गार्हपत्ये तूष्णीं समिधमाधाय स्वमदन्तीरुपस्पृश्याङ्गुलीर्विसृजेत् ॥१९॥

**चात्वाले मदन्तीः कृत्वा ॥२०॥**

मदन्तीश्चात्वालेऽवसिच्य वक्ष्यमाणं कर्म कुर्यात्। प्रतिपत्तिरियं चरितार्थत्वात्। अग्रे कार्याभावात् ॥२०॥

[ इत ऊर्ध्वं दीक्षितस्य नामग्रहणं तदन्नभोजनं च ]

**नामग्रहणभोजने अस्यातः कुर्वन्ति ॥२१॥**

अत ऊर्ध्वमस्य दीक्षितस्य नामोच्चारणं भोजनं च कुर्युः। अर्थादतः पूर्वं न कुर्युः। "न दीक्षितस्यान्नमश्नीयात्" "न दीक्षितस्य नाम गृह्णीयात्" इति निषेधस्यायमवधिः। व्यतिक्रमे भोक्तुरेव प्रायश्चितम् ॥२१॥

[ व्रतस्य निवृत्तिः। हविःशेषस्यैव भक्षणम् ]

**व्रत्यनिवृत्तिः ॥ २२ ॥**

अतः परं यजमानस्य हविःशेषाणामेव भक्षणं, न व्रतस्य। अत्र च व्रतनिवृत्तिरेव क्रियते। न तु हविःशेषभक्षणमपूर्वतया विधीयते। पूर्वमेव हविःशेषभक्षणस्य विहितत्वेन पुनर्विधानायोगात्। सोऽपि हविःशेषभक्षः श्वः प्रातरेव, नाद्य। "तस्मादुप वसथे नाश्नीयात्" इति निषेधात्। उपवसथमुपवासः। तत्रापि सवनीयपुरोडाशहविषामेव शेषो, न पश्वादेः। सवनीयान्प्रकृत्यैवाम्नानात् ॥२२॥

---

(१) ओं देव सवितरेष ते सोमस्तꣳ रक्षस्व मा त्वा दभन् ५।३९।

(२) ओं एतत्त्वं देव सोम देवो देवाँ उपागाऽ इदमहम्मनुष्यान्त्सह रायस्पोषेण ५।३९।

(३) ओं स्वाहा निर्वरुणस्य पाशान्मुच्ये ५।३९।

(४) ओं अग्ने व्रतपास्त्वे व्रतपा या तव तनूर्मय्यभूदेषा सा त्वयि यो मम तनूस्त्वय्यभूदियꣳ सा मयि। यथायथं नौ व्रतपते व्रतान्यनु मे दीक्षां दीक्षापतिरमꣳस्तानु तपस्तपस्पतिः ५।४०।

## हविःशेषभक्षः ॥२३॥

अतः परं यजमानो हविःशेषभक्षः सवनीये स्यात् ॥२३॥

[ अग्नीषोमीयः पशुः, पशुपुरोडाशश्च ]

## अग्नीषोमीयोऽतः पशुः ॥२४॥

अत ऊर्ध्वमग्नीषोमीयः पशुः कार्यः । तस्याज्यासादनान्तं प्रागुक्तमेव (१) ॥ २४ ॥

## तद्देवत्यः पशुपुरोडाशः ॥२५॥

यद्देवत्यः पशुस्तद्देवत्यः पुरोडाशोऽपि कार्यः । "पशुदेवतायै पुरोडाश" (६।८।१६) इत्यस्यायं प्रपञ्चः ॥२५॥

इति कात्यायनश्रौतसूत्रे अष्टमाध्याये सप्तमी कण्डिका ॥७॥

---

(१) अत्र कात्यायनी प्रथमपरिशिष्टं यूपलक्षणात्मकम्—

चातुर्वर्ण्यं प्रवक्ष्यामि वृक्षाणां पशुभिः सह । वृक्षाच्छेदेन विज्ञेया वर्णेन पशवस्तथा ॥ १ ॥
श्वेतस्तु ब्राह्मणो ज्ञेयः पिञ्जरः क्षत्रियः स्मृतः । वैश्यस्तु धूम्रवर्णः स्यात्कृष्णं शूद्रं विनिर्दिशेत् ॥ २ ॥
ब्राह्मणे ब्राह्मणो यूपः क्षत्रिये क्षत्रियो भवेत् । वैश्ये तु वैश्ययूपः स्यात् कृष्णं शूद्रं तु वर्जयेत् ॥ ३ ॥
यथैवात्मा तथा यूपो यूपे ह्यात्मा प्रतिष्ठितः । आत्मा वै यजमानस्य यूपत्वमनुगच्छति ॥ ४ ॥
निन्दां प्रशस्तिं वक्ष्यामः कात्यायनमतं यथा । यूपस्य सचषालस्य, अध्वर्युः कारयेत्सदा ॥ ५ ॥
आत्मानं यजमानस्य यूपमाहुर्मनीषिणः । यूपं श्रेष्ठतमं कुर्यादध्वर्युः सर्वकर्मसु ॥ ६ ॥
समभूमिषु ये जाता विविक्ते काननान्तरे । स्निग्धा बहुलपर्णाश्च ते यूपा यज्ञकर्मणि ॥ ७ ॥
वर्जयेत्कन्दरे जातं तटजातं तथैव च । गिरिमूर्द्धनि ये जाता नदीकूलाश्रिताश्च ये ॥ ८ ॥
वल्लीभिर्वेष्टिताश्चैव वज्रैर्विनिहतास्तथा । सुषिरा जर्जराश्चैव कोटरैराश्रिताश्च ये ॥ ९ ॥
शीर्णांश्च कटसंबन्धान् यूपांस्तु परिवर्जयेत् । छेदनेन प्रमाणस्तु तन्तुको यदि दृश्यते ॥१०॥
तन्तुकेन तु विज्ञेयः कण्टो वा यदि वा कृमिः । मञ्जिष्ठवर्णसङ्काशे शल्ये भवति दर्दुरः ॥११॥
पीतके मण्डले गोधा नीले विद्याद्भुजङ्गमम् । श्यामं वा यदि वा कृष्णं मण्डलं यदि दृश्यते ॥१२॥
दीर्घसर्पविकारः स्याद् दृश्यते नात्र संशयः । कपिले मूषकं विद्यात्कृकलासं तथाऽरुणे ॥१३॥
शुक्लवर्णे तु पाषाणं कपोते गृहगोधिकाम् । क्षते च रुधिरस्रावं गोविद्धे रोगिता तथा ॥१४॥
शूलकं वर्जयेन्नित्यं सर्वयज्ञेषु निश्चितम् । उच्छ्रितो यजमानस्य यूपवक्त्रं तु नाहरेत् ॥१५॥
शीर्णाकृतिर्विपर्यस्तस्तथैव धनुराकृतिः । उच्छ्रितो यजमानस्य पशुपुत्रविनाशकृत् ॥१६॥
अव्रणो न च शुष्काग्रो मध्ये चोपनतो भवेत् । अग्रे चोपनतः किंचित्स यूपो यज्ञियः स्मृतः ॥१७॥
उच्छ्रीयमाणो यूपस्तु दक्षिणा पतितो यदि । तस्मिन् संवत्सरे मृत्युर्यजमानस्य निर्दिशेत् ॥१८॥
प्रत्युगुत्तरतो वापि यस्य यूपोन्नतो भवेत् । प्रागेव तु विनाशः स्याद् ध्रुवमप्सु भयं भवेत् ॥१९॥
चौराद्राजकुलाद्वापि उभयत्र भयं भवेत् । अथ तस्यैव यूपस्य यदष्टाश्रीणि कुर्वते ॥२०॥
प्रथमाश्रिविनाशे च लक्ष्मीर्न नियता भवेत् । द्वितीयस्यामिष्टनाशस्तृतीया तु प्रजां हरेत् ॥२१॥
चतुर्थ्यां मरणं विद्यात्पञ्चम्यां तु धनक्षयः । षष्ठी पत्नीविनाशाय सप्तम्यामनिलाद्भयम् ॥२२॥
चौराद्राजकुलाद्वापि अष्टम्यां भयमिष्यते । प्रथमा अग्निदैवत्या द्वितीया सोमदेवता ॥२३॥
तृतीया वारुणी प्रोक्ता चतुर्थी यमदेवता । पञ्चमी नागदेवत्या षष्ठी अनिलदेवता ॥२४॥
सप्तमी पितृदेवत्या अष्टमी सूर्यदेवता । अश्रीणां देवता ह्येता यूपो वैष्णव उच्यते ॥२५॥
वज्रस्य देवता ह्येता एतत्ते यूपलक्षणमेतत्ते यूपलक्षणमिति ॥२६॥

**अभ्र्यादि करोति ॥१॥**

ततोऽभ्र्या खननमित्यादि पाशुकं कर्म कुर्यात् ॥१॥

[ पश्विडादीनां हविर्द्धानस्योत्तरेण नयनं, गुदतृतीयस्य च ]

**दक्षिणेन हविर्द्धानं पश्विडाथं हरति ॥२॥**

सदसि उपविष्टस्य होतुरर्पणाय पश्विडां नयन् हविर्द्धानं दक्षिणेन हरेत् ॥२॥

**गुदतृतीयं च ॥३॥**

गुदतृतीयमपि उपयड्ढोमार्थं होतृधिष्ण्यं प्रति सदसि नयन् हविर्द्धानं दक्षिणेन नयेत् ॥३॥

[ जाघन्याः पत्नीसंयाजार्थं नयनम् ]

**मार्जालीयं दक्षिणेन जाघनीम् ॥४॥**

पत्नीसंयाजार्थं पत्नीशालायां जाघनीं नयन् मार्जालीयधिष्ण्यं दक्षिणेन नयेत् । जाघनी पशोः पुच्छम् ॥४॥

[ चयने पक्षपरिमाणमिता यूपैकादशिनी, पूर्वोक्तं पक्षद्वयं चेति त्रयः पक्षाः ]

**प्रत्याहृत्य वा सोमाहवनीययोरव्यवायात् ॥५॥**

प्रत्याहृत्य = परावृत्य यूपाहवनीययोरन्तरा गत्वा येन मार्गेण पात्रादीनि पूर्वमाहृतानि, तेनैव मार्गेण उत्तरेण हविर्द्धानमिडादीनि नयेत् । कुतः ? सोमाहवनीययोरव्यवायात् । तदानीं सामस्याहवनीयस्य च गमनेन व्यवधानं भवति । अत्र च दक्षिणेन हविर्द्धानं नीयमानेषु प्रदक्षिणोपचारात् स्मृत्यनुग्रहो भवति । प्रत्याहृत्य यूपाहवनीययोरन्तरेण हरणे उत्तरत उपचारकविधायकश्रुतेरनुग्रहो भवति । तस्मात् तत्र स्मृत्यपेक्षया श्रुत्यनुग्रहस्यैव न्याय्यत्वात् उत्तरोपचार एव ज्यायान् ॥५॥

[ यूपैकादशिनीपक्षे वेदिवर्द्धनपूर्वकं यूपानां परस्परमन्तरालानि रथाक्षमात्राणि ]

ज्योतिष्टोमे क्रतुपशुरेकः सवनीयाख्यः स्तोमायनसंज्ञको ( ६।८।४ ) विहितः । तेन सह एकादशपशवोऽपि विकल्पेन विहिताः । तत्र पश्वेकादशिनीपक्षे एकादश यूपा अपि विकल्पेन विहिताः। एवं च पश्वेकादशिनीपक्षेऽपि एकस्मिन्नेव यूपे (१) एकादशापि पशवो योजनीयाः । अथवा प्रतिपशु एकैको यूपः कर्त्तव्यः । तत्र यदि यूपैकादशिनी क्रियते, तदा यूपानां परस्परमन्तरालदेशः कियान् ? इत्यपेक्षायामाह—

---

(२) कात्यायनद्वितीयपरिशिष्टं छागलक्षणात्मकम्—

अथातः संप्रवक्ष्यामि छागानां लक्षणं शुभम् । अशुभं चैव वर्ज्यानां तत्प्रवक्ष्याम्यतः परम् ॥ १ ॥
एकवर्णो द्विवर्णश्च बहुवर्णस्तथैव च । रोहितो यस्तु वै छागः स पष्ठः कुलमुद्वहेत् ॥ २ ॥
यस्तु श्वेतमुखश्छागः कृष्णग्रीवः सितोदरः । पशूनां चैव मुख्यः स्यात्पशुकामस्तमा लभेत् ॥ ३ ॥
मञ्जिष्ठवर्णसङ्काशः शृङ्गैस्तु चतुरङ्गुलैः । स च्छागः पालको नाम महान्, पालयते धनम् ॥ ४ ॥
विकटो वामनो वेहत्साहस्राः पशवस्त्रयः । शोधयन्ति महायज्ञं महच्च लभते फलम् ॥ ५ ॥
यज्ञे तु दक्षिणे पार्श्वे मण्डलं यस्य वै भवेत् । छागः सर्वार्थको नाम सर्वकामफलप्रदः ॥ ६ ॥
श्वेतं तु दक्षिणे पार्श्वे भवेद्वै यस्य मण्डलम् । स च्छागो विजयो नाम अमित्रदमनः स्मृतः ॥ ७ ॥
श्वेतकृष्णः प्रतिष्ठायां कृष्णः श्वेतः प्रतिष्ठितः । प्रतिष्ठितौ तु तौ छागौ प्रतिष्ठार्थे तु याज्ञिकैः ॥ ८ ॥
षड्भ्रुतः षडावर्तः शुक्लाक्षीणो महोदरः । स्निग्धानुलोमवर्णश्च छागः सर्वार्थसाधकः ॥ ९ ॥
कोहकर्णः पुष्पवर्णो यस्य चैतद् द्वयं भवेत् । क्लीहाकर्णस्त्वकर्णो वा शुण्ठाकर्णस्तथैव च ॥१०॥

### यूपैकादशिनी चेद्रथाक्षमात्राण्यन्तराणि ॥६॥

यदि यूपैकादशिनी क्रियते तदा यूपानामन्तरालानि रथाक्षमात्राणि कर्त्तव्यानि। चतुरधिकशतमङ्गुलयो रथाक्षशब्देनोच्यन्ते। तावन्मात्रोऽन्तरालो यूपानां परस्परं भवतीति भावः। एवं च एकैकस्याप्यन्तरालस्य चतुरधिकशताङ्गुलपरिमितत्वात् एकैकस्य यूपावटस्य च द्वादशाङ्गुलपरिमितत्वात् मिलित्वा विंशत्यङ्गुलैरधिका अष्टाचत्वारिंशदरत्नयः सम्पन्नाः। अत्र पूर्वविमिता वेदिः अंसयोः ( यूपस्थाने ) चतुर्विंशतिप्रक्रमात्मिकैवेति एतावत्परिमाणे न तावतां सन्निवेशो भवति इति वेदिर्वर्धनीयैव। एतत्सूत्रकारोऽपि वक्ष्यति "यूथायूपं वेदिवर्द्धनम्" (८।८।२१) इति ॥६॥

[ वेदिमवर्द्धयित्वैव वा वेदेः पूर्वार्द्धमेकादशधा विभज्य एकादश अन्तरालानि कार्याणि ]

पक्षान्तरमाह—

### पूर्वार्द्धं वा समं विभज्य ॥७॥

अथवा न वेदिर्वर्धनीया, किन्तु वेदेः पूर्वार्द्धं यावदुक्तपरिमाणमेव एकादशधा समशो विभज्य तत्र एकादश यूपान्निखनेत् ॥७॥

### पक्षसम्मिता वाऽग्नौ ॥८॥

अग्नौ = चयने पक्षसम्मिता = यावत् पक्षयोः परिमाणम्, तावति यूपैकादशिनी अवस्थापनीयेत्यर्थः। अयं भावः। अग्निचयने उत्तरवेद्यामिष्टकाभिः श्येनपक्षं सम्पाद्य तदुपर्याहवनीयाग्निं प्रतिष्ठाप्य तत्रैव होमाः क्रियन्ते। तत्र श्येनपक्ष्याकारस्य पक्षपुच्छादिकं सर्वं भवति। यथा श्येनः पक्षी स्वौ पक्षौ पुच्छं च सम्यक् प्रसार्य अधोमुखः शेते, तद्वत् स्थण्डिलं कल्पनीयम्। तत्र मध्ये आत्मा, दक्षिणत उत्तरतश्च पक्षौ प्रसारितौ वर्त्तेते। एतस्य पक्ष्याकारस्य पुरतो यूपैकादशिनी निखातव्या। तत्रापि आत्मनः पुरस्तात् अग्निष्टोमयूपो निखेयः। दक्षिणोत्तरपक्षयोः पुरस्तात् अवशिष्टा दश यूपा निखेयाः। एवं च प्रसारितयोः पक्षयोर्यावत्परिमाणं भवति तावत्येव परिमाणे यूपैकादशिनी परिसमापनीया इति ॥८॥

[ यूपैकादशिनीपक्षे यूपाहुत्यादीनां सकृत्करणम् ]

### यूपाहुत्यभ्यादान-यवावपनानि सकृत् ॥९॥

यूपैकादशिन्यां यूपाहुतिः, अभ्यादानम्, यवावपनं चेत्येतानि सकृद् भवन्ति। यूपाहुत्यादीनामारादुपकारकत्वेन प्रयाजादिवत् सकृदनुष्ठितैरेव तैरुपकारसिद्धेरिति भावः ॥९॥

### भेदेनान्यत्सान्निपातितत्वात् ॥१०॥

अन्यत् परिलेखनाद्यावटहोमान्तं कर्म प्रत्यवटमनुष्ठेयम्। कुतः ? सान्निपातितत्वात्। संस्कारकर्मत्वेन संस्कारस्य प्रतिसंस्कार्यमावर्त्तनीयत्वात्। एवं परिव्ययणाद्यपि प्रतियूपं कर्त्तव्यम् ॥१०॥

---

नीलः ससशफो व्यङ्गः शुक्लवर्णस्तथैव च । दारिद्र्यं पुत्रनाशश्च च मरणं चैव तादृशे ॥११॥
एकवर्णास्त्रयः पादास्तुरीयस्त्वन्यथा भवेत्। स च्छागो मुसली नाम अधस्तान्नयते कुलम् ॥१२॥
कृष्णाङ्गः कृष्णपूर्वार्द्धः कृष्णैः पादैः प्रतिष्ठितः। छागो वैश्रवणो नाम सौभाग्यायोपतिष्ठति ॥१३॥
न दन्ताभ्यां न शृङ्गाभ्यां छागः पन्नद उच्यते। यः प्रयुन्नामदश्छागः स पन्नद इति स्मृतः ॥१४॥
त्रिःपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम्। वार्ध्रीणसं तु प्राहुर्वर्जयेद्यज्ञकर्मणि ॥१५॥
तस्मादेवं विदित्वा तु लक्षणं पशुयूपयोः। यज्ञविद्यज्ञकर्माणि सोऽध्वर्युः कर्त्तुमर्हतीति ॥१६॥

[ यूपैकादशिन्यां यूपावटपरिलेखने क्रमः ]

यूपैकादशिनीपक्षे दक्षिणत आरभ्य उदक्संस्थन्यायेन यूपावटपरिलेखने प्राप्ते आह—

**मध्यमं परिलिख्योत्तरं, दक्षिणं वा, व्यत्यासमितरान् ॥११॥**

वेदेः पूर्वार्द्धयंशङ्कुस्थाने प्रथमं मध्यमं यूपावटं परिलिख्य ततस्तस्योत्तरं यूपावटं परिलिखेत्। अथवा मध्यमं परिलिख्य तस्माद्दक्षिणं यूपावटं परिलिखेत्। इतरान् नव यूपावटान् व्यत्यस्य व्यत्यस्य परिलिखेत्।

अयमर्थः—उत्तरं वेति पक्षे प्रथमं मध्यमं परिलिख्य तस्मादुत्तरं द्वितीयम्, मध्यमाद्दक्षिणं तृतीयम्, द्वितीयादुत्तरं चतुर्थम्, तृतीयाद्दक्षिणं पञ्चमम्, चतुर्थादुत्तरं षष्ठम्, पञ्चमाद्दक्षिणं सप्तमम्, षष्ठादुत्तरमष्टमम्, सप्तमाद्दक्षिणं नवमम्, अष्टमादुत्तरं दशमम्, नवमाद्दक्षिणमेकादशम् इति।

अथ दक्षिणं वेति पक्षे मध्यमं परिलिख्य तद्दक्षिणं द्वितीयम्, मध्यमादुत्तरं तृतीयम्, मध्यमादुत्तरं तृतीयम्, द्वितीयाद्दक्षिणं चतुर्थम्, तृतीयादुत्तरं पञ्चमम्, चतुर्थाद्दक्षिणं षष्ठम्, पञ्चमादुत्तरं सप्तमम्, षष्ठाद्दक्षिणमष्टमम्, सप्तमादुत्तरं नवमम्, अष्टमाद्दक्षिणं दशमम्, नवमादुत्तरमेकादशमिति ॥११॥

**आवटहोमात्करोति ॥१२॥**

परिलेखनाद्यवटहोमान्तं ( ६।२।८-२० ) पदार्थानुसमयेन कुर्यात्। पदार्थानुसमयकाण्डानुसमययोः स्वरूपं पूर्वमुक्तम् (१।१।५।१०) ॥१२॥

[ यूपैकादशिनीपक्षे अञ्जनाद्येकैकस्य यूपस्य ]

**अञ्जनाद्याचषालेक्षणात्कृत्वैकैकस्य ॥१३॥**

एकैकस्य यूपस्याञ्जनादि चषालेक्षणान्तं कर्म (६।३।१२) काण्डानुसमयेन कृत्वा कृत्वा वक्ष्यमाणं कर्म कुर्यात् ॥१३॥

[ अग्निष्ठेतरेषां यूपानां सुत्यादिने एव उच्छ्रयणादिकम् ]

**श्वो वा दक्षिणोत्तराणामवगूहनान्तमालम्भनासम्भवात् ॥१४॥**

अग्निष्ठाद्यूपात् दक्षिणोत्तराणां यूपानामुच्छ्रयणादि स्वर्ववगूहनान्तं कर्म श्वो वा = सुत्यादिन एव वा कर्तव्यम्, नाद्य = औपवसथ्येऽहनि। कुतः ? आलम्भनासम्भवात्। यूपोच्छ्रयणादिकर्मणः पश्वालम्भनार्थत्वात्। अद्य च औपवसथ्यदिनत्वेन सुत्याकालिकस्य सवनीयपश्वालम्भनस्य कर्त्तव्यत्वाभावादित्यर्थः ॥१४॥

इयांस्तु विशेषः—

**परिवीय मध्यममवगूहनान्तम् ॥१५॥**

यदा सौत्येऽहनि यूपान्तरेषु अञ्जनादि कर्म कर्त्तुं प्रारभ्यते तदा प्रथमतो मध्यमं यूपं त्रिवृता रशनया परिवीय ततः पार्श्वस्थयूपेषु अञ्जनादि स्वर्ववगूहनान्तं कर्म कुर्यात् ॥१५॥

[ यूपरशनानामग्निष्ठे एव परिवेष्टनं यूपैकादशिनीपक्षे ]

**अग्निष्ठे चैषाᳬ रशनाः परिवेष्ट्य वासयति ॥१६॥**

पक्षद्वयेऽपि प्रथमतो दक्षिणोत्तरयूपानां रशनाः परिव्ययणार्थाः अग्निष्ठे परिवेष्ट्य स्थापयेत् ॥१६॥

**अभ्यञ्जनप्रभृति करोति ॥१७॥**

यद्यप्युत्तरेद्युरुच्छ्रीयन्ते तथापि पूर्वेद्युरेवावटहोमान्तं कृत्वा उत्तरेद्युरभ्यञ्जनादि कुर्यात् ॥१७॥

**यथाखातमुच्छ्रयति ॥१८॥**

खननक्रमेण यूपानुच्छ्रयेत् ॥१८॥

[ यूपैकादशिन्यां सर्वदक्षिणो यूप उच्चतमः ]

**वर्षिष्ठो दक्षिणो,ऽनुपूर्वा इतरे ॥१६॥**

यूपानां मध्ये दक्षिणो यूपो दीर्घतमः स्यात्। ततः क्रमशो न्यूना भवेयुः। इतरे यूपाः सर्वोत्कृष्टं सर्वदक्षिणं यूपं निकृष्टप्रमाणेनानुगता भवेयुः। सर्वदक्षिणो यूपो वर्षिष्ठः, तदपेक्षया तदुत्तरो हीनः, तदपेक्षया तदुत्तरो हीनः, तदपेक्षया तदुत्तरो हीनः, तदपेक्षया ततोऽप्युत्तर इत्येवमेकादशो यूपः सर्वनिकृष्टः कार्यः। एवं च मध्यमं परिलिख्य उत्तरं लिखेदित्यस्मिन्पक्षे मध्यम एकविंशत्यरत्निः, तदुत्तरो विंशत्यरत्निः। मध्यमाद्दक्षिणो द्वाविंशत्यरत्निः, चतुर्थः १६ अरत्निः, पञ्चमः २३ अरत्निः, षष्ठः १८ अरत्निः, सप्तमः २४ अ०, अष्टमः १७ अ०, नवमः २५ अ०, दशमः १६ अ०, एकादशः षड्विंशारत्निरिति।

दक्षिणं वेति पक्षे मध्यमः २१ अरत्निः, मध्यमाद्दक्षिणो द्वाविंशारत्निः, मध्यमादुत्तरः २० अ०, चतुर्थः २३ अ०, पञ्चमः १६ अ०, षष्ठः, २४ अ०, सप्तमः १८ अ०, अष्टम २५ अ०, नवमः १७ अ०,दशमः २६ अ०,एकादशः षोडशारत्निरिति। उपशय-यूपः पञ्चारत्निः। पत्नीयूपो नाभिप्रमाण इति। अत्र अपरिमितपक्ष एव भवति, न तु पञ्चारत्निः। एवं च यूपैकादशिन्यां "पञ्चारत्निः पञ्चदशपर्यन्तः सोमे" (६।१।२६) इत्यस्य अपरिमितपक्षस्यैव प्राप्ततया ह्रासस्य च अरत्निवशेनैव कर्त्तव्यतया सर्वदक्षिणो यूपः षड्विंशत्यरत्निपरिमाणकः, तत उत्तरः पञ्चविंशत्यरत्निपरिमाणकः। एवं रीत्या एकैकेनारत्निना न्यूना यूपा इति कृत्वा अन्तिम एकादशो यूपः षोडशारत्निपरिमितो भवति ॥१६॥

[ तीव्रसुति तु अग्निष्ठ उच्चतमः, प्रागगता यूपपङ्क्तिश्च ]

**तीव्रसुत्यग्निष्ठः, प्राची च ॥२०॥**

तीव्रसुन्नामकः कश्चित्सोमयागः। तत्रापि यूपैकादशिनी प्राप्ता। तत्र अग्निष्ठो यूपो वर्षिष्ठो भवेत् यूपैकादशिन्याम्। आहवनीयस्य पुरोऽवस्थितो यूपोऽग्निष्ठ इत्युच्यते। इतरे च क्रमशो न्यूनाः। तत्र च तेषां यूपानां प्रागपवर्गता कर्त्तव्या। एवं च अग्निष्ठो यूप एव प्रथमः। ततः प्राच्यां दश यूपाः खातव्याः। ते च अग्निष्ठापेक्षया एकैकेनारत्निना क्रमशो न्यूना भवेयुः। तदर्थं च तावती वेदिर्न वर्धनीयेत्युक्तं प्राक् (६।२।४१।)। पूर्वमीमांसायां तृतीयाध्याये सप्तम पादे षष्ठाधिकरणे मयूखमालिकायां च सुस्पष्टमिदम् ॥२०॥

**यथायूपं वेदिवर्द्धनम् ॥२१॥**

रथाक्षमात्रान्तरालपक्षे यथा यूपान्तरालवृद्धिरेवं वेदेरपि वृद्धिः स्यात् ॥२१॥

[ उपशयाख्यस्य यूपस्य निधानम् ]

**वर्षिष्ठाद्दक्षिणं वितष्टं द्वादशं निदधा "त्येष त" इति ॥२२॥**

यूपैकादशिनीपक्षे द्वादशं यूपं सकलमपि अतष्टम् अतिशयेन महतो दक्षिणयूपाद्दक्षिणं

भूमौ स्थापयेत्, न निखन्यात् । अयमेव उपशयो यूप इत्युच्यते । अस्य च प्रयोजनम् "आरण्यं पशुमाखुं वोपशये निर्दिशेत्" ( आप० श्रौ० १४।७।१ ) इत्युक्तम् ।

केचिदत्र यूपधर्माणां करणं नेच्छन्ति । तेषां च यूपकार्यपशुनियोजनप्रयुक्तत्वात् । नियोजनस्यात्राभावात् इति तेषामाशयः । तन्न युक्तम् । यूपधर्माणां प्रोक्षणादीनामपि न यूपकार्यं पशुनियोजनप्रयुक्तत्वम् । किन्तु यूपस्वरूपनिष्पादकत्वमेव । एवं चात्रापि तन्निष्पत्त्यर्थं तेषामनुष्ठानं युक्तमेवेति ॥२२॥

[ उपशययूपस्य प्रयोजनरहितं कर्मणामनुष्ठानम् ]

**प्रोक्षणाद्यावगूहनात्करोत्यनर्थलुप्तम् ॥२३॥**

अस्य उपशययूपस्य प्रोक्षणादारभ्य स्वर्वंवगूहनपर्यन्तान् संस्कारान् अनर्थलुप्तं यथा तथा कुर्यात् । न विद्यतेऽर्थो यस्यासावनर्थः । अनर्थोऽप्रयोजनो लुप्तो यत्र तत् । तेन निखननाभावात् निखननार्थानामवटपरिलेखनादीनामभावः ॥२३॥

**अनुच्छ्रित्य वोत्तरम् ॥२४॥**

अथवा उत्तरं यूपमनुच्छ्रित्य उपशयं दक्षिणतो निदध्यादुच्छ्रित्य वा ॥२४॥

[ सवनीयपश्वालम्भो यूपोच्छ्रयणक्रमेण ]

**यथोच्छ्रितम्ँ० सवनीयानालभत एकतृणेनोपाकृत्याऽऽग्नेय–सारस्वत–सौम्य–पौष्ण–बार्हस्पत्य–वैश्वदेवै-न्द्र-मारुतै-न्द्राग्न-सावित्र-वारुणान् ॥२५॥**

यूपैकादशिनीपक्षे यूपोच्छ्रयणक्रमेण एकेनैव तृणेनोपाकृत्य सर्वान् पशून् स्पृष्ट्वा आग्नेयादीन् सवनीयानेकादश पशूनालभेत । इयमेव पश्वेकादशिनीत्युच्यते । अस्याश्च पश्वेकादशिन्याः सवनीयाग्नेयेन पशुना सह विकल्पः ॥२५॥

[ एकयूपपक्षे पश्वेकादशिन्या नियोजनक्रमः ]

**एकयूपे पश्वेकादशिन्यामाग्नेयं नियुज्य तस्मिंस्तस्मिन्नितरानुदीचः ॥२६॥**

पश्वेकादशिन्यामेकयूपपक्षे तस्मिन् यूपे आग्नेयं नियुज्य इतरान् सारस्वतादीन् तस्मिन् तस्मिन् आग्नेयादौ पूर्वपूर्वनियुक्ते उदीचः = उत्तरमुत्तरं गलगलिकया नियुञ्ज्यात् । तेन यूपे आग्नेयः, तस्य गले उत्तरतः सारस्वतः, तस्य गले सौम्यः, तस्य गले पौष्णः, पौष्णस्य गले बार्हस्पत्यः । एवं नियुक्तस्य तत्तत्पशोर्गले उत्तरतः सर्वान्नियुञ्जीत ॥२६॥

[ संज्ञपनार्थं पशुनयनक्रमः ]

**आग्नेयः प्रथमो गच्छत्यन्वारब्धो,ऽनुपूर्वा इतरे ॥२७॥**

आग्नेयः पशुः प्रतिप्रस्थात्राऽन्वारब्धो गच्छति । इतरे दश सारस्वतादयोऽनन्वारब्धा अनुगामिनो भवेयुः संज्ञपनार्थम् । स्तोमायने तु युगपदेव गमनं, नानुपूर्व्येण । अत्रैवानुपूर्व्या विधानात् ॥२७॥

[ पशुसंज्ञपने क्रमः ]

**दक्षिणं च निघ्नन्त्येनमुत्तरमुत्तरमितरान् ॥२८॥**

आग्नेयं दक्षिणं निघ्नन्ति । तस्योत्तरत इतरान् पशूनुत्तरमुत्तरं घ्नन्ति यथाक्रमम् ॥२८॥

[ उपप्रैषादीनां तन्त्रेणानुष्ठानं यूपैकादशिन्याम् ]

**समानमुपप्रेष्य-परिपशव्ये-संज्ञपयान्वगन्-प्रोक्षण्युल्मुकासि-शामित्रान्तर्द्धान-प्रच्छेद-स्तोक-संप्रैष-शमित्रनुशासन-संवाद-वनस्पति-स्विष्टकृदिडाः प्रभूत्वात् ॥२९॥**

पशुगणे उपप्रैषादि इडान्तं समानं = तन्त्रेण भवति, न प्रतिपश्वावर्त्तते । कुतः ? प्रभूत्वात् । सर्वाणीमानि सकृत् कृतान्यपि हि उपकर्तुं शक्नुवन्ति ॥२९॥

**दिग्व्याघारणार्थं समासिच्य ॥३०॥**

सर्वान् वसाहोमशेषान् कचित्पात्रान्तरे स्थापितान् जुह्वां समासिच्य सहैव दिग्व्याघारणं कुर्यात् ॥३०॥

[ उखा-हृदयशूलादीनामपि तन्त्रता ]

**उखा, शूलं, वपाश्रपण्यौ च ॥३१॥**

चकारात्प्रभूत्वादित्यनुकृष्यते । उखा, शूलं, वपाश्रपण्यौ च तन्त्रेण भवितुमर्हन्ति । एकस्यामप्युखायामनेकेषां पशूनां श्रपणस्य संभवात् । एवमेव शूले वपाश्रपण्यां च बोध्यम् । इदं च (१।१४) पूर्वमीमांसायां निरूपितम् ॥३१॥

इमं सिद्धान्तमाक्षिपति पूर्वपक्षी—

**न, वसासन्देहात् ॥३२॥**

न उखादीनां तन्त्रता भवितुमर्हति । कुतः ? वसासन्देहात् । उखाया एकत्वे वसायां सन्देहः स्यात्, कस्य पशोरियं वसेति । अत उखाया भेदः । तद्भेदाच्च शूलवपाश्रपण्योरपि भेद आवश्यकः ॥३२॥

शूलादीनां भेदोऽपि कचिद् दृश्यत इत्याह—

**सौत्रामणीदर्शनाच्च ॥३३॥**

सौत्रामण्यां भेदेन दर्शनादित्यर्थः । "शूलेन मासरैश्चावभृथमभ्युपैति" इति वाक्ये शूलबहुत्वदर्शनात् । पशुभेदे शूलभेदस्याप्यावश्यकप्रतीतेरिति भावः ॥३३॥

इममाक्षेपं सिद्धान्ती खण्डयति—

**नाविरोधात् ॥३४॥**

नैतदस्ति शूलादीनां भेद इति । कुतः ? अविरोधात् । एकस्यामेवोखायां सर्वेषां पशूनां श्रपणविरोधाभावात् । वसानां संसृष्टत्वेऽपि क्षीरनीरविवेकिन्या देवतायाः तत्तद्वसाहोमकाले स्वस्वहविःसंबन्धिवसाग्राह्यत्वोपपत्तेः ॥३४॥

[ सौत्रामण्यां पाकवैषम्यादुखाभेदः ]

**पाकवैषम्यात्सौत्रामण्याम् ॥३५॥**

सौत्रामण्यां न पशुभेदप्रयुक्त उखाभेदः । किन्तु पाकवैषम्यप्रयुक्तः । तत्र हि छागः, ऋषभः, मेषः इति पशूनां भिन्नत्वात् कस्य चिद्वदानानि शीघ्रं पच्यन्ते, कस्य चिच्चिरेण, इति तत्र सह श्रपणे केषां चिदशृतत्वं, केषां चिदधिकशृतत्वं च स्यात् । अतः सौत्रामण्यां भेदो युक्तः । एवं च यत्रानेकजातीयपशुषु पाकवैषम्यं, तत्रोखादीनां भेद एव ॥३५॥

[ मनोता-वसाहोमयोः कालभेदाद्भेदः ]

**मनोतावसाहोमौ पृथक्कालभेदात् ॥३६॥**

मनोताहोमो वसाहोमश्च प्रतिपशु पृथग्भवतः। कुतः? कालभेदात्। तत्पशूनां होमकालस्य भिन्नत्वात् ॥३६॥

[ पत्नीयूपोच्छ्रयणम् ]

**यूपैकादशिन्यां वशावपामार्जनान्तं कृत्वा शालाद्वार्ये पत्नीयूपोच्छ्रयणं नाभिमात्रस्य ॥३७॥**

यूपैकादशिनीपक्षे वशा अनूबन्ध्या। सा च ज्योतिष्टोमे अन्ते कर्त्तव्यत्वेन विहिता। तस्या वपामार्जनान्तं कृत्वा ततः शालाद्वार्ये पत्नीयूपोच्छ्रयणं कुर्यात्। पत्नीयूप इति समाख्या। अस्मिन् यूपे पात्नीवतः पशुर्बध्यते। अयं च यूपः पञ्चहस्त एव कार्य इत्युक्तं प्राक् ॥३७॥

तस्मिन् पात्नीवते पशौ इतिकर्त्तव्यतां विदधाति—

**परिस्तरण-पात्रसꣳसादन-प्रोक्षणाऽऽज्यनिर्वपणाऽधिश्रयणानि कृत्वा स्फ्यादि करोति ॥ ३८ ॥**

इति कात्यायनीये श्रौतसूत्रे सरलवृत्तौ अष्टमाध्याये अष्टमी कण्डिका ॥८॥

---

[ पत्नीयूपे त्वाष्ट्रः पशुः, तस्य पर्यग्निकृतस्योत्सर्गः ]

**त्वाष्ट्रो वस्तः पर्यग्निकृतमुत्सृजन्ति ॥१॥**

त्वष्टृदेवत्यो बस्तः = प्रजनयिता पशुरालब्धव्यः ॥ १ ॥

पात्नीवते पशौ च "पर्यग्निकृतं पात्नीवतमुत्सृजन्ति" इति यदुत्सर्गं विधानं, तत् पर्यग्निकरणानन्तरं द्रव्योत्सर्गो विधीयते । अतश्च शेषं कर्म द्रव्यान्तरेण समापनीयम्? उत तावति एव कर्मोत्सर्ग इति संशये पूर्वपक्षयति—

**आज्येन सꣳस्थापयन्तीति श्रुतेः ॥२॥**

"आज्येन सꣳस्थापयन्ति" इति श्रुत्या पर्यग्निकृतस्य पशुद्रव्यस्य उत्सर्गो विधीयते। अतो द्रव्योत्सर्गोऽयं, न कर्मोत्सर्गः ॥२॥

किंच—

**पशुपर्यग्निकरणाच्च ॥३॥**

पर्यग्निकृतस्य पशुरूपद्रव्यस्यैवोत्सर्गविधानादित्यर्थः। तेन द्रव्योत्सर्गः ॥३॥

एवं प्राप्ते सिद्धान्तयति—

**तदन्तं वा कर्मनामधेयात् ॥४॥**

पर्यग्निकरणान्तमेव कर्मोत्सृजेत्। कुतः? नामधेयात्। "पर्यग्निकृतं पात्नीवतमुत्सृजन्ति" इति श्रुतस्य पात्नीवतस्य कर्मनामधेयत्वात्। नहीदं पशुविशेषणम्। येन तस्य उत्सर्गो विधीयेत। कर्मनामधेयं हीदम्। अतश्च कर्मण एवोत्सर्गविधानात् तत्रैव कर्म समापनीयम्।

आज्येन संस्थापयन्तीति तु न पात्नीवतशेषस्य संस्थापनं विदधाति । किन्तु आज्यद्रव्यकं कर्मान्तरमेव तेन विधीयते । एतच्च जैमिनीयेऽपि (२।३।४) स्पष्टम् ॥४॥

इतश्च कर्मोत्सर्गः प्रतीयत इत्याह—

**त्वष्टृवनस्पत्योः प्रयाजेष्विज्यादर्शनात् ॥ ५ ॥**

"यत्त्वष्टारं वनस्पतिं चावाहयति क्वेमौ यजति" इति प्रश्नपूर्वकं "त्वाष्ट्री नवमी प्रयाजेज्या, वानस्पत्या दशमी, कैनौ भागिनौ करोति" इति श्रुतौ आवाहनकाले त्वष्टुर्वनस्पतेश्च यागावश्यम्भावात् कुत्रानयोर्यागः क्रियते इति पृष्ट्वा पशौ प्रयाजानामेकादशत्वात् नवमप्रयाजस्य त्वष्टृदेवताकत्वात् तदिज्ययैव अनयोरिज्या सम्पद्यत इति समाधानं दृश्यते । पात्नीवतस्य पर्यग्निकरणान्ते उत्सर्गे कृते एव प्रश्नोऽयमुपस्थितो भवितुमर्हति, उत्तरं च सङ्गच्छेत । अतः पर्यग्निकरणान्ते उत्सर्ग एव ॥५॥

[ वपाहवनानन्तरं वसतीवरीसंज्ञकानामपां ग्रहणम् ]

**अग्नीषोमीयस्य वपामार्जनान्ते वसतीवरीग्रहणꣳ स्यन्दमानानामनस्तमिते ॥६॥**

अग्नीषोमीयस्य पशोर्वपामार्जनान्ते कर्मणि कृते सति अनस्तमिते सूर्ये नद्यादौ वहन्तीनामपां वसतीवरीनाम्नां ग्रहणं कुर्यात् कुम्भेषु ।

अभिषुतस्य सोमस्य वर्द्धनार्थं याः आपः सोमरसेन सह संसृज्यन्ते ता वसतीवर्य उच्यन्ते ॥६॥

**अस्तमितश्चेन्निनाह्या,त्पुरेजानश्चेत् ॥७॥**

यदि ग्रहणात्पूर्वं सूर्योऽस्तमियात् तदा स्वगृहे एव मणिकाद् गृह्णीयात्; यदि यजमानः पूर्वं सोमेन इष्टवान् स्यात् । नीचैर्भूमौ निहननीयो निखननीयो निनाह्यो मणिकः ॥७॥

**अनीजानोऽन्यस्यापि समीपावसितस्य ॥८॥**

यदि स्वयं यजमानः पुराऽकृतसोमः स्यात् तदा अन्यस्यापि कृतसोमस्य पार्श्ववर्त्तिनो निनाह्याद् गृह्णीयात् ॥८॥

**उभयाभाव उल्कुषीꣳ हिरण्यं वोपर्युपरि धारय"न्हविष्मती" रिति(१) ॥९॥**

यदा स्वयमपि नेष्टवान्, समीपवासी च नेष्टवान्, तदा उल्कां हिरण्यं वा स्यन्दमानानामपामुपरि धारयन्वसतीवरीर्गृह्णीयात् । इमाश्च प्रवाहाभिमुखं तिष्ठता ग्रहीतव्याः । "प्रतीपं तिष्ठन् गृह्णाति" ( तै. सं. ६।२ ) इति दर्शनात् ॥९॥

[ वसतीवरीणामपां निधानम् ]

**"अग्नेर्व" इति (२) निदधाति शालाद्वार्यमपरेण ॥१०॥**

ता आनीता वसतीवरीः शालाद्वार्यस्य पश्चिमतो निदध्यात् ॥१०॥

**सुब्रह्मण्यां च प्रेष्यति पैतापुत्रीयाम् ॥११॥**

"सुब्रह्मण्य सुब्रह्मण्यामाह्वय पैतापुत्रीयाम्" इत्येवं पितापुत्रोर्नामकीर्त्तनसंबन्धिनीं सुब्रह्मण्यां प्रेष्येत् ॥११॥

---

(१) ओं हविष्मतीरिमाऽ आपो हविष्माँ आ विवासति । हविष्मान्देवोऽ अध्वरो हविष्माँऽअस्तु सूर्यः६।२२

(२) ओं अग्नेर्व्वोऽपन्नगृहस्य सदसि सादयामि ६।२४

[ अस्तसमये प्राप्ते वपाहोमात्प्रागपि वसतीवरीग्रहणम् ]

आदित्याभ्यये ऽहुतायामपि ॥१२॥

वपाहोमात्पूर्वमादित्यास्तमये अहुतायामपि वपायां वसतीवरीर्गृह्णीयात् ॥१२॥

[ अग्नीषोमीयपशोर्दक्षिणाग्निहोमान्तता ]

दक्षिणाग्निहोमान्तमग्नीषोमीयमस्तमिते सꣳस्थाप्य व्युत्क्रामतेत्याह त्रिः ॥१३॥

अग्नीषोमीयं पशुं दक्षिणाग्निहोमान्तमस्तमिते सूर्ये समाप्य "व्युत्क्रामत" इति प्रैषं त्रिर्ब्रूयात् ॥१३॥

शालाद्वार्यमपरेणास्ते पत्न्युत्तरवेदिमपरेण यजमान उपस्थे सोमं कृत्वा ॥१४॥

यजमान उत्सङ्गे सोमं कृत्वा कृत्वोत्तरवेदिमपरेणोपविशेत् ॥१४॥

[ वसतीवरीहरणम् ]

शालाद्वार्यमपरेण वसतीवरीः परिहरति ॥१५॥

वसतीवरीकलशं हस्ताभ्यामादाय शालाद्वार्यस्य पश्चादेव नीत्वा गच्छेदध्वर्युः ॥१५॥

[ वसतीवरीनिधानम् ]

दक्षिणेन निहृत्य दक्षिणस्यामुत्तरवेदिश्रोणौ निदधाती- "न्द्राग्न्यो"रिति (१) ॥१६॥

वसतीवरीरादाय दक्षिणेन शालायाः द्वारेण शालाया निष्काश्य मार्जालीयं दक्षिणेन नीत्वा दक्षिणस्यामुत्तरवेदिश्रोणौ आसादयेत् ॥१६॥

आहृत्य स्थाने निदधाति ॥१७॥

वसतीवरीरुत्तरवेदेस्तेनैव पूर्वोक्तमार्गेणाहृत्य शालाद्वार्यमपरेण निदध्यात् ॥१७॥

कलशं पत्न्यालभते ॥१८॥

पत्न्या अग्रे सादितं वसतीवरीकलशं पत्नी स्पृशेत् ॥१८॥

उत्तरेण परिक्रम्योत्तरस्यां पूर्ववत् ॥१९॥

ततो वसतीवरीकलशमादाय विहारमुत्तरेण परिक्रम्य उत्तरस्यां वेदिश्रोणौ निदध्यात् पूर्ववदिन्द्राग्न्योरिति मन्त्रेण ॥१९॥

मित्रावरुणयोरिति वा ॥२०॥

अनेन मन्त्रेण (२) वा वसतीवरीरासादयेत् ॥२०॥

"विश्वेषां देवाना"मित्याग्नीध्रे (३) ॥२१॥

उत्तरवेदिश्रोणेः सकाशाद्वसतीवरीरादायाग्नीध्रीयस्य अग्नेः पश्चान्निदध्यात् ॥२१॥

---

(१) ओं इन्द्राग्न्योर्भागधेयी स्थ ६।२४

(२) ओं मित्रावरुणयोर्भागधेयी स्थ ६।२४

(३) ओं विश्वेषां देवानां भागधेयी स्थ । अमूर्या ऽउप सूर्ये याभिर्वा सूर्यः सह । ता नो हिन्वन्त्वध्वरम् ६।२४

[ सोमस्यासन्द्यां निधानम् ]

**सोमं चासन्द्याम् ॥२२॥**

सोमं चासन्द्यामाग्नीध्रे एव स्थापयेत् ॥२२॥

[ सोमरक्षणम् ]

**दीक्षितश्च तत्र ताᳬ रात्रिᳫं सोमᳫं रक्षति ॥२३॥**

तस्यां कृत्स्नायां रात्रौ जागृतो दीक्षितः आग्नीध्रे सोमं रक्षेत् ॥२३॥

**सुब्रह्मण्यां च प्रेष्यति ॥२४॥**

पैत्रापुत्रीयाम् ॥२४॥

**परिवाप्यायै दोहनम् ॥२५॥**

प्रतिसवनं सवनीयेषु सरस्वत्यै दध्नो विहितत्वात् परिवापं दधि अर्हतीति परिवाप्या सरस्वती । तदर्थं दधिनिष्पत्तये दोहनं कुर्यात् । "लाजान्परिवापम्" ( आप० श्रौ० १२।४।१३ ) इति कल्पान्तरम् ॥२५॥

**आवसथो-न्मर्दना-ऽलङ्करण-दन्तप्रक्षालनान्यध्वर्योरदीक्षितस्याध्वर्योर-दीक्षितस्य ॥२६॥**

आवसथो वसत्यर्थं गृहम् । उद्वर्त्तनमभ्यङ्गार्थं तैलादि । अलङ्करणं भूषणम् । दन्त-प्रक्षालनं दन्तधावनकाष्ठम् । ताम्बूलमिति केचित् । एतेषामदीक्षितमध्वर्युं प्रत्येव दानविधानात् अङ्गदक्षिणात्वं नास्ति । तादृशाध्वर्युसंस्कारमात्रमिदमित्यवगम्यते । तेन आवसथ्यस्य न स्वत्वनिवृत्तिपूर्वकं दानं कर्तव्यम्, किन्तु वसत्यर्थं स्थलमात्रं तात्कालिकं तस्यां रात्रौ शयनार्थं देयम् । द्विरभ्यासोऽध्यायसमाप्तिसूचनार्थः ॥२६॥

( इति चतुर्थमहः )

इत्यष्टमाध्यायस्य नवमी कण्डिका ॥९॥

इति कात्यायनश्रौतसूत्रे विद्याधरशर्मकृतायां सरलवृत्तौ अष्टमोऽध्यायः ।

# नवमोऽध्यायः ।

## ( अथ सौत्यं पञ्चममहः )

[ अपररात्रौ ऋत्विक्प्रबोधनम् ]

**अपररात्र ऋत्विजः प्रबोधयन्ति ॥१॥**

यस्मिन्दिनेऽग्नीषोमीयः पशुरनुष्ठीयते तस्य दीक्षाप्रभृतिचतुर्थदिनस्य रात्रेरपरस्मिन् भागे "ऋत्विजः प्रबुध्यध्वम्" इति प्रैषेण सुप्तानृत्विजः सौत्यकर्मकरणार्थं जागरयन्ति सयजमाना यजमानपुरुषाः ॥१॥

[ उदकोपस्पर्शपूर्वकं परिस्तरणादि कृत्वा सपृषदाज्यमाज्यग्रहणम् ]

**अप उपस्पृश्य शालाद्वार्ये परिस्तरण-पात्रसं०सादन-प्रोक्षणा-ऽऽज्यनिर्वपणाऽधिश्रयण-स्रुक्संमार्जनोद्वासनाऽवेक्षणानि कृत्वाऽऽग्नीध्र उत्पूय पश्वाज्यग्रहणम् ॥ २॥**

सर्वे ऋत्विजः कृतस्नानाः शालाद्वार्ये उदकं स्पृष्ट्वा सौत्यं कर्म प्रारभेयुः । सन्ध्योपस्थानादिकं तु मध्ये स्वकाले प्रातरेव कार्यं, नेदानीम् । तत्राध्वर्युः परिस्तरणादीनि कृत्वा आग्नीध्रीये आज्यं प्रोक्षणीश्चोत्पूय सपृषदाज्यमाज्यग्रहणं कुर्यात् ॥ २ ॥

[ आज्यादिकं हस्तेन गृहीत्वा आहवनीयदेशे गत्वा तत्र पाशुककर्मकरणम् ]

**आज्यान्यादाय सोमं चार्थवच्चाहवनीय इध्मप्रोक्षणादि करोति ॥ ३ ॥**

गृहीतान्याज्यान्यादाय, आग्नीध्रीये आसन्द्यां स्थापितं सोमं चादाय, ग्राव-द्रोणकलश-चमस-तुपात्र-सम्भरणी-परिप्लवादि च गृहीत्वाऽऽहवनीयसमीपे आगत्येध्मप्रोक्षणादि पाशुकं कर्म कुर्यात् ॥ ३ ॥

[ सवनीयपशौ सवनीयविकारे च एकवृत् स्तरणम् ]

**अग्नीषोमीयवत्स्तरणम् ॥ ४ ॥**

अग्नीषोमीयवदेव आहवनीयशालाद्वार्यदक्षिणाग्नीनाम् सकृत् स्तरणं कुर्यात्, न त्रिवृत् । सवनीयपशोरग्नीषोमीयपशुविकारत्वादेकवृत्स्तरणे प्राप्ते पुनर्विधानं सवनीयपशौ सवनीयपशुविकारे च एकवृत्स्तरणस्य नियमार्थम् । एवं च निरूढादिषु दार्शपूर्णमासिकमेव त्रिवृत् स्तरणमिति । वतिना एकवृत्स्तरणम ( का० श्रौ० ८।७।१३ ) इति लभ्यते ॥ ४ ॥

[ आज्यासादनान्ते कर्मणि कृते अभिषवार्थं सोमार्द्धस्य ग्रावसु निधानम् ]

**आज्यासादनान्तं कृत्वेषान्तरेणार्द्धसोममद्रिषु संमुखेषु निदधाति "हृदेत्वे"ति (१) ॥ ५ ॥**

आज्यासादनान्तं कृत्वा सोममादाय हविर्धाने प्रवेश्य दक्षिणस्य हविर्द्धानस्य ईषान्तरालेन अर्द्धाधिकं सोमं तृतीयसवनार्थं महांशुसहितं संमुखेषु अभिषवार्थपाषाणेषु चर्मण

---

( १ ) ॐ हृदे त्वा मनसे त्वा दिवे त्वा सूर्याय त्वा । ऊर्ध्वमिममध्वरं दिवि देवेषु होत्रा यच्छ । सोम राजन्विश्वास्त्वं प्रजाऽ उपावरोह ६।२६

उपरि स्थापितेषु रथादवतार्य सोमोपनहनवाससा सहैव पातयेत् । अवशिष्टस्य सोमस्य माध्यन्दिनसवनार्थमीषयोरुपर्येवावशेषणं, तस्य च वस्त्रान्तरेण सन्नहनं कर्तव्यम् । अद्रीणां मुखानि स्वबीर्यांसि भवन्ति ॥ ५ ॥

[ सोमोपस्थानम् ]

**"विश्वास्त्वा"मिति (१) विसृज्योपतिष्ठते ॥ ६ ॥**

यजमानः सोमात् स्वहस्तं निष्कृष्य सोममुपतिष्ठत् । विसर्गस्यालम्भपूर्वकत्वात्, आलम्भस्य च याजमानत्वाद्याजमानमिदमुपस्थानम् ॥ ६ ॥

[ अभिषवकाले अभिषवार्थानां पदार्थानामीषान्तरेणैवाहरणम् ]

**एतेनाहरणꣳ सोमार्थस्याभिषवे ॥ ७ ॥**

अभिषवे प्रारभ्यमाणे सोमोपयोगिनोऽभिषवार्थस्य द्रव्यस्य हिरण्य-ग्राव-निग्राभ्या-सम्भरणी-दशापवित्र-परिस्रवादिरूपस्य ( एतेऽभिषवार्थाः पदार्थाः ) ईषान्तरेण शकटस्य ईषे पूर्वमुक्ते । तन्मध्यादेव आहरणं कुर्यात् ॥ ७ ॥

[ आनयनमार्गेण नोद्धरणम् ]

**नोद्धरणं ततो, बहिर्द्धा भावात् ॥ ८ ॥**

ईषान्तरालेन यस्याहरणं कृतं, तस्य तैनेव मार्गेण निष्काशनं न कार्यम् । कुतः ? तथा क्रियमाणे यज्ञाद्बहिर्भावः स्यात् ॥ ८ ॥

[ निष्कासितरसस्य पुनर्नाधिषवणे प्रक्षेपः ]

**अभिषुतस्य चानवहरणं कृतत्वात् ॥ ९ ॥**

प्रातः सवनादौ रसनिष्काशनार्थं सोमानयनमीषान्तरालेन कर्त्तव्यमिति पूर्वमुक्तम् 'एतेन' ( ६।१।८ ) इत्यनेन सूत्रेण । एवमभिषुतपूर्वः सकृन्निस्सारितरसः सोमः क्वचित् स्थापितो भवति । तस्मादेव सोमात् पुनरपि तृतीयसवनार्थं रसो निष्काश्यते । अयमेव शुष्काभिषव इत्युच्यते । तदर्थं च यदा सोमो नीयते तदा ईषान्तरालेन नयनं न कर्त्तव्यम् । कुतः ? तस्य संस्काररूपत्वात् । तस्य च पूर्वं कृतत्वात् ॥ ९ ॥

[ पक्षिणां वाग्वदनात्पूर्वमेव प्रातरनुवाकोपाकरणम् ]

**प्राग्वाचं प्रवदितोः प्रातरनुवाकोपाकरणं देवेभ्यः प्रातर्यावभ्योऽनुब्रूहीति समिधमादधत् ॥ १० ॥**

रात्रौ सुप्ता मनुष्याः पक्षिणो वा ( आप० श्रौ० १२।३।१४ ) यदा उत्थाय वदितुमारभन्ते, ततः पूर्वमेव प्रातरनुवाकाख्यशस्त्रार्थं 'देवेभ्यः प्रातर्यावभ्योऽनुब्रूहि' इति संप्रैषं कुर्यात् । स च संप्रैषः आहवनीये समिधमादधता कर्त्तव्यः । होत्रा पठनीय ऋङ्मन्त्रसाध्यः स्तोत्र विशेषः शस्त्रम् ॥ १० ॥

**देवेभ्य इत्येके ॥ ११ ॥**

"देवेभ्योऽनुब्रूहि" इत्यनेन मन्त्रेणैके प्रातरनुवाकमुपाकुर्वन्ति ॥ ११ ॥

---

( १ ) ॐ विश्वास्त्वां प्रजाऽ उपावरोहन्तु ६।२५।

[ सुब्रह्मण्याप्रैषः ]

**सुब्रह्मण्यां च प्रेष्यति ॥ १२ ॥**

उत्करे स्थित्वा सुब्रह्मण्यां प्रेष्येत्। चकारात्पैतापुत्रीयाम् ॥ १२ ॥

[ प्रातरनुवाकस्य जाग्रतोऽध्वर्योः श्रवणम् ]

**प्रातरनुवाकं जाग्रदुपासीताध्वर्युः ॥ १३ ॥**

होत्रा शस्यमानं प्रातरनुवाकमध्वर्युर्जागरूकः सन् उपासीत। होतुः समीप एवोपविश्य शृणुयात् ॥ १३ ॥

[ स्वापो वाऽध्वर्योः ]

**स्वप्याद्वा ॥ १४ ॥**

अथवा अध्वर्युः प्रातरनुवाके शस्यमाने स्वप्यात् ॥ १४ ॥

[ आग्नीध्रस्य सवनीयहविषां निर्वापः ]

**अग्नीदैन्द्रमेकादशकपालं निर्वपति, हरिभ्यां धानाः, पूष्णे करम्भꣳ०, सरस्वत्यै दधि, मित्रावरुणाभ्यां पयस्याम् ॥ १५ ॥**

अग्नीत्प्रातरनुवाके होत्रा शस्यमाने एव इन्द्रदेवतमेकादशकपालं पुरोडाशं निर्वपेत्। सवनीयानां प्रथमं हविरिदम्। हरिभ्यां धाना इत्यादिकं द्वितीयादि हविरित्यर्थः ॥ १५ ॥

करम्भः सक्तवो मन्थः। "आज्यादिना वा संयुतः करम्भ इत्याचक्षते" ( आप० श्रौ० १२।४।१३ ) ॥१५॥

**इन्द्राय वा हरि-पूष-सरस्वति-मित्रावरुणवते धानादीनि यथासङ्ख्यम् ॥१६॥**

वाशब्दोऽवधारणे। यथासङ्ख्यं हरि-पूष-सरस्वति-मित्रावरुणवते इन्द्रायैव धानादीनि चत्वारि हवींषि स्युः। "सर्वं ऐन्द्रा भवन्ति" इति श्रुतेः। इन्द्राय हरिवते धानाः, इन्द्राय पूषण्वते करम्भः, इन्द्राय सरस्वतिवते दधि, इन्द्राय मित्रावरुणवते पयस्या ॥ १६ ॥

इति नवमाध्याये प्रथमा कण्डिका ॥१॥

---

[सोमसम्बन्धिपात्राणां खरे उन्नेतुः स्थापनम्]

**उन्नेतुः पात्रयोजनम् ॥ १ ॥**

प्रातरनुवाके शस्यमाने एव वक्ष्यमाणानां सोमपात्राणामासादनमुन्नेता खरे कुर्यात् ॥१॥

आसादने स्थलविशेषमाह—

**खरोत्तरपूर्वार्द्धे उपांश्वन्तर्यामयोः ॥ २ ॥**

खरो दक्षिणहविर्धानस्य पुरस्तादरत्निमात्रश्चतुरङ्गुलोच्चो मृदा कर्तव्य कर्तव्य इत्युक्तम्। तस्य ईशानकोणे उपांश्वन्तर्यामयोर्ग्रहयोः पात्रे सादयेत्। उपांश्वन्तर्यामशब्देन सोमरस उच्यते। स रसोः ययोः पात्रयोर्गृह्यते ते पात्रे आसादयेदित्यर्थः। एवं च उपांश्वन्तर्यामैन्द्रवायवादिशब्दाः मुख्यया वृत्या रसवाचकाः, लक्षणया च तदाधारपात्रबोधका अपि। अतश्च तत्तत्प्रकरणानुरोधेन रसवाचकत्वं पात्रवाचकत्वं च यथायथं बोध्यम् ॥२॥

दक्षिणमुपांशोः ॥ ३ ॥

तयोर्मध्ये उपांशुग्रहस्य पात्रं दक्षिणम्, अर्थात् अन्तर्यामपात्रमुत्तरं भवति ॥ ३ ॥

तदपरेण द्विदेवत्यानि प्रत्यञ्चि ॥ ४ ॥

उपांशुपात्रस्य पश्चात्समीप एव त्रीणि द्विदेवत्यानि पात्राणि प्रत्यक्संस्थानि योजयेत् । उपांशोः पश्चादैन्द्रवायवं पात्रम्, ततः पश्चान्मैत्रावरुणं, ततः पश्चादाश्विनं चासादयेदित्यर्थः ॥४॥

[ ग्रहपात्राणां लक्षणम् ]

तेषां द्विदेवत्यपात्राणां स्वरूपमाह—

रास्नावमैन्द्रवायवम् ॥ ५ ॥

रास्ना = मेखला विद्यते यस्य तत्, मेखलासदृशावयवयुक्तमैन्द्रवायवग्रहस्य पात्रं स्यात् ॥५॥

अजकावं मैत्रावरुणम् ॥ ६ ॥

अजकावशब्देन अजागलस्तनावुच्येते । तदाकारं चिह्नं यस्य तत्तादृशमजकावं मैत्रावरुणग्रहस्य द्विदेवत्यस्य पात्रं कुर्यात्। "गाण्डयजकात्संज्ञायाम्" (५।२।११०) इति मत्वर्थे वः ॥६॥

औष्ठमाश्विनम् ॥ ७ ॥

ओष्ठवत् कोणद्वययुक्तमाश्विनग्रहस्य पात्रं भवेत् ॥ ७ ॥

[ शुक्रादिपात्राणामासादनम् ]

दक्षिणपूर्वार्द्धे शुक्रामन्थिनोः ॥ ८ ॥

खरस्याग्नेयकोणे शुक्रामन्थिनोर्ग्रहयोः पात्रे सादयेत् ॥ ८ ॥

दक्षिणꣳ शुक्रस्य ॥ ९ ॥

तयोर्मध्ये शुक्रग्रहस्य दक्षिणम्, अर्थान्मन्थिग्रहस्य पात्रमुत्तरमासादयेत् ॥ ९ ॥

आग्रयणस्थालीं मध्ये ॥ १० ॥

खरस्य मध्ये आग्रयणस्थालीं सादयेत् । अत्र स्थाली मृन्मयी भवति । सा च चरुस्थाल्याः सदृशी । एवमुत्तरत्र यत्र स्थाल्याः विधानं, तत्र प्रायशो मृन्मय्य एव स्थाल्यः । स्थालीत एव तत्तद्देवताको रसो होमार्थं गृह्यते । एवं च स्थालीनां रसधारणमेव प्रयोजनम् ॥ १० ॥

दक्षिणोक्थ्यस्थाली सपात्रा ॥ ११ ॥

आग्रयणस्थाल्या दक्षिणतः सपात्रामुक्थ्यस्थालीं योजयेत् । तत्रापि दक्षिणतः स्थालीम् । पात्रं तस्याः पुरस्तात् । अत्र पात्रशब्देन ग्रहो विधीयते । तेन उक्थ्यग्रहसहितामुक्थ्यस्थाली सादयेदित्यर्थः ॥ ११ ॥

तथाऽऽदित्यस्थाल्युत्तरा ॥ १२ ॥

आग्रयणस्थाल्या उत्तरतः समीपे एव सपात्रामादित्यस्थालीं सादयेत् । तत्रापि श्रोण्यामादित्यस्थालीम्, पात्रं तस्याः पूर्वमासादयेत् ॥ १२ ॥

ऋतुपात्रे पूर्वे स्रुक्पुष्कराकृती उभयतोमुखे कार्ष्मर्यमये आश्वत्थे वा ॥१३॥

आग्रयणस्थाल्याः पूर्वे द्वे ऋतुग्रहपात्रे दक्षिणतो योजनीये । तत्र दक्षिणतोऽध्वर्युपात्रम्, उत्तरतः प्रतिप्रस्थातुः पात्रं योजयेत् । तयोः पात्रयोः स्वरूपमाह—स्रुचां पुष्करस्येव आकारो ययोस्ते, पार्श्वद्वयेऽपि उभयतोऽग्रे मूले च मुखं प्रणाली ययोस्ते द्विमुखे इत्यर्थः ।

श्रीपर्णीवृक्षविकारे पिप्पलकाष्ठनिर्मिते वा। मुखं प्रणाली। येन होमार्थं भक्षणार्थं च सोमो नीयते, तन्मुखमनयोरुभयत्र पार्श्वद्वयेऽपि भवति इत्यर्थः। मुखद्वयकरणमस्या भक्षणार्थम्। तेन एकस्मिन्मुखे अध्वर्योर्भक्षणम्, इतरेण च प्रतिप्रस्थातुः। एतदर्थमेवात्र मुखद्वयकरणम्। तेन तयोरूर्ध्वंप्रमाणमपि पाणिमात्रमुक्तं भवति। अनेनैव वचनेन पात्रान्तराणामेकमुखता भवतीति प्रतीयते ॥१३॥

ऊर्ध्वानीतराणि प्रादेशमात्राणि मध्यसङ्गृहीतानि ॥ १४ ॥

ऋतुपात्रव्यतिरिक्तानि अन्यानि उपांश्वादिपात्राणि उच्चतायां प्रादेशप्रमाणानि मध्यप्रदेशे सङ्कुचितानि उलूखलरूपाणि स्युः। एवं च उपांशुः, अन्तर्यामः, ऐन्द्रवायवः, मैत्रावरुणः, आश्विनः, शुक्रः, मन्थी, उक्थ्यः, आदित्य इति नवोलूखलाः ( ग्रहाः )। आग्रयणस्थाली, उक्थ्यस्थाली, आदित्यस्थाली, ध्रुवस्थाली वक्ष्यमाणा, इति चतस्रः स्थाल्यः ॥१४॥

आग्रयणादपरां परिप्लवाᳬं स्रुक्पुष्कराम् ॥ १५ ॥

आग्रयणस्थाल्याः पश्चिमतः परिप्लवां लघुपात्ररूपां द्रोणकलशात्सोमग्रहणयोग्यां स्रुक्सदृशमुखां सादयेत्। स्रुचः पुष्करं = मुखमिव पुष्करं यस्याः सा। द्रोणकलशमध्ये निहिता सती लघुत्वात् प्लवति तरतीति परिप्लवा। परिप्लवा च काष्ठमयी। सा च आघारहोमार्थत्वाद्वैकङ्कती। यथा स्रुगदण्डा, एवमाकारा परिप्लवा ( आप. श्रौ. १२.२.७ ) ॥१५॥

[ अक्षोपरिमार्गेण द्रोणकलशे जीवितशुक्लमेषलोमनिर्मितपवित्रनिक्षेपः ]

अधोऽधोऽक्षं प्रत्यञ्चं द्रोणकलशमत्युह्योपर्युपर्यक्षं पवित्रमस्मिन्करोति शुक्लं जीवोर्णानाम् ॥१६॥

दक्षिणस्य हविर्द्धानस्य योऽक्षः, तस्याधस्तात्समीपमार्गेणैव द्रोणकलशं प्रागग्रमेव प्रतीच्यां प्रेरयित्वा, अक्षस्योपरिमार्गेण अन्यतरतोदशम्, अरत्निमात्रं, प्रादेशसम्मितं, जीवस्य = जीवतो मेषस्योर्णाः जीवोर्णाः। तासां निर्मितम्, पवित्रं प्रत्यक् नीत्वा द्रोणकलशे निदध्यात्। द्रोणकलशो वारणकाष्ठमयः। द्रोणाकृतिः कलशो द्रोणकलश इति रुद्रदत्तः ( श्रौ. १२।२।१० )। नौकाकारो दण्डयुत इत्यपि केचित्। समचतुरस्रः प्रणीतासदृशः सदण्ड इति याज्ञिकसमाचार इति सत्याषाढसूत्रे (८।१) गोपीनाथः। सम्प्रत्यैतादृश एव व्यवह्रियते ॥१६॥

[ पवित्रस्योभयतोदशत्वम् ]

उभयतोदशं परिप्लवायाम् ॥ १७ ॥

परिप्लवा पूर्वमुक्ता (६।२।१५) तत्र एवंविधमेवोभयतोदशं प्रादेशमात्रं द्वितीयं पवित्रं निदध्यात् ॥ १७ ॥

पूर्वेणोपस्तम्भनमुत्तरं ध्रुवस्थालीमनन्तर्हिते ॥ १८ ॥

उत्तरस्य हविर्द्धानस्य उत्तरादुपस्तंभनात्पूर्वस्यां दिशि अदूरे अनन्तर्हिते प्रदेशे ध्रुवस्थालीं योजयेत् ॥ १८ ॥

धुरि प्रचरणीम् ॥ १९ ॥

प्रचर्यतेऽनयेति प्रचरणी पालाशी जुहूः। ताम् उत्तरस्यैवानसो धुरि नियोजयेत् ॥१९॥

पूर्वेणाक्षमुपरि पूतभृतम् ॥ २० ॥

उत्तरस्यैवानसोऽक्षस्य पूर्वस्यां दिशि अनस उपर्येव पूतभृत्संज्ञकं महाकलशं विशालमुखं योजयेत्। पूतं सोमं बिभर्त्तीति पूतभृत्। पूतभृच्च मार्तिकः। अस्य मृन्मयत्वं कलशाकारता च भवति। एवमाधवनीयस्यापि इति ॥ २० ॥

अपरेणाऽऽधवनीयम् ॥ २१ ॥

उत्तरस्यैवानसोऽक्षस्य पश्चादुनस उपर्येव आधवनीयसंज्ञकं महाकलशं पृथुमुखं योजयेत् । आधूयते प्रक्षाल्यते सोमोऽस्मिन्नित्याधवनीयः । "आधवनीयपूतभृतौ च कुम्भौ सपिधानो" इति कठसूत्रम् । अनयोर्द्रोणकलशस्य चोपयोगः सोमरसधारणे बोध्यः ॥२१॥

[ चमसस्थापनम्, एकधनसंज्ञककलशस्थापनं च ]

प्रागक्षाद्दशचमसान्त्संवृन्तानधः प्रत्य, गेकधनानयुग्मानुदहरणांस्त्रिप्रभृत्या पञ्चदशभ्यः ॥ २२ ॥

उत्तरस्यैव हविर्द्धानस्य अक्षात्प्रत्यग्भागे अधो = भूमौ संवृन्तान् ऋत्विक्संबन्धज्ञापकदण्डयुतान् दश चमसान् पालाशान् उदक्संस्थान्योजयेत् । तत्रैव भूमौ उदकं ह्रियते एभिरित्युदहरणाः । तान् त्रिप्रभृतिपञ्चदशपर्यन्तं विषमसङ्ख्यान् एकधननामकान् कलशान् निदध्यात् । एकं सोमरूपं धनं येषां ते एकधनाः । अग्निष्टोमात्यग्निष्टोमयोस्त्रयः, पञ्च वैकधनाः । उकथ्ये पञ्च सप्त वा । षोडशिन्यां सप्त नव वा । वाजपेये नवैकादश वा । अतिरात्रे एकादश त्रयोदश वा । अप्तोर्यामे त्रयोदश पञ्चदश वेति सङ्ख्यावृद्धिरिति देवयाज्ञिकाः । एकधनाश्च मृन्मया धातुमया वा । सोमवर्द्धनार्था आप एकधनाः । तद्ग्रहणार्था घटाश्च एकधनशब्देनोच्यन्ते ।

चमसलक्षणं च मानवसूत्रे कठसूत्रे चाभिहितम् "अथातश्चमसलक्षणानि व्याख्यास्यामोऽर्थात्परिमाणानि पात्राणि भवन्ति, द्व्यङ्गुलखाताश्चमसा द्व्यङ्गुलदण्डाश्चतुरङ्गुलोच्छ्रायाः षडङ्गुलविस्ताराः प्रादेशमात्राश्च दीर्घत्वेन भवन्ति" इति ।

यज्ञपार्श्वे च—

"विकङ्कतमयाः श्लक्ष्णास्त्वग्बिलाश्चमसाः स्मृताः । दशाङ्गुलमिता दीर्घाश्चतुरङ्गुलविस्तृताः ॥ १ ॥ चतुरङ्गुलखाताश्च दण्डास्तु द्व्यङ्गुला मताः । षडङ्गुलमितोच्छ्रायास्तेषां दण्डेषु लक्षणम् ॥ २ ॥ होतुर्मण्डल एव स्याद् ब्रह्मणश्चतुरस्रकः ॥ उद्गातॄणां च त्र्यश्रिः स्याद्याजमानः पृथुः स्मृतः ॥ ३ ॥ प्रशास्तुरवतष्टः स्यादुत्तष्टो ब्रह्मशंसिनः ॥ पोतुरग्रे विशाखी स्यान्नेष्टुः स्याद् द्विगृहीतकः ॥ ४ ॥ अच्छावाकस्य रास्ना च आग्नीध्रस्य मयूषकः" ॥ ५ ॥ इति । पृथुर्हस्ताकारः । अवतष्टोऽधःप्रदेशे छिन्नः । उत्तष्ट ऊर्ध्वप्रदेशे छिन्नः । द्विगृहीतको वारद्वयं समन्तात् कृतरेखः । मयूषकस्तीक्ष्णाग्रः ।

अत्र प्रातरनुवाकसवनीयहविर्निर्वाप-पात्रयोजनानि युगपत्कार्याणि ॥ २२ ॥

इति नवमाध्यायस्य द्वितीया कण्डिका ॥२॥

---

[ प्रचरणीहोमः ]

अभूदुषा रुशत्पशुरित्युच्यमाने चतुर्गृहीतं प्रचरण्याऽभिजुहोति "शृणोत्वग्नि"रिति (१) ॥१॥

प्रातरनुवाकस्य अन्तिमा ऋक् अभूदुषेति । तस्मिन्मन्त्रे होत्रा पठ्यमाने अध्वर्युश्चतुर्गृहीतमाज्यं गृहीत्वा प्रचरण्या स्रुचा जुहुयात् ॥ १ ॥

---

(१) ॐ शृणोत्वग्निः समिधा हवं मे शृण्वन्त्वापो धिषणाश्च देवीः । श्रोता ग्रावाणो विदुषो न यज्ञं० शृणोतु देवः सविता हवं मे स्वाहा ६।२६।

[ होत्रादीन् प्रति अध्वर्योः प्रैषः ]

**अपरं गृहीत्वोदङ् गच्छन्नाहाऽप इष्य होतरिति ॥२॥**

अपरं चतुर्गृहीतं गृहीत्वा उदङ्मुखो गच्छन् सन् "अप इष्य होतः" (अपः प्रति गच्छेत्यर्थः। इष्यतिर्गतिकर्मा ) इति होतारं प्रत्यध्वर्युर्ब्रूयात् ॥ २ ॥

**प्रेष्यति च मैत्रावरुणस्य चमसाध्वर्यवेहि, नेष्टः पत्नीरुदानयै, कधनिन एता, ऽग्नीचात्वाले वसतीवरीभिः प्रत्युपतिष्ठासै होतृचमसेन चेति ॥३॥**

अध्वर्युः उदङ् गच्छन्नेव "मैत्रावरुणस्य चमसाध्वर्यवेहि" इति चमसाध्वर्युं, "नेष्टः पत्नीरुदानय" इति नेष्टारं, "एकधनिन एत" इति निर्व्यापारानृत्विजः, अग्नीच्चात्वाले वसतीवरीभिः प्रत्युप तिष्ठासै होतृचमसेन च, इत्याग्नीध्रं, प्रेष्येत्। एते चत्वारः सावसानाः प्रैषाः॥३॥

[ सोमाभिषवोपयुक्तजलग्रहणार्थं नद्यादौ गत्वा तत्र जले होमः ]

**अपो गत्वा "देवीराप"इत्यप्सु जुहोति ॥४॥**

यच्चतुर्गृहीतं गृहीत्वा सह आनीतं, तत् अपः प्रति गत्वा देवीराप (१) इत्युदकमध्ये जुहुयात् ॥ ४ ॥

[ हुतस्याज्यस्य मैत्रावरुणचसेनापोहनम् ]

**"कार्षिरसी"ति (२) मैत्रावरुणचमसेनाज्यमपोहति ॥५॥**

अप्सु हुतमाज्यं मैत्रावरुणचमसेन करणभूतेन प्रेरयित्वा दूरीकुर्यात् ॥ ५ ॥

[ मैत्रावरुणचमसेनापां ग्रहणम् ]

**"समुद्रस्य त्वे"ति (३) तेन गृह्णाति ॥६॥**

अध्वर्युमैत्रावरुणचमसेन तडागादिस्था अपो गृह्णीयात् ॥६॥

[ एकधनानामुदकेन पूरणम् ]

**एकधनांश्चोन्नयन्ति ॥७॥**

समुद्रस्य त्वेत्यनेनैव मन्त्रेण एकधनान् कलशानुदकेन पूरयित्वा जलमध्यादूर्ध्वं निष्काशयन्ति। भेदे मन्त्रावृत्तिः ॥ ७ ॥

[ पान्नेजनार्थं पत्न्या कलशद्वयपूरणम् ]

**पान्नेजनांश्च पत्न्यो द्वौ द्वौ ॥८॥**

पशोः पादौ निज्येते एभिरिति पान्नेजनाः कलशाः। तान् पान्नेजनार्थान् लघुकलशान् सर्वाः पत्न्यः पृथक् पृथक् द्वौ द्वौ पान्नेजनौ अद्भिः पूरयित्वा तूष्णीमेव निष्काशयन्ति। एकः पान्नेजनः पशुप्राणशोधनार्थः। अपर उर्वभिषेकार्थः। पत्नीशब्दे बहुवचनमुच्चारणार्थम् ॥८॥

---

(१) ॐ देवीरापोऽ अपान्नपाद्यो वऽ ऊर्मिर्हविष्यऽ इन्द्रियावान्मदिन्तमः। तं देवेभ्यो देवत्रा दत्त शुक्रपेभ्यो येषां भाग स्थ स्वाहा ६।२७।

(२) ॐ कार्षिरसि ६।२८।

(३) ॐ समुद्रस्य त्वाऽक्षित्याऽ उन्नयामि ६।२८।

[ मैत्रावरुणचमसस्थाभिरद्भिः वसतीवरीसंस्पर्शः ]

**प्रत्येत्य चात्वालस्योपरि मैत्रावरुणचमसं वसतीवरीश्च स७ँ स्पर्शयति "समाप" (१) इति ॥९॥**

जलाशयात्प्रत्यागत्य चात्वालस्योपरि अध्वर्युर्मैत्रावरुणचमसस्था अपः, वसतीवरीसंज्ञका अपश्च अन्योन्यसंसर्गाय परस्परं संयोजयेत् ॥ ९ ॥

[ परस्परं संयोजनं वा । अस्मिन् पक्षे मैत्रावरुणचमसे प्रथमं वसतीवर्यानयनम् ]

**इतरेतरस्मिन् व्यानयन्त्येके मैत्रावरुणचमसे प्रथमम् ॥१०॥**

एके इतरेतरस्मिन् परस्परस्मिन् संमिश्रणं कुर्वन्ति । अस्मिन्पक्षे प्रथमं मैत्रावरुणचमसाद्वसतीवरीषु निनयेत् । उभयत्र समाप इत्येव मन्त्रः । पूर्वस्मिन्पक्षे उभयोः संमार्जनमात्रमुपायेन कार्यं, न क्वचित्कस्य चिन्निनयनम् । अस्मिंश्च पक्षे इतरस्य मध्ये इतरस्य निनयनमिति विशेषः ॥१०॥

[ होतृचमसे कृतानां वसतीवरीणां निग्राभ्यसंज्ञाकरणम् । तासां यजमानाय समर्पणं च ]

**होतृचमसे वसतीवरीः कृत्वा यजमानाय प्रयच्छति निग्राभ्याः ॥११॥**

अध्वर्युर्होतृचमसे वसतीवरीरप आसिच्य यजमानाय समर्पयेत् । ता आपो निग्राभ्यसंज्ञकाः स्युः । निग्राभ्याश्चापोऽभिषवार्थाः ॥ ११ ॥

[ होत्रा पृष्टस्याध्वर्योः प्रतिवचनम् ]

**होत्रा पृष्टः प्रत्याहोतेव नंनमुरिति ॥ १२ ॥**

ततः सर्वे (चात्वालात्) हविर्द्धानद्वार्युपविष्टं होतारं प्रत्यागच्छन्ति । ततो होताऽध्वर्युं पृच्छति "अध्वर्योऽवेरपा३" इति । सोऽध्वर्युरेवं होत्रा पृष्टः सन् "उतेव नंनमुः" इति होतारं प्रत्याह । हे अध्वर्यो त्वं अपः अवेः लब्धवान् असि । ( प्रश्नान्ते प्लुतिः ) उतेव अपि च ( मे ) आपः नंनमुः उपनताः प्राप्ताः इति तदर्थः ॥ १२ ॥

[ अग्निष्टोमसंस्थाके सोमे प्रचरणीसंस्रवहोमः । तदभावे केवलस्य चतुर्गृहीतस्य ]

**प्रचरणीस७ँस्रवमग्निष्टोमे जुहोत्यभावे चतुर्गृहीतं "यमग्न" इति ॥१३॥**

अग्निष्टोमसंस्थे क्रतौ प्रचरणीसंस्रवं यमग्न (२) इति जुहुयात् । प्रचरणीसंस्रवस्य होमपर्याप्तस्याभावे अपरं चतुर्गृहीतमाज्यं गृहीत्वा जुहुयात् ॥१३॥

अन्यत्र किं कार्यमित्याह—

[ उक्थ्ये परिध्यालम्भः ]

**उक्थ्ये प्रथमं परिधिमालभते ॥१४॥**

उक्थ्यसंस्थे क्रतौ प्रारब्धे सति प्रथमं परिधिं हस्तेन स्पृशेत् यमग्न इति ॥१४॥

[ इतरयोः प्रवेशमात्रम्, अथवा षोडशिनि रराट्यालम्भः । अतिरात्रे छदिरालम्भः ]

**प्रविशत्येवान्यत्र ॥१५॥**

अग्निष्टोमोक्थ्याभ्यामन्यत्र षोडशिन्यतिरात्रे च हविर्द्धानं प्रविशेदेवानेन मन्त्रेण, न होमं, परिध्यालम्भं वा कुर्यात् ॥१५॥

---

( १ ) ॐ समापोऽ अद्भिरग्मत समोषधीभिरोषधीः ६।२८।

( २ ) ॐ यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः । स यन्ता शश्वतीरिषः स्वाहा ६।२९।

**रराट्यालम्भनं वा षोडशिनि ॥१६॥**

अथवा षोडशिसंस्थे यज्ञे प्रारब्धे रराट्याः स्पर्शं कुर्यात्, प्रवेशनं वा यमग्न इति ॥१६॥

**छदिरतिरात्रे ॥१७॥**

वेत्यनुवर्तते। अथवा अतिरात्रसंस्थे यज्ञे छदिरालभेत्प्रविशेद्वा यमग्न इति ॥१७॥

[ मैत्रावरुणचमसस्थानामपां, वसतीवरीणां चाधवनीयेऽवनयनम्, एकधनकलशानां तृतीयांशस्य च ]

**अतीत्य दक्षिणेन होतारं मैत्रावरुणचमसमाधवनीयेऽवनयति, वसतीवरी-तृतीयं चाऽ'ग्निः प्रातः सवने पात्वस्मान्वैश्वानरो महिना विश्वशम्भूः। स नः पावको द्रविणं दधात्वायुष्मन्तः सहभक्षाः स्यामे"ति ॥१८॥**

अध्वर्युः हविर्द्धानद्वार्युपविष्टं होतारं दक्षिणेनातिक्रम्य आधवनीयसमीपे गत्वा मैत्रा-वरुणचमसस्थमुदकमाधवनीयसंज्ञके कलशे सर्वं निनयेत् अग्निः प्रातरिति मन्त्रेण। वसतीवरी-णामपां तृतीयमंशं चाधवनीये निनयेत्तेनैव मन्त्रेण ॥१८॥

**तावच्चैकधनानाम् ॥१९॥**

सर्वासामेकधनकलशस्थानामपां तृतीयं तृतीयमंशं क्रमेणानेनैव मन्त्रेणाऽऽधवनीयेऽ-ध्वर्युर्निनयेन्मन्त्रावृत्त्या ॥१९॥

इति नवमाध्यायस्य तृतीया कण्डिका ॥३॥

[ एकधनशेषं वसतीवरीशेषं च एकधनस्थाने स्थापयित्वा अधिषवणचर्मसमीपे अध्वर्य्वादीनामुपवेशनमुपांश्वभिषवार्थम् ]

उपांश्वभिषवमाह—

**एकधनस्थान उभयशेषं निधायाऽधिषवणे पर्युपविशन्ति ॥ १ ॥**

एकधनशेषं वसतीवरीशेषं च उत्तरस्य हविर्द्धानस्याधस्तादक्षस्य पश्चात् यत्नेन स्थापयित्वा अधिषवणचर्मणः समीपे सर्वत उपविशेयुः अध्वर्यु-प्रतिप्रस्थातृ-नेष्टृन्नेतृ-यजमानाः। इदं चोपवेशनं वक्ष्यमाणमहाभिषवार्थम् ॥१॥

[ उपवेशने दिङ्नियम, ऋत्विङ्नियमश्च ]

तेषां निवेशनप्रकारमाह—

**उत्तरतोऽध्वर्युयजमानौ ॥ २ ॥**

अधिषवणस्योत्तरतोऽध्वर्युयजमानावुपविशेताम् ॥ २॥

**पूर्वोऽध्वर्युरपरेण परीत्येतरे त्रयः ॥३॥**

तयोर्मध्येऽध्वर्युः पूर्वस्यां दिशि दक्षिणामुख उपविशेत्। ब्रह्मा दक्षिणतः, अपरो यजमान उपविशेत्। प्रतिप्रस्थातृ-नेष्टृन्नेतारोऽधिषवणस्य पश्चान्मार्गेण परीत्य दक्षिणत उदङ्मुखाः प्रदक्षिणमुपविशेयुः ॥३ ॥

[ अध्वर्योर्वाग्यमनम् ]

**"देवस्यत्वे" त्यद्रिमादाय वाचं यच्छति प्राग्घिङ्कारात् ॥ ४ ॥**

देवस्ये (१) त्यध्वर्युरश्मानं गृहीत्वा प्राग्घिङ्काराद्वाचं यच्छेत्। "दशापवित्रेणाग्रयणमु-

(१) ॐ देवस्य त्वा स० म्। आददे रावाऽसि गभीरमिममध्वरं कृधीन्द्राय सुषुतमम्। उत्तमेन पविनोर्जस्वन्तं मधुमन्तं पयस्वन्तम् ६।३०।

पगृह्य त्रिर्हिङ्कृत्य सोमः पवते" ( ६।६।१६ ) इति वक्ष्यति । तस्य हिङ्कारस्य प्रागित्यर्थः । अध्वर्योर्ग्राव्णह्याहरणम्, इतरे त्रयो ग्रावत्रयस्याहरणं कुर्युः ॥४॥

**स उपाᳫंशुसवनः ॥ ५ ॥**

यो ग्रावाऽध्वर्युणा गृहीतः स उपांशुसवनसंज्ञको भवेत् । उपांशुग्रहार्थं सोमः सूयते यस्मिन् सः ॥ ५ ॥

**निग्राभ्यास्तु वाचयत्युरस्येना निगृह्य "निग्राभ्या स्थे"ति ॥ ६ ॥**

यजमानः स्वकीयोरसि निग्राभ्या ( ६।३।११ ) निधाय आलभ्य च निग्राभ्या स्थेति (१) मन्त्रं पठेत् । अध्वर्युश्च वाचयेत् ॥६॥

[ उपांशुसवनसंज्ञके पाषाणे सोमप्रक्षेपः ]

**उपाᳫंशुसवने सोमं मिमीत "इन्द्राय त्वा वसुमते रुद्रवत" इति पञ्चकृत्वः प्रतिमन्त्रम् ॥७॥**

अध्वर्युरुपांशुसवनमधिषवणचर्मणि निधाय पञ्चवारं पञ्चभिर्मन्त्रैः (२) प्रतिमन्त्रमेकैकं सोममुष्टिमुपांशुसवनस्योपरि क्षिपेत् ॥७॥

**"यत्त" इति मितालम्भनम् ॥८॥**

अध्वर्युः उपांशुसवने पञ्चवारं प्रक्षिप्तस्य सोमस्य यत्त इति (३) मन्त्रान्ते स्पर्शं कुर्यात् । अत्र क्षुल्लकाभिषवार्थमल्पानामंशूनां मितादपकर्षणं कार्यम् । उपांशुसवनमद्रिं, होतृचमसात्पात्रान्तरे स्वल्पा निग्राभ्याश्च पृथक् कृत्वा यत्नेन निदध्याच्च ॥८॥

[ प्रतिप्रस्थात्रा स्वस्वाङ्गुल्यन्तरेषु द्वयोर्द्वयोः सोमखण्डयोर्निधानम् ]

**प्रतिप्रस्थाताऽᳫंशून्षडादत्तेऽङ्गुल्यन्तरेषु द्वौ द्वौ कुरुते ॥९॥**

उपांशुसवने प्रक्षिप्तात्सोमात्प्रतिप्रस्थाता षट् सोमलताखण्डानि गृह्णीयात् पावनार्थम् । सप्तमं महान्तमंशुं कुण्डलिकारूपमध्वर्युर्मितादादाय निदधाति तृतीयसवनार्थम् ।

गृहीतानां षण्णामंशूनां मध्ये द्वौ द्वावंशू सव्यहस्तस्याङ्गुलीनां त्रिष्वन्तरालेषु धारयेत् ॥९॥

(अथ महाभिषवः)

[ अभिषवार्थं निग्राभ्यासेकः ]

**"श्वात्रा स्थे"त्यासिञ्चति निग्राभ्याः ॥ १० ॥**

अध्वर्युः प्रक्षिप्तेषु सोमेषु निग्राभ्या अपः ( ६।३।११ ) प्रक्षिपेत् (४) ॥ १० ॥

---

(१) ॐ निग्राभ्या स्थ देवश्रुतस्तर्पयत मा मनो मे तर्पयत वाचं मे तर्पयत प्राणं मे तर्पयत चक्षुर्मे तर्पयत श्रोत्रं मे तर्पयतात्मानं मे त०त प्रजां मे त० त पशून्मे त० त गणान्मे तर्पयत गणा मे मा वितृषन् ६।३०।

(२) ॐ इन्द्राय त्वा वसुमते रुद्रवते मिमे ६।३१। ॐ इन्द्राय त्वाऽऽदित्यवते मिमे ६।३१। ॐ इन्द्राय त्वाऽभिमातिघ्ने मिमे ६।३१। ॐ श्येनाय त्वा सोमभृते मिमे ६।३१। ओं अग्नये त्वा रायस्पोषदे मिमे ६।३१।

(३) ओं यत्ते सोम दिवि ज्योतिर्यत्पृथिव्यां यदुरावन्तरिक्षे । तेनास्मै यजमानायोरु राये कृध्यधि दात्रे वोचः ६।३२।

(४) ओं श्वात्रा स्थ वृत्रतुरो राधोगूर्ता अमृतस्य पत्नीः । ता देवीर्देवत्रेमं यज्ञं नयतोपहूताः सोमस्य पिबत ६।३४।

[ सोमकुट्टनकाले द्वेष्यसत्वे तस्य मनसा ध्यानम्, अभावे तृणस्य ]

**प्रहरिष्यन्द्वेष्यं मनसा ध्यायेदमुष्मा अहं प्रहरामि न तुभ्यर्ठं० सोमेति ॥११॥**

सोमे ग्राव्णा प्रहारं करिष्यमाणोऽध्वर्युर्द्वेषयोग्यं वैरिणं मनसा ध्यायेत् अमुष्मा इति मन्त्रेण ॥ ११ ॥

**अभावे तृणम् ॥ १२ ॥**

द्वेष्याभावे "तृणायाहं प्रहरामि न तुभ्यर्ठं० साम"इति मन्त्रं मनसा ब्रूयात् ॥ १२ ॥

**"माभे"रिति (१) प्रहरति ॥ १३ ॥**

उपांशुसवनेनाद्रिणा सोमे प्रहरेयुः । ॥ १३ ॥

[ अभिषवे सङ्ख्याविशेषः ]

**एवं त्रिरभिषुणोत्यासेचं निग्राभ्याः ॥ १४ ॥**

निग्राभ्या ( ९।३।११ ) आसिच्य आसिच्य वारत्रयमेवमेवाभिषवं कुर्यात् ॥ १४ ॥

त्रिरभिषवे क्रमेण प्रहारसङ्ख्यामाह—

**अष्टकृत्व, एकादशकृत्वो, द्वादशकृत्वः ॥१५॥**

पूर्वोक्ते अभिषवे वारत्रयं क्रियमाणे प्रथमाभिषवे अष्टकृत्वः, द्वितीये एकादशकृत्वः, तृतीये द्वादशकृत्वः प्रहरेत् ॥ १५ ॥

**सर्वे पञ्चवर्गाः पशुकामस्य ॥ १६ ॥**

पशुकामस्य यजमानस्य त्रयोऽप्यभिषवाः पञ्चप्रहाराः स्युः । वर्गः प्रहारः ॥ १६ ॥

**अष्टवर्गा ब्रह्मवर्चसकामस्य ॥ १७ ॥**

त्रयोऽभिषवा अष्टप्रहाराः स्युः । ॥ १७ ॥

[ प्रतिवर्गं निग्राभवाचनम् ]

**प्रतिवर्गं निग्राभं वाचयति होतृचमसेऽल्पाᳬशूनवधाय "प्रागपा"गिति ॥१८॥**

प्रतिप्रहारवर्गं होतृचमसमध्ये अल्पान् सोमांशून्निधाय "प्रागपाक्" (२) इति निग्राभसंज्ञं मन्त्रं यजमानं वाचयेत् । अष्टप्रहारात्मक एको वर्गः । एकादशप्रहारात्मको द्वितीयः । द्वादशप्रहारात्मकस्तृतीयः ॥ १८ ॥

**अद्रिणा चतुर्थम् ॥ १९ ॥**

चतुर्थं निग्राभवाचनमुपांशुसवनमद्रिमेव होतृचमसे निधाय कुर्यात् ॥ १९ ॥

**तूष्णीं वा ॥ २० ॥**

अथवा चतुर्थं निग्राभभवाचनं न कुर्यात् । किन्तु तूष्णीमेव होतृचमसे अद्रिं निदध्यात् ॥ २० ॥

---

(१) ओं मा भेर्मा संविक्थाऽ ऊर्जं धत्स्व धिषणे वीड्वी सती वीडयेथामूर्जं दधाथाम् । पाप्मा हतो न सोमः ६।३५।

(२) ओं प्रागपागुदगधराक् सर्वतस्त्वा दिशऽ आ धावन्तु । अम्ब निष्पर समरीर्विदाम् । त्वमङ्ग प्र शर्ठं०सिषो देवः शविष्ठ मर्त्यम् । न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ६।३६-३७।

( इति महाभिषवः । अथ क्षुल्लकाभिषवः । तत्राध्वर्युरेव कर्त्ता )

[ उपांशुग्रहग्रहणम् ]

**उपाᳫँशुं च गृह्णाति "वाचस्पतये, देवो देवेभ्यो, मधुमती"रिति ॥ २१ ॥**

निग्राभवाचनानन्तरं त्रिभिर्मन्त्रैः (१) प्रतिमन्त्रमेकैकेन मन्त्रेण उपांशुसंज्ञकं ग्रहं गृह्णीयात्। एकैकेन मन्त्रेण प्रतिवर्गं तृतीयांशं गृह्णीयात्। अष्टकृत्वः प्रहृत्य वाचस्पतय इति, एकादशकृत्वः प्रहृत्य देव इति, द्वादशकृत्वः प्रहृत्य मध्विति।

अयमुपांशुग्रहः अन्तर्यामग्रहश्चाग्रे वक्ष्यमाणोऽधाराग्रहौ। ऐन्द्रवायवग्रहस्तु धाराग्रहः। सोमयागे हि द्विप्रकारा ग्रहाः, अधाराग्रहा धाराग्रहाश्च। तत्र दशापवित्रे अभिषुतान् सोमान् निक्षिप्य तत्र जले प्रक्षिप्ते ततो या धारा सोमरसस्य प्रवहति, तया धारया येषां ग्रहणं ते धाराग्रहाः। यस्य तु धारामन्तरा अंशून्निक्षिप्य तत्रैव जलक्षेपणं सोऽधाराग्रहः। इमौ च उपांश्वन्तर्यामग्रहौ अधाराग्रहौ। अतोऽत्रांशूनामेव ग्रहणं, न रसस्य ॥ २१ ॥

[ उपांशुग्रह ( रस ) ग्रहणकाले पात्रग्रहणं प्रतिप्रस्थातुः ]

**प्रतिप्रस्थातोपगृह्णाति पात्रम् ॥ २२ ॥**

ग्रहणकाले प्रतिप्रस्थाता दक्षिणहस्तेनोपांशुपात्रमध्वर्योः समीपे धारयेत् ॥ २२ ॥

[ ग्रहणकाले षण्णामप्यंशूनामङ्गुल्यन्तरेषु धृतानां प्रतिप्रस्थात्रा पात्रोपरि धारणम् ]

**आत्तानां च द्वौ द्वावन्तर्दधाति ग्रहणभेदात् ॥ २३ ॥**

मितात्सोमाद् गृहीतानां षण्णामंशूनां मध्ये द्वौ द्वावंशू ग्रहे गृह्यमाणे पात्रमुखस्योपरि अङ्गुल्यन्तरे कृत्वा धारयेत्, न प्रक्षिपेत्प्रतिप्रस्थाता। त्रीणि भिन्नानि ग्रहणानि, षडंशवः। अत एष एव विभागः प्राप्नोति ॥२३॥

किञ्च—

**मन्त्रलिङ्गाच्च ॥ २४ ॥**

अंशुभ्यां गभस्तिपूत इति द्विवचनाच्चायमेव विभागः ॥ २४ ॥

एवं प्राप्त आह—

**षड् वा श्रुतिसामर्थ्यात् ॥ २५ ॥**

वाऽवधारणे। प्रतिप्रस्थाता सव्याङ्गुल्यन्तरेषु द्वौ द्वावंशू कृत्वा दक्षिणहस्तधृतपात्रमुखस्योपरि प्रतिग्रहणं षडेवांशून्धारयन्नास्ते, न प्रतिग्रहणं द्वौ द्वौ। अध्वर्युश्च तथा ग्रहणं कुर्यात् यथा षड्भिरंशुभिः पूतः सोमो ग्रहपात्रमध्ये पतेत्। एवं च "षड्भिः पावयति" (४।१।१।३) इति श्रुतिः सङ्गतार्था भवति।

अत्र प्रतिप्रस्थात्रा धृते अंशुद्वयान्तरिते उपांशुपात्रे पूर्वमभिषुतं सोममध्वर्युरासिञ्चति। यद्यपीदं सूत्रकारेण न स्पष्टीकृतं, तथापि सूत्रान्तरात् (सत्या० श्रौ० ८।३) अग्रे होमविधानाच्च अस्यापोदमभिप्रेतमित्यवगम्यते ॥ २५ ॥

[ गृहीतानां षण्णामंशूनां सोमे निधानम् ]

**"यत्त" (२) इत्यात्तान्त्सोमे निदधाति ॥ २६ ॥**

---

(१) ओं उपयामगृहीतोऽसि वाचस्पतये पवस्व वृष्णोऽ अᳫँशुभ्यां गभस्तिपूतः ७।१। ( नात्र गृह्णामीत्यस्याध्याहारः )। ॐ उपया० सि देवो देवेभ्यः पवस्व येषां भागोऽसि ७।१। (नात्राऽप्यध्याहारः)। ओं उप० सि मधुमतीर्नऽ इषस्कृधि ७।२। ( नाध्याहारः )। "उपयामः सर्वत्राऽविशेषात्" (१२।५।१५) इति सर्वत्रोपयामः प्रयुज्यते।

(२) ओं यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा ७।२।

पावनार्थं पूर्वं गृहीतान् (६।४।६) षडंशून् प्रतिप्रस्थाता सोमे निदध्यात्। सोमे लतासोमे इति कर्कः। ऋजीषरूपे इति जीर्णसम्प्रदायः। यतो गृहीतास्तत्र प्रतिप्रक्षेप इति युक्तम् ॥२६॥

[ उपांश्वन्तर्यामौ गृहीत्वा तयोरसादनम् ]

**परिमृज्याऽसादनमुपाꣳश्वन्तर्यामयोः ॥ २७ ॥**

ग्रहणानन्तरं परिप्लवास्थेन दशापवित्रेण परिमृज्य उपांशोरन्तर्यामस्य च सादनं न कार्यम् ॥२७॥

[ अभिचरतस्तयोः सादने विशेषः ]

**अभिचरन् सादयेदविसृजन्नमुष्य त्वा प्राणꣳ सादयामीत्युदानमित्यन्तर्याममम् (४।१।१।१७) ॥२८॥**

अभिचारं कुर्वन् उपांशुग्रहं हस्तेनामुञ्चन् सादयेत् अमुष्य त्वेति मन्त्रेण।

अमुष्य त्वोदानं सादयामीति मन्त्रेण अभिचरन् अन्तर्यामं सादयेद्धस्तेनाविसृजन् ॥२८॥

**पाणिना चापि दधात्यमुष्य त्वा प्राणमपिदधामीत्युदानमित्यन्तर्याममम् (४।१।१।१८) ॥२६॥**

अभिचरन्नेव हस्तेनोपांशुमपिदध्यात्।

अभिचरन्नेव "अमुष्य त्वोदानमपि दधामि" इति मन्त्रेण अन्तर्याममपि दध्यात् ॥२६॥

[ अध्वर्योर्हविर्धानान्निष्क्रमणम् ]

**"स्वाहे" त्युक्त्वो "र्वन्तरिक्ष" मिति निष्क्रमणम् ॥३०॥**

परिमृज्यानासाद्यैव स्वाहेति (१) मन्त्रमुक्त्वा हविर्द्धानान्निष्क्रमणमध्वर्युर्ग्रहहस्तः (२) कुर्यात् ॥३०॥

[ यजमानस्य पूर्वगृहीतहोतृचमसप्रदानपूर्वकमध्वर्योरन्वारम्भः ]

**अन्वारभतेऽन्यस्मै प्रदाय होतृचमसम् ॥३१॥**

यजमानः पूर्वगृहीतं होतृचमसमन्यस्मै प्रदायोपांशुग्रहमन्वारभेत ॥३१॥

[ वरवरणं, दानं च ]

**वरं वृत्वा ददाति च ॥३२॥**

यजमानो यज्ञसमाप्तिरस्तु इति वरं प्रार्थयन् अध्वर्यवे वरं दद्यात् ॥ ३२ ॥

[ उपांशुग्रहहोमानन्तरं पात्रस्य अधस्त उपरि मार्जनम् ]

**"स्वाङ्कृत" इति हुत्वा पात्रमुन्मार्ष्टि ॥ ३३ ॥**

अध्वर्युर्यजमानान्वारब्ध एव यजतिदेशं गत्वा स्वाङ्कृत (३) इति मन्त्रेण उपांशुग्रहं तिष्ठन्नाहवनीये स्वल्पं हुत्वा ग्रहपात्रमूर्ध्वमुन्मार्जयेत्। मन्त्रगते स्वाहाकारे होमः। होमान्तोऽन्वारम्भः ॥३३॥

---

(१) ओं स्वाहा ७।२

(२) ओं उर्वन्तरिक्षमन्वेमि ७।२

(३) ओं स्वाङ्कृतोऽसि विश्वेभ्यऽ इन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्यो मनस्त्वाऽष्टु स्वाहा त्वा सुभव सूर्याय ६।३।

[ उत्तानेन पाणिना प्रथमपरिधेरधस्तादुपमार्जनम् ]

**प्रथमे परिधा उत्तानं पाणिं प्रागुपमार्ष्टि "देवेभ्यस्त्वे"ति (१) ॥ ३४ ॥**

प्रथमपरिधेरधस्तादुत्तानं हस्तं प्रवेश्य पश्चादाकर्षयेत् ॥ ३४ ॥

[ अभिचरणे होमविशेषः ]

**वास-उरो-बाहुषु श्लिष्टमꣳशुमभिचरन् जुहुया"द्देवाꣳश"विति(२) ॥३५॥**

अभिषवं कुर्वतोऽध्वर्योर्ग्रावाभिघातवशादुत्पत्य अध्वर्योर्वस्त्रे, हृदये, बाह्वोर्वा श्लिष्टं सोमांशुं तत आदायाऽभिचरन् आहवनीये जुहुयात् ॥ ३५ ॥

[ तृतीयसवनार्थमंशुस्थापनम् ]

**आग्रयणस्थाल्याꣳ शेषैकदेशमासिच्याꣳशुं प्रास्यति तृतीयसवनाय ॥३६॥**

हविर्द्धानं प्रविश्य खरसमीप एवोपविश्य उपांशुग्रहस्य अवशिष्टं स्वल्पं भागमाग्रयणस्थाल्यां विनीय तृतीयसवनार्थमेकं महान्तं प्रलंबं सोमांशुं कुण्डलिकात्वमापादितम् उपांशुग्रहपात्रे प्रक्षिपति । तेन हि तृतीयसवने प्रयोजनमस्ति 'ऋजीषमिश्रमभिषुण्वन्ति' (६।३।११) इति । शेषश्चासावेकदेश इति कर्कः । तन्मते सर्वस्य शेषस्यासेचनम् । उपांश्वन्तर्यामयोः शाखान्तरे शेषभक्षप्रतिषेधात् । अन्ये तु परिशेषयन्ति ॥ ३६ ॥

[ उपांशुग्रहपात्रस्य स्वस्थाने सादनम् ]

**"प्राणाय त्वे"ति (३) पात्रसादनम् ॥ ३७ ॥**

उपांशुग्रहपात्रं स्वस्थाने सादयेत् ॥ ३७ ॥

[ उपांशुसवनसादनम् ]

**उपाꣳशुसवनं पाणिना परिमृज्योदञ्चं "व्यानाय त्वे"ति सꣳस्पृष्टम् ॥३८॥**

उपांशुसवनाख्ये पाषाणे लग्नमृजीषादिकं हस्तेनाधः पातयित्वा उदङ्मुखमुपांशुपात्रसंलग्नमेव तं सादयेद् व्यानाय त्वेति (४) । मुखं चास्य येनाभिषवः कृतः ॥ ३८ ॥

इति नवमाध्यायस्य चतुर्थी कण्डिका ॥४॥

( इति क्षुल्लकाभिषवः )

---

( अथ महाभिषवशेषः )

[ अध्वर्यु-प्रतिप्रस्थातृ-नेष्टृ-उन्नेतॄणां महाभिषवकर्तृत्वम् ]

उपांशुग्रहाभिषवमुक्त्वा प्रकृतं महाभिषवं निरूपयति—

**उपविष्टयोरभिषुण्वन्ति चत्वारः पर्युपवेशनसामर्थ्यात् ॥ १ ॥**

उपांशुग्रहं हुत्वाऽधिषवणफलकसमीपे अध्वर्युयजमानयोरुपवेशनानन्तरमध्वर्युप्रतिप्रस्थातृ-नेष्टृन्नेतारश्चत्वारः सोमाभिषवं कुर्वन्ति। कुतः ? पर्युपवेशनसामर्थ्यात्। "अधिषवणे पर्युपविशन्ति" (३।६।४।१) इत्यत्र परितः समन्तादुपविशन्ति इति चतसृषु दिक्षु उपवेशनविधान

---

(१) ओं देवेभ्यस्त्वा मरीचिपेभ्य उपमार्ज्मि ७।३।

(२) ओं देवाꣳशो यस्मै त्वेडे तत्सत्यमुपरिप्रुता भङ्गेन हतोऽसौ फट् ७।३।

(३) ओं प्राणाय त्वा सादयामि ७।३।

(४) ओं व्यानाय त्वा सादयामि ७।३।

सामर्थ्यात्। एतदर्थमेव पूर्वं (९।४।१) तैरुपविष्टत्वात्। अत्र चाभिषोतारोऽध्वर्युपुरुषाश्चत्वारः। तथा चोक्तमापस्तम्बेन। "सर्वेऽध्वर्यवो दिश आस्थाय महाभिषवमभिषुण्वन्ति, पुरस्ताद-ध्वर्युर्दक्षिणतः प्रतिप्रस्थाता, पश्चान्नेष्टोत्तरत उन्नेता" ( १२।१२।१२ ) इति। यजमानस्य तूपवेशनमात्रं, नाभिषवकर्तृत्वम्। अभिषवः सोमस्य कुट्टनेन रसनिष्काशनम् ॥ १ ॥

[ अभिषवस्याप्यायनान्तता, पर्यायत्रयकर्तव्यता च। प्रहरणं च यावद्रसप्रच्युति ]

## आप्यायनान्तोऽभिषवस्त्रिपर्यायः ॥ २ ॥

"अꣳशुरꣳशुः" ५।६ ) इति मन्त्रेण सोमस्य स्पर्श आप्यायनशब्देनोच्यते। सोऽन्ते यस्य स आप्यायनान्तः, पर्यायत्रयविशिष्टश्च अभिषवो भवति। वारत्रयमभिषुत्य अन्ते सकृदाप्यायनं कर्तव्यम्। न तु पूर्वोक्तोपांशुग्रहाभिषववत् प्रतिपर्यायमाप्यायनम् ॥ २ ॥

## मत्या ॥ ३ ॥

पूर्वं प्रहारे सङ्ख्या उक्ता ( ९।४।१५ )। अत्र महाभिषवे इच्छया प्रहरणम्। यावता प्रहरणेन रसप्रच्युतिर्भवति तावत्पर्यन्तं प्रहरेदित्यर्थः ॥ ३ ॥

[ प्रथमपर्याय एव निग्राभ्याणां सोमे आसेचनम् ]

## पर्यायादिषु निग्राभ्याऽऽसेचनम् ॥४॥

एकैकस्य पर्यायस्यारम्भे रसप्रच्युत्यर्थं निग्राभ्यासेचनसंज्ञकानामपामासेचनं कुर्यात्। या वसतीवरीसंज्ञका आपः अभिषवार्थं पूर्वं (९।३।११) होतृचमसे निषिक्तास्ता निग्राभ्याः ॥४॥

## प्रथमे वा प्रभूत्वात् ॥ ५ ॥

वाऽवधारणे। प्रथमे एव पर्याये निग्राभ्यासेचनं स्यात्। यतः प्रथमे एव पर्याये सिक्ता आपः सर्वपर्यायेषु सोममार्द्रीकर्त्तुं प्र भवन्ति ॥ ५ ॥

[ सरसानां सोमांशूनां सम्भरण्याऽऽधवनीये प्रक्षेपः, तत्राऽऽधूननेन निःसृतरसानां तेषामधिषवणोपरि प्रक्षेपश्च ]

## निग्राभान्ते सरसानꣳशून्त्सम्भरण्याऽऽधवनीयेऽवधायाऽऽधूयाऽऽहरति ॥ ६ ॥

निग्राभसंज्ञकमन्त्रवाचनान्ते रसविशिष्टान् सोमांशून् संभरणसमर्थेन पात्रेण आधवनीयसंज्ञके कलशे सोदके प्रक्षिप्य परिप्लाव्य निष्पीड्य ततो निष्काश्य संभरण्यैवाहरति। आहृत्याधिषवणस्योपरि प्रक्षिपेत्। संभ्रियतेऽभिषुतः सरसः सोमोऽस्यां सा। सम्भरणी च वारणं महत्पूर्णपात्रमर्थात्सिद्धम् ॥ ६ ॥

## एवं द्विरपरम् ॥७॥

पर्यायत्रयविशिष्टः प्रथमोऽभिषवः कृतः। एवं द्वितीयस्तृतीयश्चाभिषवः पर्यायत्रयविशिष्टः कार्यः ॥ ७ ॥

## पूर्ववन्निग्राभ्याः ॥ ८ ॥

तत्र प्रथमाभिषव इव द्वितीयतृतीयोरभिषवयोरपि निग्राभ्यासेचनं कर्तव्यम् ॥८॥

[ उपांशुग्रहाभिषवमहाभिषवयोर्भेदेनानुष्ठानं, तत्र मन्त्रब्राह्मणपाठक्रमवैपरीत्येन प्रथमं महाभिषवः, तत उपांशुग्रहाभिषवः ]

पूर्वमुपांश्वभिषवः, पश्चान्महाभिषव उक्तः। अधुना लाघवाय तयोरैक्यं पूर्वपक्षीकरोति—

**पूर्वे वोपाꣳशुं गृहीत्वा गृहीत्वाऽऽप्यायन-संभरणे कृतत्वात् ॥ ९ ॥**

पूर्वोक्ते एवोपांश्वभिषवे उपांशुं गृहीत्वा गृहीत्वा सोमाप्यायनं संभरणया कार्यम्, न महाभिषवः पृथक्कार्यः। उपांश्वभिषवे एव आप्यायनसंभरणयोरधिकयोः कृतत्वेन महाभिषवोऽपि कृत एव भवति । अन्यस्य सर्वस्य पूर्वाभिषवेऽपि क्रियमाणत्वात्पदार्थद्वयार्थं पृथगभिषवो न कार्यः। एवं सति लाघवं भवति ॥ ९ ॥

ननु यद्येक एवोपांश्वभिषवः क्रियते न पृथक् महाभिषवः, तदा उपांश्वभिषवस्याध्वर्युकर्तृकत्वात्, इतरेषां प्रतिप्रस्थात्रादीनां प्रयोजनाभावात् अभिषवणे चतुर्णां पर्युपवेशनं (३।६।४।१) किमर्थमत आह—

**धर्ममात्रं पर्युपवेशनम् ॥१०॥**

एतत्पर्युपवेशनं केवलमदृष्टार्थम् ॥ १० ॥

एवं पूर्वपक्षे कृते सिद्धान्तयति—

**अभिषवविपर्यासो वाऽभिमृष्टादꣳशूनपकृष्य निग्राभ्याश्चानुपूर्व्ययोगादनात्तस्य चाभिमानसामर्थ्यादृजीषभावाच्च ॥११॥**

वाशब्दः पक्षव्यावृत्तौ । उपांश्वभिषव-महाभिषवयोर्व्यत्यासः । पूर्वं महाभिषवः पश्चादुपांश्वभिषवः कार्य इत्यर्थः । एवं च नाभिषवैक्यम्। किन्तु द्वावभिषवौ इति सिद्धं भवति। तत्र विशेष माह—अभिमृष्टात् = यत्त (६।३३) इति मन्त्रेण कृताभिमर्शनात् सोमात् उपांश्वभिषवार्थं मुष्टिमात्रानंशून्, अङ्गुल्यन्तरे करणार्थान् षडंशून्, तृतीयसवनाभिषवार्थं महान्तमंशुं च पृथक् स्थापयित्वा, उपांश्वभिषवार्थं निग्राभ्या अपि पात्रान्तरे कृत्वा अभिषवः कार्यः। एवं च सति ब्राह्मणे महाभिषव विधिमन्त्रयोः पूर्वं पाठोऽनुगृहीतो भवतीति भावः। पूर्वं महाभिषवविधयः (३।६।४।१-२५) तन्मन्त्राश्च (६।२३-३७) आम्नाताः, पश्चादुपांशुग्रहणहोममन्त्राः ७।१)। सूत्र कारेण तु प्रदान ( होम ) क्रममाश्रित्य पूर्वमुपांश्वभिषव उक्तः। प्रदानं हि पूर्वमुपांशुग्रहस्य, पश्चादन्तर्यामादीनाम्।

ननु भवत्वभिषवयोर्विपर्यासः। अंशवपकर्षणं कुत इत्यत आह—अनात्तस्य चाऽभिमानसामर्थ्यात्।

उपांश्वभिषवादौ हि अग्रे सोमस्यैवाभिषवो विहितः। अनात्तरसे एव हि सोमे सोमबुद्धिर्भवति, न गृहीतरसे। यद्यत्र महाभिषवे एव हि सर्वे सोमा अभिषुता भवेयुः, तर्हि अग्रे ऋजीषस्यैवावशिष्टत्वात् तत्राभिषवः सोमाभिषवो न स्यात्। अतस्तदर्थमंशूनामपकर्षः, तत्सेचनार्थं निग्राभ्याणां चापकर्षः कर्तव्य एवेति भावः ।

किं च—ऋजीषभावाच्च। अभिषुते सोमे ऋजीषोऽयम्, न सोम इति बुद्धिर्भवति। अतोऽपि उपांश्वभिषवार्थमंशूनपकृष्यैव पूर्वं महाभिषवः कार्यः, पश्चादुपांश्वभिषवः। गतसारः सोम ऋजीष इत्युच्यते ॥११॥

[ ग्राव्णामुपरि द्रोणकलशस्थापनम् ]

**प्रोह्य द्रोणकलशमृजीषमुखेष्वद्रिषु निदधत्युद्गातारः ॥१२॥**

उद्गातृ-प्रस्तोतृ-प्रतिहर्त्तारो द्रोणकलशो यत्र स्थापितः, तस्मात्स्थानात्प्राञ्चमधिषवणस्योपरि प्रोह्य = गृहीत्वा सर्वान् ग्राव्ण एकत्र संमुखान् कृत्वा, तान् ऋजीषेणाच्छाद्य तेषामुपरि द्रोणकलशं स्थापयेयुः। "निषद्योद्गातारः स्तुवते प्रोद्गातॄणाम्" इत्यादौ उद्गातृशब्देन त्रयाणामुद्गातृ-प्रस्तोतृ-प्रतिहर्तॄणामेव ग्रहणात् अत्रापि तेषामेव ग्रहणम्। अत्र हि अभिषवानन्तरमाधवनीये सोमं निष्पीड्य अधिषवणफलकस्योपरि ग्राव्णः संमुखान् कृत्वा तेषां मुखेषु

ऋजीषस्य प्रक्षेपणं कल्पान्तरे लिखितम्। "सम्भृत्य राजानमुपरे ग्राव्णः संमुखान् कृत्वा प्रपीड्य ऋजीषं मुखेषूपोहति" ( आप० श्रौ० १२।१२।११ ) इति। एतदेवात्र सूत्रकारेण ऋजीषमुखेष्वद्रिषु इति सङ्गृह्योक्तम् ॥१२॥

[ द्रोणकलशोपर्युदगग्रस्य पवित्रस्य धारणम् ]

**पवित्रं च वितन्वन्त्युदक् ॥ १३ ॥**

उद्गातारः पवित्रं=दशापवित्रं ( सोमपावनार्थं यो वासः खण्डः ) तमुदगग्रं द्रोणकलशस्योपरि विस्तार्य उपरि पवित्रस्य कोणान्धारयन्ति, यथा अधस्ताद् ग्रहा गृह्येरन्। इदं च पवित्रं सनाभि कार्यम्। वासः खण्डस्य मध्ये छिद्रं कृत्वा तत्र ऊर्णारोमनिर्मितां तनीयसीं रज्जुं धारास्रवणयोग्यामवलगयति। स वासोमध्यगतत्वान्नाभिरित्युच्यते (आप० श्रौ० २।१।१७) ॥१३॥

**स्वयं वाऽकुर्वत्सु ॥ १४ ॥**

द्रोणकलश-पवित्रयोर्योजनमकुर्वत्सु उद्गातृषु स्वयं वाऽध्वर्युः कुर्यात् ॥ १४ ॥

**आधवनीयादुन्नेता निग्राभ्यास्वासिञ्चति ताः पवित्रे यजमानस्ततो ग्रहण माध्रुवात् ॥ १५ ॥**

उन्नेता आधवनीयकलशादुदञ्चनेन सोममादाय यजमानहस्तस्थितहोतृचमसमध्ये वर्तमानासु निग्राभ्यास्वासिञ्चेत्। यजमानस्ता निग्राभ्याः पवित्रे आसिञ्चेत्। उदञ्चनं नाम सोमग्रहणार्थं चमसविशेष इति रुद्रदत्तः ( आप० १३।१।२, सत्या० ७।३२ )। ततः पवित्रात् सन्ततं स्रवन्त्या धारायाः सकाशात् ध्रुवग्रहपर्यन्तान् ग्रहान गृह्णीयात्। "स्रवन्त्या धारया ग्रहान् गृह्णाति" ( ऐत० ब्रा० ८।३ ) इति ॥१५॥

**माध्यन्दिने च पञ्च प्रथमान् ॥ १६ ॥**

माध्यन्दिनसवनेऽपि प्रथमपठितान् शुक्रामन्थ्याग्रयण-मरुत्वतीयोक्थ्यान् पञ्च ग्रहान् पूर्वोक्ताया एव धाराया गृह्णीयात् ॥ १६ ॥

सवनत्रयोपयुक्तां परिभाषामाह—

**शुक्रो द्रोणकलशे ॥ १७ ॥**

अध्वर्युणा ग्रहेषु गृह्यमाणेषु अन्तरा अन्तरा यो रसो द्रोणकलशे पतति स शुक्रसंज्ञकः स्यात् ॥१७ ॥

**ततोऽन्येऽनादेशे ॥ १८ ॥**

ततो धाराग्रहेभ्योऽन्ये ग्रहा, येषां विशेषवचनं नास्ति ते द्रोणकलशस्थाच्छुक्रसंज्ञका द्रसादेव ग्रहीतव्याः ॥१८॥

**सावित्र-पात्नीवत-हारियोजनोपक्षीणानाग्रयणात् ॥ १९ ॥**

तृतीयसवने आग्रयणस्थालीस्थात्सोमात् एतान् ग्रहान् गृह्णीयात्। कालभूयस्त्वेन शुष्का उपक्षीणा इत्युच्यन्ते ॥ १९ ॥

[ चमसानां पूतभृतो ग्रहणम् ]

**पूतभृतश्चमसान् ॥ २० ॥**

चमसान् सर्वत्र सवनत्रयेऽपि पूतभृतः सकाशाद् गृह्णीयात् ॥ २० ॥

[ वैश्वदेवग्रहस्य तृतीयवसने पूतभृतो ग्रहणम् ]

**तृतीयसवने वैश्वदेवम् ॥ २१ ॥**

महावैश्वदेवं ग्रहं तृतीयसवने पूतभृतो गृह्णीयात् ॥२१॥

[ ग्रह-चमसानामनादिष्टानां पूतभृतो ग्रहणम् ]

**अनादिष्टांश्चेहोन्नयनश्रुतेः ॥ २२ ॥**

अनादिष्टान् सोमग्रहानपि पूतभृतो गृह्णीयात्। "अतो हि देवेभ्य" (४५।६।३) इति पूतभृत एवोन्नयनस्य (ग्रहणस्य) श्रुतौ विधानात् । ननु पूर्वमुक्तं 'ततोऽन्येऽनादेश' (६।४।२०) इति । अत्र तु पूतभृत इत्युच्यते । उभयोः श्रुतिमूलत्वाद्विकल्पः ॥२२॥

[ गृहीतानां ग्रहाणां दशापवित्रेण परिमार्जनं, सादनं च ]

**दशापवित्रेण परिमृज्य परिमृ"ज्यैष ते योनि"रिति ग्रहसादनम् ॥ २३ ॥**

ग्रहपात्रस्योपरि लग्नं सोमं दशापवित्रेण मार्जयित्वा एष ते योनिरिति ग्रहस्य सादनं कुर्यात्। वीप्सा सर्वग्रहार्था । सोमपावनार्थमुभयतोदशमल्पो वासःखण्डो दशापवित्रम् ॥२३॥

[ सर्वेषां ग्रहाणामेष ते योनिरिति मन्त्रेण सादनम् ]

**नायोनिकेषु ॥ २४ ॥**

ग्रहमन्त्रेषु मन्त्रं पठित्वा अन्ते एष ते योनिः इत्यपि मन्त्रभागः पठितः, स एव योनि रित्युच्यते । तत्र पूर्वभागेन ग्रहणम्, एष ते योनिरित्युत्तरभागेन च खरे आसादनं कर्त्तव्यम्। स च भागो येषां ब्राह्मणमन्त्राणां सन्निधौ न पठितस्तेषां ग्रहाणामासादनकाले एष ते योनि-रिति न पठनीयः । समाम्नायाभावात् ॥ २४ ॥

**सर्वेष्विति वात्स्योऽविशेषोपदेशात् ॥ २५ ॥**

सर्वेषु अपि आम्नातयोनिकेषु अनाम्नातयोनिकेषु च ग्रहेषु एष त इति सादनं वात्स्योऽभिप्रैति । कुतः ? अविशेषोपदेशात् । अविशेषण ग्रहमात्रमुद्दिश्य योन्यासादनस्य श्रुतावुपदेशात् ॥२५॥

किंच—

**सावित्रर्त्तुग्रहप्रतिषेधाच्च ॥ २६ ॥**

सावित्रग्रहे, (४।४।१।७) ऋतुग्रहेषु (४।१।३।७) च अनाम्नातयोनिकेषु योन्या-सादनस्य प्रतिषेधात् (१) । प्राप्तस्यैव हि प्रतिषेधो युज्यते । अतो ग्रहसामान्ये योन्यासादनं प्राप्नोतीत्यनुमीयते ॥२६॥

[ वषट्कारानन्तरं हुतावशिष्टस्य सोमस्य भक्षणार्थं प्रथमतो वषट्कर्त्रे हरणम् ]

**प्रतिवषट्कारꣳहुत्वा वषट्कर्तुर्भक्षहरणम् ॥ २७ ॥**

वषट्कर्त्रा वषट्कारे अनुवषट्कारे च कृते अध्वर्युर्ग्रहं चमसं वा हुत्वा सदस्युपविष्टाय (सत्या० औ० ८।७) वषट्कर्त्रे हुतशेषं सोमं भक्षार्थं हरेत्।

"ऋतुग्रहा द्विदेवत्या यश्च पात्नीवतो ग्रहः। आदित्यग्रह-सावित्रा एते नानुवषट्-कृताः"। (यज्ञ पा० १०८ श्लो०) एतेषु वषट्कारे एव हुत्वा भक्षहरणम्। "सर्वत्रानुवषट्कारो विद्यते द्विदेवत्यर्त्तुग्रहादित्यसावित्रपात्नीवतवर्जम्" (आप० १२।२।१२) इति च ॥२७॥

[ चमसानां तत्तच्चमसिभ्यो हरणम् ]

**यथास्वं चमसान् ॥ २८ ॥**

---

(१) ऋतुग्रहेष्विति । अत्र उभयतोमुखमृतुपात्रसंज्ञकं ग्रहद्वयम् । तत्रैकं पात्रमध्वर्युहस्ते, अपरं च प्रतिप्रस्थातुर्हस्ते । द्वावपि युगपद् गृहीत्वा जुहुतः । तयोरेव पात्रयोस्ताभ्यामध्वर्युप्रतिप्रस्थातृभ्यां पुनः पुन र्गृहीत्वा षड्भ्य ऋतुभ्यो हूयते इति ग्रहणानां बहुत्वम् । पात्रे तु द्वे एवेति ध्येयम् ।

यस्य यस्य यो यश्चमसः, तं चमसं वषट्कारहोमानन्तरं तस्मै तस्मै भक्षार्थमध्वर्युर्हरेत्। यथा—होतृचमसं होत्रे, उद्गातृचमसमुद्गात्रे इत्यादि (१) ॥ २८ ॥

[ एकस्मिन्पात्रे अनेकभक्षणप्राप्तौ वषट्कर्तुरेव प्रथमभक्षणम् ]

सन्ति हि भक्षकारणान्यनेकानि। होमाभिषवौ, वषट्कारः, समाख्यानं चेति। तत्र एकस्मिन्पात्रे निमित्तभेदेन द्वयोर्भक्षणे प्राप्ते केन प्रथमं भक्षः कर्त्तव्य इति शङ्कायामाह—

**वषट्कर्तुर्वा पूर्वं श्रुतिसामर्थ्यात् ॥ २९ ॥**

वाऽवधारणे। वषट्कर्तुरेव पूर्वं भक्षणम्। कुतः! श्रुतिसामर्थ्यात्। "वषट्कर्तुः प्रथमभक्ष" इति श्रुत्या प्रथमं तस्यैव भक्षविधानादित्यर्थः। एवं च चमसेषु होमाभिषवाभ्यामध्वर्योर्भक्षः प्राप्तः। वषट्कारकरणाच्च वषट्कर्तॄणाम्, समाख्यानाच्च चमसिनाम्। तत्र ये वषट्कर्त्तारः, तैः प्रथमं चमसो भक्षणीयः। ततो होमाभिषवकर्तृत्वादध्वर्युप्रतिप्रस्थातृभ्याम्। ततः समाख्यानाच्चमसिभिरिति क्रमो वेदितव्यः (सत्या० श्रौ० ८।७) ॥२९॥

[ चमसानामुन्नयनम् ]

**उन्नेतोन्नयति समाख्यानात् ॥ ३० ॥**

उन्नयतीत्युन्नेता इति संज्ञावशात् उन्नेता चमसानुन्नयेत्। द्रोणकलशाच्चमसेषु सोमरसं गृह्णीयादित्यर्थः ॥३०॥

इति नवमाध्याये पञ्चमी कण्डिका ॥ ५ ॥

---

( अत्र सन्ध्यावन्दनम् )

[ अन्तर्यामग्रहग्रहणमुपांशुग्रहवत् ]

**उदितेऽन्तर्यामग्रहण "मुपयामगृहीत" (२) इति ॥ १ ॥**

उदिते सूर्ये अन्तर्यामसंज्ञे पात्रे सोमरसं ग्रहं गृह्णीयात् ॥ १ ॥

---

(१) अयमत्र विषयः। ग्रहांश्चमसांश्च गृहीत्वा वषट्कर्त्रा वषट्कारानुवषट्कारयोः पठितयोर्हूयन्ते ( सत्या० श्रौ० ८।६ )। तत्र होतृ-ब्रह्मोद्गातृयजमानानां चत्वारश्चमसाः। मैत्रावरुण-ब्राह्मणाच्छंसिनेष्ट्रच्छावाक-पोत्रा-ऽऽग्नीध्राणां होत्रकाणां षट्, इति दश चमसाः। तान् दश चमसान् सोमरसप्रक्षेपार्थं गृह्णात्युन्नेता क्रमशः। तदा अध्वर्युप्रतिप्रस्थातारौ शुक्रामन्थिनौ ग्रहौ गृह्णीतः। गृहीत्वा होमार्थं यदा तौ प्रस्थितौ, तदा ताभ्यां सहैव दश चमसाध्वर्यवश्चमसहोमार्थं धृत्वा दश चमसान् युगपद् गृहीत्वाऽऽहवनीयदेशं गत्वा पश्चात् प्राङ्मुखास्तिष्ठन्तो ( सत्या० श्रौ० ८।७ ) वषट्कारे कृते सर्वे सहैव जुह्वति ( सत्या० श्रौ० ८।७ )। ततः अनुवषट्कारे कृते होतृब्रह्मोद्गातृयजमानानां चमसाध्वर्यव एव पुनर्हुत्वा (सत्या० श्रौ० ८।७) शेषं तत्तच्चमसिने भक्षार्थं हरन्ति। होत्रिकाणां चमसाध्वर्यवस्तु अनुवषट्काराभावात् सकृदेव हुत्वा (सत्या० श्रौ० ८।७) द्रोणकलशस्थस्य सोमस्यैकदेशं स्वे स्वे चमसे आनीय आहवनीयदेशमागत्य अध्वर्युहस्ते ददति ( आप० श्रौ० १२।१३।१५ )। स च ( सत्या० श्रौ० ८।७ ) मैत्रावरुण—ब्राह्मणाच्छंसि—होतृ—नेष्टृ—च्छावाकाग्नीध्रान् प्रति प्रशास्तर्यज, ब्रह्मन्यज, इत्यादिप्रकारेण प्रैषं दत्वा तैः वषट्कृते अनुवषट्कृते च हुत्वा तत्तच्चमसाध्वर्यवे तं तं चमसं दद्यात्। स च तस्मै तस्मै चमसिने भक्षणार्थं तं तं हरेत्। "यथाचमसं चमसिनो भक्षयन्ति" ( सत्या० श्रौ० ८।७ ) इति सूत्रादिति।

(२) ॐ उपयामगृहीतोऽस्यन्तर्यच्छ मघवन् पाहि सोमम्। उरुष्य रायऽ एषो यजस्व। अन्तस्ते द्यावापृथिवी दधाम्यन्तर्दधाम्युर्व्वन्तरिक्षम्।. सजूर्देवेभिरवरैः परैश्चान्तर्यामे मघवन्मादयस्व ७।४-५।

**उपांशुवदनाम्नात-वर-शेषासेचनवर्जम् ॥ २ ॥**

उपांशुग्रहे स्वाहेति, उर्वन्तरिक्षमिति च अनाम्नातमन्त्रो विहितः। "वरं वृत्वा ददाति" (६।४।३२) इति वरो=वरणं, दानं च विहितम्। "आग्रयणस्थाल्याᳪ शेषैकदेशमासिच्य" (६।४।३६) इति शेषासेचनं च विहितम्। एतानि वर्जयित्वा सर्वमन्तर्यामस्य उपांशुग्रहवत् कुर्यात् ॥ २ ॥

[ अन्तर्यामग्रहपात्रस्य मुखादारभ्याधस्तान्मार्जनम् ]

**अपमार्ष्ट्यत्र ॥ ३ ॥**

अन्तर्यामग्रहे ग्रहं हुत्वा पात्रं मुखादारभ्यात्राऽधमपमार्ष्टि, न तूपांशुग्रहवदूर्ध्वम् ॥३॥

[ परिधौ प्रत्यगुपमार्जनम् ]

**प्रथमे च न्युब्जेन पाणिना प्रत्यक् ॥ ४ ॥**

प्रथमे परिधौ अधोमुखेन हस्तेन प्रत्यक्संस्थमुपमार्ष्टि ॥ ४ ॥

[ अन्तर्यामग्रहपात्रस्याऽऽसादनम ]

**उपाᳪशुसवनसᳪस्पृष्टस्यो"दानाय त्वे"(१)ति पात्रसादनम् ॥ ५ ॥**

अन्तर्यामपात्रस्याऽऽसादनं स्वस्थाने कुर्यात्। तच्च पात्रमुपांशुपात्रसंलग्नं यथा स्यात्तथाऽऽसादयेत् ॥ ५ ॥

[ ऐन्द्रवायवग्रहग्रहणम् ]

**ऐन्द्रवायवं गृह्णा"त्या वाय"विति (२) ॥ ६ ॥**

ऐन्द्रवायवे ग्रहे इन्द्रवायुदेवताकं सोमं धारातो गृह्णीयात् ॥ ६ ॥

**अपगृह्य पुन"रिन्द्रवायू" इति ॥ ७ ॥**

एकवारमर्द्धं गृहीत्वा ततः सन्ततधारातः पात्रं पृथक् कृत्वा इन्द्रवायू इति मन्त्रेण तस्या एव धाराया गृह्णीयात्(३) ॥ ७ ॥

**मैत्रावरुण"मयं वा"मिति ॥ ८ ॥**

तस्या एव सन्ततधाराया मैत्रावरुणपात्रे मित्रावरुणदेवताकं सोमं गृह्णीयात् (४) ॥८॥

[ तस्य पयसा श्रयणं च ]

**पयसा श्रीणात्येनं कुशावन्तर्द्धाय "राया वय"मिति ॥ ९ ॥**

ग्रहणानन्तरमेनं मैत्रावरुणं ग्रहं कुशाभ्यामन्तर्द्धाय लौकिकेन दुग्धेन मिश्रयेत्। (५) श्रयणं च द्रव्यान्तरसंसर्गः ॥ ९ ॥

(१) ॐ उदानाय त्वा सादयामि ७।६।

(२) ॐ आ वायो भूष शुचिपाऽ उप नः सहस्रं ते नियुतो विश्ववार । उपो तेऽ अन्धो मद्यमयामि यस्य देव दधिषे पूर्वपेयम् उप० सि वायवे त्वा गृह्णामि ॥ ७ ॥

(३) ॐ इन्द्रवायूऽ इमे सुताऽ उप प्रयोभिरा गतम्। इन्दवो वामुशन्ति हि। उपयामगृहीतोऽसीन्द्रवायुभ्यां त्वा गृह्णामि ७।८। ॐ एष ते योनिः सजोषोभ्यां त्वा सादयामि ७।८।

(४) ॐ अयं वां मित्रावरुणा सुतः सोमऽ ऋतावृधा। ममेदिह श्रुतᳪ हवम्। उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वा गृह्णामि ७।९।

(५) ॐ राया वयᳪ ससवाᳪसो मदेम हव्येन देवा यवसेन गावः। तां धेनुं मित्रावरुणा युवं नो विश्वाहा धत्तमनपस्फुरन्तीम्। ७।९। ॐ एष ते योनिर्ऋतायुभ्यां त्वा सादयामि ७।१०।

[ सर्वत्र श्रयणे कुशान्तर्धानम् ]

**एवᳪ० सर्वत्र श्रयणेषु ॥ १० ॥**

सर्वत्र श्रयणेषु एवमेव कुशान्तर्द्धानं कर्त्तव्यम् ॥ १० ॥

[ शुक्रग्रहस्य बैल्वेन पात्रेण ग्रहणम् ]

**शुक्रं बैल्वेन वा "तं प्रत्नथे"ति ॥ ११ ॥**

शुक्रसंज्ञके ग्रहे सोमं तस्या एव धाराया बिल्ववृक्षनिर्मितेन विकङ्कतवृक्षनिर्मितेन वा पात्रेण गृह्णीयात्। (१) अयं तु शुक्रसंज्ञको ग्रहः। पूर्वं तु द्रोणकलशस्थस्य सोमस्य शुक्र इति संज्ञा कृतेति वेदितव्यम् ॥ ११ ॥

**"अयं वेन" इत्येके ॥ १२ ॥**

एके शुक्रं ग्रहमयं वेन इति गृह्णीयादित्याहुः। "अयं वेन (२) इति शुक्रं गृहीत्वा" (१२।१४।१३) इत्यापस्तम्बः ॥१२॥

[ मन्थिग्रहस्य सक्तुभिः श्रयणम् ]

**सक्तुभिः श्रीणात्येनं "मनो न ये"ष्विति (३) ॥ १३ ॥**

एनं मन्थिनं ग्रहं सक्तुभिर्लौकिकैः पवित्रे अन्तर्धाय मिश्रयेत् ॥ १३ ॥

[ धाराद्वयेनाग्रयणग्रहणम् ]

**आग्रयणं द्वयोर्धारयो"र्ये देवास" इति ॥ १४ ॥**

धाराद्वयेन आग्रयणस्थाल्याम् (४।२।२।१) आग्रयणं = सोमं गृह्णीयात्। (४) तत्र यजमानो निग्राभ्याः ( ६।३।११ ) आग्रयणपात्रे पृथगासिञ्चति सा प्रथमा धारा। उन्नेताऽऽधवनीयात् सोममादाय उदञ्चनेन वा पात्रान्तरेण वा पृथगासिञ्चति सा द्वितीया धारा। एवं धाराद्वयं सम्पाद्यमिति कर्काचार्याः। आग्रयणस्थाल्यां सोमस्तस्यैका धारा। द्वितीया तु प्राकृती हो तृचमसस्था। पृथक् पृथग्धाराकरणमुन्नेतृयजमानयोः ॥ १४ ॥

**दशापवित्रेणाऽऽग्रयणमुपगृह्य त्रिर्हिङ्कृत्य "सोमः पवत" इति सकृच्छेषम् ॥१५॥**

ग्रहसंमार्जनार्थं दशापवित्रमुपगृह्य तेन दशापवित्रेण आग्रयणस्थाल्या मुखदेशं ( सोमव्यवसेकपरिहारार्थं ) वेष्टयित्वा ततः हिं इति शब्दं त्रिवारमुच्चार्य, ततः सोमः पवत (५)

---

(१) ॐ तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदᳪ स्वर्विदम्। प्रतीचीनं वृजनं दोहसे धुनिमाशुं जयन्तमनु यासु वर्द्धसे। उप० शण्डाय त्वा गृह्णामि ७।१२। ॐ एष ते योनिर्वीरतां पाहि ७।१२। नात्र सादयामीत्यध्याहारः।

(२) ॐ अयं वेनश्चोदयत्पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने। इममपाᳪ सङ्गमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति। उप० मर्काय त्वा गृह्णामि ७।१६।

(३) ॐ मनो न येषु हवनेषु तिग्मं विपः शच्या वनुथो द्रवन्ता। आ यः शर्याभिस्तुविनृम्णोऽअस्याश्रीणीताऽऽदिशं गभस्तौ ७।१७। ॐ एष ते योनिः प्रजाः पाहि ७।१७।

(४) ॐ ये देवासो दिव्येकादश स्थ पृथिव्यामध्येकादश स्थ। अप्सुक्षितो महिनैकादश स्थ ते देवासो यज्ञमिमं जुषध्वम्। उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणः। पाहि यज्ञं पाहि यज्ञपतिं विष्णुस्त्वामिन्द्रियेण पातु विष्णुं त्वं पाह्यभि सवनानि पाहि ७।१९—२० अत्र गृह्णामीति नाध्याहारः।

(५) ॐ सोमः पवते सोमः पवते सोमः पवते अस्मै ब्रह्मणेऽस्मै क्षत्रायास्मै सुन्वते यजमानाय पवतऽ इषऽ ऊर्जे पवतेऽद्भ्यऽ ओषधीभ्यः पवते द्यावापृथिवीभ्यां पवते सुभूताय पवते ॥७।२१॥ ॐ विश्वेभ्यस्त्वा देवेभ्यः। ॐ एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः सादयामि ७।२१।

इत्यपि त्रिरुच्चार्यं शेषम् 'अस्मै ब्रह्मण' इत्यादिकं सकृद् ब्रूयात् ( अत्र वाग्विसर्गोऽध्वर्य्वा-दीनाम् ) ॥१५॥

[ देवतादेशात्प्राङ् मन्द्रस्वरः ]

**प्रथमस्थानेन प्राग्देवतादेशात् ॥ १६ ॥**

हिङ्कारादारभ्य अयं मन्त्रो "विश्वेभ्यस्त्वा देवेभ्यः" इत्यस्माद्देवतादेशात्प्राक् प्रथमस्था-नेन प्रयोज्यः । प्रथमस्थानं चोपांश्वपेतया किञ्चिदुच्चैः ॥१६॥

[ प्रातःसवने ऐष्टिकपाशुकानामुच्चैःस्वरविशिष्टानामपि मन्द्रस्वरः ]

**प्रातःसवने चोच्चैःकर्माणि ॥१७॥**

प्रातःसवने यान्युच्चैःकर्माणि प्रैषोच्चारणादीनि, तान्यपि प्रथमस्थानेनैव कार्याणि ऐष्टिकपाशुकानि । अतश्चाग्नीदग्नीन्विहर ( ६।७।४ ) इत्यादयः प्रैषाः आश्रावणादयश्च प्रथम-स्थानेनैव प्रयोज्याः ॥१७॥

[ माध्यन्दिने सवने मध्यमः स्वरः ]

**मध्यमेन माध्यन्दिने ॥ १८ ॥**

माध्यन्दिने सवने नीचैरुच्चैश्च यानि कर्माणि, तान्युभयान्यपि मध्यमेन स्वरेण कार्याणि ॥ १८ ॥

[ तृतीयसवने उच्चैः स्वरः ]

**उत्तमेन तृतीयसवने ॥ १९ ॥**

तृतीयसवने नीचैर्मध्यमेन च स्वरेण विहितानि कर्माणि उत्तमेन स्वरेण कार्याणि ॥१९॥

**उक्थ्य"मुपयामगृहीत" इति ॥ २० ॥**

धाराया एव उक्थ्यस्थाल्या ( ४।२।३।१ ) उक्थ्यसंज्ञं ग्रहं गृह्णीयात् (१) ॥ २० ॥

**ध्रुवं "मूर्द्धानं दिव" इति ॥ २१ ॥**

उद्गातॄणां पश्चिमेन ध्रुवस्थालीमाहृत्य तस्या ध्रुवस्थाल्या ध्रुवं गृह्णाति (२) ॥२१॥

[ ध्रुवग्रहस्य होमपर्यन्तं मध्ये मूत्रपुरीषकरणनिषेधः ]

**आहोमादस्य सुन्वन्न मूत्रपुरीषे कुर्यात् ॥ २२ ॥**

अस्य ध्रुवग्रहस्य यावत् होमो निर्वृत्तो न भवति, तावत् यजमानो मूत्रपुरीषे न कुर्यात् ॥ २२ ॥

[ वैकल्पिको वैश्वानरग्रहहोमः ]

**वैश्वानरं च जानन् ॥ २३ ॥**

जानातिरत्र विकल्पद्योतकः । वैश्वानरं ग्रहं गृह्णीयात्, न वा इत्यर्थः ॥ २३ ॥

---

(१) ॐ उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वयस्वतऽ उक्थाव्यं गृह्णामि । यत्तऽ इन्द्र बृहद्वय-स्तस्मै त्वा विष्णवे त्वा । (नात्र गृह्णामीत्यध्याहारः) ७।२२। ॐ एष ते योनिरुक्थेभ्यस्त्वा देवेभ्यस्त्वा सादयामि । ७।२२।

(२) ॐ मूर्द्धानं दिवोऽ अरतिं पृथिव्या वैश्वानरमृतऽ आ जातमग्निम् । कविꣳ सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः । उप० ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षि-त्तमः ७।२४ । ॐ एष ते योनिर्वैश्वानराय त्वा सादयामि ७।२४ ।

[ स्थालीग्रहाणां पूर्णतया ग्रहणम्, द्रोणकलशे निग्राभ्यासेचनं च ]

**पूर्णान् स्थालीग्रहानर्द्धपूर्णं द्रोणकलशं कृत्वा सर्वमासिञ्चति सुन्वन् ॥२४॥**

अन्तर्यामादिध्रुवपर्यन्तान् ग्रहान् गृहीत्वा आग्रयणम्, उक्थ्यं, ध्रुवं च एतान् त्रीन् स्थालीग्रहान् सम्पातसोमेन पूर्णान् कृत्वा, तथा आग्रयणग्रहः, उक्थ्यग्रहः, ध्रुवग्रहश्च । एतद्ग्रहत्रयार्थं ( पूर्वं ९ ।२।१० ) मृन्मय्यः स्थाल्य आसादिताः । तेषु मृत्पात्रविशेषेषु आग्रयणम्, उक्थ्यम्, ध्रुवं च तथा गृह्णीयात् यथा च स्थाल्यो रसेन पूर्णा भवेयुः ।

तथा सम्पातसोमेन द्रोणकलशं च अर्द्धपूर्णं कृत्वा यजमानः सर्वमासिञ्चति होतृचमसस्था निग्राभ्याः ।

ग्रहाणां ग्रहणसमये एकस्य ग्रहस्य ग्रहणानन्तरमन्यस्य ग्रहणात्पूर्वं मध्ये यो दशापवित्रस्थः सोमरसः पतति स सम्पातसोम इत्युच्यते ॥ २४ ॥

[ अध्वर्य्वादीनां समन्वारब्धानां हविर्द्धानान्निष्क्रमणम् ]

एवमन्तर्यामग्रहादिध्रुवग्रहान्तानां ग्रहणं विधाय इदानीं बहिष्पवमानस्तोत्रार्थं प्रसर्पणं विधत्ते—

**अध्वर्यु-प्रतिप्रस्थातृ-प्रस्तोत्रुद्गातृ-प्रतिहर्तृ-सुन्वन्तः समन्वारब्धा निष्क्रामन्ति ॥ २५ ॥**

अध्वर्य्वादयः परस्परं समारब्धा हविर्द्धानान्निष्कामेयुः । अत्र निष्क्रमणे क्रमः सूत्रोक्त एव ज्ञेयः । सूत्रान्तरे तु "अध्वर्युः प्रस्तोताऽन्वारभते प्रस्तोतारं प्रतिहर्त्ता प्रतिहर्त्तारमुद्गातोद्गातारं ब्रह्मा ब्रह्माणं यजमानो यजमानं ब्रह्मेत्येकेषाम्" ( सत्या० श्रौ० ८।४ ) इत्येवं क्रमोऽभिहितः । अत्र च निष्क्रमतामन्वारम्भणं कच्छं धृत्वैव भवति । अतश्च अध्वर्योः कच्छं प्रतिप्रस्थाता दक्षिणहस्तेन गृहीत्वा स्वीयमपि दार्ढ्यार्थं सव्येन गृह्णीयात् । अपच्छेदे प्रायश्चित्तस्मरणात् । "त्सरन्त इव रेहाणा इव न्यङ्ङिव शीर्षाणि कृत्वा सर्पन्ति ।" ( आप० श्रौ० १२।१७।३) इति । त्सरन्तो मृगं जिघृक्षवो व्याधा यथा छद्मना गच्छन्ति तद्वत् इति रुद्रदत्तः ॥२५॥

**अध्वर्युः प्रथमो यथासङ्ख्यमितरे ॥ २६ ॥**

अध्वर्युः प्रथमो निष्क्रामेत् । इतरे सूत्रोक्तक्रमेण निष्क्रामेयुः ॥ २६ ॥

[ विप्रुड्ढोमानन्तरं वा समन्वारम्भः ]

**हुत्वा वा समन्वारभेरन् ॥ २७ ॥**

अथवा यस्त इति वक्ष्यमाणं होमं कृत्वा सर्वे समन्वारभेन् ॥ २७ ॥

[ समन्वारब्धानां विप्रुड्ढोमोऽध्वर्य्वादिकर्तृकोऽध्वर्युकर्तृको वा ]

**"यस्त" इति विप्रुषाᳬ होमं जुह्वति ॥ २८ ॥**

अभिषवकाले ग्रहणकाले च स्कन्नानां सोमबिन्दूनां स्कन्दनप्रत्यवायपरिहारार्थं यस्त(१) इति मन्त्रेण अध्वर्य्वादयः षडपि सकृद्गृहीतमाज्यं प्रचरण्या क्रमेण जुहुयुः । होमात्पूर्वमन्वारम्भपक्षे सर्वे सव्येन पाणिना समन्वारब्धा दक्षिणेन जुहुयुः । विप्रुड्ढोम इतीयमस्या आहुतेः संज्ञा । न चात्र विप्रुषो हूयन्ते । विप्रुषो जुहोतीत्येवमश्रवणात् ॥२८॥

**अध्वर्युर्वा ॥ २९ ॥**

अथवाऽध्वर्युरेको विप्रुड्ढोमं कुर्यात्, नेतरे ॥२९॥

---

(१) ॐ यस्ते द्रप्स स्कन्दति यस्तेऽ अᳬ०शुर्ग्रावच्युतो धिषणयोरुपस्थात् । अध्वर्योर्वा परि वा यः पवित्रात्तं ते जुहोमि मनसा वषट्कृतᳬ स्वाहा ७।२६।

[ वेदितृणयोरध्वर्योरादानम्, समन्वारब्धानां बहिष्पवमानस्तोत्रार्थं चात्वालदेशं प्रति गमनं च ]

वेदितृणेऽध्वर्युरादत्ते ॥ ३० ॥

स्तीर्णाया वेदेः सकाशाद् द्वे तृणे आददीत ॥३०॥

प्रह्वा उदञ्चो गच्छन्ति ॥ ३१ ॥

तेऽध्वर्य्वादयः षट् अन्वारब्धा एव नम्रा भूत्वा उदङ्मुखाश्चात्वालस्य दक्षिणतो वेदिमध्ये वर्त्तमानं बहिष्पवमानदेशं (८।९।२१) प्रति गच्छेयुः ॥३१॥

[ एकस्य तृणस्य चात्वाले प्रासनम्, अन्यस्योद्गातॄणां पुरस्तात् ]

अन्यतरत्तृणं चात्वाले प्रास्यति "देवाना"मिति ॥ ३२ ॥

गृहीतयोस्तृणयोर्मध्ये एकं तृणमध्वर्युश्चात्वाले प्रक्षिपेत् । अत्रान्वारम्भविसर्गः (१) ॥३२॥

उद्गातॄणां पुरस्तादितरत्तूष्णीम् ॥ ३३ ॥

द्वितीयं तृणं बहिष्पवमानदेशे उपविष्टेभ्य उद्गातृभ्यः पूर्वस्यां दिशि तूष्णीं क्षिपेत् ॥३३॥

[ पवमानस्तोत्रोपाकरणम् ]

जपत्सु "सोमः पवत" इति पवमानोपाकरणं प्रस्तोत्रे तृणे प्रयच्छन् ॥३४॥

जपत्सु उद्गातृषु अध्वर्युः प्रस्तोत्रे द्वे तृणे समर्पयन् सोमः पवते इति मन्त्रेण पवमानस्तोत्रमारभते। सोमः पवत इति मन्त्रेणाऽध्वर्युणा उद्गातृभ्यस्तृणप्रदानमेवोपाकरणम्। गानं तूद्गातृभिः क्रियते । कया नश्चित्र इत्याद्यासु नवसु गायत्रीच्छन्दस्कासु ऋक्षु (३।९।२४-२५) गीयमानं स्तोत्रं पवमानसंज्ञकम्। अस्य सदसो बहिःक्रियमाणत्वात् बहिष्पवमानमित्यपि संज्ञा ॥३४॥

सर्वेषु ॥ ३५ ॥

एवं माध्यन्दिने सवने माध्यन्दिनपवमाने, तृतीयसवने आर्भवपवमाने च प्रस्तोत्रे तृणे प्रयच्छन् सोमः पवत इति ( पृ० ३५८ ) उपाकरणं कुर्यात् ॥३५॥

अतृणो वा ॥ ३६ ॥

सर्वेषु पवमानेषूपाकरणं कुर्यात् ॥ ३६ ॥

इति नवमाध्यायस्य षष्ठी कण्डिका ॥ ६ ॥

---

कुशमुष्टिं वा ॥ १ ॥

अथवा कुशमुष्टिं प्रस्तोत्रे प्रयच्छन् सर्वेषु पवमानेषूपाकरोति ॥ १ ॥

[ उपवेशनप्रकारः ]

प्रत्यङ्मुखा उपविशतः पुरस्ताद्दक्षिणो यजमानः ॥ २ ॥

उद्गातोदङ्मुख उपविशति, प्रत्यङ्मुखः प्रस्तोता, दक्षिणामुखः प्रतिहर्त्ता। एवमुपविष्टानामुद्गातॄणां पुरस्तादध्वर्युप्रतिप्रस्थातारौ प्रत्यङ्मुखावुपविशेताम्। अध्वर्युप्रतिप्रस्थात्रोर्दक्षिणतो यजमान उपविशेत् ॥ २ ॥

---

(१) ॐ देवानामुत्क्रमणमसि ।७।२६।

[ स्तोत्रकाले आधवनीयस्थ पवित्रान्तर्हिते पूतभृत्यासेचनम् ]

**स्तूयमान उन्नेताऽऽधवनीयं पवित्रमन्तर्द्धाय पूतभृत्यासिञ्चति ॥ ३ ॥**

उद्गातृभिः पवमानस्तोत्रे क्रियमाणे उन्नेताऽऽधवनीयस्थं सोममुदग्दशं पवित्रमन्तर्द्धाय पूतभृत्संज्ञे कलशे पवमानस्तोत्रसमाप्ति यावदासिञ्चेत्। स्तोत्रस्य पावनार्थत्वात् ॥ ३ ॥

**स्तोत्रान्ते प्रेष्यत्यग्नीदग्नीन्विहर बर्हिस्तृणीहि पुरोडाशाँ अलङ्कुरु, प्रतिप्रस्थातः पशुनेहीति ॥ ४ ॥**

बहिष्पवमानसमाप्तौ अध्वर्युरुत्तिष्ठन् अग्नीद० कुरु इत्यनेनाऽऽग्नीध्रम्, प्रतिप्रस्थातः पशुनेहीति प्रतिप्रस्थातारं प्रेष्येत्। प्रेष्यभेदाद् द्वौ प्रेषौ सावसानौ ॥ ४ ॥

[ धिष्ण्येष्वाग्नीध्रीयाग्नेर्निवपनम् ]

**यथान्युप्तं धिष्ण्येष्वाग्नीध्रादङ्गारान्निवपति ॥ ५ ॥**

धिष्ण्यनिवापक्रमेण सप्तसु धिष्ण्येषु धिष्ण्यनिवापकाले येन क्रमेण धिष्ण्या न्युप्ताः, तेन क्रमेण आग्नीध्रात् = आग्नीध्रीयाग्नेः अङ्गारान्निवपेदग्नीत्तूष्णीम्, अग्नीदग्नीन्विहरेति प्रेषितः ॥५॥

**अनुपृष्ठ्यां बर्हिस्तृणाति ॥ ६ ॥**

बर्हिः स्तृणीहि इति प्रेषित आग्नीध्रः पृष्ठ्यामनुलक्ष्य अन्तःपात्यादारभ्योत्तरवेदिं यावत् प्राक्संस्थं तूष्णीं बर्हिः स्तृणीयात् ॥ ६ ॥

**आश्विनं गृह्णात्यन्वारब्धे वा "या वा"मिति ॥ ७ ॥**

हविर्द्धानं प्रविश्य द्रोणकलशात्पूतभृतो वा यजमानेऽन्वारब्धे अनन्वारब्धे वा परिप्लवया या वां कशेति (१) आश्विनपात्रे आश्विनसंज्ञं ग्रहं = रसं गृह्णीयात् ॥ ७ ॥

**ग्रहानवेक्षयति यथागृहीतमवकाशान्वाचयन् "प्राणाय म" इति प्रतिमन्त्रम् ॥८॥**

ग्रहणक्रमेणाध्वर्युर्यजमानेन ग्रहानवेक्षयति प्राणायम(२) इत्यादीन् अवकाशसंज्ञान्मन्त्रान् प्रतिमन्त्रं यजमानं वाचयन्। आदावुपांशुग्रहावेक्षणम् ॥ ८ ॥

[ग्रहावेक्षणे क्रमः]

**उपांशुसवनं द्वितीयम् ॥ ९ ॥**

उपांशुग्रहसोमाभिषवार्थं यः पाषाणो गृहीतः स उपांशुसवन इत्युच्यते। तं पाषाणं द्वितीयमवेक्षयेत्। अस्याग्रहत्वाद्वचनमिदम् ॥ ९ ॥

**आश्विनं० षष्ठम् ॥१०॥**

आश्विनं ग्रहं षष्ठमवेक्षयेत्, न ग्रहणक्रमेण ॥१०॥

---

(१) ॐ या वां कशा मधुमत्यश्विना सूनृतावती। तया यज्ञं मिमिक्षतम् । ॐ उपयामगृहीतोऽस्यश्विभ्यां त्वा गृह्णामि। ॐ एष ते योनिर्माध्वीभ्यां त्वा सादयामि ७।११ ।

(२) ॐ 'प्राणाय मे' वर्चोदा वर्चसे पवस्व ( इत्युपांशुग्रहम् ) ॥१॥ ॐ व्यानाय मे व० स्व। ( इत्युपांशुसवनम् ) ॥२॥ ॐ उदानाय मे व० स्व ( इत्यन्तर्यामम् ) ॥३॥ ॐ वाचे मे व० स्व ( इत्यैन्द्रवायम् ) ॥४॥ ॐ क्रतूदक्षाभ्यां मे व० स्व ( इति मैत्रावरुणम् ) ॥५॥ ॐ श्रोत्राय मे व० स्व ( इत्याश्विनम् ) ॥६॥ ॐ चक्षुर्भ्यां मे वर्चोदसौ वर्चसे पवेथाम् ( इति शुक्रामन्थिनौ ) ॥७॥ ॐ आत्मने मे व० स्व ( इत्याग्रयणम् ) ॥८॥ ॐ ओजसे मे व० स्व ( इत्युक्थ्यम् ) ॥९॥ ॐ आयुषे मे व० स्व ७।२७-२८ ( इति ध्रुवम् ) ॥१०॥

**शुक्रामन्थिनौ युगपत् ॥११॥**

अवेक्षयेत् । यथागृहीतमित्येकैकस्य प्राप्नोति, तस्यायमपवादः ॥११॥

**पूतभृदाधवनीयौ च "विश्वाभ्यो म" (१) इति ॥१२॥**

युगपदवेक्षयेत् । अग्रहत्वादेतदपि वचनमेव ॥१२॥

**"कोऽसी"ति द्रोणकलशम् ॥१३॥**

कोऽसीति (२) वाचयन्द्रोणकलशमवेक्षयेत् ॥१३॥

**"भूर्भुवः स्व"रिति जपति ॥१४॥**

यजमानः (३) ॥१४॥

[ ज्ञाताद्यन्यतमस्यैव यजमानस्यावकाशवाचनम् ]

**ज्ञातप्रियानूचानानवकाशयेत् ॥१५॥**

यो वंशपरम्परया शुद्धकुलोत्पन्नत्वेन ज्ञातः, अथवा योऽध्वर्योरत्यन्तं प्रियः, यो वा वेदानुवचनसमर्थः । एतेष्वन्यतमगुणविशिष्टं यजमानमवकाशानवकाशयेत्, नान्यम् । अन्यस्तु अनवकाशित एव यजमान आश्विनं गृहीत्वा कृत्स्नं यज्ञं कुर्यात् ॥१५॥

इति नवमाध्यायस्य सप्तमी कण्डिका ॥ ७ ॥

---

[ सवनीयपश्वर्थं रशनान्तरेण यूपपरिव्ययणम् ]

**ध्रुवगोपं कृत्वा परिव्ययणादि करोति रशनामुदुह्य पूर्वाम् ॥ १ ॥**

ध्रुवस्य ग्रहस्य रक्षां कृत्वा यया रशनयाऽग्नीषोमीये पशौ यूपस्य परिव्ययणं कृतं, तां रशनामुत्कृष्य यूपस्य मध्याद्यूपस्याग्रप्रदेशे कृत्वा रशनान्तरेण सवनीपश्वर्थं पुनः परिव्ययणादि कुर्यात् । ध्रुवगुप्तिश्च कटपटादीनामन्यतमेन ढक्कनमिति कर्कः । "राजपुत्रो ध्रुवं गोपायति" इति आप० श्रौ० (१२।१६।४) । ध्रुवं गोपायतीति ध्रवगोपः कश्चित्क्षत्रियः । तं ध्रुवरक्षकं पुरुषं ध्रुवसमीपे स्थापयित्वेति देवयाज्ञिकः ॥१॥

[ स्तोमायनपशूनां विधानम् ]

**आग्नेयोऽऽग्निष्टोमे सवनीयः पशुः ॥ २ ॥**

अग्निष्टोमसंस्थे ज्योतिष्टोमे सवनीयः पशुरग्निदेवतो भवेत् ॥२॥

**ऐन्द्राग्नश्चोक्थ्ये द्वितीयः ॥ ३ ॥**

उक्थ्यसंस्थे ज्योतिष्टोमे द्वितीयः पशुरैन्द्राग्नः स्यात् । आग्नेयः प्रथमो भवत्येव ॥३॥

**ऐन्द्रो वृष्णिः षोडशिनि तृतीयः ॥ ४ ॥**

षोडशिसंस्थे ज्योतिष्टोमे तृतीयः पशुरिन्द्रदेवत्यो मेषः स्यात् । प्रथमद्वितीयौ तु पूर्वोक्तावेव ॥ ४ ॥

---

(१) ॐ विश्वाभ्यो मे प्रजाभ्यो व्वर्चोदसौ व्वर्चसे पवेथाम् ७।२७-२८ ( इति पूतभृदवधनीयौ ) ॥११॥

(२) ॐ कोऽसि कतमोऽसि कस्याऽसि को नामाऽसि । यस्य ते नामामन्महि यं त्वा सोमेनातीतृपाम ७।२९ ( इति द्रोणकलशम् ) ॥१२॥

(३) ॐ भूर्भुवः स्वः सुप्रजाः प्रजाभिः स्याꣳ सुवीरो व्वीरैः सुपोषः पोषैः ७।२९।

**सरस्वत्यै चतुर्थोऽतिरात्रे, मेषी वा ॥ ५ ॥**

अतिरात्रसंस्थे ज्योतिष्टोमे चतुर्थश्छागः सरस्वत्यै यूपे आलब्धव्यः । पशुत्रयं तु पूर्वोक्तमेव । अथवा अतिरात्रे चतुर्थः पशुर्मेषी स्यात् ॥ ५ ॥

**एतत् स्तोमायनम् ॥ ६ ॥**

एतत्पूर्वोक्तमाग्नेयादिपशुचतुष्टयं स्तोमायनसंज्ञं स्यात् । अग्निष्टोमे आग्नेय एक एव स्तोमायनम् । उक्थ्ये आग्नेयैन्द्राग्नौ स्तोमायनम् । षोडशिन्यामाग्नेयैन्द्राग्नैन्द्राः स्तोमायनम् । अतिरात्रे पशुचतुष्टयं स्तोमायनम् । एवं च अग्निष्टोमसंस्थायामेक एवः पशुः कार्यः । उक्थ्य-संस्थायामाग्नेयः प्रथम, ऐन्द्राग्नो द्वितीय इति पशुद्वयं कार्यम् । षोडशिसंस्थायाम् आग्नेयः, ऐन्द्राग्नः, ऐन्द्रश्चेति पशुत्रयम् । अतिरात्रे इमे त्रयः, मेषी चतुर्थी इति पशुचतुष्टयमिति ॥६॥

[ होतृवरणान्ते इतरेषां वरणम् ]

**होतृनामग्रहणान्तं कृत्वेतरांश्चाश्राव्याश्राव्य प्रवृणीते यथालिङ्गम् ॥ ७ ॥**

अमुकशर्मा होता मानुष इति होतृनामग्रहणान्तं पाशुकं कर्म कृत्वा पुनराश्राव्याश्राव्य इतरान् होतृव्यतिरिक्तान् वक्ष्यमाणैर्मन्त्रैर्यथालिङ्गं प्रवृणीते ॥ ७ ॥

**अश्विनावध्वर्यू आध्वर्यवात् ॥ ८ ॥**

"अश्विनवाध्वर्यू आध्वर्यवात्" इत्यध्वर्युलिङ्गकेन मन्त्रेण अध्वर्युप्रतिप्रस्थातारौ वृणुयात् । अश्विनावध्वर्यूभवेताम्, आध्वर्यवाद्धेतोरिति मन्त्रार्थः । एवमग्रेऽपि ॥८॥

**मित्रावरुणौ प्रशास्तारौ प्राशास्त्रात् ॥ ९ ॥**

अनेन मन्त्रेण द्विवचनान्तेन एकं प्रशास्तारं वृणुयात् ॥ ९ ॥

**इन्द्रो ब्रह्मा ब्राह्मणादिति ब्राह्मणाच्छंसिनम् ॥१०॥**

वृणुयात् । लिङ्गाद् ब्रह्मणो वरणं माभूदिति ब्राह्मणाच्छंसिनमित्युक्तम् ॥१०॥

**मरुतः पोत्रात् ॥११॥**

अनेन मन्त्रेण पोतारं वृणुयात् ॥११॥

**ग्रावो नेष्ट्रात् ॥१२॥**

अनेन नेष्टारं वृणुयात् । ग्राः वाक् ( निघं०१।११।४०) । तद्वान् ग्राः नेष्टा अस्तु ॥१२॥

**अग्निराग्नीध्रात् ॥१३॥**

अनेनाग्नीध्रं वृणुयात् ॥१३॥

**अग्निर्हं दैवीनामिति (१) यजमानम् ॥१४॥**

वृणुयात् ॥१४॥

[ प्रवृत्तहोमः ]

**यथा प्रवृत्तं प्रवृत्तहोमौ जुहति "जुष्टो वाचे भूयासं वाचस्पतये देवि वाग्यत्ते वाचो मधुमज्जुष्टतमं तस्मिन्मा धाः स्वाहा सरस्वत्या" इति ॥१५॥**

वरणक्रमेण होता, अध्वर्युः, प्रतिप्रस्थाता, प्रशास्ता, ब्राह्मणाच्छंसी, ततोऽच्छावाकः कर्ममते, पोता, नेष्टा, अग्नीत्, यजमान इत्येते प्रवृत्तहोमौ प्रत्येकं द्वे द्वे आहुती जुहुत्याहवनीये । तत्र जुष्टो वाचे इति प्रथमामाहुतिं प्रचरण्या सकृद्गृहीतेनाज्येन जुहुयात् ॥१५॥

---

(१) अयं मन्त्रः (२२२) पृष्ठे उक्तः ।

"पावका न" इति द्वितीयाम् ॥१६॥

आहुतिं जुहुयुः प्रचरण्या सकृद्गृहीतेनैव (१) ॥१६॥

( वपामार्जनान्ते प्रातःसवनारम्भः । तत्रादौ सर्पणम् )

वपामार्जनान्तं कृत्वा सयजमाना धिष्ण्यानुपतिष्ठन्ते "विभूरसी"ति (५।३१) प्रतिमन्त्रम् ॥१७॥

आग्नेयस्य सवनीयस्य पशोः प्रयाजादिवपामार्जनान्तं पशुवत् (६।६।२८) कृत्वा सयजमानाः षोडश ऋत्विजः आग्नीध्रीयादीन् अष्टौ धिष्ण्यानुपतिष्ठेयुः विभूरसीत्यादिभिर्मन्त्रैः प्रतिमन्त्रमुत्पत्तिक्रमेण अग्नीषोमीयवत् ( ८।६।२३-२४) ॥१७॥

उत्करान्तं कृत्वा "वागसी"ति सदोऽभिमर्शनम् ॥ १८ ॥

सम्राडसीत्यादिभिर्मन्त्रैः समूह्योऽसीत्यन्तै ( ८।२३ २४) राहवनीयादीनामनुदेशमुत्करान्तमग्नीषोमीयदिनवत्कृत्वा वागसीति (२) सदोऽभिमर्शनं कुर्यात् ॥ १८ ॥

"ऋतस्य द्वारा" विति द्वार्ये ॥ १६ ॥

सदसो द्वारभवे स्थूणे अभिमृशेत (३)। भेदे मन्त्रावृत्तिः ॥ १६ ॥

अभिमन्त्रणमुत्तरैः ॥ २० ॥

उत्तरैर्वक्ष्यमाणैर्मन्त्रैः सूर्यादीनां वक्ष्यमाणानामभिमन्त्रणं कुर्यात् ॥ २० ॥

"अध्वनामध्वपत" इति सूर्यम् ॥ २१ ॥

उपतिष्ठेदध्वर्युः (४) ॥ २१ ॥

"मित्रस्य त्वे"त्यृत्विजः ॥ २२ ॥

सर्वानृत्विजोऽभिमन्त्रयेत् (५) ॥ २२ ॥

"अग्नयः सगरा" इति धिष्ण्यान् ॥ २३ ॥

आग्नीध्रीयादीनष्टौ धिष्ण्यानभिमन्त्रयेत् (६)। यजमान एवेति कर्कः। अभिमन्त्रणानि याजमानानीति कर्कः। आध्वर्यवाणीत्यपरे ॥ २३ ॥

एतत्सर्पणम् ॥ २४ ॥

एतद्धिष्ण्योपस्थानादि कर्म सर्पणसंज्ञं भवति ॥ २४ ॥

इति नवमाध्याये अष्टमी कण्डिका ॥ ८ ॥

[ उत्तरयोः सवनयोः सदोऽभिमर्शनप्रभृति, धिष्ण्योपस्थानप्रभृति वा सर्पणम् ]

सदोऽभिमर्शनादि वोत्तरयोः सवनयोः ॥ १ ॥

---

(१) ॐ पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसुः २०।८४।

(२) ॐ वागस्यैन्द्रमसि सदोऽसि ५।३३।

(३) ॐ ऋतस्य द्वारौ मा मा सन्ताप्तम् ५।३३

(४) ॐ अध्वनामध्वपते प्र मा तिर स्वस्ति मेऽस्मिन् पथि देवयाने भूयात् ५।३३।

(५) ॐ मित्रस्य मा चक्षुषेक्षध्वम् ५।३४।

(६) ॐ अग्नयः सगराः सगरा स्थ सगरेण नाम्ना रौद्रेणानी० ष्ट० ५।३४।

माध्यन्दिनतृतीयसवनयोः सदोऽभिमर्शनादि वा सर्पणं भवति, धिष्ण्योपस्थानादि वेति विकल्पः। ( अत्रावसरे वक्ष्यमाणं पत्न्यशनार्थं पाककरणं तद्ग्रहणं च ) ॥ १ ॥

[ सवनीयहविःप्रचारः, सर्वेषां सकृत्प्रदानं, त्रिबिलायां पञ्चबिलायां पात्र्यावामासादनप्रकारश्च ]

**पुरोडाशैश्चरति ॥ २ ॥**

सवनीयैः पुरोडाशैर्धानादिभिश्चाध्वर्युश्चरेत्। अत्र सवनीयानि हवींषि पञ्च। पुरोडाशः, धानाः, करम्भः, दधि, पयस्या चेति। तेषां मध्ये एकः पुरोडाशः। एवं च अन्त्यो बहुवचान्तः पुरोडाशशब्दः सर्वेषां हविषामुपलक्षकः, छत्रिणो यान्तीतिवत्। एकस्मिन् छत्रिणि, बहुषु च अच्छत्रिषु गच्छत्सु छत्रिणो यान्ति इति छत्रिपदेन सर्वेऽप्युपलक्ष्यन्ते, तद्वत् ॥ २ ॥

अत्र देवतानां भिन्नत्वात् प्रदानस्यापि भेदो न्यायतः प्राप्तस्तदपवदितुमाह—

**एकं प्रदानम् ॥ ३ ॥**

अनेकदेवतानामपि हविषां वचनादेकं प्रदानं भवति ॥ ३ ॥

**एकपात्र्यामासाद्य प्रदक्षिणम् ॥ ४ ॥**

एकस्यां महापात्र्यां सकृदेव पञ्चापि हवींष्यासादयेत्। तत्र मध्ये पुरोडाशः, पुरस्ताद्धानाः, प्रतिदिशमितराणि करम्भ-दधि-पयस्याख्यानि क्रमेण प्रदक्षिणमासादयेत्। दधि-पयस्ययोः स्थालीस्थयोरेव पात्र्यामासादनम्। अथवा पात्र्यां गर्त्तौ कृत्वा दधिपयस्ययोरासादनम्। इयं पात्री पञ्चगर्त्ता त्रिगर्त्ता वा कार्या ॥ ४ ॥

[ अनुवाचनप्रैषः ]

**प्रातः प्रातः सवस्येन्द्राय पुरोडाशानामनुवाचयति ॥ ५ ॥**

"प्रातः प्रातः सवस्येन्द्राय पुरोडाशानामनुब्रूहि" इति प्रशास्तुरनुवाचनप्रैषं कुर्यादध्वर्युः ॥ ५ ॥

**आश्राव्याह "प्रातःसवस्येन्द्राय पुरोडाशान्प्रस्थितान्प्रेष्ये"ति ॥ ६ ॥**

आश्रावणं कृत्वा मैत्रावरुणं प्रति एवमाह ॥ ६ ॥

**एवं यथासवनमनुवाचनप्रैषौ ॥ ७ ॥**

एवमुत्तरयोः सवनयोरनुवाचन-प्रैषौ कुर्यात्। माध्यन्दिनं सवने माध्यन्दिनस्य सवस्येन्द्रायेति। तृतीयसवने तृतीयस्य सवस्येन्द्रायेति ॥ ७ ॥

[ स्विष्टकृदर्थमुपभृत्यवदानम् ]

**उपभृति चावद्यति पशुपुरोडाशवत् ॥ ८ ॥**

अवदानग्रहणसमनन्तरं पशुपुरोडाशवत् उपभृति निर्गुणस्विष्टकृद्यागार्थमवद्येत् ॥ ८ ॥

[ होमानन्तरं होतृधिष्ण्ये इडानिधानम् ]

**उभयꣳ हुत्वा होतृधिष्ण्ये पुरोडाशान्निदधाति ॥ ९ ॥**

प्रधानं स्विष्टकृतं चेत्युभयं हुत्वा होतृधिष्ण्ये होमावशिष्टानि महापात्रीस्थानि पुरोडाशादीनि पञ्च हवींषि निदध्यात् ॥ ९ ॥

एवं पूर्वपक्षं प्रसाध्य सिद्धान्तमाह—

**निरवत्तां वेडाम् ॥ १० ॥**

वाऽवधारणे। नितरामवत्ता निरवत्ता। निरवत्तत्वं च प्राशित्रेडाषडवत्तावदानेषु कृतेषु भवति। अतः प्राशित्राद्यवदानत्रयं कृत्वा इडामध्ये एकस्मिन्प्रदेशे पुरोडाशादीनामंशं

निधाय तामिडां होतृधिष्ण्ये स्थापयेत्। चतुर्धाकरणं त्वत्र न भवति। "हविःशेषभक्ष" (८।७।२४) इति सूत्रात् शेषस्य प्रयोजनवत्त्वात्। शेषो यजमानभक्षणार्थं क्वचिन्निधेयः ॥ १० ॥

[ अथ द्विदेवत्यग्रहप्रचारः ]

## द्विदेवत्यैश्चरति ॥ ११ ॥

द्विदेवत्यसंज्ञकैर्ग्रहैर्यागं कुर्यादध्वर्युः। ऐन्द्रवायव-मैत्रावरुणाश्विनग्रहा द्विदेवत्याः ॥११॥

## वायव इन्द्रवायुभ्यामनुवाचयति ॥ १२ ॥

खरे आसादितमैन्द्रवायवं ग्रहं हस्तेनादाय "वायव इन्द्रवायुभ्यामनुब्रूहि" इति मैत्रावरुणं प्रेष्येत् ॥ १२ ॥

[ द्विदेवत्यानामनुहोमः, अनुवषट्कारहोमश्च ]

## प्रतिप्रस्थाताऽऽदित्यपात्रेण द्रोणकलशा"दुपयामगृहीतोऽसी"ति गृहीत्वा द्विदेवत्यानन्नु जुहोत्युत्तरार्द्धे ॥१३॥

प्रतिप्रस्थाता आदित्यपात्रेण द्रोणकलशात् उपयामगृहीतोऽसीत्येतावतैव (१) मन्त्रेण देवतानिर्देशशून्येन सोमं गृहीत्वा द्विदेवत्यहोमानन्तरमग्नेरुत्तरभागे जुहुयात्। अध्वर्योर्द्विदेवत्यहोमः। अनुहोमः प्रतिप्रस्थातुः ॥१३॥

## अनुवषट्कृतेऽपि ॥१४॥

येषां ग्रहाणामनुवषट्कारो हौत्रकाण्डे विहितः, तेषामनुवषट्कृतेऽप्युत्तरार्द्धे एव जुहुयात् ॥१४॥

[ अनुवषट्कारे आश्रावणाद्यभावः ]

## आश्रुत–प्रत्याश्रुत-प्रैषाश्च, समत्वात् ॥१५॥

अनुवषट्कारेऽपि ओश्रावय अस्तु श्रौषट् अग्निं यज एते प्रैषा भवन्ति। कुतः? अनुवषट्कारयागस्यापि अन्यैर्यागैः समत्वात् ॥१५॥

एवं प्राप्ते सिद्धान्तयति—

## नानन्तर्यात् ॥१६॥

अनुवषट्कारे आश्रुत-प्रत्याश्रुत-प्रैषा न स्युः। "वषट्कृत्यानवानन्ननु वषट्करोति" इति वषट्कारानुवषट्कारयोरानन्तर्यश्रवणात्। आश्रुतादौ क्रियमाणे व्यवधानापत्तेः। ॥१६॥

अनुवषट्कारयागस्यापि सोमयागाभ्यासत्वाविशेषात् कुतो नाश्रुतप्रत्याश्रावणादि इत्याशङ्कायामाह—

## स्यादविरोधात् ॥१७॥

यदि "वषट्कृत्यानवानन्ननु वषट्करोति" इति श्रुतिविहितस्य आनन्तर्यस्य विरोधो न स्यात्, तर्हानीं स्यादेव। विरोधस्य सत्त्वात्तु न भवतीत्यर्थः ॥१७॥

## शेषं शेषमादित्यस्थाल्यामासिञ्च"त्यादित्येभ्यस्त्वे"ति ॥१८॥

प्रतिप्रस्थाता द्विदेवत्यानन्नु हुत्वा प्रतिहोममादित्यपात्रस्थं हुतशेषमादित्यस्थाल्यामासिञ्चेत्। (२) सर्वेषु द्विदेवत्येषु अनुहोतव्यं स्थाल्यां चावनेतव्यम् ॥१८॥

---

(१) ॐ उपयामगृहीतोऽसि गृह्णामि ८।१।

(२) ॐ आदित्येभ्यस्त्वा आसिञ्चामि ८।१।

[ आदित्यस्थाल्या आदित्यपात्रेणापिधानम् ]

## समासिच्य तेनापिदधाति "विष्ण उरुगाये"ति ॥१९॥

तृतीयवारमादित्यस्थाल्यां समासिच्य तेनैवादित्यपात्रेणादित्यस्थालीमपिदध्यात् (१) ॥१९॥

## उन्नीयमानेभ्योऽनुवाचयति ॥२०॥

उन्नीयमानेभ्योऽनुब्रूहि" इति प्रशास्तारं प्रति ब्रूयात् ॥२०॥

[ अच्छावाकवर्जितं नवसु चमसेषु सोमस्य ग्रहणम् ]

## चमसेषून्नयति नवस्वपरेणोत्तरवेदिं निधाय ॥२१॥

उन्नेता अच्छावाकचमसवर्जितान् नव चमसान् क्रमेण उत्तरवेदिमपरेण निधाय तेषु नवसु चमसेषु पूतभृतः सकाशात्सोममुन्नयेत्।

ग्रहसंज्ञकेषु पात्रेषु रसस्य ग्रहणमित्युच्यते । चमसेषु ग्रहणं तून्नयनमित्युच्यते ॥२१॥

[ चमसानामुपस्तरणाभिघारणे शुक्रात्कर्त्तव्ये ]

## शुक्रादुपस्तरणाभिघारणे ॥२२॥

चमसेषु शुक्रात् = द्रोणकलशस्थात्सोमात् उपस्तरणाभिघारणे कुर्यात्। मध्ये अवदानस्थानीयमुन्नयनं तु पूतभृत एव। एवं च प्रथममभिघारणस्थानीयमुन्नयनं द्रोणकलशस्थात्सोमात् कृत्वा ततोऽवदानस्थानीयमुन्नायनं पूतभृत्संज्ञकात्कलशात्कर्त्तव्यम्। "पूतभृतश्चमसान्" (९।५।२०) इत्युक्तेः। तेनैकैकश्चमसस्त्रिरवत्तो भवति ॥२२॥

[ प्रथमं होतृचमसस्योन्नयनम् ]

## होतृचमसे प्रथमम् ॥२३॥

प्रथमं होतृचमसेऽवनयेत्। ततो ब्रह्मणः २ उद्गातुः ३ सुन्वतः ४ प्रशास्तुः ५ ब्राह्मणाच्छंसिनः ६ पोतुः ७ नेष्टुः ८ आग्नीध्रस्य ९ । अयं क्रमो भक्षप्रकरणे "प्रैतु होतुश्चमसः" ( आप० श्रौ० १२।२३।१३ ) इत्यादिसूत्रेण बोध्यः ॥२३॥

इति नवमाध्यायस्य नवमी कण्डिका ॥९॥

[ शुक्रामन्थिग्रहप्रचारः ]

## शुक्रामन्थिभ्यां चरतः ॥१॥

अध्वर्युप्रतिप्रस्थातारौ ॥ १ ॥

## शुक्रेणाध्वर्युर्मन्थिना प्रतिप्रस्थाता ॥२॥

प्रचरेत् ॥ २ ॥

## प्रोक्षितावप्रोक्षितौ यूपशकलावादायऽपिधानं प्रोक्षिताभ्याम् ॥३॥

अध्वर्युप्रतिप्रस्थातारौ एकैकं प्रोक्षितम्, अपरमप्रोक्षितं चेति द्वौ द्वौ यूपशकलावादाय शुक्रामन्थिनोर्ग्रहयोरादानं कुरुतः। प्रणीतेन लौकिकेन वा यूपशकलप्रोक्षणम्। प्रोक्षित-

---

(१) ॐ विष्णऽ उरुगायैष ते सोमस्तꣳ० रक्षस्व मा त्वा दभन् ८।२।

शब्दे अप्रोक्षितशब्दे च जात्येकवचनं द्रष्टव्यम् । प्रोक्षिताभ्यां यूपशकलाभ्यां ग्रहयोरपिधानं कुर्वीयाताम् ॥ ३ ॥

**अपमार्जनमप्रोक्षिताभ्या"मपमृष्टः शण्ड" (१)इत्यध्वर्यु"रपमृष्टो मर्क" (२) इति प्रतिप्रस्थाता ॥४॥**

अप्रोक्षिताभ्यां यूपशकलाभ्या ग्रहयोर्मुखादारभ्य अधस्तान्मार्जनं कुरुतः । "अधस्तात्पांसूनपध्वंसयतः" (आप० १२।२२।२) इति ॥ ४ ॥

**"देवास्त्वे"ति निष्क्रामतो यथालिङ्गम् ॥ ५ ॥**

देवास्त्वेति (३) मन्त्रेण शुक्रलिङ्गेनाध्वर्युः प्राङ्मुखो हविर्द्धानान्निष्क्रामेत् । मन्थिलिङ्गकेन तेनैव मन्त्रेण प्रतिप्रस्थाता प्राङ्मुखो (४) निष्क्रामेत् ॥ ५ ॥

[ अरत्निसन्धानम् ]

**अपरेणोत्तरवेदिमरत्नी सन्धायोत्तरवेदिश्रोण्योर्निधत्तोऽविसृजन्तौ दक्षिणस्यामध्वर्युरुत्तरस्यां प्रतिप्रस्थाता "ऽनाधृष्टाऽसी" ति ॥ ६ ॥**

हविर्द्धानान्निष्क्रम्य उत्तरवेदेः पश्चात् स्थितौ अध्वर्युप्रतिप्रस्थातारौ स्वस्य स्वस्य दक्षिणहस्तस्य अरत्नी परस्परं संश्लेषयतः । संश्लेषणकाले च हस्तस्थितौ ग्रहो यथा न स्कन्देत् तथा संश्लेषणं कर्तव्यम् । एवमरत्नी सन्धाय ततोऽध्वर्युर्दक्षिणस्यां वेदिश्रोण्यां स्वहस्तस्थितं शुक्रग्रहं हस्तेनाविमुञ्चन् निदध्यात् । एवं प्रतिप्रस्थाताऽपि उत्तरस्यां वेद्यां मन्थिग्रहमासादयेत् ॥ ६ ॥

**"सुवीर" (५) इति दक्षिणं यूपदेशं गच्छत्यध्वर्युः "सुप्रजा" (६) इति प्रतिप्रस्थातोत्तरम् ॥७॥**

यूपदेशं गच्छेत् ॥ ७ ॥

**"अपरेण यूपमरत्नी सन्धत्तः" संजग्मान इति यथालिङ्गम् ॥ ८ ॥**

यूपस्य पश्चात्पुनररत्नी सन्धत्तः (७) शुक्रलिङ्गेनाध्वर्युर्मन्थिलिङ्गेन प्रतिप्रस्थाता ॥८॥

**पूर्वेणाशक्तौ ॥ ६ ॥**

यूपमपरेणारत्निसन्धानाशक्तो यूपं पूर्वेणारत्नी सन्दध्याताम् ॥ ६ ॥

**अप्रोक्षितौ निरस्यतो "निरस्तः शण्ड" इत्यध्वर्यु"र्निरस्तो मर्क" इति प्रतिप्रस्थाता ॥ १० ॥**

अप्रोक्षितौ यूपशकलौ ( उत्करे ) निरस्यतो मन्त्राभ्यां (८) यथाक्रमम् ॥ १० ॥

---

(१) ॐ अपमृष्टः शण्डः ।

(२) ॐ अपमृष्टो मर्कः ।

(३) ॐ देवास्त्वा शुक्रपाः प्रणयन्तु । ॐ देवास्त्वा मन्थिपाः प्रणयन्तु ७।१२।

(४) ॐ अनाधृष्टाऽसि उभयोर्मन्त्रः । ७।१२,७।१७ ।

(५) ॐ सुवीरां वीरान् प्रजनयन्परीह्यभि रायस्पोषेण यजमानम् ७।१३ ।

(६) ॐ सञ्जग्मानो दिवा पृथिव्या शुक्रः शुक्रशोचिषा ७।१३ । ॐ सञ्जग्मानो दिवा पृथिव्या मन्थी मन्थिशोचिषा ७।१८ ।

(८) ॐ निरस्तः शण्डः ७।१३ । ॐ निरस्तो मर्कः ७।१८।

**आहवनीये प्रोक्षितौ प्रास्यतः (१) "शुक्रस्याधिष्ठान"मित्यध्वर्यु "मन्थिन" (२) इति प्रतिप्रस्थाता ॥११॥**

प्रोक्षितौ यूपशकलौ ॥ ११ ॥

**"अच्छिन्नस्ये"ति जपित्वाऽऽश्राव्याऽऽह-"प्रातः प्रातः सवस्य शुक्रवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्ये"ति ॥१२॥**

यजमानोऽच्छिन्नस्येति(३)जपेत्। ततोऽध्वर्युराश्राव्य प्रातः प्रातः सवस्येति मैत्रावरुणं प्रति ब्रूयात्। अत्र ल्यबादेशः पूर्वकालतामात्रे, न समानकर्तृकतायाम् ॥ १२ ॥

इति नवमाध्याये दशमी कण्डिका ॥१०॥

[ अध्वर्युप्रतिप्रस्थात्रोः शुक्रामन्थिग्रहहोमः ]

**उभयतो यूपं प्रत्यङ्मुखौ जुहुतः "सा प्रथमे"त्यध्वर्युः प्रथमं, तमनु प्रतिप्रस्थाता ॥१॥**

अध्वर्युप्रतिप्रस्थातारौ यूपस्य पुरस्तात् प्रत्यङ्मुखौ तिष्ठन्तौ वषट्कृते सति जुहुतः। सा(४)प्रथमेति प्रथममध्वर्युः शुक्रम्, तत्पश्चात्तेनैव मन्त्रेण प्रतिप्रस्थाता मन्थिनं जुहुयात् ॥१॥

[ प्रतिप्रस्थातारमनु चमसाध्वर्यूणामाहवनीये होमः ]

**चमसाध्वर्यवश्च ॥२॥**

तं प्रतिप्रस्थातारमनु चमसाध्वर्यवश्च तूष्णीमाहवनीयस्य पश्चात् प्राङ्मुखास्तिष्ठन्त श्चमसैः स्वल्पं स्वल्पं सोमं जुहुयुः। तत्र ब्रह्महोतुद्गातृयजमानचमसानां वषट्कारानुवषट्कारयोर्होमः। होत्रकचमसानां प्रथमवषट्कारे एव होमः ॥ २ ॥

प्रैषप्रकारमाह—

**प्रेष्यति च"प्रैतु होतुश्चमसः, प्रब्रह्मणः, प्रोद्गातॄणां, प्रयजमानस्य, प्रयन्तु सदस्यानाᳪ, होत्राणां चमसाध्वर्यव उपावर्तध्वᳪ शुक्रस्याभ्युन्नयध्व" मिति ॥३॥**

अत्र तत्तच्चमससम्बन्धिनश्चमसाध्वर्यवः प्रेष्यन्ते। होतुश्चमसो होतारं प्रति भक्षणार्थं गच्छतु इति प्रैषार्थः। एवं ब्रह्मण इत्यादावपि द्रष्टव्यम्। अत्र चमसस्य नयनं विना स्वतो गमनासम्भवात् नयनमेव अर्थात् प्रेष्यते इत्यवगन्तव्यम्। तेन एतत्प्रैषानन्तरं तेन तेन चमसाध्वर्युणा तत्तच्चमसस्तस्मै तस्मै चमसिने भक्षणार्थं नेयः। प्रयन्तु सदस्यानामिति सर्वेषामेवानुवादः, सदस्याभावात्। होत्राः प्रशास्तृ-ब्राह्मणाच्छंसि-पोतृ-नेष्ट्राग्नीध्राः। अच्छावाकचमसस्य प्रातःसवनेऽभावात्। तत्सम्बन्धिनो ये चमसाध्वर्यवः ते यूयमुपावृत्य = परा-

(१) ॐ शुक्रस्याधिष्ठानमसि ७।१३।

(२) ॐ मन्थिनोऽधिष्ठानमसि ७।१८।

(३) ॐ अच्छिन्नस्य ते देव सोम सुवीर्यस्य रायस्पोषस्य ददितारः स्याम ७।१४।

(४) ॐ सा प्रथमा संस्कृतिर्विश्ववारा स प्रथमो वरुणो मित्रोऽग्निः । स प्रथमो बृहस्पतिश्चिकित्वांस्तस्मा इन्द्राय सुतमाजुहोत स्वाहा ७।५।१६। ( उभयोर्मन्त्रः )

धृत्य पुनर्द्रोणकलशस्थं सोमं चमसे उन्नयध्वमिति प्रैषार्थः। सदस्यानामित्यन्त एकः प्रैषः। अपरो द्वितीयः ॥ ३ ॥

[ मन्थिग्रहणेऽस्य शुक्रग्रहेऽवनयनम्, तस्य च होतृचमसे ]

**आगम्य प्रतिप्रस्थाता शेषठं॰ शुक्रपात्रेऽवनयति ॥ ४ ॥**

यूपदेशादुभयोरागमनानन्तरं प्रतिप्रस्थाता मन्थिग्रहशेषं शुक्रग्रहेऽवनयेत् ॥ ४ ॥

**तठं॰ स होतृचमसे ॥ ५ ॥**

सोऽध्वर्युस्तं मन्थिशेषमिश्रं शुक्रग्रहं होतृचमसेऽवनयेद् भक्षार्थम् ॥ ५ ॥

[ चमसाध्वर्यूणां पञ्चसु स्वचमसेषु सोमोन्नयनं, प्रशास्त्रादीनां यागार्थं प्रैषश्चाध्वर्योः ]

**पञ्चसून्नयन्ति ॥६॥**

चमसाध्वर्यवो द्रोणकलशात्पञ्चसु होत्राणां स्वस्वचमसेषु सोममुन्नयेयुः ॥ ६ ॥

**तानाश्राव्याश्राव्य प्रेष्यति नामग्राहं यज यजेति प्रशास्त्रादीन् ॥७॥**

चमसाध्वर्युभिरुन्नीतान् तान् चमसान् हस्तेन गृहीत्वा आश्राव्य आश्राव्य प्रशास्तर्यज इत्येवं प्रशास्त्रादीनां नाम गृहीत्वा गृहीत्वा प्रशास्त्रादीनध्वर्युः प्रेष्येद्वरणक्रमेण ब्राह्मणाच्छंसिपोतृ-नेष्ट्रग्नीध्रः ॥७॥

**ब्रह्मन्यजेति ब्राह्मणाच्छठं॰सिनम् ॥८॥**

प्रेष्येत् ॥ ८ ॥

**प्रथमठं॰ हुत्वोत्तमं वा "तृम्पन्त्वि"ति जपति ॥९॥**

प्रथमं प्रशास्तृचमसं हुत्वा अथवा अन्त्यमाग्नीध्रचमसं हुत्वा तृम्पन्त्विति (१) मन्त्रमध्वर्युर्जपेत् ॥९॥

**होतारं प्रत्यङ्ङुपसीद"त्यथाऽग्नी"दिति ॥१०॥**

ततोऽध्वर्युः अग्नीच्चमसहस्त एव सदस्यागत्य 'अयाडग्नीत्' (२) इति मन्त्रेण प्रत्यङ्मुखो होतृसमीपे उपविशेद् भक्षणार्थम् ॥१०॥

[ अध्वर्योः प्रथमभक्षः, ततो वषट्कर्तुः ]

द्विदैवत्येषु ऐन्द्रवायवादिषु ग्रहेषु गृहीत्वा आसाद्य हुतेषु शेषभक्षणे प्राप्ते बहुषु भक्षणकर्तृषु केन सोमः प्रथमो भक्षणीय इति संशये आह —

**द्विदेवत्यान् भक्षति पूर्वः प्रथमचोदनाद्धोमाभिषवकारी भक्षयेदिति श्रुतेः ॥११॥**

द्विदेवत्यशेषानध्वर्युः प्रथमं भक्षयेत् । कुतः ? प्रथम चोदनात्=प्रथमं तस्यैव भक्षणविधानात् । कथमिति चेदुच्यते । होमाभिषवकारीति श्रुतौ हि "हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः प्रतिपरेत्य सदसि सोमान् भक्षयन्ति" इति आम्नायते। अनेन वाक्येन हि होमाभिषवयोः समानकर्तृकत्वनिमित्तो भक्ष एव विधीयते। अन्यत्सर्वं प्रमाणान्तरप्राप्तमनूद्यते। अतश्चैतच्छ्रुतिबलाद्योऽभिषवकर्ता होमकर्ता च, स एव प्रथमो भक्षयेत्। स चाध्वर्युरेव, नान्यः। ( तयोः समुच्चितयोर्निमित्तता ) चमसाध्वर्य्वादीनां

---

(१) ॐ तृम्पन्तु होत्रा मध्वो याः स्विष्टा याः सुप्रीताः सुहुता यत्स्वाहा ७।१६ ।

(२) ॐ अयाडग्नीत् ७।१६ ।

होमकर्तृत्वेऽपि अभिषवकर्तृत्वाभावान्न भक्षणम्। नेष्ट्रुन्नेत्रोरभिषवकर्तृकत्वे तस्यापि भक्षणम् ॥११॥

पक्षान्तरमाह—

## होता वा वचन-मन्त्रवर्ण-कारणेभ्यः ॥१२॥

होता वा पूर्वो भक्षयेत्। कुतः? वचनात्, मन्त्रवर्णात्, कारणाच्च। "वषट्कर्ता प्रथमो भक्षयति" इति वचनात्, "होतुश्चित्पूर्वे हविरद्यमाशत" (ऋ १०।९४।२) इति मन्त्रवर्णात्, "वषट्कृते जुहोति" इति वाक्येन भक्षकारणस्य वषट्कारस्य पूर्वं होतर्येव सत्वात् इत्येवं कारणाच्च होतैव प्रथमं भक्षयेत्।

यद्यपि ततोऽपि पूर्वमभिषवः क्रियते तथापि केवलस्याभिषवस्य कारणत्वाभावात्, होमाभिषवयोर्मिलितयोरेव कारणत्वात् तस्य च वषट्कारानन्तरभावित्वात् वषट्कारस्य भक्षणं प्रति भक्षणं प्रति प्रथमकारणत्वात् तस्य च वषट्कारानन्तरभावित्वात् वषट्कारस्य भक्षणं प्रति प्रथमकारणतेति भावः ॥ १२ ॥

एवं प्राप्ते सिद्धान्तयति—

## नाध्वर्युः समभिव्याहारात् ॥१३॥

नैव भवितुमर्हति होता प्रथमं भक्षयेदिति। किन्तु अध्वर्युरेव प्रथमं भक्षयेत्। कुतः ? समभिव्याहारात् । तस्यैव भक्षेण सह "अभिषुत्याग्नौ जुहोत्यथ भक्षयति" (९।५।१।११) इत्यादिना

होमानन्तरं भक्षेण सह संबन्धात्। अत्राऽऽनन्तर्यवाचिना अथ शब्देन होमानन्तरमध्वर्योर्भक्षो विधीयते। अतोऽध्वर्योः पूर्वो भक्षः ॥१३॥

किं च—

## मन्त्राणां चाविधानात् ॥१४॥

यदुक्तं मन्त्रवर्णाद् होतुः प्रथमो भक्ष इति, तन्न। मन्त्राणामविधायकत्वात्। पौर्वापर्यादिविधाने मन्त्रस्यासामर्थ्यात् ॥१४॥

## कारणस्य च समत्वात् ॥१५॥

समकालत्वादित्यर्थः। "सह वैव वषट्कारेण जुहुयाद्वषट्कृते वा" (१।७२।१२) इति समकालत्वादुभयोः पक्षयोः समत्वम्। वषट्कारोच्चारणसमकालिकत्वस्यापि विधानात् उभयोरेककालिकत्वेन तत्र पौर्वापर्यासम्भवात् पूर्वतरस्याभिषवस्यैव भक्षकारणत्वमिति पूर्वमध्वर्युरेव भक्षयेत् ॥१५॥

[ आदौ द्विदेवत्यभक्षः ]

## ऐन्द्रवायवं प्रतिगृह्य 'त्वैतु वसुः पुरुवसु'(१) रिति ॥१६॥

अध्वर्युर्होत्रा समर्पितमैन्द्रवायवं ग्रहं भक्षणार्थं प्रतिगृह्णीयान्मन्त्रेण ॥१६॥

[ सर्वेषु भक्षेषु समुपहूय वाग्देवीति, भक्षे हि मेति वा मन्त्रेण भक्षणं,
हिन्व मे इति गात्राऽऽलम्भश्च अनाराशंसेषु चमसाप्यायनं च ]

## होतृवद्भक्षणं 'वाग्देवी जुषाणा सोमस्य तृप्यतु सह प्राणेन स्वाहे'ति ॥१७॥

अध्वर्युरैन्द्रवायवस्य भक्षणं होतृवत्कुर्यात् वाग्देवीति मन्त्रेण। ऐन्द्रवायवं प्रति-

(१) ओं ऐतु वसुः पुरुवसुः।

गृह्य होतारमुपहूय तं मुखस्य ढौकयित्वा तस्य द्विर्भक्षणम् । होतृशास्त्रे यो विधिरुक्तः स सर्वोऽप्यत्र प्रत्येतव्यः ॥१७॥

**एवठं० सर्वत्र सोमानां भक्षणम् (१) ॥१८॥**

सर्वत्र ग्रहचमसादौ सोमानां भक्षणमनेनैव मन्त्रेण कुर्यात् ॥१८॥

**वचनादन्यत् ॥१६॥**

भक्षणे मन्त्रान्तरं वचनाद्भवति ॥१६॥

**"भक्षे हि मे"ति वा यथालिङ्गम् ॥२०॥**

अथवा "भक्षे हि मा" ( तै० सं० ३।२।५।१ ) इत्यनुवाकेन शाखान्तरीयेण यस्मिन्मन्त्रे यस्य ग्रहस्य चमसस्य वा लिङ्गं, तेन मन्त्रेण तं भक्षयेत् (२) ॥२०॥

**एवमितरौ प्रतिमन्त्र "मैतु वसुर्विदद्वसु" "रैतु वसुः संयद्वसु" रिति ॥२१॥**

इतरौ मैत्रावरुणाश्विनौ ग्रहौ होत्रा समर्पितौ ऐतु वसुरित्येतावद्भ्यां मन्त्राभ्यां प्रतिगृह्य होतृवद्भक्षयेत् ॥२१॥

**शेषठं० शेषठं० होतृचमसेऽवनयति ॥२२॥**

पूर्वं शुक्रग्रह-मन्थिग्रहयोः शेषौ होतृचमसेऽवनेयौ । (तत्र शुक्रशेषे होमाभिषवकर्तृत्वनिमित्तमध्वर्योर्भक्षणं प्राप्तम् । मन्थिशेषे च तादृशनिमित्तकमेव भक्षणं प्रतिप्रस्थातुः प्राप्तम् । उभयत्र च होतुर्वषट्कारनिमित्तं भक्षणं प्राप्तम् । पूर्वमेव तत्र होतृचमसशेषस्यापि सत्वात् शुक्रग्रहशेषे मन्थिग्रहशेषे होतृचमसशेषे च वषट्कारनिमित्तं होतुर्भक्षणं प्राप्तम्

---

( १ ) आदौ भक्षपरिभाषा । प्रतिप्रस्थात्रोः सर्वत्र होमाभिषवनिमित्तः सकृद्भक्षः । अनुवषट्कारप्रयुक्तस्य होमस्य प्रतिपत्तिकर्मत्वात्तन्निमित्तभक्षणाभावस्तयोः । वषट्कर्तुस्तु प्रतिवषट्कारं भक्षणम् । तेनानुवषट्कारसत्वे द्विर्भक्षः । तदभावे सकृत् । 'उद्गातृचमसं नान्यो भक्षयेत्' इति निषेधात् तं चमसं तदन्यो न भक्षयेत् । किंतु परस्परं त एवेति ।

(२) अथ चमसभक्षविचारः । तत्र होतृचमसेऽध्वर्युप्रतिप्रस्थात्रोः शुक्रामन्थिशेषस्य होमाभिषवनिमित्तं सकृद् भक्षणम् । होतुस्तु वषट्कारनिमित्तं द्विर्भक्षणम् । ब्रह्मयजमानचमसयोरपि वषट्कारद्वयनिमित्तं होतुर्द्विर्भक्षणम् । प्रशास्त्रादिषट्क ( प्रशास्तृ-ब्राह्मणाच्छंसि-पोतृ-नेष्ट्रग्नीत् ) चमसेषु वषट्कारनिमित्तं सकृत् । तेषामनुवषट्कारे होमाभावात् । ततः स्वचमसे समाख्याभक्षः सकृत् । ब्रह्मादयश्च सप्त स्वस्वचमसेषु समाख्यानिमित्तं सकृद् भक्षयेयुः, इति ।

अथ पुनरभ्युन्नीत (सवनमुखीय) भक्षः । तत्राध्वर्योर्होमाभिषवनिमित्तं सकृद्भक्षणम् । चमसिनां तु वषट्कारद्वयनिमित्तं समाख्यानिमित्तं च तन्त्रेण द्विः । यद्वा चमसिनो वषट्कारनिमित्तं स्वं स्वं चमसं भक्षयित्वा पुनः समाख्यानिमित्तं भक्षयन्ति, न तन्त्रेण । तदुक्तम् "षड् भक्षा होतृचमसे द्वौ द्वौ स्तां ब्रह्मसुन्वतोः । उद्गातृणां त्रयः स्वे स्युः पञ्च पञ्च च पञ्चसु" इति ।

अत्र सर्वत्र होतृचमसे होतुरध्वर्युप्रतिप्रस्थात्रोरुपहवः । ब्रह्मयजमानचमसयोस्तयोरेव । चमसिनां चमसेषु तस्य चमसिनोऽध्वर्योश्च । ब्रह्मयजमानयोः स्वस्वचमसेऽध्वर्योः । प्रशास्त्रादीनां होत्रध्वर्योः । अध्वर्योर्होतृचमसे प्रतिप्रस्थातृहोत्रोः । प्रतिप्रस्थातुश्च अध्वर्युहोत्रोः । अध्वर्योश्चमसिचमसेषु होतृतत्तच्चमसिनोः । प्रतिभक्षयित्वमुपहवे सर्वत्र निमित्तम् । अत्र होतुः प्रतिभक्षयितृत्वाभावेऽपि साक्षिभूतो होता प्रष्टव्य एव । तत्रापि होता प्रथमम् अध्वर्युः पश्चादिति कर्कः । अयं भक्षः सर्वत्र सशेषः कार्यो, नाराशंसत्वात् । ("द्विनाराशंसं प्रातः सवनम् । द्विनाराशंसं माध्यन्दिनं सवनम् । सकृन्नाराशंसं तृतीयसवनम्" ( आश्व० ) इति )

इति सवनमुखीयभक्षविचारः ।

इति त्रयाणामध्वर्युप्रतिप्रस्थातृहोतॄणामेकस्मिन्नेव चमसे भक्षणं प्राप्तम् । अतश्च होतृचमसस्थं सोमं प्रथमतोऽध्वर्युः प्रतिप्रस्थातारं होतारं चोपहूय भक्षयेत् । ततः प्रतिप्रस्थाता अध्वर्युं होतारं चोपहूय भक्षयेत् । होता च अध्वर्युप्रतिप्रस्थातारावुपहूय निमित्तत्रयप्राप्तं भक्षणं तन्त्रेण सकृत् कुर्यात् । ) भक्षणानन्तरं त्रयाणामपि द्विदेवत्यानां होतृचमसेऽध्वर्युः शेषमवनयेत् ॥ २२ ॥

**पुरोडाशमात्रामैन्द्रवायवे प्रास्यति, पयस्यां मैत्रावरुण, आश्विने धानाः ॥२३॥**

तत ऐन्द्रवायवे पात्रे पुरोडाशस्य सूक्ष्मं खण्डं प्रक्षिपेत् । पयस्याया अंशं मैत्रावरुणे, आश्विने पात्रे धानानामंशं प्रक्षिपेत् ॥२३॥

**तानि प्रतिप्रस्थाता दक्षिणस्य हविर्द्धानस्योत्तरे वर्त्मनि निदधाति ॥ २४ ॥**

तानि द्विदेवत्यपात्राणि प्रतिप्रस्थाता सदसो निष्काश्य हविर्द्धानमध्ये गत्वा दक्षिणस्य हविर्द्धानस्योत्तरचक्रमार्गे प्रत्यक्संस्थानि सादयेत् ॥ २४ ॥

**इडामादधाति ॥ २५ ॥**

होतृधिष्ण्ये निहितामिडामादाय इडाᳲ होत्रे प्रदायेत्यादिकं कर्म (३।४।५) प्रकृतिवत्कुर्यात् ॥ २५ ॥

**चमसांश्चोद्यच्छन्ति ॥ २६ ॥**

इडोपह्वानकाले सर्वे चमसिनो मुखमात्रे चमसानुद्यच्छन्ति । (अत्र अध्वर्युप्रतिप्रस्थात्रोश्चमसाभावः । उद्गातृप्रतिहर्तृप्रस्तोतॄणामेकश्चमसः । होतृब्रह्मसुन्वत्प्रशास्तृब्राह्मणाच्छंसिपोतृनेष्ट्रच्छावाकाग्नीध्राणां नव, इति दश चमसाः । चमसाध्वर्यवश्च दश । चमसानां तावत्वात् । सुब्रह्मण्यग्रावस्तुदुन्नेतॄणां च चमसो नास्त्येवेति ) ॥२६॥

इति कातीयसूत्रे नवमाध्यायस्य एकादशी कण्डिका ॥११॥

[ वाजिनयागस्य प्रहरणान्ते एव कर्त्तव्यता, नेडामार्जनान्ते ]

**मार्जिते वाजिनेन चरन्ति सूक्तवाकशंयोर्वाकयोरन्यार्थत्वात् ॥ १ ॥**

इडामार्जनान्ते कर्मणि कृते तदनन्तरमेव वाजिनादिभिः पौरोडाशिकैश्चरितव्यम् । यद्यपि प्रकृतौ सूक्तवाकाङ्गतृणप्रहरणान्ते वाजिनयागः कृतः, तथापि न तथाऽत्र कर्तुं शक्यते । प्रकृतौ हि सूक्तवाकशंयुवाकयोरपि पुरोडाशयागाङ्गत्वात् तदनन्तरं तस्यानुष्ठा कृतम् । अत्र च न पुरोडाशार्थं सूक्तवाकशंयुवाकावनुष्ठीयेते । तौ हि पश्वर्थमनुष्ठीयेते । प्रसङ्गाच्च पुरोडाशस्योपकुरुतः । अतश्च पाशुकाङ्गानां न पौरोडाशिकाङ्गव्यवधानं समुचितम् । न वा पाशुकाङ्गोत्सर्गेण पौरोडाशिकाङ्गोत्सर्गः समुचितः । कुतः ? भिन्नप्रयोगपरिगृहीतानां बद्धक्रमत्वाभावात् । अतः सूक्तवाकशंयुवाकाभ्यां सह पौरोडाशिकानां संबन्धाभावात् स्वसम्बद्धे इडामार्जने कृते तदनन्तरमेव पौरोडाशिकाः पदार्था अनुष्ठेयाः ॥ १ ॥

एवं प्राप्ते आह—

**यथोक्तं वाऽप्रसङ्गात् ॥ २ ॥**

वाऽवधारणे । यथोक्तमेव कर्त्तव्यम् । तृणप्रहरणान्ते एव वाजिनयागोऽनुष्ठेय इत्यर्थः । कुतः ? अप्रसङ्गात् । नात्र प्रसङ्गादुपकारः । किन्तु उभयसाधारण्यमेव धर्माणाम् । यदि हि पश्वर्थतैव स्यात्सूक्तवाकादीनां, तदा अन्यत्र प्रसङ्गोपकारकत्वात् नोत्कृष्येरन्नपि पौरोडाशिकान्यङ्गानि । न हि तदस्ति । पशुयागस्यैव सवनीयहविषामपि सोमयागार्थत्वात् ।

अत अनेकोद्देशेनानुष्ठीयमानानां धर्माणां तन्त्रतैव, न प्रसङ्गः। उभयाङ्गमेवानुयाजादि इति कृत्वा तदनन्तरं पौरोडाशिकानामङ्गानां भवत्येवोत्कर्षः। अतः स्वकाले एव वाजिनयागः ॥२॥

( अथ चमसभक्षः )

**होतृचमसेन सोमं भक्षयतः ॥ ३ ॥**

अध्वर्युप्रतिप्रस्थातारौ होतृचमसेन करणभूतेन सोमं भक्षयतः (१) ॥ ३ ॥

**"ह्निन्व मे गात्राणि हरिवः शिवो मे सप्त ऋषीनुपतिष्ठस्वोर्ध्वं मे नाभेः सीद मा मे वाङ्नाभिमति गा" इति गात्राणि सꣳस्पृशन्ति ॥ ४ ॥**

सर्वभक्षेषु भक्षणानन्तरं ह्निन्व मे इति मन्त्रेण शिरःप्रभृति पादान्तान्यङ्गानि संस्पृशेयुर्भक्षयितारः ॥ ४ ॥

[ असर्वभक्षेषु सर्वत्र चमसाप्यायनम् ]

**"आप्यायस्वे"ति चमसानालभन्ते ॥ ५ ॥**

सर्वे चमसिनो मन्त्राभ्यां ( २ ) भक्षणानन्तरं स्वस्वचमान् स्पृशेयुः आप्यायनार्थम्। आप्यायनं पूरणं वर्द्धनमुच्यते ॥ ५ ॥

**सोमं वा सिञ्चन्ति मन्त्रेणाऽसंभवात् ॥ ६ ॥**

वाऽवधारणे। चमसिनः स्वस्वचमसेषु सोममेव सिञ्चेयुः। मन्त्रेणाप्यायनस्यासंभवात्। सोमसेकः पूतभृदादेः ॥ ६ ॥

---

(१) अथ शुक्रामन्थिशेषसहकृतसर्वचमसहोमनिमित्तो महाभक्षप्रयोगः। अध्वर्युर्होतृचमसे प्रतिप्रस्थारं होतारं चोपहूय शुक्रग्रहशेषं सकृत्, होतृचमसस्थं मन्थिशेषं प्रतिप्रस्थाताऽध्वर्युं होतारं चोपहूय सकृत्, होता अध्वर्युप्रतिप्रस्थातारावुपहूय शुक्रामन्थिशेषं स्वचमसस्थं च सशेषं द्विः, ततो होता स्वचमसं निधाय ब्रह्मचमसे ब्रह्माणं पृष्ट्वा द्विः, ब्रह्मा च होतारमुपहूय समाख्यानिमित्तं स्वचमसं सशेषं सकृत्, उद्गातारः स्वचमसमन्योन्यं पृष्ट्वा सकृत्, होता यजमानचमसे यजमानमुपहूय द्विः, यजमानः स्वचमसे होतारं पृष्ट्वा समाख्यानिमित्तं सशेषं सकृत्, होता प्रशास्तृचमसे प्रशास्त्रध्वर्यू पृष्ट्वा वषट्कारनिमित्तं सशेषं सकृत्, प्रशास्ता होत्रध्वर्यू पृष्ट्वा समाख्यानिमित्तं सशेषं सकृत्, होता ब्राह्मणाच्छंसिचमसे तम्, अध्वर्युं च पृष्ट्वा वषट्कारनिमित्तं सशेषं सकृत्, ब्रा० सी च स्वचमसे होत्रध्वर्यू पृष्ट्वा समाख्यानिमित्तं सशेषं सकृत्, होता पोतृचमसे पोत्रध्वर्यू पृष्ट्वा सशेषं सकृत्, पोता स्वचमसे होत्रध्वर्यू पृष्ट्वा, होता नेष्टृचमसे नेष्ट्रध्वर्यू पृष्ट्वा, नेष्टा स्वचमसे होत्रध्वर्यू पृष्ट्वा, होता अग्नीचमसेऽग्नीदध्वर्यू पृष्ट्वा, अग्नीत् स्वचमसे होत्रध्वर्यू पृष्ट्वा, होता स्वचमसे अध्वर्यू पृष्ट्वा समाख्यानिमित्तं सशेषं सकृद्भक्षयेदिति सर्वचमसानां शुक्रामन्थिशेषसहकृतसवनमुखीयहोम निमित्तो महाभक्षः।

अथ प्रशास्त्रादिपञ्चचमसानां पुनरभ्युन्नीतहोमनिमित्तभक्षः। तत्राध्वर्युः प्रशास्त्रादिपञ्चचमसेषु होतारं तं तं चमसिनं च पृष्ट्वा होमाभिषवनित्तं सकृत्सशेषम्, ते च चमसिनः स्वे स्वे चमसे होत्रध्वर्यू पृष्ट्वा वषट्कारद्वयनिमित्तं द्विः सशेषं भक्षयन्ति। यद्वा वषट्कारद्वयनिमित्तं द्विर्भक्षयित्वा पुनर्होत्रध्वर्यू पृष्ट्वा समाख्यानिमित्तं सकृत्सशेषं भक्षयेयुः। (प्रातः सवने उन्नीयमान ( प्रस्थित ) याज्याः षट्। इतरयोः सवनयोः सप्त। तत्राच्छावाकस्यापि सत्वात्। प्रस्थितयाज्या येन येन पठिता भवति तस्य तस्यैव चमसस्य होमो भक्षणं चात्र। न सर्वेषां चमसानाम्। शस्त्रयाज्यायां तु सर्वेषां चमसानां होमो भक्षश्चेति)।

( २ ) ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्। भवा वाजस्य सङ्गथे। सन्ते पयाꣳसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः। आप्यायमानोऽ अमृताय सोम दिवि श्रवाꣳस्युत्तमानि धिष्व ।१२।११२-११३।

[ असर्वभक्षाणां चमसानां निधानम्, तेषां नाराशंससंज्ञा च ]

**असर्वभक्षांस्तान्दक्षिणस्य हविर्द्धानस्य पश्चादक्षं निदधति चमसानधः ॥ ७ ॥**

चमसाध्वर्यव असर्वभक्षान् सशेषानेव कृताप्यायनान् चमसान् दक्षिणस्य हविर्द्धानस्य अक्षस्य पश्चादधो = भूमौ प्रागग्रानुदक्संस्थान् स्थापयेयुः ॥ ७ ॥

**ते नाराशꣳसा आवैश्वदेवात् ॥ ८ ॥**

ते चमसाः "वैश्वदेवं गृह्णाति शुक्रपात्रेण" (९।१४।१) इति वक्ष्यमाणग्रहप्रचारं यावत् नाराशंससंज्ञका भवन्ति ॥ ८ ॥

**पुरोडाशशकलमादाय समुपहूताः स्म इत्युक्त्वोत्तिष्ठति ॥ ९ ॥**

अध्वर्युः पुरोडाशस्य शकलमादाय समुपहूताः स्म इत्युक्त्वा होतुरग्रे ऊर्ध्वो भवेत् ॥ ९ ॥

**अच्छावाकायैनत्प्रयच्छन्नाहाऽच्छावाक वदस्व यत्ते वाद्यमिति ॥ १० ॥**

एनत्पुरोडाशशकलमच्छावाकाय प्रयच्छन् 'अच्छावाक वदस्व यत्ते वाद्यम्' इति अच्छावाकं प्रति ब्रूयात् ॥ १० ॥

**'उपो अस्मा'निति ब्रुवति होतारमाहोपहवमयं ब्राह्मण इच्छते तꣳ होतरुपह्वयस्वेति ॥ ११ ॥**

अच्छावाकेन 'उपो अस्मान्' इति मन्त्रे पठ्यमाने सति अध्वर्युः उपहवमयं ब्राह्मण इच्छते तꣳ होतरुपह्वयस्व" इति होतारं प्रति ब्रूयात् ॥ ११ ॥

**उपहूत उन्नीयमानायानुवाचयति ॥ १२ ॥**

होत्रा अच्छावाके उपहूते सति 'उन्नीयमानायानुब्रूहि, इत्यच्छावाकं प्रेष्येत् ॥ १२ ॥

**अच्छावाकचमसमुन्नयति होत्राचमसवत्सर्वम् ॥ १३ ॥**

अच्छावाकस्य चमसाध्वर्युर्द्रोणकलशादच्छावाकचमसमुन्नयेत् । तत्र होत्राणां प्रशास्त्रादीनां चमसानां यथोन्नयनादिहोमान्तं कृतं, तद्वदत्रापि सर्वं कुर्यात् ॥ १३ ॥

**आनिधानात्कृत्वा ॥ १४ ॥**

तस्य च दक्षिणस्य हविर्द्धानस्य पश्चादक्षनिधानं यावत् कुर्यात् । सर्वग्रहणाच्च तृम्पन्त्विति जपः । अत्राध्वर्युरच्छावाकमुपहूय सकृत्सशेषम्, अच्छावाकश्चाध्वर्युमुपहूय वषट्कारद्वयनिमित्तं समाख्यानिमित्तं च तन्त्रेणाच्छावाकचमसं द्विर्भक्षयेत् ॥ १४ ॥

**पूर्वश्चाग्नीध्रादतः ॥ १५ ॥**

अतः परं सर्वेषु चमससंबन्धिकार्येषु अयमच्छावाकचमस आग्नीध्रचमसात्पूर्व मुन्नयनादौ भवेत् ॥ १५ ॥

[ हविर्यज्ञर्त्विजामाग्नीध्रे इडाप्राशनम् ]

**आग्नीध्रे हविर्यज्ञर्त्विज इडां प्राश्नन्ति ॥ १६ ॥**

ब्रह्म-होत्रध्वर्यु-मैत्रावरुणाग्नीध्रा आग्नीध्रे इडां प्राश्नीयुः । ऋत्विग्ग्रहणं यजमानव्युदासार्थम् ॥ १६ ॥

[ पत्न्याः स्वशालायां गृह्यानिसाधितस्य प्राशनम् ]

**पत्नी चान्यच्छालायाम् ॥ १७ ॥**

पत्नी चास्मिन्नेव काले पत्नीशालामध्ये उपविष्टा सती इडादिहविर्व्यतिरिक्तं स्मार्ताग्नौ पाचितं हविष्यं प्राश्नीयात् । ( यजमानस्य होत्रकाणां च सवनीयशेषप्राशनम् ) ॥ १७ ॥

इति नवमाध्याये द्वादशी कण्डिका ॥१२॥

[ अथर्तुग्रहप्रचारः ]

**ऋतुग्रहैश्चरतः ॥ १ ॥**

अध्वर्युप्रतिप्रस्थातारौ ॥ १ ॥

**द्रोणकलशा"दुपयामगृहीतोऽसि मधवे त्वे"ति द्वादश प्रतिमन्त्रम् ॥ २ ॥**

उपयामगृहीतोऽसि मधवे त्वेत्यादिभिर्द्वादशभिर्मन्त्रैः (१) प्रतिमन्त्रं द्रोणकलशाद् द्वाभ्याम् ऋतुग्रहपात्राभ्यामुभयतोमुखाभ्यां रसं द्वादश गृह्णीतः, न सादयतः । नात्रानुवषट्कारः ॥ २ ॥

**अध्वर्योः पूर्वः पूर्वो मन्त्रः ॥ ३ ॥**

षण्णां मन्त्रयुग्मानां मधवेत्यादीनां मध्ये पूर्वः पूर्वो मन्त्रोऽध्वर्योः स्यात् ॥ ३ ॥

**उत्तर उत्तरः प्रतिप्रस्थातुः ॥ ४ ॥**

षण्णां मन्त्रयुग्मानां मध्ये उत्तर उत्तरो मन्त्रः प्रतिप्रस्थातुः स्यात् ॥ ४ ॥

**युगपत्प्रथमौ गृह्णीतः ॥ ५ ॥**

प्रथमावृतुग्रहौ अध्वर्युप्रतिप्रस्थातारौ सहैव गृह्णीतः ॥ ५ ॥

**उत्तमौ च ॥ ६ ॥**

एकादश द्वादशौ ग्रहौ च सहैव गृह्णीयाम् ॥ ६ ॥

**व्यत्यासं मध्ये ॥ ७ ॥**

द्वितीयैकादशयोर्मध्ये ये ऋतुग्रहास्तृतीयप्रभृति दशमपर्यन्ता अष्टसङ्ख्याः, तान् व्यत्यस्य व्यत्यस्य वैपरीत्येन गृह्णीयाद् युगपत् । अयं भावः । ग्रहाश्चमसाश्च हविर्धानशकटाऽधःस्थिताद् द्रोणकलशात्, तत्र तत्र स्थितात्पात्रान्तराद्वा गृह्यन्ते, आहवनीये च हूयन्ते । तत्र प्रथमद्वितीययोः एकादशद्वादशयोश्च ऋतुग्रहयोर्युगपद् ग्रहण-प्रवेश निष्क्रमण-होमाः । तृतीयप्रभृति दशमपर्यन्तेषु ग्रहेषु व्यत्यासेन, अर्थात् शुक्रग्रहं गृहीत्वा हविर्धानमण्डपात् निष्क्रामति

---

(१) ॐ उप० मधवे त्वा गृह्णामि । ॐ उप० माधवाय त्वा गृ० ।
ॐ उपया० शुक्राय त्वा गृ० । ॐ उप० शुचये त्वा गृ० ।
ॐ उपया० नभसे त्वा गृ० । ॐ उप० नभस्याय त्वा गृ० ।
ॐ उप० सीषे त्वा गृ० । ॐ उप० स्यूर्जे त्वा० गृ० ।
ॐ उप० सहसे त्वा गृ० । ॐ उप० सहस्याय त्वा गृ० ।
ॐ उप० तपसे त्वा गृ० । ॐ उप० तपस्याय त्वा गृ० ७।३०।

अध्वर्यौ हविर्द्धानमण्डपस्य द्वारि तिष्ठन् प्रतिप्रस्थाता ग्रहणार्थं प्रविशति। यदा स आवहनीये जुहोति तदा प्रतिप्रस्थाता ग्रहं गृह्णाति। यदा पुनर्ग्रहणार्थमध्वर्युः प्रविशति तदाऽयं निष्क्रामति। यदा चाध्वर्युरनन्तरं गृह्णाति तदा प्रतिप्रस्थाता जुहोतीति ॥ ७ ॥

प्रचरणं च सर्वेषाम् ॥ ८ ॥

द्वादशानामप्यृतुग्रहाणां यागानुष्ठानं व्यत्यासेनैव भवति। पूर्वमध्वर्योः, ततः प्रतिप्रस्थातुः, ततोऽध्वर्योः, पुनः प्रतिप्रस्थातुरित्येवम् ॥ ८ ॥

निष्क्रामत्येकः प्रविशतीतरः ॥ ९ ॥

प्रचरणकालेऽध्वर्युप्रतिप्रस्थात्रोर्मध्ये एको हविर्द्धानमध्यान्निःसरति। अपरः प्रविशतीत्येवं व्यत्यासः कार्यः ॥ ९ ॥

उत्तर उत्तरः प्रतिप्रस्थाताऽपरकालत्वात् ॥ १० ॥

प्रचरणे ग्रहणे च देशतः कालतश्च प्रतिप्रस्थाता उत्तर उत्तरो भवेत्। प्रतिप्रस्थातृमन्त्राणां पश्चात्कालीनत्वात् ॥१०॥

उभयतोऽध्वर्युं पात्रेण परिगृह्णाति ॥ ११ ॥

हविर्द्धानान्निष्क्रामतो हविर्द्धाने प्रविशतो वाऽध्वर्योर्दक्षिणेन प्रतिप्रस्थाता पात्रं हरेत्। स्वयमुत्तरतो यायात् ॥ ११ ॥

[ आद्यानां दशयागानां सर्वहुतत्वम्, अन्त्ययोः सशेषत्वम्। सर्वेषां वाऽसर्वहुतत्वम्। अस्मिन् पक्षे पूर्वशेषे उत्तरस्य ग्रहणम्। अत्र पूर्वपक्षे लाघवम्, उत्तरपक्षे च गौरवं भक्षविधौ ]

सर्वहुताः प्रागुत्तमाभ्याम् ॥ १२ ॥

एकादशद्वादशाभ्यां प्राक् सर्वे ऋतुग्रहाः सर्वहुता भवेयुः ॥ १२ ॥

[ ऋतुयागषट्के ऋतुना प्रेष्य इति, ततो यागचतुष्टये ऋतुभिः प्रेष्य इति, ततोऽन्त्ययोः ऋतुना प्रेष्येति प्रैषः ]

ऋतुनेति षट् प्रेष्यतः ॥ १३ ॥

आद्येषु षड्तुग्रहयागेषु "ऋतुना प्रेष्य, ऋतुना प्रेष्य" इति मैत्रावरुणं प्रेष्यतः ॥१३॥

ऋतुभिरिति चतुरः पात्रमुखे विपर्यस्य ॥ १४ ॥

ऋतुग्रहाणां द्वे पात्रे उभयतोमुखे भवतः। तत्र षट्सु यागेषु याभ्यां ग्रहणं होमश्च कृतः, तयोर्मुखयोर्विपर्यासं कृत्वा सप्तमाष्टमनवमदशमेषु ऋतुग्रहयागेषु 'ऋतुभिः प्रेष्य' 'ऋतुभिः प्रेष्य' इति प्रशास्तारं प्रेष्यतः ॥१४॥

षड्वदुत्तमौ ॥ १५ ॥

एकादशद्वादशावृतुग्रहौ पात्रमुखविपर्यासेन प्रेषणेन च षड्वत् प्रचरतः। तेन 'ऋतुना प्रेष्य' इति प्रैषः, पात्रयोरग्रेण होमश्च भवति ॥१५॥

यजमानः प्रेषितो होतरेतद्यजेति ब्रूयात् ॥ १६ ॥

द्वादशे ऋतुग्रहे गृहपते यज इत्येवं प्रशास्त्रा प्रेषितो यजमानो होतरेतद्यज इति ब्रूयात्। होता च यजमानयाज्यां ब्रूयात् ॥१६॥

अध्वर्यू च ॥ १७ ॥

एकादशे ऋतुग्रहे प्रशास्त्रा अध्वर्यू यजतमिति प्रेषितावध्वर्युप्रतिप्रस्थातारौ होतरेतद्यज इति ब्रूयाताम्। ततस्तद्याज्यामपि होतैव ब्रूयात्। अत्र होमः सशेषः ॥ १७ ॥

**त्रयोदशं च गृह्णीयादिच्छन्नुपयामगृहीतोऽस्यंहसस्पतये त्वे"ति (१) ॥१८॥**

अध्वर्युरिच्छन् पूर्वस्मिन्नेव शेषे त्रयोदशमृतुग्रहं गृह्णीयात्। यद्वा एकादशशेषं पात्रान्तरे कृत्वा त्रयोदशग्रहणम्। इच्छन्नित्यनेन विकल्पः ॥ १८ ॥

**प्रतिप्रस्थातारमनुजुहोति ॥ १९ ॥**

अध्वर्युर्गृहीतं त्रयोदशमृतुग्रहं हुतवन्तं प्रतिप्रस्थातारमनु पश्चाज्जुहुयात्। पूर्वपक्षे सशेषं, द्वितीयपक्षे सर्वम् ॥ १९ ॥

[ ऐन्द्राग्नग्रहग्रहणम् ]

**अन्यतरस्मिञ्छेषौ कृत्वा वशिनैन्द्राग्नं गृह्णाति प्रतिप्रस्थाते "न्द्राग्नी"(२) इति ॥ २० ॥**

होमानन्तरमध्वर्युः स्वपात्रस्थितं सोमं प्रतिप्रस्थातृपात्रे निनयति। प्रतिप्रस्थाता च स्वपात्रस्थितं सोममध्वर्युपात्रे निनयति। एवंकरणेन यद्रिक्तमन्यतरस्य पात्रं, तेन प्रतिप्रस्थाता द्रोणकलशात्पूतभृतो वा परिप्लवया ऐन्द्राग्नं ग्रहं गृह्णीयात् ॥ २० ॥

[ ऋतुग्रहभक्षः ]

**आहरति भक्षं होतृ-पोतृ-नेष्ट्रग्नीद्-ब्राह्मणाच्छंसि-प्रशास्तृभ्यः ॥ २१ ॥**

अत्र होत्रादयः षट् क्रमेण षट्सु ऋतुग्रहेषु वषट्कर्तारः। प्रथम-तृतीय-पञ्चमेषु ग्रहेषु अध्वर्युर्होमाभिषवकर्त्ता। द्वितीय-चतुर्थ-षष्ठेषु प्रतिप्रस्थाता होमाभिषवकर्ता। एवं च प्रथम-तृतीय-पञ्चमेषु अध्वर्युर्होतृनेष्ट्र-ब्राह्मणाच्छंसिभिः साकं क्रमेण भक्षयेत्। प्रतिप्रस्थाता पोत्रग्नीत्प्रशास्तृभिः साकमेकपात्रे क्रमेण भक्षयेत् ( ३ )। उपहवप्रार्थनं तु यत्र यस्य संबन्धस्तेन सह कर्तव्यम्।

अत्र भक्षाहरणविधिबलादेव असर्वहुतत्वं प्रतीयते। एवं च पूर्वोक्त (९।१३।१२) सर्वहुतेन सहास्य विकल्पः ॥ २१ ॥

---

( १ ) ॐ उप० तोऽस्यंहसस्पतये त्वा गृ० ७।३०।

( २ ) ॐ इन्द्राग्नीऽ आगतं सुतं गीर्भिर्नभो वरेण्यम्। अस्य पातं धियेषिता। उप० सीन्द्राग्निभ्यां त्वा गृ० ।७।३१ ॐ एष ते योनिरिन्द्राय त्वा सादयामि ६।३१।

( ३ ) अथ ऋतुग्रहभक्षः। तत्र पूर्वेषां दशानां सर्वहुत्वपक्षे भक्षविधिः। अध्वर्युः प्रतिप्रस्थातृहोतारौ पृष्ट्वा अस्य अन्यमुखेन सकृत्सशेषम्, प्रतिप्रस्थाताऽध्वर्युहोतारौ पृष्ट्वा तथैव, होताऽध्वर्युप्रतिप्रस्थातारौ पृष्ट्वा तथैव भक्षयेदिति।

सर्वेषामसर्वहुतत्वपक्षे तु प्रथमं होत्रा सहाध्वर्युः, पोत्रा सह प्रतिप्रस्थाता, नेष्ट्रा सहाध्वर्युः, प्रशास्त्रा सह प्रतिप्रस्थाता भक्षयेत्। ततः पात्रमुखं विपर्यस्य होत्रा सहाध्वर्युः, पोत्रा सह प्रतिप्रस्थाता, नेष्ट्रा सहाध्वर्युः, अच्छावाकेन सह प्रतिप्रस्थाता, पुनः पात्रमुखं विपर्यस्य होत्रा सहाध्वर्युः पोत्रा सह प्रतिप्र०; नेष्ट्रा सहाध्वर्युः, अच्छावाकेन सह प्रतिप्र०, पुनः पात्रमुखं विपर्यस्य होत्रा सह ध्वर्युः, होत्रा सह प्रतिप्रस्थाता इति (अत्राध्वर्युप्रतिप्रस्थात्रोः षड् भक्षाः। प्रतिभक्षमष्टादशोपह्वानानि। होतुश्चत्वारो भक्षाः, प्रतिभक्षं विंशतिवामुपह्वानानि। पोतृनेष्ट्रोर्द्वौ। प्रतिभक्षं द्वाविंशतिरुपह्वानानि। चतुर्णामेकवारंभक्षः। प्रतिभक्षं त्रयोविंशतिरुपह्वानानीति)।

**विपर्यस्य पात्रठं० होतृ-पोतृ-नेष्टृच्छावाकानाम् ॥ २२ ॥**

ततः पात्रमुखं विपर्यस्य अग्रं गृहीत्वा होत्रादीनां चतुर्णामर्थे भक्षणार्थं सोममाहरेत् सप्तमाष्टमनवमदशमेषु ग्रहेषु ॥२२॥

[ यजमानस्य याज्यावषट्कारौ होत्रैव पठनीयौ ]

प्रेषितो यजमानो होतरेतद्यजेति ब्रूयादिति पूर्वमुक्तम् (९।१३।१६)। तत्र याज्या यजमानेन पठनीया। स च स्वस्थाने होतारं नियोजयति होतरेतद्यजेति। अनेन यजमानात् याज्या अपनीयते। तत्रेदं विचार्यते। याज्यैव परं यजमानतोऽपनीयते उत वषट्कारोऽपि। विचारफलं तु यदि याज्यामात्रं यजमानतोऽपनीयेत तर्हि वषट्कारस्य यजमानेनैव पठनीयत्वात् तन्निमित्तो भक्षो यजमानस्यैव स्यात्, इति वषट्कारोऽप्यपनीयेत। तदा वषट्कर्तृनिमित्तो भक्षो होत्रा कर्तव्यः स्यात्। अतो याज्यैवापनीयते उत उभयमपीति संशये पूर्वपक्षयति—

**यावदुक्तठं० होतुर्यजमानयोगाद्वरणवत् ॥ २३ ॥**

होतरेतद्यज इत्यनेन याज्यमात्रपनीयते, नतु वषट्कारोऽपि। कुतः ? यजमानयोगात्। वषट्कारस्य यजमानेनैव संबन्धात्। तत्कथमित्याह—वरणवत्। यथा याज्यापनयनेन याज्यार्थवरणस्यापनयनं न क्रियते, किन्तु यजमानसंबन्ध्येव तत्। एवं वषट्कारोऽपि नापनीयते इति यजमानस्यैव वषट्कारः, तन्निमित्तं भक्षणं च तस्यैवेति ॥ २३ ॥

एवं प्राप्ते सिद्धान्तयति—

**कारणाद्वा होतृभक्षः ॥ २४ ॥**

वाऽवधारणे। होतुरेव भक्षः। कुतः ? कारणात्। "याज्याया अनवानन् वषट्करोति" इति विधिबलात् याज्यया सह वषट्कारोऽपनीयते। अतो वषट्कारस्याप्यपनीतत्वेन

---

अत्र "होतुर्विंशतिराह्वाने पोतुर्नेष्टुर्द्विरुत्तरा। त्रिरुत्तरा चतुर्णां तु शेषे त्वष्टादश स्मृताः" इत्युपह्वानगणना। सा चैवम्।

अध्वर्युः प्रथमं पात्रं गृहीत्वा होतरु० १ प्रति प्र० रु० २ पोतरु० ३ नेष्टरु० ४ प्रतिप्र० ५ अग्नीद० ६ ब्राह्मणाच्छंसिन्तु० ७ प्रतिप्र० ८ प्रशास्त० ९ होत० १० प्रतिप्र० ११ पोत० १२ नेष्ट० १३ प्रतिप्र० १४ अच्छावाकोप० १५ होतरु० १६ प्रतिप्र० १७ होतरु० १८ एवमष्टादश पृष्ट्वा भक्षयेत्। एवं प्रतिप्रस्थाता अध्वर्युं उ० होत० पोत० अध्व० नेष्ट० अग्नी० अध्व० ब्राह्म० प्रशास्तरु० अध्व० हो० पो० अध्व० ने० अच्छा० अध्व० हो० हो० इत्यष्टादश पृष्ट्वा भक्षयेत्। ततो होता अध्व० प्रति० पो० अध्व० ने० प्रति० अग्नी० अध्व० ब्रा० प्रति० प्रशा० अध्व० प्रति० पो० अध्व० ने० प्रति० अच्छा० अध्व० प्रति० इति विंशतिं पृष्ट्वा भक्षयेत्। पोता च अध्व० हो० प्रति० अध्व० ने० प्रति० अग्नी० अध्व० ब्रा० प्रति० प्रशा० अध्व० हो० प्रति० अध्व० ने० प्रति० अच्छा० अध्व० हो० प्रति० हो० इति द्वाविंशतिं पृष्ट्वा, नेष्टा च अध्व० हो० प्रति० पो० अध्व० प्रति० अग्नी० अध्व० ब्रा० प्रति० प्रशा० अध्व० हो० प्रति० पो० अध्व० प्रति० अच्छा० अध्व० हो० प्रति० हो० इति द्वाविंशतिं पृष्ट्वा, ब्राह्मणाच्छंसी च अध्व० हो० प्रति० पो० अध्व० ने० प्रति० अग्नी० अध्व० प्रति० प्रशा० अध्व० हो० प्रति० पोत० अध्व० ने० प्रति० अच्छा० अध्व० हो० प्रति० हो० इति त्रयोविंशतिं पृष्ट्वा, प्रशास्ता च अध्व० हो० प्रति० पो० अध्व० ने० प्रति० अग्नीदु० अध्व० ब्रा० प्रति० अध्व० हो० प्रति० पो० अध्व० ने० प्रति० अच्छा० अध्व० हो० इति एकविंशतिं पृष्ट्वा, अच्छावाकश्च अध्व० हो० प्रति० पो० अध्व० ने० प्रति० अग्नी० अध्व० ब्रा० प्रति० प्रशा० अध्व० हो० प्रति० पो० अध्व० ने० प्रति० अध्व० हो० प्रति० होत० इति त्रयोविंशतिं पृष्ट्वा, अग्नीच्च अध्व० हो० प्रति० पो० अध्व० ने० प्रति० अध्व० ब्रा० प्रति० प्रशा० अध्व० हो० प्रति० पो० अध्व० ने० प्रति० अच्छा० अध्व० हो० प्रतिप्र० हो० इति त्रयोविंशतिं पृष्ट्वा भक्षयेत्। इति ऋतुग्रहभक्षोऽसर्वहुतपक्षे।

होत्रैव वषट्क्रियमाणत्वात् तन्निमित्तो भक्षस्तस्यैव भवेत् । एतच्च जैमिनीये ( ३ । ५ । १६ ) विचारितम् ॥ २४ ॥

वरणवदिति यदुक्तं तत्राह—

**अप्राप्तेर्वरणम् ॥२५॥**

अ इति पृथक्पदम् । प्राप्तेरिति भक्षप्राप्तेरित्यर्थः । भक्षप्राप्तेर्वरणं न कारणम् । किन्तु वषट्कारे एव । अतो वषट्कर्तृत्वाद्भक्षणं होतुरेव ॥२५॥

**विपर्यस्य पात्रꣳ होतुर्द्विर्भक्षणम् ॥२६॥**

पुनः पात्रमुखं विपर्यस्य होतुरेव वारद्वयं भक्षणम् ॥ २६ ॥

**तावद्वा सर्वहुतत्वात्पूर्वेषाम् ॥२७॥**

अथवा एकादशद्वादशयोरेव शेषस्य द्विर्होतुः, अध्वर्युप्रतिप्रस्थात्रोश्च सकृद्भक्षणं भवेत् । पूर्वेषां दशानामृतुग्रहाणां सर्वहुतत्वात् । तदुक्तमाचार्येण—"सर्वहुताः प्रागुत्तमाभ्याम्" (६।१३।१२) इति ॥२७॥

**निर्हृत्य पात्रꣳ होतुः पुरस्तात्प्राङास्ते ॥२८॥**

भक्षितमृतुपात्रं मार्जालीये प्रक्षालनार्थं सदसो बहिर्निष्काश्य होतुः पुरस्तात्प्राङ्मुख उपविशेदध्वर्युः ॥२८॥

[ होतुः शस्त्रपठनम् , अध्वर्योश्च प्रतिगरकरणम् ]

**अभिहुतः 'शोꣳसावे'त्याह्व'त्योथामो दैवे'ति प्रतिगृणाति प्रणवावसानयोः ॥२९॥**

होता शस्त्राणां शंसनकाले शोंसाव इति मन्त्रेणाध्वर्युमभिमुखीकरणार्थमाह्वयति । आहूतोऽध्वर्युः प्रदक्षिणमावृत्य होतुः संमुखो भूत्वा तेन शस्यमानानामृचां प्रणवेऽवसाने च 'ओथामो दैव' इत्येतावता मन्त्रेण प्रतिगरं कुर्यात् ( १ ) । प्रतिगरः प्रोत्साहनम् ॥२९॥

---

( १ ) सोमयागे हि "ग्रहं गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति" (तै० सं० ३।१।४ इति विधिना तत्तद्देवताकेषु ग्रहेषु गृहीतेषु चमसेषु वोन्नीतेषु बहिष्पवमानादीनां स्तोत्राणां प्रारम्भो विहितः । स्तोत्रं च उद्गातृपुरुषैस्त्रिभिः क्रियमाणः सामगानविशेषः । स्तोत्रसमाप्त्यनन्तरं "स्तुतमनुशंसन्ति" इति विधिना शंसनं विहितम् । शंसनं शस्त्रमिति पर्यायः । शस्त्रं च साम्ना स्तुताया देवताया एव पुनः ऋङ्मन्त्रेण सामरहितेन स्तवनं होत्रा क्रियमाणम् । अत्र तत्तच्छस्त्रप्रारम्भे अर्थात् शस्त्रस्याद्याया ऋचः प्रारम्भे, शस्त्रमध्ये च अर्थात् शस्त्रान्तर्गत तृच-प्रगाथ-निविदाद्यारम्भे च प्रातःसवने होता शोंसावोम् इत्यध्वर्युमाह्वयेत् । माध्यन्दिनतृतीयसवनयोरपि शस्त्रमध्ये शोंसावोम् इति त्र्यक्षर एवाहावः । तयोः शस्त्रप्रारम्भे तु अध्वर्यो शोंसावोम् , अध्वर्यो शोशोंसावोम्, इति क्रमेण षडक्षरसप्ताक्षरावाहावौ । हे अध्वर्यो आवां शंसावेत्यर्थः । स एव प्रणवान्तः शोंसावोम् इति । एष चार्थः "अनभिहिङ्कृत्य शोंसावोमित्युच्चैराहूय तूष्णीं शंसेदुपांशु सन्तन्वन्" (५।९।) "एष चाहावः प्रातःसवने शस्त्रादिषु" ( आश्व० ५।६ ) "प्लुतादिः प्रणवेऽप्लुतादिरवसाने" ( आश्व० ५।९ ) इति, अध्वर्यो शोंसावोम् इति माध्यन्दिने, अध्वर्यो शो शोंसावोम् इति तृतीयसवने" ( ५।१८ ) इत्यादिना आश्वलायनसूत्रे विहितः ।

एवं प्रतिगरोऽपि यत्र यत्र होत्रा शोंसावोम् इति आहावः क्रियते तत्र तत्र सर्वत्र तत्समकालमेव अध्वर्युणा 'शोंसामो दैव' इति कार्यः । एवम् अध्वर्यो शोंसावोम्, अध्वर्यो शोशोंसावोम् इत्यत्रापि शोंसामो दैव इत्येव प्रतिगरः । शस्त्रे काश्चन ऋचोऽर्द्धर्चशः, काश्चन पच्छः पठ्यन्ते । तत्र अर्द्धर्चे पच्छे च होता

**ओमिति वा ॥३०॥**

अथवा प्रणवावसानयोः ओम् इति वा प्रतिगृणीयात् ॥३०॥

**शस्त्रान्ते नित्यम् ॥३१॥**

शस्त्रसमाप्तौ ओम् इत्येष एव प्रतिगरः कार्यः ॥३१॥

**वागन्तो वा पूर्वः ॥३२॥**

अथवा पूर्वः "ओथामो दैव" इति प्रतिगरो वाक्शब्दान्तो भवति । ओथामो दैव वाक् इत्येवम् ॥३२॥

[ ऐन्द्राग्नग्रहप्रचारः ]

**ऐन्द्राग्नमादायाश्राव्याहोक्थशा यज सोमस्येति ॥३३॥**

शस्त्रान्ते ओमिति प्रतिगीर्य ऐन्द्राग्नं ग्रहमादायाश्राव्य उक्थशा यज सोमस्य इति होतारं प्रेष्येत् ॥३३॥

**एष प्रैषः सशस्त्राणाम् ॥३४॥**

सर्वेषां सशस्त्राणां ग्रहाणामुक्थशा यज सोमस्य इति प्रैषो भवति ॥३४॥

[ सशस्त्रग्रहहोमानन्तरं नाराशंसचमसानां कम्पनम् ]

**नाराशꣳसानां च कम्पनꣳ हूयमाने ॥३५॥**

सशस्त्रे ग्रहे हूयमाने चमसाध्वर्यवो हविर्द्धाने एव तिष्ठन्तः स्वस्वचमसान् हस्ते गृहीत्वा नाराशंससंज्ञकानां स्वचमसानां प्राङ्नयनेन द्विर्द्विः कम्पनं कुर्युः । यज्ञपार्श्वे— मरुत्वतीये माहेन्द्रे ऐन्द्राग्ने वैश्वदेवयोः । नाराशंसाः प्रकम्प्यन्ते ग्रहेष्वेतेषु पञ्चसु ( १०९ ) इति ॥३५॥

**अनिहितेषु चेद्धोमः सशस्त्रस्य ॥३६॥**

यदि नाराशंसचमसेषु अस्थापितेषु सत्सु सशस्त्रस्य ग्रहस्य होमः, तदा चमसानामपि होमो भवति सशेषो, वषट्कारेऽनुवषट्कारे च । ( अत्र अध्वर्युः सदो गत्वा होतारमुपहूय सकृत्सशेषम्, होताऽध्वर्युमुपहूय निःशेषं द्विरैन्द्राग्नं भक्षयेदाज्यशस्त्रोत्तरम् । अनुपहूय चमसिनां स्वस्वचमसभक्षः सकृत्सशेषमिति ) ॥३६॥

इति नवमाध्याये त्रयोदशी कण्डिका ॥१३॥

---

अवसिते ओथामो दैव इति प्रतिगरः । एवं शस्त्रे सर्वा ऋचः प्रणवान्ताः पठ्यन्ते । तत्र सर्वत्र ओ३थामो दैव इति प्रतिगरः । एवं शस्त्रसमाप्तौ ऋक् प्रणवान्ता पठ्यते, तत्र ( शस्त्रान्ते ) तु ओ३म् इति त्रिमात्रः प्रणवः प्रतिगरः । निवित्सु अपि ओथामो दैवेत्येव प्रतिगरः । यथा अग्निर्देवेद्धः ( निवि० १।१ ) ओथामो दैव । मन्विद्धः ( निवि० १।२ ) ओथामो दैव इत्यादि । निविदो निविदध्याये ( ऋ० प० १ ) द्रष्टव्याः ।

आग्निमारुते शस्त्रे 'प्र द्यावा यज्ञैः' ( ५।४।२० ) इत्येतासु स्वादुष्किलीयासु ऋक्षु च ( ४।७।३० ) मदामो दैवेति प्रतिगर इति वक्ष्यते ( १०।६।५-६ ) । प्रतिगीर्यते प्रत्युच्चार्यत इति प्रतिगरः । "शस्त्रस्वरः प्रतिगर ओथामो दैवेति" ( आश्व० ५।९ ) । शस्त्रस्य स्वर इव स्वरो यस्य सः । अर्थात् येन स्वरेण होता शंसति तेनैव स्वरेण अध्वर्युरपि प्रति गृणीयादिति ।

[ वैश्वदेवग्रहग्रहणम् ]

**भक्षप्रभृत्यानिधानात्कृत्वा वैश्वदेवं गृह्णाति शुक्रपात्रेण द्रोणकलशादन्वारब्धे "वौमास" (१) इति ॥ १ ॥**

ऋतुपात्रस्थस्य, इतरग्रहशेषस्य, चमसानां च भक्षणं हविर्द्धानमध्ये निधानान्तं कृत्वा शुक्रपात्रेण परिप्लवया द्रोणकलशाद्वैश्वदेवं ग्रहं गृह्णीयात् यजमानेऽन्वारब्धेऽनन्वारब्धे वा । ( अत्र अध्वर्युर्होतारं पृष्ट्वा, होता चाध्वर्युं पृष्ट्वा, चमसिनश्चापृष्ट्वैव सर्वं स्वस्वचमसस्थं सोमं भक्षयेयुरिति प्रउगोत्तरं वैश्वदेवग्रहभक्षः ) ॥ १ ॥

[ द्रोणकलशपवित्रयोः स्वस्थाने सादनम् । ]

**शुक्रं पूतभृत्यासिच्य द्रोणकलशपवित्रयोजनम् ॥ २ ॥**

द्रोणकलशस्थं सर्वं शुक्रसंज्ञकं सोमं पूतभृत्यासिच्य द्रोणकलश—पवित्रयोर्योजनं स्वस्थाने कुर्यात् ॥ २ ॥

[ सवनीयहविर्निर्वापोऽग्नीधः ]

**पुरोडाशप्रथमान्त्सवनीयान्निर्वपति पयस्यावर्जम् ॥ ३ ॥**

एतावति कृते तत आग्नीध्रः पशुपुरोडाशमुखानि सवनीयहवींषि पूर्वोक्तानि (६।१।१५) माध्यन्दिनसवनार्थं निर्वपेत् । तत्र पयस्यां वर्जयेत् । तानि च आग्नेयोऽष्टाकपालः, इन्द्राय हरिवते धानाः, इन्द्राय पूषण्वते करम्भः, इन्द्राय सरस्वतिवते दधीति ॥ ३ ॥

[ अध्वर्योः स्तोत्रारम्भार्थमुद्गातॄन्प्रति प्रैषः ]

**स्तोत्रमुपाकरोति तृणाभ्यां ग्रहमुपस्पृश्योपावर्त्तध्वमिति ॥ ४ ॥**

द्वाभ्यां दर्भतृणाभ्यां वैश्वदेवं ग्रहमुपस्पृश्य "उपावर्तध्वम्" इति मन्त्रेण तृणे प्रस्तोत्रे प्रयच्छन् स्तोत्रमारभेत् ॥ ४ ॥

**एवं धुर्येषु सर्वत्र ॥ ५ ॥**

पवमानव्यतिरिक्तानि सर्वाणि स्तोत्राणि धुर्याणीत्युच्यन्ते । सर्वेषु धुर्येषु पवमाना तिरिक्तस्तोत्रेषु तृणाभ्यां ग्रहमुपस्पृश्य प्रस्तोत्रे तृणे प्रयच्छन् उपावर्त्तध्वम् इति स्तोत्रोपाकरणं कुर्यात् ॥ ५ ॥

[ वैश्वदेवग्रहभक्षणोत्तरं चमसानां सर्वभक्षत्वम् ]

**सर्वभक्षाश्चमसाः ॥ ६ ॥**

वैश्वदेवग्रहभक्षणानन्तरं चमसिभिश्चमसाः सर्वभक्षाः कार्याः ॥ ६ ॥

**मार्जालीये पात्रप्रक्षालनम् ॥ ७ ॥**

भक्षितानां ग्रह-चमसानां पात्राणां मार्जालीये प्रक्षालनं विदध्यात् ॥ ७ ॥

[अथोक्थ्यप्रचारः । तस्य च त्रिधा विभक्तस्य ग्रहणम्]

**उक्थ्यं विगृह्णाति त्रेधं "देवेभ्यस्त्वे"ति (२) सर्वेभ्यः ॥ ८ ॥**

उक्थ्यस्थालीस्थं सोमं त्रिधा विभज्योक्थ्यपात्रे गृह्णीयात मैत्रावरुणब्राह्मणाच्छंस्य-च्छावाककर्त्तृकसशस्त्रयागार्थम् ॥ ८ ॥

---

(१) ॐ ओमासश्चर्षणीधृतो विश्वे देवास आगत । दाश्वाꣳसो दाशुषः सुतम् । उप० सि विश्वेभ्यस्त्वा देवेभ्यो गृ० । ॐ एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः सादयामि ७।३३।

(२) ॐ देवेभ्यस्त्वा देवाव्यं यज्ञस्यायुषे गृह्णामि ७।२२ ।

"मित्रावरुणाभ्यां त्वे"ति वा प्रशास्त्रे ॥ ९ ॥

अथवा मैत्रावरुणकर्तृकशस्त्रवद्ग्रहयागार्थमुक्थ्यस्थालीस्थसोमतृतीयांशमुक्थ्यपात्रे मित्रावरुणाभ्यां त्वेति (१) गृह्णीयात्। मन्त्रविकल्पार्थोऽयमारम्भः, ॥ ९ ॥

तूष्णीं सादनम् ॥ १० ॥

उक्थ्यपात्रस्य स्वस्थाने तूष्णीं सादनं कुर्यात्, न योन्यासादनम् ॥ १० ॥

स्तोत्रमुपाकरोति ॥ ११ ॥

पूर्ववत् ॥११॥

उक्थशा यज सोमानामिति प्रैषोऽनाराशर्ठ०सेषु ॥ १२ ॥

अनाराशंसेषु चमसेषु सशस्त्रग्रहस्य 'उक्थशा यज सोमानाम्' इति बहुवचनान्तः प्रैषो भवेत् ॥ १२ ॥

यस्य विग्रहस्तस्य प्रथमं चमसमुन्नयति ॥ १३ ॥

यत्सम्बन्धी उक्थ्यग्रहस्तस्य ऋत्विजः प्रशास्त्रादेः सम्बन्धिनं चमसं प्रथमं गृह्णीयात्। अयमत्र विषयः। उक्थ्यग्रहस्य त्रयः पर्यायाः। तत्र उक्थ्यस्थालीगतं सोमं त्रेधा विभज्य तृतीयमंशं प्रथमतो मित्रावरुणाभ्यां गृह्णाति, स प्रशास्तुरुक्थ्यविग्रहः। द्वितीयमंशमिन्द्राय गृह्णाति स ब्राह्मणाच्छंसिन उक्थ्यविग्रहः। तृतीयमंशमिन्द्राग्निभ्यां गृह्णाति सोऽच्छावाकस्योक्थ्यविग्रहः। त्रिष्वपि विग्रहेषु उक्थ्यग्रहणानन्तरं दशापि चमसा गृह्यन्ते, हूयन्ते, भक्ष्यन्ते च। तत्र यत्संबन्धि उक्थ्यविग्रहस्तस्य चमसं प्रथमं गृहीत्वा (उन्नीय) तत इतरे नव चमसा उन्नेयाः। एवं च प्रथमस्य ग्रहस्य प्रशास्तृसंबन्धित्वात् तस्यैव चमसः प्रथममुन्नेयः। स एव च तत्र शंसनकर्ताऽपि। एवं द्वितीये विग्रहे ब्राह्मणाच्छंसिनश्चमसः प्रथमं ग्राह्यः। इतरे च नव चमसास्ततः। तृतीये च अच्छावाकचमसस्य प्रथमं ग्रहणम्, इतरेषां नवानां चमसां तत इति। विभज्य ग्रहो विग्रहः ॥ १३ ॥

ग्रहशेषं चास्मिन्नासिञ्चति ॥ १४ ॥

यस्मिन्प्रथममुन्नयनं कृतं, तस्मिन् चमसे होमानन्तरं ग्रहशेषमासिञ्चेत् ॥ १४ ॥

एवं प्रतिप्रस्थातोत्तराभ्या "मिन्द्राय त्वे"ति ब्राह्मणाच्छंसिन "इन्द्राग्निभ्यां त्वे"त्यच्छावाकाय ॥ १५ ॥

एवं प्रथमे उक्थ्यविग्रहे अध्वर्युणा प्रचारिते द्वितीयतृतीयाभ्यां विग्रहाभ्यां प्रतिप्रस्थाता प्रचरेत्। अयं विशेषः। इन्द्राय त्वेति मन्त्रेण (२) ब्राह्मणाच्छंसिकर्तृकशस्त्रवते यागाभ्यासाय ग्रहं गृह्णीयात्। इन्द्राग्निभ्यां त्वेति (३) मन्त्रेणाच्छावाककर्तृकशस्त्रवते यागाभ्यासाय (४) ॥ १५ ॥

---

(१) ॐ मित्रावरुणाभ्यां त्वा देवाव्यं यज्ञस्यायुषे गृह्णामि ७।२३।

(२) ॐ इन्द्राय त्वा देवा० मि ७।२३।

(३) ॐ इन्द्राग्निभ्यां त्वा देवा० मि ७।२३।

(४) अथोक्थ्यविग्रहाः। तत्र अध्वर्युः प्रशास्तृचमसे प्रशास्तारं पृष्ट्वा, प्रशास्ताऽध्वर्युं पृष्ट्वा स्वचमसे, ततः स्वचमसं निधाय अप्सु होत्रादिचमसेषु तान् पृष्ट्वा, होत्रादय एकं प्रशास्तारं पृष्ट्वा स्वस्वचमसेषु, प्रशास्ता स्वचमसेऽध्वर्युंपृष्ट्वा, प्रतिप्रस्थाता ब्राह्मणाच्छंसिनं पृष्ट्वा स्वचमसे, स च प्रतिप्रस्थातारं पृष्ट्वा

**प्रागच्छावाकविग्रहात्सोमोपावहरणम् ॥ १६ ॥**

अच्छावाकविग्रहात्प्राक् पूर्ववत् (९।१।९) सोमोपावहरणं कुर्यात् ॥ १६ ॥

**वसतीवर्यर्द्धं चासिञ्चत्याधवनीये "विश्वे देवा मरुत इन्द्रो अस्मानस्मिन् द्वितीये सवनेन जह्युः । आयुष्मन्तः प्रियमेषां वदन्तो वयं देवानाᳬँ सुमतौ स्यामे"ति ॥ १७ ॥**

वसतीवरीणामर्द्धमाधवनीये आसिञ्चेत् ॥ १७ ॥

**एकधनार्द्धं च ॥ १८ ॥**

एकधनानां सर्वेषामर्द्धमर्द्धमुदकमाधवनीयेऽवनयेत् । प्रतिघटं मन्त्रावृत्तिः ॥ १८ ॥

**चरिते सर्वैः प्रशास्तः प्रसुहीति ब्रूयात् ॥ १९ ॥**

सर्वैर्विग्रहैश्चरिते सति "प्रशास्तः प्रसुहि" इति मैत्रावरुणं ब्रूयात् ॥ १९ ॥

**प्रसूतानाᳬँ सर्पणं प्रसूतानाᳬँ सर्पणम् ॥ २० ॥**

सर्पत इति मैत्रावरुणेनानुज्ञातानां सर्वर्त्विजां सदसो बहिर्निष्क्रमणं भवति ॥ २० ॥

इति कातीये श्रौतसूत्रे नवमाध्याये चतुर्दशी कण्डिका ॥१४॥

( इति प्रातःसवनम् )

इति कात्यायनमहर्षिकृते श्रौतसूत्रे विद्याधरशर्मकृतायां वृत्तौ नवमोऽध्यायः ॥



स्वचमसे, ब्राह्मणाच्छंसी होत्रादीन् पृष्ट्वा, होत्रादयो ब्राह्मणाच्छंसिनं पृष्ट्वा स्वस्वचमसे, ब्राह्मणाच्छंसी स्वचमसे प्रतिप्रस्थातारं पृष्ट्वा, स चाच्छावाकं पृष्ट्वा महशेषम्, अच्छावाकः प्रतिप्रस्थातारं पृष्ट्वा स्वचमसे, अच्छावाको होत्रादिचमसेषु होत्रादीन् पृष्ट्वा, होत्रादयश्चाच्छावाकं पृष्ट्वा स्वस्वचमसे, अच्छावाकः स्वचमसे प्रतिप्रस्थातारं पृष्ट्वा भक्षयेदिति । सर्वभक्षाश्चमसाः । इति प्रातःसवनभक्षणम् ।

# अथ दशमोऽध्यायः ।

[ सर्पणप्रभृति माध्यन्दिनसवनानुष्ठानम् । ]

## सर्पणादि माध्यन्दिनम् ॥ १ ॥

प्रातःसवने सर्पणमुक्तम् ( ९।९।१ ) । तदारभ्य माध्यन्दिनसवनीयाः पदार्था अनुष्ठेयाः ॥ १ ॥

( अथ महाभिषवः )

[ होतृचमसे निहितानां वसतीवरीणां यजमानाय समर्पणं, सोमोष्णीषस्य ग्रावस्तुते ]

## होतृचमसे वसतीवरीः कृत्वा यजमानाय प्रयच्छत्युष्णीषं ग्रावस्तुते ॥२॥

अभिषवार्थमिदम् । एतासामपां निग्राभ्यसंज्ञकत्वमपि पूर्ववद्वेदितव्यम् ।

उष्णीषं ग्रावस्तुते प्रयच्छेत्, सोमबन्धनार्थं यत्पूर्वमुपदिष्टम् । "ग्रावस्तुते सोमोष्णीषं प्रयच्छति" इत्यापस्तंबः ( १३।१।५। ) ( 'अत्र ग्रावस्तुत्तिष्ठन् सोममभिष्टौति' इति आश्व. ५।१२ ) ॥ २ ॥

महाभिषवमाह—

[ त्रिपर्यायो महाभिषवः ]

## अद्र्यादानप्रभृति त्रिपर्यायानभिषवान्करोति ॥३॥

'देवस्य त्वेत्यद्रिमादाय' ( ९।१। ) इत्यत आरभ्य त्रिपर्यान् त्रीन् अभिषवान् प्रातःसवनवत् चत्वारः कुर्युः । अत्र करोतीत्येकवचनेऽपि शाखान्तरे बहुवचनदर्शनाच्चत्वार एवाभिषवे । "सर्वं॑ राजानमभिषुण्वन्ति" ( सत्या० ९।१।५ ) इति । "तृतीयसवने ऋजीषमिश्रमभिषुण्वन्ति" (१०।७।१३) इति तृतीयसवने सोमाभिषव एव नास्तीति भावः ॥३॥

## आत्तमभिमिमीते ॥ ४ ॥

अध्वर्युणा यो ग्रावा देवस्य त्वेत्यनेन गृहीतस्तस्योपरि मुष्टिना सोमांशूनादाय प्रक्षिपेत् । न प्रातःसवनवदुपांशुसवने ॥ ४ ॥

कुतः—

## उपाꣳशुसवनस्यानिङ्गनश्रुतेः ( ४।१।२।२५ ) ॥५॥

उपांशुसवनस्य अचालनं श्रूयते । यद्युपांशुसवने मानं क्रियेत तर्हि तत आदाय अधिषवणस्योपरि निधाय तत्र मानं कर्तव्यम् । तथा च तस्य स्वस्थानाच्चालनं स्यात् ॥५॥

[ अभिषवत्रये प्रथमपर्याये, तृतीयाभिषवे मध्यमपर्याये च मा भेरिति मन्त्रसमुच्चयः । प्रतिपर्यायं क्रमेण द्रुता द्रुततरा द्रुततमा वृत्तिश्च ]

## "इहा३ इहा३" इति प्रथमः पर्यायः ॥६॥

अत्र त्रयोऽभिषवाः । एकैकस्मिन्नप्यभिषवे त्रयः पर्यायाः पूर्वमुक्ताः ( ९।५।२ ) तत्र त्रिष्वप्यभिषवेषु यः प्रथमः पर्यायः स इहा३ इहा३ इति मन्त्रेण कार्यः । अत्र "मा भेः" ( ९।३५ ) इति मन्त्रोऽपि अनेन मन्त्रेण समुच्चीयत इति कर्कः ॥ ६ ॥

## अविलम्बितो द्वितीयः ॥७॥

त्रयाणामपि अभिषवाणां द्वितीयः पर्यायः प्रथमपर्यायापेक्षया शैघ्र्येण कर्तव्यः ॥७॥

## तूर्णस्तृतीयः ॥८॥

त्रयाणामप्यभिषवाणां तृतीयः पर्यायस्तु द्वितीयपर्यायापेक्षयाऽपि सत्वरमन्त्रकः कर्तव्यः । अत्र मन्त्रे वीप्साश्रवणात्प्रतिप्रहारमावृत्तिर्मन्त्रस्य कार्या ॥ ८ ॥

## अविलम्बितस्थान उत्तमे "बृहद् बृह" दिति ॥ ९ ॥

तृतीयेऽभिषवे योऽविलम्बितस्थानः, अर्थात् मध्यमः पर्यायः, तत्र बृहद् बृहत् इति मन्त्रः पठनीयः । प्रतिप्रहारं मन्त्रावृत्तिः ॥ ९ ॥

## अर्द्धं वाऽविशेषोपदेशात् ॥ १० ॥

अथवा अभिषवस्यार्द्धं बृहत् बृहत् इति मन्त्रेण कार्यम् , अर्द्धं तु इहा ३ इत्यनेन । कुतः? अविशेषोपदेशात् । माध्यन्दिनशाखायां हि "इहा इहा इत्यभिषुणोति"(४।३।३।१) इति पर्याय-विशेषमनुपादायैव इहा इति मन्त्रस्य विधानात् मध्यमपर्यायेऽपि तस्य प्राप्तत्वेन तत्रापि तस्यावश्यकत्वात् । अतश्च बृहदित्यनेन अभिषवस्यार्द्धम्, इहा इत्यनेन चार्द्धं कर्तव्यमिति सूत्र-काराशयः । कर्काचार्यास्तु इहा इति मन्त्रस्य अविशेषेणैवोपदेशात् बृहत् बृहदिति मन्त्रस्य तु उत्तमाभिषवसंबन्धिमध्यमपर्यायमात्रोपदेशेन विशेषविहितत्वात् अविशेषविहितस्य विशेष-विहितेन बाधावश्यंभावात् उत्तमाभिषवे अविलंबितस्थाने बृहदित्येव मन्त्रः प्रयोक्तव्य इत्याहुः ॥ १० ॥

( इति महाभिषवः )

[ शुक्रादिग्रहचतुष्टयग्रहणम् ]

## शुक्रप्रभृति चतुर्णां ग्रहणम् ॥११॥

'माध्यन्दिने च पञ्च प्रथमान्' ( ९।५।१८ ) इत्युक्तम् । तेषां सन्ततधारायाः सकाशा-च्छुक्रादारभ्य शुक्रामन्थ्याग्रयणोक्थ्यानां प्रातःसवनोक्तानां ग्रहाणां ग्रहणमध्वर्युः कुर्यात् ॥११॥

[ आग्रयणस्य धारात्रयेण ग्रहणम् ]

## आग्रयणꣳ स्वतृतीयाभ्यो धाराभ्यः ॥१२॥

माध्यन्दिने सवने आग्रयणग्रहं स्वतृतीयाभ्यस्तिसृभ्यो धाराभ्यो गृह्णीयात् । स्वा आग्रयणस्थालीस्थितप्रातःसवनगृहीतसोमसंबन्धिनी धारा तृतीया यासां ताः । अत्रैका यजमानसम्बन्धिनी धारा । द्वितीयामाधवनीयादुन्नेता पृथगासिञ्चति । तृतीयां चाग्रयणस्था-लीस्थं सोमं पात्रान्तरे कृत्वा प्रतिप्रस्थाताऽऽसिञ्चति इति तिस्रो धारा इति कर्काचार्याः॥१२॥

[ उक्थ्यग्रहणात्पूर्वमनन्तरं वा मरुत्वतीयग्रहग्रहणमृतुपात्रे ]

## प्रागुक्थ्यानमरुत्वतीयमृतुपात्रेणे "न्द्र मरुत्व" इति ॥१३॥

उक्थ्यग्रहणात्प्राक् ऋतुपात्रेण मरुत्वतीयसंज्ञकं ग्रहं धाराया ( ४।३।३।२ ) गृह्णी-यादिन्द्र मरुत्व ( १ ) इति ॥ १३ ॥

---

( १ ) ॐ इन्द्र मरुत्वऽ इह पाहि सोमं यथा शार्यातेऽ अपिबः सुतस्य । तव प्रणीती तव शूर शर्मन्ना विवासन्ति कवयः सुयज्ञाः । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वते गृह्णामि । ॐ एष ते योनिरिन्द्राय त्वा मरुत्वते सादयामि ७।३५

**उत्तरमेके ॥१४॥**

उक्थ्यग्रहणानन्तरमेके मरुत्वतीयं गृह्णीयादित्याहुः ॥ १४ ॥

[ समन्वारब्धानामृत्विजां हविर्धानान्निष्क्रमणं प्रातःसवनवत् ]

**समन्वारब्धनिष्क्रमणादि करोत्याऽग्नीदग्नीनिति प्रैषात् ॥१५॥**

अग्नीदग्नीन्विहर इति प्रैषं यावत् ( ८।६।२७ ) प्रातःसवनवत्सर्वं कुर्यात् ॥ १५ ॥

[ माध्यन्दिनपवमानस्तोत्रारम्भः ]

**सदसि पवमानोपाकरणम् ॥१६॥**

माध्यन्दिनपवमानस्तोत्रस्यारम्भं( १ ) सदसि कुर्यादध्वर्युः। न प्रातःसवनवच्चात्वालसमीपे सदसो बहिः ॥ १६ ॥

---

( १ ) अयमत्र विषयः। ज्योतिष्टोमे द्वादश स्तोत्राणि। बहिष्पवमानम्, चत्वार्याज्यानि इति प्रातः सवने। माध्यन्दिनपवमानम्, चत्वारि पृष्ठानि, इति माध्यन्दिने सवने। आर्भवपवमानम्, अग्निष्टोमस्तोत्रं चेति तृतीयसवने। तत्र बहिष्पवमानस्तोत्रं त्रिवृत्स्तोमकम्। आज्यस्तोत्राणि पञ्चदशस्तोमकानि। अग्निष्टोमस्तोत्रमेकविंशस्तोमकम्। शेषाणि सप्तदशस्तोमकानि। एवं च सर्वेषु स्तोत्रेषु मिलित्वा त्रिवृदादयश्चत्वारः स्तोमा अग्निष्टोमे सन्ति। (त्रिवृच्छब्दस्त्रिवृत्त्ववकररः। स्तोमशब्दश्च स्तोत्रगतसङ्ख्यावाचकः। स्तोत्रं च प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानम्। एवं च ऋङ्मन्त्रसाध्यस्तोत्रसङ्ख्यैव त्रिवृदुच्यते। एवं पञ्चदशसप्तदशैकविंशान्यपि पञ्चादशादिशब्दैरभिधीयन्ते )। तत्र बहिष्पमावनस्तोत्रे "उपास्मै गा० १ अभिते मधुना० २ स नः पवस्व० ( ऋ० ६।७।३६।१-३ ) दविद्युतत्या० ४ हिन्वानहे ५ ऋधक्सोम० (७।१।४१।१-३) ६ पवमानस्य ते कवे ७ अच्छा कोशं० ८ अच्छा समुद्रम्" (७।२।८।१-३) ९ इति नवानामृचां पाठात् नवस्वृक्षु गानम्। आज्यादिस्तोत्रेषु एकैकस्मिन् स्तोत्रे तिस्रस्तिस्र ऋचः पठिताः। ( यथा—प्रथमाज्यस्तोत्रे अग्न आ याहि १ तं त्वा स०२ स नः पृथु० (४।५।२२) इति। द्वितीयाज्यस्तोत्रे आ नो मित्रावरुणा० उरुशंऽस०, गृणाना जमदग्निना :(५।५।७) इति। तृतीयाज्यस्तोत्रे आयाहि सुषुमा; आ त्वा ब्रह्म, ब्रह्माणस्त्वा (६।१।२२) इति। चतुर्थाज्यस्तोत्रे इन्द्राग्नीऽ आगतम्, इन्द्राग्नी जरितुः, इन्द्रमग्निकवि० (३।१।११) इति। माध्यन्दिने पवमाने उच्चा ते० (७।१।२१) ३ पुनानः सोमा० (७।१।३५)३ प्रतुद्रव० (७।३।२२) ३ इति। रथन्तरपृष्ठे अभित्वा शूर (५।३।२१) इति। वामदेव्यपृष्ठे कयानश्चि० ३ (३।६।२४) इति। नौधसपृष्ठे तं वो दस्मा०, ( ।१।२१) इति। कालेयपृष्ठे तरोभिर्वो; ( ६।४।४८ ) नयं दुध्रावरम्, (६।४।४८) इति। आर्भवपवमाने स्वादिष्ठया, (६।७।१६) ३ पवस्व मधुमत्तमः (७।५।१७) इन्द्रमच्छ, (७।५।९) पुरोजितीवो, ( ७।५।१ ) यो धारया, ( ७।५।१ ) अभिप्रियाणि, ( ७।१।१४ ) ऋतस्य जिह्वा, ( ७।२।३३ ) अवद्युतानः ( ७।२।३३ ) इति। अग्निष्टोमस्तोत्रे यज्ञायज्ञा वो, (४।८।१) ऊर्जो नपातम् (४ ८।१) इति। ( अत्र यत्र द्वयोर्ऋचोरुपादानं तत्र द्वयोरेव तिस्र ऋचो गायकैः क्रियन्ते )। तत्र पञ्चदशस्तोमसम्पादनार्थं प्रथमामृचं वारत्रयं पठित्वा द्वितीयां तृतीयां च सकृत्सकृत्पठेत्। अयं च प्रथमः पर्यायः। द्वितीये पर्याये प्रथमामृचं सकृत्, द्वितीयां त्रिः, तृतीयां सकृत्। तृतीये प्रथमां द्वितीयां च सकृत्, तृतीयां त्रिरिति। अयमर्थः "स एकया स्तुवीत" (तां० ब्रा० अ० १-२) इत्यादिना उक्तः। अयं पञ्चदशः स्तोमः। एवमेव सप्तदशस्तोमोऽपि। तस्य तृतीये पर्याये द्वितीयतृतीययोर्ऋचोर्वारत्रयं पाठ इति विशेषः। एकविंशस्तोमे च प्रथमपर्याये प्रथमद्वितीययोस्त्रिस्त्रिः, तृतीयायाः सकृत्पाठः। द्वितीये पर्याये प्रथमतृतीययोर्वारत्रयं, द्वितीयाया एकवारम्। तृतीये पर्याये प्रथमायाः सकृत्, द्वितीयतृतीययोर्वारत्रयमिति। अत्र साम्नः पञ्चावयवाः। प्रस्तावः, उद्गीथः, प्रतिहारः, उपद्रवः, निधनं चेति। तत्र प्रस्तावं प्रस्तोता पठति। उद्गीथमुद्गाता, प्रतिहारं प्रतिहर्त्ता, उपद्रवमुद्गाता, निधनं त्रयोऽपि। यथा—उच्चा ताइ जातमन्धसाः इति प्रस्तावः। ऊ दायि वि सन्भूमिया २।३ दादाइ इत्युद्गीथः। उग्रम्ं शर्मा इति प्रतिहारः। महा २३ ६ श्रव अव उवा ३ इत्युपद्रवः। स्तौवे३४२ इति निधनम्।

**अहर्गणे च सर्वत्र प्रायणीयोदयनीयवर्जम् ॥१७॥**

सर्वेष्वपि पवमानेषु अहर्गणे द्वादशरात्रादिषु प्रथमोत्तमे अहनी प्रायणीयोदयनीय-संज्ञके । ते उभे वर्जयित्वा अर्थात् तत्रोभयत्रापि बहिष्पवमानस्तोत्रारम्भश्चात्वालसमीप एव कार्यः । अन्यत्र तु सदस्येवेत्यर्थः ॥ १७ ॥

[ अग्नीदग्नीन्विहरेति प्रैषे विशेषः ]

**पशुनेहीत्यपकृष्य 'दधि घर्माय दध्याहर, दक्षिणा उपावर्त्तयेति प्रैषोपचयः ॥१८॥**

अग्नीदग्नीन्विहरेत्यादिः पशुनेहीत्यन्तः प्रैषः पूर्वमुक्तः ( ६।७४ ) । तत्र पशुनेहीति पदद्वयं प्रैषमध्यान्निष्काश्य 'तत्स्थाने "प्रतिप्रस्थातर्दधि घर्माय दध्याहर, दक्षिणा उपावर्त्तय" इति मन्त्रस्याऽऽवापः कार्यः ॥१८॥

[ सप्रवर्ग्यक्रतोर्दधिघर्मवत्त्वम् ]

**सप्रवर्ग्ये दधिघर्मः ॥१६॥**

सप्रवर्ग्ये एव क्रतौ दधिघर्मो, नाप्रवर्ग्ये स्यात् । तेन अप्रवर्ग्ये "प्रतिप्रस्थातर्दक्षिणा उपावर्त्तयध्वम्" इत्येतावानेवोपचयः । अतश्च तत्र दधिघर्माय दध्याहरेत्यस्याभावः ॥१६॥

[ दधिघर्मग्रहणं, होतृवदनान्ते यागो, भक्षश्च ]

**उपविश्य सदसः पुरस्तात्सपवित्रायामग्निहोत्रहवण्यां ग्रहणं यथोक्तम् ॥२०॥**

यथा प्रवर्ग्याध्याये उक्तं ( २६।७५४ ) तथा "यावती द्यावापृथिवी" ( ३८।२६ ) इति स्थालीमुखेन दधिघर्मग्रहणं कुर्यात् ॥ २० ॥

**होतर्वदस्व यत्ते वाच्यमित्याह वाद्यान्ते श्रातꣳ० हविरित्युत्तिष्ठन्नाह ॥२१॥**

**दधि घर्मस्य यजेति प्रेष्यति ॥२२॥**

होत्रा यद्वाच्यं ( १ ) तद्वदनान्ते होतारं प्रेष्येत् ॥ २२ ॥

---

एतदनुसारेण यस्यामृचि साम गीयते साऽपि ऋक् पञ्चधा विभज्यते । यथा—उच्चाते जातमन्धसः १ । दिवि सद् भूम्या ददे २ । उग्रꣳ० शर्म ३ । महि श्रवः ४ इति । निधनं तु प्रायः स्तोभाक्षरैरेव भवति । स्तोत्रा-रम्भश्च प्रथमतः प्रस्तोत्रैव क्रियते । तत्र प्रस्तावरूपप्रथमभागपाठसमये एव प्रत्यङ्मुखः प्रस्तोता आत्मनः पुरतो भूमौ प्रागदशमुदग्दशं वा द्विगुणीकृतं वस्त्रं प्रसार्य तत्र औदुम्बरीः प्रादेशप्रमाणाः तीक्ष्णाग्रा मूले किंचित् स्थूलाः कुशा विष्टुत्यपरनामधेयास्तिर्यङ् निदध्यात् । यथा—पञ्चदशस्तोमे प्रथमपर्याये प्रथमाया ऋचो वारत्रयमभ्यास विधानात् तिस्रः कुशा उदगग्राः प्रत्यक्संस्था निधेयाः । द्वितीयाया ऋच एकैवावृत्तिरिति एका कुशा तासां पश्चात् प्रत्यगग्रा निधेया । तस्याः पश्चात् उदगग्रा एका कुशेति । एवमुत्तरावपि विष्टावौ उत्तरतः कार्यौ । सर्वत्र स्तोमानां त्रयः पर्यायाः । एकैकस्य पर्यायस्य त्रयो विष्टावाः । पवमानेषु कुशानिधानं नास्ति इति । "स्तोत्रमग्रे शस्त्रात्" (आश्व० ६।५०) "स्तुतमनुशंसति" इत्यादिवाक्यात् आदौ स्तोत्रपाठस्ततः शस्त्रपाठ इति क्रमः । ज्योतिष्टोमे द्वादशस्तोत्राणि द्वादश शस्त्राणीत्युक्तम् । स्तोत्रस्यादौ अन्ते च स्तोत्रियाणामृचां जपश्चोद्गा-तृभिः कार्यः । प्रातरनुवाकोपाकरणानन्तरं बहिष्पवमानस्तोत्रं पठनीयम् । ऋतुग्रहभक्षणानन्तरमाज्यस्तोत्राणीति प्रातःसवने । मरुत्वतीयग्रहभक्षणानन्तरं माध्यन्दिनपवमानस्तोत्रस्य पृष्ठानां च पाठो माध्यन्दिने सवने । तृतीयसवने आर्भवपवमानाग्निष्टोमस्तोत्रयोः ।

( १ ) होतृवाच्यं तु "सत्तिष्ठंतावपश्यत० (८।८।३७) इति ऋक् । 'श्रातं हविरित्युक्ते श्रातं हविः' (८।८।३७) रिति होता वदेत् ।

**हुतशेषं घर्मर्त्विजः सयजमानाः समुपहावं भक्षयन्ति यथोक्तम् ॥२३॥**

"मयि त्यत्" ( ३८।२७ ) इति मन्त्रेण ब्रह्म–होत्रध्वर्यु–प्रस्तोतृ–प्रतिप्रस्थात्रग्नी–यजमानाः समुपहूय भक्षयेयुः, यथा प्रवर्ग्याध्याये उक्तम् ( २६।७।५५–५६ )। ( अत्र प्रस्तोतु· र्भक्षणं, प्रवर्ग्ये कृतं चेत् ) ॥ २३ ॥

**प्राणभक्षं वाऽदीक्षिताः ॥२४॥**

अदीक्षिता ऋत्विजो दधिघर्मस्य नालिकयाऽवघ्राणं वा कुर्युः। दीक्षितास्तु प्रत्यक्ष-भक्षमेव कुर्युः ॥२४॥

[ पशुपुरोडाशानुष्ठानपूर्वकं सवनीयपुरोडाशानुष्ठानम् ]

**पशुपुरोडाशेन प्रचर्य पुरोडाशादि करोत्याधिष्ण्यनिधानात् ॥२५॥**

पशुपुरोडाशेन प्रचर्य सवनीयपुरोडाशादि "होतृधिष्ण्ये पुरोडाशान्निदधाति" ( ६।६।१११२ ) इत्येवमन्तं प्रातःसवनवत्कुर्यात् ॥ २५ ॥

[ प्रस्थितयागः ]

[ शुक्रामन्थिप्रचारः, चमसभक्षः, चमसनिधानं च प्रातःसवनवत् ]

**उन्नीयमानेभ्यश्चानुवाचनप्रभृत्याचमसनिधानात् ॥२६॥**

"उन्नीयमानेभ्योऽनुवाचयति" ( ६।६।२३ ) इत्यतत्प्रभृति "दक्षिणस्य हविर्धानस्य पश्चादक्षं निदधाति चमसानधः" ( ६।१२।७ ) इत्येतदन्तं प्रातःसवनवत्कुर्यात् ( १ ) ॥ २६ ॥

इति दशमाध्यायस्य प्रथमा कण्डिका ॥१॥



प्रातःसवनवदेव ( ६।६।२३ ) नवसून्नयने प्राप्तऽ आह—

**दशसून्नयति ॥ १ ॥**

दशस्वपि चमसेषु सोममुन्नयेत्। अत्राच्छावाकचमसो दशमः ॥१॥

प्रैषे विशेषमाह—

**'माध्यन्दिनस्य सवस्य निष्केवल्यस्य शुक्रवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्ये'ति ॥ २ ॥**

शुक्रामन्थिप्रचारे एवं विधः प्रैषो भवेत् ॥ २ ॥

**मन्थीवत इति वा मधुश्चुतस्थाने ॥ ३ ॥**

[ दक्षिणादानम् ]

**इडां भक्षयित्वा शालाद्वार्ये दाक्षिणहोमो वासः प्रबद्धꣳ हिरण्यꣳ हवन्यामवधाय चतुर्गृहीत "मुदु त्य"मिति ॥४॥**

सवनीयपुरोडाशेडां भक्षयित्वा शालाद्वार्ये दक्षिणासंबद्धो होमः स्यात्। दक्षिणा

---

( १ ) अत्र सव· ·ुखीयचमसभक्षः प्रातःसवनवत्। तत्र नेष्टुरुत्तरमच्छावाकस्य उपहवे भक्षणे च निवेश इति विशेषः। ततो होतृचमसे प्रातःसवनवदेवाध्वर्युप्रतिप्रस्थात्रोः शुक्रामन्थिशेषभक्षः। ततः पुनरुन्नी-तभक्षः प्रातःसवनवदेव।

प्रयोजनको होमो दाक्षिणहोमः । तत्र वस्त्रेण प्रकर्षेण बद्धं हिरण्यं जुह्वां निधाय चतुर्गृहीतमाज्यमुदु त्यमिति (१) शालाद्वार्ये प्रथमामाहुतिं जुहुयात् ॥ ४ ॥

"चित्रं देवाना"मिति द्वितीयाम् ॥ ५ ॥

चतुर्गृहीतेन शालाद्वार्ये(२) । वासोहिरण्ये अत्राप्यवधेये ॥ ५ ॥

आग्नीध्रीयेऽ'ग्ने नये'ति ॥ ६ ॥

सकृद्गृहीताज्येन(३) ॥६॥

"अयं न" इत्यपरामश्वं चेद्युक्तं दद्यादयुक्तं वा ॥ ७ ॥

रथादौ युक्तम् ( २२।२।१ ) अथवा अयुक्तं केवलम् ( २२।२।१ ) अश्वं दद्याच्चेत्तदा अयं न(४) इति द्वितीयामाहुतिं जुहुयात् । अत्र प्रकृतौ नियमेनाश्वदानस्य विधानात् चेदित्ययं विकृत्यर्थोऽवगन्तव्यः ॥७॥

वासोहिरण्ये ददाति ॥ ८ ॥

दक्षिणादानकाले क्रतुदक्षिणात्वेन वासोहिरण्ये षोडशर्त्विग्भ्यो दद्यात् ॥८॥

सहिरण्यो यजमानः शालां पूर्वेण तिष्ठन्नभिमन्त्रयते दक्षिणा बहिर्वेदि तिष्ठन्तीर्दक्षिणतो "रूपेण व" इति ॥९॥

वेदेर्बहिर्दक्षिणस्यां दिशि अवस्थिता गा अभिमन्त्रयेत् (५) ॥९॥

गवां शतं द्वादशं वाऽतिक्रामति ॥१०॥

गवां शतं, द्वादशाधिकं वा गवां शतम् वक्ष्यमाणेन ( ४।३।४।३ ) मार्गेण नयेत् ॥१०॥

मन्थौदन-तिल-माषाश्च ॥११॥

तेनैव पथा नीयन्ते । मन्थः क्षीरसक्तवः ॥११॥

अन्तरा शालासदसी दक्षिणेनाग्नीध्रं तीर्थेन ॥१२॥

शालासदसोर्मध्यमार्गेण उत्तरेण सदः आग्नीध्रं दक्षिणेन तीर्थेन चात्वालोत्करयोरन्तरालेन गवां शतं, द्वादशाधिकं वा शतं निष्क्रामेत् । गवामतिक्रमणमार्गोऽयम् ॥१२॥

सुब्रह्मण्यां च प्रेष्यति वा ॥१३॥

अत्रावसरे सुब्रह्मण्यां प्रेष्येन्न वा ॥१३॥

आग्नीध्रादनु गच्छति सुन्वन् ॥१४॥

उक्तमार्गेण गच्छन्तीस्ता दक्षिणा आग्नीध्रं यावत् यजमानोऽनुगच्छेत् ॥१४॥

---

( १ ) ॐ उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यꣳ स्वाहा ७।४१

( २ ) ॐ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आऽप्रा द्यावापृथिवीऽ अन्तरिक्षꣳ सूर्यऽ आत्मा जगतस्तस्थुषश्च स्वाहा ७।४२

( ३ ) ॐ अग्ने नय सु० ( पृ. ३०४ ) टिप्पण्यां द्रष्टव्यः ।

( ४ ) ॐ अयं नोऽअ. ( पृ. ३०५ ) द्रष्टव्यः ।

( ५ ) ॐ रूपेण वो रूपमभ्यागां तुथो वो विश्ववेदा वि भजतु । ऋतस्य पथा प्रेत चन्द्रदक्षिणाः ७।४४।

प्रागनुवाचनाच ॥१५॥

इन्द्राय मरुत्वतेऽनुब्रूहि (८।३।१) इत्येतस्मादनुवाचनात्प्राक् यजमान एव कर्मसु घटते ॥१५॥

सदो गच्छति "वि स्व"रिति ॥१६॥

यजमानो वि स्वः पश्येति(१) मन्त्रेण आग्नीध्रदेशात्सदः प्रति गच्छेत् ॥१६॥

प्रेक्षते "यतस्व सदस्यै"रिति सदस्यान् ॥१७॥

यजमानः(२) ॥१७॥

"ब्राह्मणमद्ये"त्याग्नीध्रगमनम् ॥१८॥

सदः समीपादाग्नीध्रे गमनं कुर्यात्(३) ॥१८॥

उपविश्य हिरण्यमस्मै ददात्य"सद्राता" इति ॥१९॥

आग्नीध्रसमीपे उपविश्याग्नीध्राय हिरण्यं दद्यात्(४) ॥१९॥

आत्रेयाय चाग्नीध्रवत्सदसः पुरस्तादुपविष्टाय "क आत्रेयं क आत्रेयमिति त्रिरुक्त्वा सकृच्छेषमहालेयमवालेयमकौद्रेयमशौभ्रेयमवामरथ्यमगौपवन"मिति ॥२०॥

आग्नीध्रवद् ब्राह्मणमद्येति (७।४३) मन्त्रेणाऽऽत्रेयं प्रत्यागत्य असद्राता (७।४५) इत्यनेन सदसःपुरस्तादुपविष्टाय आत्रेयसगोत्रायानृत्विजे हिरण्यं दद्यात्। अत्र क आत्रेयमिति यजमानस्त्रिर्वदेत्। ततोऽहमात्रेयमिति त्रिरात्रेयः प्रत्याह। ततोऽहालेयमिति सकृत्। इदं चात्रेयसम्प्रदानकदानमदृष्टार्थम् ॥२०॥

ऋत्विग्भ्यो दक्षिणा ददाति ॥२१॥

कर्मकरत्वादेव ऋत्विजां प्राप्तत्वात् पुनर्ऋत्विग्ग्रहणं चमसाध्वर्यूणां व्यावृत्त्यर्थम्। एवं च यद्गोशतदानं तत् षोडशभ्य एवर्त्विग्भ्यः। न तु कर्मकरत्वाविशेषेऽपि चमसाध्वर्युभ्यः ॥२१॥

[ गोशतस्य विभागेन ऋत्विग्भ्यो दानम् ]

तत्र पूर्वपक्षयति—

पृथक् शतानि च पुरुषभेदात् ॥२२॥

यद् गवां शतं देयत्वेनोक्तं, तत् एकैकस्मै ऋत्विजे पृथक् पृथक् दद्यात्। कुतः ? पुरुषभेदात्। सम्प्रदानभूतानामृत्विजां भेदात्। सम्प्रदानस्य च देयद्रव्यापेक्षया प्राधान्येन प्रतिप्रधानं गुणस्यावर्त्तनीयत्वात् ॥२२॥

प्रतिविभागो वा कर्मप्राधान्यात् ॥२३॥

वाऽवधारणे। एकस्यैव शतस्य ऋत्विग्भ्यो विभज्य दानं कर्तव्यम्। कुतः ? कर्मप्राधान्यात्। कर्मोद्देशेनैव दक्षिणाया विहितत्वात् (४।३।४।३)। कर्मणश्च एकत्वेन आवृत्तेरप्राप्तत्वात्। अतश्च सम्प्रदानानां बहुत्वेऽपि विभज्यैव दानम् ॥२३॥

---

(१) ॐ वि स्वः पश्य व्यन्तरिक्षम् ७।४४

(२) ॐ यतस्व सदस्यैः ७।४४

(३) ॐ ब्राह्मणमद्य विदेयं पितृमन्तं पैतृमत्यमृषिमार्षेयꣳ सुधातुदक्षिणम् ७।४५

(४) ॐ असद्राता देवत्रा गच्छत प्रदातारमा विशत ७।४५

एवं विभज्य दाने विहिते कथं विभाग इति विभागापेक्षायां 'समं स्यादश्रुतत्वात्' इति न्यायेन सर्वेभ्य ऋत्विग्भ्यः समशो विभज्य दाने प्राप्ते विभागप्रकारमाह—

**यथारम्भं द्वादश द्वादशाद्येभ्यः षट् षड् द्वितीयेभ्यश्चतस्रश्चतस्रस्तृतीयेभ्यस्तिस्रस्तिस्र इतरेभ्यः ॥२४॥**

गणानामाद्येभ्यश्चतुर्भ्यो ब्रह्मोद्गातृहोत्रध्वर्युभ्यो द्वादश द्वादश गा दद्यात्। द्वितीयेभ्यश्चतुर्भ्यो ब्राह्मणच्छंसिप्रस्तोतृमैत्रावरुणप्रतिप्रस्थातृभ्यः षट् षड् दद्यात्। तृतीयेभ्यश्चतुर्भ्यः पोतृप्रतिहर्त्रच्छावाकनेष्टृभ्यश्चतस्रश्चतस्रो गा दद्यात्। इतरेभ्यश्चतुर्भ्योऽग्नीत्सुब्रह्मण्यग्रावस्तुदुन्नेतृभ्यस्तिस्रस्तिस्रो गा दद्यात् ॥२४॥

दाने क्रममाह—

**ब्रह्मोद्गातृहोतृभ्यः ॥२५॥**

क्रमेण दक्षिणां दद्यात् ॥२५॥

**अध्वर्युभ्यां च हविर्द्धान उपविष्टाभ्याम् ॥२६॥**

दक्षिणां दद्यादध्वर्युप्रतिप्रस्थातृभ्याम् ॥२६॥

**"अग्नये त्वे" ति हिरण्यं प्रतिगृह्णीतः ॥२७॥**

दीयमानं द्रव्यमध्वर्युप्रतिप्रस्थातारौ (१) ॥२७॥

**"रुद्राय त्वेति" (२) गां "बृहस्पतये त्वे" (३) ति वासो "यमाय त्वे" (४) त्यश्वम् ॥२८॥**

प्रतिगृह्णीतः ॥२८॥

**"कोऽदा" दित्यन्यत् ॥२९॥**

मन्थौदनतिलमाषादि गृह्णीतः (५) ॥२९॥

**इच्छतो मन्त्रवचनम् ॥३०॥**

अग्नये त्वेत्यादिकं यन्मन्त्रवचनमुक्तं तदिच्छया भवति, इच्छया न ॥३०॥

**प्रत्येत्य प्रस्तोतृ-प्रशास्तृ-ब्राह्मणाच्छंसि-पोतृ-नेष्टृच्छावाकोन्नेतृ-ग्रावस्तुत्सुब्रह्मण्येभ्यः ॥३१॥**

हविर्द्धानात्सदसि प्रत्यागत्य सदसि व्यवस्थितेभ्यः प्रस्तोत्रादिभ्यो यजमानः क्रमेण दक्षिणां दद्यात् ॥३१॥

---

(१) ॐ अग्नये त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीयायुर्दात्र एधि मयो मह्यं प्रतिग्रहीत्रे ७।४६

(२) ॐ रुद्राय त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीय प्राणो दात्र एधि वयो मह्यं प्रतिग्रहीत्रे ७।४६

(३) ॐ बृहस्पतये त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीय त्वग्दात्र एधि मयो मह्यं प्रतिग्रहीत्रे ७।४६

(४) ॐ यमाय त्वा मह्यं वरुणो ददातु सोऽमृतत्वमशीय हयो दात्र एधि वयो मह्यं प्रतिग्रहीत्रे ७।४६

(५) ॐ कोऽदात्कस्मा अदात्कामोऽदात्कामायादात्। कामो दाता कामः प्रतिग्रहीता कामैतत्ते ७।४८

**प्रसृप्तेभ्यश्चान्यत्कण्वकश्यपयाचमानवर्जम् ॥३२॥**

ये प्रसर्पणकाले समागताः, तेभ्यः षोडशातिरिक्तेभ्यश्चमसाध्वर्यूपगात्रुपद्रष्टभ्यः सदः प्रविष्टेभ्यो दक्षिणातिरिक्तं किञ्चिद्दद्यात्। कण्वकश्यपगोत्राभ्यां मह्यं देहीति याचते च न दद्यात् ॥३२॥

**ज्ञातये चाश्रोत्रियाय ॥३३॥**

अनधीतवेदाय ज्ञातये च न दद्यात्। अधीतवेदाय तु ज्ञातयेऽपि दद्यात् ॥३३॥

**न रजतं दद्याद्बर्हिषि "पुराऽस्य संवत्सराद् गृहे रुदन्तीति श्रुतेः (तै० सं० १।५।१) ॥३४॥**

बर्हिषि = कर्मणि रजतं न दद्यात् ॥३४॥

**पत्नी च ददाति ॥३५॥**

पत्नी अपि यजमानेन दीयमानमनुजानीयात् ॥३५॥

**सर्वेभ्यो दत्वा प्रतिहर्त्रे पश्चात् ॥३६॥**

दद्यात् ॥३६॥

( इति दक्षिणादानम् )

इति दशमाध्याये द्वितीया कण्डिका ॥२॥

---

**इन्द्राय मरुत्वतेऽनुवाचयति ॥१॥**

मरुत्वतीयं ग्रहमादाय "इन्द्राय मरुत्वतेऽनुब्रूहि" इति मैत्रावरुणं प्रेष्येत् ॥१॥

**अदानमतः ॥२॥**

अतः परं प्रसर्पकेभ्यो न देयम् ॥२॥

[ मरुत्वतीयग्रहग्रहणं, होमश्च ]

**ऋतुपात्रेण मरुत्वतीयग्रहण "मुपयामगृहीतोऽसि मरुतां त्वौजस" इति ॥३॥**

प्रतिप्रस्थाता द्वितीयेन ऋतुपात्रेण द्रोणकलशात्पूतभृतो वा कुण्ठमरुत्वतीयस्य ग्रहणं (१) कुर्यात्। मरुद्देवताको ग्रहो मरुत्वतीयः ॥३॥

**अध्वर्युमनु जुहोति ॥४॥**

गृहीतं मरुत्वतीयमध्वर्युणा प्रथममरुत्वतीयस्य होमे कृते प्रतिप्रस्थाता जुहुयात्। अशस्त्रग्रहत्वान्नात्र चमसकल्पनम् ॥४॥

**सशस्त्रे त्वानुपूर्व्ययोगात् ॥५॥**

तुरवधारणे। सशस्त्रे एव मरुत्वतीये अध्वर्युमनु प्रतिप्रस्थाता जुहुयात्। पूर्वं मरुत्वन्तमिति सशस्त्रमरुत्वतीयस्य पाठः। ततो मरुतां त्वौजस इत्यस्य। एवं मन्त्राणां क्रमं उपपद्यते नेतरथा ॥५॥

---

(१) ॐ उपयामगृहीतोऽसि मरुतां त्वौजसे गृह्णामि ७।३६

## तृतीयश्रुतेश्च ॥६॥

"मरुतां त्वौजस इति तृतीयं गृह्णाति" (४।३।३।१४) इति श्रुतौ अस्य तृतीयत्वमुक्तम् । द्वितीये च प्रयुज्यमाने तृतीयश्रुतिर्बाध्यते । तस्मात् सशस्त्रे एव मरुत्वतीये हुते इमं तृतीयमनु जुहुयात् । अत्र मरुत्वतीयस्य शस्त्रस्य होतुः शंसनम् ॥६॥

## वशिना मरुत्वतीयग्रहणं "मरुत्वन्त" मिति ॥७॥

रिक्तेन ऋतुपात्रेण कुर्यादध्वर्युः (१) । (अत्राध्वर्युहोत्रोर्मरुत्वतीयभक्षः । प्रतिप्रस्थातुरनुपहूयैव कुण्ठमरुत्वतीयभक्षः । होत्रादीनामनुपहूय नाराशंसचमसभक्षणम् ) ॥७॥

## निर्हृते पात्रे होता शंसति ॥८॥

पूर्वमरुत्वतीयस्य भक्षोत्तरकालमृतुपात्रे सदसो निष्काशिते सति होता मरुत्वतीयं शस्त्रं (२) शंसेत् ॥८॥

---

(१) ॐ मरुत्वन्तं वृषभं वावृधानमकवारिं दिव्यꣳ शासमिन्द्रम् । विश्वासाहमवसे नूतनायोग्रꣳ सहोदामिह तꣳ हुवेम । उपयामगृहीतोऽसीन्द्राय त्वा मरुत्वते गृह्णामि ॐ । एष ते योनिरिन्द्राय त्वा मरुत्वते सादयामि ७।३६

(२) अयमत्र विषयः—होत्रा ऋग्वेदमन्त्रैः क्रियमाणं देवतानिष्ठागुणाभिधानं शस्त्रं शंसनं चोच्यते । शस्त्राणि च ज्योतिष्टोमे द्वादश । तत्र आज्यशस्त्रम् । प्रउगशस्त्रम्, मैत्रावरुणशस्त्रम् ; ब्राह्मणाच्छंसिशस्त्रम्, अच्छावाकशस्त्रमिति पञ्चाद्ये सवने । मरुत्वतीय-निष्केवल्य-मैत्रावरुण-ब्राह्मणाच्छंस्य-च्छावाकशस्त्राणीति पञ्च द्वितीये । तृतीये सवने वैश्वदेवाग्निमारुते इति द्वे शस्त्रे । तत्र प्रथमे आज्यशस्त्रे शोंसावोम् भूरग्निर्ज्योतिर्ज्योतिरग्नो ३ मिन्द्रो ज्यो० तिर्भुवो ज्यो० तिरिन्द्रो ३ सूर्यो ज्योतिर्ज्योतिः स्वः सूर्यो ३ मग्निर्वेदः इत्यादीनि द्वादश पदानि निविदः (ऋ० प० नि० ११।१-१२) प्र वो देवायाग्नये० ( ऋ० ३।१।१३।१-७ ) इति सूक्तम् इत्यृचः पठेत् । अग्न इन्द्रश्चे ( १।३।२५ ) त्यस्य शस्त्रस्य याज्या ( आश्व० ५।१० ) इति । प्रउगशस्त्रे वायुरग्रेगा इति सप्त ऋचः पुरोरुक्संज्ञकाः ( ऋ० प० ) । वायवाहि दर्शत इति सप्त तृचः एकैकस्याः पुरोरुचोऽनन्तरं क्रमेण एकैकशः पठनीयाः । तद्यथा—ईं भूर्भुवः स्वरों ३ शोंसावों ३ वायुरग्रे० (पुरो० १) । वायवाहि दर्शते ३ ( त्रिः ) ( १।१।३ ) शोंसावों ३ हिरण्यवर्त्तनी (पु० २) । इन्द्रवायू इमे (पु० ४) ३ ( ११।१।३ ) शोंसावों ३ काव्या राजानं (पु०३) मित्रं हुवे ३ (१ १।४) शोंसावों ३ दैव्या अध्वर्यू० (पुरो०) अश्विना यज्व० ३ (१।१।५) शोंसावों ३ इन्द्र उक्थेभिः (पु० ५) इन्द्रायाहि चित्र० ३ (१।१.५) शोंसावों ३ विश्वान्देवान् हवा० (पुरो० ६) ओमासश्च० ३ (१।१।६) शोंसावों ३ महो अर्णः (१।१।६) इति विश्वेभिः सोम्यमिति (१।१।२७) प्रउगशस्त्रस्य याज्या ।

मैत्रावरुणशस्त्रे—शोंसावो ३ मानो मित्रा ३ ( ३।४।११ ) शोंसावो मानो गन्तं ३ ( ५।८।२८ ) शोंसावों ३ प्रप्र वो मित्राय ३ ( ४।४।६ ) शोंसावों प्रमित्रयोर्वरुणयोरुपरि ( ५।५।८ ) इति । आयातं मित्रेति (५।१।९) मैत्रावरुणशस्त्रस्य याज्या ।

ब्राह्मणाच्छंसिशस्त्रे—शोंसावो ३ मा याहि सुषुमा ३ ( ६।१।२२ ) शोंसावो ३ मानो याहि सुतावतः ३, ( ६।१।२२ ) शोंसावो ३ मयमु त्वा विच० ७ ( ६।१।२३ ) शोंसावोमिन्द्र त्वा वृषभं वयम् ९ ( ३।१।१ ) इन्द्र क्रतुविदमिति (३।३।१) याज्या ।

अच्छावाकशस्त्रे इन्द्राग्नी आगतम् ३ ( ३।१।११ ) इन्द्राग्नी अपसस्परि ३ ( ३।१।१२ ) तोशा वृत्रहणा हुवे० ३ ( ३।१।११ ) इहेन्द्राग्नी उपह्वये ६ ( १।२।३ ) इयं वामस्य ९ ( ५।६।१७ ) इन्द्राग्नी आगतमिति (३।१।११) याज्या । इति प्रातः सवनम् ।

मरुत्वतीयशस्त्रे—अध्वर्यो शोंसावों ३ आ त्वा रथं ३ ( ६।५।१ ) शोंवोसोमिदंवसो ३ (५।७।१)

[ प्रतिगरे विशेषः ]

**'जनिष्ठा उग्र' इत्येतस्यां मदामो दैवेति प्रतिगरः सकृत् ॥ ९ ॥**

मरुत्वतीयशस्त्रान्तर्गतायां जनिष्ठा उग्र इति ऋचि ( ऋ० १०।७३।१ ) होत्रा शस्यमानायां "मदामो दैव" इति अध्वर्युः सकृदेव प्रतिगरं पठेत् ॥९॥

**तत्स्थाने विकृतौ ॥१०॥**

विकृतौ जनिष्ठा उग्र इति ऋचः स्थाने अन्या ऋक् शस्यते । तस्यामपि एष प्रतिगरः सकृद्भवति ॥१०॥

[ माहेन्द्रग्रहग्रहणम् ]

**आनिधानात्कृत्वा माहेन्द्रं गृह्णाति वैश्वदेववन्"महाँ इन्द्र" इति ॥११॥**

"वैश्वदेवं गृह्णात्योमास इति" (९।१४।१) इत्युक्तम् । ते धर्मा अत्रातिदिश्यन्ते वैश्वदे-

---

इन्द्र नेदीयः ३ (६।४।२३) प्र नूनं ब्र० (१।३।२०) अग्निर्नेता १ (३।१।२०) त्वं सोम क्रतुभि० (१।६।१९) पिन्वन्त्यपः (१।५।७) प्र व इन्द्राय २ ( ६।६।१२ ) जनिष्ठा उग्रः ११ ( ८।३।३ ) इन्द्रो मरुत्वान् इति विंशतिर्निविदः (निवि० ऋ० प० २।१।२०) । ये त्वा हि हत्य (३।३।११) इति मरुत्वतीयशस्त्रस्य याज्या ।

निष्केवल्यशस्त्रे अध्वर्यो शोंसावो ३ अभित्वा शूर ३ ( ५।३।२१ ) अभि त्वा पूर्वपीतये (५।७।२६) यद्वावान० १ (८।३।५) पिबासुतरा च रसिनः २ ( ५।७।२५ ) इन्द्रस्य नु वी० १५ ( १।२।२६ ) इन्द्रो देवः सोमं पिबत्विति निविदो विंशतिः । (निविं० ३।१।२०) पिबा सोममिन्द्रम० (५।२।५) इति याज्या ।

मैत्रावरुणशस्त्रे—कया नः ३ (३।६।२४) कया त्वम् ३ (६।६।२४) कस्तमिन्द्र त्वा २ (५।३।१९) सद्यो ह जातः १५ (३।३।१२) उशन्नु षुण (६।३।३) इति याज्या ।

ब्राह्मणाच्छंसिशास्त्रे—तं वोदस्म (६।६।११) तत्त्वायामि (१।२।५) उदुत्ये मधुमत्तमा (५।७।२७) इन्द्रः पूर्भिदाति ११ ( ३।२।१५ ) उदु ब्रह्माण्यै ६ ऋजीषी वज्रीति याज्या । अच्छावाकशस्त्रे—अध्वर्यो शोंसावों ३ तरोभिर्वो विदद्वसुः ( ६।४।४८ ) तरणिरित्सिपासति ( ५।३।२० ) उदिन्वस्यरिच्यते(५।३।१९) भूय इद्वावृधे ५ ( ४।७।२ ) इमामू षु प्रभृतिं० । ११ (३।२।१९) पिबा वर्धस्व तवेति.(३।२।१९) याज्या । इति माध्यन्दिनं सवनम् ।

वैश्वदेवशस्त्रे हिं शोंसावों तत्सवितुर्वृणीमहे ३ ( ४।४।२४ ) अद्या नो देव सवितः ३ (४।४।२५) अभूद्देव ६ ( ३।८।५ ) एवै तस्थुः ( १।६।१५ ) सविता देवः सोमस्येति निविदो विंशतिः (निवि० १।४।१-२०) ?, एकया च दश० (शु० य० २७।३३) प्रद्यावा यज्ञैः ५ (५।४।२०) द्यावापृथिवी सोमस्येति निविदः पञ्चदश ( नि० ५।५।१-१५) सुरूप कृत्नुमूतये १ ( १।१।७ ) तक्षन्नरथमि ५ (८।२।३) ऋभवो-देवा इति निविदः सप्तदश (नि० १।६।१-१७) । अयं वेनः १ ( ८।७।७ )येभ्यो माता १ (१।७।३२) आनो भद्राः, ९ (१।६।१५) विश्वे देवाः सोमस्येति निविदस्त्रिंशत् (नि० १।७।१-३०) । अदितिर्द्यौः १(१।६।१६) विश्वे देवाः शृणुतेममिति ( ४।८।१६ ) वैश्वदेवशस्त्रस्य याज्या ।

आग्निमारुतशस्त्रे—वैश्वानराय पृथु ११ ( २।८।२० ) अग्निर्वैश्वानर इति निविदः पञ्चदश (नि० १।८।१-१५) शन्नः करत्यर्वत० । ( १।२।२७ ) प्रत्वक्षसः ६ ( १।६।१४ ) मरुतो देवा इति निविदश्चतुर्दश (नि० १।९।१-१४) । यज्ञायज्ञा वो० ( ४।८।१ ) देवो वो द्रविणोदा (५।२।२२) प्रनव्यसीं नव्यसीम् ८ ( २।२ १२ ) अग्निर्जातवेदा इति निविदः षोडश (नि० १।१०।१-१६) । आपो हि, ८ ( ७।६।५ ) उत नोऽहिः १ ( २।५।४ ) देवानां पत्नी १ (४।२।२८) राकमहम् २ (२।७।१५) पावीरवी कन्या १(८।२।११) उदीरताम्(७।६।१७)आहं पितन् (७।६।१७) इदं पितृभ्यो १(७।६।१७)विष्णोर्नु कं १(२।२।२४)तन्तुं तन्व०, एवा न इन्द्रो मघवा ( ३।५ २४ ) । अग्ने मरुद्भिः शुभयद्भिरिति (४।३।२५) याज्या । इति तृतीयं सवनम् ।

ववत् इत्यनेन । एवं च महाँ इन्द्र इति (१) मन्त्रेण वैश्वदेवग्रहवत् शुक्रपात्रेण द्रोणकलशान्माहेन्द्रं गृह्णीयात् ॥११॥

[ महेन्द्रस्तोत्रारम्भार्थं प्रैषोऽध्वर्योः ]

## शुक्रं पूतभृत्यासिच्य पृष्ठमुपाकृत्य प्रेष्य"त्यभिषोतारोऽभिषुणुतौ लूखलानुद्वायताऽग्नीदाशिरं विनय, सौम्यस्य वित्ता"दिति ॥१२॥

द्रोणकलशस्थं सर्वं सोमं पूतभृत्कलशे विनीय, "अभि त्वा शूर नोनुम" (ऋ. ५।३।२१) इत्याद्यासु तिसृषु ऋक्षु गीयमानं महेन्द्रस्तोत्रं पृष्ठमित्युच्यते । तत्प्रारम्भार्थम् उपावर्त्तध्वमिति प्रैषेणानुज्ञां दत्वा अभिषोतार इति प्रेष्येत् ॥१२॥

( अथ शुष्काभिषवः

## ऋजीषमिश्रमर्ठ०शुमभिषुण्वन्ति यथा कथा चानुदकम् ॥१३॥

प्रतिप्रस्थातृनेष्टृन्नेतारः ऋजीषमिश्रमाग्रयणस्थालीस्थमंशुं कृत्वा य उपांशुपात्रे अंशुस्तमृजीषेऽपिसृज्य येन केन प्रकारेण ( अभिषवधर्मवर्जम् ) उदकासेचनवर्जं महाभिषवं कुर्यादध्वर्युः । "अंशुं प्रास्यति तृतीयसवनाय" (६।४।४०) इति पूर्वं तृतीयसवनार्थमेकोऽंशुर्निक्षिप्तः । तमंशुमादाय ॥१३॥

## आधवनीये करोति ॥१४॥

ऋजीषेण सह सोमांशुमभिषुत्याधवनीयकलशे प्रक्षिपेत् ॥१४॥

## त्रिपर्यायान्वाऽभिषवोपदेशात् ॥१५॥

वाऽवधारणे । त्रिपर्यायान् पूर्ववत् त्रीनभिषवान्कुर्यान्न यथा कथंचिदधर्मकम् । अभिषवविधानात् (४।३।३।१६) । उदकस्य त्वनाम्नातत्वादेवाभावः ॥१५॥

## मानाभिमर्शनवर्जं कृतत्वात् ॥१६॥

सोमाभिमर्शनयोः पूर्वं कृतत्वादेव अत्र ते न कार्ये ॥१६॥

## पूतभृति पावनर्ठ० शुक्राभावात् ॥१७॥

सोमपावनार्थं यद्वासस्तत्पूतभृति निक्षिपेत्, न द्रोणकलशे । कुतः ? शुक्राभावात् । तृतीयसवने शुक्रस्य निषेधात् ( ४।३।३।१० ) । द्रोणकलशस्थः सोमः शुक्र इत्युच्यत इत्युक्तम् । (६।५।१७) ॥१७॥

## स्तूयमाने, कुम्भे चर्जीषस्याधानम् ॥१८॥

तृतीयसवने आर्भवे पवमाने स्तूयमाने आधवनीये ऋजीषस्याधानं कुर्यात् । सोमस्य च पूतभृति पावनं कुर्यात् ॥१८॥

(इति शुष्काभिषवः)

[ सवनीयहविर्निर्वापोऽग्नीधः ]

## सवनीया अपयस्याः ॥१९॥

तृतीयसवने सवनीयाः पुरोडाशाः पयस्यावर्जिताः ( ४।२।५।१८ ) कार्याः ॥१९॥

---

(१) ॐ महाँ ऽइन्द्रो नृवदा चर्षणिप्राऽ उत द्विबर्हाऽ अमिनः सहोभिः । अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् । उपयामगृहीतोऽसि महेन्द्राय त्वा गृह्णामि । ॐ एष ते योनिर्महेन्द्राय त्वा सादयामि ७।३९

**सौम्यश्चरुर्वारुणश्चैककपालोऽधिकौ ॥२०॥**

इमौ सवनीयेभ्योऽधिकौ भवतः ॥२०॥

[ त्रिधा विभक्तस्योक्थ्यग्रहस्य ग्रहणम् ]

उक्थ्यविग्रहः प्रातःसवनवत्। तत्र विशेषमाह—

**आपात्रप्रक्षालनात्कृत्वोक्थ्यं विगृह्णाति पूर्वव "दिन्द्राय त्वेति" सर्वेभ्यः ॥२१॥**

माहेन्द्रग्रहस्य मार्जालीये पात्रप्रक्षालनान्ते कर्मणि कृते प्रातःसवनवत् ( ९।१४।८ ) उक्थ्यस्थाल्याः सकाशात् प्रशास्तृब्राह्मणाच्छंस्यच्छावाकेभ्यः इन्द्राय त्वा देवाव्यमित्यनेनैव मन्त्रेण (१) उक्थ्यं त्रिधा विभज्य गृह्णीयात् (२) ॥२१॥

**वसतीवरीश्चासिञ्चती "दं तृतीयसवनं कवीनामृतेन ये चमसमैरयन्तः। ते सौधन्वनाः स्वरानशानाः स्विष्टिं नोऽभि वसीयो नयन्तिव" ति ॥२२॥**

अच्छावाकविग्रहात्प्राक् आधवनीये निःशेषमासिञ्चेत्। अत्र पूर्ववत् इत्यनुकृष्यते। प्रातःसवनवत् ( ९।१४।१६-१७ ) इत्यर्थः ॥२२॥

**एकधनशेषं च ॥२३॥**

अनेनैव मन्त्रेणाधवनीये आसिञ्चेत्। प्रतिघटं मन्त्रावृत्तिः ॥२३॥

**प्रसूतान्तं भवति ॥२४॥**

उक्थ्यविग्रहान्ते अध्वर्युः प्रशास्तः प्रसुहि (९।१४।१९) इति प्रेष्यति। ततः सर्वे ऋत्विजः सदसो बहिर्गत्वा शौचादिकं कृत्वा पुनरागत्योप विशेयुः। इदं सवनान्तभूतं निष्क्रमणमेवात्र। सवनादिभूतमुपस्थानरूपं निष्क्रमणं तु आदित्यग्रहहोमानन्तरं भविष्यति। तथा च वक्ष्यति। 'अत्र सर्पणम्' ( १०।४।१५ ) इति ॥२४॥

( इति माध्यन्दिनं सवनम् )

इति दशमाध्यायस्य तृतीया कण्डिका ॥ ३ ॥



( अथ तृतीयं सवनम् )

[ हविर्द्धानेऽध्वर्य्वादीनां प्रवेशः ]

**एहि यजमानेत्याह हविर्द्धानं प्रविशत्यध्वर्युयजमानप्रतिप्रस्थात्रग्नी दुन्नेतारः ॥१॥**

**पत्नी चापरेण ॥२॥**

अपरेण हविर्द्धानद्वारेण पत्नी च हविर्द्धानं प्रविशेत् ॥ २ ॥

[ आदित्यग्रहग्रहणं, तत्र दधिमिश्रणं च ]

**अपिहितद्वार आदित्यपात्रमादाय सꣳस्रवांश्चोपरि पूतभृतस्तत आदित्यग्रहं गृह्णाति सꣳस्रवेभ्यः "कदा चने" ति ॥३॥**

हविर्द्धाने अपिहितद्वारे कृते सति आदित्यपात्रं गृहीत्वा ये पूर्वमादित्यस्थाल्यामासिक्ताः,

---

(१) ॐ इन्द्राय त्वा देवाव्यं यज्ञस्यायुषे गृह्णामि ७।८२

(२) माहेन्द्रग्रहस्याध्वर्युहोत्रोर्भक्षः। चमसिनां तु अनुपहूय भक्षः। उक्थ्यविग्रहस्य भक्षणं प्रातःसवनवत्।

तान् संस्रवांश्चादित्यस्थाल्या आदाय पूतभृत उपरि तेभ्यः संस्रवेभ्य आदित्यपात्रेणादित्यग्रहं (१) गृह्णीयात् ॥ ३ ॥

अपगृह्य पुनः "कदा चने"ति ॥४॥

धारातो विच्छिद्य (पूतभृतः सकाशादात्मसमीपं नीत्वा) पुनस्तथैव (२) आदित्यग्रहं गृह्णीयात् । नात्रोपयामः (४।३।५।११) ॥४॥

दध्ना श्रीणात्येनं पश्चिमेऽन्ते मध्ये वा "यज्ञो देवाना"मिति ॥५॥

एनमादित्यग्रहं कुशावन्तर्द्धाय ग्रहस्य पश्चिमे भागे मध्ये वा दध्ना श्रीणीयाद्यज्ञो देवानामिति (३) ॥५॥

उपांशुसवनेन मिश्रयति "विवस्वन्नादित्ये"ति ॥६॥

उपांशुसवनेनादित्यग्रहं मिश्रयेत् । सोमं दधि च परस्परं मिश्रयेदित्यर्थः (४) ॥६॥

उपांशुसवनमुन्नेत्रे प्रयच्छति ॥७॥

अध्वर्युः ॥७॥

"आसृज ग्राव्ण" इति चाह ॥८॥

उन्नेतारम् ॥८॥

आधवनीये चमसे वा सोमवति ग्राव्णोऽवधाय स्थाने निदधाति ॥९॥

अध्वर्युराधवनीये, सोमयुक्ते चमसे वा पश्चापि ग्राव्णो निधायाऽधिषवणचर्मणि निदध्यात् ॥९॥

अपावृतद्वारे निष्क्रामतो ग्रहमपिधाय पाणिना स्थाल्या वा ॥१०॥

हविर्द्धारे उद्घाटितद्वारे सति ग्रहं हस्तेन स्थाल्या वा ढक्कयित्वा अन्वारब्धे यजमाने अध्वर्युप्रतिप्रस्थातारौ हविर्द्धानान्निष्क्रामतः ॥१०॥

[ आदित्यग्रहप्रचारः ]

अन्वारब्ध आदित्येभ्योऽनुब्रूहीति प्रैषानुवाचनयोरन्यतरस्मिन्नाह "प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो मह स्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्य" (४।३।५।२०) इति ॥११॥

अन्वारब्धे यजमाने मैत्रावरुणं प्रत्याह । "आदित्येभ्यः प्रेष्य" इति प्रैषे, "आदित्योऽनुब्रूहि" इत्यनुवाचने वा प्रेष्य अनुब्रूहि इत्येतयोः क्रियापदयोः प्रागेव प्रियेभ्य इत्यादीनामुच्चारणं कार्यमिति कर्काचार्याः ॥११॥

---

(१) ॐ कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन् भूयऽ इन्नु ते दानं देवस्य पृच्यतऽ आदित्येभ्यस्त्वा गृह्णामि ८।२

(२) ॐ कदा चन प्रयुच्छस्युभे निपासि जन्मनी । तुरीयादित्य सवनं तऽ इन्द्रियमा तस्थावमृतं दिव्यादित्येभ्यस्त्वा गृह्णामि ८।३

(३) ॐ यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः । आ वोऽर्वाची सुमतिर्ववृत्यादꣳहोश्चिद्या वरिवोवित्तराऽसदादित्येभ्यस्त्वा श्रीणामि ८।४

(४) ॐ विवस्वन्नादित्यैष ते सोमपीथस्तस्मिन्मत्स्व ८।५

**हुत्वा प्रतिप्रस्थात्रे प्रयच्छति शेषौ ॥१२॥**

आदित्यग्रहशेषमादित्यस्थालीशेषं च हुत्वा प्रतिप्रस्थात्रे समर्पयेत् ॥१२॥

[ तृतीयसवनस्यादित्यग्रहग्रहणादिता ]

**अत्र सर्पणमादित्यग्रहस्य प्राक् तृतीयसवनश्रुतेः ॥१३॥**

अस्मिन् काले सर्पणं सवनादिभूलं धिष्ण्योपस्थानादि सदोऽभिमर्शनादि वा कर्त्तव्यम्। कुतः ? आदित्यग्रहस्य प्राक् तृतीयसवनश्रुतेः। (४।३।५।२)प्राक्शब्दः प्राथम्यवाची। तृतीयसवनारम्भे प्रथममादित्यग्रहस्य विधानात्। तस्मात् पुराशब्दः प्राथम्यवाची। "सꣳस्थिते एव माध्यन्दिने सवने पुरा तृतीयसवनादेतमजुहवुः" (४।३।५।२) इति माध्यन्दिनसवनसमाप्त्यनन्तरमेव श्रुतावपि आदित्यग्रहस्य विधानात् माध्यन्दिनसवनसंस्थानन्तरं तृतीयसवनं विना मध्ये सवनान्तरस्याभावात्। अतश्च आदित्यग्रहप्रभृत्येव तृतीयसवनस्यारम्भ इत्यवगन्तव्यम्। अत एव सूत्रान्तरे "आदित्यारम्भणं तृतीयसवनम्" (सत्या० ८।४) इति स्पष्टमेवाभिहितम् ॥१३॥

इति कातीये श्रौतसूत्रे दशमाध्यायस्य चतुर्थी कण्डिका ॥४॥

[ धाराचतुष्टयेनाग्रयणग्रहणम् ]

**आग्रयणमादायासिञ्चति पवित्रेऽधिपूतभृतं प्रतिप्रस्थाता च सꣳस्रवावाधवनीयादुन्नेतोदञ्चनेन चमसेन वा तत आग्रयणं गृह्णाति ॥१॥**

नेष्टा आग्रयणस्थालीस्थं सोमं पात्रान्तरे कृतं हस्तेन गृहीत्वा पूतभृत उपरि धृते दशापवित्रे आसिञ्चेदध्वर्युः। प्रतिप्रस्थाता संस्रवौ आदित्यग्रहादित्यस्थालीशेषो आसिञ्चेत्। आधवनीयादुन्नेता उदञ्चनेन चमसेन वा पवित्रे आसिञ्चेत्। एवं चतस्रो धारा भवन्ति। ततस्ताभ्यश्चतसृभ्योऽध्वर्युराग्रयणस्थाल्यामाग्रयणं गृह्णीयात् 'ये देवास' इत्यनेनैव ॥१॥

[ उक्थ्यादौ एकया धारयोक्थ्यग्रहणम् ]

**उक्थ्यं चोत्तरेष्वेकया ॥२॥**

उत्तरेषु उक्थ्यादिषु पञ्चसु क्रतुषु एकया धारया उक्थ्यस्थाल्यामुक्थ्यं गृह्णीयात् ॥ २ ॥

[ पूतभृति मथितस्य दध्न आसेकः ]

**पूतभृत्याशिरमासिञ्च"त्याशीर्म ऊर्जमुत सुप्रजास्त्वमिषं दधातु द्रविणꣳ सुवर्चसम्। संजयन् क्षेत्राणि सहसाऽहमिन्द्र कृण्वानोऽन्याधरान्त्सपत्ना"निति ॥ ३ ॥**

अध्वर्युः पूतभृति आशिरमासिञ्चेत्। अग्नीदाशिरं विनय इति प्रेषितेन अग्नीधा। मथितं दधि आशिरमुच्यते ॥३॥

[ पूतभृतः पत्नीकर्तृकमवेक्षणम् ]

"अदस्मै नर" इत्येनमवेक्षते पत्नी ॥ ४ ॥

एनं पूतभृतम् (१) ॥४॥

[ हविर्द्धानादध्वर्य्वादीनां बहिर्निष्क्रमणम् ]

समन्वारब्धनिष्क्रमणादि करोति माध्यन्दिनवत् ॥ ५ ॥

समन्वारब्धा निष्क्रामन्तीत्यत आरभ्य सर्वं माध्यन्दिनवत्कुर्यात् (१०।१।१५) ॥५॥

[ अग्नीदग्नीनिति प्रैषे विशेषः ]

पशौ संवदस्वेत्युपचयस्थाने ॥ ६ ॥

"पशौ संवदस्व" इति प्रैष उपचयस्थाने भवेत् । उपचयः पूर्वमुक्तः (१०।१।१६) ॥६॥

[ सवनीयपशोः प्रचारः, सवनीयपुरोडाशस्य च ]

प्रातःसवनप्रभृत्यासंवादाच्छ्रुतेः शमित्रनुशासनप्रभृतीडान्तं कृत्वा पुरोडाशादि चेडाभक्षात् ॥ ७ ॥

अयं सवनीयः पशुः प्रातःसवनादारभ्य यस्वा पृच्छादिति संवादं यावत् अप्यते। कुतः ? श्रुतेः (४।२।५।१३)। अतः शमित्रनुशासनादारभ्य पश्विडान्तं (६।१२।१६) कृत्वा आ इडाभक्षात् सवनीयपुरोडाशादि कुर्यात् ॥७॥

[ प्रस्थितयागः ]

अत्र विशेषः—

चमसैरेव ॥ ८ ॥

"पुरोडाशादि चेडाभक्षात्" (१०।५।७) इति पूर्वसूत्रेण पुरोडाशप्रभृतीडाभक्षणान्तानां सर्वेषां धर्माणामतिदेशात् प्रस्थितयागे शुक्रामन्थिग्रहयोश्चमसानामपि अतिदेशेन प्राप्तत्वात् तत्र शुक्रामन्थिग्रहयोश्चमसानां च निवृत्यर्थं चमसैरेवेत्युक्तम् । एवं च चमसैरेव प्रस्थितयागाः । यत्र होमे प्रैषे च प्रस्थितशब्दग्रहणं ते प्रस्थितयागाः ॥ ८ ॥

प्रैषे विशेषः—

होतृचमसं गृहीत्वाऽऽश्राव्याह "तृतीयस्य सवनस्य ऋभुमतो विभुमतो वाजवतो बृहस्पतिमतो विश्वदेव्यावतस्तीव्राँ३ आशीर्वत इन्द्राय सोमान्प्रस्थितान्प्रेष्ये"ति ॥ ९ ॥

मैत्रावरुणं प्रेष्येत् । अत्र वषट्कारानुवषट्कारयोस्तूष्णीमेव होमः । होतृब्रह्मोद्गातृयजमानचमसानां द्विः सशेषहोमः । इतरेषां षण्णां सकृत् । ततस्तच्चमसयागः । प्रशास्तर्य० ब्र० पो० ने० अच्छावाक य० अग्नीद्यजेति । अवान्तरेडाभक्षः । प्रतिप्रस्थातृवर्जं होतचमसभक्षादिसर्वचमसभक्षः प्रातःसवनवत् ॥ ९॥

आशीर्वत इति शुक्रस्थाने ॥१०॥

"प्रैतु होतुश्चमसः शुक्रस्याभ्युन्नयध्वम्" इति प्रैषे शुक्रपदस्थाने आशीर्वतोऽभ्युन्नयध्वम्" इति प्रयुञ्ज्यात् ॥१०॥

---

(१) ॐ अदस्मै नरो वचसे दधातन यदाशीर्दा दम्पती वाममश्नुतः। पुमान्पुत्रो जायते विन्दते वस्वधा विश्वाहाऽरपऽ एधते गृहे ८।५

[ चमसेषु पूर्वं निक्षिप्तानां पुरोडाशशकलानां तत्तच्चमससमीपे भूमौ यजमानपितॄनुद्दिश्य प्रक्षेपः ]

**प्रागिडाभक्षाद्धविर्धाने यथास्वं चमसेषूपास्यन्ति पुरोडाशमात्रा अनुदकाः पिण्डपितृयज्ञवद्दानप्रभृति प्रागवघ्राणात् ॥११॥**

चमसभक्षणानन्तरं सवनीये पश्चिडाभक्षणात्पूर्वं सर्वेषु चमसेषु हविर्धाने यथास्वं निहितेषु सत्सु तेषु पूर्वं निक्षिप्तान् पुरोडाशशकलान् तेभ्य उद्धृत्य तत्तच्चमससमीपे ते ते चमसिनः स्वस्वपितॄनुद्दिश्य पिण्डपितृयज्ञवत् प्राचीनावीतिनो दक्षिणामुखा अवनेजनप्रत्यवनेजनरहितान् पितृतीर्थेनोपक्षिपेयुः । येषां चमसो नास्ति तैर्यथावेदं चमसे पुरोडाशशकलप्रक्षेपः कार्यः । यथानेष्टृचमसेऽध्वर्योः, उन्नेतृचमसे प्रतिप्रस्थातुः, होतृचमसे ग्रावस्तुतः, सुब्रह्मण्यस्योद्गातुश्चमस इति ॥११॥

**यजमानपितृभ्यो वा तस्य फलाधिकारात् ॥१२॥**

वाऽवधारणे । यजमानपितॄनुद्दिश्यैव पुरोडाशान् प्रक्षिपेयुर्ऋत्विजो, न स्वपितॄनुद्दिश्य । कुतः ? फलाधिकारात् । यज्ञसंबन्धियावत्फलस्यापि यजमानसंबन्धित्वात् । जीवत्पितृकानां पिण्डदानं नेति कर्कः ॥१२॥

[ सवनीयपुरोडाशेडाभक्षणानन्तरं सावित्रग्रहग्रहणम् ]

**भक्षयित्वेडामुपांश्वन्तर्यामपात्रयोरन्यतरेण सावित्रग्रहणं "वाममद्ये"ति ॥१३॥**

सवनीयपुरोडाशं भक्षयित्वा इडाहरणोपलक्षितं सवनीयसंबन्धिप्रतिपत्तिकर्मजातं समाप्य उपांश्वन्तर्यामपात्रयोरन्यतरेण सावित्रग्रहं ( १ ) गृह्णीयात् ॥१३॥

**काले पात्नीवतमितरेण ॥१४॥**

पात्नीवतग्रहणकाले उपांश्वन्तर्यामपात्रयोर्मध्ये येन सावित्रो गृहीतो भवेत् तद्भिन्नेतरेण पात्रेण पात्नीवतं गृह्णीयात् ॥१४॥

इति दशमाध्यायस्य पञ्चमी कण्डिका ॥ ५ ॥

---

**देवाय सवित्रेऽनुवाचयति ॥ १ ॥**

सावित्रयागे नानुवषट्कारः ( ४।४।९।७ ) ॥१॥

[ सावित्रग्रहपात्रेण महावैश्वदेवग्रहणम् ]

**अभक्षितेन महावैश्वदेवग्रहणं "सुपयामगृहीतोऽसि सुशर्माऽसी"ति ॥ २ ॥**

अभक्षितेनैव सावित्रग्रहपात्रेण पूतभृतः सकाशान्महावैश्वदेवं गृह्णीयादध्वर्युः (२) ॥२॥

---

( १ ) ॐ वाममद्य सवितर्वाममु श्वो दिवे दिवे वाममस्मभ्यꣳ सावीः । वामस्य हि क्षयस्य देव भूरेरया धिया वामभाजः स्याम । उपयामगृहीतोऽसि सावित्रोऽसि चनोधाश्चनोधा असि चनो मयि धेहि । जिन्व यज्ञं जिन्व यज्ञपतिं भगाय देवाय त्वा सवित्रे गृह्णामि ७।६-७।

( २ ) ॐ उपयामगृहीतोऽसि सुशर्माऽसि सुप्रतिष्ठानो बृहदुक्षाय नमः । विश्वेभ्यस्त्वा देवेभ्यो गृह्णामि ।८।८। ॐ एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्यः सादयामि ७।८।

[ होतुर्महावैश्वदेवशस्त्रशंसनम् ]

**होता शंसति ॥ ३ ॥**

होता अध्वर्यो शोंसाव इत्यामन्त्र्य महावैश्वदेवस्य शस्त्रं शंसति ॥३॥

[ द्विदेवत्यपात्राणां प्रक्षालनपूर्वकं खरे निधानम् ]

**'एकया च दशभिश्चे'ति ( २७।३३ ) शस्यमाने द्विदेवत्यानि प्रतिप्रस्थाता प्रक्षाल्य खरे निदधाति ॥ ४ ॥**

[ प्रतिगरे विशेषः ]

**प्र द्यावा यज्ञैरित्येतासु मदामो दैवेति त्रिः प्रतिगरः ॥ ५ ॥**

प्रद्यावा यज्ञैः ( २।३।२ ) इत्येतासु ऋक्षु पादशः शस्यमानासु तिसृष्वपि मध्यावसानेषु मदामो दैव इति त्रिः प्रतिगरो भवति ॥५॥

प्रसङ्गादाह—

**स्वादुःकिलीयासु चेच्छन् ॥ ६ ॥**

आग्निमारुतशस्त्रमध्ये स्वादुःकिलीयासु ऋक्षु ( ४।७।३० ) शस्यमानासु तिसृणामध्यर्धेषु इच्छया 'मदामो दैव' इति प्रतिगृणीयात् ॥६॥

[ सौम्यचरोः प्रचारः ]

**आपात्रप्रक्षालनात्कृत्वा सौम्येन चरति ॥ ७ ॥**

महावैश्वदेवग्रहपात्रस्य चमसानां च प्रक्षालनं कृत्वा सौम्येन चरुणा प्रचरेत् । ( अत्राध्वर्युर्होतारमुपहूय सकृत्सशेषम्, होताऽध्वर्युमुपहूय द्विः सर्वं भक्षयेत् । अनपहूय चमसिनां चमसभक्षणम् । सर्वभक्षाश्चमसाः ) ॥७॥

**आज्येनोभयतः परियजति ॥८॥**

सौम्ययागस्य उभयतः पुरस्तादुपरिष्टाच्चाज्येन परियजेत् ॥८॥

**अन्यतरतो वा ॥ ९ ॥**

अथवा सौम्ययागस्य पुरस्तादुपरिष्टाद्वा आज्येन यजेत् । अस्मिन्पक्षेऽपि आग्नाविष्णवोः समुच्चितयोरेव देवतात्वं मन्त्रवर्णादेव । तत्रापि घृतशब्द उपांशु प्रयोज्यः ॥९॥

**घृतस्य यजेत्याह घृतशब्द उपांशु ॥१०॥**

**सौम्यस्य यजेति सौम्येन चरन् ॥११॥**

सौम्येन चरुणा चरन् सौम्यस्य यजेत्याह ॥११॥

**यावदुक्तं सौम्यस्य पुनर्ग्रहणात् ॥१२॥**

सौम्यस्य चरोर्यावदुक्तं, तावदेव स्यान्नाधिकम् । प्राप्तानामेवाज्योपस्तरणादीनां पुनर्ग्रहणात् । अतः शेषकार्याणामभावः ॥१२॥

[ सौम्यस्य चरोरुद्गात्रे प्रदानम् ]

**आज्यमासिच्योद्गात्रे सौम्यं प्रयच्छति ॥१३॥**

सौम्ये चरौ लौकिकं घृतं निनीय उद्गात्रे प्रयच्छेत् ॥१३॥

[ धिष्ण्येषु प्रदीप्तशलाकानामुपरि आज्येन होमः ]

**चतुर्गृहीतं प्रचरण्या धिष्ण्येषु जुहोति यथान्युप्तं प्रभावयञ्छालाकान् प्रदीप्य प्रदीप्य "विभूरसी"ति (१)प्रतिमन्त्रम् ॥१४॥**

येन क्रमेण धिष्ण्या न्युप्तास्तेनैव क्रमेण चतुर्गृहीताज्येन विभज्य विभूरसीति प्रति मन्त्रं होमं कुर्यात् । किंकृत्वा शालाकान् प्रदीप्य । शलाकानां समूहाः शालाकाः । तिसृभिः शलाकाभिरेकः शालाको भवति । त्रीन् त्रीन् शालाकान् एकैकस्मिन् धिष्ण्ये प्रज्वाल्य प्रज्वाल्य ॥१४॥

[ आग्नीध्रीये होमः ]

**आग्नीध्रीयं पुनः पश्चादिच्छन् ॥१५॥**

अध्वर्युरिच्छन् सर्वधिष्ण्यव्याघारणानन्तरं तूष्णीमाग्नीध्रीये पुनरभिघारयेत् । इच्छन्निति विकल्पद्योतकः ॥१५॥

[ पात्नीवतग्रहग्रहणम् ]

**"उपयामगृहीतोसि बृहस्पति सुतस्ये"ति( २ ) प्रतिप्रस्थाता पात्नीवतं गृह्णाति ॥१६॥**

स चोपांशुपात्रेणाऽन्तर्यामपात्रेण वा परिप्लवयाऽऽग्रयणाद् ग्रहीतव्यः । "उपांशुपात्रेण पात्नीवतमाग्रयणाद् गृह्णाति" ( सत्या० ६।४) ) इति सूत्रात् ॥१६॥

[ प्रचरणीशेषेण पात्नीवतस्य मिश्रणम् ]

**प्रचरणीशेषेण श्रीणात्येन"महं परस्ता"दिति ॥१७॥**

अध्वर्युः पात्नीवतम् ( ३ ) ॥१७॥

[ पात्नीवतयागः ]

**अग्नीत्पात्नीवतस्य यजेत्याह ॥१८॥**

होतारं संप्रेष्येत् ॥१८॥

**"अग्ना३इ पत्नीव" इत्युत्तरार्द्धे (४) जुहोति ॥१९॥**

पात्नीवतं ग्रहमाहवनीयस्याग्नेरुत्तरार्द्धेऽध्वर्युर्जुहुयात् ॥१९॥

**प्रेष्यति चा"ग्नीन्नेष्टुरुपस्थमासीद, नेष्टः पत्नीरुदानयोद्गात्रा सङ्ख्या-पयोन्नेतर्होतुश्चमसमनून्नय सोमं माऽतिरीरिच" (४।४।२७) इति ॥२०॥**

अथ एते प्रैषाः सावसानाः कार्याः। सोमं सावशिष्टं मा कुरु। सर्वं सोममुन्नयेत्यर्थः॥२०॥

**प्रभावयेत्युक्थ्यादिषु ॥२१॥**

उक्थ्यषोडश्यतिरात्रवाजपेयाप्तोर्यामेषु सोमं प्रभावयेति प्रैषः । अग्रे कार्याभावा-दिति भावः ॥२१॥

---

(१) एते मन्त्राः ३०१ पृष्ठे द्रष्टव्याः ।

( २ ) ॐ उपयामगृहीतोऽसि बृहस्पतिसुतस्य देव सोम तऽ इन्दोरिन्द्रियावतः पत्नीवतो ग्रहाँऽ ऋध्यासम् ।८।९ नात्राध्याहारः ।

(३) ॐ अहं परस्तादहमवस्ताद्यदन्तरिक्षं तदु मे पिताऽभूत् । अहꣳ० सूर्यमुभयतो ददर्शाऽहं देवानां परमं गुहा यत् ।८।९। नात्राध्याहारः ।

(४) ॐ अग्ना३इ पत्नीवन्त्सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा ८।१०।

[ पात्नीवतग्रहस्य सदसि भक्षणम् ]

ग्रहसामान्योद्देशेन सदसि भक्षणस्य विहितत्वात् वषट्कारोपह्वानयोराग्नीध्रीये कृतत्वात् अस्य कुत्र स्थाने भक्षणमित्याशङ्कायां पूर्वपक्षमाह—

**आग्नीध्रे भक्षणं वषट्कारोपह्वानाभ्याम् ॥२२॥**

ग्रहान्तरेषु सर्वेष्वपि वषट्कारोपह्वाने सदसि कृते, इति कृत्वा युक्तं तत्र तेषां भक्षणम् । अस्य तु तयोराग्नीध्रे करणात्तत्रैव भक्षणं युक्तम् । अत एव सूत्राद्वषट्कारोपह्वाने आग्नीध्रीये क्रियेते इति गम्यते ॥२२॥

एवं पूर्वपक्षमसमाधायैव पक्षद्वयेऽपि साधारणं कञ्चन धर्ममाह—

**सपात्र आसीदति नेष्टुरुपस्थम् ॥२३॥**

पात्नीवद्ग्रहं हस्ते गृहीत्वैव भक्षणार्थं नेष्टुरुत्सङ्गे अग्नीदुपविशेदित्यर्थः ॥२३॥

सिद्धान्तयति—

**अत्र वा भक्षणं पात्रहरणसामर्थ्यात् ॥२४॥**

वाऽवधारणे । सदस्येव भक्षणं, नाग्नीध्रे । कुतः ? पात्रहरणसामर्थ्यात् । हुतावशिष्टं रसविशिष्टं पात्रं सदः प्रत्येव ह्रियते । हरणं च भक्षणार्थम् इति तत्रैव नेष्टुरुपस्थे आसीनेनाग्नीधा भक्षणं कार्यम् । अत्र प्रथममध्वर्योर्भक्षणं ततोऽग्नीधः ॥२४॥

**अग्नीत्प्रक्षाल्य पात्रं खरे करोति ॥२५॥**

भक्षणानन्तरम् अग्नीत्पात्नीवतपात्रं मार्जालीये प्रक्षाल्य खरे स्थापयेत् ॥२५॥

इति कातीये श्रौतसूत्रे वृत्तौ दशमाध्याये षष्ठी कण्डिका ॥६॥



[ यज्ञायज्ञियस्तोत्रारम्भार्थं प्रैषोऽध्वर्युकर्तृकः ]

**यज्ञायज्ञियꣳ स्तोत्रमुपाकरोति होतृचमसमुपस्पृश्य ॥ १ ॥**

यज्ञायज्ञा वो अग्नय इत्यस्यामृचि ( शु० य० २७।४२ ) गीयमानमग्निष्टोमसंज्ञकं स्तोत्रं प्रारभेत् ॥ १ ॥

[ अध्वर्योः शिरसः प्रावरणं वैकल्पिकम् ]

**प्रोर्णुते चेच्छन्नुद्गातृवत् ॥ २ ॥**

यज्ञायज्ञियस्तोत्रकरणकाले स्वशिरसः प्रावरणं कुर्यादध्वर्युः । उद्गातृवत् । यथा उद्गातुरकर्णकं शिरःप्रावरणं विहितं तद्वदित्यर्थः । इच्छन्नित्यनेन प्रावरणस्य विकल्पः । अत्र च प्रोर्णुते इत्येकवचनात् अध्वर्योरेव प्रावरणं सूत्रकारस्याभिमतम् । सूत्रान्तरकारैस्तु "सर्वे सकर्णप्रावृता भवन्ति ये सदस्याः सदस्यृत्विजो यजमानश्चेत्येकेषाम्" ( सत्या० ६।४ ) इति सदस्युपविष्टानां सदस्यानाम्, ऋत्विजां यजमानस्य च प्रावरणमिष्यते । "सकर्णप्रावृता अकर्णप्रावृता वा" इत्यापस्तम्बः ( १३।१५।५ ) ॥ २ ॥

[ उद्गात्रा पत्न्या अवेक्षणम् ]

**पत्नीᳬं सदः प्रवेश्योत्तरत उपविष्टामुद्गात्रा समीक्षयति "प्रजापतिर्वृषाऽसी"ति ॥ ३ ॥**

नेष्टा पत्नीमपरद्वारेण सदः प्रवेश्य उद्गातॄणामुत्तरत उपविष्टामुद्गात्रा समीक्षयति प्रजापतिरिति (१) ॥३॥

**पान्नेजनीभिरभिषिञ्चति विवृत्य दक्षिणोरुम् ॥ ४ ॥**

पान्नेजनीभिरद्भिः स्वं दक्षिणमूरुं विवृत्य वासोऽपनीय पत्नी अभिषिञ्चेत् ॥ ४ ॥

**उद्गात्राऽनुज्ञाता गच्छतीक्षिता वा त्रिः ॥५॥**

उद्गात्राऽनुज्ञाता त्रिरीक्षिता वा पत्नी अवसेकार्थं शालां गच्छति, त्रिश्चानुषिञ्चति ॥ ५ ॥

**'एवा न इन्द्रो मघवे'ति शस्यमाने ध्रुवᳬं होतृचमसेऽवनयति "ध्रुवं ध्रुवेणे"ति ॥ ६ ॥**

आग्निमारुतशस्त्रान्तर्गतायामन्तिमायामृचि (३।५।२४) होत्रा पठ्यमानायाम् प्रतिप्रस्थाताऽवनयेत् (२) ॥ ६ ॥

**अवनयामिस्थाने गृह्णामीति वा ॥ ७ ॥**

'ध्रुवं ध्रुवेण'इत्यस्मिन्मन्त्रे सोममव नयामीत्यत्र अवनयामीति पदस्थाने गृह्णामीति पदं वा प्रयुञ्ज्यात् ॥७॥

**वैश्वानरं यजमानस्य गृहीतश्चेत् ॥ ८ ॥**

विकल्पेन वैश्वानरग्रहग्रहणमुक्तं ( ९।६।२४ ) प्रातः सवने। यदि गृहीतस्तदा तं ग्रहं यजमानस्य चमसेऽवनयेत्। ( अत्र होतृचमसे होतारमुपह्वय सकृत्सशेषमध्वर्युः, होता स्व चमसेऽध्वर्युमुपह्वय द्विः सशेषम्, होता ब्रह्मादिचमसेषु तांस्तान् पृष्ट्वा द्विः सशेषम्, ब्रह्मादयः स्वस्वचमसेषु होतारं पृष्ट्वा सकृत्सर्वम्, होता स्वस्वचमसेऽध्वर्युं पृष्ट्वा सकृत्सर्वं भक्षयेत् ) ॥८॥

**पात्रप्रक्षालनान्तेऽनुयाजाः समिदादि ॥९॥**

आग्निमारुतशस्त्रानन्तरं वैश्वानरग्रहस्य चमसानां च होमे भक्षणे च कृते पात्रेषु च प्रक्षालितेषु सवनीयपशुसंबन्धि उल्मुकसमासादि कृत्वा अनुयाजाः कार्याः। पाशुकं कर्मेदम् ॥९॥

[ उक्थ्यग्रहस्य त्रिधा विभक्तस्य ग्रहणम् ]

**उक्थ्यविग्रहणमुत्तरे "ष्विन्द्रावरुणाभ्या, मिन्द्राबृहस्पतिभ्या, मिन्द्राविष्णुभ्या"मिति ॥१०॥**

उत्तरेषूक्थ्यादिषु पञ्चसु संस्थाविशेषेषु उक्थ्यविग्रहणं पूर्ववत् ( ९।१४।८-२० ) कुर्यात (३) ॥१०॥

---

(१) ॐ प्रजापतिर्वृषाऽसि रेतोधा रेतो मयि धेहि प्रजापतेस्ते वृष्णो रेतोधसो रेतोधामशीय ८।१०।

(२) ॐ ध्रुवं ध्रुवेण मनसा वाचा सोममव नयामि। अथा नऽ इन्द्रऽ इद्विशोऽसपत्नाः समनसस्करत् ८।१०

(३) ॐ इन्द्रावरुणाभ्यां त्वा देवाव्यं यज्ञस्यायुषे गृह्णामि ७।२३ ॐ इन्द्राबृहस्पतिभ्यां त्वा दे० मि० ७।२३ ॐ इन्द्राविष्णुभ्यां त्वा दे० मि० ७।२३

अस्त्यत्यग्निष्टोमो नाम क्रतू राजन्यकर्तृकः ( आप० १४।२।१० ) । तत्र विशेषमाह—

[ अत्यग्निष्टोमसंस्थे क्रतौ षोडशिग्रहणपक्षे स्तोत्रशस्त्रयोराधिक्यम् ]

## स्तुतशस्त्रे अधिके षोडशी चेत् ॥११॥

यत्र षोडशिसंस्थाभाववत्यपि क्रतौ अत्यग्निष्टोमे षोडशी विहितः । तत्र स्तोत्रशस्त्रे एव षोडशिग्रहसंबन्धिनी कर्तव्ये, न तु उक्थ्यषोडशिसंस्थाके क्रतौ विहिता ( १२।६।१ ) स्तृणहिरण्य-कृष्णाश्वादिधर्माः कर्त्तव्याः । अयं भावः । चतस्रः संस्था मुख्याः । अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रश्चेति । येन येन स्तोत्रेण क्रतुः समाप्तो भवति स तत्संस्थाको व्यपदिश्यते । यथा—अग्निष्टोमस्तोत्रेण समापनीयः क्रतुरग्निष्टोमसंस्थाकः । एवं च अग्निष्टोमसंस्थाके क्रतौ अग्निष्टोमस्तोत्रे एव क्रतोः समाप्तिः । उक्थ्ये तु अग्निष्टोमानन्तरमुक्थ्य-स्तोत्रं, तत्र क्रतोः समाप्तिः । षोडशिनि तु अग्निष्टोमोक्थ्ययोरनन्तरं षोडशिस्तोत्रं, तत्र क्रतोः समाप्तिः । अतिरात्रे तु षोडश्यनन्तरं रात्रिपर्यायाणां त्रयाणां स्तोत्राणां करणम् । इयमेव संस्थानां स्थितिः । यत्र तु अग्निष्टोमानन्तरमुक्थ्यमविधाय षोडशी विधीयते स अत्यग्निष्टोम इत्युच्यते । अग्निष्टोममतीत्य वर्तत इत्यत्यग्निष्टोम इति व्युत्पत्तेः । तत्र "अत्यग्निष्टोमे गृह्णीयात् अप्युक्थ्ये" इति वाक्येन षोडशिग्रहणं स्तोत्रं च विकल्पेन विहितम् । एवं च अग्निष्टोमसंस्थायाम् उक्थ्यसंस्थायां वा यत्र विकल्पेन षोडशिग्रहणं स्तोत्रं च विहितं, तत्र मुख्यषोडशिसंस्थायां धर्मास्तृणहिरण्यादयो विहिताः । तान् वर्जयित्वा केवलं स्तोत्रशस्त्रे एवाधिके कार्ये ॥११॥

[ स्रुग्व्यूहने वसुमदादीनां प्रयोगः ]

## तृतीयसवनेऽप्रसवः ॥१२॥

प्रातःसवन ( १।१४।२० ) माध्यन्दिन ( १०।३।२३ ) सवनयोरन्ते सर्पणमुक्तम् । तत् तृतीयसवने अत्र भवति, न तृतीयसवनान्ते । अत्र निष्क्रमणरूपं सवनान्तभूतमेव सर्पणं सर्वेषाम् । सवनादित्वाभावान्नोपस्थानादिरूपम् ॥१२॥

[ स्रुग्व्यूहने वसुमदादीनां प्रयोगः ]

## स्रुग्व्यूहनमग्नेर्वनस्पतेरिन्द्रस्य वसुमतो रुद्रवत आदित्यवत ऋभुमतो विभुमतो वाजवतो बृहस्पतिमतो विश्वदेव्यावतः सोमस्योज्जिति, मित्यग्नि-र्वनस्पतिरिन्द्रो वसुमान् रुद्रवानादित्यवानृभुमान्विभुमान्वाजवान् बृहस्पति मान् विश्वदेव्यावान्त्सोमस्तमपनुदन्त्वि"ति ॥ १३ ॥

## पशुदेवतावनस्पतिभ्यां वा सोमोपदेशादितरासाम् ॥१४॥

अथवा पशुदेवतावनस्पतिभ्यामेवोपलक्षितं स्रुग्व्यूहनं कर्त्तव्यम् । ( अग्नेर्वनस्पते रुज्जितिमित्येतावन्मात्रमित्यर्थः ) न वसुमदादिदेवताभिः । कुतः ? इतरासामिन्द्रस्य वसुमत इत्यादीनां सोमयागे उपदेशात् ( ८।४।८ ) । अस्य च पाशुकत्वात् ॥१४॥

एवं पूर्वपक्षे प्राप्ते सिद्धान्तयति—

## सर्वा वा सवनीयसौम्यभावात् ॥१५॥

वाऽवधारणे । सर्वा वा वसुमदादयोऽपि व्यूहने उपलक्षणीयाः । न पशुदेवतावनस्पति मात्रम् । कुतः ? सवनीयेषु हविःषु सौम्ये चरौ च वसुमदादीनां सत्वात् । सर्वत्र हीन्द्रोऽभीज्यते ।

सवनीयहवींषि प्रकृत्यैव "सर्व ऐन्द्रा भवन्ति" इति (४।२।४।१७) श्रुतत्वात्। एवं च स्रुग्व्यूहनस्य पाशुकत्ववत् सवनीयसौम्यसंबन्धस्यापि सत्वात् तत्र चेन्द्रादीनां भावात् तासामपि स्रुग्व्यूहने उपलक्षणं भवत्येव ॥१५॥

इति कातीये श्रौतसूत्रे दशमाध्याये सप्तमी कण्डिका ।।७।।



[ द्रोणकलशे आग्रयणाद्धारियोजनसंज्ञकरसग्रहणम्, तत्र धानाप्रक्षेपो, धानासोमयागः, तदवघ्राणं च ]

**विमुच्य स्रुचौ द्रोणकलशे हारियोजनग्रहण "मुपयामगृहीतोऽसि हरिरसी"ति ॥ १ ॥**

व्यूहनादिस्रुग्विमोकान्तं कृत्वा आग्रयणान्निःशेषं ( ६।५।११ ) ( १ ) गृह्णीयात्। द्रोणकलशे आग्रयणाद्यो रसो गृहीतः स एव हारियोजनसंज्ञको भवति ॥ १ ॥

**धानाश्चावपति "हर्योर्धाना" इति ॥ २ ॥**

हारियोजने। अत्र बह्वीभिर्धानाभिः श्रयणं कार्यम् ( २ )। "तं बह्वीभिर्धानाभिः श्रीत्वा" ( सत्या० ६।४ ) इति सूत्रात् ॥ २ ॥

**उन्नेताऽनुवाचयति मूर्धनि कृत्वा धानासोमेभ्योऽनुब्रूहीति ॥ ३ ।**

उन्नेता अध्वर्युहस्ताद् द्रोणकलशमादाय तं मूर्द्धनि कृत्वा मैत्रावरुणं प्रत्याह। धानासहिताः सोमा धानासोमाः ।।३।।

**आश्राव्याह 'धानासोमान्प्रस्थितान्प्रेष्ये' ति ॥ ४ ॥**

उन्नेता मैत्रावरुणम् ॥ ४ ॥

**भक्षठं० हरेदिच्छन् ॥ ५ ॥**

सदसि भक्षार्थं द्रोणकलशमिच्छन् हरेत्। इच्छन् सर्वंहुतं कुर्याद्धानावर्जम्। सर्वं होमपक्षे धानावर्जं होमः। उत्तरत्र धानानां प्राणभक्षविधानात्। (अत्रोन्नेता होतारमुपहूय सक्तव् सशेषं, होतोन्नेतारमुपहूय द्विः सर्वं भक्षयेत् ) केचित्तु सर्वे होत्रुन्नेतारावुपहूय भक्षं भक्षयन्तीत्याहुः। अत्र भक्षणमवघ्राणम् ॥ ५ ॥

**उत्तरवेदौ वा निधाय विलाभं "यस्ते अश्वसनि"रिति(३) प्राणभक्षं भक्षयित्वोत्तरवेदौ निवपन्ति ॥ ६ ॥**

होमानन्तरं पात्राणां हविर्धानमण्डपे निधानं पूर्वमुक्तम् (६।१२।७)। तेन सह उत्तरवेदिनिधानं विकल्प्यते। अथवा उत्तरवेदौ सदसि वा द्रोणकलशं निधाय धाना विलभ्य = गृहीत्वा यस्ते अश्वसनिरिति सर्वे ( ४।४।३।१० ) सयजमाना ऋत्विजः सदसि प्राणभक्षं भक्षयित्वा अवघ्राय कृतावघ्राणा धाना उत्तरवेदौ निवपेयुस्तिस्रस्तिस्रो धानाः। धानाभक्षणं च सर्वेषामृत्विजाम् ।। ६ ।।

---

(१) ॐ उपयामगृहीतोऽसि हरिरसि हारियोजनो हरिभ्यां त्वा गृह्णामि ८।११

(२) ॐ हर्योर्धानास्थ सहसोमाऽ इन्द्राय ८।११ नाध्याहारः।

(३) ॐ यस्तेऽ अश्वसनिर्भक्षो यो गोसनिस्तस्य तऽ इष्टयजुष स्तुतस्तोमस्य शस्तोक्थस्योपहूतस्योपहूतो भक्षयामि ८।१२

[ आहवनीये सर्वर्त्विजां षण्णां षण्णां शकलानामाधानम् ]

**शाकलाधानं "देवकृतस्ये"ति प्रतिमन्त्रम् ॥ ७॥**

शकलान्येव शाकलानि । षट् षट् यूपशकलानि आहवनीये सर्वे आदध्युर्देवकृतस्यैन स (१) इति प्रतिमन्त्रम् ॥ ७॥

[ चमसिनां स्वस्वचमसस्पर्शो, मुखालम्भनं, दधिभक्षणं च ]

**अपरेण चात्वालं यथास्वं चमसान्पूर्णपात्रानवमृशन्ति हरित कुशानवधाय "संवर्चसे"ति(२) ॥ ८॥**

चात्वालात्पश्चिमस्यां दिशि होत्रादीनां क्रमेण उदक्संस्थं स्थापितानामुदकपूर्णानां दशानां चमसानामुपरि हरितदर्भान् स्थापयित्वा सर्वे चमसिनः स्वं स्वं चमसं स्पृशेयुः ॥८॥

**मुखान्यालभन्ते ॥९॥**

सर्वे तूष्णीम् ॥ ९ ॥

**"दधिक्राव्ण" इत्याग्नीध्रे (३) दधिभक्षणम् ॥१०॥**

सर्वे ऋत्विग्यजमानाः कुर्युः ॥१०॥

[ पत्नीसंयाजाः, समिष्टयजुर्होमश्च ]

**पत्नीसंयाजाः पशुवत् ॥११॥**

जाघन्या कार्याः ॥११॥

**"समिन्द्र ण" इति नव समिष्टयजूꣳषि जुहोति(४) प्रतिमन्त्रम् ॥१२॥**

[ आसन्द्यादीनामवभृथार्थं चात्वालं प्रति नयनम् ]

**आसन्द्यौदुम्बर्यौ चात्वालꣳ हरन्ति ॥१३॥**

अध्वर्य्वादयो बर्हिर्होममकृत्वा सोमासन्दीमौदुम्बरीं शाखां च चात्वालं प्रति हरेयुः । अवभृथार्थं हरणमिदम् ॥१३॥

**सोमलिप्तं च ॥१४॥**

यत् उलूखल-मुसल-द्रोणकलश-स्थाली-पूतभृदाधवनीय-ऋजीषकुम्भ-हविर्द्धान-पवित्र-ग्रावा-ऽधिषवणचर्मो-दञ्चन-परिप्लवादि, तदपि चात्वालं प्रति नयन्ति ॥१४॥

[ कृष्णविषाणादीनां चात्वाले प्रक्षेपः ]

**कृष्णविषाणामेखले चात्वाले प्रास्यति "माऽहिर्भू" रिति(५) ॥१५॥**

**प्रतिप्रस्थाता च शङ्कुयोक्त्रे तूष्णीम् ॥१६॥**

शङ्कुश्च कण्डूयनार्थं, यः पत्न्यै पूर्वं प्रदत्तः ( ७।४।८ ) ॥१६॥

---

(१) ॐ देवकृतस्यैनसोऽवयजनमसि । ॐ मनुष्यकृतस्यै० सि । ॐ पितृकृत० सि । ॐ आत्म कृत० सि । ॐ एनसऽएनसोऽवयजनमसि । ॐ यच्चाहमेनो विद्वाꣳश्चकार यच्चाविद्वाꣳस्तस्य सर्वस्यैनसोऽवयजनमसि ८।१२

(२) ॐ सं वर्चसा प० । पृ० १२ द्रष्टव्यः ।

(३) ॐ दधिक्राव्णोऽ अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत्प्र णऽ आयूꣳषि तारिषत् २३।३१

(४) ॐ समिन्द्रणो मनसा० ८।१५-२२ मन्त्राः शु० य० द्रष्टव्याः ।

(५) ॐ ॐ माहिर्भूर्मा पृदाकुः ८।२४ ।

[ अथावभृथकर्म ]

"उरुठं०ह्री" ति वाचयति ॥१७॥

यजमानमध्वर्युः (१) ॥१७॥

साम प्रेष्यति, गाय ब्रूहीति वा ॥१८॥

"प्रस्तोतः साम गाय" "प्रस्तोतः साम ब्रूहि" इति वा प्रस्तोतारं प्रेष्येत् ॥१८॥

व्यध्वोदकान्तयोश्च ॥१९॥

व्यध्वे = अर्द्धमार्गे, उदकसमीपे च एवमेव प्रैषः कार्यः ॥१९॥

सर्वे निधनमुपयन्ति ॥२०॥

सर्वे ऋत्विग्यजमाना निधनं साम्नोऽन्त्यं भागं पठेयुः ॥२०॥

आहृतमादायावभृथं गच्छन्ति स्यन्दमानानाᳬ स्थावराः ॥२१॥

आसन्दीमौदुम्बरीं सोमलिप्तादिकं यचात्वालसमीपे आहृतं तत्सर्वमादाय ऋत्विजो यजमानः पत्नी च अवभृथं कर्तुं वहन्तीनामपां मध्ये याः स्थिरा आपस्ताः प्रति गच्छेयुः ॥२१॥

तदभावेऽन्याः ॥२२॥

पूर्वोक्तानामपामभावे अन्याः काश्चन अपो गच्छेयुः ॥२२॥

"नमो वरुणाये"ति वाचयत्यपोऽवक्रमयन् ॥२३॥

उदकमध्ये यजमानं प्रवेशयन् नमो वरुणायेति(२) वाचयेत् ॥२३॥

प्रास्य समिधं चतुर्गृहीतेनाभिजुहो "त्यग्नेरनीक" मिति ॥२४॥

ततश्चतुर्गृहीतमाज्यं गृहीत्वा अप्सु समिधं प्रक्षिप्य अग्नेरनीकमिति मन्त्रेण प्रास्तायाः समिध उपरि(३) जुहुयात् ॥२४॥

अपरेण प्रयाजान्बर्हिर्वर्जम् ॥२५॥

अपरेण चतुर्गृहीताज्येन बर्हिःसंज्ञकचतुर्थप्रयाजवर्जं चतुरः प्रयाजान्यजेत् ॥ २५॥

अप्सु जुहोति ॥२६॥

अवभृथे । आहवनीयापवादोऽयम् ॥२६॥

प्रधानं वरुणयागमाह—

[ एककपालेनावदायं चरन्ति ॥२७॥

एककपालेन वारुणेन पुरोडाशेन अवदाय अवदाय चरेयुः, न सर्वहुतं कुर्यादिति । "सर्वहुत एककपालः" ( १।९।१२ ) इति एककपालस्य सर्वहोम उक्तः । तदपवादोऽयम् । अवशिष्टेन पुरोडाशेन अस्य स्विष्टकृद्विधानात् अत्र सशेष एव पुरोडाशो होतव्य इति भावः । तेनात्र पुरोडाशान्तरवद् द्विरवदानमेव ॥२७॥

---

(१) ॐ उरुठं० हि राजा व्वरुणश्चकार सूर्याय पन्थामन्वेतवाऽ उ । अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् ८।२४ ।

(२) ॐ नमो व्वरुणायाभिष्ठितो व्वरुणस्य पाशः ८।२४ ।

(३) ॐ अग्नेरनीकमपऽ आ विवेशापान्नपात्प्रति रक्षन्नसुर्यम् । दमे दमे समिधं यक्ष्यग्ने प्रति ते जिह्वा घृतमुच्चरण्यत्स्वाहा ८।२५ ।

ऋजीषस्येच्छन्नवद्येत् ॥२८॥

इच्छन्निति विकल्पार्थे। अत्र वरुणयागे पुरोडाशेन सह ऋजीषस्यापि द्विरवदानं कुर्याद्यदीच्छेत् ॥२८॥

स्विष्टकृद्यागमाह—

अग्नीवरुणाभ्यांᳬ सर्वहुतᳬं शेषम् ॥२९॥

प्रधानयागावशिष्टं सर्वमपि पुरोडाशमग्नीवरुणावुद्दिश्य सर्वहुतं कुर्यात् ॥२९॥

ऋजीषस्य च सकृत्पूर्वे चेत् ॥३०॥

अत्र स्विष्टयागे ऋजीषस्याप्येकमवदानमवद्येत्, यदि प्रधानयागे ऋजीषमवत्तं स्यात् ॥३०॥

[ षडाहुतिकं दशाहुतिकं वाऽवभृथं कर्म ]

वश एतत्कुर्यात् ॥३१॥

वशशब्द इच्छावाची। इच्छायां सत्यामेतत्षडाहुतिकमवभृथं कर्म कुर्यात्। अत्र चतस्रः प्रयाजाहुतयः, एका प्रधानाहुतिः, एका स्विष्टकृदित्याहुतिषट्कम् ॥३१॥

अत्रैव पक्षान्तरमाह—

यजमानोक्तावाज्यभागौ बर्हिर्वर्जं चानुयाजौ ॥३२॥

यजमानोक्तौ सत्यामेतत्पक्षान्तरं दशाहुत्यात्मकं कुर्यात्। द्वावाज्यभागौ, चत्वारः प्रयाजाः, द्वावनुयाजौ, अग्नीवरुणौ चेति ॥३२॥

इति दशमाध्यायस्याष्टमी कण्डिका ॥८॥

---

[ ऋजीषकुम्भस्य जले प्लावनम् ]

अन्यतरत्कृत्वा "समुद्रे त" इत्यृजीषकुम्भं प्लावयति ॥१॥

उक्तयोः षडाहुतिकदशाहुतिकयोः पक्षयोर्मध्ये षडाहुतिकं वा दशाहुतिकं वाऽवभृथं कृत्वा ऋजीषकुम्भमुदकमध्ये तारयेत्। यथा जलस्योपरि कुम्भं प्लवेत्तथा कुर्यादित्यर्थः (१) ॥१॥

[ कुम्भस्योपस्थानं जले मज्जनं च ]

"देवीराप" इति (२) विसृज्योपतिष्ठते ॥२॥

आप्लावितं कुम्भं विसृज्योपतिष्ठेत् ॥२॥

"अवभृथेति" मज्जयति (३) ॥३॥

ऋजीषकुम्भं जलस्यान्तः ॥३॥

---

(१) ॐ समुद्रे ते हृदयमप्स्वन्तः सं त्वा विशन्त्वोषधीरुतापः। यज्ञस्य त्वा यज्ञपते सूक्तोक्तौ नमोवाके विधेम यत्स्वाहा ८।२९

(२) ॐ देवीराप एष वो गर्भस्तᳬं सुप्रीतᳬं सुभृतं जुषस्व। देव सोमैष ते लोकस्तस्मिञ्छं च वक्ष्व परि च वक्ष्व ८।२७

(३) ॐ अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः। अव देवैर्देवकृतमेनोऽयासिषमव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहि ८।२८

**कृष्णाजिनान्तं च 'मा मैन्द्रियं ज्यैष्ठ्यꣳ श्रैष्ठ्य'न्यौषीदिति ॥४॥**

दीक्षाकाले यस्मिन्नासीनः स्याद्यजमानस्तस्य कृष्णाजिनस्यान्तम् = अन्तभागं हस्तेन गृहीत्वा उदके मज्जयेत् ॥४॥

**पुत्रायैनत्प्रदाय वरुणप्रघासवत्स्नानप्रभृत्या समिदाधानात् ॥५॥**

एनत्कृष्णाजिनं गृहीत्वा पुत्राय प्रदाय स्नानादारभ्य समिदाधानान्तं वरुणप्रघास (५।५।३०-३५) वत्कुर्यात् ॥५॥

[ सोमलिप्तानां जले प्रक्षेपः ]

**सोमलिप्तं प्रास्यति ॥६॥**

ग्रहचमसादिषु यत्र सोमो लिप्तः तत्सर्वं जले प्रक्षिपेत् ॥६॥

**अदानं पूर्वयोः ॥७॥**

"पूर्वे दद्यादधिकृतेभ्यो यस्मा इच्छेत्" (५।५।३४) इति परिहितवाससोर्दानमुक्तम्, तदत्र निषिध्यते ॥७॥

[ आमहीयजपः सर्वेषाम् ]

**"उद्वय"मित्युन्नेत्रोन्नीता आमहीयां जपन्तो गच्छन्ति "अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवान्। किन्नूनमस्मान्कृणवदरातिः किमु धूर्त्तिरमृतत्वस्ये"ति ॥८॥**

उद्वयमिति (१) मन्त्रेण उन्नेत्रा जलमध्यादृत्विज उत्तारयेदुन्नेता (१२।१।१।११)। एवमुत्तारिता आमहीयासंज्ञकाम् 'अपाम सोमम्' (६।४।११) इत्यृचं जपन्तो देवयजनं गच्छेयुः। अस्या ऋचः आमहीय इति संज्ञा ॥८॥

**शालाद्वार्यमपरेणास्ते यजमानः कृष्णाजिनमङ्के कृत्वा ॥९॥**

उपविशेत् ॥९॥

**स्रुवाहुतिं जुहोति 'मामैन्द्रियं ज्यैष्ठ्यꣳ श्रैष्ठ्यमग्निर्दधातु स्वाहे'ति ॥१०॥**

अध्वर्युः ॥१०॥

[ उदयनीयेष्टिः प्राकृत विहारे ]

**कृष्णाजिनं निधायोदयनीया प्रायणीयावत् ॥११॥**

कृष्णाजिनं कचिद्देशे स्थापयित्वा उदयनीयेष्टिः प्रायणीयावत्कार्या। उदयनमुत्थानम्। तदनया क्रियत इत्युदयनीया। एवं च प्राग्वंशे शालामुखीयस्य एतावत्पर्यन्तमेव गार्हपत्यत्वम्। इतः परमाहवनीयत्वमिति ॥११॥

**पथ्या स्वस्तिश्चतुर्थी ॥१२॥**

प्रायणीयायां (७।५।१३) पथ्या स्वस्तिः, अग्निः, सोमः सविता इति क्रम उक्तः। तत्र या प्रथमा पथ्या स्वस्तिः, साऽत्र चतुर्थी कार्येति ॥१२॥

[ अथानूबन्ध्यपशोर्विधानम् ]

**पात्रप्रोक्षणाद्याज्यासादनात्सवनीयवत्परिव्ययणादि मैत्रावरुणी वशाऽनूबन्ध्या ॥१३॥**

उदनीयायां समाप्तायां मित्रावरुणदेवत्या वशा बन्ध्या अवत्सा गौरनूबन्ध्या कार्या।

---

(1) शु० य० २०।२१।

तत्र पात्रप्रोक्षणादारभ्य आज्यासादनान्तं सवनीय (६।१।३—४) पशुवत्कार्यम्। ततो यूपस्य परिव्ययणादि (१४।१७।१३) कुर्यात्। अस्य पशुयागस्य अनूबन्ध्येति नामधेयम्। यज्ञमनु यज्ञ समाप्तिमनु बध्यते इत्यनूबन्ध्या। सा च गौः ॥१३॥

**सर्वंवगूहनादि वा कृतत्वात् ॥१४॥**

सर्वंवगूहनाद्येवात्र कुर्यात् न परिव्ययणादि। कुतः ? कृतत्वात्। परिव्ययणस्य यूप संस्कारत्वात्। तस्य च सर्वपश्वर्थं पूर्वमेव कृतत्वादित्यर्थः ॥१४॥

**वशाभाव उक्षा ॥१५॥**

वशाया गोरभावे सेचनसमर्थो महान् वृषभो मैत्रावरुणोऽनूबन्ध्यो भवेत् ॥१५॥

**उभयाभावे पयस्या ॥१६॥**

वशाया गोः उक्ष्णोरप्यभावे पयस्या कार्या। कलौ च "अश्वालम्भं गवालम्भम्" (प० स्मृ० १।३१ माधवीये) इत्यनेन गवालम्भस्य निषिद्धत्वात्कलौ पयस्यायाग एव तत्स्थाने कार्यः ॥१६॥

**आसाद्यैनामाज्यभागप्रभृतीडान्तामेके ॥१७॥**

एनां पयस्यां वेद्यामासाद्य आज्यभागप्रभृति इडान्तां पयस्यां कुर्यात् इत्येके समामनन्ति। एकग्रहणात् आदितो ब्राह्मणतर्पणान्तामपि पयस्यां केचिदनुष्ठेयां मन्यन्ते। तच्च स्पष्टमेवाऽऽहाऽऽपस्तंबः। "कृत्स्नसंस्थामेके" (१३।२४।११) इति ॥१७॥

[ उदवसानीयेष्टिः ]

**उदयसानीयाऽऽग्नेयः पञ्चकपालः समारूढनिर्मथिते ॥१८॥**

अनूबन्ध्यायां पयस्यायां वा समाप्तायां समारूढनिर्मथिते विहारे उदवसानीयेष्टिः कार्या। तत्र पञ्चकपालः पुरोडाशः कार्यो यथा पुनराधेये उक्तः (४।१।६) ॥१८॥

**हिरण्यं दक्षिणाऽनड्वान्वा ॥१९॥**

उदवसानीयायामिष्टौ ॥१९॥

**पशुवद्वाऽऽहुतिः ॥२०॥**

अथवा उदवसानीयास्थाने पशुवत् 'उरु विष्ण (५।३८) वित्याहुतिं जुहुयात्। यथोत्साहदानं च ॥२०॥

[ उदवसानीयान्ते नित्याग्निहोत्रहोमः ]

**तदन्ते सायमाहुतिः ॥२१॥**

उदवसानीयान्ते वैष्णव्याहुत्यन्ते वा सायंकालीनोऽग्निहोत्रहोमोऽनुष्ठेयः ॥२१॥

अस्याः सायमाहुतेः सोमाङ्गत्वं पूर्वपक्षयति—

**सोमाङ्गꣳ सन्निधिविरोधाभ्याम् ॥२२॥**

इयं सायमाहुतिः सोमाङ्गं स्यात्। कुतः ? सोमसन्निधौ पाठात् (४।५।१।१६) अथ "यदैवैषोदवसानीयेष्टिः सन्तिष्ठतेऽथ सायमाहुतिं जुहोति काल एव प्रातराहुतिम्" (४।।१।१६) इत्यनेन उदवसानीयेष्टिसमाप्त्यनन्तरमेवाहुतेर्विधानात्। सायमाहुतेर्नियमेनोदवसानीयान्ते एव कर्त्तव्यत्वात्। उदवसानीयाया अनियतकाले अनुष्ठाने प्राप्ते तदनन्तरमेवास्याः कर्त्तव्यत्वात्। नित्यत्वे स्वकालबाधप्रसङ्गात् ॥२२॥

**नित्या वा प्रातराहुतिश्रुतेः ॥२३॥**

वाऽवधारणे । एषाऽऽहुतिर्न सोमाङ्गं, किन्तु नित्यैव । कुतः ? प्रातराहुतिश्रुतेः । (४।५।१।६) स्वकाले एव प्रातराहुतिविधानात् । सायमाहुतेस्तु सोमयागनिमित्तोऽपकर्षः कृतो, नैतावता तदङ्गत्वमिति ॥२३॥

**नियतक्रियाऽतः ॥२४॥**

दीक्षितो न ददातीत्यादिनिषेधानामयमवधिः । इतः परं तेषामनुष्ठानं कर्तव्यम् ॥२४॥

**एष प्रथमः सोमः ॥२५॥**

सर्वसोमयागानामयमग्निष्टोमसंस्थाको ज्योतिष्टोमः प्रथममनुष्ठेयः । सर्वे विकारा एतदनन्तरम् । "एष वा प्रथमो यज्ञानाम्" (तां० ब्रा० १६।१।२ ) इति श्रुतेः ॥२५॥

**आदीप्य प्रविशन्ति ॥२६॥**

बर्हिरादीप्य गृहं गच्छेयुः । देवयजनमादीप्येति देवयाज्ञिकाः ॥२६॥

[ अत्यग्निष्टोमादीनामग्निष्टोमस्य विकारता ]

**षडुत्तरेऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्र अप्तोर्यामः ॥२७॥**

ज्योतिष्टोमो नाम सोमयागः । तस्य चतस्रः संस्था मुख्याः । तत्र प्रथममग्निष्टोमसंस्था, तत उक्थ्यः, ततः षोडशी, तत अप्तोर्यामः(१)। संस्था नाम क्रतूपरमः । यस्मिन् स्तोत्रे कृते प्रधान यागः समाप्तो भवति तस्मिन् यागे तत्स्तोत्रानन्तरं स्तोत्रान्तरमेव नास्ति, अतः सा संस्था तत्पदेनाभिधीयते । यथा—अग्निष्टोमसंस्थायामग्निष्टोमाख्ये स्तोत्रे कृते क्रतुः समाप्यते, अतः सा संस्था अग्निष्टोमादिपदैरभिधीयते । एवमुक्थ्यादिष्वपि द्रष्टव्यम् । ( स्तोत्रं तु साम्ना क्रियमाणो देवतानिष्ठगुणाभिधानविशेष उद्गातृगणपठनीयः )। तत्र अग्निष्टोमसंस्थैव अग्रिमाणामत्यग्निष्टोमोक्थ्यषोडश्यतिरात्राणां चतसृणां प्रकृतिः । वाजपेयः षोडशिविकारः । अप्तोर्यामस्तु अतिरात्रसंस्थाविकारः । इमाः सर्वा विकृतयः साक्षात्परम्परया वा अग्निष्टोमसंस्थाविकारभूता इति कृत्वा सूत्रकारेण षडुत्तरे विकारा इत्युक्तम् ॥२७॥

---

( १ ) अत्यग्निष्टोमे त्रयोदश शस्त्राणि । द्वादश आग्निष्टोमिकानि, एकं षोडशिशस्त्रम् । तच्च आग्निमारुतादूर्ध्वं कर्तव्यम् । उक्थ्ये पञ्चदश । तत्र त्रीण्युक्थशस्त्राणि । शेषाणि आग्निष्टोमिकानि सर्वत्र । षोडशियागे षोडश । तत्र त्रीण्युक्थशस्त्राणि, षोडशिशस्त्रं च । षोडशियागो द्विविधः । अविहृतो विहृतश्च । यत्र निनर्दं साम पठ्यते सोऽविहृतः । यत्र गौरिवीतं साम पठ्यते स विहृतः । वाजपेये सप्तदश शस्त्राणि । तत्र अतिरिक्थोक्थं शस्त्रमेकं, शेषं षोडशिवत् । अतिरात्रे पञ्चविंशतिः । तत्र द्वादश ज्योतिष्टोमिकानि । ततो द्वादश पर्यायसंज्ञकानि । तत्र आद्यानि चत्वारि शस्त्राणि प्रथमः पर्यायः । मध्यमानि चत्वारि मध्यमः पर्यायः । अन्त्यानि चत्वारि उत्तमः पर्यायः । त्रिष्वपि पर्यायेषु होतुराद्यं शस्त्रम् । उत्तराणि त्रीणि मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानाम् । ततः पञ्चविंशमाश्विनशस्त्रम् । आश्विनशस्त्रं त्रयोदशशतऋगात्मकं षष्ट्यधिकत्रिशतऋगात्मकं चेति पक्षद्वयम् । अप्तोर्यामे त्रयस्त्रिंशच्छस्त्राणि । तत्र द्वादशाग्निष्टोमिकानि, द्वादश रात्रिपर्याय संज्ञकानि, त्रीण्युक्थशस्त्राणि, वालखिल्यशस्त्रम्, षोडशिस्तोत्रम् , आश्विनशस्त्रम् , उक्थ्यशस्त्राणि चत्वारीति । उक्थ्यसंस्थज्योतिष्टोमे सवनीयपशोः प्रागग्निष्टोमः । प्रवर्ग्योऽत्र नास्ति । उपसन्मात्रमेव । उक्थ्ये सवनीयौ द्वौ पशू, आग्नेय ऐन्द्राग्नश्च (९।८।३)। षोडशिनि त्रयः पशवः (९।८।४)। वाजपेये षोडश्युक्ताः त्रयः पशवः (९।८।४) मारुती गोवशा, सप्तदश प्राजापत्याः, सारस्वती मेषी चेति द्वाविंशतिः पशवः । अतिरात्रे षोडश्युक्तास्त्रयः, चतुर्थी सारस्वती मेषी (९।८।५) । अप्तोर्यामे अत्यग्निष्टोमे च आग्निष्टोमिकः पशुः । अन्यो विशेषः सर्वत्र तत्रोक्तः ।

[ उक्थ्यस्याच्छावाकशस्त्रेण समाप्तिरितरेषां होतृशस्त्रेण ]

**तेषामुक्थ्योऽच्छावाकमभिसन्तिष्ठते होतारमितरे ॥२८॥**

तेषामत्यग्निष्टोमादीनां मध्ये उक्थ्यसंस्था अच्छावाकशस्त्रेणैव समाप्यते । इतराश्च विकृतयो होतृशस्त्रेणैव समापनीयाः । अयं भावः । सर्वत्र हि अध्वर्युणा ग्रहे चमसे वा गृहीते "ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति" (तै० सं० ३।१।४) इति विधिना तद्ग्रहीयदेवतासंबन्धिस्तोत्रमुद्गातृगणेन कर्तव्यम् । तस्मिंश्च स्तोत्रे समापिते तत्समनन्तरमेव होतृगणेन 'स्तुतमनुशंसति' इति वचनात् स्तुतदेवताकं शस्त्रं कर्तव्यम् । ततश्च होमादिकम् इति । एवं च प्रकृते वाजपेये षोडश्यन्ते 'स्तोत्रं चमसैः' (१०।५।८) इति वचनात् षोडशिस्तोत्रानन्तरं चमसैरेव स्तोत्रे समापनीये तदनन्तरकर्तव्यं यत्स्तोत्रं तद्धोतैव कुर्यात्, नान्योऽच्छावाकादिरित्येतदर्थमिदं सूत्रम् । एवं संस्थान्तरेऽपि द्रष्टव्यमिति ॥२८॥

[ वैश्यराजन्यकर्तृकसोमयागे विशेषः ]

**वैश्यराजन्ययोः सोमे न्यग्रोधस्तिभीनुपनह्येच्छन् भक्षाय क्रयणप्रभृत्यनु सोममावृत्य समानमासादनं प्रागभिषवात् ॥२९॥**

वैश्यक्षत्रिययोः सोमयागे अध्वर्युर्यजमानं भक्षं कारयितुमिच्छन् वटफलस्तबकान् उपनहनेन वाससा बध्वा सोमस्यैवेतिकर्त्तव्यतया न्यग्रोधस्य क्रयणादारभ्य अभिषवादर्वाक् संस्कारजातं कुर्यात् ॥२९॥

**चमसोन्नयनकाले वाऽऽहृत्य दध्नोन्मृद्य तद्वचमसमनून्नयेत् ॥३०॥**

अथवा चमसोन्नयनकाले न्यग्रोधफलान्यङ्कुरांश्चाहृत्य चूर्णयित्वा दध्ना मिश्रणं कृत्वा इतरान् सोमचमसाननु फलचमसमुन्नयेत् ॥३०॥

**हूयमानेषु कुशतरुणेन जुहोत्यहं त्वदस्मीत्यहं त्वदस्मीति ॥३१॥**

इतरेषु सोमचमसेषु एकं फलचमसमध्वर्युर्दर्भपत्रेण चमसाद् गृहीत्वा जुहुयात् । द्विरभ्यासोऽध्यायसमाप्तिसूचनार्थः ॥३१॥

इति नवमी कण्डिका ॥ ९ ॥

इति कात्यायनकृते श्रौतसूत्रे विद्याधरशर्मकृतायां वृत्तौ दशमोऽध्यायः ।



# एकादशोऽध्यायः ।

[ ज्योतिष्टोमसम्बन्धि ब्रह्मत्वम् ]

**ब्रह्मत्वमतः ॥ १ ॥**

अत उर्ध्वमध्यायसमाप्तिं यावत् ब्रह्मणः कर्म उच्यते ॥ १ ॥

[ ब्रह्मणो वाग्यमः ]

**वाग्यतः कर्मणि वर्त्तमाने ॥ २ ॥**

सौमिके कर्मणि क्रियमाणे ब्रह्मा वाग्यतो भवेत् ॥ २ ॥

[ हिरण्यवत्याहुत्यन्तरं सोमक्रयपर्यन्तं ब्रह्मणो दक्षिणतोऽनु गमनम् ]

**हिरण्यवत्याᳬ हुतायां दक्षिणाऽनुगच्छत्या क्रयात् ॥ ३ ॥**

"बर्हिस्तृणेन हिरण्यं बध्वाऽवदधात्येषा त इति, जूरसीति जुहोति" ( ७।६।८-६ )
इति पूर्वोक्ता आहुतिर्हिरण्यवती । तदाहुत्यनन्तरं सोमक्रयसमाप्तिं यावत् सोमं प्रति गमनादौ सर्वत्र ब्रह्मा अध्वर्य्वाद्यपेक्षया दक्षिणदिगाश्रितः पृष्ठतो गच्छेत् ॥ ३ ॥

[ सोमक्रयानन्तरं सोमनिधानं यावद् ब्रह्मणः सञ्चरः ]

**क्रीते प्राङतीत्य पूर्वेणाऽनः परीत्यापरेण वा दक्षिणतोऽनु**
**गच्छत्या निधानात् ॥ ४ ॥**

सोमक्रयणानन्तरं सोममादायाऽनः प्रति गच्छन् ( ७।६।४ ) ब्रह्मा पूर्वस्यां दिशि गत्वा सोमक्रयदेशस्य दक्षिणतोऽवस्थितस्य शकटस्य ( ७।६।४ ) पूर्वेण अपरेण वा परिक्रम्य शालायां सोमनिधानं यावत् ( ७।६।३० ) शकटाद्दक्षिणः सन् तं शकटमनु गच्छेत् ॥ ४ ॥

[ प्रवर्ग्ये सञ्चरः ]

**दक्षिणाग्निं वाऽपरेण घर्मे ॥ ५ ॥**

प्रवर्ग्ये दक्षिणाग्निमपरेण वा शकटस्य वा पूर्वेण परेण वा गार्हपत्यस्य दक्षिणत आहवनीयस्य वा दक्षिणत आसीत ब्रह्मा ॥ ५ ॥

[ स्तंबयजुर्हरणकाले ब्रह्मण उपवेशनस्थानम् ]

**स्तंबयजुर्हरिष्यत्याहवनीयदेशं दक्षिणेनास्ते वेदिसहितः ॥ ६ ॥**

सोमे ( ८।३।६ ) महावेदिनिर्माणकाले स्तंबयजुर्हरणं करिष्यत्यध्वर्यौ ब्रह्मा वेदिस्पृष्ट आहवनीयं दक्षिणेनोपविशेत् ॥ ६ ॥

**एवᳬ सर्वत्र प्रागग्नीषोमीयप्रणयनात् ॥ ७ ॥**

आहवनीयं दक्षिणेन वेदिसंलग्नः सर्वत्रोपविशेत् ॥ ७ ॥

**कर्मणः कर्मणो वा सहितस्तत्तद्देवान्वेत्य ॥ ८ ॥**

अथवा हविर्द्धानप्रवर्त्तनो-परवखनन-सदःकरणा-ऽऽग्नीध्रकरण-धिष्ण्यनिवपनादेः कर्मणः कर्मणः क्रियमाणस्य सहितः सन्निहितो दक्षिणत अग्नेः समीप एव दक्षिणत उपविशति । न त्वाहवनीयदेशस्य दक्षिणतः । किं कृत्वा । तत्तदेवान्वेत्य । तत्तदध्वर्य्वादिभिः क्रियमाणं कर्मान्वेत्य = अनुगम्य तत्र तत्र गत्वेत्यर्थः । यदा हविर्द्धानप्रवर्तने पूर्वमन्तः

पात्यसमीपे वेदिमध्ये स्थापितयोर्हविर्धानयोर्दक्षिण उपविष्ट आसीत्, यदा च हविर्द्धाने प्रणीयेते तदा ब्रह्मापि तत उत्थायानुगच्छति । गत्वा पुनस्तत्र सन्निधौ दक्षिणत आस्त इत्यर्थः । एवं सर्वत्र ज्ञेयम् ॥ ८ ॥

[ चयने अग्निप्रणयनकाले ब्रह्मण उपवेशनस्थानम् ]

**आहवनीये प्रणीयमानेऽप्रतिरथस्य द्वादश ब्रुवन्नग्नौ ॥९॥**

अग्निचयने आहवनीये प्रणीयमाने, (१७।३।२०-२१) ब्रह्मा अप्रतिरथस्य द्वादश मन्त्रान् जपन् दक्षिणतोऽवस्थितोऽनुगच्छेत् । आशुः शिशान इति ( १३।३३-४४ ) द्वादशर्चामप्रतिरथसंज्ञा ॥ ९ ॥

**सर्वत्रैके॥१०॥**

एके शाखिनः सर्वत्र अनग्निके साग्निके च क्रतौ अग्निप्रणयने अप्रतिरथस्य द्वादश ऋचो ब्रुवन् ब्रह्माऽनुगच्छेदित्याहुः ॥ १० ॥

**स्तीर्णायां यथार्थमेत्य ॥११॥**

वेदिस्तरणादूर्ध्वमावश्यकभोजनमूत्रपुरीषाद्यार्थं गत्वा पुनः स्वस्थाने वेदेर्दक्षिणत उपविशेत् ॥ ११ ॥

[ अग्नीषोमीयप्रणयनकाले ब्रह्मणः सञ्चरः ]

**अग्नीषोमप्रणयनायोत्तरेण धिष्ण्याञ्छालाद्वार्यं पूर्वेणेत्यास्ते दक्षिणतः ॥१२॥**

**हुते च सोममादायाऽग्निमन्वेति ॥ १३ ॥**

वैसर्जने होमे (८।७।१-२) कृते ब्रह्मा सोममादाय शालाद्वार्यं पूर्वेणानुगच्छेत् ॥१३॥

**यजमानो वा सोमꣳ हरेत् ॥ १४॥**

अथवा यजमान एव सोमं हरेत्, न ब्रह्मा ॥१४॥

**अन्यस्मै प्रदायानिहिते यथेतमेत्यास्ते दक्षिणतः ॥१५॥**

ब्रह्मकर्तृकसोमाहरणपक्षे अध्वर्युणा आग्नीध्रीयेऽग्नौ धिष्ण्यस्योपरि अस्थापिते एव ब्रह्मा तं सोममन्यस्मै ( ब्राह्मणाच्छंसिने ) धारणार्थं समर्प्य येन मार्गेणागत उत्तरेण धिष्ण्यानिति, तेनैवागत्य आग्नीध्रीयस्य दक्षिणत उपविशेत् अयं न इति ( ८।७।६ ) होमं यावत् ॥१५॥

**हुते च सोममादायाहवनीयं चातीत्य ॥ १६ ॥**

वैसर्जनहोमानन्तरं ब्रह्मा अन्यहस्तात्सोममादायाहवनीयसमीपे गत्वा चकारात् पुनरन्यस्मै सोमं प्रदाय आहवनीयं ,त्तरेणातिक्रम्य तस्य दक्षिणत उपविशेत् ॥ १६ ॥

**अपररात्रेऽग्नीषोमीयप्रणयनवदिच्छन् ॥ १७ ॥**

अपररात्रे सवनीयस्य पशोः परिस्तरणपात्रासादनादौ क्रियमाणे ब्रह्मा अग्नीषोमीयप्रणयनवत् अर्थात् उत्तरेण धिष्ण्यान् शालाद्वार्यं च पूर्वेण एत्य आस्ते दक्षिणतः इच्छन् कुर्यात् । इच्छन्नाहवनीयं दक्षिणेन वेति विकल्पः ॥ १७ ॥

**विप्रुषाꣳ होमꣳ हुत्वा प्रतिहर्त्तारमन्वारभेत वाऽदीक्षितः ॥१८॥**

अदीक्षितो ब्रह्मा विप्रुड्ढोमस्य ( ६।६।२८ ) अनन्तरं प्रतिहर्त्तारमन्वारभेत्, न वा इति विकल्पः ॥ १८ ॥

**प्रस्तोत्राऽऽमन्त्रित 'एतं ते देव सवितः' स्तुत सवितुः प्रसव इत्युक्त्वा प्रसौति ॥ १९ ॥**

प्रस्तोत्रा पृष्टो ब्रह्मा एतं ते देव सवितः ( २।१२ ) इति मन्त्रं पठित्वा स्तुतः सवितुः प्रसव इति मन्त्रेण आज्ञां दद्यात् ॥ १९ ॥

पक्षान्तरमाह—

**देव सवितरेतद् बृहस्पते प्रेति वा ॥ २० ॥**

अथवा देव सवितरेतद् बृहस्पते प्र इत्येतावन्तं मन्त्रमुक्त्वा स्तुत सवितुः प्रसव इत्यनुज्ञां दद्यात् ॥ २० ॥

पुनरपि पक्षान्तरमाह—

**रश्मिना सत्यायेति वा प्रतिमन्त्रम् ॥ २१ ॥**

रश्मिना सत्यायेति ( १५७–६ ) एकोनत्रिंशत् स्तोमभागमन्त्राः । अत्र ज्योतिष्टोमे द्वादशस्तोत्राणि। अतो द्वादशभिर्मन्त्रैः प्रतिमन्त्रं प्रतिस्तोत्रमनुजानीयात् । अर्थात् रश्मिना सत्यायेत्यादिकं क्रमेणैकैकं मन्त्रमुक्त्वा स्तुत सवितुरित्यनेन सर्वत्रानुज्ञां दद्यात् ॥ २१ ॥

**येन प्रवेशनं तस्मिन्त्सर्पणम् ॥ २२ ॥**

ब्रह्मा येन द्वारेण पूर्वेणापरेण वा सदः प्रविशेत् तेनैव द्वारेण सर्पणम् = ऋतस्य द्वारौ इत्यभिमर्शनं ( ६।८।२० ) कुर्यात् ॥२२॥

तत्रापरेण प्रवेशे सञ्चरविशेषमाह—

**पूर्वेण यूपं परीत्यापरेणा चेत् ॥ २३ ॥**

यद्यपरेण द्वारेण ब्रह्मा सदः प्रवेष्टुमिच्छेत्तदा पूर्वेण यूपं परीत्य प्रविशेत् । पूर्वेण द्वारेण प्रवेशे यूपमपरेण परीत्य प्रविशेदित्यपि बोध्यम् ॥ २३ ॥

**प्रशास्तुर्दक्षिण आस्ते ॥ २४ ॥**

ब्रह्मा स्तोत्रशस्त्रकाले सदसि मैत्रावरुणस्य दक्षिणत उपविशेत् ॥ २४ ॥

**अपरेण धिष्ण्यानितरे ॥ २५ ॥**

इतरे ब्रह्मपुरुषाः स्वस्वधिष्ण्यस्य पश्चादुपविशेयुः ॥ २५ ॥

**नेष्टा च ॥ २६ ॥**

नेष्टा च स्वं धिष्ण्यं परेणोपविशेत् ॥ २६ ॥

**विसꣳस्थितसञ्चरः प्रशास्तृधिष्ण्यं वोत्तरेणापवमाने ॥ २७ ॥**

असमाप्ते सवने ब्रह्मणो यः सञ्चरः स मैत्रावरुणधिष्ण्यमुत्तरेण वा दक्षिणेन वा भवेत् पवमानार्थगमनागमनव्यतिरिक्तः । पवमानार्थं संस्थिते च सवने प्रशास्तृधिष्ण्यं दक्षिणेनैवेति ॥ २७ ॥

**स्वꣳ स्वमितरे स्वꣳ स्वमितरे ॥ २८ ॥**

इतरे ब्रह्मपुरुषाः स्वं स्वं धिष्ण्यमुत्तरेण वा दक्षिणेन वा अपरिसमाप्ते सवने गच्छेयुः । संस्थिते तु दक्षिणेनैव ॥ २८ ॥

इति एकादशोऽध्याये प्रथमा कण्डिका ॥ १ ॥

इति कात्यायनश्रौतसूत्रे विद्याधरशर्मकृतायां वृत्तौ एकादशोऽध्यायः ॥११॥

समाप्तं पूर्वार्द्धम् ।

---

# द्वादशोऽध्यायः ।

## द्वादशाहयज्ञः ।

[ एकाहानां द्वादशाहस्य च ज्योतिष्टोमप्रकृतित्वम् ]

एतावता सर्वसोमयागानां प्रकृतिभूतोऽग्निष्टोमसंस्थाको, ज्योतिष्टोमः साङ्गो विहितः, तत्संस्थाश्च विहिताः । इदानीं श्रुतिक्रमप्राप्तो द्वादशाहो विधीयते—

**ज्योतिष्टोमधर्मा एकाह-द्वादशाहयोस्तद्गुणदर्शनात् ॥ १ ॥**

एकेनैवाह्ना साध्याः सोमयागा एकाहशब्दवाच्याः । द्वादशाहस्तु द्वादशभिरहोभिः साध्यः । तेष्वेकाहेषु द्वादशाहे च अग्निष्टोमसंस्थाकज्योतिष्टोमधर्माः प्रवर्तन्ते । कुतः ? तद्गुण दर्शनात् । ज्योतिष्टोमगुणानामत्र श्रवणात् । वाजपेये माहेन्द्रग्रहस्य "अगृहीते माहेन्द्रे रथविहरणादि करोति" ( ५।१।३।४ ) इति अनुवाददर्शनात् । ज्योतिष्टोमपदार्थश्च ज्योतींषि स्तोमा यस्य स ज्योतिष्टोमः इति त्रिवृदादयश्चत्वारः स्तोमा ज्योतिःपदाभिधेयाः । "त्रिवृत्पञ्चदशः सप्तदश एकविंश एतानि वा व तानि ज्योतींषि य एते स्तोमाः" ( तै० ब्रा० १।५।११ ) इति ज्योतिष्टोमशब्दस्य श्रुत्यैव व्युत्पत्तिर्दर्शिता । त्रिवृच्छब्दः त्रिवृन्नवकपरः । स्तोमशब्दश्च स्तोत्रगतसङ्ख्यावाचकः । स्तोत्रं च प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानमित्युक्तम् (१०।१।१६ टिप्पण्याम् ) । एवं च ऋङ्मन्त्रसाध्यस्तोत्रसङ्ख्यैव त्रिवृदुच्यते । एवं पञ्चदश-सप्तदशैकविंशसङ्ख्याविशिष्टान्यपि पञ्चदशादिशब्दैरभिधीयन्ते । एतेषां स्तोत्राणां ज्योतीरूपत्वं श्रुत्यैवाभिहितम् । "एतानि वा व ज्योतींषि य एते स्तोमाः" ( तै० ब्रा० १।५।११ ) इति । यत्र एतानि स्तोत्राणि पठ्यन्ते स क्रतुरत्यन्तं दीप्यत इति क्रतुप्रकाशत्वाच्चैतेषां ज्योतीरूपत्वम् । यथाह श्रुतिः "यो वै त्रिवृदयनं यज्ञक्रतुमापद्यते स तं दीपयति, यः पञ्चदशः स तं, यः सप्तदशः स तं, य एकविंशः स तम्" (१६।१।४) इति । ज्योतिष्टोमे चाग्निष्टोम-संस्थाके द्वादश स्तोत्राणि । बहिष्पवमानं, चत्वार्याज्यानि, चत्वारि पृष्ठानि, माध्यन्दिनपवमानम्, आर्भवपवमानम्, अग्निष्टोमस्तोत्रमिति । तेषु च बहिष्पवमानस्तोत्रं त्रिवृत्स्तोमकम् । आज्यस्तोत्राणि पञ्चदशस्तोमकानि । पृष्ठस्तोत्राणि सप्तदशस्तोमकानि । अग्निष्टोमस्तोत्रं च एकविंशस्तोमकम् । एवं च सर्वेषु स्तोत्रेषु मिलित्वा त्रिवृदादयश्चत्वारः स्तोमा अग्निष्टोमे सन्ति । तत्र बहिष्पवमानस्तोत्रप्रकरणे नवानामृचां पाठात् नवस्वृक्षु गानम् । आज्यादिस्तोत्रेषु एकैकस्मिन् स्तोत्रे तिस्रस्तिस्र ऋचः पठिताः । तत्र पञ्चदशस्तोमसम्पादनार्थं प्रथमामृचं वारत्रयं पठित्वा द्वितीयां तृतीयां च सकृत्सकृत्पठेत् । अयं च प्रथमः पर्यायः । द्वितीये पर्याये प्रथमामृचं सकृत्, द्वितीयां त्रिः, तृतीयां च सकृत् । तृतीये पर्याये प्रथमां द्वितीयां च सकृत्सकृत्पठित्वा तृतीयां त्रिः पठेत् । अयं च पञ्चदशः स्तोमः । एवमेव सप्तदशस्तोमोऽपि । तत्र तृतीये पर्याये द्वितीयायास्तृतीयायाश्च ऋचो वारत्रयं पाठ इत्येतावान्विशेषः । एकविंशस्तोमे च प्रथमपर्याये प्रथमाया द्वितीयायाश्च ऋचो वारत्रयं पाठः, तृतीयाया एकवारम् । द्वितीये पर्याये प्रथमायास्तृतीयायाश्च वारत्रयं, द्वितीयाया एकवारम् । तृतीये पर्याये प्रथमायाः सकृत्, द्वितीयतृतीययोर्वारत्रयमिति । एवं त्रिणवादय स्तोमा विकृतावूहनीयाः । अस्या स्तोमक्लृप्तेर्विधिस्तत्प्रकारश्च ताण्ड्यब्राह्मणतोऽव गन्तव्यः ( तां० अध्या० २-३ ) ।

अयं च ज्योतिष्टोमोऽव्यक्तचोदनाचोदितः । अव्यक्तत्वं च "उत्पत्तिवाक्ये देवता नभिधानत्वम्" ( १।४।७ तै० ब्रा० माध० ) । अतश्च उद्भिदादिषु विकृतियागेषु अव्यक्तचोदनाचोदितासु ज्योतिष्टोमधर्माणां प्रवृत्तिः । तत्र द्रव्यदेवतयोरश्रवणेऽपि यागविधिबलादेव

तयोरप्यतिदेशः। नहि द्रव्यदेवतमन्तरा यागोऽनुष्ठातुं शक्यते। अनुष्ठानाभावे च विधिर्व्यर्थो भवति। इष्टिपश्वादौ तु स्ववाक्ये एव द्रव्यदेवतयोर्विधानात् तद्भिन्नानामेवाङ्गानां विकृतावतिदेश इति वैषम्यम् ॥ १ ॥

[ द्वितीयादिषु व्रात्यस्तोमेषु साद्यस्क्रेषु च प्रथमव्रात्यस्तोमस्य साद्यस्क्रस्य च धर्माणामतिदेशः ]

एवं सादृश्यकल्पितवचनात् धर्माणामतिदेश उक्तः। इदानीं नाम्नाऽतिदेशो निरूप्यते—

**प्रथमस्य व्रात्यस्तोमसाद्यस्क्रेषु वचनात् ॥ २ ॥**

"व्रात्यस्तोमाश्चत्वारः" ( २२।४।१ ) "षट् साद्यस्क्राः" (२२।२।६ ) इति व्रात्यस्तोमसाद्यस्क्रयोः स्वरूपं निरूपयिष्यति। तत्र प्रथमस्य व्रात्यस्तोमस्य, प्रथमस्य साद्यस्क्रस्य च धर्मा द्वितीयादिषु त्रिषु व्रात्यस्तोमेषु द्वितीयादिषु पञ्चसु साद्यस्क्रेषु च प्रवर्तन्ते। कुतः ? वचनात्। उच्यतेऽनेनेति वचनं नामधेयं, तस्मात्। चतुर्णामपि तुल्यनामकरणात् द्वितीयादिषु प्रथमधर्मप्रापणार्थमेव 'मासमग्निहोत्रं जुहोति ( २४।४।२४ ) इत्यादिवत् तन्नाम्ना व्यपदेशात्। अतः प्रथमस्य धर्मा इतरत्र प्रवर्तन्त इति भावः। प्रथमे व्रात्यस्तोमे प्रथमे साद्यस्क्रे च ज्योतिष्टोमिका एव धर्माः प्रत्येतव्याः ॥२॥

[ द्वितीयादिष्वग्निष्टुत्सु प्रथमाग्निष्टुद्यागस्य धर्माणामतिदेशः ]

**अग्निष्टुत्सु चैके ॥३॥**

अग्निष्टुत्सु च प्रथमस्याग्निष्टुतो धर्मा उत्तरेष्वग्निष्टुत्सु प्रवर्तन्ते। कुतः ? वचनात्। नामधेयादेव। अत्र "अग्निष्टुद् ब्रह्मवर्चसवीर्यान्नाद्यकामानाम्" ( २२।४।२६ ) इति वक्ष्यति। तत्र यद्यपि एक एवाग्निष्टुत्प्रतीयते। तथापि अनेकेषां फलानां श्रवणात् अनेकोद्देशेन एकस्य विधाने वाक्यभेदात् प्रतिफलमग्निष्टुद्यागस्य भेद आवश्यकः।

किं च ताण्ड्यब्राह्मणे "त्रिवृदग्निष्टुदग्निष्टोमः" इति वाक्येन प्रथमतस्त्रिवृत्स्तोमयुक्तमग्निष्टोमसंस्थाकमग्निष्टुतं विधाय "तस्य वायव्यास्वेकविंशतिमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेत" इति गुणफलादिविशिष्टं प्रयोगमभिधाय ततः "एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत" (तां०ब्रा० १७।७।२) इति श्रुतम्। तत्र पूर्वस्मिन्नेवाग्निष्टुति रेवतीसम्बन्धस्य, तासु च वारवन्तीयसम्बन्धस्य, तस्य च अग्निष्टोमसाम्नः स्थाने पशुबन्धसम्बन्धस्य च विधाने वाक्यभेद आपद्येत। प्राप्तोद्देशेन अनेकविधानस्य वाक्यभेदापादकत्वं मीमांसानिर्णयसिद्धम्। अतो रेवतीवाक्ये रेवत्याद्यनेकगुणविशिष्टं पूर्वकर्मापेक्षया कर्मान्तरमेव विधीयत इत्यवश्यमेवाङ्गीकर्तव्यम्। तेन च अग्निष्टुतां भेदः सिद्धः। सिद्धं भेदं मनसि निधायैव अग्निष्टुत्सु इति बहुवचनमुक्तमित्यवगन्तव्यम्। एके ग्रहणं पूजार्थं, न तु विकल्पार्थम्। एतच्च पूर्वमीमांसायाम् ( २।२।१४ ) सिद्धान्तितम् ॥ ३ ॥

[ द्वादशाहयज्ञस्य सत्राहीनोभयात्मकत्वम् ]

**द्वादशाहः सत्रमहीनश्च ॥४॥**

द्वादशसुत्याकः सोमयागो द्वादशाहः (१)। स च सत्रात्मकोऽहीनात्मकश्च भवति।

(१) द्वादशाहो द्विविधः। सत्रात्मकोऽहीनात्मकश्च। तत्राहीनात्मके एको द्वौ वा त्रिप्रभृति अनियतसङ्ख्याका बहवोऽपि परार्द्धपर्यन्ता यजमाना भवन्ति। ऋत्विजस्तु यजमानव्यतिरिक्ता एव। अनेकयजमानपक्षे साधारण्यकरणादि द्वादशाहवत्। ऋत्विजोऽदीक्षिताः (आप० श्रौ०)। गवां सहस्रं किंचिदधिकं दक्षिणाऽत्र। अथवा प्राकृता दक्षिणा प्रत्यहं देया। प्रत्यहं प्राकृतदक्षिणापक्षे अंशवदाभ्यग्रहणं तिस्रोऽनूबन्ध्याः सौधातवी चेत्येतन्न भवति। किञ्चिदधिकसहस्रदक्षिणापक्षे अंशदाभ्यवर्जमेतत्सर्वं भवति।

द्विरात्रप्रभृतित्येकादशरात्रपर्यन्ताः सोमयागा अहीना उच्यन्ते । त्रयोदशरात्रप्रभृति सहस्र-संवत्सरपर्यन्ताः सोमयागाः सत्राणि । द्वादशाहस्तूभयात्मकः (१) ॥४॥

[ सत्राहीनयोर्लक्षणम् ]

तयोर्लक्षणमाह—

**आसत उपयन्तीति सत्रलिङ्गं यजत इत्यहीनस्य ॥ ५ ॥**

यस्य उत्पत्तिवाक्ये आस् धातुः, ( २।११ ) उपोपसृष्ट इण् धातुर्वा ( २।३५ ) श्रूयते तत् सत्रम् । यथा—'द्वादशाहमृद्धिकामा उपेयुः' "देवा ह वै सत्रमासत" इति । यजधातु घटितवाक्यविहितत्वमहीनत्वम् । यथा—"द्वादशाहेन प्रजाकामं याजयेत्" इति ॥ ५ ॥

लक्षणान्तरमप्याह—

**उभयतोऽतिरात्रं सत्रमुपरिष्टादहीनस्य ॥ ६ ॥**

उभयत आदावन्ते च अतिरात्रसंस्थाकः सोमयागो यस्य समुदायस्य तत् । अहीन-स्य तु अन्ते अतिरात्रसंस्थाकः सोमयागो भवति, नोभयतः ॥ ६ ॥

[ सत्रे सर्वेषां यजमानत्वम् ]

**यजमानाः सर्वे सत्रेषु ॥ ७ ॥**

सत्रे ये यजमानास्त एवर्त्विजो भवन्ति । तेनात्र वरणाभावः । अध्वर्युत्वादिसिद्धिश्च योग्यतामात्रेणैव । सत्रे सप्तदशावराश्चतुर्विंशतिपरमाश्चतुःपञ्चचत्वारिंशत्परमा वा दीक्षिताः ( आप० २१।२।१ ) कर्त्तारः ( आप० २१।२।११-१६ ) । तत्र षोडशर्त्विजः । अन्ये गृहपतयः । अहीने तु एको, द्वौ, त्रयः, षड् वा अदीक्षिता (आप० श्रौ० २१.२। )यजमाना भवन्ति(२) ॥७॥

[ सत्रेषु दक्षिणाभावनिरूपणम् ]

**अदक्षिणानि च स्वामियोगात् ॥ ८ ॥**

सत्रेषु दक्षिणादानं न भवति । कुतः ? स्वामियोगात् । स्वामिनां यजमानानामेव आर्त्विज्यसंबन्धात् । दक्षिणायाः परिक्रयणार्थत्वेन स्वेनैव स्वस्य परिक्रयायोगात् ॥ ८ ॥

[ यजमानकार्ये गृहपतेरधिकारः ]

यदि सर्वे यजमानास्तर्हि यजमानकार्यं कः कुर्यादित्याह—

**गृहपतिर्याजमानमयुक्तत्वात् ॥ ९ ॥**

याजमानं कर्म गृहपतिः कुर्यात् । कर्मान्तरे तस्यायुक्तत्वात् । इतरेषां च आध्वर्यवा-दिषु योगात् ॥ ९ ॥

**दर्शनाच्च ॥ १० ॥**

"तस्माद्यदि बहवो दीक्षेरन् गृहपतय एव व्रतमभ्युत्सिच्य प्रयच्छेयुः" :(३।४।२।१५) इति यजमानदेयस्य व्रतस्य गृहपतिं प्रति दानदर्शनादपि गृहपतिरेव याजमानं कुर्यात् ॥१०॥

---

( १ ) अत्र सत्रे अहीने वा योऽहःशब्दो रात्रिशब्दो वा श्रूयते स सर्वोऽप्यहोरात्रसमुदाय वाचकः । तेन द्वादशरात्रो द्वादशाह इति समानार्थक एव ।

( २ ) सत्ररूपो द्वादशाहो ब्राह्मणानां समानकल्पानां सर्वेषामेकं फलं कामयमानानां पृथक् पृथक फलं कामायमानानां वा सप्तदशप्रभृति चतुर्विंशतिसङ्ख्यानामाहिताग्नीनामिष्टप्रथमयज्ञानां यजमानानां भवति । न सप्तदशभ्यो न्यूनसङ्ख्यानां, नापि चतुर्विंशत्यधिकसङ्ख्यानाम् । तत्र ऋत्विक्कर्तृकान्ब्रह्मत्वादीन् षोडश पदार्थान्यजमाना एव स्वयं कुर्वन्ति, न ऋत्विजः । सप्तदशयजमानपक्षे एको गृपपतिः । इतरे षोडश ब्रह्मत्वादिकर्मकर्तारः । अष्टादशादिपक्षे षोडशभ्योऽतिरिक्ता गृहपतय इति ।

[ संस्कारेषु सर्वेऽधिकारिणः ]

**सर्वे संस्कारात् ॥ ११ ॥**

गृहपत्यादयः सर्वेऽपि वपनाञ्जनादिसंस्कारैः संस्कृता भवेयुः। कुतः ? संस्कारात्। संस्कारत्वादित्यर्थः। वपनादयो हि फलिसंस्काराः संस्कृतस्य फलभोक्तृत्वयोग्यतामापादयन्ति। सर्वे चात्र फलिन इति कृत्वा सर्वेषां संस्कारो युक्तः ॥ ११ ॥

यद्येवं तर्हि न्यायतः सर्वेषामपि व्रतदानप्राप्तौ 'गृहपतये' (३।४।२।१५) इति एकस्मै कथं व्रतदानविधानं सङ्गच्छत इत्यत आह—

**दर्शने वचनात् ॥ १२ ॥**

दर्शने यदेकस्मै व्रतदानमुक्तं, तद्वचनबलात् ॥१२।

[ अनेकेषां कर्तृत्वासम्भवे गृहपत्यन्वारम्भः सर्वेषाम् ]

**अविभवति गृहपत्यन्वारम्भः ॥ १३ ॥**

यत्र पदार्थे यजमानकर्तृकत्वमुक्तं, यथा—"यजमानो वेदं बध्नाति" (१।३।२२) इत्यादौ। तत्र अनेकेषां कर्तृत्वासम्भवे तत्कुर्वतो गृहपतेरन्वारम्भः सर्वैः कार्यः ॥१३॥

[ क्रत्वङ्गपदार्थेषु गृहपतेरेव कर्तृत्वम् ]

**परार्थेष्वेकः कृतत्वात् ॥ १४ ॥**

परार्थेषु क्रत्वङ्गभूतेषु याजमानेषु पात्रासादनाज्यावेक्षणादिषु एको गृहपतिरेव कर्ता। कुतः ? कृतत्वात्। एकेनापि कृते पदार्थे पदार्थस्य सम्पन्नत्वात्। याजमानं त्रिविधम्। क्रत्वर्थम्, स्वार्थम्, उभयार्थं च। तत्र क्रत्वर्थं पात्रासादनादिकं गृहपतिः कुर्यात्। गृहपतीनामनेकत्वे यः कश्चित्कुर्यात्। अनेकयजमानकेष्वहीनेष्वपि यः कश्चिदेकः। स्वार्थं वपनव्रतादिकं सर्वे कुर्युः। उभयार्थं क्रत्वर्थं पुरुषार्थत्वरूपं च वेदबन्धनाग्न्यन्वाधानादिकं सर्वैरन्वारब्धो गृहपतिः करोति। यूपौदुम्बर्यादिप्रमाणं च गृहपतेरेव। परार्थत्वात्। ॥ १४ ॥

[ मन्थनप्रकारः ]

(अत्र सर्वेषामग्नीनेकत्र संयोज्य सर्वं कर्म क्रियते। तत्राग्नीनामेकत्र करणे त्रयः पक्षाः। तत्र प्रथमः पक्षो लिख्यते)

**अग्निं चेष्यमाणाः समारोह्य गृहपतिर्मध्ये मन्थत्यर्द्धश इतरे दक्षिणोत्तराः ॥ १५ ॥**

चयनं कर्तुंकामाः (१) स्वान् स्वानग्नीन् स्वस्वारण्योः समारोपयेयुः। ततः प्राजापत्येष्टकापशुयजनप्रदेशे समागत्य गृहपतिर्मध्ये मन्थेत्। तस्य दक्षिणतोऽवशिष्टानामर्द्धमुत्तरतश्चार्द्धमुपविश्य मन्थेत्। मध्ये गृहपतिः, तद्दक्षिणे ब्रह्मा, उत्तरे उद्गाता। ब्रह्मदक्षिणतो होता, उद्गातुरुत्तरतोऽध्वर्युः। एवं वरणक्रमेण दक्षिणे उत्तरे च सर्वेषामुपवेशनमित्यर्थः। एवं मथित्वा स्वस्वायतने गार्हपत्यं स्थापयेयुः ॥ १५ ॥

[ गृहपत्याहवनीयदक्षिणाग्न्योः सर्वेषां गार्हपत्याङ्गारप्रक्षेपः ]

**गृहपत्याहवनीयेऽङ्गारप्रासनम् ॥ १६ ॥**

गृहपतेर्गार्हपत्यादाहवनीयोद्धरणे कृते सर्वे दीक्षिताः स्वस्वगार्हपत्यादेकैकमङ्गारं

(१) "साग्निचित्यो भवति" (आप० २१।१।२) इति साग्निचित्यो द्वादशाहः।

तस्मिन्नाहवनीये क्षिपेयुः। एवमेव दक्षिणाग्निमध्येऽप्येकैकस्याङ्गारस्य प्रक्षेपणम्। एवं च गार्हपत्यः सर्वेषां पृथक्। आहवनीयो दक्षिणाग्निश्चैक एवेति सिद्धम्॥ १६॥

[ चयनयागपक्षे इष्टकापशुः ]

**तत्र प्राजापत्यः पशुः॥ १७॥**

तत्र सर्वसाधारणीकृते विहारे सचयने द्वादशाहे प्राजापत्य इष्टकापशुः कार्यः। अत्र प्रथमं प्राजापत्य एवेष्टकापशुः, न पञ्च पशवो, नाऽपि वायव्यो, नाप्यालम्भपक्षः। पात्राण्यप्यत्र साधारणान्यन्यान्येवोत्पादनीयानि। यदि कस्य चित्पात्रैः सत्रमारभ्यते तदा कदाचिन्मध्ये तस्मिन्मृते तत्पात्राणां प्रतिपत्तिरुपध्येत। तन्माभूदिति (१)॥ १७॥

[ गृहपतिवर्जितानां सर्वेषां सत्रिणामाज्येन पत्नीसंयाजानुष्ठानम्, गृहपतेस्तु जाघन्या ]

**आज्येन पत्नीसंयाजा गृहपतिवर्जम्॥ १८॥**

गृहपतिं वर्जयित्वाऽन्ये सत्रिणः स्वस्वगार्हपत्ये सहैवाज्येन पत्नीसंयाजान्कुर्युः क्रमेण। सर्वेषु गार्हपत्येषु अध्वर्युरेव वा तान् करोति। गृहपतेस्तु जाघन्यैव पत्नीसंयाजा, नाज्येन (४।६।८।१६)॥१८॥

[ प्राजापत्यपशोरनुष्ठानं दीक्षाकाले ]

**तदहर्दीक्षा॥ १९॥**

पशोः शिरः सुगुप्तदेशे निधाय यस्मिन्नहनि प्राजापत्यः पशुः कर्तव्यत्वेन विहितस्तस्मिन्नेव दिने उखासम्भरणान्तं कृत्वा दीक्षा कार्या (२)। तत्र दीक्षाकाले पशुः, न पशुकाले दीक्षेति कर्कादयः॥१९॥

[ एकदिने पशुदीक्षयोरनुष्ठानाशक्तौ पशुमात्रानुष्ठानम्। दिनान्तरे दीक्षा ]

**अशक्तौ नियतक्रिया समारूढनिर्मथितेषु सर्वत्र॥ २०॥**

पशुदीक्षयोरेककाले करणाशक्तौ स्वकाले पशुं कृत्वा स्वं स्वमग्निमरण्योः समारोप्य गृहं प्रत्यागत्य निर्मथ्य तत्र सर्वेषां नियतानामग्निहोत्रादीनां क्रिया दीक्षाकरणात्प्राक् कर्तव्या। न केवलमस्मिन्पक्षे, किन्तु वक्ष्यमाणपक्षद्वयेऽपीदमिति सर्वत्रशब्दार्थः॥ २०॥

[ दीक्षाकाले मन्थनम् ]

मन्थनकालस्य पक्षान्तरमाह—

**दीक्षाकाल उदग्वर्ठंशायां पूर्ववन्मन्थनम्॥ २१॥**

यस्मिन्नहनि दीक्षासमयः कृतस्तदहः समारोप्य देवयजनं प्रत्यागत्य 'गृहपतिर्मन्थत्यध्वंश' (१२।१।१५) इति उक्तप्रकारेण सर्वे मन्थनं कुर्युः। शाला तु विंशत्यरत्निः प्राची,

(१) "समांशं द्रव्यमेकत्र कृत्वाऽऽत्मीयांशदानतः। पात्राण्यन्यानि पूर्वेभ्यः साधारणतया भजेत्" इति।

(२) द्वादशाहे आदौ द्वादशसु दिनेषु द्वादश दीक्षाः। ततो द्वादशसु दिनेषु द्वादशोपसदः। उपसद्दिनेषु यस्मिन् कस्मिंश्चिद्दिने प्रवर्ग्यः। ततः पञ्चविंशे दिने प्रायणीयोऽतिरात्रः प्रथममहः। ततः पृष्ठ्यः षडहः। ततस्त्रयश्छन्दोमाः। ततश्चतुर्थश्छन्दोम अविवाक्यसंज्ञोऽप्यग्निष्टोमसंस्थः। ( अत्रैव सत्रोत्थानादि ) प्रातरुदयनीयोऽतिरात्रो द्वादशमहः। एवं षट्त्रिंशद्दिनसाध्यो द्वादशाहः। अहीने व्यूढछन्दसि द्वादशाहे दशरात्रस्य चतुर्थनवमयोरह्नो रैन्द्रवायवात्पूर्वमाग्रयणग्रहणमिति विशेषः प्रातःसवने। माध्यन्दिने सवने शुक्रामन्थिग्रहणात्पूर्वमाग्रयणग्रहणम्। तथा दशरात्रस्य षष्ठसप्तमयोरह्नो रैन्द्रवायवात्प्रथमं शुक्रस्य ग्रहणम्। द्विसहस्रब्राह्मणभोजनमत्र। सचयनद्वादशाहपक्षे उखासम्भरणमिष्टकाकरणं च चयनयागवत्।

सप्तत्यधिकशतारत्निरुदीची। "एकविंशतिच्छदिः सदः, सन्तृणे अधिषवणफलके भवत" (आप. २१।४।१७-१८) इति च। यज्ञस्य दीक्षाकालश्चैत्रशुक्लपक्षस्य सप्तमी अष्टमी वा इति देवः ॥२१॥

[ दीक्षाकाले गृहपतिगार्हपत्येऽङ्गारप्रक्षेपः सर्वेषाम् ]

## गार्हपत्ये प्रासनमत्र ॥ २२ ॥

अस्मिन्पक्षे दीक्षाकाले स्वं स्वं गार्हपत्यं निर्मथ्य खरेषु संस्थाप्य गृहपतिसम्बन्धिनि गार्हपत्ये सर्वे स्वस्वगार्हपत्यादेकैकमङ्गारं गृहीत्वा प्रक्षिपेयुः ॥२२॥

[ सर्वसाधारणीकृतगार्हपत्यादाहवनीयदक्षिणाग्न्योरुद्धरणम् ]

## आहवनीयस्ततः ॥ २३ ॥

ततः साधारणीकृतगार्हपत्यादाहवनीयो दक्षिणाग्निश्चोद्ध्रियते। अस्मिपक्षे अग्नित्रयमपि सर्वेषामेकमेव ॥२४॥

[ सर्वसाधारणीकृतेऽग्नित्रये दीक्षाकरणम् ]

## तत्र दीक्षा ॥ २४ ॥

एवंविधे विहारे दीक्षाऽनुष्ठेया। तेषां दीक्षोपसत्सु आहवनीयो दक्षिणाग्निश्चैकः, गार्हपत्याः पृथक् इति ॥२४॥

[ ब्रह्मादीनां सर्वेषां गार्हपत्या वृत्ता एकविंशतीष्टका गृहपतिगार्हपत्यसदृशा एव प्रकृतिवत् ]

## उपवसथप्रभृति प्रागग्नीषोमीयप्रणयनादुपशमय्य चिनोत्येनान् शालाद्वार्यादक्षिणोत्तरान्धिष्ण्यवच्छ्रुतेः ॥ २५ ॥

प्रभृतिशब्दः सप्तम्यर्थे। (उपसदां प्रथमे प्रायणीयेऽहनि गृहपतेर्गार्हपत्ये चित्युपधानं भवति) उपवसथदिने च अग्नीषोमीयप्रणयनात्प्राक् धिष्ण्यचयनानन्तरमध्वर्युर्ब्रह्मादीनां गार्हपत्यान् स्वप्रयत्नेनोपशमय्य एनान् ब्रह्मादिगार्हपत्यान् शालाद्वार्याद्दक्षिणोत्तरान् गार्हपत्यचयनविधिना चिनोति। कथं चिनुयात् तत्र पूर्वपक्षमाह–धिष्ण्यवदिति। यथा धिष्ण्याः परिमण्डलाश्चीयन्ते, एवमेव सर्वेषां गार्हपत्याश्चेतव्या इत्यर्थः। तत्र हेतुमाह–श्रुतेरिति। "अथेतरेभ्य उपवसथे धिष्ण्यान्" (४।६।८।६) इति श्रुतिः। धिष्ण्यानिति धिष्ण्यवदित्यर्थः। इतरेभ्यो ब्रह्मादिभ्य उपवसथदिने धिष्ण्यवत् गार्हपत्यांश्चिनुयादिति यावत् ॥२५॥

एवं पूर्वपक्षे प्राप्ते सिद्धान्तयति—

## वा यथोक्तं गृहपतेः ॥ २६ ॥

वाशब्दः पूर्वपक्षनिरासे। न धिष्ण्यवच्चिनुयात्। किन्तु गृहपतेर्यथोक्तं तद्वत्। गृहपतेर्गार्हपत्यस्य चयनं यथोक्तं, तथा इतरेषामपीत्यर्थः। कुतः? गार्हपत्यत्वाविशेषादिति भावः ॥२६॥

इति प्रथमा कण्डिका ॥ १ ॥

[ आग्नीध्रीये प्रणीयमाने ब्रह्मादीनां शालाद्वार्यात् स्वस्वगार्हपत्यं प्रति अग्निनयनम् ]

**आग्नीध्रीय उद्यतेऽङ्गारमेकैकशः हरन्ति प्रतिचिति शालाद्वार्यात् ॥१॥**

आग्नीध्रीयेऽग्नौ प्रणयनार्थमुद्यते ब्रह्मादयः साधारणीकृतशालाद्वार्यादेकैकमङ्गारं स्वस्व-गार्हपत्यचितिं प्रति नयेयुः ॥ १ ॥

[ प्रत्यग्नि सवनीयपुरोडाशानुष्ठानम् ]

**प्रत्यग्नि सवनीयपुरोडाशा भूयो हविरुच्छिष्टमसत् समाप्त्या इति श्रुतेः ॥२॥**

सर्वेष्वग्निषु पृथक् पृथक् सवनीयपुरोडाशाः कार्याः । कुतः ? बहुतरं हविरुच्छिष्टं भवतु सत्रसमापनाय इत्यर्थिकायाः श्रुतेः ( ४।६।८।७ ) । पुरोडाशबहुत्वे सर्वेषां जीवनं संभवतीत्यभिप्रायः । दीक्षितानां हि हविःशेषादन्यद्भक्षणीयं नास्ति । यदि एकस्मिन्नेवाग्नौ पुरोडाशः श्रप्येत तदानीमल्पत्वाद्धविषस्तद्भक्षणेन महान्तं कर्मराशिं समापयितुं न ते शक्नुयुरिति भावः ॥ २ ॥

[ पत्नीसंयाजानामिष्टकापशुवदनुष्ठानम् ]

**पत्नीसंयाजाश्च पूर्ववत् ॥ ३ ॥**

गृहपतेर्जाघन्या, इतरेषामाज्येनेति पूर्वोक्तेष्टकापशुवदित्यर्थः ॥ ३ ॥

[ मन्थने द्वितीयः पक्षः ]

अयमेकः पक्षः । अथ द्वितीयं पक्षमाह—

**गृहपतिं वा पर्युपविश्य मन्थन्ते ॥ ४ ॥**

वाशब्दः पक्षान्तरद्योतकः । ब्रह्मादयः पूर्वत आरभ्य प्रदक्षिणं गृहपतिं सर्वतो वेष्टयित्वा मन्थन्ति, नतु अर्द्धशो दक्षिणोत्तरा इति ॥ ४ ॥

[ पक्षत्रयेऽपि प्रथमं गृहपतेर्मन्थनम् ]

**गृहपतिः प्रथमः प्रथमः सर्वत्र ॥ ५ ॥**

सर्वपक्षेषु प्रथमो गृहपतिर्मन्थेत्, पश्चादितरे । न तु सहैव मन्थनमिति ॥ ५ ॥

[ मन्थननिष्पन्नस्याग्नेर्गृहपतिगार्हपत्ये प्रक्षेपः ]

**जातं जातं गृहपतिगार्हपत्ये प्रास्यन्त्युभयत्र ॥ ६ ॥**

जातमग्निमरणिस्थमेव स्थाने अस्थापयित्वैव इष्टकापशौ दीक्षाकाले च गृहपतिगार्हपत्ये प्रक्षिपेयुः । अत्र पक्षे सर्वेषां त्रयोऽप्यग्नयो दीक्षोपसत्सु समानाः साधारणा एव । न प्रथमपक्षवत्पृथग्गार्हपत्यः । एवंविधाद्गार्हपत्यादाहवनीयदक्षिणाग्नी उद्धृत्य इष्टकापशुं सत्रं च कुर्युः ॥ ६ ॥

**उपवसथप्रभृति तुल्यशः सर्वेषु ॥ ७ ॥**

उपवसथे प्रागग्नीषोमीयप्रणयनादुपशमय्येत्यादि पूर्वमुक्तं ( १२।१।२५ ) सर्वेषु पक्षेषु भवति । नाना गार्हपत्या इति (४।६।८।१९) यदुक्तं भवति ॥ ७ ॥

(इति द्वितीयः पक्षः)

मन्थने तृतीयं पक्षमाह—

गृहपत्यरण्योरेव सर्वेषामग्नीनां समारोपो गृहपतिकर्तृको, ब्रह्मादिकर्तृको वा ]

**अरण्योर्वाऽऽहुर्गृहपते "यं इतोऽग्निर्जनिष्यते स नः सह यदनेन यज्ञेन जेष्यामोऽनेन पशुबन्धेन तन्नः सह सह नः साधुकृत्या नाना पापकृत्या य एव पापं करवत्तस्यैव त"दित्युक्त्वा गृहपतिः समारोहयते स्वौ प्रथमम् ॥ ८ ॥**

वाशब्दः पक्षान्तरद्योतकः। सर्वेषां सत्रिणां गार्हपत्याहवनीययोः गृहपतेरेवारण्योः समारोपणम्। तत्र 'य इत इति' मन्त्रं (४।६।४।१३) गृहपतेररणिमालभ्य सर्वे दीक्षिताः पठेयुः। ततो गृहपतिः प्रथमं स्वावग्नी स्वारण्योः समारोप्य ततोऽन्येषामग्नी तत्रैव समारोपयेत् ॥८॥

**यथास्वं वेतरे ॥ ९ ॥**

अथवा ब्रह्मादयः स्वस्वावग्नी स्वयमेव गृहपतेररण्योः समारोहयेयुर्न गृहपतिः। ततः सर्वाग्निसमारूढारणिभ्यां साधारणं गार्हपत्यं निर्मन्थ्य विहृत्य च दीक्षणायादिं कुर्युरिति ॥९॥

अस्मिन्नेव पक्षे—

**दीक्षाकाले संवादप्रभृति पशुबन्धस्थाने सत्रेण ॥ १० ॥**

इष्टकापशुवत्कर्म भवति। संवादशब्देन पूर्वोक्तो य इति इति मन्त्रो गृह्यते य इतोऽग्निरिति मन्त्रे पशुबन्धेन इतिपदस्थाने सत्रेण इति प्रयोक्तव्यमिति (४।६।८।१५) विशेषः। संवादेन समारोपेण चाग्नेः साधारण्यं भवतीत्यभिप्रायः ॥१०॥

[ तृतीये पक्षे शालादीनामग्निष्टोमवद्वाऽनुष्ठानम् ]

**एकाहवद्वोत्तमे शाला-गार्हपत्य-पुरोडाश-पत्नीसंयाजाः ॥ ११ ॥**

एकाहशब्देनाग्निष्टोम उच्यते। अन्तिमे पक्षेऽग्निष्टोमवत् शाला प्राग्वंशा विंशत्यरत्निदीर्घा दशारत्निविस्तृता कार्या। एका एव गार्हपत्यचितिः। पुरोडाशश्चैक एव। वा प्रत्यग्नि सवनीया इति। पत्नीसंयाजा जाघन्या गृहपतिगार्हपत्ये एव, नाज्येनेतरेषाम्। गृहपतिरप्येक एव, नाधिकः ॥ ११ ॥

अस्मिन्पक्षे यजमानानां जीवनोपायमाह—

**एकपुरोडाशेषु व्रत्यासम्भवादैन्द्रं पञ्चशरावमोदनं निर्वपेत्पुरोडाशं वा यद्योदनीयन्ति यद्यपूपीयन्तीति श्रुतेः ॥ १२ ॥**

व्रतार्हत्वासंभवात् = भोजनपर्याप्तत्वासंभवादैन्द्रं निर्वपेत्। पुरोडाशमपि पञ्चशरावपरिमाणमेव। यदि ओदनं खादितुमिच्छति यद्यपूपं खादितुमिच्छति तदा ओदनं पुरोडाशं वा निर्वपेदग्नीद्गृहपतिगार्हपत्ये ॥ १२ ॥

**बार्हस्पत्यमेके ॥ १३ ॥**

कुर्वन्ति, नैन्द्रम् ॥ १३ ॥

[ सर्वपक्षसाधारणसत्ररूपे द्वादशाहे कर्मविशेषः ]

**दीक्षा द्वादशोपसदश्च ॥ १४ ॥**

द्वादशशब्दो देहलीदीपन्यायेनोभयत्र संबध्नाति। द्वादशाहे दीक्षा उपसदश्च द्वादश-

(१) भवन्ति । दीक्षारम्भकालश्च फाल्गुनचैत्रयोरन्यतरस्य शुक्ले सप्तमी अष्टमी वा (२)। अतस्तत्र प्रथमा दीक्षा । अत आरभ्य षट्त्रिंशद्दिवसैर्द्वादशाहयागः ॥ १४ ॥

[ दीक्षाक्रमः ]

सर्वे संस्कारादिति न्यायेन सर्वेषां दीक्षाप्राप्तौ तत्र क्रममाह—

**अध्वर्युर्गृहपतिं दीक्षयति ब्रह्मादींश्च ॥ १५ ॥**

ब्रह्मोद्गातृहोतॄन् । काण्डानुसमयेन (३)। एषां पत्नीः प्रतिप्रस्थाता ॥ १५ ॥

**अध्वर्य्वादीन्प्रतिप्रस्थाता ॥ १६ ॥**

अध्वर्युब्राह्मणाच्छंसिप्रस्तोतृमैत्रावरुणान् । एषां पत्नीर्नेष्टा दीक्षयति ॥ १६ ॥

**प्रतिप्रस्थात्रादीन्नेष्टा ॥ १७ ॥**

प्रतिप्रस्थातृपोतृप्रतिहर्त्रच्छावाकान् । प्रतिप्रस्थात्रादिपत्नीरुन्नेता ॥ १७ ॥

**नेष्ट्रादीनुन्नेता ॥ १८ ॥**

नेष्ट्रग्नीत्सुब्रह्मण्यग्रावस्तुतः । नेष्ट्रादिपत्नीर्ब्रह्मचार्यादीनामन्यतमः ॥ १८ ॥

**उन्नेतारं ब्रह्मचारी स्नातकोऽन्यो वा ब्राह्मणो, न पूतः पावयेदिति श्रुतेः (१२।१।१।१०) ॥ १९ ॥**

ब्राह्मणग्रहणात्स्नातकब्रह्मचारिणोरब्राह्मणयोरपि ग्रहणम् । ब्रह्मचारी उन्नेत्रोपनीतः । स्नातकश्च तेनैवोपनीतः स्नापितश्च ॥ १९ ॥

**अनुपति पत्नीरुत्तर उत्तरः ॥ २० ॥**

उत्तर उत्तरो दीक्षाकर्त्ता पतिसन्निधौ तत्पत्नीर्दीक्षयति ॥ २० ॥

**त एवोन्नेतुः ॥ २१ ॥**

ब्रह्मचार्यादय एवोन्नेतुः पत्नीं दीक्षयेयुः ॥ २१ ॥

[ दक्षिणाकाले कृष्णाजिनधूननं, जपो दक्षिणदिशि गमनं च ]

**दक्षिणाकाले कृष्णाजिनानि धून्वाना दक्षिणापथेन जपन्तो गच्छन्ति "यन्मेऽगदायुषः परागितोऽगात्तां तेऽगद दक्षिणां नयामीतीदमहममुमामुष्यायणममुष्य पुत्रममुष्याः पुत्रं कामाय दक्षिणां नयामीति ॥ २२ ॥**

अन्तरा शालासदसी दक्षिणेनाग्नीध्रं दीक्षिताः गच्छेयुः । "एवमहरहः" ( आप०

---

(१) अत्र द्वादशसु दिनेषु दीक्षाः, ततो द्वादशसु दिनेषूपसदः, ततो द्वादशसु दिनेषु सुत्याः इति षट्त्रिंशतिदिवसैः साङ्गो द्वादशाहो निर्वर्तनीयः । न तु चतुर्भिर्दिवसैर्द्वादश दीक्षाः, ततश्चतुर्भिर्दिवसैर्द्वादशोपसदः, ततश्चतुर्भिर्दिवसैर्द्वादश सुत्या इति सर्वोऽपि साङ्गो द्वादशाहो द्वादशभिरेव दिवसैरनुष्ठेय इति । एतच्च पूर्वमीमांसायाम् (११।३) निरूपितम् ।

(२) "शिशिरे दीक्षन्ते वसन्त उत्तिष्ठन्ति । शिशिरे वा एतस्य प्रयाणं वसन्त उत्थानम्" (आप० २१।२।८-९) इति ।

(३) एकत्र सर्वकाण्डं समाप्य ततोऽपरत्र करणं काण्डानुसमयः (१५।१०)। एवं च प्रथमतो गृहपतेर्दीक्षायां वपनादि दण्डप्रदानन्तं सर्वं कर्म समाप्य ततो ब्रह्मादौ तत्कसंम्पम् ।

२१।५।११ )। आमुष्यायणमित्यस्य स्थाने अमुकस्य पौत्रमित्युच्चार्यम्। अत्रादक्षिणेऽपि सत्रे आत्रेयप्रासर्पकेभ्यो दानं प्रवर्त्तत एव। तस्यापरिक्रियार्थत्वात् ॥२२॥

इति द्वितीया कण्डिका ॥ २ ॥



[ द्वादशाहे प्रथममहोऽतिरात्रसंस्थाकम्। ततः पृष्ठ्यः षडहः। षण्णामन्हां पृष्ठ्य इति संज्ञा। तत्रा ग्निष्टोमसंस्थं प्रथममहः, द्वितीयतृतीयपञ्चमषष्ठान्युक्थ्यसंस्थानि। चतुर्थमहः षोडशिसंस्थ इति ]

द्वादशसुत्याके द्वादशाहे आद्यन्तेऽहनी अतिरात्रसंस्थे उक्ते। इदानीं मध्यवर्त्तिनां दशानामप्यह्नां क्लृप्तिमाह—

**पृष्ठ्यः षडहः, प्रथमोऽग्निष्टोमश्चतुर्थः षोडश्युक्थ्या इतरे ॥ १ ॥**

अतिरात्रादनन्तरं षडहः पृष्ठ्यसंज्ञको भवति। षण्णामह्नां समाहारः षडहः। तत्र षडहे प्रथमः क्रतुरग्निष्टोमसंस्थः, चतुर्थः क्रतुः षोडशिसंस्थः, द्वितीयतृतीयपञ्चमषष्ठाः क्रतव उक्थ्यसंस्थाः कार्याः ( ।२।२।३।४ ) ॥ १ ॥

[ पृष्ठ्ये पूर्वस्मिन् परे वा त्र्यहेऽन्वहमेकैकस्य निग्राभ्यस्य ग्रहणमुभयत्र वा ]

**तत्रातिग्राह्यग्रहणं त्र्यहे पूर्वे "ऽग्नेपवस्वोत्तिष्ठन्नदश्र" मित्यन्वहमेकैकम् (८।३८-४०)॥२॥**

पृष्ठ्ये षडहे प्रथमद्वितीयतृतीयेष्वहःसु वैकङ्कतैः पात्रैरतिग्राह्यसंज्ञकान् ग्रहान् गृह्णीयात्। अग्ने पवस्वेति प्रथमे, उत्तिष्ठन्निति द्वितीये, अदश्रमिति तृतीयेऽहनि एकैकं ग्रहं गृह्णातीत्यर्थः। इतरग्रहानतिक्रम्य दुष्प्रापं फलं गृह्यत एभिरित्यतिग्राह्याः (तै० ब्रा० १।३।३) इति माधवः ॥२॥

**उत्तरे वा त्र्यहे ॥ ३ ॥**

पृष्ठ्यस्योत्तरे वा त्र्यहे ( ४।५।४।१४ ) चतुर्थपञ्चमषष्ठेष्वहःसु वा प्रथमत्र्यहवदेकैकस्य ग्रहणं तैरेव मन्त्रैः। अग्नीन्द्रसूर्याः क्रमेण देवता अत्र ॥ ३ ॥

**उभयोर्वा ॥ ४ ॥**

उभयोस्त्र्यहयोर्वाऽतिग्राह्यान् गृह्णीयात्तैरेव मन्त्रैरावृत्तैः। अस्मिन्पक्षे षड् ग्रहाः ॥४॥

[ माहेन्द्रग्रहहोमानन्तरमतिग्राह्यहोमः, होमकर्तृवषट्कर्तृयजमानानां भक्षणं च ]

**माहेन्द्रमनु होमः ॥ ५ ॥**

माहेन्द्रग्रहहोमानन्तरमतिग्राह्याणां होमः कर्त्तव्यः ॥५॥

**"अग्ने वर्चस्विन्निन्द्रौजिष्ठ सूर्य भ्राजिष्ठे" ति (८।३८।४०) भक्षणं यजमानैः ॥६॥**

त्रिभिर्मन्त्रैस्त्रयाणां यजमानैः सह होमकर्त्तुर्वषट्कर्त्तुश्च भक्षणमिति कर्कः ॥ ६ ॥

[ स्तोत्रोपाकरणे षडहे विशेषः ]

**पृष्ठकाले रथसꣳसारणं प्रथमे दक्षिणेन वेदिम् ॥ ७ ॥**

प्रकृतौ उपावर्तध्वम् इति पृष्ठ ( माहेन्द्र ) स्तोत्रोपाकरणार्थो मन्त्रः। तत्स्थाने रथघोषो विधीयते। एवमग्रेऽपि बोध्यम्।

माहेन्द्रग्रहयाज्याभ्यासस्तोत्रं पृष्ठम्। पृष्ठ्यस्य प्रथमेऽहनि पृष्ठोपाकरणकाले वेदेर्द- क्षिणदिशि प्राञ्चमुदञ्चं वा रथस्य चालनं कुर्यात्। "रथशब्देन माहेन्द्रस्तोत्रमुपाकरोति। शब्दो

मन्त्रस्थाने भवति" ( आप० २१।६।१२ ) इति । अत्रोपावर्त्तध्वमिति प्राकृतोऽपि मन्त्रः सर्वत्र प्रवर्त्तत एवेति कर्कः ॥ ७ ॥

**द्वितीय औपवाजनकैः ॥ ८ ॥**

उक्थ्यसंस्थे द्वितीयेऽहनि पृष्ठकाले दुन्दुभिघोषेण स्तोत्रोपाकरणम् । उपाकरणं प्रारम्भः ॥ ८ ॥

**तृतीय औपवाजनकैः ॥ ९ ॥**

उपवाजनका व्यजनकाः । तेषु भवा वायव औपवाजनकाः । तैः पृष्ठकाले तृतीयेऽहनि स्तोत्रोपाकरणं कुर्यात् ॥ ९ ॥

**चतुर्थेऽरणिभ्यां, मन्थनं चोद्गातुरूरौ, होमश्च ॥ १० ॥**

पृष्ठकालेऽरणिभ्यां स्तोत्रमुपाकरोति चतुर्थे षोडशिसंस्थेऽहनि । ( अतिरात्रे यमग्न इति परिध्यालम्भः , षोडशसंस्थे रराटीस्पर्श इति विशेषः ) । उद्गातुर्दक्षिणे ऊरौ आधारभूते समन्त्रकं शकलतृणयोर्निधानं कृत्वाऽग्नेर्मन्थनम् । होमश्चाहवनीये ॥१०॥

**पञ्चमे सावक्रयोदपात्र्या ॥११॥**

उक्थ्यसंस्थे पृष्ठ्यस्य पञ्चमेऽहनि शेवालसंयुक्तयोदकपात्र्या पृष्ठकाले स्तोत्रमुपाकुर्यात् ॥११॥

**षष्ठे सांवाशिनेन ॥१२॥**

उक्थ्यसंस्थे ॥१२॥

सांवाशिनशब्दार्थमाह—

**मातृभिर्वत्सान्त्सꣳसृज्य सदः पूर्वेण व्यावर्त्तयन्ति ॥ १३ ॥**

सदसः पूर्वस्यां दिशि गोभिर्वत्सान् संयोज्य पृथक् कुर्वन्ति । तथा कृते धेनवो वत्साश्च स्वयं शब्दं कुर्वन्ति । स शब्दः सांवाशिनशब्दार्थः । तेन स्तोत्रोपाकरणम् ॥१३॥

[ ऋतुयाज्याया अध्वर्योः पठनम् ]

**स्वयमृतुयाजेज्याऽ''र्वाश्चमद्य यय्यं नृवाहरणꣳ रथं युञ्जाथामिह वां विमोचनं पृङ्क्तꣳ हवीꣳषि मधुना हि कं गतमथा सोमं पिबतं वाजिनी वसू" इति ॥ १४[१]॥**

ऋतुयाजस्य अर्वाञ्चमद्येति याज्या स्वयमध्वर्युणा ( प्रतिप्रस्थात्रा च ) पठनीया । "होतरेतद्यज" ( ९।१३।१६-१७ ) इत्येवं प्रैषेण होत्रा न पठनीया ॥ १४ ॥

[ प्रतिगरो होतृवेदविहितः षडहे वक्तव्यः, प्राकृतश्च ]

**होतृप्रत्ययः प्रतिगरः ॥ १५ ॥**

पृष्ठ्ये षडहे होतृवेदे यत्र यत्र यादृशः प्रतिगरो विहितस्तत्र तत्र तथा कार्यः (१) ॥१५॥

---

( १ ) तत्र चतुर्थेऽहनि माहेन्द्रग्रहशस्त्रे ओ३ ओ३ ओ३ ओ३ ओ३ ३ ओ३ ओ३ ३ ओ३ ओ३ ओ३ ३ थामो दैवेति प्रतिगरः । यावतीष्वृक्षु न्यूङ्खस्तावतीष्ववसाने ईदृशः प्रतिगरः । प्रणवे प्राकृतः । षोडशिनि विहृतासु ऋक्षु ओथामो दैव मदो३म् इत्यवसाने । दो दामो दैवाथो इति प्रणवे ।

ततो ब्रह्मणाच्छंसिशस्त्रे ओ३ ओ३ ओ३ ओ३ ३ ओ३ ओ३ ओ३ ओ३ ३ ओ३ ओ३ ओ३ ओ३ ३ मदेथम दैवो ३ ३ ओ३ थामो दैव इत्यवसाने । प्रणवे प्राकृतः । आदित्या ह जरितरित्याद्यासु देवनीथासु सप्तदशसु (ऋ०प०) 'ओह जरितरोथामो दैवेत्यवसाने । तथा हजरितरोथामो दैवेति प्रणवे ।

**प्राकृतं चान्यार्थत्वादितरेषाम् ॥ १६ ॥**

पृष्ठ्य षडहे प्राकृतं च प्रतिगरपदं (ओथामो दैवेति) प्रवर्त्तते। इतरेषां होतृवेदविहितानां प्रतिगरपदानामदृष्टार्थत्वात्। "धर्ममात्रेषु समुच्चय" (१।७।८) इति सूत्रेणादृष्टार्थेषु समुच्चयस्योक्तत्वात्। एवं प्राकृतमुपाकरणं तृणाभ्यामिति उपावर्त्तध्वमिति च सर्वत्र प्रवर्त्तते। रथसंसरणादीनामदृष्टार्थत्वात्॥ १६ ॥

[ पृष्ठ्येऽनुष्ठिते नियमानुष्ठानम् ]

**षडहान्ते न बहु वदेत् ॥ १७ ॥**

पृष्ठ्यस्य षडहस्यान्ते क्रतुविषयमन्यच्च बहु न वदेत्॥ १७ ॥

**नान्यं पृच्छेत् ॥ १८ ॥**

षडहान्ते क्रतुविषयमन्यच्च किमपि अन्यं न पृच्छेत्॥ १८ ॥

**नाऽन्यस्मै प्रब्रूयात् ॥ १९ ॥**

अन्यस्मै प्रष्ट्रे प्रतिवचनमपि न दद्यात्। वाग्यमनमेव कुर्यात्॥ १९ ॥

**मधोः प्राशनं घृतस्य वा ॥ २० ॥**

समाप्ते षडहे सर्वे दीक्षिताः कुर्युः प्राशनम्॥ २० ॥

[ अष्टमादिदिनत्रये उक्थ्यसंस्थानां छन्दोमसंज्ञकानां यज्ञानामनुष्ठानम् ]

**उक्थ्याश्छन्दोमास्त्रय उत्तरे ॥ २१ ॥**

षडहसमाप्त्यनन्तरं सप्तमाष्टमनवमेष्वहःसु त्रयः क्रतव उक्थ्यसंस्था भवन्ति। ते च छन्दोमसंज्ञका (१) भवन्ति। तत्र प्रथमश्छन्दोमश्चतुर्विंशस्तोमो, द्वितीयश्चतुश्चत्वारिंशस्तोमः, तृतीयोऽष्टाचत्वारिंशस्तोम इति (आप० श्रौ० २१।८।११)। "रथन्तरसामा प्रथमः। बृहद्रथन्तरसामा द्वितीयः। बृहत्सामा तृतीयः" (आप० २१।०।१२२) इति च॥ २१ ॥

---

तत इहेत्थ प्रागपागुदक् इति आजिज्ञासेन्यासु चतसृषु, (ऋ० प०) भुगित्यभिगत इति तिसृषु च प्रतिराध्यासु (ऋ० प०) च अलाबूनि जरितरोथामो दैव १ पृषातकानि जरितरोथामो दैव २ पिपीलिका वटो जरितरोथामो दैव ३ अश्वत्थ पलाशं जरितरोथामो दैव ४ श्वा जरितरोथामो दैव ५ पर्णशदो जरितरोथामो दैव ६ गोशको जरितरोथामो दैव ७ इति सप्त प्रतिगराः।

ततो वीमे देवा ( ऋ० प० ) इत्यतित्रादे पत्नी यीयप्स्यते जरितरोथामो दैव इत्यवसाने, होता विष्टीमेन जरितरोथामो दैव इति प्रणवे प्रतिगरः।

ततो 'यदस्याऽ अंहुभेद्याः' इत्याद्यासु अष्टसु आहनस्यासु ( ऋ० प०) न्यूङ्खाः। तत्रावसाने प्रतिगरः। इ ३ इइई इइई ३ इइई इइई ३ इइई किमयमिदमाहो ॐ ३ ॐ ३ ॐ ३ मोथामो दैव इति।

तत्तोऽच्छावाकशस्त्रे प्रवो महे मनय ( ऋ० ४।४।३३ ) 'इत्याद्यासु न्यूङ्खाः' तत्रावसाने ओ३ ॐ ॐ ॐ ॐ ॐ ॐ ३ ॐ ॐ ॐ ॐ ॐ मदे मधोर्मदस्य मदिरस्यम दैवो ३ ॐ ३ ॐ ३ ॐ ३ ॐ मोथामो दैव इति प्रतिगरः। एवमेव विश्वजिति सर्वपृष्ठासोर्यामे च प्रतिगरः इति। ( आश्व० २१४ )

( १ ) गायत्रीबृहत्यनुष्टुभिस्त्रिभिश्छन्दोभिर्मीयन्त इति छन्दोमाः। गायत्र्यादीनां त्रयाणां छन्दसां यान्यक्षराणि अर्थात् गायत्र्या अष्टाक्षराणि, बृहत्या नवाक्षराणि अनुष्टुभोऽष्टाक्षराणि। तत्सङ्ख्याकाः स्तोमा येष्वहःसु, तान्यहानि छन्दोमपदवाच्यानि। एवं च त्रिवृदादिस्तोमवत् अष्टत्वादिसङ्ख्याविशिष्टस्तोमानां विधानमनेन वाक्येन क्रियते।

[ एकादशेऽह्नि अग्निष्टोमसंस्थस्य अविवाक्यसंज्ञस्य यज्ञस्यानुष्ठानम्, द्वादशेऽतिरात्रस्य ]

**अत्यग्निष्टोमोऽविवाक्यं दशमम् ॥ २२ ॥**

दशममहोऽत्यग्निष्टोमसंस्थमविवाक्यसंज्ञं (१) भवति छन्दोमसंज्ञं च । "चतुर्विंशमग्निष्टोमं रथन्तरसामानम्" ( आप० २१।६।१ ) इति ॥ २२ ॥

[ द्वादशमहर्वर्जयित्वा सर्वेष्वहःसु पत्नीसंयाजान्तानां कर्मणामनुष्ठानम् ]

**पत्नीसंयाजान्तान्यहान्यन्त्यवर्जम् ॥ २३ ॥**

द्वादशाहे अन्त्यं द्वादशमहर्वर्जयित्वा अन्यान्येकादशाहानि पत्नीसंयाजान्तानि भवन्ति । अवभृथस्य दीक्षोन्मोचनार्थत्वात्सर्वान्तेऽवभृथः (२) ॥ २३ ॥

इति तृतीया कण्डिका ॥३॥

---

[ सोमरक्षणम् ]

**एकैको वाग्यतः सोमꣳ रक्षत्या बोधनात् ॥ १ ॥**

एकैको यजमानो वाग्यतः सन् दाहाद्युपद्रवेण 'अपररात्रे ऋत्विजः प्रबोधयन्ति' ( ६।१।१ ) इत्येतत्पर्यन्तं सोमं पालयति ( ४।६।६।७ ) ॥ १ ॥

**वसतीपरिहरणादि वा ॥ २ ॥**

वसतीवर्यः पूर्वमुक्ताः ( ८।६।६ ) । तत्परिहरणादारभ्याऽऽबोधनाद्वा सोमं रक्षेत् ॥२॥

[ सर्वेष्वहःसु स्वाध्यायार्थं समिदानयनार्थं च बहिर्गमनम्, तत्राशनं च ]

**इतरे विसृज्यन्ते स्वाध्यायाय समिद्भ्यो वा ॥ ३ ॥**

सोमरक्षितुर्व्यतिरिक्ता दीक्षिताः स्वाध्यायाय उत्तराहःशेषभूतं स्वाध्यायं कर्तुं समिध आहर्तुं च वने गच्छन्ति । सोमरक्षितारस्तु गृहे एव स्वाध्यायं कुर्युः ॥ ३ ॥

**तत्राप्यशनम् ॥ ४ ॥**

तत्र समिदाहरणार्थं गतानां हविरुच्छिष्टस्याशनमपि भवति ॥ ४ ॥

**दशमे वा सन्निधेः ॥ ५ ॥**

स्वाध्यायसमिदाहरणादि दशमे एवाहनि, न सर्वेष्वहःसु । कुतः ? सन्निधेः । दशमाहःसन्निधानस्य विधानात् (४।६।६।७) । यद्यपि सन्निधेर्दशमे प्राप्नोति, तथापि प्रकरणात्सर्वेष्वेव भवति । सन्निधिः क्रमः । क्रमात्प्रकरणस्य बलवत्त्वात् । तस्मात्सर्वत्रैवेति कर्कः ॥५॥

[ आनीतानां समिधां सर्वेष्वहःसु सर्वेष्वग्निषु आधानम् ]

**अस्तमिते समिदाधानꣳ सर्वेषु ॥ ६ ॥**

आहृतानां समिधामाधानं सर्वेष्वग्निषु सर्वेष्वहःसु सर्वे कुर्युः ॥ ६ ॥

---

( १ ) अविवाक्यमिति न गुणविधिः । अतो न नामधेयमेतत्, संव्यवहाराभावात् । अतोऽत्र न विवेक्तव्यं किंचित्साधु असाधुकृतमिति । इदं कृतमिदं न कृतमित्येवं गुणविधिरिति देवः ।

( २ ) सत्रे दीक्षणीयादीन्यग्नीषोमीयान्तानि प्राक् प्रधानेभ्यस्तन्त्रेण कार्याणि । एवम् अवभृथादीन्युदवसानीयान्तानि ऊर्ध्वं प्रधानेभ्यस्तन्त्रेण भवन्ति । अतो न्यायादेव एकादशस्वहःसु समिष्टयजुरन्तेषु प्राप्तेषु वचनात्तेषां पत्नीसंयाजान्ततोच्यते ।

[ अथ सत्रोत्थानसंज्ञकं कर्म ]

सत्त्रोत्थानमाह—

दशमेऽपराह्णेऽप उपस्पृश्य शालाप्रवेशनम् ॥ ७ ॥

दशमेऽहनि पत्नीसंयाजान्ते कर्मणि कृतेऽपराह्णेऽप उपस्पृश्य शाला प्रवेशं कुर्युः ॥७॥

शालाद्वार्येऽन्वारब्धे "इह रति" रिति (८।५१) जुहोति ॥ ८ ॥

दीक्षितेष्वध्वर्युमन्वारब्धेषु सत्सु अध्वर्युः सकृद्गृहीतमाज्यं जुहुयात् ॥ ८ ॥

अपरा 'मुपसृज" न्निति ( ८।५१) ॥ ९ ॥

सकृद्गृहीतेन द्वितीयां शालाद्वार्येऽध्वर्युः ॥ ९ ॥

उत्तरेण परिक्रम्यापरेण हविर्द्धानं प्रविश्योत्तरस्य हविर्द्धानस्यापरकूबरी मालभ्य सत्रस्यर्द्धिं गायन्ति "सत्रस्य ऋद्धि" रिति (८।५२) ॥ १० ॥

हुत्वा विहारमुत्तरेण परिक्रम्य सर्वे दीक्षिता धिष्ण्याऽव्यवायेनाग्नीध्रीयमुत्तरेण गत्वा ऽपरेण द्वारेण हविर्धानं प्रविश्योत्तरस्य हविर्धानस्यापरकूबरी ( विष्कम्भिकाम् ) मालभ्य सत्रस्य ऋद्धि ( ८।५२ ) रित्यस्यामृचि साम गायेयुः ॥ १० ॥

उत्तरवेदिश्रोण्यां वोत्तरस्याम् ॥ ११ ॥

प्रागुक्तं साम गायन्ति ॥ ११ ॥

"युवं त" मिति (८।५३) दक्षिणस्याधोऽक्षं प्राञ्चो निष्क्रामन्ति ॥१२॥

दक्षिणस्य हविर्धानस्य अक्षस्याधस्तान्मार्गेण चक्रयोरन्तरालेन नीचीभूय प्राङ्मुखा निःसरन्ति हविर्द्धानात् ॥ १२ ॥

सदः प्रविश्य पूर्वेण स्वासनेषूपविशन्ति ॥ १३ ॥

हविर्धानान्निःसृत्य हविर्धानाग्नीध्रीयान्तरालेन गत्वा पूर्वद्वारेण सदः प्रविश्य स्वासनेषूपविशन्ति दीक्षिताः ॥ १३ ॥

ग्रहं गृह्णाति प्राजापत्यं वायुं पृथिव्या पात्रेण ॥ १४ ॥

अध्वर्युर्हविर्धानं पुनः प्रविश्य पृथिवीरूपेण पात्रेण सोमद्रव्यस्थानीयं वायुं प्रजापति दैवतं ग्रहं गृह्णाति ॥ १४ ॥

ग्रहण-प्रदान-स्तोत्रोपाकरण-होम-भक्षाहरण-भक्षणानि मनसा ॥ १५ ॥

कार्याणि। यानि मन्त्रवन्ति तेषां मन्त्रोच्चारणं मनसा कार्यम्। यान्यमन्त्रकाणि, तेषां कर्मणां हृदये स्वरूपचिन्तनं कार्यम् (आप० २१।१०।३-५) ॥ १५ ॥

चतुर्होतृव्याख्यानं होतुः ॥ १६ ॥

चतुर्होतृव्याख्यानं नाम होतुः शस्त्रं भवति (१) ॥ १६ ॥

गृहपतिरजानति ॥ १७ ॥

चतुर्होतृव्याख्यानमजानति होतरि यजमानो व्याचष्टे (४।६।६।१८) ॥१७॥

( १ ) चतुर्होतृव्याख्यानं शस्त्रमुच्यते। तेषां चित्तिः स्रुगासीत्। चित्तमाज्यमासीत्। वाग्वेदिरासीत्। आधीतं बर्हिरासीत्। केतोरग्निरासीत्। विज्ञातमग्नीदासीत्। प्राणो हविरासीत्। सामाध्वर्युरासीत्। वाचस्पतिर्होताऽऽसीत्। मन उपवक्ताऽऽसीत्। ( आश्व० श्रौ० ८। १३ ) इति।

प्रतिगृणा'त्यरासुरिमे यजमाना भद्रमेभ्यो यजमानेभ्यो ऽभूदिति ॥ १८ ॥

चतुर्होतृव्याख्यानशक्तेऽयमध्वर्योः प्रतिगरः ॥ १८ ॥

ब्रह्मोद्यं वदन्ति ॥ १९ ॥

किं तद्‌ब्रह्मोद्यमित्याह—

प्रजापतेरगुणाख्यानम् ॥ २० ॥

निर्गुणस्य ब्रह्मणो निरूपणं ब्रह्मोद्यम् ॥ २० ॥

अप्रतिभायां तद्वाद आश्वमेधिकं वा नामधेयात् ॥ २१ ॥

निर्गुणस्य ब्रह्मण आख्याने अस्फूर्त्तौ व्याख्यानाशक्तौ अश्वमेधसंबन्धि ( १३।२।६।९) वा "कः स्वित्" (२३।४४-६५) इत्यारभ्य अध्यायान्तं ब्रह्मोद्यं वदन्ति ( १३।५।२।११) ॥ २१ ॥

अस्तमिते गृहीत्वौदुम्बरीं वाचं यच्छन्ति ॥ २२ ॥

औदुम्बरीं हस्तेन स्पृष्ट्वा स्वस्वव्यापारादुपरता भवन्ति ॥ २२ ॥

अस्तमिते निष्क्रम्याऽपरेणोत्तरवेदिमासते ॥ २३ ॥

सदसो निष्क्रम्योपविशेयुः ॥ २३ ॥

प्रतिप्रस्थाता वसतीवरीः परिहरति ॥ २४ ॥

उत्तरस्यान्होऽर्थे वसतीवरीर्गृह्णीयात् । ताश्च पूर्वमुक्ताः ( ८।९।६ ) ॥ २४ ॥

वाग्विसर्जनर्ठ० सत्रकामेन ॥ २५ ॥

ऋद्धिर्नः कामः, सा नः समृद्ध्यताम् इत्यादिप्रकारेण वाग्विसर्जनं कुर्युः ॥ २५ ॥

पृथक्कामेषु "भूर्भुव" इति (८।५३) ॥ २६ ॥

अनेककामेषु दीक्षितेषु सत्सु अनेन मन्त्रेण वा वाग्विसर्जनम् ॥ २६ ॥

सुब्रह्मण्याह्वानं गृहपतेर्यँवाऽऽह ॥२७॥

यं वा गृहपतिराह स कुर्यात् । गृहपतिर्वा कुर्यात् ॥ २७ ॥

सुब्रह्मण्य उप मा ह्वयस्वेत्युक्त्वा समिदाधानम् ॥ २८ ॥

कुर्युः सर्वे दीक्षिताः ॥२८॥

अप उपस्पर्शनाद्येतत्सत्रोत्थानम् ॥ २९ ॥

एतत् अप उपस्पर्शनादि प्रागुक्तं कर्म सत्रोत्थानसंज्ञं भवति ॥२९॥

( इति सत्रोत्थानम )

इति चतुर्थी कण्डिका ॥४॥

---

[आग्रयणोक्थ्यग्रहयोर्मध्ये आगन्तुकानां ग्रहणां ग्रहणम् ]

अतिग्राह्य—षोडशिग्रहाणां ग्रहणं पूर्वमुक्तम् । अधुना तेषां ग्रहणकालमाह—

अन्तराऽऽग्रयणोक्थ्यावागन्तुस्थानं ग्रहाणाम् ॥१॥

आग्रयणोक्थ्यग्रहणकालयोर्मध्ये आगन्तूनामतिग्राह्यषोडश्यादिग्रहाणामावापः ॥ १ ॥

**प्रातःसवनेऽतिग्राह्यान् गृहीत्वा षोडशिनं खादिरेण चतुःस्रक्तिना ''ऽऽतिष्ठ, युद्वाही''ति (८।३३-३४) वा ॥ २ ॥**

षोडशं स्तोत्रमस्येति षोडशी। पृष्ठ्यस्य चतुर्थेऽहनि षोडशिनो ग्रहणकालः। अत्राति ग्राह्यस्यैकत्वेऽपि बहुवचनं विश्वजिदर्थम्। विश्वजिति हि त्रयाणां ग्रहणमुक्तम् ॥२॥

**माध्यन्दिने वाऽऽग्रयणादुत्तरः ॥ ३ ॥**

माध्यन्दिने वा सवने आग्रयणानन्तरमेव षोडशिग्रहो ग्रहीतव्यः ॥३॥

**धाराग्रहान्ते वाऽतिग्राह्यान् ॥ ४ ॥**

माध्यन्दिने सवने धाराग्रहाणामन्तेऽतिग्राह्यान्मुष्टिना गृह्णीयात्। अथवा उक्थ्यान्ते। शुक्रामन्थिनौ, आग्रयणः, षोडशी, उक्थ्यः; एते पञ्च धाराग्रहा, अन्ये मुष्टिग्रहाः ॥४॥

**पूतभृतो वोपाकरिष्यन्पृष्ठम् ॥ ५ ॥**

अथवा पृष्ठोपाकरणात्प्राक् शुक्रस्य पूतभृत्यासेकानन्तरं पूतभृतोऽतिग्राह्यान् गृह्णीयात्। एवं चातिग्राह्याणां कालत्रयम्। षोडशिग्रहणस्य तु चत्वारः कालाः ॥५॥

**अपो निधायाऽᳫंश्वदाभ्यग्रहणम् ॥ ६ ॥**

अपररात्रे हविर्द्धानमध्ये "एकधनस्थान उभयशेषं निधाय" (९।३।२३) इति विहिता अपो निधायांश्वदाभ्ययोर्ग्रहणं कार्यम् ॥६॥

**औदुम्बरेण चतुःस्रक्तिनाऽᳫंशोः ॥ ७ ॥**

ग्रहणं कार्यम् ॥७॥

**तूष्णीᳫं सर्वम् ॥ ८ ॥**

अंशोर्ग्रहस्य वक्ष्यमाणं पदार्थजातं सर्वं तूष्णीं कुर्यात् ॥८॥

**अनुच्छ्वसंश्चेच्छ्वन् ॥ ९ ॥**

अंशोर्ग्रहस्य वक्ष्यमाणं पदार्थजातं श्वासोच्छ्वासमकुर्वन्वा कुर्यात् ॥९॥

किं तद्वक्ष्यमाणमित्याह—

**अद्र्यादानांशुनिवपनोपसर्जनसकृत्प्रहरणग्रहणहोमान् ॥१०॥**

अद्र्यादानमभिषवार्थम्, सोमांशूनामधिषवणोपरि निनयनम्, उपसर्जनं निग्राभ्याभिन्युंतस्य सोमस्याभिषवार्थमार्द्रीकरणम्, सकृत्सोमे प्रहरणम्, ग्रहणं, होमं चानुच्छ्वसन् कुर्यात् ॥१०॥

**हिरण्यं चोपजिघ्रति ॥११॥**

अध्वर्युरशेषं ग्रहं हुत्वाऽनामिकाबद्धं हिरण्यमुपजिघ्रेत् ॥११॥

**उद्यम्य वाऽप्रहरणम् ॥ १२ ॥**

अभिषवार्थमद्रिमुद्यम्य सोमे प्रहरणं न वा कार्यम् ॥१२॥

[ सत्रादिषु अंशोर्ग्रहणम् ]

**सत्र-सहस्र-सर्ववेदस-वाजपेय-राजसूय-विश्वजित्-सर्वपृष्ठेषु ग्रहणमवकाश्यश्चेत् ॥१३॥**

एतेष्वेव यज्ञेषु अंशोर्ग्रहणं नान्येषु। अवकाशवाचनार्हो यजमानश्चेत्। 'प्राणाय मे वर्चोदा' (७।२७-२८) इत्यादयो मन्त्रा अवकाशाः। "ज्ञातप्रियानूचानानवकाशयेत" (९।७।१६) इति हि तत्रोक्तम् ॥१३॥

[ सत्रातिरिक्ते सहस्रदक्षिणयज्ञे द्वादश गर्भिण्यो दक्षिणा ]

द्वादश वत्सतर्यो गर्भिण्यो दक्षिणाऽसत्रे ॥१४॥

सत्रातिरिक्ते सहस्रदक्षिणादौ यज्ञे अस्य ग्रहस्य द्वादश गर्भिण्यो दक्षिणाः ॥१४॥

बुभूषतोऽदाभ्यं गृह्णाति ॥१५॥

भूतिमिच्छतो यजमानस्यादाभ्यसंज्ञकं ग्रहं गृह्णीयादध्वर्युः ॥१५॥

आसिच्य निग्राभ्याः पात्रे तस्मिंस्तूष्णीं, त्रीनꣳशूनवधाया "ऽग्नये त्वा गायत्रच्छन्दस" मिति (८।४७) प्रतिमन्त्रम् ॥१६॥

यस्मिन्नौदुम्बरे चतुरस्रे पात्रेऽशुर्गृहीतस्तस्मिन् निग्राभ्या अपस्तूष्णीं निनीय अग्नये त्वेत्यादिभिस्त्रिभिर्मन्त्रैस्त्रीनंशूनवधाय वक्ष्यमाणं कर्म कुर्यात् ॥१६॥

उपयामः सर्वत्राऽविशेषात् ॥१७॥

अग्नये त्वेत्यादिषु त्रिषु मन्त्रेषु उपयामोऽनुषञ्जनीयः ॥१७॥

विग्रहादित्यग्रहप्रतिषेधाच्च ॥१८॥

उक्थ्यविग्रहेषु, (४।२।३।१८) आदित्यग्रहे च (४।३।५।११) अनाम्नातोपयामेषु तस्य प्रतिषेधः श्रुतौ दृश्यते। अत एवं निश्चीयते अनाम्नातोपयामेष्वपि सर्वत्रोपयामो भवतीति ॥१८॥

"अनुष्टुभ" इत्युक्त्वा ( ८।४७ ) ऽऽधूनोत्यꣳशुभि "र्व्रेशीनां त्वे" ति(८।४८) गच्छन्नाहवनीयम् ॥१९॥

अंशुभिः सोमांशुभिर्मध्ये प्रक्षिप्तैरुलूखलमध्यस्था निग्राभ्या आधूनोति = आड्वालयति आहवनीयं प्रति होमार्थं गच्छन् ॥१९॥

"तस्मै त" इति(८।४९) जुहोति ॥२०॥

तं ग्रहं सर्वहुतमाहवनीये सकृत् ॥२०॥

अꣳशून्त्सोमे निदधा "त्युशिक्त्व" मिति(८।५०) प्रतिमन्त्रम् ॥२१॥

त्रिभिर्मन्त्रैरुलूखलमध्यस्थान् सोमांशूनधिषवणस्योपर्यद्रिषु निहितसोमे निदधात्येकैककम् ॥२१॥

अꣳशुवद्दक्षिणा ॥२२॥

अस्यादाभ्यस्यांशुग्रहवद् (१२।५।१४) द्वादश वत्सतर्यो दक्षिणा ॥२२॥

उक्थ्यान्ते षोडशिचरणमुपस्थायैनं "यस्मान्न जात" इति (८।३६) चमसानुन्नीय ॥२३॥

यस्मान्न जात इति षोडशिग्रहमुपस्थाय, पूर्वं चमसानुन्नीय दशसु चमसेषु पूतभृतः सकाशादुन्नेतृकर्तृकसर्वसोमोन्नयनानन्तरम् षोडशिग्रहेण प्रचरति ॥२३॥

इति पञ्चमी कण्डिका ॥५॥



**तृणहिरण्यै स्तोत्रोपाकरणमुपास्तमयठं० सोमोऽत्यरेच्युपावर्त्तध्व-मिति कृष्णेऽश्व उपतिष्ठति ॥ १ ॥**

प्रागस्तमयात्सदसः पूर्वद्वारे कृष्णवर्णेऽश्वे प्रत्यङ्मुखे स्थिते सति तृणाभ्यां हिरण्येन च 'सोमोऽत्यरेच्युपावर्त्तध्वम्' इति मन्त्रेण षोडशिनः स्तोत्रमुपाकरोत्यध्वर्युः (४।५।३।११) ॥१॥

**आपात्रप्रक्षालनात्कृत्वा ॥ ३ ॥**

चमसपात्राणां प्रक्षालनान्तं कृत्वाऽनुयाजादिना षोडशिसंस्थापरिसमाप्तिं कुर्यात् ॥३॥

अतिरात्रे विशेष उच्यते—

**अतिरात्रश्चेत्सौम्येन सहाऽऽश्विनो द्विकपालः ॥ ४ ॥**

अतिरात्रसंस्थः क्रतुश्चेत्तृतीयसवने सौम्येन चरुणा सहाऽऽश्विनो द्विकपालः । सर्वत्र ग्रहणादन्यत्राप्याश्विनो द्विकपाल एव भवति ॥४॥

**त्रयः पर्यायाश्चमसैः ॥ ५ ॥**

अतिरात्रे एवायमपरो विशेषः । पात्रप्रक्षालनान्ते पर्यायसंज्ञकास्त्रयः सोमयागा भवन्ति । तेषु च पर्यायेषु चमसैरेव यागो न ग्रहैः । प्रतिपर्यायं चादौ सर्पणम् ॥५॥

पर्यायशब्दार्थं व्याचष्टे—

**चतुःस्तोत्रः पर्यायः ॥ ६ ॥**

एकैकः पर्यायश्चतुस्तोत्रो भवति । चत्वारि स्तोत्राणि यस्य (१) । स्तोत्रग्रहणं शस्त्रस्याप्युपलक्षणम् । तेनैकैकस्मिन्पर्याये चत्वारि स्तोत्राणि, (तां० ब्रा० ९।१।२) तान्यनु चत्वारि शस्त्राणि च भवन्ति (ऐ० ब्रा० ४।१।६) ॥६॥

पर्यायशस्त्रेषु क्रमेण कर्तॄनाह—

**होतुः प्रथमं प्रथमम् ॥ ७ ॥**

प्रतिपर्यायं चत्वारि शस्त्राणि, तेषु प्रथमं प्रथमं शस्त्रं होतुः ॥७॥

**उक्थ्यवदितरेषु ॥ ८ ॥**

इतरेषु त्रिषु उक्थ्यविग्रहवत् शस्त्रकर्तारो भवन्ति । तेन द्वितीये मैत्रावरुणः, तृतीये ब्राह्मणाच्छंसी । चतुर्थेऽच्छावाकः ॥८॥

**तदन्ते चमसानुन्नीय स्तोत्रोपाकरणठं० सन्धेः ॥ ९ ॥**

तेषां पर्यायाणामन्ते दशसु चमसेषु पूतभृतः सर्वं सोममुन्नीय सन्धिस्तोत्रेण (२) स्तुवन्त्युद्गातारः ॥९॥

[ आश्विनशस्त्रशंसनं होतुः ]

**होता शठं०सत्याश्विनम् ॥ १० ॥**

सन्धिस्तोत्रानन्तरं होताऽऽश्विनसंज्ञकं शस्त्रमृक्सहस्रात्मकं (ऐ० ब्रा० ४।२।१) शंसति । अध्वर्युः प्रतिगृणाति ॥१०॥

---

(१) चतुर्णां स्तोत्राणामन्तेषु प्रतिस्तोत्रमेकैकं शस्त्रं भवति । तत्र प्रथमस्तोत्रान्ते होतुः, ततो मैत्रावरुणस्य, ततो ब्राह्मणाच्छंसिनः, ततोऽच्छावाकस्य शस्त्रमिति ।

(२) अथ सन्धिस्तोत्रम् (तां० ब्रा० ९।१।२०)। हुं आयिना वो अग्निं नमसो वा ३, असू० हुं० प्रास्युव दश्शांय तोवा। ३। असू० हुं० आयि मा उर्वो दिविष्टयो या०। असू० ३। इति। ३। अत्र त्रिवृत्स्तोमः सामगैः पठ्यते।

**शस्त्रान्त आश्विने सर्वहुतेन चरति ॥ ११ ॥**

प्रतिप्रस्थाता ॥११॥

**एकप्रदानश्चमसैः ॥१२॥**

स चाश्विनः चमसैः सह समानप्रदानः कार्यः । चमसैः सहैव होतव्य इत्यर्थः ॥१२॥

**अश्विभ्यां तिरोह्न्यानाꣳ सोमानामनुवाचनप्रैषौ ॥१३॥**

अश्विभ्यां तिरोन्ह्यानाꣳ सोमानामनुब्रूहि, अश्विभ्यां तिरोन्ह्यान् प्रस्थितान् प्रेष्य, इति प्रैषौ भवतः ॥१३॥

[ प्रतिदिनमैन्द्राग्नः स्तोमायनं वा, सर्वैकादशिनी वा, विभक्तैकादशिनी वा सवनीयः पशुः । द्वादशेऽहनि ऐन्द्राग्न आग्नेयो वा ]

द्वादशस्वहःसु सवनीयपशूनाह—

**ऐन्द्राग्नः सवनीयोऽन्वहम् (१) ॥ १४ ॥**

प्रत्यहमैन्द्राग्नः सवनीयः पशुः कार्य इत्येकः पक्षः ॥१४॥

द्वितीयं पक्षमाह –

**स्तोमायनं वा ॥ १५ ॥**

अथवा प्रत्यहं स्तोमायनं कार्यम् । यस्मिन्नहनि यत्संस्थे यत्प्राप्नोति तस्मिन्नहनि तद्वतीत्यर्थः । स्तोमायनं प्रागुक्तम् ( ६।८।६ ) । अग्निष्टोमसंस्थेष्वेक आग्नेयः सवनीयः पशुः । उक्थ्यसंस्थेष्वाग्नेयैन्द्राग्नौ द्वौ, षोडशिसंस्थेषु आग्नेयैन्द्राग्नैन्द्रास्त्रयः, अतिरात्रसंस्थे आग्नेयैन्द्राग्नैन्द्रसारस्वताश्चत्वारः । एतत् स्तोमायनम् इति ॥१५॥

तृतीयं पक्षमाह—

**ऐकादशिना वा विहृताः ॥१६॥**

एकादशिनीसंबन्धिनः आग्नेयसारस्वत-सौम्य-पौष्ण-बार्हस्पत्य-वैश्वदेवैन्द्र-मारुतैन्द्राग्न-सावित्र-वारुणा एकादश पशव एकादशसु अहःसु क्रमेण भवन्ति । विहृता विभक्ताः ॥१६॥

**द्वादश आद्यः ॥ १७ ॥**

अस्मिन् पक्षे एकादशिनानां प्रथम आग्नेय एव द्वादशः सवनीयः स्यात् ॥१७॥

**सर्वसमासो वा ॥ १८ ॥**

अथवा द्वादशेऽहनि सर्वाऽप्येकादशिनी भवति ॥१८।

(१) अत्र द्वादशसु सुत्यासु प्रतिदिनं सवनीयः पशुरैन्द्राग्नो भवति । 'अथवा प्रत्यहं स्तोमायनं भवति । अस्मिन्पक्षेऽग्निष्टोमसंस्थेऽप्येक आग्नेयः पशुर्भवति । उक्थ्यसंस्थेष्वाग्नेयैन्द्रौ द्वौ पशू । षोडशिसंस्थायामाग्नेयैन्द्रैन्द्राग्नास्त्रयः । अतिरात्रसंस्थे आग्नेयैन्द्राग्नैन्द्रसारस्वताश्चत्वारः । अथवा प्रतिदिनं समस्ता ऐकादशिन आलब्धव्याः । (अथवा प्रायणीयोदयनीययोरतिरात्रयोः समस्ता ऐकादशिन आलब्धव्याः । इतरेषु मध्यवर्तिष्वहःसु दशसु ऐन्द्राग्न आलब्धव्यः ) । अथवा ऐकादशिनानामेवैक आदित आरभ्य अहन्यहनि क्रमेणाऽऽलब्धव्यः । उदयनीयातिरात्रे द्वादशेऽहनि ऐकादशिनानामाद्य आग्नेयः पशुः । अथवा द्वादशेऽहनि एकादशिनी कार्याः ऐन्द्राग्न आग्नेयो वेति ।

## ऐन्द्राग्नो वा स्यात् ॥ १९ ॥

द्वादशेऽहनि ऐन्द्राग्नो वा स्यादाग्नेयो वा ॥१९॥

## यावच्छेषमुत्तरेषु ॥ २० ॥

द्वादशाहादुत्तरेषु त्रयोदशरात्रचतुर्दशरात्रादिषु सत्रेषु ऐकादशिना विहृता यदाऽऽलभ्यन्ते, तदा एकादशसु अहःसु एकवारमेकादश पशून् समाप्य पुनर्द्वादशाहादिषु द्वितीयवारमाहृत्य आलभ्यन्ते। तदा यावन्तः पशव एकादशानां मध्येऽवशिष्यन्ते तावन्तः सर्वेऽन्त्येऽहन्यालभ्यन्ते। एवं महत्सु सत्रेषु सत्रसमाप्तिं यावत्पुनः पुनरावृत्त्या ऐकादशिना आलभ्यन्ते। यावच्छेषमन्त्येऽहनि इति ॥२०॥

## काम्यर्थं० सत्रम् ॥ २१ ॥

भवति, न नित्यम् ॥२१॥

सत्रात्मकं द्वादशाहमुक्त्वा अहीनात्मके द्वादशाहे विशेषमाह—

## अहीने व्यूढच्छन्दसि दशरात्रस्य चतुर्थनवमयोरन्होराग्रयण ग्रहणं प्रथमम् ॥ २२ ॥

अहीने व्यूढच्छन्दसि( १ )। द्वादशाहे प्रथममैन्द्रवायवग्रहणात्पूर्वमाग्रयणग्रहणम्, तत ऐन्द्रवायवादि ग्रहणम्। व्यूढच्छन्दाश्चाहीनोऽस्ति, ( ४।५।६।१ ) यत्र उद्गातुर्होतुश्छन्दसां ( २ ) व्यूहनमुक्तम्। व्यूढच्छन्दसीत्युक्तत्वान्न समूढच्छन्दस्येतत् ( ३ ) ॥२२॥

---

( १ ) समूढपक्षे व्यूढपक्षे च हौत्रे विशेषो हौत्रसूत्रे (आश्व० श्रौ०, ऐ० ब्रा० च ४ १–२) ज्ञेयः। एवमौद्गात्रे विशेषोऽपि लाट्यायनादौ द्रष्टव्य इति।

( २ ) छन्दसां व्यूहनमपि व्यूढात्मके द्वादशाहे उक्तम्। "छन्दांसि वा अन्योन्यस्यायतनमभ्यध्यायन्, गायत्री त्रिष्टुभः, त्रिष्टुब्जगत्या, जगती गायत्र्या" (ऐ०ब्रा० ४।४।५) इति। अस्यार्थः। सोमयागे हि प्रातःसवने गायत्रीछन्दो, माध्यन्दिने च त्रिष्टुप्, तृतीयसवने च जगती। तदेतत्क्रमशो स्पष्टमाम्नातम् (तै० सं०३।२।५।१)।

तत्र माध्यन्दिनसवनीयत्रिष्टुप्छन्दसः स्थानं प्रातःसवनिका गायत्री अभिलषति स्म। तार्तीयसवनिकस्य जगतीछन्दसः स्थानं त्रिष्टुप्छन्दोऽभिलषति स्म। प्रातःसवनिकस्य गायत्रीछन्दसः स्थानं जगती छन्दोऽभिलषति स्म। त्रिष्टुबादिस्थलेषु गायत्र्यादयः पठनीया इति यावत्। इदमेव छन्दसां व्यूहनम्। छन्दसां व्यतिक्रमरूपस्य व्यूहनस्य व्यूढात्मके द्वादशाहे सत्त्वात् व्यूढच्छन्दा इत्यपि नामधेयं तस्य। "स्वस्वस्थानविपरीतत्वेनऊढानि स्थानान्तरे प्रक्षिप्तानि छन्दांसि यस्मिन् द्वादशाहे सोऽयं व्यूढच्छन्दा," इति सायणः (ऐ०ब्रा० ४।४।५)।

( ३ ) द्वादशाहे द्वादशस्वप्यहःसु ग्रहाग्रता विहिता। ग्रहाग्रता नाम अनेकेषु ग्रहेषु गृह्यमाणेषु प्रथमं यस्य ग्रहणं यथा ऐन्द्रवायवादेः, तदेवाग्रतापदवाच्यम्। प्रथममैन्द्रवायवं गृहीत्वा तत इतरेषां ग्रहाणां ग्रहणम्। इयं चैन्द्रवायवाग्रता। एवमेवाग्रताविशेषो विहितः। यथा—"ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, दशमं चाहः, अथेतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथाग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाग्रयणाग्रम्" (आप० श्रौ० २१ २४।२-३) इति। प्रथमदिने ऐन्द्रवायवाग्रता, द्वितीयदिने शुक्राग्रता, तृतीयदिने आग्रयणाग्रता पुनश्चतुर्थे दिवसे ऐन्द्रवायवाग्रता। एवमेव नवस्वहःसु अग्रताविशेषः सम्पादनीयः। त्र्यनीका इत्यप्यस्य नामधेयम् (आप० २१।२४।१)। सैषा त्र्यनीका साम्येनोढा यत्र स समूढः। वैषम्येनोढा त्र्य स व्यूढः। व्यूढप्रकारस्तु "ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, अथेतरेषां दशानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथ द्वे आग्रयणाग्रे, अथैन्द्रवायवाग्रम्, अथ द्वे शुक्राग्रे, अथाग्रयणाग्रम्, अथ द्वे ऐन्द्रवायवाग्रे" (आप० श्रौ०२१।२४।५) इति। अत्रापि पूर्ववद् व्याख्यानं कर्तव्या। एतच्च पूर्वमीमांसायाम् (१०।५।२३-२४) स्पष्टम्।

शुक्रस्य षष्ठसप्तमयोः ॥ २३ ॥

अहीनद्वादशाहे दशरात्रस्य षष्ठेऽहनि सप्तमेऽहनि च शुक्रस्य ऐन्द्रवायवात्प्रथमं ग्रहणं विधेयम् ॥२३॥

असादनमापूर्वेषां ग्रहणात् ॥ २४ ॥

शुक्राग्रयणयोः पूर्वं प्रकृतौ येषां ग्रहणमुक्तं तेषां ग्रहणादर्वागेतौ केन चिद्धस्ते धार्यौ, नासादनीयौ ॥२४॥

परिमार्जनप्रभृति काले हिङ्कृत्य सादनम् ॥२५॥

शुक्राग्रयणयोः परिमार्जनप्रभृति कृत्वा प्राकृते काले सादनं कुर्यात्। यस्य हिङ्कारो विहितस्तस्य हिङ्कृत्य, इतरस्य त्वहिङ्कृत्य सादनम्। आग्रयणस्य हिङ्कृत्य सादनं विहितमस्ति (६।६।१५) ॥२५॥

अव्यूढो वा ॥२६॥

अथवा उद्गातुर्होतुश्छन्दसां व्यूहेऽपि अव्यूढो दशरात्रो भवति। ग्रहाणां व्यूहनं भवतीत्यर्थः। व्यूहे क्रियमाणे ग्रहाणामैन्द्रवायवाग्रता शुक्राग्रता आग्रयणाग्रता च भवति। सा चाक्रियमाणेऽपि व्यूहे सवनभेदेन भवत्येवेत्यभिप्रायः ॥२६॥

उभयतोऽतिरात्रः ॥२७॥

अहीनात्मकोऽयं द्वादशाहो भवति। या त्वन्यतरतोऽतिरात्रतोक्ता (१२।१।६) सा विकृतिविषया ॥२७॥

अतिप्रेषितेऽग्नीदाह "श्वः सुत्यामिन्द्राग्निभ्यां प्रब्रवीमि विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सोमपेभ्यो ब्रह्मन्वाचं यच्छे"ति ॥२८॥

सर्वान्प्रैषानतीत्य वर्तत इत्यति प्रेषितो हारियोजनयागोत्तरकालः। तत्र अग्नीन्मन्त्रमाह ॥२८॥

प्रायणीयेऽद्य सुत्यामेके प्राप्तकालत्वात् ॥२९॥

प्रकृष्टमयनमारम्भो यत्रेति व्युत्पत्या प्रायणीयशब्दो द्वादशाहस्य प्रथमदिनवाचकः। तत्र योऽतिप्रैषो विहितः श्वःसुत्यामिन्द्राग्निभ्यामिति। तत्र श्वःपदस्थाने अद्य पदं प्रयोक्तव्यम्। कुतः? प्राप्तकालत्वात्। सुब्रह्मण्याह्वानस्य यागसंबन्धार्थत्वात्। तदानीमेव तत्कालस्य प्राप्तत्वादित्यर्थः। प्रायणीयाहो हि न प्रथमदिने एव परिसमाप्यते, किन्तु द्वितीयस्मिन् दिवसे प्रातः परिसमाप्यते। तस्मिन्नेव दिने पृष्ठ्यषडहस्य प्रथममहर्भवति। तदर्थमेव सुब्रह्मण्याह्वानं कर्तव्यम्। तस्य च तदानींतनत्वात् अद्यशब्द एव प्रयोक्तव्यो, न श्वः शब्द इति भावः ॥ २९ ॥

एवं पूर्वपक्षे प्राप्त आह—

न पूर्वशेषात् ॥ ३० ॥

नाद्यशब्दः प्रयोक्तव्यः। कुतः? पूर्वशेषात्। पूर्वस्य प्रायणीयस्य अयमतिप्रेषितः शेषः। श्वः शब्देनापि नाऽहरन्तरमुच्यते। किन्तु कर्मान्तरमेव। अतश्च अतिप्रेषितस्य प्रायणीयाङ्गत्वात् पृष्ठ्यषडहप्रथमाहस्य ततः कर्मान्तरत्वात् तादृशकर्मान्तरबोधकः श्वः शब्द एव प्रयोक्तव्य इति भावः ॥ ३० ॥

तस्माच्च श्वोभावात् ॥ ३१ ॥

तस्मात्प्रायणीयात्कर्मणः पृष्ठ्यषडहस्य कर्मणः कर्मान्तरत्वादित्यर्थः ॥ ३१ ॥

**अचोदितत्वाच्च ॥ ३२ ॥**

प्रायणीये अद्य सुत्यामित्यादिविधेरभावाच्च श्वः शब्दः प्रयोक्तव्यः ॥ ३२ ॥

**अग्निमद्येति च लिङ्गात् ॥ ३३ ॥**

अग्निमद्येति ( २१।५६ ) लिङ्गादपि श्वःशब्दः कर्मान्तरवाचीत्यवगम्यते। अग्निमद्य होतारमवृणीत इति मन्त्रोऽद्यकृतं होतृवरणं बोधयति। यस्मिन्दिनेऽयं मन्त्रः पठ्यते ततः पूर्वस्मिन्नेव दिने होता वृतः। यदि अद्यशब्दो दिनवाचकः स्यात् तदा पूर्वदिनकृतं होतृवरणं कथं प्रतिपादयेत्। अतः कर्मवाचीत्यवगम्यते। कर्मवाचित्वे हि अद्यानुष्ठीयमानं कर्मैव पूर्वस्मिन्दिने प्रारब्धमिति तद्वाचकोऽद्यशब्दः सङ्गच्छते, अस्मिन् कर्मणि होतुर्वरणं सञ्जातम् इति। तत्समानत्वात् श्वःशब्दोऽपि कर्मान्तरवाचकः ॥ ३३ ॥

**प्रायणीयादुत्तरमहः श्वःकालाभावात् ॥ ३४ ॥**

यस्मिन्दिने प्रायणीयं समाप्तं, तस्माद्दिनादुत्तरस्मिन्नहनि अर्थात् द्वादशाहतृतीयदिवसे पृष्ठ्यषडहस्य प्रारम्भः कर्त्तव्यः। कुतः ? द्वितीयदिने कालाभावात्। यदि द्वितीयदिने पृष्ठ्यः-षडहः स्यात्तदा "अपररात्र ऋत्विजः प्रबोधयन्ति" (९।१.१) इत्यादिना पूर्वदिनस्यापररात्र एव प्रारम्भः कार्यः। तदानीं च तत्कालस्य प्रायणीयेनाह्ना व्यापृतत्वात् न कर्मान्तरस्यारम्भः कर्तुं शक्यते। यद्यत्र द्वितीयदिने आरम्भस्तदा नापररात्ररूपकालः समस्ति। अतस्तृतीयदिन एव सुत्या कार्या ॥ ३४ ॥

एवं पूर्वपक्षे प्राप्ते सिद्धान्तयति–

**न संपच्छ्रुतेः ॥ ३५ ॥**

नैतदेवम्। कुतः? सम्पच्छ्रुतेः। "षट्त्रिंशदहो वाऽएष य द्वादशाहः" (ऐ० ब्रा० ४।४।२) इत्यनेन हि षट्त्रिंशत्सम्पत्तिरवबोध्यते। यदि तृतीयस्मिन्दिने आरभ्येत तदा अन्हां वृद्ध्या सा सम्पत्तिर्बाध्येत इति ॥ ३५ ॥

यद्येवमपररात्रविधानस्य का गतिरित्याह—

**कालो वचनात् ॥ ३६ ॥**

वचनादपररात्रादिरूपः कालो बाध्यत इत्यर्थः ॥ ३६ ॥

इति द्वादशाध्याये षष्ठी कण्डिका ॥ ६ ॥

इति कात्यायनकृतश्रौतसूत्रे विद्याधरशर्मकृतायां वृत्तौ द्वादशाहनिरूपणो द्वादशोऽध्यायः ।



# त्रयोदशोऽध्यायः

## गवामयननिरूपणम् ।

ब्राह्मणे तावद् द्वादशाहधर्मानुक्त्वा तत्सन्निधौ गवामयनाख्यस्य सत्रस्य धर्माः उक्ता "सौर्यं पशुमालभेत" ( ४।८।३।३ ) इत्यादिना । अतस्तदनुरोधेन सूत्रकारोऽपि द्वादशाहनिरूपणानन्तरं गवामयनमभिदधाति ।

तत्र द्वादशाहतो धर्मातिदेशार्थमाह—

**द्वादशाहधर्माः सत्रेषु तद्गुणदर्शनात् ॥१॥**

सत्रेषु त्रयोदशरात्रादिषु सहस्रसंवत्सरपर्यन्तेषु द्वादशाहधर्माः प्रवर्तन्ते । कुतः ? तद्गुणदर्शनात् । तद्गुणस्य सत्रगुणस्य "अभिप्लवं पूर्वं पुरस्ता द्विषुवत उपयन्ति" (१२।२।३।४) इत्यादेः सत्रान्तरेषु दर्शनादिति ।

अत्र च उपरितनानां पदार्थानां सुखग्रहणार्थं गवामयनस्य अहःक्लृप्तिरुच्यते (आश्व० श्रौ० ८।१४) । गवामयनमिति समाख्या । गोभिरनुष्ठितत्वाद् गवामयनमिति व्युत्पतिस्तदुपष्टम्भिका आख्यायिका च (तै०सं० ७।४।८, ऐ० ब्रा०, ४।३।३ तां० ब्रा० ४।१।१) चोपलभ्यते । तत्र एकाष्टकायां = माघकृष्णाष्टम्यां दीक्षा प्रारब्धा । द्वादशाहविकृतित्वाद् द्वादश दीक्षाः । ततो द्वादशोपसदः । अन्येऽपि दीक्षारम्भपक्षाः सूत्रकारेण तैतिरीयसंहिता ( ७।५।१ ) नुसारेणोक्ताः । एवं दीक्षोपसदनन्तरमेकषष्ट्यधिकशतत्रयात्मिकाः सुत्याश्चानुष्ठेयाः । तत्र अशीत्युत्तरं सुत्याः पूर्वं पक्षः । एवमुत्तरं पक्षः (ऐ० ब्रा० १।२।३।१–२) । द्वयोः पक्षसोर्मध्ये विषुवान् नाम अहः । एवं संवत्सरसाध्यत्वात् संवत्सरसत्रमित्यप्यस्य नाम । एवं च दीक्षोपसद्दिनानां चतुर्विंशत्या सह पञ्चाशीत्यधिकशतत्रयदिनानुष्ठेयमिदं सत्रम् । तत्र प्रतिदिनं सवनत्रयादिकं ग्रहचमसादिकं स्तोत्रशस्त्रादिकं च यथाप्रकृति भवन्त्येव । विशेषः परमत्र निरूप्यते । तत्राह्नां क्लृप्तिरेवम् । अग्नीषोमीयपश्वनुष्ठानानन्तरं प्रायणीयं प्रथममहोऽतिरात्रसंस्थम् । ( तां० ब्रा० ४।१।४ ) । ततश्चतुर्विंशमग्नि ष्टोमसंस्थाकमुक्थ्यसंस्थाकं वा द्वितीयमहः । तस्मिन्नहनि यावन्ति स्तोत्राणि तत्र सर्वत्रापि चतुर्विंशस्तोमकता इति तदहश्चतुर्विंशमित्युच्यते ( ऐ० ब्रा० ४।२।६ ) । इमे द्वे अहनी नात्र प्रथममासमध्ये गण्येते । किन्तु षष्ठमासस्य मध्ये । अनुष्ठानक्रमः परमयमेव । ततश्चत्वारोऽभिप्लवाः षडहाः । ततस्त्रिवृदादिस्तोमषट्कसाध्यः एकः पृष्ठ्यः षडहः । एवं पञ्चभिः षडहैस्त्रिंशद्दिनात्मक एकः सावनो मासो भवति । एवमेव तेषामेव षडहानामावृत्त्या द्वितीयस्तृतीयश्चतुर्थः पञ्चमश्च मासः सम्पादनीयः । षष्ठे मासे प्रथमतस्त्रयोऽभिप्लवाः षडहाः, एकः पृष्ठ्यः षडहः । मिलित्वा चतुर्विंशतिरहानि । ततोऽभिजित्संज्ञकोऽग्निष्टोमसंस्थः । ततस्त्रयः स्वरसामसंज्ञकानि त्रीण्यहानि । तानि अग्निष्टोमसंस्थान्युक्थ्यसंस्थानि वा । इत्यष्टाविंशतिरहानि । आद्याभ्यामहोभ्यां सह त्रिंशद्दिनात्मक एको मासः । एते षण्मासाः पूर्वं पक्षः । ततो विषुवान् नाम अग्निष्टोमसंस्थाकमहः । इदं च गवामयनमध्यम् । अस्य चाह्नो न मासमध्ये संवत्सरमध्ये वा गणना । तदनन्तरमुत्तरस्य पक्षस आरम्भः । तत्र येन क्रमेण पूर्वस्मिन्पक्षसि अह्नां क्लृप्तिरासीत् तद्वैपरीत्येन उत्तरस्मिन् पक्षसि अहःक्लृप्तिः । तद्यथा—प्रथमं तावत् प्रतिलोमा-

त्रयः स्वरसामानः। ततो विश्वजिन्नामकोऽग्निष्टोमः। ततः प्रतिलोमतस्त्रयस्त्रिंशदारम्भणः पृष्ठ्यः षडहः (१ । ततस्त्रयोऽभिप्लवाः षडहाः। मिलित्वा अष्टाविंशतिरहानि । सत्रस्यान्तिमयोर्द्वयोर्दिनयोरनुष्ठेयौ महाव्रतोदयनीयौ अस्मिन् मासे परिगण्येते। सर्वं मिलित्वा एको मासः संवृत्तः। द्वितीये मासे प्रतिलोमतः प्रथमं त्रयस्त्रिंशदारम्भण एकः पृष्ठ्यः षडहः। ततश्चत्वारोऽभिप्लवाः षडहाः। मिलित्वा एको द्वितीयो मासः। एवमेव तृतीयश्चतुर्थः पञ्चमश्च मासो भवति। षष्ठे मासि प्रथमतस्त्रयोऽभिप्लवाः षडहाः। ततो गोष्टोम संज्ञकमुक्थ्यसंस्थाकमहः। तत आयुष्टोमसंज्ञकमुक्थ्यसंस्थाकमहः। ततो द्वादशाहिकः (१२।३।१,२१-२२) प्रथमोत्तमदिनवर्जितो दशरात्र इति मिलित्वा षष्ठो मासः। एतदनन्तरं महाव्रतमहः उदयनीयसंज्ञकं सत्रस्यान्तिमाहश्च भवतः (ऐ० ब्रा० ४।२।८, आप० श्रौ० २१।१५ कं० १-२, तां० ब्रा० ४।१।१ भाष्ये) अनयोरह्नोः प्रथमे मासि न गणना कृतेति ॥ १ ॥

फाल्गुनीपौर्णमासे ॥ ३ ॥

गवामयनदीक्षा (तां० ५।९।७, तै० सं० ७।४।८ ) ॥ ३ ॥

चैत्र्याम् ॥ ४ ॥

पौर्णमास्यां वा ॥ ४ ॥

चतुरहे वा पुरस्तात्पौर्णमास्याः ॥ ५ ॥

फाल्गुनीपौर्णमास्याः प्राक् चतुरहे वा दीक्षा गवामयनस्य ॥ ५ ॥

चैत्र्यानन्तर्यात् ॥ ६ ॥

"चित्रापूर्णमासे दीक्षेरन्" इत्युक्त्वाऽनन्तरमेव "प्राक्पौर्णमास्याश्चतुरहे" ( तै० सं० ७।४, तां० ब्रा० ५।९।१४ ) इत्युक्तत्वात्। अतश्चैत्र्या एव पुरस्ताच्चतुरहे दीक्षा ॥ ६ ॥

सर्वा वा अविशेषात् ॥ ७ ॥

अथवा सर्वा पौर्णमासी चतुरहस्यावधित्वेन ग्राह्या ॥७॥

माघी वा क्रयश्रुतेः ॥ ८ ॥

वाशब्दोऽवधारणे। माघ्येव चतुरहस्यावधित्वेन ग्राह्या, नान्या। "तेषामेकाष्टकायां क्रयः सम्पद्यते" इति क्रयश्रुतेः (तां० ५।९।१३)। यदि माघ्या एव पुरस्ताच्चतुरहे एकादश्यां दीक्षा भवति तदैवैकाष्टकायां (माघकृष्णाष्टम्यां) क्रयो भवति नान्यथा ॥ ८ ॥

माघकृष्णाष्टम्या एव एकाष्टकात्वमित्याह—

लोकप्रत्ययात् ॥ ९ ॥

लोकाच्च सैव प्रतीयते एकाष्टकात्वेन ॥ ९ ॥

अर्थवादाच्च ॥१०॥

"तानुत्तिष्ठतः पशवः ओषधयोऽनूत्तिष्ठन्ति" ( तां० ५।९।१४ ) इति, "यदपोऽभिनन्दन्तोऽभ्यवयन्ति" ( ५।९।३ ) इति च। वनस्पतीनां प्ररोहोऽपां शंसनं

(१) पूर्वस्मिन् पञ्चसि पृष्ठ्यषडहेषु सर्वेष्वपि त्रिवृत् ( ऐ० ब्रा० २।१।१ ) पञ्चदश ( ऐ० ब्रा० २।४।१ ) सप्तदशौ ( ऐ० ब्रा० २।७।१ ) कविंशत्रिणव त्रयस्त्रिंशाः प्रथमदिवसप्रभृति षट्सु दिनेषु क्रमेण विहिताः। अर्थात् षडहस्य प्रथमदिवसे स्तोत्राणां त्रिवृत्स्तोमकत्वम्। द्वितीयदिने स्तोत्राणां पञ्चदशस्तोमकत्वमित्यादि। अत्र तु षडहस्य प्रथमेऽह्नि त्रयस्त्रिंशस्तोमकत्वम्। द्वितीयेऽह्नि त्रिणवस्तोमकता इति प्रातिलोम्येन स्तोमसम्पादनमिति।

चावभृथकाले चैत्रसमये संभवति । तस्मान्माघी चतुरहविशेषणम् ॥१०॥

[ गवामयने पवमानत्रये सर्वेषां दीक्षितानामुद्गातुरन्वारम्भो जपश्च ]

**पवमानेषूद्गातारमन्वारभेरन् "श्येनोऽसि गायत्रच्छन्दा अनु त्वा रभे स्वस्ति मा सम्पारय, सुपर्णोऽसि त्रिष्टुप्छन्दा, अभुरसि जगच्छन्दा" इतीतरयोः सवनयोः ( श० १२।३।४।३—४ ) ॥११॥**

त्रिष्वपि पवमानेषु सर्वे दीक्षिताः । सवनत्रये श्येनोऽसीति, सुपर्णोऽसीति, अभुरसीति क्रमेण मन्त्राः । अनुत्वेति मन्त्रशेषो द्वयोरपि मन्त्रयोरनुषञ्जनीयः ॥११॥

**सवनान्तेषु जपन्ति "मयि वर्गो मयि महो मयि यशो मयि सर्व" मिति ( श० १२।३।४।६ ) ॥१२॥**

सर्वेषां सवनानामन्तेषु 'प्रशास्तः प्रस्तुहि' इत्येतस्मात् प्राक् सर्वे जपन्ति ॥१२॥

**सर्वत्रैके यजतिशब्दात् ॥१३॥**

एतौ उद्गात्रालम्भ सवनान्तजपौ सर्वयज्ञेषु भवत इत्येके । कुतः ? यजतिशब्दात् । यतः "पुरुषं ह नारायणं प्रजापतिरुवाच यजस्व यजस्व" (१२।३।४।१) इत्यादिना यागमात्रे विधानादित्यर्थः ॥१३॥

एवं प्राप्ते सिद्धान्तयति—

**न प्रकरणात् ॥१४॥**

न यागमात्रे एतद्द्वयं भवति । किन्तु गवामयन एव । कुतः ? प्रकरणात् । गवामयन प्रकरणे पाठादित्यर्थः । अतः प्रकरणबाधभयाद्गवामयन एव ॥१४॥

इति प्रथमा कण्डिका ॥१॥

[ अभिप्लवस्वरूपम् ]

**अभिप्लवः षडहो,ऽग्निष्टोमौ प्रथमान्त्या,ऽउक्थ्या इतरे ॥१॥**

अभिप्लवे षडहे प्रथमषष्ठाषण्णामह्नां समाहारः षडहः(१) । सोऽभिप्लवसंज्ञः स्यात् । तत्राभिप्लवे षडहे प्रथमषष्ठावग्निष्टोमसंस्थौ । इतरे मध्यवर्तिनश्चत्वार उक्थ्यसंस्थाः कार्याः । अभिप्लवन्ते गच्छन्ति स्वर्गमनेनेत्यभिप्लवः । "स्वर्गं लोकमभ्यप्लवन्त तस्मादभिप्लवाः" (श० ब्रा० १२।२।२।१०) । 'उत्थाप्यते सोमोऽनेनेत्युक्थ्यः' ( तै० ब्रा० साय० ७।२।८ ) ॥१॥

---

(१) प्रथमोऽग्निष्टोमः । ततश्चत्वार उक्थ्याः । पुनः षष्ठोऽग्निष्टोमः । एवंविधस्याह्नां षट्कस्याभिप्लव इति संज्ञा । यत्राभिप्लव इत्युच्यते तत्रैवंविधान्येवाहानि ज्ञेयानि । अत्र षण्णां दिनानां मध्ये प्रथमदिनेऽग्निष्टोमसंस्थो ज्योतिष्टोमः, द्वितीयदिने उक्थ्यसंस्थो गोष्टोमः, तृतीयदिने उक्थ्यसंस्थ आयुष्टोमः, चतुर्थदिने उक्थ्यसंस्थो गोष्टोमः, पञ्चमदिने उक्थ्यसंस्थ आयुष्टोमः । षष्ठदिने अग्निष्टोमसंस्थो ज्योतिष्टोम इति (तै० सं० ७।४।११।१ ) उक्तम्; ऐ० ब्रा० च ( ४।१।१ ) । एवं सर्वत्राभिप्लवे एते ऐकाहिका यागा बोध्याः । अत्र सर्वेष्वहःसु द्वादशाहवत् सवनीयपशवो वैकल्पिकाः । तत्र प्रत्यहमैन्द्राग्नो वा, ऐकादशिनानां मध्ये पुनः पुनरावृत्त्या प्रत्यहमेकैको वा, यथास्वं स्तोमायनं वा, समस्ता एकादशिनी वेति । विभक्तैकादशिनीपक्षे उक्थ्यमीष्वातिरात्रे ऐन्द्राग्नाद्यवशिष्टाः पशवः परिशिष्टा भवन्तीति ।

**अतिरात्राच्चतुर्विंꣳशमहरग्निष्टोम उक्थ्यो वा २॥**

(१) प्रायणीयातिरात्रा (तां० ४।२।११,१३) त्परतश्चतुर्विंशमहरग्निष्टोमसंस्थम्, उक्थ्यसंस्थं वा भवति ॥२॥

[ गवामयने प्रथममासक्लृप्तिः ]

**चत्वारोऽभिप्लवाः पृष्ठ्यश्च मासः ॥३॥**

अभिप्लवः षडह इत्युक्तम्। तादृशाश्चत्वारोऽभिप्लवाश्चतुर्विंशैरहोभिर्भवन्ति। ततः षडहः पृष्ठ्यः (२)। एवं त्रिंशद्भिरहोभिरेको मासः ( तां० ब्रा० ४।१।१४,१६ ) ॥३॥

[ द्वितीयतृतीयचतुर्थमासक्लृप्तिः ]

**एवं चत्वार उत्तरे ॥४॥**

यादृशः प्रथमो मासो विहितः, एवमेवोत्तरे द्वितीयतृतीयचतुर्थपञ्चमाश्चत्वारो मासा भवन्ति (तां० ब्रा० ४।१।१४) ॥ ४ ॥

[ षष्ठमासक्लृप्तिः ]

**षष्ठे त्रयोऽभिप्लवाः ॥५॥**

षष्ठे मासे प्रथमं त्रयोऽभिप्लवाः षडहा भवन्ति। तेनाष्टादश दिनानि सञ्जातानि ॥५॥

**पृष्ठ्यः ॥६॥**

त्रिभ्योऽभिप्लवेभ्यः परः पृष्ठ्यः षडहो भवति षष्ठे मास्येव। तेन चतुर्विंशतिरहानि ॥६॥

**अभिजिदग्निष्टोमः ॥७॥**

पृष्ठ्यात्परोऽभिजिदग्निष्टोमसंस्थो भवति षष्ठे मास्येव ॥ ७ ॥

**त्रयः स्वरसामानोऽग्निष्टोमा उक्थ्या वा**
**( तां० ब्रा०४।५।१६-२० ) ॥८॥**

अभिजितः परे त्रयः स्वरसामान इत्येवंसंज्ञा (३) अग्निष्टोमसंस्थाः क्रतवो भवन्ति ( श० ब्रा० ० १२ कां ) षष्ठे मास्येव ॥८॥

[ गवामयने संवत्सरसाध्ये मासषट्कद्वयस्य मध्ये विषुवतोऽनुष्ठानम् ]

**अग्निष्टोमो विषुवान् ॥९॥**

स्वरसामभ्यः परोऽग्निष्टोमसंस्थो विषुवत्संज्ञकः क्रतुः सत्रस्य मध्ये भवति ( तां० ४।८।१ ) ॥ ९ ॥

---

(१) प्रकर्षेण यान्ति गच्छन्ति स्वर्गमनेनेति प्रायणीयम् ( तां० ब्रा० ४।२।२ ) गवामयनस्य द्वितीयमहः ( तां० ४।२।१ )। चतुर्विंशशब्दार्थः प्रागुक्तो द्रष्टव्यः।

(२) षट्स्वपि दिनेषु क्रमेण रथन्तरम्, बृहत्, वैरूपम्, वैराजम्, शाक्वरम्, रैवतम्, इति पृष्ठस्तोत्र निष्पादकानि षट् सामानि। पृष्ठानां समूहः पृष्ठ्यः (पा० वा० ४।२।४२) "अभित्वा शूर" (ऋ० ५।३।२१) इत्यस्यामृचि उत्पन्नं साम रथन्तरम्। "यद् द्याव इन्द्र ते" ( ६।५।८ ) इति वैरूपस्य योनिः। "पिबा सोममिन्द्र" इति वैराजस्य ( २।१।१८ ) योनिः। "प्रोष्वस्मै" ( ८।७।२१ ) इति शाक्वरस्य योनिः। "रेवतीर्नः सधमादे" ( १।२।३० ) इति रैवतस्य साम्नो योनिः। "स्वर्गं लोकमस्पृशंस्तस्मात्पृष्ठ्यः" ( श० ब्रा० १२।२।२।११ )

(३) "यज्ञा यज्ञा" ( ४।८।१ ) इत्यस्यां योनावुत्पन्नानि चत्वारि स्वरसंज्ञकानि सामानि येषु भवन्ति ते स्वरसामानः।

[ प्रातरनुवाकस्य सूर्योदयानन्तरं, प्राकृते काले वाऽनुष्ठानम् ]

**प्रातरनुवाकः सन्धिवेलायाम् ॥ १० ॥**

तस्मिन्विषुवति सन्धिवेलायां पर्युदयं प्रातरनुवाको भवति (१), न प्राग्वाचं प्रवदितोः । ( का० श्रौ० ६।१।१० ) ॥ १० ॥

**उदिते ॥ ११ ॥**

उदिते सूर्ये वा विषुवति प्रातरनुवाको भवति ॥ ११ ॥

**यथोक्तं वा ॥ १२ ॥**

अथवा यथा प्रकृतावुक्तं प्राग्वाचं प्रवदितोः प्रातरनुवाकोपाकरणमिति, तस्मिन्नेव काले कार्यमित्यर्थः ॥ १२ ॥

[ विषुवते मध्यमेऽहनि सौर्यपशोः सवनीयपशोश्च प्रचरणम् ]

**सौर्य उपालम्भ्यः ॥ १३ ॥**

सौर्यं द्वितीयं पशुमालभेत विषुवतेऽहनि । प्रथमः सवनीयस्तु ऐन्द्राग्नो वा, स्तोमायनं वा, ऐकादशिना वेत्यादिः प्राप्त एव । द्वितीयोऽयं सौर्यः पशुरित्यर्थः ।(४।६।३।३) ॥१३॥

**"उदुत्य"मिति ( ८।४१ ) ग्रहग्रहणमतिग्राह्यवद्भक्षवर्जम् ॥१४॥**

अतिग्राह्यग्रहवत् (कात्या० श्रौ० १२।३।२-५) सर्वो विधिरस्य भक्षं वर्जयित्वा कार्यः॥१४॥

[ विषुवतः परमनुष्ठितानामह्नां प्रतिलोममनुष्ठानम् ]

**पूर्वपक्षं प्रतिलोमम् ॥ १५ ॥**

मध्यस्थितमात्मस्थानीयं विषुवन्तमुभयतोऽवस्थानात्पूर्वापरमासषट्कयोर्गुणवृत्या पक्षत्वम् । पक्षाविव पक्षौ । तयोर्यः पूर्वपक्षः स्वरसामान्त उक्तः,तं प्रतिलोममुपेयुः ॥ १५ ॥

**अभिजित्स्थाने विश्वजिदग्निष्टोमः ॥ १६ ॥**

अग्निष्टोमसंस्थः ॥ १६ ॥

**सर्वपृष्ठश्चेत्सर्वेऽतिग्राह्याः ॥ १७ ॥**

अग्निष्टोमसंस्थो विश्वजित्सर्वपृष्ठश्चेत्तदा त्रयोऽप्यतिग्राह्या अस्मिन् सत्रे भवन्ति ।(१) इतरान् ग्रहानतिक्रम्य गृह्यते प्राप्यते दुष्प्रापं फलं यैस्तेऽतिग्राह्याः ॥१७॥

---

(१) वयसां शब्दकरणात्प्राक् प्रातर्य ऋक्समुदायो देवार्थमनुक्रमेणोच्यते स प्रातरनुवाकः (ऐ० ब्रा० २।२।५) । स च ऋक्समूहः (आश्व० श्रौ० ४।१३।७) उदाहृतः । प्रातरनुवाके एते मन्त्राः । यथा-ॐ आपो रेवतीः, (७।७।२६), उपप्रयन्तो०-९, ( १।५।२१ ) जुषस्व प्रथ०-६, (१।५।२३) अवानो अग्न०-९, (१।५।२८) अग्निमीडे०-१२, (१।१।१) अग्निं दूतं वृ०-१० (१।१।२२) वसिष्वाहि०-१२, (१।२।२०) त्वमग्ने वसू०-१२, (३।८।१८) अश्वं न त्वा वार०-९, (१।२।२२) अबोध्यग्निः स० ३, (३।८।१२) अगन्म महानसा०-१२, (५।२।१७) एवा नो अग्नि०-३, अग्ने वाजस्य०, (१।५।२७) जनस्य गोपा०-१०, (४।१।३) अग्निं तं मन्ये०-७, ( ३।८।२२ ) प्रतिष्या सूनरी०-४, ( ३।८।३ ) उषो भद्रेभि०-२, (१।४।६) इदं श्रेष्ठं ज्योतिषां०-६, (८।९।२९) उषस्तच्चित्र०-४, (१।३।२६) एता उ त्या-१०, (१।६।२४) महे नो अद्य-१५, (५।५।२२) एषो उषा अपूर्व्या०-१०, (१।३।३३) यदद्य स्थः परा०-५, (४।४।११) आभात्यग्नि० ५, (४।४।१७) अतारिष्म तमसस्पा०-६, (१।६।२५) इमा उ वां दिवि-३, (५।५।२१) अश्विना वर्ति०-६, (१।६।२७) अबोध्यग्निर्ज्म०-२५, (२।२।२७) ईडे द्यावापृथिवी०-११, (१।७।३३) प्रति प्रियतमं रथं० (४।४।१५) इति । अत्राद्योत्तमे त्रिर्ब्रूयादिति । यदा महत्यां रात्र्यां प्रातरनुवाकः प्रारभ्यते तदा 'ईडे द्यावापृथिवी' इति आवर्तयेदातमस उपघातादिति । अन्योऽपि प्रातरनुवाकस्य वैकल्पिकः प्रकारःसूत्रादौ ज्ञेयः ।

[ उत्तरपक्षसः षष्ठमासस्य कृप्तिः ]

**षष्ठे मासे त्रयोऽभिप्लवाः ॥ १८ ॥**

उत्तरपक्षसः षष्ठे मासे अर्थाद् द्वादशे मासे त्रयोऽभिप्लवाः षडहा भवन्ति ॥ १८ ॥

**गो आयुषी ॥ १९ ॥**

अभिप्लवेभ्य ऊर्ध्वं गोष्टोम आयुष्टोम इति नामानौ द्वौ क्रतू उक्थ्यसंस्थौ भवतः। पूर्वमायुस्ततो गौः ( तां० ४।८।१ )। पूर्वनिपातोऽल्पाच्तरत्वात् ॥१९॥

**दशरात्रः ॥२०॥**

गोष्टोमायुष्टोमाभ्यां परो द्वादशाहिको दशरात्रः कार्यः ( तां ४।८।५) । "पृष्ठ्यः षडहस्त्रयश्छन्दोमा अविवाक्यं दशममहः" (का० श्रौ० १२।३।२—५) इत्युक्तम्। एवं द्वादशो मासः पूर्णो जातः ॥ २० ॥

**महाव्रतमग्निष्टोमः ॥ २१ ॥**

दशरात्रात्परं महाव्रतममग्निष्टोमसंस्थं पञ्चविंशस्तोमं ( आप० श्रौ० २१।९।१ )। भवति। महाव्रतं यज्ञस्यान्तिमाहः (२)। महानवर्तिष्ट अनेन कर्मणा इति महाव्रतम् ( तै० ब्रा० साय० १।२।६) ॥ २१ ॥

**प्राजापत्य उपालम्भ्यः ॥ २२ ॥**

महाव्रतसंज्ञकेऽहनि ( ४।१।३३ ) ॥२२॥

[ महाव्रतग्रहग्रहणं, तस्य भक्षणं च ]

**ग्रहं गृह्णाति "वि न इन्द्र, वाचस्पतिं, विश्वकर्मन्निति" वा ( ८।४४-४६) ऽतिग्राह्यवत् ॥ २३ ॥**

महाव्रतीयं ग्रहम्। वाशब्दः प्रत्येकं योज्यः । गृहीतस्य महाव्रतीयग्रहस्य पूर्वोक्तातिग्राह्यवद्विधिर्भवति ( १२ ।३।२—५ ) अस्य ग्रहस्य माहेन्द्रमनु होमो भवति ॥२३॥

**"उप मा यन्तु मज्जयस्सनीडा उप मा जक्षुरुप मा मनीषा प्रियामहं तन्वं पश्यमानो मयि रसो देवानां तेजसे ब्रह्मवर्चसाये"ति भक्षणं यजमानैः ॥ २४**

महाव्रतीयग्रहस्य भक्षणं कार्यम् ॥ २४ ॥

---

(१) यत्र रथन्तरम्, बृहत्, वैरूपम्, वैराजम्, शाक्वरम्, रैवतम्, इति षडपि पृष्ठस्तोत्रनिष्पादकानि सामानि प्रयुज्यन्ते स यागः सर्वपृष्ठ इत्युच्यते।

गवामयनहौत्रमाश्वलायनश्रौतसूत्रे चतुर्थपञ्चिकायां सप्तमाष्टमाध्याययोर्द्रष्टव्यम्। षष्ठपञ्चिकायां च। तद्वतोऽन्य ऐतरेयब्राह्मणे तृतीयाध्याये। गवामयनस्यौद्गात्रं तु ताण्ड्ये चतुर्थपञ्चमाध्याययोरस्ति।

(२) महाव्रतस्तोत्रं पञ्चविधम्। तस्य अध्वर्य्वादयः पञ्चोद्गातारः। एतत्सर्वं ताण्ड्ये पञ्चमाध्याये षष्ठखण्डे उक्तम्।

अत्र एकषष्ट्यधिकानि त्रीणि शतानि सौत्यान्यहानि ( श० ब्रा० १२।३।३।११ )। इष्टकापशुर्दीक्षादिने स्वकाले भवति। उखासंभरणमपि तद्वत्। माघकृष्णाष्टम्यां प्रारम्भे कृते फाल्गुनकृष्णद्वितीयायाम्, माघशुक्लैकादश्यां प्रारम्भे फाल्गुनशुक्लपञ्चम्यां प्रायणीयः। फाल्गुन्यां चेद्दीक्षा, तदा चैत्रशुक्लनवम्यां प्रायणीयः। चैत्र्यां चेत्प्रारम्भस्तदा वैशाखशुक्लनवम्यां प्रायणीयः।

[ पृष्ठ्यस्तोत्रोपाकरणं बाणेन प्राकृततृणादिना च ]

### पृष्ठ्योपाकरणं बाणेन शततन्तुना ॥ २५ ॥

शतं तन्तवो यस्य सः । तेन औदुम्बरेण ( आप० श्रौ० २१।१७।८ ) बाणेन महाव्रतस्य पृष्ठ्यस्योपाकरणम् । बाणो (६) महती वीणा (तां० ५।६।१३) ॥ २५ ॥

### मौञ्जास्तन्तवः ॥ २६ ॥

अस्मिन्बाणे मौञ्जास्तन्तवो भवन्ति ॥ २६ ॥

### वैतसं वादनम् ॥ २७ ॥

वीणावादनं यद्यपि हस्तेन प्रसिद्धं, तथापि वचनादत्र वीणावादनसाधनं काष्ठं वेतसवृक्षसंबन्धि भवति । अत्र प्राकृतमपि तृणाभ्यामुपाकरणं प्रवर्त्तत एव ॥२७॥

इति द्वितीया कण्डिका ॥२॥

---

[ महाव्रतस्तोत्रकाले ऋत्विजामुपवेशनविधानम् ]

### बृसीषूपविशन्ति ॥१॥

दर्भमयाः कूर्चा आसनविशेषाः प्रादेशोच्चा बृसीशब्देनोच्यन्ते । तत्र महाव्रते सर्वे ऋत्विज उपविशेयुः ( तां० ब्रा० ५।५।१३) ॥१॥

### प्रेङ्खे होता ॥२॥

प्रेङ्खो दोला । तत्र होतोपविशेत् ( तां ब्रा० ५।५।६ ) । अयमौदुम्बरोऽरत्निमात्रो (आप० २१।१७।१४) बाहुमात्रो वा ( शां० श्रौ० ) ॥२॥

### फलकेऽध्वर्युः प्रतिगृणाति ॥३॥

औदुम्बरे ( आप० २१।१७।१३ ) आसन्दीवत्पादयुके फलके उपविष्टोऽध्वर्युर्महदुक्थशंसनकाले प्रतिगृणाति (तां० ५।५।११) ॥३॥

### उद्गाताऽऽसन्द्यां प्रादेशपाद्यायाम् ॥४॥

प्रादेशमात्राः पादा यस्यास्तस्यामौदुम्बर्या ( आप० २१।१७।१२ ) मरत्निमात्राङ्ग्यां मुञ्जरज्ज्वा व्युतायामुद्गाता महाव्रतस्तोत्रस्तवनायोप विशेत् (ता० ५।५।१) ॥४॥

### सोमासन्दीवदन्यत् ॥५॥

अस्यामासन्द्यामन्यदीषोपलविवयनादि सोमासन्दी ( ७।६।२७ ) वत्कार्यम् । तेनारत्निमात्राणीषोपलानि । वयनं मुञ्जरज्ज्वा कार्यम् ॥५॥

[ दीक्षितानां स्तुतिर्निन्दा च ]

### अन्तर्वेद्यभिगरापगरौ ॥६॥

वेदिमध्ये भवतः ( ता० ५।५।१३ ) । अभिगृणाति = अभिष्टौतीत्यभिगरो ब्राह्मणः । अपगृणाति = विरुद्धमनिष्टं भाषत इत्यपगरो वृपलः। ब्राह्मणोऽभिगरः सदः पूर्वद्वारि प्रत्यङ्मुख उपविशेत् । शूद्रोऽपगरः सदोऽपरद्वारि प्राङ्मुखः ॥६॥

---

(६) अत्र बाणे उभयतो दश दश छिद्राणि भवन्ति । तत्रैकैकस्मिन् दश दश तन्तवः प्रतिमुच्यन्ते ( आप० श्रौ० २१।१७।८-९ ) ।

**आक्रोशत्येकः प्रशंसत्यपरः ॥७॥**

पूर्वसूत्रस्यैवायं प्रपञ्चः ॥७॥

[ वेश्याब्रह्मचारिणोः परस्परनिन्दनम् ]

**पूंश्चलूब्रह्मचारिणावन्योऽन्यमाक्रोशतः ॥८॥**

पुमांसं पुमांसं प्रति चलतीति पूंश्चलूर्वेश्या। बहिर्वेदि वेश्या दक्षिणामुखी तिष्ठती दुश्चारिन्, अवकीर्णिन् इति ब्रूयात्। पूर्वेणाग्नीध्रीयमन्तर्वेदि उदङ्मुखस्तिष्ठन्ब्रह्मचारी धिक् त्वा जाल्मि, पूंश्चलि, ग्रामस्य मार्जनि, पुरुषस्य पुरुषस्य शिश्नप्रणेजनीति ब्रूयात् ॥८॥

[ शूद्रत्रैवर्णिकयोर्वन्ध्याचर्मेण आकर्षणमहमहमिकया ]

**शूद्रार्यौ चर्मणि परिमण्डले व्यायच्छेते ॥९॥**

आर्यो वैश्यः। तदभावे त्रैवर्णिकः। वर्तुले वशाचर्मणि श्वेते (निमित्तभूते) मदीयमिदं मदीयमिदमिति स्पर्द्धया स्वाभिमुखं बलादाकर्षणं कुरुतः (तां० ५।१४।१७) ॥९॥

**जयत्यार्यः ॥१०॥**

यथाऽऽर्यो जयति तथा कर्तव्यम् ॥१०॥

[ बहिर्वेदि अनियतजातीययोः स्त्रीपुरुषयोः सुरतकरणम् ]

**मार्जालीयं दक्षिणेन परिवृते मिथुनꣳ संभवति ॥११॥**

बहिर्वेदि स्त्रीपुमांसौ सुरतसंभोगं कुरुतः। मिथुनौ वृषलाविति मानवे ॥११॥

[ क्षत्रियाणां चतुर्णां कवचपरिधानम् ]

**क्षत्रियꣳ सन्नाहयति दक्षिणां वेदिश्रोणिमपरेण ॥१२॥**

सन्नह्यस्व इति प्रैषेण क्षत्रियं सन्नाहयुक्तं कारयत्यध्वर्युः। सन्नाहः कवचम् (तां० ५।५।२१) ॥१२॥

**"मर्माणि त" इति (१७।४९) कवचं प्रयच्छति॥१३॥**

क्षत्रियायाध्वर्युः परिधानाय ॥१३॥

**तूष्णीमन्येभ्यः ॥१४॥**

अन्येभ्यस्त्रिभ्यः क्षत्रियेभ्यस्तूष्णीमेकैकं कवचं प्रयच्छेत्। एवं चत्वारः क्षत्रियाः कवचिनो भवन्ति ॥१४॥

[ क्षत्रियाणां राजपुत्राणां (आप० श्रौ० २१।१।२६) रथारोहणं वन्ध्याचर्मवेधनं च ]

**त्रिः समन्तं परियन्ति शालामपरेण ॥१५॥**

चत्वारः क्षत्रियाः त्रिभिरश्वैर्युक्तं रथमारुह्य (आप० २१।१८।६) शालामपरेणागत्य देवयजनं सर्वतस्त्रिस्त्रिः प्रदक्षिणं कुर्वन्ति। शाखान्तराद्रथोपविष्टा इति याज्ञिकाः ॥१५॥

**उत्तरेण चात्वालं वशाचर्म, कटे विशाख्यां वाऽऽस्तीर्णमुच्छ्रितं वा विध्यन्त्यनिः पत्त्रम् ॥१६॥**

चात्वालादुत्तरतो वन्ध्याचर्म कटे आस्तीर्णं भवति। अथवा विशाख्यां = निखातायां स्थूणायामूर्ध्वाग्रमुच्छ्रितं भवति। ततो रथमारूढास्ते क्षत्रियाश्च परिगमनं कुर्वन्तस्तच्चर्म एकैकेन शरेण अनिष्पत्त्रं यथा तथा विध्यन्ति। यथा शरपत्राणि पिच्छानि चर्मणो निःसृत्य न यान्ति तथा विध्यन्ति। यथा शराश्चर्मणि प्रोता एव तिष्ठन्तीत्यर्थः ॥१६॥

दक्षिणेन चर्म यन्ति ॥१७॥

शरैश्चर्म विध्वा चर्मणो दक्षिणेन गच्छन्ति ॥१७॥

त्रिर्विध्वा पुरस्ताद्विमोचनम् ॥१८॥

एवं प्रतिपरिगमनमेकैकेन शरेण चर्म त्रिर्विध्वा देवयजनस्य पूर्वदेशे सन्नाहविमोचनं = रथविमोचनं कुर्युः ॥१८॥

[ दुन्दुभिवादनम्, दुन्दुभिनिष्पादनं च ]

सदःस्रक्तिषु दुन्दुभीन्वादयन्ति ॥१९॥

सर्वेषु सदःकोणेषु ये के चन पुरुषाः (तां ५।५।१८) ॥१९॥

[ भूमिदुन्दुभेः पुच्छेन वादनम् ]

आग्नीध्रमपरेण श्वभ्रं० सवालधानेन चर्मणाऽवनह्य वालधानेनाहरन्ति ॥२०॥

आग्नीध्रमपरेण उत्तमन्तर्वेद्यर्द्धं वहिर्वेदि (आ० श्रौ० २१।१८।२) चार्द्धं गर्त्तं खात्वा तन्मध्ये शङ्कून्निखाय तेषु शङ्कुषु सपुच्छं वृषस्य आर्द्रं (आप० २१।१८।३) चर्म प्राग्ग्रीवमुत्तरलोम-प्रोतयित्वा श्वभ्रस्य मुखं चर्मणा बध्वा सर्वतः पांसुभिः पूरणीयम् । एवमुपायेन भूमिदुन्दुभिः कार्यः । श्वभ्रं सपुच्छेन चर्मणाऽवनह्य तेनैव पुच्छेन वादयन्ति कुट्टनेन । वालधानं पुच्छ-मुच्यते (तां० ५।५।१९) ॥२०॥

[ पत्नीकर्तृकं वीणावादनं गानं च ]

गोधावीणाकाः काण्डवीणाश्च पत्न्यो वादयन्ति ॥२१॥

गोधाचर्मणा नद्धा वीणा गोधावीणाः । ह्रस्वा गोधावीणा गोधावीणाकाः । काण्डं-शरः । तन्मय्यो वीणाः काण्डवीणाः (तां० ५।६।१२) ॥२१॥

उप गायन्ति ॥२२॥

पत्न्य एव सत्रिण उपगायन्ति सत्रिणः स्तुवन्तीत्यर्थः (तां० ५।६।९) ॥२२॥

अन्यांश्च शब्दान् कुर्वन्ति ॥२३॥

भेरीमृदङ्गपटहादिजन्यान् कुर्वन्ति लोकाः (तां० ५।५।२०) ॥२३॥

[ दासीनां शिरोनिहितकुम्भानां मार्जालीयं परिगमनम् ]

उदकुम्भाञ्छिरःसु कृत्वा मार्जालीयं दास्यः परियन्ति ॥२४॥

अष्टौ ( आप० २१।१८।७ ) तदधिका वा दास्यः । परिगमनानि चाष्टौ कार्याणि (तां० ५।६।१५) ॥२४॥

[ दासीनां प्रतिपरिगमनमादौ वाचनं, परिगमनमन्त्राश्च ]

वाचयत्येनाः पर्यायादिषु हैमहा ३ हैमहा ३ इति ॥२५॥

अष्टानामपि परिगमनमन्त्राणादिषु हैमहा हैमहा इति ब्रूत इति दासीर्वाचयेत् । तेन अष्टौ वाचनानि । पर्यायः परिगमनम् । वाचनानन्तरं परिगमनम् ॥२५॥

परिगमनमन्त्रानाह—

गावो हारे सुरभय इदं मधु, गावो गुल्गुलुगन्धय इदं मधु, गावो घृतस्य मातर इदं मधु, ता इह सन्तु भूयसीरिदं मधु, तका वयं प्लवामहऽ इदं मधु, शम्याः प्रतरतामिवेदं मधु, न वै गावो मन्दीरस्य गङ्गाया उदकं

पयुः पयुः सरस्वतीं नदीं ताः प्राच्य उज्जिगान्तीर इदं मधु, निगीर्य सर्वा आधीरिदं मधु, मध्वित्याकर्षैः कुशैर्यथेदं मध्विति ॥२६॥

एतेऽष्टौ परिगमनमन्त्राः। मन्त्रभेदाच्चाष्टौ परिगमनानि। "मध्वित्याकर्षैः कुशैर्यथेदं मधु" इत्ययमवयव इतिकरणेन पृथक् कृतः अष्टानामपि मन्त्राणामन्तेऽनुषज्यते। देवयाज्ञिकास्तु हैमहा ३ हैमहा ३ इति चावयव इतिकरणेन पृथक्कृतः अष्टसु मन्त्रेष्वादावनुषञ्जनीयः। तेनैतेऽष्टौ दासीवाचनमन्त्रा एव, न परिगमनमन्त्रा इत्याहुः ॥२६॥

परिगमनप्रकारमाह—

[ परिगमनं प्रदक्षिणमप्रदक्षिणं च ]

अपसव्यं प्रदक्षिणं चास्तोत्रान्तात् ॥२७

पूर्वमष्टौ परिगमनान्यप्रदक्षिणानि, ततोऽष्टौ प्रदक्षिणानि, पुनरष्टौ प्रदक्षिणानि, पुनरष्टौ प्रदक्षिणानि। एवं महाव्रतस्तोत्रसमाप्तिं यावत् ॥२७॥

[ परिगमनं स्तोत्रान्तं, त्रिर्वा ]

त्रिस्त्रिर्वा ॥२८॥

त्रिस्त्रिर्वाऽप्रदक्षिणं प्रदक्षिणं च परिगमनं, न स्तोत्रान्तं यावत्। अस्मिन्पक्षे प्रथममष्टकृत्वो वाचनं, तत एकवारमप्रदक्षिणं परिगमनम्। एवं वाचनपूर्वं द्वितीयं तृतीयं च परिगमनमिति। तेनाष्टावृत्तमेकमप्रदक्षिणं परिगमनम्। अष्टावृत्तमेव प्रदक्षिणम्। तथाविधा त्रिस्त्रिरावृत्तिरिति चतुर्विंशतिकृत्वोऽप्रदक्षिणं, तावदेव प्रदक्षिणमिति अष्टाचत्वारिंशत्कृत्वः परिगमनम् ॥२८॥

इति तृतीया कण्डिका ॥ ३ ॥

---

[ कलशानां स्थापनम् ]

निषिच्य मार्जालीये पूर्णान् निदधाति ॥ १ ॥

दास्य उदकपूर्णकुम्भान् कुत्रापि देशे निषिच्य पुनः पूर्णान् कृत्वा मार्जालीये निदध्युः ॥ १ ॥

अभिगरादि स्तूयमाने सर्वं क्रियते ॥ २ ॥

"अभिगरापगरौ" (१३।३।६) इत्यादि सर्वं स्तूयमाने महाव्रतस्तोत्रे क्रियते। महाव्रतशब्दः एकः क्रत्वर्थप्रतिपादकः। अपरः स्तोत्रपर्यायः ॥ २ ॥

[ महाव्रतादुत्तरेऽहन्यतिरात्रानुष्ठानम् ]

अतिरात्रः श्वः ॥ ३ ॥

महाव्रतीयादह्नो द्वितीयेऽहन्युदयनीयातिरात्रो भवति। अत्र प्रायणीयातिरात्रमारभ्योदयनीयान्तेषु सर्वेष्वहःसु प्रत्यहमदाभ्यौ ग्रहौ कार्यौ ॥ ३ ॥

[ असारस्वतेषु संवत्सराधिककालिकेषु सहस्राधिकदक्षिणेषु च यज्ञेषु तिसृणामनूबन्ध्यानामनुष्ठानम् ]

तिस्रोऽनूबन्ध्या मैत्रावरुणी वैश्वदेवी बार्हस्पत्या संवत्सरावरेषु सत्रेष्वसारस्वतेषु सहस्रदक्षिणावरेषु च ॥ ४ ॥

संवत्सरमवरो निकृष्टः कालो येषां तानि संवत्सरावराणि । तेषु सत्रेषु गवामयन प्रभृतिषु सहस्रसंवत्सरान्तेषु, न तु संवत्सरन्यूनेषु । तेष्वपि च सारस्वतवर्जितेषु । सहस्रं दक्षिणा अवरा निकृष्टा येषु ते, तेषु सहस्रादारभ्याधिकदक्षिणेषु यज्ञेषु । एतेषु तिस्रो ऽनूबन्ध्या भवन्ति मित्रावरुणविश्वदेवबृहस्पतिदेवताः ( श० ५।१।११।१२ ) ॥ ४ ॥

[ सत्रेषु यजमानानां पत्नीनां च वपनम् ]

**अनूबन्ध्यावपाहोमान्ते दक्षिणस्यां वेदिश्रोणौ सर्वकेशश्मश्रुलोमवपनम् ॥ ५ ॥**

गवामयने सर्वेषां यजमानानां वपनम् । सर्वग्रहणं कक्षोपस्थजादीनां लोम्नामपि वपनप्राप्त्यर्थम् । यजमानानां तु सर्वेषां यजमानत्वादेव प्राप्तेः ॥ ५ ॥

**पत्न्यश्च ॥ ६ ॥**

पत्न्योऽपि सर्वकेशश्मश्रुलोमवपनं कारयन्ति, वचनात् ॥ ६ ॥

[ अनूबन्ध्यात्रित्वे त्रैधातव्युदयनीयायाः करणम् ]

**त्रैधातव्युदवसानीया सर्वत्र ॥ ७ ॥**

यत्र तिस्रोऽनूबन्ध्यास्तत्र सर्वत्र त्रैधातव्युदवसानीया भवति (श० ५।१।११।१२) ॥७॥

[ सत्रसमाप्तौ ज्योतिष्टोमानुष्ठानम् ]

**अवभृथादुदेत्य ज्योतिष्टोमोऽग्निष्टोमः पृष्ठशमनीयः सहस्रदक्षिणो वा ॥८॥**

सत्रं समाप्य ज्योतिष्टोमोऽग्निष्टोमसंस्थः पृष्ठशमनीयसंज्ञकः(१) क्रतुर्भवति । स च सहस्रदक्षिणः प्राकृतदक्षिणो वा । सहस्रदक्षिणापक्षे अश्वदाभ्यौ तिस्रोऽनूबन्ध्यास्त्रैधातवी चेति ॥ ८ ॥

**एकाहमेके ॥ ९ ॥**

एके आचार्या भूरादिनामकानामह्नां मध्ये यं कंचिदेकाहं पृष्ठशमनीयं कुर्वन्ति ॥ ९ ॥

[ पृष्ठशमनीयस्य सत्राङ्गता कर्कमते ]

**सत्राङ्गं प्रकरणात् ॥ १० ॥**

अयं पृष्ठशमनीयः सत्राङ्गम् । सत्रं प्रकृत्य विहितत्वात् ॥ १० ॥

**फलाश्रुतेश्च ॥ ११ ॥**

पृष्ठशमनीयस्य पृथक् फलं न श्रूयते । अतोऽपि सत्राङ्गम् ॥ ११ ॥

**न फलं न्यायात् ॥ १२ ॥**

यदुक्तं फलाश्रवणात्सत्राङ्गमिति, तन्न । कुतः ? न्यायात् । "वाच्यफलेषु स्वर्गः सामर्थ्यात्" ( १।१०।१० ) इति न्यायादपि फलस्य कल्पयितुं शक्यत्वात् ॥ १२ ॥

**कालप्राधान्याच्च ॥ १३ ॥**

"सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्" इति वचनं कालप्रधानं नाङ्गाङ्गिभावं बोधयति । उदवसानं विरामः । तेन सत्रानन्तरं पृष्ठशमनीयो, न ततः प्राक् । कर्काचार्यास्तु

---

(१) रथन्तरम्, बृहत्, वैरूपम्, वैराजम्, शाक्करम्, इति षट् पृष्ठानि । तेषां सत्रनियुक्तानामुपजातश्रमाणां शमनं करोतीति पृष्ठशमनीयः ।

अङ्गत्वमेव सिद्धान्तितवन्तः। सत्राङ्गम्। येन प्रकरणात् फलवत्सन्निधौ तदङ्गतैव न्याय्या। एवं च फलं न कल्पयितव्यं भवति। पृष्ठशमनीय इति चानुगतार्था संज्ञा। पृष्ठानां सत्रनियुक्तानामुपजातश्रमाणां शमनं करोतीति। सारस्वतेषु च प्रतिषेधात् "अपृष्ठशमनीयानि सारस्वतानि" (२४।६।१४) इति ॥१३॥

( इति गवामयनम् )

[ गर्गत्रिरात्रादौ सहस्रदक्षिणे वक्ष्यमाणे यज्ञे दक्षिणाविभागः ]

**सहस्रदक्षिणे त्रिरात्रे प्रतिविभज्य नयन् रोहिणीमुपध्वस्तामप्रवीतामतिरेचयति त्रिरूपां वा ॥ १४ ॥**

सहस्रदक्षिणे गर्ग-वैदादौ त्रिरात्रे वक्ष्यमाणे प्रतिविभज्य सहस्रं गा दक्षिणादानार्थं नयन् सन् एकां गामतिरेचयेत्। सहस्रस्य त्रिधा विभागे क्रियमाणे त्रीणि त्रीणि शतानि त्रयस्त्रिंशदधिकानि एकैकस्मिन् भागे भवन्ति। तथा चावश्यमेव एका या काचित्परिशिष्यत एव। परं बुद्धिपूर्वकं विभागे क्रियमाणे एवं विधामेकां गामतिरिक्तां करोतीत्यर्थः। कीदृशीं रक्तवर्णाम्, उपध्वस्तां कर्बुराम्, अप्रवीतां, त्रिरूपां वा। विभागश्चाग्रे वक्ष्यते ॥ १४॥

**आद्येऽहन्प्रथमां नयेत् ॥१५॥**

दक्षिणानयनकाले आद्येऽहनि एनां साहस्रीं गामितराभ्यस्तस्मिन्नहनि नीयमानाभ्यो गोभ्यः प्रथमां नयेत् ॥१५॥

**अन्त्ये वा पश्चात् ॥१६॥**

अन्त्ये वा अहनि तृतीये एनां गां नीयमानानां गवां पश्चान्नयेत् ॥१६॥

**हविर्धानाग्नीध्रान्तरे द्रोणकलशमेनामाघ्रापय"त्याजिघ्र"ति (८।४२) ॥१७॥**

प्रथमेऽहन्युत्तमे वा यदैषा साहस्री नीयते तदा नीयमानामेनां साहस्रीं गां हविर्धानाग्नीध्रयोरन्तरे स्थितां सतीं द्रोणकलशमवघ्रापयति ॥१७॥

**"इडे रन्त" इति ( ८।४३ ) दक्षिणेऽस्याः कर्णे यजमानो जपति ॥१८॥**

**वोचेरिति वाऽन्ते ॥१९॥**

इडे रन्त इति मन्त्रस्यान्ते ब्रूतादिति पदस्य स्थाने वोचेः इत्येवं प्रयोगो वा भवति ॥१९॥

**सर्वतो नवसु दशमीं कृत्वा होत्रे दद्यात् ॥२०॥**

दशानां दशानां गवां दानं विधास्यति। ततस्त्रयस्त्रिंशदधिकानां त्रयाणां शतानां दशभिर्दशभिर्गोभिर्दाने क्रियमाणे प्रत्यहं तिस्रस्तिस्रः परिशिष्यन्ते। तत्राह-सर्वतः सर्वेभ्यस्त्रिभ्योऽप्यहोभ्यस्तिस्रो गा उपादाय नवसु सम्पन्नासु एतां साहस्रीं गां दशमीं = दशानां पूरणीं कृत्वा तं दशकं होत्रे दद्यात् ॥२०॥

**उन्नेतारौ वा वृत्वाऽनाश्रावयते ॥२१॥**

सहस्रदक्षिणे त्रिरात्रे द्वावुन्नेतारौ ( ४।५।८।१२ ) वृत्वा तयोर्मध्ये आश्रावणमकुर्वते उन्नेत्रे एतां साहस्रीयुक्तां दशमीं दद्याद्धोत्रे वा। आश्रावणं च परार्थत्वादेक एव कुर्यात्। उन्नयनं तु विभागेन कुर्वीयाताम् ॥२१॥

## दश-दशाभेदेन दक्षिणा दद्यात् ( ४।५।८।१६ ) (१) ॥२२॥

सहस्रदक्षिणाके यज्ञे या दक्षिणा गोरूपा दद्यात्, ता दशसङ्ख्याविशिष्टा अर्थाद् दशकृत्वो दद्यात्, न ततो न्यूनसङ्ख्यया विभागः कार्यः। अयं भावः। सन्ति गर्गत्रिरात्र-वैदत्रिरात्रादीन्यहीनानि दिनत्रयानुष्ठेयानि। तत्रैतेषामहीनानां प्रकृतिभूते द्वादशाहात्मकेऽहीने "अन्वहं दक्षिणा ददाति" (श० ब्रा० ४।५।८।१) इत्यनेन प्रतिदिनं दक्षिणा दातव्यत्वेन विहिताः। तच्चान्वहदानं विकृतावतिदेशेन प्राप्तं सहस्रदक्षिणात्मकेऽहीने, तस्य च दिनत्रय साध्यत्वेन विभज्य दाने प्रतिदिनं त्रयस्त्रिंशदधिकशतत्रयं गवां दातव्यं भवति। तत्र च दश दश गाः सङ्ख्याय षोडशभ्य ऋत्विग्भ्यो दातव्याः। तत्र प्रथममेकं गवां दशकं गृहीत्वा ब्रह्मादिभ्यो दद्यात्। पुनर्दशकान्तरं गृहीत्वोक्तप्रकारेण तेभ्यः क्रमशो दद्यात्। एवमेव यावत्स-ङ्ख्यापरिपूर्तिं दशकमविभज्य देयम्। प्राकृतः क्रमश्च "द्वादश द्वादशाद्येभ्यः" (का० श्रौ० १०।२।२४) इत्यादिना पूर्वमुक्तः। ततश्चायं क्रमः सिद्धो भवति। प्रथमत एकं दशकं गृहीत्वा ब्रह्मोद्गातृहोत्रध्वर्युब्राह्मणाच्छंसिप्रस्तोतृमैत्रावरुणप्रतिप्रस्थातृपोतृ प्रतिहर्तृभ्यो दशभ्य ऋत्विग्भ्य एकैकां गां दद्यात्। एवमेकं दशकं दत्तम्।

पुनर्द्वितीयं दशकं विभज्यैतेभ्य एवैकैकां दद्यात्। ततस्तृतीयं दशकं पञ्चधा विभज्य ब्राह्मणाच्छंस्यादिभ्यः पञ्चभ्यः पोतृपर्यन्तेभ्यो द्वे द्वे दद्यात्। चतुर्थं च दशतं पञ्चधा विभज्य ब्राह्मणाच्छंसिप्रस्तोतृमैत्रावरुणप्रतिप्रस्थातृप्रतिहर्तृभ्यो द्वे द्वे दद्यात्। पञ्चमं दशकं चतस्रः, तिस्रः, तिस्र इति वैषम्येण त्रेधा विभज्याच्छावाकाय चतस्रो दत्वाऽग्नीत्सुब्रह्मण्याभ्यां तिस्रस्तिस्रो दद्यात्। ततः षष्ठं दशकं विभज्य चतस्रो नेष्ट्रे दत्वा ग्रावस्तुदुन्नेतृभ्यां तिस्रस्तिस्रो दद्यात्। ततः सप्तमं दशकं समं द्वेधा विभज्य ब्रह्मोद्गातृभ्यां पञ्च पञ्च। अष्टममपि पुनस्ता-भ्यामेव। ततो नवमं दशतं द्वेधा विभज्य होत्रध्वर्युभ्यां पञ्च पञ्च। दशममपि ताभ्यामेव। एवं शतं विभज्य प्राकृतविभागेन दत्तम्। एवं द्वितीयतृतीयशते अपि देये। अथ त्रयस्त्रिंशन्म-ध्यादेकं दशकं विभज्य ब्रह्मादिभ्यो दशभ्य एकैकां दद्यात्। तथैव द्वितीयं तेभ्य एव। ततस्तृतीयं दशकं पञ्चधा विभज्य ब्राह्मणाच्छंस्यादिभ्यः पञ्चभ्यो द्वे द्वे दद्यात्। तिस्रस्तिस्रः परिशिष्यन्ते, ता अत्र न दीयन्ते। ततो द्वितीयेऽहन्येवमेव शतत्रयं दत्वा त्रयस्त्रिंशन्मध्यादेकं दशकं विभज्य

---

(१) अत्र देवयाज्ञिकः—"दशभ्यो दशकौ दत्वा चतुर्भ्योऽष्टौ च पञ्चकान्। द्विकेन पूरयेत्षड्भ्यः षड्भ्यो द्विकमिति स्थितिः"—इति। अस्यार्थः। ब्रह्मादिभ्यो दशभ्यः प्रतिहर्त्रन्तेभ्यो द्वौ दशकौ एकैकदानेन दत्वा, आद्ये-भ्यश्चतुर्भ्यो महर्त्विग्भ्योऽष्टौ पञ्चकान् दद्यात्। तत्र च एकं दशकं विभज्य द्वाभ्यां पञ्च पञ्च दद्यात्। पुनस्ता-भ्यामेव। ततस्तृतीयचतुर्थाभ्याम्। पुनस्ताभ्यामेव। एवं षड् दशका दत्ताः। एवं महर्त्विग्भ्यः शतस्य विभागो दत्तः। ततो ब्राह्मणाच्छंस्यादिभ्यः षड्भ्यो द्विकेन दशकद्वयेन प्राकृतं विभागं पूरयेत्। एतेभ्यः षड्भ्यो द्वे द्वे प्रथमं दत्ते। अधुना त्वेकं दशतं विभज्य पोत्रन्तेभ्यः पञ्चभ्यो द्वे द्वे दद्यात्। ततो द्वितीयं दशतं विभज्य ब्राह्मणाच्छंस्यादिभ्य एव पुनर्द्वे द्वे दद्यात्। पोतुः स्थाने प्रतिहर्त्रे इति विशेषः। एवं दशभ्यः प्राकृतो विभागो दत्तः। अथाच्छावाकादिभ्यः षड्भ्यो दशकद्वयं विभज्य दद्यात्। तत्रैकं दशकं विभज्याच्छावाकाय चतस्रो दत्वाऽऽग्नीध्रे सुब्रह्मण्याय च तिस्रस्तिस्रो देयाः। द्वितीयं दशतं त्रेधा विभज्य नेष्ट्रे चतस्रो दत्वा ग्रावस्तु-दुन्नेतृभ्यां तिस्रस्तिस्रो देया इति। एवं सर्वेभ्यः शतस्य विभागो दत्तो भवति। एवमेव द्वितीयं तृतीयं च शतं दद्यात्। एवं त्रयस्त्रिंशतः संबन्धिनां त्रयाणां शतानामपि आदित आरभ्य दानम्। तिस्रस्तु प्रत्यहं परिशिष्यन्त एव। एवं द्वितीये तृतीये च बोध्यम्। यद्यपि श्लोकमध्ये क्रमान्तरम्, तथापि दानं श्रुतिक्रमेणैव कर्तव्यम्। श्रुतौ तु प्रथममेकैकस्या दानं, ततो द्वयोर्द्वयोः, ततस्तिसृणाम्, ततः पञ्चानां पञ्चानामिति। श्लोके तु एकैकदानानन्तरं पञ्चभ्यो दानमभिहितम्। तदयुक्तम्। श्रुतिविरोधात्" इति।

ब्राह्मणाच्छंसिप्रस्तोतृमैत्रावरुणप्रतिप्रस्थातृप्रतिहर्तृभ्यां द्वे द्वे दद्यात्। ततो द्वितीयं दशकं विषमं त्रेधा विभज्य नेष्ट्रे चतस्रो दत्त्वा ग्रावस्तुदुन्नेतृभ्यां तिस्रस्तिस्रो दद्यात्। तिसृणामवशेषणम्। ततस्तृतीयेऽहनि शतत्रयदानं पूर्ववत्। त्रयस्त्रिंशन्मध्यादेकं दशतं विभज्य ब्रह्मोद्गातृभ्यां पञ्च पञ्च दद्यात्। तथैव द्वितीयं दशकं द्वेधा विभज्य ताभ्यामेव दद्यात्। तृतीयं दशतं विभज्याध्वर्यवे पञ्च दत्त्वा पुनस्तस्मा एव दद्यात्। ततः सर्वेषां यास्तिस्रस्तिस्र अवशिष्टाः, ताः सर्वा आदाय तासु नवसु सम्पन्नासु साहस्रीं दशमीं कृत्वा तं दशकमनूबन्ध्यवपाहोमान्ते, उदवसानीयायामिष्टौ वा होत्रे दद्यात्। अन्यदपि युक्तं रथादिक मिच्छया दद्यात्। अथवा अस्मिन्पक्षे द्वावुन्नेतारौ कृत्वा तयोर्द्वयोरुन्नेत्रोर्मध्ये य आश्रावणं न करोति तस्मै एनं दशकमनूबन्ध्यवपाहोमान्ते उदवसानीयायां वा दद्यात्। अस्मिन्पक्षे प्रथमेऽह्नि शतत्रयदानानन्तरं त्रयस्त्रिंशन्मध्ये ये द्वे गावौ होतुर्भागौ भवतस्ते उन्नेत्रे दद्यात्, न होत्रे। द्वितीयेऽह्नि त्रयस्त्रिंशन्मध्याद् यास्तिस्र उन्नेतुर्भागे भवन्ति ता होत्रे देया नोन्नेत्रे। तृतीये दिने त्रयाणां शतानां मध्ये उन्नेतुर्भागे यास्तिस्रो भवन्ति ताः प्रतिशतं होत्रे देया इति ॥२२॥

**अनूबन्ध्यावपाहोमान्ते दद्यादेनाम् ॥ २३ ॥**

एनां साहस्रीं नवसु दशमीं कृत्वा होत्रे उन्नेत्रे वा दद्यात् ॥२३॥

**उदवसानीयायां वा ॥२४॥**

अथवा नवभिर्युक्तामेनामुदवसानीयायामिष्टौ होत्रे उन्नेत्रे वा दद्यात् ॥२४॥

**अन्यदिच्छन् ॥२५॥**

उक्तदक्षिणातोऽन्यदपि रथादिकमनूबध्यवपाहोमान्ते उदवसानीयायां वा दद्यात् ॥२५॥

**अहर्गणे व्युत्क्रामताद्यन्वहम् ॥२६॥**

द्वादशाहादौ प्रतिसुत्यं व्युत्क्रामतेति प्रभृति कर्म भवति ॥२६॥

**वसतीवरिग्रहणं च ॥ २७ ॥**

अन्वहमहर्गणे भवति ॥२७॥

**एके माध्यन्दिनेऽवनीय माध्यन्दिनेऽवनीय ॥ २८ ॥**

एके माध्यन्दिने सवने आधवनीये वसतीवरीरवनीयोस्तरयोरह्नोऽर्थे प्रत्यहं वसतीवरीणां ग्रहणमिच्छन्ति ॥२८

इति चतुर्थी कण्डिका ॥ ४ ॥

इति कातीये श्रौतसूत्रे महामहोपाध्यायविद्वन्मूर्द्धन्यमहायाज्ञिकश्रीश्रीप्रभुदत्तशर्मसुतविद्याधरकृतायां सरलाख्यायां वृत्तौ गवामयननिरूपणात्मकस्त्रयोदशोऽध्यायः ॥



# चतुर्दशोऽध्यायः ।

## वाजपेययागः ।

[ ब्राह्मणक्षत्रिययोः शरदि वाजपेयानुष्ठानम् ]

**वाजपेयः शरद्यवैश्यस्य ॥ १ ॥**

शरद्वतौ ( शाङ्खा० १५।१।१ ) ब्राह्मणक्षत्रियाभ्यां ( श० ५।१।५।२-३ ) वाजपेय-संज्ञको यागः कार्यो, न वैश्येन ॥ १ ॥

[ वाजपेयस्यादावन्ते च बृहस्पतिसवो ज्योतिष्टोमो वा ]

**उभयतः शुक्लपक्षौ बृहस्पतिसवेन यजते ॥ २ ॥**

वाजपेयानुष्ठानात्पूर्वमनन्तरं च अव्यवहितशुक्लपक्षयोर्बृहस्पतिसवसंज्ञकं ( १ ) याग-मैकाहिकमग्निष्टोमसंस्थं कुर्यात्। तत्राश्विनस्यामायां वाजपेयस्य सुत्यानुष्ठानपक्षे भाद्रपद्यां बृह-स्पतिसवस्य सुत्या। आश्विनशुक्लदशम्यां वाजपेयस्य दीक्षा। कार्तिक्यां बृहस्पतिसवः। कार्तिकामायां वाजपेयसुत्याकरणपक्षे आश्विनपूर्णिमायां बृहस्पतिसवः, कार्तिकशुक्लदश-म्यां वाजपेयदीक्षा, मार्गशीर्ष्यां बृहस्पतिसवः। असम्भवे वाजपेयारम्भसंबन्धिनि शुक्लपक्ष एव बृहस्पतिसवः। वाजपेयादनन्तरमपि असंभवे तदनन्तरमेव प्रतिपदारम्भे पञ्चम्यां सप्तम्यां वा बृहस्पतिसवः ॥ २ ॥

पक्षान्तरमाह—

**ज्योतिष्टोमेन वा ॥ ३ ॥**

अथवा वाजपेयस्य पुरस्तादुपरिष्टाच्च शुक्लपक्षयोरग्निष्टोमसंस्थो ज्योतिष्टोमः कार्यो, न बृहस्पतिसवः। बृहस्पतिसवेन सहायं विकल्पः ॥ ३ ॥

[ अथवा वाजपेयस्यादौ द्वादशानां शुक्लपक्षानां मध्ये अयुग्मेषु ज्योतिष्टोमः, युग्मेषु पार्ष्ठिकानि । अन्ते तु अयुग्मेषु पार्ष्ठिकानि, युग्मेषु ज्योतिष्टोमः ]

तृतीयं पक्षमाह—

**द्वादश वा ॥ ४ ॥**

अथवा वाजपेयस्य पुरस्तादुपरिष्टाच्च द्वादशसु द्वादशसु शुक्लपक्षेषु द्वादश द्वादश-वक्ष्यमाणान् सोमयागाननुतिष्ठेत्, न बृहस्पतिसवम्, नापि ज्योतिष्टोमम्। पूर्वोक्तयाग-द्वयेन सहास्य विकल्पः ॥ ४ ॥

तानेवाह—

**पुरस्तादयुक्षु ज्योतिष्टोमः पार्ष्ठिकानीतरेषु ॥ ५ ॥**

वाजपेयस्य पुरस्तात् अयुग्मेषु प्रथमतृतीयपञ्चमसप्तमनवमैकादशेषु शुक्लपक्षे

---

( १ ) बृहस्पतिसवोऽग्निष्टोमवद्भवति । इयांस्तु विशेषः । अग्नीषोमीयस्य पशुपुरोडाशमनुदेव-विषां निर्वापः । तद्विधी राजसूये चयने च वक्ष्यते ।

अग्निष्टोमसंस्थो ज्योतिष्टोमः कर्तव्यः। युग्मेषु द्वितीयचतुर्थषष्ठाष्टमदशमद्वादशेषु शुक्लपक्षेषु तु पृष्ठ्यषडहसंबन्धीन्यहानि विभक्तानि ( १ ) क्रमेण कार्याणि ॥ ५ ॥

**प्रतिलोमं पार्ष्ठिकान्युपरि ॥ ६ ॥**

वाजपेयानुष्ठानानन्तरमपि अयुग्मेषु शुक्लपक्षेषु ज्योतिष्टोमो, युग्मेषु पार्ष्ठिकानि कर्त्तव्यानि। तत्र ( २ ) पार्ष्ठिकानि प्रतिलोमं = त्रयस्त्रिंशारम्भणानि भवन्ति। अत्र प्रातिलोम्यमुभयथा। तेनायुग्मेषु पार्ष्ठिकानि, युग्मेषु ज्योतिष्टोम इति याज्ञिकाः ॥ ६ ॥

[ अथवा वाजपेयस्यादौ राजसूयविहिता नव सोमयागा नवसु शुक्लपक्षेषु, अनन्तरं च तेषामेव नवानां प्रातिलोम्येनानुष्ठानम् ]

चतुर्थं पक्षमाह—

**सर्वाग्निष्टोमैर्वा राजसूयसोमैः ॥ ७ ॥**

राजसूये नव सप्त वा सोमा वक्ष्यन्ते ( १५।९। )। तैर्नवभिः सप्तभिर्वाऽग्निष्टोमसंस्थैः सोमयागैः वाजपेयस्य पुरस्तात् नवसु सप्तसु वा शुक्लपक्षेषु क्रमेण यजेत ( ३ ) ॥ ७ ॥

**प्रतिलोममुपरि ॥ ८ ॥**

एवं वाजपेयकरणानन्तरं नवसु शुक्लपक्षेषु तैरेव सोमैरग्निष्टोमसंस्थैर्नवभिः सप्तभिर्वा प्रतिलोमं ( ४ ) यजेत ॥ ८ ॥

[ बृहस्पतिसवादीनां पृथक् पृथग्दीक्षा, न वाजपेयेन तन्त्रता ]

**नाना दीक्षाः परियज्ञाः कालभेदात् ॥९॥**

ये नाम परियज्ञाः (का० श्रौ० ४।१।२-८) तेषां नाना दीक्षाः पृथक् पृथग्दीक्षाः कर्तव्याः। कुतः? कालभेदात्, परियज्ञानां कालस्य भिन्नत्वादित्यर्थः। पूर्वं यानि पार्ष्ठिकान्यहान्युक्तानि, तानि वाजपेयाहोभिः सहानुष्ठेयतया विहितानि। यथा—अयुग्मेषु प्रथमतृतीयपञ्चमसप्तमनवमैकादशेषु शुक्लपक्षेषु ज्योतिष्टोमः, युग्मेषु द्वितीयादिषु पार्ष्ठिकान्यहानि। एवं च ज्योतिष्टोमेन सहैव पार्ष्ठिकानामह्नां संवलितप्रयोगत्वात् तेषामुभयेषामपि तन्त्रेण दीक्षाः

---

( १ ) तत्राश्विन्यां ज्योतिष्टोमः, कार्तिक्यां पार्ष्ठिकं प्रथममहरग्निष्टोमसंस्थम्, मार्गशीर्ष्यां ज्योतिष्टोमः, पौष्यां पार्ष्ठिकं द्वितीयमहरुक्थ्यसंस्थम्, माघ्यां ज्योतिष्टोमः, फाल्गुन्यां पार्ष्ठिकं तृतीयमहरुक्थ्यसंस्थम्, चैत्र्यां ज्योतिष्टोमः, वैशाख्यां पार्ष्ठिकमहश्चतुर्थं षोडशिसंस्थम्, ज्यैष्ठ्यां ज्योतिष्टोमः, आषाढ्यां पार्ष्ठिकं पञ्चममहरुक्थ्यसंस्थम्, श्रावण्यां ज्योतिष्टोमः, भाद्रपद्यां पार्ष्ठिकं षष्ठमहरुक्थ्यसंस्थमिति।

( २ ) वाजपेयानन्तरं प्रथमे शुक्लपक्षे कार्तिक्यां पार्ष्ठिकं षष्ठमहः। मार्गशीर्ष्यां ज्योतिष्टोमः। पौष्यां पार्ष्ठिकं पञ्चममहः। माघ्यां ज्योतिष्टोमः। फाल्गुन्यां पार्ष्ठिकं चतुर्थमहः। चैत्र्यां ज्योतिष्टोमः। वैशाख्यां पार्ष्ठिकं तृतीयम्। ज्यैष्ठ्यां ज्योतिष्टोमः। आषाढ्यां पार्ष्ठिकं द्वितीयम्। श्रावण्यां ज्योतिष्टोमः। भाद्रपद्यां पार्ष्ठिकं प्रथममहः। आश्विन्यां ज्योतिष्टोम इति। अपरे तु पुरस्तादिवोपरिष्टादपि अयुग्मेषु ज्योतिष्टोमः, युग्मेषु पार्ष्ठिकानीति वदन्ति। युक्ततरश्चायं पक्ष इति देवयाज्ञिकाः।

( ३ ) तत्र पौष्यां पवित्रः, माघ्यामभिषेचनीयः, फाल्गुन्यां दशपेयः, चैत्र्यां केशवपनीयोऽतिरात्रः, वैशाख्यां व्युष्टिद्विरात्रस्य प्रथममहः, ज्यैष्ठ्यां व्युष्टिद्विरात्रस्य द्वितीयमहः, आषाढ्यां क्षत्रधृतिः, श्रावण्यां त्रिष्टोमः, भाद्र्यां ज्योतिष्टोम इति।

( ४ ) कार्तिक्यां ज्योतिष्टोमः, मार्गशीर्ष्यां त्रिष्टोमः, पौष्यां क्षत्रधृतिः इत्येवं पूर्वोक्तप्रकारस्य प्रातिलोम्येन आषाढीपूर्णिमान्तमनुष्ठानम्।

कृताः । परियज्ञानां बृहस्पतिसवादीनां तु ततो भिन्नकाले ऽनुष्ठेयत्वात् तन्त्रेण दीक्षाऽसम्भवात् पृथक् पृथगेव दीक्षाः कर्तव्या इति ॥ ६ ॥

**सप्तदश दीक्षाः ॥ १० ॥**

वाजपेययज्ञे सप्तदश दीक्षा भवन्ति ॥ १० ॥

[ वाजपेये प्रतियागारम्भे देव सवितरिति होमः क्रयण-वेद्यारम्भणादौ च । दीक्षारम्भे तु सकृत् ]

**देव सवितरिति ( ६।१ ) जुहोति यजत्यादिषु ॥ ११ ॥**

वाजपेयाङ्गभूतानां दीक्षणीयाप्रायणीयाऽऽतिथ्यादीनामादयो यजत्यादयः । तेषु कर्मणः कर्मणः पुरस्तात् सकृद्गृहीतमाज्यं जुहुयात् ( श०ब्रा० ५।१।१।१४ ) ॥११॥

कर्मणः कर्मणः पुरस्तादित्युक्तत्वात् अप्सुदीक्षा—नवनीताभ्यञ्जना—व्यञ्जन—पावन कृष्णाजिनारोहण—मेखलाबन्धन-दण्डप्रदानादिषु पृथक् पृथगाहुतिप्राप्तावाह—

**सकृद्दीक्षारम्भे कर्मैकत्वात् ॥ १२ ॥**

दीक्षायाः = अप्सुदीक्षाया आरम्भे सकृदाहुतिर्होतव्या, न पृथक् प्रतिकर्मादौ। कुतः । कर्मैकत्वात् । कार्यैकत्वादित्यर्थः । वपनादिदण्डप्रदानान्तानां कर्मणामेकं कार्यं पुरुषसंस्कार इति ॥ १२ ॥

**क्रयण-वेद्यारम्भण-प्रवर्ग्योत्सादना-ऽग्निप्रणयन-हविर्धाना-ऽग्नीषोमाणाꣳ सद-आग्नीध्र धिष्ण्यनिवपन-वसतीवरिग्रहण-परि हरणे च कर्मान्तरत्वात् प्राक् सुत्यायाः ॥ १३ ॥**

क्रयणं सोमक्रयः । वेद्यारम्भणं वेदिमानारम्भः । परिहरणं वसतीवरीणामाग्नीध्रे नयनम् । एषु च पूर्वोक्ताऽऽहुतिर्होतव्या । इयमाहुतिः सुत्यायां न भवति, किन्तु ततः प्रागेवेति ॥ १३ ॥

[ सोमक्रयणकाले निष्पन्नसुरायास्तद्द्रव्याणां वा क्रयणम् ]

**सोमात् क्रीयमाणात् सहितं दक्षिणतः सीसेन परिस्रुतः क्रयणं केशवात् ॥ १४ ॥**

यस्मिन् काले सोमं क्रीणाति तस्मिन्नेव काले सोमस्य दक्षिणतः समीप एव दीर्घकेशात् पुरुषात् षण्ढाद्वा परिस्रुतः = सुरायाः क्रयणं सीसेन तूष्णीं कुर्यात् । सुराक्रयणं विरोधात्प्रतिप्रस्थाता करोति ॥ १४ ॥

**तद्द्रव्याणां वा ॥ १५ ॥**

वा विकल्पे । अथवा यैर्द्रव्यैः सुरा निष्पाद्यते, तेषां क्रयणं कर्तव्यं, न निष्पन्नायाः सुरायाः । सुराद्रव्याणि च सौत्रामण्यां वक्ष्यति । ( १ ) ॥ १५ ॥

**पर्युह्यमाणेऽनुहरणम् ॥ १६ ॥**

सोमस्य शालां प्रति अनसा अनुहरणं पूर्वमुक्तम् (६।१।७) । तस्मिन् अनसा सोमे पर्युह्यमाणे सति नेष्टा सुरां तद्द्रव्याणि वा हस्ते गृहीत्वा अनसोऽनुहरणं कुर्यात् ॥ १६ ॥

[ सुराकरणम् ]

**दक्षिणेन प्रवेश्य दक्षिणाग्नौ पक्त्वाऽपरेऽन्ते नेष्टा सुरां करोति ॥ १७ ॥**

---

( १ ) "सर्जत्वक् त्रिफला चैव शुण्ठी चैव पुनर्नवा । चतुर्जातकसंयुक्तं पिप्पली गजपिप्पली १ वंशोऽवका बृहच्छत्रा चित्रकं चेन्द्रवारुणी । अश्वगन्धा, समुत्पाट्य मूलान्येतानि निर्दिशेत् २ धान्यकं च यवानीं च जीरकं कृष्णजीरकम् । द्वे हरिद्रे वचा चैव विरूढा व्रीहयो यवाः" इति सुराद्रव्याणि

नेष्टा अनुद्धतानि तानि द्रव्याणि दक्षिणेन शालाद्वारेण शालां प्रवेश्य दक्षिणाग्नौ पक्त्वा शालाया अपरभागे तैः पक्वैर्द्रव्यैः सुरां निष्पादयेत्। पाककरणप्रकारश्च सौत्रामण्युक्त इह द्रष्टव्यः (१) ॥ १७ ॥

**खरं कृत्वा नाराशंꣳसस्थानेऽपरम् ॥ १८ ॥**

'खरं करोत्युद्धतावोक्षिते' (का० श्रौ० ८।५।२५) इति खरकरणं पूर्वमुक्तम्। तं कृत्वा नाराशंससंज्ञकानां चमसानां निधानस्थाने द्वितीयं तादृशं खरं कुर्यात्। नाराशंससंज्ञकाश्चमसाः, तत्स्थानं च पूर्वमुक्तम् ( अध्या ६ ) ॥ १८ ॥

[ हविर्धानस्य दक्षिणेऽद्वारदेशे कुद्वारकरणम् ]

**दक्षिणतः सन्धिं करोति ॥१९॥**

अध्वर्युर्हविर्धानमण्डपस्य दक्षिणपार्श्वे उच्छ्रायीं विदार्य सन्धिम् = अल्पप्रमाणं कुद्वारं कुर्यात्। एतत्प्रयोजनमग्रेऽभिधास्यति (१४।१।२७)। उच्छ्रायी पूर्वमुक्ता (८।३।२४) ॥१९॥

[ वस्त्रैर्यूपवेष्टनमग्नीषोमीयदिने सुत्यादिने वा ]

**यूपवेष्टनꣳ सप्तदशभिर्वस्त्रैर्व्युद्ग्रन्थनं वा परिव्ययणकाले ॥२०॥**

"त्रिगुणा त्रिव्यामा" (६।३।१३) इत्यादिना रशनया यूपस्य परिव्ययणमुक्तम्। तता यूपपरिव्ययणात्प्राक् (५।२।१५) सप्तदशभिर्वस्त्रैरग्नीषोमीयस्यैकस्य सप्तदशारत्नेर्यूपस्य वेष्टनं कुर्यात्, अथवा व्युद्ग्रन्थनं कुर्यात्। व्युद्ग्रन्थनमवचूलकरणमिति कर्कः। चूडाग्रपर्यन्तमधस्तात् सप्तदशानामपि वाससामवलगनं यूपस्याधस्तादारभ्येत्यर्थः ॥२०॥

**श्वो वा सवनीयेषु ॥२१॥**

वा विकल्पे। इदं यूपवेष्टनं व्युद्ग्रन्थनं वा श्वः = सवनीयपशुपरिव्ययणकाले अद्य अग्नीषोमीयपशुपरिव्ययणकाले वा कर्तव्यम्। कुतः ? अस्य यूपोद्देशेन विधानात्। यूपसंस्काराणां चाग्नीषोमीय एव करणात् ॥२१॥

**उत्कीर्णसमाग्रो गौधूमचषालः ॥२२॥**

उत्कीर्णे = गर्तवत् समं च अग्रं यस्य सः। गोधूमानां विकारो गौधूमम्। तच्चषालं यस्य सः। गोधूमपिष्टनिर्मितं किंचित् खातवत् समाग्रं चषालमस्य यूपस्य भवतीत्यर्थः। मूलेऽरत्नित्रयं किञ्चिदूनदशाङ्गुलाधिकमुपरभागं परित्यज्य अवशिष्टो यूपोऽष्टाश्रिः कार्यः ॥२२॥

[ वाजपेयारम्भे सर्वेषां हिरण्यस्रग्धारणम् ]

**सुत्यादौ हिरण्यस्रजोऽपि नह्यन्तेऽधिकृता यजमानः पत्नी च ॥२३॥**

सुत्यारम्भे सर्वे ऋत्विजो यजमानः पत्नी च सुवर्णनिर्मिता मालाः कण्ठे बध्नीयुः ॥२३॥

---

( १ ) सुरानिष्पादनप्रकारश्चैवम्। प्रथमं शष्पाणि पिनष्टि, ततस्तोक्मानि, ततो लाजाः, ततः सर्जत्वगादीनि। एतानि पिष्ट्वा पृथक् पृथक् पात्रेषु स्थापयति। ततो व्रीहितण्डुलानां श्यामाकतण्डुलानां च द्वावोदनौ दक्षिणाग्नौ बहून्युदके श्रपयति। शृतौ तावुद्वास्य पात्रद्वये पृथक् चर्वोराचामं निषिञ्चति। ततः शष्पादित्रयचूर्णस्य तृतीयं तृतीयमंशमादाय तस्य तस्य तृतीयांशस्यार्धमर्धं द्वयोराचामयोः प्रक्षिपेत्। ततः सर्जत्वगादिचूर्णस्यार्द्धमादाय तस्यार्धमर्धं द्वयोराचामयोः प्रक्षिपेत्। तयोश्चूर्णसंसृष्टयोर्मासरमिति संज्ञा। ततः शष्पादिचूर्णत्रयस्य एकैकं भागमादाय अर्द्धमर्द्धमोदनयोः प्रक्षिप्य सर्जत्वगादिचूर्णमवशिष्टं सर्वमादाय तस्यार्धमर्धमोदनद्वये प्रक्षिपेत्। तत एकस्मिन्महति पात्रे ओदनं प्रक्षिप्य मासरसंज्ञकौ आचामौ तस्यां कुम्भ्यां प्रक्षिपेत्। ततो नैर्ऋत्यकोणे शालायां गर्तं कृत्वा तत्र कुम्भीं निधाय गर्तं मृदा प्रपूर्य दिनत्रयं तिष्ठेत् इति।

"हिरण्यमालिनो वाजपेयेन चरन्ति" इत्यविशेषेण श्रुतत्वाद्वाजपेयादौ हिरण्यमालिभिर्भवितव्यम् । कथं सुत्यादौ इत्युच्यत इत्याह—

**सुत्यस्य तच्छब्दात् ॥२४॥**

सुत्याया आदावेव हिरण्यमालाबन्धनं कार्यं, न सर्वादौ । कुतः ! तच्छब्दात् । स वाजपेय इति शब्दो यस्य असौ तच्छब्दः, तस्मात् । सुत्यस्यैव तच्छब्दो वाजपेयशब्दो यतः । अतः सुत्यादावेवेति ॥२४॥

एवं प्राप्ते सिद्धान्तयति—

**सर्वत्राविशेषात् ॥२५॥**

सर्वत्र "देवयजनं जोषयन्ते" (कात्या० ७।१।१०) इत्येतत्प्रभृति सर्वे कण्ठे हिरण्यं बध्नीयुः, न सुत्यादौ । कुतः ? अविशेषात् । सर्वस्य साङ्गस्य वाजपेयत्वाविशेषादित्यर्थः ॥२५॥

[ सुराविवेचनम् ]

**एकधनप्रवेशनकाले सुरां नेष्टाऽपरेण प्रवेश्य खरे करोति ॥२६॥**

एकधनकलशाः, तत्प्रवेशकालश्च पूर्वमुक्तः तत्र हविर्धानस्यापरेण द्वारेण हविर्धाने सुरां प्रवेश्य पूर्वं निष्पादिते द्वितीये खरे तां निदध्यात् ॥२६॥

**सन्धिना पात्राण्याहृत्य पात्रे वालेन पुनाति ॥२७॥**

"दक्षिणतः सन्धिं करोति" ( १०।१।१६ ) इत्युक्तम् । तेन सन्धिना = कुद्वारेण सुराग्रहसम्बन्धीनि पात्राण्याहृत्य एकस्मिन्महति पात्रे गोऽश्वबालनिर्मितेन पवित्रेण रसरूपां सुरां मलाद्विवेचयेत् ॥२७॥

इति कात्यायनश्रौतसूत्रे प्रथमा कण्डिका ॥१॥

---

[ प्रातःसवने ग्रहविशेषाः, तद्धोमः, सप्तदश सोमग्रहाः, सप्तदश सुराग्रहाः, व्यत्यस्य तेषां ग्रहणं च ]

**प्रातःसवनेऽतिग्राह्यान् गृहीत्वा षोडशिनं, पञ्च चैन्द्रान् ध्रुवसदमिति ( ९।२ ) प्रतिमन्त्रम् ॥ १ ॥**

प्रातःसवने आग्रयणग्रहणानन्तरं त्रीनप्यतिग्राह्यान् क्रमेण पूर्ववद् गृहीत्वा पूर्ववत् षोडशिनं गृह्णीयात् । ततः पञ्चसङ्ख्यानिन्द्रदेवत्यान् ग्रहान् ध्रुवसदमिति पञ्चभिर्मन्त्रैः प्रतिमन्त्रं गृह्णीयात् ॥ १ ॥

**अतिग्राह्यवद्धोमः ॥ २ ॥**

अतिग्राह्यग्रहाणां "माहेन्द्रमनुहोम" इत्युक्तम् ( १२।३।५ ) । तद्वत् पञ्चानामैन्द्राणां होमः कार्यः ॥ २ ॥

**सप्तदशापरान् ॥ ३ ॥**

अध्वर्युः सप्तदश सोमग्रहान् गृह्णीयात् ॥ ३ ॥

**नेष्टा च तावतः सौरान् ॥ ४ ॥**

नेष्टा च सप्तदश सुराग्रहान् गृह्णीयात् ॥ ४ ॥

**व्यत्यासं ग्रहणम् ॥ ५ ॥**

सोमग्रहाः सुराग्रहाश्च व्यत्यस्य व्यत्यस्य गृह्यन्ते, न सह (५।१।२।१६)। प्रथममध्वर्युः सोमग्रहं गृह्णाति, ततो नेष्टा सुराग्रहम्। पुनरप्येवम्। एवं सप्तदशपर्यन्तमित्यर्थः ॥ ५ ॥

**अक्षानतिक्रमणं ग्रहाणाम् ॥ ६ ॥**

सोमग्रहाणां सुराग्रहाणां च गृहीतानां वक्ष्यमाणे धारणे क्रियमाणेऽध्वर्युणा नेष्ट्रा च अक्षाणामुल्लङ्घनं न कार्यम् ॥ ६ ॥

**उपर्युपर्यक्षमध्वर्युर्धारयत्यधोऽधो नेष्टा सम्पृचाविति (६।४) ॥ ७ ॥**

अध्वर्युः सोमग्रहं गृहीत्वा अक्षस्योपरिष्टात् समीप एव तं धारयेत्। नेष्टा च सौरग्रहं गृहीत्वा अक्षस्याधस्तात्समीप एव तं धारयेत् ॥ ७ ॥

[ मधुग्रहस्य सौवर्णपात्रेण ग्रहणम् ]

**विपृचावित्याहरतः ॥ ८ ॥**

ततः स्वं स्वं ग्रहं खरे सादनाय नेष्ट्रध्वर्यू आहरेताम् ॥ ८ ॥

**हिरण्मयेन मधुग्रहं गृहीत्वा खरमध्ये सादयति ॥ ९ ॥**

अध्वर्युः सौवर्णेन ग्रहपात्रेण तूष्णीं मधुग्रहस्य ग्रहं गृहीत्वा तूष्णीं खरस्य मध्ये सादयेत् ॥ ९ ॥

**उक्थ्यादि ॥१०॥**

तत उक्थ्यग्रहणं ध्रुवग्रहणं च प्राकृतं कुर्यात् ॥१०॥

[मरुद्भ्यो वशा गौः, प्रजापतये च सप्तदश पशव आलब्धव्याः। षोडश प्रजापतये, सप्तदशो वाचे इत्येकेषां मतम्]

**अतिरात्रपशूनुपाकृत्य वशां पृश्निं मरुद्भ्य उज्जेषेभ्यः ॥ ११ ॥**

आग्नेयैन्द्राग्नैन्द्रसारस्वता अतिरात्रपशव (६।८।५) इत्युक्तम्। तान् उपाकृत्य ततोऽनूबन्ध्यां विचित्रवर्णां गां मरुद्भ्य उज्जेषेभ्योऽर्थे उपाकुर्यात्। तृणेन पशोरुपस्पर्शनमुपाकरणमित्युक्तम् (६।३।१८)। गोः स्थानेऽजोपाकरणम्। गवालम्भस्य कलौ निषिद्धत्वात् ॥११॥

**तदभावेऽपृश्निम् ॥ १२ ॥**

पृश्न्यभावेऽपृश्निमुपाकुर्यात् ॥ १२ ॥

**प्राजापत्यांश्च सप्तदश श्यामतूपरान् बस्तान् ॥१३॥**

ततः प्रजापतिदेवताकान् शुक्लकृष्णरोमाणः शृङ्गहीनान् साण्डान् पशूनुपाकुर्यात्। अत्र सर्वेषां पशूनां गलगलिकान्यायेन बन्धनम् ॥ १३ ॥

**तद्गुणाभावे सर्वेषामेकदेशोऽपि ॥१४॥**

यदि सप्तदश पशवः श्यामत्वादिगुणविशिष्टा न लभ्येरन्, तदा एकद्वित्र्यादेरपि पशोः श्यामत्वादिगुणविशिष्टस्य लाभे यागोऽनुष्ठेयः ( श० ब्रा० ५।१।३।१० ) ॥ १४ ॥

**वाच उत्तममेके ॥१५॥**

एके आचार्या अन्तिमं सप्तदशं पशुं वाचे देवतायै आलभन्ते, एके प्राजापत्यमिति विकल्पः। षोडश पशवस्तु प्राजापत्या एवेति ॥१५॥

### माहेन्द्रान्ते वशावपाप्रचरणम् ॥१६॥

माहेन्द्रग्रहयागान्ते वशाया गोः संबन्धिन्या वपायाः प्रचारं कुर्यात् । एवं च वपाप्रचारस्य माहेन्द्रयाजान्ते उत्कर्षः । स्वकाले वपाप्रचारः ॥ १६ ॥

वपाप्रचारोत्कर्षपक्षे विशेषमाह—

### अवदानैश्च द्वैधꣳ श्रुतेः ॥१७॥

वपाप्रचारोत्कर्षपक्षे अवदानानां द्विधा श्रयणं भवति । जौहवानि (६।७।६) औपभृतानि (६।७।७) चावदानानि पृथक् पृथक् पात्रयोः श्रपणीयानीत्यर्थः । पक्षान्तरमपि वक्ष्यति ( १४।२।२२-२४ ) ॥ १७ ॥

### पूर्वेभ्यो देवतास्विष्टकृद्भ्यामवद्यति ॥ १८ ॥

जौहवान्यङ्गानि पूर्वाणि । औपभृतान्युत्तराणि । तत्र पूर्वेभ्यः प्रधानदेवतायागः, उत्तरेभ्यः स्विष्टकृद्याग इत्युक्तम् (६।७।२०) । अत्र तु पूर्वेभ्य एवाङ्गेभ्यः प्रधानयागः स्विष्टकृद्यागश्च सम्पादनीय इति विशेषः ॥ १८ ॥

उत्तराङ्गानां विनियोगमाह—

### उत्तराणि विशे ददाति ॥ १९ ॥

उत्तराण्यौपभृतान्यङ्गानि विशे प्रजायै दद्यात् ॥ १९ ॥

### वामदेव्यग्रहान्ते प्राजापत्यानाम् ॥२०॥

"वामदेव्यं च माध्यन्दिने सवने"।इति वक्ष्यति । तदन्ते प्राजापत्यानां सप्तदशपशूनां वपाभिः प्रचरेत् ( श० ब्रा०५।१।३।१२ ) ॥ २० ॥

### स्रुग्व्यूहनात्प्राग्घविषा ॥ २१ ॥

प्राजापत्यानां पशूनां हविषा स्रुग्व्यूहनात्प्राक् प्रचरेत् ॥ २१ ॥

एवं कालान्तरे सप्तदशानां प्राजापत्यानां वपावदानप्रचारोत्कर्षपक्षमुक्त्वा इदानीं प्राकृत एव काले वपावदानप्रचारपक्षमाह—

### यथान्यायं वोभयोः ॥ २२ ॥

उभयोः प्राजात्यवपाहविषोः यथाप्रकृति वा (श० ब्रा० ०५।१।३।१४) प्रचारः कार्यः । पूर्वोक्त उत्कर्षपक्षो वेति विकल्पः ॥ २२ ॥

वशाया अपि प्राकृते काले प्रचारपक्षमाह—

### वशायाश्च ॥२३॥

वशावपायाश्च प्रचारः प्राकृत एव काले कार्य उत्कर्षकाले वा ॥२३॥

### ऐकध्यं च श्रपणम् ॥२४॥

यथान्यायपक्षे वशावदानानामेकस्मिन् पात्रे जौहवानामौपभृतानां च श्रपणं, न द्वेधा॥२४॥

### अदानं च विशे ॥२५॥

यथान्यायपक्षे उत्तराणामौपभृतानामङ्गानां विशे दानं न कार्यम् । पूर्वस्मिन् पक्षे तु उत्तराणि विशे ददाति ( १९ ) इत्युक्तम् ॥ २५ ॥

**माध्यन्दिनीयैः सह नैवारचरुर्बार्हस्पत्यः सप्तदशशरावः ॥२६॥**

माध्यन्दिने सवने निर्वपणीयानि हवींषि पूर्वमुक्तानि । (१०।३।१६) तैः सह बृहस्पतिदेवताकः सप्तदशशरावपरिमित आरण्यव्रीहिद्रव्यकश्चरुरपि सम्पादनीयः ॥ २६ ॥

[ वैकृताभ्यां सङ्ख्यापरिमाणाभ्यां प्राकृतयोः सङ्ख्यापरिमाणयोर्न बाधः ]

इदमत्र विचार्यते । प्रकृतौ दर्शपूर्णमासयोः "चतुरो मुष्टीन्निर्वपति" (२।३।२०) इत्यनेन निर्वापाङ्गत्वेन चतुःसङ्ख्या मुष्टयश्च विहिताः । तयोरुभयोरपि अत्र अतिदेशेन प्राप्तौ सत्यां सप्तदशशराव इत्यनेन अत्र सप्तदशशरावपरिमितद्रव्यविधानात् प्राकृतेन चतुर्मुष्टिना निर्वापेण सप्तदशानां शरावाणां पूरणासम्भवाद् बाधावश्यंभावे सति प्राकृतयोः सङ्ख्यामुष्ट्योरुभयोर्बाध ? उत अन्यतरस्येति । एवं संशये पूर्वपक्षयति—

**सङ्ख्यामुष्टिनिवृत्तिः सामान्यात् ॥ २७ ॥**

सप्तदशसङ्ख्यया चतुःसङ्ख्याया निवृत्तिः । शरावैश्च मुष्टीनां निवृत्तिः । कुतः ? सामान्यात् । सप्तदशसङ्ख्यायाः चतुःसङ्ख्यया सह सामान्यात्, शरावाणां मुष्टिभिः सह सामान्यादित्यर्थः । एवं च प्राकृतयोः सङ्ख्यापरिमाणयोः सङ्ख्यापरिमाणाभ्यां बाध इति ॥२७॥

एवं प्राप्ते सिद्धान्तयति—

**न यजतिशब्दात् ॥ २८ ॥**

न प्राकृतयोः सङ्ख्यापरिमाणयोर्वैकृताभ्यां सङ्ख्यापरिमाणाभ्यां बाधः । कुतः ? यजतिशब्दात् । यजतिशब्दवाच्येन यागेन सह संबन्धादित्यर्थः । वैकृतसङ्ख्यापरिमाणयोरिति शेषः । अयं भावः । प्रकृतौ हि चतुःसङ्ख्या मुष्टयश्च निर्वापाङ्गत्वेनैव श्रुताः, चतुरो मुष्टीन् निर्वपति (२।३।२०) इति । इह तु बार्हस्पत्यः सप्तदशशराव इति (२६) सप्तदशशरावपदस्य यजतिसामानाधिकरण्यात् यागाङ्गत्वमेव श्रूयते । अतश्च यागाङ्गभूते सङ्ख्यापरिमाणे निर्वापाङ्गभूतयोः सङ्ख्यापरिमाणयोर्न बाधके भवतः । एककार्यकारित्वेन एकत्र प्राप्स्यमानयोरेव बाध्यबाधकभावो भवति, न भिन्नाङ्गयोः । अतश्च सत्यपि सामान्ये एकद्वारकत्वाभावात् न प्राकृतयोः सङ्ख्यापरिमाणयोर्वैकृताभ्यां सङ्ख्यापरिमाणाभ्यां बाधः । यद्येवं चतुर्मुष्टिकेन निर्वापेण सप्तदशशरावपरिमित ओदनः कथं सम्पादयितुं शक्यत इति संशये अत्र कर्काचार्य शबरस्वाम्यादय एवमभि प्रयन्ति । प्राकृतीं सङ्ख्यां प्राकृतं च परिमाणमबाधमानेन वैकृती सङ्ख्या वैकृतं परिमाणं च न सम्पादयितुं शक्यते । अत एव प्राकृत्योः सङ्ख्यापरिमाणयोर्मध्येऽवश्यमन्यतरद् बाधितव्यम् । तत्र मुष्टिसङ्ख्ययोर्मध्ये सङ्ख्यायाः प्रथमं श्रुतत्वात् न तस्या बाधः समुचितः, किन्तु मुष्टीनामेव । तेषां चरमश्रुतत्वाद्बाधः । अतश्च मुष्टीन् बाधित्वा सपादचतुःशरावपरिमितं पात्रमेकं निर्माय तेन वारचतुष्टयं निर्वापः करणीयः । तेन प्राकृतसङ्ख्याया अप्यनुग्रहो जायते । सप्तदशशराव ओदनोऽपि सम्पद्यत इति । मीमांसकाभिप्रायश्चैवम् । परन्तु अबाधेनोपपत्तौ बाधायोगात् प्राकृतस्य चतुर्मुष्टिनिर्वापस्य आहत्याऽपि वैकृत चतुःशरावपरिमितौदनस्य सम्पादयितुं शक्यत्वेन नात्र कस्यापि बाधः । सूत्रपर्यालोचनयाऽप्ययमेवार्थः प्रतीयत इति नवीनानामाशयः । एतच्च पूर्वमीमांसायां (१०।२।२७) स्पष्टम् ॥२८॥

[ गोवस्त्राजावीनां सप्तदश शतानि सप्तदश शतानि प्रत्येकं, वृषलीहस्तिवाहनरथानां सप्तदश सप्तदश, गोश्च एकोननवत्युत्तरं शतद्वयं वाजपेयस्य दक्षिणा ] ।

**सप्तदशसप्तदशशतानि ददाति गोवस्त्राजाद्यीनाम् ॥ २९ ॥**

गावश्च वस्त्राणि च अजाश्च अवयश्च, तेषां सप्तदश सप्तदश शतानि दद्यात् । गवां सप्तदशशतानि, तथा वस्त्राणां छागानामवीनां च सप्तदश शतानि दद्यादित्यर्थः ॥ २९ ॥

पूर्वोक्तदक्षिणातो दक्षिणान्तरं विदधाति—

**सप्तदश वृषल्यो निष्ककण्ठ्यः ॥ ३० ॥**

निष्कं सुवर्णाश्चत्वारः । तत्परिमितसुवर्णेन निर्मित आभरणविशेषो निष्कशब्देनोच्यते । निष्कः कण्ठे यासां ता दास्यः सप्तदश शतानि देयाः ॥ ३० ॥

**हस्तिवह्यकमहानसानाम् ॥ ३१ ॥**

हस्तिनां, वाहनानाम्, महारथानां च प्रत्येकं सप्तदश सप्तदश दद्यात् । महान्ति च तान्यनांसि चेति महानसाः । पाककरणगृहमिति केचित् । पूर्वोक्तसप्तदशशतसङ्ख्याक गोवस्त्राजाविरूपदक्षिणादानातिरिक्तं सप्तदशसप्तदशसङ्ख्याकनिष्ककण्ठवृषली-हस्तिवह्यक-महानसरूपं दक्षिणान्तरं दद्यादिति भावः ॥ ३१ ॥

पुनर्दक्षिणान्तरं विधातुं पूर्वपक्षमाह—

**जातेर्जातेश्चा सप्तदशगणपूरणात् ॥ ३२ ॥**

गोमहिष्यादीनां विभिन्नजातीयानामपि सप्तदशानां पशूनां सप्तदशकं सप्तदशकं दद्यात् । यावत्तेषां सप्तदशगणाः पूर्यन्ते । एवं च गवां सप्तदश, अश्वानां सप्तदश, महिषीणां सप्तदश एवं रीत्या भिन्नभिन्नजातीयान् पशून् सम्पाद्य तेषामेकैकस्यामपि जातौ सप्तदश सप्तदश दद्यादिति भावः ॥ ३२ ॥

**द्रव्येषु वा सप्तदशता सप्तदश सप्तदशानि ददातीति श्रुतेः ॥ ३३ ॥**

एवं प्राप्ते सिद्धान्तयति—

द्रव्येषु समानजातीयेषु गोद्रव्येष्वेव सप्तदशता सम्पादनीया, न विभिन्नजातीयेषु । कुतः ? "सप्तदश सप्तदशानि ददाति" इति श्रुत्या शाखान्तरगतया गोष्वेव तादृशसङ्ख्या सम्पादनविधानात् । अतश्च प्रथमतो गोवस्त्राजावीनामेकैकत्र सप्तदश सप्तदशानि दत्वा, पुनः निष्ककण्ठवृषली-हस्ति-वह्यकमहानसानां केवलं सप्तदश सप्तदशैव दत्वा ततो गवां सप्तदश सप्तदश गणान्, अर्थात् एकोननवत्युत्तरशतद्वयसङ्ख्याका गा दद्यादिति प्रकरणार्थः । एवं च गोषु एकादशन्यूनसहस्रद्वयं, वस्त्राजाविषु प्रत्येकं सप्तदश सप्तदश शतानि, निष्ककण्ठ वृषली-हस्तिवह्यकमहानसेषु केवलं सप्तदश सप्तदश सङ्ख्याः सम्पद्यन्ते ॥ ३३ ॥

इति द्वितीया कण्डिका ॥ २ ॥

---

[ शकटस्थस्य रथस्यावतारणं, वेद्यां स्थापनं च ]

**मरुत्वतीयान्तऽ "इन्द्रस्य वज्र" इति ( ९।५ ) रथावहरणम् ॥ १ ॥**

मरुत्वतीयग्रहप्रचारान्ते माहेन्द्रग्रहणात्पूर्वं रथवाहणाच्छकटाद् रथस्यावतारणमध्वर्युः कुर्यात् । "रथवाहणे करोति" ( १५।१२६ ) इति अग्रे वक्ष्यति । तदतिदेशोऽत्र क्रियते ॥ १ ॥

**दक्षिणेन चात्वालमावर्तयति "वाजस्येति ( ९।५ ) धूर्गृहीतम् ॥ २ ॥**

रथवाहणादवतारितं रथं धुरि गृहीत्वा चात्वालस्य दक्षिणतोऽदूरे वेदिमध्ये आनीय प्राङ्मुखं स्थापयेत्। "तं धूर्गृहीतमन्तर्वेद्यावर्त्तयति ( श० ब्रा० ५।१।४।४ ) इति श्रुतेः ॥ २ ॥

[ अश्वप्रोक्षणम् ]

**अश्वान्प्रोक्षत्यपोऽवनीयमानान्स्नातान्वाऽऽगतानप्स्वन्तरिति (९।६) ॥ ३ ॥**

स्नानार्थमप्सु प्रविष्टान्, अथवा स्नात्वा समागतान् चतुरः ( १४।३।१४ ) अश्वान् अध्वर्युरद्भिः प्रोक्षेत् ॥ ३ ॥

**"देवीराप" इति वा ॥ ४ ॥**

प्रोक्षणमन्त्रे विकल्पः ॥ ४ ॥

**समुच्चयो वा ॥ ५ ॥**

अथवा उक्ताभ्यामुभाभ्यामपि मन्त्राभ्यां समुच्चिताभ्यां प्रोक्षेत् ॥ ५ ॥

[ अश्वचतुष्टयस्य रथे योजनं, चतुर्थस्यानुगमनमात्रम् ]

**दक्षिणं युनक्ति "वातो वेति ( ९।१९ ) ॥ ६ ॥**

रथे दक्षिणमश्वं नियुञ्ज्यात् ॥ ६ ॥

**उत्तरं "वातरꣳहा" इति ( ९।८ ) ॥ ७ ॥**

**दक्षिणाप्रष्टिं "जवो यस्त" इति ( ९।९ ) ॥ ८ ॥**

रथे दक्षिणाप्रष्टिं तृतीयमश्वं नियुञ्ज्यात्। धुर्यपेक्षया प्रकृष्टं देशमश्नोतीति प्रष्टिः। प्राष्टिरिति प्राप्ते छान्दसो ह्रस्वः। दक्षिणायां धुरि प्रष्टिर्दक्षिणाप्रष्टिर्बाह्यो युग्यः ॥ ८ ॥

**अयुक्तश्चतुर्थोऽनु गच्छति सर्वयन्त्री ॥ ९ ॥**

चतुर्थोऽश्वो रथे अयुक्त एव सर्वयन्त्रोयेतः पश्चाद्गच्छेत् ॥ ९ ॥

[ रथयुक्ताश्वानां बार्हस्पत्यचरोरवघ्रापणम् ]

**बार्हस्पत्यमेनानाघ्रापयति "वाजिन" इति ( ९।९ ) ॥१०॥**

रथे युक्तानेनांश्चतुरोऽश्वान् बार्हस्पत्यं चरुमवघ्रापयेत्। प्रत्यश्वं मन्त्रावृत्तिः ॥ १०॥

[ बहिर्वेदि चतुरश्वयुक्तानां रथानां स्थापनम् ]

**चतुर्युजो युनक्त्यपरांस्तूष्णीं बहिर्वेदि षोडश ॥११॥**

एको रथश्चतुर्भिरश्वैर्युक्तो वेदिमध्ये स्थापितः; एवम् इतरान् षोडश रथान् वेदेर्बहिः स्थापयेत्। तेषु षोडशस्वपि प्रत्येकं चतुरश्चतुरोऽश्वान् युञ्ज्यादिति ॥११॥

[ ब्रह्मणो रथचक्रे आरोहणम् ]

**"देवस्याह" मिति ( ९।१० ) ब्रह्मा रथचक्रमारोहत्युत्करे नाभिमात्रे स्थाणौ स्थितम् ॥१२॥**

उत्करसमीपे नाभिप्रमाणे स्थाणौ आरोपितमौदुम्बरं सप्तदशारं चक्रं रथं ब्रह्माऽऽरोहेत् ॥१२॥

**ऐन्द्राः क्षत्रियस्य चक्रदुन्दुभ्याः ॥१३॥**

देवस्याहमिति मन्त्रेषु इन्द्रलिङ्गका मन्त्राः क्षत्रियस्य यजमानस्य यज्ञे प्रयोक्तव्याः । परिशेषाद् बृहस्पतिलिङ्गका ब्राह्मणकर्तृके वाजपेये प्रयोक्तव्याः ॥१३॥

[ वेदिसमीपे सप्तदशानां दुन्दुभीनां स्थापनम् ]

**सप्तदश दुन्दुभीना सजत्यनुवेदि पश्चादाग्नीध्रात् ॥१४॥**

आग्नीध्रशाला पूर्वमुक्ता (८।६।१०) तस्याः पश्चिमे भागे ॥१४॥

[ एकस्य दुन्दुभेर्मन्त्रेण वादनम्, इतरेषां तूष्णीम् ]

**"बृहस्पते वाजमित्येकं ( ९।११ ) दुन्दुभिमाहन्ति तूष्णीमितरान् ॥१५॥**

अध्वर्युः स्थापितानां सप्तदशदुन्दुभीनां मध्ये एकं दुन्दुभिं मन्त्रेण वादयेत्, अन्यांश्च तूष्णीम् ॥१५॥

[ सप्तदशानामिषूणां क्षत्रियकर्तृकं प्रक्षेपणम्, अन्त्ये इषुप्रक्षेपस्थाने शाखानिखननं च ]

**क्षत्रियः सप्तदशेषुप्रव्याधानस्यति तीर्थादुदीचः ॥१६॥**

इषूणां प्रव्याधा इषुप्रव्याधाः, तान् चात्वालादुत्तरस्यां दिशि क्षत्रियः क्षिपेत् ॥१६॥

[ यजमानस्य रथारोहणं, मन्त्रवाचनायाध्वर्युब्रह्मचारिशिष्यान्यतरस्य च ]

**अन्त्ये मिनोत्यौदुम्बरीꣳ शाखाम् ॥१७॥**

**"देवस्याह" मिति ( ९।१३ ) यजुर्युक्तमारोहति यजमानः ॥१८॥**

यो रथः पूर्वं मन्त्रैर्योजितः, तं रथं यजमान आरोहेत् ॥१८॥

**अध्वर्योश्च तूष्णीं ब्रह्मचार्यन्तेवासी वा वाचनाय ॥१९॥**

यजमानारोहणानन्तरमध्वर्योर्ब्रह्मचारी अध्वर्योः शिष्यो वा यजमानाय वक्ष्यमाण ( १४।३।२२ मन्त्रवाचनार्थं यजुर्युक्तमेव रथं तूष्णीमारोहेत् ॥१९॥

[ एकस्मिन् रथे क्षत्रियस्य वैश्यस्य वोपवेशनम् ]

**इतरेषामेकस्मिन् राजन्यो वैश्यो वा सौरप्रतिग्रहाय ॥२०॥**

एकस्मिन् यजुर्युक्ते रथे यजमान आरोहेत् । अध्वर्युब्रह्मचारी अध्वर्युशिष्यो वा पूर्वमारूढौ ( १८-१९ ) । इतरेषां षोडशानां रथानां मध्ये यस्मिन् कस्मिंश्चिद्रथे राजन्यवैश्ययोरन्यतरः कश्चित् सौरग्रहणार्थमारोहेत् ॥ २० ॥

[ धावनस्यावधिप्रदेशे सर्वेषां गमनम् ]

**आजिं शीघ्रं यन्ति ॥२१॥**

आजिशब्देन स्पर्द्धा उच्यते । स्पर्धया अहमहमिकया शीघ्रं सर्वे रथान् धावयन्ति । स्पर्धया धावनमाजिशब्देनोच्यत इति देवः । आजिर्धावनप्रदेशस्य अवधिर्भूविशेष इति सायणः ( तै० ब्रा० १।२।३ ) । पूर्वमौदुम्बरी शाखा अवधित्वेनोपहता । तां प्रति स्पर्द्धया रथान् प्रधावयन्तो गच्छन्तीत्यर्थः ॥२१॥

**"वाजिन" इति ( ९।१३ ) वाचयति ॥२२॥**

ततो गमने प्रारब्धे ब्रह्मचार्यन्तेवासी वा यजमानम् ॥२२॥

इति तृतीया कण्डिका ॥ ३ ॥



ब्रह्मा त्रिः साम गायति ॥ १ ॥

ब्रह्मा रथचक्रोपविष्ट एव सामानि त्रिर्गायेत् ॥ १ ॥

दुन्दुभीन्वादयन्ति ॥ २ ॥

"एष स्य" इति ( ६।१४-१५ ) प्रत्यृचं जुहोति ॥ ३ ॥

सकृद्गृहीतेनाज्येन द्वे आहुती आहवनीये जुहुयात् ॥ ३ ॥

अनुमन्त्रयते वा ॥ ४ ॥

अथवा एताभ्यामृग्भ्यां धावतोऽश्वाननुमन्त्रयेत्, जुहुयाद्वेति विकल्पः ॥ ४ ॥

उत्तरेण च तृचेन ( ६।१६-१८ ) ॥ ५ ॥

ततः "शं नो भवन्तु" ( ६।१७-१६ ) इति मन्त्रत्रयेण च सकृद्गृहीतमाज्यं प्रत्यृचं जुहुयात्। तृचेनाश्वाननुमन्त्रयेद्वा ॥ ५ ॥

सुन्वन् जयति ॥ ६ ॥

यजमान इतरान् रथान् जयेत्। यथा यजमानोऽग्रतो गमने भवति तथा कर्तव्यमित्यर्थः ॥ ६ ॥

शाखां प्रदक्षिणं कृत्वा यन्ति ॥ ७ ॥

यजमानप्रभृतयः सर्वे सप्तदशे प्रव्याधे निखातामौदुम्बरीं शाखां प्रदक्षिणं कृत्वा देवयजनं प्रत्यागच्छेयुः ॥ ७ ॥

आगतेषु ब्रह्माऽवरोहति "देवस्याह"मिति ( ६।१० ) ॥ ८ ॥

ततः सर्वेषु देवयजनमागतेषु सत्सु आदौ ब्रह्मा औदुम्बरात् ( आप० १८।४।८ ) रथचक्रादवरोहेत् ॥ ८ ॥

[ मन्त्रवादितस्य दुन्दुभेरवतारणम् ]

"एषा व" इति ( ६।१२ ) मन्त्रावहतमवहरते ॥ ६ ॥

अध्वर्युः मन्त्रेण वादितं दुन्दुभिं स्थाणुतो नीचैरवतारयेत् ॥ ६ ॥

तूष्णीमितरान् ॥ १० ॥

तत इतरान् षोडश दुन्दुभीन् स्थाणुभ्यस्तूष्णीमवतारयेदध्वर्युः ॥१०॥

अवरुह्य नैवारमालभते तीर्थे स्थितमा मा वाजस्येति ( ६।१६ ) ॥११॥

यजमानो रथादवरुह्य तीर्थे = चात्वालोत्करयोर्मध्ये स्थापितं नैवारं चरुं स्पृशेत् ॥११॥

यजुर्युक्तानाघ्रापयति "वाजिन" इति ( ६।१६ ) ॥१२॥

अध्वर्युर्मन्त्रेण युक्तान् त्रीन् अश्वान् नैवारं चरुमाघ्रापयेन्मन्त्रावृत्या ॥१२॥

चतुर्थं युक्त्वाऽध्वर्यवे ददाति ॥ १३ ॥

यजमानश्चतुर्थमश्वं रथे युक्त्वा तं रथमध्वर्यवे दद्यात् ॥ १३ ॥

सर्वेभ्यः षोडश ॥ १४ ॥

ततोऽध्वर्युसहितेभ्यः षोडशर्त्विग्भ्योऽन्यान् षोडश रथान् दद्यात् एकैकस्यैकैकम् ॥१४॥

[ रथोपविष्टाय क्षत्रियाय वैश्याय वा मधुग्रहसमर्पणम् ]

**अध्वर्युयजमानौ मधुग्रहꣳ सौरप्रतिग्रहाय प्रयच्छत उत्तरस्यां वेदिश्रोणाऽ उपविष्टाय ॥ १५ ॥**

"इतरेषामेकस्मिन् राजन्यो वैश्यो वा" ( १४।३।२० ) इति सौरप्रतिग्रहीता क्षत्रियो-वैश्यो वा उक्तः, योऽसौ रथमारूढः। रथादवतीर्य उत्तरस्यां वेदिश्रोणावुपविष्टाय तस्मै अध्वर्युयजमानौ मधुग्रहं प्रयच्छेताम् ॥ १५ ॥

**नेष्टा च सौरान् पश्चिमेन निर्हृत्य शालामपरेण हृत्वैकं प्रयच्छन्नाह्वानेन तऽ इमं निष्क्रीणामीति ॥१६॥**

नेष्टा हविर्धानं प्रविश्य सर्वान् सौरग्रहानादाय पश्चिमेन द्वारेण निष्क्रम्य दक्षिणेन मार्जालीयं गत्वा शालामपरेण उत्तरस्यां वेदिश्रोणावागत्य तेषां सौरग्रहाणां मध्ये एकं सौर-ग्रहं प्रयच्छन् अनेन त इति ब्रूयात्। तत इतरानपि सौरग्रहान् तस्मै प्रयच्छेत्। मधुग्रहं चाददीत ॥ १६ ॥

**ब्रह्मणे मधुग्रहं ददाति सपात्रम् ॥१७॥**

ग्रहशब्दस्य द्रव्यविषयत्वात् सपात्रमित्युच्यते ॥१७॥

**तꣳ स यथेष्टं कुरुते ॥१८॥**

तं मधुग्रहं ब्रह्मा पिबति वा, ददाति वा, सिञ्चति वा ॥ १८ ॥

इति चतुर्थी कण्डिका ॥ ४ ॥



**द्वादश स्रुवाहुतीर्जुहोत्यापतय इति ( ९।२० ) प्रतिमन्त्रं, वाचयति वा ॥१॥**

**षड् वोत्तराः ॥२॥**

ततः 'आयुर्यज्ञेन' ( ९।२१ ) इति षड्भिर्मन्त्रैः षट् स्रुवाहुतीर्जुहोति वाचयति वा ॥२॥

**नेष्टा पत्नीमानेष्यन् कौशं वासः परिधापयति चण्डातकं दहरं वा ॥३॥**

नेष्टा यूपारोहणार्थं पत्नीमानयिष्यन् दर्भनिर्मितं वासः परिधापयेत्। तच्च वासः चण्डातकं दहरं वा भवेत्। जघनमात्रप्रच्छादकं वासश्चण्डातकम्। "अर्द्धोरुकं विलासिन्या वासश्चण्डातकं विदुः" ( अमर० २।६।११४ ) इति। दहरं तु कौपीनम्। दहरशब्दस्याल्प-वाचकत्वात् ॥ ३ ॥

**अन्तरं दीक्षितवसनात् ॥४॥**

दीक्षितवसनस्योपरि कौशादि वासः परिधेयम् ॥ ४ ॥

**निश्रयणीं यूपऽ उच्छ्रयत्युत्तरां दक्षिणां वा ॥ ५ ॥**

दारुनिर्मिता सोपानपङ्क्तिर्निश्रयणी। "निश्रेणिस्त्वधिरोहिणी" इत्यमरः (२।२।१८)। यूपसंलग्नां निश्रयणीं दक्षिणस्यामुत्तरस्यां वा दिश्यारोहणायोच्छ्रयेत् ॥५॥

**आरोक्ष्यन् जायामभिमन्त्रयते जाय एहि स्वो रोहावेति ॥ ६ ॥**

यजमान आह्वयेत ॥ ६ ॥

रोहावेति प्रत्याह ॥७॥

"प्रजापतेरित्यारोहतः ॥८॥

निश्रेण्या जायापती आरोहेताम्। उभयोर्मन्त्रः ॥ ८ ॥

स्वरिति ( ९।२१ ) गोधूममालभते ॥९॥

आरुह्य यजमानो गोधूमं चषालमालभेत्। गोधूमश्चषालः पूर्वमुक्तः (१४।२।२२)॥९॥

शिरसा यूपमुज्जिहीतेऽमृता इति ( ९।२१ ) ॥ १० ॥

यजमानो यूपाग्रादूर्ध्वं स्वशिरः कुर्यात् ॥ १० ॥

अस्मे व इति ( ९।२२ ) दिशो वीक्षते ॥ ११ ॥

तत्रस्थो यजमानः ॥ ११ ॥

सप्तदशाश्वत्थपत्रोपनद्धानूषपुटानुदस्यन्त्यस्मै विशः ॥ १२ ॥

ततोऽधःस्थिता यजमानप्रजाः पुत्रपौत्राद्याः सप्तदशसङ्ख्यान् पिप्पलपत्रैर्बद्धान् ऊषाणां = क्षारमृत्तिकानां पुटान् यजमानं प्रति ऊर्ध्वान् क्षिपेयुः ॥१२॥

प्रतिगृह्णात्येनान् ॥ १३ ॥

तानूषपुटान् यजमानोऽञ्जलिना प्रतिगृह्णीयात् ॥ १३ ॥

"नमो मात्र" इति (९।२२) भूमिमवेक्षते ॥१४॥

तत्र स्थित एव यजमानः ॥ १४ ॥

सरुक्मे बस्तचर्मण्यवरोहति ॥१५॥

सपत्नीको यजमानो यूपात् निश्रेण्याऽवतीर्य सरुक्मेऽजचर्मणि ( अध्वर्युणा प्रथमं स्तृते ) रुक्मस्योपरि अवतरेत्। रुक्मः परिमण्डलः सौवर्ण आभरणविशेषः। बस्तो मुष्करः साण्डश्छागः ॥ १५ ॥

भूमौ वा ॥ १६ ॥

सरुक्मायां भूमौ वाऽवतरेत्। सरुक्मेऽजचर्मणि वेति विकल्पः ॥ १६ ॥

उत्तरवेदिमपरेणौदुम्बरीमासन्दीं बस्तचर्मणाऽऽस्तृणातीयं तऽ इति ( ९।२२ ) ॥ १७ ॥

अध्वर्युरौदुम्बरीमासन्दीं निधाय तत्र प्राग्ग्रीवमुत्तरलोम अजचर्माऽऽस्तृणीयात्॥१७॥

सुन्वन्तमस्यामुपवेशयति "यन्ताऽसीति" ॥ १८ ॥

बाहुगृहीतं यजमानम् ॥ १८ ॥

नैवारेण प्रचरति ॥ १९ ॥

प्राक् स्विष्टकृत औदुम्बरे पात्रेऽप आसिच्य पयश्च सप्तदशान्नान्यावपति॥२०॥

अपः पयः, सप्तदशान्नानि च प्रक्षिपेत्। पूर्वं ( ४।२।७ ) षण्णां गवां दोहनमुक्तम्। अत्र तु सप्तगुणितानां षण्णां दोहनं कृत्वा सप्तानां षड्वर्गाणां पयोऽत्रासिच्यते ॥ २० ॥

यावत्स्मृति वैकृवर्जम् ॥ २१ ॥

पक्वमन्नं वर्जयित्वा यावतां स्मरणं तावन्ति वाऽन्नानि क्षिपेत् ॥ २१ ॥

अभोजनं तस्योच्छ्वासात् ॥ २२ ॥

उत्सृज्य तस्यान्नस्य जीवनपर्यन्तं भोजनं न कुर्यात् ॥ २२ ॥

**स्रुवेण सम्भृताज्जुहोति "वाजस्येम" मिति ( ९।२३-२९ ) प्रतिमन्त्रम् ॥ २३ ॥**

एकत्रकृतात् उदकदुग्धसर्वान्नादेः सकाशाज्जुहुयात् । सप्तैतानि जुहोतिकर्माणि । अतो ग्रहणे चतुर्मुष्टिकानां हविषां सप्तगुणितानां ग्रहणम् ॥ २३ ॥

**शेषेणाभिषिञ्चति यजमानं "देवस्य त्वे" ति ( ९।३० ) ॥२४॥**

शेषश्च हुतशेषः ॥ २४ ॥

**सरस्वत्यै वाच ( ९।३० ) स्थाने विश्वेषां त्वा देवानाम् ॥२५॥**

**सरस्वत्यै त्वेति वा ॥२६॥**

**सम्राडयमसावित्याह नामग्राहं त्रिरुच्चैः ॥२७॥**

**अग्निरेकाक्षरेणेत्यनुवाकं (९।३१-३४) द्वादशवत्कृत्वा नैवारस्विष्ट कृदिडं करोति ॥ २८ ॥**

द्वादशवदिति ( १४।५।१) जुहोति वाचयति वा ( श० ब्रा० ५।२।२।१६ ) ॥ २८ ॥

**माहेन्द्रादि च ॥ २९ ॥**

चरोर्भागप्राशनान्ते माहेन्द्रग्रहग्रहणादारभ्य प्राकृतं कर्म कुर्यात् ॥ २९ ॥

**अवरुह्य गच्छति स्तोत्राय प्रहितः ॥३०॥**

अध्वर्युणा प्रेरितो (५।२।२।१२) यजमानः अवतीर्य स्तोत्रमुपासितुं सदो गच्छेत् ॥३०॥

**उज्जितिभ्यो वोत्तरो माहेन्द्रः ॥ ३१ ॥**

**षोडश्यन्ते स्तोत्रं चमसैरेव ॥ ३२ ॥**

षोडशिग्रहयागान्ते अतिरिक्तं स्तोत्रं चमसैरेव भवति न ग्रहैः ॥ ३२ ॥

**ऋत्विक्चमसेषु सप्तदशावनयति द्वौ द्वौ ॥३३॥**

सप्तदश सोमग्रहान् चमसेषु निययेन् ॥ ३३ ॥

चमसा नव, ग्रहाश्च सप्तदश । तत्र नवसु द्वयोर्निनयनं न सम्भवति, एकस्योनत्वात् इत्यर्थादेकस्यैकस्मिन् पात्रे एकस्य निनयने सिद्धेऽन्त्यत्वादाग्नीध्रचमसे तस्यैकस्य निनयने प्राप्त आह—

**एकं नेष्टुः ॥३४॥**

चमसेऽवनयेत् ॥३४॥

**उदवसानीयान्ते यूपवेष्टनान्यध्वर्यवे ददाति ॥३५॥**

सप्तदश ॥३५॥

**यथोपयुक्तकण्ठ० हिरण्यस्रजः ॥३६॥**

या या स्रग् येन येन मुक्ता गले बद्धा, तां तां तस्मै दद्यात् ॥३६॥

पञ्चमी कण्डिका ॥ ५ ॥

इति श्रीकात्यायनमहर्षिकृते श्रौतसूत्रे महामहोपाध्याय पण्डित श्री श्रीप्रभुदत्तशास्त्रिसूनु विद्याधरशर्मकृतायां सरलाख्यायां वृत्तौ वाजपेयनिरूपणश्चतुर्दशोऽध्यायः ।

# पञ्चदशोऽध्यायः ।

## राजसूययज्ञः ।

### राज्ञो राजसूयोऽनिष्टिनो वाजपेयेन ॥१॥

येन राज्ञा वाजपेयो न कृतः, स राजसूययज्ञं कुर्यात्। अत्र राजशब्देन क्षत्रियजातिरभिधीयते ॥ १ ॥

एवं राजसूयं राजकर्तृकं विधाय तदन्तर्गतानामिष्ट्यादीनां प्रयोगमभिधत्ते—

[ राजसूयान्तर्गतानामिष्टिसोमपशूनां न तन्त्रता ]

### इष्टिसोमपशवो भिन्नतन्त्राः कालभेदात् ॥ २ ॥

"अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति" ( श० ब्रा० ५।२।३।२ ) इत्याद्या इष्टयः, "आदित्यां मल्हां गर्भिणीमालभते" (५।४।४।८) इत्यादयः पशवः, "पवित्रश्चतुर्दीक्ष" (३) इत्यादयः सोमयागाश्च विहिता राजसूयप्रकरणे। एतेषां समुदितानामेव राजसूय इति संज्ञा। तेषां "राजसूयेन स्वाराज्यकामो यजेत" इति वाक्येन सर्वेषामिष्टिपश्वादीनामेकफलसाधनत्वेन तन्त्रेणानुष्ठानं प्राप्तम्। तन्न कर्तव्यम्। किन्तु भिन्नतन्त्राः पृथक् पृथगनुष्ठेयाः। कुतः? कालभेदात्। इष्ट्यादीनां पृथक् पृथक् कालस्य विहितत्वेन भिन्नकालानुष्ठेयानामेकतन्त्रेणानुष्ठानासम्भवात् पृथगेव प्रयोग इति। यद्यपि एकफलसाधनानामपि षण्णां दर्शपूर्णमासयागानां त्रिकस्य त्रिकस्य कालभेदादेव प्रयोगभेदः सिद्ध इति तेनैव न्यायेन अत्रापि तद्भेदात्प्रयोगभेदः सिद्धत्येव, तथापि तत्तद्वाक्यविहितानामपीष्टिपश्वादीनां "राजा राजसूयेन स्वराज्यकामो यजेत" इति वाक्यश्रुतेन यजिना सङ्ग्रहात् सर्वेषां तेषामेकमेव फलम्। अतो नात्र फलभेदप्रयुक्ता भिन्नतन्त्रता। किन्तु कालभेदप्रयुक्ता इति ज्ञापयितुमिति सूत्रार्थः ॥ २ ॥

[ पवित्रसंज्ञकः सोमयागः ]

### पवित्रश्चतुर्दीक्षः सहस्रदक्षिणः ॥ ३ ॥

राजसूये प्रथमं पवित्रसंज्ञकश्चतुर्दीक्षव्युपसुत्क एकसुत्यः सहस्रगोदक्षिणोऽग्निष्टोमसंस्थः सोमयागो भवति। तिस्रोऽनूबन्ध्यास्त्रैधातव्युदवसानीयांऽश्वदाभ्यौ च। एवं फाल्गुनशुक्लाष्टम्यां पवित्रस्य समाप्तिः। आरम्भस्तु प्रतिपदीत्यनुपदमेव वक्ष्यति ॥ ३ ॥

### माघीपक्षयजनीये दीक्षा ॥ ४॥

माघ्याः पक्षेऽतीते यद् यजनीयं फाल्गुनशुक्लप्रतिपत्। तत्र पवित्रयागस्य दीक्षा कर्त्तव्या ॥ ४ ॥

### तदन्ते पूर्णाहुतिर्गृहेष्विच्छतो वरदक्षिणा ॥ ५ ॥

तस्य पवित्रस्यान्ते फाल्गुनशुक्लनवम्यां यजमानगृहेष्वेव वरो दक्षिणा यस्यां सा वरदक्षिणा पूर्णाहुतिर्होतव्या ( ५।२।२।१ ) ॥ ५ ॥

[ अनुमत्यादीनां पञ्चानामिष्टीनामनुष्ठानम् ]

**श्वः प्रभृत्यन्वहं पञ्चोत्तराणि ॥ ६ ॥**

ततः श्वः फाल्गुनशुक्लदशमीमारभ्य पञ्चसु दिनेषु वक्ष्यमाणानि अनुमत्यादीनि पञ्च-हवींषि निर्वपेत् ॥ ६ ॥

तान्येवाह—

**अष्टाकपालोऽनुमत्यै ॥ ७ ॥**

दशम्यामनुमत्यै अष्टाकपालः पुरोडाशः कार्यः ॥ ७ ॥

अत्र विशेषमाह—

**शम्यायाः पश्चाद्धविष्यस्कन्नꣳ स्रुवे कृत्वा दक्षिणाग्न्युल्मुकमादाय दक्षिणा गत्वा स्वयं प्रदीर्णे ईरिणे वाऽग्नौ जुहो "त्येष ते निर्ऋत" इति ॥ ( ६।३५ ) ॥ ८ ॥**

"चक्षुषे त्वेतीक्षते" ( २।५।८ ) इति पेषणोत्तरं हविरीक्षणमुक्तं, तदन्ते तण्डु-लरूपं पिष्टरूपं वा हविष्यं पेषणे क्रियमाणे शम्यायाः पश्चात्कृष्णाजिनस्योपरि पतितं भवेत्, तत् खादिरे स्रुवे निधाय दक्षिणाग्नेरुल्मुकमादाय दक्षिणस्यां दिशि गत्वा स्वयं प्रदीर्णे = स्फु-टिते, ईरिणे = ऊषरे वा भूभागे उल्मुकं संस्थाप्य तद्धविर्जुहुयात् ( ५।२।२।२ ) ॥ ८ ॥

**अनपेक्षमेत्यानुमतस्य संवपनादि करोति ॥ ६ ॥**

तस्माद्धोमदेशात्पृष्ठतोऽनवलोकयन्तो ब्रह्मयजमानाध्वर्यव आगत्य अध्वर्युरनुमतीष्टि-संबन्धिनो हविषः "पात्र्याꣳ सपवित्रायां पिष्टान्यावपति ( २।५।१० ) इति संवपनादि कर्म कुर्यात् ॥ ६ ॥

[ अनुमत्यादीनां दक्षिणाविधानम् ]

**वासो देयम् ॥ १० ॥**

अनुमतीष्टेर्वासो दक्षिणा ॥१०॥

**हिरण्यमाग्नावैष्णवे ॥ ११ ॥**

श्वोभूते एकादश्यामाग्नावैष्णव एकादशकपालः पुरोडाश उद्धरणादि कर्मापवर्गान्तः। तत्र हिरण्यं दक्षिणा ॥११॥

**पुनरुत्सृष्टो गौरग्नीषोमीये ॥ १२ ॥**

द्वादश्यामग्नीषोमावेकादशकपालेन पुरोडाशेन यजेत्। तत्र पुनरुत्सृष्टो गौर्दक्षिणा। पुनरुत्सृष्टशब्दार्थः पूर्वमुक्तः ( ७ । १ । ७ ) ॥ १२ ॥

**अनड्वान् साण्ड ऐन्द्राग्ने ॥ १३ ॥**

त्रयोदश्यामैन्द्राग्नो द्वादशकपालः पुरोडाशः। तत्र प्रजनयिताऽनड्वान् दक्षिणा ॥१३॥

**गौराग्रयणे ॥१४॥**

चतुर्दश्यामाग्रयणेष्टिर्नित्याग्रयणेष्टिवत् त्रिहविष्का ( ४।६।१६ ) राजसूयिका कर्तव्या। तस्याः प्रथम जोगौर्दक्षिणा। आग्रयणेष्टिस्वरूपं पूर्वमुक्तम् ( ४।६।१६ ) ॥ १४ ॥

[ नित्येभ्यश्चातुर्मास्येभ्योऽतिरिक्तानां राजसूयाङ्गभूतानां चातुर्मास्यानामनुष्ठानम् ]

**चातुर्मास्यप्रयोगः फाल्गुन्याम् ॥ १५ ॥**

फाल्गुन्यां पूर्णिमायां चातुर्मास्यप्रयोगं राजसूयिकमपूर्वं प्रारभेत् । तत्र पूर्णिमायां वैश्वदेवं पर्व । आषाढ्यां वरुणप्रघासाः । कार्तिक्यां साकमेधा द्व्यहम् (१) । शुनासीरीयमतः । यथाकालमेतानि चत्वारि पर्वाण्यनुतिष्ठेत् ( ५।२।३।१-४ ) ॥१५॥

[ चातुर्मास्यानन्तरं कृष्णपक्षे पौर्णमासेष्टिः, शुक्लपक्षे दर्शेष्टिश्च संवत्सरं यावत्प्रतिदिनम् ]

**पौर्णमासेन कृष्णपक्षानैत्यामावास्येन शुक्लानाशुनासीरीयात् ॥१६॥**

फाल्गुन्यां वैश्वदेवं पर्व कृत्वा प्रतिपत्प्रभृति अमापर्यन्तं कृष्णपक्षे प्रत्यहं पौर्णमासेष्टिरपूर्वा राजसूयिकी नित्यपौर्णमासेष्टिवत्कार्या। शुक्लपक्षे तु प्रत्यहं दर्शेष्टिः पिण्डपितृयज्ञवर्जिता कार्या । एवं शुनासीरीयपर्यन्तं कृष्णपक्षे पौर्णमासयागः । शुक्लपक्षे दर्शयागः । प्रतिपदि प्रथमं राजसूयिकीष्टिः, पश्चान्नित्यदर्शपूर्णमासेष्टिः ॥१६॥

**पवित्रदीक्षास्थाने शुनासीरीयम् ॥१७॥**

आगामिनि वर्षे पवित्रदीक्षास्थाने फाल्गुनशुक्लप्रतिपदि शुनासीरीयं राजसूयिकं भवति । नित्यं तु फाल्गुन्यां पौर्णमास्यामेव ॥१७॥

[ पञ्चवातीयहोमः, तस्य दक्षिणा च ]

**पञ्चवातीयमाहवनीयं प्रतिदिशं व्युह्य मध्ये च स्रुवेण जुहोत्यग्निनेत्रेभ्य इति ( ९।३४ ) प्रतिमन्त्रम् ॥१८॥**

ततः कस्मिंश्चिद्दिने पञ्चवातीयाख्यं होमं कुर्यात् । तत्राहवनीयखरमध्य एव अग्नेश्चतुर्दिक्षु प्रेरणं कृत्वा मध्ये चावशिष्य स्रुवेणाज्यं पञ्चसु यथा लिङ्गं जुहुयात् ॥ १८ ॥

**उत्तराः समस्य "ये देवा" इति ( ९।३७ ) प्रतिमन्त्रम् ॥१९॥**

पञ्चधा विभक्तमाहवनीयमेकीकृत्य ये देवा इति पञ्चभिर्मन्त्रैः प्रत्येकं जुहुयात् ॥१९॥

**त्रियुक्तोऽश्वरथो दक्षिणा ॥२०॥**

अस्य पञ्चवातीयस्य कर्मणः त्रिभिरश्वैर्युक्तो रथो दक्षिणा बोध्या ॥२०॥

---

( १ ) तत्र चतुर्दश्यां राजसूयिकं दर्शं समाप्यानीकवत्यादि । पञ्चदश्यां त्रैयम्बकान्तं कृत्वा राजसूयिकं कर्म कुर्यात् । फाल्गुनशुक्लप्रतिपदि शुनासीरीयमित्युत्सृष्टचातुर्मास्यस्य । पुनः पुनश्चातुर्मास्यानि प्रयुञ्जानस्य-नित्यदर्शपूर्णमासवन्नित्यान्यपि चातुर्मास्यानि भवन्ति । पूर्वं राजसूयिकानि पश्चान्नित्यानि । तत्र राजसूयारम्भतः प्रथममारब्धानां नित्यानां चातुर्मास्यानां शुनासीरीयं पर्व फाल्गुन्यां पौर्णमास्यां प्रथमं कृत्वा ततो राजसूयिकं वैश्वदेवं कुर्यात् । प्रतिपदि च प्रथमं नित्यं वैश्वदेवं कृत्वा ततो राजसूयिकं पौर्णमासं, ततो नित्यम् । आषाढशुक्लचतुर्दश्यां राजसूयिकमामावास्यं समाप्य राजसूयिककरम्भपात्रकरणम् । पौर्णमास्यां राजसूयिकान्वरुणप्रघासान्समाप्य पुनरुद्धृत्य राजसूयिकं दर्शं कुर्यात् । ततो नित्यवरुणप्रघासानां समारोपादि करम्भपात्रकरणान्तम् । प्रातः प्रतिपदि प्रथमं नित्यान्वरुणप्रघासान्समाप्य ततो राजसूयिकं पौर्णमासं ततो नित्यम् । कार्त्तिकशुक्लचतुर्दश्यां राजसूयिकं दर्शं कृत्वा राजसूयिकसाकमेधानामनीकवत्यादिगृहमेधीयान्तम् । प्रातः पौर्णमास्यां दर्विहोमादि त्र्यंबकान्त राजसूयिकं दर्शं कुर्यात् । ततः समारोपादि नित्यसाकमेधानामनीकवत्यादि गृहमेधीयान्तम् । प्रतिपदि च दर्विहोमादि त्र्यंबकान्तं नित्यं कृत्वा प्रथमं राजसूयिकं पौर्णमासं ततो नित्यं कुर्यात् । ततः पवित्रदीक्षास्थाने फाल्गुनशुक्लप्रतिपद्येव राजसूयिकं शुनासीरीयम् । नित्यं चागामिन्यां फाल्गुन्यां पौर्णमास्यामेव भविष्यति । अतः फाल्गुनशुक्लप्रतिपदि पवित्रदीक्षास्थाने राजसूयिकं शुनासीरीयं कुर्यात् ।

[ व्याधिनिवृत्तये च पञ्चवातीयानुष्ठानम् ]

**व्याहितस्याप्येवम् ॥२१॥**

व्याहितो व्याधितः। तेनापि व्याधिनिवृत्यर्थं पञ्चवातीयाख्यं कर्मानुष्ठेयम्। इदं च राजसूयाद्बहिस्त्रयाणां वर्णानामाहिताग्नीनामाभ्युदयिकान्वारम्भणीयापूर्वं भवति ॥२१॥

[ इन्द्रतुरीयकर्मानुष्ठानम् ]

**इन्द्रतुरीयम् ॥ २२ ॥**

प्रातर्द्वितीयायामिन्द्रतुरीयसंज्ञकं कर्म कुर्यात्। इन्द्रस्तुरीयश्चतुर्थो हविर्देवता यस्मिन् तत् ( ५।२।४।११ ) ॥२२॥

तदेवाह—

**आग्नेयः ॥२३॥**

आग्नेयोऽष्टाकपालः प्रथमं हविरिन्द्रतुरीये ॥ २३ ॥

**वारुणो यवमयश्चरुः ॥२४॥**

द्वितीयं हविः ॥२४॥

प्रसङ्गादाह—

**अन्यत्राऽपि ॥ २५ ॥**

इतोऽन्यत्रापि वारुणो यवमय एव कार्यः ॥ २५ ॥

**रौद्रश्चरुर्गावेधुकः ॥ २६ ॥**

तृतीयं हविः। चकारादन्यत्रापि रौद्रो गावेधुक एव। गवेधुका महतां जलजानां तृणानां श्वेतानि फलानि। गवेधुकानां विकारो गावेधुकः ॥ २६ ॥

**वहिनीदध्यैन्द्रम् ॥२७॥**

अनो वहतीति वहिनी गौः। तस्या दधि वहिनीदधि चतुर्थं हविरिन्द्रदेवताकं भवति ॥२७॥

**सैव दक्षिणा ॥२८॥**

अस्मिन्निन्द्रतुरीये सैव वहिनीगौर्दक्षिणा देया ॥ २८ ॥

इति पञ्चदशेऽध्याये प्रथमा कण्डिका ॥ १ ॥

[ अपामार्गतण्डुलहोमो दक्षिणाग्नौ। तत्रोत्तरस्यां वितानसाधनम् ]

**अपामार्गहोमः ॥ १ ॥**

तृतीयायामपामार्गहोम उद्धरणादिकर्मापवर्गान्तस्तूष्णीं कर्तव्यः। तत्र दक्षिणाग्ने रुद्धरणम् ( ५।२।४।१४ ) ॥ १ ॥

तद्विधिमुपदिशति—

**स्रुवे पालाशे वैकङ्कते वाऽपामार्गतण्डुलान् कृत्वा ॥ २ ॥**

तेषां वक्ष्यमाणविधिना होमः कर्तव्यः ॥ २ ॥

**त्र्यम्बकवद्दिगग्नी ॥ ३ ॥**

चातुर्मास्यान्तर्गते साकमेधपर्वणि त्र्यम्बकेष्टिरुक्ता। ( ५।१०।१-२१ ) तत्र या दिगु-दीची, (५।१०।७) यश्चाग्निः दक्षिणाग्निः, अत्रापि तावेव दिगग्नी भवत इत्यर्थः। अत्रोदीच्यां गमनमात्रमेव। वितानं तु प्राङ्मुखमेव ॥ ३ ॥

**प्राची वा ॥ ४ ॥**

अत्र दिक् उदीची प्राची वा गृह्यते । अतोऽत्र गमनमात्रे विकल्पः ॥ ४ ॥

**अग्ने सहस्वेत्युल्मुकादानम् ( ६।३७ ) ॥ ५ ॥**

अन्वाहार्यपचनात् ॥ ५ ॥

**"देवस्यत्वे"ति ( ६।३८ ) जुहोति ॥ ६ ॥**

स्रुवस्थानपामार्गतण्डुलान् उल्मुकमुपसमाधाय जुहुयात् प्रागुदग्वा गत्वा ॥ ६ ॥

**"रक्षसां त्वे"ति ( ६।३८ ) स्रुवमस्यति तां दिशं यस्यां जुहोति ॥ ७ ॥**

यस्यां दिशि प्राच्यामुदीच्यां वा गत्वा जुहोति, तां दिशं प्रति स्रुवं प्रक्षिपेत् ॥ ७ ॥

**"अवधिष्म रक्ष" ( ६।३६ ) इत्यायन्त्यनपेक्षम् ॥ ८ ॥**

पश्चादनवलोकयन्तो देवयजनदेशं प्रत्यागच्छेयुः ॥ ८ ॥

**अभिचार्यमाणोऽपि तां दिशं गत्वा ॥ ६ ॥**

राजसूययाजिनोऽन्योपि यः परेण अभिचारकर्मणा मार्यमाणः, स मातृश्राद्धमन्वारम्भणीयां च कृत्वा दक्षिणाग्निमुद्धृत्य पूर्ववद् द्रव्यं निष्पाद्य दक्षिणाग्न्युल्मुकमादाय यस्यां दिश्यवस्थितः परोऽभिचारं करोति, तां दिशं गत्वाऽपामार्गहोमं कुर्यात् ॥ ६ ॥

**अभिचरतो नामादिशेद्धोम-स्रुवप्रासना-ऽऽगमनेषु ॥ १० ॥**

अभिचरन् होम-स्रुवप्रासनागमनमन्त्रेषु शत्रोर्नाम यथास्थानमादिशेत् ॥ १० ॥

[ त्रिहविष्कास्त्रिषंयुक्ता नाम इष्टयः, तद्दक्षिणा च ]

**त्रिषंयुक्तेषु ॥ ११ ॥**

त्रिषंयुक्तानीति वक्ष्यमाणानां त्रिहविष्काणां तिसृणामिष्टीनामभिधानम् । त्रिभिर्हविर्भिः संयुक्तं कर्म त्रिषंयुक्तम् ॥ ११ ॥

**आग्नावैष्णव, ऐन्द्रावैष्णवो, वैष्णवो, वामनो दक्षिणा ॥ १२ ॥**

ततः फाल्गुनशुक्लप्रतिपद्दिने त्रिषंयुक्ताख्यां प्रथमामिष्टिं कुर्यात् । तत्र प्रथमे त्रिषंयुक्ते आग्नावैष्णवः एकादशकपालः प्रथमं हविः । ऐन्द्रावैष्णवश्च द्वितीयं हविः । वैष्णवश्चरुस्तृतीय हविः । अस्मिन् प्रथमे त्रिषंयुक्ते वामनो दक्षिणा ( ५।२।५।१ ) ॥ १२ ॥

स च वामनः किंजातीय इत्याह—

**अलिङ्गग्रहणे गौः सर्वत्र ॥ १३ ॥**

यत्र जातिरूपं लिङ्गं न गृह्यते तत्र सर्वत्र गोजातिर्ज्ञेया । अतोऽत्र वामनो गौर्ग्राह्यः ॥१३॥

**आग्नापौष्ण, ऐन्द्रापौष्णः, पौष्णः श्यामो दक्षिणा ॥१४॥**

श्वो द्वितीयायां द्वितीये त्रिषंयुक्ते आग्नापौष्ण एकादशकपालः प्रथमं हविः । ऐन्द्रापौष्णो द्वितीयम् । पौष्णस्तृतीयम् । अत्र श्यामो गौर्दक्षिणा ॥ १४ ॥

**अग्नीषोमीय, ऐन्द्रासौमः सौम्यो बभ्रुर्दक्षिणा ॥ १५ ॥**

श्वस्तृतीयायां तृतीये त्रिषंयुक्ते अग्नीषोमीय एकादशकपालः प्रथमं हविः । ऐन्द्रासौमयश्च द्वितीयम्, सौम्यश्चरुस्तृतीयम् । बभ्रुः = धूसरवर्णो गौर्दक्षिणा ॥ १५ ॥

एकादशकपालः प्रथमः प्रथमश्चरव इतरे ॥ १६ ॥

पूर्वोक्तेषु त्रिषु त्रिषंयुक्तेषु प्रथमः प्रथम एकादशकपालः पुरोडाशः कर्तव्यः । इतरे च चरवोऽनुष्ठेयाः ॥ १६ ॥

वैष्णवस्त्रिकपालो वा ॥ १७ ॥

प्रथमे त्रिषंयुक्ते तृतीयं हविर्वैष्णवस्त्रिकपालः पुरोडाशः कार्यः, पूर्वोक्तश्चरुर्वेति विकल्पः ॥ १७ ॥

श्वो वैश्वानरो द्वादशकपालो वारुणश्चैकतन्त्रे ॥१८॥

त्रिषंयुक्तेभ्यो द्वितीयदिने तृतीयायां वैश्वानरो द्वादशकपालः पुरोडाशो, यवमयो वारुणश्च, इमे द्वे हविषी एकतन्त्रे भवतः (श० ब्रा० ५।२।५।१३) ॥१८॥

श्वौ वैकः ॥१६॥

अथवा वैश्वानरवारुणयोर्मध्ये एको वारुणः श्वो वैश्वानराद् द्वितीयेऽहनि चतुर्थ्यां कार्यः । एकतन्त्रतापक्षे तृतीयायाम् । अतन्त्रतापक्षे दिनद्वयेऽनुष्ठानमिति भावः ॥१६॥

ऋषभः पूर्वस्य दक्षिणा ॥२०॥

पूर्वस्य वैश्वानरस्य ऋषभो दक्षिणा (५।२।५।१७) ॥२०॥

कृष्णं वास उत्तरस्याभावेऽकृष्णम् ॥२१॥

इति द्वितीया कण्डिका ॥ २ ॥



[ द्वादशानां रत्नहविषामनुष्ठानं तत्तद्गृहे गत्वा द्वादशसु दिनेषु ]

द्वादशोत्तराणि रत्नहवीꣳषि ॥१॥

ततस्तस्मिन्नेव दिने समानतन्त्रतापक्षे तृतीयायां चतुर्थ्यां वा वक्ष्यमाणानि द्वादश हवींषि रत्नहविःसंज्ञानि प्रारभेत ॥१॥

प्रतिगृहमेकैकꣳ श्वः ॥२॥

एतानि द्वादश रत्नहवींषि वक्ष्यमाणेषु द्वादशसु गृहेषु फाल्गुनशुक्लतृतीयाप्रभृति चतुर्थीप्रभृति वा प्रतिदिनं प्रतिगृहमेकैकं कृत्वा निर्वपेत् ॥ २ ॥

समारूढनिर्मथितेऽग्नयेऽनीकवते सेनान्यः ॥३॥

सेनापतेर्गृहे गत्वाऽष्टाकपालः पुरोडाशः कार्यः (श० ब्रा० ५।३।१।१-२) ॥ ३ ॥

बार्हस्पत्यश्चरुः पुरोहितस्य ॥४॥

ऐन्द्रो यजमानस्य ॥५॥

एकादशकपालः ॥ ५ ॥

अदित्यै महिष्याः ॥६॥

चरुः ॥ ६ ॥

**वारुणः सूतस्य ॥७॥**

अश्वसारथेर्गृहे गत्वा वारुणो यवमयश्चरुः कार्यः ॥ ७ ॥

**मारुतो ग्रामण्यः ॥८॥**

ग्रामं नयतीति ग्रामणीर्वैश्यानां महत्तरः । तस्य गृहे सप्तकपालः ॥ ८ ॥

**सावित्रः क्षत्तुः ॥९॥**

क्षत्ता प्रतीराहो दूतो वा यष्टिहस्तोऽन्तःपुराध्यक्षो वा । तस्य गृहे अष्टाकपालो द्वादशकपालो वा सावित्रः पुरोडाशः ॥ ९ ॥

**आश्विनः सङ्ग्रहीतुः ॥१०॥**

सङ्ग्रहीता रथयोजयिता । तद्गृहे आश्विनो द्विकपालः ॥१०॥

**पौष्णो भागदुघस्य ॥११॥**

भागमंशं दोग्धीति भागदुघो भोजयिता परिवेष्टा । तद्गृहे पौष्णश्चरुः ॥११॥

**रौद्रो यजमानस्याक्षावाप-गोविकर्तगृहेभ्यो गवेधुकानाम् ॥१२॥**

यजमानगृहे गवेधुकानां रौद्रश्चरुः कार्यः । गवेधुकाश्च अक्षावापगृहात् गोविकर्त्त-गृहाच्चानेयाः । अक्षावापोऽक्षदेवा । गोविकर्तो हालिकः ॥१२॥

**चतुर्गृहीतं जुषाणोऽध्वाज्यस्य वेत्विति दूतस्य ॥१३॥**

दूतस्य प्रेष्यस्य गृहे चतुर्गृहीतमाज्यं जुषाण इति मन्त्रेणाहवनीये जुहुयात् ॥१३॥

**नैर्ऋतः परिवृत्त्यै कृष्णव्रीहीणां नखनिर्भिन्नानां दर्विहोम "एष ते निर्ऋत" इति ( ९।३५ ) ॥१४॥**

पतिपुत्ररहिता स्त्री परिवृत्तिः । तस्या गृहे नखैर्वितुषीकृतानां कृष्णव्रीहीणां नैर्ऋत चरोर्दर्विहोमः । स च एष त इति कार्यः ॥१४॥

**षट्कृते वा ॥१५॥**

जुहोति । ततश्च यजुतिजुहोत्योर्विकल्पः । यजतिपक्षे च स्वाहाकारवषट्कारयोः समुच्चयः कार्यः ॥ १५ ॥

[ रत्नहविषां दक्षिणा । तत्र दशम्या इष्टेस्तिस्रो दक्षिणा ]

**यथासङ्ख्यं दक्षिणा हिरण्यर्ठ०, शितिपृष्ठ, र्षभो, धेनु, रश्वः, पृष, न्छ्येतोऽ, नड्वा,न्यमावभावेऽनुपूर्वजौ, श्याम,स्त्रिदक्षिणो रौद्रः शितिबाहुशितिवालयोरन्यतरः ॥१६॥**

उक्तानां द्वादशानां रत्नहविषां क्रमेण द्वादश दक्षिणा उच्यन्त इति शेषः।

शितिपृष्ठः श्वेतपृष्ठः । कृष्णपृष्ठ इत्यपरे । पृषन् विचित्रो गौः। श्येतः श्वेतो गौः। यमौ यमलजौ द्वौ गावौ । श्यामो गौः। रौद्रे हविषि तिस्रो दक्षिणा भवन्ति। तत्र शितिबाहुः श्वेतबाहुः। कृष्णबाहुरित्यपरे। शितिवालः कृष्णपुच्छः। श्वेतपुच्छ इत्यपरे। तयोरन्यतरः प्रथमा दक्षिणा ॥१६॥

**असिर्नखरः ॥ १७ ॥**

कट्टारिरूपः खड्गो द्वितीया दक्षिणा रौद्रस्य ॥ १७ ॥

वालदामबद्धमक्षावपणम् ॥ १८ ॥

द्यूतकाले अक्षाः प्रक्षिप्यन्ते यत्र तत् अक्षावपणम् । तद् वालमयेन दाम्ना बद्धम् । इयं तृतीया दक्षिणा ॥ १८ ॥

उत्तरस्य प्युक्षणवेष्टितं धनुश्चर्मतूण्यः सेषुका लोहित उष्णीषः ॥ १६ ॥

प्युक्षणशब्देन स्नायुरभिधीयते । अजगरचर्मेत्यपरे । तेन वेष्टितं धनुः, तथा शरपूर्णाश्चर्मभस्त्राः, तथा रक्तवर्ण उष्णीषः । एतत् त्रयमेकादशस्य रत्नहविषो दक्षिणा ॥ १६ ॥

कृष्णा परिमूर्ण्यपहतोत्तमस्य ॥ २० ॥

कृष्णवर्णा परिमूर्णी = वृद्धा, अपहता = रोगिणी गौर्द्वादशस्य हविषो दक्षिणा ॥२०॥

परिवृत्तीं चाह मा मेऽद्येशायां वात्सीदिति ॥ २१ ॥

नैर्ऋते चरौ समाप्ते आह। मत्स्वाम्ये मा वात्सीरिति (५।३।१।१३)। ततश्चासौ ब्राह्मणगृहं प्रविशति । तत्र राज्ञो न स्वाम्यम् इति ॥ २१ ॥

[ सौमारौद्रश्चरुः ]

सौमारौद्रोऽतश्चरुः शुक्लापयसि शुक्लवत्सायाः ॥ २२ ॥

अतो = रत्नहविर्भ्योऽनन्तरं फाल्गुन्यां यजनीयेऽहनि चरुः कार्यः ॥ २२ ॥

सैव दक्षिणा ॥ २३ ॥

यस्याः पयसि चरुः कृतः (५।३।२।४) ॥ २३ ॥

[ यशःप्राप्तये व्याधिनिवृत्तये च सौमारौद्रश्चरुः ]

अनूचानोऽप्ययशा यजेत ॥ २४ ॥

सुपरिपक्वविद्योऽपि यः कीर्तिरहितः, सोऽपि सौमारौद्रेण यजेत । अयमाभ्युदयिकान्वारम्भणीयापूर्वको भवति यज्ञाद्बहिः ॥ २४ ॥

किलासाबाधं तु ॥ २५ ॥

तुशब्दश्चार्थे । किलासा व्याधिविशेषः । तद्बाधमिच्छंश्चैतेन यजेत । किलासा सिध्मः । श्वित्र इत्यन्ये ॥ २५ ॥

[ मैत्राबार्हस्पत्यचरोरनुष्ठानं, तद्दक्षिणा च ]

मैत्राबार्हस्पत्यश्चरुः ॥ २६ ॥

श्वोभूते कर्तव्यः (५।३।२।४) ॥ २६ ॥

तत्र विधिमुपदिशति—

बार्हस्पत्यमधिश्रित्याश्वत्थी या स्वयं भग्ना प्राच्युदीची वा शाखा-तत्पात्रेणाऽपिदधाति ॥ २७ ॥

बार्हस्पत्यं चरुमधिश्रित्य तं शाखानिर्मितेन खातवत्पात्रेण ढक्कयेत् ॥ २७ ॥

विनाटाद्रथपर्यूढान्नवनीतꣳ स्वयं जातमाज्यमासिच्य पात्रे तस्मिन्स्थविष्ठां स्तण्डुलान्मित्रायावपति ॥ २८ ॥

चर्ममयी भस्त्रा दृतिः विनाटः । तत्र दधि आतच्य रथस्योपरि विनाटं स्थापयित्वा

गाढं वध्वा रथं युक्त्वा तूर्णं रथं धावयेत्। तेन रथप्रधावनेनोच्छलतो दध्नो यत्स्वयं नवनीतमुत्पद्यते तदाश्वत्थे पात्रे आसिच्य तस्मिन् स्थूलतण्डुलान् मित्राय देवाय प्रक्षिपेत् ॥ २८ ॥

**ऊष्मणा श्रृतो भवति ॥२९॥**

एष मैत्रश्चरुः स्थालीगतेनैव उष्मणा तापेन श्रृतः कार्यः ॥२९॥

**अणिष्ठानितरस्मिन् ॥३०॥**

इतरस्मिन् बार्हस्पत्ये चरौ अतिशयेन सूक्ष्मांस्तण्डुलानावपेत् ॥३०॥

**एकं प्रदानम् ॥३१॥**

हविर्द्वयस्य वचनादेकं प्रदानं भवति। यागस्यैकत्वात् ॥३१॥

**गौर्दक्षिणा ॥३२॥**

मैत्राबार्हस्पत्येष्टेः ॥३२॥

[ अभिषेचनीय—दशपेययागयोर्देवयजनकालादिविधानम् ]

**अभिषेचनीयदशपेययोर्दक्षिणोत्तरे देवयजने ॥३३॥**

भवतः ॥३३॥

**दक्षिणमभिषेचनीयस्य ॥३४॥**

अर्थादुत्तरं दशपेयस्य ॥३४॥

अभिषेचनीयस्यारम्भकालमाह—

**फाल्गुनीपक्षयजनीयेऽभिषेचनीयाय दीक्षते ॥३५॥**

फाल्गुन्याः पक्षेऽतीते यद्यजनीयं चैत्रशुक्लप्रतिपत्। तत्राभिषेचनीयाय दीक्षते (५।३।३।१)। अभिषचनीय-दशपेययोर्युगपदारम्भः। एवं च फाल्गुनकृष्णपक्षे किमपि न भवतीति देवः ॥३५॥

इति पञ्चदशाध्याये तृतीया कण्डिका ॥३॥

**भार्गवो होता ॥१॥**

अभिषेचनीयदशपेययोर्भृगुगोत्रोत्पन्नो होता भवति ॥१॥

**पञ्चापवर्गः ॥२॥**

पञ्चभिरहोभिरपवर्गो यस्य सः। तेन एका दीक्षा, तिस्र उपसदः, एका सुत्येति पञ्चभिरहोभिः समाप्तिर्भवतीति सिद्धम् ॥२॥

**सोमं क्रीत्वा द्वैधं पर्युह्यैकं ब्रह्मागारे निदधाति ॥३॥**

उभयसाधारणं सोमं क्रीत्वा द्वयोः सोमोपनहनवाससोः पृथक् पृथग् द्विधा बद्ध्वा द्वावपि सोमौ पर्युह्य=अनसा शालासमीपे आनीय तयोर्मध्ये एकं सोमं दशपेययागार्थं ब्रह्मागारे निदध्यात् ॥३॥

[ देवसूहविषामनुष्ठानम् ]

**अग्नीषोमीयस्य पशुपुरोडाशमनु देवसूहवींषि निर्वपति यजप्रैषाणि ॥४॥**

अग्नीषोमीयस्य पशोः पशुपुरोडाशनिर्वपणानन्तरं वक्ष्यमाणानि अष्टौ देवसूहवींषि निर्वपेत्। तानि च यजप्रैषाणि भवन्ति । न प्रेष्यप्रैषाणि ॥४॥

तान्याह—

**म्राशुकानाᳪ सत्यप्रसवाय ॥५॥**

म्राशुकानां = पुनः प्ररूढानां व्रीहीणामष्टाकपालं द्वादशकपालं वा पुरोडाशं सत्यप्रसवाय सवित्रे निर्वपेत्। सर्वछिन्नाः सस्याः पुनराशु भवन्तीति पुनराशुका इति प्राप्ते म्राशुका इति छान्दसं रूपम् (५।३।३।२) ॥५॥

**आशूनामग्नये गृहपतये ॥६॥**

पक्षत्रयपाकिनो व्रीहय आशवः । तेषामष्टाकपालो द्वितीयं हविः ॥६॥

**उत्तरे चरवः ॥७॥**

उत्तरे षट् चरवः कर्त्तव्याः ॥७॥

तानाह—

**श्यामाकः सोमाय वनस्पतये ॥८॥**

तृतीयं हविः ॥ ८ ॥

**नैवारो बृहस्पतये वाचे ॥ ९ ॥**

नीवाराः स्वयं जाता आरण्या व्रीहयः ॥ ९ ॥

**हायनानामिन्द्राय ज्येष्ठाय ॥१०॥**

हायना रक्तशालयः ॥१०॥

**रुद्राय पशुपतये ॥ ११ ॥**

रौद्रश्चरुर्गावेधुक इत्युक्तम् ॥ ११ ॥

**नाम्बो मित्राय सत्याय ॥१२॥**

अकृष्टपच्या व्रीहयो नाम्बाः ॥१२॥

**वरुणाय धर्मपतय इति ॥१३॥**

यवमयश्चरुः । इत्यष्टौ हवींषि ॥१३॥

**उत्तमेन चरित्वा "सविता त्वेत्याह ( ९ । ३९-४० ) यजमानबाहुं दक्षिणं गृहीत्वा ॥१४॥**

देवसूहविषां मध्ये अष्टमेन चरुणा चरित्वाऽऽह ॥१४॥

**नामास्य गृह्णाति मन्त्रे यथास्थानम् ॥१५॥**

यस्मिन् स्थाने अमुमिति सर्वनाम, तत्र नामग्रहणम् ॥१५॥

**मातापित्रोश्च ॥१६॥**

यथास्थानं यजमानस्य मातापित्रोश्च नाम गृह्णीयात् ॥१६॥

**यस्याश्च जाते राजा भवति देशस्यानवस्थितत्वात् ॥१७॥**

जातिग्रहणं जनपदोपलक्षणार्थम्। यस्मिन् जनपदे राजा भवति तस्य च नाम गृह्णीयात। एष वः कुरवो राजा इति। कुतः? देशस्यानवस्थितत्वात्। नहि शास्त्रे देशव्यवस्था, कुरुपाञ्चालजातीयैरेव राजसूयः कर्तव्य इति ॥१७॥

अग्नीषोमीयपशुपुरोडाशतन्त्रमध्ये विहितानां देवसूहविषां पशुपुरोडाशेन सह तन्त्रेणानुष्ठानं प्राप्तम्। तत्र पशुपुरोडाशीयानामङ्गानामनुष्ठानम्? अथवा देहसूहविषाम्, इति संशये आह—

**पशुपुरोडाशतन्त्रं प्राधान्यात् ॥१८॥**

पशुपुरोडाशतन्त्रमेवानुष्ठेयम्। कुतः? प्राधान्यात्। स्थानमिदं पशुपुरोडाशयागस्यैव। अत्रैव हि देवसुवां हवींषि विहितानि। यस्य हि स्थानं तदेव खलु प्रधानम्। अतस्तद्धर्मा एवानुष्ठेयाः। पशुपुरोडाशस्य पशुयागाङ्गत्वेन प्राधान्याभावेऽपि स्थानित्वमादाय प्राधान्यमुक्तमिति वेदितव्यम् ॥१८॥

**इतरेषां वा भूयस्त्वात् ॥१९॥**

देवसूहविषामेव धर्मा अनुष्ठेयाः। कुतः? भूयस्त्वात्। एको हि पशुपुरोडाशयागः, देवसूहवींषि बहूनि। "विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वम्" (जै० १२) इति न्यायेन बहनुग्रहस्यैव न्याय्यत्वात्। अतश्च द्वयोः पक्षयोर्विकल्पः ॥१९॥

विकल्पे कारणान्तरमाह—

**स्विष्टकृच्छ्रुतेश्च ॥२०॥**

काण्वशाखायां यजेति प्रैष एतद्यागसंबधिनि स्विष्टकृति श्रूयते। "अथाहाग्नयेऽस्विष्टकृतेऽनुब्रूह्यग्निꣳ स्विष्टकृतं यजेति च वषट्कृते जुहोति" (काण्व-ब्रा०-७।२।३।१४) इति। स च हविर्धर्मतां बोधयति। माध्यन्दिनशाखायां च तत्र 'प्रैष्य' इति प्रैषः श्रूयते (श० ब्रा० ५।३।३।१४)। स च पाशुकधर्मतामव बोधयति। अतश्च विकल्प एव ॥२०॥

[ देवसूहविषां भागपरिहरणानन्तरमभिषेकार्थं सप्तदशानामपां ग्रहणम् ]

**इडान्तेऽपो गृह्णाति ॥२१॥**

इडान्तग्रहणं देवसूहविषां शेषकार्योपलक्षकम्। तेन देवसूहविषां भागपरिहरणान्ते कृते वक्ष्यमाणा अभिषेकार्था अपो वक्ष्यमाणप्रकारेण गृह्णीयात् (५।३।५।१) ॥२१॥

**यूपमुत्तरेण नैमित्तिकीरसम्भवात् ॥२२॥**

या आपो निमित्तेन वर्षणादिना प्राप्यन्ते ता नैमित्तिक्यः। तादृशीरपो राजसूयारम्भात् प्रागेव सम्पाद्येदानीं यूपमुत्तरेण गृह्णीयात्। कुतः? इदानीमातपवर्षणादेर्निमित्तस्यासंभवात् ॥२२॥

**गत्वेतराः ॥ २३ ॥**

इतरा अनैमित्तिकीरपः प्रति इदानीमेव गत्वा ता गृह्णीयात् ॥ २३ ॥

**पृथक्पात्रेष्वौदुम्बरेषु ॥ २४ ॥**

उदुम्बरकाष्ठनिर्मितेषु भिन्नभिन्नपात्रेषु ता ग्रहीतव्याः ॥ २४ ॥

**सारस्वतीः ॥ २५ ॥**

सरस्वतीनद्युद्भवा अपः प्रथमं गृह्णीयात् ॥ २५ ॥

**अवगाह्यावगाढात्पशोः पुरुषाद्वा पूर्वापरा ऊर्मी ॥ २६ ॥**

अध्वर्युस्तत्र जले प्रविश्य एकं पुरुषं पशुं वा प्रवेश्य तत्र जले प्रविष्टात्पशोर्नराद्वा यौ पूर्वापरौ कल्लोलौ तौ हृत्वा गृह्णाति ॥ २६ ॥

पक्षान्तरमाह—

**स्यन्दमानाः ॥ २७ ॥**

नदीस्था वहन्त्य आपः स्यन्दमाना उच्यन्ते । ता गृह्णीयात् ॥२७॥

**प्रतिलोमाः ॥ २८ ॥**

स्यन्दमानानां याः प्रतिलोमं वहन्ति ता गृह्णीयात् ॥ २८ ॥

**अपयतीः ॥ २९ ॥**

याः प्रवाहादपसृत्य मार्गान्तरेण गत्वा पुनरपि तस्मिन्प्रवाहे प्रविशन्ति ता गृह्णीयात् ॥ २९ ॥

**नदीपतिर्ष्ठ० सूद्याः ॥ ३० ॥**

नदीपतिः समुद्रः । तत्रापि याः सुष्ठु ऊर्ध्वं यान्ति उच्छलन्तीति सूद्याः । ताः वीचिस्था आपो ग्रहीतव्याः ॥ ३० ॥

**काष्ठं वोच्छ्रितोदम् ॥ ३१ ॥**

याभिः सामुद्राभिरद्भिः पूर्वं किञ्चन काष्ठमुर्ध्वीकृत्य वेगबलात्तिर्यक् पातयित्वा पश्चात् स्थलान्तरं नीतम्, ता वा गृह्णीयात् ॥३१॥

**निवेष्याः ॥ ३२ ॥**

नद्यादौ यत्र प्रदेशे उदकानां भ्रमो भवति तत्रस्था अपो गृह्णीयात् ॥ ३२ ॥

**स्यन्दमानानाथ्ठ स्थावराः प्रत्यातापे ॥३३॥**

आदित्येन प्रतिकालमापतप्यते न कदाचिद् वृक्षादिच्छायायाऽवष्टभ्यत इति प्रत्यातापो देशः । तस्मिन्यो ह्रदस्तत्र स्यन्दमानानां मध्ये या स्थिरास्तदात्मिका अपो गृह्णीयात् ॥३३॥

**अन्तरिक्षात्प्रतिगृह्यातपवर्ष्याः ॥३४॥**

आतपे वर्षन्तीत्यातपवर्ष्याः । ता अपो भूमिपतनात्प्रागेव आकाशात्पततीरादाय गृह्णीयात् ॥ ३४ ॥

**सरस्याः, कूप्याः, प्रुष्वाः, मधु, गोरुल्व्याः, पयो, घृतम् ॥ ३५ ॥**

सरस्तडागः । तत्र भवा अपो गृह्णीयात् । कूपे भवाः कूप्याः । प्रुषन्ति सिञ्चन्ति ओषधीरिति प्रुष्वा अवश्यायाः, तासां च यत्र प्रदेशे बहून्यार्द्राणि तृणानि भवन्ति, तत्र शुद्धं वस्त्रं प्रक्षिप्य निष्पीड्य ग्रहणम् । उल्बं गर्भवेष्टनम् । गोरुल्वे भवाः प्रसवकालीनाः ॥३५॥

उक्ता आपः । तासां ग्रहणमन्त्रानाह—

**सारस्वतीर्गृह्णात्यपो देवा इति (१०।१) ॥३६॥**

सरस्वतीनदीसंबन्धिनीरपो गृह्णीयात् ॥ ३६ ॥

**जुहोत्युत्तरासु चतुर्गृहीतानि "वृष्ण ऊर्म्यादिभिः ( १०।२-४ ) स्वाहाकारान्तैः पूर्वैः पूर्वैः प्रतिमन्त्रमुत्तरैरुत्तरैर्गृह्णाति ॥ ३७ ॥**

सारस्वतीरप आदाय उत्तरासु षोडशस्वप्सु वृष्ण ऊर्मिरित्यादिभिः स्वाहान्तैः पूर्वपूर्वं मन्त्रैश्चतुर्गृहीताज्यानि गृह्यमाणासु अप्सु जुहुयात्। उत्तरैः स्वाहाहीनैर्मन्त्रैस्ताः क्रमेण गृह्णाति। उत्तरमन्त्रेषु अमुष्मै इति पदस्थाने चतुर्थ्यन्तं नाम ग्राह्यम्। वृष्ण ऊर्मिरित्यादयो विश्वसृज स्थेत्यन्ता मन्त्राः संहितायां द्विशः पठिताः। तेषां पूर्वः पूर्वः स्वाहान्तः। तेनाज्यहोमः। उत्तर उत्तरः स्वाहाहीनः। तेनापामादानम् ॥३७॥

**"आपः स्वराज" इति (१०।४) मरीचीर्गृहीत्वाऽञ्जलिना सर्वासु सꣳ सृजति ॥ ३८ ॥**

रविकरतप्ता आपो मरीचयः। ता अञ्जलिनाऽऽदाय पूर्वगृहीतासु अप्सु योजयेत्। प्रतिग्रहणं मन्त्रः। संसर्गस्तूष्णीम् ॥ ३८ ॥

**औदुम्बरे पात्रे समासिञ्चत्येना "मधुमतीरिति (१०।४) ॥ ३९ ॥**

एना अप एकस्मिन्महति पात्रे एकीकर्तुं निनयेत् ॥३९॥

**मैत्रावरुणधिष्ण्यस्य पुरस्तान्निदधात्यनाधृष्टाः सीदतेति (१०।४) ॥४०॥**

**पात्राणि च तूष्णीं पालाशौदुम्बरनैयग्रोधपादाश्वत्थान्यभिषेकाय ॥४१॥**

अभिषेकार्थमेतानि पात्राणि चशब्दात्पुरस्तान्निदध्यात् ॥४१॥

[अभिषेचनीययागस्योक्थ्यसंस्थता]

**उक्थ्यः श्वः ॥४२॥**

आगामिनि दिने चैत्रशुक्लपञ्चम्यामुक्थ्यसंस्थोऽभिषेचनीयः क्रतुर्भवति ॥४२॥

तत्र विशेषमाह—

**शतꣳ सहस्राणि दक्षिणा ॥४३॥**

गवां लक्षमित्यर्थः ॥४३॥

इति पञ्चदशेऽध्याये चतुर्थी कण्डिका ॥ ४ ॥



[ व्याघ्रचर्मास्तरणं, तत्र सीसनिधानं च ]

**मरुत्वतीयान्ते पात्राणि पूर्वेण व्याघ्रचर्मास्तृणाति "सोमस्य त्विषिरिति (१०।५) ॥ १ ॥**

मरुत्वतीयग्रहग्रहणान्ते माहेन्द्रग्रहणात्पूर्वमासादितपात्राणां पुरस्तादभिषेकार्थं व्याघ्रचर्मास्तृणुयात् ॥ १ ॥

**अपरेऽन्ते सीसं निदधाति ॥ २ ॥**

स्तृतस्य व्याघ्रचर्मणः पश्चाद्भागे सीसं निदध्यात् ॥ २ ॥

[ पार्थहोमः ]

**पार्थानामग्नये स्वाहेति (१२।५) षड् जुहोति प्रतिमन्त्रम् ॥ ३ ॥**

पार्थसंज्ञकानां होमानां मध्ये सकृद्गृहीतेनाज्येन षडाहुतीर्जुहुयात् (५।३।५।२) ॥ ३ ॥

[ पवित्रकरणं, तत्र हिरण्यबन्धनं च ]

**पवित्रे कृत्वा हिरण्यमेनयोः प्रवयति ॥ ४ ॥**

"पवित्रे स्थ" (१०।६) इति प्रकृतिवत्पवित्रं निर्माय तत्र हिरण्यं बध्नीयात् ॥ ४ ॥

[ अभिषेकार्थानामपामुत्पवनं, तासामभिषेचनीयपात्रेषु प्रक्षेपः ]

**ताभ्यामुत्पुनात्यपः "सवितुर्व" इति ( १०।६ ) ॥५॥**

मैत्रावरुणधिष्ण्यस्य पुरस्तादासादिता उदुम्बरपात्रस्था अभिषेकार्था अपस्ताभ्यामुत्पुनीयादध्वर्युः ॥ ५ ॥

**अभिषेचनीयेष्वेना व्यानयति "सधमाद" इति ( १०।७ ) ॥ ६ ॥**

पूर्वोक्तेषु पालाशादिषु चतुर्षु अभिषेचनीयपात्रेषु उत्पूता अपो विभज्य निनयेत् । प्रतिपात्रं मन्त्रावृत्तिः ॥ ६ ॥

**तार्प्यं परिधापयति ॥ ७ ॥**

यजमानम् । तच्च यजमानो दीक्षितवस्त्रं परित्यज्य परिदधीत ॥ ७ ॥

[ त्रिविकल्पकस्य यज्ञपात्रचिन्हवतः क्षौमवाससो, रक्तकम्बलस्य च परिधानम् ]

तार्प्यशब्दार्थमाह—

**क्षौमम् ॥ ८ ॥**

पक्षान्तरमाह—

**त्रिपाणं वा ॥ ९ ॥**

वयनकाले उदकेन त्रिस्तर्पयित्वा यत् ऊयते सूत्रं तत्तृप्यम् । तस्य विकारस्तार्प्यम् । त्रिः पायितैस्तन्तुभिर्व्यूतमित्यर्थः । वा सकृत्पायितमिति विकल्पः । तृप तृम्फ तृप्तौ (६।२७-२८) । वल्कलमिति केचित् ॥ ९ ॥

पुनरपि पक्षान्तरमाह—

**घृतोन्नमेके ॥ १० ॥**

घृताक्तं वस्त्रमेके तार्प्यं वदन्ति ॥ १० ॥

**यज्ञरूपस्यूतम् ॥ ११ ॥**

यज्ञरूपाणि स्रुक्स्रुवचमसाद्याकाराणि सूचीकर्मणा उत्पादितानि यत्र, तत्तथाविधं त्रिविकल्पं तार्प्यं परिधापयेत् ( ५।३।५।२० ) ॥ ११ ॥

**पाण्ड्वं च निवस्ते ॥ १२ ॥**

तार्प्यस्योपरि रक्तकम्बलं द्वितीयं परिधत्ते यजमानः ॥ १२ ॥

[ कञ्चुकोष्णीषयोः परिधानम् ]

**अधीवासं प्रतिमुच्योष्णीषं संवेष्ट्य निवीतेऽवगूहते नाभिदेशे परिहरते वा ॥ १३ ॥**

उपरि सर्वतश्छाद्यतेऽनेनेत्यधीवासो महाकञ्चुकः । उष्णीषः शिरोवेष्टनम् । अधीवासं महाकञ्चुकं गले प्रतिमुच्य उष्णीषस्य मध्यप्रदेशं शिरसि वेष्टयित्वा तस्योष्णीषस्य उभौ प्रान्तौ परिहितवस्त्रस्य कृतनीविके स्थाने नाभेः पुरस्तादवगूहेत । निवीतं च कण्ठेऽव सज्जनमिति कर्कः । अथवाउष्णीषस्योभौ प्रान्तौ नाभिदेशे परिवेष्टयेत्, न निवीतेऽवगूहेत् ॥ १३ ॥

**ताप्यप्रभृतीनि "क्षत्रस्येति ( १०।८ ) प्रतिमन्त्रम् ॥ १४ ॥**

परिधत्ते ॥ ४ ॥

[ माहेन्द्रग्रहादर्वाग्दीक्षितवस्त्रस्य निवृत्तिर्नियमेन । तत ऊर्ध्वं विकल्पेन ]

**दीक्षितवसननिवृत्तिर्विरोधात् ॥ १५ ॥**

दीक्षितवसनस्य निवृत्तिः कार्या। कुतः ? विरोधात्। ताप्यादिभिरेव परिधानरूपस्यार्थस्य निष्पादितत्वादित्यर्थः। अतो विरोधान्निवर्तते दीक्षितवसनम् ॥ १५ ॥

**माहेन्द्रादौ वा पुनः परिधानं निधायैतानि ॥ १६ ॥**

वाशब्दो विकल्पार्थः। अथवा माहेन्द्रग्रहस्यादौ एतानि ताप्यादीनि निधाय दीक्षितवस्त्रस्य परित्यक्तस्य पुनः परिधानं कर्तव्यम् ॥ १६ ॥

[ धनुषः सज्जीकरणं, स्पर्शो, दानं, च ]

**"इन्द्रस्य वार्त्रघ्नमिति ( १०।८ ) धनुरातनोति ॥१७॥**

ज्याऽधिरूढं करोति ॥ १७ ॥

**"मित्रस्य" "वरुणस्येत्यस्य ( १०।८ ) बाहू विमार्ष्टि ॥ १८ ॥**

अस्य धनुषो बाहू = प्रान्तौ मन्त्राभ्यां पाणिना परिमृशेत् ॥ १८ ॥

**धनुः प्रयच्छति "त्वयाऽयमिति ॥१९॥**

यजमानायाध्वर्युः ॥ १९ ॥

**"हवाऽसीति ( १०।८ ) प्रतिमन्त्रमादाय तिस्र इषूः प्रयच्छति "पातैनमिति ( १०।८ ) प्रतिमन्त्रम् ॥२०॥**

तिस्र इषूः शरानादाय यजमानाय एकैकं प्रयच्छेत् ॥२०॥

**"आविर्मर्या" इति ( १०।९ ) वाचयति ॥२१॥**

सप्त यजूंषि ॥२१॥

[ लम्बकेशपुरुषमुखे लोहशलाकाप्रक्षेपः ]

**"अवेष्टा" इति ( १०।१० ) लोहायसमाविध्यति केशवास्ये सदोऽन्तऽ उपविष्टाय ॥२२॥**

अध्वर्युः सदोमध्ये उपविष्टस्य बहुदीर्घकेशस्य पुरुषस्य मुखे ताम्रपरिष्कृतमयः प्रक्षिपेत् (५।३।८।१) ॥२२॥

**सुन्वन्तमाक्रमयन्दिशः, "प्राचीमारोहेति ( १०।११ ) वाचयति प्रतिमन्त्रं प्रतिदिशं यथालिङ्गम् ॥ २३ ॥**

बाहुगृहीतं यजमानं दिशामभिमुखं गमयन्वाचयेत् ॥२३॥

[ सीसनिरसनम् ]

**आक्रम्य पादेन सीसं निरस्यति "प्रत्यस्तमिति ( १०।१४ ) ॥२४॥**

व्याघ्रचर्मणः पश्चाद्भागे सीसो निहितः ( १५।५।१२ )। तं पादेनाक्रम्य पादेनैव प्रतिक्षिपेत् ॥२४॥

**व्याघ्रचर्मावरोहयति "सोमस्य त्विषिरिति ( १०।१५ ) ॥२५॥**

बाहुगृहीतं यजमानमभिषेकार्थम् (५।४।१।११) ॥ २५ ॥

[ यजमानपादयोरधो रुक्मनिधानं, शिरसि च ]

**रुक्ममधः पदं कुरुते "मृत्योरिति ( १०।१५ ) ॥२६॥**

अध्वर्युर्यजमानपादयोरधस्ताद्रुक्मं = परिमण्डलं सौवर्णं निदध्यात् ॥२६॥

**शिरसि च नवतृण्ठं० शततृण्णं वौजोऽसीति ( १०।१५ ) ॥२७॥**

यजमानस्य मस्तके च नवच्छिद्रं शतच्छिद्रं वा परिमण्डलं सौवर्णं द्वितीयं रुक्ममध्वर्युर्निदध्यात् ॥२७॥

**बाहू उद्गृह्णाति "हिरण्यरूपा" ( १०।१६ ) इति ॥२८॥**

यजमानः स्वबाहू ऊर्ध्वौ कुर्यात् । अध्वर्युरिति केचित् ॥२८॥

**"मित्रोऽसि वरुणोऽसीति ( १०।१६ ) वा ॥२९॥**

बाह्वोरुद्ग्रहणे मन्त्रविकल्पः ॥२९॥

[ यजमानस्याभिषेकः ]

**स्थितं प्राञ्चमभिषिञ्चति पुरोहितोऽध्वर्युर्वा पुरस्तात्पालाशेन प्रथमं, पश्चादितरे, द्वितीयेन स्व, स्तृतीयेन मित्र्यो राजन्यो, वैश्यश्चतुर्थेन "सोमस्य त्वा द्युम्नेनेति (१०।१७) प्रतिमन्त्रम् ॥३०॥**

यजमानस्य पुरस्तादवस्थितः पुरोहितोऽध्वर्युर्वा प्राङ्मुखमूर्ध्वबाहुं तिष्ठन्तं यजमानं प्रथमं पुरोहितोऽध्वर्युर्वा पालाशेन पात्रेणाभिषिञ्चेत्। इतरे भ्रात्रादयः पश्चादवस्थिता अभिषिञ्चेयुः। तत्र द्वितीयेनौदुम्बरपात्रेण स्वो राजभ्राता, तृतीयेन नैयग्रोधपात्रेण मित्रत्वेनोपागतः क्षत्रियः, चतुर्थेनाऽऽश्वत्थेन पात्रेण वैश्यः (५।४।२।१) ॥३०॥

**अभिषिञ्चामीति सर्वत्र साकाङ्क्षत्वात् ॥३१॥**

सोमस्य त्वा द्युम्नेनाभिषिञ्चामीत्यत्र पठितमभिषिञ्चामीति पदमग्रिमेषु त्रिष्वपि मन्त्रेष्वनुषजति । कुतः ? साकाङ्क्षत्वात् ॥३१॥

**"क्षत्राणां क्षत्रपतिरेधीति च (१०।१७) ॥३२॥**

अयमप्यवयवः सर्वेषु मन्त्रेषु संयोजनीयः ॥३२॥

**"इमममुष्येति च (१०।१८) प्रथमो देवसूवत् ॥३३॥**

इमममुष्येति मन्त्रं प्रथमः = पुरोहितोऽध्वर्युर्वा देवसूहविःष्विव (१५।४।१५-१७) नामग्राहं पठेत् ॥३३॥

[ पार्थहोमः ]

**पार्थानामिन्द्राय स्वाहेति षड् जुहोति प्रतिमन्त्रम् ॥३४॥**

"अग्नये स्वाहा" ( य० सं० १०।५ ) इत्याद्या द्वादशाहुतयः पार्थाः । तेषु षडाहुतयः पूर्वं हुताः (१५।५।३) । अवशिष्टान् षड् होमानत्र कुर्यात् ॥३४॥

इति कात्यायनश्रौतसूत्रे पञ्चदशे राजसूयनिरूपणाध्याये वृत्तौ पञ्चमी कण्डिका ॥ ५ ॥

[ शौनःशेपशस्त्रप्रैषः ]

**शौनःशेपं च प्रेष्यति ॥ १ ॥**

अध्वर्युः 'शौनःशेपं शस्त्रं शंस' इति प्रेष्येत् ॥ १ ॥

**द्यूतान्ते वा ॥ २ ॥**

अथवा वक्ष्यमाणस्य द्यूतस्यान्ते प्रेष्यति, नेदानीम् ॥ २ ॥

[ शौनःशेपशस्त्रे प्रतिगरे विशेषः ]

**ओ३मित्यृचां प्रतिगरस्तथेति गाथानाम् ॥ ३ ॥**

शौनःशेपशस्त्रे ऋचां शंसने ॐ इति प्रतिगरः कार्यः । गाथानां शंसने च तथा इति प्रतिगरः कर्तव्यः ॥ ३ ॥

**होताध्वर्यू हिरण्मय्योः कशिपुनोरुपविष्टौ ॥ ४ ॥**

शौनःशेपशंसनं प्रतिगरं च कुर्याताम् ॥ ४ ॥ ॥

[ दक्षिणादानम् ]

**शौनःशेपान्ते पृथक् शते ददाति ॥ ५ ॥**

होत्रेऽध्वर्यवे च प्रत्येकं गवां शतं शतं दद्यात् ॥ ५ ॥

**सहस्रे वा ॥ ६ ॥**

विकल्पः ॥ ६ ॥

**आसने च ॥ ७ ॥**

पूर्वोक्ते कशिपुसंज्ञे सौवर्णे आसने च होत्रध्वर्युभ्यां दद्यात् यथास्वं, यो यत्रोपविष्टः ॥७॥

**कण्डूयन्याऽभिषेकेण प्रलिम्पते "प्रपर्वतस्येति (१०।१६) ॥ ८ ॥**

कृष्णविषाणया स्वशरीरसंलग्नेन अभिषेकोदकेन यजमानः सर्वं स्वशरीरं प्रलिम्पेत् ॥८॥

**चर्मणि त्रिविक्रमयति "विष्णोरिति (१०।१६) प्रतिमन्त्रम् ॥ ९ ॥**

पूर्वमास्तृते शार्दूलचर्मणि बाहुगृहीतं यजमानं सदस्येव त्रिविक्रमयेत् ॥ ९ ॥

**पालाशे शेषानासिच्य पुत्राय प्रयच्छति प्रियतमायेदं मे कर्मेदं वीर्यं पुत्रोऽनु सन्तनोत्विति ॥ १० ॥**

यजमानः पालाशे पात्रे इतरेषां त्रयाणामभिषेकपात्राणां शेषानासिच्य तत्पात्रं प्रयच्छेत् ॥ १० ॥

**शालाद्वार्ये जुहोति पुत्रेऽन्वारब्धे "प्रजापत", इति (१०।२०) पुत्रयजमानयोर्नाम गृह्णाति पितृशब्दं पुत्रे कृत्वा यथायथं पश्चात् ॥११॥**

अध्वर्युः पुत्रेऽन्वारब्धे सकृद् गृहीतमाज्यं शालाद्वार्येऽग्नौ जुहुयात् । तत्र प्रजापत इति मन्त्रे अयममुष्य पिता इत्यत्र अयं रामो दशरथस्य पिता इत्येवं पितृशब्दं पुत्रे कृत्वा पश्चात् असावस्य पिता इत्यत्र यथायथं नामोच्चारणं कुर्यादध्वर्युः । पुत्रे पुत्रशब्दः, पितरि पितृशब्द इति यथायथशब्दार्थः ॥११॥

**आग्नीध्रीये पालाशेन शेषाञ्जुहोति "रुद्र यत्त" (१०।२०) इत्युत्तरार्द्धे ॥१२॥**

अध्वर्युराग्नीध्रीयेऽग्नौ ईशान्यां दिशि पालाशेनाभिषेकपात्रेण अभिषेकशेषान् जुहुयात् ॥१२॥

[ राजभ्रातुर्गवां शतस्याहवनीयोत्तरतः स्थापनं, पूर्वाग्निवहनस्य च ]

**गवाᳪ शतमधिकं वा स्वस्याहवनीयस्योत्तरतः स्थापयति ॥१३॥**

स्वशब्देन राजभ्राता गृह्यते। तस्य गवां शतं परःशता वा गा अतिप्रणीतस्याहवनीयस्योतरे स्थापयेदध्वर्युः ॥१३॥

**पूर्वाग्निवहनं च साग्नि ॥१४॥**

पूर्वाग्निश्च यः सेनायां राज्ञः शान्तिकपौष्टिकाद्यर्थं सह नीयते। स उह्यते येन अनसा तत् पूर्वाग्निवहनम्। तच्च साग्नि = अग्निसहितमाहवनीयस्योत्तरतः स्थापयेत् ॥१४॥

[ रथयोजनम् ]

**वाजपेयवद्रथमवहृत्य दक्षिणस्यां वेदिश्रोणौ युनक्ति पूर्ववन्मित्रावरुणयोरिति चतुर्भिः (१०।२१) ॥१५॥**

वाजपेये "रथवाहनाद्रथमवतारयतीन्द्रस्य वज्र इति" ( १४।३।१ ) इत्युक्तम्। तथैव शालाया दक्षिणतो रथस्योपरि स्थापितं रथं रथाद् भूमौ अवतार्य दक्षिणवेदिश्रोणिदेशे वेदिमध्ये समानीय चतुर्भिरश्वैर्वाजपेयवद् युञ्ज्यात्। तत्र ( १४।३।६-८ ) प्रथमं दक्षिणं, तत उत्तरं, ततो दक्षिणाप्रष्टिः, ततः सव्याप्रष्टिरिति क्रमः, स एवात्र क्रम इति। प्रत्यश्वं मन्त्रः ॥१५॥

[ चात्वालमपरेण रथस्थापनम् ]

**दक्षिणापथेन यात्वाऽपरेण चात्वालᳪ स्थापयति ॥१६॥**

दक्षिणायाः पन्था दक्षिणापथः। तेन मार्गेणाध्वर्युर्गत्वा चात्वालमपरेण रथं स्थापयेत् ॥१६॥

[ रथे यजमानस्यारोहणम् ]

**"अव्यथायै त्वेति (१०।२१) सुन्वन्नारोहति ॥१७॥**

रथम्। यन्ताऽपि इदानीमेव तं रथमारोहेत्। अग्रे ( २९ ) ऽवरोहणविधानात् ॥१७॥

**"मरुतामिति (१०।२१) दक्षिणधुर्यं प्राजति ॥१८॥**

सारथिः कशादिना गमनाय प्रेरयेत् ॥ १८ ॥

[ रथस्य गवां मध्ये स्थापनम् ]

**गवां मध्ये स्थापयत्यापामेति (१०।२१) ॥१९॥**

आहवनीयस्योत्तरतः स्थापितानां भ्रातृसक्तानां गवां मध्ये रथं स्थापयेद्यन्ता ॥१९॥

**धनुरात्न्योपस्पृशति गां यजमानः "समिन्द्रियेणेति (१०।२१) ॥२०॥**

यजमानो धनुष्कोट्या एकां गां समुपस्पृशेत् ॥२०॥

**जिनामीमाः, कुर्व इमा इति चाह (५।४।३।१०) ॥२१॥**

यजमानः। कुर्वे = आत्मसात्करोमीत्यर्थः ॥२१॥

[ रथस्यान्तःपात्यदेशे स्थापनम् ]

**तावद् भूयो वा गोस्वामिने दत्त्वा पूर्वेण यूपं परीत्यान्तःपात्यदेशे स्थापयति "मा त" इति (१०।२२) ॥२२॥**

रथारूढो यजमानो गवां शतमधिकं वा यावत् स्थापितं, तावत् गोस्वामिने स्वभ्रात्रे प्रत्यर्पयित्वा पूर्वेण यूपं प्रदक्षिणीकृत्य अन्तःपात्यदेशे रथं स्थापयेत् ॥२२॥

[ रथविमोचनीयहोमः ]

"अग्नये गृहपतय" इति (१०।२३) चत्वारि रथविमोचनीयानि जुहोति प्रतिमन्त्रम् ॥२३॥

सकृद्गृहीतैराज्यैरध्वर्युः ॥२३॥

[ वराहचर्मोपानहोः परिधानम् ]

पशूनाᳬ रसोऽसीति वराहोपानहा उपमुञ्चते ॥२४॥

सूकरचर्मणा निर्मिते उपानहौ परिदध्याद्रथारूढो यजमानः (५।४।३।१९) ॥२४॥

भूमिमवेक्षते "पृथिवि मातरिति (१०।२३) ॥२५॥

यजमानः ॥२५॥

[ रथादवतरणम् ]

अवरोहति "हᳬसः शुचिषदिति (१०।२४) ॥२६॥

रथाद्यजमानः सोपानत्कः ॥२६॥

विमुच्य सयन्तृकᳬ रथवाहणे करोति ॥२७॥

यजमानो रथं विमुच्य ससारथिकं रथं रथवाहणस्योपरि स्थापयेत् ॥२७॥

रथवाहणशब्दार्थमाह—

अनस्तत्कर्म ॥२८॥

तस्य = रथवाहणस्य कर्म = अर्थः अनः शकटमेव भवति । रथवाहणशब्दवाच्यमन एव, नान्यदनडुदादिकमित्यर्थः ॥२८॥

[ सारथेरवतरणम् ]

शालाया दक्षिणतोऽपप्रवते यन्ता ॥२९॥

अवतरेत् ॥२९॥

[ रथस्य दक्षिणचक्रे सौवर्णमय्योर्मण्योर्बन्धनम् ]

रथवाहणस्य दक्षिणेऽन्ते शतमानावासजति वृत्तौ ॥३०॥

रथवाहणस्य दक्षिणचक्रवर्त्मसमीपे शतमानौ = सौवर्णौ वर्तुलौ मणी आबध्नीयात् । रक्तिकाशतेन शतमानः ॥ ३० ॥

[ औदुम्बरीनिखननम् ]

अनुवर्त्ममौदुम्बरीᳬ शाखामुपगूहत्युपस्पृशति शतमानावियदसीति (१०।२५) ॥३१॥

रथचक्रवर्त्मनि । स्पर्शश्च यजमानकर्तृकः ( श० ब्रा० ५।४।३।२६ ) ॥ ३१ ॥

तौ ब्रह्मणे दत्त्वोर्गसीति (१०।२५) शाखामुपस्पृशति ॥ ३२ ॥

तौ शतमानौ ॥ ३२ ॥

"इन्द्रस्य वामि (१०।२५) त्यवहरते बाहू पयस्यायां व्याघ्रचर्मदेशे स्थितायाम् ॥३३॥

अध्वर्युः यजमानस्य प्रागूर्ध्वीकृतौ बाहू व्याघ्रचर्मणि पूर्वं निहिताया मैत्रावरुण्याः पयस्याया मध्येऽवहरति नीचौ करोति ॥ ३३ ॥

**सेषुकं धनुः प्रयच्छति ॥ ३४ ॥**

धनुर्द्धराय ॥ ३४ ॥

[ पयस्याप्रचारः ]

**उत्तरवेदिꣳ हुत्वा पयस्यया प्रचरति प्राक् स्विष्टकृतः ॥ ३५ ॥**

तां पयस्यां सदोमध्यादुत्तरवेदिं नीत्वा तया मैत्रावरुण्या पयस्यया स्विष्टकृतः प्राक् प्रचरेत् ॥ ३५ ॥

इति षष्ठी कण्डिका ॥ ६ ॥

---

[ आसन्द्यास्तरणं, तस्या वस्त्रेणाच्छादनं च ]

**खादिरीमासन्दीꣳ रज्जूतां व्याघ्रचर्मदेशे निदधाति "स्योनाऽसीति (१०।२६) ॥ १ ॥**

अध्वर्युः खदिरकाष्ठनिर्मितां मुञ्जरज्जुभिर्युतामासन्दीं मैत्रावरुणधिष्ण्यस्य पुरस्तान्निदध्यात् ॥१॥

**अधीवासमस्यामास्तृणाति "क्षत्रस्य योनिरिति (१०।२६) ॥ २॥**

अस्यामासन्द्यामध्वर्युरुपरि सर्वतश्छादनपर्याप्तं महद् वस्त्रमास्तृणीयात्। अधि उपरि छाद्यतेऽनेनेत्यधीवास आच्छादनवस्त्रम् ॥ २ ॥

[ आसन्द्यां यजमानस्योपवेशनम् ]

**सुन्वन्तमस्यामुपवेशयति "स्योनामासीदेति (१०।२६) ॥ ३ ॥**

अध्वर्युर्यजमानं बाहुगृहीतमासन्द्यामुपवेशयेत् ॥ ३ ॥

**"निषसादेत्युरोऽस्यालभते (१०।२७) ॥ ४ ॥**

अस्य यजमानस्य हृदयम् ॥ ४ ॥

[ दण्डैर्यजमानस्य ताडनम् ]

**"अभिभू रित्यस्मै (१०।२८) पञ्चाक्षान् पाणावाधाय पश्चादेनं यज्ञियवृक्षदण्डैः शनैस्तूष्णीं घ्नन्ति ॥५॥**

षष्ठ्यर्थे चतुर्थी। अस्य यजमानस्य हस्ते द्यूतसाधनभूतान् पञ्च अक्षान् निधाय पश्चाद्यजमानपृष्ठे यजमानं यज्ञियवृक्षदण्डैस्तूष्णीं शनैः शनैः कुट्टयन्त्यध्वर्य्वादयः (५।४।४।७)। अक्षाः = सौवर्णाः कपर्दकाः पञ्च ॥ ५ ॥

**पाप्मानं तेऽपहन्मोऽति त्वा बधं न यामीति वा ॥ ६ ॥**

तूष्णीं वेति विकल्पः ॥ ६ ॥

[ ब्रह्मण आमन्त्रणम् ]

**वरं वृत्वा ब्रह्मन्नित्यामन्त्रयते (१०।२८) पञ्चकृत्वः ॥ ७ ॥**

यजमानो राज्यं मेऽस्तु यशो मेऽस्तु इत्येवमादिना वचनेन स्वाभीष्टं वरं प्रार्थयित्वा पञ्चवारं ब्रह्मन्निति मन्त्रेण ब्रह्माणमामन्त्रयेत् ॥ ७ ॥

**प्रत्याह व्यत्यासꣳ "सविता, वरुण, इन्द्रो, रुद्र इति (१०।२८) त्वं ब्रह्मासीत्यादिभिः ॥ ८ ॥**

एवमामन्त्रितो ब्रह्मा त्वं ब्रह्मासीत्यादिभिः सवितासि, वरुणोऽसि, इन्द्रोऽसि, रुद्रोऽसि इत्येतैर्मन्त्रैर्व्यत्यासं यजमानं प्रत्याह। तेन चतुर्णामपि मन्त्राणामादौ त्वं ब्रह्मासीति प्रयोगः। व्यत्यासमिति। आदौ यजमानो ब्रह्मन्नित्यामन्त्रयते, ततो ब्रह्मा त्वं ब्रह्मासि सविताऽसि सत्यप्रसव इति प्रत्याह। पुनर्यजमानो ब्रह्मन्निति ब्रह्माणमामन्त्रयते। ब्रह्मा त्वं वरुणोसि सत्यौजा इति प्रत्याह। पुनर्यजमानो ब्रह्मन्निति ब्रह्माणमामन्त्रयते। ब्रह्मा त्वं ब्रह्मासिइन्द्रोऽसि विशौजा इत्याह। पुनर्यजमानो ब्रह्मन्नित्यामन्त्रयते। ब्रह्मा त्वं ब्रह्मासि रुद्रोऽसि सुशेव इत्याह ॥ ८ ॥

**आदिनैवान्त्यम् ॥ ९ ॥**

अन्त्यं पञ्चमं प्रतिवचनमादिनैव त्वं ब्रह्मासीत्येतावतैव मन्त्रेण कार्यं ब्रह्मणेति सूत्रार्थः ॥ ९ ॥

**बहुकारेति च (१०।२८) ह्वयत्येवंनामानम् ॥ १० ॥**

यजमानो बहुकारेत्यादिनामानं पुरुषमाह्वयेत् ॥ १० ॥

[ स्फ्यसमर्पणं यजमानादिभ्यः ]

**स्फ्यमस्मै प्रयच्छति पुरोहितोऽध्वर्युर्वेन्द्रस्य वज्र इति (१०।२८) ॥ ११ ॥**

अस्मै यजमानाय ॥ ११ ॥

**राजा राजभ्राता सूतस्थपत्योरन्यतरो ग्रामणीः सजातश्चैवं पूर्वः पूर्व उत्तरस्मै ॥१२॥**

राजादीनां पञ्चानां मध्ये प्रथमः प्रथमो राजादिरुत्तरस्मै उत्तरस्मै भ्रात्रादिकाय इन्द्रस्य वज्र इति मन्त्रेण स्फ्यं प्रयच्छेत्। राजा राजभ्रात्रे दद्यात्। स च सूतस्थपत्योरन्यतरस्मै। सूतोऽश्वपोषकः। स्थपतिर्ग्रामेश्वरः। ग्रामणीः = ग्रामस्य नेतृत्वेन महत्तरः। सजातो ग्रामण्यो भ्राता ॥१२॥

[ स्फ्येन द्यूतभूमिकरणं, तत्र चतुष्कोणमण्डपकरणं च ]

**एतेन सजातः प्रतिप्रस्थाता च पूर्वाग्निसहिताꣳ शुक्रपुरोरुचा द्यूतभूमिं कुरुतः ॥१३॥**

सजातो = ग्रामणीभ्राता, प्रतिप्रस्थाता च ग्रामणीदत्तेन वज्रेण शुक्रग्रहस्य ग्रहणमन्त्रेण "तं प्रत्नथेत्यनेन (७।१२) पूर्वाग्निवहनसन्निधौ द्यूतभूमिं कुर्वीयाताम् ॥१३॥

**मन्थिनो विमितम् ॥१४॥**

मन्थिनो ग्रहस्य ग्रहणमन्त्रेण "अयं वेन" (७।१६।) इत्यनेन द्यूतभूमौ अर्धप्रमाणं चतुरस्रं मण्डपं कुरुतः ॥१४॥

[ द्यूतभूमौ होमोऽक्षनिवपनं च ]

**द्यूतभूमौ हिरण्यं निधायाऽभिजुहोति चतुर्गृहीतेनाऽग्निः पृथुरिति (१०।२९) ॥ १५ ॥**

**अक्षान्निवपति "स्वाहाकृता" इति (१०।२९) ॥१६॥**

द्यूतभूमौ द्यूतार्थमध्वर्युः पूर्वं राज्ञः पाणौ निहितानक्षान्निवपेत् (५।४।४।२३) ॥ १६॥

[ द्यूतार्थं प्रैषः ]

**गां दीव्यध्वमित्याह ॥१७॥**

राजा गां दीव्यध्वमिति राजभ्रात्रध्वर्य्वादीन्प्रति ब्रूयात्। गां पणं कृत्वा यूयं रमध्वमिति प्रैषार्थः। द्यूतकरणप्रैषोऽयम् ॥१७॥

[ द्यूतकरणम् ]

**कृतादि वा निदध्याद्राजप्रभृतिभ्यः ॥१८॥**

राजप्रभृतिभ्यः कृतादि द्यूतं रचयेत्। अथवा द्यूतान्तरं रचयेत्। कृतादि द्यूतं द्यूतकारिणां प्रसिद्धम्। तेन राज्ञः कृतसंज्ञं द्यूतम्। राजभ्रातुस्त्रेताख्यम्। सूतस्थपत्योरन्यतरस्य द्वापरसंज्ञम्। ग्रामण्यः पञ्चकलिङ्गादिसंज्ञम् ॥१८॥

**सजाताय कलिम् ॥१९॥**

कृतादिद्यूतपक्षे सजाताय क्रीडनार्थं कलिसंज्ञकं द्यूतं निदध्यात् ॥१९॥

**गामस्थानीय घ्नन्ति ॥२०॥**

अस्य सजातस्य सम्बन्धिनीं गां तत्र द्यूतभूमावानीय दण्डादिना ताडयन्ति। हन्तिरत्र ताडनमात्रे, न तु मारणे ॥२०॥

[ द्यूतकर्तृभ्यो दक्षिणाविधानम् ]

**पूर्वाग्निवाहो दक्षिणा ॥२१॥**

द्यूताङ्गत्वेन द्यूतकर्तृभ्यः पूर्वाग्निमावसथ्यं शकटस्थं वहतीति पूर्वाग्निवाहोऽनड्वान् दक्षिणा देया। अत्र वा शौनःशेपस्य शंसनम्। "द्यूतान्ते वा" (१५।६।२) इति सूत्रितत्वात् ॥ २१ ॥

[ स्विष्टकृद्यागो, माहेन्द्रग्रहग्रहणादि च ]

**पयस्यास्विष्टकृदिडं करोति ॥२२॥**

पयस्यया स्विष्टकृद्यागमिडामार्जनान्तं कुर्यात् ॥२२॥

**माहेन्द्रादि च ॥२३॥**

माहेन्द्रग्रहग्रहणादि पृष्ठोपाकरणान्तं प्राकृतं कर्म कुर्यात् ॥२३॥

**अवरुह्य गच्छति स्तोत्राय प्रहितः ॥२४॥**

'स्तोत्रोपासनाय गच्छ' इत्येवमध्वर्युणाऽनुज्ञातो यजमान आसन्द्या अवतीर्य स्तोत्रोपासनार्थमुद्गातृसमीपे गच्छेत् ॥२४॥

[ तार्प्यादिपरिधानपक्षे तेनैवावभृथः, तदभावे दीक्षितवसनेन ]

**अवभृथमेकेन तार्प्यादीनि चेदुदैत्येकेन ॥२५॥**

"माहेन्द्रादौ वा पुनः परिधानं निधायैतानि" (१५।५।१६) इति पूर्वमुक्तम्। तत्र चेद्यदि तार्प्यादीनि परिहितान्येव भवेयुर्न निहितानि, तर्हि तेषां तार्प्यादीनां मध्ये एकेन केनचित्परिहितेन अवभृथमवतरेत्, एकेन केन चिद्वाससा जलाद्बहिर्निःसरेत्। अथ माहेन्द्रादौ दीक्षिवसनं परिहितं, तदा तेनैव अवतरणमुत्तरणं च ॥२५॥

[ दीक्षितवाससां जले प्रक्षेपः ]

**दीक्षितवसनं च प्रास्यति ॥२६॥**

दीक्षितवसनपरिधानपक्षे दीक्षितवसनमप्सु प्रक्षिपेत् ॥२६॥

[ तिस्रोऽनूबन्ध्याः, तदन्ते उदवसानीयान्ते वा तार्प्यादीनामृत्विग्भ्यो दानम् ]

**अनूबन्ध्यावपाहोमान्ते दद्यादेनानि ॥२७॥**

एतानि तार्प्यादीनि वासांसि अनूबन्ध्यवपाहोमान्तेऽनूबन्ध्यर्त्विग्भ्यो दद्यात् ॥२७॥

## उदवसानीयायां वा ॥२८॥

अथवा उदवसानीयायां समाप्तायामेतानि दद्यात् ॥२८॥

[ त्रैधातव्युदवसानीयेष्टिः ]

## त्रैधातव्युदवसानीया ॥२९॥

अत्राभिषेचनीये त्रैधातवी उदवसानीया इष्टिर्भवति ॥२९॥

तत्र हविराह—

## ऐन्द्रावैष्णवो द्वादशकपालो व्रीहियवानाम् ॥३०॥

उभयेषाम् ( ५।५।५।८ ) ॥३०॥

समविभागप्राप्तावाह—

## तृतीयं यवानां मध्ये ॥३१॥

अस्मिन्पुरोडाशे तृतीयं भागं यवानां मध्ये गृह्णीयात्। मानद्वयं तु व्रीहीणामेव! तत्रैवं कर्तव्यम्। प्रथमे मुष्टौ व्रीहय एव ग्राह्याः। द्वितीये मुष्टौ प्रथम एको भागो व्रीहीणाम्, ततो भागद्वयं यवानाम्, एवं द्वितीयो मुष्टिः।तृतीये मुष्टौ प्रथमं भागद्वयं यवानाम्, तत एको भागो व्रीहीणाम्। एवं तृतीयो मुष्टिः। चतुर्थे व्रीहय एव। एवं यवानां तृतीयो भागो मध्ये गृहीतो भवति। मध्यमयोर्मुष्ट्योरन्यतरद् द्रव्यं वस्त्रान्तरितं कृत्वा सहैव ग्राह्यम् ॥३१॥

## अधिश्रयणं च ॥३२॥

अधिश्रयणमपि तस्य मध्ये कर्तव्यम्। तद्यथा—प्रथमं व्रीहिपिण्डं द्विधा कृत्वा एकं भागं पृथुं कृत्वा मध्ये यवमयं पिण्डं निधाय पिण्डं कृत्वा पुनर्व्रीहिमयपिण्डस्य द्वितीयं भागं तस्योपरि निधाय पृथुं कुर्यात् ( ५।५।५।८ )। अवदानानि च त्रिभ्यो धातुभ्यो ग्राह्याणि। प्रथममेव धातुत्रयं संयोज्य सहैवाधिश्रयेत्सकृन्मन्त्रेण। धातुः प्रक्षेपः ॥३२॥

[ त्रैधातवीष्टिदक्षिणा ]

## तिस्रस्तिस्रो दक्षिणा ददाति, शतमानानि ब्रह्मणे, धेनूर्होत्रे, वासाꣳस्यध्वर्यवे, गामग्नीधे ॥३३॥

सुवर्णरक्तिकाशतेन एकं शतमानं भवति ॥३३॥

## भैषज्याभिचारयोरप्येषा ॥३४॥

रोगोपशान्त्यर्थमभिचारार्थं च एषा त्रैधातवी कार्या। अत्राभ्युदयिकमन्वारम्भणीया च कार्या ॥ ३४ ॥

इति कात्यानश्रौतसूत्रे विद्याधरशर्मकृतायां वृत्तौ सप्तमी कण्डिका ॥ ७ ॥



[ संसृपासंज्ञकानां दशानां हविषां मध्ये प्रथमं हविरभिषेचनीयशालाया उत्तरतोऽनुष्ठाय ततः किंचिद् किंचिद् दूरं गत्वा द्वितीयादिकमनुष्ठाय दशमस्य हविषो दशपेयदेवयजनेऽनुष्ठानम् ]

## दशोत्तराणि सꣳसृपाहवीꣳषि निर्वपति ॥ १ ॥

'संसृपाहवींषि' इति वक्ष्यमाणानां दशानां हविषां नाम ( ५।४।५।२ )। चैत्रकृष्णपक्ष्यामेव दशानामनुष्ठानं यथा स्यादित्येवमर्थं दशग्रहणमिति सम्प्रदायः। काण्वशाखायां षण्णां च "श्वोभूते" (७४।१।६) इत्युक्तत्वात् चैत्रशुक्लषष्ठीमारभ्य षट्सु दिवसेषु एकैकमनुष्ठाय सप्तमे दिने द्वादश्यामवशिष्टानि चत्वारि कुर्यादिति तन्मतम्। "प्रतिगृहमेकैकꣳ श्वः"

( का० श्रौ० १५।३।२ ) इति पूर्वमुक्तत्वात् षष्ठीमारभ्य दशसु दिनेषु दशानां हविषामेकतन्त्रेणानुष्ठानं तन्मते । कर्काचार्यास्तु पक्षान्तराणामाचार्यानुक्तत्वात् एकस्मिन्नेव दिने दशानामनुष्ठानम्, काण्वपाठात्सप्तसु दिनेषु वेत्यभिप्रयन्ति ॥ १ ॥

**देवयजनान्तरमेकैकेनोत्सर्पति ॥ २ ॥**

अभिषेचनीयशालात आरभ्य एकैकेन हविषा देवयजनान्तरं=दशपेयदेवयजनं प्रति गच्छेत् (१) ॥ २ ॥

**शालायामन्त्यम् ॥ ३ ॥**

एवमुत्सर्पन्नुत्सर्पन् तथा कुर्याद्यथाऽन्त्यं दशमं हविर्दशपेयशालामध्ये भवेत् ॥ ३ ॥

दश हवींष्याह—

**सावित्र-सारस्वत-त्वाष्ट्र-पौष्णैन्द्र-बार्हस्पत्य-वारुणाऽऽग्नेय-सौम्य-वैष्णवानि यथोक्तम् ॥ ४ ॥**

आचार्येण यथा प्रदेशान्तरे सावित्रादीनां पुरोडाशचर्वादिकमुक्तं, तथाऽत्रापि कार्यम् ( २ ) ॥ ४ ॥

[ संसृपाहविषां दक्षिणा ]

**प्रतीष्टि पुण्डरीकाणि प्रयच्छति ॥ ५ ॥**

जलजानि कमलानि । "सा दक्षिणा" ( काण्व० ब्रा० ७।४।१।५ ) ॥ ५ ॥

**हिरण्मयानि वा ॥ ६ ॥**

अथवा सौवर्णानि पुण्डरीकाणि दद्यात् ॥ ६ ॥

**उत्तमासु तिसृषु पञ्च ॥ ७ ॥**

अष्टमीप्रभृतिषु तिसृषु इष्टिषु पञ्च पुण्डरीकाणि दद्यादिति विशेषः । तत्र अष्टम्यां नवम्यां च इष्ट्यां द्वे द्वे, दशम्यामेकं पुण्डरीकं दद्यादिति ॥ ७ ॥

[ यजमानाय कमलिनीपुष्पमालाधारणम् । तयैव दीक्षासंस्कारश्च ]

**तेषां स्रजं प्रतिमुञ्चते ॥ ८ ॥**

तेषां दत्तव्यतिरिक्तानां द्वादशानां कमलिनीपुष्पाणां स्रजं यजमानः स्वकण्ठे बध्नीयात् ॥ ८ ॥

**तद्दीक्षो भवति ॥ ९ ॥**

सैव दीक्षा यस्येति तद्दीक्षः । या स्रक् परिहिता सैव दीक्षास्थाने भवति, न दीक्षासंस्कारः पृथक्कार्य इति भावः ( ५।४।५।१३ ) । एतेषां संसृपाहविषां स्वतन्त्रत्वम् ! उत

---

( १ ) तत्र एकैकेन हविषा दशपेयदेवयजनं प्रति गच्छन्ति । प्रतीष्टि स्तोकम् । तत्र प्रथमं हविरभिषेचनीयशालाया उत्तरतः समीप एवाग्नीन् स्थापयित्वा कर्तव्यम् । पुनस्तस्मात् स्थानादुत्तरदेशेऽग्नीन् स्थापयित्वा द्वितीयम्, तस्योत्तरतस्तथैव तृतीयप्रभृतिदशमहविःपर्यन्तं कुर्यादुत्सृप्योत्सृप्य । अनेन प्रकारेण कुर्वन् दशपेयशालामध्ये दशमं हविः कुर्यात् ।

( २ ) सावित्रो द्वादशकपालोऽष्टाकपालो वा, सारस्वतश्चरुः, त्वाष्ट्रो दशकपालः, पौष्णश्चरुः प्रपिष्टानाम्, ऐन्द्र एकादशकपालः, बार्हस्पत्यश्चरुः, वारुणो यवमयश्चरुः । आग्नेयोऽष्टाकपालः, सौम्यश्चरुः, वैष्णवस्त्रिकपालश्चरुर्वेति ।

दशपेयाङ्गभूतता इति संशये यद्यपि सूत्रकारेण ब्राह्मणे वा न किञ्चिदुक्तमस्मिन्विषये, तथापि "सवित्रा प्रसवित्रा" इत्युपक्रम्य "प्रसूतः प्रसर्पामि" ( वा० सं० १०।२९ ) इति प्रसर्पणार्थतादर्शनात् प्रसर्पणशब्दस्य च दशपेये सत्वाद् दशपेयाङ्गत्वमेव युक्तम् ॥ ९ ॥

[ अभिषेचनीयदशपेययोरेकतन्त्रेणानुष्ठानम् ]

पूर्वोक्तौ यावभिषेचनीयदशपेयौ, तयोरेक एव प्रयोगः ? उत भिन्नतन्त्रता इति संशये प्रथमपक्षमाह—

**एकतन्त्रौ क्रयैकत्वात् ॥ १० ॥**

एकतन्त्रावेव कर्तव्यौ । कुतः ? क्रयस्यैकत्वात् । श्रुतौ हि "सह सोमं क्रीणात्यभिषेचनीयस्य दशपेयस्य च" इति अभिषेचनीयसोमक्रयणकाले एव दशपेयसोमक्रयस्यापकर्षः श्रुतः । तदपकर्षाच्च तत्पूर्वतनानामपि अङ्गानामपकर्षः "तदन्तापकर्षन्यायेन ( जै० ५।१।१२ ) सिद्ध्यति । अतश्च क्रयैक्यादितरेषामपि धर्माणामेकत्वम् ॥१०॥

एवं भूतं सिद्धान्तमाक्षिपति—

**नाना वाऽवभृथदीक्षा-श्रुतिभ्याम् ॥११॥**

भिन्नतन्त्रावेव तौ । कुतः ? अवभृथदीक्षाश्रुतिभ्याम् । अभिषेचनीयस्य हि अवभृथो ( ५।३।५।२९ ) दीक्षा च ( ५।४।५।१३ ) पृथक् श्रूयेते । तद्बलाच्च पृथगेव धर्मा अनुष्ठेयाः । न ह्येकतन्त्रत्वे पृथग् दीक्षावभृथश्रवणं सङ्गच्छेत ॥११॥

पक्षमिमं खण्डयति—

**एकं त्वानुपूर्व्ययोगात् ॥१२॥**

एकमेव तन्त्रं, न तु पृथक् प्रयोगः । कुतः? आनुपूर्व्ययोगात् । एकतन्त्रेणानुष्ठाने क्रियमाणेऽपि दीक्षणीयादीनां पदार्थानामानुपूर्व्येण सम्बन्धः सिद्ध्यति । अन्यथा प्रयोगविध्यवगतः क्रमो बाधितः स्यात् । क्रये परं वचनादपकर्षः ॥१२॥

एवं दीक्षावभृथयोरभ्यासोऽपि वचनबलादित्याह—

**अवभृथदीक्षाभ्यासो वचनात् ॥१३॥**

**सप्तम्यां ब्रह्मागारात्सोममाहृत्यासन्द्यभिमर्शनादि करोति ॥१४॥**

सम्प्रदायमते सप्तम्यां तिथौ, काण्वपाठानुसारेण (७।४।१६) अभिषेचनीयसमाप्तितः सप्तमसङ्ख्यायां द्वादश्यां तिथौ ब्रह्मागाराद्दशपेयार्थं सोममानीय सोमासन्द्याहरणाभिमर्शनादि प्राकृतं कर्म सर्वं कुर्यात् । "ब्रह्मागारे निदधाति" (१५।४।३) इति पूर्वमुक्तम् ॥१४॥

[ उपसद्देवताभ्यो हविर्निर्वापः ]

**उपसद्देवताहवींᳫंषि निर्वपत्युपसदन्त इच्छन्यथोक्तम् ॥ १५ ॥**

उपसत्समासः पूर्वमुक्तः ( ८।३।१९ ) । तदन्ते उपसद्देवताभ्योऽग्निसोमविष्णुभ्यो यथोक्तं हवींषि निर्वपेदिच्छन्यजमानः । इच्छन् शब्दो विकल्पं बोधयति । आग्नेयोऽष्टाकपालः, सौम्यश्चरुर्वैष्णवस्त्रिकपाल इत्युक्तानि हवींषि ॥ १५ ॥

[ दशपुरुषपर्यन्तमविच्छिन्नकृतसोमयागानां शतब्राह्मणानां प्रतिसवनं सर्पणम् । ]

**पितामहदशगणᳫं सोमपानाᳫं सङ्ख्याय सर्पणम् ॥१६॥**

पित्रादयः पूर्वजाः सर्वे पितामहशब्देनोच्यन्ते । सोमपानां पितामहादीनां सोमयाजिनां दशगणं = समूहं सङ्ख्याय अमुकः प्रथमः सोमपः, अमुको द्वितीयः, असौ तृतीय इत्येवं दश-

पर्यन्तान् सोमयाजिनो गणयित्वा विभूरसीत्यादि ( ६।८।१८ ) सर्पणं कुर्युः । अत्र वचनादनृत्विजानामपि तेषां सर्पणं भवति ॥ १६ ॥

**सवित्रेति ( १०।३० ) वाऽनुवाकमुक्त्वा ॥१७॥**

अथ वा "सवित्रा प्रसवित्रा" इत्यनुवाकमुक्त्वा शतं ब्राह्मणाः सर्पेयुः, न पितामहगणं सङ्ख्याय ॥ १७ ॥

[ एकैकस्य चमसस्य दशभिर्दशभिर्ब्राह्मणैर्भक्षणम् ]

**दश दशैकं चमसमनु भक्षयन्ति ॥१८॥**

चमसानां भक्षणकाले एकैकं चमसं दश दश ब्राह्मणा अनुभक्षेयुः ( ५।४।५।२ ) तत्रैकैक ऋत्विक्, अन्ये नव अप्रकृताः। तत्र नेष्टृचमसे चत्वारोऽध्वर्युपुरुषाः, षडन्ये। होतृचमसे ग्रावस्तुद् द्वितीयः षड्न्ये, उद्गातृचमसे चत्वारः सामगाः, षडन्ये । अन्येषु चमसेषु नव नवान्ये। यजमानचमसे यजमानव्यतिरिक्ता दश ब्राह्मणा एव। क्षत्रिययजमानस्य सोमपाननिषेधात् ॥ १८ ॥

[ यजमानचमसस्य च ब्राह्मणैरेव भक्षणं, न क्षत्रियैः ]

**यजमानस्य राजन्याः ॥ १९ ॥**

यजमानस्य चमसे राजन्या भक्षयेयुः, न ब्राह्मणा इति पूर्वपक्षः ॥१९॥

सिद्धान्तमाह—

**ब्राह्मणा वा श्रुतेः ॥२०॥**

ब्राह्मणा एव भक्षयितारो, न राजन्याः। कुतः ? श्रुतेः । "शतं ब्राह्मणाः पिबन्ति" (तै० सं० १।८।२ ) इति श्रुतेरित्यर्थः ॥२०॥

**तुल्याः सङ्ख्यायोगात् ॥ २१ ॥**

"शतं ब्राह्मणाः पिबन्ति" इति शतसङ्ख्या श्रुता। सा च तुल्येष्वेवोपपद्यते; न तु नवतौ ब्राह्मणेषु दशसु च राजन्येषु सत्सु ते उभे आदाय शतसंख्या भवितुमर्हति। अतो राजन्यचमसभक्षका ब्राह्मणा दशेति। एतच्च जैमिनीये ( ३।५।१९ ) विचारितम् ॥ २१ ॥

[ दशपेयस्य दक्षिणा ]

**ब्रह्मणे ददात्यꣳशुवद्दक्षिणा ॥२२॥**

दशपेये दक्षिणाकाले ब्रह्मणे अंशुग्रहवद्दक्षिणा देया। तेन द्वादश वत्सतर्यो गर्भिण्यो दक्षिणा ( १२।५।१३ ) इत्यर्थः ॥ २२ ॥

**हिरण्मयीꣳ स्रजमुद्गात्रे, रुक्मꣳ होत्रे, हिरण्मयौ प्राकाशावध्वर्युभ्यामश्वं प्रस्तोत्रे, वशां मैत्रावरुणायर्षभं ब्राह्मणाच्छꣳसिने, वाससी नेष्टापोतृभ्यामन्यतरतो युक्तं यवाचितमच्छावाकाय गामग्नीधे ॥ २३ ॥**

दद्यादिति सर्वत्र शेषः। रुक्मः परिमण्डलः सौवर्ण आभरणविशेषः। प्राकाशौ दर्पणे, कर्णवेष्टकावित्यपरे। वशा वन्ध्या गौः। या गम्यमानाऽपि गर्भं न गृह्णाति। एकस्मिन्नेव पार्श्वे बलीवर्दयुक्तं यवैः पूर्णं शकटमच्छावाकाय ॥ २३ ॥

[ दशपेयाख्यसोमानन्तरं संवत्सरपर्यन्तमवपनम्, भूम्यां पादयोरनिधानं च ]

**अभिषेचनीयान्ते केशवपनार्थे निवर्तनर्ठ० संवत्सरम् ॥ २४ ॥**

अभिषेचनीयो लक्षणया दशपेयः। तदन्ते दशपेयसमाप्त्यनन्तरं वर्षपर्यन्तं यत्र दीक्षादौ वैधं वपनं प्राप्नोति तत्र केशाग्राणां निवर्तनं छेदनं कर्तव्यं, न तु वपनम् (५।५।३१६) ॥ २४ ॥

**भूम्यनधिष्ठानं च ॥ २५ ॥**

वर्षपर्यन्तं भूमेरुपर्यवस्थानं न कर्तव्यमुपानद्धारणमन्तरा ॥ २५ ॥

[ उपानद्धारणमकुर्वतो यावज्जीवं भूमौ पादयोरनिधानम् ]

**अनुपानत्कस्य यावज्जीवम् ॥२६॥**

उपानत्यागपक्षे यावज्जीवं भूम्यां नोपविशेत् । यदा भूमौ यजमानस्तिष्ठेत्तदा प्रथममुपानहौ पादयोः परिधायैव। उपानद्धारणपक्षे तु संवत्सरं यावत् भूम्यामनुपवेशनम्। ( अत्र चैत्रशुक्लैकादशीमारभ्य पूर्णिमामारभ्य वाऽमान्तं किमपि न भवति ) ॥ २६ ॥

अष्टमी कण्डिका ॥ ८ ॥



[ पञ्चहविष्कः पञ्चविलसंज्ञकश्चरुः ]

**उत्तरे शुक्ले पञ्चविलः ॥१॥**

वैशाखशुक्लपक्षे कस्मिंश्चिदहनि वैशाख्यां वा पञ्चविलः कर्तव्यः। पञ्चविल इति वक्ष्यमाणस्य पञ्चहविष्कस्य कर्मणः संज्ञा। अस्यैवावेष्टिरित्यपि संज्ञा ॥ १ ॥

हवींष्याह—

**आग्नेय, ऐन्द्रः सौम्यो वा, वैश्वदेवश्चरुः, पयस्या मैत्रावरुणी, बार्हस्पत्यश्चरुः ॥ २ ॥**

आग्नेयोऽष्टाकपालः, ऐन्द्र एकादशकपालः, सौम्यश्चरुः ॥ २ ॥

**प्रतिदिशमासादनमाग्नेयं पुरस्तात्प्रदक्षिणमितराणि मध्येऽन्त्यम् ॥३॥**

**पूर्वैश्चरित्वा चरित्वा मध्यमे सꣳस्रवासेचनम् ॥४॥**

सर्वैराग्नेयादिभिर्हुत्वा हुत्वा एकैकस्य मध्यमे बार्हस्पत्ये चरौ (५।५।१।३) संस्रवासेचनं कुर्यात् ॥ ४ ॥

**आग्नेयो हिरण्यदक्षिणोऽग्नीधे ददा, त्यैन्द्रस्य ऋषभः, सौम्यस्य बभ्रु र्ब्रह्मणे, वैश्वदेवस्य पृषन्होत्रे, पयस्याया वशाऽभावेऽप्रवीताऽध्व र्युभ्यां, बार्हस्पत्यस्य शितिपृष्ठो ब्रह्मणे ॥ ५ ॥**

आग्नेयः पुरोडाशो हिरण्यदक्षिणो भवति। तच्च हिरण्यमग्नीधे दद्यात्। ऋषभो, बभ्रुर्गौर्वा ब्रह्मणे देयः। पृषन् विचित्रवर्णो गौः। वशा बन्ध्या गौः। अभावे अक्षतयोनिर्गौः ( ५।५।४।२२ )। अध्वर्युभ्यामिति द्वितीयोऽग्नीदुच्यते ( इति पञ्चबिलः ) ॥ ५ ॥

अन्नाद्यकामस्याप्येषा ॥ ६ ॥

एषा अवेष्टिः राजसूयाद्बहिर्भवति ॥ ६ ॥

[ प्रयुग्घविःसंज्ञकानां द्वादशानां हविषां प्रचारः । तत्र एकं हविरनुष्ठाय मासेऽतीते द्वितीयं हविः, पुनरेकं हविरनुष्ठाय मासेऽतीते तृतीयं हविरित्येवं द्वादशानां हविषामनुष्ठानमित्येकः पक्षः ]

द्वादशोत्तराणि प्रयुग्घवीꣳषि मासान्तराणि ॥ ७ ॥

द्वादश प्रयुग्घवींषि मासि मासि एकैकं कृत्वाऽनुष्ठेयानि (५।५।२।१) । द्वादशग्रहणं शम्याप्रासपक्षे एकस्मिन्नेव द्वादशानामनुष्ठानमिति बोधयितुम् । वैशाख्यां पञ्चबिलानन्तरं तस्मिन्नेवाहनि प्रथमं हविः, ज्यैष्ठ्यां द्वितीयम्, आषाढ्यां तृतीयमित्येवं मासान्तरता ॥ ७ ॥

[ एकस्मिन्नेव काले शम्यापरासे शम्यापरासे द्वादशानामनुष्ठानं, न मासान्तरेणेति द्वितीयः पक्षः ]

कालव्यवधानमुक्त्वा देशव्यवधानमाह—

आहवनीयाद्वा पुरस्ताच्छम्याप्रासे शम्याप्रास आग्नेय-सौम्य-सावित्र-बार्हस्पत्य-त्वाष्ट्र-वैश्वानरा यथोक्तम् ॥ ८ ॥

अथवा आहवनीयादवधिभूतात्पुरस्तात् = प्राच्यां दिशि शम्याप्रासे शम्याप्रासे प्रयुग्घवींष्यनुतिष्ठेत् । अध्वर्युराहवनीयसमीपे स्थित्वा प्राचीं शम्यां प्रक्षिपेत्, सा यत्र पतति तत्र गार्हपत्यस्थानं, ततः प्राग्यथोक्तमाहवनीयस्य । तत्र प्रथमेन यष्टव्यम् । तदन्ते पुनरप्याहवनीयसमीपे स्थित्वेत्यादि कर्तव्यम् । एवं षण्णां शम्याप्रासे शम्याप्रासेऽनुष्ठानं कृत्वा पुनरावृत्तौ गार्हपत्यसमीपे स्थित्वा प्रतीचीं शम्यां प्रास्यति, सा यत्र पतति तदाहवनीयस्थानम् । यथोक्तं गार्हपत्यस्य । तथा सत्यन्त्यं हविरग्निहोत्रगृहे एव भवति । त्वाष्ट्रो दशकपालः ॥ ८ ॥

एवमावृत्तस्य चरवः सारस्वत-पौष्ण-मैत्र-क्षैत्रपत्य-वारुणाऽऽदित्याः ॥ ६ ॥

एवं शम्याप्रासे शम्याप्रासे आहवनीयं प्रत्यावृतस्य सारस्वताद्याः षट् चरवो भवन्ति ॥ ६ ॥

[ षण्णां षण्णामेकतन्त्रेणानुष्ठानमिति तृतीयः पक्षः ]

पक्षान्तरमाह—

षट् षड् वैकृतन्त्रे ॥ १० ॥

अथवा षट् षट् हवींषि समानतन्त्राणि भवन्ति, न मासान्तराणि, नापि शम्याप्रासे शम्याप्रास इति ॥ १० ॥

[ षण्णामेकतन्त्रतापक्षे पूर्वाग्निवाहो दक्षिणा, इतरस्मिन् पक्षद्वयेऽन्वाहार्यः ]

अस्मिन्पक्षे दक्षिणामाह—

पूर्वाग्निवाहौ द्वौ द्वौ षण्णाꣳ षण्णां दक्षिणा ॥ ११ ॥

पूर्वाग्निमावसथ्याग्निं शकटस्थं वहतीति पूर्वाग्निवाहोऽनड्वान् । तादृशौ द्वौ द्वौ बलीवर्दौ षण्णां षण्णां पृथक् पृथग् दक्षिणा भवति । पक्षान्तरे त्वन्वाहार्यो दक्षिणा ॥ ११ ॥

[ पशुबन्धद्वयं गर्भिणीभ्याम् ]

अष्टापदीवत्पशुबन्धौ गर्भिण्याꣳ स्वगुणदक्षिणौ ॥ १२ ॥

वैशाखामावास्यायां सगर्भानूबन्ध्यावत् गर्भिणीभ्यां गोभ्यां भिन्नतन्त्रौ पशुबन्धौ

कर्तव्यौ। कीदृशौ स्वगुणदक्षिणौ। स्वगुणौ यादृशीभ्यां गोभ्यां पशुबन्धौ क्रियेते तादृश्यावेव गर्भिण्यौ गावौ दक्षिणा ययोः पशुबन्धयोस्तौ ॥ १२ ॥

अत्रैव विशेषमाह—

[ प्रथमे गर्भिणी गौः, द्वितीये विचित्रवर्णा गर्भिणी गौर्दक्षिणा ]

**श्येन्यादित्येभ्योऽदित्यै वा ॥१३॥**

प्रथमे पशुबन्धे श्येनी = रक्तवर्णा गर्भिणी गौरादित्येभ्य आलभेत। अथवा अदित्यै आलभेतेति देवताविकल्पः ॥१३॥

**वैश्वदेवी पृषती मारुती वा ॥१४॥**

द्वितीये पशुबन्धे पृषती = विचित्रवर्णा गर्भिणी गौर्विश्वेभ्यो देवेभ्यो मरुद्भ्यो वा आलभेत ॥१४॥

[ केशवपनीयसंज्ञस्यातिरात्रसंस्थसोमयागस्यानुष्ठानम् ]

**तदन्ते केशवपनीयोऽतिरात्रः पौर्णमासीसुत्यः ॥१५॥**

पशुबन्धद्वयान्ते केशवपनीयसंज्ञकोऽतिरात्रसंस्थः सोमयागः कार्यः। तस्य च सुत्या ज्यैष्ठ्यां पौर्णमास्यां कार्या। वैशाख्याममायामारम्भः, द्वादश दीक्षाः, तिस्र उपसदः ॥१५॥

( चत्वारः सोमयागा मासान्तरेण )

**उत्तरे च मासान्तराः ॥१६॥**

उत्तरे वक्ष्यमाणाश्चत्वारः सोमयागा मासान्तराः पौर्णमासीसुत्याश्च कर्तव्याः ॥१६॥

तानेवाह—

**व्युष्टिद्विरात्रः ॥१७॥**

व्युष्टिद्विरात्रसंज्ञकः क्रतुर्मासापवर्गः स्यात्। अस्य ज्येष्ठकृष्णद्वितीयायां प्रारम्भः। आषाढ्यां प्रथमं सौत्यमहः; प्रतिपदि द्वितीयम्। षोडश दीक्षाः, द्वादशोपसदः, द्वे सुत्ये। अत्राहीनद्वादशाहवत् गवां सहस्रं दक्षिणा, अश्वदाभ्यौ, तिस्रोऽनूबन्ध्याः, त्रैधातवी चेति तद्धर्माश्च ॥१७॥

अत्राहनी आह—

**अग्निष्टोमातिरात्रौ ॥१८॥**

आषाढ्यां प्रथममहरग्निष्टोमसंस्थं, प्रतिपदि द्वितीयमतिरात्रसंस्थम् ॥१८॥

**क्षत्रधृतिः ॥१९॥**

ततो मासान्तरे श्रावण्यां क्षत्रधृतिसंज्ञकः सोमयागोऽग्निष्टोमसंस्थः कार्यः ॥१९॥

( क्षत्रधृतिसंज्ञकसोमयागस्याद्यन्तयोः क्रमेण त्रिष्टोम-ज्योतिष्टोमानुष्ठानं वैकल्पिकम् )

**तमुभयत एके त्रिष्टोम-ज्योतिष्टोमौ ॥२०॥**

तं क्षत्रधृतिमुभयत आदावन्ते च त्रिष्टोमज्योतिष्टोमावग्निष्टोमसंस्थौ कुर्यादित्येके वदन्ति। करणपक्षे श्रावण्यां त्रिष्टोमः, भाद्रपद्यां क्षत्रधृतिः, आश्विन्यां ज्योतिष्टोम इति (१) ॥२०॥

---

(१) एते च सोमकालाः प्रयुग्घविषां शम्याप्रासपक्षे, षण्णां षण्णां तन्त्रपक्षे च। मासान्तरपक्षे तु आगामिनि वर्षे चैत्रामावास्यायां पशुबन्धौ। वैशाख्यां केशवपनीयः, ज्यैष्ठ्यां व्युष्टिद्विरात्रः, आषाढ्यां त्रिष्टोमः। श्रावण्यां क्षत्रधृतिः। भाद्रपद्यां ज्योतिष्टोमः। आश्विन्यां सौत्रामणीति।

पक्षान्तरमाह—

**अभिषेचनीयाद्वा संवत्सरात्केशवपनीयोऽतिरात्रः सोमापवर्गः ॥२१॥**

अभिषेचनीयपदं दशपेयस्यापि लक्षकम्। अथवा अभिषेचनीयदशपेयानन्तरं संवत्सरे पूर्णे केशवपनीयसंज्ञकः क्रतुः सोमापवर्गः कार्यः। सोमानामपवर्गः सोमापवर्गः, सर्वसोमानां समाप्तौ भवतीत्यर्थः। अथवा सर्वे सोमास्तस्यापवर्गे भवन्ति। सोमोऽपवर्गे यस्येति समासात् (१) ॥२१॥

( राजसूयान्तर्गता सौत्रामणी चरकसौत्रामणी )

**उत्तरे शुक्ले सौत्रामणी ॥२२॥**

सर्वसोमसमाप्त्यनन्तरं शुक्लपक्षे सौत्रामणी कार्या ॥२२॥

तत्रेतिकर्तव्यतामाह—

**व्रीहीन्विरूढाविरूढान् क्षौम उपनह्य क्रीणाति क्लीबात्सीसेन ॥२३॥**

विरूढान् जाताङ्कुरान्, अविरूढान् अजाताङ्कुरांश्च व्रीहीन् क्षौमे वस्त्रे बद्ध्वा नपुंसकपुरुषद्वारा क्रीणीयात् ॥२३॥

**पक्त्वौदनं विरूढांश्चूर्णीकृत्याश्विभ्यां पच्यस्वेति(१०।३१)सꣳसृजति॥२४॥**

अविरूढैर्व्रीहिभिश्चतुर्मुष्टिकग्रहणपूर्वकमोदनं पक्त्वा तत्र चूर्णीकृतान् विरूढव्रीहीन्मिश्रयेत् ॥ २४ ॥

**सिंह-वृक-व्याघ्रलोमानि चावपति ॥ २५ ॥**

तत्रैव ॥ २५ ॥

**पशुषु वा ॥२६॥**

अथवा पशववदानेषु श्रप्यमाणेषु सिंहादिलोमान्यावपेत् ॥ २६ ॥

( चरकसौत्रामण्यां पुरोडाशधर्मता )

सुराया ओषधिप्रभवद्रव्यत्वेन पुरोडाशयागधर्मग्राहकत्वम्? उत ग्रहग्रहणादिविधानेन सौमिकधर्मग्राहकत्वमिति संशये सिद्धान्तयति—

**पुरोडाशधर्मा द्रव्यसामान्यात् ॥ २७ ॥**

पुरोडाशधर्मा एवात्रानुष्ठेयाः। कुतः? द्रव्यसामान्यात्। ओषधिप्रभवद्रव्यत्वस्य सुरायां पुरोडाशे च समत्वात्। अतश्च द्रव्यसादृश्यबलात् पुरोडाशधर्मा एव ॥ २७ ॥

तर्हि उपयामादीनां श्रवणं कथमिति चेतत्राह—

**यावदुक्तꣳ सौमिका गुणत्वात् ॥ २८ ॥**

ये च सौमिका गुणास्ते यावदुक्तमनुष्ठेयाः, न तु साकल्येन। कुतः? तेषां गुणत्वात्। द्रव्यापेक्षया गुणभूयस्त्वादिति। एतच्च जैमिनीये ( ३।५।३ ) विचारितम् ॥ २८ ॥

इति महर्षिकात्यायनविरचिते श्रौतसूत्रे विद्याधरशर्मकृतायां वृत्तौ नवमी कण्डिका ॥ ९ ॥

---

(१) अस्मिन्पक्षे प्रयुग्घविषां सद्यस्त्वमेव, न मासान्तरता। असंभवात्। यदाऽत्र प्रयुग्घवींषि मासान्तरे क्रियन्ते तदा तैरेव संवत्सरस्य व्याप्तत्वात् सर्वसोमानामन्ते केशवपनीयस्याभिषेचनीयात्संवत्सरेऽनुष्ठानं न संभवति। अस्मिन्पक्षे मार्गशीर्ष्यां व्युष्टिद्विरात्रः, पौष्यां त्रिष्टोमः, माघ्यां क्षत्रधृतिः, फाल्गुन्यां ज्योतिष्टोमः, चैत्र्यां केशवपनीयः। सर्वसोमानामन्ते वैशाख्यां सौत्रामणीति।

त्रिपशुः पशुबन्धः श्वः ॥ १ ॥

त्रयः पशवो वक्ष्यमाणा यस्मिन् स त्रिपशुः पशुबन्धः श्वः = पौर्णमास्यां कार्यः ॥ १ ॥

पक्षान्तरमाह—

चतुर्थ्यां पक्वायां वा ॥ २ ॥

अथवा चतुर्थेऽहनि सुरायां पक्वायां सत्यां त्रिपशुः पशुबन्धः कार्यः । अस्मिन्पक्षे द्वादश्यामारम्भः, पौर्णमास्यां त्रिपशुः। श्वःपक्षे तु वचनादपक्वायामपि कार्यः ॥ २ ॥

पशुत्रयमाह—

आश्विनोऽजः श्येतो, मल्हाऽविः सारस्वत्यृषभमिन्द्राय सुत्राम्णे ॥ ३ ॥

अश्विभ्यामर्थे रक्तश्छाग आलब्धव्यः । मलान् हन्ति जहाति इति मल्हा । यस्या ऊर्णासु रजो नास्ति सा अविर्मेषी सरस्वत्यै, ऋषभ इन्द्रायेति ॥ ३ ॥

तद्गुणाभावेऽजाः ॥ ४ ॥

पूर्वोक्तश्येतादिगुणविशिष्टानां पशूनामभावे त्रयोऽपि पशवश्छागा एव भवेयुः ॥ ४ ॥

प्रथमो लोहितः ॥ ५ ॥

सर्वेषामजानामालम्भपक्षे प्रथम आश्विनोऽजो रक्तवर्ण आलब्धव्यः ॥ ५ ॥

त्रियूपो वैकादशिनिलिङ्गात् ॥ ६ ॥

अस्मिन् त्रिपशौ त्रयो यूपाः कार्याः, अथवा एको यूपः कार्यः । कुतः ? एकादशिनिलिङ्गात् । एकादशिन्यामेकयूपत्वस्य अनेकयूपत्वस्य च दृष्टत्वात् । तथैवात्रापि पक्षद्वयमिति भावः ॥ ६ ॥

अग्नी वरुणप्रघासवत् ॥ ७ ॥

अत्र चरकसौत्रामण्यां वरुणप्रघासे यथाऽग्निद्वयं, तथाऽग्निद्वयं कार्यम् ॥ ७ ॥

तत्र विशेषमाह—

अवेदिर्दक्षिणः ॥ ८ ॥

दक्षिणोऽग्निर्वेदिरहितो भवति । वरुणप्रघासे वेदिद्वयमुक्तम्, तथाऽत्र न भवतीत्यर्थः ॥ ८ ॥

[ सुरानिर्माणप्रकारः ]

वपामार्जनान्ते कुशैः परिस्रुतं पुनाति "वायुः पूत" इति ( १०।३१ )॥ ९ ॥

परिस्रुत् सुरा ॥ ९ ॥

कुवल-कर्कन्धु-वदरचूर्णानि चावपति ॥ १० ॥

कुवलादीनां चूर्णानि पूतायां सुरायां प्रक्षिपेत् । कुवलानि स्थूलवदराणि, कर्कन्धुरारण्यकवदराणि , वदराणि चणकवदराणि ॥ १० ॥

[ सुराग्रह एकस्त्रयो वा ]

ग्रहं गृह्णाति "कुविदङ्गेति [१०।३२] ॥ ११ ॥

वैकङ्कतेन पात्रेण ॥ ११ ॥

त्रीन्वा प्रतिदेवतमेतयैव ॥१२॥

अथवा एतयैव पुरोरुचा त्रीन् ग्रहान् (५।५।४।२३) गृह्णीयात्प्रतिदेवतमेकैकम् ।

अत्र कुविदङ्गेति वारत्रयं पठेत् । प्रतिवारमुपयामगृहीतोऽस्यश्विभ्यां त्वा, उप० सि सरस्वत्यै त्वा, उपया० सीन्द्राय त्वा सुत्राम्णे इति मन्त्रशेषान् क्रमेण तत्र योजयेत् ॥ १२ ॥

**समस्यानुवाचनं यजेति च ॥१३॥**

'अश्विभ्यां, सरस्वत्या, इन्द्राय सुत्राम्णेऽनु ब्रूहि' इति समस्यानुवाचनं कुर्यात्। एवं 'अश्विनौ सरस्वतीमिन्द्रं सुत्रामाणं यज' इति समस्य वदेत् ॥ १३ ॥

**प्रथमस्यानुहोममितरौ ॥ १४ ॥**

ग्रहत्रयस्य ग्रहणं पत्ते उक्तम् (१२)। तस्मिन्पत्ते प्रथमं ग्रहं हुत्वा तमनु द्वितीयतृतीय-ग्रहौ प्रतिप्रस्थात्रग्नीध्रौ जुहुयाताम् ॥ १४ ॥

**परिस्रुद्धोमो दक्षिणेऽग्नौ ॥ १५ ॥**

सुराहोमो दक्षिणेऽग्नौ कर्तव्यः ॥ १५ ॥

[ सुराशेषं कुम्भे आसिच्य कुम्भस्योपस्थानम् ]

**भक्षमाहृत्य परिस्रुच्छेषमासिच्य रुक्मवच्छिद्रं कुम्भꣳ शिक्ये कृत्वोपरि दक्षिणस्य धारयन्तस्रवन्तमुपतिष्ठते तृचैः सोमवतां बर्हिषदामग्निष्वात्तानामिति ॥१६॥**

( अध्वर्युर्वषट्कर्त्रे भक्षमाहृत्य तेन सह भक्षणं च कृत्वा ) रुक्मे सौवर्णाभरणविशेषे नव छिद्राणि शतच्छिद्राणि वा पूर्वमुक्तानि (५।१।२)। तावच्छिद्रयुक्तं कुम्भं शिक्ये स्थापयित्वा तं सशिक्यं कुम्भमुपायेन दक्षिणस्याग्नेरुपरि समीप एव धारयन् तस्मिन् कुम्भे परिस्रुतः = सुरायाः शेषमासिच्य स्रवन्तं तं कुम्भम् "त्वꣳ सोम प्रचिकितः" (१९।५२–५४) इति सोमवतां तृचेन, "बर्हिषदः" (१९।५५–५७) इति बर्हिषदां तृचेन, "आयन्तु नः" (१९।५८–६०) इत्यग्निष्वात्तानां तृचेन चोपतिष्ठेत् ॥१६॥

[ त्रिपशुपुरोडाशार्थं हविषां निर्वापः ]

**हवीꣳषि निर्वपति सावित्र-वारुणैन्द्राणि यथोक्तं पशुपुरोडाशार्थे ॥१७॥**

सावित्रोऽष्टाकपालो द्वादशकपालो वा। वारुणो यवमयश्चरुः। ऐन्द्र एकादशकपाल इति ॥ १७ ॥

[ त्रिपशुपशुबन्धस्यदक्षिणा ]

**नपुꣳसको दक्षिणा रथवाही वडवा वा ॥१८॥**

अस्य त्रिपशुपशुबन्धस्य नपुंसको गौर्दक्षिणा। अथवा रथं वहतीति रथवाही वडवा = अश्वा दक्षिणा भवति ॥ १८ ॥

**सोमातिपूतस्याप्येषा ॥ १९ ॥**

यस्य सोमपानानन्तरं मुखव्यतिरिक्तेभ्यश्छिद्रेभ्यः सोमः स्रवति स सोमातिपूतः। तस्यापि एषा चरकसौत्रामणी प्रायश्चित्तार्थमनुष्ठेया ॥ १९ ॥

सोमातिपूतस्य सौत्रामण्यां विशेषमाह सूत्रत्रयेण—

**अनुयाजान्ते पशुपुरोडाशार्थैश्चरति ॥२०॥**

धारानुयाजान्ते पशुपुरोडाशार्थैः पूर्वोक्तैः सावित्रादिभिस्त्रिभिर्हविर्भिश्चरेत् ॥२०॥

**आश्विनेन प्रागवदानेभ्यः ॥ २१ ॥**

पशूनां हृदयाद्यवदानयागात्प्राक् आश्विनेन द्विकपालेन पुरोडाशेन प्रचरेत् ॥२१॥

पक्षान्तरमाह—

**हविर्भिर्वाऽऽश्विनाभावस्तु ॥ २२ ॥**

अथवा हृदयाद्यवदानयागात्प्राक् सावित्रादिभिः प्रचरेत्। तु=पुनरस्मिन् पक्षे आश्विनाभावः ॥ २२ ॥

[ राजसूययज्ञान्ते त्रैधातवीष्टिः ]

**राजसूययाजिनः कर्मापवर्गे वा सौत्रामणी ॥ २३ ॥**

राजसूयेनेष्टवतो यजमानस्य कर्मसमाप्तौ सौत्रामणी वा भवति ( ५।५।५।८ )। कुतः ? अश्विभ्यां पच्यस्वेत्यादीनां सौत्रामणीमन्त्राणां राजसूयान्ते पाठात् ॥ २३ ॥

सिद्धान्तमाह—

**त्रैधातव्यानुपूर्व्ययोगात् ॥ २४ ॥**

त्रैधातव्येव कर्मान्ते कार्या, न सौत्रामणी। कुतः ? आनुपूर्व्ययोगात्। ब्राह्मणे पूर्वं सौत्रामणी पठिता; ( ५।५।४।१ ) ततस्त्रैधातवी (५।५।५।१) । अतो ब्राह्मणानुपूर्व्ययोगात् त्रैधातव्येवान्ते कर्तव्येति ॥२४॥

इति दशमी कण्डिका ॥ १० ॥

इति महर्षिकात्यायनकृते श्रौतसूत्रे महामहोपाध्याय श्रीश्रीप्रभुदत्त सूरिसूनुविद्याधरशर्मकृतायां सरलाख्यायां वृत्तौ राजसूयनिरूपणात्मकः पञ्चदशोऽध्यायः ॥



# षोडशोऽध्यायः ।

## चयनम् ।

[ अग्निचयनस्य सोमाङ्गत्वम् ]

पूर्वस्मिन्नध्याये साङ्गो राजसूयो निरूपितः । इदानीं श्रुतिप्राप्तमग्निचयनं निरूप्यते—

**अग्निः सोमाङ्गं, तद्गुणव्यतिषङ्गात् ॥ १ ॥**

अग्निशब्देन इष्टकाभिः सम्पादितमग्न्याधारभूतं स्थण्डिलमुच्यते (१) । तच्च सौमिकमहावेद्यन्तर्गतोत्तरवेद्यामेव निष्पाद्यते । "उत्तरवेद्यां ह्यग्निश्चीयते" इति श्रुत्योत्तर वेदेरुपर्येव स्थण्डिलनिर्माणस्य विहितत्वात् । एवं च दशपद्यायां सौमिक्यामुत्तरवेद्यां ततोऽप्यधिकपरिमाणस्य स्थण्डिलस्य कर्तुमशक्यत्वेन पदवृद्ध्यादिना स्थण्डिलपरिमिता-मुत्तरवेदिं वर्द्धयित्वा तत्र स्थण्डिलं निष्पादनीयम् । इदमेव स्थण्डिलमग्न्याधारत्वादग्निरिति व्यवह्रियते । चितिः, चयनम्, अग्निचयनम् इत्यपि तस्यैव पर्यायाः । इदं चोत्तरवेद्या सह विकल्प्यते इति सूत्रकार एव वक्ष्यति (सू० २) । एवं च चयनपक्षे उत्तरवेदेरुपरि तस्य कर्तव्य-त्वादस्युत्तरवेद्योः समुच्चयः । तदभावे उत्तरवेदिमात्रम् । अयमेव विकल्पस्याशयः । इदं च स्थण्डिलं सोमयागस्याङ्गम् । कुतः ? तद्गुणव्यतिषङ्गात् । सोमगुणैर्व्यतिषज्य अस्य पाठात् । "अन्तरोपसदौ चिनोति" ( १०।२।५।१ ) इत्युपसदाद्यङ्गैः सह चयनस्य पाठादिति ( २ ) यावत् ॥१॥

[ समहाव्रते सोमयागे चयनस्य नित्यता, अन्यत्र सोममात्रे विकल्पः ]

**इच्छतः, समहाव्रते नियमः ॥ २ ॥**

अयमग्निरिच्छत एव सोमाङ्गं भवति । इच्छत इत्यनेन विकल्पोऽभिधीयते । विकल्पेन सोमयागाङ्गमित्यर्थः । कुत इति चेत्तत्राह—समहाव्रत इति । यतो महाव्रतसंज्ञकस्तोत्रविशिष्टे सामयागे "तस्मादेतानि सर्वाणि सहोपेयादग्निं महाव्रतं महदुक्थम्" ( १०।१।२।२ ) इति अग्नेर्नियमेन कर्तव्यताविधानात् ॥ २ ॥

[ नित्यस्याग्निष्टोमस्य प्रथमप्रयोगे चयनाभावः । कर्कमतेऽग्निष्टोममात्रे ]

**न प्रथमाहारे ॥ ३ ॥**

प्रथममाह्रियते = क्रियत इति प्रथमाहारः = प्रथमप्रयोगः । तत्र चितिं न कुर्यादि-त्यर्थः ॥ ३ ॥

कुत इत्यत आह—

**उत्तरवेद्यग्निनिधानात् ॥४॥**

"उत्तरवेद्यामग्निं निदधाति" ( ३।५।१।३३ ) इत्यनेन चयनरहितायां केवलायामुत्तर-वेद्यामपि अग्निनिधानस्य विहितत्वेन प्रथमप्रयोगेऽपि चयनानुष्ठाने तद्विधेरानर्थक्यापत्तेः । यदि

---

( १ ) "इष्टकाभिरग्निं चिनोति" "अग्निमारोहन्ति" ( ९।२।३।२४ ) "अग्निं प्रोक्षति" ( १७।१२।२९ ) इति चारोहणप्रोक्षणे स्थलस्योच्येते ।

( २ ) "प्रायणीयेन प्रचर्य सीरं युनक्ति" । ( ७।२।२२ ) "चितो गार्हपत्यो भवत्यचित आहव-नीयोऽथ राजानं क्रीणाति" ( ७।३।११ ) इत्याद्युदाहरणानि च द्रष्टव्यानि ।

च प्रथमयज्ञे चयनं क्रियते तर्हि तत्र चरितार्थोऽयमुत्तरवेदिविधिर्द्वितीयादिषु प्रयोगेषु न प्रवर्तेत इति तत्र चयनविधिः प्राप्नुयादिति। कर्काचार्यास्तु प्रथमाहारशब्देन अग्निष्टोमसंस्थाको ज्योतिष्टोमः सर्वोऽप्यभिधीयते, न तस्य प्रथमप्रयोगमात्रम्। अतश्च अग्निष्टोमसंस्थाकस्य ज्योतिष्टोमस्य द्वितीयादिप्रयोगेष्वपि न चयनप्राप्तिः। किन्तु उक्थ्यादिसंस्थान्तरेष्वेवेति मन्यन्ते॥ ४ ॥

[ फाल्गुनकृष्णप्रतिपदि माघस्यामायां वा इष्टकापशुः, तत्र त्रयः, पक्षाः। प्रथमे पक्षे पुरुषाश्वगोऽव्यजाः पञ्च पशवः। द्वितीये प्राजापत्य एकः, तृतीये वायव्य एकः ]

**चिकीर्षमाण उत्तरस्यां फाल्गुन्यां पौर्णमासेनेष्ट्वा पञ्च पशूनालभतेऽदक्षिणान् ॥ ५ ॥**

चयनं कर्तुमिच्छन् फाल्गुनकृष्णप्रतिपदि पौर्णमासेष्टिं कृत्वा पाशुकदक्षिणावर्जितान् वक्ष्यमाणान् (१५।१।८) पञ्चपशूनालभेत। 'अत्र यूपाः पञ्च, एको वा ॥ ५ ॥

[ पञ्चपश्वालम्भपक्षे दक्षिणाऽभावः, एकस्मै ब्रह्मणे दक्षिणादानं वा ]

**ब्रह्मणे वा दद्यात् ॥ ६ ॥**

अथवा पाशुकीं दक्षिणां ब्रह्मणे दद्यात्, नान्येभ्यः ॥ ६ ॥

**अमावास्यायामेके ॥ ७ ॥**

एके माघ्याममायां ( श० ब्रा० ६।२।२।६ ) पञ्चपश्वालम्भनमिच्छन्ति ॥ ७ ॥

**अग्निभ्यः कामाय पुरुषाश्वगोऽव्यजान् ॥ ८ ॥**

अग्निभ्यः कामाय जुष्टम् इत्येवं पुरुषम्, अश्वम्, गाम्, अविम्, अजं चालभेत-( ६।२।१।५ ) ॥ ८ ॥

[ पुरुषादीनां रशनाप्रमाणम् ]

**वर्षिष्ठरशनः पुरुषोऽनुपूर्वा इतरे ॥ ९ ॥**

वर्षिष्ठा अत्यन्तदीर्घा रशना यस्यासौ वर्षिष्ठरशनः पुरुषो भवेत्। इतरे पशवोऽनुपूर्वाः पूर्वपूर्वरशनातो न्यूनप्रमाणरशनावन्तो भवन्ति। प्रकृतौ "द्विव्यामा रशना" ( ६।३।२६ ) उक्ता। तदपेक्षया वर्षिष्ठा। तेन अजस्य द्विव्यामा, अवेस्त्रिव्यामा, गोश्चतुर्व्यामा, अश्वस्य पञ्चव्यामा, पुरुषस्य षड्व्यामेति ( श० ब्रा० ६।२।२।१६ ) ॥ ९ ॥

**सर्वेषां वा तुल्याः ॥१०॥**

अथवा सर्वेषां रशनाः समप्रमाणा द्विव्यामा एव कर्तव्याः ॥ १० ॥

[ सामिधेनीषु विशेषः ]

**समिध्यमान-समिद्धवत्यन्तरेण "समास्त्वाऽग्न" इति नव [ २७।१-९ ] दधाति॥११॥**

प्रकृतौ पञ्चदश सामिधेन्य उक्ताः। तत्र समिध्यमान इति ऋक् समिध्यमानवती। 'समिद्धो अग्न इति' ऋक् समिद्धवती (का० हौ० प० १।३)। तयोरन्तराले समास्त्वाऽग्न इति नव ऋचो होता ब्रूयात्। एवं चतुर्विंशतिः सामिधेन्यो भवन्ति ( ६।२।१।२१-२५ ) ॥११॥

[ अत्र प्रयाजानां द्वादशत्वम् ]

**आप्रियो द्वादशोर्ध्वा अस्येति ॥ १२ ॥**

अत्र "ऊर्ध्वा ऽअस्य" ( २७।११-२२ ) इति द्वादश ऋचः आप्रियः = प्रयाजयाज्याः

कार्याः ( ६।२।१।३१ ) । एतेनैवात्र द्वादश प्रयाजा इत्यपि ज्ञायते । द्वादशत्वं तु नराशंसतनून पात्समुच्चयेन । अत्र द्वितीयस्यानुमन्त्रणादि तृतीयेऽपि कार्यम् ॥ १२ ॥

**एकादशान्ते शासप्रैषादि करोति ॥१३॥**

प्रकृतौ " दशेष्ट्वा प्रयाजानाह शासमाहरेति " ( ६।४।८ ) इति दशप्रयाजान्ते शासप्रैषाद्युक्तम् । अत्र एकादशप्रयाजस्यान्ते इति विशेषः ॥ १३ ॥

**परिवृते पुरुषसंज्ञपनम् ॥१४॥**

पुरुषस्य संज्ञपनं शामित्रस्य पश्चात्परिवृतं कृत्वा तन्मध्ये कर्तव्यम् । अन्येषां तु शामित्र एव ॥१४॥

[ सर्वेषां पशूनां प्राणशोधनम् ]

**अजस्य शुन्धन्ति प्रचरणयोगात् ॥१५॥**

" पशोः प्राणाञ्छुन्धति पत्नी" ( ६।६।२ ) इति यदुक्तं, तत् अजस्यैवानुष्ठेयं, नान्येषां पशूनाम् । कुतः । तेषां चतुर्णाम् "अप्सु कायप्रासनम्" (१५।१।२०) इति जले प्रक्षेपविधानात् । यागो हि अजेनैव क्रियते, न चतुर्भिः । येन यागस्तस्यैव संस्कारा युज्यन्त इति ॥१५॥

**सर्वेषां वाऽविशेषात् ॥१६॥**

अथवा पशूनामपि प्राणशोधनं कार्यं, नाजमात्रस्य । कुतः ? अविशेषात् । अविशेषेण ; सर्वेषां देवतासम्बन्धात् । तच्छरीराणामुदके प्रक्षेपो वचनात् ॥१६॥

[ वैश्यराजन्यान्यतरपुरुषस्यालम्भः ]

**वैश्यः पुरुषो राजन्यो वा ॥१७॥**

आलब्धव्यो, न ब्राह्मणः ॥ १७ ॥

[ पुरुषादीनां शिरसां छेदनम् ]

**कण्ठेषु तृणमन्तर्द्धाय शिराᳪंस्यादत्ते ॥ १८ ॥**

वपोत्खेदनार्थम् "अग्रेण नाभिं तृणं निदधाति" ( का० ६।६।७ ) इति तृणनेधानमुक्तम् । तस्मिन्नेव काले मृतानां पुरुषादीनां गलेषु तृणमन्तर्द्धाय तेषां शिरांसि छित्वा आददीत । यागार्थं जिह्वां गृहीत्वा तस्या यत्नेन रक्षणम् । जिह्वाया आदानं तु नेदानीं कर्तव्यम् । किन्तु हृदयाद्यवदानेन सह सा ग्रहीष्यत इति ॥१८॥

[ एकेनाजेन यागपक्षे तद्व्यतिरिक्तपशुशरीराणां जले प्रक्षेपः, तज्जलाग्मृदामपां च ग्रहणमिष्टकार्थम् ]

**चतुर्णामप्सु कायप्रासनम् ॥१९॥**

पञ्चपश्वालम्भपक्षेऽपि एकेन पशुना यागः, सर्वैर्वा इति वक्ष्यति ( १६।१।२१।२३ ) तत्रैकपशुयागपक्षे चतुर्णां शिरो गृहीत्वा शिष्टशरीराणां तडागादिस्थास्वप्सु प्रक्षेपं कुर्यात् । आलम्भस्तु पशूनामेव ॥१९॥

**ततो मृदिष्टकार्थाऽऽपश्च ॥२०॥**

ततः = प्रक्षिप्तपुरुषादिशरीरेभ्योऽद्भ्यः सकाशात् इष्टकानिष्पत्त्यर्थं मृत्तिका अपश्च गृह्णीयात् ॥२०॥

[ अजेन प्रचरणं तच्छेषस्य जले प्रक्षेपश्च ]

**अजेन चरति ॥२१॥**

अग्निभ्यः कामाय केवलेनाजेन प्रचरेत् ( ६।२।१।७ ) ॥२१॥

**सꣳस्थिते तस्य शेषप्रासनम् ॥२२॥**

पाशुके कर्मणि समाप्ते सति तस्य अजस्य यागावशिष्टो यो मांसशेषः, तस्य अप्सु प्रक्षेपः कर्तव्यः ॥ २२ ॥

[ एकेषां मते सर्वैः प्रचारो, न जले प्रक्षेपः ]

**सर्वैरेके ॥२३॥**

एके शाखिनः सर्वैः पञ्चभिरपि पुरुषादिभिर्यागमिच्छन्ति ( ६।३।१।१२ ) ॥२३॥

[ सर्वपशुयागपक्षेऽपि एकपशुयागवद् हृदयाद्यङ्गैर्यागः, शेषस्य जले प्रक्षेप इष्टकानिष्पत्त्यर्थम् ]

पशुशरीराणामप्सु प्रक्षेपस्य इष्टकानिष्पत्त्यर्थत्वात् सर्वेषां प्रासनपक्षे शरीराणां हुतत्वादिष्टकासंपत्त्यभावात् सर्वैर्यागो न युज्यत इत्याशङ्कायामाह—

**एकस्यापि किं ततः सम्भरेदिति श्रुतेः (६।२।१।१३) ॥२४॥**

पञ्चपशुपक्षमभिधाय "श्यामतूपरो वा प्राजापत्यः" ( १६।१।३३ ) इत्येकपशुपक्षमपि विधास्यति। अस्मिन्पक्षे एकेनैव पशुना यागः क्रियते, तच्छेषस्याप्सु प्रासनं च क्रियते, तावतैवेष्टकानिष्पत्तिर्यथा भवति तथा सर्वयागपक्षेऽपि भविष्यति। अतो विकल्प एव युक्तः सर्वैर्यागः केवलेनाजेन वेति ॥ २४ ॥

[ वैश्वानरस्य पशुपुरोडाशस्यानुष्ठानम् ]

**वैश्वानरः पशुपुरोडाश उपाꣳशु ॥२५॥**

पशवोऽग्निभ्यः कामायालब्धव्याः। पशुस्तु वैश्वानरः कार्यः। अतो "यद्देवत्यः पशुस्तद्देवत्यः पशुपुरोडाशः" (श० ३।८।३।१) इत्यस्यात्र बाधः ॥२५॥

**पशुदेवता च ॥२६॥**

उपांशु भवति ॥२६॥

**आग्नेयो याज्यानुवाक्याः कामवत्यः ॥२७॥**

अग्निदेवताकाः कामशब्दवत्यः "आ ते वत्सः"( (ऋ० ५।८।३६) इत्याद्या वपा-पुरोडाशपशूनां याज्यापुरोऽनुवाक्या भवन्ति ॥२७॥

**मैथुनं वर्जयेदापयस्यायाः ॥२८॥**

"उदवसानीयान्ते मैत्रावरुणी पयस्या" इत्युक्तम्। इष्टकापश्वनन्तरं पयस्यासमाप्तिं यावन्मैथुनं वर्जयेद्यजमानः ॥२८॥

**माꣳसोपर्यासने चेच्छन् ॥२९॥**

मांसाशनं पीठशय्यादेरुपर्युपवेशनं च पयस्यासमाप्तिपर्यन्तं वर्जयेन्न वा। इच्छाशब्दो विकल्पवाची ॥२९॥

[ उद्धृतत्वङ्मस्तिष्कानां शिरसां निधानमनुद्धृतत्वङ्मस्तिष्कानां वा ]

**त्वङ्मस्तिष्कोद्धृतानि घृताक्तानि शिराꣳसि निदधाति ॥३०॥**

त्वक् चर्म। शिरःकपालान्तर्गतं मांसं मस्तिष्कः। त्वक् च मस्तिष्कश्च त्वङ्मस्तिष्कौ। त्वङ्मस्तिष्कावुद्धृतौ येभ्यः शिरोभ्यः तानि त्वङ्मस्तिष्कोद्धृतानि शिरांसि घृताक्तानि कृत्वा सुगुप्ते देशे स्थापयेत् ॥३०॥

**सकलानि वा ॥३१॥**

अथवा सम्पूर्णान्येव शिरांसि निदध्यात्, न त्वङ्मस्तिष्कोद्धरणं तेभ्यः कर्तव्यम् ॥३१॥

[ पञ्चपशुयागपक्षे एव पक्षान्तरम् ]

पक्षान्तराणि त्रीण्याह—

**अन्यानि वा, हिरण्मयानि वा, मृन्मयानि वाऽनालभ्यैतान् ॥३२॥**

अथवा पुरुषादीन् न हन्यात्; किन्तु अन्यान्येव सङ्ग्रामादिहतानां शिरांसि क्रयणादिनाऽऽनीय त्वङ्मस्तिष्कोद्धृतानि, सकलानि वा निदध्यात्। अथवा सुवर्णमयानि मृन्मयानि वा पुरुषादिशिरांसि कुर्यात् ॥३२॥

[ एकपश्वालम्भपक्षो द्वितीयः ]

एकपश्वालम्भपक्षमाह—

**श्यामतूपरो वा प्राजापत्यः ॥३३॥**

अथवा शुक्लकृष्णवर्णः शृङ्गहीनः प्रजापतिदेवत एक एवाजः पशुरालब्धव्यः, पञ्च वा ॥३३॥

[ एकप्राजापत्यपशुपक्षे सामिधेनीषु विशेषः ]

**षड् दध्यात् ॥३४॥**

प्राजापत्यपशुपक्षे समिध्यमानसमिद्धवत्यन्तरे 'समास्त्वाग्न' इति ( २७।१-६ ) षड् ऋचो दध्यात् ॥३४॥

[ प्राजापत्यपशुपक्षे उत्तराघारे मन्त्रान्तरविधानम् ]

**"हिरण्यगर्भ" इत्यृचा ( १३।४ ) स्रुवाघारः ॥३५॥**

आघारहोमो हिरण्यगर्भ इत्यृचा कार्यः ॥३५॥

स चाघारहोमः पूर्वाघार उत्तराघारो वेति संशये पूर्वपक्षयति—

**पूर्वो वा देवतासामान्यात् ॥३६॥**

पूर्व एव स्रुवाघारो हिरण्यगर्भ इत्यृचा कर्तव्यो, न द्वितीयः। कुतः ? देवतासामान्यात्। पूर्वाघारेऽपि प्रजापतिर्देवता। हिरण्यगर्भ इत्यस्या अपि प्रजापतिरेव। एवं च देवतासादृश्यात् पूर्व एवाघारोऽनेन मन्त्रेण कर्तव्यः ॥३६॥

सिद्धान्तयति—

**उत्तरे तु सामान्योपदेशाभ्याम् ॥३७॥**

वाऽवधारणे। उत्तरे एवाघारेऽयं मन्त्रो, न पूर्वे। कुतः ? सामान्यात्, उपदेशाच्च। सामान्यात् = मन्त्रसादृश्यादित्यर्थः। प्रकृतौ उत्तराघारे "इत इन्द्र" (२।६) इति मन्त्रो दृष्टः। तत्रैव मन्त्रान्तरविधानमुचितम्। उपदेशाच्चेति। उपदेशाद् = विधिलाघवाच्च विलिङ्गस्यापि इन्द्रदेवताके उत्तराघारे विनियोगः। इति प्राजापत्यपशुपक्षः ॥३७॥

[ इष्टकापशौ एकपशुपक्षे वायव्यपशोर्वाऽनुष्ठानम् ]

वायव्यपशुपक्षमाह—

**वायवे वा नियुत्वते श्वेतलप्सुदी, द्वे दध्यात् ॥३८॥**

अथवा नियुत्वते वायवे श्वेतः, लप्सुदी कूर्चवान् छाग आलब्धव्यः। वायव्यपशुपक्षे समिध्यमानसमिद्धवत्यन्तरे समास्त्वाऽग्न इति द्वे ऋचौ पठेत् (२७।१-२) ॥३८॥

**प्राजापत्यः पशुपुरोडाशो द्वादशकपाल उभयोः ॥३९॥**

उभयोः प्राजापत्यवायव्ययोः पश्वोः प्राजापत्यो द्वादशकपालः पशुपुरोडाशः कार्यः ॥३९॥

**कद्वत्यो याज्यानुवाक्याः प्राजापत्यस्य ॥४०॥**

प्राजापत्यस्य पशोर्वपा-पुरोडाश-पशूनां कशब्दवत्यो 'हिरण्यगर्भ' इत्याद्या (ऋ० ८।७-१३) याज्या-पुरोऽनुवाक्याः कर्तव्याः ॥४०॥

**शुक्रवत्यो वायव्यस्य ॥४१॥**

वायव्यपशोर्वपा-पुरोडाश-पशूनां शुक्रशब्दवत्यः "पीवोअन्ना रयिवृधः" (ऋ० ५।६।१३) इत्याद्या याज्यापुरोऽनुवाक्याः ॥४१॥

**वपाया वा ॥४२॥**

वाऽवधारणे। वायव्यपशोर्वपाया एव शुक्रवत्यो याज्यापुरोऽनुवाक्याः, न पुरोडाशपश्वोः। तयोस्तु "प्रयाभिः, आनो नियुद्भिः" (२७।२७-२८) इत्येते नियुच्छब्दवत्यौ याज्या-पुरोऽनुवाक्ये। श्रुतेः (६।२।२।१४) ॥४२॥

**तुल्यमन्यत्सर्वेषु ॥४३॥**

अन्यत्सर्वं पशुत्रयेऽपि समानम् ॥४३॥

इति महर्षिकात्यायनप्रणीते श्रौतसूत्रे प्रथमा कण्डिका ॥१॥



[ उखासम्भरणं फाल्गुनकृष्णाष्टम्याम् ]

**उखासम्भरणमष्टम्याम् ॥ १ ॥**

फाल्गुनकृष्णाष्टम्याम् (६।२।२।२३)। तेन अषाढोखा-विश्वज्योतिषां सम्पादनमष्टम्यां कार्यम् ॥१॥

**आहवनीयस्य पुरस्तान्मत्या चतुरस्रे श्वभ्रे मृत्पिण्डमुपदधाति भूमिसमम् ॥२॥**

आहवनीयात्प्राच्यां दिशि स्वेच्छाप्रमाणे परिकल्पिते देशे चतुष्कोणं गर्तं कृत्वा तत्र भूमिसमम् = पार्श्ववर्तिन्या भूमेरनिम्नोन्नतं मृत्पिण्डं स्थापयेत्। मृत्पिण्डश्च यत्राप्सु पशुशरीराणि प्रक्षिप्तानि, तत आनेयः। एवमुदकमपि ॥ २ ॥

**पिण्डमपरेण व्यध्वे वल्मीकवपां छिद्रां निदधाति ॥ ३ ॥**

निहितस्य मृत्पिण्डस्य पश्चिमस्यां दिशि व्यध्वे = अर्द्धपथे पिण्डाहवनीययोर्मध्ये वल्मीकस्य = उपदीकाकृतस्य मृच्चयस्य वपाम् = अन्तःपुटं छिद्रां = छिद्रसंयुक्तां स्थापयेत्। छिद्रमस्यामस्तीति छिद्रा ॥ ३ ॥

[ अश्वगर्दभाजानां पूर्वापरपङ्क्त्या स्थापनम् ]

**आहवनीयं दक्षिणेन त्रिवृन्मुञ्जपञ्चाङ्गीबद्धास्तिष्ठन्ति प्राञ्चोऽश्व-गर्दभाजाः पूर्वापरा रासभो मध्येऽश्वपूर्वाः ॥ ४ ॥**

आहवनीयाद्दक्षिणस्यां दिशि प्राञ्चः = प्राङ्मुखाः पूर्वापराः = पश्चिमत आरभ्य पूर्वापरं पङ्क्त्या स्थिताः (न दक्षिणोत्तराः) स्थिता भवेयुः। तत्रापि रासभो मध्ये स्थितो भवेत्। अश्वपूर्वाः = रासभात्पूर्वमश्वः, परिशेषाद्रासभस्य पश्चादश्व इत्येवमश्वगर्दभाजास्त्रयः त्रिगुणाभिर्मुञ्जमयीभिः पञ्चाङ्गीभिर्मुखरिकाभिर्बद्धास्तिष्ठेयुः। पञ्चाङ्गानि यस्याः सा पञ्चाङ्गी। तानि च एका मुखे वृत्ताकारा, द्वितीया वक्त्रश्रोत्रान्तरमार्गेण शिरस उपरिस्था, तृतीया चक्षुषोरधस्तान्मुखस्याग्रे पूर्वरज्ज्वामुभयतो बद्धा, चतुर्थी पार्श्वस्था, पञ्चमी चावलम्बनरज्जुर्वक्त्रासंक्ता ॥ ४ ॥

[ अग्नेर्निधानम् ]

उत्तरत आहवनीयस्यारत्निमात्र उभयतस्तीक्ष्णा वैणवी सुषिराऽभ्रिः कल्माष्यभावेऽकल्माषी प्रादेशमात्र्यरत्निमात्री वा ॥ ५ ॥

वेणुर्वंशः, तन्मयी। सुषिरा = सच्छिद्रा, कल्माषी = परिपाकवशात् कर्बुरवर्णा अभ्रिर्निधेया ॥ ५ ॥

हिरण्मयीमेके ॥ ६ ॥

एके सुवर्णमयीमभ्रिं सच्छिद्रामुभयतस्तीक्ष्णामिच्छन्ति ॥ ६ ॥

[ सावित्रहोमः ]

अष्टगृहीतं जुहोति सन्ततमुद्गृह्णन्युञ्जान इति ॥७॥

अष्टभिर्ऋग्भिः ॥ ७ ॥

"देवस्य त्वेत्यभ्रिमादाय [१२।६] "हस्त आधायेत्यनेनाभिमन्त्रयते [११।१०] ॥८॥

अश्वप्रभृतींश्च प्रत्यृचं "प्रतूर्तं, युञ्जाथां, योगे योग" इति [११।१२-१४] ॥९॥

अभ्रिहस्त उपविष्टोऽनुमन्त्रयेदश्वादीन् ॥ ९ ॥

[ अश्वादीनां प्राच्यामुत्क्रमणम् ]

अनुपस्पृशन्नुत्क्रमयत्येनान्प्राचः प्रतिमन्त्रं "प्रतूर्वन्नुर्वन्तरिक्षं, पृथिव्याः सधस्थादिति [११।१५-१६] ॥१०॥

एतान् अश्वगर्दभाजान् हस्तेनास्पृशन् पाणिमुद्यम्य भयप्रकाशनेन प्राच्यां गमयेत् ॥१०॥

[ अग्नीन्प्रदीप्य पिण्डं प्रति गमनमृत्विजामश्वादीनां च ]

अग्निषु ज्वलत्सु पिण्डं गच्छन्त्यग्निं पुरीष्यमिति ॥११॥

गार्हपत्याद्यग्नित्रये प्रज्वलिते सति ब्रह्मयजमानाध्वर्यवः (६।३।३।१) श्वभ्रस्थं पिण्डं प्रति गच्छेयुः ॥११॥

दक्षिणतश्च पशवो युगपत् ॥१२॥

गच्छतां ब्रह्मादीनां दक्षिणतः पशवो युगपद्गच्छेयुः ॥१२॥

[ निष्प्रयोजनपुरुषेक्षणम् ]

अनद्धापुरुषमीक्षते देवपितृमनुष्याणार्थकर्माग्निं पुरीष्यमिति (११।१६) ॥१३॥

यो देवादीन्नावति स निष्प्रयोजनः पुरुषोऽनद्धापुरुषः। तं पश्येत् (५।३।१।२४) ॥१३॥

[ वल्मीकवपाछिद्रेण पिण्डावलोकनम्, वपानिधानं च ]

वल्मीकवपामादाय छिद्रेण पिण्डमीक्षतेऽन्वग्निरिति (११।१७) ॥१४॥

दृष्ट्वा निदधात्येनाम् ॥१५॥

"आगत्येत्यभिमन्त्रयतेऽश्वम् (११।१८) ॥१६॥

"आक्रम्येत्यनेन [११।१९] पिण्डमधिष्ठापयति ॥१७॥

पिण्डस्योपरि अश्वस्य सव्यं पादं निदध्यात् ॥१७॥

"द्यौस्त" इति [११।२०] पृष्ठस्योपरि पाणिं धारयन्ननुपस्पृशन् ॥१८॥

अश्वस्य स्पर्शमकुर्वन्नध्वर्युर्दक्षिणं हस्तमश्वपृष्ठस्योपरि धारयन् द्यौस्त इति पठेत् ॥१८॥

"उत्क्रामेत्युत्क्रमयति [११।२१] ॥१९॥

पिण्डतोऽश्वमुत्तारयेत्, पृथक्कुर्यादिति यावत् ॥२०॥

"उदक्रमीदित्यभिमन्त्रयते [११।२२] ॥२०॥

अश्वम् ॥२०॥

आहवनीयवत्स्थापयति पिण्डस्य ॥२१॥

"आहनीयं दक्षिणेन प्राञ्चोऽश्वगर्दभाजाः पूर्वापरा रासभो मध्येऽश्वपूर्वा" इत्युक्तम् (१६।२।४)। तत्सर्वं वतिनाऽतिदिश्यते। तेन पिडस्य दक्षिणतः तथाविधान् पशून् स्थापयेत् ॥२१॥

उपविश्य मृदमभिजुहोत्या त्वाजिघर्मीति [११।२३-२४] व्यतिषक्ताभ्यामाहुती स्रुवेणाश्वपदे ॥२२॥

अध्वर्युः पिण्डसमीपे उपविश्य मृत्पिण्डस्य उपरि जायमाने अश्वपदे = अश्वपदमुद्रायाम् 'आ त्वा जिघर्मीति ऋग्द्वयेनाहुतिद्वयं जुहुयात्। अत्र ऋग्द्वयस्य व्यतिषङ्गः कार्यः। तद्यथा— आ त्वा जिघर्मीति पूर्वस्याः पूर्वार्द्धम्, उत्तरस्या उत्तरार्द्धं मर्यश्रीरिति, एवमेका ऋक्। तत आ विश्वत इति द्वितीयस्याः पूर्वार्द्धं, पूर्वस्या उत्तरार्द्धम्, एवं द्वितीया ऋक् ॥२२॥

[ पिण्डपरिलेखनम्ः ]

अभ्र्या पिण्डं त्रिः परि लिखति "परि वाजपतिरिति [११।२५-२७] बहिर्बहिरुत्तरयोत्तरया ॥२३॥

परि वाजपतिरित्यादिमन्त्रत्रयेण पिण्डं त्रिः परि लिखेत्। तत्रापि पूर्वया ऋचा एकवारं परिलिख्य उत्तरया उत्तरया ऋचा पूर्वलिखिताद्बाह्यदेशे परिलिखेत् ॥२३॥

[ कृष्णाजिनास्तरणम् ]

अभ्र्या पिण्डं खनति "देवस्य त्वेति [११।२८] ॥२४॥

मन्त्रद्वयेन ॥२४॥

कृष्णाजिनमास्तीर्योत्तरतस्तस्मिन् पुष्करपर्णमपां पृष्ठमिति [११।२९] ॥२५॥

पिण्डस्योत्तरतः कृष्णाजिनं प्राग्ग्रीवमुत्तरलोम आस्तीर्य तस्मिन् कृष्णाजिने कमलिनीपत्रमास्तृणुयात् ॥२५॥

विमार्ष्ट्येनद्दिव इति [११।९] ॥२६॥

एतत्पुष्करपर्णं विमार्ष्टि विमार्जनेन विमलं कुर्यादित्यर्थः ॥२६॥

आलभत उभे "शर्म च स्थ" इति [११।३०] ॥२७॥

मन्त्रद्वयेन कृष्णाजिनपुष्करपर्णे सहैव स्पृशेत् ॥२७॥

पिण्डं "पुरीष्योऽसीति [११।३१] ॥२८॥

स्पृशेत् ॥२८॥

[ मृत्पिण्डस्य कमलिनीपत्रे निधानम् ]

पाणिभ्यां परिगृह्यात्येनं दक्षिणोत्तराभ्यां दक्षिणः साग्निस्त्वामग्न इति (११।३२-३७) षड्भिः सर्वेऽ० सकृद् धृत्वा पुष्करपर्णे निदधाति ॥२९॥

दक्षिणोत्तराभ्यां हस्ताभ्यामेनं पिण्डं गृह्णीयादध्वर्युः। तत्र दक्षिणभागे अग्निसहितेन

दक्षिणहस्तेन पिण्डस्य ग्रहणम्, उत्तरभागे च केवलेन सव्यहस्तेन पिण्डं गृह्णीयात् । एवं मृत्पिण्डं सर्वमपि सकृदेकप्रयत्नेन धृत्वा त्वामग्न इति षड्भिर्मन्त्रैः कृष्णाजिनोपर्यास्तृते कमलिनीपत्रे निदध्यात् ॥ २९ ॥

इति द्वितीया कण्डिका ॥ २ ॥

अपः श्वभ्रेऽवनयत्यपो देवीरिति ( ११।३८ ) ॥ १ ॥

गर्तेऽपः प्रक्षिपेत् ॥ १ ॥

"सं त" ( ११।३९ ) इति वातमपक्षिपति ॥ २ ॥

हस्तेन वायुमुत्पाद्य गर्तमध्ये तं प्रवेशयेत् ॥ २ ॥

अनामिकया संवपति पुरस्तात्पश्चाद्दक्षिणत उत्तरतश्च ॥ ३ ॥

अनामिकयाऽङ्गुल्या गर्ते तूष्णीं सर्वाभ्यो दिग्भ्यः पूर्वपश्चिमदक्षिणोत्तरक्रमेण मृदं प्रक्षिपेत् ॥ ३ ॥

[ मृत्पिण्डस्य बन्धनादिकम् ]

आस्तीर्णयोरन्तानुद्गृह्णाति "सुजात" इति ( ११।४० ) ॥ ४ ॥

आस्तीर्णयोः कृष्णाजिनपुष्करपर्णयोः प्रान्तान् चतुरोऽपि सर्वत ऊर्ध्वान् कुर्यात् ॥४॥

त्रिवृता मुञ्जयोक्त्रेणोप नह्यति "वासो अग्न" इति ( ११।४० ) ॥ ५ ॥

त्रिगुणितेन मुञ्जयोक्त्रेण कृष्णाजिनपुष्करपर्णवेष्टितं मृत्पिण्डं बध्नीयात् ॥ ५ ॥

उत्तिष्ठति पिण्डमादायोदु तिष्ठेति ( ११।४१ ) ॥ ६ ॥

कृष्णाजिनपुष्करपर्णवेष्टितं योक्त्रबद्धं पिण्डं हस्ताभ्यां तूष्णीमादाय मन्त्रेण तिष्ठेत् ॥ ६ ॥

ऊर्ध्वबाहुः प्राञ्चं प्रगृह्णात्यूर्ध्व ऊ षु ण" इति ( ११।४२ ) ॥ ७ ॥

प्रसारितबाहुरध्वर्युः पिण्डं धारयेत् ॥ ७ ॥

[ अश्वाद्यभिमन्त्रणम् ]

अवहृत्योपरिनाभि धारयन्नश्वप्रभृतीनभिमन्त्रयते "स जात, स्थिरो भव, शिवो भवेति ( ११।४३-४५ ) ॥ ८ ॥

अध्वर्युः पिण्डं नीचैरवतार्य नाभेरुपरि हस्ताभ्यां धारयन् अश्वगर्दभाजान् क्रमेण मन्त्रैरभिमन्त्रयेत् ॥ ८ ॥

[ अश्वादीनामुपरि मृत्पिण्डस्य निधानमनुपस्पृश्य ]

धारयत्येषामुपरि पिण्डमनुपस्पृशन् "प्रैतु वाजी, वृषाग्निमित्यश्वखरयोः ( ११।४६ ) ॥ ९ ॥

"अग्न आयाहीत्याहृत्य ( ११।४६ ) खराच्छागस्यर्तꣳ सत्यमित्यानिधानात् ( ११।४७ ) ॥ १० ॥

अध्वर्युः 'अग्न आयाहि वीतये' इति मन्त्रेण रासभात् पिण्डमानीय "परिवृते पिण्डं निदधाति" (६।३।१३) इत्येतत्पर्यन्तमजस्योपर्येव पिण्डं धारयेत् ॥ १० ॥

**आयन्त्यावर्त्य पशूनजः पुरस्ताद्रासभो मध्ये ॥ ११ ॥**

ततोऽश्वादीन्पशून् प्रदक्षिणावर्तनेन प्रत्यङ्मुखान् कृत्वा तैः सह ब्रह्मयजमानाध्वर्यवः परिवृतं प्रत्यागच्छेयुः । तत्राजः प्रथमो, रासभो मध्ये, अश्वः पश्चाद्गच्छेत् ॥ ११ ॥

**अनड्वापुरुषमीक्षते पूर्ववदग्निं पुरीष्यमिति ( ११।४७ ) ॥ १२ ॥**

ज्वलत्स्वग्निषु अनड्वापुरुषेक्षणं पूर्वमुक्तम् (१६।२।१३) । तद्वदत्रापि अग्नित्रये दीप्यमाने तं पश्येत् ॥ १२ ॥

**उत्तरत आहवनीयस्योद्धतावोक्षिते सिकतोपकीर्णे परिवृते प्राग्द्वारे पिण्डं निदधात्योषधय इति ( ११।४७-४८ ) ॥ १३ ॥**

उखासम्भरणार्थमुद्धृतस्याहवनीयस्योत्तरस्यां दिशि उद्धृतावोक्षिते देशे प्राग्द्वारं सिकतोपकीर्णं पञ्चहस्तं परिवृतं = गृहं निर्माय तत्र मृत्पिण्डं निदध्यात् ॥ १३ ॥

**"विपाजसेति ( ११।४६ ) प्रमुच्यैनमजलोमान्यादाय प्रागुदीचः पशूनुत्सृजति ॥ १४ ॥**

कृष्णाजिनबद्धमेनं मृत्पिण्डं विस्रंस्य अजस्य रोमाणि गृहीत्वा पशुत्रयमीशानीं दिशं प्रत्युत्सृजेत् ॥ १४ ॥

[ पिण्डेषु कषायमिश्रणम् ]

**"आपो हिष्ठेति [ ११।५०-५२ ] पर्णकषायपक्वमुदकमासिञ्चति पिण्डे ॥१५॥**

अग्निनिधानानन्तरं ( १६।२।५ ) पूर्वं दक्षिणाग्नौ पलाशत्वक्कथितमुदकं वर्तते । तस्मादुदकात्फेनमुद्धृत्य पात्रान्तरे स्थापयेत् । तच्च मन्त्रत्रयेण पिण्डस्योपर्यासिञ्चेत् ॥ १५ ॥

**फेनं च तूष्णीं ततः कृत्वा ॥ १६ ॥**

तत एवोदकात् पूर्वतरं फेनं कृत्वा ततस्तमुदकं, चशब्दात्फेनं च तूष्णीं पिण्डे आसिञ्चेत् ॥ १६ ॥

[ पिण्डेऽजलोमादिसंमिश्रणम् ]

**अजलोमभिः सꣳ सृजति "मित्रः सꣳ सृज्येति [ ११।५३ ] ॥ १७ ॥**

पूर्वं गृहीतैरजलोमभिः सह पिण्डं मिश्रयेत् ॥ १७ ॥

**शर्करायोरसाश्मचूर्णैश्च "रुद्राः सꣳ सृज्येति [ ११।५४ ] ॥ १८ ॥**

अयोरसो लोहरसः, यस्ताप्यमानो लोहात्पृथग्भवति । शर्कराचूर्णैः अयोरसचूर्णैः, अश्मचूर्णैश्च पिण्डं मिश्रयेत् ॥ १८ ॥

**"सꣳ सृष्टामिति संयौति [ ११।५५-५७ ] ॥ १९ ॥**

मन्त्रत्रयेण सम्यक् मिश्रयेत् ॥ १९ ॥

[ अषाढेष्टकाकरणं महिष्याः ]

**अषाढां करोति महिषी, प्रथमसंवित्ता तदाख्या ॥२०॥**

भार्याणां मध्ये प्रथमलब्धा महिष्याख्या स्त्री ( १।५।३।१ ) तस्मान्मृत्पिण्डात्पिण्डमादाय अषाढासंज्ञकामिष्टकां कुर्यात् ॥ २० ॥

अषाढाप्रमाणमाह—

**यजमानपादमात्रीं त्र्यालिखिताम् ॥ २१ ॥**

त्रिषु स्थानेषु आलिखितां द्वादशाङ्गुलां पद्यामिष्टकां कुर्यात् ॥ २१ ॥

[ यजमानस्योखाकरणम् ]

**यजमान उखां करोति मृदमादाय "मखस्य शिर" इति ( ११।५७ ) ॥ २२ ॥**

मृदादाने मन्त्रः ( ६।५।२।१ ) ॥ २२ ॥

एकपशुपक्षे उखाप्रमाणमाह—

**प्रादेशमात्रीं तिर्यगूर्ध्वां च ॥ २३ ॥**

तिर्यक् = विस्तारे दैर्घ्ये च प्रादेशमात्रीं, तथा ऊर्ध्वां च प्रादेशमात्रीमेव समचतुरस्त्रां कुर्यात् । न वृत्तामिति देवयाज्ञिकादयः ॥ २३ ॥

पञ्चपशुपक्षे विशेषमाह—

**पञ्चप्रादेशामिषुमात्रीं वा तिर्यक्पञ्चपशौ ॥ २४ ॥**

पञ्चपशुपक्षे क्षेत्रफलेन पञ्चप्रादेशपरिमाणाम्, त्रिभागोनत्रयोविंशत्यङ्गुलायामाम्, इषुप्रमाणां वा आयामे विस्तारे च कुर्यात् । उच्चता तु प्रादेशप्रमाणैव । तावत्परिमाणायां पञ्चपशुशिरसां समावेशः स्यादिति भावः ॥ २४ ॥

**"वसवस्त्वेति प्रथयति [११।५८] ॥२५॥**

आत्तं पिण्डमुखातलनिर्माणाय विपुलं कुर्यात् ॥ २५ ॥

**अन्तान्नुन्नीय सर्वतः प्रथमं धातुमादधाति "रुद्रास्त्वेति [११।५८] ॥२६॥**

प्रथनानन्तरं सर्वासु दिक्षु प्रथिततलस्य अन्तान्मध्यप्रदेशापेक्षयाऽङ्गुलमात्रमुच्चानूर्ध्वान् कृत्वा प्रथमां पिण्डिकां तत्र योजयेत् । धातुः प्रक्षेपः ॥ २६ ॥

**संलिप्य श्लक्ष्णां कृत्वोत्तरमादित्यास्त्वेति [११।५८] ॥२७॥**

तां पिण्डिकां शिथिलया मृदा संलिप्य वारिणा श्लक्ष्णां = सुकुमारां कृत्वा उत्तरम् = उत्तरां द्वितीयां पिण्डिकां निदध्यात् ॥ २७ ॥

**"विश्वे त्वेति [११।५८] समीकरोति ॥२८॥**

उखाम् । न्यूनप्रमाणा चेत् धातु ( मृत्पिण्ड ) प्रक्षेपेण पूर्णां कुर्यात् । अधिकप्रमाणा चेत् तदतिरिक्तां छित्त्वा पूर्णप्रमाणां कुर्यात् ॥ २८ ॥

[ तलान्मेखलान्तं प्रतिदिशं स्तनयुक्तचतुर्वर्त्तिकरणम् ]

**वितृतीय उत्तरे वर्तिꣳ सर्वतः करोत्यदित्यै रास्नेति [११।५९] ॥२९॥**

प्रादेशोच्चाया उखाया ऊर्ध्वमानं त्रेधा विभज्य उत्तरे = उपरितने तृतीयभागे सर्वदिक्षु मृन्मयीं वर्त्तिं = वर्त्याकारां मेखलां कुर्यात् ॥ २९ ॥

**ऊर्ध्वास्तूष्णीं प्रतिदिशं चतस्रोऽपरा वर्तिं प्रासाः ॥३०॥**

अपराश्चतस्रो वर्तीः ऊर्ध्वाः = उखातलमारभ्य पूर्वकृतां तिरश्चीं वर्तिं प्रासाः = मेखलां यावदुच्चाः कुर्यात् ॥ ३० ॥

तृतीया कण्डिका ॥ ३ ॥

[ उखाया द्विस्तनताऽष्टस्तनता वा ]

**स्तनानिवाग्रेषून्नयति ॥१॥**

एतासां चतसृणामूर्ध्वानां वर्तीनामग्रेषु तिरश्च्या वर्त्तेरुपरि स्तनसदृशान् मृदवयवान् कुर्यात् प्रतिवर्त्यैकैकम् ॥ १ ॥

**द्विस्तनामष्टस्तनामेके ॥२॥**

द्विस्तनपक्षे एकस्या एव कस्याश्चिद्वर्त्या अग्रे द्वौ स्तनौ कार्यौ। अष्टस्तनपक्षे ( श०६।५।२।१६ ) प्रतिवर्ति द्वौ द्वौ स्तनाविति ॥ २ ॥

**बिलं गृह्णात्यदितिष्ट इति [११।५९] ॥३॥**

उखाया मुखं स्पृशेत् ॥ ३ ॥

**"कृत्वायेति निदधाति (११।५९) ॥४॥**

एवमुखां निष्पाद्य भूमौ स्थापयेत् ॥ ४ ॥

[ उखायास्त्रित्वमेकत्वं वा ]

**तिस्र एके ॥५॥**

उखाः कुर्वन्ति। ( श०।।२।२२ ) अस्मिन्पक्षे मृद्ग्रहणादिनिधानान्तमेकैकस्याः काण्डानुसमयेन कर्तव्यम् ॥ ५ ॥

[ विश्वज्योतिःसंज्ञानां तिसृणामिष्टकानां यजमानेन निर्माणम् ]

**इष्टकास्तु तिस्रो विश्वज्योतिषः पृथग्लक्षणाख्यालिखिताः ॥६॥**

यजमानो विश्वज्योतिःसंज्ञकास्ख्यालिखितास्तिस्र इष्टकाः प्रथमा द्वितीया तृतीया इत्येवं प्रज्ञप्त्यर्थं पृथक् पृथग्लक्षणलक्षिताः कुर्यात् ॥ ६ ॥

**मृदमुपशयां निदधाति ॥७॥**

उखां क्रियमाणामुपशेते अतिरिच्यत इत्युपशया अतिरिक्ता मृत्। तां कार्यार्थं निदध्यात् ॥ ७ ॥

[ अश्वशकृद्भिरुखाधूपनम् ]

**सप्तभिरश्वशकृद्भिरुखां धूपयति दक्षिणाग्न्यादीप्तैरेकैकेन "वसवस्त्वेति [११।६०] प्रतिमन्त्रम् ॥८॥**

अध्वर्युर्दक्षिणाग्निनाऽऽदीप्तैरश्वस्य सप्तभिः शकृद्भिरेकैकेन शकृता प्रतिमन्त्रमुखामन्तर्बहिश्च धूपयेत् ॥ ८ ॥

**अभ्र्या श्वभ्रं चतुरश्रं खनत्यदितिष्ट्वेति [११।६१] ॥९॥**

आषाढादिपाकार्थम् ॥९॥

[ अषाढादीनां पाकः ]

**अपणमास्तीर्य यथाकृतमव दधाति ॥१०॥**

गर्ते अषाढादिपाकपर्याप्तमिन्धनं प्रक्षिप्य तत्र अषाढा, उखा, विश्वज्योतिषो येन क्रमेण कृतास्तेन क्रमेण गर्ते स्थापयेत् ॥ १० ॥

उखाया विशेषमाह—

**"देवानां त्वेत्युखां न्युब्जाम् [१२।६१] ॥११॥**

गर्ते स्थापयेत् ॥ ११ ॥

अपणेनावच्छाद्य दक्षिणाग्न्यग्निना दीपयति "धिषणास्त्वेति [११।६१] ॥१२॥

गर्तें मिहितानामषाढादीनामुपरि इन्धनं प्रक्षिप्य दक्षिणाग्नेरुल्मुकमादाय तेन दीपयेत् ॥ १२ ॥

निर्मन्थ्येन वा धूपनश्रपणे ॥१३॥

पूर्वोक्तं धूपनं श्रपणं च निर्मन्थ्येनाग्निना कर्तव्यं, दक्षिणाग्निना वेति विकल्पः ॥१३॥

"ऽवरुत्रीष्ट्वेतीक्षमाणो जपति [११।६१] ॥१४॥

ततो दण्डादिनोखोपरिस्थे श्रपणे छिद्रं कृत्वा तेन छिद्रेणोखामीक्षमाणस्त्रीणि यजूंषि स्वरेण जपेत् ॥१४॥

आचरति "मित्रस्येति [११।६२] ॥१५॥

आचरति = इन्धनं प्रक्षिपति ॥१५॥

यावद्वा चरेत् ॥१६॥

यावद्भिः प्रकारैरधस्तादुपरिष्टाच्च श्रपणं प्रक्षिपेत्, तावदनेनैव मन्त्रेण प्रक्षिपेत् ॥१६॥

[ दिवैवोखायाः पाकः ]

दिवैव प्रदहनोद्धरणे ॥१७॥

उखायाः प्रदहनं = पचनं, पक्वाया उखाया गर्ताद्बहिर्निष्काशनं च दिवैव कर्तव्यं, न रात्रौ (६।५।४।१०) ॥ १७ ॥

[ उखायां पक्वायां तस्या निष्काशनादि, पात्रे निधानं च ]

उद्वपति श्रपणम् ॥१८॥

श्रपणं = भस्मीभूतमिन्धनादि पाकानन्तरं पराकुर्यात् ॥ १८ ॥

"देवस्त्वेत्युखाम् [११।६३] ॥१९॥

उखापरिस्थं भस्मादि पराकरोति ॥१९॥

उत्तानां करोत्यव्यथमानेति [११।६३] ॥२०॥

उखाम् ॥ २० ॥

उद्यच्छत्युत्थायेति [११।६४] ॥२१॥

तामुखां हस्तद्वयेन सर्वतो गृहीत्वा पाकस्थानादूर्ध्वमुत्पाटयेत् ॥२१॥

परिगृह्य पात्रे करोति "मित्रैतां त" इति [११।६४] ॥२२॥

हस्तगृहीतामुखामुत्तरतः कस्मिंश्चित्पात्रे पीठादौ स्थापयेत् ॥२२॥

[ उखामध्येऽजापयस आसेकः ]

अजापयसाऽव सिञ्चति "ऽवसवस्त्वेति प्रतिमन्त्रम् [११।६५] ॥२३॥

उखामध्ये अजादुग्धं चतुःकृत्वोऽव सिञ्चेत् । ( इत्युखासम्भरणम् ) ॥ २३ ॥

इष्टकाकरणमाह—

[ सर्वा इष्टका निर्माय तासु चिन्हत्रयकरणमङ्गुल्यादिना ]

इष्टकाक्रियाऽतस्त्र्यालिखितानाम् ॥२४॥

अतोऽनन्तरं सर्वासामिष्टकानां त्रिषु स्थानेषु अङ्गुलिकाष्ठादिभिः कृतरेखाणां क्रिया = निष्पादनं भवति। सर्वास्विष्टकासु लेखात्रयं कार्यमित्यर्थः (१) ॥२४॥

---

(१) इष्टकानिर्माणप्रकारः। पूर्वं यजमानेनोर्ध्वबाहुना प्रपदोच्छ्रितेन समस्थितेन वा समं वंशं मिनुयात् स पुरुषः। तस्य पुरुषप्रमाणस्य द्वात्रिंशांशं तत्र वर्द्धयित्वा वंशं तावत्प्रमाणं कुर्यात्। "ह्रसते पाकशोषाभ्यां द्वात्रिंशद्भागमिष्टका। तस्मादार्द्रप्रमाणं तु कुर्यान्मानाधिकं बुधः" इति श्लोकशुल्बे वचनादार्द्राणामिष्टकानां पाकात् शोषाच्च द्वात्रिंशांशो ह्रासो भवति। कातीयशुल्बे तु—"इष्टका पाक-शोषाभ्यां त्रिंशन्मात्रा तु हीयते" (का० शु० कं० ९ सू० २३) इत्युक्तम्। अतः पुरुषे पुरुषद्वात्रिंशांशं त्रिंशांशं वा वर्द्धयित्वा इष्टकायन्त्रनिर्माणं कुर्यात्। रामचन्द्र-वाजपेयिनस्तु "अयं द्वात्रिंशांशह्रासः पादभागाविषयः। तेन पद्यायां द्वौ द्वात्रिंशांशौ, जङ्घामात्र्यां त्रयो द्वात्रिंशांशाः, बृहत्यां वक्रासु च चत्वारो द्वात्रिंशांशा वर्द्धनीयाः। एवमर्द्धबृहतीनां त्रिप्राहिण्यां च ह्रासादिकमूह्यमित्याहुः। ततस्तं वंशं दशधा विभज्य चिन्हानि कुर्यात्। एवं तस्य वंशस्य दशमो भागः पदसंज्ञको भवति। पदस्य द्वादशांशोऽङ्गुलम्। अत्रेष्टकाश्चतुर्दशविधा भवन्ति। पद्या, अर्द्धपद्या, पादोनपद्या, जङ्घामात्री, अध्यर्द्धा, अर्द्धोत्सेधा पाद्या, अर्द्धोत्सेधा अर्द्धपद्या, पादभागा, त्रिप्राहिणी, अर्धपादभागा, बृहती, वक्रा, अर्द्धबृहती, चतुर्भागा, इति। तत्र द्वादशाङ्गुलसमचतुरस्राः पद्याः, द्वादशाङ्गुलदीर्घाः षडङ्गुलविस्तृताः अर्द्धपद्याः, द्वादशाङ्गुलसमचतुरस्राः एकेन पादेन (कोणेन) न्यूनाः = त्रुटिताः पादोनपद्याः, अष्टादशाङ्गुलसमचतुरस्रा जङ्घामात्र्यः, अष्टादशाङ्गुल-दीर्घा द्वादशाङ्गुलविस्तृता अध्यर्द्धाः, द्वादशाङ्गुलसमचतुरस्रास्त्र्यङ्गुलोच्चा द्व्यङ्गुलोच्चा वा अर्द्धोत्सेधापद्याः, द्वादशाङ्गुलदीर्घाः षडङ्गुलविस्तृतास्त्र्यङ्गुलोच्चा द्व्यङ्गुलोच्चा वा अर्द्धोत्सेधा अर्द्धपद्याः, षडङ्गुलसमचतुरस्राः पादभागाः, चतुर्विंशत्यङ्गुलदीर्घाः अष्टादशाङ्गुलविस्तारास्त्रिप्राहिण्यः, षडङ्गुलदीर्घास्त्र्यङ्गुलविस्तृता अर्द्धपादभागाः, चतुर्विंशत्यङ्गुल-समचतुरस्रा बृहत्यः, चतुर्विंशत्यङ्गुलदीर्घा द्वादशाङ्गुलविस्तृता अर्द्धबृहत्यः, त्र्यङ्गुलसमचतुरस्राश्चतुर्भागा इति। उन्नता तु षडङ्गुलमिता सर्वासां चतुरङ्गुलमिता वा। अर्धोत्सेधापद्याऽर्द्धोत्सेधार्द्धपद्ययोस्तु द्व्यङ्गुलं त्र्यङ्गुलं-घोन्नत्वम्। वक्राणां प्रमाणसाधनोपायस्त्वेवम्। पूर्वमर्द्धव्यामेन व्याममात्रप्रमाणं वृत्तं विलिख्य तन्मध्ये चतुर्विंशत्यङ्गुलं समचतुरस्रं साधयित्वा तस्य कोणेषु कोणादारभ्य वृत्तं यावद्रेखाः कुर्यात्, एवं चतुरस्रस्य दिश आरभ्य वृत्तं यावत् रेखा दद्यात्। एवं कृते अष्टौ वक्रा विभागा जायन्ते। एतादृशं क्षेत्रं विलोक्य वक्रवारुघटनेन वक्रेष्टकानां प्रमाणं निष्पादनीयम्। सर्वासु इष्टकासु अङ्गुलिकाष्ठादिना त्रीणि त्रीणि चिन्हानि कार्याणि। तानि च चिन्हानि वक्राणि, ऋजूनि, तिरश्चालिखितानि च तासु तास्विष्टकासु कार्याणि। तत्र वक्राणि चिन्हानि ◡ ◡ ◡ एतादृशानि भवन्ति। ऋजूनि च ।।। एतादृशानि, तिरश्चालिखितानि च— — — एतादृशानि कार्याणि। अथेष्टकानां सङ्ख्या—तत्र एकादश सहस्राणि एकशतं च सप्तत्यधिकं समग्रा इष्टकाः ११९७०। तत्र दश सहस्राणि अष्टौ शतानि च लोकम्पृणाः १०८००। त्रीणि शतानि सप्तत्यधिकानि यजुष्मत्यः। (शतपथे तु दर्भस्तंब-दूर्वेष्टका-स्वयमातृण्णा-कूर्मोलूखलाद्याः पञ्चविंशतिसङ्ख्या इष्टका आसां मध्येऽधिकाः पठित्वा त्रीणि शतानि पञ्चनवतिर्यजुष्मत्य उक्ताः। एताः पञ्चविंशतिरिष्टकास्तिस्रो नैर्ऋत्यश्चोक्तसङ्ख्यातोऽधिकाः)। उक्तेष्टकानां मध्ये नव सहस्राणि द्वेशते द्वाषष्ट्यधिके ९२६२ पादभागाः। तत्र वक्रालिखिताः पादभागाः १७३२, ऋज्वालिखिताः पादभागाः ७५३०। अर्द्धपादभागाः षट् शतान्यष्टसप्तत्यधिकानि। तत्र—वक्रालिखिता अर्द्धपादभागाः २६२, ऋज्वालिखिता अर्द्धपादभागाः ४१६। चतुर्भागा द्वादश। तत्र वक्रालिखिताश्चत्वारः, ऋज्वालिखिता अष्टौ। पद्याः सप्तशतानि सप्तसप्तत्यधिकानि। तत्र—पूर्णोत्सेधाः पद्याः ७५९, अर्द्धोत्सेधाः पद्याः १८। अर्द्धपद्या अष्टाशीतिशतम्। तत्रार्द्धोत्सेधा द्वादश। तत्र चतस्रास्तिरश्चालिखिताः, अष्टौ ऋज्वालिखिताः। तिरश्चालिखिताः सप्तविंशतिः। तासां मध्ये चतस्रोऽर्द्धोत्सेधाः, त्रयोविंशतिः पूर्णोत्सेधाः। शेषा ऋज्वालिखिताः, वक्रालिखिते अर्धपद्ये पूर्णोत्सेधे द्वे इति। जङ्घामात्र्यः ५०, त्रिप्राहिण्यः ७०, वक्राः ८, अध्यर्द्धाः १११, बृहत्यः ६ वा ७, अर्द्धबृहत्यः४, पादोने २ इति।

इयमिष्टकानां सङ्ख्या उपधानकालीना। निष्पादनकाले सर्वा इष्टका उक्तसङ्ख्यातोऽधिकाः कारयितव्याः। यथा भेदनादिनाऽल्पा न भवेयुः।

[ द्वितीय-तृतीयचित्योर्यावदिच्छं चिन्हानि वा ]

**अपरिमितालिखिता वोत्तरयोः ॥२५॥**

अथवा द्वितीयचतुर्थ्योश्चित्योरिष्टका अपरिमिता ( ८।७।२।१७ ) लिखिताः — चतुरालिखिताः पञ्चलिखिता वा इत्यादि यावदिच्छं कार्याः। प्रथम-तृतीय-पञ्चमीषु चितिषु त्र्यालिखितेष्टकानां श्रुतौ विशिष्य विधानात् उत्तरयोरित्यनेन द्वितीया चतुर्थी च चिति-र्गृह्यते ॥ २५ ॥

**पूर्ववदग्निः पाके ॥२६॥**

इष्टकानां पाको दक्षिणाग्निना निर्मन्थ्येन वाऽग्निना कर्तव्यः(का०श्रौ०१६।४।१२-१३)॥२६॥

**दीक्षाऽमावास्यायामामावास्येनेष्ट्वा ॥२७॥**

फाल्गुनस्यामायां सद्यःपक्षेण पिण्डपितृयज्ञवर्जं प्रातरेव दर्शेष्टिं कृत्वा दीक्षा कर्तव्या। साग्निचित्यस्य सोमयागस्य ऋत्विग्वरणादि प्रारभेदित्यर्थः। (अत्र चयने शालैव भवति, न विमितम्) ॥ २७ ॥

[ दीक्षणीया त्रिहविष्का ]

साग्निचित्ये सोमयागे दीक्षणीयायां विशेषमाह—

**आग्नावैष्णव-वैश्वानरौ ॥२८॥**

दीक्षणीयेष्टौ आग्नावैष्णव एकादशकपालो, वैश्वानरो द्वादशकपालश्च कर्तव्यः ॥२८॥

**घृते चरुरादित्येभ्यः ॥२९॥**

इदं तृतीयं हविः। अत्र घृतस्य प्रणयनं कर्तव्यम् ॥ २९ ॥

[ आग्निकौद्ग्रभणहोमः ]

औद्ग्रभणहोमे विशेषमाह—

**प्राकृतान्यौद्ग्रभणानि हुत्वा सप्ताग्निकान्याकूतिमिति प्रतिमन्त्रम् ( ११।६६-६७ ) ॥३०॥**

प्रकृतौ सोमे "आकूत्यै" (४।७) इति पञ्चभिर्मन्त्रैः पञ्चौद्ग्रभणानि उक्तानि (७।३।१३)। तानि हुत्वा अग्निचयने विहितानि सप्त औद्ग्रभणानि जुहुयात्। ततो दीक्षणीयाशेष-समाप्तिः ॥ ३० ॥

[ उखाया आहवनीयेऽधिश्रयणम् ]

**दण्डोच्छ्रयणान्तं कृत्वाऽध्वर्युयजमानयोरन्यतर उखामाहवनीयेऽधिश्रयति मुञ्जकुलायावस्तीर्णामन्तरे शणा "मा सु भित्था" इति [ ११।६८ ] तिष्ठन्नुदङ् प्राङ् ॥३१॥**

औद्ग्रभणहोमानन्तरं "दण्डमुच्छ्रयत्युच्छ्रयस्वेति" (७।४।२) इति दण्डोच्छ्रयणान्तं प्रकृतिवद् दीक्षणीयाशेषभूतं कर्म कृत्वा ईशानाभिमुखस्तिष्ठन् अध्वर्युर्यजमानो वा मुञ्जकुलायं शणकुलायं चोखामध्ये प्रक्षिप्य तामुखां दीप्ते आहवनीयेऽधिश्रयेत्। मुञ्जतृणनिर्मितं पक्षिनीडं मुञ्जकुलायः। आदौ शणकुलायप्रक्षेपस्ततो मुञ्जकुलायस्य ॥३१॥

---

द्वितीये चयने सर्वासां प्रथमचयनेष्टकानां स्व-स्वसप्तमभागेन वृद्धिः, तृतीयचयने द्वितीयचयने-ष्टकानां स्व-स्वसप्तमभागेन वृद्धिः। चतुर्थचयने तृतीयचयनेष्टकानां स्व स्वसप्तमभागेन वृद्धिः। एवं पञ्चम चयनमारभ्यैकोत्तरशतचयनपर्यन्तं प्रतिचयनं स्व-स्वसप्तमो भागो वर्द्धितेष्टकाप्रमाणमध्ये वर्द्धनीयः।

प्रसङ्गादाह—

**रुक्मप्रतिमोचन-विष्णुक्रम-वात्सप्रेषु च ॥ ३२॥**

ईशान्यभिमुखो भवेत् ॥३२॥

[ उख्येऽग्नौ द्वादशानां वा समिधामाधानं, क्षत्रियपुरोहितयोर्यागे यथाक्रमं द्वादशीत्रयोदश्योः समिधोर्विकल्पः ]

**अग्नावारूढं त्रयोदशास्यां प्रादेशमात्रीः समिध आदधाति ॥३३॥**

उखायामग्नावारूढे सति अस्यामुखायाम् = उख्येऽग्नौ प्रादेशमात्रीस्त्रयोदश वक्ष्यमाणाः समिधो वक्ष्यमाणप्रकारेण प्रक्षिपेत् ॥३३॥

**अनारोहत्यङ्गारानोप्यैके ॥३४॥**

उखायाम् = उखास्थमुञ्जशणतृणे अग्नौ अनारुढे आहवनीयाङ्गारमुखायां प्रक्षिप्य तत्र समिध आदध्यात् ॥३४॥

समिध आह—

**घृतोन्नां कामुकीं "दृन्न" इति (११।७० ) ॥३५॥**

क्रमुको धमनवृक्षः । तत्संबन्धिनीं घृतक्लिन्नां समिधमादावादध्यात् ॥३५॥

**वैकङ्कतीं "परस्या" इति (११।७१) ॥३६॥**

**औदुम्बरीं "परमस्या" इति (११।७२) ॥३७॥**

**अपरशुवृक्णां "यदग्न" इति (११।७३) ॥३८॥**

अकुठारच्छिन्नां = हस्तादिना भग्नां यज्ञियामौदुम्बरीं समिधं प्रक्षिपेत् ॥३८॥

**अधःशयां "यदत्तीति (११।७४) ॥३९॥**

अधो = भूमौ शेते = प्ररूढा प्रसृता भवतीत्यधःशया औदुम्बरी । तां पञ्चमीं समिधमादध्यात् ॥३९॥

**पालाशीः प्रत्यृचमहरहरिति (११।७५-८२) ॥४०॥**

अष्टौ (६।६।३।७) ॥४०॥

**उपोत्तमां क्षत्रियस्येच्छन् ॥४१॥**

क्षत्रियस्य यजमानस्य द्वादशीं समिधमादध्यान्न वा (६।६।३।१२) ॥४१॥

**उत्तमां पुरोहितस्य ॥४२॥**

पुरोहितस्य यजमानस्य यागे त्रयोदशीमादध्यान्न वा ॥४२॥

**अन्यस्योभे ॥४३॥**

अन्यस्य अक्षत्रियस्य अपुरोहितस्य च एकादश त्रयोदश वा समिधो भवन्ति । क्षत्रियपुरोहितयोस्तु द्वादश त्रयोदश वेति ॥४३॥

**स्वाहाकारः सर्वासूखायाम् ॥४४॥**

उख्येऽग्नौ समित्प्रक्षेपमन्त्रेषु स्वाहाकारः कर्तव्यः । एवमन्यत्रापि ॥४४॥

**औद्ग्रभणादि दण्डान्तमत्रैके ॥४५॥**

एवं सति पूर्वमुखाधिश्रयणादि, तत औद्ग्रभणहोम इति क्रमः पर्यवसितो भवति (६।६।१।२२) । उक्तक्रमेण सहास्य क्रमस्य विकल्पः । ४५॥

इति चतुर्थी कण्डिका ॥४॥

[ यजमानस्य कण्ठे सौवर्णाभरणविमोकः ]

**यजमानः कण्ठे रुक्मं प्रतिमुञ्चते परिमण्डलमेकविंशतिपिण्डं कृष्णाजिननिष्यूतं लोमसु शुक्लकृष्णेषु शणसूत्रे त्रिवृत्योतमुपरि नाभि बहिष्पिण्डं "दृशानो रुक्म" इति (१२।१) ॥१॥**

यजमानः स्वकण्ठे वर्तुलम्, एकविंशतिः पिण्डा = बिन्दवश्चणकदलसदृशा उन्नताः स्वरूपाद्बहिर्निःसृता यस्मिन् तत्, कृष्णाजिनखण्डे यस्मिन् प्रदेशे शुक्लानि कृष्णानि च रोमाणि, तस्मिन् प्रदेशे स्यूतम्, त्रिवृति = त्रिगुणे शणमये सूत्रे ओतं प्रोतम्, बहिः = उपरि प्रदेशे पिण्डा बुद्बुदा यस्य तत्, ईदृशं रुक्मं सौवर्णमाभरणं फलकाकारं नाभेरुपरि धारयेत् (६।७।१।२)। साग्निचित्ये द्वादशाहादौ सर्वेषां रुक्मप्रतिमोचनम् ॥१॥

[ मुञ्जरज्जूनां मृद्दिग्धत्वम् ]

**इण्ड्वशिक्यासन्दीषु मुञ्जरज्जवस्त्रिवृतो मृद्दिग्धाः ॥२॥**

उखा याभ्यां गृह्यते तौ इण्ड्वौ । इण्ड्वौ च शिक्यं च आसन्दी च इण्ड्वशिक्यासन्द्यः । तासु त्रिगुणाः कर्दमलिप्ता मुञ्जरज्जवोऽनतिदाहाय कर्तव्याः ॥२॥

**परिमण्डलाभ्यामिण्ड्वाभ्यामुखां परिगृह्णाति "नक्तोषासेति (१२।२) ॥३॥**

वर्तुलाभ्यामुखाधारणसाधनरूपाभ्यामिण्ड्वाभ्यामुखां गृह्णीयात् ॥३॥

**हरति "द्यावा द्यामेति (१२।२) ॥४॥**

इण्ड्वस्थामाहवनीयस्योपरि स्थितामुखामासन्दीं प्रति नयेत् ॥४॥

[ उखायाः सशिक्यायामासन्द्यां निधानम् ]

**आहवनीयस्य पुरस्तादुदुगात्रासन्दीवदासन्द्यां चतुरश्राङ्ग्यां शिक्यवत्यां निदधाति "देवाऽ अग्निमिति (१२।२) ॥५॥**

आहवनीयात्पूर्वस्यां दिशि भूमौ स्थापितायामुद्गात्रासन्दीव (१३।३।२) त्रादेशमात्रपादायामौदुम्बर्यामरत्निमात्राङ्ग्यां मुञ्जरज्ज्वा व्युतायां चतुष्कोणायां शिक्ययुक्तायामुखां निदध्यात् ॥५॥

**शिक्यपाशं प्रतिमुञ्चते षडुद्यामं "विश्वा रूपाणीति (१२।३) ॥६॥**

षडुद्यामा = रज्जवो यस्य तं शिक्यस्य पाशं ग्रीवायामवसृजेत् । उत् = ऊर्ध्वं यम्यते नियम्यते यैस्ते उद्यामा रज्जवः । षडुद्यामा रज्जव ऊर्ध्वाकर्षणहेतवो यस्येति ॥६॥

**सशिक्यं प्राञ्चं प्रगृह्णाति "सुपर्णोऽसीति (१२।४) पिण्डवत् ॥७॥**

ततः शिक्यसहितमुख्यमग्निं पिण्डवदिति ( १६।३।८ ) ऊर्ध्वाभ्यां बाहुभ्यां = प्राच्यां दिशि धारयेत् ॥७॥

**धारणं च ॥८॥**

ततस्तस्मात्प्रदेशादग्निमवहृत्य अस्योख्यस्याग्नेर्धारणमपि उपरिनाभि ( १६ । ३ । ६ ) पिण्डवत् कार्यम् ॥ ८ ॥

**एतया विकृत्याऽभिमन्त्र्यैकेऽन्यचितिं चिन्वन्ति द्रोणचिद्रथचक्रचित्कङ्कचित्प्रउगचिदुभयतः प्रउगः समुह्यपुरीष इति ॥९॥**

उख्यमग्निमेतयाऽभिमन्त्र्य एके अन्यचितं षड्विधमग्निं चिन्वन्ति। अपरे सुपर्णचितम्। सुपर्णचिच्च सुपर्णोऽसीत्यादि मन्त्रलिङ्गात्प्राप्त एव। द्रोणः = चतुरस्रः, तदाकारा चितिः = स्थण्डिलं द्रोणचित्। रथचक्राकारा वृत्तचितिः रथचक्रचित्। उड्डीयमानकङ्कपक्षाकारा चितिः कङ्कचित्। प्रउगः = शकटाङ्गं शकटस्याग्रभागः त्र्यस्त्रि भवति, तदाकारा चितिः प्रउगचित्। उभयतस्त्र्यस्राकारा चितिरुभयतः प्रउगचित्। अन्यत आनीय = स्थण्डिलस्य समन्तात् सर्वाभ्यो दिग्भ्यः समुह्यः = समूहीकृतः पुञ्जीकृतः पुरीषो = मृत्तिका, तदिव चितिः समुह्यपुरीषचिदित्युच्यते। अस्यां चितौ इष्टकास्थाने पुरीष एव भवति। एतेषां स्थण्डिलविशेषाणां निर्माणप्रकारः शुल्वसूत्रतोऽवगन्तव्यः। ब्राह्मणे (६।७।२।८) सूत्रे च सुपर्णचिन्निर्माणप्रकार एवोक्तोऽस्तीति ॥९॥

**समुह्यपुरीषे प्रतिदिशं पुरीषाहरणम् ॥१०॥**

समुह्यपुरीषेऽग्नौ सर्वाभ्यो दिग्भ्यः पुरीषाहरणं कृत्वा यजुष्मतीनां लोकम्पृणानां च स्थाने तस्यैव चयनं कर्तव्यम्। क्षेत्रं तु सुपर्णचितिसदृशमेव ॥१०॥

**विष्णुक्रमान् क्रमते "विष्णोरिति (१२।५) प्रतिमन्त्रमग्न्युद्ग्रभणं च तस्मिन् ॥११॥**

प्रतिविष्णुक्रमणमुख्यस्याग्नेः सशिक्यस्य सेण्ड्वाभ्यां हस्ताभ्यामूर्ध्वीकरणं च स्तोकं स्तोकं कुर्यात्। आदौ विष्णुक्रमसंज्ञकान् पादन्यासान् कुर्यात्। तस्मिंस्तस्मिन् क्रमणे उख्यस्याग्नेरूर्ध्वं ग्रहणं च कुर्यात्। तत्र प्रथमं दक्षिणपादेन क्रमणं कृत्वा अग्निं स्तोकं नाभिदेशादूर्ध्वं कुर्यात्। पुनः क्रमणं कृत्वा पुनरपि किंचिदुद्गृह्णीयात्। एवं तृतीयवारम्। चतुर्थवारं तु न क्रमणमिति वक्ष्यति ॥११॥

**अक्रमश्चतुर्थे ॥१२॥**

चतुर्थे मन्त्रे क्रमणं न कार्यम्। अग्न्युद्ग्रहणं तु कुर्यादेव ॥१२॥

**दिशोऽनु वीक्षते "दिशोऽनु विक्रमस्वेति ( १२।५ ) ॥१३॥**

मन्त्रावृत्त्या सर्वा दिशः पश्येत् ॥१३॥

**पिण्डवत्प्रागुदञ्चं प्रगृह्णात्यक्रन्ददग्निरिति [१२।६] ॥१४॥**

उख्यमग्निं पिण्डव (१६।३।८) दित्यूर्ध्वबाहुरीशान्यां गृह्णीयात् = प्रेरयेत् ॥१४॥

**अवहरत्यग्नेऽभ्यावर्तिन्निति (१२।७–१०) ॥१५॥**

एकैकेन मन्त्रेण चतुष्कृत्वः स्तोकं स्तोकमुख्यमग्निं नीचैः कुर्यात् (६।७।३।६) ॥१५॥

**उपरि नाभि धारयन्ना त्वा हार्षमित्यभि मन्त्रयते (१२।१२) ॥१६॥**

**पाशा उन्मुच्योदुत्तममिति पिण्डवत्प्राग्दक्षिणा प्रगृह्णात्यग्रे बृहन्निति (१२।१३) ॥१७॥**

शिक्यपाशं रुक्मपाशं च गलादूर्ध्वमार्गेण निष्काश्य पिण्डव (१६।३।८) दित्यूर्ध्वबाहुरेव आग्नेयीं दिशं प्रत्यूर्ध्वां धारयेत् ॥१७॥

**अवहरति "हꣳसः शुचिषदिति (१२।१४) ॥१८॥**

नीचैरवतारयेत् ॥१८॥

आसन्द्यां करोति "बृहदिति (१२।१४) ॥१६॥

बृहत् इत्यक्षरद्वयेन उखास्थमग्निमासन्द्यां स्थापयेत् ॥१६॥

उपतिष्ठते "सीद त्वमिति (१२।१५-१७) ॥ ॥२०॥

वात्सप्रेण च "दिवस्परीत्येकादशभिः (१२।१८-२८) ॥२१॥

अनुवाकेनैके (१२।१८-२६) ॥२२॥

अस्मिन्पक्षे दिवस्परीति द्वादशभिरुपस्थानम् ॥२२॥

अत्र दीक्षितोऽयमिति ॥२२॥

"दीक्षितोऽयं ब्राह्मण इत्याह त्रिरुच्चैः" इति पूर्वमुक्तम् (७।४।११)। तदस्मिन्नवसरे वक्तव्यम् ॥२२॥

आवृत्तिरतः संवत्सरम् ॥२३॥

अत ऊर्ध्वं यत्कर्मोच्यते तस्य संवत्सरं यावदावृत्तिर्भवति ॥२३॥

इति षोडशेऽध्याये पञ्चमी कण्डिका ॥५॥

---

उखाया भस्मोद्वपनमस्तमिते पात्रे ॥१॥

अस्तमिते सूर्ये यजमान उखायाः सकाशात् कस्मिंश्चित्पात्रे भस्म उद्वपेत् ॥१॥

वाचं विसृज्य समिदाधानठं० रात्रीᳪं रात्रीरप्रयावमिति (११।७५) ॥२॥

एवमुदिते भस्मोद्वपनादि ॥३॥

"अहरहरित्याधानम् (११।७४) ॥४॥

[ साग्निचितस्य सोमयागस्य संवत्सरं दीक्षाः, तत्र प्रत्यहं विष्णुक्रम-वात्सप्रयोर्व्यत्यस्यानुष्ठाम् ]

विष्णुक्रम-वात्सप्रे चाहर्व्यत्यासमुदिते समिधमाधाय ॥५॥

दीक्षासु प्रत्यहमुदिते सूर्ये समिदाधानानन्तरं विष्णुक्रमो वात्सप्रं च व्यत्यस्य कर्तव्ये। एवं साग्निचितस्य यस्य संवत्सरं दीक्षा भवन्ति, तत्र द्वितीयायां विष्णुक्रमाः तृतीयायां वात्सप्रम्, पुनश्चतुर्थ्यां विष्णुक्रमाः पञ्चम्यां वात्सप्रमित्येवं यावद्दीक्षमहर्व्यत्यासेन एकस्मिन्दिने विष्णुक्रमाः, अपरस्मिन्वात्सप्रमिति। एवं संवत्सरपर्यन्तम्। प्रथमदीक्षायां तु वचनादुभयोरनुष्ठानम् ॥ ५ ॥

विष्णुक्रममाह—

रुक्मप्रतिमोचनादि प्राग्वात्सप्राद्विष्णुक्रमाः ॥६॥

"कण्ठे रुक्मं प्रतिमुञ्चति" (१६।५।१) इत्यारभ्य सीद त्वमित्युपस्थानान्ताः (१६।५।२०) पदार्था विष्णुक्रमशब्देनोच्यन्ते ॥६॥

[ साग्निचित्ये सौमिक्य एव दीक्षा, नाग्निक्यः ]

चयनयुक्ते क्रतौ "संवत्सरभृतं चिन्वीत" (१०।२।६।६) इत्यनेन संवत्सरपर्यन्तं दीक्षा कर्तव्यत्वेन विहिता। राजसूयान्तर्गते च पवित्राख्ये सोमयागे दीक्षाचतुष्टयमुक्तं "पवित्रश्च-

तुर्दीक्षः" ( १५।१।४) इति। तस्य सोमयागत्वाविशेषेण विकल्पेन चयनस्याप्यङ्गतया साग्निचयनकरणपक्षे चयननिमित्तः संवत्सरदीक्षापक्षोऽनुष्ठीयताम्, उत ? पवित्रनिमित्तश्चतुर्दीक्षापक्ष इति संशये उभयोरपि अन्यत्र चरितार्थयोः तुल्यबलत्वेन एकस्य अन्येन आत्यन्तिकबाधे प्रमाणाभावात् अनियमेन यस्य कस्य चित्परिग्रहणमिति प्राप्ते सिद्धान्तयति—

**सोमाविरोधेन वा तत्प्राधान्यात् ॥७॥**

सोमाविरोधेनैव दीक्षापक्षोऽनुष्ठेयः। कुतः ? सोमस्यैव प्राधान्यात्। यद्यपि पक्षद्वयेऽपि दीक्षा सोमसम्बन्धिन्येव भवति, "दीक्षा सोमस्य" (तै० आ० ३।६) इति श्रुत्या दीक्षायाः प्रधानसोमसंबन्धित्वस्यैवावगमात। तथापि केवलसोमयागे तस्यैव निमित्तता दीक्षां प्रति। साग्निके च तत्राग्नेर्निमित्तत्वम्। अतश्च अग्निनिमित्तक-सोमनिमित्तकदीक्षापक्षयोर्मध्ये अङ्गगुणविरोधभावेन (जै० १२।२।२५) सोमनिमित्तकदीक्षापक्षस्यैव स्वीकरणीयत्वात् स एव पक्षोऽनुष्ठेय इति ॥७॥

**न्यज्य समिधं व्रते प्रत्ते प्रत्तेऽन्नपत इत्याधानम् ( ११।८३ ) ॥८॥**

अध्वर्युणा दत्ते व्रते = पयआदौ यजमानः समिधमङ्क्त्वोख्येऽग्नावादध्यात्संवत्सरभृतेऽपि ॥ ८ ॥

[ संवत्सरदीक्षापक्षेणानुष्ठितसाग्निचित्यस्य यजमानस्य द्वितीयादिचयने एकादिदीक्षापक्षेऽपि चयनस्य नित्यता ]

**संवत्सरभृतिनोऽसंवत्सरभृतेऽपि ॥ ९ ॥**

पूर्वं कस्मिंश्चिद्यज्ञे साग्निके क्रतौ येनैकवारं संवत्सरमुख्योऽग्निर्भृतः स संवत्सरभृती। द्वितीयादिचयनप्रयोगे तस्य असंवत्सरभृतेऽप्युख्येऽग्नौ एकादिदीक्षापक्षे चयनं भवति (६।५।१।६५) ॥९॥

[ संवत्सरसुत्याके सत्रादौ संवत्सरदीक्षाभावेऽपि चयनं नित्यम् ]

**संवत्सरं सोष्यतः ॥ १० ॥**

संवत्सरमित्यन्तसंयोगे द्वितीया। संवत्सरं = संवत्सरसुत्यं सत्रादि करिष्यतो यजमानस्य संवत्सरदीक्षाभावेऽपि चयनं भवति ( ६।५।१।६६ ) ॥ १० ॥

[ अग्न्याधेयानन्तरं संवत्सरपर्यन्तं नियमेन हुताग्निहोत्रस्यैकादिदीक्षापक्षेऽपि चयनं नित्यम् ]

**संवत्सराहिताग्नेः ॥ ११ ॥**

येनाग्न्याधेयानन्तरं संवत्सरमग्निहोत्रं हुतं भवति तस्य एकादिदीक्षापक्षेऽपि चयनं भवति। संवत्सरमग्निहोत्रं न हुतं चेत्तदा अग्निष्टोमादावेकाहे संवत्सरदीक्षापक्षं विना चयनं न भवत्येव। तत्रापि नियतदीक्षे सोमे संवत्सरमध्येऽपि भवति ( ६।५।१।६७ ) ॥ ११ ॥

[ संवत्सरं गर्भे स्थितस्यैकादिदीक्षापक्षेऽपि चयनं नित्यम् ]

**जातस्य च ॥ १२ ॥**

गर्भाधानदिवसमारभ्य संवत्सरे पूर्णेऽतीते यो जातः, तस्य संवत्सरजातस्यापि एकादिदीक्षापक्षे सद्योभृतेऽपि चयनं भवति ( ६।५।१।६८ ) ॥ १२ ॥

**षण्मास्यमन्त्यम् ॥ १३ ॥**

संवत्सरभरणाशक्तौ षण्मासान् उख्यमग्निं भृत्वा चयनं कुर्यात्। इदमन्त्यं जघन्यं पक्षान्तरम् ( ६।५।१।६३ ) ॥ १३ ॥

अचयनं वा परस्मै ॥ १४ ॥

परार्थमचयनं वा । अध्वर्युर्भूत्वा अन्यार्थं चयनं कुर्यान्न वेत्यर्थः ( ६।५।२।१२ ) ॥१४॥

[ दीक्षास्वेव क्रत्वर्थद्रव्योपार्जनार्थं प्रयाणरूपं वनीवाहनसंज्ञं कर्म ]

वनीवाहनसंज्ञकं कर्माह—

प्रागनः कृत्वोख्यस्योत्तरतः समिदाधानꣳ "समिधाऽग्निमिति (१२।३०)॥१५॥

उख्यस्याग्नेरुत्तरस्यां दिशि प्राङीषं शकटं संस्थाप्य तत्रस्थे उख्येऽग्नौ समिधमादध्या द्यजमानः । अत्र वनीवाहने सर्वं यजमान एव कुर्यान्नाध्वर्युः ॥ १५ ॥

सासन्दीकमुख्यम्योदु त्वेति (१२।३१) दक्षिणतोऽनसि करोति ॥१६॥

आसन्दीसहितमुख्यमग्निमुत्थाप्य अनसो दक्षिणतोऽवस्थितो यजमानः सासन्दी-कमग्निमनसि पूर्वभागे स्थापयेत् ॥ १६ ॥

स्थाल्यां गार्हपत्यं पश्चात् ॥ १७ ॥

गार्हपत्यमग्निं स्थाल्यां निधायानसि पश्चान्निदध्यात् । दक्षिणाग्निं च पात्रे कृत्वाऽनसि दक्षिणतो वितृतीये निदध्यादिति कर्कः । प्रयोजनाभावान्नेति देवयाज्ञिकादयः ॥ १७ ॥

अनड्वाहौ युक्त्वा "प्रेदग्ने" (१२।३२) इति प्राङ् यात्वा यथार्थम् ॥१७॥

आदौ प्राङ् गत्वा ततो यस्यां दिशि द्रव्यार्जनसम्भवः, तस्यां गच्छेत् ॥ १८ ॥

आरोहेत्पार्श्वतो वा गच्छेत् ॥ १९ ॥

यजमानः शकटमारोहेत्पार्श्वतोवा गच्छेत् ॥ १९ ॥

अक्षे खर्जत्यक्रन्ददग्निरिति ( १२।३३ ) जपति ॥२०॥

खर्जनं शब्दकरणम् । नैमित्तिकमिदम् ॥ २० ॥

[ वासार्थं विना विश्रामाद्यर्थं रथविमोकेऽग्नीनां रथादनवतारणम् ]

वासेऽवहरत्युद्धृतावोक्षित उत्तरतः समिदाधानं "प्र प्रेति (१२।३४) ॥२१॥

वासो वसतिः । तत्रोत्तरस्यां दिशि पञ्चभूसंस्कारसंस्कृते देशेऽग्निं शकटादवतारयेत् । तेन विश्रामाद्यर्थं रथविमोचनेऽग्निरनसि स्थित एव भवति । अतश्च यत्र वासस्तत्रैवावहरणं, न प्राग्वसतेः । ततः प्रप्रायमिति उख्येऽग्नौ समिधमादध्यात् ( ६।८।१।१२ ) ॥२१॥

वनीवाहनमेतद्दीक्षासु यदेच्छेत् ॥२२॥

प्रागनः कृत्वेत्यारभ्यैतदन्तं कर्म वनीवाहनमित्युच्यते । तद् दीक्षासु यस्मिन्नहनि इच्छेत्तदहः कुर्यात् ॥२२॥

[ इति वनीवाहनम् । अथ भस्मापोऽभ्यवहरणम् ]

अप्सूख्यभस्मावपनं क्रयणीयादौ ॥ २३ ॥

सोमक्रयणदिने प्रथमं तडागादौ उख्यं भस्म वक्ष्यमाणप्रकारेण प्रक्षिपेत् ॥२३॥

अन्यत्र चेच्छन् ॥२४॥

अन्यत्र = दीक्षासु चोख्यं भस्म अप्सु प्रक्षिपेत्त वा ॥ २४ ॥

**ऊर्ध्वं वनीवाहनात्क्रमयोगात् ॥ २५ ॥**

दीक्षासु चेच्छया भस्मनोऽपोऽभ्यवहरणं कुर्वन् वनीवाहनानन्तरं कुर्यात्। कुतः ? क्रमयोगात्। पूर्वं वनीवाहनमन्त्राः, (१२।३०-३४) पश्चाच्च भस्मापोऽभ्यवहरणमन्त्राः (१२।३५-४२)। अत इत्यर्थः ॥ २५ ॥

इतिकर्तव्यतामाह—

**पलाशपुटेनापोदेवीरित्येकया (१२।३५) ॥ २६ ॥**

पलाशपत्रेण अर्द्धं भस्म गृहीत्वाऽप्सु प्रक्षिपेत् ॥ २६ ॥

**ततो द्वाभ्याम् ( १२।३६।३७ ) ॥ २७ ॥**

पुनः अप्स्वग्न इति ऋग्द्वयेन प्रक्षिपेत् ॥ २७ ॥

**आद्याभ्यां ( १२।३५–३६ ) वा पूर्वम् ॥ २८ ॥**

अथवा आद्यं भस्मावपनम् 'आपो देवीः, अप्स्वग्न' इति ऋग्द्वयेन, द्वितीयं गर्भोऽ असीत्येकया कुर्यात् ॥ २८ ॥

**अनामिकया प्रास्तादादत्ते "प्रसद्येति ( १२।३८–४१ ) ॥२९॥**

अप्सु प्रक्षिप्ताद्भस्मनः सकाशादनामिकया भस्म गृह्णीयान्मन्त्रचतुष्टयेन ॥ २९ ॥

**प्रास्योखायामुपतिष्ठते "बोधा म" इति (१२।४२) ॥३०॥**

इति षष्ठी कण्डिका ॥ ६ ॥

---

[ अग्निचयनेऽग्न्यनुगमने प्रायश्चित्तम् ]

**प्रायश्चित्तिर्ठं० समिधोपहत्याज्यं "विश्वकर्मण" (१२।४३) इति जुहोति ॥१॥**

प्रायश्चित्तिरित्यस्य वक्ष्यमाणस्य कर्मणः संज्ञा। समिधा स्रुवस्थानापन्नया आज्यं गृहीत्वोख्येऽग्नौ जुहुयात्। उपपूर्वो हन्तिर्ग्रहणार्थः (३।४।१।२५) ॥ १ ॥

**उत्थायादधाति समिधं "पुनस्त्वेति ( १२।४४ ) ॥२॥**

आहुतिहोमानन्तरमुत्थाय तामेव समिधमुख्येऽग्नावादध्यात् ॥२॥

अग्न्यनुगमने प्रायश्चित्तमाह—

[ गार्हपत्यानुगमने प्रायश्चित्तम् ]

**गार्हपत्येऽनुगते निर्मथ्य ॥ ३ ॥**

प्राजहितेऽनुगते निर्मथ्य समिधमादधाति ॥ ३ ॥

[ सुत्यास्वाहवनीयशमने प्रा० ]

**सुत्यास्वाहवनीये साङ्काशिनेन हृत्वा ॥४॥**

सुत्यासु वर्तमानासु आहवनीयेऽतिप्रणीतेऽनुगते साङ्काशिनेन=ऋजुना सदोहविर्धानमध्यमार्गेण गार्हपत्यादग्निं हृत्वा उत्तरवेदौ स्थापयित्वा समिधमादध्यात्, न तु इध्मोपयमन्यादिना प्रणयनधर्ममनु तिष्ठेत् ॥ ४ ॥

[ सुत्यास्वाग्नीध्रीयानुगमने प्रा० ]

**आग्नीध्रीयमुत्तरेण सदः ॥५॥**

आग्नीध्रीयमनुगतं सद उत्तरमार्गेण हृत्वोपसमाधाय प्रायश्चित्तं कुर्यात् ॥ ५ ॥

[ उख्याग्न्यनुगमने ]

**प्रवृञ्ज्यादावृतोख्ये ॥६॥**

उख्येऽग्नावनुगते गार्हपत्यादाहवनीयमन्वग्निरित्याहृत्य (११।१७, का०श्रौ० २५।३।१५) समितमित्युपस्थाय (१२।५७,२५।३।१४) आवृता = मन्त्ररहितेन क्रियामात्रेण (६।६।४।६) पूर्ववदुखां प्रवृञ्ज्यात् = उखामाहवनीयेऽधिश्रित्योख्यमग्निमुत्पादयेत् ॥ ६ ॥

[ चयनेऽग्न्यनुगमने प्रायश्चित्तद्वयानुष्ठानम् ]

**अध्वरप्रायश्चित्तिं च सर्वेषु यथाकालं पूर्वां पूर्वाम् ॥७॥**

सर्वेषु पूर्वोक्तेषु अग्न्यनुगमनेषु यथाकालमध्वरप्रायश्चित्तिं = परमेष्ठ्यादिकालाहुतिं (२५।६।१) पूर्वां पूर्वां जुहुयात् । चकारात्पश्चादाग्निकीं प्रायश्चित्तिं च (६।८।२।१) । आग्निकी विश्वकर्मण इति पूर्वोक्तैव । सर्वग्रहणं भस्मापोऽभ्यवहरणार्थम् ॥ ७ ॥

उखाभेदने प्रायश्चित्तमाह—

**उखाभेदने नवस्थाल्यां महामुख्यामुखाकपालमवधायावपति ॥८॥**

अग्न्युखाया भेदने महामुख्यां नूतनस्थाल्यां भग्नाया उखायाः कपालमवधाय तस्यामेवोख्यमग्निं प्रक्षिपेत् (६।६।४।८) । उखानिष्पत्तिपर्यन्तं तत्रैवाग्निस्तिष्ठति । एतच्चैकोखापक्षे । उखात्रयपक्षे तु ( ६।५।२।२२ ) इतरयोर्मध्य एकस्यामुखायामावपेत् ॥ ८ ॥

**उखोपशये पिष्ट्वा मृदा सहोखां करोत्यावृता ॥ ६ ॥**

तां भग्नामुखामुपशयां = पूर्वनिहितां (१६।४।७) मृदं च पिष्ट्वा अन्यया मृदा सह संसृज्य आवृता = मन्त्ररहितेन (६।६।४।६) पूर्वोक्तेन क्रियामात्रेणोखां निष्पादयेत् ॥ ६ ॥

**पक्वायामावपति कपालं च ॥ १० ॥**

पक्वायामुखायामुख्यमग्निं, भग्नोखायाः कपालं च तस्यां प्रक्षिपेत् ॥ १० ॥

**उखोपशये पिष्ट्वा सꣳसृज्य निदधाति ॥११॥**

उख्यकपालमुपशयां च पिष्ट्वा मिश्रीकृत्य प्रायश्चित्यर्थं सुगुप्ते देशे स्थापयेत् ॥११॥

चयनपरिभाषामाह—

**अभ्यात्मं चयनमुपविश्य ॥१२॥**

अध्वर्युरुपविश्यात्मसंमुखं सर्वासामिष्टकानां चयनं कुर्यात् (१) ॥१२॥

**सव्यबाहुमन्तरं कृत्वोत्तरलक्षणाभिरिष्टकाभिः ॥१३॥**

सव्यं बाहुमग्न्यात्ममध्ये कृत्वा इष्टकानां लक्षणवान् प्रदेश उपरिष्टाद्यथा भवेत् तथा चयनं कुर्यात् ॥१३॥

**नित्ये सादन-सूददोहसा उपधानादुत्तरे "तया देवतया, ता अस्येति ( १२।५३-५५ ) ॥ १४ ॥**

सर्वासामिष्टकानामुपधानादनन्तरं मन्त्रद्वयेन यथाक्रमं सादनं सूददोहस च कुर्यात् ।

---

( १ ) यथा—"अपस्याः पञ्च पञ्चानूकान्तेषु" (७।४।२।४०) इति पूर्वदिग्भवानामपस्येष्टकानां चयनमुदङ्मुखोपविष्टेनोत्तरस्या अरस्याया आरभ्यात्मसंमुखं दक्षिणासंस्थं कर्तव्यम् । तथा दक्षिणाऽपस्यानां प्राङ्मुखेन प्रत्यक्संस्थम् । अपरापस्यानां दक्षिणामुखेनोदक्संस्थम् , उत्तरापस्यानां प्रत्यङ्मुखोपविष्टेन प्राक्संस्थमित्यादि ।

उपहितानां यजुष्मतीनामिष्टकानां स्थिरीकरणं सादनम्। ता अस्य सूददोहस इति मन्त्रः सूददोहा इत्युच्यते। तस्य मन्त्रद्वयोच्चारणमात्रं च कुर्यात् ॥१४॥

अत्र हेतुमाह—

अविशेषोपदेशात् ॥ १५ ॥

अविशेषेण इष्टकाविशेषमनारभ्य श्रुतौ तयोरुपदेशो यतः, अत इष्टकामात्रे तद् द्वयं कर्तव्यम् ॥ १५ ॥

किञ्च—

अनाम्नातप्रतिषेधाच्च ॥ १६ ॥

यत्र नैर्ऋत्याद्यासु इष्टकासु सादनसूददोहसौ संहितायां नोक्तौ, तत्रापि "नैर्ऋतीषु न सादयति न सूददोहसाऽधि वदति" ( ७।१।१।१४ ) इति निषिध्यते। अतः सर्वत्रैते भवत इति ॥ १६ ॥

एकचोदनास्वेकदेशासु तन्त्रेण ॥ १७ ॥

"अपस्या उपदधाति, ( ८।१।७।५ ) ऋतव्ये उपदधाति, ( ७।३।२।२६ ) प्राणभृत उपदधाति" ( ८।१।७।२ ) इत्येवम् एका चोदना = एकं विधिवाक्यं यासां ता एकचोदनाः। "तृतीयायां प्राणभृतो दश ( ८।३।२।१४ ) इत्येवमेको देशः = एकमुपधानस्थानं यासां ता एकदेशाः। तासु बह्वीष्वपि सकृत् सादनसूददोहसौ भवतः। देशभेदे पृथक् पृथक्। देशैक्ये तु सकृदेवेति फलितोऽर्थः ॥ १७ ॥

आत्मनि यजुष्मतीः ॥ १८ ॥

यजुष्मतीरिष्टका आत्मन्येवोपदध्यान्न पक्षपुच्छयोः ( ८।७।२।६ ) ॥१८॥

लोकम्पृणासु दशसु दशसु मन्त्रो "लोकम्पृणेति (१२।५४) ॥१९॥

वक्ष्यमाणक्रमेण तूष्णीमेव दश दश लोकम्पृणा उपधाय ता दशापि लोकम्पृण इति सकृत्पठितेनाभिमन्त्रयेत् ( ६।१।२।१९ ) ॥१९॥

असादनं च ॥ २० ॥

लोकम्पृणा इष्टकाः तया देवतयेति न सादयेत्। सूददोहसाधिवदनं तु कुर्यात् ॥२०॥

प्रतिचिति द्वे द्वे उपधाय ॥ २१ ॥

सर्वासु चितिषु यजुष्मत्युपधानानन्तरं प्रथमं द्वे द्वे लोकम्पृणे उपधाय ततो दश दशोपदध्यात् ॥ २१ ॥

अयुग्मगणमध्यमाऽनूके ॥ २२ ॥

अयुग्मानां त्रिपञ्चसप्तप्रभृतीनामिष्टकानां गणोऽयुग्मगणः, तस्य मध्यमा इष्टका अनूके उपधेया। यथा—प्रथमायां चितौ पञ्चानामपस्यानां गणेषु तृतीया मध्यमाऽनूकस्योपरि उपधेया। इतराश्चतस्रः समं विभज्य तामभित उपधेयाः ॥ २२ ॥

एका च ॥ २३ ॥

या एका इष्टका साऽप्यनूके एवोपधेया। यथा दूर्वेष्टका, विश्वज्योतिः, अषाढा इत्येवमादि ॥ २३ ॥

अभितो युग्माः ॥ २४ ॥

अनूके इत्यनुवर्तते। युग्मा इष्टकाः समं विभज्यानूकमभित अर्द्धा अर्द्धा उपधेयाः ॥ २४ ॥

**उदञ्चो वर्गाः पूर्वापरे ॥ २५ ॥**

यत्र पूर्वापरे इति व्यपदेशः, तत्र इष्टकावर्गाः उदग्लक्षणा उपधेयाः ॥२५॥

**प्राञ्चो दक्षिणोत्तरे ॥ २६ ॥**

यत्र तु दक्षिणोत्तरव्यपदेशः, तत्र प्राग्लक्षणा इष्टकावर्गा उपधेयाः ॥२६॥

**भिन्न–कृष्णयोरचयनम् ॥ २७ ॥**

भग्नाः कृष्णाश्चेष्टका न चिनुयात् ( ८।७।२।१६ ) (१) ॥ २७ ॥

**दीक्षाणामुत्तमेऽहनि वेद्यग्निमानम् ॥ २८ ॥**

दीक्षापक्षः प्रागुक्तः (१६।६।६)। तत्र सर्वेष्वपि पक्षेषु दीक्षाणामन्तिमेऽहनि महावेदेः = अग्निक्षेत्रस्य मानं कर्तव्यम् । अत्र त्रिपदप्रक्रमप्रमाणेन काष्ठेन वेदिमानम् । तच्च सौमिकवेदिवत् ॥२८॥

**उखयस्थानेऽर्द्धव्यासेन गार्हपत्यस्य परिलिखति ॥ २९ ॥**

मण्डलमिति शेषः ॥ २९ ॥

**मण्डलाद्वा प्रक्रमणमन्तःपात्यस्य ॥३०॥**

वाऽवधारणे। अन्तःपात्यस्य प्रक्रमणं मण्डलादेव भवति, न तु पूर्वार्द्ध्यात्स्तम्भादिति ( १०।२।३।१ ) ॥३०॥

**पश्चाद्यूपावट्यात्पादमात्रे चित्यस्य ॥३१॥**

यूपावटे भवः शङ्कुर्यूपावट्यः । तस्मात् पश्चात्पादमात्रे चित्यस्याग्निक्षेत्रस्य स्थानं भवति ॥ ३१ ॥

अथाग्निमानम्। तत्राग्निमानार्थाया रज्ज्वाः प्रमाणं लक्षणानि चाह—

**यजमानेनोर्ध्वबाहुप्रपदोच्छ्रितेन समस्थितेन वा ( १०।२।२।६ ) ॥३२॥**

प्रपदोच्छ्रितः = पादाग्रे व्यवस्थितः। तादृशेन यजमानेन रज्ज्वादीनां मानं कर्तव्यम्।

---

(१) अथ सर्वासु चितिषु इष्टकानां लक्षणान्युच्यते । तत्र पूर्वमिष्टकोपधानकाले अग्निक्षेत्रमध्ये महान्तोऽष्टौ शङ्कवो निखातव्याः । चतुर्ष्वात्मकोणदेशेष्वेकैकः । तथा प्रागनूकप्रान्त एकः । तथा पुच्छमध्यप्रान्ते द्वितीयः । तथा दक्षिणपक्षमध्यप्रान्त एकः । तथा पुच्छमध्यप्रान्ते च द्वितीयः । एवमष्टौ शङ्कून् दृढान् निखाय तेषु रज्जवो गाढमाकृष्य बन्धनीयाः । तत्र दक्षिणपक्षमध्यान्तशङ्कोरेका रज्जुर्गाढमाकृष्योदगायता बन्धनीया । तदुपलक्षितः प्रदेश उदगनूक इति कथ्यते । तथाऽऽत्ममध्यप्रान्तनिखातशङ्कुपुच्छप्रान्तशङ्कोर्द्वितीया रज्जुः प्रागायता बन्धनीया । तदुपलक्षितः प्रदेशश्च प्रागनूक इति कथ्यते । तथा दक्षिणश्रोण्युत्तरांसशङ्कोरेका अक्ष्णयारज्जुस्तृतीया :। तथोत्तरश्रोणिदक्षिणांसशङ्कोरक्ष्णयारज्जुश्चतुर्थी बन्धनीया । एवं चतस्रो रज्जूर्बध्वा आत्मनः पूर्वान्तादारभ्य पुच्छापरान्तपर्यन्तं प्रागनूकमभितोऽक्ष्णयाऽवधिके दक्षिणोत्तरे देशे प्राग्लक्षणा इष्टका उपधेयाः । तथा दक्षिणपक्षान्तादारभ्य उत्तरपक्षान्तं यावदुदगनूकमभितोऽक्ष्णयाऽवधिके पूर्वापरदेशे उदग्लक्षणा इष्टका उपधेयाः । अथ प्रकारान्तरेणाप्ययमेवार्थ उच्यते । अक्ष्णयारज्जुभ्यामात्मनि चतुर्द्धा विभक्ते चतसृषु दिक्षु चत्वारि त्रिकोणानि संपन्नानि । तत्र पूर्वत्रिकोणे अपरत्रिकोणे च पुच्छसहिते प्राग्लक्षणा इष्टका उपधेयाः । दक्षिणपक्षसहिते दक्षिणत्रिकोणे उत्तरपक्षसहिते उत्तरत्रिकोणे चोदग्लक्षणा उपधेयाः । तथा दक्षिणश्रोण्युत्तरांसशङ्कुबद्धाऽक्ष्णयारज्ज्वधिष्ठिते दक्षिणश्रोण्युत्तरांसावधिके सर्वस्मिन्नक्ष्णयादेशे या इष्टका उपधीयन्ते पद्या, पादभागा बृहती, जङ्घामात्र्यादिकाः, ताः सर्वा उदग्लक्षणा उपधेयाः । तथा उत्तरश्रोणिदक्षिणांसशङ्कुबद्धाऽक्ष्णयारज्ज्वधिष्ठिते उत्तरश्रोणिदक्षिणांसावधिके सर्वस्मिन्नक्ष्णयादेशे पूर्वोक्ताः सर्वा इष्टकाः प्राग्लक्षणा उपधेयाः ।

यदा प्रपदोच्छ्रितेनोर्ध्वबाहुना मानं क्रियते तदा यद् उद्बाहुपुरुषप्रमाणादधिकं क्षेत्रं भवति तत्र परिश्रितः खातव्याः। यदा तु समस्थितेन तदाऽग्निक्षेत्राद्बहिरिति। अग्निमानं तूभयथाऽपि समस्थितेनोर्ध्वबाहुनैव कर्तव्यम्। तदधिकस्य परिश्रिन्मानार्थत्वात् ॥३२॥

इति सप्तमी कण्डिका ॥७॥

---

द्विपुरुषां रज्जुं मित्वोभयतः पाशां मध्ये लक्षणम् ॥१॥

विंशतिशताङ्गुलः पुरुषः। द्विपुरुषप्रमाणां रज्जुं मित्वा तां रज्जुमुभयतः पाशां कृत्वा तस्या मध्ये पुरुषमात्रे चिन्हं कुर्यात् ॥१॥

अभितोऽर्द्धपुरुषयोश्च ॥२॥

तन्मध्यमलक्षणमभितो द्वयोरर्द्धयोरेकैकं लक्षणं कुर्यात्। एवं त्रीणि ॥२॥

मध्यमात्पुरुषपञ्चमे ॥२॥

मध्यचिन्हादवधिभूतात्पुरुषस्य पञ्चमे भागे मध्यमलक्षणसन्निहिते अरत्निप्रमाणे पक्षसाधनार्थं लक्षणं कुर्यात् ॥२॥

अर्द्धे च ॥३॥

तस्य पुरुषपञ्चमभागस्यैवार्द्धे = वितस्तिप्रमाणे च पुच्छसाधनार्थं लक्षणं कुर्यात् ॥३॥

अनुपृष्ठ्यामायम्य पाशयोः शङ्कू मध्येऽर्धपुरुषयोश्च ॥४॥

तां रज्जुं पृष्ठ्यामायम्य पाशयोः शङ्कू निहन्यात्। मध्येऽर्द्धपुरुषयोश्च लक्षणलक्षितस्थानयोः शङ्कू निहन्यात् (१) ॥ ४ ॥

पाशा उन्मुच्यार्द्धपुरुषीययोः प्रतिमुच्य दक्षिणाऽऽयम्य मध्यमे नितोदं करोति ॥५॥

ततो रज्ज्वाः पाशौ पूर्वापरशङ्कुभ्यां निष्काश्य अर्द्धपुरुषलक्षणनिखातयोः शङ्कोः प्रतिमुच्य मध्यमलक्षणेन गृहीत्वा तां रज्जुं दक्षिणस्यां दिशयायम्य तस्मिन् मध्यमलक्षणस्थाने नितोदं = गर्तादिरूपं चिन्हं भूमौ कुर्यात ॥५॥

उन्मुच्य पाशावेकं मध्यमे प्रतिमुच्य दक्षिणाऽधिनितोदमायम्य मध्यमे शङ्कुः ॥ ६ ॥

ततोऽर्द्धपुरुषीयशङ्कुभ्यां पाशौ निष्काश्य तयोः पाशयोर्मध्ये एकं पाशं मध्यमे शङ्कौ प्रतिमुच्य तां रज्जुं समां नितोदस्य उपरिष्टान्मार्गेण दक्षिणस्यां दिश्याकृष्य मध्यमे लक्षणे शङ्कुं निहन्यात्, स आत्मनो दक्षिणः प्रान्तः ॥ ६ ॥

तस्मिन् पाशं प्रतिमुच्य पूर्वार्द्धे च दक्षिणाऽऽयम्य मध्यमे शङ्कुः ॥ ७ ॥

---

(१) एवमुभयतःपाशां मध्ये लक्षणपञ्चकयुक्तां द्विपुरुषां रज्जुं कृत्वा यूपावट्यस्य शङ्कोः पश्चात्पादमात्रे चित्यस्य पूर्वार्द्धे शङ्कुं निखाय तस्मिन् शङ्कावस्या रज्जोरेकं पाशं प्रतिमुच्य पृष्ठ्याया उपरि तां रज्जुं प्रतीचीमाकृष्यापरपाशप्रान्ते शङ्कुं निखाय तत्र पाशं प्रतिमुञ्चेत्। ततोऽस्या रज्वा मध्ये एकं शङ्कुं निखनेत्। तमभितोऽर्द्धपुरुषयोरेकैकं शङ्कुं निखनेत्। एवं द्विपुरुषप्रमाणायां रज्वां पञ्च शङ्कवो निहिता इति स्पष्टोऽर्थः।

तस्मिन् दक्षिणप्रान्तनिहितशङ्कौ एकं पाशं प्रतिमुच्य पूर्वार्द्धे = पूर्वान्तशङ्कौ च द्वितीयं पाशं प्रतिमुच्य मध्यमलक्षणेन तां रज्जुं गृहीत्वा दक्षिणाम् = आग्नेयीं दिशं प्रत्याकृष्य तस्मिन् मध्यमे लक्षणे शङ्कुर्देयः, स आत्मनो दक्षिणो भागः ॥ ७ ॥

**पश्चादर्द्धपुरुषे च ॥ ८ ॥**

दक्षिणसन्निहितशङ्कोरपरस्यां दिशि अर्द्धपुरुषलक्षणलक्षिते देशे च शङ्कुर्देयः, स दक्षिणपक्षसाधनार्थः ॥ ८ ॥

**उन्मुच्य पूर्वार्द्ध्यात्पश्चार्द्धे प्रतिमुच्य दक्षिणाऽऽयम्य मध्यमे शङ्कुः ॥९॥**

तत आत्मपूर्वार्द्धनिहिताच्छङ्कोः पाशं निष्काश्य तमेव पाशमात्मपश्चिमप्रान्तनिहितशङ्कौ प्रतिमुच्य तां रज्जुं मध्यमलक्षणेन गृहीत्वा दक्षिणतो = नैर्ऋतीं दिशं प्रत्याकृष्य मध्यमे शङ्कुर्देयः । स आत्मनो दक्षिणा श्रोणिः ॥९॥

**अभितोऽर्द्धपुरुषयोश्च ॥ १० ॥**

तं दक्षिणश्रोणिनिहितशङ्कुमभितः = पुरस्तादुत्तरतश्चार्द्धपुरुषलक्षणलक्षितयोर्देशयोः शङ्कू देयौ । तस्य श्रोणिशङ्कोः पुरस्तादर्द्धपुरुषलक्षणे दक्षिणपक्षसाधनार्थ एकः । तस्यैव श्रोणिशङ्कोरुत्तरतोऽर्द्धपुरुषलक्षणे पुच्छसाधनार्थोऽपर इति ॥ १० ॥

**एवमुत्तरोऽन्तः ॥ ११ ॥**

यथा आत्मनो दक्षिणो भागः साधितः, एवमेवोत्तरो भागः साधनीयः (१) ॥११॥

दक्षिणपक्षसाधनमाह—

**दक्षिणे पार्श्वे पूर्ववदायम्य पञ्चमभागीये शङ्कुः ॥१२॥**

आत्मनो दक्षिणपार्श्वे पूर्ववत् ( १६।८।९ ) रज्जुमायम्य पुरुषपञ्चमभागसन्निधिलक्षणे शङ्कुः, स दक्षिणपक्षस्य दक्षिणोऽन्तः ॥ १२ ॥

**तस्मिन्पाशं प्रतिमुच्य पूर्वे चाऽर्द्धपुरुषीये पञ्चमभागीयार्द्धपुरुषीययोः संनिपात्य तस्मिञ्छङ्कुः ॥ १३ ॥**

तस्मिन् = दक्षिणप्रान्तनिहितस्यान्तशङ्कौ पञ्चमभागीयलक्षणसन्निकर्षवन्तं पाशं प्रतिमुच्यात्मनो दक्षिणपार्श्वस्य पूर्वार्द्धपुरुषीये च द्वितीयं पाशं प्रतिमुच्य तां रज्जुं दक्षिणत आकृष्य पञ्चमभागीयार्द्धपुरुषीययोर्लक्षणे सन्निपात्य = एकत्र संयोज्य तल्लक्षिते देशे शङ्कुः, स दक्षिणपक्षस्य दक्षिणपूर्वकोणः ॥ १३ ॥

**एवं पश्चात् ॥ १२ ॥**

---

( १ ) तद्यथा—पाशावुन्मुच्यार्द्धपुरुषीययोः प्रतिमुच्योत्तराऽऽयम्य मध्यमे नितोदं करोति । उन्मुच्य पाशावेकं मध्यमे प्रतिमुच्योत्तरत आयम्य मध्यमे शङ्कुः, ततस्तस्मिन् शङ्कावेकं पाशं प्रतिमुच्य द्वितीयं प्राचीपूर्वान्तशङ्कौ प्रतिमुच्य मध्यमेन लक्षणेन रज्जुमीशानकोणं प्रत्याकृष्य मध्यमे लक्षणे शङ्कुः, स आत्मन उत्तरांसः । ततः पश्चादर्धपुरुषे च शङ्कुः उत्तरपक्षसाधनार्थः । उन्मुच्य पूर्वार्द्ध्यं पश्चार्द्धे प्रतिमुच्योत्तराऽऽयम्य मध्यमे शङ्कुः, स आत्मन उत्तरा श्रोणिः । तं शङ्कुमभितोऽर्द्धपुरुषयोश्च शङ्कुः । तस्य श्रोणिशङ्कोः पुरस्तादुत्तरः पक्षसाधनार्थः, श्रोणिशङ्कोर्दक्षिणः पुच्छसाधनार्थः । एवं चतुष्कोण आत्मा साधित इति ।

यथा पक्षस्य पूर्वभागः साधितः, एवं पश्चाद्भागोऽपि साधनीयः । एवं दक्षिणपक्षः (१) साधितः ॥ १३ ॥

**एवमुत्तरः पक्षः ॥ १४ ॥**

अथ पुच्छस्य साधनमाह—

**तथा पुच्छं वितस्त्या ॥१५॥**

पुच्छमपि पक्षवत्साधयेत् (२) । इयांस्तु विशेषः । यत्पक्षसाधने पञ्चमभागीयेन अरत्न्यात्मकेन साधितं, तत् पुच्छे वितस्त्या = पञ्चमभागार्धलक्षणेन साधनीयम् ॥१५॥

**इच्छन्पक्षपुच्छाप्ययेषु चतुरङ्गुलं चतुरङ्गुलं सङ्कर्षति विकर्षत्यन्ते ॥१५॥**

यत्र पक्ष आत्मानमप्येति स पक्षाप्ययः । यत्र पुच्छमात्मानमप्येति स पुच्छाप्ययः । पक्षयोः सन्धौ पुच्छस्य सन्धौ चात्मसन्धिसमीपे चत्वारि चत्वार्यङ्गुलानि उभयोः पार्श्वयोः सङ्कोचयेत्, तथा पक्षपुच्छप्रान्ते पार्श्वद्वये चतुरङ्गुलं विस्तारयेदिच्छन् ॥ १५ ॥

**पञ्चारत्निः पुरुषो दशपदो, द्वादशाङ्गुलं पदं, प्रक्रमस्त्रिपदः समविभक्तस्य ॥१६॥**

पञ्चारत्निर्दशपदः पुरुष इत्युच्यते । द्वादशाङ्गुलानि पदमित्युच्यते । त्रिपदः प्रक्रमश्चयने भवति । एतानि प्रमाणानि समविभक्तस्य पुरुषस्य भवन्ति ॥ १६ ॥

**परितत्थ रज्ज्वा, सहितं बही रज्ज्वेकषष्टे शते परिश्रितो मिनोति ॥१७॥**

पूर्वोक्तप्रकारेण साधितमग्निक्षेत्रं रज्ज्वा सर्वतो वेष्टयित्वा बही रज्ज्वा = रज्ज्वा बहिर्भागे = सहितं = रज्जुसंलग्नं यथा, तथा एकषष्ट्यधिके द्वे शते परिश्रितः = इष्टकास्तम्भनार्थाः पाषाणाः खनेत् । तन्निखननार्थं परितो निम्ना परिखा खननीया ॥ १७ ॥

**चतुर्णवतानि वा त्रीणि ॥१८॥**

अथवा चतुर्णवत्यधिकानि परिश्रितः खनेदिति सङ्ख्याविकल्पः ॥ १८ ॥

**ऊर्ध्वाः शर्कराः खाते ॥१९॥**

ताः परिश्रितः शर्कराः = पाषाणा भवन्ति । ताश्च खाते गर्ते परिखायां परस्परं संलग्ना एव यथेष्टकानां स्तम्भनं भवति तथा निखेयाः ॥ १९ ॥

---

(१) अथ दक्षिणपक्षस्य साधनम् । तत्र आत्मनो दक्षिणपार्श्वे यौ अर्धपुरुषयोः शङ्कू निहितौ, तयोः पाशौ प्रतिमुच्य मध्यमेन लक्षणेन रज्जुं दक्षिणत आकृष्य मध्यमे लक्षणे नितोदं = चिह्नं करोति । ततः पाशावुन्मुच्य यस्मिन् भागे पञ्चमभागीयतदर्द्धलक्षणे भवतस्तस्य भागस्य पाशमात्मदक्षिणपार्श्वमध्यशङ्कौ प्रतिमुच्य तां रज्जुं नितोदस्योपरि समां दक्षिणत आकृष्य पञ्चमभागीये लक्षणे शङ्कुं निखनेत् । ततस्तस्मिन् शङ्कौ पाशं प्रतिमुच्यात्मदक्षिणपार्श्वमध्यमशङ्कुप्रोतं पाशं दक्षिणपार्श्वपूर्वार्धपुरुषीये प्रतिमुच्य पञ्चमभागीयार्द्ध पुरुषीयलक्षणे एकत्र गृहीत्वा रज्जुमाग्नेयीं प्रत्याकृष्य पक्षस्याग्नेयकोणे शङ्कुं निखनेत् । ततः पूर्वस्मादर्द्धपुरुषात्पाशं निष्काश्य पश्चादर्धपुरुषीयशङ्कौ पाशं प्रतिमुच्य तथैव नैर्ऋतीं प्रत्याकृष्य पक्षस्य नैर्ऋतकोणे शङ्कुं निखनेत्। एवं दक्षिणपक्षः साधितः । एवमेवोत्तरः पक्षः साधनीयः ।

(२) अथ पुच्छसाधनम् । तत्रात्मनः पश्चिमपार्श्वे यौ पुच्छसाधनार्थमर्धपुरुषयोः शङ्कू निहितौ, तयोः पाशौ प्रतिमुच्य मध्यमेन लक्षणेन रज्जुं पश्चादाकृष्य मध्यमे चिह्नं कुर्यात् । ततः पाशावुन्मुच्य यस्मिन् भागे पञ्चमभागीयार्द्धपुरुषीयलक्षणे भवतस्तद्भागस्य पाशमात्मपश्चिमपार्श्वमध्यशङ्कौ प्रतिमुच्य तां रज्जुं नितोदस्योपरि प्रतीचीमाकृष्य पञ्चमभागीयार्द्धलक्षणे शङ्कुं निखनेत् । ततस्तस्मिन् शङ्कौ एकं पाशं प्रतिमुच्य मध्यमशङ्कुप्रोतं पाशं दक्षिणेऽर्द्धपुरुषीये प्रतिमुच्य पञ्चमभागीयार्द्धपुरुषीयलक्षणे एकत्र गृहीत्वा रज्जुं नैर्ऋतीं प्रत्याकृष्य पुच्छस्य नैर्ऋतकोणे शङ्कुं निखनेत् । ततो दक्षिणादर्द्धपुरुषीयात्पाशं निष्काश्योत्तरपुरुषीये प्रतिमुच्य तथैव वायव्यां प्रत्याकृष्य पुच्छस्य वायव्यकोणे शङ्कुं निखनेत् । एवं पक्षपुच्छसहितोऽग्निः साधितः ।

**उत्तरेषु पुरुषोच्चयेनैवैकशतविधात् ॥२०॥**

उत्तरेषु = अष्टविधादिषु द्वितीयादिषु चयनेषु (१) एकशतविधचयनं यावत् = एकाधिकशतपुरुषात्मकपञ्चनवतितमचयनपर्यन्तं पुरुषोच्चयेन = एकैकपुरुषवृद्ध्या अग्निमानं भवति ( १०।२।३।१८ ) ॥ २० ॥

**यथाग्नि वेदीष्टकाप्रमाणम् ॥२१॥**

वेदिश्च इष्टकाश्च वेदीष्टकाः। तासां प्रमाणं यथा अग्निक्षेत्रस्य प्रमाणं वर्द्धते तथा वर्द्धनीयम् ॥ २१ ॥

**अन्तःपात्य-गार्हपत्ययोरिच्छन् ॥२२॥**

अन्तःपात्यस्य ( १०।२।३।१ ) गार्हपत्यचितेश्च वृद्धिं कुर्यान्न वेति विकल्पः ( १०।२।३।६ ) ॥२२॥

**उत्तरपक्षस्यापरस्याᳪ स्रक्त्यां परिश्रितो मिनोति जङ्घामात्रीं नाभिमात्रीं मुखमात्रीमिति ॥२३॥**

परिश्रित्सङ्ख्यायां पक्षद्वयमुक्तम् (१६।=।१७-१८) । तत्र पक्षद्वयेऽपि उत्तरपक्षस्य वायव्यकोणे तिसृणां परिश्रितां खातप्रमाणे विशेषः। एका जङ्घामात्री, तस्या उत्तरतो द्वितीया नाभिमात्री, तदुत्तरतस्तृतीया मुखमात्री । अन्यासामर्थादूर्ध्वं परिमाणं कल्पनीयम् । पश्चिमकोणे एवंप्रमाणास्ताः परिश्रितः खनति ॥ २३ ॥

इत्यष्टमी कण्डिका ॥ ८ ॥

इति महर्षिकात्यायनप्रणीते श्रौतसूत्रे महामहोपाध्यायविद्वन्मूर्द्धन्यमहायाज्ञिक
साग्निकश्रीश्रीप्रभुदत्तशर्मणां सूनुना विद्याधरशर्मणा कृतायां
सरलाख्यायां वृत्तौ षोडशोऽध्यायः ।

---

( १ ) चितिरियं सार्द्धसप्तपुरुषात्मिका सूत्रकारस्याभिमता । तत्र मध्ये द्विपुरुषायामं द्विपुरुषविस्तारं स्थण्डिलं निर्माय तत्संलग्नमेव दक्षिण-पश्चिमोत्तरभागेषु त्रिष्वपि एकैकपुरुषविस्तारं दक्षिणोत्तरयोः पार्श्वयोः सारत्निकैकैकपुरुषायामं, पश्चिमे च सवितस्तिकपुरुषायामं स्थण्डिलत्रयं निर्मातव्यम्। स्थण्डिलमिदं प्राङ्मुखं मन्तव्यम् । तस्य दक्षिणोत्तरयोर्ये स्थण्डिले, तयोः क्रमाद्दक्षिणोत्तरौ पक्षौ इति संज्ञा । पश्चिमस्य च पुच्छमिति व्यवहारः । मध्यभागस्य चात्मेति । द्वितीयादिषु चयनेषु पञ्चनवतितमचयनं यावत्प्रतिचयनमेकैकपुरुषवृद्ध्याऽग्निक्षेत्रस्य मानं कार्यम् । प्रथमचयने सार्द्धसप्तपुरुषप्रमाणमग्निक्षेत्रम् । द्वितीये चयनेऽष्टपुरुषप्रमाणम् । तृतीये चयने नवपुरुषप्रमाणम् । एवं पञ्चनवतितमे चयने एकाधिकशतं पुरुषा भवन्ति। अर्धपुरुषमानं तु सर्वत्राधिकमस्त्येव। तस्यापि प्रतिचयनं स्वसप्तमभागेन वृद्धिर्भवत्येव । अन्तिमचयने तस्याप्येकोत्तरशतं स्वसप्तमभागा भवन्ति । अग्निक्षेत्रवदेव द्वितीयादिषु चयनेषु वेदिप्रमाणं वर्द्धयेत् । इष्टकानां च सर्वासां प्रमाणं वर्द्धयेत् । न तु तासां सङ्ख्याधिक्यमाश्रित्य क्षेत्रपूरणम् । अत्रेदं रहस्यम् । सर्वमग्निक्षेत्रं सार्द्धसप्तपुरुषात्मकं समचतुरस्रीकृत्य सप्तमभागेन द्वितीये चयने वर्द्धनीयम् । तृतीयादिषु चयनेषु सर्वत्रैकोच्चयेन स्वस्वसप्तमभागेन वृद्धिर्भवति । तद्यथा-तृतीये द्वौ स्वसप्तमभागौ अधिकौ भवतः । चतुर्थे त्रयः, पञ्चमे चत्वारः, षष्ठे पञ्च, सप्तमे षट् , एवं क्रमेण पञ्चनवतितमे चतुर्णवतिः स्वसप्तमभागा वर्द्धन्ते । अत्रायमुपायः । बृहत्यादिक्षेत्रं सप्तधा विभज्य सप्तमं भागं चतुरस्रीकृत्य "नानाप्रमाणसमास" ( का० शु० प० ४।१ ) इत्याद्युपायेन बृहत्यादिक्षेत्रमध्ये आवपेदिति ।

# सप्तदशोऽध्यायः ।

[ उपसदां प्रथमेऽहनि विष्णुक्रमवात्सप्रयोः समस्यानुष्ठानम् ]

**श्वोऽभ्यवहरणादि प्रायश्चित्यन्तं कृत्वा विष्णुक्रम-वात्सप्रसमासः ॥ १॥**

श्वः = उपसदां प्रथमेऽहनि सोमक्रयदिने भस्मनोऽपोऽभ्यवहरणमारभ्य प्रायश्चित्यन्तं पूर्वोक्तप्रकारेण (१६।२३, ७।७) कृत्वा पूर्वोक्तयोर्विष्णुक्रम वात्सप्रयोः समास = एकस्मिन्दिने द्वयोरनुष्ठानं कर्तव्यम् ( ६।७।४।१४ ) ॥ १ ॥

[ उपसदां प्रथमेऽहनि वात्सप्रप्राप्तौ तं कृत्वा तयोः समस्यानुष्ठानम् ]

**वात्सप्रं कृत्वोपस्थेयं चेत् ॥ २ ॥**

यदि तस्मिन् क्रयणीयेऽहनि वात्सप्रोपस्थानस्य पर्यायो भवेत, तदा वात्सप्रं कृत्वा = वात्सप्रेणोपस्थाय विष्णुक्रमान् वात्सप्रोपस्थानं च कुर्यात् । यदि विष्णुक्रमपर्यायस्तदा विष्णुक्रमान् कृत्वा वात्सप्रोपस्थानम् ( ६।७।४।१५ ) ॥ २ ॥

[ गार्हपत्यचितिस्थाने पतितानां तृणपर्णादीनामपसारणम् ]

**पलाशशाखया गार्हपत्यं व्युदूहत्यपेत वीति पच्छः (१२।४५)प्रतिदिशं पुरस्तात्प्रथमम् ॥ ३ ॥**

पलाशस्य शाखया गार्हपत्यचितेः स्थानं मध्यादारभ्य प्रतिदिशं प्रादक्षिण्येन व्युदूहति = तत्र पतितं तृणपर्णादिकं शाखयाऽपसारयतीत्यर्थः ॥ ३ ॥

[ गार्हपत्यचितावूषप्रक्षेपः सिकताप्रक्षेपश्च ]

**उदीचीꣳ शाखामुदस्योषान्निवपति "संज्ञानमिति (१२।४६) ॥ ४ ॥**

तां शाखामुत्तरस्यां दिशि उदगग्रां क्षिप्त्वा गार्हपत्यचितिस्थाने ऊषाः = क्षारमृत्तिकाः क्षिपेत् ॥ ४ ॥

**मण्डलं छादयति ॥ ५ ॥**

ताभिः क्षारमृत्तिकाभिः सर्वं मण्डलमाच्छादयेत् ॥ ५ ॥

[ गार्हपत्यचितेरवष्टम्भनार्थमेकविंशतिसङ्ख्याकानां मूर्धानां शर्कराणां परितो निखननम् ]

**सिकताश्चाग्नेर्भस्मेत्यूषवत् ( १२।४६ ) ॥ ६ ॥**

तत्र सिकताश्च प्रक्षिप्य ऊषवन्मण्डलमाच्छादयेत्सिकताभिः ॥ ६ ॥

**परिश्रिद्भिः परिश्रयति पूर्ववदेकविꣳशत्या "चित स्थेति (१२।४६) ॥ ७ ॥**

एकविंशतिसङ्ख्याकाभिः परिश्रिद्भिः = पाषाणमयीभिरिष्टकाभिस्त्र्यङ्गुलविस्तृताभिः पूर्ववत् =( १६।८।२५ ) ऊर्ध्वाभिर्गार्हपत्यस्थानं प्रदक्षिणं वेष्टयेत् । तत्र सकृन्मन्त्रः, श्रुतेः । ताश्च मण्डलस्य समन्ततः परिखां निम्नां कृत्वा चितेरवष्टम्भनार्थं चितिसंलग्ना निखातव्याः ॥ ७ ॥

[ गार्हपत्यचितावेकत्रिंशतीष्टकोपधानम् ]

[ गार्हपत्यचितिमध्येऽर्द्धबृहतीनां चतसृणामुपधानम् ]

**मध्येऽर्द्धबृहतीश्चतस्रो दक्षिणोत्तराः प्राचीरुप दधाति दक्षिणत उदङ्ङ्यर्ठ० सोऽ अग्निरिति( १२।४७–५० ) ॥ ८ ॥**

अध्वर्युर्मण्डलस्य दक्षिणभागे उदङ्मुख उपविश्य मण्डलमध्येऽर्द्धबृहतीसंज्ञाः षडङ्गुलोच्चा द्वादशाङ्गुलविस्ताराश्चतुर्विंशत्यङ्गुलदीर्घाश्चतस्र इष्टका दक्षिणोत्तरा "अभ्यात्मं चयनम्" ( १६।८।१ ) इत्युक्तत्वाद्दक्षिणसंस्थाः प्राग्लक्षणाः ( १६।७।२६ ) प्रत्यृचमेकैकामुप दध्यात् ॥ ८ ॥

**सकृन्नित्ये ॥ ९ ॥**

नित्ये = पूर्वोक्तौ (१६।७।१४) सादनसूददोहसौ चतसृणामप्यर्धबृहतीनां सकृत् = सहैव भवतः । उपहितानामिष्टकानां स्थिरीकरणं सादनम् । उपहितानामिष्टकानामुपरि हस्तं निधाय ता अस्येति पठनं सूददोहसाधिवदनम् ॥ ९ ॥

[ अर्द्धबृहतीनां पश्चात्पुरस्ताच्च द्वयोर्द्वयोः पद्ययोरुपधानम् ]

**पश्चात्सहिते पादमात्र्यौ तिरश्च्यौ, पुरस्ताच्च ॥ १० ॥**

उपहितानामर्द्धबृहतीनां मध्ये पश्चात्पुरस्ताच्च अर्द्धबृहतीसंलग्ने एव द्वे द्वे पादमात्र्यौ = पद्ये इष्टके उदग्लक्षणे उप दध्यात् । युग्मत्वादनूकमभित एकैकाम् ॥ १० ॥

[ तेषामेव पद्यानामुपधानक्रमो मन्त्रश्च ]

**अपरेण परिक्रम्य परिक्रम्य चयनमिडामग्न इति पश्चिमे प्रतिमन्त्रमुत्तरतः ( १२।५१-५२ ) ॥ ११ ॥**

अर्द्धबृहतीनामपरेण परिक्रम्योत्तरतोऽवस्थितो दक्षिणामुख उपविष्टः पश्चिमे = पश्चादुपहिते तिरश्च्यौ तिर्यग्लक्षणे उदक्संस्थे इष्टके उप दध्यात् । तत्र इडामग्न इति दक्षिणाम्, अयं त इत्युत्तराम् ॥ ११ ॥

**"चिदसीति पूर्वे दक्षिणतः प्रतिमन्त्रम् ( १२।५३ ) ॥ १२ ॥**

तत उत्तरस्मात्प्रदेशादपरमार्गेण दक्षिणप्रदेशे गत्वा पूर्वे = तिरश्च्यौ (सू० १०) उदग्लक्षणे दक्षिणतोऽवस्थित उदङ्मुखो दक्षिणसंस्थे तिर्यग्लक्षणे (७।७।१।१०) उपदध्यात् । चिदसीत्युत्तरां, परिचिदसीति दक्षिणाम् ॥ १२ ॥

**नित्ये प्रतीष्टकं तिरश्चीषु ॥ १३ ॥**

पूर्वोक्तासु चतसृषु तिरश्चीष्विष्टकासु इष्टकामिष्टकां प्रति पृथङ् नित्ये ( १६।७।१४ ) भवतः ॥ १३ ॥

[ गार्हपत्यचितायाग्नेयकोणे द्वयोरर्धपद्ययोः, कोणत्रये एकैकस्याः पद्याया उपधानम् ]

**स्रक्तिषु पादमात्रीः ॥ १४ ॥**

स्रक्तिषु = आग्नेयवर्जितेषु कोणेषु पादमात्रीरिष्टका उप दध्यात् ॥ १४ ॥

**पूर्वदक्षिणस्यामर्द्धपद्ये ॥ १५ ॥**

आग्नेयकोणे द्वे अर्द्धपद्ये प्राग्लक्षणे प्रागायते उपदध्यात् । नैर्ऋत्यकोणे उदग्लक्षणां पद्याम्, ईशानकोणेऽप्युदग्लक्षणां पद्याम्, वायव्यकोणे प्राग्लक्षणां पद्यामिति ॥ १५ ॥

शेषेऽष्टौ वक्राः ॥१६॥

अवशिष्टे मण्डले अष्टौ वक्रा इष्टका उपदध्यात्। ताश्च पुरस्तात्पश्चाच्च द्वे द्वे प्राग्लक्षणे, दक्षिणोत्तरयोश्च द्वे द्वे उदग्लक्षणे उपदध्यात्। वक्रेष्टकानिर्माणविधिः पूर्वमुक्तः ॥१६॥

तिसृषु लोकम्पृणासु दशसु च द्वयोर्वा दशस्वेकस्यां च ॥१७॥

प्रथमं तिसृषु लोकम्पृणासु तूष्णीमुपहितासु ततो दशसु च लोकम्पृणासु मन्त्रः प्रवर्तते। अथवाऽऽदौ द्वयोरिष्टकयोरुपहितयोः, ततो दशसूपहितासु, तत एकस्यामुपहितायां मन्त्रः प्रवर्तते। वारद्वयं वारत्रयं वा मन्त्रपाठ इति भावः ॥१७॥

चात्वालदेशात्पुरीषं निवपतीन्द्रं विश्वा इति ( १२।५६ ) ॥१८॥

चात्वालस्थानान्मृदमानीय गार्हपत्यचितेरुपरि प्रक्षिपेत् ॥१८॥

[ गार्हपत्यचितिनाबुख्याग्नेः स्थापनम् ]

समम्बिलां कृत्वोख्यं निवपति "समितमिति [१२।५७–६०] ॥१९॥

गार्हपत्यचितिं समम्बिलाम्—पुरीषनिवपनेन इष्टकोच्चतासमां कृत्वा उख्यमग्निं गार्हपत्यचितेर्मध्ये स्थापयेत्। समं बिलंमुखं यस्याः सा समम्बिला ॥१९॥

रिक्तां नावेक्षेतोख्याम् ॥२०॥

ततोऽध्वर्यू रिक्तामग्निशून्यामुखां सिकतापूरणादर्वाक् न विलोकयेत् ॥२०॥

[ अग्निरहितामुखां सिकताभिः प्रपूर्य तत्र पयसः प्रक्षेपः ]

सिकताभिः समम्बिलां कृत्वा "मातेव पुत्रमिति [ १२।६१ ] शिक्याद्वि मुच्याग्निवन्निधायासिञ्चति पयो मध्ये तूष्णीम् ॥२१॥

रिक्तामुखां सिकताभिः प्रपूर्य = सममुखां कृत्वा सिकतापूरितां तां शिक्यात्पृथक्कृत्य अग्निवत् = स्थापितस्योख्यस्याग्नेरुत्तरतोऽरत्निमात्रे ( १६।२।५ ) गार्हपत्यचितेरुपर्येव निधाय सिकतापूर्णोखाया मध्ये पय आसिञ्चेत् ॥२१॥

[ गार्हपत्यचितिस्त्रिचितिका एकचितिका वा ]

त्रिचितमेके ॥ २२ ॥

गार्हपत्यं त्रिचितमेके मन्यन्ते। अग्निरूपदेऽर्द्धबृहत्युपधानादि द्विरपरं कुर्यात्। ततः पुरीषनिवपनादि ॥ २२ ॥

[ नैर्ऋतीनां तिसृणामिष्टकानामुपधानम् ]

नैर्ऋतीः कृष्णास्तुषपक्कास्तिस्रोऽलक्षणाः पादमात्रीर्विष्यशन्नहोमवद्देशे च दक्षिणोत्तराः कृत्वा दक्षिणामुखो ऽनुपस्पृशन्नसुन्वन्तमिति (१२।६२-६४) प्रत्यृचं पराचीः ॥ २३ ॥

ततोऽध्वर्युर्नैर्ऋत्यां दिशि गत्वा राजसूये हविष्यशन्नहोमे यादृशो देशो विहितः ( १५।१।१० ) तादृशे स्वयं प्रदीर्णे ईरिणे वा तिस्र इष्टका निधाय हस्तेनानुपस्पृशन्दक्षिणामुख उपदध्यात् ( ६।२।१८ ) ॥ २३ ॥

इति प्रथमा कण्डिका ॥ १ ॥



**अभ्यात्ममेके ॥ १ ॥**

एके नैर्ऋतीरिष्टका उदक्संस्था उप दधति, एके दक्षिणसंस्था इति विकल्पः ॥ १ ॥

**नित्याभावः ॥ २ ॥**

नित्यशब्देन सादनसूददोहसावुच्येते ( १६।७।१४ ) ॥ २ ॥

**शिक्य-रुक्मपाशेण्ड्वासन्दीः परेणास्यति "यन्त" इति (१२।६५) ॥ ३ ॥**

शिक्यं, रुक्मपाशः शणमयः, द्वे इण्ड्वे, आसन्दी च; एतानि नैर्ऋतीभ्यो दक्षिणे देशे प्रक्षिपेत् ॥ ३ ॥

**उदपात्रं निषिच्यान्तरात्मेष्टकमुत्तिष्ठन्ति "नमो भूत्या" इति (१२।६५) ॥ ४ ॥**

आत्मा च इष्टकाश्च आत्मेष्टकाः। तासामन्तरा इत्यन्तरात्मेष्टकम्। आत्मनो नैर्ऋतीष्टकायां च मध्ये उदपूर्णपात्रं तूष्णीं निषिच्य अध्वर्यु—ब्रह्म—यजमाना नैर्ऋतीनां समीपादुत्तिष्ठेयुः ॥ ४ ॥

**अनपेक्षमेत्य शालाद्वार्योपस्थानं "निवेशन" इति ( १२।६६ ) ॥ ५ ॥**

**प्रायणीयहविष्कृदन्ते महावेदेः स्फ्याद्यासंमर्शनात्करोति ॥ ६ ॥**

[ औदुम्बरे सीरेऽनडुद्योजनं तेनाग्निकर्षणं च ]

**प्रायणीयान्ते सीरं युनक्त्यौदुम्बरम् ॥ ७ ॥**

**मौञ्जं त्रिवृद्रज्ज्वयम् ॥ ८ ॥**

अत्र सीरे रज्जुजातं मुञ्जमयं त्रिगुणितं च सम्पादयेत् ॥ ८ ॥

**षड् द्वादश चतुर्विंशतिं वा युनक्ति पूर्वेणोत्तराꣳसम् ॥ ९ ॥**

तत्रौदुम्बरे सीरे अग्नेरुत्तरांसं पूर्वेण षड द्वादश चतुर्विंशतिं वाऽनडुहो योजयेत्प्रतिप्रस्थाता ॥ ९ ॥

**दक्षिणामग्निश्रोणिमपरेण तिष्ठन्युज्यमानमभि मन्त्रयते "सीरा युञ्जन्तीति [१२।६८—६९] ॥१०॥**

सीरमध्वर्युः ॥१०॥

**आत्मनि कृषत्यनुपरिश्रिच्छुनꣳ सुफाला" इति प्रत्यृचम् [१२।६९।७२] ॥११॥**

परिश्रित्संलग्नं हलेनात्मनि भूमिं कृषेत्। हलस्याग्रे महतीं मौञ्जीं त्रिवृतं रज्जुं बद्ध्वा तस्याः प्रान्तं बलीवर्दानां स्कन्धस्थे युगे बध्नीयात्। बलीवर्दास्त्वग्निक्षेत्राद्बहिरेव तिष्ठन्ति। सीरं च कर्षणवेलायामध्वर्युपुरुषा अग्रतो नयन्ति ॥ ११ ॥

**दक्षिणतः प्राचीं, प्रदक्षिणमितराः ॥ १२ ॥**

अध्वर्युः प्रथममात्मनो दक्षिणश्रोणेरारभ्य दक्षिणांसपर्यन्तां प्राचीं सीतां शुनꣳ सुफाला इति कृषेत्। ततः सीरमुत्पाद्य पुनर्दक्षिणश्रोणेरारभ्योत्तरश्रोणिपर्यन्तां द्वितीयामुदीचीं सीतां घृतेनेति कृषेत्। तत उत्तरश्रोणेरारभ्योत्तरांसपर्यन्तां तृतीयां सीतां प्राचीं लाङ्गल मिति कृषेत्। तत उत्तरांसादारभ्य दक्षिणांसपर्यन्तां दक्षिणसंस्थां चतुर्थीं सीतां कामं काम मिति कृषेत्। एवं चतस्रः सीता आत्मनश्चतुर्षु पार्श्वेषु मन्त्रेण कृषेत् ॥ १२ ॥

**तूष्णीं तिस्रस्तिस्रः प्रदक्षिणम् ॥ १३ ॥**

आत्ममध्ये द्वादश सीतास्तूष्णीं प्रदक्षिणं कृषेत् ॥ १३ ॥

**तिर्यगनूके ॥ १४ ॥**

तत्र च प्रथममुदगनूके दक्षिणोत्तरायतास्तिस्रः कृषेत् ॥ १४ ॥

ततः—

**अक्ष्णया श्रोण्यꣳसयोः ॥ १५ ॥**

ततोऽक्ष्णया दक्षिणश्रोणिमारभ्योत्तरांसं यावत् तिस्रस्तिस्रः सीतास्तूष्णीं प्रदक्षिणं कृषेत् ॥ १५ ॥

**अनूके ॥१६॥**

प्रागनूके प्रागपरायतास्तिस्रः ॥१६॥

**अक्ष्णया श्रोण्यꣳसयोः ॥ १७ ॥**

ततोऽक्ष्णया उत्तरश्रोणेरारभ्य दक्षिणांसं यावत् प्रदक्षिणं तिस्रः सीतास्तूष्णीं कृषेत् ॥ १७ ॥

**दीर्घप्रयुक्तेषु वा पुरुषाः कृषन्ति ॥ १८ ॥**

अग्रतोऽग्रतो दीर्घपङ्क्त्या प्राक्संस्थेषु अनडुत्सु वा कर्षणं भवति। तत्र च पुरुषाः कृषन्ति। दक्षिणोत्तररीत्या प्रयुक्तेषु महता प्राजनेनाध्वर्युरेव कृषति ॥ १८ ॥

[ अनडुहां सीराद्विमोचनं, दक्षिणाकाले तेषां दानं च ]

**अनडुहो विमुच्य "विमुच्यध्वमिति ( १२।७३ ) ॥ १९ ॥**

**पशुवदुत्सृज्य दक्षिणाकालेऽध्वर्यवे ददाति ॥ २० ॥**

पशुवदिति ( १६।३।१५ ) = ईशानीं दिशं प्रति ॥ २० ॥

**सीरमुत्करे कृत्वा ॥ २१ ॥**

वक्ष्यमाणं कर्म कुर्यात् ॥ २१ ॥

इति द्वितीया कण्डिका ॥ २ ॥



[ आत्ममध्ये कुशगुच्छस्थापनं, तदुपरि होमश्च ]

**कुशस्तंबमुपदधाति मध्ये तूष्णीम् ॥ १ ॥**

आत्मनो मध्ये कुशानां स्तंबं प्रागग्रं पद्मप्रमाणं स्थापयेत्। एकमूलोऽनेकशाखः स्तम्ब इत्युच्यते ॥ १ ॥

**पञ्चगृहीतेनोद्गृह्णन्नभि जुहोति "सजूरब्द" इति ( १२।७४ ) ॥ २ ॥**

स्रुचमूर्ध्वां कुर्वन् कुशस्तंबस्योपरि जुहुयात् ॥ २ ॥

[ कर्षणक्रमेण सीतामुदकप्रक्षेपः ]

**चतसृषु चतसृषु त्रींस्त्रीनुदचमसान्निनयति यथाकृष्टमौदुम्बरेण चतुःस्रक्तिना ॥ ३ ॥**

चतसृषु सीतासु कर्षणक्रमेण ( १ ) त्रीन् त्रीनुदकपूर्णान् चमसान् निनयेत् ॥३॥

( १ ) तत औदुम्बरं चमसमुदकेन पुनः पूरयित्वा चतसृषु चतसृषु सीतासु त्रींस्त्रीनुदचमसान् कर्षणक्रमेण निनयति। तत्र च त्रिभागा सीता एकैकस्य चमसस्य भागे आयाति। तथाहि—

**त्रीन् कृष्टाकृष्टयोः ॥ ४ ॥**

निनयत्युदचमसान् ॥४॥

सर्वमेवाग्निक्षेत्रं कृष्टं चाकृष्टं च । तत्र सर्वत्र निनयने प्राप्त आह—

**कृष्टमात्रे वा ॥ ५ ॥**

यदकृष्टं तिसृणां तिसृणां सीतानां मध्यवर्त्यन्तरालद्वयं, तत्रैव निनयेत् ॥ ५ ॥

**तस्मिन्त्सर्वौषधमावपत्येकवर्जम् ॥ ६ ॥**

तस्मिन् = चमसे ॥ ६ ॥

**अभोजनं तस्योच्छ्वासात् ७ ॥**

तमौषधं यावज्जीवं न भुञ्जीत ॥ ७ ॥

[ उदकप्रक्षेपस्थाने सर्वौषधवपनम् ]

**"या ओषधीरिति (१२।७५-८९) तृचैर्वपत्युदपात्रवत् ॥ ८ ॥**

या ओषधीरित्यारभ्य पञ्चदशभिर्ऋग्भिरुदचमसोन्नयनवत्सर्वौषधं वपति । एकैक चमसस्थाने एका ऋक् । धान्यानि च चमसेनैव वपेन्नतु हस्तेन । औदुम्बरेण चमसेन चतुःस्रक्तिनेति चमसस्य वपनकरणत्वेन श्रवणात् । या ओषधीरिति मन्त्रं पठित्वा प्रथमोदचमस निनयनस्थाने वपेत् , शतं व इति द्वितीयोदचमसनिनयनस्थाने, ओषधीरिति तृतीयोदचमसनिनयनस्थाने; एवमवशिष्टैर्मन्त्रैश्चतुर्थपञ्चमाद्युदनिनयनस्थाने सर्वौषधवपनं कार्यम् ॥ ८ ॥

**सोमनिवपनाद्याऽऽतिथ्यहविष्कृतः कृत्वाऽऽहवनीयपरिश्रितोऽभिमन्त्रयते "चित स्थेति ( १२।४६ ) ॥ ९ ॥**

ततः "उपरवदेशे प्रतिप्रस्थाता रोहिते चर्मण्यानडुहे सोमं निवपति" (७।६।१) इत्यत आरभ्य आतिथ्येष्टेर्हविष्कृदाह्वानादि तुषविमोकान्तं कृत्वा आत्मन ईशानकोणादारभ्य सप्त सप्त परिश्रितोऽभिमन्त्रयेत् ॥ ९ ॥

**सप्त सप्त वा ॥ १० ॥**

वाऽवधारणे । सप्त सप्तैव परिश्रितोऽनु मन्त्रयते, न सकृन्मन्त्रेण । तेन सप्तत्रिंशद्वारं

---

प्रथमचमसभागे एका दक्षिणसीता समग्रा, अपरस्यास्तृतीयो भागः । द्वितीये अपरस्या द्वौ भागौ, उत्तरस्याश्च द्वौ । तृतीये एको भाग उत्तरस्याः, पूर्वा समग्रा । ततस्तिर्यगनूके यास्तिस्रः सीताः, तासां मध्यमा सकला, तत्पूर्वस्यास्तृतीयो भागस्तत्र चतुर्थः । ततस्तस्या द्वौ भागौ, द्वावपरस्याः, तत्र पञ्चमः । ततस्तस्या एको भागः, दक्षिणश्रोण्युत्तरांससीतानां मध्यमा समग्रा, तत्र षष्ठः । ततस्तद्दक्षिणा सीता समग्रा, उत्तरस्यास्तृतीयो भागः, तत्र सप्तमः । ततस्तस्या द्वौ भागौ, प्रागनूकसीतानां मध्यमायाश्च द्वौ भागौ, तत्राष्टमः । ततस्तस्यास्तृतीयो भागः, तस्या दक्षिणा समग्रा, तत्र नवमः । तत उत्तरा समग्रा, उत्तरश्रोणिदक्षिणांससीतानां मध्यमायास्तृतीयो भागः, तत्र दशमः । ततस्तस्या द्वौ भागौ, तदपरस्याश्च द्वौ, तत्रैकादशः । ततस्तस्या एको भागः, पूर्वा च समग्रा, तत्र द्वादशः । एवं षोडशसु सीतासु द्वादशानां चमसानां निनयनं कृतम् । अथत्रयश्चमसा अव शिष्यन्ते । तत्र तिसृणां तिसृणां सीतानां मध्ये ये द्वे द्वे अकृष्टे चतुर्ष्वपि स्थानेषु, एवं तान्यष्टौ भवन्ति । तेषु विभज्य ते त्रयश्चमसा निनेयाः । तत्र च त्रिभागोनानि त्रीणि त्रीण्यकृष्टान्येकैकस्य चमसस्य भागे-आयान्ति । तथाहि—तिर्यकनूकभवे समग्रे द्वे अकृष्टे, दक्षिणश्रोण्युत्तरांसाकृष्टयोर्दक्षिणस्याकृष्टस्य द्वौ तृतीयौ भागौ, तत्र त्रयोदशश्चमसो निनेयः । ततस्तस्य एकस्तृतीयो भागः, उत्तर समग्रम् ; प्रागनूकाकृष्टयोर्दक्षिणं समग्रम्, उत्तरस्यां तृतीयो भागः, तत्र चतुर्दशश्चमसो निनेयः । ततस्तस्य द्वौ भागौ, उत्तरश्रोणिदक्षिणांसभवे द्वे समग्रे अकृष्टे । तत्रात्मन आग्नेयकोणपर्यन्तं पञ्चदशश्चमसो निनेय इति ।

सप्तसु मन्त्रः । ततोऽवशिष्टयोर्द्वयोः । अयं प्रकारः प्रथमपक्षे । द्वितीयपक्षे तु षट्पञ्चाशद्वारं सप्तसु मन्त्रः । ततोऽवशिष्टयोर्द्वयोः ॥ १० ॥

[ लोगेष्टकानां निधानमनूकान्तेषु ]

**लोगेष्टकाः स्फ्येनाहृत्य बहिर्वेदेरनूकान्तेषूप दधाति तिष्ठन्मा मा हिंसी दिति ( १२।१०२-१०५ ) प्रत्यृचं प्रतिदिशं पुरस्तात्प्रथमम् ॥ ११ ॥**

अध्वर्युस्तिष्ठन् प्रत्यृचं सर्वासु दिक्षु अनूकान्तेषु लोगेष्टका = मृत्खण्डानि यथाप्रमाणानि स्फ्येन वेदेर्बाह्यत आनीयोपदध्यात् ॥ ११ ॥

**उत्तरापरस्याः पश्चात् ॥ १२ ॥**

अपरस्यां दिश्युपधानार्थं वायव्यकोणाद्बहिर्वेदेर्लोगेष्टका आनीयोप दध्यात् ( ७।३।१२२ ) ॥ १२ ॥

**उत्तरस्याः सिकताः प्रमार्ष्टि "जहामि सेदिमिति (१२।१०५) ॥१३॥**

उत्तरस्या लोगेष्टकायाः सिकताः पातयेत् ॥ १३ ॥

[ उत्तरवेदिनिर्माणम् ]

**उत्तरवेदिं निवपति चत्वारिंशत्पदां युगमात्रीं वा सर्वतः कुशस्तंबे ॥१४॥**

ततः कुशस्तंबस्योपरि सर्वतः = क्षेत्रफलेन चत्वारिंशत्पदां युगमात्रीं वोत्तरवेदिं कुर्यात् ॥ १४ ॥

[ आत्मनि सिकताप्रक्षेपः ]

**"अग्ने तवेति (१२।१०६-१११) सिकता न्युप्य, छादयत्यात्मानम् ॥१५॥**

षडृचेन बहुतराः सिकता न्युप्य ताभिः सिकताभिरात्मानं छादयेत् ॥१५॥

**"आ प्यायस्वेति ( १२।११२ ) सिकतालम्भनमृग्भ्याम् ॥ १६ ॥**

[ आनडुहे चर्मणि प्रथमचितीष्टकानामुपधानम्, अन्यासां चेच्छया ]

**आतिथ्यशेषाद्योपसदः कृत्वा रोहिते चर्मण्यानडुहेऽन्तःपात्यस्य पुरस्ता दिष्टकाः करोति प्रथमचितेः ॥ १७ ॥**

प्रथमचितेः सिकताप्रच्छादनं सिकतालम्भनान्तं कृत्वा आतिथ्याया अवशिष्टं यच्छूर्पाद्धविरुद्वपन-निष्पवनादि, तत आरभ्य उपसदन्तं कर्म कृत्वा अन्तःपात्यस्य पुरस्ताद्वेदिमध्ये प्राग्ग्रीवेऽस्य उत्तरलोम्नश्चर्मणः स्तृतस्योपरि प्रथमचितेः सर्वा इष्टका निदध्यात ॥१७॥

**इतरासां च स्वयमातृण्णाः ॥ १८ ॥**

इतरासां द्वितीयादीनां स्वयमातृण्णा एव तत्र चर्मणि निदध्यात् ॥ १८ ॥

**मत्या च ॥ १९ ॥**

इच्छया इतरासां द्वितीयादिचितीनामन्या अपि इष्टकाश्चर्मणि निदध्यात् ॥ १९ ॥

[ घृताक्तैः कुशैरिष्टकानां प्रोक्षणम् ]

**आज्ये न्यज्य कुशाग्राणि तूष्णीं प्रोक्षति श्वेतेऽश्वे पुरस्तात्तिष्ठति, श्वेताभावेऽश्वेतेऽश्वाभावेऽनडुहि ॥ २० ॥**

कचित्पात्रस्थे घृते कुशाग्राणि न्यज्य तैराज्याक्तैः कुशाग्रैश्चर्मस्था इष्टकाः प्रोक्षेत् ॥२०॥

**अग्निभ्यः प्रह्रियमाणेभ्यो ऽनुवाचयति ॥ २१ ॥**

इष्टकाचर्मणः प्राच्यां दिशि श्वेतेऽश्वे, तदभावे अश्वेतेऽश्वे, तदभावेऽनडुहि तिष्ठति सति अग्निभ्यः प्रह्रियमाणेभ्योऽनुब्रूहि इति वाचयेत् । इदं चानुवाचनम् "उत्तरवेदि प्रोक्षणाद्यासम्भारनिवपनात्कृत्वा" ( १७।३।२७ ) इति वक्ष्यमाणत्वादत्र पूर्वमाज्यं संस्कृत्य पञ्चगृहीतं गृहीत्वाऽऽज्यप्रोक्षणीरुद्यम्य इष्टकाश्चोद्यम्य कुर्यात् ॥ २१ ॥

[ चर्मस्थानामिष्टकानामग्निपुच्छस्य दक्षिणतो निधानम् ]

**त्रिरुक्तायामश्वपूर्वां चितिꣳ हृत्वा पुच्छाद्दक्षिणां निदधाति ॥२२॥**

होत्रा प्रथमायामृचि त्रिरुक्तायां सत्यामिष्टकासहितं चर्म अध्वर्य्वादय उद्यम्य अश्वपूर्वां चर्मस्थां चितिं प्राच्यां हृत्वा अग्निपुच्छस्य दक्षिणतो निदध्याच्चर्मस्थामेव ॥२२॥

[ अग्निक्षेत्रेऽश्वस्यारोहणं, परिणयनमुत्सर्गश्च ]

**तीर्थेनाश्वमारोहयत्युत्तरपक्षमपरेण ॥२३॥**

उत्तरपक्षस्य पश्चिमभागरूपेण आत्मन उत्तरपक्षेण सन्ध्यन्तरवर्त्तिनाऽऽत्मप्रदेशेन तीर्थेन = आरोहणमार्गेणाश्वमग्निक्षेत्रमारोहयेत् ॥२३॥

**पुरस्तात्पश्चाद्वैके ॥ २४ ॥**

एके अग्नेः पूर्वभागेन प्रत्यङ्मुखमश्वमग्नेरुपर्यारोहयन्ति । अथवा अग्नेः पुच्छभागेनैव प्राङ्मुखमश्वमारोहयन्ति ॥ २४ ॥

**अनुयजुःकृष्टं परिणयत्युत्तरतः प्रथमम् ॥ २५ ॥**

तीर्थेनारूढमश्वं यत्रात्मनि मन्त्रेण कर्षणं कृतं, तेन मार्गेण परिणयति = मन्त्रकृष्टमग्निप्रदेशमनुलक्षीकृत्याग्निं परितोऽश्वं नयेदित्यर्थः । तत्र प्रथममग्नेरुत्तरपार्श्वेऽश्वं प्राङ्मुखं परिणामयेत् । ततः प्रदक्षिणक्रमेण पूर्वपार्श्वे दक्षिणामुखं, ततो दक्षिणपार्श्वे प्रत्यङ्मुख मित्यादि ॥२५॥

**प्रत्यञ्चमागतं चितिमवघ्राप्य परिणीयोत्सृजति पशुवत ॥२६॥**

ततो दक्षिणपार्श्वे प्रत्यङ्मुखमागच्छन्तमेव पुच्छाद्दक्षिणतः स्थापितां चितिमवघ्राप्य पश्चिमपार्श्वे उदङ्मुखं परिणीयोत्तरपक्षमपरेणैव निष्काश्य प्रागुदीच्यां दिश्युत्सृजेत्पशुवत् । ( १६।३।१५ ) ॥ २६ ॥

**उत्तरवेदिप्रोक्षणाद्या संभारनिवपनात्कृत्वोत्तरवेदिमपरेण तिष्ठन् यजमानो "मयि गृह्णामीति ( १३।१ ) जपति ( ७।३।२।१७ ) ॥ २७ ॥**

"उत्तर वेदिं प्रोक्षतीन्द्रघोष इति प्रतिदिशम्" (५।४।११) इत्यारभ्य अग्नेः पुरीषमिति निवपति (५।४।१७) इत्येतदन्तं कृत्वा जपेत् ॥ २७ ॥

**सत्यसाम गायति ॥ २८ ॥**

यजमानः ॥ २८ ॥

इति सप्तदशेऽध्याये तृतीया कण्डिका ॥ ३ ॥

[ कुशस्तंबे कमलिनीपत्रं निधाय, तदुपरि रुक्मं निधाय, तत्र सुवर्णमयपुरुषस्य निधानम् ]

**पुष्करपर्णमुप दधाति स्तंबे पूर्ववत् ॥ १ ॥**

कुशस्तंबस्योपरि कमलिनीपत्रमुपदध्यादुखासंभरणवत् ( १६।२।३-२४ ) । अपां पृष्ठमिति, दिवो मात्रयेति विमार्ष्टि इति च पूर्ववदित्यस्यार्थः ॥ १ ॥

**तस्मिन् रुक्ममधःपिण्डं "ब्रह्म यज्ञानमिति ( १३।३ ) ॥ २ ॥**

तस्मिन्पुष्करपर्णे पूर्वं कण्ठे धृतं सौवर्णं रुक्मं ( १६।५।१ ) पिण्डस्याधस्तात् प्राङ्मुखोऽध्वर्युरुप दध्यात् ॥ २ ॥

**उत्तानं प्राञ्चꣳ० हिरण्यपुरुषं तस्मिन् "हिरण्यगर्भ" इति ( १३।४ ) ॥३॥**

तस्मिन् रुक्मे उत्तानं प्राङ्मुखं सुवर्णमयं पुरुषाकारमुपदध्यात् ॥ ३ ॥

**पुरुषे चित्रे साम गायति ॥ ४ ॥**

आलम्भसप्तमीयम् । पुरुषमालभ्य यजमानः कया नश्चित्र इति मन्त्रे ( २७।३९ ) साम गायेत् ॥ ४ ॥

**पूर्वेणापरीत्योऽतः ॥ ५ ॥**

अतः परमयं हिरण्मयः पुरुषः पूर्वेणापरीत्यः = अस्य पूर्वेण विहितकार्यार्थमपि न गन्तव्यं, किं त्वपरेणैव ( ७।४।१।२४ ) ॥ ५ ॥

[ हिरण्यपुरुषमुपस्थाय तदुपरि होमः ] ।

**उपतिष्ठते यजमानो "नमोऽस्त्विति ( १३।६-८ ) ॥ ६ ॥**

पुरुषम् ॥ ६ ॥

**उपविश्य पञ्चगृहीतं जुहोति पुरुषे "कृणुष्व पाज" इति (१३।९-१३)प्रत्यृचं प्रतिदिशं परिसर्पम् ॥ ७ ॥**

अध्वर्युः पञ्चगृहीतमाज्यं प्रतिदिशं गत्वा गत्वा विभागेन पुरुषस्योपरि जुहुयात् पञ्चभिर्मन्त्रैः ॥ ७ ॥

**प्रत्येत्य दक्षिणतः ॥ ८ ॥**

प्राङ्मुखस्य पुरुषस्य पश्चाद्भागे जुहुयात् । तत उत्तरतो दक्षिणामुखः, तत उत्थाय पुरस्तात्प्रत्यङ्मुखः पूर्वभागे, ततः प्रत्यागत्य पुरुषमपरेण दक्षिणस्यां दिशि गत्वोदङ्मुखो दक्षिणपार्श्वे जुहुयात् ॥ ८ ॥

**पश्चात्प्रथमान्त्ये ॥ ९ ॥**

प्रथमान्त्ये होमकर्मणी पश्चात्प्राङ्मुखः कुर्यात् । ततः पश्चादागत्य पूर्वाभिमुखः पश्चात्पार्श्वे जुहुयात् । अथवा सर्वहोमेषु पुरुषस्योपरि मध्ये एव होमो, न प्रदेशभेदेन ॥ ९ ॥

**पुरुषमवच्छाद्योरसाऽस्पृष्टं बाह्वोः प्रापणान्ते लिखति ॥ १० ॥**

उरसा अस्पृष्टं यथा स्यात्तथा पुरुषमवच्छाद्य दक्षिणोत्तरायती स्वौ बाहू प्रसारयेद्यजमानः । तत्रोभयत्राध्वर्युः स्रुचोर्निधानार्थं चिन्हद्वयं कुर्यात् ॥ १० ॥

**तत्र स्रुगुपधानं प्राच्योः ॥ ११ ॥**

तत्र चिन्हद्वये प्रागग्रे स्रुचौ स्थापयेत् ॥ ११ ॥

काष्मर्यमयीं दक्षिणतः पाणिमात्रपुष्करां बाहुमात्रीं पादमात्रीं वा सामर्थ्याद्
घृतपूर्णामग्नेष्ट्वेति ( १३।१३ ) ॥ १२ ॥

वाऽवधारणे । पादमात्रीमेव ( ८।७।२।७ ) ॥ १२ ॥

[ पुरुषोपरि स्वयमातृण्णेष्टकानिधानं, तदालभ्य सामगानं च ]

एवमौदुम्बरीमुत्तरतो दधिपूर्णामिन्द्रस्य त्वेति ( १३।१४-१५) ॥ १३ ॥

तिरश्च्यावेके ॥ १४ ॥

स्वयमातृण्णां पुरुषे शर्करां छिद्रां "ध्रुवाऽसीति (१३।१६-१९) ॥ १५ ॥

पुरुषस्य हिरण्मयस्योपरि शर्करां = पाषाणमयीं, छिद्रां = छिद्रवतीं स्वयमातृण्णाख्यामिष्टकामुप दध्यात् । छिद्राणि सन्त्यस्यामिति छिद्रा । छिद्राणि च तत्र स्वाभाविकान्येव भवेयुर्न कृत्रिमाणि । अत एव स्वयमातृण्णेत्यभिधानं तस्याः ॥ १५ ॥

भूरित्येतस्याꣳ साम गायति ॥ १६ ॥

प्रथमायां चितौ भूरित्येतस्यां व्याहृतौ स्वयमातृण्णामालभ्य यजमानः ॥ १६ ॥

अन्यत्रापि व्याहृतिषु ॥ १७ ॥

अन्यत्रापि तृतीयायां ( १७।३।१ ) पञ्चम्यां च चितौ व्याहृतिषु योनिभूतासु स्वयमातृण्णामालभ्य साम गायेत् । तत्र भुव इत्यस्यां व्याहृतौ तृतीयायां चितौ, स्वरित्यस्यां व्याहृतौ पञ्चम्यां (८।७।४।१) चितौ गायेत् ॥ १७ ॥

[ दूर्वेष्टकोपधानम् ] ।

मूलाग्रवतीं दूर्वां तस्यां पुरस्ताद् भूमिप्राप्तां "काण्डात्काण्डादिति
( १३।२०-२१ ) ॥१८॥

अध्वर्युरुदङ्मुख उपविश्य मूलाग्रयुक्तां दूर्वां = दूर्वेष्टकां स्वयमातृण्णाया उपरि उप दध्यात् । तस्या मूलानि स्वयमातृण्णाया उपरि भवन्ति । अग्राणि च स्वयमातृण्णायाः पुरस्ताद् भूमावर्द्धपद्यालोकं यथा व्याप्नुवन्ति तथोपधानं कार्यम् ॥ १८ ॥

पूर्वां पूर्वामुत्तराः ॥ १९ ॥

वक्ष्यमाणा द्वियजुराद्या अषाढान्ता इष्टकाः पूर्वपूर्वोपहितेष्टकापेक्षया ( ७।४।२।४० ) पूर्वाः पूर्वा उप दध्यात् ॥ १९ ॥

[ द्वियजुःसंज्ञकेष्टकोपधानम् ] ।

"यास्त" इति ( १३।२२ ) द्वितीये ॥ २० ॥

ततो द्वियजुषं पद्यां प्रागलक्षणां दूर्वायाः पुरस्तात् संलग्नां मध्याद् द्वितीये लोकेऽनूकस्योपर्युदङ्मुख उप दध्यात् ॥ २० ॥

ननु वचनं विना द्वितीये पद्यालोके कथं द्वियजुष उपधानमित्याकाङ्क्षायामाह—

उलूखलस्य रेतःसिग्वेलायामरत्निमात्रश्रुतेः ॥ २१ ॥

उलूखलमुसले प्रकृत्याह—"ते रेतःसेचयोर्वेलयोरुप दधाति" ( ७।५।१।१३ ) इति "अरत्निमात्रे ऽरत्निमात्राद्ध्यन्नमद्यते" (७।४।२।२४) इति च रेतःसिचोश्च द्वियजुषश्चानन्तर्यमुक्तम् । तेन द्वियजुषो द्वितीये पद्यालोके उपधानम् ॥ २१ ॥

[ रेतःसिगाख्ययोरिष्टकयोरुपधानम् ]

"विराट् स्वराडिति ( १३।२४ ) रेतःसिचौ प्रतिमन्त्रम् ॥ २२ ॥

द्वियजुषः पूर्वे रेतःसिचौ द्वे इष्टके पद्ये प्राग्लक्षणेऽनूकमभित उदङ्मुख उपदध्यात् ॥ २२ ॥

"प्रजापतिरिति ( १३·२४ ) विश्वज्योतिषम् ॥ २३ ॥

रेतःसिग्भ्यां पुरस्ताद्विश्वज्योतिषं पद्यामिष्टकां प्राग्लक्षणामुदङ्मुखोऽध्वर्युरनूके उपदध्यात् ॥ २३ ॥

[ ऋतव्याख्ययोरिष्टकयोरुपधानम् ]

ऋतव्ये; "मधुश्च माधवश्चेति ( १३।१५ ) ॥ २४ ॥

विश्वज्योतिषः पुरस्तात्सलग्ने द्वे पद्ये प्राग्लक्षणेऽनूकमभित उदङ्मुख उप दध्यात् ॥ २४ ॥

[ अषाढाख्येष्टकोपधानम् ]

"अषाढाऽसीत्यषाढाम् ( १३।२६) ॥ २५ ॥

ऋतव्ययोः पुरस्तात् प्राग्लक्षणामनूके उदङ्मुख उप दध्यात् ॥ २५ ॥

स्वयमातृण्णा-रेतःसिग्विश्वज्योतिर्ऋतव्याषाढासु लक्षणानि कुरुते रज्ज्वां वेलार्थानि ॥ २६ ॥

मध्यपूर्वान्तं यावदिष्टकानामुपरि प्राचीं रज्जुं प्रसार्य तस्यां रज्ज्वां स्वयमातृण्णाद्युपलक्षितस्थानेषु वेला = स्वयमातृण्णादिस्थानं, तज्ज्ञानार्थानि चिन्हानि कुर्यात् । द्वितीयादिचितिषु रेतःसिग्वेलादिषु इष्टकान्तरोपधानं विहितमस्ति, तज्ज्ञानार्थो ऽयमुपायः ॥ २६ ॥

कूर्मं दधिमधुघृतैरनक्ति "मधु वाता" इति ( १२।२७-२९ ) ॥ २७ ॥

दधिमधुघृतैर्मिश्रीकृतैः कूर्ममञ्ज्यात् ॥ २७ ॥

[ अषाढादक्षिणे भागे कूर्मोपधानम् , तस्याधस्तादुपरिष्टाच्चावकाप्रक्षेपः ]

अरत्निमात्रेऽषाढां दक्षिणेनावकासूपरिष्टाच्च पुरुषमभिमुखम् ॥ २८ ॥

अषाढाया दक्षिणस्यां दिशि अरत्निमात्रे = पद्यालोकद्वयमन्तरालं मुक्त्वा तृतीये पद्यालोके अवकासु पूर्वमेव तत्र स्थापितासु पुरुषसंमुखं कूर्ममुप दध्यात् ॥ २८ ॥

इति चतुर्थी कण्डिका ॥४॥

"अपां गम्भन्निति (१३।३०-३२) तिसृभिः ॥ १ ॥

कूर्ममुप दधाति ॥ १ ॥

घट्टयति मध्यमया ॥ २ ॥

हस्तस्थितं कूर्मं मध्यमया ऋचा त्रीन्त्समुद्रानित्येतया (१३।३१) कम्पयेत् । ततस्तृतीयायामृचि पठितायामन्ते उपदध्यात् । तत उपरिष्टात्पुनरवकाभिः कूर्मं प्रच्छादयेत् ॥ २ ॥

**उलूखलमुसले स्वयमातृण्णामुत्तरेणारत्निमात्रे औदुम्बरे प्रादेशमात्रे चतुरस्रमुलूखलं मध्यसङ्गृहीतमूर्ध्वं वृत्तं मुसलं दक्षिणमुलूखलाद्विष्णोः कर्माणीति (१३।३३) ॥ ३ ॥**

स्वयमातृण्णामुत्तरेण स्वयमातृण्णामध्यादरत्निमात्रे तृतीये लोके औदुम्बरे प्रादेशमात्रे उलूखलमुसले स्थापयेत् । तत्र उलूखलं चतुष्कोणं मध्यप्रदेशे सङ्कुचितं प्रयोजनाभावादखातमूर्ध्वमुत्तरे उप दध्यात् । मुसलं च वृत्तमुलूखलाद्दक्षिणमुप दध्यात् । पद्ये चैते भवतः । अत्रोलूखलोपधाने पूर्वमर्थात्परिमाणं खातं कृत्वा तत्रोलूखलाद्युपधानं कर्तव्यम्, यथा सिकतापूर्णाया उखाया उपरि उपहितानि पशुशिरांसि पार्श्वेष्टकाभिः समोच्छ्रयाणि भवन्ति ॥३॥

**उलूखल उखां कृत्वोपशयां पिष्ट्वा न्युप्य पुरस्ताद् "ध्रुवाऽसीत्युखाम् (१३।३४-३५) ॥ ४ ॥**

उलूखलस्योपरि तूष्णीमुखां स्थापयित्वा उपशयां मृदं पिष्ट्वा उखायाः पुरस्ताद्भूमौ प्रक्षिप्य उखामुप दध्यात् (७।५।११।२८) ॥ ४ ॥

**"अग्ने युद्क्ष्वाहीति (१३।३६-३७) प्रत्यृचᳪं स्रुवाहुती जुहोत्युखायाम् ॥५॥**

[ संवत्सरदीक्षापक्षे नियमेन होमः, पक्षान्तरेषु विकल्पेन ]

**उपस्थानं वाऽसंवत्सरभृतिनः ॥ ६ ॥**

असंवत्सरमुख्योऽग्निर्येन न धृतस्तस्योपस्थानं होमो वेति विकल्पः (७।५।१।३४) ॥६॥

**प्रतिशिरः सप्त सप्त हिरण्यशकलान् मुखे करोति "सम्यक् स्रवन्तीति ॥७॥**

पञ्चपशुपक्षे प्रतिशिरः सप्त सप्त सुवर्णखण्डानि प्रक्षिपेत्, तत्र मुखे प्रथममेकं शकलं प्रक्षिपेत् ॥ ७ ॥

**उत्तरान् द्वौ द्वौ ॥ ८ ॥**

उत्तरान् वक्ष्यमाणान् मन्त्रान् एकप्रतीकोपादानेऽपि द्वौ द्वौ मन्त्रौ प्रतीयात् ॥ ८ ॥

**नासिकयोर्ऋचे त्वेति (१३।३९) ॥ ९ ॥**

एकैकं हिरण्यखण्डं नासिकयोः क्रमेण ॥ ९ ॥

**अक्ष्योर्भासे त्वेति (१३।३९) ॥१०॥**

**श्रोत्रयोरभूदिदमिति (१३।३९) ॥११॥**

एकपशुशिरःपक्षे आह—

**सर्वानप्येकस्मिन्नेके ॥१२॥**

एकपशुपक्षे एकस्मिन्नेवाजशिरसि सर्वानपि पञ्चगुणितान् सप्त सप्त सुवर्णशकलान् प्रक्षिपेदित्येके वदन्ति (७।५।२।१०) । अन्ये तु सप्तैव, न पञ्चगुणितानिति ॥१२॥

**उखायां प्रत्यश्चि ॥१३॥**

तानि पञ्च शिरांसि उखामध्ये प्रत्यङ्मुखानि न्युब्जान्यधोमुखान्युप दध्यात् ॥१३॥

**"सहस्रदा" इति (१३।४०) पुरुषशिर उद्गृह्य मध्ये ॥१४॥**

उखाया मध्ये वक्ष्यमाणमन्त्रेण पुरुषशिर उत्थाप्योप दध्यात् ॥१४॥

अश्वाव्योरुत्तरतः पूर्वापरे ॥१५॥

उखायामेवोत्तरे भागेऽश्वाव्योः शिरसी निदध्यात्। तत्र ईशानकोणेऽश्वस्य वायव्य-कोणेऽवेर्निदध्यात् ॥१५॥

गोऽजयोश्च दक्षिणतः ॥१६॥

उखायामेव दक्षिणभागे आग्नेयकोणे गोः, नैर्ऋत्यकोणेऽजस्य शिरसी निदध्यात् ॥१६॥

"आदित्यं गर्भमिति प्रतिमन्त्रम् (१३।४१-४५) ॥१७॥

पुरुषादीनां शिरांसि प्रतिमन्त्रमेकैकं शिर उप दध्यात् ॥१७॥

'चित्रं देवानामित्यर्द्धर्चशः स्रुवाहुती मध्यमे (१३।४६) ॥१८॥

मध्यमे पुरुषशिरसि ॥१८॥

बहिर्वेद्युदङ् तिष्ठन्नुपतिष्ठत उत्सर्गैरिमं मा हिꣳसीरिति (१३।४६।५१) प्रतिमन्त्रम् ॥१९॥

पुरुषाश्वगोऽव्यजशिरांसि क्रमेण पञ्चभिर्मन्त्रैरध्वर्युरुप तिष्ठेत्। इमं मा हिꣳसी रित्यादयो मन्त्रा उत्सर्गा इत्युच्यन्ते ॥१९॥

उखां परिक्राममेके ॥२०॥

एके आचार्या उखां परिक्रम्य परिक्रम्य तत्तच्छिरःसमीपे गत्वोपतिष्ठेदित्यभिप्रयन्ति। प्रथममुखां परिक्रम्य पुरुषशिर उपस्थायाऽप्रदक्षिणं परिक्रम्याश्वशिर उपस्थाय पुनः प्रदक्षिणं परिक्रम्य गोःशिर उपस्थाय ततोऽप्रदक्षिणं परिक्रम्यावेः शिर उपस्थाय ततः प्रदक्षिणं परिक्रम्याजशिर उपतिष्ठेत् (७।५।२।३०) ॥२०॥

पक्षान्तरमाह—

उपधायोपधाय वा तस्य तस्य यथालिङ्गम् ॥२१॥

अथवा तं तं पशुमुपधायोपधानानन्तरमेव तत्तत्सन्निधौ स्थित्वा तस्य तस्य यथा लिङ्गमुपस्थानं कुर्यात् (७।५।२।२०) ॥२१॥

सर्वमन्त्रानप्येकस्मिन्नेके ॥२२॥

एकस्मिन्नपि पशौ पञ्च मन्त्रानपि एके प्रयुञ्जते ॥२२॥

उपधानमन्त्रान्विपरिहरन्नङ्गुलिं प्रथिष्ठे शिरसि ॥२३॥

पुरुषादिशिरसामुपधानस्थानान्यङ्गुल्या स्पृशन् पुरुषमस्तकाद्युपधानमन्त्रान्पठेदेकपशुपक्षे ॥२३॥

इति कात्यायनमहर्षिप्रणीते श्रौतसूत्रे पञ्चमी कण्डिका ॥ ५ ॥

---

एत्य च "त्वं यविष्ठेति ( १३।५२ ) चित्योपस्थानम् ॥ १ ॥

अग्निसमीपमागत्यार्द्धचितमग्निमध्वर्युरुप तिष्ठेत् ॥ १ ॥

**अपरेण स्वयमातृण्णामेत्यापस्याः पञ्च पञ्चानूकान्तेष्वपां त्वेमन्निति (१३।५३) प्रतिमन्त्रम् ॥ २ ॥**

ततस्तीर्थेनाग्निमारुह्य स्वयमातृण्णामपरेणागत्य चतुर्ष्वनूकान्तेषु पञ्च पञ्चापस्या इष्टका उप दध्यात् (७५।२४०) (१) ॥ २ ॥

**व्याघारणवत्प्राणभृतः कर्णसहिता दश दश पुरुषमुपाप्यैके रेतःसिग्वेलायां च सर्वतो यथायोग मयं पुर इति (१३।५४) प्रतिमन्त्रम् ॥३॥**

ततो व्याघारणवत् = (५।४।१४) दक्षिणेंऽसे उत्तरश्रोण्यां दक्षिणश्रोण्यामुत्तरेंऽसे मध्ये च कर्णसंलग्नाः = कोणादारभ्य स्वयमातृण्णापर्यन्तं दश दश प्राणभृत्संज्ञका इष्टका उप दध्यात् । एके आचार्याः पुरुषसमीपे प्रथमामुपधाय ततोऽक्ष्णयादेशे कोणपर्यन्त-मुपधानमिच्छन्ति (८।१।४।१)। अपरे तु कोणादारभ्य पुरुषपर्यन्तमिति दश प्राणभृते रेतःसिग्वेलायां सर्वासु दिक्षु यथायोगमुपदध्यादिति वदन्ति। एवं चतुर्ष्वक्ष्णयादेशेषु चत्वारिंशत्प्राणभृत उपहिताः । अवशिष्टा दश। तासां दशानां मध्ये चतुर्ष्वपि स्थानेष्वक्ष्णया-संलग्ने द्वे द्वे । एवमष्टौ । पश्चादनूकमभितश्च द्वे एवं दश ॥ ३ ॥

---

(१) तत्र प्रथमं प्रागनूकान्त उदङ्मुखोऽध्वर्युः पञ्चापस्या उत्तरामारभ्याभ्यात्ममुप दध्यात्। एतासां मध्ये मध्यमा पद्या अनूकस्योपरि उपधीयते। तामभितो द्वेऽर्धपद्ये। शेषास्तिस्रः पद्याः। ततो दक्षिणतोऽनूकान्ते पञ्चापस्याः पद्याः प्राङ्मुखउपदध्यात्। तत उत्तरतोऽनूकान्ते दक्षिणामुखः पञ्चापस्याः पद्या दक्षिणामारभ्याभ्या-त्ममुप दध्यात्। तत उत्तरतोऽनूकान्ते पश्चिमाभिमुखः पञ्चापस्याः पद्या अपरामारभ्य प्राक्संस्था उप दध्यात्। तत्र अपां त्वेमन्निति प्रथमाम्, अपां त्वोद्मन्निति द्वितीयाम्, अपां त्वा भस्मन्निति तृतीयाम्, अपां त्वा ज्योतिषीति चतुर्थीम्, अपां त्वाऽयन इति पञ्चमीम्। एतासां मध्यमा अनूकस्योपर्युप धीयते, तामभितो द्वे अर्द्धपद्ये, शेषा-स्तिस्रः पद्याः। ततो नित्ये करोति। ततो दक्षिणतोऽनूकान्ते पञ्चापस्याः पद्याः प्राङ्मुख उप दधाति पूर्वामार-भ्यात्मसम्मुखम्। तत्र अर्णवे त्वेति प्रथमाम्, समुद्रे त्वेति द्वितीयाम्, सरिरे त्वेति तृतीयाम्, अपां त्वा क्षय इति चतुर्थीम्, अपां त्वा सधिषीति पञ्चमीम्। ततो नित्ये। ततः पश्चादनूकान्ते दक्षिणामुखः पञ्चापस्याः पद्या दक्षिणामारभ्याभ्यात्ममुप दधाति। तत्र–अपां त्वा सदन इति प्रथमाम्, अपां त्वा सधस्थ इति द्वितीयाम्, अपां त्वा योनाविति तृतीयाम्, अपां त्वा पुरीष इति चतुर्थीम्, अपां त्वा पाथसि इति पञ्चमीम्। ततो नित्ये। तत उत्तरतोऽनूकान्ते पश्चिमाभिमुखः पञ्चापस्याः पद्या अपरामारभ्य प्राक्संस्था उपदधाति–गायत्रेणेति प्रथमाम्, त्रैष्टुभेनेति द्वितीयाम्, जागतेनेति तृतीयाम्, आनुष्टुभेनेति चतुर्थीम्, पाङ्क्तेनेति पञ्चमीम्। ततो नित्ये करोति।

(२) ततो व्याघारणहोमक्रमेण प्रथमं दक्षिणेंऽसे, तत उत्तरश्रोण्याम्, ततो दक्षिणश्रोण्याम्, तत उत्तरें-ऽसे, ततो मध्ये। अनेन क्रमेण चतुर्ष्वप्यक्ष्णयादेशेषु मध्ये च दश दश प्राणभृत उप दधाति। तत्र दक्षिणां-सोत्तरश्रोण्योरक्ष्णयादेशे प्राणभृतः प्राग्लक्षगा भवन्ति। दक्षिणश्रोण्युत्तरांसयोरक्ष्णयादेशे चोदग्लक्षणाः। दक्षिणांसप्राणभृतां या दशमी स्वयमातृण्णासंलग्ना साऽर्द्धपद्या, उत्तरांसप्राणभृतां च या दशमी स्वयमातृण्णा-संलग्ना सा तिरश्चालिखिताऽर्द्धपद्या, तथा दक्षिणोत्तरश्रोण्योर्ये दशम्यौ स्वयमातृण्णासंलग्ने, ते द्वे अपि पादोने = पादभागेनोने पद्ये इत्यर्थः। शेषाः षट्चत्वारिंशत् पद्या एव भवन्ति। तत्र प्रथमं दक्षिणांसकोणादारभ्य प्राङ्मुख उपविष्ट एवोपसृप्योपसृप्य स्वयमातृण्णापर्यन्ता दश प्राणभृत उपदधाति। तत्रायं पुरोभुव इति प्रथमाम्, तस्य प्राण इति द्वितीयाम्, वसन्त इति तृतीयाम्, गायत्रीति चतुर्थीम्, गायत्र्या इति पञ्चमीम्, गायत्रादिति षष्ठीम्, उपांशोरिति सप्तमीम्, त्रिवृत इति अष्टमीम्, वसिष्ठ इति नवमीम्, प्रजापतिगृहीतयेति दशमीं स्वयमातृण्णासहितामर्द्धपद्याम्। ततः सकृन्नित्ये दशसु। तत उत्तर श्रोणेरारभ्य स्वयमातृण्णापर्यन्तं दश प्राणभृतः पश्चिमाभिमुखोऽपसृप्योपसृप्योपदधाति।

**द्वितीयमयं पश्चादिति (१३।५६) ॥४॥**

द्वितीयं (१) दशकमयं पश्चादित्युप दध्यात् ॥४॥

( इति प्रथमायां यजुष्मतीनामुपधानम् । अथ लोकम्पृणानामुपधानमुच्यते )

**लोकम्पृणा दक्षिणांऽसादध्यामध्यात्प्रदक्षिणमानूकान्तात्पूर्वस्मात् ॥ ५ ॥**

आत्मनो दक्षिणकोणादारभ्य स्वयमातृण्णापर्यन्तं प्रदक्षिणं पूर्वानूकपर्यन्तं लोकम्पृणा इष्टका उप दध्यात् (२) ॥ ५ ॥

---

( १ ) अयं पश्चादिति प्रथमां, तस्य चक्षुरिति द्वितीयां, वर्षा इति तृतीयां, जगतीति चतुर्थीम्, जगत्या इति पञ्चमीम् ऋक्समादिति षष्ठीं, शुक्रादिति सप्तमीं, सप्तदशाद्वैरूपमित्यष्टमीं, जमदग्निरिति नवमीं, प्रजापतिगृहीतयेति दशमीं स्वयमातृण्णासंलग्नां पादोनां पद्याम् । ततः सर्वासु सक्रन्निस्त्ये । ततो दक्षिण-श्रोणेरारभ्य स्वयमातृण्णां यावद्दश प्राणभृतो दक्षिणामुखोऽपसृत्योपदधाति—अयं दक्षिणा इति प्रथमां, तस्य मन इति द्वितीयां, ग्रीष्म इति तृतीयां, त्रिष्टुबिति चतुर्थीम्, त्रिष्टुभ इति पञ्चमीम्, स्वारादिति षष्ठीम् , अन्तर्या-मादिति सप्तमीम्, पञ्चदशाद् बृहदित्यष्टमीं , भरद्वाज इति नवमीं, प्रजापतीति दशमीं स्वयमातृण्णासंलग्नां पादोनाम् । ततः सर्वासु सक्रन्निस्त्ये । तत उत्तरांसादारभ्य स्वयमातृण्णापर्यन्ता दश प्राणभृत उदङ्मुखोपविष्ट एवोपसृत्योप दधाति । तत्र इदमुत्तरात्स्वरिति प्रथमां , तस्य श्रोत्रमिति द्वितीयां , शरदिति तृतीयां , अनुष्टुबिति चतुर्थीम्, अनुष्टुभ इति पञ्चमीम्, ऐडादिति षष्ठीं, मन्थिन इति सप्तमीम्, एकविंशाद्वैराजमित्यष्टमीम्, विश्वामित्र इति नवमीं, प्रजापतीति दशमीं प्राणभृत्संलग्नां तिरश्चालिखितामर्द्धपद्याम् । तत्रेयमुपरि मतिरिति मन्त्रेण रेतःसिग्म्यामुत्तरां प्रथमामुदङ्मुख उपदधाति । तस्यै वाङ्मात्त्येति रेतःसिग्म्यां दक्षिणां द्वितीयाम् । ततः प्रदक्षिणं सर्वा उपदधाति । ततः प्राङुपविश्य हेमन्त इति तृतीयां, पङ्क्तिरिति चतुर्थीम् । ततो दक्षिणा-मुखः पङ्क्त्या इति पञ्चमीं, निधनवत इति षष्ठीं, आग्रयणादिति सप्तमीं, त्रिणवेत्यष्टमीम् । ततः प्राङ्मुखो विश्वकर्मेति नवमीं, प्रजापतीति दशमीम् । ततः परिक्रम्य सर्वासु सक्रन्निस्त्ये ।

( २ ) अथ लोकम्पृणान'मुपधानमुच्यते। तत्रात्ममध्ये षट्सप्ततिः पादमात्र्यः । अष्टाविंशतिरर्धपद्याः । नवशतानि चतुर्विंशत्यधिकानि पादभागाः । एतावदात्मन्युपधेयम् । तत्र पादमात्रीणामुपधानस्थानमुच्यते । सर्वेषु कोणेषु प्राणभृत उपहिताः सन्ति । सर्वेष्वनूकान्तेषु च मध्ये पञ्च पञ्चापस्याः । तेन तासां प्राणभृदपस्याना-मष्टौ अन्तरालानि सन्ति । तत्र सर्वेषु षट् षट् पद्या उपधेयाः । तासां षण्णां षण्णां पद्यानां मध्ये एकैकामर्धपद्या-मुपदधाति । पूर्वस्यां दिशि तु प्राणभृदपस्यान्तरालयोः सप्त सप्त पद्या एवोपदधाति । यतस्तत्र पूर्वस्यामनूक्या-मभितोऽर्द्धपद्ये स्तः । अंसस्ययोः प्राणभृतोः पश्चाद्वर्तमानयोः षट्पद्यालोकयोः पद्यास्थाने द्वे द्वे अर्द्धपद्ये उदगायते वादधाति । एवं च पूर्वपार्श्वे चतुर्दश पद्या उपहिताः, अपरपार्श्वे च द्वादश । दक्षिणोत्तरयोरेकादशैकादश । एवमष्टाचत्वारिंशत्पद्या उपहिताः । आत्मनः पूर्वार्द्धे अपस्यासंलग्ना द्वादश पद्याः प्रागनूकमभितः प्राग्लक्षणा उप दधाति । तथा षोडश पद्याः पश्चादपस्यासंलग्ना एव प्रागनूकमभितः प्राग्लक्षणा उपदधाति । एवं षट्सप्ततिः पद्याः पूर्णाः । अर्धपद्यानां मध्ये दशानामुपधानं कृतम् । शेषाणां स्थानमुच्यते । विश्वज्योतिषमभितो द्वे अर्द्ध-पद्ये उपधेये । पश्चाद्व विश्वज्योतिषवेलायां विश्वज्योतिषस्थानमभितो द्वे अर्धपद्ये उपधेये । तथा द्वियजुषमभितो द्वे अर्धपद्ये । एवं षडर्द्धपद्याः पूर्वाभिर्दशभिः सह षोडश जाताः । शिष्टानां द्वादशानां मध्ये पूर्वदक्षिणे पुरुषे-तिस्रोऽर्द्धपद्याः । तत्रैका द्वितीयां प्राणभृतमुत्तरेण प्रागायता । तामेव प्राणभृतमपरेण द्वे उदगायते । ततः पूर्वार्द्धे या द्वादश उपहिताः, तासां या दक्षिणा पद्या तां तत उद्धृत्य दक्षिणश्रोण्यां द्वितीयां प्राणभृतं पूर्वेणो-दग्लक्षणामुपधाय तस्याः पुरस्तात्तिस्रोऽर्द्धपद्या उदग्लक्षणा उदगायता उपधेयाः। तत उत्तरापरे पुरुषे द्विती-यस्याः प्राणभृतः पूर्वेण चतस्रोऽर्द्धपद्या उदगायता उपधेयाः । उत्तरपूर्वकोणे च द्वे । तत्र च द्वितीयां प्राणभृतमपरे-णैकामुदगायतां, द्वितीयां प्राणभृतं दक्षिणेन प्रागायतां द्वितीयाम् । एवं सर्वा अप्यर्द्धपद्या उपहिताः । शेषे आत्म-न्युक्तसङ्ख्याः पादभागाः । आत्मनि चत्वारि शतानि पद्यालोका भवन्ति । तेषां मध्ये एकोना अशीतिर्लोका यजुष्मतीभिः पूरिताः । षट्सप्ततिर्लोकम्पृणाभिः पद्याभिः । चतुर्दश लोका अष्टाविंशत्यर्धपद्याभिः । शेषा एकत्रिंशदधिकशतद्वयं पद्याः पादभागाः । अत्राहुः संप्रदायपद्धतिकाराः । द्वादशानामर्धपद्यानां पूर्वदक्षिणे

**प्रत्येत्य शेषम् ॥ ६ ॥**

ततो दक्षिणांससमीपं प्रत्यागत्य प्रागनूकदक्षिणांसाक्ष्णयान्तराले लोकम्पृणाशेषमुपदध्यात् ॥ ६ ॥

---

पुरुषेऽर्द्धपद्यानामुपधानम् । दक्षिणापरे पञ्चानामुपधानम्, उत्तरापरे चतसृणामुपधानम् । पूर्वोत्तरे द्वे अर्धपद्ये उपधीयेते । एकत्रिंशदधिकं शतद्वयं च पादभागानां प्रतिपुरुषमिति विभागः । एवमात्मा पूर्णः ।

अथ पक्षपुच्छानां चयनमुच्यते । तत्र दक्षिणे पक्षे षट्पञ्चाशत्पद्या उपधेयाः । तत्र "वर्षीयस्यो बाह्या" (का.शु. ११।२) इति न्यायेन पक्षस्य पार्श्ववर्तिषु लोकेषु द्वात्रिंशत्पद्यानामेकां पङ्क्तिमुपधाय ततस्तत्संलग्नामेव द्वितीयां चतुर्विंशतिसङ्ख्यानां पद्यानां पङ्क्तिमुपदध्यात् । तत्रात्मसन्धौ द्वितीयपङ्क्तौ उभयत्र द्वौ द्वौ पद्यालोकौ परिशिष्येते । तत्र पूर्वयोः पद्यालोकयोर्द्वे अर्धपद्ये उदगायते प्रथमपद्यापङ्क्तिसंलग्ने उपधेये । नन्वपरपार्श्वे द्वे, पूर्वस्मिन्नेका एवं कुतो न भवति । न, अपरपार्श्वापेक्षया पूर्वपार्श्वस्य बाह्यत्वात् । लोकेऽङ्गुरुहस्तादावन्तर्बहिर्भागव्यवहारवत् । एवं सर्वत्र ज्ञेयम् । अपरयोः पद्यालोकयोर्मध्ये द्वितीये पङ्क्तिसंलग्ने पद्यालोके एकामर्धपद्यामुदगायतां प्रथमपद्यापङ्क्तिसंलग्नामुपदध्यात् । एवं तिस्रोऽर्द्धपद्याः । शेषे पञ्चाशदधिके द्वे इति पादभागाः । तत्र पुच्छपार्श्वे सर्वतस्त्रिंशत्सङ्ख्यानां पद्यानां प्रथमां पङ्क्तिमुपधाय तदन्तरा विंशतिसङ्ख्यानां पद्यानां द्वितीयां पङ्क्तिमुपदध्यात् । द्वितीयायां पङ्क्तौ दक्षिणत उत्तरतश्चात्मसन्निहितास्त्रयस्त्रयः पद्यालोकाः परिशिष्यन्ते, तत्र दक्षिणेषु त्रिषु पद्यालोकेषु तिस्रोऽर्द्धपद्याः प्रागायताः प्रथमपद्यापङ्क्तिसंलग्ना उपधेयाः । द्वितीयपङ्क्तिसंलग्ने लोके चतुर्थी अर्धपद्योपधेया । उत्तरे आत्मसंलग्ने पद्यालोकत्रये तिस्रोऽर्द्धपद्याः प्रागायताः प्रथमपद्यापङ्क्तिसंलग्ना उपधेयाः । शेषे उक्तसङ्ख्याः पादभागा इति ।

तदेवं प्रथमायां शतद्वयमष्टात्रिंशदधिकं लोकम्पृणाः पद्याः २३८, एकचत्वारिंशदर्द्धपद्याः ४१, सार्द्धानि षोडशशतानि पादभागाः १६५० । एवमेकोनत्रिंशतिशतान्येकोनत्रिंशदधिकानि भवन्ति १९२९ । "गार्हपत्यलोकम्पृणाः प्रथमायाम्" (१७।७।२६) इत्युक्तत्वाद्गार्हपत्यस्यैकविंशतिर्लोकम्पृणाः प्रथमायां गण्यन्ते । तेन पञ्चाशदूनं सहस्रद्वयं संपद्यते १९५० । "द्विसाहस्री प्रथमा लोकम्पृणानां पञ्चाशदूना" (१७।७।२१) इत्युक्तत्वात् । इति लोकम्पृणानामुपधानस्थानमुक्तम् ।

अथोपधानप्रकार उच्यते—तत्र दक्षिणपूर्वकोणे प्राणभृतमपरेण ये द्वे अर्धपद्ये, ते प्रथममुपधाय ततः प्रदक्षिणमभ्यात्मं दशभिर्दशभिर्लोकम्पृणानां प्रत्येकं तूष्णीमुपधानं कृत्वा लोकं पृण छिद्रं पृणेति मन्त्रेणाभिमन्त्रयते । सादनं लोकम्पृणासु न भवति, "असादनं च" (१६।७।२०) "न सादयत्यसन्नो ह्येष" (९।१।२।१९) इति निषेधात् । ततः ता अस्येति दशानामपि सूददोहसाधिवदनम् । एवं पूर्वप्राणभृद्भ्योऽपरलोकादारभ्य दक्षिणप्राणभृदवधि दीर्घाभिः प्रत्यक्संस्थपङ्क्तिभिर्बाह्यत आरभ्याभ्यन्तरमुपधानं कुर्वंस्स्वयमातृण्णां यावद्गच्छेत् । यस्याक्ष्णयादेशस्य सन्निधावुपधानं प्रथमत आरब्धं, तत्सम्मुखं मर्यादाभूतं चाक्ष्णयादेशं नातिक्रामेत् । एवमेव श्रोण्योरन्तराले दक्षिणामुख उदक्संस्थपङ्क्तिभिरुपधानं कुर्वंस्स्वयमातृण्णां प्रति याति । एवमेवोत्तरपार्श्वे श्रोण्यंसान्तराले प्रत्यङ्मुखः प्राक्संस्थपङ्क्तिभिः । एवमेवोत्तरांसाक्ष्णयात आरभ्य प्रागनूकमर्यादं प्रदक्षिणं बाह्यतः स्वयमातृण्णां यावदुदङ्मुख उपदधाति । अक्ष्णयादेशं नातिक्रामेत् सम्मुखं मर्यादाभूतं च । एवं प्रदक्षिणं यथायोगं सव्यबाहुमन्तरं कुर्वन्नभ्यात्मं चयनं कुर्वन् सर्वतो बहिःप्रदेशात् स्वयमातृण्णां प्रत्यागच्छन् पूर्वानूकमर्यादमुपधाय ततः प्रत्यागत्य स्वयमातृण्णामपरेण गत्वा प्रागनूकं दक्षिणेनाक्ष्णयाऽवधिकं लोकम्पृणा बाह्यत आरभ्य दक्षिणसंस्थपङ्क्तिभिः स्वयमातृण्णां यावदुपधेयाः । तत आत्मसन्धेरारभ्योदङ्मुखो दक्षिणपक्षे दक्षिणसंस्थपङ्क्तिभिः स्वयमातृण्णां यावदुपधेयाः । तत आत्मसन्धेरारभ्योदङ्मुखो दक्षिणपक्षे दक्षिणसंस्थं प्रदक्षिणं स्वात्माभिमुखमुपदधाति । पुच्छे चात्मसन्धेरारभ्य प्रत्यक्संस्थं प्राङ्मुखः । उत्तरपक्षे चात्मसन्धेरारभ्योदक्संस्थं दक्षिणामुखो लोकम्पृणानामुपधानं करोति । सर्वासु चितिषु लोकम्पृणानामुपधानेऽयमेव प्रकारः । ततश्चात्वालात्पुरीषमानीयेन्द्रं विश्वा इति मन्त्रेण मध्ये राशिं करोति । ततस्तूष्णीं पूर्वमर्धानूकं छादयति । ततः प्रदक्षिणं सर्वमात्मानं प्रच्छादयति, ततो दक्षिणं पक्षं, ततः पुच्छं, तत उत्तरं पक्षम् । सर्वचितिषु पुरीषनिवाप एवमेव भवति । ततो वार्त्रहत्यावेत्याद्याभिः सप्तभिः सप्तभिर्ऋग्भिरध्वर्युः पुरीषवतीं चितिमुपतिष्ठते । केचिदष्टाभिर्ऋग्भिरुपतिष्ठन्ते । तत्र वयं न अवेत्यष्टमी । केचिद्दशभिरुपतिष्ठन्ते । तत्र चाध्यायसमाप्तिपर्यन्ताभिरुपस्थानम् ।

**पक्षपुच्छानि पराग्भिरप्ययेभ्योऽधि ॥ ७ ॥**

पक्षपुच्छात्मसन्धिरप्ययः । अप्ययात् = सन्धेरारभ्य पराग्भिरिष्टकाभिः पक्षपुच्छानि चिनुयात् । तत्र प्रथमं दक्षिणपक्षं, ततः पुच्छं, तत उत्तरं पक्षम् । दक्षिणपक्षे आत्मसन्धेरारभ्यो त्तराभिमुखो दक्षिणसंस्थं प्रदक्षिणं प्राङ्मुखः, पुच्छे आत्मसन्धेरारभ्य प्रत्यक्संस्थम्, उत्तरपक्षे चात्मसन्धेरारभ्योदक्संस्थं दक्षिणामुखो लोकम्पृणानां चयनं कुर्यात् । पक्षपुच्छेषु यजुष्मतीनामेवोपधानं, न लोकम्पृणानामित्युक्तम् ॥ ७ ॥

**एवꣳ सर्वत्र ॥ ८ ॥**

एवमुक्तप्रकारेण सर्वासु चितिषु पराग्भिरिष्टकाभिर्लोकम्पृणा उप दध्यात् ॥ ८ ॥

**मध्ये पुरीषं निवपति पूर्ववत् ॥ ९ ॥**

आत्मनो मध्ये स्वयमातृण्णाया उपरि पूर्ववत् = "इन्द्रं विश्वा" इति (१२।५.७) मन्त्रेण चात्वालात्पुरीषमादाय निवपेत् = मध्ये राशिं कुर्यात् ॥ ९ ॥

**पूर्वमर्द्धमनूकं छादयति ॥ १० ॥**

मध्ये न्युप्तेन पुरीषेण मध्यादारभ्य पूर्वमनूकस्य सममर्द्धभागं छादयेत् ॥ १० ॥

**प्रदक्षिणमात्मानम् ॥ ११ ॥**

ततस्तेनैव पुरीषेण प्रदक्षिणं सर्वमात्मानं छादयेत ॥ ११ ॥

**पक्षपुच्छानि च ॥ १२ ॥**

ततो दक्षिणं पक्षं, पुच्छम् , उत्तरपक्षं च प्रादक्षिण्येन छादयेत् ॥ १२ ॥

**एवꣳ सर्वत्र ॥ १३ ॥**

सर्वासु चितिषु एवं प्रकारेण पुरीषं निवपेत् ॥ १३ ॥

इति षष्ठी कण्डिका ॥ ६ ॥

**चितिं पुरीषवतीमुप तिष्ठते "वार्त्रहत्यायेति (१८।६८–७४) सप्तभिः ॥ १ ॥**

इदमुपस्थानं पुरीषनिवपनानन्तरं सर्वासु चितिषु कर्त्तव्यम् ॥ १ ॥

**अष्टाभिरेके दशभिर्वा ॥ २ ॥**

ऋग्भिरुप तिष्ठेदिति ऋक्सङ्ख्यायां विकल्पः ॥ २ ॥

चयनस्य पुरीषनिवपनस्य च कालमाह—

**उपसत्सु पौर्वाह्णिक्यापराह्णिक्यन्तरे चयन-पुरीषनिवपने ॥ ३ ॥**

उपसत्सु पौर्वाह्णिक्या आपराह्णिक्याश्चोपसदोरन्तराले प्रथमादिचितीनां चयनं, तासु पुरीषनिवपनं च कुर्यात् ( १०।२।५।१ ) ॥ ३ ॥

[ प्रत्यहं सायंकालेऽग्नेः परितोऽश्वभ्रामणम् ]

**त्रिरश्वं परिणीयोपास्तमयं पशुवदुत्सृज्य तावत्प्रति पर्येति ॥ ४ ॥**

उपसत्सु प्रत्यहमस्तमयात्पूर्वमग्नेः समन्तादश्वं त्रिः प्रदक्षिणं गमयित्वा तमश्वं पशुवत् = ऐशान्यां दिशि उत्सृज्य ( १६।३।१५ ) तावत् = त्रिरेवाध्वर्युरप्रदक्षिणं पर्येति ॥ ४ ॥

परिणयनमाग्निनिधानात् ॥ ५ ॥

पूर्वोक्तं परिणयनमुपसत्सु सायंकाले प्रत्यहमग्निनिधानात्प्राक् कर्तव्यं, नाग्निनिधानादूर्ध्वम् । "तस्यामग्निं निदधाति सुपर्णोऽसीति" (१८।४।३) इति वक्ष्यति । तावत्पर्यन्तमित्यर्थः ॥ ५ ॥

त्र्युपसत्के द्वे प्रथमायां, तिस्रो मध्यमायाम् ॥ ६ ॥

"एकाहस्त्र्युपसत्कः" (८।२।३६) इत्युक्तम् । यत्र अग्निष्टोमादौ एका सुत्या, तिस्र उपसदः, तस्मिन् क्रतौ प्रथमायामुपसदि प्रथमां द्वितीयां च चितिं सपुरीषां चिनुयात्, द्वितीयायामुपसदि तृतीयाद्यास्तिस्रश्चितीः सपुरीषाश्चिनुयात्, विकर्ण्याद्यग्न्युत्थानप्रैषान्तं च कुर्यात् ॥ ६ ॥

पञ्चगृहीताद्युत्तमा ॥ ७ ॥

उत्तमायां = तृतीयायामुपसदि पञ्चगृहीतादि कर्म भवति ॥ ७ ॥

उत्तरासु च ॥ ८ ॥

षड्-द्वादश-चतुर्मास-संवत्सराद्युपसद्विधासु अन्तिमोपसत् चकारात्पञ्चगृहीताद्येव भवति ॥ ८ ॥

सपुरीषा षट्स्वेकैका ॥ ९ ॥

यदा षडुपसदः क्रियन्ते तदा पञ्चसूपसत्सु अन्वहं क्रियमाणासु एकैका चितिः प्रतिदिनं चेतव्या । षष्ठ्यामुपसदि तु पञ्चगृहीतादि कुर्यात् ॥ ९ ॥

द्वादशोपसत्के व्यत्यासं चितिपुरीषे ॥ १० ॥

द्वादशोपसत्के द्वादशाहादौ क्रतौ प्रथमायामुपसदि प्रथमा चितिः, द्वितीयाया मुपसदि प्रथमायां पुरीषनिवपनम्, तृतीयायामुपसदि द्वितीया चितिः, चतुर्थ्यामुपसदि द्वितीयायां पुरीषनिवपनमित्येवं दशसूपसत्सु दशसु दिनेषु व्यत्यस्य व्यत्यस्य चितिं पुरीषनिवपनं च कुर्यात् ॥ १० ॥

विकर्ण्याद्येकादश्याम् ॥ ११ ॥

एकादश्यामुपसदि विकर्णीस्वयमातृण्णोपधानादारभ्याग्न्युत्थप्रैषान्तं कर्म कुर्यात् । द्वादश्यामुपसदि तु पञ्चगृहीतादि कुर्यात् ॥ ११ ॥

चतुर्मासोपसत्के द्वादशाहशः ॥ १२ ॥

क्षुल्लकतापश्चितो नाम सत्रविशेषः । तत्र चतुरो मासानुपसदः कार्या इति वक्ष्यति (२४।५।८) । तत्र द्वादशभिरहोभिः प्रथमा चितिरुपधेया, ततो द्वादशभिस्तत्र पुरीषनिवपनम् । ततो द्वादशभिर्द्वितीया चितिः, ततो द्वादशभिस्तत्र पुरीषनिवपनमित्येवं व्यत्यासं चितिपुरीषे कर्तव्ये । अत्रापि उत्तमायामुपसदि पञ्चगृहीतादि ॥ १२ ॥

षट्त्रिंशदहशः षट्त्रिंशदहशः संवत्सरे ॥ १३ ॥

त्रिसंवत्सरोपसत्को महातापश्चितो नाम सत्रम् (२४।५।६) तत्र षट्त्रिंशताऽहोभिः प्रथमा चितिः, तावद्भिरेव तस्यां पुरीषम्, ततस्तावद्भिरेव द्वितीया चितिः, ततस्तावद्भिरेव तस्यां पुरीषमित्येवमनुष्ठानक्रमः । पञ्चगृहीताद्युत्तमेति प्रागुक्तमेव ॥ १३ ॥

तापश्चिते मासशश्चितिपुरीषे चतसृणाम् ॥ १४ ॥

संवत्सरोपसत्कस्तापश्चितो नाम सत्रम् (२४।५।१) । तत्र मासं प्रथमा चितिः,

मासं तत्र पुरीषम्, मासं द्वितीया चितिः, मासं तत्र पुरीषनिवाप इत्येवमग्रसु मासेषु चिति पुरीषे कुर्यात् ( १ ) ॥ १४ ॥

**पञ्चम्यामसपत्ना विराजः प्रथमेऽहन् ॥ १५ ॥**

पञ्चम्यां चितौ नवममासस्य प्रथमेऽहनि असपत्ना विराजश्च इष्टका उपदध्यात ॥१५॥

**स्तोमभागा अन्वहम् ॥ १६ ॥**

ततो नवममासस्य द्वितीयदिनमारभ्य नवममाससमाप्तिं यावत् प्रत्यहमेकैकां स्तोमभागामुपदध्यात् ॥ १६ ॥

**मासं पुरीषं तूष्णीम् ॥ १७ ॥**

दशमे मासि=सकलेन मासेन पुरीषं निवपेत् ॥ १७ ॥

**नाकसत्प्रभृति मासम् ॥१८॥**

ततः सकलेनैकादशेन मासेन नाकसत्प्रभृति सकलं लोकम्पृणोपधानान्तं कर्म कर्तव्यम् ॥ १८ ॥

**पुरीषं च ॥ १९ ॥**

ततो द्वादशे मासे अष्टाविंशत्यहोभिः पुरीषं निवपेत् ॥ १९ ॥

**उत्तमयोरह्नोर्विकर्ण्यादि पूर्वे ॥२०॥**

द्वादशस्य मासस्य एकोनत्रिंश-त्रिंशयोरह्नोर्मध्ये पूर्वे =एकोनत्रिंशेऽहनि स्वयमातृण्णोपधानादि कुर्यात्। द्वितीये तु पञ्चगृहीतादि कुर्यात् ॥ २० ॥

[ प्रथमादि चतसृषु चितिषु प्रतिचिति पञ्चाशदूनसहस्रद्वयलोकम्पृणानामुपधानं, पञ्चम्यां सहस्रत्रयपरिमितानाम् ]

**द्विसाहस्री प्रथमा लोकम्पृणानां पञ्चाशदूना ॥२१॥**

पञ्चाशदूनसहस्रद्वयपरिमिता लोकम्पृणासंज्ञा इष्टका भवन्ति प्रथमायाम् ॥ २१ ॥

**उत्तराश्च ॥ २२ ॥**

उत्तरासु द्वितीयतृतीयचतुर्थीषु चितिषु च लोकम्पृणानां सङ्ख्या प्रथमचितिवद्बोध्या ॥ २२ ॥

**त्रिसाहस्रयुत्तमा ॥ २३ ॥**

पञ्चम्यां चितौ सहस्रत्रयपरिमिता लोकम्पृणाः कार्याः ॥ २३ ॥

---

( १ ) तापश्चिते सत्रे संवत्सरमुपसदो भवन्ति। तत्र प्रथमे मासे प्रथमा चितिश्चेतव्या। द्वितीये मासे प्रथमायां पुरीषम्। तृतीये मासे द्वितीया चितिः। चतुर्थे द्वितीयायां पुरीषनिवापः। पञ्चमे मासे तृतीया चितिः। षष्ठे मासे तृतीयायां पुरीषम्। सप्तमे मासे चतुर्थी चितिः। अष्टममासे चतुर्थ्यां पुरीषम्। नवमे मासे प्रथमेऽहनि पञ्चम्याश्चितेरसपत्ना विराजश्चोप धीयन्ते। ततः प्रत्यहमेकैका स्तोमभागा उपधीयते। एवं नवमो मासः। ततो दशमे मासि प्रत्यहमेकैकस्यां स्तोमभागायां पुरीषनिवापः क्रियते। तत एकादशेन मासेन नाकसत्प्रभृति सर्वा पञ्चमी समाप्यते। ततो द्वादशे मासि अष्टाविंशत्या दिनैः पञ्चम्यां पुरीषनिवापः क्रियते। एकोनत्रिंशत्तमे दिने विकर्ण्यां द्यस्युत्थप्रैषान्तं क्रियते। त्रिंशत्तमे दिने पञ्चगृहीतादि कर्म क्रियते। प्रातः सुत्यादि।

पञ्चम्यां चितौ लोकम्पृणाविभागमाह—

**वक्रालिखितानां दक्षिणोत्तरे मध्य इतरासाम् ॥२४॥**

पञ्चम्यां चितौ अग्निक्षेत्रं त्रिधा विभज्य दक्षिणोत्तरभागयोर्वक्रालिखितानामिष्टकानामुपधानं कुर्यात्। मध्यमे भागे च (१०।२।१।६) ऋज्वालिखितानाम्। वक्राण्यालिखितानि यासां ता वक्रालिखिताः। एवमृज्वालिखिताः ॥२४॥

सर्वासु चितिषु लोकम्पृणानां सङ्ख्यान्तरमाह—

**षट्त्रिंशच्छत्या वा तृतीयाऽष्टादशशत्या इतराः ॥२५॥**

अथवा तृतीया चितिः षट्त्रिंशच्छतसङ्ख्याभिर्लोकम्पृणाभिश्चेतव्या। इतराश्चतस्रश्चितयोऽष्टादशशतैरष्टादशशतैर्लोकम्पृणाभिश्चेतव्याः। षट्त्रिंशच्छतानां समाहारः षट्त्रिंशच्छती। अष्टादशशतानां समाहारोऽष्टादशशती। तयेत्यर्थः ॥२५॥

**गार्हपत्यलोकम्पृणाः प्रथमायाम् ॥२६॥**

गार्हपत्यचितेरेकविंशतिसङ्ख्या लोकम्पृणाः पूर्वमुक्ताः (१७।१।७) ताः प्रथमा चितिलोकम्पृणामध्ये गणनीयाः। ताभिः सह सङ्ख्यापूरणं कर्तव्यमित्यर्थः ॥ २६ ॥

**धिष्णीया उत्तमायाम् ॥ २७ ॥**

पञ्चम्यां चितौ धिष्ण्यसंबन्धिन्योऽष्टासप्ततिलोकम्पृणा गणयेत्। धिष्ण्यानामिमा धिष्णीयाः ॥२७॥

**अपरिमितेष्टको वा ॥ २८ ॥**

उक्तपरिमाणवर्जिताभिरधिकाभिर्न्यूनाभिर्वा (१०।२।६।५) यजुष्मतीभिर्लोकम्पृणाभिश्च इष्टकाभिरग्निश्चेतव्यः। पूर्वोक्ताभिरिष्टकाभिः सह सङ्ख्याविकल्पोऽयम् ॥ २८ ॥

**प्रथमोत्तमयोः पादमात्रीरतिरिक्ताः ॥ २९ ॥**

प्रथमपञ्चम्योश्चित्योरतिरिक्ता = महतीरिष्टकाः पादमात्रीः कुर्यात्, न ततोऽधिकप्रमाणाः। अधिकप्रमाणानां जङ्घामात्रीत्रिग्राहिण्यध्यर्द्धानामुपधानं तु द्वितीयतृतीयचतुर्थीषु चितिष्वेवेति भावः ॥ २९ ॥

**दशगणाधिका भित्त्वोत्करे कुर्यात् ॥ ३० ॥**

अष्टौ धिष्ण्याः, आहवनीयो, गार्हपत्यश्चेति दशगणः। दशगणस्योपधाने कृते या इष्टका अधिका भवेयुः, ता भित्त्वैवोत्करे प्रक्षिपेत्, नाभित्वा ॥ ३० ॥

इति सप्तदशेऽध्याये सप्तमी कण्डिका ॥ ७ ॥

---

**द्वितीयायामाश्विनीः प्रतिदिशꣳ रेतःसिग्वेलायाम् ॥ १ ॥**

द्वितीयायां चितौ सर्वासु दिक्षु रेतःसिग्वेलायामाश्विनीसंज्ञा इष्टका उपदध्यात् ॥१॥

तासां स्थानमाह—

**अनूकमुत्तरेण पूर्वां द्वितीये ॥ २ ॥**

पूर्वदिग्भवामाश्विनीमनूकमुत्तरेण द्वितीये पद्यालोके पद्यां प्राग्लक्षणामुदङ्मुख उपदध्यात् ॥ २ ॥

दक्षिणा पूर्वेण ॥ ३ ॥

दक्षिणदिग्भवामाश्विनीमर्द्धपद्यां प्रागायतां तिरश्चालिखितां प्राङ्मुख उदगनूकं पूर्वेण द्वितीये पद्यालोक उपदध्यात् ॥ ३ ॥

अपरा दक्षिणेन ॥ ४ ॥

दक्षिणदिग्भवामाश्विनीमर्द्धपद्यां तिरश्चालिखितां प्राङ्मुखः प्रागनूकं दक्षिणेन द्वितीये पद्यालोक उपदध्यात् ॥ ४ ॥

उत्तराऽपरेण ॥ ५ ॥

उत्तरदिग्भवामाश्विनीमुदगनूकमपरेण द्वितीये पद्यालोक उपदध्यात् ॥ ५ ॥

दक्षिणामुत्तरेण पञ्चमी ॥ ६ ॥

पञ्चमीमाश्विनीमिष्टकामर्द्धपद्यां प्राङ्मुखो दक्षिणदिग्भवामाश्विनीमुत्तरेण तस्मिन्नेव पद्यालोके उपदध्यात् ॥ ६ ॥

वैश्वदेवीः ॥ ७ ॥

इष्टकानां संज्ञेयम् ॥ ७ ॥

तासां देशमाह—

पूर्वां दक्षिणेन ॥ ८ ॥

पूर्वदिग्भवामाश्विनीं पद्यां प्रथमां वैश्वदेवीं दक्षिणेनोदङ्मुख उपदध्यात् ॥ ८ ॥

दक्षिणामपरेण ॥ ९ ॥

दक्षिणदिग्भवामाश्विनीमपरेण द्वितीयां तिरश्चालिखितां वैश्वदेवीं प्राङ्मुख उपदध्यात् ॥ ९ ॥

अपरामुत्तरेण ॥१०॥

अपरदिग्भवामाश्विनीमुत्तरेण तृतीयां वैश्वदेवीं पद्यां दक्षिणामुख उपदध्यात ॥१०॥

उत्तरां पूर्वेण ॥११॥

उत्तरदिग्भवामाश्विनीं पूर्वेण चतुर्थीं वैश्वदेवीमिष्टकां पद्यां प्रत्यङ्मुख उपदध्यात् । दक्षिणां वैश्वदेवीमुत्तरेण पञ्चमीं वैश्वदेवीमर्द्धपद्यां तिरश्चालिखितां प्रागायतां च प्राङ्मुख उपदध्यात् ॥११॥

एवं वैश्वदेवीभ्यः प्राणभृतः ॥१२॥

एवं पूर्वां वैश्वदेवीं दक्षिणेन प्रथमां प्राणभृतम्, दक्षिणां वैश्वदेवीमपरेण द्वितीयाम्, उत्तरां वैश्वदेवीमपरेण तृतीयां, उत्तरां वैश्वदेवीं पूर्वेण चतुर्थीमुपदध्यात् (१) ॥ १२ ॥

प्राणभृद्भ्योऽपस्याः ॥१३॥

एवं पूर्वां प्राणभृतं दक्षिणेन प्रथमामपस्याम, दक्षिणां प्राणभृतमपरेण द्वितीयामपस्यामर्द्धपद्यां तिरश्चालिखितां प्रागायताम्, अपरां प्राणभृतमपरेण तृतीयाम्, उत्तरां प्राणभृतं पूर्वेण चतुर्थीमुपदध्यात्। ततः प्रत्यागत्य द्वितीयामुत्तरतः पञ्चमीं तिरश्चालिखितामर्द्धपद्यां प्रागायतामुपदध्यात् ॥१३॥

---

(१) अत्र द्वितीया पञ्चमी च प्राणभृत् तिरश्चालिखिताऽर्द्धपद्या इति बोध्यम्। एवमग्रे वक्ष्यमाणासु अपस्यास्वपि द्वितीया पञ्चमी च तिरश्चालिखिताऽर्द्धपद्या ।

**पूर्ववत्पञ्चम्यः सर्वासाम् ॥१४॥**

पूर्वमुक्तानां सर्वासां वैश्वदेवीप्राणभृदपस्यानां पञ्चम्य इष्टका आश्विनीवदुत्तरेणोपधेयाः।

**आश्विनीर्ध्रुवक्षितिरिति (१४।१-५) प्रतिमन्त्रम् ॥ १५ ॥**

**"शुक्रश्च शुचिश्चेत्यृतव्ये (१४।६) पूर्वयोरुपरि ॥ १६ ॥**

प्रथमचितावुपहितयोर्ऋतव्ययोरुपरि द्वे ऋतव्ये प्रागलक्षणेऽनूकमभित उदङ्मुख उपदध्यात् ॥ १६ ॥

**उत्तराश्च ॥ १७ ॥**

उत्तराः = तृतीयादिचितीनामृतव्या अपि पूर्वयोरुपर्यैवोपदध्यात् ॥ १७ ॥

**वैश्वदेवीः "सजूर्ऋतुभिरिति (१४।७) प्रतिमन्त्रम् ॥१८॥**

**उत्तराश्च ॥ १९ ॥**

वक्ष्यमाणाः प्राणभृतोऽपस्याश्च प्रतिमन्त्रमुप दध्यात् ॥ १९ ॥"

**प्राणभृतः "प्राणं म" (१४।८) इति ॥२०॥**

**"अप: पिन्वेत्यपस्याः (१४।८) ॥२१॥**

पञ्च ॥ २१ ॥

**वयस्याः पञ्च पञ्चानूकान्तेषु "मूर्द्धा वय" (१४।९-१०) इति प्रतिमन्त्रम् (१) ॥ २२ ॥**

पुरस्ताद्विशेषमाह—

**चतस्रः पुरस्तात् ॥ २३ ॥**

पुरस्तादनूकान्ते चतस्रः, (२) इतरत्र पञ्च पञ्चेति ॥ २३ ॥

आसामुपधानक्रममाह—

**दक्षिणत उत्तरतः पश्चात् ॥ २४ ॥**

पुरस्तादुदङ्मुखः उत्तरामारभ्य, दक्षिणतः प्राङ्मुखः पूर्वामारभ्य, उत्तरतः प्राङ्मुखः परामारभ्य, पश्चाद्दक्षिणामुखो दक्षिणामारभ्य। इति द्वितीयायां यजुष्मतीनामुपधानम् ॥ २४ ॥

---

(१) मूर्द्धा वय इति प्रथमां, क्षत्रं वय इति द्वितीयां, विष्टम्भो वय इति तृतीयां, विश्वकर्म्मा वय इति चतुर्थीम्। सकृत्स्वित्ये। ततो दक्षिणतोऽनूकान्ते प्राङ्मुखः पूर्वामारभ्य प्रत्यक्संस्थाः पञ्चोपदधाति। वस्तो वय इति प्रथमाम्, वृष्णिर्वय इति द्वितीयाम्, पुरुषो वय इति तृतीयाम्, व्याघ्रो वय इति चतुर्थीम्, सिंहो वय इति पञ्चमीम्। सकृत्स्वित्ये। तत उत्तरस्यां दिश्यनूकान्ते पश्चिमाभिमुखोऽपरामारभ्य प्राक्संस्थाः पञ्चोपदधाति। पष्ठवाड् वय इति प्रथमाम्, उक्षा वय इति द्वितीयाम्, ऋषभो वय इति तृतीयाम्, अनड्वान् वय इति चतुर्थीम्, धेनुर्वय इति पञ्चमीम्। ततः सकृत्स्वित्ये। ततः परस्यामनूकान्ते दक्षिणामुखः पञ्च वयस्या दक्षिणामारभ्योदक्संस्था उपदधाति। त्र्यविर्वय इति प्रथमाम्, दित्यवाड् वय इति द्वितीयाम्, पञ्चाविर्वय इति तृतीयाम्, त्रिवत्सो वय इति चतुर्थीम्, तुर्यवाड् वय इति पञ्चमीम्। ततः सकृत्स्वित्ये। ततो दक्षिणश्रोणेरारभ्य प्रथमावल्लोकम्पृणा उपदधाति। प्रथमं दक्षिणश्रोण्यां द्वे उपदधाति। ततो दश दश प्रदक्षिणं पूर्वानूकान्तं यावदुपधाय प्रत्यागत्य प्रागनूकं दक्षिगेन दक्षिणश्रोण्यक्षगयादेशं यावच्छेषमुप दधाति। पूर्ववदेव पक्षपुच्छचयनम्। ततः पुरीषनिवपनमिन्द्रं विश्वा इति। वार्त्रहत्यायेति पुरीषवत्या उपस्थानञ्च।

(२) अत्र पुरस्ताच्चतुर्णां मध्येऽनूकमभितो द्वे जङ्घामात्र्यौ, प्रथमचतुर्थे द्वेऽध्यर्द्धे। अन्यासु दिक्षु सर्वा वयस्या अध्यर्द्धाः।

द्वितीयायां लोकम्पृणानामुपधानमाह—

**दक्षिणश्रोणेरधि लोकम्पृणाः पूर्ववत् ॥२५॥**

दक्षिणश्रोणेरारभ्य पूर्ववत् ( ६।५।६ ) प्रथमं द्वे, ततो दश दश लोकम्पृणाः प्रदक्षिणमुपदध्यात्। ततः पूर्ववत्पक्षपुच्छचयनम्। ततः पुरीषनिवापः सप्तचोपस्थानं च (१) ॥२५॥

( इति द्वितीयाचितिः )

इत्यष्टमी कण्डिका ॥ ८ ॥

---

(१) द्वितीयायां लोकम्पृणा उच्यन्ते—द्वितीयायां चितौ दशसु कोणेषु जङ्घामात्रीरुप दधाति। चतस्र आत्मनश्चतुर्षु कोणेषु, द्वे द्वे पक्षकोणयोः, द्वे पुच्छकोणयोः, एवं दश। तथा सर्वासु दिक्षु वयस्या उपहिताः सन्ति। ता वयस्या अभित उभयपार्श्वे एकैकामध्यर्द्धाम्, तत एकैकां त्रिग्राहिणीम्, तत एकैकां जङ्घामात्रीम्, द्वे अध्यर्द्धे। एता इष्टका यथोक्तक्रमेणोपदधाति। एताश्च दक्षिणत उत्तरतश्चोदगायता उदग्लक्षणाश्च। पुरस्तात्पश्चाच्च प्रागायताः प्राग्लक्षणाश्च। तत्र दक्षिणोत्तरपक्षसन्धावुपहितयोर्द्वयोर्द्वयोस्त्रिग्राहिण्योः षडङ्गुलानि पक्षयोर्मध्ये उप धीयन्ते। तथा पुच्छस्योभयोः पार्श्वयोः पञ्चानां पञ्चानां त्रिग्राहिणीनां मध्ये ये द्वे त्रिग्राहिण्यौ आत्मसंलग्ने उपधीयेते, तयोः षडङ्गुलान्यात्मन्युपधीयन्ते। तयोस्त्रिग्राहिण्योः पुरस्तादात्मनि द्वे जङ्घामात्र्यावुपधीयेते। सर्वत एकैकामध्यर्द्धां त्रिग्राहिणीमित्यस्यास्त्रिग्राहिण्याः स्थाने। तथा पुरस्तादप्यनयोस्त्रिग्राहिण्योः स्थाने जङ्घामात्र्यावेवोपधेये। अतः पुरस्तात्पश्चाच्चायमिष्टकानां क्रमः। अभितो वयस्याः सर्वत एकैकामध्यर्द्धां जङ्घामात्रीं जङ्घामात्रीमध्यर्द्धे चेति। तथा पक्षपुच्छपार्श्वेषु पञ्च पञ्च त्रिग्राहिणीरुप दधाति। पक्षपुच्छेष्वेव कोणोपहितजङ्घामात्र्यन्तरालेषु सप्त सप्ताध्यर्द्धा उदगायता उप दधाति। त्रिग्राहिण्योऽपि पक्षयोरुदगायताः। पुच्छे च प्रागायताः। ततोऽवशिष्टे आत्मनि चतुर्विंशतिः पद्याः। द्वादशार्द्धपद्याः। षट्पञ्चाशदधिकानि नवशतानि पादभागाः। चत्वारोऽर्द्धपादभागाः। एतावदात्मन्युपधेयम्। तत्र चतुर्विंशतिः पद्याः। तत्र चतुर्द्धा समं विभज्य प्रतिपुरुषं षट् षट् उपधेयाः। ताश्च "वर्षीयस्यो बाह्याः (का. शु. २।१।२) इत्यनेन न्यायेन पुरुषाणां बाह्यकोणेषूपधेयाः। द्वादशार्द्धपद्या अपि विभज्य प्रतिपुरुषं तिस्रस्तिस्र उपधेयाः। तत्र पद्यानामर्द्धपद्यानां च प्रतिपुरुषं स्थानमुच्यते। तत्र पूर्वयोः पुरुषयोः पद्यार्द्धपद्यानामुपधानं कुर्वता पक्षसन्धिर्नातिक्रमणीयः, आत्मनः पूर्वभागस्य पक्षान्तर्वर्तिभागापेक्षया-बाह्यस्योपधानस्थानस्य संभवात्। तत्र पूर्वं दक्षिणे पुरुषे कोणोपहितजङ्घामात्रीसंलग्नामेकां पद्यां प्राग्लक्षणामुपधाय तस्या उत्तरतोऽपरतश्च शेषाः पद्या उपधेयाः। उत्तरतस्तिस्रः प्राग्लक्षणाः। तासामुत्तरतो द्वे प्रागायतेऽर्द्धपद्ये त्रिग्राहिणीस्थानोपहितजङ्घामात्र्युत्तरान्तसमे, अपरतश्च उदग्लक्षणे द्वे पद्ये। (तयोः पश्चादेकार्धपद्योदगायतोपधेया जङ्घामात्र्यपरान्तसमा) दक्षिणापरपुरुषे च कोणोपहितजङ्घामात्रीकोणसंलग्नामेकां पद्यामुदग्लक्षणामुपधाय तस्याः पुरस्तादुत्तरतश्च शेषाः पद्या उप धीयन्ते। पुरस्तात्तिस्रः पद्या उदग्लक्षणाः। तासां पुरस्ताद्द्वे अर्द्धपद्ये उदग्लक्षणे त्रिग्राहिणीपूर्वान्तसमे। उत्तरतश्च द्वे पद्ये प्राग्लक्षणे। तयोरुत्तरत एकाऽर्द्धपद्या उदग्लक्षणा जङ्घामात्रीस्थानोपहितजङ्घामात्र्युत्तरान्तसमा, तथोत्तरापरकोणेऽपि कोणोपहितजङ्घामात्रीकोणसंलग्नामेकां पद्यां प्राग्लक्षणामुपधाय तस्याः पुरस्ताद्दक्षिणतश्च शेषाः पद्या विभज्योपधेयाः। पुरस्तात्तिस्र उदग्लक्षणाः पद्याः। तासां पुरस्ताद्द्वे अर्द्धपद्ये त्रिग्राहिणीपूर्वान्तसमे। दक्षिणतश्च द्वे पद्ये प्राग्लक्षणे। तयोर्दक्षिणत एकाऽर्द्धपद्या प्रागायता जङ्घामात्रीस्थानोपहितजङ्घामात्रीदक्षिणान्तसमा, तथा उत्तरपूर्वकोणे च कोणोपहितजङ्घामात्रीकोणसंलग्नामेकां पद्यामुदग्लक्षणामुपधाय तस्या दक्षिणतः पश्चाच्च शेषाः पद्या उपधेयाः, दक्षिणतस्तिस्रः प्राग्लक्षणाः पद्याः।

तासां दक्षिणतो द्वे अर्द्धपद्ये प्रागायते त्रिग्राहिणीस्थानोपहितजङ्घामात्र्या दक्षिणान्तसमे। पश्चाच्च द्वे पद्ये उदग्लक्षणे। तयोः पश्चादेकाऽर्द्धपद्योदग्लक्षणा जङ्घामात्र्यपरान्तसमा। एवं प्रतिपुरुषं षट् षट् पद्यास्तिस्रस्तिस्रोऽर्द्धपद्याश्चोपहिताः। यथा अपरयोः पुरुषयोः पद्यार्द्धपद्यानामुपधाने जङ्घामात्रीस्थानोपहिता जङ्घामात्री नातिक्रमणीया, साऽर्द्धपद्यालोकद्वयातिक्रमेण वर्षीयसीनां पद्यानामुपधानप्रसङ्गात्; तथा अर्द्धपादभागानामतिसूक्ष्मत्वादात्ममध्ये उपधानम्। तेषां च प्रतिपुरुषमेकैकस्योपधानं समविभागेन न सम्भवति, लोकभेदापत्तेः। अतः पूर्वभागापेक्षया अपरभागस्याभ्यन्तरत्वादपरयोः पुरुषयोर्विभज्य द्वौ प्रागायतावर्द्धपादभागावुपधेयौ, द्वावुदगायतौ, शेषे

**तृतीयायाᳬ स्वयमातृण्णामिन्द्राग्नी इति ( १४।११ ) मध्ये ॥१॥**

प्राङ्मुखः ॥ १ ॥

**अनूकेषु पञ्च दिश्या वैश्वदेवीचद्राज्ञ्यसीति ( १४।१३) प्रतिमन्त्रम् ॥२॥**

रेतःसिग्वेलायां ( १४।८।२ ) ( १४।८।६ ) सर्वासु दिक्षु अनूकस्योपरि पञ्च दिश्या उपदध्यात् ( १ )।

**"विश्वकर्मेति ( १४।१४ ) विश्वज्योतिषमुपरि पूर्वस्याः ॥ ३ ॥**

प्रथमायां चितावुपहिताया विश्वज्योतिष उपरि यजमानकृतां द्वितीयां विश्वज्योतिषं पद्यां प्राग्लक्षणामुदङ्मुख उपदध्यात् ॥ ३ ॥

**उत्तमायां च ॥ ४ ॥**

पञ्चम्यां चितौ च पूर्वस्या विश्वज्योतिष उपरि तृतीयां विश्वज्योतिषमुपदध्यात् ॥४॥

**ऋतव्ये "नभश्च नभस्यश्चेति (१४।१५ ) ॥ ५ ॥**

पूर्वयोर्ऋतव्ययोः पुरीषाच्छन्नयोरुपरि अवका निधाय प्राग्लक्षणेऽर्द्धोत्सेधे पद्येऽनूकमभित उदङ्मुखः ॥ ५ ॥

---

आत्मभागे षट्पञ्चाशदधिकानि नवशतानि पादभागा उपधेयाः। तत्रापरयोः पुरुषयोर्द्वात्रिंशद् द्वात्रिंशत्सार्द्धाः पद्यालोका महतीभिर्व्याप्ताः। पूर्वयोः पुरुषयोः पादोनास्त्रयस्त्रिंशत्। प्रतिपुरुषं च षट् षट् पादमात्र्यस्तिस्रोऽर्द्धपद्याः। एकोनचत्वारिंशे च शते पादभागानामुपधेये। अपरयोर्द्वौ द्वावर्द्धपादभागावधिकौ। तदेवं द्वितीयायामष्टापद्याः। एकोनचत्वारिंशे च शते पादभागानामुपधेये। अपरयोर्द्वौ द्वावर्द्धपादभागावधिकौ। तदेवं द्वितीयायामष्टाचत्वारिंशत्पद्यालोका यजुष्मतीभिर्व्याप्ताः। त्रिंशत्पद्यार्द्धपद्याभिः। शतद्वयमेकोनचत्वारिंशदधिकं पादभागैः। षट्त्रिंशदध्यर्द्धाभिः। पञ्चचत्वारिंशत्त्रिग्राहिणीजङ्घामात्रीभिः। सार्द्ध एकः पुच्छत्रिग्राहिणीभ्याम्। अर्द्धो लोकश्चतुर्भिरर्द्धपादभागैरिति। एवमात्मनि चत्वारि शतानि पद्यालोकाः पूरिताः।

अथ पक्षपुच्छचयनमुच्यते। तत्र द्वानवत्यधिकं शतद्वयं पादभागाः। एकाऽर्द्धपद्या। एतावद् द्वयोः पक्षयोरुपधेयम्। तत्र पूर्वापरपक्षयोः पञ्च पञ्च त्रिग्राहिण्य उपहिताः, कोणयोर्जङ्घामात्र्यौ। तयोरन्तराले दक्षिणपार्श्वे सप्ताध्यर्द्धाः। मध्ये सर्वत्र पादभागाः। दक्षिणे पक्षे पूर्वदक्षिणकोणोपहितजङ्घामात्र्या वायव्यकोणसंलग्नोदगायतैकाऽर्द्धपद्योपधेया। उत्तरपक्षे चेशानकोणोपहितजङ्घामात्र्या नैर्ऋतकोणसंलग्नोदगायताऽर्द्धपद्योपधेया। पक्षे विंशत्यधिकं शतं पद्यालोका भवन्ति। तेषां त्रिंशल्लोकास्त्रिग्राहिणीभिर्व्याप्ताः। पञ्चदश लोका जङ्घामात्र्यध्यर्द्धाभिः। त्रिसप्ततिलोकाः पादभागैः। सार्द्ध एको लोक आत्मत्रिग्राहिणीभ्याम्। अर्द्धलोकोऽर्द्धपद्यया। एवं विंशत्यधिकं शतं लोकाः पूरिताः। अत्र प्रतिपक्षं षट्चत्वारिंशत्सार्द्धाः पद्यालोका महतीभिर्व्याप्ताः। पादभागैरर्द्धपद्यया चावशिष्टव्याप्तिरिति सम्प्रदायः। पञ्चषष्ट्यधिकं शतद्वयं पादभागाः। द्वावर्द्धपादभागौ। एतावत्पुच्छ उपधेयम्। तत्र दक्षिणोत्तरपार्श्वयोः पञ्च पञ्च त्रिग्राहिण्यः। कोणयोर्जङ्घामात्र्यौ। तयोरन्तराले पश्चिमपार्श्वे सप्ताध्यर्द्धाः। मध्ये पादभागाः अर्द्धपादभागौ चानूकमुत्तरतो मध्ये आत्मसंलग्नौ अपरानूक्यत्रयस्योत्तरार्द्धसंलग्नावुपधेयौ। दक्षिणभागापेक्षयोत्तरभागस्याभ्यन्तरत्वात्। उत्तरतश्चात्वालादीनां यज्ञाङ्गानां विद्यमानत्वात्। पुच्छे च दशाधिकं शतं पद्यालोका भवन्ति। तेषां चाष्टात्रिंशतिः सार्द्धदशभिस्त्रिग्राहिणीभिः पूरिताः। पञ्चदश लोका जङ्घामात्र्यध्यर्द्धाभिः, सपादाः षट् षष्टिर्लोकाः पादभागैः पादभागार्द्धपादभागाभ्यामिति। अत्र च सार्द्धास्त्रिचत्वारिंशत्पद्यालोका महतीभिर्व्याप्ताः। पादभागार्द्धपादभागैरवशिष्टव्याप्तिरिति संप्रदायः। तदेवं द्वितीयायां द्वाविंशतिर्लोकम्पृणा जङ्घामात्र्यः २२। चतुस्त्रिंशत्त्रिग्राहिण्यः ३४ पञ्चचत्वारिंशदध्यर्द्धाः ४५। चतुर्विंशतिः पद्याः २४। चतुर्दशार्द्धपद्याः १४। षडर्द्धपादभागाः ६। अष्टादशशतानि पञ्चाधिकानि पादभागाः १८०५। एवं पञ्चाशदूनं सहस्रद्वयं सम्पूर्णम् १९५०।

( १ ) तत्र दक्षिणदिशि अनूकस्योपरि एकस्मिन् पद्यालोके द्वे अर्द्धपद्ये प्रागायते दक्षिणोत्तरे तिरश्चालिखिते द्वितीया पञ्चमी चेति द्वे दिश्ये। अन्यासु चितिषु तिस्रोऽपि दिश्याः पद्या एव। तत्र पूर्वानूके उदङ्मुखः, दक्षिणस्यां दिशि प्राङ्मुखः, अपरस्यां दिशि प्राङ्मुखः, अपरस्यां दिशि दक्षिणामुखः, उत्तरस्यां दिशि प्रत्यङ्मुखः, दक्षिणामुत्तरेण पञ्चमीमर्द्धपद्यामुदङ्मुख उपदध्यात।

**अवकाः कूर्मवत् ॥ ६ ॥**

ततोऽवकाभिर्भ्रतव्ये प्रच्छादयेत् ॥ ६ ॥

**"इषश्चोर्जश्चेत्यपरे ( १४।१६ ) ॥ ७ ॥**

अपरे तथाविधे भ्रतव्ये। तेन तृतीयां चितौ चतस्र भ्रतव्याः। इतरासु द्वे द्वे इति ॥ ७ ॥

**पूर्वार्द्धे प्राणभृतो दशायुर्म इति ( १४।१७ ) प्रतिमन्त्रम् ॥ ८ ॥**

आत्मनः पूर्वभागे दशेष्टकाः पद्याः प्राग्लक्षणा अनूकमभितः पञ्च पञ्च दक्षिणसंस्था उदङ्मुख उपदध्यात। तत्रोदङ्मुखः प्रथमाम्, ततो दक्षिणत उपसृत्य द्वितीयामिति (१) ॥ ८ ॥

**छन्दस्या द्वादश द्वादशाप्ययेषु "मा च्छन्द" इति ( १४।१८ ) ॥ ९ ॥**

अप्ययाः पक्षपुच्छात्मसन्धयः। तेषु त्रिष्वप्ययेषु अर्थात् दक्षिणपक्षसन्धौ पुच्छसन्धौ उत्तरपक्षसन्धौ चानूकमभितो द्वादश द्वादश छन्दस्या उपदध्यात् ( २ ) ॥ ९ ॥

**वालखिल्यलोकं पश्चाच्छिष्ट्वा ॥१०॥**

पश्चात्पुच्छसन्धौ वालखिल्यानां स्थानं परिशिष्य तत्स्थानात् पूर्वलोके छन्दस्या उपदध्यात् ॥१०॥

**वालखिल्याः सप्त पुरस्तात् ॥११॥**

प्रागलक्षणा उदङ्मुखः ॥११॥

**प्राणभृद्भ्यो वाऽपराः ॥१२॥**

अथवा वालखिल्याः प्राणभृद्भ्यः पश्चिमत उपदध्यात् ॥१२॥

---

(१) तत्रोदङ्मुख आयुर्मे पाहीति प्रथममुत्त"मुपदधाति। ततोऽभ्यात्मं दक्षिणसस्थं दक्षिणतोऽपसृत्योपसृत्योपदधाति। प्राणं म इति द्विती"ं, अपानमिति तृतीयां, व्यानं म इति चतुर्थीम्, चक्षुर्मे पाहीति पञ्चमीं, श्रोत्रं मे पाहीति षष्ठीं, वाचं मे पिन्वेति सप्तमीम्, मनो मे जिन्वेत्यष्टमीम्, आत्मानमिति नवमीं, ज्योतिरिति दशमीम्। ततः सकृत्स्त्रित्ये।

(२) तत्र दक्षिणतः पर्वमारभ्य पूर्वाभिमुख उपदध्यात्। अत्र प्रथमा पद्या, द्वितीयाऽर्द्धपद्या, ततोऽष्टौ पद्याः, द्वादशी पद्येति। एताः सर्वा उदग्लक्षणाः। तत उत्तरस्यां दिशि प्रत्यङ्मुखोऽपरामारभ्य प्राक्संस्थाश्छन्दस्या उपदध्यात्। अत्रापि द्वितीयैकादशावर्द्धपद्ये, शिष्टाः पद्याः। एताः सर्वा उदग्लक्षणाः। मा च्छन्द इति प्रथमां पद्यां, प्रमा च्छन्द इति द्वितीयामर्द्धपद्याम्। अतोऽष्टौ पद्याः। प्रतिमेति तृतीयां, अस्रीवय इति चतुर्थीम्, पङ्क्तिरिति पञ्चमीं, उष्णिगिति षष्ठीम, बृहतीति सप्तमीम्, अनुष्टुबित्यष्टमीम्, विराडिति नवमीं, गायत्रीति दशमीं, त्रिष्टुबित्यर्द्धपद्यामेकादशीं, जगतीति द्वादशीं पद्याम्। सकृत्स्त्रित्ये। एताः सर्वा उदग्लक्षणाः। पृथिवी छन्द इति प्रथमां, अन्तरिक्षमिति द्वितीयामर्द्धपद्याम, द्यौरिति तृतीयां, समा इति चतुर्थीम्, नक्षत्राणीति पञ्चमीं, वागिति षष्ठीं, मन इति सप्तमीम्, कृषिरित्यष्टमीं, हिरण्यमिति नवमीं, गौरिति दशमीं, अजा इति एकादशीमर्द्धपद्यां, अश्व इति द्वादशीं पद्याम्। सकृत्स्त्रित्ये। एताः सर्वाः प्राग्लक्षणाः। अग्निर्देवतेति प्रथमां पद्यां, वात इति द्वितीयामर्द्धपद्यां, सूर्य इति तृतीयां, चन्द्रमा इति चतुर्थीम्, वसव इति पञ्चमीम्। उदकोपस्पर्शः। रुद्रा इति षष्ठीं, आदित्या इति सप्तमीं, मरुत इत्यष्टमीं, विश्वे इति नवमीं, बृहस्पतिरिति दशमीम, इन्द्र इति एकादशीमर्द्धपद्यां, वरुण इति द्वादशीं पद्याम्। ततः सकृत्स्त्रित्ये। एताः सर्वा उदग्लक्षणाः। मूर्द्धाऽसि राडिति प्रथमाम्, ध्रुवाऽसीति द्वितीयां, धर्त्र्यसीति तृतीयामर्द्धपद्यां, आयुषे त्वेति चतुर्थीमनूक्यां पद्यां, वर्चसेति पञ्चमीमर्द्धपद्यां, कृष्यै त्वेति षष्ठीं, क्षेमाय त्वेति सप्तमीम्। सकृत्स्त्रित्ये। यन्त्री राडिति प्रथमां, यन्त्र्यसीति द्वितीयां, ध्रुवाऽसीति तृतीयां, इषे त्वेति चतुर्थीमनूकस्योपर्युपहितां, ऊर्जे त्वेति पञ्चमीम्, रय्यै त्वेति षष्ठीम्, पोषाय त्वेति सप्तमीम्। सकृत्स्त्रित्ये।

## द्वादशभ्योऽपरास्तु ॥१३॥

सप्त वालखिल्यास्तु द्वादशभ्यो वालखिल्याभ्योऽपरा एवोपधेया, न पूर्वाः ॥१३॥

## "मूर्द्धाऽसि राडिति (१४।२१) प्रतिमन्त्रम् ॥१४॥

वालखिल्या उपदध्यात् ॥१४॥

## यजुष्मतीश्च जानन् ॥१५॥

वालखिल्योपधानानन्तरं शाखान्तरविहितानां चित्रिणी-वज्रिण्यादीनां यजुष्मतीना मुपधानं कुर्यान्न वा ॥१५॥

## उत्तराश्रोणेरधि लोकम्पृणाः पूर्ववत् ॥१६॥

तत उत्तरश्रोणेरारभ्य प्रदक्षिणं पूर्वानुक्रान्तं यावत् प्रथमचित्युक्तप्रकारेण लोकम्पृणा (६।५।६) उपदध्यात्। ततः प्रत्यागत्य प्रागनूकस्य दक्षिणत आरभ्योत्तरश्रोण्य वण्यादेशपर्यन्तं लोम्पृणाशेषमुपदध्यात्। ततो दक्षिणपक्षपुच्छोत्तरपक्षेषु (१)। ततः पुरीष निवापः, सप्तर्चोपस्थानं च ॥१६॥

इति नवमी कण्डिका ॥ ९ ॥

इति तृतीया चितिः।

अथ चतुर्थी चितिः ॥



---

(१) अथ तृतीयायां चितौ लोकम्पृणानां विवेको लिख्यते। तृतीयायां प्रथमचितिवल्लोकम्पृणानां चयनं भवति। तत्र विशेष उच्यते। अर्द्धपद्याः षोडशैव, नाष्टाविंशतिः। पद्याः प्रथमावत् षट्सप्ततिरेव। चतुर्ष्वात्म कोणेषु एकैका बृहती। सा च दक्षिणा। उत्तरश्रोण्यां च प्राग्लक्षणा। उत्तरेंऽसे दक्षिणश्रोण्यां चोदग्लक्षणा। अथ षट्सप्ततिसङ्ख्यानां पद्यानां स्थानमुच्यते। प्रथमायां येषु येषु लोकेषु प्राणभृत उपहितास्तेषु तेषु स्थानेषु तृतीयायां लोकम्पृणाः पद्या उपधीयन्ते। तत्र चतुर्ष्वक्ष्णयादेशेषु सप्तसप्त पद्या उपधेयाः। कुतः। दशानां स्थानानां मध्ये द्वयोर्द्वयोः स्थानयोः सर्वत्र बृहतीभी रुद्धत्वात्। दशानां चतुर्णामपि स्थानानामेकैकस्य पादभागस्य स्वयमातृण्णया रुद्धत्वेन पद्यानामुपधानासंभवात्। अतः सप्त सप्तैव स्थानान्यक्ष्णयादेशेष्वेव शिष्यन्ते। तथा रेतःसिग्वेलायामष्टौ पादमात्र्य उपधेयाः। कुतः? पश्चादनूकमभितो द्वयोः स्थानयोरर्द्धपद्याद्वयसहितया परदिश्यया रुद्धत्वात्। एवं षट्त्रिंशदुपहिताः। तथा सर्वत्र बृहतीसंलग्ने द्वितीये लोके बृहत्या अन्तर्वर्तिकोणमभितो द्वे द्वे पद्ये बृहतीसंस्पृष्टे एवोपधेये। एवं ता अष्टौ भवन्ति। पूर्वाभिः सह चतुश्चत्वारिंशत्। तथा पश्चाच्छन्दस्या अभित एकैका पद्या अर्द्धपद्यासहिता। तत्र पूर्वं च्छन्दस्या अभितः संस्पृष्टे प्रागायते अर्द्धपद्ये उपधाय तद्बहिः पद्ये उपधेये। तथा दक्षिणस्यां दिशि छन्दस्यानां पुरस्तात् पश्चाच्च द्वे द्वे पद्ये सार्द्धे उपधेये। एवमेवोत्तरस्यां च। अत्राप्यर्द्धपद्ये छन्दस्यासंलग्ने उदगायते। अर्द्धपद्यातो बहिः पद्याः। एवं छन्दस्यानां परितो दश पद्या उपहिताः। पूर्वाभिः सह चतुःपञ्चाशत्। प्राणभृतां दक्षिणत उत्तरतश्च तिस्रस्तिस्रः पद्या उपधीयन्ते। एवं ताः षट्। वालखिल्यानां दक्षिणत उत्तरतश्च चतस्रश्चतस्रः पद्या उपधीयन्ते। अपरस्यां दिशि वालखिल्यानामभितः सार्द्धाश्चतस्रश्चतस्र इति विशेषः। तत्रार्द्धपद्ये वालखिल्यासंलग्ने। पद्याबाह्यतः। एवं ताः षोडश, पूर्वाभिः षड्भिः सह द्वाविंशतिः। चतुःपञ्चाशच्च पूर्वाः। ताभिः सह षट्सप्ततिः। अथ षोडशनामर्द्धपद्यानां विवेक उच्यते। पश्चाच्छन्दस्या अभितो द्वे। दक्षिणोत्तरछन्दस्या अभितश्च द्वे द्वे। पश्चाद्वालखिल्या अभितश्च द्वे। एवं ता अष्टौ। चतसृषु दिक्षु दिश्या अभितो द्वे द्वे। एवं ता अष्टौ, पूर्वाभिः सह षोडश। दक्षिणस्यां दिशि प्रागायतयोरर्द्धपद्ययोर्दिश्ययोः पुरस्तात्पश्चाच्चार्द्धपद्ये उदगायते एव। उत्तरतश्चोदगायते। पूर्वापरयोः प्रागायते। तृतीयायां विश्वज्योतिषमभितः पश्चात्तद्वेलायां चार्द्धपद्ये न भवत एव।

**चतुर्थ्यामनूकान्तेषु दक्षिणोत्तरे द्वे द्वे ॥ १ ॥**

चतुर्थ्यां चितौ प्रतिदिशं चतुर्ष्वनूकान्तेषु दक्षिणोत्तरे द्वे द्वे इष्टके उपदध्यात्। तत्र पुरस्तात्पश्चाच्चानूकमभितो द्वे द्वे जङ्घामात्र्यौ प्राग्लक्षणे, दक्षिणोत्तरयोश्च द्वे द्वे पद्ये उदग्लक्षणे उदगनूकस्योपरि उपधेये ॥ १ ॥

**पूर्वाभ्यामपराश्चतुर्दश ॥ २ ॥**

पूर्वानूकान्तोपहितयोर्जङ्घामात्र्योः पश्चाच्चतुर्दशार्द्धपद्या अनूकमभितः सप्त सप्त प्रागायताः प्राग्लक्षणा उपदध्यात् ॥ २ ॥

**ताभ्यः षट् ॥ ३ ॥**

तासां चतुर्दशानामर्द्धपद्यानां पश्चात् षट् पद्याः प्राग्लक्षणा अनूकमभितस्तिस्रस्तिस्र उपदध्यात् ॥ ३ ॥

उक्तानां चतुर्दशानां षण्णां च विकल्पेन स्थानान्तरमाह—

**पूर्वदक्षिणेऽवान्तरदेश एके ॥ ४ ॥**

एके आचार्याश्चतुर्दशार्द्धपद्याः षट् पद्याश्च आत्मन आग्नेयकोणे उपदध्यादिति वदन्ति ( १ ) ॥ ४ ॥

**उत्तरा वा दक्षिणाभ्याम् ॥ ५ ॥**

अथवा एताश्चतुर्दश षट् च दक्षिणस्यां दिश्यनूकान्तोपहिताभ्यां दक्षिणोत्तराभ्यां पद्याभ्यामुत्तरा उपदध्यात्। दक्षिणाभ्यामुत्तरा उदग्लक्षणा उदगायताश्चतुर्दश पद्याः। तासामुत्तरतोऽनूकमभित उदग्लक्षणाः षडर्द्धपद्याः ॥ ५ ॥

उक्तानां चतुर्दशानामुपधानमन्त्रानाह—

**उत्तरां पूर्वयोराशुस्त्रिवृदिति ( १४।२३ ) ॥ ६ ॥**

पूर्वयोः = पूर्वानूकान्तविहितयोर्दक्षिणोत्तरयोर्मध्ये उत्तरां जङ्घामात्रीमुदङ्मुख उपदध्यात् ॥ ६ ॥

---

विशेषे आत्मभागे चतुश्चत्वारिंशदधिकानि नव शतानि पादभागा उपधीयन्ते। अत्र चतुःषष्टिः पद्यालोका यजुष्मतीभिर्व्याप्ताः। द्वानवतिर्लोकाः पद्या बृहतीभिः। अष्टौ पद्यालोकाः षोडशभिः पद्याभिः। षट्त्रिंशदधिकं शतद्वयं पादभागैरिति। अत्रापरयोः पुरुषयोश्चत्वारिंशच्चत्वारिंशत्पद्यालोका महतीभिर्व्याप्ताः। तयोरेकोनचत्वारिंशदधिकं शतद्वयं प्रतिपुरुषं पादभागा उपधेयाः। पूर्वयोः पुरुषयोः पादोनद्वाचत्वारिंशल्लोका महतीभिर्व्याप्ताः। तयोस्त्रयस्त्रिंशदधिकं शतद्वयं पादभागा उभयत्रोपधेयाः। इत्यात्मा पूरितः।

पक्षपुच्छचयनं प्रथमावदेव। इयांस्तु विशेषः। तिस्रस्तिस्रोऽर्द्धपद्या उद्धृत्य तासां स्थाने षट् षट् पादभागा उपदध्यात्। पक्षयोश्चयनं प्रथमावत्। पुच्छे च सप्तानामर्द्धपद्यानां मध्ये आत्मसंलग्ने दक्षिणोत्तरे द्वे उद्धरणीये। यस्मिन् पद्यालोके द्वे स्तस्तस्माल्लोकाद् द्वयोरुत्तरामुद्धरेत्। सा तृतीया। अन्यत्सर्वं प्रथमावत्। तदेवं तृतीयायामष्टात्रिंशदधिकं शतद्वयं लोकम्पृणाः पद्याः, २३८ विंशतिरर्द्धपद्याः २०, चतस्रो बृहत्यः ४, अष्टाशीत्यधिकानि षोडश शतानि पादभागाः १६८८। एवं पञ्चाशदूनं सहस्रद्वयं भवति। इति तृतीया समाप्ता।

( १ ) तत्र दक्षिणांसोपहितजङ्घामात्र्याः पश्चात्संलग्ना याऽध्यर्द्धा, तस्या उत्तरतो नवार्द्धपद्याः प्रागायताः प्राग्लक्षणा उपधेयाः। द्वितीयामध्यर्द्धां जङ्घामात्रीं चोत्तरेण पञ्चार्द्धपद्या उदगायता उदग्लक्षणा उपधेयाः। एवं चतुर्दशार्द्धपद्या उपधाय तदन्तरतस्तत्संलग्नाः षट् पद्या उपधीयन्ते। ताश्च नवानामर्द्धपद्यानामुत्तरतस्तिस्रः प्राग्लक्षणाः, पञ्चानामुत्तरतो द्वे उदग्लक्षणे।

**दक्षिणामपरयोर्धरुण एकविंशं" इति ( १४।२३ ) ॥ ७ ॥**

ततोऽपरस्यां दिशि दक्षिणामुखोऽपरयोर्जङ्घामात्र्योर्मध्ये दक्षिणामुख उपदध्यात् ॥ ७ ॥

**दक्षिणां दक्षिणयोर्भान्तः पञ्चदश" इति ( १४।२३ ) ॥ ८ ॥**

ततो दक्षिणस्यां दिशि प्राङ्मुखो दक्षिणयोः पद्ययोर्मध्ये दक्षिणां पद्यामुपदध्यात् ॥ ८ ॥

**दक्षिणामुत्तरयोर्व्योमा सप्तदश" इति ॥ ९ ॥**

तत उत्तरस्यां दिशि प्रत्यङ्मुखो दक्षिणोत्तरयोः पद्ययोर्मध्ये दक्षिणां पद्यामुपध्यात ॥ ९ ॥

**चतुर्दश प्रतिमन्त्रं "प्रतूर्त्तिरष्टादश" इति ( १४।२३ ) ॥ १० ॥**

तत उदङ्मुख उत्तरामारभ्य चतुर्दशार्द्धपद्या उपदध्यात् (१) ॥ १० ॥

**दक्षिणां पूर्वयोरग्नेर्भाग" इति ॥ ११ ॥**

ततः पूर्वयोर्मध्ये दक्षिणां जङ्घामात्रीमुदङ्मुखः ॥ ११ ॥

**उत्तरामपरयोर्मित्रस्य भाग" इति ( १४।२४ ) ॥ १२ ॥**

अपरयोर्मध्ये उतरां जङ्घामात्रीं दक्षिणामुखः ॥ १२ ॥

**उत्तरां दक्षिणयोर्नृचक्षसां भाग" इति (१४।२४ ) ॥ १३ ॥**

दक्षिणयोर्मध्ये उत्तरां पद्यां प्राङ्मुखः ॥ १३ ॥

**उत्तरामुत्तरयोरिन्द्रस्य भाग" इति ( १४।२४ ) ॥ १४ ॥**

उत्तरयोर्मध्ये उत्तरां पद्यां प्रत्यङ्मुखः ॥ १४ ॥

**षट् प्रतिमन्त्रं "वसूनां भाग" इति ( १४।२५ ) ॥ १५ ॥**

उदङ्मुख उत्तरामारभ्य दक्षिणसंस्थाः षट् पद्या उपदध्यात् ॥ १५ ॥

**अन्तर्ये "सहश्च सहस्यश्चेति ( १४।२७ ) ॥ १६ ॥**

अनूकमभित एकैकामुपदध्यात् ॥ १६ ॥

---

(१) प्रतूर्त्तिरष्टादश इति प्रथमां, तप इति द्वितीयां, अभीवर्त इति तृतीयां, वर्च इति चतुर्थीम्, सम्भरण इति पञ्चमीं, योनिरिति षष्ठीं, गर्भा इति सप्तमीम्, ओज इत्यष्टमीम्, क्रतुरिति नवमीं, प्रतिष्ठेति दशमीं, ब्रध्नस्ये त्येकादशीं, नाक इति द्वादशीं, विवर्त इति त्रयोदशीं, धर्त्रं चतुष्टोम इति चतुर्दशीमिति। सक्थ्नित्ये।

वसूनां भागोऽसीति प्रथमां, आदित्यानामिति द्वितीयाम्, अदित्या इति तृतीयां, देवस्येति चतुर्थीम्। यवानामिति पञ्चमीं, ऋभूणामिति षष्ठीम्। ततः सक्थ्नित्ये।

तत्र पुरस्तादुदङ्मुख एकया स्तुवतेति प्रथमां, तिसृभिरिति द्वितीयां, पञ्चभिरिति तृतीयां, सप्तभिरिति चतुर्थीम्। सृष्टिषु प्रतिदिशं नित्ये इति रामः। ततः प्राङ्मुखो दक्षिणाः पञ्चोपदधाति। नवभिरिति पञ्चमीम्, एकादशभिरिति षष्ठीमर्द्धपद्यां, त्रयोदशभिरिति सप्तमीं पद्यामनूक्यां, पञ्चदशभिरित्यष्टमीमर्द्धपद्यां, सप्तदशभिरिति नवमीम्। ततो दक्षिणामुखोऽपराश्चतस्रः—नवदशभिरिति दशमीं, एकविंशत्येत्येकादशीम्, त्रयोविंशत्येति द्वादशीं, पञ्चविंशत्येति त्रयोदशीम्। ततः प्रत्यङ्मुख उत्तरा उपदधाति। सप्तविंशत्येति चतुर्दशीम्। उदकोपस्पर्श इति रामः। नवविंशत्येति पञ्चदशीं, एकत्रिंशतेति षोडशीं, त्रयस्त्रिंशतेति सप्तदशीमिति। ततः परीत्य परीत्य सर्वास्र सक्थ्नित्ये।

**रेतःसिग्वेलायां च सप्तदश सर्वतो नव दक्षिणेनानूकꣳ सृष्टीरेकया ऽस्तुवतेति ( १४।२८-३१ ) प्रतिमन्त्रम् ( २२ ) ॥ १७ ॥**

सर्वासु दिक्षु रेतःसिग्वेलायां सृष्टिसंज्ञकाः सप्तदशेष्टका उपदध्यात्। तासां मध्ये प्रागनूकं दक्षिणेन नव, उत्तरेणाष्टौ। तेन प्रतिदिशं चतस्रश्चतस्रः पद्याः, दक्षिणतः पञ्च ( १ ) ॥ १७ ॥

**उत्तराꣳसादधि लोकम्पृणाः पूर्ववत् ॥ १८ ॥**

उत्तरांसादारभ्य प्रागनूकोत्तरांसाद्दणयादेशान्तराले मध्यपर्यन्तं, ततो दक्षिणपक्ष-पुच्छोत्तरपक्षेषु प्रथमचितिवत् ( १७।५।६ ) लोकम्पृणा ( २ ) उपधाय प्रत्येत्य प्रागनूकस्य दक्षिणत आरभ्य प्रदक्षिणमुत्तरांसाद्दणयादेशपर्यन्तं पूर्ववदुप दध्यात, पुरीषनिवपनं सप्तर्चो-पस्थानं च कुर्यात् ॥ १८ ॥

इति दशमी कण्डिका ॥ १० ॥



---

( १ ) तत्र मध्यमाऽनूकस्योपरि, तामभितो द्वेऽर्द्धपद्ये। शेषाः पञ्चदश पद्याः। अन्यासु दिक्ष्व नूकमभितो द्वे द्वे। तत्रोत्तरत आरभ्य प्रदाक्षिण्यं सर्वा उपदध्यात्। तत्र पुरस्तादुदङ्मुखः, दक्षिणस्यां प्राङ् मुखः। अपरस्यां दक्षिणामुखः, उत्तरस्यां प्रत्यङ्मुख इति।

( २ ) अथ चतुर्थ्यां लोकम्पृणानां विवेक उच्यते।

चतुर्थ्यां चितौ द्वितीयचितिवेव लोकम्पृणानामुपधानं भवति। इयांस्तु विशेषः। पक्षसन्ध्योर्ये दक्षिणोत्तरे पद्ये यजुष्मत्यौ उपहिते दक्षिणस्यां दिशि, तयोः पद्ययोर्मध्ये दक्षिणस्याः पद्यायाः पुरस्तात्पश्चाच्च चतस्रश्चतस्रोऽर्द्धपद्या उदग्लक्षणा उपधेयाः। उत्तरस्यां चोत्तरस्याः पद्यायाः पुरस्तात्पश्चाच्च चतस्रश्चतस्रः पद्या उपधेयाः। तथा पुरस्तादनूकं ये जङ्घामात्र्यौ उपहिते, तयोर्दक्षिणत उत्तरतश्चैकैकामध्यर्द्धां प्राग्लक्षणामुप दध्यात्। अपरस्यां दिश्यपि अनूकान्तोपहितजङ्घामात्र्योर्दक्षिणत उत्तरतश्चैकैकाऽध्यर्द्धा प्राग्लक्षणोपधेया। एवं सर्वासु दिक्षु वयस्यानां स्थानं पूरितम्। ततोऽभितो वयस्याः सर्वत एकैकामध्यर्द्धामित्यादि सर्वं द्वितीयावत्। तथा चतुर्दशानामर्द्धपद्यानां दक्षिणत उत्तरतश्च द्वे द्वे अर्द्धपद्ये प्राग्लक्षणे प्रागायते उपधेये। तथा षण्णां पद्यानां दक्षिणत उत्तरतश्चैकैकाऽर्द्धपद्या प्रागायतोपधेया। तथा दक्षिणश्रोण्यां जङ्घामात्री-सन्निहितयोरध्यर्द्धयोः पुरस्तादेकां बृहतीमुदग्लक्षणामुपधाय, तस्या उत्तरतः संलग्नां प्रागायतां त्रिग्राहिण्या उत्तरत एकां प्राग्लक्षणां पद्यां जङ्घामात्र्याः पूर्वामुपदध्यात्। तथा उत्तरश्रोण्यामध्यर्द्धयोः पुरस्तादेकां बृहतीं प्राग्लक्षणामुपधाय तस्यास्तस्या दक्षिणतः प्रागायतां त्रिग्राहिणीं त्रिग्राहिण्या दक्षिणतो जङ्घामात्र्याः पुरस्तात्पद्यां चोपदधाति। शेषे आत्मभागे पञ्चाधिकानि नवशतानि पादभागा उपधेयाः, चत्वारश्चार्द्धपाद-भागा द्वितीयावत्। अत्र चतुर्थ्याः पूर्वयोः पुरुषयोश्चत्वारिंशच्चत्वारिंशत्पद्यालोका महतीभिर्व्याप्ताः। अपरयोः पुरुषयोश्चत्वारिंशच्चत्वारिंशत्पादभागन्यूनाः। पूर्वयोः पादभागानां चत्वारिंशदधिकं शतद्वयं पादभागाः प्रति-पुरुषमुपधेयाः। अपरपुरुषयोः पुरुषयोर्द्वौ द्वावर्द्धभागावधिकौ। तत्र चतुश्चत्वारिंशत्पद्यालोका यजुष्मती-भिर्व्याप्ताः, एकादशार्द्धपद्याभिः, चत्वारिंशदधिकं शतद्वयं पादभागैः। द्विचत्वारिंशल्लोका अध्यर्द्धाभिः। पञ्चचत्वारिंशल्लोका जङ्घामात्रीपक्षसन्धित्रिग्राहिणीभिः। षोडश बृहतीत्रिग्राहिणीभिः। सार्द्ध एको लोकः पुच्छत्रिग्राहिणीभ्याम्। अर्द्धो लोकश्चतुर्भिरर्द्धपादभागैरिति। एवं चत्वारि शतान्यपि आत्मनि पद्यालोकाः पूरिताः। पक्षपुच्छपूरणं द्वितीयावत्। अस्मिन् पक्षे चतुर्थ्यां चितौ द्वाविंशतिर्लोकम्पृणा जङ्घामात्र्यः २२। षट्त्रिंशत्त्रिग्राहिण्यः ३६। एकोनपञ्चाशदध्यर्द्धाः ४९। चतुर्विंशतिरर्द्धपद्याः २४ द्वे बृहत्यौ २। द्वे पद्ये २। षडर्द्धपादभागाः ६। अष्टादशशतानि नवाधिकानि पादभागाः १८०९। एवं पञ्चाशदूनं सहस्रद्वयं लोकम्पृणा भवन्ति। १९५०

**पञ्चम्यामन्तेष्वाश्विनीवदसपत्नाः ॥ १ ॥**

पञ्चम्यां चितौ प्रतिदिशमात्मनः प्रान्तेषु आश्विनीवत् ( १४।१२ ) असपत्नाः पद्या उपदध्यात् ( १ ) ॥ १ ॥

**दक्षिणयोररत्न्यन्तरम् ॥ २ ॥**

दक्षिणस्यां दिशि दक्षिणाया असपत्नाया उत्तरतोऽन्तरा पद्यालोकद्वयं त्यक्त्वा तृतीये पद्यालोके प्राग्लक्षणां पञ्चमीमसपत्नामुपदध्यात्। अस्याः पञ्चम्या असपत्नाया अग्नेः पुरीषमसीति पुरीषशब्दवता मन्त्रेणोपधानात् पुरीषवतीति संज्ञा ॥ २ ॥

आसामुपधानमाह—

**"अग्ने जातानिति प्रतिमन्त्रम् ( १५।१-३ ) ॥ ३ ॥**

असपत्ना उपदध्यात्। तत्र प्रथमं पुरस्तादुदङ्मुखः पूर्वाम्, पश्चाद्दक्षिणामुखोऽपराम् दक्षिणतः प्राङ्मुखो दक्षिणाम्, उत्तरतः प्रत्यङ्मुख उत्तराम्। ततः प्रत्येत्य प्राङ्मुख उदङ्मुखो वा पञ्चमीं प्राग्लक्षणामुप दधाति ॥ ३ ॥

**पश्चिमा द्वितीया ॥४॥**

उपधानकाले पश्चिमदिग्भवामपसपत्नां द्वितीयां कुर्यात् ॥ ४ ॥

**विराजो दश दश प्रतिदिशं पुरस्तात्प्रथममेवश्छन्द इति प्रति ( १५-४-५ ) मन्त्रम् ॥ ५ ॥**

---

अथ चतुर्ध्यामेव चतुर्दशानां षण्णां चोत्तरा वा दक्षिणाभ्यामित्यस्मिन्पक्षे लोकम्पृणासु विशेष उच्यते। यदि चतुर्दशार्द्धपद्याः षट् पद्याश्च दक्षिणाभ्यां यजुष्मतीभ्यामुत्तरा उपधीयन्ते, तदा आत्मन उत्तरश्रोणौ उत्तरांसे च बृहती-त्रिप्राहिणी-पादमात्रीणामुपधानं कर्त्तव्यम्। तत्र चोत्तरश्रोण्यां पूर्ववद् बृहतीमुपधाय तस्याः पुरस्तादुदगायतां त्रिप्राहिणीं जङ्घामात्रीसंलग्नां, तस्याः पुरस्तादुदग्लक्षणां त्रिप्राहिणीसंस्पृष्टां पद्यां चोपदध्यात्। उत्तरांसे च पूर्वाध्यर्द्धयोः पश्चादुदगग्रां बृहतीमुपधाय तस्याः पश्चादुदगायतां त्रिप्राहिणीं जङ्घामात्रीसंलग्नां, तस्याः पश्चादुदग्लक्षणां च त्रिप्राहिणीसंस्पृष्टामुपदध्यात्। एतावानेव विशेषोऽन्यत्सर्वं पूर्ववत्। अथ पूर्वदक्षिणे वाऽन्तरदेश एक इत्यस्मिन्पक्षे विशेष उच्यते। यदि चतुर्दशार्द्धपद्याः षट्पद्याश्चोभयकोणे उपधीन्ते तदा दक्षिणश्रोण्यां पूर्ववद् बृहतीमुदग्लक्षणामुपधाय तस्याः पुरस्तादुदगायतां जङ्घामात्रीसंस्पृष्टां त्रिप्राहिणीमुपदधाति। तस्याः पुरस्तादुदगग्रां पद्यां त्रिप्राहिणीसंस्पृष्टामुपदधाति। उत्तरश्रोण्यंसयोश्च पूर्ववदेवोभयत्रोपदधाति। तस्मिन्पक्षे चतुर्दशानामर्द्धपद्यानां षण्णां पद्यानां चाभितो या लोकम्पृणा अर्द्धपद्या उक्तास्ता एकस्मिन्नेवात्मपूर्वपार्श्वे उपधीयन्ते। द्वे चतुर्दशानाम्। एका षण्णाम्। आत्मपूर्वप्रदेशस्य बहिर्भागवत्। आसां च पादभागापेक्षया महत्त्वात्। ततोऽस्मात्पूर्वदक्षिणपुरुषाद्वायव्यकोणस्थान् षड्विंशतिपादभागानुद्धृत्य द्विपञ्चाशदर्द्धपादभागान्यथायोगं प्रागायतानुदगायतांश्च विचार्योपदध्यात्। ते च पूर्वदक्षिणस्य वायव्यकोणे तृतीयचतुर्थसृष्ट्योः पश्चाच्चतुर्ष लोकेषु। तयोरेव सृष्ट्योः पुरस्ताद् द्वयोर्न्तव्ययोर्दक्षिणलोकस्यापरस्मिन्नर्धे च। एवं सार्द्धेषु षट्सु लोकेषु द्वापञ्चाशदर्द्धभागानामुपधानम्। तेषां मध्ये द्वादशोदगायताः। शेषाः सर्वे प्रागायता इति। इति चतुर्थी।

( १ ) तत्र प्रागनूकमुत्तरेण द्वितीये पद्यालोके पूर्वां प्राग्लक्षणाम्, दक्षिणतस्तिर्यगनूकं पूर्वेण द्वितीये लोके दक्षिणामसपत्नामुदग्लक्षणाम्, पश्चादनूकं दक्षिणेन द्वितीये लोकेऽपरायतामसपत्नां प्राग्लक्षणाम्, उत्तरस्यामनूकमपरेण द्वितीये लोके उत्तरामसपत्नामुदग्लक्षणाम्, दक्षिणाया असपत्नाया उत्तरतोऽन्तराले पद्यालोकद्वयं त्यक्त्वा तृतीये पद्यालोके प्राग्लक्षणां पञ्चमीमसपत्नामुपदध्यात्। एताः सर्वाः पद्याः।

ततः सर्वासु दिक्षु दश दश विराजः सपत्नासंलग्ना ( १ ) अनूकमभितः सपत्नातो मध्यलोकेषूपदध्यात् (२) ॥५॥

**गायत्र्यसपत्ना गणमध्येऽसम्भवात् ॥ ६ ॥**

गायत्र्य इष्टका असपत्नाश्च विराड्गणस्य मध्ये कार्याः । नहि विराड्गणस्य मध्ये संभवः ॥६॥

**उष्णिग्भ्यो वा परा अर्द्धपद्या उपधाय ॥ ७ ॥**

उपहितानामुष्णिहां पश्चात्तस्मिन्नेव लोकेऽर्द्धपद्या उपधेयाः । एवं कृते विराजां व्यवहितोपधानं कृतं न भवति ॥७॥

**असपत्नास्पृशोऽन्यतोऽन्तराः ॥ ८ ॥**

अन्यासु तिसृषु दिक्षु विराजोऽसपत्नासंलग्ना असपत्नाभ्योऽन्तरा मध्यवर्त्तिलोकेषूपधेयाः ॥८॥

**सर्वतोऽषाढावेलायाᳬ स्तोमभागा "रश्मिना सत्यायेति (१५।६–६) प्रतिमन्त्रम् ॥ ६ ॥**

सर्वासु दिक्षु अषाढावेलायां स्तोमभागसंज्ञका एकोनत्रिंशत् इष्टका उपदध्यात् (३) ॥६॥

---

(१) एवश्छन्द इति प्रथमां, वरिव इति द्वितीयां, शम्भूरिति तृतीयां, परिभूरिति चतुर्थीम्, आच्छदिति पञ्चमीं, मन इति षष्ठीम्, व्यच इति सप्तमीं, सिन्धुरित्यष्टमीम्, समुद्र इति नवमीं, सरिरमिति दशमीम्। सकृन्निस्ये । ककुप्छन्द इति प्रथमां, त्रिककुविति द्वितीयां, काव्यमिति तृतीयाम्, अङ्कुपमिति चतुर्थीम्, अक्षरपङ्क्तिरिति पञ्चमीम्, पदपङ्क्तिरिति षष्ठीम्, विष्टारपङ्क्तिरिति सप्तमीं, क्षुर इत्यष्टमीम्, आच्छदिति नवमीं, प्रच्छदिति दशमीम् । ततः सकृन्निस्ये । संयच्छन्द इति प्रथमां, वियदिति द्वितीयां, बृहदिति तृतीयां, रथन्तरमिति चतुर्थीं, निकाय इति पञ्चमीं, विवध इति षष्ठीं, गिर इति सप्तमीं, भ्रज इत्यष्टमीम्, सᳬस्तुबिति नवमीम्, अनुष्टुबिति दशमीम्। सकृन्निस्ये। एवश्छन्द इति प्रथमां, वरिव इति द्वितीयां, वयस्कृच्छन्द इति तृतीयां, वयस्कृदिति चतुर्थीम्, विष्पर्द्धा इति पञ्चमीं, विशालमिति षष्ठीम्, छदिरिति सप्तमीं, दुरोहणमित्यष्टमीम्, तन्द्रमिति नवमीं, अङ्काङ्कं छन्द इति दशमीमिति। सकृन्निस्ये।

(२) तत्र पूर्वा दश विराजोऽर्द्धपद्यास्तिरश्चालिखिता उदगायता उष्णिग्भ्योऽपराः प्राग्लक्षणा अनूकमभितः पञ्च पञ्चोपदध्यात्। अन्यासु दिक्षु पद्या एव। तत्र प्रथमं पुरस्तादुदङ्मुख उत्तरामारभ्य दक्षिणसंस्थाः, ततो दक्षिणस्यां दिशि प्राङ्मुखः पूर्वामारभ्योदग्लक्षणाः, ततोऽपरस्यां दिशि दक्षिणामारभ्य दक्षिणामुखः प्रग्लक्षणाः, तत उत्तरस्यां प्रत्यङ्मुखोऽपरत आरभ्य प्राक्संस्था उदग्लक्षणा दश विराज उपदध्यात्।

(३) तत्र पुरस्तादष्टौ पद्या अनूकमभितश्चतस्रश्चतस्रः प्राग्लक्षणाः, पश्चादप्यष्टौ तथैव। दक्षिणतः सप्त। तासां मध्याऽनूकस्योपरि, तामभितोऽर्द्धपद्ये, शेषाः पञ्च पद्याः सर्वा उदग्लक्षणाः। उत्तरतः षडुदग्लक्षणाः पद्या अनूकमभितस्तिस्रस्तिस्रः। तत्र पूर्वासां या उत्तरा तत आरभ्य प्रदक्षिणं सर्वा उपदध्यात्। तत्र प्रथममुदङ्मुखः पुरस्तादष्टौ, ततः प्राङ्मुखो दक्षिणाः प्राक्संस्थाः सप्त। तत्र एकादशी त्रयोदशी चेत्यर्द्धपद्ये द्वे, शेषाः पद्याः। अत ऊर्ध्वमपि सर्वाः पद्या एव। ततो दक्षिणामुखः पश्चात् अष्टावुपदधाति। ततः प्रत्यङ्मुख उत्तरस्याः षट् प्राक्संस्थाः स्तोमभागा उपदध्यात्। मिलित्वा एकोनत्रिंशत्।

रश्मिना सत्यायेति प्रथमां, प्रेति नेति द्वितीयां, अन्वित्येति तृतीयां, सन्धिनेति चतुर्थीम्, प्रतिधिनेति पञ्चमीम्, विष्टम्भेनेति षष्ठीं, प्रवयेति सप्तमीम्, अनुयेत्यष्टमीम्। ततः प्राङ्मुखो दक्षिणाः प्रत्यक्संस्था उपदधाति-उशिजेति नवमीं, प्रकेतेनेति दशमीं, नन्तुनेत्येकादशीमर्द्धपद्याम्, सᳬसर्पेणेति द्वादशीमनूक्यां पद्याम्, ऐडेनेति त्रयोदशीमर्द्धपद्याम्। अत ऊर्ध्वं सर्वाः पद्याः। उत्तमेनेति चतुर्दशीं, वयोधसेति पञ्चदशीम्, अभिजितेति षोडशीं, प्रतिपदसीति सप्तदशीं अनुपदसीत्यष्टादशीं, सम्पदसीत्येकोनविंशीं, तेजोऽसीति विंशीं, त्रिवृदसीत्येकविंशीं, प्रवृदसीति द्वाविंशीं, विवृदसीति त्रयोविंशीम्। ततः प्रत्यङ्मुख उत्तराः स्तोमभागाः प्राक्

**पञ्चदश दक्षिणेनानूकम् ॥१०॥**

तासां मध्ये पञ्चदश स्तोमभागा इष्टकाः प्रागनूकं दक्षिणेन, चतुर्दशोत्तरेणोपदध्यात् । तत्र पूर्वदिशि पश्चाच्चाष्टावष्टौ, दक्षिणस्यां सप्त, उत्तरस्यां षडिति ॥१०॥

**वेषश्रीः क्षत्राय क्षत्रं जिन्वेति त्रिꣳशत्तमीमेके ॥११॥**

वेषश्रीरिति मन्त्रेण त्रिंशत्तमीं स्तोमभागामुत्तरत उपदध्यादित्येकेषां मतम् (८।५।३।८)। अस्मिन्पक्षे उत्तरतः सप्त ॥११॥

**पुरीषमास्वावपति मन्त्रेण वा तापश्चितस्य तूष्णीꣳ श्रुतेः ॥१२॥**

स्तोमभागासु मन्त्रेण पुरीषमावपेत् । कुतः ? तापश्चितस्य तूष्णीं श्रुतेः । "तूष्णीं मासꣳ स्तोमभागापुरीषमभिहरन्ति" ( १०।२।५।१३ ) इति श्रुत्या स्तोमभागासु तूष्णीं विधानादन्यत्र मन्त्रेणेति बोध्यते । एवं प्राप्ते वाशब्देन व्यावर्त्यते । यदुक्तं मन्त्रेणेति ? तन्न । मन्त्रस्याविधानात् । तापश्चिते तूष्णीमिति त्वनुवादः । तेन हि मासो विधीयते । मन्त्रविधाने वाक्यभेदः स्यात् । तस्मात्तूष्णीमेवेति ॥१२॥

इत्येकादशी कण्डिका ॥११॥



---

संस्था उपदधाति । सखृदसीति चतुर्विंशीं, आक्रमोऽसीति पञ्चविंशीं, सङ्क्रमोऽसीति षड्विंशतितमीम्, उत्क्रमोऽसीति सप्तविंशतितमीम् । उत्क्रान्तिरसीत्यष्टाविंशतितमीम्, अधिपतिनेत्येकोनत्रिंशत्तमीमिति ।

तत्र पञ्चम्यां चितौ–असपत्नातो मध्यलोकेषु विराजामुपधानपक्षे पूरणमुच्यते । पुच्छकोणयोरेकैकः पद्यालोकः, अष्टौ लोका मध्ये वर्त्तमाना आत्मनः पूर्वान्तं यावत्, एतावान् मध्यमो भागः । अस्मिन्मध्यमे भागे सर्वा ऋज्वालिखिता इष्टका उपधेयाः । दक्षिणोत्तरभागयोः पक्षसहितयोर्वक्रालिखिताः । अत्र सर्वस्मिन्नप्रपक्षपुच्छेऽग्निक्षेत्रे सप्त शतानि पञ्चाशदधिकानि पद्यालोकाः सन्ति । तत्रैवं त्रिधा विभागे कृते प्रतिभागं पञ्चाशदधिकं शतद्वयं पद्यालोका भवन्तीति ज्ञेयम् । तत्र मध्यमे भागे चतुःसप्तत्यधिकानि पञ्च शतानि ऋज्वालिखिताः पादभागा उपधेयाः । तथा चत्वारि शतान्यृज्वालिखिता अर्द्धपादभागाः प्रागायताः । ते च विश्वज्योतिर्वेलायाः कोणेष्वेकैकं पादभागमुपधाय तेषां पादभागानां मध्ये उपहितेष्टकाव्यतिरिक्ते देशे उपधेयाः । तथा दक्षिणोत्तरभागयोरष्टात्रिंशदधिकान्यष्टावष्टौ शतानि वक्रालिखिताः पादभागा उपधीयन्ते । विंशत्यधिकं शतमर्द्धपादभागा वक्रालिखिता उत्तरे भागे ऋतव्याषाढावेलयोरुपधीयन्ते । उत्तरे अषाढावेलाया अन्त्यौ पद्यालोकौ वर्जयित्वा, तयोर्हि पादभागानामेवोपधानम् । दक्षिणे भागे ऋतव्याषाढावेलयोः समग्रयोरपि षट्त्रिंशदधिकं शतं वक्रालिखिता अर्द्धपादभागा उपधीयन्ते । उत्तरे भागे दक्षिणभागात् षोडश पादभागा अधिका उपधीयन्ते । तेषां षोडशानां मध्ये अष्टौ अषाढावेलान्त्ययोर्द्वयोः पद्यालोकयोरुपधीयन्ते । अष्टौ चासपत्नातिच्छन्दसोः स्थाने । उत्तरभागे तयोरभावात् । दक्षिणे भागे उत्तरभागात् षोडशार्द्धपादभागा अधिकाः । तेषां चाषाढावेलान्त्ययोः पद्यालोकयोरुपधानं कार्यमिति । पञ्चम्यामात्मनि सार्द्धमेकाधिकं शतं लोका यजुष्मतीभिर्व्याप्ताः । द्व्यशीतिः पद्यालोका अर्द्धपादभागैः, शेषाः पादभागैरिति । मध्यमे भागे पुरस्तात्पश्चाच्च या अषाढावेला सा स्तोमभागाभिर्व्याप्ता । ऋतव्यावेलायां च पुरस्ताद्दृष्टानां लोकानां मध्ये नाकसद्भिस्त्रयो लोका व्याप्ताः । अतो नाकसद उत्तरतो द्वौ लोकौ । ऋतव्ययोर्दक्षिणतस्त्रयः । एवं पञ्च परिशिष्यन्ते । तेषु पादभागा एवोपधेयाः । तथा पश्चादृतव्यावेलायामष्टानां लोकानां मध्ये एक एव लोकोऽपरया नाकसदा व्याप्तः । तां नाकसदमभितः सार्द्धास्त्रयो लोकाः परिशिष्यन्ते । एवं ते सप्त लोका भवन्ति । तेष्वपि पादभागा एवोपधेयाः । एवं सर्वेषु मध्यमादिभागेषु प्रतिभागं चतुःसप्तत्यधिकानि नवशतानि लोकम्पृणा भवन्ति । प्रतिभागं च सहस्रसङ्ख्या लोकम्पृणा मृग्यन्ते । श्रुतौ तथा दृष्टत्वात् ।

**नाकसदोऽनूकेषु पूर्ववर्जमृतव्यावेलायामाश्विनीवद्राज्ञसीति ( १५।१० ) प्रतिमन्त्रम् ॥ १ ॥**

ततः सर्वासु दिक्षु ऋतव्यावेलायां पूर्वं वर्जयित्वाऽन्यासु दिक्ष्वनूकस्योपरि अर्धोत्सेधा आश्विनीवत् पञ्च नाकसत्संज्ञका इष्टका उपदध्यात्। पूर्वां तु अनूकस्योत्तरतो द्वितीये लोके उपदध्यात्। दक्षिणस्यां दिशि ऋतव्यावेलायामनूकस्योपरि अस्मिन्पद्यालोके द्वे अर्द्धपद्ये दक्षिणोत्तरे प्रागायतेऽर्द्धोत्सेधे तिरश्चालिखिते द्वितीया पञ्चमी चेति उपधेये। अन्याः सर्वा अर्द्धोत्सेधाः पद्याः। पुरस्तात्पश्चाच्च प्राग्लक्षणे, उत्तरोदग्लक्षणेति ( १ )॥ १ ॥

**पुरीषमोप्योपर्ययं पुर" इति ( १५।१५।१६ ) पञ्चचूडाः प्रतिमन्त्रं प्रतिदिशं यथालिङ्गम् ॥ २ ॥**

उपधानानन्तरं नाकसदामुपरि तूष्णीं पुरीषं प्रक्षिप्य तासामुपर्येवंविधा एव पञ्चसङ्ख्याः पञ्चचूडासंज्ञका इष्टका उपदध्यात् ( २ ) ॥ २ ॥

**पश्चिमोत्तमा ॥ ३ ॥**

तत्र पश्चिमां पञ्चचूडां सर्वासामन्ते उपदध्यात् ॥ ३ ॥

**छन्दस्यास्तिस्रस्तिस्रोऽनूकान्तेषु पुरस्ताद् गायत्रीरग्निर्मूर्द्धेति ( १५।२०–२२ ) प्रत्यृचम् ॥ ४ ॥**

छन्दस्यासंज्ञका इष्टकास्तिस्रस्तिस्रोऽनूकान्तेषूपदध्यात। तत्र पुरस्तादनूकान्ते गायत्रीरिष्टका उपदध्यात्युदङ्मुखः प्राग्लक्षणाः। तासां मध्यमाऽनूके। तामभितो द्वे अर्धपद्ये।।४।।

**उत्तराश्च ॥ ५ ॥**

वक्ष्यमाणाश्छन्दस्याश्च प्रत्यृचमुपदध्यात् ॥ ५ ॥

**पुरस्तात्त्रिष्टुभो रेतःसिग्वेलायां "भुवो यज्ञस्येति ( १५।२३–२५ ) ॥ ६ ॥**

पूर्वस्यां दिशि तिस्रस्त्रिष्टुभः प्राग्लक्षणा उदङ्मुख उपदध्यात्। आसां मध्यमा पद्याऽनूके, तामभितो द्वे अर्धपद्ये ॥ ६ ॥

**जगतीश्च पश्चादयमिहेति ( १५।२६–२८ ) ॥ ७ ॥**

ततः पश्चाद्रेतःसिग्वेलायामेव तिस्रः प्राग्लक्षणा दक्षिणामुखः। आसां मध्यमा पद्याऽनूके, तामभितो द्वे अर्धपद्ये ॥ ७ ॥

**अपरास्ताभ्योऽनुष्टुभः "सखायः सं व" इति (१५।२९-३१) ॥ ८ ॥**

जगतीभ्योऽपरास्तिस्रः प्राग्लक्षणा अनुष्टुभो दक्षिणामुखः। आसां मध्यमा पद्याऽनूके, तामभितो द्वे अर्धपद्ये ॥ ८ ॥

**अषाढावेलायाः पुरस्ताद् बृहतीरेना व" इति (१५।३२–३४) ॥ ९ ॥**

उदङ्मुखस्तिस्रो बृहतीः प्राग्लक्षणाः। आसां मध्यमा पद्याऽनूके, तामभितो द्वे अर्द्धपद्ये ॥ ९ ॥

( १ ) अथ नाकसदामुपधानम्। प्रथमं पुरस्तादुदङ्मुखः पूर्वां नाकसदमुपदधाति। ततः प्राङ्मुखो दक्षिणां तिरश्चालिखितामर्द्धपद्याम्, ततो दक्षिणामुखोऽपराम्, ततः प्रत्यङ्मुखोऽपराम्, ततः प्रत्यागत्य प्राङ्मुखो दक्षिणामुत्तरेण पञ्चमीमर्द्धपद्यां तिरश्चालिखिताम्।

( २ ) तत्र पूर्वामुदङ्मुखः, द्वितीयां प्राङ्मुखः, तृतीयां प्राङ्मुखः, दक्षिणामुत्तरेण चतुर्थीमर्द्धपद्यां तिरश्चालिखिताम्, ततः पञ्चमीमिति।

**"भद्रो न" इति (१५।३८-४०) ककुभस्ताभ्यो बृहत्यन्तरश्रुतं (८।६।२।२०) मन्त्रक्रमेण ॥१०॥**

बृहतीभ्यः पुरस्तात् मन्त्रक्रमेण पूर्वमुष्णिह उपधाय तदनन्तरं तिस्रः ककुभः प्राग्लक्षणा उपदध्यात् । आसां मध्यमा पद्याऽनूकस्योपरि, तामभितो द्वे अर्द्धपद्ये ॥१०॥

**उद्धृतान्यपकृष्येच्छन् ॥११॥**

भद्रा रातिः, वृत्रतूर्ये, अव स्थिरा इत्येतानि चत्वारि चत्वार्यक्षराणि भद्रो न इत्याद्यारभ्य इच्छयाऽपकृष्य तन्मध्येऽपठित्वैव ककुभामुपधानम्, इच्छया नापकृष्य । एताः सर्वा गायत्र्याद्याः ककुप्पर्यन्ताः प्राग्लक्षणाः (८।६।२।३)। अर्द्धपद्याश्चोष्णिग्व्यतिरिक्ताः प्रागायताः ॥११॥

**अपरा गायत्रीभ्य उष्णिहोऽग्ने वाजस्येति (१५।३५-३७) ॥१२॥**

गायत्रीभ्योऽपरास्तिस्र उष्णिहोऽर्द्धपद्यास्तिरश्चालिखिता उदगायताः प्राग्लक्षणा उदङ्मुख उपदध्यात् । आसां मध्यमाऽनूके, तामभितो द्वे । एतास्तिरश्चालिखिता अर्द्धपद्याः पद्ये । पद्ये पद्या एवेति ॥१२॥

**अनूकान्ते दक्षिणे पङ्क्तीरग्निं तमिति [१५।४१-४३] ॥१३॥**

ततो दक्षिणेऽनूकान्ते तिस्रः पङ्क्तीरुदग्लक्षणाः प्राङ्मुखः प्रत्यक्संस्था उपदध्यात् । आसां मध्यमा पद्याऽनूकस्योपरि, तामभितो द्वे अर्धपद्ये उदगायते ॥१३॥

**उत्तरे पदङ्पक्तीरग्ने तमद्येति [१५।४४-४६] ॥१४॥**

तत उत्तरेऽनूकान्ते तिस्रः पदपङ्क्तीरुदग्लक्षणाः प्रत्यङ्मुखः प्राक्संस्था उपदध्यात् । तत्र मध्यमा पद्याऽनूके, तामभितो द्वे अर्धपद्ये ॥१४॥

**पुरीषवत्याः पूर्वामतिच्छन्दसं प्राच्यौ पुरीषसहिते भद्रारातिर्वृत्रतूर्येऽवस्थिराऽग्निष्ठं होतारमिति [१५।४७] ॥१५॥**

पश्चस्यसपत्ना पुरीषवती (१७।११।२) इत्युक्तम् । तस्याः पुरस्तादतिच्छन्दससंज्ञामिष्टकां पद्यां प्राग्लक्षणामुपदध्यात् प्राङ्मुखः ॥१५॥

**"अग्ने त्वमि (१५।४८) त्यनूकान्तेऽपरे द्विपदाः ॥१६॥**

ततः पश्चादनूकान्ते तिस्रो द्विपदाः प्राग्लक्षणा उदक्संस्था दक्षिणामुख उपदध्यात् । आसां मध्यमा पद्याऽनूके, तामभितो द्वे अर्धपद्ये ॥१६॥

**मध्येऽष्टेष्टकं गार्हपत्यम् ॥१७॥**

आत्मनो मध्ये अष्टेष्टकं गार्हपत्यं पूर्ववदुपदध्यात् (८।६।३।७)। इयांस्तु विशेषः । अर्द्धबृहतीनां स्थाने चतस्रोऽर्द्धपद्याः (द्र० पू० २१९) प्राग्लक्षणाः, पुरस्तात्पश्चाच्च द्वे द्वे तिरश्च्या वुदग्लक्षणे पद्ये । तत्र प्रथमं दक्षिणत उदङ्मुख उपविश्योत्तरत आरभ्य दक्षिणसंस्थमर्द्धपद्याश्चतस्र उपदधाति । ततोऽपरेण परीत्योत्तरतो दक्षिणामुखोऽपरयोर्मध्ये प्रथमं दक्षिणां पद्याम्, तत उत्तराम् । ततस्तेनैव पुनः परीत्योदङ्मुखः पूर्वयोरुत्तरां, ततो दक्षिणाम् । एता अष्टावप्यर्द्धोत्सेधाः ॥१७॥

**पुनश्चितिं चोपरि तद्वद्येन ऋषय" इति ( १५।४६ ) प्रत्यृचम् ॥१८॥**

आसामिष्टकानामुपरि एवं त्रिधा एवाष्टात्रिष्टकाः पूर्वोक्तेनैव प्रकारेण पुनरुपदध्यात् (१) ॥१८॥

**पुच्छसन्धावेके ॥१६॥**

केचित्पक्षपुच्छसन्धौ पुनश्चित्युपधानं कुर्वन्ति ( ८।८।३।११ )। अस्मिन्पक्षे द्विपदास्तिस्रो द्वे विराजौ च, एता अर्द्धोत्सेधाः। षट् पुनश्चितयश्च। पुरस्ताद् द्वे पादमात्र्यौ उदग्लक्षणे पूर्णोत्सेधे ॥१६॥

**पूर्वार्द्धे वा गार्हपत्यं पुच्छसन्धौ कृत्वा ॥ २० ॥**

अथवा गार्हपत्यं पुच्छसन्धावुपधाय पूर्वानूकान्ते गायत्र्युष्णिग्विराट्ककुभामुपरि पुनश्चितिमुपदध्यात ( ८।८।३।४ )। अस्मिन्पक्षे गायत्र्यादिककुप्पर्यन्ताः षट् पद्यालोका अर्द्धोत्सेधाः। प्रथमतृतीययोरुष्णिहोरर्द्धमर्द्धमर्द्धोत्सेधम्। गार्हपत्ये च पूर्वे पादमात्र्यौ पूर्णोत्सेधे। मध्ये एतासां स्थानेऽष्टाचत्वारिंशदर्द्धपादभागानामुपधानम्। पूर्वयोर्ऋतव्ययोरुपरि पूर्ववत् ॥ २० ॥

**ऋतव्ये "तपश्च तपस्यश्चेति (१५।५७) ॥२१॥**

प्राग्लक्षणेऽनूकमभित उदङ्मुखः ॥२१॥

**विश्वज्योतिषं "परमेष्ठी त्वेति (१५।५८) ॥२२॥**

तृतीयां पद्यां प्राग्लक्षणां यजमानकृतां पूर्वांया विश्वज्योतिष उपरि निदध्यात् ॥२२॥

लोकम्पृणा आह—

**दक्षिणांसात्प्रत्यगरत्निमात्रादधि लोकम्पृणाः पूर्ववत् ॥२३॥**

आत्मन आग्नेयकोणादारभ्यापरस्यां दिशि अरत्निमात्रादधिकं पद्यालोकत्रयं परित्यज्य तृतीयपद्यालोकादारभ्य लोकम्पृणा उपदध्यात्पञ्चम्यां चितौ प्रथमचितिवत्प्रदक्षिणं प्रागनूकपर्यन्तम्। ततः प्रत्यागत्य प्रागनूकं दक्षिणेन दक्षिणांसदेशपद्यालोकत्रयपर्यन्ता अक्षणयावधिका उपधेयाः। पक्षपुच्छे च पूर्ववत् ( ८।५।८ ) ॥२३॥

**प्रच्छाद्य पुरीषेण विकर्णीस्वयमातृण्णे शर्करे संस्पृष्टे छिद्रे "प्रोथदश्व" ( १५।६१ ) इत्युत्तरां विकर्णीमायोष्ट्वेति ( १५।६४ ) स्वयमातृण्णाम् ॥२४॥**

पञ्चमीं चितिं पुरीषेणाच्छाद्य विकर्णीस्वयमातृण्णसंज्ञके द्वे इष्टके शर्करामये परस्परसंलग्ने छिद्रयुक्ते दक्षिणोत्तरे उदङ्मुखः। तयोर्मध्ये उत्तरां विकर्णीमनूकस्योत्तरदिशि उदङ्मुख उपदध्यात् ॥२४॥

**सकृन्नित्ये ॥२५॥**

सादनसूददोहसी भवतः। पूर्वोक्तस्यैवायं प्रपञ्चः ॥२५॥

---

( १ ) आसामिष्टकानामुपरि एवं त्रिधा एवाष्टात्रिष्टकाः पूर्वोक्तेनैव प्रकारेण पुनरुपदध्यात्। अत्र गार्हपत्यस्य पुरस्तात्पश्चाच्च त्रिष्टुब्जगत्यन्तरालेऽर्द्धपादभागानां प्रागायतामेकैकां पङ्क्तिमुपदध्यात्। तत्रोदङ्मुखश्च तत्र उपधायापरेण परिक्रम्य दक्षिणामुखः पश्चिमयोर्दक्षिणामुदक्संस्थां चोपदध्यात्। ततस्तेनैव परीत्योदङ्मुखः प्रथमं पूर्वयोरुत्तरां, ततो दक्षिणामुपदध्यात्। एता अपि चतस्रोऽर्द्धपद्याः प्राग्लक्षणाः। पुरस्तात्पश्चाच्च द्वे द्वे पद्ये उदग्लक्षणे, अष्टावप्यर्द्धोत्सेधा इति।

**पुरुषाभिहोमवत्तिष्ठन्नग्निं प्रोक्षति हिरण्यशकलसहस्रेण शते द्वे द्वे प्रकिरति "सहस्रस्येति (१५।६५) प्रतिमन्त्रं‍ठ० सहस्रस्येति प्रतिमन्त्रम् ॥२६॥**

पुरुषाभिहोमवत् सपक्षपुच्छमिष्टकाचितमग्निमेकस्मिन्नुदकपूर्णे पात्रे हिरण्यशकलानां सहस्रं प्रक्षिप्य ( ८।७।४।७ ) तैः प्रोक्षेत्। तत्राग्नेः पश्चात्प्राङ्मुखः, उत्तरतो दक्षिणामुखः, पुरस्तात्प्रत्यङ्मुखः, दक्षिणत उदङ्मुखः, पुनः पश्चात्प्राङ्मुखस्तिष्ठन्निति ॥२६॥

द्वादशी कण्डिका ॥ १२ ॥

इति श्रीमन्महर्षिकात्यायनप्रणीते श्रौतसूत्रे महामहोपाध्यायश्रीश्रीप्रभुदत्तशास्त्रिणां सूनुना विद्याधरशर्मणा कृतायां सरलाख्यायां वृत्तौ सप्तदशोऽध्यायः।

---

# अष्टादशोऽध्यायः ।

**शतरुद्रियहोम उत्तरपक्षस्याऽपरस्यां स्रक्त्यां परिश्रित्स्वर्कपर्णेनार्कं काष्ठेन शानयन्त्सन्ततं जर्त्तिलमिश्रान् गवेधुकासक्तूनजाक्षीरमेके तिष्ठन्नुदङ् "नमस्त" इत्यध्यायेन ( १६।१-६६ ) ॥ १ ॥**

शतरुद्रियसंज्ञको होम ( ६।१।१।१ ) उत्तरपक्षस्य वायव्यकोणे पूर्वं निखातासु जङ्घामात्र्याद्यासु परिश्रित्सु कार्यो, नाहवनीये ।

तदेवाह—

जर्त्तिलमिश्रितान् गवेधुकासक्तून् अर्कपत्रेण दक्षिणहस्तस्थितेन जुहूस्थानीयेन तिष्ठन्नुदङ्मुखोऽध्वर्युर्नमस्त इत्यध्यायेन जुहोति । किं कुर्वन् , तान् सक्तून् अर्ककाष्ठेन सव्यहस्तधृतेन परिश्रित्सु पातयन् । एके आचार्या अत्र अजाक्षीरं जुह्वति, न जर्त्तिलमिश्रान् गवेधुकासक्तून् । जर्त्तिला आरण्यतिलाः । गवेधुका आरण्यगोधूमाः ॥१॥

**अनुवाकान्ते (१६।१-२६) स्वाहाकारो जानुमात्रे ॥ २ ॥**

नमस्त इति षोडशर्चः प्रथमोऽनुवाकः । ततः पञ्चभिः पञ्चभिर्मन्त्रैरनुवाकद्वयम् । एवं च षड्विंशतिमन्त्राणामन्ते जानुमात्रे परिश्रिति स्वाहाकारो विधेयः ( ६।१।१।११ ) ॥२॥

**पञ्चान्ते (१६।२७-३७) नाभिमात्रे ॥ ३ ॥**

तत एकादशभिर्मन्त्रैश्चतुर्थ- पञ्चमावनुवाकौ । तदन्ते सुधन्वने च ( १७।३७ ) इत्यत्र नाभिमात्रे परिश्रिति स्वाहाकारः कर्त्तव्यः ॥ ३ ॥

**प्राक् च प्रत्यवरोहेभ्यो मुखमात्रे ॥ ४ ॥**

नमोऽस्तु रुद्रेभ्य (६-६३-६६) इति त्रयः प्रत्यवरोहमन्त्राः । तेभ्यः प्राक् मुखमात्रे परिश्रिति स्वाहाकारो विधेयः ॥ ४ ॥

**प्रतिलोमं प्रत्यवरोहान् जुहोति प्रमाणेषु "नमोऽस्त्वित्ति प्रतिमन्त्रम् ॥ ५॥**

नमोऽस्त्विति कण्डिकात्रयेण प्रतिलोमं होमः । ये दिवि ( ६४ ) इति मुखमात्रे, येऽन्तरिक्षे (६५) इति नाभिमात्रे, ये पृथिव्याम् (६६, इति जानुमात्र इति ॥५॥

**हवने प्रास्यति चात्वाले ॥ ६ ॥**

हूयते आभ्यामिति हवने अर्कपर्णार्ककाष्ठे । ते उभे अपि चात्वाले प्रक्षिपेत् ॥ ६ ॥

इति प्रथमा कण्डिका ॥१॥



**चित्यं परिषिञ्चत्यग्नीद्दक्षिणे निकक्षेऽद्रिं कृत्वाऽश्मन्नूर्जमित्यद्रेरधि ( १७ । १ ) ॥ १ ॥**

अग्नीत् दक्षिणपक्षस्य अपरसन्धिसमीपवर्त्तिनि आत्मभागे पाषाणं निधाय तस्माद्द्रेरारभ्य अश्मन्नूर्जमिति मन्त्रेणाग्निं प्रदक्षिणं सपक्षपुच्छं जलधारया समन्तात्सिञ्चति ॥१॥

**"अश्मंस्ते क्षुदित्यद्रा ( १७।१ ) कुम्भं कृत्वा" मयि त ऊर्गित्यादायैवं (१७।१) द्विरपरम् ॥ २ ॥**

परिषेकानन्तरमग्नीदश्मंस्ते क्षुदिति मन्त्रेण तस्मिन् पाषाणे कुम्भं निधाय पाषाणात्कुम्भमादाय पुनरश्मन्नूर्जमिति परिषिञ्चेत् । ततः पुनः अश्मंस्त इति कुम्भस्य पाषाणे निधानम्, पुनरपि मयि त इति कुम्भादानम् , अश्मन्निति परिषेकः, अश्मंस्त इति पाषाणे कुम्भनिधानमित्येवं द्विरपरं कुर्यात् ॥ २ ॥

**तावत्प्रतिपर्यैति ॥ ३ ॥**

ततोऽप्यदक्षिणमग्नीत् त्रिरग्निं परिक्रामेत् ( ६।१।२७ ) ॥ ३ ॥

**कुम्भेऽद्रिं कृत्वा दक्षिणस्यां वेदिश्रोणौ प्राङ् निष्ठन्दक्षिणाऽस्यति "यं द्विष्म" इति ( १७।१ ) ॥ ४ ॥**

अध्वर्युस्तस्मिन्कुम्भे तमेव पाषाणं निधाय दक्षिणस्यां वेदिश्रोणौ प्राङ्मुखस्तिष्ठन् दक्षिणस्यां दिशि अदूरे तमश्मगर्भं कुम्भं यं द्विष्म इति निरस्येत् ॥ ४ ॥

**अभिन्ने भेत्तवै ब्रूयात् ॥ ५ ॥**

यदि कुम्भो न भिद्येत तदाऽग्नीदध्वर्युं भेत्तवै इति अध्येषणां कुर्यात् । भेदनं चाध्वर्युः कुर्यात्प्रधानत्वात् ( ६।१।२।१२ ) ॥ ५ ॥

किं कुम्भविषयमेतद्भेदनमुताद्रिविषयमिति ? सूत्रेणैवोपक्रमते—

**कुम्भे भेदनꣳ सामर्थ्यात् ॥ ६ ॥**

कुम्भविषयमेतद्भेदनं, नाद्रिविषयम् । कुतः ? सामर्थ्यात् । यदि न भिद्येत (६।१।२।१२) इति संशयितवचनस्य सङ्गतार्थत्वादित्यर्थः । इतरथाऽश्मनो दृढतरत्वाद्भेदशङ्कैव न स्यात् । तत्र यदि न भिद्येतेति संशयितवचनमसमर्थं स्यादिति ॥ ६ ॥

**अश्मनि वाऽर्थवादात् ॥ ७ ॥**

वाऽवधारणे । अश्मन्येवायं प्रैषो, न कुम्भे । कुतः ? अर्थवादात् । "तदश्मनि क्षुधं दधाति" ( ६।१।२।५ ) इति वाक्यशेषादित्यर्थः ॥ ७ ॥

**वाच्यत्वाच्च ॥ ८ ॥**

यदि चाश्मविषयमेतद्भेदनं, तदा वक्तव्यं स्यात् 'यदि न भिद्येतेति । कुम्भस्य तु मृदुत्वादवश्यं भेदनमिति ॥ ८ ॥

**अनपेक्षमेत्योदङ् प्राङ् तिष्ठन्नात्मन उपरि प्रापणान्ते जपतीमा म" इति ( १७।२ ) ॥ ९ ॥**

कुम्भं निरस्य पृष्ठतोऽनवलोकयन्तोऽग्निं प्रत्यागत्य यजमान ईशानदिगभिमुखस्तिष्ठन् आत्मन उपरि हस्तं प्रसार्य चयनप्रदेशं यत्र स्प्रष्टुं शक्नोति तत्र स्पृष्टे सति इमा म इति मन्त्रं सस्वरं जपेत् ॥ ९ ॥

**मण्डूकावकावेतसशाखा वेणौ बध्वाऽवकर्षति मन्त्रकृष्टवत्समुद्रस्य त्वेति ( १७।४-७ ) प्रत्यृचम् ॥ १० ॥**

भेक—शैवाल—वेतसवृक्षशाखा वंशे बध्वा अग्निक्षेत्रकर्षणोक्तक्रमेण ( २७।२।१२ ) एतत्त्रयं भूमिलग्नं कृषेत् ॥ १० ॥

**पक्ष-पुच्छानि चाभ्यात्ममग्ने पावक रोचिषेति ( १७।८-१० ) ॥ ११ ॥**

पक्षपुच्छानि प्रान्तादारभ्य अभ्यात्मसंमुखं सप्तभिर्मन्त्रैर्विकर्षति ॥ ११ ॥

**अन्त्यमुत्तरम् ॥ १२ ॥**

उत्तरं पक्षं सर्वान्ते विकर्षेत् ( ६।१।२।२९ ) । न तु पक्षपुच्छानीति ( ६।१।२।३० ) श्रुतत्वात् आदौ पक्षस्ततः पुच्छ इति ॥ १२ ॥

**वेणुमुत्करे कृत्वा चित्यमालभ्य तिष्ठन् ॥ १३ ॥**

द्वितीया कण्डिका ॥ २ ॥



**हिङ्कृत्य साम गायति पुरस्ताद्गायत्रम् ॥ १ ॥**

अध्वर्यु ( ६।१।२।४३ ) मण्डूकादिसहितं वंशमुत्करे कृत्वा चित्यमग्निमालभ्य तिष्ठन् हिङ्कारं कृत्वाऽग्नेः पुरस्तात्प्रदेशे गायत्रं साम गायेत् ॥ १ ॥

**दक्षिणे पक्षे रथन्तरमुत्तरे बृहदात्मनि वामदेव्यं, पुच्छे यज्ञायज्ञियं, दक्षिणे निकक्षे प्रजापतिहृदयमग्न्युक्थ्यꣳ शꣳसेत्याह ॥ २ ॥**

दक्षिणपक्षादौ रथन्तरादीनि सामानि गायेदध्वर्युः । दक्षिणपक्षस्य अपरसन्धिसमीपस्य आत्मप्रदेशो दक्षिणनिकक्षः । सामगानानन्तरमध्वर्युः 'अग्न्युक्थ्यꣳ शंस' इति होतारं प्रेष्येत् ॥ २ ॥

**औपवसथ्ये विसृष्टवाचि पञ्चगृहीते हिरण्यशकलान् प्रास्यति पञ्च ॥ ३ ॥**

औपवसथ्ये अग्नीषोमीयेऽहनि दीक्षिते विसृष्टवाचि सति पञ्चगृहीते आज्ये पञ्च हिरण्यखण्डान् प्रक्षिपेत् ( ६।२।१।१ ) ॥ ३ ॥

**दधि-मधु-घृतं पात्र्याꣳ समासिच्य स्थाल्यां वा महामुख्यां कुशमुष्टिं चोपर्युभयमादाय चित्याऽऽरोहणं "नमस्त" इति ( १७।११ ) ॥ ४ ॥**

वारण्यां पात्र्याम्, महामुख्यां स्थाल्यां वा दध्यादीन् कृत्वा तदुपरि दर्भमुष्टिं निदध्यात् । ततः पञ्चगृहीतमाज्यं, दध्यादियुतां पात्रीं, स्थालीं चेत्युभयमादाय नमस्त इति चित्यस्याग्नेरारोहणं कुर्यादध्वर्युः । ४ ॥

**स्वयमातृण्णायां पञ्चगृहीतं जुहुयान्नाभिवद्धिरण्यादर्शनं च "नृषदे वेडिति ( १७।१२ ) प्रतिमन्त्रम् ॥ ५ ॥**

अध्वर्युः स्वयमातृण्णाया इष्टकाया उपरि नाभिव्याघारणवत् ( ५।४।१२ ) पञ्चगृहीतमाज्यं नृषद इत्यादिभिः पञ्चभिर्मन्त्रैः प्रतिमन्त्रं जुहुयात् । नाभिव्याघारणे उक्तं ( ५।४।१२ ) हिरण्यदर्शनं तु अत्र न भवति ॥ ५ ॥

**समासिक्तान् कुशैः प्रोक्षति सपरिश्रित्कं बाह्येन च "ये देवा" इति ( १७।१३ ) ॥ ६ ॥**

कुशाग्राणि समासिक्ते दध्यादौ न्यज्य तैः परिश्रिद्भिः सहितं सपक्षपुच्छमग्निं, परिश्रिद्भ्यो बहिःप्रदेशे च प्रोक्षेत् ( ६।२।१।१२ ) ॥ ६ ॥

"प्राणदा" ( १७।१५ ) इत्यवरोहति ॥ ७ ॥

अवतरति ॥ ७ ॥

एवमारोहणावरोहणमतः ॥ ८ ॥

अत ऊर्ध्वमेतेनैव मन्त्रद्वयेन आरोहणमवतरणं च कर्तव्यम् ॥ ८ ॥

उपसदन्ते प्रवर्ग्योत्सादनं यथोक्तमग्नौ परिष्यन्दे वा ॥ ९ ॥

ततः शालायां प्रत्यागतोऽध्वर्युरुपसदं कृत्वा तदन्ते पूर्वोक्तविधिना इष्टकाचितिस्थाने परिष्यन्दे वा प्रवर्ग्योत्सादनसंज्ञं कर्म कुर्यात् । जलमध्यस्थो जलानाच्छादित उच्चप्रदेशः परिष्यन्दो द्वीपः ॥ ९ ॥

अग्नौ प्रवर्ग्योत्सादनपक्षे विशेषमाह—

स्वयमातृण्णास्पृष्टं प्रथमम् ॥१०॥

अग्निपक्षे प्रथमं प्रवर्ग्यं स्वयमातृण्णासंलग्नमुत्सादयेन्निदध्यात् ( ६।२।१।२३ ) ॥१०॥

पञ्चगृहीतं जुहोत्यग्निस्तिग्मेनेत्यृचा ( १७।१६ ) ॥११॥

प्रवर्ग्योत्सादनानन्तरं पञ्चगृहीतमाज्यं शालाद्वार्ये जुहुयात् ॥११॥

षोडशगृहीतार्धमनुवाकशेषेण (१७।१७-२४) ॥१२॥

ततः षोडशगृहीतमाज्यं गृहीत्वा य इमेत्यष्टभिर्मन्त्रैरेकामाहुतिं जुहुयात् ॥१२॥

"चक्षुषः पितेत्यपरमनुवाकेन (२५।३२) ॥१३॥

षोडशगृहीतस्यापरमर्द्धमष्टभिर्ऋग्भिरेकामाहुतिं जुहुयात् ॥१३॥

आर्द्रौदुम्बरीर्घृतोषितास्तिस्र "उदेनमित्यादधाति (१७।५०-५२) प्रत्यृचम् ॥१४॥

घृतोषिताः = सकलां रात्रिं घृतमध्ये कृतनिवासाः ॥१४॥

अग्निं प्रणयति (५।४।२) ॥१५॥

तत्र विशेषमाह—

प्रेष्यत्युद्यच्छेध्ममुपयच्छोपयमनीः ॥१६॥

प्रतिप्रस्थाताऽध्वर्युं प्रेष्येत् ॥१६॥

अग्नये प्रह्रियमाणायानुब्रूह्यग्नीदेकस्फ्ययाऽनूदेहि, ब्रह्मन्नप्रतिरथं जपेति (१७।३३-४४) ॥१७॥

प्रतिप्रस्थातैव होतारमग्नीधं ब्रह्माणं च प्रेष्येत् (६।२।३।१) ॥१७॥

त्रिरुक्तायामुद्यम्योदु त्वेति (१७।५३) ॥१८॥

होत्रा प्रथमायामृचि त्रिरुक्तायामध्वर्युः प्रदीप्तमिध्मं शालाद्वार्यादूर्ध्वमुत्पादयेत् ॥१८॥

चित्यं प्रति गच्छन्ति "पञ्च दिश" इति (१७।५४-५८) ॥१९॥

ब्रह्महोत्रध्वर्युप्रतिप्रस्थातृयजमाना मन्त्रं पठन्तः ॥१९॥

आग्नीध्रदेशाद्दक्षिणं पृष्ठ्यासहितं पृश्न्यश्मानमुपदधाति "विमान" इति (१७।५९-६०) ॥२०॥

पृष्ठ्यासहितं चित्रवर्णं तनुं वृत्तं पाषाणं निदध्यात् ॥२०॥

न नित्ये ॥२१॥

अस्मिन्नश्मनि नित्ये सादनसूददोहसौ न भवतः। इष्टकासंस्तवात्प्राप्तयोर्निषेधः ॥२१॥

निधायैनमतिक्रामतीन्द्रं विश्वा" इति (१७।६१-६४) ॥२२॥

एनमश्मानं क्वचित्सुगुप्ते देशे स्थापयित्वा सर्वे चितिं प्रति गच्छेयुः ॥२२॥

इति कात्यायनश्रौतसूत्रवृत्तौ अष्टादशेऽध्याये तृतीया कण्डिका ॥ ३ ॥

---

"क्रमध्वमग्निनेति (१७।६५-६६) चित्यमारोहन्ति ॥ १ ॥

स्वयमातृण्णामध्यग्निं धारयञ्छुक्लवत्सापयसाऽभिजुहोति कृष्णाया दोहनेन स्वयमातृण्णामवसिञ्चन्नक्तोषासेति (१७।७०-७१) ॥ २ ॥

अध्वर्युः स्वयमातृण्णाया उपरि प्रतिप्रस्थात्रा तमग्निं धारयन् कृष्णवर्णायाः शुक्लवत्साया गोः पयसा स्वयमातृण्णामवसिञ्चन् मृन्मयेन दोहनपात्रेण जुहूस्थानीयेन इध्मस्थेऽग्नौ मन्त्रद्वयेन जुहुयात्। अस्य जुहोतित्वान्मन्त्रवर्जं साम्नाय्यधर्माणां प्रवृत्तिः। दोहनपात्रे दोहनधर्माः कार्याः, जुहूकार्यापन्नत्वात् ॥ २ ॥

पैतुदारवाद्यत्रैके ॥ ३ ॥

एके आचार्याः पैतुदारवैः परिदधातीत्यारभ्य (५।४।१४-१५) सम्भारनिवपनान्तमत्रावसरे कुर्वन्ति. एके मयि गृह्णामीति (१३।१) जपात्प्राक् (१७।३।२७)। वस्तुतस्तु पैतुदारवादीनामग्न्यर्थत्वादत्रैव संभारनिवापः कार्य इत्यवधारणेति कर्कादयः ॥ ३ ॥

तस्यामग्निं निदधाति "सुपर्णोऽसीति (१७।७२) वषट्कारेण ॥ ४ ॥

वषट्कारान्तेन मन्त्रेण स्वयमातृण्णायामग्निं स्थापयेत् ॥ ४ ॥

नित्ये च ॥ ५ ॥

अत्र सादन-सूददोहसावपि कुर्यात् ॥ ५ ॥

समिदाधानꣳ शामीली-वैकङ्कत्यौदुम्बर्यस्ताꣳ सवितुरिति (१७।७४-७६) प्रत्यृचमुत्तमा सकर्णका ॥ ६ ॥

शमी-विकङ्कतोदुम्बरवृक्षीयाणां समिधामाधानं ताꣳ सवितुरिति प्रत्यृचं कुर्यात्। तत्र तृतीया औदुम्बरी समित् सकर्णका आधेया। कर्णको दारुस्फोटो रोगस्तद्वती ॥ ६ ॥

कर्णकाभावे दधिद्रप्साक्ता ॥ ७ ॥

घनीभूतं दधि द्रप्सः। तेन अक्तेत्यर्थः ॥ ७ ॥

स्रुवाहुती जुहोत्यग्ने तमद्येति (१७।७७-७८) प्रत्यृचम् ॥ ८ ॥

पूर्णाहुतिं च "सप्त त" इति (१७।७९) ॥ ९ ॥

पूर्णया स्रुचा आहुतिः पूर्णाहुतिः ॥ ९ ॥

तिष्ठन्त्समिधः सर्वत्र मध्ये ॥ १० ॥

अग्नेर्मध्यप्रदेशे तिष्ठन् समिध आदध्यात्। एवं सर्वत्र तिष्ठतैव समिदाधानं कार्यम् ॥ १० ॥

**अन्तेष्वाहुतीरुपविश्य ॥ ११ ॥**

प्रक्षिप्तानां समिधां प्रान्तेषु परित आज्याहुतीरुपविश्य जुहुयादध्वर्युः ॥ ११ ॥

**अत्र पञ्चम्याः सप्तर्चोपस्थानᳬ सर्वोपधानात् ॥ १२ ॥**

पञ्चम्याश्चितेः सप्तर्चोपस्थानमस्मिन्नवसरे कर्त्तव्यम् । कुतः ? सर्वोपधानात् ॥ १२ ॥

**धिष्ण्यान्वा चित्वोत्तमासंयोगात् ॥१३॥**

वाऽवधारणे । धिष्ण्यांश्चित्वैव पञ्चम्याः सप्तर्चोपस्थानं कार्यं न ततः प्राक् । कुतः ? उत्तमासंयोगात् ॥१३॥

**अभिमृशेदिच्छन्त्संवत्सरोऽसीति (२७।५४) ॥१४॥**

चित्यमग्निं स्पृशेदध्वर्युः । इच्छन्नित्यनेन विकल्पः, स्पृशेन्न वा स्पृशेदिति ॥१४॥

**एवं यथाचिति ॥१५॥**

संवत्सरोऽसीति मध्ये सुपर्णचिदसीति पठितमस्ति। तच्च सुपर्णचितिपक्षे एवं प्रयोज्यम् । द्रोणचिदादिपक्षे तु द्रोणचिदसीत्यादि वाक्यं पठनीयमिति भावः ॥१५॥

**वैश्वानरमारुतान्निर्वपति यथोक्तम् ॥१६॥**

वैश्वानरो द्वादशकपालो, मारुताः सप्तकपालाः पुरोडाशाः। यथोक्तग्रहणात वैश्वानरो यजतिर्मारुता जुहोतयः (६।२।१।१६) ॥१६॥

**वैश्वानरमधिश्रित्य दक्षिणोत्तरौ मारुतौ ॥१७॥**

वैश्वानरं पुरोडाशं मध्येऽधिश्रित्य तस्य दक्षिणोत्तरौ प्रथमद्वितीयौ मारुतौ सप्तकपालौ पुरोडाशावधिश्रयेत् ॥१७॥

**पश्चाच्च संकृष्टतरौ ॥१८॥**

तयोर्दक्षिणोत्तरयोः पश्चात् सन्निहिततरौ तृतीयचतुर्थौ मारुतौ पुरोडाशा वधि श्रयेत् ॥१८॥

**एवमपरौ ॥१९॥**

एवं पञ्चमषष्ठौ मारुतौ तृतीयचतुर्थयोः पश्चात् सन्निहिततरावधिश्रयेत् ॥१९॥

**पश्चादरण्येऽनूच्यम् ॥२०॥**

अरण्येऽनूच्यो वक्तव्यः पठनीयो मन्त्रो यस्य सोऽरण्येऽनूच्यः सप्तमो मारुतः पुरोडाशः । तं सप्तमं पुरोडाशं सर्वेषां मारुतानां पश्चादधिश्रयेत् । यथा त्रिकोणं सम्पद्यते ॥२०॥

**होमासादनयोश्च ॥२१॥**

मारुतानां होमे आसादने चायमेव देशविधिर्बोध्यः ॥२१॥

**पुच्छादपरान् कुशानास्तीर्याहवनीयसहितान्वा तत्रासादनम् ॥२२॥**

पुच्छस्यापरदेशं वेदित्वेन परिकल्प्य तत्र बर्हिस्तरणं कृत्वा तत्र वैश्वानरादीना मासादनं कुर्यात् । अथवा आहवनीयसंलग्नं बर्हिरास्तृणुयात् ॥२२॥

**वैश्वानरेण प्रचर्य सर्वहुतेन हस्तेन मारुतान् जुहोत्युपविश्य, वैश्वानरेण वा वैश्वानरं पृथुं कृत्वा "शुक्रज्योतिरिति ( १७।८०-८५ ) प्रतिमन्त्रम् ॥२३॥**

अथवा वैश्वानरं पुरोडामशमतिविपुलं कृत्वा वैश्वानरपुरोडाशस्योपर्येव सर्वानपि मारुतान् जुहुयात् ॥२३॥

विमुखेनारण्येऽनूच्यम् ॥२४॥

अरण्येऽनूच्यं सप्तमं मारुतं पुरोडाशं विमुखसंज्ञकेन उग्रश्चेति ( ३६।७) मन्त्रेण जुहुयादध्वर्युः ॥२४॥

"इद्रं दैवीरिति जपति ( १७।८६ ) ॥२५॥

"इमꣳ स्तनमिति (१७।८७-९९) वाचयति ॥२६॥

अध्यायसमाप्तिं यावज्जपेद्वाचयेद्वेति विकल्पः ॥२६॥

इति चतुर्थी कण्डिका ॥ ४ ॥



वसोर्द्धारां जुहोत्यौदुम्बर्या पञ्चगृहीतꣳ सन्ततं यजमानोऽरण्येऽनूच्येऽग्निप्रासे "वाजश्च म" इत्यष्टानुवाकेन ( १८।१-२९ ) ॥१॥

अरण्येऽनूच्यस्य पुरोडाशस्योपरि अविच्छिन्नधारया वसोर्द्धारासंज्ञका आहुतीर्जुहुयाद्यजमानः ( ९।३।३।१८ ) ॥ १ ॥

हुत्वा स्रुक्प्रासनम् ॥ २ ॥

वसोर्द्धारां हुत्वा तस्मिन्नग्नौ स्रुक्प्रासनं कुर्यादध्वर्युः ( ९।३।३।१४ ) ॥ २ ॥

"अग्नये स्वाहेति ( १०।५ )षट् पार्थानि जुहोति ॥ ३ ॥

षड्भिर्मन्त्रैः पार्थसंज्ञका आहुतीर्जुहुयात् (९।३।४।८) ॥ ३ ॥

वाजप्रसवीयानि वप्रावत्सम्भृत्य चमसवत्स्रुवेण वाजपेयिकानि "वाजस्येममिति (९।२३-३०) ॥ ४ ॥

वप्रावत्=अग्निक्षेत्रवपनवत् ( १७।३।६-७ ) सर्वौषधं सम्भृत्य ( १४।५।२०-२१ ) वाजपेयिकानि वाजप्रसवीयानि जुहुयात् ॥ ४ ॥

आग्निकानि च "वाजस्य न्विति (१८।३०-३६) ॥ ५ ॥

स्रुवं प्रास्य परिश्रित्स्पृक् कृष्णाजिनमास्तीर्य पुच्छादुत्तरꣳ शेषेऽपः कृत्वा ॥ ६ ॥

स्रुवं प्रास्य परिश्रित्संलग्नं पुच्छादुत्तरतः कृष्णाजिनमास्तीर्य हुतशेषे अपः कृत्वा ॥६॥ कुत एतत्—

अभिषेकसामर्थ्यात् ॥७॥

अभिषेकस्य द्रवद्रव्यसाध्यत्वात्केवलेन सर्वौषधशेषेण तदसंभवात् सामर्थ्याच्छेषेऽपामासेकं कृत्वा सोदकेन शेषेणाभिषेकः कार्य इति पूर्वपक्षः ॥ ७ ॥

सिद्धान्तमाह—

क्षीरोदके वा वाजपेयिकानीति श्रुतेः ॥८॥

नैव शेषेऽपामासेकः कार्यः । कुतः ? वाजपेयिकानीति श्रुतेः । वाजपेये शेषमध्ये क्षीरोदके स्त एवेति ॥८॥

तत्राभिषिच्यते ( ९।३।४।१४ ) ब्रह्मवर्चसकामश्चित्यन्वारब्धो "देवस्य त्वेति ( १८।३७ ) ॥ ९ ॥

**तिष्ठन् बुभूषुः ॥१०॥**

भूतिकामं यजमानं कृष्णाजिने तिष्ठन्तमभिषिञ्चेत् ॥१०॥

**भूत उपविष्टः ॥११॥**

श्रीमन्तं कृष्णाजिनोपविष्टमभिषिञ्चेत् ॥११॥

**बस्तचर्मणि पुष्टीच्छुः ॥१२॥**

पुष्टिकामो यजमानोऽजचर्मण्युपविष्टोऽभिषेचनीयः ॥१२॥

**उभयेच्छुरुभयोः ॥१३॥**

पुष्टि-ब्रह्मवर्चसोभयकाममुक्तचर्मद्वये स्थितमभिषिञ्चेत् ॥१३॥

**एके दक्षिणतश्चित्ये वा ॥१४॥**

एके चित्यस्य दक्षिणतोऽवस्थितमभिषिञ्चन्ति। अपरे चित्यस्योपर्यवस्थितमभिषिञ्चेदिति वदन्ति (६।३।४।११-१२) ॥१४॥

**प्राश्य चमसमिन्द्राय स्वाहेति (१०५) षड् जुहोति प्रतिमन्त्रम् ॥१५॥**

अभिषेकानन्तरं तमौदुम्बरचमसमाहवनीये प्रक्षिप्य पार्थसंज्ञकान् होमान् कुर्यात् ॥१५॥

**द्वादशगृहीतं विग्राहं जुहोत्यृताषाडिति (१८।३८।४३) प्रतिस्वाहाकारꣳ राष्ट्रभृतो, वाट्कारान्तः पूर्वः पूर्वो मन्त्रः ॥१६॥**

ततो द्वादशगृहीतमाज्यं गृहीत्वा तद् विग्राहं = विगृह्य विभज्य विभज्य तस्य द्वादशांशं द्वादशांशमृताषाडिति मन्त्रैः प्रतिस्वाहाकारं राष्ट्रभृत्संज्ञकान् होमान् कुर्यात्। तत्र पूर्वः पूर्वो मन्त्रो वाट्कारान्तः, उत्तरस्तु स्वाहाकारान्तः। अत्र पुꣳसे पूर्वस्मै जुहोत्यथ स्त्रीभ्यो, वषट्कारेण च स्वाहाकारेण च पुꣳसे जुहोति स्वाहाकारेण स्त्रीभ्यः" (९।४।४।६) इति श्रुत्या ऋताषाडित्यादिषु षट्सु मन्त्रेषु विभागः कर्तव्यः। तत्र यानि पुंलिङ्गानि पदानि तानि व्यवहितान्यप्यपकृष्यैकवाक्यतामुपनेयानि। एवं स्त्रीलिङ्गान्यपि अपकृष्याग्रिममन्त्रे पठितव्यानि। तेन 'ऋताषाडृतधामाऽग्निर्गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट्' इति पूर्वो मन्त्रः। 'तस्यौषधयोऽप्सरसो मुदो नाम ताभ्यः स्वाहा' इत्युत्तरः। अत्र च तस्यौषधय इति सापेक्षत्वाद् 'ऋताषाडृतधामाऽग्निर्गन्धवः' इत्यनुवर्तते। एवं सर्वत्र विभाग ऊह्यः (९।४।१।६) ॥१६॥

**पञ्चगृहीतं च रथशिरस्यध्याहवनीयं ध्रियमाणे पञ्च कृत्वः "स नो भुवनस्येति (१८।४४) ॥१७॥**

ततः पञ्चगृहीतमाज्यं गृहीत्वा प्रतिप्रस्थात्रा रथशिरस्याहवनीयस्योपरि समीप एव ध्रियमाणे स न इति मन्त्रावृत्त्या पञ्चकृत्वो जुहुयात्। ईषाग्रयोरुपरि यत्र युगस्य बधनं क्रियते तद्रथस्य शिरः ॥१७॥

**प्रदक्षिणꣳ रथनीडपरिहारः ॥१८॥**

रथस्योपस्थं पाश्चात्यभागो धान्याद्यावपनस्थानं नीड इत्युच्यते। तस्य प्रतिहोमं सर्वासु दिक्षु परिहारः = परिणयनं कर्तव्यम् ॥१८॥

पक्षान्तरमाह—

**पुरुषाहुतिवद्वा ॥१९॥**

पुरुषाहुतिः पूर्वमुक्ता (१७।४।७)। तद्वत् रथनीडस्य परितो नयनं कर्तव्यम्, न प्रदक्षिणम् ॥१९॥

**अध्वर्युरभिमुखो रथशिरः ॥२०॥**

अध्वर्यू रथशिरःसंमुख उपविष्टः पञ्चाहुतीर्जुहुयात्पक्षद्वयेऽपि ॥२०॥

इति कात्यायनश्रौतसूत्रेऽष्टादशेऽध्याये पञ्चमी कण्डिका ॥ ५ ॥

**वातहोमान् जुहोत्यञ्जलिनाऽऽहृत्य पुरस्ताद्बहिर्वेदेरधो दक्षिणस्यां धुर्युत्तरस्यां दक्षिणतो दक्षिणाप्रष्टेः "समुद्रोऽसीति (१८।४५) प्रतिमन्त्रम् ॥१॥**

रथशिरसि पञ्चगृहीतहोमानन्तरमध्वर्युस्तमेव रथमग्नेरवतार्योत्तरतो वेदिमध्ये एव प्राङ्मुखं युगयोक्त्रादिसहितमवस्थाप्य तस्य वक्ष्यमाणेषु स्थानेषु त्रीन् वायोर्होमान् मन्त्रत्रयेण प्रतिमन्त्रं रथयुगस्य दक्षिणस्यां धुरि अधः- समीप एवाधस्तात् अश्वादियोजनस्थाने बहिर्वेदेरुत्तरस्या दिश अञ्जलिना वातमानीय जुहुयात्। ततो दक्षिणस्या दिशो बहिर्वेदे रञ्जलिना तमाहृत्य दक्षिणाप्रष्टेः स्थाने युगस्य धुरि अधस्ताज्जुहुयात् ॥ १ ॥

**योक्त्रपरिहरणं च सर्वत्र ॥ २ ॥**

होमानन्तरं त्रिष्वपि होमेषु योक्त्रेण तस्य तस्य हुतस्य वातस्य अश्वस्थानीयस्य योजनं कुर्यात् ॥ २ ॥

**प्रगृह्याध्वर्योरावसथहरणम् ॥ ३ ॥**

वातहोमे युक्तं तं रथमूर्ध्वमुत्थाप्य अध्वर्योर्गृहे प्रापयेयुर्यजमानपुरुषाः ॥ ३ ॥

**दक्षिणाकालेऽध्वर्यवे ददात्यश्वांश्च ॥ ४ ॥**

पूर्वोक्तं रथं त्रीनश्वांश्च दद्यात् ॥ ४ ॥

**नव जुहोति "यास्त" इति(१८।४६-५०) प्रतिमन्त्रम् ॥ ५ ॥**

**जानन्ब्राह्मणोक्ता जुहुयाद्वा ॥ ६ ॥**

शाखान्तरीयब्राह्मणोक्ता आहुतीर्जुहुयान्न वेति विकल्पः (६।४।२।२७) ॥ ६ ॥

**हविर्द्धानप्रक्षालनाद्याग्नीध्रालम्भनात्कृत्वा धिष्ण्यांश्चिनोत्यष्टेष्टकाँल्लोकम्पृणाभिश्चतुःस्रक्तींस्तिरश्चो न्युप्य न्युप्य ॥७॥**

हविर्द्धानप्रक्षालनादि पूर्वमुक्तम् (८।३।१९) तदादि "निष्ठितमभिमृशति" (८।६।११) इत्येतदन्तमाग्नीध्रस्पर्शनान्तं प्राकृतं कर्म कृत्वा धिष्ण्यांश्च पूर्ववत् (८।६।१२) न्युप्य न्युप्य तानेव धिष्ण्यान् चतुष्कोणान् तिरश्चः=तिर्यक् प्रस्तारान् एकचितिकान् ( न तूपर्युपरि चयनेनोर्द्धान् पञ्चचितिकान् ) अष्टभिरष्टभिर्लोकम्पृणाभिरिष्टका भिश्चिनुयात् ॥ ७ ॥

**पृश्न्यश्मा चाग्नीध्रीये ॥ ८ ॥**

योऽश्माऽऽग्नीध्रदेशाद्दक्षिणतः पृष्ठ्यासमीपे उपधाय पूर्वं (१८।३।२०) क्वचित् स्थापितः, स एवाश्माऽऽग्नीध्रीये पुरीषनिवापानन्तरमुपधेयः ॥ ८ ॥

**सकृन्मन्त्रवचनम् ॥ ९ ॥**

**होत्रीये त्रिरेकविंशत्या ॥१०॥**

होतृधिष्ण्ये एकविंशतिसङ्ख्याकाभिरिष्टकाभिश्चयनं कर्तव्यम्। तत्र लोकम्पृणेति-मन्त्रस्त्रिः पठनीयः। द्विर्दशसु दशसु, तत एकस्यामिति ॥१०॥

ब्राह्मणाच्छंस्ये द्विरेकादशसु ॥११॥

ब्राह्मणाच्छंसिधिष्ण्ये प्रथमं दशसु, तत एकस्यामित्येकादशसु द्विर्मन्त्रवचनम् ॥११॥

षण्मार्जालीये ॥१२॥

मार्जालीये धिष्ण्ये षडिष्टका उपदध्यात्। तत्र सकृन्मन्त्रः ॥१२॥

यावदिष्टकं परिश्रितः परिनिधाय ॥१३॥

यस्मिन्धिष्ण्ये यावत्य इष्टका उपहितास्तस्मिन्धिष्ण्ये तावतीः परिश्रितः परितो निदध्यात्, न तु निखनेत्। तेन होतृधिष्ण्ये एकविंशतिः, मार्जालीये षट्, इतरेषु एकादशैकादशेति ॥१३॥

पुरीषं च तूष्णीम् ॥१४॥

अनुदेशाद्या पुरोडाशस्विष्टकृतोऽभिषेचनीयवत् ॥१४॥

"सदोद्वारं पूर्वेण तिष्ठन्ननुदिशति" (८।६।२३) इति पूर्वमुक्तम्। तदारभ्य अग्नीषोमीयपशुपुरोडाशस्विष्टकृत्पर्यन्तं राजसूयान्तर्गताभिषेचनीयसोमवत् कर्म कुर्यात्। तत्र हि अग्नीषोमीयस्य पशुपुरोडाशमनु देवसूहविषां निर्वापादि सविता त्वेत्यन्तमुक्तम् ( १५।४।४-१४ ) तत्सर्वमत्रातिदिश्यते ॥१४॥

अग्नियोजनं प्रातरनुवाकमुपाकरिष्यन्परिधीनालभ्य यथापूर्वमग्निं युनज्मीति (१६।५१-५३) प्रत्यृचम् ॥ १५ ॥

आग्निमारुतस्तोत्रपुरस्ताद्विमोचनं परिधिषन्ध्योर्दिवो मूर्द्धेति (१८।५१-५३) प्रत्यृचम् ॥१६॥

आग्निमारुतस्तोत्रस्य यज्ञायज्ञियस्य पुरस्तादग्निमोचनं (१७।३।१७) परिधीनां सन्ध्यालम्भनं कृत्वा कुर्यात् ॥१६॥

प्रायणीयेऽतिरात्रे युक्त्वोदयनीये विमोकमेके ॥ १७ ॥

एके प्रायणीयेऽतिरात्रेऽग्निं युक्त्वा तस्याग्नेरुदयनीये विमोकं कुर्वन्ति। अस्मिन्पक्षे त एव परिधयः, अन्त्ये चाहनि परिध्यनुप्रहरणम्। अपरे तु प्रत्यहं योजनं विमोचनं च कुर्वन्ति ॥ १७ ॥

अध्वरसमिष्टयजुरन्त "इष्टो यज्ञ" इति (१८।५६-५७) प्रत्यृचमपरे ॥ १८ ॥

"समिन्द्रण" इत्यादीनि नव अध्वरसमिष्टयजूंषि (१०।८।१२)। तदन्ते द्वे आग्निके समिष्टयजुषी जुहुयात् ॥ १८ ॥

पशुपुरोडाशमन्वनूबन्ध्यस्य देविकाहवींषि निर्वपति यजप्रैषाणि ॥१९॥

अनूबन्ध्यस्य पशुपुरोडाशं हुत्वा यजप्रैषाणि ( अनुवाचनप्रैषवर्जितानि ) देवसूहवींषि ( १५।४।४ ) निर्वपेत् ॥ १९ ॥

तत्र देवता हवींषि चाह—

अनुमतिराका-सिनीवाली-कुहूभ्यश्चरवो धात्रो द्वादशकपालः सर्वहुतः ॥ २० ॥

पञ्चमं हविः ॥२०॥

हृदयशूलान्ते स्रुवाहुतीर्जुहोति "यदाकूतादिति(१८।१८-६५)प्रत्यृचमष्टौ ॥२१॥

अनूबन्ध्याहृदयशूलान्ते ॥ २१ ॥

चित्रोऽसीति चित्यनाम कृत्वोपतिष्ठते "येऽ अग्नय" (१८।६७) इति ॥२२॥

तूपरमिथुनदक्षिणोदवसानीयाऽन्ते ॥२३॥

पूर्वोक्तां पञ्चकपालपुरोडाशामुदवसानीयां कृत्वा ततोऽन्ते मित्रावरुणदेवताकामिष्टिं पयस्याद्रव्यकां शृङ्गहीनमिथुनगोदक्षिणां कुर्यात् ॥२३॥

वर्षत्यसरणमतः ॥२४॥

अत ऊर्ध्वमग्निचिता वर्षति सति इतस्ततो न गन्तव्यम् ॥२४॥

पक्षयभोजनम् ॥२५॥

सवर्णोपायी ॥२६॥

सवर्णा द्विजातिसंबन्धिनी स्त्री, तामुपेयात्, न शूद्राम् ॥२६॥

द्वितीये स्वामेव ॥२७॥

द्वितीये चयने स्वजातीयामेवोपेयात्, न जात्यन्तरस्त्रियम् ॥२७॥

तृतीये न कां चन ॥२८॥

ब्रह्मचार्येव भवेदित्यर्थः ॥२८॥

उक्तनियमेषु अवधिमाह—

यावज्जीवं व्रतान्यविशेषात् ॥२९॥

"वर्षत्यसरणमत" इत्यादीनि व्रतानि जीवनावधि कुर्यात्। कुतः? अविशेषात्, कालविशेषस्याविधानादित्यर्थः ॥२९॥

संवत्सरं वा कालस्यानवस्थितत्वात् ॥३०॥

वाऽवधारणे। यावज्जीवमित्येवंरूपस्य कालस्य शास्त्रेऽनुपदेशात् संवत्सरमेव नियमाः ॥३०॥

तद्व्रतश्रुतेश्च ॥३१॥

"संवत्सरमिता वै व्रतचर्या" (५।५।३।२) ॥३१॥

चित्याशक्तौ पुनः सोमेज्याया ऽ स्वयमातृण्णा-विश्वज्योतिर्ऋतव्या-नामन्यतमाः ॥३२॥

उपधेयाः (६।५।१।५७-६०) ॥३२॥

पुनश्चितिम् ॥३३॥

पुनश्चितिं वा कुर्यात् ॥३३॥

अचयनं वा चित्यस्याहवनीयाभिसम्पत्तेश्चित्यस्याहवनीयाभिसम्पत्तेः ॥३४॥

अचयनं वा स्वयमातृण्णादीनां भवति। एकवारं चित्यस्योपरि निधानेनैवाहवनायाग्नेरेव सर्वदा चित्यात्मकता सम्पन्ना (६।५।१।६१) ॥३४॥

इति षष्ठी कण्डिका ॥६॥

इति महामहोपाध्यायसाग्निकविद्वन्मूर्द्धन्यश्रीप्रभुदत्तशर्मशास्त्रिणां सूनुना विद्याधरशर्मणा विरचितायां कात्यायनसूत्रस्य सरलाख्यायां वृत्तावष्टादशोऽध्यायः ॥१८॥

# एकोनविंशोऽध्यायः ।

## सौत्रामणीयज्ञः ।

एवमग्निचयनमुपवर्ण्येदानीमवसरप्राप्तं सौत्रामणीसंज्ञकं पशुयागं विदधाति—

**ब्राह्मणयज्ञः सौत्रामण्यृद्धिकामस्य ॥ १ ॥**

ब्राह्मणस्य यज्ञो ब्राह्मणयज्ञः । कीदृशस्य ब्राह्मणस्येत्यत आह—ऋद्धिकामस्य । ऋद्धिकामोपादानादियं सौत्रामणी काम्येत्यवगम्यते । सौत्रामणीति कर्मनामधेयम् । तच्च आश्विन-सारस्वतैन्द्राणां त्रयाणामेव । न तु ऐन्द्रवायोधसयोरपि एतत्रितयातिरिक्तयोः । "आत्मा वै यज्ञस्य सौत्रामणी बाहू ऐन्द्रश्च वायोधसश्च" (१२।३।६।१६) इति लिङ्गात् । १॥

नैमित्तिकीं सौत्रामणीमाह—

**अग्निचित्सोमयाजि-सोमातिपूत-सोमवामिनाम् ॥ २ ॥**

अग्निचिदिति सोमयाजिविशेषणम् । योऽग्निचित्सोमयाजी भवति साग्निकेन सोमेनेष्टवानित्यर्थः । तस्य, सोमातिपूतस्य, सोमवामिनश्च सौत्रामणी भवति । सर्वत्र विशेषणांशस्यैव श्रवणेन साग्निके सोमयागे, यजमानसंबन्धिनि सोमातिपवने, यजमानकर्तृके सोमवमने च निमित्ते तदनन्तरं सौत्रामणी नैमित्तिकतया कर्तव्येत्यर्थः । मुखेतरेभ्यश्छिद्रेभ्यो यस्य सोमः स्रवति स सोमातिपूतः । अत्र च श्रुतौ "अग्निं चित्वा सौत्रामण्या यजेत" इति केवलस्याग्निचयनस्यैव यद्यपि निमित्तत्वं श्रूयते तथापि न केवलस्याग्नेर्निमित्तत्वम् , किन्तु यागनिर्वर्त्तकाग्नेरेव । अतश्च यागनिर्वृत्तिसमनन्तरमेव चयनस्य निमित्तत्वं, न ततः पूर्वमिति न भेदनहोमादिवत् चयनस्य रूपनिष्पत्तिसमन्तरमेव सौत्रामणी, किन्तु यागानन्तरमेवेति ॥२॥

**राज्ञोपरुद्धस्य ॥ ३ ॥**

स्वराज्यात्प्रच्यावितस्य राज्ञः स्वराजप्राप्त्यर्थं सौत्रामणी भवति ( १२।६।३।१ ) ॥ ३ ॥

**अलम्पशोरपशोः ॥ ४ ॥**

पशुभ्योऽलं = भरणादिसमर्थ इत्यलम्पशुः । तस्य अलम्पशोः पशुप्राप्तियोग्यस्य अपशोः = पशुरहितस्य पशुप्राप्त्यर्थं सौत्रामणी भवति ॥ ४ ॥

[ सौत्रामण्या आदावन्ते चादित्यश्चरुः । अन्त्यस्य चरोर्मैत्रावरुण्यामिक्षायाः पूर्वं वाऽनुष्ठानम् ]

**आदित्यश्चरुः ॥ ५ ॥**

प्रथममदितिदेवताकश्चरुः कर्तव्यः ॥ ५ ॥

**अन्ते च ॥ ६ ॥**

पूर्वोक्तमादित्यं चरुं सौत्रामण्याः समाप्तौ च कुर्यात् ॥ ६ ॥

**आमिक्षाया वा पूर्वः ॥ ७ ॥**

अथवा त्रिपशुसमाप्त्यनन्तरम् "उदवसाय पयस्या मैत्रावरुणी" (१६।५।२१) इति विहिता पयस्या आमिक्षा । तस्याः पूर्वं वा अन्ते विहितोऽदितिदेवताकश्चरुः कार्यः ॥ ७ ॥

धेनुर्दक्षिणा ॥८॥

आदित्यस्य चरोर्धेनुः सवत्सा गौः ॥ ८ ॥

तत्र विभागेन दानमाह—

वत्सः पूर्वे ॥ ९ ॥

प्रथमे आदित्यचरौ धेनोर्वत्सो दक्षिणा ( १२।६।२।११ ) ॥ ९ ॥

मातोत्तरे ॥१०॥

अन्तेऽदितिदेवताके चरौ माता दक्षिणा ( १२।७।२।११ ) ॥१०॥

"अभ्यादधामीति (२०।२४-२६) प्रत्यृचमाहवनीये तिस्रः

समिधोऽभ्यादधाति ॥११॥

आदित्येष्टिं समाप्य पुनरग्नी विहृत्याहवनीये तिस्रः समिध आदध्यात् ॥११॥

सत्यवादी ॥१२॥

हुतोच्छिष्टभक्षः ॥१३॥

अग्निहोत्रहोमशेषभक्षः स्यात्। तेन प्रतिदिनं सायं प्रातश्चाग्निहोत्रं हुत्वा स्थालीस्थस्य हुतशेषस्य भक्षणार्थं स्थापनं कुर्यात् ॥१३॥

चतूरात्रम् ॥१४॥

चतुर्दिनसाध्योऽयं क्रतुः ॥१४॥

अग्निहोत्रं जुहोति ॥१५॥

प्रतिषेधाभावात् स्वयंहोमार्थं पुनर्वचनम् ॥१५॥

ऐन्द्रः पशुः ॥१६॥

अयं पशुस्त्रिपशुदेशाद्दक्षिणतः कर्तव्यः ॥१६॥

चरुपश्वोर्विपर्यासमेके ॥१७॥

आदावादित्यश्चरुरित्युक्तम्। तस्य आदित्यस्य चरोरेके आचार्या विपर्यासमिच्छन्ति। पूर्वं पशुः पश्चाच्चरुरिति ॥१७॥

अन्तःपात्यस्थाने चर्मणि सुरासोमविक्रयिणः सीसेन शष्पक्रयस्तोकमानामूर्णाभिर्लाजानाꣳ सूत्रैः सुरासोमविक्रयिन् क्रय्यास्ते सुरासोमा३

इत्यामन्त्र्य सर्वेषु ॥१८॥

"सुरा-सोमविक्रयिन् क्रय्यास्ते सुरा-सोमा" इति सुरासोमविक्रयिणं पृष्ट्वा पृष्ट्वा अन्तःपात्यस्थाने गोचर्मणि सुरा-सोमविक्रयिणः सकाशात् सीसेन शष्पाणां = विरूढव्रीहीणाम्, ऊर्णाभिर्मेषरोमभिस्तोकमानाम् = विरूढयवानाम, सूत्रैर्लाजानां च क्रयः कर्तव्यः ॥१८॥

क्लीबादेके ॥१९॥

एके आचार्या नपुंसकाच्छष्पादीनां क्रयणमिच्छन्ति न तु सुरासोमविक्रयिणः पुरुषात् ॥१९॥

**दक्षिणेन हृत्वा नग्नहुचूर्णानि कृत्वा तांश्च व्रीहि-श्यामाकौदनयोः पृथगाचामौ निषिच्य चूर्णैः सꣳसृज्य निदधाति तन्मासरम् ॥ २० ॥**

क्रयणानन्तरं तानि शष्पादीन्यादाय दक्षिणेन द्वारेण हृत्वा पूर्वं नग्नहुचूर्णानि कृत्वा सज्जत्वगाद्यौषधानि तूष्णीं पिष्ट्वा तान् शष्पतोक्मलाजान् चूर्णीकृत्य दर्शपूर्णमासधर्मेण पात्रासादनादिव्रीहि-श्यामाकचतुर्मुष्टिकग्रहणपूर्वकं फलीकरणान्तं कृत्वा बहुतरोदके पृथक् व्रीहिश्यामाकयोश्चरू पक्त्वा तयोरोदनयोराचामौ = उष्णोदके पृथक् पात्रद्वये निषिच्यावस्राव्य तदुदकं नग्नहुप्रभृतिमिश्चूर्णैः संसृज्य निदध्यात्तन्मासरम् = तस्य चूर्णसंसृष्टस्याचामस्य मासरमिति संज्ञा ॥ २० ॥

**ओदनौ चूर्णमासरैः सꣳसृज्य "स्वाद्वीं त्वाऽꣳशुना त" इति (१९।१,२०।२७) त्रिरात्रं निदधाति ॥ २१ ॥**

आचामयोश्चूर्णसंसर्गानन्तरमोदनौ चतुर्भिर्व्रीहि-तोक्म-लाजा-नग्नहुचूर्णैः संसृज्य एकस्मिन् महति पात्रे चूर्णसंसृष्टावोदनौ मासराभ्यां च संसृज्य त्रिरात्रं शालाया नैर्ऋतकोणे गर्त्तं खात्वा तत्र स्थापयेत् ॥ २१॥

**एकस्याः पयसाऽपाकृतेनाश्विनेन परि षिञ्चति "परीतो षिञ्चतेति (१९।२) ॥ २२ ॥**

'अश्विभ्यामपाकरोमि' इति एकां गां हस्तेन स्पृष्ट्वा दोहयेत्। एवमपाकृताया एकस्या गाः पयसा सुरां परिषिञ्चेत् ॥ २२ ॥

**शष्पचूर्णानि चावपति ॥ २३ ॥**

सुराभाण्डे ॥ २३ ॥

**सारस्वतेन द्वयोः प्रातः ॥ २४ ॥**

प्रातर्द्वितीयेऽहनि सरस्वत्यै अपाकरोमि इति द्वे गावौ हस्तेन स्पृष्ट्वा दोहयेत्। एवमपाकृतेन सारस्वतेन द्वयोर्गावोः पयसा सुरां परिषिञ्चेत् ॥ २४ ॥

**तोक्मचूर्णानि च ॥ २५ ॥**

सुरायामावपेत् ॥ २५ ॥

**ऐन्द्रेणोत्तमे तिसृणाम् ॥ २६ ॥**

तृतीयेऽहनि ऐन्द्रेणापाकृतेन तिसृणां गवां पयसा सुरां परिषिञ्चेत् ॥ २६ ॥

**लाजचूर्णानि च ॥ २७ ॥**

सुरायामावपेत् ॥ २७ ॥

इति कात्यायनश्रौतसूत्रे प्रथमा कण्डिका ॥ १ ॥

**वेदी मिमीते वरुणप्रघासवत् ॥ १ ॥**

वरुणप्रघासे वेदिद्वयमुक्तम् । तद्वदत्रापि द्वे वेदी कुर्यात् ॥ १ ॥

**प्रक्रमतृतीयेनावृत्तेनोत्तराᳬ सोमवत् ॥ २ ॥**

प्रक्रमस्य तृतीयं प्रक्रमतृतीयम् । तेनावृत्तेनोत्तरवेदिं सोमयाग इव मिनुयात् । अत्र प्रक्रमशब्देन प्रक्रमपरिमितस्थलमापिका रज्जुरभिधीयते न तु प्रक्रमः । तदुक्तौ प्रक्रमस्य विभागकरणमेव प्राप्नुयात् । स च विभागो दैर्घ्ये विस्तारे चोभयत्र कर्तव्यो भवतीति नवमांशे पर्यवस्यति । तत्र च यागानुष्ठानं प्राप्नुयात् । तत्त नेष्टम् । अतश्च प्रक्रममितं यत्क्षेत्रं तस्य यस्तृतीयोंऽशस्तन्मापिका या रज्जुस्तया मानं कृत्वोत्तरवेदिर्निष्पादनीयेति ॥ २ ॥

**तयोः पश्चात् खरौ करोति ॥ ३ ॥**

तयोर्वेद्योः पश्चात् "उद्धतावोक्षिते सिकतोपकीर्णे चतुरस्रम्" ( ८।५।२९ ) इत्याद्युक्त प्रकारेण अरत्निमात्रमुत्सेधं खरद्वयं कुर्यात् । तत्रोत्तरः खरः पयोग्रह—वसाग्रहसादनार्थः । दक्षिणस्तु सुराग्रहसादनार्थ इति ॥ ३ ।

**श्वः प्रणयनीयाधानादि करोत्यासादनात् ॥ ४ ॥**

श्वश्चतुर्थदिने प्रणयनार्थस्येध्मस्याधादानादारभ्य आज्यासादनान्तं कर्म प्रकृतिवत् (८।६।३०–८।७।१०) कुर्यात् ॥ ४ ॥

**स्फ्यादि करोति दक्षिणस्यां वरुणप्रघासवत् (५।४।६) ॥ ५ ॥**

दक्षिणस्यां वेद्याम् ॥ ५ ॥

**सौरमेवास्याम् ॥ ६ ॥**

अस्यां दक्षिणस्यां वेदौ सुराग्रहसंबन्ध्येव कर्म कर्तव्यं, नान्यदारादुपकारकं कुक्कुटाहननादिकमपि (१२।१।३।१२) ॥ ६ ॥

**श्वभ्रं खात्वा खरमपरेण चर्मावधाय परिस्रुतमासिच्य कारोतरमवदधाति कारोतराद्वा चर्मणि मन्त्रलिङ्गात् ॥ ७ ॥**

दक्षिणवेदिखरमपरेण बहिर्वेदि श्वभ्रं = गर्तं खात्वा तत्र गर्ते गोचर्मावधाय परिस्रुतं = सुरां तत्रासिच्य सुराया उपरि कारोतरं = वंशमयं पात्रं सुरागलनसमर्थं निदध्यात् । एवं कृते मलमधस्तिष्ठति, गलिता सुरा कारोतरस्योपर्यायाति । एकोऽयं गलनोपायः । अथवा पूर्वं चर्मणि कारोतरमवधाय तत्र सुरामासिञ्चति । तथा सति कारोतराच्चर्मणि सुरा पतति । कुत एतत् । मन्त्रलिङ्गात् "कारोतरेण दधतो गवां त्वचि" ( १९।८२ ) इति । अतोऽयमेव पक्षः श्रेष्ठः ॥ ७ ॥

**पूतामादत्ते "सिञ्चन्ति परिषिञ्चन्तीति [२०।२८] ॥ ८ ॥**

कारोतरेण पूतां सुरां केनचित्पात्रेण गृह्णीयात् ॥ ८ ॥

**सते पुनाति गोऽश्ववालवालेन "पुनाति ते परिस्रुतमिति ( १९।४ ) ॥ ९ ॥**

तां सुरां सते = पालाशे महति पात्रे गोवालैरश्ववालैश्च निर्मितेन वालेन पवित्रेण पुनीयात् ॥ ९ ॥

**"वायोः पूत" इति ( १९।३ ) सोमातिपूतस्य ॥ १० ॥**

सोमातिपूतः पूर्वमुक्तः ( १६।१।२ )। तादृशस्य यजमानस्य सौत्रामणीयागे वायोः पूत इति सते सुरापावनं, न सिञ्चन्तीति मन्त्रेण ॥ १० ॥

प्राङ्गिनि [ १६।३ ] तद्वामिनः ॥ ११ ॥

सोमवामिनो यजमानस्य सौत्रामणी नैमित्तिकी पूर्वमुक्ता ( १६।१।२ )। तत्र प्राङ्क्सोम इति सुरापावनमन्त्रः ॥ ११ ॥

उत्तरस्यां पयो वैनसेऽजाविलोमपवित्रेण "ब्रह्म क्षत्रमिति (१६।५) ॥ १२ ॥

उत्तरस्यां वेद्यौ अजलोमभिर्मेषरोमभिश्च निर्मितेन पवित्रेण वेतसवृक्षनिर्मिते पात्रे पयः पुनीयात् ॥ १२ ॥

ब्रह्मानुमन्त्रणमध्वर्योऽ अद्रिभिरिति (२०।३१) ॥ १३ ॥

ब्रह्मा अध्वर्योऽ अद्रिभिरिति मन्त्रेण पूयमानस्य पयसोऽनुमन्त्रणं कुर्यात् ॥ १३ ॥

पयोग्रहान् गृह्णाति "कुविदङ्गेति ( १६।६ ) ॥ १४ ॥

त्रीन् पयोग्रहान् ॥ १४ ॥

पृथगुपयामयोनी ॥ १५ ॥

उक्तेषु त्रिष्वपि ग्रहेषु उपयामेति ग्रहग्रहणमन्त्रः, एष ते योनिः इति ग्रहासादनमन्त्रश्च पृथक् पृथक् पठितव्यः । तद्यथा ॐ कुविदङ्ग० यजन्ति उप० स्यश्विभ्यां त्वा गृह्णामि । ॐ एष ते योनिस्तेजसे त्वा सादयामि १ । द्वितीयग्रहे—कुविदङ्ग०यव०यजन्ति । उपया० सि सरस्वत्यै त्वा गृ० । एष ते योनिर्वीर्याय त्वा सा० २ । कुविदङ्ग० यव० यजन्ति उपया० सीन्द्राय त्वा सुत्राम्णे गृ० ॐ एषते योनिर्बलाय त्वा सा० इति ॥ १५ ॥

खरयोः सादनम् ॥ १६ ॥

पयोग्रहाणामुत्तरे खरे, सुराग्रहाणां च दक्षिणखरे सादनम् ॥ १६ ॥

गोधूम-कुवल-चूर्णानि चावपति "तेजोऽसीति [ १६।६ ] ॥ १७ ॥

आश्विनमाश्वत्थेन ॥ १८ ॥

आश्विने ग्रहे ( पात्रे ) ग्रहं गृहीत्वा गोधूमचूर्णानि कुवलचूर्णानि च प्रक्षिपेत् । कुवलानि पूर्वमुक्तानि (१५।१०।११) ॥ १८ ॥

सारस्वतमौदुम्बरेण ॥ १६ ॥

सरस्वतीदेवतं द्वितीयं ग्रहमौदुम्बरेण पात्रेण गृह्णीयात् ॥१६॥

उपवाक-वदरचूर्णानि च "वीर्यमसीति (१६।६) ॥२०॥

सारस्वते ग्रहे उपवाका = इन्द्रयवा गोधूमवत्तुषरहिता गोधूमवर्णा यवसदृशाः । तान्, वदरचूर्णानि च प्रक्षिपेत ॥ २० ॥

ऐन्द्रं नैयग्रोधेन ॥२१॥

इन्द्रदेवत्यं तृतीयं पयोग्रहं वटपात्रेण गृह्णीयात् ॥२१॥

यव-कर्कन्धुचूर्णानि च "बलमसीति (१६।६) ॥२२॥

ऐन्द्रे ग्रहे ॥२२॥

**स्थालीभिः सौरान् "नाना हि वामिति (१९।७) व्यत्यासम् ॥२३॥**

त्रीन् सुराग्रहान् व्यत्यस्य व्यत्यस्य स्थालीभिर्मृन्मयीभिर्गृह्णीयात्। तद्यथा—प्रथममाश्विनं पयोग्रहं गृहीत्वाऽऽसाद्य तत आश्विनं सुराग्रहं गृहीत्वाऽऽसादयेत्। ततः सारस्वतं सुराग्रहम्, तत ऐन्द्रं पयोग्रहं, तत ऐन्द्रं सुराग्रहमिति ( १२।७।३।१५ ) ॥२३॥

**पयोग्रहान्वा पूर्वम् ॥२४॥**

अथवा प्रथमं त्रीनपि पयोग्रहान् गृहीत्वा पश्चात् त्रीनपि सुराग्रहान् गृह्णीयात्, न व्यत्यासम् ॥२४॥

**सुराग्रहाञ्छ्रीणात्योजोऽसीति [१९।९] वृकव्याघ्रसिंहलोमभिः प्रतिमन्त्रं मिश्रैः ॥२५॥**

**एके यथासङ्ख्यम् ॥२६॥**

एके आचार्या वृकादिलोमानि त्रिषु सुराग्रहेषु यथासङ्ख्यं प्रक्षिपेत्, न तु मिश्रीकृतानि प्रक्षिपेदिति वदन्ति ॥२६॥

**"सोमो राजेत्यनुवाकेन (१९।७१-७९) ग्रहानुपतिष्ठते युगपत् ॥२७॥**

पयोग्रहान् सुराग्रहांश्चाध्वर्युर्युगपदुपतिष्ठेत् ॥२७॥

**चतुर्भिर्वा पयोग्रहाञ्छेषेण सौरान् ॥२८॥**

**दीक्षावत्पावयतोऽन्तःपात्ये श्येनपत्राभ्यां "या व्याघ्रमिति (१९।१०) ॥२९॥**

दीक्षावत् ( ७।३।१ ) छिन्नाभेरूर्ध्वमधश्चाध्वर्युप्रतिप्रस्थातारौ श्येनपत्रेणान्तःपात्ये स्थितं यजमानं पावयतः ॥२९॥

**अग्निं प्रेक्षयति "यदा पिपेषेति (१९।११) ॥३०॥**

अग्निं प्रेक्षस्वेत्यध्वर्युणा प्रेषितो यजमानोऽग्निं प्रेक्षेत् ॥३०॥

**पयोग्रहसंमर्शनं "सम्पृच स्थेति १९।११) ॥३१॥**

त्रीन् पयोग्रहान् युगपद्यजमानः स्पृशेत् ॥३१॥

**वि पृचस्थेति (१९।११) सौराणाम् ॥३२॥**

इति महर्षिकात्यायनप्रणीते श्रौतसूत्रे एकोनविंशेऽध्याये द्वितीया कण्डिका ॥ २॥

---

**अक्ष्यादि करोति ॥ १ ॥**

**आश्विनोऽजो धूम्रः ॥ २ ॥**

**सारस्वतो मेषः ॥ ३ ॥**

सरस्वत्यै मेषमालभेत ॥३॥

**ऐन्द्र ऋषभः ॥ ४ ॥**

इन्द्राय ऋषभमालभेत ॥ ४ ॥

**मध्ये यूपः ॥ ५ ॥**

अस्य त्रिपशोरेक एव यूपो भवति । सोऽपि ऐन्द्र-वायोधसयोर्विहितयोः पश्वोर्मध्ये निखातव्यः ॥ ५ ॥

**दक्षिणोत्तरावैन्द्र-वायोधसयोः ॥ ६ ॥**

अस्मात्त्रिपशुयूपाद्दक्षिणोत्तरावैन्द्रवायोधसयोर्यूपौ यथाक्रमं भवतः (१२।६।३।१६) ॥६॥

**वपामार्जनान्ते ग्रहानादाय पूर्ववदनुवाचनठं० सुरासोमेभ्योऽनु ब्रूहीति ॥७॥**

पशुत्रयस्य वपामार्जनान्ते कृते पूर्ववत् = राजसूयिकचरकसौत्रामणीवत् (५।५।४।२४, १५।१०।१३) देवतापदानि अविभक्तिलोपेन समस्य, 'अश्विभ्यां, सरस्वत्या, इन्द्राय सुत्राम्णे सुरासोमेभ्योऽनुब्रूहि' इत्यध्वर्युर्होतारं प्रति ब्रूयात् ॥ ७ ॥

आश्राव्यप्रैषे विशेषमाह—

**सप्रैषं तु ॥ ८ ॥**

तुशब्दो राजसूयिकाद्भेदमाह—सप्रैषं प्रैषवचनं भवति । यजेत्यस्य स्थाने 'प्रेष्य' इति वक्तव्यमित्यर्थः ॥ ८ ॥

**प्रस्थितमिति च ॥ ९ ॥**

न केवलं 'प्रेष्य' इत्येष एव विशेषः । तत्र ह्युक्तं "समस्यानुवाचनं यजेति च" (१५।१०।१३) इति, नात्र तथा । किन्तु प्रस्थितशब्दप्रयोगोऽपि भवति । तेन 'अश्विभ्याठं सरस्वत्या इन्द्राय सुत्राम्णे सुरासोमान् प्रस्थितान् प्रेष्य' इति वाक्यम् ॥ ९ ॥

**त्रिपशोः सर्वम् ॥१०॥**

त्रिपशुसंबधि सर्वं प्रस्थितशब्दवद्भवति । वपायागोऽपि प्रस्थितशब्दयुतः कार्य इति कर्काचार्याः ॥१०॥

**"सुरावन्तमिति (१९।३२) जुहोति ॥११॥**

त्रीन् पयोग्रहान् ॥११॥

**पालाशैः सौरान् न मृन्मयमाहुतिमानश इति श्रुतेर्यस्त इति (१९।३३) ॥१२॥**

प्रतिप्रस्थाता दक्षिणेऽग्नौ सुराग्रहं पालाशैरुलूखलैर्जुहुयात् न मृन्मयीभिः स्थालीभिः । कुतः ? मृन्मयं पात्रमाहुतिं न व्याप्नोति इति श्रुतौ (१२।७।२।१५, १४।२।२।५३) मृन्मयपात्रेण होमनिषेधात् ॥१२॥

**अध्वर्यु-प्रतिप्रस्थाऽऽग्नीध्रमश्विनेत्याश्विनं[१९।३३]भक्षयन्ति द्विर्द्विरावर्तम् ॥१३॥**

आश्विनं पयोग्रहं हस्ते गृहीत्वा अध्वर्युः प्रतिप्रस्थाता अग्नीत् क्रमेण एकवारं भक्षयित्वा पुनरनेनैव क्रमेण द्वितीयवारं भक्षयेयुरित्यर्थः ॥१३॥

**होतृ-ब्रह्म-मैत्रावरुणाः सारस्वतमाश्विनवत् ॥१४॥**

सारस्वतं पयोग्रहमाश्विनग्रहवदिति यमश्विनेति ब्रह्मादयः क्रमेण भक्षयित्वा पुनस्तेनैव क्रमेण भक्षयेयुः ॥ १४ ॥

**शेषठं० शेषमासिञ्चत्युत्तरे पूर्वस्य ॥१५॥**

पूर्वस्य ग्रहस्य भक्षितस्य शेषमुत्तरे ग्रहेऽवनयेत् । आश्विनस्य शेषं सारस्वते, तच्छेषमैन्द्रे ॥ १५ ॥

ऐन्द्रं यजमानः ॥ १६ ॥

ऐन्द्रं पयोग्रहं यजमान एव भक्षयेत् ॥ १६ ॥

"यदत्रेति" [ १६।३५ ] सौरान् भक्षयन्ति यथाभक्षितं प्राचीनावीतिनो दक्षिणतः ॥ १७ ॥

विहारस्य दक्षिणत उपविष्टाः कृतापसव्याः पयोग्रहभक्षणेतिकर्तव्यतानतिक्रमेण सौरान् ग्रहान् भक्षयेयुरध्वर्य्वादयः। अध्वर्युः प्रतिप्रस्थाता आग्नीध्र इत्येते त्रयः सौरमाश्विनं द्विरावर्तं भक्षयन्ति, ततः सारस्वते शेषासेकः। ततः सारस्वतं होतृब्रह्ममैत्रावरुणा द्विरावर्तं भक्षयन्ति ॥ १७ ॥

प्राणभक्षमेके ॥ १८ ॥

एके शाखिनः सौरग्रहाणामवघ्राणमात्रं कुर्वन्ति, न मुखेन भक्षणम् ॥ १८ ॥

परिक्रीतो वा वैश्य-राजन्ययोरन्यतरः ॥ १६ ॥

अथवा वैश्य-राजन्ययोर्मध्येऽन्यतरो मूल्येन क्रीतः सौरान् ग्रहान् भक्षयेत् ॥१६॥

अङ्गारेषु वा बर्हिष्परिधि दक्षिणतो जुहोत्याश्विनमुत्तरे, मध्यमे सारस्वत, मैन्द्रं दक्षिणे "पितृभ्य" इति ( १६।३६ ) प्रतिमन्त्रम् ॥२०॥

अथवा दक्षिणस्याहवनीयस्याङ्गारेषु परिधेर्बहिःप्रदेशे दक्षिणस्यां दिशि स्थापितेषु दक्षिणसंस्थेषु पितृभ्य इति होमावशिष्टान् सुराग्रहान् जुहुयात्। तत्राश्विनं सुराग्रहमुत्तरे, मध्यमे सारस्वतं, दक्षिणे ऐन्द्रं सुराग्रहं जुहुयात् ॥ २० ॥

"अक्षन्पितर" इति [ १६।३६ ] प्रक्षालनेनोपसिञ्चति ॥२१॥

होमक्रमेण सौरग्रहपात्रप्रक्षालनोदकेनाङ्गारानुपसिञ्चेत् ॥ २१ ॥

"पितरः शुन्धध्वमिति ( १६।३६ ) जपति ॥२२॥

कुम्भीमासज्य कुम्भवच्छतवितृण्णां वालपवित्रहिरण्यान्यन्तर्द्धाय नवर्चं वाचयति "पुनन्तु मेति ( १६।३७-४४ ) ॥२३॥

चरकसौत्रामणी कुम्भवत् (१५।१०।२७) शतच्छिद्रां कुम्भीमासज्य दक्षिणस्याहवनीयस्योपरि शिक्ये कृत्वा तत्र वालपवित्रहिरण्यान्यन्तर्द्धाय तत्र परिस्रुच्छेषमासिञ्चेत्। ततस्तस्यां सुरायामग्नेरुपरि स्रवन्त्यां पुनन्तु मेति नवर्चं वाचयेत्। वालो गोवालनिर्मितः सुरागलनम्। पवित्रमजाविलोमनिर्मितम् ॥ २३ ॥

सोमवतां बर्हिषदामग्निष्वात्तानां च ॥ २४ ॥

नवर्चं वाचयति। "त्वछं० सोम प्र चिकितः" इत्यारभ्य "तन्वं कल्पयाति" (१६।५२-६०) इत्यन्तो नवर्चः ॥ २४ ॥

पूर्ववत्सोमातिपूतश्चेत् ॥ २५ ॥

सोमातिपूतस्य पूर्वं सौत्रामणी उक्ता ( १४।१।२ )। तथाविधो यजमानः पूर्ववत् चरकसौत्रामणीवत् (१५।१०।२७) सोमवदादितृचैः कुम्भ्याः स्रवन्तीं सुरामुपतिष्ठेत ॥ २५ ॥

"ये समाना" इति ( १६।४५ ) यजमानो जुहोति ॥ २६ ॥

सकृद्गृहीतमाज्यं दक्षिणाग्नौ ॥ २६ ॥

उत्तरे च यज्ञोपवीत्युत्तरया (१९।४६) ॥ २७ ॥

उत्तरेऽग्नौ चोत्तरया ऋचा सकृद्गृहीतमाज्यं जुहुयात् ( १२।८।१।१९ ) ॥ २७ ॥

अन्वारब्धेषु पयो जुहोति "द्वे सृती" इति ( १९।४७ ) ॥ २८ ॥

सर्वेषु ऋत्विक्षु यजमानमन्वारब्धेषु सत्सु अध्वर्युः पयो जुहुयात् । उत्तरसूत्रे यजमान ग्रहणादत्राध्वर्योः कर्तृत्वम् ॥ २८ ॥

शेषं यजमानो भक्षयतीदꣳ हविरिति ( १९।४८ ) ॥ २९ ॥

चात्वाले मार्जयन्ते सपत्नीका हिरण्यमन्तर्धाय ॥३०॥

जले हिरण्यं निधाय तज्जलं शाखापवित्रेणादाय तेन मार्जयेयुः ॥ ३० ॥

इत्येकोनविंशे तृतीया कण्डिका ॥ ३ ॥



पशुपुरोडाशान्निर्वपत्यैन्द्रꣳ सावित्रं वारुणं दशकपालम् ॥ १ ॥

ऐन्द्र एकादशकपालः, सावित्रो द्वादशकपालः, वारुणो दशकपालः ( १२।७।२।१६,१८-२० ) ॥ १ ॥

एककपालं चावभृथाय ॥ २ ॥

ऐन्द्रादिभिः सहैवैककपालं वारुणं पुरोडाशमवभृथार्थं निर्वपेत् ॥ २ ॥

आसाद्यैनानाज्यभागौ यजत्यत्र स्विष्टकृद्वनस्पत्योः प्रैषदर्शनात् ॥३॥

अत्रावसरे स्विष्टकृद्वनस्पत्योः प्रैषे आज्यभागदेवतयोः सङ्कीर्तनदर्शनात् (२१।४६) पुरोडाशानासाद्याज्यभागौ यजेत् ॥३॥

यथोक्तं वा मन्त्राणामविधानात् ॥ ४ ॥

यथाप्राप्तमेवाज्यभागयोरनुष्ठानम् । यदुक्तं स्विष्टकृद्वनस्पत्योः प्रैषदर्शनादिति । तन्न । मन्त्राणामविधायकत्वात् ॥४॥

त्रयस्त्रिꣳशतं दक्षिणा ददात्यनुशिशुं च वडवधेनुम् ॥५॥

एकादशिनिधर्माः पशुगणेषु ॥ ६ ॥

पशूनां गणा द्विप्रभृतिपशुसमूहाः । तेषु पशुगणेषु एकादशिनिधर्मा नियोजनादयो भवन्ति ॥६॥

शमित्रनुशासनप्रभृति वनस्पत्यन्तं कृत्वा सोमासन्दीवदासन्दीं जानुमात्रपादीं वेद्योर्निदधाति "क्षत्रस्य योनिरिति (२०।१) ॥ ७ ॥

"मार्जिते शमितारꣳ शास्ति" ( ६।६।८।१) इत्यारभ्य वनस्पतियागान्तं (६।८।२०) कर्म कृत्वा सोमासन्दीवत (८।६।२७) मुञ्जरज्ज्वा व्युताम् आसन्दीमौदुम्बरीमरत्निप्रमाणां जानुमात्रपादीं वेद्योर्निदध्यात् । आसन्द्याः पादद्वयं दक्षिणवेद्यां, पादद्वयं चोत्तरवेद्यां कुर्यादित्यर्थः ( १२।८।३।६ )। पूर्वं प्रकृतौ नाभिमात्रपादाऽऽसन्द्युक्ता । तद्बाधनार्थं जानुमात्रपादीमित्युच्यते । इदं शमित्रनुशासनं द्वितीयं कर्तव्यम् । प्रथमं हि पशुपुरोडाशपात्रसम्मार्गान्त एव निवृत्तमिति कर्काचार्याः ॥ ७ ॥

**कृष्णाजिनमस्यामास्तृणाति "मा त्वेति ( २०।१ ) ॥ ८ ॥**

अस्यामासन्द्याम् ॥ ८ ॥

**तस्मिन्नास्ते यजमानो "नि षसादेति ( २०।२ ) ॥ ६ ॥**

**पादयो रुक्माऽ उपास्यति राजतᳪ सव्ये "मृत्योरिति (२०।२) ॥ १० ॥**

अध्वर्युरासन्द्यामुपविष्टस्य यजमानस्य सव्यपादसमीपे राजतं, दक्षिणपादसमीपे भूमौ सौवर्णं रुक्मं परिमण्डलमाभरणविशेषं निदध्यात् ॥ १० ॥

**सौवर्णᳪ शिरस्येके "त्विषोऽसीति ( २०।२ ) ॥ ११ ॥**

सौवर्णं रुक्ममेके शिरसि निदधत्येके दक्षिणपादे ॥ ११ ॥

**खुरैर्वसाग्रहान् द्वात्रिᳪशतं जुहोति "सीसेनेति ( १६।८०-६५ ) प्रत्यृचम् ॥ १२ ॥**

अध्वर्युः सर्वेषां पशूनां वसामेकस्मिन् पात्रे कृत्वा द्वात्रिंशदृषभखुरानादायाग्रितमान् कृत्वा तन्मध्यान्मांसं निष्काष्य ग्रहयोग्यान् कृत्वा तैः खुरैः पर्यायेण द्वात्रिंशद्वसाग्रहान् जुहुयात् । अत्रैकैकेन मन्त्रेण द्वयोर्होमः ॥ १२ ॥

**द्वौ द्वौ हुत्वा शेषान्त्सते करोति ॥ १३ ॥**

एकैकेन मन्त्रेण द्वौ द्वौ वसाग्रहौ हुत्वा तयोर्ग्रहयोः शेषान् सते = वैतसे पात्रे प्रतिहोमं नयेत् ॥ १३ ॥

**सर्वसुरभ्युन्मृदितᳪ शेषैरभिषिञ्चत्या मुखादवस्रावयन्प्रतिदिशᳪ सर्वत्र सावित्रमश्विनोः सरस्वत्याऽ इन्द्रस्येति ( २०।३ ) प्रतिमन्त्रम् ॥ १४ ॥**

सर्वसुरभिभिश्चन्दनकर्पूरकस्तूरिकाकेसरादिभिरुन्मर्दितमासन्द्यामुपविष्टं यजमानं वैतसपात्रस्थापितैर्वसाग्रहशेषैः प्रतिदिशमश्विनो ( १२।८।३।१७ ) ऽध्वर्युरामुखादवस्रावयन् मन्त्रत्रयेण परिषिञ्चेत् । तत्र मन्त्रत्रयेऽपि सावित्रं = देवस्य त्वेति मन्त्रमनुषजेत् ॥ १४ ॥

**सर्वाभिश्चतुर्थम् ॥१५॥**

चतुर्थमभिषेकं सर्वाभिर्देवताभिः = अश्विनोः सरस्वत्या इन्द्रस्येति त्रिभिर्मन्त्रैः समुच्चितैः कुर्यात ( १२।८।३।१७ ) । अत्रापि पूर्वं सावित्रप्रयोगो भवति ॥ १५ ॥

**महाव्याहृतिभिरेके ॥१६॥**

एके महाव्याहृतिभिश्चतुर्थमभिषेकं कुर्वन्ति । अस्मिन्पक्षे प्रथमाभिषेकोऽश्विनोरि-त्यादिसमुच्चयेन, द्वितीयो महाव्याहृतिभिः कार्यः ( १२।८।३।१८ ) ॥ १६ ॥

**उत्तमेन वा ॥१७॥**

अथवा प्रागुक्तानां त्रयाणां मन्त्राणामन्तिमेन इन्द्रस्येन्द्रियेणेत्यनेन चतुर्थमभिषि-ञ्चेत् । अत्रापि पूर्वं सावित्रप्रयोगो भवति (१२।८।३।१८) ॥ १७ ॥

**उन्मर्दनमभिषेकेऽवनीयैके ॥१८॥**

उन्मर्दनं सर्वसुरभिचन्दनाद्युद्वर्तनसाधनमभिषेके वसाशेषमध्येऽवनीयाभिषेकमिच्छन्त्येके ॥ १८ ॥

**यजमानमालभते "कोऽसीति ( २०।४ ) ॥१६॥**

"सुश्लोकेत्यालब्धो ह्वयति ( २०-४ ॥२०॥

अङ्गानि चालभते यथालिङ्गꣳ "शिरो म" इति ( २०-५-६) प्रति मन्त्रम ॥२१॥

उद्यच्छन्त्येनꣳ शतरुद्रियवत्प्रमाणेषु ॥२२॥

आहूनाः सुश्लोकाद्य (१५।७।१०) एनं यजमानं शतरुद्रियवत् ( १८।१।२ ) प्रमाणेषु जानुमात्र-नाभिमात्र-मुखमात्रेषु क्रमेण सासन्दीकमूर्ध्वमुत्थाप्य धारयेयुः ॥ २२ ॥

कृष्णाजिनेऽव रोहति "प्रतिक्षत्र" इति ( २०।१०) ॥२३॥

यजमानः ॥ २३ ॥

त्रयस्त्रिꣳशं वसाग्रहं गृह्णाति "यो भूतानामिति (२०।३२) ॥२४॥

आर्षभेण खुरेण ॥२४॥

आज्यग्रहमाश्वत्थेनैके ॥२५॥

एके आश्वत्थेनोलूखलेनाज्यग्रहं त्रयस्त्रिंशं गृह्णन्ति, न वसाग्रहम् ॥२५॥

इत्येकोनविंशे चतुर्थी कण्डिका ॥ ४ ॥



साम प्रेष्यति ॥ १ ।

ऐन्द्र्यां बृहत्यां गायति ॥ १ ॥

इन्द्रलिङ्गायां बार्हतेन छन्दसोपेतायां "बृहदिन्द्राय" (२०।३०) इत्यस्यामृचि गायेदुद्गाता ॥ २॥

"सꣳश्रवसे विश्रवसे सत्यश्रवसे श्रवस" इति सर्वे निधनमुपयन्ति ॥ ३ ॥

सर्वे ऋत्विग्यजमानाः सꣳश्रवस इति चत्वारि निधनानि पठेयुः ॥ ३ ॥

संजित्यै विजित्यै सत्यजित्यै जित्या इति क्षत्रियस्य ॥ ४ ॥

क्षत्रियस्य यजमानस्य एतानि चत्वारि निधनानि सर्वे पठेयुः ॥ ४॥

सम्पुष्ट्यै विपुष्ट्यै सत्यपुष्ट्यै पुष्ट्या इति वैश्यस्य ॥ ५ ॥

अग्न्यङ्गभूता सौत्रामणी क्षत्रियवैश्ययोरपि भवतीति पूर्वमुक्तम् ( १६।१।११ ) ॥ ५ ॥

यथाम्नातं वा सर्वेषाम् ॥ ६ ॥

अथवा सर्ववर्णानां यथास्वाध्यायपठितं निधनं सत्यश्रवस इत्याद्येव भवति ( १२।८।३।२६ ) ॥ ६ ॥

आस्ते प्रतिगरिष्यन् ॥ ७ ॥

सामगानानन्तरं होता शस्त्रं शंसति । तत्र प्रतिगरार्थं होतुरग्रेऽध्वर्युरुपविशेत् ॥ ७ ॥

"त्रया देवा" इति (१६।११) शस्त्रान्ते जुहोति ॥ ८ ॥

त्रयस्त्रिंशं वसाग्रहम् ॥ ८ ॥

शेषमृत्विजः प्राणभक्षं भक्षयन्ति "प्राणपा म" इति (२०।३४) ॥ ९ ॥

ग्रहशेषम् ॥ ९ ॥

प्रत्यक्षभक्षं यजमानो "लोमानि प्रयतिरिति (२०।१३) ॥१०॥

स्विष्टकृत्प्रभृत्या बर्हिर्होमात्कृत्वा परिस्रुत्तीरलिप्तान्यादायाव-
भृथवद् गमनम् ॥११॥

आ शूलाभिमन्त्रणात्कृत्वोदकाधिष्ठानप्रभृत्यावभृथेष्टेः ॥ १२ ॥

"हृदयशूलमुप गूहति" (६।१०।३) इत्यत आरभ्य "शूलाभिमन्त्रणान्तं कर्म कृत्वा उदकप्रवेशनादारभ्यावभृथेष्ट्यन्तं सोमवत्कुर्यात् (१०।८।२१-१०।९।७) ॥ १२ ॥

मासरकुम्भं प्लावयति "यद्देवा" इति ( २०-१४-१८ ) ॥१३॥

सुराकुम्भं जले तारयेत् ॥ १३ ॥

पूर्ववन्मज्जनम् ॥१४॥

पूर्ववदित्यवभृथेति मन्त्रेण (२०।१८-१९) मासकुम्भं जले मज्जयेत् ॥१४॥

"सुमित्रिया न" इत्यपोऽञ्जलिनाऽऽदाय "दुर्मित्रिया न" इति (२०।१९)
द्वेष्यं परिषिञ्चति द्वौ विक्रमाऽ उदङ्गत्वा ॥ १५ ॥

अवभृथप्रवेशदेशात् प्रक्रमद्वयमुदीच्यां दिशि जलमध्ये एव गत्वा ततोऽञ्जलिनाऽप-आदाय यस्यां दिशि द्वेष्यो भवेत्तस्यां दिशि ता अपो निषिञ्चेत् (१२।९।३।६) ॥१५॥

अवभृथवत्स्नात्वा वासोऽपासनं "द्रुपदादिवेति (२०।२०) ॥१६॥

सौमिकावभृथवन् स्नात्वा जलस्थ एवान्ये वाससी परिधाय कर्मकालधृतस्य वाससोऽप्सु प्रक्षेपणं कुर्यात् ॥ १६ ॥

सोमवदुत्क्रमणमागमनं च ॥ १७ ॥

सोमवत् (१०।९।१) उद्वयमित्यनेन जलान्निष्क्रमणम् , प्रत्यागमनं च अपाम सोममिति ( १०।९।७ ) जपतां भवति ॥ १७ ॥

आहवनीयमुपतिष्ठतेऽपोऽ अद्येति (२०।२२) ॥ १८ ॥

" एधोऽसीति ( २०।२३ ) समिधमादायाहवनीयेऽभ्यादधाति
"समिदसीति ( २०।२३ ) ॥१९॥

जुहोति च "समाववर्तीति ( २०।२३ ) ॥२०॥

उदवसाय पयस्या मैत्रावरुणी ॥२१॥

उदवसाय = त्रिपशुदेशाद्देशान्तरे गत्वा मित्रावरुणदेवत्या पयस्येष्टिः कर्तव्या ॥२१॥

तदन्ते पशुरिन्द्राय वयोधसे ॥२२॥

इत्येकोनविंशेऽध्याये पञ्चमी कण्डिका ॥ ५ ॥

आध्वर्यवमुक्त्वा यजुर्वेदविहितं हौत्रमुपक्रमते—

**सौत्रामण्यामिष्टिपशवो भिन्नतन्त्राः कालभेदात् ॥ १ ॥**

येयमिदानीमुक्ता सौत्रामणी, तत्र या इष्टयो ये च पशुयागाः ते भिन्नतन्त्राः = पृथक् प्रयोगाः कर्तव्याः । इष्टिं पशुं वा एकैकं परिसमाप्यान्यदारम्भणीयमिति भावः । कुतः ? कालभेदात् = "आदित्यं चरुं यक्ष्यमाणो यजतीत्यादिना (१२।६।२।११) तेषां पृथक्कालस्य विहितत्वात् । कालभेदे प्रयोगभेदावश्यं भावादिति ॥ १ ॥

**सप्तदश सामिधेन्यः ॥ २ ॥**

**वार्त्रघ्नावाज्यभागौ ॥ ३ ॥**

**वृधन्वन्तौ वा पशुषु, सान्नाय्यविकारात् ॥ ४ ॥**

अथवा पशुषु ऐन्द्रे, त्रिपशुषु, वायोधसे च वृधन्वन्तावाज्यभागौ भवतः । पशोः सान्नाय्यविकारत्वात् । सान्नाय्ये च नियमेन वृधन्वतोर्विधानात् ॥ ४ ॥

**आमिक्षायां च ॥ ५ ॥**

वृधन्वन्तावेव ॥ ५ ॥

**उपांशु देवतेष्टिषु ॥६॥**

**विराजौ संयाज्ये अविशेषोपदेशात् ॥ ७ ॥**

इष्टिषु संयाज्ये = स्विष्टकृत्संबन्धिन्यौ याज्यानुवाक्ये ( ५।१३।२ ) भवतः ॥ ७ ॥

**वसिष्ठशुनकानां नाराशंसः ॥ ८ ॥**

द्वितीयः प्रयाजो भवति ॥ ८ ॥

**अत्रीणां चैके ॥ ९ ॥**

द्वितीयं नाराशंसमिच्छन्ति, एके तनूनपातम् ॥ ९ ॥

**प्राकृताः प्रथमोत्तमयोः प्रयाजानुयाजप्रैषाः ॥ १० ॥**

प्रथमान्तिमयोः पश्वोरैन्द्रवायोधसयोः प्राकृताः = बह्वृचानां प्रैषाध्याये पठिताः प्रयाजानुयाजप्रैषाः कार्याः ॥ १० ॥

**ऐन्द्रानेके प्रथमस्य वायोधसानुत्तमस्य ॥ ११ ॥**

प्रथमस्य उत्तमस्य च ऐन्द्रस्य पशोरैन्द्रान् "होतायक्षत्समिधेन्द्रम् , ( २८।१।११ ) देवं बर्हिरिन्द्रम्" (२८।१२।२८) इत्यादीन् प्रयाजानुयाजप्रैषानेके मन्यन्ते ॥ ११ ॥

**"समिद्ध इन्द्र" ( २०।३६-४६ ) इत्याप्रियः प्रथमस्य ॥ १२ ॥**

प्रथमस्य पशोः प्रयाजयाज्याः ॥ १२ ॥

**याज्यानुवाक्याश्च वपा-पशु-पुरोडाशानामायात्विन्द्र" इति (२०।४७५२) ॥१३॥**

प्रथमस्य पुरोडाशस्य भवन्ति ॥ १३ ॥

**"होता यक्षत्समिधाग्निमिति ( २१।२९-४० ) प्रयाजप्रैषास्त्रिपशोः ॥ १४ ॥**

**आप्रियश्च "समिद्धोऽअग्निरश्विनेति ( २०।५५-६६ ) ॥ १५ ॥**

चशब्दात्त्रिपशोरेव ॥ १५ ॥

"अश्विना हविरिति (२०।६७-६६ ) तिस्रो वपानां याज्यानुवाक्याः ॥ १६ ॥

तत्प्रकारमाह—

प्रथमानूच्य द्वितीया याज्या, द्वितीयामनूच्य, तृतीया याज्या, तृतीयामनूच्य प्रथमा याज्या ( १२।२।८।३५ ) ॥ १७ ॥

"यऽ इन्द्र" इति ( २०।७०-७२ ) पुरोडाशानां पूर्ववत् ॥ १८ ॥

पूर्ववच्छब्देन प्रथमामनूच्येत्येवमादि लभ्यते ॥ १८ ॥

"अश्विना गोभिरिति ( २०।७३-७५ ) हविषाम् ॥ १६ ॥

चशब्दात्पूर्ववत्प्रथमामनूच्येत्येवमादि याज्यानुवाक्या ॥ १६ ॥

ग्रहाणां "युवꣳ सुरामं, पुत्रमिवेति ( २०।७६-७७ ) ॥ २० ॥

त्रयाणां पयोग्रहाणां सुराग्रहाणां च द्वे याज्यानुवाक्ये भवतः (१२।७।२।३४-३५) ॥२०॥

पशुस्विष्टकृतो "यस्मिन्नश्वासोऽ ऋषभासऽ उक्षणो वशा" इति ( २०।७८-७६ ) ॥ २१ ॥

याज्यापुरोऽनुवाक्ये भवतः ॥ २१ ॥

"होता यक्षदश्विनाविति ( २१।४१ ) त्रयो वपानां प्रैषा यथालिङ्गम् ॥ २२ ॥

ग्रहाणां चतुर्थः ( २१।४२ ) ॥ २३ ॥

"होता यक्षदश्विनौ सरस्वतीम्" ( २१।४२ ) इत्ययं चतुर्थः प्रैषो ग्रहाणां भवति ॥ २३ ॥

हविषामुत्तरे यथालिङ्गम् ॥ २४ ॥

चतुर्थात्प्रैषादुत्तरे होता यक्षदश्विनौ छागस्य ( २१।४३ ४५ ) इत्याद्यास्त्रयो यथालिङ्गं प्रैषा भवन्ति ॥ २४ ॥

उत्तमौ ( २१।४६।४७ ) वनस्पति-स्विष्टकृतोः ॥ २५ ॥

अन्ते पठ्यमानौ वनस्पतिमभि० अग्निꣳ स्विष्टकृतम् इमौ प्रैषौ यथालिङ्गं बोध्यौ ॥२५॥

प्रतिगरिष्यत्युपविष्टेऽध्वर्यौ शोꣳसावेत्याहूय ॥ २६ ॥

इत्येकोनविंशे षष्ठी कण्डिका ॥ ६ ॥

---

"अश्विना तेजसेत्यनुवाकꣳ ( २०।८०-६० ) शꣳसति ॥ १ ॥

प्रतिगरार्थं होतुः पुरस्तादध्वर्यावुपविष्टे सति 'अध्वर्यो शोंसाव' इत्याहूय आश्विनमनुवाकं = शस्त्रं शंसेत् ॥ १ ॥

त्रिः प्रथमान्त्ये ॥ २ ॥

अनुवाकस्य प्रथमान्त्ये द्वे ऋचौ त्रिर्वारं पठेत् ॥ २ ॥

त्रिचादिष्वाहूय ॥ ३ ॥

अस्मिन्ननुवाके एकादश ऋचः सन्ति। तासां प्रथमोत्तमयोस्त्रिः शंसनमुक्तम्, परिशिष्टास्त्रयस्तृचाः । तेषामादिष्वाहूय = अध्वर्यो शोंसाव इत्याहावं कृत्वा शंसेत् । तेन चत्वार आहावाः । एकः शस्त्रस्यादौ, त्रयस्तृचानामादौ ॥ ३ ॥

उत्तमाꣳ शिष्ट्वा प्राङ् नवम्या दशम्या वा "त्रया देवा" इति ( २०।११ ) निवित्सप्तदशावसाना ॥ ४ ॥

उत्तमाया ऋचः प्राक्, अथवा नवम्या ऋचः प्राक्, अथवा दशम्या ऋचः प्राक् त्रया देवा इति निविदं सप्तदशावसानां कृत्वा शंसेत् ॥ ४ ॥

ओङ्कार ऋगन्ते ॥ ५ ॥

निविदवसाने ओङ्कारः पठनीयः ॥ ५ ॥

अन्त्येऽक्षरे स्वरप्रभृति प्रणवे लोपः ॥६॥

ऋचः संबन्धिनि अन्त्ये अक्षरे प्रणवे परे स्वरप्रभृतिवर्णजातस्य लोपो भवति । यथा— इन्द्राय धुरिन्द्रियम ( २०।८० ) इत्यत्र अम् इति लुप्यते । तेन इन्द्रियोम् इति सम्पद्यते ॥ ६ ॥
प्रणवेऽपि विकल्पेन मकारलोपमाह—

तस्मिन्प्रणवान्तं चैके ॥७॥

तस्मिन्नेव प्रणवे च एकेऽन्तमपि लुम्पन्ति । तत्र मकारो लुप्यते । ओ इत्येतावानेव प्रणवो भवतीति यावत् ॥ ७ ॥

"अश्विना तेजसाऽश्विना पिबतामिति (२०।८०-९०) याज्यानुवाक्ये सशस्त्रस्य ॥ ८॥

त्रयस्त्रिंशत्तमस्य सशस्त्रस्य ग्रहस्य ॥ ८ ॥

अनुवाचनप्रैषौ समस्यानुयाजप्रैषा "देवं बर्हिरिति [ १९।४८-५८ ] ॥ ९ ॥

अनुब्रूहीत्यनुवाचनम्, अनु यजेति प्रैषश्च समस्य कर्तव्यौ । अश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्णेऽनु ब्रूहीत्येवम् । देवं बर्हि (२८।३४-४५) रित्यनुयाजप्रैषा भवन्ति ॥ ९ ॥

याज्याश्च ॥१०॥

देवं बर्हिरित्याद्या एवानुयाजानां याज्याश्च भवन्ति ॥१०॥

"अग्निमद्येति [ २१।५९ ] सूक्तवाकप्रैषः ॥ ११ ॥

प्राकृतꣳ सूक्तवाकप्रभृति प्रागवभृथेष्टेः ॥ १२ ॥

सर्वं प्रकृतिवद्भवति ॥ १२ ॥

अनुक्तं च ॥ १३ ॥

यदत्र प्रकरणेऽनुक्तं प्रणयनीयानुवाचनाग्निमन्थनीया—मनोता-यूपाञ्जनोच्छ्रयणादि, तत्सर्वं प्राकृतं भवति ॥ १३ ॥

"इमं मे, तत्त्वेत्येककपालस्य [ २१।१-२ ] ॥ १४ ॥

याज्यानुवाक्ये भवतः ॥ १४ ॥

अग्नीवरुणयोस्त्वं नः, स त्वमिति [ २१।३-४ ] ॥ १५ ॥

याज्यानुवाक्ये ॥ १५ ॥

आदित्यस्य "सुत्रामाणं, महीमु षु मातरमिति [२१।६,५] ॥ १६ ॥

"आ नः, प्र बाह्वेति पयस्यायाः [२१।८-९] ॥ १७ ॥

वाजिनस्य "शं नो, त्वाजे वाज" इति [ २१।१०-११ ] ॥ १८ ॥

अस्यामेव याज्यायां विशेषमाह—

अनवानं याज्या ॥ १९ ॥

वाजिनस्य याज्या वाजे वाज इति अनवानमनुच्छ्वसता पठनीया ॥ १९ ॥

वायोधसाप्रियः "समिद्धो अग्निः समिधेति [ २१।१२-२२ ] ॥ २० ॥

वायोधस्य पशोः आप्रियः = प्रयाजयाज्याः ॥ २० ॥

याज्यानुवाक्याश्च वपा-पुरोडाश-पशूनां "वसन्तेनऽ ऋतुनेति [ २१।२३-२८ ] ॥ २१ ॥

वायोधसस्य पशोः ॥ २१ ॥

इत्येकोनविंशे सप्तमी कण्डिका ॥ ७ ॥

इति महामहोपाध्यायविद्वद्वरश्रीश्रीप्रभुदत्तशर्मसूनु—विद्याधरशर्मविरचितायां कात्यायनसूत्र-वृत्तौ सौत्रामणीनिरूपणात्मक एकोनविंशतितमोऽध्यायः ।

# विंशोऽध्यायः ।

## अश्वमेधयज्ञः ।

[ मुमुक्षोरभिषिक्तक्षत्रियस्याश्वमेधयज्ञः ]

सौत्रामणीमभिधाय श्रुतिक्रमप्राप्तमश्वमेधमभिदधाति—

**राज्ञोऽश्वमेधः सर्वकामस्य ॥१॥**

अत्र राजशब्दोऽभिषिक्तक्षत्रियवाची (१३।४।१।२) "राजेत्येतानभिषिक्तानाचक्षते" इति श्रुत्या प्राप्तराज्याभिषेकस्यैव क्षत्रियस्य राजशब्दवाच्यत्वमिति पूर्वमीमांसायां द्वितीयतृतीयद्वितीयेऽवेष्ट्यधिकरणे निर्णीतम्। एवं च तादृशस्य राज्ञः सर्वं कामस्यायमश्वमेध इत्यर्थः। अत्र च सर्वकामशब्देन मुमुक्षुरभिधीयते (१३।४।१।१)। मोक्षप्राप्तौ च सर्वकामप्राप्तेः संभवादिति कर्काचार्याः। राजग्रहणाच्च न ब्राह्मणवैश्ययोरयं यज्ञः ॥१॥

[ फाल्गुनज्येष्ठाषाढान्यतमशुक्लपक्षेऽष्टम्यां नवम्यां वाऽश्वमेधारम्भः ]

**अष्टम्यां नवम्यां वा फाल्गुनीशुक्लस्य ॥२॥**

फाल्गुनशुक्लस्याष्टम्यां नवम्यां वाऽश्वमेधमारभेत् (१३।४।१।४) ॥ २ ॥

**ग्रीष्म एके ॥ ३ ॥**

ज्येष्ठाषाढयोरन्यतरस्य शुक्लाष्टम्यां नवम्यां वाऽऽरभेत् (१३।४।१।२) ॥ ३ ॥

[ ब्रह्मौदनपाकः ]

**ब्रह्मौदनं पचति चतुर्णां पात्राणामञ्जलि-प्रसृतानां च ॥ ४ ॥**

ततोऽध्वर्युः कस्मिंश्चित्पात्रे चत्वारि पात्राणि निर्वपेत्, ततश्चतुरोऽञ्जलीन्, ततश्चतुरः प्रसृतांश्च निर्वपेत्पचेच्च गार्हपत्ये। प्रसृतश्चैकहस्ताङ्गुलिकोशः ॥ ४ ॥

[ आर्त्विग्भ्यो ब्रह्मौदनदानम् ]

**अकृत्वैनमार्त्विग्भ्यः प्रयच्छति ॥ ५ ॥**

प्राशनार्थम्। ते च प्राश्नन्ति ॥ ५ ॥

[ आर्त्विग्भ्यः प्रत्येकं गोसहस्रस्य सौवर्णशतमानस्य च दानम् ]

**तेभ्यश्चत्वारि सहस्राणि ददाति शतमानांश्च तावतः ॥ ६ ॥**

यजमान आर्त्विग्भ्यः प्रत्यृत्विजमेकैकं गोसहस्रमेकैकं सौवर्णं शतमानं च दद्यात्। रक्तिकाशतेन शतमानम् ॥ ६ ॥

[ अश्वरशनाऽञ्जनम् ]

**अकृत्वाऽज्यशेषेण रशनां द्वादशारत्निं त्रयोदशारत्निं वा निदधाति ॥ ७ ॥**

ब्रह्मौदनार्थाज्यशेषेण ॥ ७ ॥

**आदानकाले वाऽञ्जनम् ॥ ८ ॥**

वाऽवधारणे। पौष्णया इष्टेरनन्तरमादानकाल एव (२०।१।२४-२५) रशनामञ्ज्यान्नेदानीम् ॥ ८ ॥

[ यजमानकण्ठे निष्कमोकः ]

**निष्कं प्रतिमुञ्चन्वाचयति "तेजोऽसीति (२२।१) ॥ ९ ॥**

अध्वर्युर्यजमानकण्ठे चतुःसौवर्णिकस्याभरणविशेषस्य प्रतिमोकं कुर्वन् तेजोऽसीति वाचयेत् ॥ ९ ॥

[ यजमानस्य वाग्यमनम् ]

**वाचं यच्छेति चाह ॥१०॥**

**आ वरदानाद्वाग्यमनम् ॥११॥**

"पूर्णाहुत्यन्ते वरदानं ब्रह्मणे" ( २०।१।१९ ) इति वक्ष्यति। तावत्पर्यन्तं वाग्यमो भवेद्यजमानः ॥११॥

[ चतसृणां यजमानपत्नीनां प्रत्येकमनुचरीशतसहितानामागमनम् ]

**पत्न्यश्चायन्त्यलङ्कृता निष्किण्यो महिषी वावाता परिवृक्ता पालागली सानुचर्यः शतेन शतेन ॥१२॥**

ततो महिष्याद्याश्चतस्रः पत्न्योऽनुचरीसहिताः सर्वाभरणैरलङ्कृता निष्कं=सौवर्णाभरणं बिभ्राणा यजमानसमीपं आगच्छेयुः। महिषी प्रथमपरिणीता स्त्री। वावाता वल्लभा। परिवृक्ताऽवल्लभा। पालागली दूलपुत्री। अनुचर्यश्च चतसृणामपि प्रत्येकं शतं शतं भवन्ति (१३।४।१।८) ॥१२॥

**राजदुहितरः प्रथमायाः ॥१३॥**

शतं राजपुत्र्यो महिष्या अनुचर्यः ॥१३॥

**राजन्यानां द्वितीयायाः ॥१४ ॥**

क्षत्रियजातिमात्रपुत्र्यो द्वितीयायाः पत्न्या वावातायाः भवेयुः ॥१४॥

**सूतग्रामण्यां तृतीयायाः ॥१५॥**

क्षत्रियाद् ब्राह्मण्यां जातः सूतोऽश्वसारथिर्वा। ग्रामणीर्महत्तरः। तयोर्दुहितरस्तृतीयायाः पत्न्या दास्यो भवन्ति ॥१५॥

**क्षात्रसङ्ग्रहीतॄणां चतुर्थ्याः ॥१६॥**

क्षत्ता प्रतीहारो दूतो वेति कर्कः। क्षत्तार आयव्ययाध्यक्षा इति देवः। तेषां समूहः क्षात्रम्। सङ्ग्रहीता च सारथिः। तयोर्दुहितरश्चतुर्थ्याः पत्न्याऽनुचर्यो भवन्ति ॥१६॥

[ वावातायाः पत्न्या ऊर्वन्तरे यजमानस्य शयनम् ]

**अग्न्याधेयवत्प्रविश्य हुतेऽग्निहोत्रेऽपरेण गार्हपत्यमुदक्शिराः संविशत्यूर्वन्तरे वावाताया ब्रह्मचारी ॥१७॥**

अग्न्याधेये "पूर्वेण प्रविशति, दक्षिणेन पत्नी" (४।७।१९-२०) इत्युक्तम्। तद्वदत्रापि यजमानः पत्नीभिः सहाग्न्यगारं प्रविश्य सायमग्निहोत्रे हुते गार्हपत्यस्य पश्चादुदक्शिरसः सुप्ताया वावातायाः ऊर्वोरन्तराले यजमान उदक्शिरा ब्रह्मचारी सन् शयीत (१३।४।१।९) ॥१७॥

**इतराश्चान्वक् ॥१८॥**

इतराः पत्न्यो गार्हपत्यस्य पश्चाद्यथासंभवं शयीरन् ॥१८॥

प्रातराहुत्याꣳ हुतायां पूर्णाहुत्यन्ते वरदानं ब्रह्मणे ॥१६॥

अध्वर्यवे च प्रतिमुक्तं निष्कम् ॥२०॥

पूर्वदिने प्रतिमुक्तं निष्कं दद्यात् ॥२०॥

[ पथिकृदिष्टिः ]

पुरोडाशोऽग्नये पथिकृते ॥२१॥

पुनरुद्धृत्य कर्मापवर्गान्तः कर्त्तव्यः ॥ २१ ॥

शतमानं दक्षिणा सौवर्णम् ॥२२॥

हिरण्यपरिमाणेऽन्यत्रापि ॥२३॥

अन्यत्रापि द्राह्यायणादौ (४।४।२८) हिरण्यपरिमाणे शतमानं प्रत्येतव्यम् ॥२३॥

[ अश्वबन्धनम् ]

पौष्णं चरुं निर्वपति वासः शतं दक्षिणा ॥२४॥

"देवस्य त्वेति (२२।१) रशनामादत्ते" "ब्रह्मन्नश्वं भन्त्स्यामीत्याह (२२।४) ॥२५॥

"तं बधानेति (२२।४) ब्रह्मानुज्ञातोऽभिधाऽ असीति (२२।३) बध्नात्यश्वम् ॥२६॥

त्रिरूपꣳ सर्वरूपं वा ॥२७॥

पूर्वार्द्धः कृष्णः, अपरार्द्धः शुक्लः, ललाटे शकटाकारं पुण्ड्रमित्येवं त्रिरूपम्। सर्वरूपं = नानावर्णं वा (१३।४।२।४) ॥२७॥

शीघ्रम् ॥२८॥

वेगवत्तरम् ॥२८॥

दक्षिणधुर्यसमम् ॥२६॥

यस्मिन् दक्षिणस्यां धुरि युक्ते सति सव्यधुरि योजनार्थमन्यः पृथिव्यामश्वो न भवेत् स दक्षिणधुर्यसमस्तम् ॥२६॥

साहस्रम् ॥३०॥

गवां सहस्रं मूल्यं योऽर्हति तथाविधम् ॥३०॥

ललामम् ॥३१॥

नीलवर्णलाञ्छनयुक्तम् ॥३१॥

कृत्तिकाञ्जि वा ॥३२॥

कृत्तिका = शकटाकारम् अञ्जि = पुण्ड्रं ललाटे यस्य ॥३२॥

पूर्वकायकृष्णꣳ शुक्लापरम् (१३।४।२।४) ॥३३॥

कृष्णसारङ्गं वा ॥३४॥

कृष्णवर्णो वर्णान्तरेण सहितः कृष्णसारङ्गः ॥३४॥

[ जलस्थस्याश्वस्य स्नानम् । ]

स्थावरा अपो गत्वा "प्रजापतये त्वेति (२२।५) प्रोक्षत्यश्वं प्रतिमन्त्रम् ॥३५॥

[ मुसलेनाश्वमारणम् ]

**आयोगवमाह 'श्वानं चतुरक्षमभिमन्यस्वेति ॥३६॥**

शूद्राद्वैश्यायां जात आयोगवः ( या० स्मृ० )। तमध्वर्युर्ब्रूयात्। चतुरक्षस्य शुनोऽभावाद्यस्याक्षिसमीपे पौण्ड्राणि स गुणवृत्त्या चतुरक्ष इति कर्कः। शुनश्चतुरक्षत्वं गर्तचतुष्टययोगेनेति याज्ञिकाः ॥३६॥

**पूंश्चलूमेके ॥३७॥**

पुंश्चलूः स्त्रीलोलुपः। तं प्रति प्रैषं ब्रूयादित्येके वदन्ति ॥३७॥

**सिध्रकमुसलेनैनꣳ हन्ति ॥३८॥**

तत आयोगवः सिध्रकवृक्षोद्भवेन मुसलेनैनं श्वानं प्राणैर्वियुञ्ज्यात् ॥३८॥

इति प्रथमा कण्डिका ॥ १ ॥



**"योऽ अर्वन्तमिति (२२।५) वाचयति ॥१॥**

[ वेतसकटस्थस्य मृतस्य शुनो जलस्थाश्वस्याधस्तात्तारणम् ]

**वेतसकटेनाधोऽश्वं प्लावयति "परो मर्त" इति (२२।५) ॥२॥**

वेतसशाखानिर्मितेन कटेन मृतं श्वानमश्वस्याधस्ताज्जलमध्ये तारयेत् ॥ २ ॥

[ शतमाहुतयः सहस्रं वा ]

**अग्निसमीपमानीयाग्नये स्वाहेति (२२।६) जुहोत्यनुवाकेन प्रतिमन्त्रम् ॥३॥**

अश्वमग्निसमीपमानीय दशाहुतीर्जुहुयात् ॥ ३ ॥

**सहस्रं वाऽऽवर्तम् ॥ ४ ॥**

अथवा अग्नये स्वाहेत्येकमन्त्रात्मकमनुवाकं शतकृत्व आवर्त्य सहस्रमाहुतीर्जुहुयात् (१३।१।३।१) ॥ ४ ॥

[ स्नापितस्याश्वस्य शरीरादुदकस्रवणपर्यन्तं वाऽऽहुतयः ]

**आऽश्वस्रवणविरमाद्वा ॥५॥**

अथवा न सहस्रस्य नियमः। किन्तु क्लिन्नादश्वशरीराद्यावदुदकं स्रवति तावज्जुहुयात् ॥ ५ ॥

[ सावित्र्य इष्टयः ]

**द्वादशकपालान्निर्वपति भिन्नतन्त्राञ्छतमानदक्षिणान्मध्यमस्य राजतः सवित्रे प्रसवित्रे, सवित्र आसवित्रे, सवित्रे सत्यप्रसवायेति ॥६॥**

त्रीन् द्वादशकपालान्निर्वपेदध्वर्युः। तत्र मध्यमस्य द्वादशकपालस्य राजतः शतमानो दक्षिणा। इतरयोस्तु सौवर्ण इति ॥ ६ ॥

[ ब्राह्मणकृता यजमानस्तुतयः ]

**प्रयाजेषु दक्षिणतो ब्राह्मणो यजमानस्य यज्ञदानयुक्ताः स्वयङ्कृतास्तिस्रो गाथा गायत्युत्तरमन्द्रायाम् ॥ ७ ॥**

सावित्र्या इष्टेः प्रयाजेषु हूयमानेषु विहारस्य दक्षिणत उपविष्ट एको ब्राह्मणोऽयं यजमान इत्थं यजते, अनेन इमानि दानानि कृतानि एवं यजमानकीर्तनपराः स्वयं = ब्राह्मणेनैव निर्मिता गाथा उत्तरमन्द्रासंज्ञायां गायनप्रसिद्धायां वीणायां गायेत्। ततो द्वितीया सावित्रीष्टिः, ततो गाथागानम् । ततस्तृतीया सावित्रीष्टिः, गाथागानं चेति (१३।४।२।०) ॥ ७ ॥

[ क्षत्रियकृता यजमानस्तुतयः ]

**राजन्यो धृतिषु युद्धजययुक्ताः ॥ ८ ॥**

धृतिहोमा वक्ष्यन्ते ( २०।२।४ ) । तासु धृतिषु हूयमानासु क्षत्रियः अयं यजमानः शूरैः सह युद्धं कृतवान्, अयं सङ्ग्राममजयत् इत्येवं युद्धजयप्रतिपादनपरा गाथा गायेत् ॥ ८ ॥

[ अश्वकर्णे जपस्तस्यैशान्यामुत्सर्गश्च ]

**अध्वर्युयजमानौ दक्षिणेऽश्वकर्णे जपतो "विभूर्मात्रेति ( २२।१९ ) ॥ ९ ॥**

**पशुवदुत्सर्जनं निरष्टेऽश्वशते ॥ १० ॥**

तृतीयां सावित्रीमिष्टिं समाप्य अध्वर्युयजमानौ अश्वशते = शतानामश्वानां मध्ये पशुवत् ( १६।३।१५ ) ईशान्यां दिशि अश्वमुत्सृजतः । कीदृशेऽश्वशते निरष्टे । अश्वस्य दन्तगतान्यष्टौ वयोव्यञ्जनानि । तेषामेकैकं त्रीणि त्रीणि वर्षाण्यनुवर्तन्ते । तानि निर्गतान्यस्मादिति निरष्टम् = अतीतचतुर्विंशतिवर्षमित्यर्थः । तस्मिन्निरष्टे गतयौवने (१३।४।२।५) ॥ १० ॥

[ अश्वस्य चतुःशतं रक्षकाः, तेषां कर्तव्यतोपदेशश्च ]

**"देवा आशापाला" इति ( २२।१९ ) रक्षिणोऽस्यादिशत्यनुचरीजातीयांस्तावतस्तावतः कवचि-निषङ्गि-कलापि-दण्डिनो यथासङ्ख्यम् ॥ ११ ॥**

अध्वर्युरस्य उत्सृष्टस्याश्वस्य रक्षिणो = रक्षकान् पुरुषान् अनुचरीजातीयान् तावतस्तावतः = अनुचरीसङ्ख्यान् अर्थात् शतं राजपुत्रान् कवचिनः, शतं राजन्यपुत्रान् खड्गधारिणः, शतं सूतग्रामण्यां पुत्रान् शरावपनभस्त्रावतः, शतं क्षात्रसङ्ग्रहीतृपुत्रान् वंशादिदण्डधारिण आदिशेत् (१३।४।२।५) ॥ ११ ॥

**वडवाभ्यो वारणम् ॥ १२ ॥**

हे रक्षिणो भवद्भिरश्वस्य वडवाभ्यो वारणं विधेयम् ॥ १२ ॥

**प्रस्नेयाच्चोदकात् ॥ १३ ॥**

स्नानार्हादुदकाच्चाश्वस्य वारणं कर्तव्यम् ॥ १३ ॥

**ब्राह्मणोऽश्वमेधेऽविद्वान् वृत्तिः स वः ॥ १४ ॥**

यः अश्वमेधसंबन्धिनि आध्वर्यवहौत्रादिकेऽविद्वान् ब्राह्मणः, स वो = युष्माकं वृत्ति जीवनोपायः । तदीयं धनधान्यादिकं सर्वं भवद्भिर्ग्रहीतव्यमित्यर्थः ॥ १४ ॥

**पक्वान्नं च सर्वेषु ॥ १५ ॥**

अश्वमेधविद्वत्स्वपि ब्राह्मणेषु यत्पक्वान्नं मोदकतण्डुलादिकं तद्भवद्भिर्ग्राह्यम् ॥ १५ ॥

रथकारगृहवासाश्च ॥ १६ ॥

अश्वसहितैर्युष्माभी रात्रौ रथकारगृहे वासः कर्तव्यः (१३।४।२।१७) ॥ १६ ॥

अभिषेक्या भविष्यथ समाप्नुवन्त इत्याह राजपुत्रान् ॥ १७ ॥

अश्वरक्षणं समाप्नुवन्तः पट्टाभिषेकार्हा भविष्यथ ॥ १७ ॥

[ अध्वर्य्वादीनां सौवर्णेषु कूर्चादिषूपवेशनम् ]

दक्षिणतो वेदेर्हिरण्मयेषूपविशन्ति ॥ १८ ॥

वक्ष्यमाणेष्वासनेषु सौवर्णेषु ॥ १८ ॥

अध्वर्युयजमानौ कूर्चयोः ॥ १६ ॥

सपादमासनं कूर्चः ॥ १६ ॥

फलकयोर्वा ॥ २० ॥

पादरहितमासनं फलकम् ॥ २० ॥

होतृब्रह्मोद्गातारः कशिपुषु ॥ २१ ॥

कशिपुर्मृद्वासनं मसूरकः ॥ २१ ॥

[ होतुः पारिप्लवशस्त्रशंसनम् । ]

'होतर्भूतान्याचक्ष्व भूतेष्विमं यजमानमध्यूहेति पारिप्लवं प्रेष्यति ॥ २२ ॥

पारिप्लवशस्त्रशंसनार्थं होतारं प्रेष्येत् ॥ २२ ॥

इति द्वितीया कण्डिका ॥ २ ॥



[ पारिप्लवशस्त्रस्य प्रतिगरः ]

हवै होतरिति प्रतिगृणाति ॥ १ ॥

अध्वर्युः । ह्वेञ् शब्दे । अहं त्वां ह्वयै, होतः सज्जोऽहं प्रतिगराय, वद त्वमिति प्रतिगरार्थः ॥ १ ॥

[ वीणायां राजर्षितुल्या यजमानस्तुतिः ]

तदन्ते प्रेष्यति वीणागणगिनो राजर्षिभिर्यजमानꣳ सङ्गायतेति ॥ २ ॥

वीणानाम् = अलावुवीणा—त्रितन्तिः सप्ततन्तिः शततन्तिः इत्यादीनां गणो वीणागणः । तेन ये गायन्ति ते वीणागणगाः । ते शिष्यभूता येषां गायनाचार्यादीनां सन्ति ते वीणागणगिनः । राजर्षिभिरुपमानभूतैः सहोपमेयं यजमानं सङ्गायत (१३।४।३।३) ॥ २ ॥

[ प्रक्रमहोमाः ]

दक्षिणाग्नौ जुहोति "हिङ्काराय स्वाहेति (२२।७-८) प्रक्रमान् ॥३॥

प्रतिमन्त्रं प्रक्रमसंज्ञकान् होमानेकोनपञ्चाशत् ॥ ३ ॥

[ धृतिहोमाः ]

आहवनीयेऽस्तमिते चतस्रो धृतीरिह रन्तिरिति( २२।१६ ) ॥ ४ ॥

इह रन्तिः स्वाहा, इह रमतां स्वा० इह धृतिः स्वा० इह स्वधृतिः स्वा० इति चतसृणां धृतिरिति संज्ञा । पूर्णाहुत्याद्येतत्पर्यन्तं कर्म एकस्मिन्नहनि क्रियते । इति प्रथमदिनकृत्यम् ॥४॥

( संवत्सरपर्यन्तं प्रतिदिनकर्तव्यं कर्म )

[ वावातासंवेशनादिकस्य संवत्सरादिपक्षेण प्रतिदिनमनुष्ठानम् ]

**वावातासंवेशन-साविश्युत्तरमन्द्रागान-पारिप्लव-धृतीः संवत्सरम् ॥ ५ ॥**

अश्वोत्सर्गदिवसमारभ्य संवत्सरपर्यन्तमेतानि प्रत्यहं कुर्यात् (१) ॥ ५ ॥

**अर्द्धमास-मास-त्रैमास्य-षण्मास्यानि चैके ॥ ६ ॥**

**वीणागाथिभ्यां पृथक् शते ददाति ॥ ७ ॥**

ब्राह्मणस्य सावित्र्यन्ते, राजन्यस्य धृतिहोमान्ते संवत्सरे पूर्णे एकैकं गवां शतमुभाभ्यां दद्यात् ॥ ७ ॥

[ राजर्षितुल्या यजमानस्तुतिः ]

**राजर्षिभिः सङ्गायनमा दीक्षणीयायाः ॥ ८ ॥**

संवत्सरे पूर्णेऽपि राजर्षिभिः संगायनं सप्तमदीक्षणीयापर्यन्तं भवति ॥ ८ ॥

[ देवतुल्या यजमानस्तुतिः ]

**दीक्षान्ते देवैरौपवसथ्यात् ॥ ९ ॥**

"दीक्षितोऽयं ब्राह्मण" (७।४।११) इत्येतदनन्तरं देवैरिमं यजमानं० संगायतेति प्रैषः आ औपवसथ्यात् = अग्नीषोमीयसमाप्तिपर्यन्तं भवति (१३।४।४।२) ॥ ९ ॥

[ प्रजापतितुल्या यजमानस्तुतिः ]

**पश्वादौ प्रजापतिना सुत्यासु ॥१०॥**

सुत्यासु = सवनीयपश्वादौ प्रजापतिनेमं यजमानं संगायत इति प्रैषः ॥१०॥

**अन्ते च ॥११॥**

सुत्यानामन्ते उदवसानीयान्ते (१३।४।४।४) प्रजापतिनेति प्रैषः कार्यः ॥११॥

प्रायश्चित्तान्याह—

[ अश्वे रोगादिनाऽभिभूते नैमित्तिकम् ]

**अश्वापदीज्या चरुभिः सावित्र्यन्ते ॥१२॥**

अश्वस्य आपदि = रोगादौ जाते वक्ष्यमाणैश्चरुभिर्यागः कार्यः सावित्र्यन्ते ॥१२॥

चरूनाह—

**पौष्णः स्रामे ॥१३॥**

अश्वस्य स्रामे उत्पन्ने पौष्णश्चरुर्भवति। स्रामः सिङ्घाणकः शालिहोत्रे प्रसिद्धः॥१३॥

**सौर्योऽक्ष्यामये ॥१४॥**

अक्षिरोगे ॥१४॥

---

(१) अश्वमेधस्याष्टम्यां प्रारंभपक्षे वावातासंवेशन सविश्युत्तरमन्द्रागानानामागामिनि वर्षे सप्तम्यां समाप्तिः। नवम्यां प्रारंभपक्षे चाष्टम्यां समाप्तिः। पारिप्लवाख्यान—धृतिहोमयोः सावनः संवत्सरः। "षट्त्रिंशं० शतं दशाहानाचष्ट" (१३।४।३।१५) इति श्रुतेः। धृतिहोमेषु "संवत्सरमाहुतीर्जुहोति षोडश नवतीः" (१३।१।६।२) इति श्रुतेश्च। अतस्त्रयोदश्यां चतुर्दश्यां वा समाप्तिरिति कर्काचार्याः। संवत्सरश्चात्राश्वोत्सर्गदिवसमारभ्य गणनीयो न ब्रह्मौदनात्। कुतः ? "संवत्सरं० रक्षन्ति" इति (१३।४।२।१६) अश्वस्य प्रकृतत्वात्।

वारुणोऽप्सु मृते ॥१५॥

भूमिकपालो वैश्वानरोऽरिष्ट्यामये ॥१६॥

रिष्टिरायुधम्। तत्कृत आमयो = रोगो रिष्ट्यामयः। न रिष्ट्यामयोऽरिष्ट्यामयः। तस्मिन् क्षतामये भूमिकपालं वैश्वानरं पुरोडाशं निर्वपेत् (१३।३।८।३)। भूमिरेवास्य कपालस्थाने भवतीत्यर्थः ॥१६॥

लोष्टकपालं जातूकर्ण्यो भेदात् ॥१७॥

लोष्टानि मृत्खण्डान्येव कपालानि यस्य तं जातूकर्ण्यो मन्यते। कुतः? भेदात्। कपालेषु सङ्ख्यायोगेन भेदात। न चासौ भूमिकपालत्वे संभवति। तस्माल्लोष्टानि कपालस्थाने उपधेयानि। एतदयुक्तमिति कर्काचार्याः। द्वादशकपालतायां भूमिकपालतायाश्चासंभवात्। लोष्टकपालत्वे च भूमिकपालतानुपपत्तिरेव। तस्माद् भूमिकपाल एवेति (१३।३।८।३) ॥१७॥

नाशे तन्त्रेण द्यावापृथिव्यः, पयो वायव्यꣳ, सौर्यः ॥१८॥

अश्वस्य नाशे द्यावापृथिव्य एककपालः, वायव्यं पयः, सौर्यश्चरुः इति त्रिहविष्कामिष्टिं कुर्यात् ॥१८॥

अन्यत्रापि ॥१९॥

अन्यस्मिन्नपि हिरण्यादौ नष्टे इयमिष्टिरश्वमेधयाजिना कर्तव्या (१३।३।८।६) ॥१९॥

प्रजाते वायव्यम् ॥२०॥

वडवायां कृतरेतस्कन्दनः प्रजातः। तथाविधेऽश्वे वायव्यं पयो भवति (१३।३।८।१)॥२०॥

मृतादर्शनयोरन्यस्य रशनादानादि करोत्यश्वयुक्तम् ॥२१॥

अश्वे मृते, अदर्शने = अश्वस्य पुनरागमनासंभवे चान्यस्याश्वस्य रशनादानादि अश्वयुक्तम् = अश्वोपकारकं सर्वं कर्म पुनः कुर्यात् ॥२१॥

इति तृतीया कण्डिका ॥ ३ ॥



पश्वालम्भनाद्याऽऽध्वरदीक्षणीयायाः कृत्वा चत्वार्यौद्ग्रभणानि जुहोत्याध्वरिकाणि ॥१॥

इष्टकापशोरालम्भनादि कर्म अध्वरदीक्षणीयान्तं कृत्वा चत्वार्याध्वरिकाणि औद्ग्रभणानि आकूत्यै प्रयुज (४।७) इति जुहुयात् (७।२।२६) ॥१॥

"काय स्वाहेति (२२।२०) चाश्वमेधिकानि त्रीणि ॥२॥

औद्ग्रभणानि जुहोति ॥२॥

कृष्णाजिनदीक्षाऽतः ॥३॥

अतोऽनन्तरं कृष्णाजिनदीक्षां तत्रोपवेशनान्तां कुर्यात् ॥३॥

**अध्वरदीक्षणीयायाश्चत्वारि त्रीणि त्रीणि चाश्वमेधिकानि ॥४॥**

अश्वमेधे सप्ताहं दीक्षणीया भवति । तत्र प्रत्यहं पूर्वोक्तानि चत्वारि, त्रीणि चेति सप्ताध्वरिकाणि जुहुयात् । काय स्वाहेत्यस्यां कण्डिकायां सप्त त्रिकाणि पठ्यन्ते । तेषां मध्ये सप्तस्वहःसु क्रमेणैकैकं हूयते ॥४॥

**कृष्णाजिनान्तमन्वहम् ॥५॥**

कृष्णाजिनोपवेशनान्तं कर्म दीक्षणीयेष्ट्यादिकं प्रतिदिनं षट्स्वपि दीक्षणीयासु भवति ॥५॥

**प्राकृतव्रतोऽकृतत्वात् ॥६॥**

सप्ताहं दीक्षणीयाप्रचारे यजमानः प्राकृतव्रतः = प्राकृतव्रतोपायनीबाशनो भवेत् । कुतः ? दीक्षासंस्कारस्याकृतत्वात् । सञ्जाते हि दीक्षितत्वे पयोव्रतता विहितेति ॥६॥

सप्तम्यां दीक्षणीयायां विशेषमाह—

**आग्निके च सप्तम्यां निर्वपति ॥७॥**

सप्तम्यां दीक्षणीयायामाग्निके हविषी "वैश्वानरो द्वादशकपालो घृते चरुरादित्येभ्य" इति (१६।४।२-३) द्वे हविषी, चकारादाध्वरिकमाग्नावैष्णवं च निर्वपेत् ॥७॥

**अभ्यञ्जनप्रभृति करोति ॥८॥**

सप्तम्यां दीक्षणीयायां नवनीतेनाभ्यञ्जनप्रभृति सर्वं कर्म कुर्यात् ॥८॥

**षडाग्निकानि चतुःस्थानं ॥९॥**

सप्तम्यां दीक्षणीयायां चतुर्णामौद्ग्रभणानामाध्वरिकाणां स्थाने षडौद्ग्रभणानि आकूतिमिति(११।६६) जुहुयात् ॥९॥

**दशमं "विश्वो देवस्येति ॥१०॥**

सप्तम्यां दीक्षणीयायां षडाग्निकानि, त्रीणि चाश्वमेधिकानि (२२।२१) हुत्वा दशममौद्ग्रभणं जुहुयात् ॥१०॥

**कृष्णाजिनाद्या समिदाधानात्कृत्वाऽऽब्रह्मन्निति (२२।२२) जपति ॥११॥**

कृष्णाजिनदीक्षात आरभ्य उखायां त्रयोदशसमिदाधानान्तं (१६।४।३३) कर्म कृत्वा जपेदध्वर्युः ॥११॥

**उत्सर्गकाल एके ॥१२॥**

अश्वोत्सर्गकाले (२०।२।६) एके जपन्ति ॥१२॥

**दीक्षा द्वादशोपसदश्च ॥१३॥**

सुत्याः तिस्रः (१३।४।४।१) ॥१३॥

**नित्योदकं देवयजनं पुरस्तात् ॥१४॥**

यत्र देवयजनात्पूर्वस्यां दिशि स्यान्नित्युदकं भवेत्तादृशं देवयजनं कुर्यात् ॥१४॥

**आद्योऽग्निर्द्विगुणस्त्रिगुण एकविंशतिविधो वा ॥ १५ ॥**

आद्येऽग्नौ सार्द्धसप्तपुरुषः क्षेत्रफलम् । तत्र द्विगुणपक्षे स पञ्चदशपुरुषो भवति । त्रिगुणपक्षे सार्द्धद्वाविंशतिपुरुषः । एकविंशतिविधपक्षे सार्द्धद्वाविंशतिपुरुषापेक्षया किञ्चिदधिकप्रमाणः (१) ॥१५॥

**एकादशिनीवदेकविंशतिर्यूपाः ॥ १६ ॥**

एकविंशत्यरत्नयः । एकादशिनीवदित्यनेन "रथाक्षमात्राण्यन्तराणि पूर्वार्द्धं वा समं विभज्येत्यादि ( ८।८।६-८) सर्वमतिदिश्यते (१३।५।१।३) ॥ १६ ॥

**रज्जुदालो मध्ये ॥ १७ ॥**

एकविंशतियूपानां मध्येऽग्निष्ठो यूपो रज्जुदालः = श्लेष्मातकः स्यात् ॥ १७ ॥

**अभितः पैतुदारवौ ॥ १८ ॥**

रज्जुदालमभितो देवदारुनिर्मितौ यूपौ निखनेत् ॥ १८ ॥

**षट् षड् बैल्व-खादिर-पालाशाः ॥ १९ ॥**

यूपाः ॥१९॥

**त्रयस्त्रयोऽभितः ॥ २० ॥**

तेषां बैल्वादीनां मध्ये त्रयस्त्रयो यूपा उभयोः पार्श्वयोर्भवन्ति (१३।४।१।३) ॥२०॥

**प्रतियूपमग्नीषोमीयाः ॥ २१ ॥**

पशवो नियुज्यन्ते दक्षिणयूपादारभ्य (१३।५।४।११) ॥२१॥

**प्रातरग्निष्टोमः ॥ २२ ॥**

प्रातरग्निष्टोमसंस्थमहर्भवति ॥ २२ ॥

[ द्वयोरेकादशिन्योरनुष्ठानम् ]

**एकादशिन्यौ सवनीयाः पशवो भवन्ति ॥ २३ ॥**

आग्नेयसारस्वतसौम्येत्यादिका पूर्वोक्तैकादशिनी द्विरावृत्ता भवति (१३।५।१।३) । तेन द्वे एकादशिन्यौ सवनीयाः पशवो भवन्तीति सूत्रार्थः ॥ २३ ॥

**मध्यम आग्नेयौ ॥ २४ ॥**

द्वयोरेकादशिन्योः प्रथमौ पशू आग्नेयौ मध्यमे यूपे आलब्धव्यौ । शेषा व्यत्यासेन प्रकृतिवत् ॥ २४ ॥

---

(१) आद्योऽग्निः सार्द्धसप्तक्षेत्रफलक इत्युक्तम् ( १६ । ८ । २१ ) । द्विगुणपक्षे पञ्चदशपुरुषक्षेत्रफलः । त्रिगुणपक्षे सार्द्धद्वाविंशतिक्षेत्रफलः । इष्टकाप्रमाणान्यपि प्रथमचयनप्रमाणाद् द्विगुणप्रमाणानि त्रिगुणप्रमाणानि वा कार्याणि । तत्र द्विगुणपक्षे पद्याक्षेत्रस्याक्ष्णया रज्ज्वा पद्याप्रमाणम्, बृहत्याऽक्ष्णयारज्ज्वा बृहती प्रमाणम् । त्रिगुणपक्षे च पद्याक्षेत्रस्याक्ष्णयाप्रमाणं दीर्घचतुरस्रं साधयित्वा तस्य दीर्घचतुरस्रस्याक्ष्णया रज्ज्वा त्रिगुणस्याग्नेः पद्याप्रमाणम् । एवमेव बृहत्यादीनाम् । एवं सर्वासामिष्टकानां प्रमाणान्यूहयित्वा कार्याणीत्युक्तम् ( १६ । ८ । २६ ) । एवं विधाभिस्तिसृभिः पद्याभिरेकः प्रक्रमः । तेन वेदिरपि अग्निवद् द्विगुणा त्रिगुणा वा वर्द्धनीया । अथवाऽत्रैकविंशतिविधोऽग्निर्भवति । अस्मिन्पक्षे सप्तपुरुषप्रमाणे प्रथमाग्निक्षेत्रे पुरुषसमासोपायेन ( का० शुल्ब० ) चतुर्दशपुरुषाणामावापः कार्यः । अधिकेऽर्द्धपुरुषेऽपि चतुर्दश सप्तमभागा आवपनीयाः । एवमेकविंशतिविधोऽग्निः सिद्ध्यति । अन्तःपात्यगार्हपत्ययोर्वृद्धिस्तु न भवतीत्युक्तम् ( १६ । ८ । २६, का० शु० ) ।

उत्तरयोश्च ॥ २५ ॥

उत्तरयोर्द्वितीयतृतीययोरह्नोर्द्वे एकादशिन्यौ सवनीयाः पशव आलब्धव्याः ॥२५॥

उत्तमे गावो बहुरूपाः ॥ २६ ॥

उत्तमेऽहनि द्वयोरेकादशिन्योः बहुरूपा = विचित्रवर्णा गाव आलब्धव्याः ॥२६॥

[ दिनत्रये दक्षिणादानम् ]

विजयमध्याद्धोतुः प्राची दिग् , दक्षिणा ब्रह्मणोऽध्वर्योः प्रतीच्युद्गातुरुदीची तृतीयं तृतीयमन्वहं ददाति भूमि-पुरुष-ब्राह्मणस्ववर्जम् । २७ ॥

दिग्विजयकरणे प्राच्या दिशो यद् द्रव्यमानीतं तस्य तृतीयं तृतीयं भागं प्रत्यहं होत्रे दद्यात् । एवं दक्षिणस्या दिश आनीतं द्रव्यं ब्रह्मणे, प्रतीच्या आनीतमध्वर्यवे, उदीच्या आनीत मुद्गात्रे दद्यात् ॥ २७ ॥

प्रथमेऽहनि विशेषमाह—

[ उक्थ्यग्रहणम् ]

तृतीयसवन उक्थ्यं गृहीत्वाऽऽग्निमारुतकाले त्रेधं विगृह्णाति ॥२८॥

तच्चमसाननु होमभक्षौ ॥२९॥

आग्निमारुतचमसाननु भवतः ॥२९॥

[ वसतीवरीग्रहणम् ]

वसतीवरीर्गृहीत्वा गृहीत्वा प्रतिदिशꣳ समासिच्य परिहरति ॥३०॥

द्वितीयस्यान्होऽर्थे सर्वाभ्यो दिग्भ्यः सकाशाद्वसतीवरीर्गृहीत्वा गृहीत्वा आसादनान्तं पृथक्कृत्वा परिहरणकाले एकस्मिन्पात्रे समासिच्य = मिश्रीकृत्य परिहरेत् ॥३०॥

[ आज्यादीनां रात्रौ प्रतिप्रहरं क्रमेण होमः ]

आज्य-सक्तु-धाना-लाजानामेकैकं जुहोति "प्राणाय स्वाहेति (२२।२३) प्रतिमन्त्रꣳ सर्वरात्रमावर्तम् ॥३१॥

प्रतिप्रहरमेकैकं द्रव्यं क्रमेण सर्वस्यां रात्रौ प्राणाय स्वाहेति द्वादशभिरनुवाकैर्द्वादशानुवाकानावर्त्यावर्त्य जुहुयात् । इह च "एकस्मै स्वाहा द्वाभ्याꣳ स्वाहेत्यादौ (२२।३४) त्रिभ्यः स्वाहा, चतुर्भ्यः स्वाहा, पञ्चभ्यः स्वाहेत्येवमादिर्लुप्तः स्वाध्यायो द्रष्टव्यः । "अनुपूर्वं जुहोति" ( १३।१।५ ) "एकोत्तरा जुहोति" (५) "नैकशतमत्येति" (६) इति श्रुतेः ॥३१॥

"व्युष्ट्यै" इति (२२।३४) व्युष्टायाम् ॥३२॥

व्युष्टायां रात्रौ व्युष्ट्यै स्वाहेत्येकामाहुतिमाज्येन लाजैर्वा जुहुयात् ॥३२॥

"स्वर्गायेत्युदिते (२२।३४) ॥३३॥

उदिते सूर्ये ॥३३॥

इति विंशेऽध्याये चतुर्थी कण्डिका ॥४॥

प्रातरुक्थ्यः ॥१॥

प्रातर्द्वितीयमुक्थ्यसंस्थमहर्भवति ॥१॥

[ महिमग्रहग्रहणम् ]

महिमानौ गृह्णाति सौवर्णेन पूर्वꣳ "हिरण्यगर्भ" (२३।१) इति, द्वितीयꣳ राजतेन "यः प्राणत" इति (२३।३) ॥२॥

उक्थ्यसंस्थे द्वितीयेऽहनि महिमसंज्ञौ द्वौ ग्रहौ गृह्णीयात्। महिमद्वयमध्ये पूर्वं महिमानं सौवर्णेनोलूखलेन गृह्णीयात्, द्वितीयं महिमानं राजतेनोलूखलेन गृह्णीयात् ॥ २ ॥

बहिष्पवमानाय सर्पणमश्वमालभ्य ॥३॥

अध्वर्य्वादीनाम्। अश्वालंभश्च पुच्छे कर्तव्य इति याज्ञिकाः ॥३॥

[ अश्वस्य वडवादर्शनं, तच्छब्दस्य स्तोत्रत्वं च ]

वडवा दर्शयत्यभिरसति तत्स्तोत्रम् ॥४॥

बहिष्पवमानदेशे गत्वा अश्वस्य वडवा दर्शयति : वडवानां दर्शनेन यदश्वोऽभि रसति = शब्दं करोति तदेव स्तोत्रम् ॥ ४ ॥

स्तुवीरन्वा ॥५॥

अथवा बहिष्पवमानस्तोत्रेणोद्गातारः स्तुवीरन् ॥५॥

शतमानं ददाति ॥६॥

उद्गातृभ्यः ॥६॥

[ बहिष्पवमानदेशस्याश्वेनाक्रमणम् ]

अश्वेनाक्रामयन्त्यास्तावम् ॥७॥

बहिष्पवमानस्तवनप्रदेशम् ( ८।६।२३) ॥७॥

[ अश्वस्तुतिः ]

ऐकादशिनानुपाकृत्याश्वादींश्च ॥८॥

द्वयोरेकादशिन्योर्द्वाविंशतिं पशून्, अश्वस्तूपर (२४।१-४०) इत्यध्यायपठितानश्वादीन् पृषतान्तांश्चापाकुर्यात् ॥८॥

होतरश्वमभिष्टुहीति प्रेष्यति ॥९॥

होतरश्वमभिष्टुहि इति प्रेष्येत् ॥९॥

[ अश्वानां रथे योजनम् ]

युनक्त्येनं "युञ्जन्ति ब्रध्नमिति ( २३।५ ) ॥ १० ॥

रथे ॥ १० ॥

इतरांश्च "युञ्जन्त्यस्येति ( २३।६ ) ॥ ११ ॥

इतरान् त्रीनश्वान् रथे युञ्ज्यात् प्रत्यश्वं मन्त्रावृत्तिः ॥ ११ ॥

[ अश्वानां रथस्य च सौवर्णालङ्कारवत्त्वम् ]

अश्वाः सौवर्णालङ्काराः ॥ १२ ॥

रथे युक्तास्तेऽश्वाः सौवर्णालङ्कारा भवेयुः ॥ १२ ॥

रथश्च ॥ १३ ॥

सौवर्णालङ्कारः कर्तव्यः ॥ १३ ॥

[ अश्वानां तडागादौ प्रवेशः ]

अपो यात्वाऽवगाढेषु वाचयति "यद्वात" (२३।७) इति ॥ १४ ॥

अध्वर्युर्यजमानश्च रथे उपविश्य तडागादिकं प्रति गत्वा जलमध्यं प्रविष्टेषु अश्वेषु यद्वात इति वाचयेत् ॥ १४ ॥

[ अश्वाञ्जनम् ]

आयाय विमुक्तमश्वं महिषी-वावाता-परिवृक्ताऽऽज्येनाभ्यञ्जन्ति पूर्वकाय-मध्यापरकायान्यथादेशं "वसवस्त्वेति (२३।८) प्रतिमन्त्रम् ॥ १५ ॥

तडागादितो देवयजनं प्रत्यागत्य विमुक्तमश्वं महिष्याद्यास्तिस्रः पत्न्यो यथाक्रममश्वस्य पूर्व-मध्यापरकायानञ्ज्युः ॥ १५ ॥

अश्वस्य शिरोग्रीवा—पुच्छरोमसु मणीनां बन्धनम् ]

अभ्रंश्यमानान्मणीन्त्सौवर्णानेकशतमेकशतं केसरपुच्छेष्वावयन्ति "भूर्भुवः स्वरिति (२३।८) प्रतिमहाव्याहृति ॥ १६ ॥

महिष्याद्याः पत्न्य एकाधिकं शतमेकाधिकं शतं सुवर्णमयान् मणीन् अभ्रंश्यमानान् यथा न पतन्ति तथा केसरपुच्छेषु आबध्नीयुः । भूरिति महिषी अश्वस्य शिरोरोमसु, भुव इति वावाता ग्रीवारोमसु, स्वरिति परिवृक्ता पुच्छरोमस्विति ॥ १६ ॥

अनुचर्यश्च तूष्णीमेकेषाम् ॥ १७ ॥

मणीन्प्रवयन्ति ॥ १७ ॥

[ अश्वाय रात्रिहुतशेषसमर्पणम् ]

अश्वाय रात्रिहुतशेषं प्रयच्छति लाजी३ञ्छाची३निति (२३।८) ॥ १८ ॥

सक्तुधानालाजादिरूपं रात्रिहुतशेषमश्वाय भक्षणार्थं प्रयच्छेत् ॥ १८ ॥

अप्स्ववहरणमखादति ॥ १९ ॥

यदि हुतशेषमश्वो न भक्षयति तदा तमप्सु प्रक्षिपेत् ॥ १९ ॥

ब्रह्मा पृच्छति होतारं यूपमभितः "कः स्विदेकाकीति ( २३।९ ) ॥ २० ॥

यूपस्य दक्षिणत उदङ्मुखो ब्रह्मा यूपस्योत्तरतो दक्षिणामुखं होतारं पृच्छेत् ॥२०॥

"सूर्य" इत्याचष्टे (२३।१०) ॥ २१ ॥

होता ब्रह्माणं "का स्विदासीदिति (२३।११) ॥ २२ ॥

पृच्छेत् ॥ २२ ॥

द्यौरिति ( २३।१२ ) प्रत्याह ॥ २३ ॥

इति विंशेऽध्याये पञ्चमी कण्डिका ॥ ५ ॥

---

अग्निमन्थनादि करोति ॥ १ ॥

[ अग्निष्ठे यूपेऽश्वादीनां बन्धनं, पर्यङ्ग्याणामश्वे ]

अग्निष्ठेऽश्वतूपरगोमृगान्नियुनक्ति ॥ २ ॥

अग्निष्ठे यूपे नियुञ्ज्यात्। तूपरः शृङ्गहीनश्छागः। गोमृगो गवयः ॥ २ ॥

यथोक्तं पश्वादौ देवताः ॥ ३ ॥

अश्वस्तूपर (२४) इत्यस्मिन्नध्याये या या देवता अश्वादीनामुक्तास्तास्तथैव प्रतिपत्तव्याः ॥ ३ ॥

पर्यङ्ग्यानश्वे ॥ ४ ॥

"कृष्णग्रीव आग्नेयो रराटे" इत्यादयो "वैष्णवो वामन" इत्यन्ताः पर्यङ्ग्यसंज्ञाः (२४।१)। तानश्वे यूपस्थानीये यथादेवतं यथास्थानं बध्नीयात्। अत्राश्वस्य शरीरं तरणार्थं तुम्बीफलमिव सर्वतो रज्ज्वा गुम्फनीयम्। तथा सत्युक्तस्थाने पर्यङ्ग्यालम्भस्तत्तत्स्थाने गुम्फितरज्ज्वा सुकरः स्यादिति ॥ ४ ॥

[ विंशतौ यूपेषु पञ्चदशानां पञ्चदशानां पशूनां बन्धनम् ]

पञ्चदश पञ्चदश रोहितादीन्सौर्यान्तानितरेषु (२४।१-१६) ॥ ५ ॥

इतरेषु यूपेषु पञ्चदश पञ्चदश पशून् नियुञ्ज्यात्। तेन सप्तदश मध्यमे, षोडश षोडशेतरेषु यूपेषु बद्धाः। अत्र २२ ऐकादशिनाः, ३२५ अश्वादयः सौर्यान्ताः, २६० कपिञ्जलादयः। एवं ६०६ पशवः। श्लोकश्च "षट् शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि। अश्वमेधस्य यज्ञस्य नवभिस्त्वधिकानि हि" इति ॥ ५ ॥

ग्राम्याःपशूनुक्त्वाऽऽरण्यानाह—

कपिञ्जलादीनान्पृषतान्तांस्त्रयोदश त्रयोदश यूपान्तरेषु ॥ ६ ॥

"वसन्ताय कपिञ्जलान्" इत्यादीन् "विश्वेषां देवानां पृषत" (२४।२०-४०) इत्यन्तान् त्रयोदश त्रयोदशसङ्ख्याकान्पशून् यूपानामन्तरालेषु = अवकाशेषूत्पत्तिक्रमेण नियुञ्ज्यात्। अत्र २१ यूपानां २० अन्तरालानि। तेष्वेकैकस्मिन्नन्तराले १३-१३ नियुनक्ति (१३।५।२।१५) ये पशवो येनोपायेन यूपान्तराले तिष्ठन्ति ते तेनोपायेन स्थापनीयाः यथा—मृगव्याघ्रादीन्पञ्जरेषु, मत्स्यादीन् सजलकुम्भेषु, इत्यादि ॥ ६ ॥

अश्वप्रोक्षणमद्भ्यस्त्वा (७।६) "वायुष्ट्वेति (२३।१३-१६) ॥ ७ ॥

अद्भ्यस्त्वेति प्राकृतेन वायुष्ट्वेति कण्डिकाचतुष्टयेन चाश्वं प्रोक्षेत् (१३।२।७।१) ॥ ७ ॥

उपगृह्णात्यपाम्पेरुरग्निः पशुरिति (६।१०, २३।१७) ॥ ८ ॥

अश्वस्य मुखे मन्त्रद्वयेन प्रोक्षणीर्धारयेत् ॥ ८ ॥

[ पर्यग्निकृतानां कपिञ्जलादीनामुत्सर्गः ]

कपिञ्जलादीनुत्सृजन्ति पर्यग्निकृतान् ॥ ९ ॥

नियोगक्रमेणोत्सर्गः। ततस्ते कपिञ्जलादयः पञ्जरादेर्निष्काश्य मुच्यन्ते। ततो यथेच्छं गच्छन्ति ॥ ९ ॥

( अश्वस्य संज्ञपनम् )

**हिरण्यवासोऽधीवासेष्वश्वसंज्ञपनम् ॥ १० ॥**

पूर्वं वासस आस्तरणं, ततोऽधीवाससः, तदुपरि हिरण्यं निधाय तत्राश्वस्य मारणं कुर्यात् ॥ १० ॥

[ परिपशव्या आहुतयः ]

**परिपशव्ये हुत्वा "प्राणाय स्वाहेति (२३।१८) तिस्रोऽपराः ॥११॥**

जुहुयात् ॥ ११ ॥

[ मृतस्याश्वस्य परिक्रमणम् ]

**वाचयति पत्नीर्नयन्नस्तेऽम्ब" इति (६।१४, २३।१८) ॥१२॥**

नेष्टा ॥१२॥

**अश्वं त्रिस्त्रिः परियन्ति पितृवन्मध्ये "गणानां, प्रियाणां निधीना मिति (२३।१९) ॥ १३ ॥**

सकृन्मन्त्रेण द्विस्तूष्णीम् । प्रथमं गणानां त्वेति त्रिः प्रदक्षिणं ततः प्रियाणां त्वेति त्रिरप्रदक्षिणं, ततो निधीनां त्वेति त्रिः प्रदक्षिणमिति पितृवन्मध्ये इत्यस्यार्थः अन्ते । सकृदितरथावृत्तिः । वसो ममेत्यस्य त्रिष्वप्यनुषङ्गः ॥ १३ ॥

[ मृतस्याश्वस्य समीपे पत्न्याः शयनम् । ]

**प्रक्षालितेषु महिष्यश्वमुप संविशत्याहमजानीति (२३।१९) ॥१४॥**

संज्ञपनानन्तरं मृतस्य पशोः प्राणेषु पत्नीभिरध्वर्युणा यजमानेन च पूर्ववत् ६।६।२-७) प्रक्षालितेषु सत्सु महिषी अश्वसमीपे शयीत ॥१४॥

[ अश्वमहिष्योर्वाससाऽऽच्छादनम् । ]

**अधीवासेन प्रच्छादयति "स्वर्गे लोके" इति ( २३।२० ) ॥१५॥**

अथ आस्तृतेनाधीवासेनाश्वमहिष्यौ प्रच्छादयेत ॥१५॥

[ अश्वशिश्नस्य योनिप्रदेशे स्पर्शः ]

**अश्वशिश्नमुपस्थे कुरुते "वृषा वाजीति ( २३।२० ) ॥१६॥**

महिषी अश्वस्य शिश्नं स्वयमेवाकृष्य स्वयोनिप्रदेशे स्थापयेत् ॥१६॥

**"उत्सक्थ्या" (२३।२१) इत्यश्वं यजमानोऽभिमन्त्रयते ॥१७॥**

[ संवादः ]

**अध्वर्युब्रह्मोद्गातृहोतृक्षत्तारः कुमारीपत्नीभिः संवदन्ते "यका सकाविति ( २३।२२।३० ) दशर्चस्य द्वाभ्यां द्वाभ्यां हये हयेऽसावित्याऽऽमन्त्र्य ॥१८॥**

अध्वर्य्वादयः पञ्च यजमानस्य कुमार्या पत्नीभिश्च सह यथाक्रमं द्वाभ्यां द्वाभ्यामृग्भ्यां संवादं कुर्युः । तत्र प्रथममध्वर्युः कुमारीं पृच्छति "कुमारि हये हये यकाऽसकौ शकुन्तिकेति । ततः कुमारी अध्वर्युं प्रत्याह-हये हये अध्वर्यो यकोऽसकौ शकुन्तक इति ॥१८॥

**सानुचर्यः प्रत्याहुः ॥१६॥**

अध्वर्य्वादिभिः पृष्टा महिष्याद्याः दासीसहिता एव प्रत्याहुः ॥१६॥

**अनुचर्य एकेषाम् ॥२०॥**

**महिषीमुत्थाप्य पुरुषा "दधिक्राव्ण" ( २३।३१ ) इत्याहुः ॥२१॥**

अध्वर्य्वादयः पुरुषाः ॥२१॥

इत्येकत्रिंशे षष्ठी कण्डिका ॥ ६ ॥

[ अश्वशरीरं सूचीभिर्वितोदः ]

**तिस्रः पत्न्योऽसिपथान्कल्पयन्त्यश्वस्य सूचीभिर्लौहराजतसौवर्णीभिर्मणि सङ्ख्याभिर्गायत्री त्रिष्टुबिति (२३।३२।३८) द्वाभ्यां द्वाभ्याम् ॥ १ ॥**

महिष्याद्यास्तिस्रः पत्न्यो यथाक्रमं लोहराजतसौवर्णीभिः प्रत्येकमेकाधिकशतसङ्ख्याभिः सूचीभिरश्वस्य शरीरे असेः सुखेन प्रवेशार्थं सूचीभिर्वितुद्य त्वचं जर्जरां कुर्युः। लौहास्ताम्रमय्यः ॥ १ ॥

**राजतसुवर्णसीसाभिर्वा मन्त्राम्नानात् ॥ २ ॥**

वाशब्दः पक्षव्यावृत्तौ। न लोहरजतसौवर्ण्यो भवन्ति, किन्तु राजतसुवर्णसीसमय्यः सूच्यो भवन्ति। कुतः? मन्त्राम्नानात्। "रजता हरिणीः सीसा" (२३।३७) इति मन्त्रे एतज्जातीयानां पाठादित्यर्थः ॥ २ ॥

[ अश्वविशसनीयस्यासेः सुवर्णघटितत्वम् ]

**सौवर्णासिरश्वः ॥ ३ ॥**

सौवर्णोऽसिः = खड्गो यस्य तादृशोऽश्वो भवति। सुवर्णपरिष्कृतः खड्गः कार्य इत्यर्थः ॥ ३ ॥

[ पर्यङ्ग्याणामसेस्ताम्रघटितत्वम् ]

**लौहाः पर्यङ्ग्याणाम् ॥ ४ ॥**

अश्वव्यतिरिक्तानां तूपरादीनां वामनपर्यन्तानां चतुर्दशानां ( २ ।१ ) ताम्रपरिष्कृता असयः ॥ ४ ॥

**आयसा इतरेषाम् ॥ ५ ॥**

इतरेषां रोहितादीनामायसा असयः स्युः ॥ ५ ॥

[ अश्वस्याङ्गविभागः ]

**अश्वं विशास्त्यनुवाकेन "कस्त्वाऽऽच्छ्यतीति (२३।३९-४६) ॥ ६ ॥**

वपोत्खेदनार्थमश्वस्योदरं पाटयतीत्यर्थः ॥ ६ ॥

**मेदोऽस्योद्धरन्ति वपार्थे ॥ ७ ॥**

अश्वस्य वपाया अभावात् वपाकार्यार्थं मेदः = घनीभूतं घृतसदृशमुदरमध्यवर्ति श्वेतं मांसमुद्धरेयुः ॥ ७ ॥

**लोहितं चास्य श्रपयन्ति ॥ ८ ॥**

हविःश्रपणकालेऽश्वस्य लोहितमपि कस्यां चित्स्थाल्यां शमितारः श्रपयेयुः ॥ ८ ॥

**प्राजापत्यवपानामुत्तरतः श्रपणꣳ० होमो हविषश्च ॥ ९ ॥**

"अश्वस्तूपरो गोमृगस्ते प्राजापत्याः" (२४।१) इति प्राजात्यवपानां होमः प्राजापत्यपशूनां होमश्च आहवनीयस्योत्तरतः कार्यः। प्राजापत्यहविषां श्रपणमपि शामित्रेऽन्यपशुहविर्भ्य उत्तरतः कार्यम् ॥ ९ ॥

**प्राग्वपाहोमाद्धोताऽध्वर्यू च सदसि संवदेते चतसृभिः "कः स्विदेकाकीति (२३।४५-४८) पूर्ववत् ॥१०॥**

वपाहोमात्प्राक् पूर्ववदुक्तिप्रत्युक्त्या (२०।५।२०-३३) ॥१०॥

**ब्रह्मोद्गातारौ च "पृच्छामि त्वेति (२३।४९-५२) ॥११॥**

चतसृभिरुक्तिप्रत्युक्त्या ॥११॥

**पुनः पूर्वावपरेणोत्तरवेदिं "का स्विदासीदिति (२३।५३-५६) ॥१२॥**

पूर्वौ होत्रध्वर्यू ॥१२॥

**उत्तरौ च "कत्यस्येति (२३।५७-६०) ॥१३॥**

उत्तरौ ब्रह्मौद्गातारौ ॥१३॥

**यजमानोऽध्वर्युं "पृच्छामि त्वेति (२३।४९।५२) ॥१४॥**

पृच्छति ॥१४॥

**"इयं वेदिरित्यध्वर्युः (२३।६२) ॥१५॥**

प्रत्याह ॥१५॥

[ महिमग्रहप्रचारः ]

**सर्वहुतेन महिम्ना चरति "यस्तेऽहन्निति (२३।२) जुहोति ॥१६॥**

सौवर्णपात्रगृहीतेन महिमसंज्ञकेन प्रथमेन ग्रहेण सर्वहुतेन प्रचरेदध्वर्युः। अत्र नानुवषट्कारः ॥१६॥

**अत्र वा ग्रहणम् ॥१७॥**

वाऽवधारणे। अत्रैव महिम्नो ग्रहणं, न प्रागन्तराग्रयणोक्थ्याविति (२०।५।२) ॥१७॥

[ सर्वपशूनां वपाप्रचारः। तत्र षट् पक्षाः। तत्र प्रथमः पक्षः ]

**वपाभिश्चरति ॥१८॥**

प्रथममेकादशिन्योः पशूनां वपाभिः। ततोऽश्वतूपरगोमृगानां वपाभिस्तत्क्रमेण, ततः क्रमेण 'पृथक् पृथक् कृष्णग्रीव आग्नेयो रराटे' इत्यादीनां 'श्वेताः सौर्या' इत्यन्तानां (२४।१-२०) वपाभिः। तत्रापि समानदेवत्यानां तिसृणां वपानां तन्त्रणैव प्रचारः ॥१८॥

[ तूपरादीनामुस्रादिशब्दैरुपलक्षणम् ]

विकृतिविशेषेषु फल्गूतूपररोहितादिभिर्गुणवाचकैः शब्दैः पशवो विहिताः। तत्र कीदृशः पशुरुपादातव्य इति इति प्रकृतावग्नीषोमीये छागस्यैवोपादानात् छागशब्देनैव जातिवा-

चकेन निगमेषूपलक्षणात् विकृतावपि तेनैव शब्देन स एवोपादातव्यस्तेनैव शब्देन मन्त्रेषूपलक्षणीय इति प्राप्त आह—

छागोस्रमेषाः पश्वभिधा यथालिङ्गम् ॥१९॥

यथालिङ्गं येन येन लिङ्गेन यो यः पशुर्विशिष्टः स स पशुस्तत्र तत्रोपादातव्यः । तद्गुणविशिष्टवाचकशब्देन च मन्त्रे उपलक्षणीयः । एवं च तूपरशब्देन छागो ग्रहीतव्यः, रोहितशब्देन गौर्ग्रहीतव्यः, फल्गूशब्देन मेषो ग्रहीतव्य इति । एवमुस्रादिशब्दैरेवोपलक्षणं कर्तव्यमिति ॥१९॥

अस्य सिद्धान्तस्योपरि पूर्वपक्षी प्रत्यवतिष्ठते—

गुणवचनाचोदनाशब्दस्य ॥२०॥

नैवं भवितुमर्हति । कुतः ? गुणवचनात् । विकृतौ श्रुतस्य तूपरादिशब्दस्य गुणमात्रविधायकत्वम् । अतश्छागोस्रमेषशब्दैरेवोपलक्षणमिति न नियमः ॥२०॥

तत्सिद्धान्ती खण्डयति—

प्रकृतौ वा वचनात् ॥२१॥

वाशब्दः पक्षं व्यावर्तयति । प्रकृतावग्नीषोमीये पशौ छागशब्देनैवोपलक्षणं कृतम् । पवमानूबन्ध्ये उस्रशब्देन, चरकसौत्रामण्यां मेषशब्देन । एवं च तेषामुपलक्षणस्य प्रकृतौ-दृष्टत्वात्तैरेवात्रापि कर्तव्यमिति ॥२१॥

वपायागे द्वितीयं पक्षमाह—

एकविंशतिप्रदानानेकेऽन्वक् चातुर्मास्यदेवताः पितृत्र्यैयम्बक
पुनरुक्तवर्जम् ॥२२॥

एके आचार्या अश्वतूपरगोमृगव्यतिरिक्तानां कृष्णग्रीव इत्यादीनां श्वेताः सौर्या इत्यन्तानां ( २४।१।१६ ) सर्वपशूनां वपा एकविंशतिधा विभज्य तेषामेकविंशतिसङ्ख्यानां भागानां क्रमेण पितृ-त्र्यैयम्बक-पुनरुक्तवर्जं चातुर्मास्यदेवता एकविंशतिसङ्ख्याका अनुपूर्वमुद्दिश्य तासामन्वक् अन्वञ्चि = अनुसारीणि तत्तद्देवतानि एकविंशतिसङ्ख्यानि प्रदानानि कुर्वन्ति ( १३।५।३।४ ) ॥ २२ ॥

वपायागे तृतीयं चतुर्थं पञ्चमं च पक्षमाह—

ऐन्द्राग्न-वैश्वदेव-कायानेके ॥२३॥

आदित आरभ्य वारुणप्रघासिकैन्द्रपर्यन्तानां क्रमेण पृथक् पृथग्वपाप्रचारं कृत्वा ऐन्द्राग्नस्य वपायां हुतायामवशिष्टाः सर्वा वपा अनुहोतव्याः ( १३।५।३।१-२ ) । एवं वैश्वदेव-काययोरनन्तरम् ॥२३॥

स्वशाखासिद्धान्तितं षष्ठं पक्षमाह—

देवता तन्त्रेण तु ॥२४॥

विश्वेभ्यो देवेभ्य इत्येवं सर्वासां देवतानां तन्त्रेणोच्चारणं कृत्वा सर्ववपानां सकृदेव प्रचारः सहैव कार्यः ॥२४॥

न कालभेदात् ॥२५॥

एकादशिन्योः पशूनां कृष्णग्रीवादिभिः सह तन्त्रेण प्रचारो न भवति । कुतः ? कालभेदात् = अश्वादिभिर्व्यवधानादित्यर्थः ॥२५॥

[ राजतमहिमग्रहप्रचारः ]

वपान्ते द्वितीयेन पूर्ववद्यस्ते रात्राविति (२३।४) जुहोति ॥२६॥

महिम्ना राजतेन प्रचरति ॥२६॥

शूलेऽश्वशेषश्रपणम् ॥२७॥

कर्तव्यम् ॥२७॥

सर्पणप्रभृत्या पश्वासदनात्कृत्वा ॥२८॥

इत्येकविंशी सप्तमी कण्डिका ॥७॥

लोहितमवद्यति गोमृगकण्ठाश्वशफयोरयस्मये चरौ ॥१॥

गोमृगस्य = गवयस्य कण्ठे, अश्वस्य खुरे, लोहमय्यां स्थाल्यां चाश्वस्य लोहितमवद्येत् । कण्ठादीनां तूष्णीं जुह्वत्संस्काराः कार्याः ॥१॥

वेतसशाखासु प्राजापत्यानाम् ॥२॥

प्राजापत्यानामश्वतूपरगवयानामवदानानि वेतसशाखास्ववद्येत् ॥२॥

अश्वस्य वा ॥३॥

वाशब्दः पक्षं व्यावर्तयति । अश्वस्यैवावदानानि वेतसशाखास्ववद्येत्, नान्येषां पशूनाम् (१३।५।८।३) ॥३॥

स्विष्टकृद्वनस्पत्यन्तरे शूल्यᳬं हुत्वा देवताश्वाङ्गेभ्यो जुहोत्यमुष्मै स्वाहेति प्रतिदैवतᳬं शादप्रभृतित्वगन्तेभ्यः (२५।१-९) ॥४॥

शूले अर्पितं शूल्यं हुत्वा शादादिदेवताभ्यो दन्तादिभ्योऽङ्गेभ्यश्च ॐ शादाय स्वाहा, मद्भ्यः स्वा०, अवकायै स्वाहा, दन्तमूलेभ्यः स्वाहा इत्येवमाज्यं चतुर्गृहीतं जुहुयात् ॥४॥

विमुखाच्च परेभ्यः ॥५॥

विमुखसंज्ञकादूर्ध्वं (३९।७) त्यस्मात्परेभ्य = उत्तरकालं पठितेभ्यो देवेभ्य अग्निᳬं० हृदयेनेत्यादिभ्य (३९।८-९) श्चतुर्गृहीताज्येन अग्नये स्वा० हृदयाय स्वा० अशनये स्वा० हृदयाग्राय स्वा० इत्येवं चतुर्गृहीतं जुहुयात् ॥५॥

"मा नो मित्र" (२५।२४-३९) इति च प्रत्यृचमनुवाकाभ्याम् ॥६॥

चतुर्गृहीतं जुहुयात् ॥६॥

अन्त्यां द्यावापृथिवीयाम् (३९-१३) ॥७॥

"द्यावापृथिवीभ्याᳬं स्वाहा" (३९।१३) इत्येतामाहुतिमन्त्यां जुहुयात् । ततः स्विष्टकृदादि ॥७॥

स्विष्टकृदन्तेऽग्निभ्यः स्विष्टकृद्भ्यः स्वाहेति लोहितं जुहोति यथावत्तम् ॥८॥

यस्मिन् यस्मिन् पात्रेऽवत्तं तेन तेन पात्रेण जुहुयान्न जुह्वा ॥८॥

एतदाहुतित्रयं स्विष्टकृदनन्तरमेव होतव्यमिति प्रथमः पक्षः । अतश्च द्वितीयतृतीययोराहुत्योः कालान्तरमाह—

अश्वशफेन वाऽनुयाजान्ते ॥ ९ ॥

अनुयाजान्ते वाऽश्वशफेन । प्रथमाहुतिस्तु स्विष्टकृदनन्तरमेव ॥ ९ ॥

अयस्मयेन वा पत्नीसंयाजान्ते ॥१०॥

"इमा नु कमिति (२५।४६-४७) च द्विपदाः ॥११॥

षडाहुतीर्जुहुयात् ( १३।३।६।५ ) ॥११॥

अतिरात्र उत्तमः ॥१२॥

उत्तमस्तृतीयमहरतिरात्रसंस्थः कर्तव्यः ॥१२॥

सर्वस्तोमो ज्योतिर्गौरायुरभिजिद्विश्वजिन्महाव्रतमप्तोर्यामो वा ॥१३॥

अत्र विकल्पाः । सर्वस्तोमातिरात्रो वोत्तमस्तोमीयमहर्भवति । ज्योतिरतिरात्रो वा, गौरतिरात्रो वा, अभिजिदतिरात्रो वा, विश्वजिदतिरात्रो वा, महाव्रतातिरात्रो वा, अप्तोर्यामातिरात्रो वेति ॥१३॥

अप्तोर्यामे तिरोऽह्नीयेभ्यो रात्रिपर्याय उत्तमः ॥१४॥

तिरश्चान्हश्च तिरोऽह्नः । तिरोऽह्ने रात्र्यन्तर्हितेऽह्नि भवाः सोमास्तिरोऽह्नीयाः ॥१४॥

अग्निष्ठे प्राजापत्यौ च ॥१५॥

उत्तमेऽहन्येवाग्निष्ठे यूपे द्वावैकादशिनावाग्नेयावालभ्य प्राजापतिदेवत्यौ च द्वौ पशू आलभेत (१३।५।३।१) ॥१५॥

अवभृथेष्ट्यन्तेऽप्सु मग्नस्य पिङ्गलखलतिविक्लिधशुक्लस्य मूर्द्धनि जुहोति "जुम्बकाय स्वाहेति ( २५।९ ) ॥१६॥

उदकमध्ये बुडितस्य पिङ्गाक्षस्य खल्वाटस्य दन्तुरस्य अतिगौरस्य मूर्द्धनि जुहुयात् ॥१६॥

[ अवभृथे ब्रह्महत्यादिपापकर्तॄणां पापसंशोधनार्थं स्नानम् ]

उत्क्रान्ते यजमाने पापकृतोऽभ्यवयन्त्यचरित्वा व्रतानि ॥१७॥

यजमाने जलमध्यादुत्तीर्णे सति ब्रह्महत्यादिकर्तारस्तच्छुद्ध्यर्थं तत्र = अश्वमेधावभृथसम्बन्धिनि जले स्नायुः ॥१७॥

अश्वमेधपूताख्यास्ते ॥१८॥

अश्वमेधपूता इत्याख्यास्तेषां भवति ॥१८॥

नानावभृथानि वा ॥१९॥

अथवाऽश्वमेधसम्बन्धीनि त्रीण्यप्यपि सौत्यान्यहानि भवन्ति । त्रयाणामप्यह्नां समिष्टयजुरन्ते पृथक् पृथगवभृथो भवति ॥१९॥

कुम्भोपमारणान्तं पूर्वयोः ॥२०॥

प्रत्यहमवभृथे क्रियमाणे पूर्वयोरह्नोरथवभृथेति मन्त्रेण ऋजीषकुम्भस्य मज्जनान्तं भवति ॥२०॥

कुत एतत्—

## शेषे दीक्षाव्रताभावात् ॥२१॥

शेषे—कर्मशेषे दीक्षारूपस्य व्रतस्याभावात् । अवभृथाभावेन ह्युन्मुक्तदीक्षो भवति । यदि च प्रत्यहं स्नानान्तं क्रियेत, ततो दीक्षोन्मोकः स्यात् । ततश्चादीक्षितेनाहर्द्वयं कृतं स्यात् । न च तदिष्यते । अतः कुम्भोपमारणान्तमेव पूर्वयोरह्नोः कर्त्तव्यम् ॥ २१ ॥

सिद्धान्तयति—

## सर्वं वा श्रुतेः ॥ २२ ॥

सर्वं वा स्नानाद्यपि भवति । "प्रत्यहमवभृथेन चन्तीति श्रुतेः । वचनसामर्थ्यात्सर्वावभृथान्ते उन्मुक्तदीक्षो भवतीत्यभिप्रायः ॥ २२ ॥

## एकविꣳशतिरनूबन्ध्याः ॥ २३ ॥

सप्त मैत्रावरुण्यः, सप्त वैश्वदेव्यः, सप्त बार्हस्पत्याः । तत्र प्रतियूपं नियोगोऽग्नीषोमीयवत् । त्रय एव पुरोडाशाः । उदवसानीया त्रैधातवी ॥२३॥

## उदवसानीयान्ते भार्या ददाति यथासंवादꣳ सानुचरीः ॥ २४ ॥

महिष्यनुचरीणां ब्रह्मणे, वावातायाः अनुचरीणामुद्गात्रे, परिवृक्ताया अनुचरीणां होत्रे दानम् ॥२४॥

## कुमारीं पालागलीं चाध्वर्यवे (१३।४।१।२७) ॥ २५ ॥

## अनुचरीर्वा फलाधिकारादितरासाम् ॥ २६ ॥

वाशब्दः पक्षं व्यावर्तयति । न भार्या दद्यात्, किन्तु अनुचरीरेव । कुतः ? इतरासां भार्याणां फलाधिकाराद्यजमानतुल्या एवैताः (१।१।८) ॥ २६ ॥

## अनारभ्यत्वाच्च ॥ २७ ॥

न चायमर्थ आरब्धुं शक्यो यद्भार्या ददातीति । यथा पत्न्यो यजमानदानेऽसमर्थाः, एवं यजमानोऽपि पत्नीनां दानेऽसमर्थः ॥ २७ ॥

## द्वादशाहमाग्नेयः पुरोडाशः ॥ २८ ॥

अश्वमेधं समाप्य प्रत्यहं द्वादशाहपर्यन्तं गृहे कर्तव्योऽन्वाहार्यदक्षिणः ॥ २८ ॥

## ब्रह्मौदनो वा ॥ २९ ॥

अथवा प्रत्यहं द्वादशाहपर्यन्तं ब्रह्मौदनो भवति ( १३।३।६।६ ) ॥ २९ ॥

## प्रत्यृतु पशूनालभते षट् षड् वसन्ताद्याग्नेयानैन्द्रान्पार्जन्यान्मारुतान्वा मैत्रावरुणानैन्द्रावैष्णवानैन्द्राबार्हस्पत्यान् ॥ ३० ॥

अश्वमेधसमाप्त्यनन्तरमग्रिमे वर्षे वसन्तादारभ्य प्रत्यृतु षट् षट् पशूनन्वाहार्यदक्षिणानालभेत यजनीयेऽहनि तन्त्रेण । तत्र आग्नेयान्वसन्ते, ऐन्द्रान् ग्रीष्मे, पार्जन्यान्मारुतान्वा वर्षासु, मैत्रावरुणाञ्छरदि, ऐन्द्रावैष्णवान् हेमन्ते, ऐन्द्राबार्हस्पत्याञ्छिशिरे ( १३।५।४।२८ ) ॥ ३० ॥

इत्यष्टमी कण्डिका ॥ ८ ॥

इति विद्याधरशर्मकृतायां कात्यायनसूत्रवृत्तौ अश्वमेधनिरूपणात्मको विंशतितमोऽध्यायः ।

# एकविंशोऽध्यायः ।

## पुरुषमेधः, सर्वमेधः, पितृमेधश्च ।

[ ब्राह्मणक्षत्रिययोः पुरुषमेधः ]

**पुरुषमेधस्त्रयोविंशतिदीक्षोऽतिष्ठाकामस्य ॥ १ ॥**

सर्वाणि भूतान्यतिक्रम्य तिष्ठत इत्यतिष्ठा । तां कामयत इत्यतिष्ठाकामः । तस्य त्रयोविंशतिदीक्षो द्वादशोपसत्कः पञ्चसुत्यः, एवं चत्वारिंशदहोरात्रसाध्यः पुरुषमेधसंज्ञको यज्ञो भवति (१३।६।१।७) । चैत्रशुक्लदशम्यामस्यारम्भः ॥ १ ॥

**ब्राह्मणराजन्ययोः ॥ २ ॥**

न वैश्यस्य ॥ २ ॥

अत्र सौत्यान्यहान्याह—

[ पुरुषमेधसंस्थाः ]

**अग्निष्टोमावन्तरेणातिरात्र उक्थ्यपक्षः ॥ ३ ॥**

पञ्चरात्रस्य पुरुषमेधस्य आद्यन्तेऽहनी अग्निष्टोमसंस्थे कर्तव्ये । अन्तरेण मध्ये तृतीयदिने अतिरात्रोऽनुष्ठेयः । द्वितीयचतुर्थयोरन्होरुक्थ्योऽनुष्ठेयः । उक्थ्यौ पक्षाविव उभयतो वर्तमानौ यस्यातिरात्रस्य स उक्थ्यपक्षः । अग्निष्टोमयोर्मध्ये उक्थ्यपक्षोऽतिरात्रः कर्तव्य इति सूत्रयोजना । अत्र अग्निष्टोमसंस्थं प्रथममहः, द्वितीयमुक्थ्यसंस्थम्, तृतीयमतिरात्रसंस्थम्, चतुर्थमुक्थ्यसंस्थम्, पञ्चममग्निष्टोमसंस्थमिति । तेषु प्रत्यहमैकादशिनाः पशवो भवन्ति ॥ ३ ॥

[ संस्थासु यूपैकादशिनीत्वं पश्वेकादशिनीत्वं च ]

**यूपैकादशिनी भवति ॥ ४ ॥**

अत्र प्रत्यहं सुत्यासु यूपैकादशिनी कर्तव्या ।उपशययूपः पत्नीयूपश्च भवत्येव । पशवोऽप्येकादशैवेति ॥ ४ ॥

**तावन्तोऽग्नीषोमीयाः ॥ ५ ॥**

अग्नीषोमीया अपि पशव एकादशैव कर्तव्याः ( १३।६।१।४ ) । तेषां प्रतियूपं मध्यमे वा यूपे नियोजनम् ॥ ५ ॥

[ अतिरात्रसंस्थे मध्यमेऽहनि विशेषः ]

**पशूनुपाकरिष्यन्नतिरात्रेण "देव सवितरिति (३०।१-३) प्रत्यृचं जुहोति ॥६॥**

पशूपाकरणात्प्राक् तिस्र आहुतीः स्रुक्गृहीतेनाज्येन जुहुयात् (१३।६।२।९) ॥ ६ ॥

[ ब्राह्मणादीनामुपाकरणम् ]

**ऐकादशिनाननुपाकृत्य ब्राह्मणादींश्च ॥ ७ ॥**

"ब्रह्मणे ब्राह्मणम्" (३०।५-२२) इत्यध्यायपठितान् ब्राह्मणादींश्चोपाकुर्यात् ॥ ७ ॥

[ ब्राह्मणादीनामष्टाचत्वारिंशत्सङ्ख्याकानामग्निष्ठे यूपे नियोजनम् , इतरेष्वेकादशानामेकादशानाम्, शेषाणां द्वितीये नियोजनं द्वाविंशतिसङ्ख्यानाम् ]

**नियोजनकालेऽष्टाचत्वारिंशतमाद्यानग्निष्ठे ॥ ८ ॥**

यूपे पशुबन्धनकाले "ब्रह्मणे ब्राह्मणम्" इत्यादीन् "प्रकामोद्यायोपसदम् (३०।५-६) इत्यन्तान् पशूनग्निष्ठे यूपे नियुञ्ज्यात् ॥ ८ ॥

**इतरेष्वेकादशैकादश ॥ ९ ॥**

अग्निष्ठादन्येषु दशसु यूपेषु एकादशैकादश पुरुषान्नियुञ्ज्यात् ॥ ९ ॥

**द्वितीयोच्छ्रिते शेषान् ॥१०॥**

शेषान् द्वाविंशतिपुरुषान् द्वितीयोच्छ्रिते यूपे नियुञ्ज्यात्। अत्र मिलित्वा १८४ पशवः ॥१०॥

[ पश्वभिष्टवः ]

**नियुक्तान् ब्रह्माऽभिष्टौति होतृवदनुवाकेन "सहस्रशीर्षेति (३१।१-१६) ॥११॥**

ब्रह्मा यूपे नियुक्तान् पशून् सहस्रशीर्षेत्यनुवाकेन होतृवत् (१६।७।२) (११।१८।१६) "त्रिः प्रथमां त्रिरुत्तमामृगन्ते प्रणव" ( १६।७।२, शाङ्ख्या० ११।१८-१६ ) इत्यादिशस्त्रशंसन-धर्मेणाभिष्टुवीतोपविष्टः ॥११॥

[ ब्राह्मणादीनामुत्सर्गः ]

**कपिञ्जलादिवदुत्सृजन्ति ब्राह्मणादीन् ॥१२॥**

ब्राह्मणादीन् पुरुषान् कपिञ्जलादिवत् (२०।६।६) पर्यग्निकृतानुत्सृजेत् ॥१२॥

[ उत्सृष्टानां ब्राह्मणादीनां देवता उद्दिश्य होमः]

**स्विष्टकृद्वनस्पत्यन्तरे पुरुषदेवताभ्यो जुहोति ॥ १३ ॥**

स्विष्टकृद्वनस्पत्योरन्तराले ब्राह्मणादीनां पुरुषाणां या ब्रह्मादयो देवताः "ब्रह्मणे ब्राह्मणम्" (३०।५) इत्यादिषु चतुर्थ्यन्तपदेनोपात्ताः, ताभ्यः प्रत्येकं सकृद्गृहीतमाज्यं ब्रह्मणे स्वाहा, क्षत्राय स्वाहा इत्येवं देवतापदं चतुर्थ्यन्तमुच्चार्य स्वाहाकारेण जुहुयात् ॥ १३ ॥

[ पुरुषमेधदक्षिणा ]

**सपुरुषमश्वमेधवद्दक्षिणा ॥ १४ ॥**

अश्वमेधे "विजयमध्याद्धोतुः प्राची दिग्दक्षिणा ब्रह्मणोऽध्वर्योः प्रतीच्युद्गातुरुदीची" इति दक्षिणा उक्ता ( २०।४।२७ )। तथैवात्रापि राज्ञः पुरुषमेधे दक्षिणा भवति। तत्र च भूमि-पुरुष-ब्राह्मणस्ववर्जम् ( २०।४।२७ ) इत्युक्तम् । अत्र तु पुरुषा अपि दीयन्ते। अश्वमेधेऽह्नां त्रिसङ्ख्यत्वात् तृतीयं तृतीयमित्युक्तम् । अत्र तु अह्नां पञ्चसङ्ख्यत्वात् प्रतिदिनं प्राच्यादिदिगुत्पन्नस्य द्रव्यस्य पञ्चमं पञ्चममंशं दद्यादिति ॥ १४ ॥

**सर्वस्वं ब्राह्मणस्य ॥ १५ ॥**

यदि ब्राह्मणः पुरुषमेधेन यजेत तदा सर्वस्वं दद्यात ( १३।६।२।१८ ) ॥ १५ ॥

[ अनूबन्ध्या एकादश ]

**प्रतिदेवतं तिस्रस्तिस्रोऽनूबन्ध्याः पञ्चोत्तमायाम् ॥ १६ ॥**

अनूबन्ध्यायां तिस्रो देवता उक्ताः ( १३।४।४ )। तासां मध्ये द्वयोस्तिस्रस्तिस्र

अनूबन्ध्या गावः। तृतीयस्यां पञ्च गाव इति। तत्र तिस्रो मैत्रावरुण्यः, तिस्रो वैश्वदेव्यः, पञ्च बार्हस्पत्याः। त्रय एव पशुपुरोडाशाः॥ १६॥

[ अग्निसमारोपादिकम् ]

**त्रैधातव्यन्ते समारोह्यात्मन्नग्नी सूर्यमुपस्थायाद्भ्यः सम्भृत" (३१।१७-२२) इत्यनुवाकेनानपेक्षमाणोऽरण्यं गत्वा न प्रत्येयात्॥ १७॥**

त्रैधातवी पूर्वमुक्ता (१३।४।८)। तदन्ते आत्मनि = स्वशरीरेऽग्नी प्रवेश्य = ऊष्माणमास्ये कोष्ठे वा प्रवेश्य सूर्यमुपस्थाय पश्चादवलोकनमकुर्वन्नरण्यं गत्वा ग्रामं नागच्छेत् (१)॥१७॥

**ग्रामे वा विवत्सन्नरण्योः॥ १८॥**

अथवा ग्रामे एव वासं करिष्यन् अरण्योरेवाग्नी समारोप्य पूर्ववत्सूर्यमुपस्थाय गृहं प्रत्यागच्छेत् (१३।६।२।२०)॥ १८॥

इत्येकविंशे प्रथमा कण्डिका॥ १॥



[ सर्वमेधस्य दशरात्रसाध्यता ]

**सर्वमेधः सर्वकामस्य॥ १॥**

**दशरात्रः॥ २॥**

अत्र दश सौत्यान्यहानि भवन्ति। दीक्षा द्वादश, उपसदश्च द्वादश। चैत्रशुक्लषष्ठ्यामस्यारम्भः॥ २॥

[ सर्वमेधेऽग्नेरेकशतविधत्वम् ]

**अग्निरुत्तमः॥३॥**

अत्र उत्तमः = अन्तिम एकशतविधोऽग्निर्भवति (२०।४।१५)॥ ३॥

दशाहसंबन्धीनि सप्ताहान्याह—

**अग्निष्टुत्रय उक्थ्या, इन्द्रस्तुत्सूर्यस्तुद्वैश्वदेवस्तुद्, व्रतं, वाजपेयोऽप्तोर्यामः, सर्वमस्मिन्नालभते॥ ४॥**

अत्र प्रथमदिनेऽग्निष्टुन्नामैकाहोऽग्निष्टोमसंस्थः द्वितीय-तृतीय-चतुर्थदिवसेषु क्रमेण इन्द्रस्तुत्, सूर्यस्तुत्, वैश्वदेवस्तुत् इत्येवंनामकाः क्रतव उक्थ्यसंस्था भवन्ति। पञ्चमदिनेऽग्निष्टोमसंस्थो महाव्रतसंज्ञः क्रतुः। षष्ठे वाजपेयः, सप्तमेऽप्तोर्यामः। अस्मिन्नप्तोर्यामे सर्वं = सर्वजातीयं स्थावरजङ्गमरूपं यज्ञार्हं सर्वं वस्तुजातमेकैकसंख्यं होमार्थमुपकल्पयेत्। (१३।७।१।९) कर्काचार्यास्तु—"पुरुषोऽश्वो गौरविरज" (६।२।१।१४) इति प्रकृत्य "एतावन्तो वै सर्वे पशव" इति पुरुषादीनां पशूनामन्ते सर्वशब्ददर्शनात् सर्वशब्दे न पशव एव ग्राह्या इत्याहुः॥ ४॥

---

(१) "प्राजापत्यां निरूप्येष्टिं सर्ववेदसदक्षिणाम्। आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्" (मनु० ६।३८) इति मनुना प्राजापत्येष्टिः पुरुषमेधरूपैव नान्या। अत्र प्रजापतिर्गणशून्यो सत्त्वादिति कर्काचार्याः।

**अवपाकानां त्वचो जुहोति ॥ ५ ॥**

वपारहितानामश्वादीनां त्वच उत्कृष्य जुहुयान्न हृदयादीनि। वपासहितानां तु वपा एव जुहुयान्न त्वचं, नापि हृदयादीनि ॥ ५ ॥

**ओषधिवनस्पतीनाꣳ संवृश्चम् ॥ ६ ॥**

ओषधीनां = तृणानां, वनस्पतीनां = वृक्षाणां च खण्डानि संवृश्च्य = छित्वा छित्वा ऽऽहवनीये प्रक्षिपेत् ॥ ६ ॥

**अन्नमन्नं जुहोति वपान्ते ॥ ७ ॥**

वपाप्रचारान्ते सर्वप्रकारमन्नं जुहुयात् ॥ ७ ॥

**तृतीयसवनेषु च हुतेषु हविःषु ॥ ८ ॥**

[ महाव्रतस्य स्थाने आश्वमेधिकं मध्यममहस्तद्धर्मकं वा ]

पूर्वोक्तस्य पञ्चमस्याह्नो महाव्रतस्य स्थानेऽहरन्तरमाह—

**आश्वमेधिकं मध्यमं व्रतस्थाने ॥ ९ ॥**

अथवा महाव्रतस्य स्थाने आश्वमेधिकं मध्यमं पञ्चममहर्भवति। तच्चोक्थ्यसंस्थम्। अत्र पञ्चमदिनसंबन्धिनः सर्वे धर्मा आश्वमेधिका एकविंशतियूपादयो भवन्ति। वाजपेयस्य षष्ठाहःपक्षे त्वेको यूपः। स च सप्तदशारत्निः ॥ ९ ॥

[ वाजपेयस्य स्थाने पुरुषमेधस्य मध्यममहरतिरात्रसंस्थं वा ]

**पौरुषमेधिकं वाजपेयस्य ॥ १० ॥**

प्रागुक्तस्य षष्ठस्याह्नो वाजपेयस्य स्थाने पौरुषमेधिकं मध्यममतिरात्रसंस्थमहर्भवति ॥ १० ॥

अधुनाऽष्टमनवमे अहनी आह—

**त्रिणव-त्रयस्त्रिꣳशा उक्थ्यौ ॥ ११ ॥**

अष्टमनवमौ त्रिणव-त्रयस्त्रिंशस्तोमौ क्रतू उक्थ्यसंस्थौ भवतः ॥ ११ ॥

**अतिरात्रो विश्वजित् ॥ १२ ॥**

विश्वजित्सर्वपृष्ठोऽतिरात्रो दशममहर्भवति (१३।७।१।१२) ॥ १२ ॥

**पुरुषमेधवद्दक्षिणा सभूमि ॥ १३ ॥**

अत्र पुरुषमेधवद् (२१।१।१३) भूमिसहिता दक्षिणा भवति ॥ १३ ॥

इत्येकविंशे द्वितीया कण्डिका ॥ २ ॥



[ पितृमेधः ]

**पितृमेधः संवत्सरास्मृतौ ॥ १ ॥**

मृतस्य पितुर्मरणसंवत्सरस्यास्मृतौ सत्यां पितृमेधः कार्यः ( १३।८।१।२ ) ॥ १ ॥

[ पितृमेधकालः ]

**अयुग्मेषु वा ॥ २ ॥**

यदि बहुकालव्यवधानेनापि संवत्सरस्मृतिर्न भवति तदाऽयुग्मेषु संवत्सरेषु कुर्यात्। स्मृतौ सत्यां तु युग्मेष्वेवेति व्यवस्थितो विकल्पः ( १३ । ८ । १ । ३ ) ॥ २ ॥

**एकनक्षत्रे ॥ ३ ॥**

यत्रैकैव तारकाऽऽकाशे दृश्यते तदेकनक्षत्रम्। तत्र ( १३।८।१।३ ) हस्त-स्वाति-पुष्यादौ पितृमेधं कुर्यात् ॥ ३ ॥

**अमावास्यायाम् ॥ ४ ॥**

अमायां वा पितृमेधः ॥ ४ ॥

**निदाघ-शरन्माघेषु ॥ ५ ॥**

ग्रीष्मे शरदि माघे वा पितृमेधः ॥ ५ ॥

**यावन्तो धुविष्यन्तः स्युस्तावतः कुम्भानादाय छत्राणि चापरिमितानि ॥६॥**

अग्रे ( सू० ७ ) पुत्रपौत्रादीनामुपवाजनं ( धवनं ) वक्ष्यति। अतोऽत्र यावन्तो धुविष्यन्तः स्युस्तावतः कुम्भान्, कुम्भसङ्ख्यातोऽधिकसंख्यानि छत्राणि चादाय सशरीरा दक्षिणा गच्छन्तीति वक्ष्यमाणेन संबन्धः ॥ ६ ॥

[ अस्थ्नां परिक्रमणम् ]

**शरीराणि ग्रामसमीपमाहृत्य कुम्भेन तल्पे कृत्वाऽऽहतपक्षेण परितत्यायसेषु वाद्यमानेषु वीणायां चोद्धतायाममात्यास्त्रिस्त्रिः परिक्रामन्त्युत्तरीयैरुपवाजनैर्वोपवाजयन्तः ॥ ७ ॥**

"श्मशानं चिकीर्षतः कुम्भे संचयनम्" ( २५।८।७ ) इति वक्ष्यति। तेन पितृमेधं चिकीर्षता कुम्भ एवास्थ्नां चयनं कृत्वाऽरण्ये भूमिमध्ये तानि स्थापनीयानि। ततः कुम्भस्थानि तानि शरीराणि = अस्थीनि ग्रामसमीपमाहृत्य कुम्भस्थान्येव तानि तल्पे = खट्वायां निधाय अहतवस्त्रस्यैकदेशेनास्थिकुम्भं सर्वतो वेष्टयित्वा लोहमयेषु वादित्रेषु पटहादिषु वाद्यमानेषु उद्धतायाम् = उत्कटायां वीणायां च वाद्यमानायाम् अमात्याः = मृतस्य पुत्रपौत्राद्या उत्तरीयैर्वस्त्रैरुपवाजनैर्व्यजनैर्वा तमस्थिकुम्भमुपवाजयन्तस्त्रिस्त्रिरप्रदक्षिणं परीयुः ॥ ७ ॥

**स्त्रियो वा ॥ ८ ॥**

परिक्रामेयुर्न वा ॥ ८ ॥

**पूर्वरात्रमध्यापररात्रेषु च ॥ ९ ॥**

रात्रेः पूर्वभागे मध्यभागे पाश्चात्यभागे च परिक्रमणं कुर्युः ॥ ९ ॥

**विफल्फान्नमहरेतत् ॥१०॥**

फल्फ वृद्धौ। विफल्फं = बहु अन्नं यत्र तत्। एतस्मिन्पितृमेधारम्भसंबन्धिनि दिने बह्वन्नदानं कर्तव्यम् ॥१०॥

नृत्तगीतवादित्रवच्च ॥११॥

अस्मिन्नहनि नृत्तादिकमनवरतं कारयेत् ॥११॥

अन्नमस्मा उपहरन्त्येके ॥१२॥

अस्मा ऽ अस्थिकुम्भाय एकेऽन्नोपहारं कुर्वन्ति ॥१२॥

उपव्युषसꣳ सशरीरा दक्षिणा गच्छन्ति ॥१३॥

उषसः समीपमुपव्युषसम् । उषसि विगच्छन्त्यां शरीरेण अस्थिकुम्भेन सहिता यजमानाध्वर्य्यमात्या दक्षिणस्यां गच्छेयुः ॥१३॥

यथा कुर्वतोऽभ्युदियात्सूर्यः ॥१४॥

तथा कर्तव्यं यथाऽस्थिनिर्वापं कुर्वतः सूर्योऽभ्युदियात् । उदयात्प्रागेव वक्ष्यमाणमस्थिनिवापं कर्म प्रारभेतेत्यर्थः ॥१४॥

कक्षेऽवतापिनि ॥१५॥

कक्षे = गह्वरे वृक्षादिसंवृते देशे श्मशानं कुर्यात् । कीदृशे-अवतापिनि । अव = अधः उपरिष्टात्स्थितेन सूर्येण ताप्यते इत्यवतापी, तस्मिन् ॥१५॥

ऊषर उदक्प्रवणे समे वा ॥१६॥

दक्षिणाप्रवण एके ॥१७॥

अदर्शनाद् ग्रामात् ॥१८॥

यत्र स्थितैर्ग्रामो न दृश्यते तत्र श्मशानं कर्तव्यम् ॥१८॥

आरात्पथः ॥१९॥

पथो = मार्गाद्दूरे श्मशानं कर्तव्यम् ॥१९॥

न्यग्रोधाश्वत्थ-तिल्वक-हरिद्रु-स्फूर्जक-बिभीदक-पापनामभ्यश्च ॥२०॥

दूरात्कुर्यात् । पापनामानः श्लेष्मातक-कोविदारादयः ॥२०॥

चितिवच्च ॥२१॥

मृतस्य दाहार्थं यादृशे देशे काष्ठैश्चितिर्विहिता ( २५।७।१६-१७ ) तादृशे देशे ॥२१॥

शम्वति कम्वति वा ॥२२॥

सुखनीये रमणीये प्रदेशे वा ॥२२॥

चित्रंपश्चात् ॥ २३ ॥

यस्य श्मशानस्य पश्चात् चित्रं वनगिर्यादिकं भवेत्सोऽङ्गीकार्यः ॥ २३ ॥

तदभाव उदकमुत्तरतो वा ॥ २४ ॥

चित्राभावे उदकं पश्चाद्वोत्तरतो वा स्यात् ॥ २४ ॥

कर्षू-वीरणवति ॥ २५ ॥

कर्षूः कोसारः । वीरणानि तृणानि । तद्वति प्रदेशे ॥२५॥

**ग्रामतस्तेजनीमुच्छ्रित्य न न्यसेद् गृहेषूच्छ्रयेत् ॥ २६ ॥**

एतत्कर्मार्थं ग्रामाद्बहिरागम्यते यदा तदा यजमानपुरुषो वंशादिबद्धं तृणपूलकमुच्छ्रित्य भूमौ न निदध्यात्, किन्तु धृतमेव तं कर्मान्ते गृहं नीत्वा गृहे उच्छ्रयेत् ॥ २६ ॥

**दिक्स्रक्तिपुरुषमात्रं मिमीते ॥ २७ ॥**

तच्छ्मशानं दिक्कोणकं पुरुषमात्रं कुर्यात् ॥ २७ ॥

**उत्तरतः पृथु, पश्चाच(१) ॥ २८ ॥**

**विहृत्य स्रक्तिषु शङ्कूनाहन्ति ॥ २९ ॥**

तत्क्षेत्रं मित्वा तस्य कोणेषु वक्ष्यमाणान् शङ्कून् निखनेत् ॥ २९ ॥

**पालाशं पुरस्ताच्छामील-वारण-देहशङ्कूनन्यासु ॥ ३० ॥**

अप्रदक्षिणम् । देहशङ्कः पाषाणशङ्कुः ( ४।२५।३५) ॥ ३० ॥

**अपसलवि सृष्टया रज्वा परितत्यापेतो यन्तिवति ( ३५-१ ) पलाशशाखया व्युदूहति ॥ ३१ ॥**

अप्रादक्षिण्येन निष्पादितया रज्वा क्षेत्रमप्रदक्षिणं वेष्टयित्वा पतितं तृणपर्णादि क्षेत्राद्बहिर्निष्कासयेत् ॥ ३१ ॥

**दक्षिणा शाखां निरस्य परिश्रिद्भिः परिश्रयति पूर्ववदपरिमिताभिः ॥ ३२ ॥**

गार्हपत्यचितिपरिश्रिदपेक्षया इहापरिमितत्वम् ( १३।८।२।२ )। पूर्ववदिति "ऊर्ध्वाः शर्कराः खाते" ( १६।८।२४ ) "रज्वा सहितं बही रज्जु" (१६।८।२२) इत्याद्यर्थः । एकविंशति सङ्ख्यातोऽधिकाभिरपरिमिताभिरित्यर्थः ॥ ३२ ॥

**औदुम्बरसीर उत्तरतो वा षड्गवे युज्यमाने 'युङ्क्तेति सम्प्रेष्य "सविता त" इति ( ३५।२ ) जपति ॥ ३३ ॥**

प्रैषो जपश्च याजमानः ॥ ३३ ॥

इत्येकविंशेऽध्याये तृतीया कण्डिका ॥ ३ ॥

---

(१) तत्र दिक्स्रक्तिपुरुषमात्रं मिमीते । तच्चैवं कर्त्तव्यम् । "पैतृक्यां द्विपुरुषं समचतुरस्रं कृत्वा करणीमध्येषु शङ्कवः स समाधिः" ( का० शुल्व०१।२।७ ) इति । तत्पुरुषमात्रं क्षेत्रमुत्तरपार्श्वे पश्चाच पृथु कार्यम् । तद्यथा—पुरुषस्य प्रमाणं विंशतिशताङ्गुलानि । तानि त्रयोदशधा विभज्यन्ते । नव नवैकस्मिन्भागेऽङ्गुलानि । एवं सप्तदशाधिकं शतमङ्गुलानि विभक्तानि भवन्ति । त्रीण्यङ्गुलान्यवशिष्यन्ते । तान्यपि त्रयोदशधा विभज्यन्ते । एकैकस्मिन्भागेऽङ्गुलस्य चतुर्थो भागस्त्रयोदशांशोनो भवति । एवं त्रयोदशधा विभक्ते अर्द्धसहिताः षड् भागा भवन्ति । अर्द्धभागे नवाङ्गुलानि स्वत्रयोदशांशोनाङ्गुलचतुर्थभागसहितानि भवन्ति । अतः पुरुषस्यस्य चतुरस्रस्य दिक्स्रक्तेः प्राग्भृदुपधानवत्पूर्वदक्षिणोत्तरपार्श्वयोर्नवाङ्गुलानि स्वत्रयोदशांशेनाङ्गुलचतुर्थभागसहितानि पुरुषप्रमाणमध्ये न्यूनानि कार्याणि। पश्चिमोत्तरपार्श्वयोस्तावन्ति पुरुषप्रमाणादधिकानि कार्याणि । अत्र महीधरः—पुरुषमात्रक्षेत्रस्याक्ष्णया प्राचीं कृत्वा तत्प्रान्तयोः शङ्कू निखाय सार्द्धाष्टदशाङ्गुलहीनां पुरुषद्वयप्रमाणामुभयतःपाशां रज्जुं मध्यप्रदेशे सलक्षणां कृत्वा पूर्वापरयोः शङ्क्वोस्तस्याः पाशौ प्रतिमुच्य मध्यलक्षणेन दक्षिणत आयम्य दक्षिणः कोणः साधनीयः। ततः सार्द्धाष्टदशाङ्गुलाधिकां पुरुषद्वयप्रमाणां रज्जुमुभयतःपाशां मध्यलक्षणयुतां कृत्वा शङ्क्वोः पाशौ प्रतिमुच्य मध्यलक्षणेनोत्तरत आयम्योत्तरकोणः साध्य इति ।

अनुरज्जु चतस्रः सीताः कृषति "वायुः पुनात्विति (३५।३) प्रतिमन्त्रम् ॥१॥

अप्रदक्षिणम् ॥ १ ॥

उत्तरतः प्रतीचीं प्रथमाम् ॥ २ ॥

अपरिमिता मध्ये तूष्णीम् ॥ ३ ॥

चतुर्षु पार्श्वेषु कर्षणं कृत्वा क्षेत्रस्य मध्ये अपरिमिताः सीता अप्रादक्षिण्येन तूष्णीमग्निक्षेत्रवत् (१७।१।१२–२०) कृषेत् ॥ ३ ॥

अनडुहो विमुच्य "विमुच्यन्तामिति, (३५।३) दक्षिणा सीरं निरस्याश्वत्थे व" इति (३५।४) सर्वौषधं वपति ॥ ४ ॥

कृष्टे देशे ॥ ४ ॥

"सविता त" इति (३५।५) शरीराणि निवपति मध्ये ॥ ५ ॥

कुम्भस्थानामस्थ्नां राशिं मध्ये कुर्यात् ॥ ५ ॥

तूष्णीमन्यः कुम्भमादणाति दक्षिणाऽनवानन्सृत्वा ॥ ६ ॥

अध्वर्योरतिरिक्तः कश्चिदवृतो ब्राह्मणः श्वासोच्छ्वासमकृत्वा दक्षिणस्यां दिशि गत्वा तत्रास्थिकुम्भं प्रक्षिपेत् । भिन्द्यादित्यपरे ॥६॥

प्रत्यागते "परं मृत्यविति (३५।७) जपति ॥ ७ ॥

"शं वात" इति (३५।८) यथाङ्गं कल्पयित्वेष्टकां निदधाति मध्ये तूष्णीम् ॥ ८ ॥

यदस्थि यस्याङ्गस्य, तेनास्थ्ना तदङ्गकल्पनया प्राक्शिरसं पुरुषाकृतिं कृत्वा तन्मध्ये तूष्णीमेकामिष्टकां पादमात्रीं निदध्यात् ( १३।८।३।५ ) ॥ ८ ॥

प्रतिदिशमन्तेषु पराचीस्तिस्रस्तिस्रोऽलक्षणाः पादमात्रीः ॥ ९ ॥

पराचीः पूर्वापराः, नाभ्यात्मम् । लक्षणं लेखाः । तद्रहिता इष्टका निदध्यात् ॥ ९ ॥

प्रदरात्पुरीषमाहृत्य, परिकृष्य वा सर्वतोऽपुरस्तात् ॥१०॥

प्रकर्षेण स्वयमेव दीर्णो भूप्रदेशः प्रदरः । तस्मात्पुरीषमाहृत्य श्मशाने निवपेत् । अथवा सर्वाभ्यो दिग्भ्यः परिकर्षणं कृत्वा पुरीषमाहृत्य श्मशाने निवपेत् । प्राच्या दिशः पुरीषाहरणं न कर्तव्यम् ॥१०॥

शर्करा अनग्निचितः ॥११॥

अनग्निचितः संस्कारे इष्टकास्थाने ( त्रयोदश ) शर्कराः = पाषाणा उपधेयाः ॥११॥

ऊर्ध्वप्रमाणमास्यं ब्राह्मणस्य ॥१२॥

मुखमात्रमुच्चं श्मशानं ब्राह्मणस्य कर्तव्यं पुरीषावापेन ॥१२॥

उरः क्षत्रियस्योर्ध्वबाहु वा ॥१३॥

क्षत्रियस्योरःप्रमाणमुच्चं श्मशानं भवति न वेति विकल्पः ॥१३॥

ऊरू वैश्यस्य ॥१४॥

उपस्थः स्त्रियाः ॥१५॥

जानु शूद्रस्य ॥१६॥

शूद्रस्य रथकारस्य ॥१६॥

सर्वेषां वाऽधोजानु ॥१७॥

जानुनोरधस्तादधोजानु ॥१७॥

अवकाभिः कुशैश्च प्रच्छाद्य परिकृष्टं चेद्यवान्वपेत् ॥१८॥

यदि परिकृष्टात्पुरीषमाहृतं तदा तत्र यवानां प्रक्षेपः कार्यो, (१३।८।३।१३) न प्रदरात्पुरीषाहरणपक्षे ॥१८॥

दक्षिणतः कुटिले कर्षू खात्वा क्षीरोदकाभ्यां पूरयन्ति सप्तोत्तरतः प्राचीरुदकस्य ॥१९॥

श्मशानस्य दक्षिणत ईषद्वक्रे गर्तें खात्वा पूर्वदिनोपक्लृप्तैर्घटैः क्षीरेणोदकेन पूरयेयुरमात्याः। तथा श्मशानस्योत्तरतः सप्त गर्त्तान् प्रागायतान् दक्षिणसंस्थान् खात्वा तान् उदकैः पूरयेयुः ॥१९॥

त्रींस्त्रीनावपन्त्यश्मनः ॥२०॥

अध्वर्युयजमानामात्यास्त्रींस्त्रीनश्मनः कर्षूषु प्रक्षिपेयुः ॥२०॥

अध्यधि गच्छन्त्यश्मन्वतीरिति (३५।१०) ॥२१॥

तेऽमात्याः कर्षूणामुपरिष्टाद्ग्रामं गच्छेयुः ॥२१॥

"अपाघमित्यपामार्गैरपमृजते (३५।११) ॥२२॥

आत्मानम् ॥२२॥

"सुमित्रिया न" इति (३५।१२) स्नात्वाऽहतवाससोऽनडुत्पुच्छमन्वारभ्यानड्वाहमित्युद्वयमित्यागच्छन्ति (३५।१३-१४) ॥२३॥

ग्रामम् ॥२३॥

ग्रामश्मशानान्तरे मर्यादालोष्टं निदधातीमं जीवेभ्य" इति (३५।१५) ॥२४॥

मर्यादाया एव लोष्टमाहृत्येति वचनात् (१३।८।४।१२) ॥ २४ ॥

आञ्जनाभ्यञ्जने कृत्वौपासनं परिस्तीर्य वारणान्परिधीन्परिधाय वारणेन स्रुवेणैकामाहुतिं जुहोत्यग्नऽ आयूꣳष्यायुष्मानग्न" इति ( ३५।१६-१७ ) ॥ २५ ॥

आञ्जनमक्ष्णोरञ्जनं कज्जलादिना। अभ्यञ्जनं पादयोस्तैलेनाञ्जनम्। परिधानोपदेशाच्चत्वारः परिधयः। औपासनोऽग्निः प्रेतस्यैव। स हि एवमर्थमेव धारणीयोऽद्वारेण च निरसनीय इति केचित्। कर्तुरेवौपासने होमस्तस्यैकदेशस्य निरसनमिति कर्काचार्याः ॥ २५ ॥

अथैषां परिदां वदति "परीमे गामनेषतेति ( ३५।१८ ) ॥ २६ ॥

एषां सयजमानानाममात्यानां परिदां = रक्षणं वदेदध्वर्युः ॥ २६ ॥

**अद्वारेणौपासनं निरस्यति "क्रव्यादमिति ( ३५।१६ ) ॥ २७ ॥**

औपासनश्च यस्मिन्नाहुतिर्हुता स एव ॥ २७ ॥

**"इहैवायमिति ( ३५।१६ ) जपति ॥ २८ ॥**

**आसन्दी सोपधाना दक्षिणाऽनड्वान्यवाश्च सर्वं पुराणम् ॥ २९ ॥**

उपधानमुच्छीर्षकम् । तेन सहिता जीर्णाऽऽसन्दी दक्षिणा । तथा जीर्णोऽनड्वान्दक्षिणा, पुराणा यवाश्च दक्षिणा । एतत्सर्वं जीर्णं दद्यात्, न नूतनम् ॥ २९ ॥

**भूयसीश्चेच्छन् ॥ ३० ॥**

इच्छन्नितोऽधिका हिरण्यादिका दक्षिणा दद्यात् ॥ ३० ॥

इति चतुर्थी कण्डिका ॥ ४ ॥

इति विद्याधरशर्मविरचितायां श्रीकात्यायनसूत्रवृत्तावेकविंशोऽध्यायः ।



# द्वाविंशोऽध्यायः ।

## एकाहनिरूपणम् ।

### अथैकाहाः ॥ १ ॥

अथशब्दोऽधिकारप्रज्ञप्तये । एकाहशब्दश्च अहीनानां सत्राणां चोपलक्षकः । अथ यजुर्वेदविहितकर्मकथनानन्तरं सामवेदविहितानि एकाहाहीनसत्राण्यध्यायत्रयेण क्रमेण वक्ष्यन्ते । तत्रास्मिन्नध्याये एकाहा उच्यन्ते । एकसुत्याकाः क्रतव एकाहा इत्युच्यन्ते । एकाहेषु ऋत्विग्वरणाद्यादीपनान्तं सर्वमग्निष्टोमवत् ॥ १ ॥

[ संस्थान्तरस्याविधाने सर्वत्राग्निष्टोमसंस्थत्वम् ]

### अवचनेऽग्निष्टोमः ॥ २ ॥

यत्र संस्थान्तरं न विहितं, तत्राग्निष्टोमसंस्थः सोमयागः कर्तव्यः ॥ २ ॥

[ प्रथम एकाहो भूःसंज्ञकः ]

### भूर्धेनुदक्षिणः ॥ ३ ॥

तत्र प्रथमो भूर्नामा एकाहो धेनुदक्षिणोऽग्निष्टोमसंस्थो भवति । अत्र धेनोर्दक्षिणात्वेन विधाज्ज्योतिष्टोमिका दक्षिणा निवर्तते । दीक्षाश्च "एका दीक्षाऽनादेशे तिस्रश्चतस्रोऽपरिमिता वा तिस्र उपसद" इति ( छन्दोगसू० ) भवन्ति । अग्निष्टोमसंस्थे आग्नेयः सवनीयः पशुरेकः, उक्थ्यसंस्थे द्वौ, षोडशिसंस्थे त्रयः, अतिरात्रसंस्थे चत्वार इति ॥ ३ ॥

[ द्वितीय एकाहो ज्योतिर्नामा ]

### ज्योतिः ॥ ४ ॥

ज्योतिर्नामा एकाहोऽग्निष्टोमसंस्थः प्राकृतदक्षिणः कार्यः ॥ ४ ॥

[ तृतीय एकाहो गौः, चतुर्थ एकाह आयुः ]

### गोऽआयुषी उक्थ्यौ ॥ ५ ॥

गौश्च आयुश्च इमौ द्वावेकाहौ उक्थ्यसंस्थौ कार्यौ । अन्यत्सर्वमुक्थ्यसंस्थज्योतिष्टोमवत् ॥ ५ ॥

[ पञ्चम एकाहोऽभिजित् । षष्ठ एकाहो विश्वजित् ]

### अभिजिद्विश्वजितौ ॥ ६ ॥

अग्निष्टोमसंस्थावेकाहौ भवतः ॥ ६ ॥

[अभिजिद्विश्वजितोर्दक्षिणा]

### सहस्रमभिजितो दक्षिणा ॥ ७ ॥

सहस्रं गावः । अत्र सहस्रसंयोगेन यद्यच्छ्रूयते तद्भवति, यथा–अश्वदाभ्यग्रहणम् , (१२।५।११) तिस्रोऽनूबन्ध्यास्त्रैधातवी चेति (१३।४।५–८) ॥ ७ ॥

### श्वेताश्वं वा ॥ ८ ॥

शतमश्वा अधिका यस्मिन् गवां सहस्रे तच्छ्वेताश्वं सहस्रं वाऽभिजितो दक्षिणा । सहस्रदक्षिणापक्षेऽश्वदाभ्यग्रहणं, तिस्रोऽनूबन्ध्यास्त्रैधातवी चेति ॥ ८ ॥

[ विश्वजिद्यागः ]

सहस्रं० सर्ववेदसं विश्वजितः ॥ ९ ॥

सहस्र–सर्वधनयोर्विकल्पः । कर्मारम्भे सर्वधनस्य त्रेधा विभागः कार्यः । एको भागो जीवनार्थः अपरः क्रतुसिद्ध्यर्थः, तृतीयो दक्षिणार्थ इति मीमांसकाः ॥ ९ ॥

ज्येष्ठं पुत्रमपभज्य भूमिशूद्रवर्जं योगाविशेषात्सर्वेषाम् ॥१०॥

ज्येष्ठं पुत्रमपभज्य = तद्भागदानेन भागवर्जितं कृत्वा तस्य विभागं दत्वा भूमिं शूद्रं च वर्जयित्वाऽन्यत्सर्वं दद्यात् । कुतः ? भूम्याः शूद्रस्य च सर्वेषां सम्बन्धाविशेषात् = धारण–शयनासन–चङ्क्रमणादिना सर्वेषां भूमिसंबन्धात् । धर्मार्थं शुश्रूषोः शूद्रस्य च सर्वेषामविशिष्टत्वात् । अतो भूमिं शूद्रं च न दद्यात् ॥ १० ।

शूद्रदानं वा दर्शनाविरोधाभ्याम् ॥११॥

वाऽवधारणे । भृत्या स्वीकृतस्य शूद्रस्य दानं भवत्येव । कुतः ? "सपुरुषं प्राचीं दिग्घोतुः" (१।३।६।२।१८) इति शूद्रदानदर्शनात्, अविरोधाच्च ॥ ११ ॥

द्रव्याभावात्तदन्तः ॥ १२ ॥

सर्वस्वे दत्ते द्रव्यस्याभावात् तदन्तो दक्षिणादानान्तो विश्वजिद्यागः कार्यः ॥ १२ ॥

एवं प्राप्ते सिद्धान्तयति—

समाप्तिर्वा चोदितावभृथश्रुतेः ॥ १३ ॥

वाऽवधारणे । विश्वजितः समाप्तिरेव कर्तव्या न दक्षिणादानान्तता । कुतः ? चोदितत्वात् = विश्वजिता यजेतेत्यनेनोपक्रमप्रभृत्यपवर्गपर्यन्तस्य यागस्य विहितत्वात् । "अवभृथादेत्य वत्सच्छविं परिदधाति" ( लाट्या–८।२।१ ) इति वत्सच्छविपरिधानविधिपरे वाक्येऽवभृथदर्शनाच्चेति ॥ १३ ॥

हेत्वन्तरमाह—

दीक्षासु चापदेशात् ॥ १४ ॥

"क्रत्वर्थमपदिश्यान्यस्मै" ( ७।२।७ ) इति क्रत्वभिनिर्वृत्त्यर्थस्य द्रव्यस्य पूर्वमेव पृथक्करणात्, तस्य चावशिष्टत्वात् तेनैव यागसमाप्तिः कर्तव्या ॥ १४ ॥

न समत्वात् ॥ १५ ॥

यदुक्तं विश्वजितः समाप्तिः कर्तव्येति, तन्न । कुतः ? "विश्वजिता यजेतेति समाप्तिर्विहिता । 'सर्वस्वं ददातीति च सर्वस्वदानम् । अतो विरोधाद्विकल्प एव युक्तः । एवं स्थिते पुनरधीत्य व्याख्यायते–नैतत्समम् । "विश्वजिता यजेतेति प्रथमो विधिः प्रधान-विधिश्च । "सर्वस्वं ददातीति गुणविधिः पश्चात्कालभावी च । अतः पूर्वकालीनस्य प्रधानवि-धेर्बलवत्वात्ततः प्रतीता समाप्तिरेव युक्ता । विकल्पश्च तुल्यबलत्वे भवति । न चेह तुल्यबल-त्वमुक्तयुक्तेः ॥ १५ ॥

विश्वजिति सहस्रसर्ववेदसयोर्विकल्प उक्तः (२२।१।९) । तत्र किं सहस्राद्न्यूनमपि सर्वस्वं भवति, उत सहस्रादतिरिक्तमेव । तत्र पूर्वपक्षयति—

परिमाणे सर्वमविशेषात् ॥ १६ ॥

सर्वस्वपरिमाणेऽपेक्षिते यावद्धनं गृहेऽस्ति सहस्राद्न्यूनमधिकं वा तत्सर्वं देयम् । कुतः ? सर्वस्वं ददातीत्यविशेषश्रवणात् ॥ १६ ॥

पक्षान्तरमाह—

अधिकं वा प्रकृत्यनुग्रहात् ॥ १७ ॥

अधिकं वा सहस्राद्देयं, न न्यूनम् । कुतः ? प्रकृत्यनुग्रहात् = "कोऽर्हति मनुष्यः सर्ववेदसं दातुं तस्मात्सहस्रं देयम्" इति सर्ववेदसं प्रकृत्य सहस्रदानेन तस्यानुग्रहदर्शनात् । एतच्च तदैवोपपद्यते यदाऽस्य सहस्रादधिकं सर्ववेदसं भवति । अत्र शकन्ध्वादित्वात्पररूपमिति कर्कः ॥ १७ ॥

नानित्यत्वात् ॥ १८ ॥

यदुक्तं तन्न । कुतः ? अनित्यत्वात् = नहि नित्ये कस्मिंश्चित्परिमाणविशेषे सर्ववेदसशब्दः प्रसिद्धः । येनैवं निश्चीयते सहस्रादधिकमेवेति । अतो यस्य यावद्धनं सहस्राच्यूनमधिकं वा तत्सर्वं देयम् ॥ १८ ॥

कर्मशब्दाच्च ॥ १९ ॥

कर्मशब्दात् सर्वस्मिन् दत्ते = सर्वस्वमनेन दत्तमिति लोकव्यवहाराच्च सहस्रात् न्यूनमपि देयम् ॥ १९ ॥

अवभृथादुदेत्य रोहिण्यौ वत्सच्छव्यौ सकर्णपुच्छावच्छाते परिदधाते ॥२०॥

अवभृथादागत्य = यज्ञं समाप्य रक्तवर्णे वत्सस्य चर्मणी कर्णाभ्यां पुच्छेन च सहिते अच्छाते = अच्छिन्ने पत्नीयजमानौ परिदधीयाताम् ॥ २० ॥

द्वादशरात्रं परिवसत्युखावदग्निं बिभ्रत् ॥ २१ ॥

यजमानो द्वादशाहोरात्राणि वक्ष्यमाणेषु स्थानेषु उखावत् (१६।२।५) वैणवीं सुषिरां कल्माषीं प्रादेशमात्रीमरत्निमात्रीं वाऽग्निं बिभ्रद् भवेत् ॥ २१ ॥

औदुम्बरीं वा ॥ २२ ॥

अथवा उदुम्बरवृक्षोद्भवां तादृशीमग्निं धारयन्वसेत् ॥ २२ ॥

उष्णीषं च ॥ २३ ॥

तिस्रस्तिस्रः ॥ २४ ॥

एकैकस्मिन् स्थाने यजमानस्तिस्रस्तिस्रो रात्रीर्वसेत् (इति द्वादशरात्रस्य विभागः)॥२४॥

औदुम्बरे मूलफलभक्षः ॥ २५ ॥

उदुम्बरबहुले देशे मूलफलभक्षस्तिस्रो रात्रीर्वसेत ॥ २५ ॥

निषादे ॥ २६ ॥

निषादानां मध्ये तिस्रो रात्रीर्वसेत् ॥ २६ ॥

जने ॥ २७ ॥

तिस्रो रात्रीर्वसेत् ॥ २७ ॥

समाने जने ॥ २८ ॥

तिस्रो रात्रीर्वसेत् ॥ २८ ॥

समानजनशब्दार्थमाह—

**वैश्यो जनो राजन्यः समानजनः श्रुतेः (लाट्या० ८।२।१०-१२) ॥ २९ ॥**

**ग्राम्याभोजनं निषादानां मृन्मयानां च ॥ ३० ॥**

निषादानां समीपे वसता यजमानेन ग्राम्यं व्रीहियवादि न भोक्तव्यम्। तथा मृन्मय पात्रेणोदकपानं च न कर्तव्यम् ॥ ३० ॥

**संवत्सरं न याचेत् ॥ ३१ ॥**

**दीयमानं न प्रत्याचक्षीत ॥ ३२ ॥**

संवत्सरमेव । ( इति विश्वजिद्यागः ) ॥ ३२ ॥

[ अभिजिद्विश्वजितोर्युगपदनुष्ठानम् ]

**यमाभ्यां वा यजेत पूर्वापराभ्याम् ॥ ३३ ॥**

अथवाऽभिजिद्भ्यां यमाभ्यां दर्शपूर्णमासवत्संहताभ्यां यजेत। तत्र पूर्वमभिजिते ष्ट्वाऽनन्तरमवश्यं विश्वजिद्यागः कार्यः ॥ ३३ ॥

**युगपद्वा ॥ ३४ ॥**

वाऽवधारणे। न पौर्वापर्येण, किन्तर्हि युगपदेव यजेत। अभिजिद्विश्वजिद्भ्यां सहस्रदक्षिणाभ्यां युगपद् यक्ष्ये इति सङ्कल्पः ॥ ३४ ॥

युगपद्यागपक्षे कर्म निरूपयति—

**दक्षिणोत्तरे देवयजने ॥ ३५ ॥**

**दक्षिणमभिजितः ॥ ३६ ॥**

**पत्नीशालमुत्तरे ॥ ३७ ॥**

उत्तरे देवयाजने पत्नीशाला कर्तव्या ॥ ३७ ॥

[ उभयोर्यागयोः षोडशर्त्विक्त्वम् ]

**नानर्त्विजः ॥ ३८ ॥**

पृथगृत्विजो भवन्ति देशभेदात् ॥ ३८ ॥

**त एव वा प्रभूत्वात् ॥ ३९ ॥**

अथवा त एवर्त्विजो भवन्ति। कुतः ? प्रभूत्वात्। प्रभवन्ति त एव ब्रह्मादय उभयत्र कर्म कर्तुम्। अस्मिन्पक्षे उत्तरे देवयजने आध्वर्यवं प्रतिप्रस्थाता, मैत्रावरुणो हौत्रं, ब्राह्मणा च्छंसी ब्रह्मत्वम्, प्रस्तोतोद्गात्रं कुर्यात्। एते स्वपदार्थांश्च कुर्वन्ति। एवं तृतीयिनो द्वितीयानां स्वपदार्थांश्च कुर्युश्चतुर्थास्तृतीयानां पदार्थान् स्वपदार्थांश्चेति ॥ ३९ ॥

**बाहिर्वेदिकानि समानानि ॥४०॥**

वेदेर्बहिर्भवानि दीक्षणीया-प्रायणीयाऽऽतिथ्या-घर्मोपसदुदयनीयोदवसानीयादीनि तन्त्रेणोभयोः कर्तव्यानि, न पृथक् ॥४०॥

**नानेतराणि ॥४१॥**

इतराणि = आन्तर्वेदिकान्यग्नीषोमीयादीनि पृथक्कर्तव्यानि ॥४१॥

**कर्मसन्निपाते पूर्वं पूर्वमभिजितः ॥४२॥**

अभिषव-धिष्ण्योपस्थानादौ सर्वर्त्विक्साध्ये कर्मणि पूर्वमभिजितः कर्म भवति पश्चाद्विश्वजितः ॥४२॥

**पृथक्सहस्रे दक्षिणा ॥४३॥**

देवयजनद्वये सहस्रं सहस्रं दक्षिणा ॥४३॥

[ इति विश्वजिदभिजितौ। अथ सर्वजिदेकाहः समहाव्रतः सप्तमः ]

**सर्वजित्समहाव्रतः संवत्सरदीक्षः सप्ताहाभिषवस्तिस्र उपसदः षड् वा ॥४४॥**

सर्वजित्संज्ञक एकाहोऽग्निष्टोमसंस्थो भवति। स च संवत्सरदीक्षो महाव्रतस्तोत्रयुक्तः। संवत्सरादूर्ध्वं सप्ताहेऽतीते तस्य सुत्या भवति। तत्र सप्तानामह्नां मध्ये तिस्र उपसद अतस्रो दीक्षाः। अथवा षडुपसद एका दीक्षेति ॥४४॥

**अग्निवद्वा दीक्षाः ॥४५॥**

अग्निवद्वा चयनवदेव संवत्सरं दीक्षा भवन्ति ॥४५॥

प्रथमा कण्डिका ॥ १ ॥

**शताश्वरथमध्वर्यवे ददात्यग्नौ चीयमाने ॥ १ ॥**

सर्वजिद्यज्ञेऽग्नौ चीयमाने गवां शतमश्वयुक्तं रथं चाध्वर्यवे दद्यात् ॥ १ ॥

**उद्गात्रे व्रतकाले ॥ २ ॥**

महाव्रतस्तोत्रकाले श्वताश्वरथं दद्यात् ॥ २ ॥

**होत्रे शस्त्रकाले ॥ ३ ॥**

महाव्रतसमनन्तरं यच्छस्त्रं तस्मिन्काले ॥ ३ ॥

**ततो ब्रह्मणे ॥ ४ ॥**

महदुक्थशंसनानन्तरं शताश्वरथम् ॥ ४ ॥

**दक्षिणाकाले सर्वेभ्यः सहस्रम् ॥ ५ ॥**

[ चत्वारः साहस्राः एकाहाः ]

**साहस्राश्चत्वारः सहस्रदक्षिणाः ॥ ६ ॥**

चत्वारः साहस्रसंज्ञा एकाहा भवन्ति सहस्रदक्षिणाः। साहस्रा इति चतुर्णां सामान्यसंज्ञा ॥ ६ ॥

**तृतीय उक्थ्यः ॥ ७ ॥**

तेषां चतुर्णां मध्ये तृतीयः साहस्रो विश्वज्योतिःसंज्ञक उक्थ्यसंस्थो भवति। त्रयोऽन्येऽग्निष्टोमसंस्थाः ॥ ७ ॥

तेषामेव साहस्राणां विशेषनामान्याह—

**ज्योतिः सर्वज्योतिर्विश्वज्योतिस्त्रिरात्रसम्मितः ॥ ८ ॥**

त्रिरात्रेण = गर्गत्रिरात्रेण ( २३।१।८ ) समफलः। अत्र "सहस्रं दक्षिणाऽश्वदाश्यग्रहणं तिस्रोऽनूबन्ध्यास्त्रैधातवी चेति भवति ( १३।४४—५ ) ॥ ८ ॥

[ साद्यस्क्रसंज्ञा एकाहाः षट् ]

षट् साद्यस्क्राः ॥ ९ ॥

साद्यस्क्रसंज्ञकाः षडेकाहा भवन्ति । ॥ ९ ॥

[ प्रथमः साद्यस्क्रः ]

स्वर्गकाम-पशुकाम-भ्रातृव्यवतां प्रथमः ॥ १० ॥

रुक्मललाटोऽश्वः श्वेतो दक्षिणा ॥ ११ ॥

अश्वाभावे गौः ॥ १२ ॥

तमुद्गात्रे ददाति ॥ १३ ॥

तमश्वं गां वोद्गात्रे दद्यात् । इतरेषामृत्विजां प्रकारान्तरेण सन्तोषं कुर्यात् ॥ १३ ॥

प्राकृतस्यानिवृत्तिरुद्गातृयोगात् ॥ १४ ॥

प्राकृतस्य दक्षिणाजातस्याश्वदक्षिणया निवृत्तिर्भवति । कुतः ? उद्गातृयोगात्= अश्वस्योद्गात्रा योगात् ॥ १४ ॥

एवं प्राप्ते सिद्धान्तयति—

निवृत्तिः क्रतुयोगात् ॥ १५ ॥

प्राकृतस्य दक्षिणाजातस्य निवृत्तिः । कुतः ? क्रतुना साद्यस्क्रेण तस्य संबन्धात् । ( ताण्ड्य १६।१२, लाट्या० ८।३।१५ ) ॥ १५ ॥

वचनादेकस्य ॥ १६ ॥

"तमुद्गात्रे ददाति" ( सू० १३ ) इति वचनादेकस्य दानम्, न तु विभागेन षोडशभ्य ऋत्विग्भ्यः ॥ १६ ॥

[ द्वितीयः साद्यस्क्रः ]

दीर्घव्याधि-प्रतिष्ठाकामान्नाद्यकामानां द्वितीयः ॥ १७ ॥

साद्यस्क्रः ॥ १७ ॥

अश्वैकविंशा गावो दक्षिणाऽश्वो वा ॥ १८ ॥

द्वितीये साद्यस्क्रे अश्व एकविंशो यासां ता गावो दक्षिणाः । अथवा एक एवाश्वो दक्षिणेति विकल्पः ॥ १८ ॥

[ तृतीयः साद्यस्क्रः ]

हीनस्यानुक्रीः ॥ १९ ॥

हीनस्योत्कृष्टताप्राप्तये अनुक्रीर्नाम तृतीयः साद्यस्क्रो विधीयते ॥ १९ ॥

साश्वꣳ शतं दक्षिणाऽश्वो वा ॥ २० ॥

एकेनाश्वेन सहितं गवां शतमनुक्रियो दक्षिणा ॥ २० ॥

[ चतुर्थः साद्यस्क्रः ]

विश्वजिच्छिल्पः ॥ २१ ॥

चतुर्थः साद्यस्क्रः ॥ २१ ॥

**यथाद्रव्ये जनपदे यजेत तेषां यथोत्साहं दद्यात् ॥ २२ ॥**

यानि यानि द्रव्याणि यस्मिन् यस्मिन् जनपदे स यथाद्रव्यः। तस्मिन् देशे तेषां द्रव्याणां यथाशक्ति दानं कुर्यात् ॥ २२ ॥

**आजानेयानपरजने ॥ २३ ॥**

अपरजने पश्चिमप्रदेशे विश्वजिच्छिल्पे यागे क्रियमाणे यथाशक्ति त्रिप्रभृत्याजानेयान् = कुलीनानश्वान्दद्यात्। "आजानेयाः कुलीनाश्च विनीताः साधुवाहिनः" ( अम० २।८।४४ ) ॥ २३ ॥

**प्राच्येषु हस्तिनः ॥२४॥**

पूर्वदेशे विश्वजिच्छिल्पे यागे हस्तिनो दद्यात् ॥ २४ ॥

**अश्वतरी-रथानुदीच्येषु ॥२५॥**

अश्वतरीयुक्तान् रथान्दद्यात् ॥२५॥

**सर्वस्वप्रतिनिधिर्वा ॥२६॥**

अथवा सर्वेषु देशेषु विश्वजिच्छिल्पे सर्वस्वप्रतिनिधिं दद्यात् (लाट्या० ८।४।१४) ॥२६॥

सर्वस्वप्रतिनिधिमाह—

**धेन्वडुत्सीरधान्य- पल्य-दासमिथुन-महानसारोहण-विमित-शयनानि ॥२७॥**

सर्वस्वप्रतिनिधयः। पलादिमानार्हं पात्रं पल्यम्। दासमिथुनं दासीदासौ। महानसं महानसोपयोगि पात्रम्, अथवा महच्छकटम्। आरुह्यत इत्यारोहणं हस्त्यादि। विमितं गृहम्। शयनं पर्यङ्कादि ॥२७॥

इति द्वितीया कण्डिका ॥ २ ॥

[ पञ्चमः साद्यस्क्रः ]

पञ्चमं साद्यस्क्रमाह—

**श्येनोऽभिचरतः ॥ १ ॥**

अभिचारं कुर्वतो यजमानस्य श्येनसंज्ञकः पञ्चमः साद्यस्क्रो भवति ॥ १ ॥

**यत्रौषधयो न जायेरंस्तद्देवयजनम् ॥ २ ॥**

श्येनयागार्थं कुर्यात् ॥ २ ॥

**विदाहि वा ॥ ३ ॥**

यत्र प्रतिवर्षमवश्यं दावाग्निरोषधीर्दहति तत्र वा देवयजनं कुर्यात्। विदह्यन्ते ओषधयो यत्र तद्विदाहि ( लाट्या० ८।५।५ ) ॥ ३ ॥

**वृत्तस्तम्बच्छिन्नम् ॥ ४ ॥**

यत्र वृत्ताः स्तम्बाः – काशादयश्च छिन्नास्तद् देवयजनं कुर्युः ॥ ४ ॥

**वा निर्व्रस्कम् ॥ ५ ॥**

छिन्नमूला अच्छिन्नमूला वा वृत्ताः कर्तव्याः ॥ ५ ॥

दक्षिणाप्रवणम् ॥ ६ ॥

अक्षशालो यूपः ॥ ७ ॥

स्फ्याग्रः ॥ ८ ॥

तैल्वको बाधको वा ॥ ९ ॥

तिल्वस्तिरीसः । बाधको गिरिमालः ॥ ९ ॥

इध्मो वैभीदकः ॥१०॥

शरमयं बर्हिः ॥११॥

अधिषवणे शवनभ्ये ॥१२॥

शवं मृतं येनानसोढं तच्चकस्य यन्नभ्यं फलकं तद्घटिते अधिषवणफलके कुर्यात् ॥१२॥

रथौ हविर्द्धाने ॥१३॥

हविर्द्धानशकटयोः स्थाने रथौ कुर्यात्, नानसी प्राकृतप्रमाणे ( ८।३।२१ ) ॥१३॥

लोहितः सवनीयोऽग्नये रुद्रवते ॥१४॥

लोहितश्छाग आलब्धव्यः ॥१४॥

लोहितवाससो लोहितोष्णीषाः प्रचरन्त्यृत्विजः ॥१५॥

निवीताः ॥१६॥

उज्ज्यधन्वानः ॥१७॥

उज्ज्यानि = उद्गतज्यानि ज्यारूढानि धनूंषि येषां ते। तथाविधा ऋत्विजः कर्म कुर्युः ॥१७॥

कलापिनः ॥ १८ ॥

शरपूर्णा चर्ममयी भस्त्रा कलापः ॥ १८ ॥

काण-खोर-कूट-वण्डा-हुतमिश्रा नव-नव दक्षिणा ददाति लिङ्गानाम् ॥ १९ ॥

काणाः, खोराः = पादेन खञ्जाः, कूटा = भग्नशृङ्गाः, वण्डाः = छिन्नपुच्छाः । एवं विधा नव नव गाः हुतमिश्राः = ज्वरगृहीतमिश्रा दक्षिणा दद्यात् ॥ १९ ॥

पुरुषाणां वा दानाधिकारात् ॥ २० ॥

अथवा प्रत्यृत्विजं नव नव सङ्ख्याकास्तथाविधा गा दद्यात् ॥ २० ॥

प्राकृतस्य वा नयनं भेदेन ॥ २१ ॥

अथवा न प्रतिपुरुषं नव नव दद्यात्, किन्तु प्राकृतस्यैव गवां शतस्य एतानि काणादीनि लिङ्गानि भवन्ति। तेषां च नयनं भेदेन भवति। नवभिर्नवभिर्नयनं भवतीत्यर्थः। एवं प्रकृतिरनुगृहीता भवति । नव नव नयतीति च यथाश्रुतं व्याख्यातं भवति ॥ २१ ॥

दक्षिणाकाले कण्टकैरेना विरुजेयुः ॥ २२ ॥

दक्षिणादानकाले विल्वादिकण्टकैरेनाः = काणादिका गा विरुजेयुः = कण्टकैस्तासां शरीरं वितुद्य लोहितमुत्पादयेयुरुद्गातारः ॥ २२ ॥

उपतप्तास्वनुपतप्तानामाज्यम् ॥ २३ ॥

उपतप्तासु = व्याधिपीडितासु गोषु या अनुपतप्तास्तासामाज्यं श्येने गृह्णीयात् ॥२३॥

साद्यस्कधर्मा हिरण्यस्रग्वत् ॥ २४ ॥

साद्यस्कशब्देन श्येनयागोऽभिधीमते। तस्य धर्माः = लोहितोष्णीषादयः पूर्वमुक्ताः। ते हिरण्यस्रग्वद्बोध्याः। "यथोपयुक्तꣳ हिरण्यस्रज" ( १४।५।२३ ) इति पूर्वमुक्तम्। तद्वत् यद्वस्त्रादिकं येनर्त्विजा परिहितं तत्तस्मै दद्यादित्यर्थः ॥ २४ ॥

[ षष्ठः साद्यस्कः ]

षष्ठं साद्यस्कमभिदधाति—

एकत्रिके दक्षिणा षष्टिशतꣳ षट् च ॥ २५ ॥

एकत्रिको नाम षष्ठः साद्यस्कः क्रतुः। तत्र षट्षष्ट्यधिकं गवां शतं दक्षिणा भवति ॥ २५ ॥

साद्यस्कधर्माः ॥ २६ ॥

व्याख्यास्यन्ते ॥ २६ ॥

दीक्षादि सद्यः सर्वं क्रियते ॥ २७ ॥

साद्यस्के क्रतौ एकस्मिन्नेव सौत्येऽहनि दीक्षाप्रभृति "देवयजनं जोषयन्त"(७।१।१०) इत्यारभ्य "आदीप्य प्रविशन्ति" ( १०।६।२६) इत्येतदन्तं सर्वं कर्म कर्तव्यम् ॥ २७ ॥

सहपशूनालभते ॥ २८ ॥

सौत्येऽहनि अग्नीषोमीय-सवनीयानूबन्ध्यान् पशून् क्रमेण सहैव = तन्त्रेण सवनीय काले आलभेत। तत्र स्थानित्वात्सवनीयः स्वस्थानं न जहाति। अग्नीषोमीयस्तु स्वस्थानात्प्रच्यावितः सवनीयात्पश्चाद्भवति ॥ २८ ॥

पुरोडाशो वाऽग्नीषोमीयस्थाने ॥ २९ ॥

"अग्नीषोमीयोऽतः पशुः" (८।७।२५) इति पूर्वमुक्तम्। तत्स्थानेऽग्नीषोमीयः पुरोडाशो वा कार्यः ॥ २९ ॥

वपान्ते सुब्रह्मण्यानिवृत्तिः ॥ ३० ॥

प्रकृतौ वसतीवरीनिधानान्ते सुब्रह्मण्याह्वानविधानात् वपाग्रहणं वसतीवरीग्रहणनिधानान्तस्य कालस्योपलक्षकम्। तेन वपान्ते = वसतीवरीनिधानान्ते विहिता या सुब्रह्मण्या सा न कार्येत्यर्थः ॥ ३० ॥

प्रतिदिशं वसन्त्यृत्विजः ॥ ३१ ॥

वक्ष्यमाणाश्चत्वार ऋत्विजो वक्ष्यमाणप्रकारेण पूर्वादिदिक्षु पूर्वदिने रात्रौ वसन्ति। अत्र ऋत्विजां वासविधानाद्वरणमर्थात्पूर्वेद्युः कर्तव्यम्। वृतानामृत्विजां प्रतिदिशं वासः। वासश्च पूर्वरात्रावेव भवतीति "छन्ना वसति" (५।४।१) इत्यत्रोक्तम्। अधिवासन शब्देऽप्ययमेवार्थो बोध्यः ॥ ३१ ॥

पुरस्ताद्योजने होता ॥ ३२ ॥

देवयजनस्य । "चतुःक्रोशं तु योजनमिति ॥ ३२ ॥

इतरे क्रोशप्रत्यवायेन क्रोशप्रत्यवायेन ॥ ३३ ॥

इतरे उद्गात्रादयः क्रोशप्रत्यवायेन = पूर्वपूर्वापेक्षया एकैकक्रोशस्यापचयेन वसेयुः । उद्गाता त्रिक्रोशे, द्विक्रोशेऽध्वर्युः, क्रोशे ब्रह्मेति ॥ ३३ ॥

उद्गात्रादीनां दिश आह—

उद्गातोत्तरतः ॥ ३४ ॥

अध्वर्युः पश्चाद्, ब्रह्मा दक्षिणतः ॥ ३५ ॥

चतुर्भिरश्वरथैः सक्षीरदृतिभिरा वहन्त्येनान् ॥ ३६ ॥

सद्योदुग्धेन क्षीरेण पूर्णाः सक्षीराः । सक्षीरा दृतयश्चर्ममय्यो भस्त्रा येषु रथेषु तैः । अश्वयुक्ता रथा अश्वरथाः । तैर्यजमानपुरुषास्तान् होत्रादीनानयेयुः ॥ ३६ ॥

इतरेषामश्वसङ्ख्यामाह—

यथाक्रोशमश्वाः ॥३७॥

यस्य यावन्तः क्रोशास्तस्य तावन्तोऽश्वा रथे भवन्ति ॥३७॥

ततो नवनीतमाज्यम् ॥३८॥

ततः = तेभ्यो धावद्भ्यः सक्षीरदृतिभ्यो रथेभ्यो यन्नवनीतमुत्पद्यते तदस्मिन् यज्ञे आज्यं भवति ॥३८॥

[ साद्यस्क्रेषु त्रिवर्षेण वृषभेण सोमः क्रेतव्यः ]

सोमक्रयणस्त्रिवत्सः साण्डः ॥३९॥

साण्डेन त्रिवर्षेण ऋषभेण सोमः क्रेतव्यः । अत्र "चिदसि मनोऽसि धीरसि दक्षिणाऽस्यदितिरस्युभयतः शीर्ष्णी । स नः सुप्राङ् सुप्रत्यङ्ङेधीत्यूहः कर्तव्योऽभिमन्त्रणमन्त्रे ( शु० य० ४।१९ ) ॥३९॥

[ साद्यस्क्रेषु वेदिः ]

वेदिरुर्वरा ॥४०॥

साद्यस्क्रे वेदिः सस्याढ्या भूमिः कार्या ॥४१॥

केन सस्येनेत्यपेक्षायामाह—

व्रीहीन्यवान्वा पक्वानध्यवस्यति ॥४२॥

व्रीहियवान्यतरसस्येन युक्ता भूमिर्वेदिर्भवतीत्यर्थः ॥४२॥

[ साद्यस्क्रेषु पांसुखल उत्तरवेदिः ]

खल उत्तरवेदिः ॥४३॥

साद्यस्क्रे ॥४३॥

धान्यखलः प्रत्ययात् ॥४४॥

खलश्चात्र धान्यराशिरेव प्रतिपत्तव्यो न पांसुखलः । कुतः ? प्रत्ययात् = धान्यखले एव खल इति व्यवहारात् ॥४४॥

धान्यखलनिष्पादनप्रकारमाह—

**ये वेदिमभितस्तानुत्तरवेदिदेशे मृध्नन्ति ॥४५॥**

ये यवा व्रीहयो वा वेदिं परितो वर्द्धमानाः स्युः, तान् छित्वा उत्तरवेदिदेशे आनीय अनडुद्भिर्मर्दयन्ति। मर्दयित्वा च धान्यखल उत्तरवेदिः कार्यः ॥४५॥

**पाꣳसुखलो वा प्रत्ययाविशेषात् प्रकृत्यनुग्रहाच्च ॥४६॥**

वाशब्दः पक्षं व्यावर्तयति। पांसुखलो = धूलिराशिरेव खलः कार्यो, न धान्यराशिः। कुतः? खल इत्युक्ते धान्यखलोऽपि प्रतीयते पांसुखलोऽपि। प्रकृतौ ज्योतिष्टोमे पांसुखल एवोत्तरवेदित्वेन दृष्ट इति ॥४६॥

[ साद्यस्क्रेषु खलेवाल्या यूपत्वम् ]

**खलेवाली यूपो लाङ्गलेषा ॥४७॥**

खलमध्यनिखाता मेथी खलेवाली, सैव यूपो भवति। सा च लाङ्गलस्य हलस्य ईषा दण्डः। खले स्थिताऽनडुहो वारयतीति खलेवाली ॥४७॥

[ साद्यस्क्रेषु चषालः ]

**कलापी चषालार्थे ॥४८॥**

कलापी = धान्यतृणमुष्टिश्चषालार्थे कार्यः ॥४८॥

**निर्वृत्तग्रहणात्प्राकृतनिवृत्तिः ॥४९॥**

निर्वृत्ताया = निष्पन्नायाः खलमध्ये निखातायाः खलेवाल्या ग्रहणात् = यूपकार्ये विधानात् प्राकृतस्य यूपाहुतिव्रश्चनादेर्धर्मजातस्य निवृत्तिः ( ६।१।४-२३ ) ॥४९॥

**आवेशादनिवृत्तिः ॥५०॥**

पर्यूषण-प्रोक्षणादेर्निवृत्तिर्न भवति। कुतः? आवेशात्। ते हि खलेवाल्यामभ्यावेश्यन्ते = विधीयन्ते ॥५०॥

**उर्वरादि वा द्वितीयस्य सन्निधेः ॥५१॥**

"वेदिरुर्वरा" ( सू० ४० ) इत्यादिकं धर्मजातं द्वितीयस्य साद्यस्क्रस्य भवति, नान्येषाम्। कुतः? सन्निधेः। द्वितीयसाद्यस्क्रसन्निधौ (ताण्ड्य० १६।१३) तेषां पाठात्। अत्र कर्काचार्याः। वा सर्वेषां भवति। सर्वान् साद्यस्क्रान् प्रकृत्य श्रवणात्। यदुक्तं सन्निधानाद् द्वितीयस्येति, तत्रोच्यते। पठ्यमानमवश्यमेव कस्य चित्सन्निहितं स्यात्। तेन सन्निधिर्न कारणम् ॥५१॥

इति तृतीया कण्डिका ॥ ३ ॥



[ चत्वारो व्रात्यस्तोमा गणयज्ञाः ]

**व्रात्यस्तोमाश्चत्वारः ॥ १ ॥**

व्रात्यस्तोमसंज्ञकाश्चत्वारः क्रतवोऽग्निष्टोमसंस्थाः कार्याः। षोडशवर्षा अप्यनुपनीतास्त्रयः पुरुषा येषां ते सावित्रीपतिता व्रात्याः। अन्येऽपि ये द्विजातिकर्म परित्यज्य हीनकर्माचरणशीलास्तेऽपि व्रात्याः। तेषां स्तोमा व्रात्यस्तोमाः ( लाट्या० ८।६ ) ॥ १ ॥

**द्वितीय उक्थ्यः ॥ २ ॥**

द्वितीयो व्रात्यस्तोम उक्थ्यसंस्थः (१७।२।४)। अन्ये त्रयोऽग्निष्टोमसंस्थाः ॥ २ ॥

[ प्रथम एकाहो व्रात्यस्तोमो हीनाचाराणाम् ]

व्रात्याश्चतुर्विधाः । निन्दिताः, कनिष्ठाः, ज्येष्ठाः, हीनाचाराश्च । तत्र हीनाचाराणां प्रथमे व्रात्यस्तोमेऽधिकारमाह—

**व्रात्यगणस्य ये सम्पादयेयुस्ते प्रथमेन यजेरन् ॥ ३ ॥**

ये व्रात्या नृत्यगीतवाद्यशस्त्रधारणादौ स्वयं प्रवीणाः सन्तः स्वां विद्यां व्रात्यसमूहस्य शिक्षयेयुस्ते प्रथमेन व्रात्यस्तोमेन यजेरन् ॥ ३ ॥

[ द्वितीय एकाहो व्रात्यस्तोमो ज्ञातिभिर्बहिष्कृतानाम् ]

**द्वितीयेन निन्दिता नृशꣳसाः (ताण्ड्य० १७।२।१) ॥ ४ ॥**

नृशंसा नृभिर्मनुष्यैः पापाध्यारोपेण शंसाः निन्दिता गर्हिता ज्ञातिभिर्बहिष्कृता व्रात्यास्तत्पापनिवृत्यर्थं द्वितीयेन यजेरन् ॥ ४ ॥

[ तृतीयो व्रात्यस्तोमो यूनां ज्ञातिबहिष्कृतानाम् ]

**तृतीयेन कनिष्ठाः ॥ ५ ॥**

तपसा कनिष्ठाः = युवान एव ज्ञातिभिर्बहिष्कृताः शुद्ध्यर्थं तृतीयेन व्रात्यस्तोमेन यजेरन् (ताण्ड्य० १७।३।२) ॥ ५ ॥

[ चतुर्थ एकाहो व्रात्यस्तोमो वृद्धानां व्रात्यानाम् ]

**ज्येष्ठाश्चतुर्थेन (ताण्ड्य० १७।४।३) ॥ ६ ॥**

[ व्रात्यस्तोमे गृहपतिः ]

ज्येष्ठशब्दार्थमाह—

**अपेतप्रजनना स्थविरास्तदाख्यास्तेषां यो नृशꣳसतमः स्याद् द्रव्यवत्तमो वाऽनूचानतमो वा, तस्य गार्हपते दीक्षेरन् ॥ ७ ॥**

अपगतप्रजननेन्द्रियसामर्थ्या यौवनापगमनेन स्थविरा वृद्धा ज्येष्ठसंज्ञा भवन्ति । तेषां मध्ये यो निन्दिततमादिः स गृहपतिः कार्यः । व्रात्यस्तोमाश्च लौकिकेऽग्नौ कार्या इति कर्काचार्याः (१।१।१४) । तेनात्र गार्हपत्योऽग्निर्लौकिक एव नाधाननिष्पन्नः । व्रात्यस्तोमार्थमाधानं कार्यमित्यपरे । तथा च गृह्यकारिकाकारः—"अभार्यस्यानधीतस्य स्यादाधानं तदर्थतः" (१।१४५) इति ॥ ७ ॥

**तस्य भक्षमनुभक्षयन्त आसीरन् ॥ ८ ॥**

इतरे व्रात्या गृहपतेर्भक्षं सोमादिकं भक्षयन्त असीरन् । यजमानचमसादिकं प्रथमं गृहपतिर्भक्षयति, पश्चादितरे भक्षयन्तीत्यर्थः ॥ ८ ॥

[ व्रात्यस्तोमे गृहपतिना दक्षिणार्थे सम्पाद्यानि व्रात्यधनानि ]

**व्रात्यधनानि भवन्ति ॥९॥**

वक्ष्यमाणान्युष्णीषादीनि व्रात्यानां धनानि भवन्ति (ताण्ड्य० १७।१।१४-१५) ॥९॥

**तिर्यङ् नद्धमुष्णीषम् ॥१०॥**

एकं व्रात्यधनमिदम् ॥१०॥

प्रतोदः ॥११॥

अनडुत्प्रेरणसाधनं प्राजनः = प्रतोदः । इदं द्वितीयं व्रात्यधनम् ॥११॥

ज्याह्रोडः ॥१२॥

ह्रोडतिर्गत्यर्थः । ज्या प्रत्यञ्चा गता यस्य स ज्याह्रोडः । ज्यारहितः केवलो धनुर्दण्डः । इदं तृतीयं व्रात्यधनम् ॥१२॥

ज्याशब्दार्थं स्वयमेव व्याचष्टे—

अयोग्यं धनुस्तदाख्यम् ॥१३॥

ज्याह्रासेनायोग्यं = स्वकार्यसाधनासमर्थं धनुस्तदाख्यंज्याह्रोडशब्दवाच्यमित्यर्थः ॥१३॥

वासः कृष्णशं कद्रु ॥१४॥

कृष्णमशितं येन तत्कृष्णाशमिति प्राप्तेऽकारलोपश्छान्दसः । कृष्णसूत्रोतमित्यर्थः । कृष्णसूत्रोतं वासः कद्रु इच्यते । तदपि व्रात्यधनम् ॥१४॥

पक्षान्तरमाह—

अकृष्णं कृष्णदशं वा तदाख्यम् ॥१५॥

स्वयमकृष्णं सन् यत्कृष्णदशं वासः, तद्वा कद्र्वाख्यम् ॥१५॥

फलकास्तीर्णो विपथः ॥१६॥

फलकैरास्तीर्ण आच्छादितो विपथः = अमार्गगामी रथः ! सोऽपि व्रात्यधनम् ॥१६॥

पक्षान्तरमाह—

अश्वाश्वतराभ्यां कम्प्राभ्यां युक्तः स्यादित्येके ॥१७॥

कम्पनशीलाभ्यामश्वाश्वतराभ्यां युक्तं रथमेक आचार्या इच्छन्ति ॥१७॥

निष्को राजतः ॥१८॥

राजतो निष्कः कण्ठाभरणं व्रात्यधनम् ॥१८॥

अजिने पार्श्वसहिते कृष्णवलक्षे आविके ॥१९॥

मेषयोश्चर्मणी पार्श्वतस्तन्तुभिः स्यूतैः संलग्ने शुक्लकृष्णवर्णे व्रात्यधने भवतः ॥१९॥

तद् गृहपतेः ॥२०॥

एतत्पूर्वोक्तं तिर्यङ् नद्धमित्यादिकं सर्वं गृहपतेर्व्रात्यस्य स्वभूतं सम्पाद्यं धनं दक्षिणार्थम् ॥२०॥

[ गृहपतिव्यतिरिक्तानां व्रात्यानां दक्षिणार्थं सम्पाद्यानि व्रात्यधनानि ]

एवमेवाजिनानीतरेषाम् ॥२१॥

गृहपतिव्यतिरिक्तानां व्रात्यानामेवमेव = ईदृशानि पूर्वोक्तान्यजिनान्येव धनानि भवन्ति ॥२१॥

दामतूषाणि वलूकान्तानि द्विचूडान्याविकानि वासाꣳसि लोहितान्तानि कृष्णान्तानि वा तदाख्यानि ॥२२॥

आविकानि वासांसि = मेषरोमनिर्मितानि वस्त्राणि गृहपत्यतिरिक्तानां सर्वेषां व्रात्यानां धनानि भवन्ति । कीदृशानि, दामतूषाणि । तूषो = वस्त्रदशा । दामानीव दामाकारा

रज्जुरूपा दशा येषां तानि दामतूषाणि । यथा गोबन्धनार्थानि दामानि, तत्प्रकाराणि स्युः । तेन एकस्मिन् पार्श्वे ग्रन्थिः अपरस्मिन्पाश इति सिद्धम् । पुनः कीदृशानि वलूकान्तानि = वलूकः कृष्णो लोहितो वा वर्णः । तेन लोहितान्तानि वा कृष्णान्तानि वा वस्त्राणि तदाख्यानि वलूकान्तसंज्ञानि । पुनः कीदृशानि, द्विचूडानि = द्वे चूडे शिखे येषां तानि द्विचूडानि ॥२२॥

**द्वे द्वे दामनी उपानहौ च कर्णिन्यौ कृष्णे स्यातामित्येके ॥२३॥**

एकैकस्य वस्त्रस्य द्वे द्वे दशे स्याताम् । एके आचार्याः कृष्णवर्णे उपानहौ च स्यातामिति इच्छन्ति । किंभूते उपानहौ, कर्णिन्यौ = कर्णौ कर्णाकारौ चर्मावयवौ स्तो ययोस्ते ॥२३॥

[ मागधदेशीय ब्राह्मणाय व्रात्यस्तोमे दक्षिणादानम् ]

**मागधदेशीयाय ब्रह्मबन्धवे दक्षिणाकाले व्रात्यधनानि दद्युः ॥२४॥**

सर्वे एव व्रात्याः पूर्वोक्तानि व्रात्यधनानि दद्युः ( लाट्या० ८।६।२८ ) ॥२४॥

**अविरतेभ्यो वा व्रात्यचरणात् ॥२५॥**

अथवा ये ब्राह्मणा व्रात्यकर्माचरणादविरता व्रात्यकर्मतत्परा इत्यर्थः । तेभ्यो दद्यात् ॥२५॥

**तेष्वेव मृजाना यन्तीति श्रुतेः ( ताण्ड्य. १७।१।१६ ) ॥२६॥**

तेषु व्रात्येषु पापिष्वेव पापं मृजानाः शोधयन्तो यन्ति पूततां प्राप्नुवन्ति इति श्रवणात् ॥२६॥

**त्रयस्त्रिꣳशतं त्रयस्त्रिꣳशतं दक्षिणा दद्युः ॥२७॥**

सर्वे व्रात्या गा दद्युः ॥२७॥

**द्विगुणा गृहपतिरित्येके ॥२८॥**

द्विगुणा गाः ॥२८॥

**व्रात्यस्तोमेनेष्ट्वा व्रात्यभावाद्विरमेयुः ॥२९॥**

**व्यवहार्या भवन्ति ॥३०॥**

[ अग्निष्टुद्यज्ञः ]

**अग्निष्टुद्ब्रह्मवर्चस-वीर्यान्नाद्य-प्रतिष्ठाकामानां, यश्चापूत इव मन्येत ॥३१॥**

अग्निष्टुन्नामैकाहो ब्रह्मवर्चसादिकामैरनुष्ठेयः ( ताण्ड्य० १७।४।५ ) । यश्च ब्रह्महत्यादिपापैरात्मानमपूतमिव मन्येत तेनापि तत्पापनिवारणार्थं कर्तव्यः ॥३१॥

**यज्ञविभ्रष्टस्य च ॥३२॥**

यज्ञो विभ्रष्टो यस्य तस्याप्ययं भवति ॥३२॥

**यस्माद्वा विभ्रꣳशेरन् ॥३३॥**

प्रारब्धे सोमयागे प्रधानयागानां मध्ये विस्मृतं यदा, तदा प्रधानविस्मरणाद्विभ्रंशेरन् विभ्रष्टा भवेयुः, तेषामप्यग्निष्टुद्भवति ( ताण्ड्य० १७।८।१-२ ) ॥३३॥

इति चतुर्थी कण्डिका ॥४॥

छान्दोग्ये विशेषो यथाकामम् ॥ १ ॥

ब्रह्मवर्चसादिकामानामग्निष्टुदित्युक्तम् ( २२।४।२८ )। तत्र कामं कामं प्रति अग्निष्टुति छान्दोग्ये = औद्गात्रे विशेषो, नाध्वर्यवे ( ताण्ड्य० १७।५।७ ) ॥ १ ॥

सुब्रह्मण्याग्नेयी ॥ २ ॥

पूर्वं तु ( ७।६।२० ) ऐन्द्री उक्ता ॥ २ ॥

[ इन्द्रस्तुत्सूर्यस्तुद्वैश्वदेवस्तुतः ]

एवं यथास्तुत् ॥ ३ ॥

इन्द्रस्तुत् सूर्यस्तुद् वैश्वदेवस्तुत पृथगेवोक्ताः (२१।२।४)। तत्र यो यद्देवत्यः स्तुत्, तत्र तद्देवत्या सुत्या। यथा इन्द्रस्तुति ऐन्द्री, सूर्यस्तुति सौरी, एवं वैश्वदेवीति ॥ ३ ॥

सर्वमेके ॥ ४ ॥

अग्निष्टुत्याग्नेयमिच्छन्ति। प्रकृतौ यत्रेन्द्रपदं तत्राग्निपदमिति। एके तन्नेच्छन्ति। उक्तविशेषात्। उक्तो हि विधिरत्र। "तस्याग्नेया ग्रहा भवन्त्याग्नेय्यः पुरोरुच" इत्येवं ( १३।७।१।३ ) ग्रहदेवतास्थाने अग्निष्टुत्यग्निपदमूह्यते। पुरोरुचस्त्वस्याजरासः ( ३३।१ )। एवमिन्द्रस्तुदादिष्वपि उत्तरोऽनुवाकः पुरोरुचो भवन्ति ॥ ४ ॥

[ अग्निष्टुतो दक्षिणा ]

यथोत्साहं दद्यादाग्नेयानामनडुद्भिरण्याश्वाजानाम् ॥ ५ ॥

आग्नेयानामनडुहां हिरण्यस्य अश्वानामजानां च यथोत्साहं त्रिप्रभृतीनां दानमग्निष्टुति कुर्यात् ॥ ५ ॥

[ त्रिवृत्स्तोमकाश्चत्वार एकाहाः ]

त्रिवृतश्चत्वारः ॥ ६ ॥

त्रिवृत्स्तोमका अग्निष्टोमसंस्थाश्चत्वारः क्रतवः स्युः ( ताण्ड्य० १७।१०।१ ) ॥ ६ ॥

अनिरुक्तप्रातःसवनः प्रथमः ॥७॥

अनिरुक्तं = प्रातःसवनं यस्य सः "मनसा तु स्वभक्तिं तथा स्वरं वाचा गायेत्" इति निरुक्तलक्षणम् ॥ ७ ॥

[ ईप्सुयज्ञः प्रथमः ]

ईप्सुयज्ञः ॥ ८ ॥

आप्तुमिच्छुरीप्सुः। ईप्सोर्यज्ञ ईप्सुयज्ञ इति तस्य विशेषसंज्ञा ॥ ८ ॥

ग्रामकामस्य वा ( ता० १७।१०।३ ) ॥९॥

दक्षिणाऽश्वरथश्चतुर्युक् श्यावोऽन्यतमः ॥१०॥

प्रथमस्य त्रिवृतश्चतुर्भिरश्वैर्युक्तो रथो दक्षिणा। तेषां चतुर्णां मध्येऽन्यतमोऽश्वः श्यामवर्णो भवेत् ॥ १० ॥

[ द्वितीयस्त्रिवृत्स्तोमक एकाहो बृहस्पतिसवः ]

तेजो–ब्रह्मवर्चस–पुरोधाकामस्य बृहस्पतिसवः ॥११॥

बृहस्पतिसवसंज्ञको द्वितीयस्त्रिवृद्भवति। अयं वाजपेये विस्तरेणोक्तः (अ० १४)॥११॥

देवसूहवीर्थ्षि निर्वपति (१५।४।४-१३) ॥१२॥

अतिग्राह्यवद् (१२।३।२) ग्रहं गृह्णाति "बृहस्पतेऽ अति यदर्य" इति (२६।३) ॥१३॥

उपालभ्यो बार्हस्पत्यः ॥१४॥

बृहस्पतिदेवतः पशुरुपालभ्यः ॥१४।

निहितेषु नाराशᳮसेषु प्रातःसवनेऽनपाकुर्वन्नेकादश दक्षिणा व्यादिशति ॥ १५ ॥

नाराशंसाश्चमसाः पूर्वमुक्ताः (६।१२।८)। तेषु प्रातःसवने निहितेषु सत्सु गोयूथादपृथक् कुर्वन् एकादश गा दानार्थमादिशेत् ॥ १५ ॥

अश्वद्वादशा माध्यदिने ॥ १६ ॥

अश्वो द्वादशो यासां ताः ॥ १६ ॥

अपाकरोत्युभयीः ॥ १७ ॥

व्यादेशादनन्तरं द्वयोरपि गा गोयूथात्पृथक् कुर्यात् ॥ १७ ॥

एकादश तृतीयसवने ॥ १८ ॥

अनूबन्ध्यवपाहोमान्तेऽपाकरणम् ॥ १९ ॥

अतिक्रमणं च सर्वासाम् ॥ २० ॥

दानार्थं दक्षिणमार्गेण सर्वा गा नयेत् ॥ २० ॥

एकादशैकादश वा शतानि स्युः ॥ २१ ॥

सहस्राणि वा ॥ २२ ॥

अश्वस्त्वेव माध्यन्दिनेऽधिकः ॥ २३ ॥

वाजपेयवदाज्येनाभिषिच्यते कृष्णाजिने ॥ २४ ॥

वाजपेयवदिति माहेन्द्रात्पूर्वम् (१४।५।२९) ॥ २४ ॥

शुक्रामन्थिसᳬस्रवेण वा ॥ २५ ॥

अभिषिच्यते ॥ २५ ॥

अन्यतस्त्वभिवाद्यः ॥ २६ ॥

अयं द्वितीयत्रिवृत्स्तोम-बृहस्पतिसवयाजी अन्यतः पुरुषादभिवाद्यो भवति। अयं च नान्यमभिवादयेत् ॥ २६ ॥

अप्रत्यवरोही स्यात ॥ २७ ॥

प्रत्यवरोहोऽभ्युत्थानम् । अभ्युत्थानयोग्यस्य गुर्वादेरपि अभ्युत्थानं न कुर्यात् ॥२७॥

स्थपतिरित्येनं ब्रूयुः (ताण्ड्य० १७।११।७) ॥ २८ ॥

सराजानो ब्राह्मणा यं पुरस्कुर्वीरन् स एतेन यजेत ॥ २९ ॥

पुरस्कुर्वीरन् धर्मस्थापकत्वेनाङ्गीकुर्युः, स एतेन बृहस्पतिसवेन यजेत ॥ २९ ॥

[ तृतीयस्त्रिवृत्स्तोमक इषुर्नामैकाहः ]

**इषुः श्येनवदसद्यः ॥ ३० ॥**

इषुर्नामैकाहः। स च श्येनवत्कार्यः ( २२।१।३ )। इयांस्तु विशेषः। सद्यो न भवतीति ॥ ३० ॥

इति पञ्चमी कण्डिका ॥ ५ ॥



[ मरणकामस्य सर्वस्वारनामा एकाहः ]

**मरणकामस्य सर्वस्वारः कृतान्नदक्षिणः ॥ १ ॥**

कृतान्नं=सिद्धान्नमोदनादि दक्षिणा यस्य सः सर्वस्वारनामकः क्रतुः ( ताण्ड्य० १७।१२।१ ) ॥ १ ॥

**दीक्षाप्रभृति वर्जयेद् भक्षान् ॥ २ ॥**

दीक्षणीयात आरम्य भक्षान् यजमानभागेडाभागसोमादीनवजिप्रेत्, न भक्षयेत् ॥ २ ॥

**अप्स्ववहरणमसोमानाम् ॥ ३ ॥**

सोमवर्जितानाम् ॥ ३ ॥

**आर्भवपवमाने दक्षिणेनौदुम्बरीं कृष्णाजिने संविशति दक्षिणाशिराः प्रावृतः ॥ ४ ॥**

आर्भवमिति तृतीयसवनपवमानमुच्यते। प्रावृतो वाससा वेष्टितसर्व देहः "ब्राह्मणाः समापयत मे यज्ञम्" इत्युक्त्वेति मानवे ॥ ४ ॥

**तदेव म्रियते जीवेच्चेद्दैर्घश्रवसꣳ स्वासु यज्ञायज्ञियस्थाने कुर्युः ॥ ५ ॥**

तदेव कृष्णाजिनरूपं शयनमाश्रित्य म्रियते। एवमुक्तेन प्रकारेण मरणार्थं सुप्तोऽपि यदि जीवेत् तदा यज्ञायज्ञियस्थाने स्वासु स्तोत्रियासु दैर्घश्रवसं साम कुर्युरुद्गातारः ॥ ५ ॥

**मृते तदन्तमर्थाभावात् ॥ ६ ॥**

मृते यजमाने मरणान्तमेव कर्म भवति। कुतः? अर्थाभावात्। मरणकामस्यासौ विहितः। मरणं च संजातम् ॥ ६ ॥

**यजमानपात्रजोषहवीꣳष्याहवनीये प्रास्य यथार्थं गच्छेयुः ॥७॥**

पूर्वपक्षोऽयम् (२५।७।८) ॥ ७ ॥

सिद्धान्तयति—

**समाप्तिर्वोभयचोदनात् ॥ ८ ॥**

वाशब्दः पक्षं व्यावर्त्तयति। समाप्तिः कर्तव्या, न पात्रप्रतिपत्तिः। कुतः? उभयचोदनात्=उभयं विहितं यागो मरणं च। अतः समाप्तिरेव कर्तव्या ॥ ८ ॥

**समिष्टयजुरन्ते "सं त्वा हिन्वन्तीति ( साम्ना ) दार्वाहरणम् ॥ ९ ॥**

आसन्द्यर्थम् ( लाट्या० ८।८।१० ) ॥ ९ ॥

**"सं त्वा ततक्षुरिनि ( साम्ना ) तक्षणम् ॥ १० ॥**

आसन्द्यङ्गजातस्य घटनं कुर्यात् ( लाट्या० ८।८।१२ ) ॥ १० ॥

"मं त्वा रिणन्तीति प्रक्षालनम् ॥ ११ ॥

आसन्द्याः ॥ ११ ॥

"सं त्वा शिशन्तीत्यासन्दीविवानम् ॥ १२ ॥

त्रिवृता मुञ्जरज्ज्वा ॥ १२ ॥

आसन्द्यैनमवभृथꣳ हृत्वाऽभ्युदय सोमोपनहनेन प्रच्छाद्यानूबन्ध्यवपाहोमान्ते दक्षिणस्यां वेदिश्रोणौ सर्वकेशश्मश्रुलोमवपनम् ॥ १३ ॥

मृताहिताग्न्यावृच्च ॥ १४ ॥

मृतस्याहिताग्नेर्याऽऽवृदितिकर्तव्यता सा सर्वा भवति ॥ १४ ॥

अनूबन्ध्यान्तेऽग्नीनाहृत्य वेदिमध्यमाग्नीध्राद्दक्षिणं दक्षिणाशिरसं चितावाहितमुद्गाता त्रिर्यामेन परिगायन्नाके सुपर्णमित्येतस्याम् ॥१५॥

संतापजान् ( २८।७।१३ ) त्रीन् अग्नीन् वेदिमध्यं प्रत्यानीय आग्नीध्राद्दक्षिणस्यां दिशि वेदिमध्यप्रदेशे दक्षिणाग्रैः काष्ठैश्चितिं चित्वा तत्र स्थापितं यजमानमुद्गाता यामेन साम्ना 'नाके सुपर्णम्' ( ऋ० ७।३।११ ) इत्येतस्यामृचि त्रिः परिगायन्नास्ते ॥ १५ ॥

धूमप्रासं "त्वेषस्ते धूम ऋण्वतीति ( ४।५।२ ) ॥१६॥

गायेत् ॥ १६ ॥

अग्निप्राप्तमग्ने मृड, महाँ ३ असीत्यन्यतरेण ( ऋ० ३।५।६ ) ॥१७॥

गायेत् ॥ १७ ॥

उदवसानीयान्ते वा सर्वस्य समाप्तेः ॥१८॥

वाऽवधारणे । नानूबध्यान्तेऽग्नीनामाहरणं, किन्तु उदवसानीयान्त एव । कुतः ? सर्वस्य समाप्तेः । उदवसानीयान्ते हि सर्वो यज्ञः समाप्यते । अतस्तदन्त एवेति ॥ १८ ॥

जीवेच्चेदेतेनैवारम्भेण मुमूर्षेत् ॥१९॥

एवं सर्वस्वारेऽनुष्ठितेऽपि यदि जीवेद्यजमानस्तदा पुनरप्येतेनैव सर्वस्वारारम्भेण एतस्यैव पुनः प्रयोगेण मर्तुमिच्छेत् ॥ १९ ॥

जिजीविषेद्वा ॥२०॥

अथवा मरणार्थं स्वर्वस्वारेऽनुष्ठितेऽपि जीवितुमिच्छेद्यजमानः ॥ २० ॥

[ ऋत्विगपोहनीयास्त्रय एकाहाः ]

ऋत्विगपोहनीयास्त्रयः ॥२१॥

एतत्संज्ञकास्त्रयः क्रतवो भवन्ति ॥ २१ ॥

प्रथममाह—

सर्वस्तोमः ॥२२॥

तत्र प्रथमः सर्वस्तोमसंज्ञोऽग्निष्टोमसंस्थः ॥ २२ ॥

द्वितीयतृतीयावाह—

**अह्नी चोत्तमे छान्दोमिके पृथक् कृत्वा ॥२३॥**

छान्दोमिके = द्वादशाहिकास्त्रयश्छन्दोमाः पूर्वमुक्ताः ( १२।३।१२ )। तेषां मध्ये उत्तमे अह्नी चतुश्चत्वारिंशस्तोमके उक्थ्यसंस्थे पृथक् कृत्वा द्वितीयतृतीयावृत्विगपोहनीयौ कार्यौ ॥ २३ ॥

[ वाचस्तोमसंज्ञकाश्चत्वार एकाहाः ]

**वाचस्तोमाश्चत्वारः ॥२४॥**

वाचस्तोमसंज्ञकाश्चत्वारः क्रतवो भवन्ति ॥२४॥

**छान्दोग्ये विशेषः ॥२५॥**

तत्र छन्दोगानां कर्मणि विशेषः ॥२५॥

**पृष्ठ्यस्तोमास्त्रिवृत्पञ्चदश-सप्तदशैकविंशत्-त्रिणव-त्रयस्त्रिंशाः ॥२६॥**

पृष्ठ्यस्तोमसंज्ञकाः षट् क्रतवो भवन्ति त्रिवृदादयः ॥२६॥

इति षष्ठी कण्डिका ॥ ६ ॥



[ सौमिकानि चातुर्मास्यानि ]

त्रिविधानि चतुर्मास्यानि, ऐष्टिकानि पाशुकानि सौमिकानि चेति । तत्रैष्टिकानि पाशुकानि च पूर्वमुक्तानि ( अ० ५ )। अधुना सौमिकान्याह—

**चातुर्मास्याः सोमास्त्रिषु पर्वस्थानेषु पार्ष्ठिकानि "पृष्ठ्यो विहृत" इति श्रुतेः ॥ १ ॥**

चातुर्मास्याः सोमा अभिधीयन्ते ( ताण्ड्य० १७।१३ )। तत्र चातुर्मास्येषु वैश्वदेवं, वरुणप्रघासाः, साकमेधाः, शुनासीरीयं चेति चत्वारि पर्वाणि । तत्र त्रिषु पर्वस्थानेषु वैश्वदेव-वरुणप्रघास-साकमेधानां स्थानेषु फाल्गुन्यादिकाले पार्ष्ठिकानि द्वादशाहिकपृष्ठ्यषडहसंबन्धीनि षडहानि भवन्ति। कुतः ? पृष्ठ्यो विहृतो = विभक्तो भवतीति शाखान्तरात् ॥ १ ॥

[ पार्ष्ठिकानामह्नां विभागः ]

पर्वाणि च त्रीणि। पार्ष्ठिकान्यहानि च षट्। तत्र कस्य पर्वणः स्थाने कत्यहानि भवन्ति इत्यपेक्षायां पार्ष्ठिकानामह्नां विभागमाह—

**वैश्वदेवस्थाने प्रथमम् ॥ २ ॥**

पार्ष्ठिकमग्निष्टोमसंस्थं भवति ॥ २ ॥

**अयूपम् ॥ ३ ॥**

भवति ॥ ३ ॥

**उत्तरवेद्यकरणं च ॥ ४ ॥**

**परिधौ पशुनियोजनम् ॥ ५ ॥**

**द्वितीये द्विदिवाख्यो द्व्यहः ॥ ६ ॥**

द्वितीये वरुणप्रघासपर्वस्थाने द्विदिव इत्याख्यो द्व्यहो = द्विरात्रो भवति ॥ ६ ॥

**अग्निष्टोमं प्रथममेके ॥ ७ ॥**

वारुणप्रघासिकयोर्द्वयोरन्होर्मध्ये प्रथममहरग्निष्टोमसंस्थं कुर्यात् ॥ ७ ॥

**तृतीये त्र्यहोऽतिरात्र उत्तमः ॥ ८ ॥**

तृतीये साकमेधपर्वस्थाने पार्ष्ठिकस्त्र्यहश्चतुर्थाहप्रभृति भवति । तत्र चोत्तमोऽतिरात्रो भवति ॥८॥

**अग्निष्टोमं प्रथममेके ॥ ९ ॥**

एके षोडशिनमिच्छन्ति ॥ ९ ॥

**ज्योतिष्टोमः शुनासीरीयस्थाने ॥ १० ॥**

**पश्वस्तु सवनीया वैश्वदेव-वारुण-मारुताग्नेयैन्द्राग्नाः ॥ ११ ॥**

आदित आरभ्य पञ्चस्वहःसु क्रमेण पशवः ॥११॥

**षष्ठे चैकादशिनाः ॥ १२ ॥**

साकमेधानां तृतीयेऽतिरात्रसंस्थे षष्ठेऽहनि ऐकादशिनाः पशवः स्युः ॥१२॥

[ सौमिकेषु चातुर्मास्येषु सुनासीरीयपर्वणि वायव्यः सवनीयः पशुः ]

**वायव्यः सप्तमे ॥ १३ ॥**

सप्तमेऽहनि शुनासीरीयपर्वणि ज्योतिष्टोमे वायव्यः सवनीयपशुः कर्तव्यः ॥ १३ ॥

[ सौमिकेषु चातुर्मास्येषु दक्षिणा ]

**पञ्चाशतं पञ्चाशतं प्रत्यहं ददात्युत्तमे द्वादशं शतम् ॥ १४ ॥**

सप्ताहानि सन्ति । तत्र षट्स्वहःसु प्रत्यहं पञ्चाशतं पञ्चाशतं गा दद्यात् । उत्तमे=सप्तमेऽहनि तु द्वादशाधिकं शतं गा दद्यात् ॥ १४ ॥

**वत्सा वा पञ्चाशतो यथर्तुजाः ॥ १५ ॥**

अथवा यस्मिन्नृतौ वैश्वदेवादिसोमयागाः, तस्मिन्नृतौ तत्तदृतुजाताः पञ्चाशत् पञ्चाशद्वत्सा देयाः । अस्मिन्पक्षे शुनासीरीयेऽपि पञ्चाशदेव वत्साः ॥ १५ ॥

[ सौमिकचातुर्मास्येषु प्रतिपर्व अवभृथः ]

**प्रतिपर्वावभृथाः ॥ १६ ॥**

प्रतिपर्वावभृथो येषां ते ॥ १६ ॥

**पर्वान्तरेष्वप्यहतं वस्ते ॥ १७ ॥**

चतुर्णां पर्वणां त्रीण्यन्तरालानि । तेषु अहतं वासो यजमानः परि दध्यात् ॥ १७ ॥

**अरुयुपायी ॥ १८ ॥**

**अमांसाशी ॥ १९ ॥**

[ अवभृथेऽनूबन्ध्याश्चतस्रः ]

**अनूबन्ध्या बार्हस्पत्य-मैत्रावरुणी-सौर्याश्विन्यो यथाऽवभृथम् ॥ २० ॥**

प्रतिपर्वान्तेऽवभृथ इत्युक्तम् । तत्रावभृथक्रमेण चतस्रोऽनूबन्ध्याः कर्तव्याः । यथा—वैश्वदेवसोमे बार्हस्पत्या, वरुणप्रघासेषु मैत्रावरुण्यनूबन्ध्येत्यादि ॥ २० ॥

[ अग्न्याधानादीनां ससोमत्वम् ]

**प्रतिकर्म सोमाः ॥ २१ ॥**

प्रतिकर्मसोमसंज्ञकाः क्रतव उच्यन्ते ॥ २१ ॥

तानेवाह—

**अग्न्याधेय-पुनराधेयाऽग्निहोत्र-दर्शपूर्णमास-दाक्षायणाग्रयणाः ॥ २२ ॥**

अग्न्याधेयसोमः पुनराधेयसोमः, सायमग्निहोत्रसोमः, प्रातरग्निहोत्रसोमः, दर्शसोमः, पौर्णमाससोमः, दाक्षायणसोमः, आग्रयणसोमः एते प्रतिकर्मसोमा इत्युच्यन्ते। सर्वेऽप्येतेऽग्निष्टोमसंस्थाः ॥ २२ ॥

**उक्थ्यं पशुबन्धमेके ॥ २३ ॥**

पशुबन्धमुक्थ्यसंस्थमेक इच्छन्ति, एकेऽग्निष्टोमसंस्थम् ॥ २३ ॥

इति सप्तमी कण्डिका ॥ ७ ॥



[ ससोमेष्वग्न्याधानादिषु प्रातःसवनीयहविर्निर्वापानन्तरमन्यहविषां निर्वापः ]

**प्रातःसवनीयानन्नु हवीꣳषि निर्वपति ॥१॥**

प्रतिकर्मसोमेषु पूर्वोक्तं (९।१।१५-२०) प्रातःसवनीयहविर्निरूप्य वक्ष्यमाणानि हवींषि निर्वपेत् ॥१॥

**पयसी अग्निहोत्रयोः ॥२॥**

अग्निहोत्रसोमयोः प्रातःसवनीयानन्नु पयसी निर्वपेत् ॥२॥

**अन्त्यदेवताऽनूबन्ध्याद्या सवनीया ॥३॥**

प्रतिकर्मसोमेषु या अन्त्या देवता साऽनूबन्ध्यायां भवति। आद्या देवता सवनीयपशोर्भवति ॥३॥

**एकदेवतेषूभयम् ॥४॥**

एकदेवतेषु पुनराधेयसोमादिषु उभयमेकदेवत्यं स्यात् ॥४॥

**चातुर्मास्येषु चैके ॥५॥**

एके चातुर्मास्यसोमेष्वपि प्रातःसवनीयानन्नु चातुर्मास्यहवींषि आग्नेयादीनि (५।१।५-१९) निर्वपन्ति ॥५॥

[ उपहव्यादीनां सप्तदशस्तोमकत्वमग्निष्टोमसंस्थत्वं च ]

**सप्तदशाः पञ्च ॥६॥**

वक्ष्यमाणा उपहव्य-ऋतपेय-बहुसुवर्ण-वैश्यस्तोम-तीव्रसुत्संज्ञकाः पञ्च क्रतवः सप्तदशस्तोमका अग्निष्टोमसंस्थाः स्युः ॥६॥

[ प्रथम उपहव्यः सप्तदशस्तोमकः ]

**उपहव्योऽनिरुक्तो ग्रामकामस्य ॥७॥**

उपहव्यसंज्ञक एकाहः सप्तदशस्तोमकोऽनिरुक्तः कार्यः ( "उपहव्ये देवतानामधेयानि परोक्षं ब्रूयुः" (ला० ८।९।१) इतिसूत्रात्परोक्षमेवानिरुक्तत्वमिति ॥७॥

**अनृतं वाऽभिशस्यमानस्य ॥८॥**

अन्यैर्भिथ्यादोषेण निन्द्यमानस्यायमुपहव्यः ॥८॥

**श्यावोऽश्वो दक्षिणा, तं ब्रह्मणे ददाति (ता० १८।१।२०,२२) ॥९॥**

[ द्वितीयः सप्तदश ऋतपेयः ]

**स्वर्गकामस्यर्तपेयः (तां० ८।२।३) ॥१०॥**

**दीक्षोपसदो द्वादश ॥११॥**

ऋतपेये दीक्षाः उपसदश्च मिलित्वा द्वादश स्युः ॥११॥

**तिस्र उपसदः ॥१२॥**

शेषा नव दीक्षाः । एवं द्वादशसङ्ख्या सम्पद्यते ( ताण्ड्य० १८।२।१७, लाट्या० ८।९।७ ) ॥१२॥

**षड् वा ॥१३॥**

अथवा षडुपसदः, षड् दीक्षा इत्येवं द्वादशता ॥१३॥

**उभयत्र वा द्वादशता, गुणत्वात् ॥१४॥**

वाऽवधारणे । उभयत्र=उपसत्सु दीक्षासु च द्वादशता । कुतः ? गुणत्वात्सङ्ख्यायाः । दीक्षोपसद उद्दिश्य सङ्ख्याविधानात् । सङ्ख्याया गुणत्वात् । गुणस्य च प्रतिप्रधानमावर्तनीयत्वात् । अतो दीक्षासूपसत्सु च द्वादशत्वम् ॥१४॥

**घृतं व्रतयति ॥१५॥**

यजमानः ( तां० १८।२।५ ) ॥ १५ ॥

तत्परिमाणमाह—

**चमसं पूर्णमङ्गुलिपर्वणा मौल्येन सर्वतः प्रमितमाद्यायामुपसदि ॥ १६ ॥**

मौल्येन = मूलभवेनाङ्गुलिपर्वणा अङ्गुल्या मूलपर्वप्रमाणेन विस्तृतं तावद्दीर्घं तावन्मात्रखातं चमसं निर्माय तं घृतेन पूरयित्वा व्रतयेदाद्यायामुपसदि ॥ १६ ॥

**द्वितीयेन द्वितीयायाम् ॥ १७ ॥**

अङ्गुल्या द्वितीयेन मध्यमेनाङ्गुलिपर्वणा सर्वतो विस्तारे दैर्घ्ये खाते च निर्मितं घृतपूर्णं चमसं द्वितीयस्यामुपसदि भुञ्जीत ॥ १७ ॥

**तृतीयेन तृतीयायाम् ॥ १८ ॥**

तृतीयायामुपसदि तृतीयेनाङ्गुलिपर्वणा सर्वतः प्रमितं घृतपूर्णं चमसं व्रतयेत् ॥१८॥

**भक्षयिष्यन्तः सत्यं ब्रूयुः सदो वा स्रप्स्यन्तः ॥१९॥**

स्रप्स्यन्तः = प्रवेशं करिष्यन्तः ॥ १९ ॥

**सोमचमसो दक्षिणौदुम्बरः सगोत्राय ब्रह्मणे देयः ॥ २० ॥**

औदुम्बरः सोमपूर्णश्चमस ऋतपेयस्य दक्षिणा । स च सगोत्राय ब्रह्मणे देयः । ब्रह्मा चात्र सगोत्रो वरणीयः ॥२०॥

पूतभृतः सर्वार्थत्वात् ॥२१॥

स च सोमः पूतभृतो गृह्यते ( ९।४।१।१२ ) ॥२१॥

अंशुंचमसमेके तेन स यजेतेति श्रुतेः ॥२२॥

एके अंशुचमसमनभिषुतसोमखण्डपूर्णं चमसं दक्षिणार्थमिच्छन्ति । एके सोमचसमिति ॥२२॥

अश्ववत् ॥ २३ ॥

"तमुद्गात्रे ददाति, प्राकृतस्यानिवृत्तिरुद्गातृयोगात्" ( २२।२।१३-१४ ) इत्यश्वाधिकरणोक्तन्यायेनायं सोमचमसः सकलस्य दक्षिणाजातस्य निवर्तकः ॥ २३ ॥

हेत्वन्तरमप्याह—

पशूपवादाच्च ॥२४॥

"सत्यं वा ऋतपेयोऽनृतं पशवोऽनृतं कुर्याद्यदृतपेये पशून्दद्यात्" इति पशुदाननिन्दाश्रवणाच्च सोमचमस एव देयो न गवादिः ॥ २४ ॥

[ तृतीयः सप्तदशः ]

द्विनामोत्तरो बहुहिरण्यो दूणाशश्च ॥२५॥

उत्तरस्तृतीयः सप्तदशो द्विनामा क्रतुः स्यात् । बहुहिरण्य इत्येकम् । दूणाशश्चेति द्वितीयम् ॥ २५ ॥

अष्टमी कण्डिका ॥ ९ ॥

दीक्षणीयायाᳬ हिरण्यं द्वादशमानं ददाति ॥ १ ॥

द्वादशरक्तिकापरिमितं हिरण्यं दद्यात् ( तां० १८।३।२ ) । मानं रक्तिका ॥ १ ॥

उत्तरेषु च द्विगुणं पूर्वं पूर्वम् ॥ २ ॥

वक्ष्यमाणेषु प्रायणीयाऽऽतिथ्यादिषूदवसानीयान्तेषु पूर्वं पूर्वं द्विगुणं दद्यात् । दीक्षणीयापेक्षया द्विगुणं प्रायणीयायां, तद्द्विगुणमातिथ्यायामित्येवम् ॥ २ ॥

प्रायणीयाऽऽतिथ्योपसत्सु ॥ ३ ॥

पशुवपान्ते प्रतिसवनं निहितेषु सवनीयमुखेषु ॥ ४ ॥

उदयनीयायामनूबन्ध्यायामुदवसानीयायाᳬ स्रजं चोद्गात्रे ॥ ५ ॥

हिरण्मयीम् ॥५॥

रुक्मᳪ होत्रेऽनडुच्छतं काले सर्वेभ्यः ॥ ६ ॥

[ सप्तदशो वैश्यस्तोमश्चतुर्थो द्वन्द्वसोमेषु ]

वैश्य-पशुकामयोर्वैश्यस्तोमः ॥ ७ ॥

पशुकामस्य त्रैवर्णिकस्य, वैश्यस्य निष्कामस्यापि ( तां० १८।४।५ ) ॥ ७ ॥

अत्र विशेषमाह—

सवनान्याशीर्वन्ति ॥ ८ ॥

आशीःशब्देन श्रयणद्रव्यं पयो दधि चोच्यते । तद्वन्ति सर्वाणि सवनानि भवन्ति ॥८॥

प्रातःसवने प्रतिदुहा श्रयणम् ॥ ६ ॥

प्रातःसवने प्रतिदुहा = धारोष्णेन सद्योदुग्धेन पयसा सोमानां मिश्रणं कर्तव्यम्॥६॥

श्रृतेन माध्यन्दिने ॥१०॥

माध्यन्दिने सवने श्रृतेन पयसा सोमान् मिश्रयेत् ॥१०॥

तृतीयसवने दध्ना ॥११॥

सोमानां श्रयणम् ( ताण्ड्य० १८।४।२ ) ॥ ११ ॥

दक्षिणा वत्सतराः पञ्चवर्षाः पृश्नयः ॥१२॥

वत्सतर्यश्च त्रिहायण्योऽप्रवीताः पञ्चवर्णा राजीवपृश्नयो नवनीतपृश्नयोऽरुण्यः पिशङ्ग्यः सारङ्ग्य इति ॥१३॥

अप्रवीता = अकामिता वृषभेण । राजीववर्णाः = कमलवर्णाः । पिशङ्ग्यः = कपिलाः । सारङ्ग्यः = वर्णत्रयोपेताः ॥ १३ ॥

उभयस्य सहस्रं द्वादशं वा शतम् ॥१४॥

उभयस्य वत्सतरगणस्य वत्सरीगणस्य च मिलितं सहस्रं, द्वादशभिरधिकं शतं वा दद्यात् ॥ १४ ॥

[ पञ्चमः सप्तदशस्तीव्रसुद् द्वन्द्वसोमेषु ]

पञ्चमं सप्तदशमाह—

सोमातिपूतस्य तीव्रसुदुक्थ्यः ॥१५॥

सोमातिपूतः पूर्वमुक्तः । ( १६।११।२ ) तस्य तीव्रसुत्संज्ञक एकाहः पञ्चमः सप्तदश-स्तोमकः क्रतुर्भवेत् ( ८।८।२१ ) ॥ १५ ॥

अधिकार्यन्तरमाह सूत्रद्वयेन—

अपरुद्धराजन्यस्य ॥१६॥

अपरुद्धः = परराष्ट्रेण स्वराज्यात्प्रच्यावितः । स चासौ राजन्यश्च । तस्यायं क्रतुः ( तां० १८।५।५ ) ॥१६॥

दीर्घव्याधि-ग्रामकाम-प्रजाकाम-पशुकामानां वा ॥१७॥

तीव्रसुद् भवेत् ॥ १७ ॥

पूर्ववत्सोमाः ॥ १८ ॥

तीव्रसुति सर्वेषु सवनेषु सोमाः पूर्ववत् = वैश्यस्तोवत् ( २२।८।११ ) आशीर्वन्तः श्रयणवन्तः स्युः ॥ १८ ॥

इति नवमी कण्डिका ॥ ९ ॥

तत्र विशेषमाह—

धेनुशतमाशिरे दुहन्ति ॥ १ ॥

आशिरे = अयणार्थं धेनूनां शतं दुहन्ति ( तां० १८।५।१२ ) ॥ १ ॥

तदेव दक्षिणा ॥ २ ॥

तदेव धेनुशतं दक्षिणा ॥ २ ॥

अच्छावाकविग्रहेषु भक्षणम् ॥ ३ ॥

अत्र सर्वेषु सवनेषु चमसानां सोमस्य भक्षणमच्छावाकविग्रहे एव कार्यम् ॥३॥

अवघ्राणमितरेषु ॥ ४ ॥

अच्छावाकव्यतिरिक्तानां विग्रहेषु भक्षणविधिनाऽवघ्राणमेव कार्यम् ॥ ४ ॥

तेष्वेवोन्नयनमभ्यभि सोमानुन्नयन्तीति श्रुतेः ( ताण्ड्य० १८।३५।१४ ) ॥५॥

तेष्ववघ्रातेष्वेव सोमेषु उत्तरोत्तरयागार्थं सोमोन्नयनं कर्तव्यम् । कुतः ? "अभ्यभि सोमानुन्नयन्ति" इति श्रुतेः । यांश्चमसानवजिघ्रेयुस्तानपरित्यज्यैव तेषामुपर्युत्तरोत्तर-यागेभ्यः सोमानुन्नयेयुः । अवघ्रातोऽपि भक्षित एवेति मत्वा न त्याज्य इत्यर्थः ( लाट्या० ८।१०।१२ ) ॥ ५ ॥

अध्वर्यू चमसाध्वर्यवश्च सर्वे प्रतिगृणन्त्यच्छावाकाय ॥ ६ ॥

अध्वर्यू = अध्वर्युप्रतिप्रस्थातारौ ॥ ६ ॥

द्वन्द्वसोमानाह—

[ द्वन्द्वसोमेषु प्रथमो राट्संज्ञः ]

द्वन्द्वानां प्रथमो राड् राजन्यस्य राज्यकामस्य ॥ ७ ॥

द्वन्द्वसोमानां मध्ये यः प्रथमो राट्संज्ञोऽग्निष्टोमसंस्थः स राजपुत्रस्य स्यात् (ताण्ड्य० १६।१।१) ॥ ७ ॥

यथाशक्त्येकविंशतिवर्गान्दद्यात् ॥ ८ ॥

अत्र एकविंशतिसंख्याभिर्गोभिरेको वर्गः । एवंविधान् वर्गान् त्रिप्रभृति यथाशक्ति दद्यात् ॥ ८ ॥

[ प्रथमस्य राट्संज्ञस्यादावन्ते चैन्द्रः पशुः ]

ऋषभ ऐन्द्रः परियज्ञः ॥ ९ ॥

अस्य राट्संज्ञस्य यज्ञस्य इन्द्रदेवत्य ऋषभः पशुर्भवति । अयं च यज्ञारम्भात्पूर्वं यज्ञसमाप्त्यनन्तरं च भवति । परिशब्दसामर्थ्यात् । अत एवास्य परियज्ञ इति संज्ञा ॥ ९ ॥

[ द्वन्द्वसोमेषु द्वितीयो विराडेकाहः ]

अन्नाद्यकामस्य विराट् ॥ १० ॥

विराडाख्यो द्वन्द्व एकाहोऽग्निष्टोमसंस्थः । सोऽन्नाद्यकामस्य (तां० १६।२।१) ॥ १० ॥

यथाशक्ति दशवर्गान्दद्यात् ॥ ११ ॥

दशभिर्गोभिरेको वर्गः । त्रिप्रभृति यथाशक्ति गवां दशवर्गान्दद्यात् ॥ ११ ॥

[ द्वितीयस्य विराज आद्यन्तयोराग्नेयः पशुः ]

**पशुराग्नेयः परियज्ञः ॥ १२ ॥**

आग्नेयः पशुः परियज्ञो भवति। पूर्वस्मिन्यजनीयेऽहन्युपरिष्टादनन्तरं यजनीये च ॥१२॥

[ उपशदस्तृतीय एकाहो द्वन्द्वसोमेषु । तस्योभयतो वैश्वदेवः पशुः ]

**प्रजातिकामस्यौपशदः ॥ १३ ॥**

उपशदो नामैकाहोऽग्निष्टोमसंस्थः प्रजाकामस्य स्यात् ( ताण्ड्य० १९।३१ लाट्या० ९।४।३ ) ॥ १३ ॥

**दक्षिणा चतुर्विंशं शतम् ॥१४॥**

चतुर्विंशत्या अधिकं गवां शतमौपशदे दक्षिणा ॥१४॥

**पशुर्वैश्वदेवः परियज्ञः ॥१५॥**

अस्यौपशदस्यादावन्ते च वैश्वदेवः पशुः परियज्ञः स्यात् ॥१५॥

[ पुनस्तोमश्चतुर्थ एकाहो द्वन्द्वसोमेषु ]

**बहु प्रतिगृह्य गरगीरिव यो मन्येत तस्य पुनस्तोम उक्थ्यः ॥१६॥**

बहुप्रतिग्रहजनितप्रत्यवायरूपेण गरेण विषेणात्मानं गलितमिव यो मन्यते तस्य ( तां० १९।४।१ ) ॥१६॥

**दक्षिणा द्वादशमिथुना पुनर्वतां च यथाशक्ति ॥१७॥**

द्वादश गावो द्वादश साण्डा ऋषभाश्च दक्षिणा। तथा पुनःशब्दवतां वसूनां च यथाशक्ति दद्यात्। "पुनः संस्कृतो रथः" ( ४।६।१९ ) "पुनरुत्सृष्टो गौः" "पुनरुत्स्यूतं वास" इत्यादि यावद्दातुं शक्यते तावन्ति देयानि ॥१७॥

[ चतुष्टोमयज्ञः ]

**पशुकामयज्ञौ चतुष्टोमौ ॥१८॥**

चतुष्टोमसंज्ञौ द्वौ यज्ञौ पशुकामस्य भवतः ( तां० १९।५।१ ) ॥१८॥

**षोडश्युत्तरः ॥१९॥**

तयोर्मध्ये द्वितीयः षोडशिसंस्थः, प्रथमोऽग्निष्टोमसंस्थः ॥१९॥

**पूर्वस्मिन्यथाशक्त्येकशफान्दद्यादुभयानुत्तरस्मिन् ॥२०॥**

पूर्वस्मिन् चतुष्टोमे एकखुरान् = अश्वाश्वतरगर्दभादीन्दद्यात्। द्वितीये चतुष्टोमे उभयानेकखुराननेकखुरांश्च दद्यात् ॥२०॥

[ उद्भिद्बलभिदावेकाहौ ]

**उद्भिद्बलभिदौ चाहरतः संयुक्तौ ॥२१॥**

इमौ चैकाहौ पशुकामयज्ञौ संयुक्तौ दर्शपूर्णमासवत्संहतावेव फलमाहरतः ( तां० १९।७ ) ॥२१॥

**पूर्वेणेष्ट्वोत्तरेणावश्यम् ॥२२॥**

पूर्वेणोद्भिदा इष्ट्वा उत्तरेण बलभिदाऽवश्यं यष्टव्यम् ॥२२॥

[ उद्भिद्बलभिदोर्मध्यत इषुरिष्टेरनुष्ठानम् ]

इषुरिष्टिरन्तरेणैनावाग्नेयः पुरोडाशः ॥२३॥

एनावुद्भिद्बलभिदावन्तरेण = अनयोर्मध्ये इषुरिष्टिसंज्ञका इष्टिर्भवति । तस्यामिष्टावाग्नेयः पुरोडाशः कर्तव्यः ॥२३॥

उद्वृढः प्रस्तरः ॥२४॥

अस्यामिष्टौ प्रस्तर उद्वृढो = बर्हिर्भारादग्रमार्गेण निष्काशितो भवति । न प्रकृतिवन्मूलभागेन प्रस्तरस्याग्रं गृहीत्वोर्ध्वं निष्काशयत इत्यर्थः । वृहू निष्कर्षे ॥२४॥

बाणवन्तः परिधयः ॥२५॥

वाणवच्छब्द इषौ दृष्टः (१४।६।८।२) । बाणवन्तस्तीक्ष्णाः शरा एव परिधयः स्युः ॥२५॥

अर्धमासं मासठं० संवत्सरं वा ॥ २६ ॥

उद्भिदा इष्ट्वा तत एव दिनादारभ्यार्धमासादिपक्षेण प्रत्यहमियमिष्टिः कर्तव्या ॥२६॥

दक्षिणा गायत्री चतुर्विंठं०शतिवर्गो यथाशक्ति ॥ २७ ॥

अनयोरुद्भिद्बलभिदोः पृथक् पृथक् गायत्री दक्षिणा स्यात् । गायत्रीशब्दार्थं स्वयमेवाह—चतुर्विंशत्या गोभिरेको वर्गः । एवंविधा वर्गा यावन्तो दातुं शक्यन्ते तावन्तो देयाः ॥२७॥

[ अपचिती एकाहौ द्वन्द्वसोमेषु ]

अपचितिकामस्यापचिती ॥ २८ ॥

अपचितिसंज्ञौ द्वावेकाहावग्निष्टोमसंस्थौ लोकैः सम्मानकामस्य स्याताम् ( तां० १६।८-६ ) ॥ २८ ॥

राजयज्ञावित्येके ॥ २६ ॥

एके त्रैवर्णिकस्यापि ॥ २६ ॥

दक्षिणाऽश्वरथश्चतुर्युगुभयतः ॥ ३० ॥

अनयोरपचित्योश्चतुर्भिरश्वैर्युक्तो रथो दक्षिणा एकैकस्य ॥ ३० ॥

उभयतः काठं०स्यकवचः ॥ ३१ ॥

स पूर्वोक्तो रथः पार्श्वद्वये कांस्यधातुनिर्मितं कवचं यस्य तादृशो भवेत् । एकैकस्य रथस्योभयतः कांस्ये कवचे स्यातामित्यर्थः ॥ ३१ ॥

शताह्र्ग अश्वाः ॥ ३२ ॥

तस्य रथस्याश्वाः प्रत्येकं गोशतेन गोशतेन मूल्यभूतेन क्रीता भवेयुः ॥ ३२ ॥

[ अग्नेस्तोमौ द्वावेकाहौ द्वन्द्वसोमेषु ]

साग्निचित्यावग्नेस्तोमौ सर्वजिद्दीक्षौ ॥ ३३ ॥

अग्नेस्तोमसंज्ञौ द्वन्द्वसोमौ अग्निष्टोमसंस्थौ एकाहौ साग्निचित्यौ सर्वजिद्दीक्षौ भवतः । "सर्वजित् समहाव्रतः संवत्सरदीक्षः सप्ताहाभिषवस्तिस्र उपसदः षड् वाऽग्निवद्दीक्षाः" ( २२।१।४४ ) इत्युक्तम् । तद्वदत्रापि दीक्षा भवन्तीत्यर्थः ॥ ३३ ॥

पूर्वः पक्ष्युत्तरो ज्योतिः ॥ ३४ ॥

तयोरग्नेस्तोमयोर्मध्ये पूर्वोऽग्नेस्तोमः पक्षीतिसंज्ञ; द्वितीयोऽग्नेस्तोमो ज्योतिरिति नामकः ( ता० १६ । १०-११ ) ॥ ३४ ॥

इति द्वाविंशे दशमी कण्डिका ॥ १० ॥

[ पक्षिस्तोमज्योतिःस्तोमयोर्दक्षिणा ]

**धान्याचितानि चत्वारि चत्वारि दक्षिणा ॥ १ ॥**

अनयोस्तोमयोर्धान्यैः पूरितानि चत्वारि चत्वार्यनांसि दक्षिणा ॥ १ ॥

**पूर्वस्य षड्गवान्युत्तरस्य चतुर्गवाणि ॥ २ ॥**

षड्भिरनड्वुद्भिर्युक्तानि अनांसि पूर्वस्य पक्षिणो दक्षिणा । उत्तरस्य ज्योतिषश्चतुर्भिर्बलीवर्दैर्युक्तानि ॥ २ ॥

[ ऋषभ-गोसवावेकाहौ द्वन्द्वसोमेषु ]

**ऋषभ-गोसवौ ॥ ३ ॥**

द्वन्द्वसामौ भवतः ( ता० १९ । १२-१३ ) ॥ ३ ॥

**पूर्वो राज्ञः ॥ ४ ॥**

पूर्व ऋषभसंज्ञकोऽग्निष्टोमसंस्थो राज्ञः स्यात् ॥ ४ ॥

[ ऋषभ-गोसवयोर्दक्षिणा ]

**दक्षिणाऽ ऋषभसहस्रं द्वादशं वा शतम् ॥५॥**

ऋषभाणां सहस्रं द्वादशाधिकं शतं वा पूर्वस्य दक्षिणा ॥ ५ ॥

**उक्थ्यो गोसवोऽयुतदक्षिणः ॥६॥**

**वैश्ययज्ञ इत्येके ॥७॥**

**सराजानो विशो यं पुरस्कुर्वीरन् स एतेन यजेत ॥८॥**

गोसवेन ॥८॥

**स्थण्डिलेऽभिषिच्यते प्रतिदुहाऽऽहवनीयस्य दक्षिणतः ॥९॥**

प्रतिदुहा = धारोष्णेन दुग्धेन ॥९॥

**स्थपतिरित्येनं ब्रूयुः ॥१०॥**

एनं गोसवयाजिनं जनाः ॥१०॥

[ मरुत्स्तोमयज्ञे गणयज्ञ एकाहः ]

**वैश्यस्तोमदक्षिणालिङ्गो मरुत्स्तोमो गणयज्ञो भ्रातॄणाꣳ सखीनां वा ॥११॥**

वैश्यस्तोमस्येव दक्षिणालिङ्गानि यस्य सः । वैश्यस्तोमदक्षिणायां यानि लिङ्गान्युक्तानि "दक्षिणा वत्सतराः पञ्चवर्षा" ( २२।९।१२ ) इत्यादीनि, तान्यत्रापि भवन्तीर्थः । तादृशो मरुत्स्तोमसंज्ञोऽग्निष्टोमसंस्थो भ्रातॄणां सखीनां वा गणयज्ञो भवति ( तां० १९।१४ )। अत्र बहुयजमानकाहीनद्वादशाहवदूहाः, कर्मापि च तद्वदेवेति ॥११॥

[ ऐन्द्राग्नकुलायथज्ञ एकाहः ]

**प्रजाकाम-पशुकामयोरैन्द्राग्नकुलायः कुलदक्षिणो द्वियज्ञो भ्रात्रोः सख्योर्वा ॥१२॥**

द्वयोर्भ्रात्रोर्द्वयोः सख्योर्वा प्रजाकामयोः पशुकामयोश्च ऐन्द्राग्नकुलायनामाऽग्निष्टोमसंस्थ एकाहो भवति (तां० १९।१५, लाट्या० ९।४।२५) । गोकुलानि चास्य दक्षिणा भवति ॥१२॥

[ इन्द्रस्तोम एकाहः ]

**इन्द्रस्तोमो राजयज्ञः सहस्रदक्षिणोक्थ्यः ॥१३॥**

[ इन्द्राग्न्योस्तोम एकाहः ]

**पुरोधाकामस्येन्द्राग्न्योस्तोमः ॥१४॥**

**राजपुरोहितयोर्वा सह यजमानयोः ॥१५॥**

"राजा च पुरोहितश्च यजेयाताम्" ( ताण्ड्य० १६।१७ ) इति श्रुतेः । अत्र न्यग्रोधचमसो राज्ञः पृथक्कर्तव्यः ( तां० १६।१८ ) । द्वियजमानकाहीनवत्सर्वमत्र ज्ञेयम् ॥१५॥

**पृथग्वा ॥१६॥**

सह वेति विकल्पः ॥१६॥

**दक्षिणा गायत्रीसम्पन्ना ब्राह्मणस्य ॥ १७ ॥**

ब्राह्मणस्य पुरोहितस्य इन्द्राग्न्योस्तोमे गायत्र्यक्षरसमानसङ्ख्याश्चतुर्विंशतिर्गावो दक्षिणा ॥ १७ ॥

**जगत्या राज्ञः ॥ १८ ॥**

राज्ञ इन्द्राग्न्योस्तोमे जगत्यक्षरसमानसङ्ख्या अष्टाचत्वारिंशद्गावो दक्षिणाः ॥ १८ ॥

[ विघनावेकाहौ द्वन्द्वसोमेषु ]

**विघनौ पशुकामस्य ॥ १९ ॥**

विघनौ नाम एकाहौ अग्निष्टोमसंस्थौ द्वन्द्वसोमौ स्याताम् (तां० १९।१८-१९) ॥ १९ ॥

**अभिचरतो वा ॥ २० ॥**

तौ भवतः ॥ २० ॥

**बृहतीसम्पन्नाः पशुकामस्य ॥ २१ ॥**

षट्त्रिंशद्गावो दक्षिणा विघनयोर्भवन्ति ॥ २१ ॥

**अभिचरतः प्रज्ञाताः ॥ २२ ॥**

अभिचरतो यजमानस्य विघनयोः प्रज्ञाताः = प्राकृता दक्षिणा भवन्ति ॥ २२ ॥

[ सन्दंशवज्रावेकाहौ द्वन्द्वसोमेषु ]

**सन्दंश-वज्रावभिचरतः ॥ २३ ॥**

द्वन्द्वसोमौ ॥ २३ ॥

**षोडशी वज्रः ॥ २४ ॥**

षोडशिसंस्थो वज्रः, सन्दंशोऽग्निष्टोमसंस्थः ॥ २४ ॥

**शुण्ठाक्षी लोहाकर्णी षोडशिनः सोमक्रयणी ॥ २५ ॥**

शुण्ठाक्षी = पीतमुखी वेष्टितमुखी वा पीतपुच्छी वा । लोहाकर्णी = लोहितकर्णी षोडशिनो यज्ञस्य सोमक्रयणी गौर्भवति ॥ २५ ॥

**अहर्गणेऽप्यविशेषात् ॥२६॥**

यस्मिन्नहर्गणे षोडशिसंस्थः, तस्मिन्नपि शुण्ठाक्षी लोहकर्णी सोमक्रयणी गौर्भवति । कुतः ? अविशेषात् = अहर्गणतोऽपि षोडशी षोडश्येवेति ॥ २६ ॥

प्रसङ्गादाह—

**विश्वजित्परिवासाश्च ॥२७॥**

अहर्गणगतेऽपि विश्वजिति विश्वजित्परिवासा भवन्ति, "द्वादशरात्रं परिवसन्तीत्यादयः ( २२।१।२१ ) ॥ २७ ॥

**न वा स्वसम्बन्धात् ॥२८॥**

नेवाहर्गणे विश्वजित्परिवासा भवन्ति । कुतः ? स्वसंबन्धात् = सर्वस्वदाने तेषां संबन्धात् । अतः सर्वस्वदानाभावेऽहर्गणे परिवासा न भवन्तीति ॥ २८ ॥

**एकराजमेव पूर्वेणाऽभिचरेत् ॥२९॥**

पूर्वेण सन्दंशेन राजानमेव एकमभिचरेत् , न जनपदम् ॥ २९ ॥

**जनपदं वज्रेण ॥३०॥**

वज्रसंज्ञकेन जनपदमभिचरेत् ॥ ३० ॥

**व्यत्यासं वैनौ प्रयुञ्जीत ॥ ३१ ॥**

वज्रेण राजानं, जनपदं च सन्दंशेनाभिचरेत् ॥ ३१ ॥

**शमित्वा स्तृत्वा वा ज्योतिष्टोमेन यजेत शान्त्यर्थेन शान्त्यर्थेन ॥३२॥**

शमित्वा मारणादुपरम्य, स्तृत्वा = मारयित्वा वा ज्योतिष्टोमेन यजेत ॥ ३२ ॥

इत्येकादशी कण्डिका ॥ ११ ॥

इति महामहोपाध्यायश्रीश्रीप्रभुदत्तशास्त्रिसूनु-विद्याधरशर्मकृतायां सरलाख्यायां वृत्तौ एकाहनिरूपणात्मको द्वाविंशतितमोऽध्यायः ।

# त्रयोविंशोऽध्यायः ।

## अहीननिरूपणम् ।

[अहीनानां द्वादशोपसत्कत्वं मासापवर्गता च]

**द्वादशोपसत्का अहीना मासापवर्गाः ॥१॥**

अहीनसंज्ञकाः क्रतवो द्वादशोपसत्काः पौर्णमासीदीक्षा (लाट्या० ९।५।१) मासापवर्गाश्च भवन्ति ॥१॥

**दीक्षाः सुत्योपसच्छेषेण ॥२॥**

मासापवर्गा अहीना इत्युक्तम् । तत्र त्रिंशद्दिनमध्ये सौत्यान्यहानि द्व्यादीनि गणयित्वा द्वादशोपसदश्च परिगणय्य शेषाः = तदुभयसङ्ख्यातोऽवशिष्टा मासदिवसा दीक्षा भवन्ति । तेन द्व्यहेषु षोडश दीक्षाः, त्र्यहेषु पञ्चदश, चतुरहेषु चतुर्दश, पञ्चाहेषु त्रयोदश, षडहेषु द्वादश, सप्ताहेष्वेकादश, अष्टाहे दश, नवरात्रयोर्नव, दशरात्रेऽष्टौ, एकादशरात्रे सप्तेति ॥२॥

**द्व्यहप्रभृतयो द्वादशाहपर्यन्ताः ॥३॥**

इहाध्याये वक्ष्यमाणाः क्रतवोऽहीना इत्युच्यन्ते । ते च द्व्यहप्रभृतयो द्वादशाहपर्यन्ताः स्युः ॥३॥

**तत्राम्नानादतिरात्रांश्चैके ॥४॥**

तेषामहीनानां मध्ये आम्नानात् = पठनात् वक्ष्यमाणान् अतिरात्रान् = नवसप्तदशादीन् (२३।१।१२) त्रयोदशसङ्ख्याकानेकेऽहीनधर्मकानिच्छन्ति । अपरे एकाहधर्मकान् । एकाहधर्मका एवेति कर्कादयः ॥४॥

**दाशरात्रिकाण्यहानि द्व्यहादिष्वेकोचयेन तद्गुणदर्शनात् ॥५॥**

द्व्यहादिष्वहीनेषु एकोच्चयेन = एकैकाहर्वृद्ध्या द्व्यहेष्वेकम्, त्र्यहेषु द्वे, चतुरहे त्रीणि, इत्येवं दाशरात्रिकाणि = द्वादशाहिकदशरात्रसंबन्धीन्यहानि भवन्ति । कुतः ! तद्गुणदर्शनात् = दाशरात्रिकाहर्गुणानां द्व्यहादिषु शाखान्तरे दर्शनात् ॥५॥

**सहस्रदक्षिणाः ॥ ६ ॥**

सर्वेष्वहीनेषु ॥ ६ ॥

**चतूरात्रादिष्वधिकम् ॥७॥**

चतूरात्रादिषु गवां सहस्रं किंचिदधिकं देयम् ॥७॥

**प्राकृतं वा प्रत्यहम् ॥८॥**

दक्षिणादानम् । अतो विकल्पः ॥ ८ ॥

**पौण्डरीकेऽयुतम् ॥९॥**

एकादशसुत्याके दक्षिणा ॥९॥

[ अहीनेषु दक्षिणानां समविभागेन प्रत्यहं दानम् ]

समविभक्ताः प्रत्यहं ददाति ॥१०॥

प्रत्यहं समविभागेन दक्षिणादानम् । तेन द्व्यहेषु प्रतिदिनं पञ्च पञ्च शतानि, त्र्यहे प्रत्यहं त्रीणि त्रीणि शतानि त्रयस्त्रिंशदधिकानि दद्यात् । चतूरात्रादिष्वन्येवमूह्यम् ॥१०॥

अन्त्येऽहन्यधिकाः ॥११॥

समविभागे क्रियमाणे या अधिका अवशिष्यन्ते ता अन्त्येऽहनि देयाः ॥११॥

[ अतिरात्रा एकाहास्त्रयोदश ]

त्रयोदशातिरात्राः ॥१२॥

वक्ष्यन्ते । एतेऽपि मासापवर्गाः सहस्रदक्षिणाः ॥ १२ ॥

चत्वारोऽषोडशिकाः प्रथमाः ॥१३॥

तेषां मध्ये आद्याश्चत्वारः षोडशिग्रहवर्जिताः कार्याः ॥१३॥

[ प्रथमोऽतिरात्रः ]

तत्र प्रथममतिरात्रमाह—

प्रजातिकामस्य नवसप्तदशः ॥१४॥

प्रजाकामस्य नवसप्तदशसंज्ञकोऽतिरात्रोऽषोडशिकः स्यात् ( ता० २०।३ ) ॥१४॥

[ द्वितीयोऽतिरात्रः ]

ज्येष्ठस्य ज्यैष्ठिनेयस्य विषुवान् ॥१५॥

यस्या योषितो ज्येष्ठो भ्राता विद्यते सा ज्येष्ठिनी । तस्याः पुत्रो ज्यैष्ठिनेयः । तादृशो यः पुमान् भ्रातॄणां मध्ये ज्येष्ठस्तस्य विषुवान्नामाऽषोडशिकोऽतिरात्रः स्यात् ॥१५॥

[ तृतीयोऽतिरात्रः ]

गौर्भ्रातृव्यवतः ॥१६॥

शत्रुमतो गौरतिरात्रोऽषोडशिकः स्यात् ( ता० २०।६ ) ॥१६॥

[ चतुर्थोऽतिरात्रः ]

स्वर्गकामस्यायुरामयाविनो वा ॥१७॥

आयुर्नामकोऽतिरात्रोऽषोडशिकः ( ता० २०।७ ) ॥१७॥

[ षडतिरात्राः ]

ज्योतिष्टोम-विश्वजित्त्रिवृत्पञ्चदश-सप्तदशैकविंशा यथासङ्ख्यमृद्धि-पशु-ब्रह्मवर्चस-वीर्यान्नाद्य-प्रतिष्ठाकामानाम् ॥१८॥

षडतिरात्राः क्रमेण भवन्ति ( ता० २०।१० ) ॥१८॥

[ एकादशोऽतिरात्रः ]

अप्तोर्यामः प्रप्रेव यस्मात्पशवो भ्रंशेरन् ॥१९॥

यस्माद्यजमानात् पशवः प्रप्रेव प्राप्ता इव भ्रंशेरन् तस्याप्तोर्यामः ( ता० २०।३ ) ॥१९॥

[ द्वादशोऽतिरात्रः ]

अभिजिद् भ्रातृव्यवतः ॥२०॥

[ त्रयोदशोऽतिरात्रः ]

सर्वस्तोमो बुभूषतः ॥२१॥

भूतिमिच्छतोऽतिरात्रः ॥२१॥

यूपैकादशिनी चास्मिन् ॥२२॥

सर्वस्तोमे ॥ २२ ॥

( इति त्रयोदशातिरात्राः । अथाहीनाः )

इति प्रथमा कण्डिका ॥ २२ ॥

[ द्विसुत्याका अहीनास्त्रयः ]

द्व्यहास्त्रयः ॥१॥

द्विसुत्यास्त्रयोऽहीनाः सहस्रदक्षिणा वक्ष्यमाणाः स्युः । चैत्रशुक्लपूर्णिमायामेषामारम्भः ( ता० २०।११।१२ ) ॥ १ ॥

अषोडशिकावतिरात्रा उत्तरयोः ॥२॥

उत्तरयोर्द्विरात्रयोः षोडशिग्रहवर्जितौ द्वावतिरात्रौ भवतः ॥ २ ॥

आङ्गिरस-चैत्ररथ कापिवनाः ॥३॥

पूर्वोक्ता द्व्यहा एतन्नामानो भवन्ति ॥ ३ ॥

द्वितीयमुक्थ्यपूर्वमेके ॥४॥

द्वितीयं द्व्यहं चैत्ररथमेके उक्थ्यपूर्वं कुर्वन्ति, अपरेऽग्निष्टोमपूर्वम् ॥ ४ ॥

प्रथमेन यजेत यः पौण्यो हीन इव स्यात् ॥५॥

यः पुण्यार्हः सन् पुण्यैर्न युज्यते स प्रथमेनाङ्गिरसद्व्यहेन यजेत ( ता० २०।११।४ ) ॥ ५ ॥

द्वितीयेन प्रजाकामः ॥६॥

तृतीयेन स्वर्गकामः पशुकामो वा ॥७॥

[ त्रिसुत्याकाः पञ्चाहीनाः ]

त्र्यहाः पञ्च गर्ग-बैद-च्छन्दोमान्तर्वसु-पराकाः ॥८॥

त्र्यहाः = त्रिसुत्या अहीनाः पञ्च गर्गादिनामानः स्युः ( ताण्ड्य० २०।१४—१६, २११।१—८ ) ॥ ८ ॥

द्वितीये त्रिवृतोऽतिरात्राः सर्वे राज्यकामस्य ॥९॥

द्वितीये बैदत्रिरात्रे सर्वे = त्रयोऽपि सौत्याः क्रतवोऽतिरात्रसंस्थाः स्युः ( लाट्या० ९।७ ) । राज्यकामस्यायं बैदत्रिरात्रः ॥ ९ ॥

अन्तर्वसुः पशुकामस्य ॥ १० ॥

पराकः स्वर्गकामस्य ॥११॥

[ चतुःसुत्याश्चत्वारोऽहीनाः ]

**चतुरहाश्चतुरोऽत्रिचतुर्वीर-जामदग्न-वसिष्ठसर्ठं॰सर्प-विश्वामित्राः ॥११॥**

चत्वारोऽहीनाश्चतुःसुत्याका भवन्त्यत्रिचतुर्वीरादिसंज्ञकाः (२१।८-१२) ॥ ११ ॥

**जामदग्नो विर्ठं॰शतिदीक्षः पुष्टिकामस्य ॥ १२ ॥**

अत्र विंशतिर्दीक्षाः द्वादशोपसदश्चतस्रः सुत्या भवन्ति । इतरेषु द्वादश दीक्षा इति ॥ १२ ॥

**उपसदः पुरोडाशिन्यः ॥ १३ ॥**

जामदग्नचतूरात्रे उपसदः पुरोडाशवत्यः कार्याः ॥ १३ ॥

**अनूपसदं जुहोति ॥ १४ ॥**

या तेऽ अग्नेऽयःशयेत्यादिका उपसदो हुत्वा प्रत्युपसदं पुरोडाशान् जुहुयात् ॥१४॥

[ पुरोडाशानामौषधधर्मवत्वम् ]

अत्राज्यधर्मा उत पुरोडाशधर्मा इति संशये सूत्रेणैव पूर्वपक्षः—

**आज्यधर्माः स्थानापत्तेः ॥ १५ ॥**

एते पुरोडाशा आज्यधर्मा भवन्ति । कुतः ? स्थानापत्तेः । प्रकृतौ ह्याज्यमुपसद्याग द्रव्यम् । अत्र हि पुरोडाशास्तत्स्थाने विधीयन्ते । अतः पुरोडाशानामाज्यस्थानापन्नत्वादाज्य धर्मा भवन्ति ॥ १५ ॥

सिद्धान्तयति—

**औषधधर्मा वा द्रव्यसामान्यात् ॥ १६ ॥**

वाऽवधारणे । एते पुरोडाशा औषधधर्मा एव, नाज्यधर्माः । कुतः ? द्रव्यसामान्यात् । पुरोडाशानां पुरोडाशेनैव सादृश्यं यतः । कार्यापत्तौ हि धर्मप्राप्तिर्युक्ता । न चेह कार्यापत्तिः ॥ १६ ॥

**अनुहोमाश्च पुरोडाशाः ॥ १७ ॥**

चो हेतौ । यत एते पुरोडाशा अनुहोमाः, ( उपसद्यागमनु होमो येषां तेऽनुहोमाः )। अतोऽत्राज्यस्थानापत्तिरेव नास्ति ॥ १७ ॥

**प्रत्युपसदमेकोचयेन कपालान्येककपालप्रभृतीनामाग्नेयाश्विन-वैष्णव-सौम्य-सावित्र-धात्र-मारुत-बार्हस्पत्य-मैत्र-वारुणैन्द्र-वैश्वदेवाः ॥ १८ ॥**

अत्र द्वादशोपसदः सन्ति । तेन एककपालप्रभृतीनां द्वादशानां पुरोडाशानां प्रत्युपसदमेकैककपालवृद्ध्या द्वादश कपालानि भवन्ति । प्रत्युपसदमेकैकः पुरोडाश इति पुरोडाशाश्च द्वादश । अतश्च प्रथमायामुपसद्येककपालः, द्वितीयायामुपसदि द्विकपालः, तृतीयायां त्रिकपाल इत्येवं प्रत्युपसद् पुरोडाशानामेकैकवृद्ध्या कपालानि भवन्तीत्यर्थः । ते च द्वादश पुरोडाशाः क्रमेण आग्नेयाश्विनवैष्णवेत्यादिद्वादशदेवताका भवन्ति । अत्र पूर्वाह्णाप राह्णयोः समानदेवतो पुरोडाशो भवतः । पूर्वाह्णोपसदि यः पुरोडाशः स एवापराह्णे कार्य इत्यर्थः ॥ १८ ॥

इति त्रयोविंशे द्वितीया कण्डिका ॥ २ ॥



[ पुरोडाशहोमः ]

तेषाᳬं होमोऽग्ने वेर्होत्रं वेरध्वरमा पितरं वैश्वानरमवसे करिन्द्राय देवेभ्यो जुहुता हविः स्वाहा, देवावश्विनौ मधु कशयाऽद्येमं यज्ञं यजमानाय मिमिक्षतमिन्द्राय देवेभ्यो जुहुता हविः स्वाहा, देव विष्णऽ उर्वद्यास्मिन्यज्ञे यजमानायाधि विक्रमस्वेन्द्राय देवेभ्यो जुहुता हविः स्वाहा, देव सोम रेतोधा अद्यास्मिन्यज्ञे यजमानायैधीन्द्राय देवेभ्यो जुहुता हविः स्वाहा, देव सवितः सुसावित्रमद्यास्मिन्यज्ञे यजमानाया सुवस्वेन्द्राय देवेभ्यो जुहुता हविः स्वाहा, देव धातः सुधाताद्यास्मिन्यज्ञे यजमानायैधीन्द्राय देवेभ्यो जुहुता हविः स्वाहा, देव ग्रावाणो मधुमतीमद्यास्मिन्यज्ञे यजमानाय वाचं वदतेन्द्राय देवेभ्यो जुहुता हविः स्वाहा, देव्यनुमतेऽन्वद्येमं यज्ञं यजमानाय मन्यस्वेन्द्राय देवेभ्यो जुहुता हविः स्वाहा, देव्यदिते स्वादित्यमद्यास्मिन्यज्ञे यजमानाया-सुवस्वेन्द्राय देवेभ्यो जुहुता हविः स्वाहा, देव्य आपो नंनम्यध्वमद्यास्मिन्यज्ञे यजमानायेन्द्राय देवेभ्यो जुहुता हविः स्वाहा, सदः सदः प्रजावानृभुर्जुषाण इन्द्राय देवेभ्यो जुहुता हविः स्वाहा, देव त्वष्टः सुरेतोधा अद्यास्मिन्यज्ञे यजमानायैधीन्द्राय देवेभ्यो जुहुता हविः स्वाहेति ॥ १ ॥

तेषामाग्नेयप्रभृतीनां द्वादशानां पुरोडाशानां होम एभिर्मन्त्रैः कार्यः ( ताण्ड्य० २१।१० ) ॥ १ ॥

एतैः सुत्यान्ते द्वादशाहं यजते प्रतिलोममेकैकेन ॥ २ ॥

एतैः = एतद्धर्मकैः पुरोडाशैः सुत्यानामन्ते = यज्ञसमाप्तौ समाप्तिदिवसादारभ्य प्रतिदिनं वैश्वदेवादारभ्य व्युत्क्रमेणाग्नेयपर्यन्तं सायं प्रातश्च द्वादशाहं = द्वादशस्वहःसु एकैकेन हविषा यजते = उद्धरणादिकर्मापवर्गान्तामेकैकामिष्टिं कुर्यादित्यर्थः। प्रथमेऽहनि वैश्वदेवो द्वादशकपालः सायं प्रातश्च। द्वितीयेऽहन्यैन्द्र एकादशकपाल इत्यादि ॥ २ ॥

इति त्रयोविंशेऽध्याये तृतीया कण्डिका ॥ ३ ॥



[ पञ्चसुत्यास्त्रयोऽहीनाः ]

पञ्चाहास्त्रयः ॥ १ ॥

त्रयोऽहीनाः पञ्चसुत्या द्वादशोपत्सत्का द्वादशदीक्षाका भवन्ति वक्ष्यमाणाः ( तां० २१।१३–१६ ) ॥ १ ॥

देवानां प्रथमः ॥ २ ॥

तत्र प्रथमः पञ्चाहो देवानां सम्बन्धी, देवपञ्चाहसंज्ञ इत्यर्थः ॥ २ ॥

द्वितीयः पञ्चशारदीयः ॥ ३ ॥

इतीयं संज्ञा ॥ ३ ॥

**तेन यक्ष्यमाणः पञ्च वर्षाण्याश्वयुजीशुक्लेषु चतुस्त्रिंशतं पशूनालभते मारुतान् वैश्यस्तोमदक्षिणालिङ्गान् ॥ ४ ॥**

तेन पञ्चशारदीयेन यक्ष्यमाणः पञ्चशारदीयारंभात्प्राक् पञ्च वर्षाणि आश्वयुजी पौर्णमासीसंबन्धिषु शुक्लपक्षेषु = आश्विनशुक्लपक्षेषु सप्तम्यामष्टम्यां वा चतुस्त्रिंशन्मरुद्देवताकान्पशूनालभते । तांश्च वैश्यस्तोमदक्षिणायां यानि लिङ्गानि तादृशदक्षिणाकान् कुर्यात् । तानि च लिङ्गानि "दक्षिणा वत्सतराः पञ्चवर्षाः पृश्नय" ( २२।६।१२-१३ इत्यादीनि पूर्वोक्तानि ॥ ४ ॥

**उक्ष्णो वत्सतरीर्वर्णानुपूर्व्येण ॥ ५ ॥**

"दक्षिणा वत्सतराः" ( २२।६।१२ ) इत्यादिना पञ्चवर्णा वत्सतर्य उक्ताः । तत्र प्रतिवर्षम् उक्ष्णो = वृषभान् वत्सरीश्च वर्णानुपूर्व्येण वर्णक्रमेणालभेत । अर्थात् राजीवपृश्नयः प्रथमे वर्षे, नवनीतपृश्नयो द्वितीये वर्षे, अरुणरागास्तृतीये वर्षे, पिशङ्ग्यश्चतुर्थे वर्षे, सारङ्ग्यः पञ्चमे इति वर्णानुपूर्व्येणेत्यस्यार्थः ॥ ५ ॥

**अर्द्धा वत्सतर्यः ॥ ६ ॥**

तेषां चतुस्त्रिंशत्सङ्ख्याकानां पशूनां मध्ये अर्द्धा वत्सर्यो भवन्ति, अर्द्धा उक्षाणः । अतः सप्तदशोक्षाणः । ( ते च प्रतिवर्षं त एव, अग्रे उत्सर्जनविधानात् ) । सप्तदश वत्सतर्यः, प्रतिवर्षमन्या अन्याः ॥ ६ ॥

**पर्यग्निकृतानुत्सृजन्त्युक्ष्णः ॥ ७ ॥**

**वत्सतरीभिः सꣳस्थापयन्ति ॥ ८ ॥**

आरब्धं कर्म समापयन्ति ॥ ८ ॥

**एवं पञ्च वर्षाण्युक्ष्णो नियुञ्जन्ति ॥ ९ ॥**

एवमुक्तेन प्रकारेण पञ्च वर्षाणि उक्ष्णो नियुञ्जन्ति ये पर्यग्निकृता उत्सृष्टाः ( ताण्ड्य० २१।१४ ) ॥ ९ ॥

**षष्ठे सवनीया भवन्ति त्रयस्त्रयोऽन्वहमैन्द्रामारुताः ॥ १० ॥**

ये उक्षाणः पञ्चवर्षाणि उत्सृष्टास्त एव षष्ठे वर्षे कार्तिके मासि सुत्यासु विभज्य सवनीयाः पशवो भवन्ति । तत्र चतसृषु सत्यासु प्रत्यहं त्रयस्त्रय आलब्धव्या इन्द्रामरुद्देवताकाः ॥ १० ॥

**पञ्चोत्तमे ॥ ११ ॥**

अन्तिमे पञ्चमे सौत्येऽहनि पञ्चोक्षाण आलब्धव्याः । एवं सप्तदशापि आलब्धाः ॥ ११ ॥

**यः कामयेत बहुः स्यामिति स एतेन यजेत ॥ १२ ॥**

एतेन पञ्चशारदीयेन ॥१२॥

[ नैमित्तिकम् ]

**पश्वापदि चरवः ॥ १३ ॥**

पञ्चवर्षमध्ये यज्ञसमाप्तिपर्यन्तमेतेषां पशूनामापत्तौ प्रायश्चित्तार्थं चरवोऽनुष्ठेयाः ॥१३॥

तानेवाह—

अपोनप्त्रियोऽप्सु मृते ॥ १४ ॥

उदकमध्ये पशौ मृतेऽपोनप्त्रियश्चरुः स्यात्। अत्र अपोनपात् देवता, न त्वपोनप्ता इति कर्काचार्याः। तेन अपोनपाते जुष्टमिति प्रयोगः ॥ १४ ॥

वायव्यः पलायिते ॥१५॥

पलाय्य नष्टे पशौ वायुदेवत्यश्चरुः कार्यः ॥१५॥

बार्हस्पत्यः श्रवण-कूट-काणश्चेत् ॥१६॥

श्रवणो व्याधिविशेषः। कूटो भग्नशृङ्गः ( ताण्ड्य० २१।१४ ) ॥१६॥

नैर्ऋतोऽवसन्ने ॥१७॥

अन्ययूथीयैः साण्डैर्युध्यमानः शैथिल्यमापन्नोऽवसन्नः। कृशोऽवसन्न इति सायणाचार्याः ॥१७॥

पुरोडाशाः परे ॥१८॥

अस्मात्सूत्रात्परे पुरोडाशा उपदिश्यन्ते ॥१८॥

रुद्राभिमानेऽग्नये रुद्रवते ॥ १६ ॥

पशोर्ज्वरपीडायाम् ॥ १६ ॥

सꣳशीर्णश्चेदेककपालो भौमः ॥२०॥

पशुः संशीर्णः = अकस्मात्प्रकम्प्य भूमौ पतितश्चेत्तदा भूमिदेवत एककपालः पुरोडाशः ॥ २० ॥

प्रासहा हृतश्चेदिन्द्राय प्रसह्वने ॥ २१ ॥

प्रासहा = बलात्कारेण ॥ २१ ॥

भोजनीयमृते प्राजापत्यो द्वादशकपालः ॥ २२ ॥

भोजनीयेन मृतोऽजीर्णमृतः ॥ २२ ॥

मृतं ब्राह्मणान् भोजयेत् ॥ २३ ॥

प्रतिपत्तिरियम् ॥ २३ ॥

अप्सु प्रासनं निधानं वाऽदुष्टत्वात् ॥ २४ ॥

"दुष्टस्य हविषोऽप्स्ववहरणम्" ( २५।५।८ ) इति वक्ष्यमाणन्यायात् मृतस्य पशोरुदके प्रक्षेपः कर्तव्यः। अथवा भक्षणाय निधानं कर्तव्यम्, नाप्सु प्रक्षेपः कर्तव्यः। कुतः? अदुष्टत्वात् = स्वयं मृतस्य भक्षप्रतिषेधाभावात्। अतो भक्षणार्थं निधानमेव कार्यम् ॥ २४ ॥

[ पञ्चशारदीये एव पश्वापत्सौ प्रायश्चित्तम् ]

अन्यत्रापि दोषसंयोगात् ॥ २५ ॥

अन्यत्र = पञ्चशारदीयादन्यस्मिन्नपि कर्मणि पश्वापदि यानि प्रायश्चित्तानि पूर्वमुक्तानि तानि भवन्ति। कुतः? दोषसंयोगात् = पशुव्यापत्युद्देशेन विहितत्वात्। पश्वापत्तिश्च सर्वत्र समानैव ॥ २५ ॥

सिद्धान्तयति—

न प्रकरणात् ॥ २६ ॥

यदुक्तं तन्न। कुतः? प्रकरणात् = पञ्चशारदीयप्रकरणे एव पश्वापदि तेषां नैमित्तिकानां विधानात्। तेन पञ्चशारदीये पश्वापद्येवैतानि नान्यत्र ॥ २६ ॥

[ तृतीयः पञ्चाहो व्रतवत्संज्ञकः ]

**व्रतवानुत्तमः ॥ २७ ॥**

उत्तमस्तृतीयः पञ्चाहो महाव्रतवान् भवति । व्रतवत्संज्ञक इत्यर्थः ॥ २७ ॥

[ तृतीये पञ्चशारदीयेऽहःक्रमः ]

तत्राहान्याह—

**ज्योतिर्गौर्महाव्रतं गौरायुः ॥२८॥**

ज्योतिरग्निष्टोमः, गौरुक्थ्यसंस्थः, महाव्रतमग्निष्टोमसंस्थम् , गौरुक्थ्यसंस्थः, आयुरतिरात्रसंस्थम् ( ताण्ड्य० २१।१५।१ ) ॥२८॥

**अहीना व्रतवन्तः सर्वजिद्दीक्षाः ॥२९॥**

येऽहीना व्रतवन्तस्ते सर्वजिद्दीक्षा येषां तथाविधा भवन्ति । यथा सर्वजिति चतुर्भिर्दिनैरधिकं संवत्सरं दीक्षाः, एकदिनाधिकं संवत्सरं वा, षण्मास्यं वा । तथाऽत्रापीत्यर्थः ( २२।१।४४ ) ॥२९॥

इति त्रयोविंशेऽध्याये चतुर्थी कण्डिका ॥ ४ ॥



[ षट्सुत्याकास्त्रयोऽहीनाः ]

**षडहास्त्रयः ॥ १ ॥**

षट्सुत्याकास्त्रयोऽहीनाः ( ताण्ड्य०२२। १–३ ) ॥ १ ॥

[ प्रथम ऋतुषडहाख्योऽहीनः ]

**ऋतूनां प्रथमः ॥ २ ॥**

प्रथमः षडह ऋतूनां संबन्धी ऋतुषडह इतिनामा भवतीत्यर्थः । अस्य षष्ठ्यामारम्भः । द्वादश दीक्षाः, षट् सुत्याः । प्रत्यहमैन्द्राग्नः सवनीयः पशुः, स्तोमायनं वा ॥ २ ॥

[ द्वितीयः षडहोऽहीनः ]

**द्वितीये बृहद्रथन्तरपृष्ठः पञ्चाहः पृष्ठ्यावलम्बाख्यः ॥ ३ ॥**

द्वितीये षडहे पञ्चाहः = पञ्चाहानि बृहद्रथन्तरपृष्ठानि स्युः । द्वितीयस्य षडहस्य पृष्ठ्यावलम्ब इति संज्ञा च ॥ ३ ॥

[ तृतीयः षडहोऽहीनः ]

**तृतीये त्रिभ्यस्त्रिकद्रुकाः ॥ ४ ॥**

तृतीये षडहे त्रिभ्यः पार्ष्ठिकेभ्योऽहोभ्य ऊर्ध्वं त्रिकद्रुकाः स्युः । "ज्योतिर्गौरायुः" ( २४।१।८ ) इति त्रिकद्रुकाः ॥ ४ ॥

[ सप्तसुत्याकाः सप्ताहीनाः ]

**सप्त सप्ताहाः ॥ ५ ॥**

सप्तसुत्याका अहीनाः सप्त स्युः ( ताण्ड्य० २२। ७–१० ) ॥ ५ ॥

**चत्वारो व्रतोत्तमाः प्रथमाः ॥ ६ ॥**

तेषां सप्तानां मध्ये चत्वारः सप्ताहा व्रतोत्तमा स्युः । व्रतमुत्तमं येषां ते ॥६॥

**तृतीयः पशुकामस्य (ताण्ड्य० २२।८।२)॥ ७ ॥**

**इन्द्रस्य पञ्चमः ॥ ८ ॥**

पञ्चमः सप्ताह इन्द्रस्य सप्ताह इतिनामा स्यात् ॥ ८ ॥

तत्राहान्याह—

**द्वितीयप्रभृति षडेकाहाः ॥ ६ ॥**

**सर्वस्तोम उत्तमः ॥१०॥**

**जनकसप्तरात्रः ॥११॥**

षष्ठः सप्ताहो जनकरात्रसंज्ञकः ॥११॥

तत्राहान्याह—

**चतुर्भ्यो विश्वजिन्महाव्रतम् ॥१२॥**

चतुर्भ्यः पार्ष्ठिकेभ्योऽनन्तरं विश्वजित् महाव्रतं च स्यात् ॥१२॥

**उत्तमे षडहो बृहद्रन्तरपृष्ठः पृष्ठ्यस्तोमाख्यः ॥१३॥**

उत्तमे = सप्तमे सप्ताहे बृहद्रथन्तरपृष्ठः षडहः स्यात। स च पृष्ठ्यस्तोमसंज्ञकः ॥१३॥

**विश्वजित्पशुकामस्य ॥१४॥**

अस्मिन्नेव सप्तमे सप्ताहे सप्तममहो विश्वजिदतिरात्रः स्यात् (ताण्ड्य० २२।१०।१)। स च पशुकामस्य भवति ॥१४॥

[ अष्टसुत्याकोऽहीनः ]

**अष्टाहे षडहान्महाव्रतम् ॥१५॥**

अष्टसुत्येऽहीने षडहात्पार्ष्ठिकावलम्बादूर्ध्वं महाव्रतं स्यात् (ताण्ड्य० २२।११) ॥१५॥

[ नवसुत्याकावहीनौ ]

**नवरात्रे त्रिकद्रुकाः ॥१६॥**

नवसुत्येऽहीने षडहात्पृष्ठ्यादूर्ध्वं त्रिकद्रुकाः स्युः ( ताण्ड्य० २२।१२-१३ ) "ज्योतिर्गौरायुः" ( २४।१।६ ) इति त्रिकद्रुकाः ॥१६॥

**द्वितीयं त्रिकद्रुकेभ्यः पृष्ठ्यावलम्बः ॥ १७ ॥**

व्यत्ययेन द्वितीये इत्यस्यार्थे द्वितीयमिति। द्वितीये नवसुत्येऽहीने क्रतौ त्रिकद्रुकेभ्यो ज्योतिगोऽआयुर्भ्यः परं पृष्ठ्यावलम्बाख्यो बृहद्रन्तरपृष्ठः पञ्चाहः स्यात् ॥१७॥

[ दशसुत्याका अहीनाश्चत्वारः ]

**दशरात्राश्चत्वारः ॥१८॥**

दशसुत्याका अहीनाश्चत्वारः स्युः ( ताण्ड्य० २२।१।१८ ) ॥१८॥

**प्रथमस्त्रिककुप् ॥१६॥**

तेषां मध्ये प्रथमस्त्रिककुप्संज्ञः स्यात् ॥१६॥

**उक्थ्योऽग्निष्टोमपक्षस्त्रिरावृत्तः ॥ २० ॥**

अग्निष्टोमौ पक्षाविव यस्योक्थ्यस्य सः। पक्षौ हि उभयतो भवतः। उक्थ्यस्योभयतोऽग्निष्टोमो भवतीत्यर्थः। स च त्रिरावृत्तस्त्रिर्वारं भवति। एवं नव। तेन प्रथममग्निष्टोमः, तत उक्थ्यः, ततोऽग्निष्टोम इत्येवंविधस्त्र्यहस्त्रिरावर्तनीयः ॥२०॥

प्रतिष्ठाकामस्य ॥२१॥

पूर्वोक्तो दशरात्रः ॥२१॥

[ द्वितीयो दशरात्रः ]

कौसुरुबिन्दः ॥२२॥

एतन्नामा द्वितीयो दशरात्रः ॥२२॥

तत्राहान्याह—

अग्निष्टोमास्त्रिवृतस्त्रयः ॥२३॥

द्वितीये दशसुत्येऽहीने त्रयोऽग्निष्टोमाः स्युः ॥२३॥

पञ्चदशाश्चोक्थ्याः ॥२४॥

पञ्चदशस्तोमकास्त्रय उक्थ्याश्च भवन्ति ॥२४॥

सप्तदशाश्च ॥२५॥

सप्तदशस्तोमकास्त्रय उक्थ्याश्च भवन्ति ॥२५॥

एकविंꣳशोऽतिरात्रः ॥२६॥

तत एकविंशस्तोमकोऽतिरात्रो दशममहर्भवति ॥२६॥

[ तृतीयो दशरात्रः ]

पूर्दशरात्रोऽभिचर्यमाणस्य ॥२७॥

तृतीयो दशसुत्योऽहीनः क्रतुः पूर्दशरात्रसंज्ञकः परैरभिचर्यमाणस्य यजमानस्य स्यात् ॥२७॥

तत्राहान्याह—

उक्थ्योऽग्निष्टोमपक्षः ॥२८॥

अग्निष्टोमौ पक्षाविवोभयतो यस्य सः। उक्थ्यस्योभयतोऽग्निष्टोमो भवतीत्यर्थः। प्रथममग्निष्टोमः, तत उक्थ्यः, ततोऽग्निष्टोम इति। एवं प्रथमस्त्र्यहः ॥२८॥

गोपक्षोऽभिजित् ॥२९॥

अभिजिदेकाहः। तस्य गौः पक्षवदुभयतो भवति। गौः पक्षाविव यस्याभिजितः सः। तेनादौ गौः, ततोऽभिजित्, ततो गौरिति। एवं द्वितीयस्त्र्यहः ॥२९॥

आयुर्विश्वजित्पक्षः ॥३०॥

विश्वजितौ पक्षाविवोभयतः पूर्वापरौ यस्य सः। एवंविध आयुर्भवति। प्रथमो विश्वजित्, तत आयुः, ततो विश्वजिदिति। एवं तृतीयस्त्र्यहः। दशमः सर्वस्तोमोऽतिरात्रः ॥३०॥

[ चतुर्थो दशरात्रः ]

छन्दोमदशाहः पशुकामस्य ॥३१॥

छन्दोमदशाहसंज्ञश्चतुर्थो दशसुत्योऽहीनः स्यात् ॥३१॥

तत्राहान्याह—

**पृष्ठ्यावलम्बाश्चत्वारश्छन्दोमाः ॥३२॥**

चतुर्थे दशरात्रे पृष्ठ्यावलम्बादूर्ध्वं द्वादशाहिकाश्चत्वारश्छन्दोमाः स्युः । तत्र पूर्वं बृहद्रथन्तरपृष्ठः पञ्चाहः, ततश्चत्वारश्छन्दोमाः, ततो दशमो विश्वजिदिति ॥३२॥

[ एकादशसुत्योऽहीनः पौण्डरीकः ]

**पौण्डरीकः सर्वर्द्धिकामस्य ॥३३॥**

पौण्डरीकसंज्ञक एकादशसुत्योऽहीनः ॥३३॥

**दशरात्रोऽसत्रोत्थानः ॥३४॥**

पौण्डरीके सत्रोत्थानवर्जितो दशरात्रो भवति ॥३४॥

**विश्वजिदतिरात्रः ॥३५॥**

एकादशमहर्भवति ॥३५॥

**तुल्यमाध्वर्यवमतिरात्रेषु विश्वजिद्वर्जम् ॥३६॥**

अहीनेषु येऽतिरात्राः तेषु समानमाध्वर्यवं भवति विश्वजितं वर्जयित्वा । "विश्वजित् सर्वपृष्ठोऽतिरात्रो भवति" ( १३।७।१।१२ ) इति पितृमेधे श्रवणात् विश्वजितः सर्वपृष्ठताविशेषः ॥३६॥

**यथोक्तमुत्तमः ॥३७॥**

उत्तमोऽन्त्योऽहीनो द्वादशाहसंज्ञो यथोक्तं = यथापूर्वमुक्तः ( १२।१।१।६-३३ ) तथा भवतीत्यर्थः ॥३७॥

इति पञ्चमी कण्डिका ॥ ५ ॥

इति श्रीमन्महामहोपाध्यायविद्वद्वरप्रभुदत्तशास्त्रिसूनु-विद्याधरशर्मकृतायां सरलाख्यायां वृत्तौ अहीननिरूपणात्मकत्रयोविंशतितमोऽध्यायः ।

# चतुर्विंशोऽध्यायः ।

## सत्रनिरूपणम् ।

[ द्वादशसुत्यादीनि चत्वारिंशत्सुत्यान्तानि रात्रिसत्राणि ]

**द्वादशरात्रादीनि रात्रिसत्राणि ॥१॥**

द्वादशरात्रादीनि रात्रिसत्रसंज्ञकानि स्युः ॥१॥

**एकोत्तरयेन चत्वारिंशदन्तानि ॥२॥**

यत्र द्वादश सुत्यास्तद् द्वादशरात्रम् । द्वादशरात्रं च पूर्वोक्तो द्वादशाह एव । तस्मादारभ्य एकैकाहर्वृद्ध्या चत्वारिंशद्रात्रान्तानि सत्राणि स्युः । यथा त्रयोदशरात्रं चतुर्दशरात्रं, पञ्चदशरात्रमित्यादि चत्वारिंशद्रात्रपर्यन्तम् । त्रयोदशरात्रे त्रयोदश सुत्याः, चतुर्दशरात्रे चतुर्दशेत्येवं चत्वारिंशद्रात्रे चत्वारिंशत्सुत्या इति ॥२॥

**यथोपदेशमहानि ॥३॥**

त्रयोदशरात्रादिषु सर्वेषु सत्रेषु उपदेशक्रमेणैवाहानि स्युः । औपदेशिकानामह्नामुपदेशक्रमेणैवानुष्ठानम् । आवापिकानां तु क्रमान्तरं वक्ष्यति "आवापसमवेतानामल्पमल्पं पूर्वम्" ( १४।१।१३ ) इति ॥३॥

[ सत्रेष्वहःक्रमस्य परिभाषा ]

उपदिष्टाहर्व्यतिरिक्तानामन्हामावापं तत्क्रमं चाह—

**अपूर्यमाणे दशरात्रः परः ॥४॥**

अपूर्यमाणे सत्रे "पृष्ठ्यः षडहस्त्रयश्छन्दोमा अविवाक्यो दशम" (१२।३।१-२०) इत्ययं द्वादशाहिको दशरात्रः परो भवति । सर्वेषामह्नामन्ते प्रागुदयनीयातिरात्राद्भवतीत्यर्थः ।४॥

**प्रकृतिविहितेषु महाव्रतं दशरात्रादुत्तरमेकाहार्थे ॥५॥**

"प्राग्विंशतिरात्रात्" ( २४।२।१ ) इत्यादिना विहितानि सूत्राणि प्रकृतिविहितानीत्युच्यन्ते । तेषु सत्रेषु एकाहं विना सत्रस्य अपूरणे दशरात्रात्परं महाव्रतं स्यात् ॥५॥

**पुरस्तादन्यत् ॥६॥**

महाव्रतादन्यद्यदावपनीयं वक्ष्यते तद्दशरात्रात्पूर्वं स्यात् ॥६॥

**षडहार्थेऽभिप्लवः ॥७॥**

यत्र सत्रपूरणार्थं षडहेनार्थः = प्रयोजनं, षड्भिरहोभिर्विना सत्रं न पूर्यते, तत्र तत्पूर्त्यै षडहोऽभिप्लवः पूर्वोक्तः ( १।२।१ ) कर्तव्यः । षण्णामन्हां समूहः षडहः ॥७॥

**तस्यादितः पञ्च पञ्चाहार्थे ॥८॥**

यत्र पञ्चभिरहोभिरर्थः = पञ्चभिरहोभिर्विना सत्रं न पूर्यते तत्र अभिप्लवस्य = आदिमानि पञ्चाहानि स्युः ॥८॥

**त्र्यहार्थे ज्योतिर्गौरायुरिति त्रिकद्रुकाः ॥ ९ ॥**

यत्र त्रिभिरहोभिर्विना सत्रं न पूर्यते तत्र त्र्यहार्थे त्रिकद्रुकाः कार्याः ॥ ९ ॥

व्रतं च यथोक्तं चतुरहार्थे ॥ १० ॥

यत्र चतुर्भिरहोभिर्विना सत्रं न पूर्यते तत्र यथोक्तं व्रतं = महाव्रतं चकारात्त्रिकद्रुकाश्च सत्रं पूरयन्ति। त्रिकद्रुका दशरात्रात्परं, महाव्रतं च दशरात्रात्परमिति यथोक्तमित्यस्यार्थः ( २४।१।५ ) ॥ १० ॥

गोऽआयुषी द्व्यहार्थे ॥११॥

यत्र द्वाभ्यामहोभ्यां विना सत्रं न पूर्यते तत्र गौरायुश्चेति द्वे अहनी सत्रपूरके स्याताम् ॥ ११ ॥

अतिरात्रान्तरमावापस्थानम् ॥ १२ ॥

"उभयतोऽतिरात्रꣳ सत्रम्" ( १२।१।७ ) इत्युक्तम्। तत्रातिरात्रयोः प्रायणीयोदयनीययोर्यदन्तरालं तदावापस्थानम् = यस्यावापः क्रियते तस्य प्रायाणीयात्परमुदयनीयात्पूर्वमनुष्ठानं क्रियते ॥ १२ ॥

आवापसमवेतानामल्पमल्पं पूर्वम् ॥ १३ ॥

आवापाश्च ते समवेताश्चेति तेषाम्। यत्र बहूनामावापानां समवायः तत्राल्पमल्पं पूर्वमावपनीयम्। यथा—एकोऽभिप्लवः षडहः, अपरस्तस्यैव पञ्चाहश्चतुरहस्त्र्यहो द्व्यहो वा। तत्र पञ्चाहादेः पूर्वमावापस्ततोऽभिप्लवस्य षडहस्येति ॥ १३ ॥

[ त्रयोदशरात्रसंज्ञकं सत्रत्रयम् ]

द्वे त्रयोदशरात्रे पृष्ठ्यात्सर्वस्तोमोऽतिरात्रः ॥ १४ ॥

द्वे सत्रे त्रयोदशसुत्ये स्तः ( ताण्ड्य० २३।१-२ )। तत्र प्रथमस्याहान्याह—"द्वादशाहधर्माः सत्रेषु" इत्युक्तम् (१३।१।१)। तेन सर्वेषु सत्रेषु द्वादशाहधर्मा भवन्ति। अतस्त्रयोदशरात्रे द्वादशाहः सकलोऽपि भवति। एकमहरवशिष्यते। तदर्थमिदमुच्यते—पृष्ठ्यात् = षडहात् परः सर्वस्तोमोऽतिरात्रः कार्यः। ततस्त्रयश्छन्दोमाः, तत अविवाक्यम्, तत उदयनीयातिरात्रः इति।

अत्र प्रायणीयातिरात्रः १, ततः पृष्ठ्यः षडहः, २–७ ततः सर्वस्तोमोऽतिरात्रः ८, ततः चत्वारश्छन्दोमाः, ९–१२, तत उदयनीयोऽतिरात्रः १३ इति क्रमः। इति त्रयोदशरात्रः प्रथमः पूर्णः ॥१४॥

प्रकृतिविहितं द्वितीयम् ॥१५॥

द्वितीयं त्रयोदशरात्रं प्रकृतिविहितं कर्तव्यम्। प्रकृतिविहितमित्युक्तत्वात् "प्रकृतिविहितेषु महाव्रतं दशरात्रादुत्तरमेकाहार्थे" ( २४।१।५ ) इति सूत्रेण दशरात्रादुत्तरं महाव्रतं भवति। तेन आदौ द्वादशाहानि, ततो महाव्रतमिति ( ताण्ड्य० २३।२।१) ॥१५॥

संभार्यं तृतीयम् ॥१६॥

तृतीयं त्रयोदशरात्रमन्यैरेव वक्ष्यमाणैरहोभिः संभरणीयं न त्वावापिकैः पूरणीयम् ॥१६॥

तदेव संभरणमाह—

प्राणयीयाचतुर्विंꣳशमहरभिजित्त्रयः स्वरसामानो विषुवांस्त्रयः स्वरसामानो विश्वजिद् व्रतमुदयनीयोऽतिरात्रः ॥१७॥

प्रायणीयात्परं चतुर्विंशं द्वितीयमहर्भवति, तत उदयनीयोऽतिरात्रः, ततस्त्रयः

स्वरसामानः, ततो विषुवान्, ततस्त्रयः स्वरसामानः, ततो विश्वजित्, ततो महाव्रतम्, तत उदयनीयोऽतिरात्र इति ( षड्विंश० ) ॥१७॥

[ चतुर्दशसुत्याकं सत्रत्रयम् ]

**चतुर्दशरात्राणि त्रीणि ॥१८॥**

त्रीणि सत्राणि चतुर्दशसुत्यानि स्युः ( ताण्ड्य० २२।३-१ ) ॥१८॥

**द्वौ पृष्ठ्यौ ॥१६॥**

प्रथमे चतुर्दशरात्रे सत्रे आदौ प्रायणीयातिरात्रः, ततो द्वौ पृष्ठ्यो षडहौ स्यातम्, तत उदयनीयः ( तां० २३।३।१ ) ॥१६॥

**प्रतिलोमः परः ॥२०॥**

तयोर्द्वयोः पृष्ठ्ययोर्मध्ये द्वितीयः पृष्ठ्यः प्रतिलोमो = विपरीतक्रमः स्यात् । पृष्ठ्ये षडहे "त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशा" इति क्रमेणाहान्युक्तानि (२३।१।५)। अत्र तु विपरीतक्रमेण प्रथमं त्रयस्त्रिंशः, ततस्त्रिणव इत्येवमहानि कर्तव्यानीत्यर्थः (ताण्ड्य०२२।३।१) ॥२०॥

**मध्यमे त्रिकद्रुकाः पृष्ठ्यमभितः ॥२१॥**

द्वितीये चतुर्दशरात्रे पृष्ठ्यमभितस्त्रिकद्रुका 'ज्योतिर्गौरायुः इति पूर्वोक्ताः स्युः ( तां० २३।४।१ ) ॥२१॥

**प्रतिलोमाः परे ॥२२॥**

पृष्ठ्यात्परे ये त्रिकद्रुकास्ते आयुः गौः ज्योतिरित्येवं विपरीतक्रमेण भवन्ति । आदौ प्रायणीयः, ततो ज्योतिर्गौरायुः, ततः पृष्ठ्यः षडहः, ततः आयुः गौः ज्योतिः, तत उदयनीय इति ( ताण्ड्य० २३।४।१ ) ॥२२॥

**विवाहोदकतल्पसंशयितानामेतत् ॥२३॥**

येषां विवाहे संशयो भवेत्, किमस्माकं विवाहो भवति न वेति, तथा अभिषेकाद्यर्थे उदके, शय्यायां च । तेषामेतत्सत्रम् । विवाहाद्यर्थिनोऽत्राधिकारिण इत्यर्थः ( ताण्ड्य० २३।४।२) ॥२३॥

**प्रकृतिविहितं तृतीयम् ॥२४॥**

तृतीयं चतुर्दशरात्रं प्रकृतिविहितम् = आवापप्रकारेण पूरणीयम् । प्रायणीयः १, गो आयुषो २-३, दशरात्रः ४-१३, उदनीय १४ इति ( तां० २३।५।१ ) ॥२४॥

[ पञ्चदशसुत्यं सत्रचतुष्टयम् ]

**पञ्चदशरात्राणि चत्वारि ॥२५॥**

चत्वारि सत्राणि पञ्चदशसुत्यानि स्युः ( ताण्ड्य० २२।६-९ ) ॥२५॥

**उत्तरे प्रकृतिविहिते ॥२६॥**

उत्तरे = तृतीयचतुर्थे पञ्चदशरात्रे प्रकृतिविहिते = आवापप्रकारेण पूरणीये । द्वादशाहानि द्वादशाहस्य । शिष्टस्य त्र्यहस्य त्रिकद्रुकैः पूरणं कार्यमिति भावः ( २३।५-१ ) ॥२६॥

**चतुर्दशरात्राभ्यां पूर्वे व्याख्याते ॥२७॥**

पूर्वे = प्रथमद्वितीये पञ्चदशरात्रे चतुर्दशरात्राभ्यां व्याख्याते ॥ २७ ॥

इयांस्तु विशेषः—

पृष्ठ्ययोर्मध्ये महाव्रतम् ॥२८॥

प्रथमे पञ्चदशरात्रे पृष्ठ्ययोर्मध्ये महाव्रतं स्यात्। तेन प्रायणीयः १, पृष्ठ्यः २–७, महाव्रतम् ८, पृष्ठ्यः ६–१४, उदयनीय १५, इति ( ताण्ड्य० २३।६।१ ) ॥ २८ ॥

अतिरात्रादग्निष्टुद् द्वितीयस्य ॥२९॥

द्वितीयस्य पञ्चदशरात्रस्य प्रायणीयातिरात्रात्परोऽग्निष्टुद्भवति। ततश्च प्रायणीयः १, अग्निष्टुत् २, ज्योतिर्गौरायुः ३–५, पृष्ठ्यः ६-११ आयुर्गौर्ज्योतिः १२-१४, उदयनीयः १५ इति ( ताण्ड्य० २३।७।१ ) ॥ २९ ॥

स प्रायणीयस्तृतीयस्य ॥३०॥

तृतीयस्य पञ्चदशरात्रस्य सत्रस्य स एवाग्निष्टुत्प्रायणीयः स्यात्। तेन त्रिवृदग्निष्टुदग्निष्टोमसंस्थः १, ज्योतिर्गौरायुः २-४, दशरात्रः ५-१४, उदयनीयातिरात्र १५ इति ( ताण्ड्य० २३।८।१ )।

चतुर्थे पञ्चदशरात्रे प्रायणीयः १, ज्योतिर्गौरायुः २-४ दशरात्रः ५-१४, उदनीय १५ इति ( तां० २३।९।१ ) ॥ ३० ॥

इति चतुर्विंशेऽध्याये प्रथमा कण्डिका ॥ १ ॥



[ षोडशसुत्यादीनि विंशतिसुत्यान्तानि सत्राणि ]

प्रकृतिविहितानि प्राग्विꣳशतिरात्रात् ॥ १ ॥

षोडशरात्रात्सत्रादारभ्य विंशतिरात्रपर्यन्तं चत्वारि सत्राणि प्रकृतिविहितानि = आवापप्रकारेण पूरणीयानि। तत्र षोडशरात्रे प्रायणीयः, १ त्रिकद्रुकाः, २-४ दशरात्रः, ५-१४, महाव्रतम्, १५ उदयनीय १६ इति ( तां० २३।१०।११ )।

सप्तदशरात्रे प्रायणीयः, १ अभिप्लवस्य पञ्चाहः, २-६ दशरात्रः, ७ उदयनीय १७ इति ( तां० २३।११।१ )।

अष्टादशरात्रे प्रायणीयः, १ अभिप्लवः,२-७ दशरात्रः, ८-१६ उदयनीय १८ इति ( तां० २३।१२।१ )।

एकोनविंशतिरात्रे प्रायणीयः अभिप्लवः, २-७ दशरात्रः, ८-१७ महाव्रतम्, १८ उदयनीय १९ इति ( तां० २३।१३।१ ) ॥ १ ॥

विꣳशतिरात्रेऽभिप्लवोऽभिजिद्विश्वजितौ च ॥ २ ॥

विंशतिरात्रे प्रायणीयः, १ अभिप्लवः, २–७, अभिजित्, ८, विश्वजित्, ९, दशरात्रः, १०–१९, उदयनीय २०, इति ताण्ड्य० २३।१४।१ )॥ २ ॥

[ एकविंशतिसुत्याकं सत्रद्वयम् ]

एकविꣳशतिरात्रयोरतिरात्रावषोडशिकौ ॥ ३ ॥

द्वयोरप्येकविंशतिरात्रयोः प्रायणीयोदयनीयावतिरात्रावषोडशिकौ भवतः ॥ ३ ॥

अभिप्लवास्त्रयः प्रथमादतिरात्रः ॥४॥

प्रथमे एकविंशतिरात्रे त्रयाणामभिप्लवानां मध्ये प्रथमादभिप्लवात्परोऽतिरात्रः स्यात्।

ततश्चैवं क्रमः । अषोडशिकः प्रायणीयः १, अभिप्लवः २–७, अतिरात्रः सषोडशिकः ८, अभिप्लवौ ९-२०, अषोडशिक उदयनीय २१ इति ( तां० २३।१५।१ ) ॥४॥

**निदाघे द्वितीयं ब्रह्मवर्चसकामानाम् ॥५॥**

द्वितीयमेकविंशतिरात्रं स्यात् ( तां० २३।१६।८ ) ॥५॥

तत्राहान्याह—

**त्रयस्त्रयः स्वरसामानो विषुवन्तमभितः पृष्ठ्यौ च ॥६॥**

द्वितीये एकविंशतिरात्रे विषुवन्तमभितः = विषुवतः पूर्वं पश्चाच्च त्रयस्त्रयः स्वरसामानः स्युः, तथा पृष्ठ्यौ चाभितः स्युः ॥६॥

**उत्तरः प्रतिलोमः ॥७॥**

द्वितीयः पृष्ठ्यः प्रतिलोमः = त्रयस्त्रिंशारम्भणः स्यात् । ततश्चायं क्रमः । प्रायणीयः १, पृष्ठ्यः २-७, त्रयः स्वरसामानः ८-१०, विषुवान् ११, स्वरसामानस्त्रयः त्रयस्त्रिंशारम्भणः १२-१४, पृष्ठ्यः १५—२०, उदयनीय २१ इति ( तां० २३।१६।१ ) ॥७॥

विषुवति विशेषमाह—

**मानव्यः सामिधेन्यः ॥८॥**

मनुना दृष्टा ऋचः सामिधेन्यो विषुवति स्युः ( ताण्ड्य० २३।१६।६ ) ॥८॥

**सौमापौष्ण उपालम्भ्यः ॥९॥**

विषुवति सोमापूषदेवताकस्तृतीयः पशुर्द्वितीयस्य सौर्यस्य पशोः समीपे बन्धनीयः ( तां० २३।१६।४-५ ) ॥ ९ ॥

**प्रकृतिविहितान्या द्वात्रिंशद्रात्रात् ॥१०॥**

आङभिविधौ । द्वात्रिंशद्रात्रमभिव्याप्य एकादश सत्राणि प्रकृतिविहितानि = आद्यप्रकारेण प्रणीयानि ॥१०॥

[ द्वाविंशतिसुत्यं सत्रम् ]

**द्वाविंशतिरात्रमन्नाद्यकामानाम् ॥११॥**

तत्रायं क्रमः—प्रायणीयः १, त्रिकद्रुकाः २–४, अभिप्लवः ५–१०, दशरात्रः ११–२०, महाव्रतम् २१, उदयनीयः २२ ( ताण्ड्य० २३।१७।१ ) ॥११॥

[ त्रयोविंशतिसुत्यं सत्रम् ]

**त्रयोविंशतिरात्रं प्रतिष्ठाकामानाम् ॥१२॥**

तत्रायं क्रमः—प्रायणीयः १, अभिप्लवस्य पञ्चाहः २–६, अभिप्लवः ७–१२, दशरात्रः १३–२२, उदयनीय २३ इति ( ताण्ड्य० २३।१८।१ ) ॥१२॥

[ चतुर्विंशतिसुत्याकं सत्रद्वयम् ]

**चतुर्विंशतिरात्रं प्रजाकामानां पशुकामानां वा ॥१३॥**

एव चतुर्विंशतिरात्रं तत्र प्रायणीयः १, द्वावभिप्लवौ २-१३, दशरात्रः १४-२३, उदयनीय २४ इति ( ताण्ड्य० २३।२०।१ ) ॥१३॥

[ द्वितीयं चतुर्विंशतिसुत्यं सत्रम् ]

**द्वितीयꣳ० सꣳ०सदः ॥१४॥**

द्वितीयं चतुर्विंशतिरात्रं संसदः = संसदोऽयनमितिसंज्ञं स्यात् ॥ १४ ॥

तत्र विशेषमाह—

**अषोडशिकावतिरात्रौ ॥१५॥**

प्रायणीयोदयनीयात्रषोडशिकौ स्याताम् ॥ १५ ॥

**विशालः ॥ १६ ॥**

वक्ष्यमाणस्याहःसङ्घातस्य विशाल इति संज्ञा ॥ १६ ॥

तमेवाह—

**पार्ष्ठिकानि त्रीण्युत्तराणि प्रतिलोमानुलोमानि ॥१७॥**

पृष्ठ्यषडहसम्बन्धीनि उत्तराणि चतुर्थप्रभृतीनि त्रीण्यहानि एकविंश-त्रिणव—त्रयस्त्रिंशानि प्रतिलोमान्यनुलोमानि चात्र स्युः। पूर्वं प्रतिलोमानि षष्ठ-पञ्चम—चतुर्थानि, ततोऽनुलोमानि चतुर्थ—पञ्चम—षष्ठानि ॥ १७ ॥

**तमभितोऽग्निष्टोमावनिरुक्तौ ॥ १८ ॥**

तं विशालमभितोऽनिरुक्तावग्निष्टोमौ स्याताम् ॥१८॥

**पृष्ठ्यस्तोमौ च ॥ १९ ॥**

अभितौ भवतः। पूर्वमुक्तम् "उत्तमे षडहो बृहद्रथन्तरपृष्ठः पृष्ठ्यस्तोमाख्यः" इति (२३।५।१०)। तौ पृष्ठ्यस्तोमौ बृहद्रथन्तरपृष्ठौ षडहौ चकारात् तं साग्निष्टोमं विशालमभितो भवतः ॥ १९ ॥

**उत्तरः प्रतिलोमः ॥२०॥**

तयोः साग्निष्टोमं विशालमभितः क्रियमाणयोः पृष्ठ्यस्तोमयोर्मध्ये उत्तरः = साग्निष्टोमस्य विशालस्य पश्चात् क्रियमाणः पृष्ठ्यस्तोमः प्रतिलोमः = अन्त्याहःप्रभृति स्यात् ॥ २० ॥

**तस्मादग्निष्टोमावनिरुक्तौ ॥ २१ ॥**

योऽयं प्रतिलोम उत्तरः पृष्ठ्यस्तोम उक्तस्तस्मात्परौ अनिरुक्तौ द्वावग्निष्टोमौ स्याताम्। तत्रायं क्रमः। प्रायणीयः १, पृष्ठ्यस्तोमः षडहः २-७, अनिरुक्तोऽग्निष्टोमः ८ पार्ष्ठिकान्यहानि ९-११ ( ६. ५. ४. ), तान्येव षोडश्यादीनि १२-१४ ( ४।५।६ ), अनिरुक्तोऽग्निष्टोमः १५, त्रयस्त्रिंशारम्भणः पृष्ठ्यस्तोमः षडहः (१६-२१ ) अग्निष्टोमावनिरुक्तौ २२-२३, उदयनीय २४ इति ( ताण्ड्य० २३।१९।१) ॥ २१ ॥

[ पञ्चविंशतिसुत्याद्यष्टविंशतिसुत्यान्तं सत्रं, द्वात्रिंशत्सुत्याकं च ]

**पञ्चविꣳ०शतिरात्रमन्नाद्यकामानाꣳ षड्विꣳ०शतिरात्रं प्रतिष्ठाकामानाꣳ सप्तविꣳ०शतिरात्रमृद्धिकामानामष्टाविꣳ०शतिरात्रं प्रजाकामानां पशुकामानां वा ॥ २२ ॥**

**द्वात्रिꣳ०शद्रात्रं च ॥२३॥**

प्रजाकामानां पशुकामानां वा स्यात्। पञ्चविंशतिरात्रे-प्रायणीयः १ अभिप्लवौ २-१३, दशरात्रः १४-२३, महाव्रतम् २४, उदयनीय २५ इति क्रमः (ताण्ड्य० २३।२१।१)।

षड्विंशतिरात्रे-प्रायणीयः १, गो आयुषी २-३, अभिप्लवौ ४-१५, दशरात्रः १६-२५, उदयनीय २६ इति क्रमः (ताण्ड्य० २३।२२।१)।

सप्तविंशतिरात्रे—प्रायणीयः १, त्रिकद्रुकाः २-४, अभिप्लवौ ५-१६, दशरात्रः १७-२६, उदयनीय २७ इति क्रमः ( तां० २३।२३।१ )

अष्टाविंशतिरात्रे—प्रायणीयः १, त्रिकद्रुकाः २-४, अभिप्लवौ ५-१६, दशरात्रः १७-२६, महाव्रतम् २७, उदयनीय इति क्रमः ( तां० २३।२४।१ )

एकोनत्रिंशद्रात्रे प्रायणीयः १, अभिप्लवस्य पञ्चाहः २-६, अभिप्लवौ ७-१८, दशरात्र, ११९-२८ उदयनीय २९ इति ( तां० २३।२५।१ )।

त्रिंशद्रात्रे प्रायणीयः १, त्रयोऽभिप्लवाः २-१९, दशरात्रः २०-२९, उदयनीय ३० इति क्रमः ( तां० २३।२६।१ )।

एकत्रिंशद्रात्रे—प्रायणीयः १, त्रयोऽभिप्लवाः २-१९, दशरात्रः २०-२९, महाव्रतम् ३०, उदयनीय ३१ इति ( तां० २३।२७।१ )।

द्वात्रिंशद्रात्रे—प्रायणीयः १, गो आयुषी २-३, त्रयोऽभिप्लवाः ४-२१, दशरात्रः २२-३१, उदयनीय ३२ इति ( तां० २३।२८।१ )।

[ त्रयस्त्रिंशद्रात्रं सत्रत्रयम् ]

**त्रयस्त्रिꣳशद्रात्राणि त्रीणि ॥२४॥**

सत्राणि ॥२४॥

तत्र प्रथमस्याहान्याह—

[ प्रथमं त्रयस्त्रिंशद्रात्रम् ]

**पञ्चाहाश्चत्वारः ॥२५॥**

प्रथमे त्रयस्त्रिंशद्रात्रे प्रायणीयादनन्तरं चत्वारोऽभिप्लवस्य पञ्चाहाः स्युः ॥२५॥

**त्रिभ्योऽतिरात्रो विश्वजित् ॥२६॥**

तत्र त्रिभ्यः पञ्चाहेभ्योऽवसितेभ्यः परो विश्वजिदतिरात्रः स्यात्। ततश्चैवं क्रमः—प्रायणीयः १, त्रयोऽभिप्लवस्य पञ्चाहाः २—१६, विश्वजिदतिरात्रः १७, ततश्चतुर्थः पञ्चाहः १८—२२, ततो दशरात्रः २३-३२, उदयनीय ३३ इति क्रमः ( ताण्ड्य० २४।१।१ ) ॥२६॥

[ द्वितीयं त्रयस्त्रिंशत्सुत्याकं सत्रम् ]

**व्रतवद् द्वितीयं त्र्यभिप्लवम् ॥२७॥**

द्वितीयं त्रयस्त्रिंशद्रात्रं महाव्रतयुक्तं त्र्यभिप्लवं च स्यात्। प्रायणीयादनन्तरं त्रयोऽभिप्लवाः कर्तव्या इत्यर्थः ॥२७॥

**अभिप्लवान्तरयोरतिरात्रौ ॥२८॥**

त्रयाणामभिप्लवानां द्वे अन्तराले भवतः। तयोरन्तरालयोरतिरात्रौ स्याताम्। ततश्चायं क्रमः। प्रायणीयः-१, अभिप्लवः २—७, अतिरात्रः ८, अभिप्लवः ९—१४, अतिरात्रः १५, अभिप्लवः १६—२१, दशरात्रः २२—३१, महाव्रतम् ३२, उदयनीय ३३ इति ( तां० २४।२।१ ) ॥२८॥

[ तृतीयं त्रयस्त्रिंशत्सुत्यं सत्रम् ]

**तृतीये त्रयस्त्रयः पञ्चाहा विश्वजितमभितः ॥२९॥**

तृतीये त्रयस्त्रिंशद्रात्रे विश्वजितमभितस्त्रयोऽभिप्लवस्य पञ्चाहाः स्युः ॥२९॥

**प्रतिलोमाः परे ॥३०॥**

तेषां मध्ये परे = विश्वजितः पश्चाद्ये पञ्चाहास्ते प्रतिलोमाः स्युः । ततश्चायं क्रमः प्रायणीयः १, त्रयोऽभिप्लवस्य पञ्चाहाः २-१६, विश्वजिदतिरात्रः १७, प्रतिलोमास्त्रयः पञ्चाहा. १८-३२, उदयनीय ३३ इति ( तां० २४।३।१ ) ॥३०॥

**प्रकृतिविहितान्या चत्वारिꣳशद्रात्रात् ॥३१॥**

चतुस्त्रिंशद्रात्रादारभ्याचत्वारिंशद्रात् सप्त सत्राणि प्रकृतिविहितान्यावापप्रकारेण पूरणीयानि स्युः ॥३१॥

[ चतुस्त्रिंशद्रात्रं पञ्चत्रिंशद्रात्रं च सत्रम् ]

**चतुस्त्रिꣳशद्रात्रमन्नाद्यकामानाम् ॥३२॥**

तत्र—प्रायणीयः १, त्रिकद्रुकाः २-४, त्रयोऽभिप्लवाः ५-३२, दशरात्रः २३-३२, महाव्रतम् ३३ उदयनीय ३४ श्चेति ( तां० २४।४।१ ) । पञ्चत्रिंशद्रात्रे—प्रायणीयः १, पञ्चाहः २-६, त्रयोऽभिप्लवाः ७-२४, दशरात्रः २५-३४, उदयनीय ३५ श्चेति ( ताण्ड्य० २४।५।१ ) ॥३२॥

[ षट्त्रिंशत्सुत्यं सत्रम् ]

**षट्त्रिꣳशद्रात्रं प्रतिष्ठाकामानाम् ॥३३॥**

प्रायणीयः १, चत्वारोऽभिप्लवाः २-२५, दशरात्रः २६-३५, उदयनीय ३६ इति ( तां० २४।६।१ ) ॥३३॥

[ सप्तत्रिंशत्सुत्यं सत्रम् ]

**सप्तत्रिꣳशद्रात्रमृद्धिकामानाम् ॥३४॥**

प्रायणीयः १, चत्वारोऽभिप्लवाः २-२५, दशरात्रः २६-३५, महाव्रतम् ३६, उदयनीय ३७ इति ( ताण्ड्य० २४।७।१ ) ॥३४॥

[ अष्टत्रिंशत्सुत्यमेकोनचत्वारिंशत्सुत्यं च सत्रम् ]

**अष्टात्रिꣳशद्रात्रं प्रजाकामानां पशुकामानां वा ॥३५॥**

प्रायणीयः १, गो आयुषी २-३, चत्वारोऽभिप्लवाः ४-२७, दशरात्रः २८-३७, उदयनीय इति ३८ ( ताण्ड्य० २४।८।१ ) ।

एकोनचत्वारिंशद्रात्रे प्रायणीयः १, त्रिकद्रुकाः २-४, चत्वारोऽभिप्लवाः ५-२८, दशरात्रः २९-३८, उदयनीय इति ३९ ( ताण्ड्य० २४।९।१ ) ॥३५॥

[ चत्वारिंशत्सुत्यं सत्रम् ]

**चत्वारिꣳशद्रात्रं च ॥३६॥**

प्रजाकामानां पशुकामानां वा भवति । तत्र प्रायणीयः १, त्रिकद्रुकाः २-४, चत्वारोऽभिप्लवाः ५-२८, दशरात्रः २९-३८, महाव्रतम् ३९, उदयनीय इति ४० (तां० २४।१०।१) ॥३६॥

[ एकान्नपञ्चाशद्रात्राणि सप्त सत्राणि ]

**व्रतवन्त्युत्तराणि प्रथमतृतीयवर्जꣳ सप्तैकान्नपञ्चाशद्रात्राणि ॥३७॥**

उत्तराणि = वक्ष्यमाणानि सप्त एकान्नपञ्चाशद्रात्राणि सत्राणि भवन्ति । तत्र सप्तानां मध्ये प्रथमं तृतीयं च वर्जयित्वाऽन्यानि पञ्च महाव्रतवन्ति स्युः ( तां० २४।११।१ ) ॥३७॥

[ प्रथममेकान्नपञ्चाशद्रात्रम् ]

**प्रथमो विधृतिः ॥३८॥**

प्रथम एकान्नपञ्चाशद्रात्रो विधृतिसंज्ञकः स्यात् । पुंलिङ्गेन सत्रस्याभिधानम् ॥३८॥

**अषोडशिकावतिरात्रौ ॥३९॥**

प्रथमे एकान्नपञ्चाशद्रात्रे विधृतिसंज्ञके प्रायणीयोदयनीयावषोडशिकौ स्याताम् ॥३९॥

इति द्वितीया कण्डिका ॥ २ ॥



**कौसुरुबिन्दः प्रथमस्त्र्यहः ॥ १ ॥**

अत्र प्रायणीयादनन्तरं कुसुरुबिन्दसंज्ञकस्य दशरात्रस्य यः प्रथमस्त्र्यहः "अग्नि-ष्टोमास्त्रिवृतस्त्रय' इति ( २३।५।१९ ) । स एवात्र भवति ॥ १ ॥

तत्र विशेषमाह—

**उक्थ्यौ तूत्तरौ ॥ २ ॥**

अत्र कौसुरुबिन्दे त्र्यहे उत्तरौ = द्वितीयतृतीयौ उक्थ्यसंस्थौ भवतः ॥ २ ॥

**षोडशिदशमा उक्थ्याः ॥ ३ ॥**

ततस्त्र्यहात्परे षोडशी दशमो येषां ते उक्थ्याः स्युः ॥ ३ ॥

**पृष्ठ्यं चाभितो द्वादश द्वादश ॥ ४ ॥**

अस्मादेव वचनादत्रैकः पृष्ठ्यः षडहः कार्यः । तस्य पुरस्तादुपरिष्टाच्च द्वादश द्वादशोक्थ्याः स्युः ॥ ४ ॥

**वर्गान्तरेष्वतिरात्राः ॥ ५ ॥**

अत्र ताण्ड्ये ( २४।११ ) त्र्यह-नवोक्थ्य-द्वादशोक्थ्य-पृष्ठ्य-द्वादशोक्थ्या इति पञ्चवर्गा उक्ताः, तेषां चत्वार्यन्तराणि । तेषु चत्वारोऽतिरात्राः कर्त्तव्याः । ततश्चायं क्रमः । प्रायणीयः १, कौसुरुबिन्दस्त्र्यहः २–४, अतिरात्रः ५, नवोक्थ्याः ६–१४, एकः षोडशी १५, अतिरात्रः १६, द्वादशोक्थ्याः १७–२८, अतिरात्रः २९, पृष्ठ्यः ३०–३५, अतिरात्रः ३५, द्वादशोक्थ्याः ३७–४८, उदयनीय ४९ इति ( तां० २४।११।१ ) ॥ ५ ॥

[ द्वितीयमेकान्नपञ्चाशत्सुत्यं सत्रम् ]

**यमातिरात्रम् ॥ ६ ॥**

द्वितीयस्यैकान्नपञ्चाशद्रात्रस्य संज्ञेयम् । व्याख्यास्यत इति सूत्रशेषः ॥ ६ ॥

**अभिप्लवौ गोऽआयुषीऽ अतिरात्रावभिप्लवावभिजिद्विश्वजितावतिरात्रा-वभिप्लवः, सर्वस्तोम-नवसप्तदशावतिरात्रौ ॥ ७ ॥**

यमातिरात्रे प्रायणीयादनन्तरमभिप्लवौ द्वौ २-१३, ततो गो आयुषी अतिरात्रसंस्थौ १४–१५, ततो द्वावभिप्लवौ १६-२७, ततोऽभिजिद्विश्वजितावतिरात्रसंस्थौ, २८–२९ तत एको ऽभिप्लवः, ३०–३५ ततः सर्वस्तोम-नवसप्तदशसंज्ञकावतिरात्रौ ३६-३७, ततो दशरात्रः ३८–४७, ततो महाव्रतम् ४८, उदयनीय ४९ इति (ताण्ड्य० २४।१२।१)॥ ७ ॥

[ तृतीयमेकान्नपञ्चाशत्सुत्यं सत्रम् ]

**आञ्जनाभ्यञ्जनीयेऽभिप्लवाः षट् ॥ ८ ॥**

आञ्जनाभ्यञ्जनीयसंज्ञके तृतीये एकान्नपञ्चाशद्रात्रे प्रायणीयादनन्तरं षडभिप्लवाः स्युः ॥ ८ ॥

तत्र विशेषः—

**चतुर्भ्यः सर्वस्तोमोऽतिरात्रः ॥९॥**

षण्णामभिप्लवानां मध्ये चतुरोऽभिप्लवाननुष्ठाय ततः सर्वस्तोममतिरात्रं कृत्वा ततोऽवशिष्टौ द्वावभिप्लवावनुतिष्ठेत् । तेनायं क्रमः—प्रायणीयः १, चत्वारोऽभिप्लवाः २–२५, सर्वस्तोमोऽतिरात्रः २६, द्वावभिप्लवौ २७–३८, दशरात्रः ३९–४८, उदयनीय ४९ इति ( ताण्ड्य० २४।१३।१ ) ॥ ९ ॥

**तस्मिन्नुपसत्सु सर्पिर्विपचेयुर्गार्हपत्ये गुग्गुलु-सुगन्धितेजन-पीतदारुभिः ॥ १० ॥**

तस्मिन्नाञ्जनाभ्यञ्जनीये उपसत्सु अनुष्ठीयमानासु दीक्षिता गार्हपत्ये गुग्गुलु—सुगन्धितेजन—पीतदारुभिः सह पृथक् पृथक् सर्पिः पचेयुः ॥ १० ॥

**यथासवनं तैः सवनेष्वाञ्जनाभ्यञ्जने कुर्वीरन्नाग्नीध्रेऽहरहः ॥ ११ ॥**

अहरहः = सर्वेषु एकान्नपञ्चाशत्सङ्ख्येष्वप्यहःसु आग्नीध्रे = अग्नीधो गृहे आग्नीध्रशालायाम् तैः = गौग्गुलवादिभिस्त्रिभिः सर्पिर्भिः सवनक्रमेण दीक्षिता अक्ष्णोरञ्जनम्, अभ्यञ्जनं शरीरस्य कुर्वीरन् ॥ ११ ॥

**पृष्ठ्ये वा ॥ १२ ॥**

अथवा पृष्ठ्ये षडहे एवाञ्जनाभ्यञ्जने कार्ये, न प्रतिदिनम् ॥ १२ ॥

**सवनमुखीयेषु भक्षयिष्यन्तो वा ॥ १३ ॥**

अथवा सवनमुखभवेषु प्रस्थितयागचमसेषु ( ९।१२।३ ) भक्षयिष्यन्तः = तद्भक्षणात्पूर्वं सर्वेषु सवनेष्वाञ्जनाभ्यञ्जने कुर्युः ॥ १३ ॥

**य आत्मानं नैव जानीरंस्तेषामेतत् ॥ १४ ॥**

जानातिरन्तर्भावितण्यर्थः । ये विद्वत्सभासु स्वात्मानं अख्यापयितुमशक्तास्तेषामेतत्सत्रेऽधिकारः ॥ १४ ॥

[ चतुर्थमेकान्नपञ्चाशत्सुत्यं सत्रम् ]

**संवत्सरसंमिते चतुर्विंशमहोऽभिप्लवाश्चत्वारो गोऽआयुषी त्रिभ्यो विषुवन्मध्यो नवरात्रः ॥ १५ ॥**

संवत्सरसंमितसंज्ञे चतुर्थे एकान्नपञ्चाशद्रात्रे प्रायणीयादनन्तरं चतुर्विंशमहः स्यात् । ततोऽभिप्लवाश्चत्वारः षडहाः, तत आयुस्ततो गौः (पञ्चविंशब्रा० २४।१४) । तत्र चतुर्णामभिप्लवानां त्रिभ्यो विषुवन्मध्यः । तेनादौ प्रायणीयः १, ततश्चतुर्विंशमहः २, त्रयोऽभिप्लवाः ३-२०, नवरात्रः २१-२९, अभिप्लवः ३०-३५, आयुः ३६, गौः ३७, दशरात्रः ३८-४७, महाव्रतम् ४८, उदयनीय ४९ इति ( ताण्ड्य० २४।१४।१ ) ॥ १५ ॥

**मध्ये त्रिभ्योऽभिप्लवेभ्यः परो विषुवन्मध्यो गवामयनिको नवरात्रः ॥ १६ ॥**

[ एकषष्टिसुत्याकं सत्रम् ]

**एकषष्टिरात्रे पृष्ठ्यो नवरात्रमभितः ॥ १७ ॥**

एकषष्टिरात्रे नवरात्रस्य पुरस्तादुपरिष्टाच्च पृष्ठ्यः स्यात् ॥ १७ ॥

**प्रतिलोमः परः ॥ १८ ॥**

तयोः पृष्ठ्ययोर्मध्ये नवरात्रादनन्तरं क्रियमाणः पृष्ठ्यः प्रतिलोमः = त्रयस्त्रिंशारम्भणः स्यात्। अन्यत्सर्वं संवत्सरसंमितेन समानम्। अत्राह्नां क्रमः—प्रायणीयः १, चतुर्विंशमहः २, त्रयोऽभिप्लवाः ३-२०, पृष्ठ्यः २१-२६, नवरात्रः २७-३५, प्रतिलोमः पृष्ठ्यः ३६-४१, अभिप्लवः ४२-४७, आयुः ४८, गौः ४९, दशरात्रः ५०-५९, महाव्रतम् ६०, उदयनीय ६१ इति ( ताण्ड्य० २४।१८।१ ) ॥ १८ ॥

[ पञ्चममेकान्नपञ्चाशत्सुत्यं सत्रम् ]

**सवितुः ककुभः ॥ १९ ॥**

पञ्चममेकान्नपञ्चाशद्रात्रं सवितुः ककुभ इत्येतन्नाम सत्रमभिधीयते ॥ १९ ॥

**नवरात्राश्चत्वारः ॥ २० ॥**

पञ्चमे एकान्नपञ्चाशद्रात्रे चत्वारो नवरात्रा वक्ष्यमाणाः कार्याः ॥ २० ॥

**अग्निष्टोमाः प्रथम-सप्तमोत्तमा नववर्गाणामुक्थ्या इतरे ॥ २१ ॥**

नववर्गाणां प्रथम-सप्तम-नवमा अग्निष्टोमाः, इतरे द्वितीय-तृतीय-चतुर्थ-पञ्चम-षष्ठाष्टमा उक्थ्याः कर्तव्याः। तत्रायमह्नां क्रमः—प्रायणीयः १, चत्वारो नवरात्राः २-३७, दशरात्रः ३८-४७, महाव्रतम् ४८, उदयनीय ४९ इति ( ताण्ड्य० २४।१५।१ ) ॥ २१ ॥

[ षष्ठसप्तमे एकान्नपञ्चाशद्रात्रे सत्रे ]

**परे षडभिप्लवे ॥ २२ ॥**

परे = पूर्वोक्तात्पञ्चमात्परे द्वे षष्ठसप्तमे एकान्नपञ्चाशद्रात्रे सत्रे षडभिप्लवे स्तः। द्वयोरपि प्रत्येकं षट् षडभिप्लवाः स्युरित्यर्थः ॥ २२ ॥

**पूर्वस्य चतुर्भ्यो व्रतम् ॥ २३ ॥**

षष्ठसप्तयोर्मध्ये प्रथमस्य षष्ठस्यैकान्नपञ्चाशद्रारात्रस्य चतुर्भ्योऽभिप्लवेभ्योऽवस्थितेभ्यः परं महाव्रतमहः स्यात्। प्रायणीयः १, चत्वारोऽभिप्लवाः २-२५, महाव्रतम् २६, अभिप्लवौ २७-३८, दशरात्रः ३९-४८, उदयनीय ४९ इति ( ताण्ड्य० २४।१६।१ ) ॥ २३ ॥

**प्रजातिकामानामेतत् ॥ २४ ॥**

[ शतसुत्याकं सत्रम् ]

**प्रकृतिविहितꣳ शतरात्रं चतुर्दशाभिप्लवं चतुरहश्च ॥ २५ ॥**

शतरात्रं = शतसुत्यं सत्रं प्रकृतिविहितं स्यात्। तत्र चतुर्दशाभिप्लवाः कार्याः, चतुरहश्च। त्रिकद्रुकाः महाव्रतं चेति चतुरहः। तेन प्रायणीयः १, त्रिकद्रुकाः २-४, चतुर्दशाभिप्लवाः ५-८८, दशरात्रः ८९-९८, महाव्रतम् ९९, उदयनीय १०० इति (ताण्ड्य० २४।१७।१) ॥२५॥

**सदो हविर्द्धानानि चक्रीवन्ति ॥ २६ ॥**

शतरात्रे सदो-हविर्द्धानानि मञ्जूषादिवच्चक्रयुक्तानि भवन्ति। यथा पुरुषैः प्रेरितानि चलन्ति तथोपायेन कार्याणि ॥ २६ ॥

अभिप्रयायमभिषुण्वन्ति देशानपरोधेन ॥ २७ ॥

अभिप्रयायम् = अभिप्रयायाभिप्रयाय गत्वा गत्वा सोमाभिषवं कुर्वन्ति देशानपरोधेन = देशस्य = अभिषवदेशस्यानपरोधोऽबाधो देशानपरोधस्तेन। अभिगमनं कृत्वा पश्चात् स्वस्थानमागत्याभिषवः कार्यः। प्रथमेऽहनि यत्र देशे गत्वाऽभिषवः कृतः, द्वितीयादिष्वहःस्वभिप्रयाणे तस्यातिक्रमो न कर्तव्य इत्यर्थः ॥ २७ ॥

अहरहरभिप्लवेषु त्रिकद्रुकेषु वा ॥२८॥

अहरहः = प्रत्यहम् अभिप्रयायमभिषुण्वन्तीत्येतदभिप्लवेष्वेव कर्त्तव्यं, न तद्व्यतिरिक्तेषु दशरात्र-महाव्रत-त्रिकद्रुक-प्रायणीयोदयनीयेषु । अथवा त्रिकद्रुकेष्वेवैतत्, नान्यत्रेति ॥२८॥

अभिप्लवाभ्यासेनाभिपूरणम् ॥२९॥

प्रकृतिविहितानां पूर्वोक्तानां सत्राणामभिप्लवाभ्यासेन पूरणं कर्तव्यम्। यदाऽभिप्लवाभ्यासो न संभवेत् तदा "तस्यादितः पञ्च" ( २४।१।८ ) इत्याद्युपाया आश्रणीयाः ॥२९॥

सकृत्प्रयोगी दशरात्रः ॥३०॥

द्वादशाहिको दशरात्रः ( १२।२।१, १२।२।१९–२०, ) सकृत्प्रयोगी = सत्रमध्ये एकवारमेव प्रयुज्यते ॥३०॥

व्रतवन्ति सर्वजिद्दीक्षाणि ॥३१॥

महाव्रतसंयुक्तानि सत्राणि सर्वजिद्दीक्षाणि भवन्ति। सर्वजिति ये दीक्षापक्षाः पूर्वमुक्ताः ( २२।६।४४-४५ ) तेऽत्राश्रयणीया इत्यर्थः ॥३१॥

सप्तदशरात्रादीनि त्रिꣳशदन्तान्येकऽ एकान्नपञ्चाशद्रात्रे चाष्टादशदीक्षाणि पौर्णमासीप्रक्रमाणि ॥३२॥

एके आचार्याः सप्तदशरात्रादारभ्य त्रिंशद्रात्रपर्यन्तानि चतुर्दशसत्राणि द्वे एकान्नपञ्चाद्रात्रे च ( ये महाव्रतवर्जिते प्रथमतृतीये विश्वृत्याञ्जनाभ्यञ्जनीयसंज्ञे पूर्वमुक्ते २४।२।३८, २४।३।११ ) एतानि अष्टादशदीक्षाणि पौर्णमासीप्रक्रमाणि च स्युरिति मन्यन्ते। एके यथाप्राप्तं मन्यन्ते ॥३२॥

[ शतातिरात्रस्य द्वादशाहप्रकृतित्वं, शताग्निष्टोमस्य शतोक्थ्यस्य च ]

शतातिरात्रेऽहानि शतरात्रसामान्यात् ॥३३॥

शतातिरात्रे शतरात्रस्याहानि स्युः। कुतः ? शतरात्रसामान्यात् = "शतातिरात्रं सत्रमुपेयुः" ( ११।५।५।६ ) इति श्रुतम्। अहानि न श्रुतानि। अतः शतसुत्यत्वसादृश्येन शतरात्रस्य सर्वाण्यहान्यतिरात्रसंस्थानि भवन्ति इति पूर्वपक्षः ॥३३॥

सिद्धान्तयति—

द्वादशाहाद्यं वा तत्प्रकृतेः ॥३४॥

द्वादशाहप्रकृतिकं शतरात्रं भवति, न शतरात्रप्रकृतिकम्। अतोऽत्र द्वादशाहिका एव धर्माः, न शतरात्रधर्माः ॥३४॥

शताग्निष्टोमे शतोक्थ्ये च ॥३५॥

एष एव न्यायः ॥३५॥

आश्विनस्याग्नेयान्ते प्रतिप्रस्थाता व्युत्क्रामतादि कृत्वा मैत्रावरुणाय प्रातरनुवाकमुपाकृत्यान्तर्यामꣳ हुत्वा प्रपीड्य पवित्रं द्रोणकलशे निदधाति ॥३६॥

शतातिरात्रे आश्विनस्य = आश्विनशस्त्रस्य आग्नेयान्ते = आग्नेयसूक्तान्ते पवित्रं = ग्रहग्रहणार्थमुद्गातृभिर्वितितं (९।५।१३) हस्तेन प्रपीड्य नीरसं कृत्वा द्रोणकलशोपरि निदध्यात् ॥ ३६ ॥

सशेषꣳ होतृचमसम् ॥ ३७ ॥

स्थापयेत् ॥ ३७ ॥

तिरोऽह्न्यादि करोति पूर्वस्याह्नः ॥ ३८ ॥

उदिते सूर्ये आश्विनशस्त्रे समाप्तेऽध्वर्युः पूर्वस्याह्नः तिरोऽन्ह्यादि = तिरोऽह्न्यसोमयागादि करोति। तिरोऽह्ने रात्र्यन्तर्हितेऽहनि भवाः सोमास्तिरोऽह्न्याः। आश्विनशस्त्रकयाग सम्बन्धिनः चमसस्थाः सोमाः पूर्वदिननिष्पादित्वात्तिरोऽह्न्या इत्युच्यन्ते। तत्प्रचारादि करोतीत्यर्थः। तिरश्च तदहश्चेति तिरोऽह्नः। रात्र्या अन्तर्हितं व्यवहितमहरिति तदर्थः ॥ ३८॥

ग्रहग्रहणाद्या विप्रुड्ढोमात्कृत्वा ॥ ३९ ॥

पूर्वस्याह्नो यज्ञपुच्छे समाप्ते ऐन्द्रवायवग्रहग्रहणादिकं विप्रुड्ढोमान्तं (९।६।२८) कुर्यात् ॥ ३९ ॥

इति तृतीया कण्डिका ॥ ३ ॥



सवनसन्ततिं जुहोत्यग्निः प्रातःसवन इति ॥१॥

सवनसन्ततिसंज्ञकं होममग्निः प्रातः इति मन्त्रेण (९।३।२१) कुर्यात् (श० ब्रा० ११।५।५।११) ॥ १ ॥

[ संवत्सरप्रभृतिसुत्यानां सत्राणां गवामयनप्रकृतित्वम् ]

संवत्सरप्रभृतीनि गवामयनप्रकृतीनि तद्गुणदर्शनात् ॥ २ ॥

संवत्सरप्रभृतिसुत्यानि सत्राणि गवामयनप्रकृतीनि भवन्ति। कुतः? तद्गुणदर्शनात् = "अथ यत्पृष्ठ्यं षडहमुपयन्ति" "अथ यदभिप्लवꣳ षडहमुपयन्ति" (१२।१।३।१) इत्यादीनां गावामयनिकानां गुणानां तेषु दर्शनात् ॥ २ ॥

[ आदित्यानामयनाभिधं सत्रं संवत्सरसाध्यम् ]

आदित्यानामयनेऽभिप्लवास्त्रिवृत्पञ्चदशस्तोमाः ॥ ३ ॥

आदित्यानामयनसंज्ञके सत्रेऽभिप्लवाः षडहास्त्रिवृत्पञ्चदशस्तोमाः स्युः ॥ ३ ॥

मासाः पृष्ठ्यमध्याः ॥ ४ ॥

पृष्ठ्यो मध्यो येषां ते। गवामयने पृष्ठ्यान्ता मासा उक्ताः (१३।२।३)। इह तु पृष्ठ्यमध्याः कर्तव्याः; द्वावभिप्लवौ, पृष्ठ्यः, द्वावभिप्लवावित्येवंरूपाः ॥ ४ ॥

बृहस्पतिसवोऽभिजित्स्थाने ॥ ५ ॥

"षष्ठे मासेऽभिजिदग्निष्टोमः" (१३।२।५) इत्यस्य स्थाने बृहस्पतिसवः कार्यः ॥ ५ ॥

**इन्द्रस्तोमो विश्वजितः ॥ ६ ॥**

सप्तमे मासे विश्वजितः स्थाने इन्द्रस्तोमः कर्तव्यः ॥ ६ ॥

**विश्वजितः परे ये त्रयोऽभिप्लवास्तेषामुत्तरयोः स्थाने त्रिवृतोऽग्निष्टोमा दश ॥ ७ ॥**

त्रिवृतः = त्रिवृत्स्तोमकाः ॥ ७ ॥

**उद्भिद्बलभिदौ च ॥८॥**

दशभ्योऽग्निष्टोमेभ्यः परावुद्भिद्बलभिदौ स्याताम् ॥ ८ ॥

**षष्ठमासादौ मध्यमस्थाने पृष्ठ्यः ॥ ९ ॥**

षष्ठमासस्यादौ ये त्रयोऽभिप्लवा गवामयने उक्ताः ( १३।२।४ ) तेषां मध्ये मध्यमाभिप्लवस्थाने पृष्ठ्यः षडहः स्यात् ॥ ९ ॥

**दशरात्रस्य छन्दोमदशाहः ॥१०॥**

द्वादशाहिकदशरात्रस्य स्थाने छन्दोमदशाहः ( २३।५।२८-२९ ) कर्तव्यः । तत्रायं क्रमः । प्रायणीयः १, चतुर्विंशमहः २, द्वावभिप्लवौ ३-१४, पृष्ठ्यः १५-२०, द्वावभिप्लवौ २१-३२, एवं प्रथमो मासः । एवमेव द्वितीय-तृतीय चतुर्थ पञ्चमाः । षष्ठे त्रयोऽभिप्लवाः १-१८, पृष्ठ्यः १९-२४, बृहस्पतिसवः २५, स्वरसामानस्त्रयः २६-२८, विषुवान् ( तां० २५।२ ) ॥१०॥

[ अङ्गिरसामयननामकं सत्रं संवत्सरसाध्यम् ]

**अङ्गिरसामयनमादित्यानामयनवत् ॥ ११ ॥**

तत्र विशेषमाह—

**अभिप्लवास्त्रिवृतः ॥१२॥**

त्रिवृत्स्तोमकाः ॥ १२ ॥

**मासाः पृष्ठ्याद्यः पूर्वपक्षे, प्रतिलोमाः परे ॥ १३ ॥**

संवत्सरसाध्ये सत्रे षण्मासाः पूर्वः पक्षः, षण्मासा उत्तरः पक्ष इत्युक्तम् ( १२।१।१ ) तत्र पूर्वपक्षे ये मासाः ते पृष्ठ्य आदिर्येषां तथाविधाः स्युः । परे मासाः प्रतिलोमाः पृष्ठ्यान्ताः स्युः ॥१३॥

**योऽभिप्लवमध्ये पृष्ठ्य उत्तमः सः ॥ १४ ॥**

मध्यमाभिप्लवस्थाने यः पृष्ठ्य उक्तः ( २४।५।९ ) सोऽत्रादित्यानामयने उत्तरपक्षे उत्तमः कार्यः ॥ १४ ॥

**गोऽआयुषी प्रतिलोमे छन्दोमदशाहश्च ॥१५॥**

एते प्रतिलोमा अनुष्ठेयाः ॥ १५ ॥

[ दृतिवातवतोरयनाख्यं सत्रं संवत्सरसाध्यम् ]

**दृतिवातवतोरयनमेकैकेन पृष्ठ्यस्तोमेन मासं मासम् ॥१६॥**

दृतिवातवतोरयनमिति सत्रस्य संज्ञा । तत्र एकैकेन पृष्ठ्यस्तोमेन मासं मासं नयेत् । त्रिवृत्पञ्चदश सप्तदशैकविंश-त्रिणव-त्रयस्त्रिंशस्तोमान् प्रथमादिषु षट्सु मासेषु क्रमेण प्रति दिनमनुतिष्ठेत् । त्रिवृदादिभिरेकाहैर्मासं मासं नयेदित्यर्थः ( ताण्ड्य० २५।३ ) ॥ १६ ॥

[ द्वतिवातवतोरयने प्रतिमासं प्रकृतिप्राप्तानामह्नामनुष्ठानम् ]

अत्रेदं सन्दिह्यते—किं पृष्ठ्यस्तोमशब्देन त्रिवृदादय एकाहा अभिधीयन्ते उत पृष्ठ्यस्य षडहस्य संबन्धिनस्त्रिवृदादय स्तोमा इति। किं चातः। यद्येकाहाभिधानम्, एकैकेन त्रिवृदादिना एकाहेन मासस्य पूरणं कर्तव्यम्। अथ पृष्ठ्यस्य स्तोमानामभिधानम्, तदा चोदक प्राप्तेषु गावामयनिकेषु नानाविधेष्वहःसु त्रिवृदादेः स्तोममात्रस्य विधानमिति। किं तावत्प्राप्तम्। सूत्रेणैव पूर्वपक्षयति—

**एकाहास्तच्छब्दात् ॥ १७ ॥**

अत्र पृष्ठ्यस्तोमशब्देन त्रिवृदादय एकाहा एवाभिधीयन्ते। कुतः ? तच्छब्दात्। तेषां शब्दस्तच्छब्दस्तस्मात्। "त्रिवृता मासम्" इत्यादिना ( ताण्ड्य० २५।३। ) त्रिवृदादय एकाहवाचकाः शब्दा यतः ॥१७॥

सिद्धान्तयति—

**नानाहानि वा संघातशब्दात् ॥१८॥**

वाशब्दः पक्षं व्यावर्त्तयति। द्वतिवातवतोरयनस्य एकैकस्मिन् मासे नानाऽहानि भवन्ति ( यानि प्रकृतितः प्राप्तानि )। तेष्वेव त्रिवृदादिस्तोमविधानम्। न तु त्रिवृदादिना एकैकेनैकाहेन मासपूरणम्। कुतः ? संघातशब्दात्। यतस्त्रिवृदादयः संघातवाचकाः शब्दाः स्तोत्रियासंख्यावाचकाः। अतो मुख्यया वृत्त्या स्तोत्रियासंघवाचिनः। गौण्या वृत्त्या त्वेकाहेषु वर्तन्ते। त्रिवृत्स्तोमयोगस्त्रिवृदिति। "गौणमुख्ययोश्च मुख्ये संप्रत्यय" इति न्यायात्त्रिवृदादि शब्दाः पृष्ठ्यसंबन्धिनां स्तोमानां वाचकाः ॥१८॥

**मध्ये व्रतम् ॥१९॥**

पक्षद्वयमध्यं विषुवदह इत्युक्तम् ( १३।१।१ )। तत्र विषुवतः स्थाने महाव्रतं स्यात् ॥ १९ ॥

**उत्तरपक्षं प्रतिलोमम् ॥२०॥**

पूर्वपक्षस्य प्रातिलोम्येनोत्तरपक्षमनुतिष्ठेत्। पूर्वपक्षे त्रिवृदादय स्तोमा उक्ताः। उत्तरपक्षे तु त्रयस्त्रिंश-त्रिणवादयः कार्या इत्यर्थः ॥ २० ॥

[ कुण्डपायिनामयनं संवत्सरसाध्यम् ]

**कुण्डपायिनामयनं पौर्णमासीदीक्षम् ॥२१॥**

**चतुर्थ्यां वाऽपरपक्षस्य ॥२२॥**

फाल्गुनापरपक्षस्य वेति विकल्पः ॥२२॥

**मासं दीक्षाः ॥२३॥**

कुण्डपायिनामयने भवन्ति ॥२३॥

**सोममुपनह्य सुत्यास्थानेषु मासमग्निहोत्रं जुह्वति ॥२४॥**

मासपूर्तिपर्यन्तं नित्याग्निहोत्रधर्मकं कर्मान्तरमिदं कर्तव्यम्। तच्च प्रातःकाले तन्त्रेण कालैक्यात्कर्तव्यम्। अत्र प्रधानाहुती भेदेन। अङ्गानि तन्त्रेण। अग्निहोत्रं च सायारम्भं प्रातरपवर्गमित्युक्तम् ( ४।१५।१ ) ॥२४॥

**दर्शपूर्णमासाभ्यां मासम् ॥२५॥**

नयेयुः ॥२५॥

**पक्षादौ यद्यद्धविस्तत्सर्वस्मिन् ॥२६॥**

पक्षादौ = प्रतिपदि यद्यद्धविस्तदेव सर्वस्मिन्पक्षे स्यात्। सकले शुक्ले दर्शेष्टिः, सकले कृष्णे पौर्णमासेष्टिरित्यर्थः ॥२६॥

**सारस्वते च प्रथमे ॥२७॥**

**तन्त्रेण वा समस्तचोदितत्वात् ॥२८॥**

वाशब्दः पक्षं व्यावर्तयति। तन्त्रेणैव दर्शपूर्णमासावनुतिष्ठेत्, न पक्षभेदेन। कुतः? समस्तचोदितत्वात् = समस्तयोरेव दर्शपूर्णमासयोः प्रत्यहं मासपर्यन्तं विहितत्वात्। सारस्वते तु पक्षभेदेनैव। तत्र तथैव विधानात् ॥२८॥

**अग्निहोत्रं च ॥२९॥**

तन्त्रेणैवानुष्ठेयम्, न तु नित्याग्निहोत्रवत्सायं प्रातः पृथक् पृथगिति ॥२९॥

**पृथङ् मासाश्चातुर्मास्यपर्वभिः ॥३०॥**

वैश्वदेवेन मासम्, वरुणप्रघासैर्मासम्; शुनासीरीयेण मासमित्येवं चतुरो मासान्नयेत ( ताण्ड्य० २५।४ ) ॥३०॥

**साकमेधा दर्शपूर्णमासवत् ॥ ३१ ॥**

तन्त्रेणेत्युक्तो न्यायः ॥ ३१ ॥

**सोमा वा सामान्यात् ॥ ३२ ॥**

एतेऽग्निहोत्रादयः सोमा वा भवन्ति। कुतः? सामान्यात्। सत्रं हि सोमयागैः पूरणीयम् ॥ ३२ ॥

**न जुहोतिशब्दात् ॥ ३३ ॥**

नैतदेवं सोमा इति। कुतः? जुहोतिशब्दात् = "मासमग्निहोत्रं जुहोति" इत्यत्र जुहोतिः श्रूयते। न च जुहोतिः सोमयागेषु प्रसिद्धः। तस्मान्न सोमाः ॥ ३३ ॥

**काममितरे ॥३४॥**

इतरे दर्शपूर्णमासादयः कामं सोमा भवन्तु इति चेत् नेत्युच्यते। यतो दर्शपूर्णमासादयः शब्दा निरुपपदा अत्र श्रूयन्ते, न चातुर्मास्यसोम-दर्शपूर्णमाससोमा इत्येवं सोपपदाः। अतस्तेऽपि न सोमाः ॥ ३४ ॥

एवं षण्मासाः परिपूर्णाः। अथोत्तरेषु षट्सु मासेष्वहान्याह—

**दृतिवातवतोरयनपूर्वपक्षेण षण्मासान् ॥ ३५ ॥**

दृतिवातवतोरयनस्य (तां० २५।३।१) पूर्वेण पक्षेणोत्तरान् षण्मासान् नयेयुः ॥ ३५ ॥

तत्र विशेषः—

**उत्तमे त्र्योऽभिप्लवा दशरात्रो महाव्रतम् ॥ ३६ ॥**

उत्तमे द्वादशे मासि ॥ ३६ ॥

**उपरिष्टादतिरात्रं भवति ॥ ३७ ॥**

अन्ते उदयनीयातिरात्र एकः कार्यो, ( १२।१।६ ) न प्रायणीयोऽतिरात्र आदौ कर्तव्यः ॥ ३७ ॥

उभयतो वा ॥ ३८ ॥

अतिरात्रो भवति । सत्रत्वात् । अतो विकल्पः ॥ ३८ ॥

हविर्यज्ञेभ्योऽतिरात्रमेके सोमानन्तर्यात् ॥ ३९ ॥

उभयतोऽतिरात्रपक्षे प्रायणीयमतिरात्रमेके आचार्या हविर्यज्ञेभ्योऽग्निहोत्र-दर्शपूर्णमास-चातुर्मास्येभ्यः परं कुर्वन्ति । एवं हि सर्वेषां सोमयागानामानन्तर्यमव्यवधानं कृतं स्यात् । इतरथा हविर्यज्ञैर्व्यवधानं स्यात् । एके तन्नेच्छन्ति । यतः प्रकृतौ प्रायणीयस्याग्नीषोमीयोत्तरकालता दृष्टा । इहापि च तद्वदेवानुष्ठानं युक्तम् । तस्माद्धविर्यज्ञेभ्यः पूर्व एव प्रायणीयः ॥ ३९ ॥

अत्सरुकाः कुण्डप्रतिरूपाश्चमसाः ॥ ४० ॥

"अत्सरुका = अवृन्ता मूलज्ञापकचिन्हदण्डरहिताः कुण्डप्रतिरूपाः कुण्डाकारा वृत्ताश्च भवन्ति ॥ ४० ॥

पञ्चर्त्विजस्त्रीणि त्रीणि कर्माणि कुर्युः ॥४१॥

वक्ष्यमाणाः पञ्चर्त्विजो वक्ष्यमाणानि कर्माणि कुर्युः ॥ ४१ ॥

होताऽऽध्वर्यव-पात्रीये च ॥ ४२ ॥

चशब्दाद्धौत्रं च ॥ ४२ ॥

उद्गाता नेष्टृच्छावाकीये ॥ ४३ ॥

मैत्रावरुणो ब्रह्मत्वप्रतिहर्त्रे ॥ ४४ ॥

प्रस्तोता ब्राह्मणाच्छꣳसि-ग्रावस्तोत्रीये ॥ ४५ ॥

प्रतिप्रस्थाताऽऽग्नीध्रोन्नेत्रे ॥ ४६ ॥

मुख्यासनेभ्योऽनुसर्पꣳसर्पमितराणि ॥ ४७ ॥

मुख्यासनेभ्यः = स्वस्थानेभ्योऽनुसर्पम् = अनुसृत्य गत्वा गत्वा इतराणि = तत्तदृत्विक्सम्बन्धीनि कर्माणि कुर्युर्न स्वस्थानस्थिता एव ॥ ४७ ॥

सर्पसत्रं व्यत्यासं विराट् कौसुरुबिन्दुद्वितीयं च ॥ ४८ ॥

सर्पसत्रमुच्यते । तत्र पूर्वं प्रायणीयः, ततो द्वन्द्वसोमानां द्वितीयो (२२।१०।१०) विराडेकाहोऽग्निष्टोमसंस्थः, तथा कौसुरुबिन्दस्य यद् द्वितीयं "त्रिवृदग्निष्टोमः (२३।५।१९–२०) । एतदहर्द्वयं व्यत्यस्य व्यत्यस्य प्रयुञ्जानः सर्वं सत्रं पूरयेत् ॥ ४८ ॥

गवामयनं वाऽभिगरश्रुतेः ॥ ४९ ॥

गवामयनमेव वा भवति । कुतः ? "षण्ड-कुषण्डावभिगरा पगरौ" (ताण्ड्य० २५।१५) इति श्रवणात् । अपगरापगरौ च गवामयने दृष्टौ (१३।३।४) । तेन गवामयनं भवति ॥ ४९ ॥

इति चतुर्थी कण्डिका ॥ ४ ॥



[ तापश्चिताख्यं सत्रं त्रिसंवत्सरसाध्यम् ]

**तापश्चिनं दीक्षाः संवत्सरमुपसदश्च तथा सुत्याः ॥१॥**

तापश्चितं नाम सत्रम्। तत्र संवत्सरं दीक्षाः, उपसदः, सुत्याश्च स्युः ॥१॥

**गवामयनेनेयुः ॥२॥**

गवामयनेनैव तापश्चितं कुर्युः। गवामयनमेवाविकृतं कर्तव्यमित्यर्थः ॥२॥

**अग्निष्टोमेन वा ॥३॥**

ईयुः। अग्निष्टोमेन ज्योतिष्टोमसंस्थेन वा पूरणं कर्तव्यमित्यर्थः ॥३॥

**सर्वजिदभिजिद्विश्वजितां वैकैकेन ॥४॥**

त्रयाणां मध्ये एकैकेन पूरणं कर्तव्यम् ॥४॥

**त्रिकद्रुकैर्वा ॥५॥**

अथवा समुदितैस्त्रिकद्रुकैर्ज्योतिर्गौरायुर्भिस्तापश्चितस्य पूरणं कर्तव्यम् ॥५॥

[ महातापश्चिताख्यं सत्रं त्रिसंवत्सरसाध्यम् ]

**महातापश्चिनं त्रिषंवत्सरोपसत्कम् ॥६॥**

महातापश्चिते सत्रे त्रीणि वर्षाण्युपसदः स्युः ॥६॥

**तुल्यमन्यत् ॥७॥**

अन्यत्सर्वं तापश्चितेन समानं स्यात् ॥७॥

[ क्षुल्लकतापश्चिनं सत्रं मासचतुष्टयसाध्यम् ]

**क्षुल्लकतापश्चिते चतुर्मासशो दीक्षोपसत्सुत्यानि ॥८॥**

चतुर्भिर्मासैर्दीक्षादयः कार्याः ॥८॥

**विषुवन्तमभितो गवामयनपक्षयोः प्रथमोत्तमौ प्रथमोत्तमौ ॥९॥**

विषुवतः पुरस्तादुपरिष्टाच्च गवामयनस्य पूर्वोत्तरयोः पक्षयोः प्रथमोत्तमौ मासौ भवतः। मध्ये विषुवान्। तेनैवं सिद्धम्। प्रायणीयः १, चतुर्विंशमहः २, चत्वारोऽभिप्लवाः २-२६, पृष्ठ्यः २७-३२ एवं प्रथमो मासः। त्रयोऽभिप्लवाः १-१८, पृष्ठ्यः १९-२४, अभिजिद-ग्निष्टोमः २५, त्रयः स्वरसामानः २६-२८ एवं द्वितीयः। विषुवान् १, त्रयः स्वरसामानः १-३, विश्वजित् ४ पृष्ठ्यः प्रतिलोमः ५-१० त्रयोऽभिप्लवाः ११-२८, एवं तृतीयः। चतुर्थे मासे १-१८ त्रयोऽभिप्लवाः, गो आयुषी १९-२०, दशरात्रः २१-३०, महाव्रतम् ३१, उदयनीय ३२ इति ॥९॥

[ अग्निसत्राख्यं सत्रं सहस्रसुत्यम् ]

**सहस्रसाव्यमग्नेः ॥१०॥**

अग्नेः सत्रं नाम सहस्रसाव्यं = सहस्रसुत्यं सत्रं स्यात् ( तां० २५।९ ) ॥१०॥

**अभिप्लवानां चतुःषष्टं शतं चतुरहश्च ॥११॥**

सहस्रसाव्ये सत्रे चतुःषष्ट्या अधिकं शतमभिप्लवानां भवति, चतुरहश्च = त्रिकद्रुका महाव्रतं चेत्यर्थः। तत्रायं क्रमः-प्रायणीयः १, त्रिकद्रुकाः २-४, चतुःषष्टं शतमभिप्लवाः ५-९८८, दशरात्रः ९८९-९९८, महाव्रतम् ९९९, उदयनीय १००० इति ॥११॥

**त्रिषंवत्सरꣳ षष्टिदीक्षम् ॥१२॥**

त्रिषंवत्सरं नाम सत्रं षष्टिदीक्षं स्यात् ॥१२॥

**यथाशक्ति वा ॥१३॥**

दीक्षास्त्रिषंवत्सरे स्युः ॥१३॥

**आदितस्त्रयः संवत्सराः सौत्याः ॥१४॥**

अस्मिन् सत्रे आदितः = प्रथमाद्गवामयनादारभ्य त्रयः संवत्सराः सौत्याः = सुत्याहानि स्युः ॥१४॥

**महासत्राण्यतः ॥१५॥**

अभिधीयन्ते । द्वादशसंवत्सरं-षट्त्रिंशत्संवत्सरं-शतसंवत्सरं-सहस्रसंवत्सरमिति चत्वारि सत्राणि महासत्राणि ॥१५॥

[ चतुर्णां सत्राणां साधारणो धर्मः ]

**चतुर्भागं चतुर्भागमेकैकस्य ज्यौतिष्टोमिकैः स्तोमैः ॥१६॥**

एकैकस्य द्वादशसंवत्सरादेश्चतुर्थभागं = चतुर्थभागं ज्यौतिष्टोमिकैः स्तोमैः = त्रिवृत्पञ्चदश-सप्तदशैकविंशैः पूरयेयुः । द्वादशसंवत्सराणां चतुर्थो भागस्त्रयः संवत्सराः, ते त्रिवृत्स्तोमेन पूरणीयाः । ततस्त्रयः संवत्सराः पञ्चदशेन, ततस्त्रय एकविंशेनेति ॥१६॥

**तेष्वतिरात्र-विषुवन्तः स्युर्वा न वा ॥ १७ ॥**

तेषु महासत्रेषु अतिरात्रौ = प्रायणीयादनीयौ विषुवांश्च, एते त्रयोऽपि प्रतिसंवत्सरं स्युः, न वा स्युः ॥ १७ ॥

पक्षान्तरमाह—

**आद्यन्तयोर्वाऽतिरात्रौ विषुवांश्च मध्ये मध्ये ॥ १८ ॥**

वाऽवधारणे । आद्यन्तयोरेवातिरात्रौ भवतः, सत्रस्यैकत्वात् । विषुवांश्च प्रतिसंवत्सरं मध्ये मध्ये भवति । संवत्सरसंयोगेन तस्य श्रुतत्वात् ॥ १८ ॥

[ प्रजापतिसत्रं द्वादशसंवत्सरसाध्यम् ]

**द्वादशसंवत्सरं प्रजापतेः ॥ १९ ॥**

प्रजापतिसत्रमितिनामकं सत्रं स्यात् । तत्र च द्वादशसंवत्सरं सुत्याः कार्याः ( ताण्ड्य० २५।६ ) ॥ १९ ॥

[ शाक्त्यानामयनाख्यं सत्रं षट्त्रिंशत्संवत्सरसाध्यम् ]

**षट्त्रिꣳशत्संवत्सरꣳ शाक्त्यानां तरसमयाः पुरोडाशाः ॥२०॥**

शाक्त्यानामयनमिति सत्रनाम । तत्र षट्त्रिंशतसंवत्सरं सुत्या भवन्ति (ताण्ड्य० २५।६) तत्र तरसमयाः = मृगयाहतमृगमांसमयाः पुरोडाशाः कार्याः । "सꣳस्थितेऽहनि गृहपतिर्मृगयां याति तत्र यान्मृगान् हन्ति तेषां तरसमयाः पुरोडाशा भवन्ति" ॥२०॥

**सर्वत्राविशेषात् ॥ २१ ॥**

अत्र सर्वत्र दीक्षणीया-प्रायणीयाऽऽतिथ्या-पशुपुरोडाश-सवनीयादयः पुरोडाशास्तरसमयाः कार्याः । अविशेषश्रुतेः ॥ २१ ॥

**सवनीया वा बहुश्रुतेः ॥ २२ ॥**

वाशब्दः पक्षं व्यावर्तयति । सवनीया एव तरसमया भवन्ति न सर्वत्र । पुरोडाशा इति बहुत्वश्रवणात् । अत्र मांसस्य पेषणे धान्यमसीत्यत्र तरसमसीत्यूहः कार्यो, न तु मृगोऽसीत्युक्तं प्राक् ( २५।६ ) ॥ २२ ॥

[ साध्यानामयनसत्रं शतसंवत्सरसाध्यम् । ]

**शतसंवत्सरꣳ साध्यानाम् ॥ २३ ॥**

साध्यानामयनं नाम सत्रम् । तत्र शतसंवत्सरं सुत्याः कार्याः ( तां० २५।८ ) ॥२३॥

विश्वसृजामयनं सहस्रसंवत्सरसाध्यम् ]

**सहस्रसंवत्सरं विश्वसृजाम् ॥ २४ ॥**

विश्वसृजामयनमिति सत्रस्य संज्ञा । तत्र सहस्रं सुत्याः कार्याः । (ताण्ड्य० २५।१८) संवत्सरशब्दो गौण्या वृत्त्याऽहर्वाचक इत्युक्तम् ( १।६।२५ ) ॥ २४ ॥

[ सारस्वतसत्राणां निरूपणम् ]

**यात्सत्राणि सारस्वतानि ॥ २५ ॥**

सारस्वतसत्राणि, यात्सत्राणि इति वा त्रयाणां सत्राणां संज्ञा ( तां० २५।१० ) । यात्वा यात्वा क्रियन्त इति वा । यान्ति च तानि सत्राणि इति चेति देवयाज्ञिकाः ॥ २५ ॥

**सदो-हविर्द्धानाग्नीध्राणि चक्रीवन्ति ॥ २६ ॥**

सारस्वतसत्रेषु सद-आदीनि चक्रीवन्ति-शकटादिवत् पुरुषादिभिः प्रेरितान्येव देशान्तरं यथा प्रचलन्ति तथा कार्याणि । एतच्च पत्नीशालाया अप्युपलक्षणम् । साऽपि चक्रीवती भवति । अन्यथा प्रदेशान्तरे गमनं न स्यात् ॥ २६ ॥

**उलूखलबुध्नो यूपः प्रकृष्यः ॥ २७ ॥**

उलूखलस्येव बुध्नो = मूलं यस्य तादृशो विपुलमूलः स्थिरासनो यूपोऽत्र कर्तव्यः । स च देशान्तरनयने प्रकृष्यः = प्रकर्षणीयो भूमिसंलग्न एव प्रेरणीयो, न तूत्थाप्य नेयो, नापि निखनीयः ॥ २७ ॥

**वत्सतरीशतमृषभाधिकं गर्भिणीनामुत्सृजन्ति सहस्रपूरणाय ॥ २८ ॥**

सत्रारम्भकाले ऋषभेणाधिकं गर्भिणीनां प्रथमगर्भिणीनां = वत्सरीणां शतं सहस्रपूरणायारण्ये उत्सृजेयुः । ताश्च वर्धमानाः क्षिप्रं सहस्रं सम्पद्यन्ते ॥ २८ ॥

**उपकिरन्त्युपरवस्थानेषु न खनन्ति ॥ २९ ॥**

उपरवसंज्ञकगर्ताः पूर्वमुक्ताः ( ८।४।२६ ) । तानुपरवान् अत्र उपकिरन्ति = आलेखनमात्रमेव कुर्वन्ति, मृदश्च तत्र क्षिपन्ति, न तु खनन्ति ॥ २९ ॥

**शुक्लपक्षसप्तम्यां दीक्षा सरस्वतीविनशने ॥ ३० ॥**

चैत्रशुक्लसप्तम्यां तिथौ सरस्वतीविनशने सारस्वतसत्रार्थं दीक्षा स्यात् । सरस्वती समुद्रसङ्गमः प्रभासः सरस्वतीविनशनमिति याज्ञिकाः । यत्र सरस्वती अन्तर्भवति तद्विनशनमित्यग्निस्वामी ( लाट्या० १०।१५।१ ) । यत्र सरस्वती भूम्यन्तर्निमग्ना प्रवहति तद्विनशनमिति माधवाचार्याः ॥ ३० ॥

[ प्रथमं सारस्वतसत्रम् ]

द्वादशाहवद्दीक्षोपसदः ॥३१॥

अत्र द्वादशाहवद् ( २।२।१४ ) द्वादशदीक्षा द्वादशोपसदश्च भवन्ति ॥३१॥

अषोडशिकावतिरात्रौ ॥३२॥

अत्र प्रायणीयोदयनीयावषोडशिकौ स्याताम् ॥३२॥

तत्रैव प्रायणीयोऽतिरात्रः ॥३३॥

तत्रैव = सरस्वतीविनशन एव ॥३३॥

सान्नाय्यं च तस्मिन् ॥३४॥

अतिरात्रे समाप्ते सान्नाय्यमपि सरस्वतीविनशने एव कर्तव्यम् ॥३४॥

सꣳस्थितेऽध्वर्युराहवनीयसमीपे स्थित्वाऽभ्यध्वरꣳ० शम्यां प्रास्यति तद्गार्हपत्यस्य स्थानम् ॥३५॥

संस्थिते = सान्नाय्येष्टौ समाप्तायां स्थित्वा = पूर्वस्यां दिशि पूर्वाभिमुखः स्थित्वा अभ्यध्वं मार्गाभिमुखं शम्यां प्रास्यति = बलाद् दूरे प्रक्षिपति तद् गार्हपत्यस्थानम् ॥३५॥

यथोक्तमाहवनीयस्य ॥३६॥

आहवनीयस्य यथा प्रकृतावुक्तं ( ८।३।७-८ ) तथा स्थानं कार्यम् ॥३६॥

इति पञ्चमी कण्डिका ॥ ५ ॥



यथास्थितं यज्ञाङ्गानि हरन्ति ॥ १ ॥

यज्ञाङ्गानि = शाला-सदो-हविर्धानाग्नीध्रीयादीनि यथास्थितं = यत्र स्थितानि यावन्मात्रेऽन्तराले यादृशान्यवस्थितानि तथाविधान्येव प्रेरणया वेदिं प्रति हरन्ति ॥ १ ॥

पाꣳसूनादाय भौमानां यथादेशं निवपन्ति ॥ २ ॥

भौमानां = भूमिमयानां यज्ञाङ्गानां वेदि-खर-धिष्ण्योत्तरवेदीनां पांसून् पात्रान्तरेणादाय देवयजनान्तरे वेदिमध्ये यथादेशं = यथास्थानम् उत्तरवेदिदेशे उत्तरवेदिपांसून् धिष्ण्यदेशे धिष्ण्यपांसून् निवपेयुः ॥ २ ॥

यजनीययोरह्नोर्गोऽआयुषी ॥ ३ ॥

यजनीययोरह्नोः प्रतिपदोरुभयोर्यथाक्रमं गोऽआयुषी उक्थ्यसंस्थौ भवतः । गौरुक्थः पौर्णमास्याम्, अमायामुक्थ्य इति ॥ ३ ॥

पर्वान्तरेषु दर्शपूर्णमासौ ॥ ४ ॥

पर्वणोरन्तरालेषु दर्शपूर्णमासौ भवतः । शुक्लपक्षे प्रत्यहं दर्शयागः । कृष्णपक्षे प्रत्यहं पौर्णमासयाग इति ॥ ४ ॥

शम्याप्रासे शम्याप्रासे वसन्तो यजमानाश्च यन्ति दक्षिणेन तीरेण ॥ ५ ॥

शम्याप्रासे = दृष्ट्यनन्तरमेव देशान्तरं गत्वा तत्र वासः, प्रातरिष्ट्यन्ते पुनः शम्याप्रासादि ॥ ५ ॥

**दृषद्वत्यप्यये ऽपोनप्त्रियश्चरुः ॥ ६ ॥**

एवं दक्षिणेन तीरेण प्रतिदिनं शम्याप्रासे वसतां यदा सरस्वतीदृषद्वत्योः सङ्गम आयाति तदाऽपां नपाद्देवताकश्चरुर्जलातिक्रमदोषपरिहारार्थं कर्तव्यः ॥ ६ ॥

**अग्नये कामायेष्टिः प्लक्षे प्रास्रवणे ॥ ७ ॥**

एकेनाहोरात्रेण यावन्तमध्वानं गच्छति तावानेक आश्वीनः । चतुश्चत्वारिंशदाश्वीनानि सरस्वत्या विनशनात्प्लक्षः प्रास्रवणः ( ताण्ड्य० २५।१०।२२ ) । तत्र प्रास्रवणे = सरस्वत्या उत्पत्तिस्थाने अष्टाकपालेन पुरोडाशेनाग्नये कामायेष्टिः स्यात् ॥ ७ ॥

**तस्यामश्वपुरुष्यौ धेनुके दद्युः ॥ ८ ॥**

अश्वां = वडवां, पुरुषीं = मानुषीं स्त्रियं च, ते उभे धेनुके प्रत्यग्रप्रसूते सापत्ये प्रासर्पकाणां यस्मै कस्मै चिद्दद्युः ॥ ८ ॥

**अवशिष्टं चैके यज्ञोपकरणमुदयनीयान्ते ॥ ९ ॥**

अवशिष्टं घृतधान्यादिकं च दद्यादित्येके वदन्ति ॥ ९ ॥

[ सारस्वतसत्रीयावभृथस्य कारपचवदेशेऽनुष्ठानम् ]

**अवभृथमभ्यवयन्ति यमुनां कारपचवं प्रति ॥ १० ॥**

कारपचवदेशस्थां यमुनां प्राप्यावभृथं कुर्युः ॥ १० ॥

**पुरस्ताद्वाऽवभृथादग्नये कामाय ॥ ११ ॥**

पूर्वोक्ताया इष्टेः ( २४।६।७ ) कालान्तरविधानमेतत् ॥ ११ ॥

**उदवसानीयान्ते वा ॥ १२ ॥**

अग्नये कामायेष्टिः ॥ १२ ॥

**यथार्थं विप्रव्रजेयुः ॥ १३ ॥**

यजमानाः स्वस्वकार्यार्थं गच्छेयुः । इदं सत्रं समाप्तम् ॥ १३ ॥

**अपृष्ठशमनानि सारस्वतानि ॥ १४ ॥**

सारस्वतसत्राणि पृष्ठशमनीयवर्जितानि ( १३।४।६ ) स्युः ॥ १४ ॥

[ सारस्वतसत्रस्य साम्युत्थाने हेतुत्रयम् ]

**त्रीण्येषाᳫँ साम्युत्थानान्यतिरात्रैः सहस्रपूरण-गृहपतिमरण-सर्वज्यान्यः ॥ १५ ॥**

पूर्वं सत्रारम्भकाले यद् वत्सतरीणां गर्भिणीनां शतमृषभेणाधिकं सहस्रपूरणार्थमुत्सृष्टं, ( २४।५।२८ ) तत्र यदा तासां तत्प्रसूतानां च प्रसवैर्गवां सहस्रस्य पूरणं भवति, तथा यदा गृहपतेर्मरणं भवति, तथा सर्वासां गवां हानिर्भवति, एतानि त्रीणि एषां दीक्षितानां साम्युत्थानानि = अर्द्धसमाप्तसत्रपरित्यागकारणानि । तत्र एतेषु सहस्रपूरणादिषु अतिरात्रैर्वक्ष्यमाणैर्गवादिभिरिष्ट्वा साम्युत्थानं = प्लक्षप्रास्रवणात्प्रागेव सत्रसमापनं कुर्युः ( ताण्ड्य० २५।१० ) ॥ १५ ॥

**सहस्रपूरणे गौः ॥ १६ ॥**

गवां सहस्रपूरणे यदा साम्युत्थानं क्रियते तदा गौर्नाम क्रतुरतिरात्रसंस्थः स्यात् ॥ १६ ॥

**तदेव दत्वा ॥१७॥**

तत्र गवि अतिरात्रे तदेव = गवां सहस्रं दत्वा साम्युत्तिष्ठेयुः ॥१७॥

**आयुर्गृहपतिमरणे ॥१८॥**

गृहपतिमरणे निमित्ते यदा साम्युत्थानं स्यात् तदा आयुर्नाम क्रतुरतिरात्रसंस्थः कर्तव्यः ॥१८॥

**सर्वज्यान्यां विश्वजित ॥१९॥**

सर्वज्यान्यां = पूर्वमुक्तानां सर्वासां गवां हानौ सत्यां यदा साम्युत्थानं तदाऽतिरात्र-संस्थो विश्वजित्स्यात् ॥१९॥

**ज्योतिष्टोमो वा सर्वेषाम् ॥२०॥**

अथवा पूर्वमुक्तानां सर्वेषां गवादीनां स्थाने ज्योतिष्टोमातिरात्र एवोदयनीयः कर्तव्यो न गवादयः ॥२०॥

[ साम्युत्थानेऽवभृथदेशः ]

**नावभृथꣳ सरस्वत्याम् ॥२१॥**

साम्युत्थाने सति सरस्वत्यामवभृथं न कुर्युः ॥२१॥

**परिपार्श्वेषूदकेषु ॥२२॥**

साम्युत्थाने सरस्वतीपार्श्ववर्तिषु नदीतडागादिष्ववभृथं कुर्युः ॥२२॥

**असत्सूद्धृत्य ततः ॥२३॥**

पार्श्वोदकेष्वसत्सु ततः सरस्वत्या एवोदकमुद्धृत्यावभृथः कार्य ॥२३॥

[ द्वितीयं सारस्वतसत्रम् ]

**द्वितीये दृतिवातवनोरयनस्याहनी त्रिवृत्पञ्चदशस्तोमे पर्वान्तरेषु व्यत्यासम् ॥२४॥**

द्वितीये सारस्वतसत्रे पर्वणोः पौर्णमास्यामावास्ययोरन्तरालेषु शस्याप्रासे दर्शपूर्णमासयोः स्थाने दृतिवातवतोरयनस्य संबन्धिनी त्रिवृत्पञ्चदशस्तोमे अहनी व्यत्यासं भवतः। एकस्मिन्दिने त्रिवृत्, द्वितीये पञ्चदशः, तृतीये त्रिवृत्, चतुर्थे पञ्चदशः, पञ्चमे त्रिवृत्, षष्ठे पञ्चदश इत्येवं पर्वपर्यन्तं व्यत्यासेन त्रिवृत्पञ्चदशौ स्याताम्। तत्रापि त्रिवृदग्निष्टोमसंस्थः, पञ्चदश उक्थ्यसंस्थ इति ॥२४॥

यदा तिथिक्षयवृद्धिवशादेस्मिन् पक्षे समप्रयोगो न सिद्ध्यति तदा किं कार्यमित्याह—

**तयोश्चेदसमासयोरागच्छेद्यजनीयकालस्तमुपेत्य शेषमनु समापयेयुः ॥२५॥**

तयोः = त्रिवृत्पञ्चदशस्तोमयोरसमाप्तयोर्यजनीयकाल आगच्छेत् चेत् ( त्रिवृति कृते पञ्चदशे अकृते इत्यर्थः ) तदा तं यजनीयकालं गामायुर्वा उपेत्य शेषं समापयेयुः। तत पञ्चदशस्तोमादारभ्याग्रिमं पक्षमुपक्रमेयुः ॥२५॥

**शुक्लपक्षश्चेत्त्रिवृदग्निष्टोम इत्येके पञ्चदश उक्थ्यः कृष्णे ॥ २६ ॥**

यदि शुक्लपक्षः तदा सकलेऽपि तस्मिन् त्रिवृदग्निष्टोमः केवलः कार्यः। कृष्णपक्षे सकलेऽपि पञ्चदश उक्थ्यः केवलः कार्य इत्येकेषां मतम् ॥ २६ ॥

[ तृतीयं सारस्वतसत्रम् ]

**तृतीये यजनीययोरह्नोरभिजिद्विश्वजितौ ॥ २७ ॥**

तृतीये सारस्वते यजनीययोरह्नोर्गोऽऽयुषोः स्थाने अभिजिद्विश्वजितौ स्याताम् ॥२७॥

**पर्वान्तरेषु त्रिकद्रुकाः ॥ २८ ॥**

पर्वणोर्दर्शपूर्णमासयोरन्तरालेषु शम्याप्रासे दर्शपूर्णमासयोः स्थाने त्रिकद्रुका उभयोः पक्षयोः कर्तव्याः ॥ २८ ॥

**पूर्ववदनुसमापनम् ॥ २९ ॥**

अत्रापि तिथिवृद्धिक्षयावशात् त्रिकद्रुकेष्वसमाप्तेषु यजनीयकाले समागते पूर्ववत् अनुसमापनं कर्तव्यम् = त्रिकद्रुकशेषेणोत्तरपक्षे प्रारम्भः कार्य इत्यर्थः ॥ २९ ॥

[ चतुर्थं सारस्वतसत्रम् ]

**दार्षद्वतमृत्विगाचार्ययोरन्यतरस्य गा रक्षेत्संवत्सरम् ॥ ३० ॥**

दार्षद्वतं नाम सत्रम् । तत्रारण्ये तृणाद्याशयितुं गाः पालयेत् ॥ ३० ॥

**अपरं व्यर्णे नैतन्धवेऽग्निमिन्धीत ॥३१॥**

अपरं द्वितीयं संवत्सरं व्यर्णे = विगतोदके नैतन्धवे = सरस्वत्यां वर्तमाने ह्रदे अग्निं लौकिकं काष्ठादिभिरिन्धीत ॥ ३१ ॥

**कुरुक्षेत्रे परिणह्स्थलेऽग्न्याधेयमन्वारम्भणीयान्तं भवति ॥ ३२ ॥**

ततस्तृतीये संवत्सरे परीणत्संज्ञके स्थले ॥ ३२ ॥

**दर्शपूर्णमासान्तं वा ॥ ३३ ॥**

वाशब्दः पक्षं व्यावर्तयति । दर्शपूर्णमासान्तमेव भवति, नान्वारम्भणीयान्तम् ॥३३॥

**आहिताग्निश्चेद् व्यर्णेऽग्निहोत्रमेव जुहुयात् ॥३४॥**

यदि पूर्वमेव कृतश्रौताग्न्याधानः स्यात् तदा व्यर्णे नैतन्धवेऽग्निहोत्रमेव संवत्सरं जुहुयात् । एवकारेण ततोऽन्यत्प्रागुक्तमग्नीन्धनं वार्यते । गोरक्षणं तु भवत्येव ॥३४॥

**पुरोडाशोऽग्नये तेन यजमानः पूर्ववत् ॥३५॥**

अग्नयेऽष्टाकपालः पुरोडाशः प्रत्यहं स्यात् । तेन पुरोडाशेन यागं कुर्वन् पूर्ववच्छम्याप्रासे ( २४।५।२५ ) दृषद्वतीतीरेण दक्षिणेन गच्छेत् ॥३५॥

**एत्य च दृषद्वतीतीरेणावभृथमभ्यवयन्ति यमुनां त्रिप्लक्षावहरणं प्रति ॥३६॥**

दृषद्वत्या नद्या दक्षिणेन तीरेण तस्या नद्या उत्पत्तिस्थानमागत्य त्रिप्लक्षावहरणदेशस्थां यमुनां प्राप्यावभृथं कुर्यात् ॥३६॥

**स्वयमेव सामगानम् ॥३७॥**

दार्षद्वतावभृथे ॥३७॥

**आप्लवनमात्रं वा ॥३८॥**

भवति, नावभृथ इति विकल्पः ॥३८॥

**उदेत्यैतयैवेष्ट्या यजेत ॥३९॥**

अवभृथादागत्य सत्रं समाप्य एतयैवाग्नेय्या इष्ट्या यजेत ॥३९॥

**पशुना वा तद्देवतेन ॥४०॥**

अग्निदेवतेन यजेत ॥४०॥

**अग्निष्टोमेन वा ॥४१॥**

इति षष्ठी कण्डिका ॥ ६ ॥

[ तुरायणं सत्रम् ]

**तुरायणं वैशाखीशुक्लस्य पञ्चम्याम् ॥ १॥**

**चैत्रस्य वा ॥ २ ॥**

**प्रातराहुत्यन्तेऽदीक्षितो दीक्षारूपाण्यासजते तूष्णीं कृष्णाजिनादीनि ॥ ३ ॥**

अदीक्षितो = दीक्षासंस्कारैरसंस्कृत एव दीक्षारूपाणि = कृष्णाजिन मेखला-दण्ड-कृष्णविषाणादीनि तूष्णीं यथास्थानं स्वयमेव संबध्नीयात् ॥ ३ ॥

**हवीᳬषि निर्वपत्याग्नेयमैन्द्रं वैश्वदेवं चरुᳬ सवनकालेष्वेकैकम् ॥४॥**

सवनकालेषु = प्रातर्मध्यान्हापराह्णेषु आग्नेयमष्टाकपालम्, ऐन्द्रमेकादशकपालम्, वैश्वदेवं चरुं क्रमेण निर्वपेत् ॥ ४ ॥

**तन्त्रेण वा ॥ ५ ॥**

वाशब्दः पक्षं व्यावर्तयति । आग्नेयादीनि त्रीणि हवींषि कालैक्यात्तन्त्रेणैव कुर्यात्, न सवनकालेषु ॥ ५ ॥

**अन्वहम् ॥ ६ ॥**

प्रत्यहमेकैकं वा हविर्निर्वपेत् । अत्र कर्कमते वाशब्दोऽध्याह्रियते । देवयाज्ञिकास्तु वा इत्येवं सूत्रमभिप्रयन्ति ॥ ६ ॥

**वा हविः शेषभक्षः ॥ ७ ॥**

वा प्राकृताशनः ॥ ७ ॥

**संवत्सरं यजते ॥ ८ ॥**

एवमुक्तेन प्रकारेण वर्षपूर्तिपर्यन्तमेतत्प्रत्यहं कुर्यात् ॥ ८ ॥

**अनियतोदकं दार्षद्वतवदवभृथादि ॥ ९ ॥**

अत्रावभृथादि दार्षद्वतवत् स्यात् । वतिना "स्वयमेव सामगानमाप्लवनमात्रं वोदेत्यैतयैवेष्टया यजेत" (२४।६।४०-४२) इत्यादि गृह्यते । अत्रावभृथे उदकनियमो नास्ति । यत्रेच्छा भवति तत्र कर्तव्यः ॥ ९ ॥

[ द्वादशाहाः ]

**द्वादशाहविकल्पाः ॥१०॥**

अभिधीयन्ते ॥ १० ॥

[ प्रथमो भरतद्वादशाहः ]

**सर्वाग्निष्टोमो भरतद्वादशाहः ॥ ११ ॥**

भरतद्वादशाहे दशरात्रस्य स्थाने दशाप्यग्निष्टोमाः स्युः । उपान्त्यौ प्रायणीयोदयनीयौ त्वतिरात्रावेव । "उभयतोऽतिरात्रꣳ सत्रम्" ( १२।१।७ ) इत्युक्तत्वात् ॥ ११ ॥

[ द्वितीयः संक्रमद्वादशाहः ]

**संक्रमद्वादशाहे दशरात्रस्य त्र्यहप्रथमानि प्रथमस्त्र्यहः ॥ १२ ॥**

संक्रमद्वादशाहसंज्ञके सत्रेऽहान्यभिधीयन्ते । द्वादशाहिकस्य दशरात्रस्य दशमवर्जितानि नवाहानि त्रेधा विभज्य त्रयस्त्र्यहाः कर्तव्याः । तेषां त्रयाणामपि त्र्यहानां यानि प्रथमान्यहानि तैरत्र प्रथमस्त्र्यहः स्यात् । तेन प्रथमे त्र्यहे पृष्ठ्यस्य प्रथमं चतुर्थं छन्दोमानां प्रथमं चेति सिद्धमिति देवयाज्ञिकाः ॥ १२ ॥

**त्र्यहद्वितीयानि द्वितीयस्त्र्यहस्त्र्यहतृतीयानि तृतीयस्त्र्यहः ॥ १३ ॥**

त्रयाणां त्र्यहाणां यानि द्वितीयान्यहानि तैरत्र द्वितीयस्त्र्यहः । त्रयाणां त्र्यहानां यानि तृतीयान्यहानि तैरत्र तृतीयस्त्र्यहः ॥ १३ ॥

**प्रकृत्या दशमम् ॥ १४ ॥**

दशममहः प्रकृत्या "अविवाक्यं दशमम्" ( १२।३।२० ) इत्युक्तमेव स्यात् ॥ १४ ॥

**अग्निष्टुदिन्द्रस्तुत्सूर्यस्तुद्वैश्वदेवस्तुतां वैकैकेन ॥ १५ ॥**

एषामेकैकेन वा दशरात्रस्य पूरणं विधेयम् । केवलेनाग्निष्टुता, अथवा केवलेनेन्द्रस्तुता, अथवा सूर्यस्तुता, अथवा वैश्वदेवस्तुतेति ॥ १५ ॥

**त्रिकद्रुकैर्वाऽहीनैकाहानां वैकैकेनाप्तोर्याम-राजसूयवर्जम् ॥ १६ ॥**

अथवा त्रिकद्रुकैर्ज्योतिर्गोरायुर्भिः समुदितैरेवाभ्यस्तैर्दशरात्रस्य पूरणम् । अथवा अहीनाश्च एकाहाश्च अहीनैकाहाः तेषां मध्ये एकैकेनाहीनेन द्व्यहादिना पौण्डरीकान्तेन ( २२।२-५ ) अभ्यस्तेन, एकैकेन भूरादिना एकाहेन च दशकृत्वोऽभ्यस्तेन दशरात्रं पूरयेयुः । एकाहानां मध्ये अप्तोर्यामेण राजसूयाहोभिश्च दशरात्रस्य पूरणं न भवति ॥ १६ ॥

**गोऽआयुभ्यां वा ॥ १७ ॥**

आभ्यां मिलिताभ्यां पञ्चवारमावृत्ताभ्याम्, एकैकेन वा दशरात्रस्य पूरणं कर्तव्यम् ॥ १७ ॥

**अभ्यासानुपपत्तौ ज्योतिष्टोमः पूरणः ॥ १८ ॥**

त्रिकद्रुकैरनेकाहैश्च दशरात्रस्य पूरणे क्रियमाणे यदा तेषामभ्यासो नोपपद्यते तदा ज्योतिष्टोमो दशरात्रस्यावशिष्टानामह्नां पूरणः स्यात् ( १ ) ॥ १८ ॥

---

( १ ) यथा—त्रिकद्रुकैस्त्रिरावृत्तैर्नवाहानि पूर्यन्ते । अथैकमहर्दशरात्रस्य परिशिष्यते । तत्र त्रिकद्रुकाभ्यासो न संभवति । अधिकसंख्याप्रसङ्गात् । अतो दशमो ज्योतिष्टोमः पूरणो भवति । एवमहीनेन त्र्यहेण पूरणेऽपि ज्ञेयम् । चतुरहेण यदा द्विरावृत्तेन पूरणं क्रियते तदा नवमदशमौ ज्योतिष्टोमौ । यदा षडहेन तदा सप्तमादयश्चत्वारो ज्योतिष्टोमाः । यदा सप्ताहेन तदा त्रयः, यदाऽष्टाहेन तदा द्वौ, त्र्यहे यदा नवरात्रेण, तदैक इति ।

[ द्वादशाहविकल्पे प्रकारान्तरम् ]

**यथोक्तस्य स्तोत्रꣳ, स्तोत्रियं, वचँ वा, साम वा, यजुर्वाऽहर्वाऽन्यत्कृत्वा यजेत ॥ १९ ॥**

यथोक्तस्य द्वादशाहस्य स्तोत्रमेकमन्यत्कुर्यात् । अथवा स्तोत्रं तावदेव, एकां स्तोत्रिया मृचमन्यां कुर्यात् । अथवा शस्त्रादौ एकामृचमन्यां कुर्यात् । अथवा एकं साम अन्यत्कुर्यात् । अथवा ग्रहग्रहणादौ एकं यजुरन्यत्कुर्यात् । अथवा यथोक्तानामेकमहोऽन्यत्कुर्यात् ॥ १९ ॥

**व्यत्यासमन्ततः ॥ २० ॥**

प्रागुक्तं स्तोत्रादीनां विपर्यासमन्ततो = दशरात्रस्यान्तिमे = दशमेऽहनि कुर्यात्, न ततः प्राक् नवस्वहःसु ॥ २० ॥

**नास्त्येषामन्तः ॥ २१ ॥**

एवंविधानां द्वादशाहविकल्पानामन्तो न विद्यते । दिङ्मात्रमिह प्रदर्शित माचार्येण ॥ २१ ॥

**अयनमुत्सर्गिणां गवामयनविकल्पाः ॥ २२ ॥**

उत्सर्गिणामयनमुच्यते । तत्र गवामयनविकल्पाः प्रथममभिधीयन्ते ॥ २२ ॥

**पञ्चोक्थ्यांस्त्रीनभिप्लवानुपेत्य चतुर्थं चतुरुक्थ्यमुपयन्ति ॥ २३ ॥**

**स्तोमोत्सर्गो वैकस्याह्नः ॥ २४ ॥**

अथवा संवत्सरमध्ये एकस्य कस्य चिदह्नः स्तोमोत्सर्गः = त्रिवृदादेर्विहितस्य स्तोम-स्योत्सर्गः स्यात् ॥ २४ ॥

**पशोर्वा सवनविधिक्रिया ॥ २५ ॥**

अथवा पशोरेव सवनविधिना क्रियाऽनुष्ठानं भवति । पशुरेव केवलस्तस्मिन्नहन्य-नुष्ठीयते न ग्रहस्तोत्रशस्त्रादिकमित्यर्थः ॥ २५ ॥

**अनारम्भो वा ॥ २६ ॥**

अथवा एकस्य कस्य चिदह्नोऽनारंभोऽकरणमेव स्यात् ॥ २६ ॥

**तापश्चितविकल्पः ॥ २७ ॥**

व्याख्यायते ॥ २७ ॥

**अयमेव प्रायणीयोऽतिरात्रः सर्वꣳ० सत्रꣳ स्याद्यथोक्तपृष्ठः ॥२८॥**

अयं द्वादशाहिको ज्योतिष्टोमोऽतिरात्रः प्रायणीयसंज्ञक एव सर्वं सत्रं स्यात् । संव त्सरपर्यन्तमयमेव सर्वेषामह्नां स्थाने स्यादित्यर्थः । स च यथोक्तपृष्ठः स्यात् ॥ २८ ॥

**अथापरम् ॥ २९ ॥**

अपरम् = उक्तादन्यद्विकल्पान्तरं तापश्चितस्याभिधीयते ॥ २९ ॥

**ज्योतिष्टोमाश्चत्वारोऽभिजित्तैः षण्मासान् ॥ ३० ॥**

चत्वारो ज्योतिष्टोमाः, एकोऽभिजित्, एतैरेवंविधैः पञ्चभिरहोभिः प्रतिवारं षड्वार-मावृत्तैः पूर्वपक्षषण्मासान्पूरयेत् ॥ ३० ॥

**व्रतं विषुवत्स्थाने ॥ ३१ ॥**

मध्ये विषुवतः स्थाने महाव्रतं भवति ॥ ३१ ॥

**विश्वजिज्ज्योतिष्टोमाश्चत्वारस्तैरुत्तमान् ॥ ३२ ॥**

विश्वजित् , चत्वारो ज्योतिष्टोमाः, एवंविधैः पञ्चभिरहोभिः प्रतिमासं षड्वारमावृत्तैर्विषुवतः परान् षण्मासान्नयेत् ॥ ३२ ॥

**एतत्पुरुषस्य नारायणस्योत्तमम् ॥ ३३ ॥**

एतदन्तिमं सत्रं नारायणपुरुषसत्रमितिसंज्ञकं स्यात् ॥ ३३ ॥

इति सप्तमी कण्डिका ॥ ७ ॥

इति विद्याधरशर्मकृतायां कात्यायनश्रौतसूत्रवृत्तौ सत्रनिरूपणात्मकश्चतुर्विंशोऽध्यायः ।

---

# पञ्चविंशोऽध्यायः ।

## प्रायश्चित्तनिरूपणम् ।

[ कर्मणो विनाशे तत्कालमेव प्रायश्चित्तानुष्ठानम् ]

**कर्मोपपाते प्रायश्चित्तं तत्कालम् ॥१॥**

अकरणं, न्यूनकरणम् , अतिरिक्तकरणम्, अयथाकरणम् इत्येवं चतुर्विधे कर्मण उपपाते विनाशे सति यस्मिन्काले विहितकर्मणोऽन्यथाभावो जायते तदैव तदन्यथाभाव निमित्तं प्रायश्चित्तं कुर्यात् न कर्मसमाप्तौ । भिन्ने जुहोति, स्कन्ने जुहोतीति निमित्तसप्तमी । नैमित्तिकस्य च निमित्तकालता न्याय्या ॥ १ ॥

अन्तरा पूर्वपक्षयति—

**चोदना वाऽकालशब्दात् ॥२॥**

भिन्ने जुहोतीत्यादिकं नैमित्तिकस्य विधानमात्रमेव, न स्कन्दनादिकालविशिष्टनैमित्तिकविधिः । कुतः ? अकालशब्दात् । न ह्यत्र कालवाचकः शब्दोऽस्ति । स्कन्दनकाले भेदनकाले इत्येवम् । तेनागन्तूनामन्तेऽभिनिवेशो भवतीति न्यायेन कर्मणोऽन्ते नैमित्तिकं विधेयम् ॥२॥

सिद्धान्तयति—

**कालो वा प्रत्ययात् ॥३॥**

कालो = निमित्तकाल एव नैमित्तिकस्य स्यात् । कुतः ? प्रत्ययात् = प्रतीयते हि निमित्तकालता नैमित्तिकस्य । यतः प्राक् निमित्तान्नैमित्तिकं न भवति । निमित्ते जाते नैमित्तिकं भवति । तेन निमित्तकालतैव नैमित्तिकस्य । अपुरुषसंबद्धोपपाते जनमरण-गेहदाहादौ तु न तत्कालनियमः ॥ ३ ॥

[ अथानादिष्टप्रायश्चित्तम् । तत्र हौत्रिकाध्वर्यवौद्गात्रेषूपपातेषु चतुर्गृहीतेन क्रमेण व्याहृतिहोमः, सकृद्गृहीतेन सर्वप्रायश्चित्तहोमश्च सर्वत्र ]

**महाव्याहृतिहोमोऽनादेशे ॥४॥**

कर्मोपपात इति सर्वत्रानुवर्त्तते । यत्र निमित्तिमुद्दिश्य नैमित्तिकं नोक्तं तत्र महाव्याहृतिभिर्होमो नैमित्तिको ब्रह्मकर्तृको ( २५ ।१४।३५ ) भवेत् ॥४॥

[ आग्वैदिके हौत्रादिकर्मभ्रंषे प्रा० ]

**हौत्रिके भूरिति गार्हपत्ये ॥५॥**

हौत्रिके = ऋग्वेदविहितकर्मणो विनाशे नैमित्तिकान्तरस्यानादेशे ॐ भूः स्वाहेति चतुर्गृहीतं ब्रह्मा जुहुयात् । अग्निहोत्रादौ ब्रह्मणोऽभावे यजमानः । सब्रह्मके कर्मणि ब्रह्मवरणात्प्राङ् निमित्ते जाते ब्रह्माणं समन्त्रकं वृत्वा तेन होमः कारयितव्यः । अब्रह्मके तु अध्वर्य्वादिरेव कर्ता । सोमे च कालाहुतिभिरस्य समुच्चयः । उभयोरप्यादिष्टत्वात् । अत्राग्निर्देवता ॥५॥

[ याजुर्वैदिकाध्वर्य्वादिकर्मभ्रंषे प्रा० ]

**दक्षिणाग्नावाध्वर्यवे भुव इति ॥६॥**

अध्वर्युवेदविहितोपपाते ॐ भुवः स्वाहेति दक्षिणाग्नौ जुहुयात् ॥ ६ ॥

[ सोमयागे याजुर्वैदिकाध्वर्य्वादिकर्मभ्रंषे प्रा० ]

**आग्नीध्रीये सोमे ॥७॥**

सोमयागे यजुर्वेदविहितकर्मणो विनाशे भुवः स्वाहेत्याग्नीध्रीये जुहुयात्। आग्नीध्रीयोत्पत्तेः प्राग्दक्षिणाग्नावेव। न तदर्थमाग्नीध्रीयोत्पत्तिः। अत्र वायुर्देवता ॥७॥

[ सामवैदिकौद्गात्रादिकर्मभ्रंषे प्रा० ]

**स्वरित्यौद्गात्र आहवनीये ॥८॥**

सामवेदविहितकर्मणो विनाशेऽनादेशे स्वः स्वाहेति। अत्र सूर्यो देवता ॥८॥

[ उक्तस्य व्याहृतिहोमस्य चतुर्गृहीतत्वम् ]

**चतुर्गृहीतान्येतानि सर्वत्र ॥९॥**

एतान्याज्यानि भूः स्वाहेत्याद्युक्तहोमेषु चतुर्गृहीतानि भवेयुः। सर्वत्र ग्रहणम् "अविज्ञाते प्रतिमहाव्याहृतीत्येवमर्थम्। होमश्च पूर्णाहुतिधर्मेण। स्रुक्स्रुवयोः संस्कारः। स्रुगग्निहोत्रहवणी। आज्यमप्यन्यदेव ग्राह्यं, नान्यार्थं संस्कृतम्। होमोऽयमाहववनीये ॥९॥

[ उक्तेषु निमित्तेषु व्याहृतिहोमानन्तरं सर्वप्रायश्चित्तहोमश्च ]

**सर्वप्रायश्चित्तं च पञ्चभिः प्रत्यृचम् ॥१०॥**

हौत्रिकाध्वर्यवौद्गात्रेषूपपातेषु व्याहृतिहोमानन्तरं सर्वप्रायश्चित्तसंज्ञकं होमं सकृद्गृहीतेनाहवनीये वक्ष्यमाणाभिः पञ्चभिर्ऋग्भिः प्रत्यृचं जुहुयात् ॥१०॥

तदेवाह—

**"त्वन्नोऽअग्ने इति द्वाभ्याम ( २१।३।४.) याश्चाग्नेऽस्यनभिशस्तिपाश्च सत्यमित्वमयाऽ असि। अया नो यज्ञं वहास्यया नो धेहि भेषजꣳ स्वाहा, ये ते शतं वरुण ये सहस्रं यं यज्ञियाः पाशा वितता महान्तः। तेभिर्नोऽअद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहोदुत्तममिति च ( १२।१२ ) ॥११॥**

एतदाहुतिपञ्चकं सर्वप्रायश्चित्तसंज्ञम् ॥११॥

[ स्मार्त्तस्य कर्मणो विनाशे प्रा० ]

**अविज्ञाते प्रतिमहाव्याहृति सर्वाभिश्चतुर्थꣳ सर्वप्रायश्चित्तं च ॥१२॥**

अविज्ञातं स्मार्तं कर्मोच्यते। नहि तज्ज्ञायते किमार्ग्वैदिकं याजुर्वैदिकं सामवैदिकमिति। तथा यज्ञोपवीतिना बद्धशिखिना पवित्रपाणिनेत्येवमादि च। तदपचारे प्रतिमहाव्याहृति हुत्वा सर्वाभिर्व्याहृतिभिश्चतुर्थीं, सर्वप्रायश्चित्तं चेत्याहुतिनवकमाहवनीये जुहुयात्। आवसथ्यकर्मण्यपचारेऽपीदमेव प्रायश्चित्तम् (१) ॥ १२ ॥

---

(१) पितृयज्ञे च यज्ञोपवीतित्वावसरे निमित्ते जाते नैमित्तिकहोमोऽपि यज्ञोपवीतिना कार्यः। प्राचीनावीतित्वावसरे तु प्राचीनावीतिना। पितृयज्ञे भुव इति त्वस्य इत्यादिहोमश्च दक्षिणाग्नावेव, "दक्षिणाग्निराहवनीयवत्" ( ५।८।६ ) इति सूत्रेणाहवनीयकार्यस्य दक्षिणाग्नौ विधानात्। अवभृथे चाप्स्वेव सर्वप्रायश्चित्तहोमः। शनत्क्रिये च परिश्रित्सु। त्र्यम्बकेषु चतुष्पथाग्नौ। भुव इति होमस्तु अवभृथादौ दक्षिणाग्नावेव।)

[ आदिष्टप्रायश्चित्तम् । तत्र अग्निहोत्रकर्मप्रायश्चित्तानि । आदौ अग्निहोत्रार्थं दुह्यमानाया गोरुपवेशने प्रायश्चित्तद्वयम् ]

**अग्निहोत्री चेद्दुह्यमानोपविशेद्यजुषोत्थापनमेकऽ "उदस्थादेव्यदितिरायुर्यज्ञप तावधादिन्द्राय कृण्वती भागं मित्राय वरुणाय चेति ॥ १३ ॥**

अग्निहोत्रशब्देनाग्निहोत्रसाधनं पयोऽभिधीयते। तद्यस्यां गवि विद्यते सेयमग्निहोत्रिणी इति प्राप्ते इनिप्रत्ययलोपश्छान्दसः। सा गौर्दुह्यमाना सती उपवेशनं कुर्याद्यदि, तदा तस्या उपविष्टाया गोरेके उदस्थादिति यजुषा उत्थापनमिच्छन्ति ( १२।४।१।६ ) ॥ १३ ॥

**दुग्ध्वा ब्राह्मणायैनां दद्याद्यमनभ्यागमिष्यन्त्स्यात् ॥ १४ ॥**

तां गामुत्थाप्य दुग्ध्वा तस्मै ब्राह्मणाय दद्यात् यं ब्राह्मणं यजमानोऽभ्यागमिष्यन्न स्यात्। यः पुनर्यजमानगृहे नागच्छतीत्यर्थः।

यस्य गृहे कार्यार्थमपि यजमानो गमिष्यन्न भवेत्तस्मै दद्यादिति याज्ञिकाः। 'द्वेष्याय दद्यादिति शाङ्खायनः। ततोऽग्निहोत्रहोम इत्येकः पक्षः ॥ १४ ॥

[ द्वितीयः पक्षः ]

**दण्डेन वाऽनुपिष्योत्थाप्य वा दोहनम् ॥ १५ ॥**

अथवा दण्डेन जघनप्रदेशे ताडयित्वा तूष्णीमेवोत्थाप्याग्निहोत्रार्थं दुहीत ॥१५॥

अस्मिन्पक्षे विशेषमाह—

**अदानं च ॥ १६ ॥**

दण्डेनोत्थापिताया गोर्दानं च न कार्यम् ॥ १६ ॥

**अदुह्यमानायामन्याम् ॥ १७ ॥**

दुहीत। प्रस्तुताया गोरदोहे सत्युपपातत्वादनादिष्टहोमः प्राप्नोत्यन्यस्या दोहनं च। अतः प्रायश्चित्तव्युदासार्थमिदमुक्तम् ॥ १७ ॥

[ दुह्यमानायाः गोः शब्दकरणे प्रा० ]

**वाश्येत चेत्तृणान्यालुप्य ग्रासयेत्"सूयवसाद् भगवती हि भूया अथो वयं भगवन्तः स्याम। अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्तीति ( ऋ० २।३।२१ ) ॥१८॥**

अग्निहोत्री गौर्दुह्यमाना शब्दं कुर्याच्चेत्तदा तृणान्याच्छिद्य ग्रासयेत् तां भोजयेत्। न तस्तामेव दुग्ध्वा होमः। ( १२।४।१।१२ ) ॥१८॥

इति प्रथमा कण्डिका ॥ १ ॥



**तस्यै पयसा जुहोति ॥ १ ॥**

दोहनकाले शब्दं कृतवत्या गोः पयसा जुहुयात्। प्रायश्चित्तविधानेन दुष्टमेनदिति मत्वा न परित्यजेत् ॥१ ॥

[ रुधिरदोहे प्रा० ]

**लोहितदोहे दक्षिणाग्निं परिश्रित्य व्युत्क्रामतेत्युक्त्वोष्णे भस्मनि रुद्राय हुत्वा पूर्ववद्दानम् ॥ २ ॥**

स्तनेभ्यो लोहितस्रवणे दक्षिणाग्निं कट-वस्त्रादिनाऽऽवृतं कृत्वा व्युत्क्रामतेति प्रैषमुक्त्वा गृह्यजनान् गृहाद्बहिर्निष्काश्य ( १२।४।२।१ ) दक्षिणाग्नेरेवोष्णे भस्मनि दोहनपात्रेणैव लोहितस्य रुद्राय स्वाहेति होमं कृत्वा यमनभ्यागमिष्यन्त्स्यात्तस्मै ( २५।१।१५ )लोहितदोहिनीं गां दद्यात्। ततो गवान्तरपयसाऽग्निहोत्रहोमः ॥ २ ॥

[ गवि स्थितस्य दुह्यमानस्य पयसो दोषे प्रा० ]

**हौम्यं गवि सद्रौद्रम् ॥ ३ ॥**

होमद्रव्यं गवि स्थितमेव ऋषभाक्रमणामेध्यभक्षणादिना यदि दुष्ट भवेत् तदा न दुह्यात्, किन्तु रुद्र एतत्ते पय इत्यतिदेशं कुर्यात् ( ११।५।३।१ )। प्रमादाद्दु दुग्धं चेद्रुद्राय स्वाहेति जुहुयाद्दोहनपात्रेणैव। इत आरभ्य हुतमैन्द्रम् ( २२ ) इत्येतदन्तं सर्वेषु निमित्तेषु विनष्टस्य पयसो होममतिदेशं वा कुर्यात्। होमासंभवे त्वतिदेश एवेति। होमस्त्वन्येन शुद्धेन पयसा कार्यः ॥ ३ ॥

[ वत्से पिबति दुग्धविनाशे प्रा० ]

**उपसृष्टं वायव्यम् ॥ ४ ॥**

वत्सस्य गोस्तनसम्बन्धावसरे गवि स्थितं पयो दुष्येत चेद्वायो एतत्ते पय इत्यतिदिशेत् ॥ ४ ॥

[ दुह्यमाने पयसि विनष्टे प्रा० ]

**दुह्यमानमाश्विनम् ॥ ५ ॥**

स्तनान्निष्काश्यमानं पयो दुष्येत चेत् अश्विभ्यां स्वाहेति होमः, अश्विनावेतत्ते पय इत्यतिदेशो वा। एवमग्रेऽपि होमोऽतिदेशो वा कार्यः। इतः प्रभृति हुतमैन्द्रम् ( २२ ) इत्यन्तस्य अमेध्यमलकेशकीटादिपातादिना विनाशो बोध्यः ॥ ५ ॥

**दुग्धᳬ सौम्यम् ॥ ६ ॥**

अधिश्रयणात्प्राग्दुग्धं पयो विनष्टं चेत्सौम्यं स्यात् ॥ ६ ॥

**अधिश्रितं वारुणम् ॥ ७ ॥**

अग्नावधिश्रितं पयो दुष्टं चेत् वरुणाय स्वाहेति होमोऽतिदेशो वा ॥ ७ ॥

**उदन्तं पौष्णम् ॥ ८ ॥**

तापेन स्थाल्यामूर्ध्वमूर्ध्वं गच्छत् पयो विनष्टं चेत् पूष्णे जुहुयात् ॥ ८ ॥

**विष्यन्दमानं मारुतम् ॥ ९ ॥**

स्थालीतोऽतितापेन पयः स्रंसमानं दुष्येत चेत् मरुद्देवताकं होमं कृत्वाऽन्यनाग्निहोत्रहोमः ॥ ९ ॥

**विन्दुमत्सारस्वतम् ॥ १० ॥**

उपरि जातबुद्बुदं पयो दुष्येत चेत्सरस्वते स्वाहेति ॥ १० ॥

**शान्तं मैत्रम् ॥ ११ ॥॥**

उपशान्तेषु बिन्दुषु दुष्टं चेत् मित्राय स्वाहेति हुत्वाऽन्येनाग्निहोत्रहोमः ॥ ११ ॥

**उद्वास्यमानꣳ सवितुः ॥ १२ ॥**

सवितृदेवत्यं भवति । अन्येनाग्निहोत्रहोमः ॥१२॥

**उद्वासितमदितेः ॥ १३ ॥**

त्रिरुद्वासनोत्तरकालं दुष्टे पयसि अदित्यै हुत्वाऽन्येनाग्निहोत्रं जुहुयात् ॥ १३ ॥

**उन्नीयमानं वैश्वदेवम् ॥ १४ ॥**

अग्निहोत्रहवण्यां स्रुवेणोन्नीयमानं पयो नष्टं चेद्वैश्वदेवं स्यात् ॥ १४ ॥

**उन्नीतं बार्हस्पत्यम् ॥ १५ ॥**

स्रुचि गृहीते पयसि विनष्टे बृहस्पतये स्वाहेति होमः ॥ १५ ॥

**प्रह्रियमाणं धात्रम् ॥ १६ ॥**

आहवनीयं प्रति होमाय नीयमानं पयो धात्रे जुहुयात् ॥ १६ ॥

**प्रहृतं वैश्वकर्मणम् ॥ १७ ॥**

आहवनीयं प्रति नयनायोपक्रान्तं क्रियति मार्गे चालितमर्द्धमार्गात्प्राग्विनष्टं चेद् विश्वकर्मणे स्वाहेति ॥ १७ ॥

**अन्तराग्नी वैश्वानराय ॥ १८ ॥**

गार्हपत्याहवनीययोर्मध्यगतं पयो विनष्टं चेत् वैश्वानराय स्वाहेति होमः ॥ १८ ॥

**उपसन्नं द्यावापृथिव्योः ॥ १९ ॥**

होमाय समीपं प्राप्तं चेद्दुष्यति तदा द्यावापृथिवीभ्यां स्वाहेति ॥ १९ ॥

**पूर्वाहुतिरिन्द्राग्न्योः ॥ २० ॥**

होमात्प्रागग्निनाशे पूर्वाहुतिरिन्द्राग्न्योः संबन्धिनी भवेत् तदा इन्द्राग्निभ्यां स्वाहा, इन्द्राग्नी एतत्ते पय इत्यतिदेशो वा कार्यः । पुनश्चतुर्गृहीतेन पूर्वाहुतिः । सकृद्गृहीतेनेति संप्रदायः ॥ २० ॥

**उत्तरा प्रजापतेः ॥ २१ ॥**

प्रागुत्तराहुतेर्विनष्टं चेत् प्रजापतिसंबन्धिनी उत्तराहुतिः कार्या । पुनश्चतुर्गृहीतेनोत्तराहुतिः । सकृद्गृहीतेनेति सम्प्रदायः ॥ २१ ॥

**हुतमैन्द्रम् ॥ २२ ॥**

होमानन्तरं प्राग्भक्षाद्विनष्टं चेत् इन्द्राय स्वाहेति होमः । दधि-यवाग्वादिद्रव्यहोमपक्षे चैतानि प्रायश्चित्तानि ॥२२॥

**यथाकालोपपाते तद्देवते तद्देवतꣳ हुत्वा तद्वाऽतिदिश्यान्येन जुहुयात् ॥ २३ ॥**

"हौम्यं गवि सद्रौद्रम्" (२५।१।३) इत्यादिसूत्रप्रतिपादिते यस्मिन्यस्मिन्काले दुग्धस्य विनाशस्तदा तत्तद्देवत्यं होमं कृत्वा, रुद्रादिदेवतोद्देशेन गवि स्थितं पयोऽतिदिश्य वा अन्येन शुद्धेन पयसा नित्याग्निहोत्रहोमं कुर्यात् । तण्डुलाज्ययवागूदध्यादिषु होमद्रव्येषु विनष्टेष्वपि अमुक एते ते तण्डुलाः, एतत्ते आज्यम्, एषा ते यवागूः, एतत्ते दधि इत्यादिप्रयोगेण तान्येव प्रायश्चित्तानि यथासंभवं कार्याणि ॥ २३ ॥

[ हविःस्कन्दने प्रा० ]

**स्कन्देच्चेदस्कन्नमधित प्राजनीत्यभिमृश्य शेषेण जुहुयात् ॥ २४ ॥**

अग्निहोत्रार्थं पयः स्थालीतो बहिर्भूमावन्यत्र वा पतेच्चेदभिमृश्य स्थालीस्थेनावशिष्टेनाग्निहोत्रं जुहुयात् ( १२।४।१।७ )। यवाग्वादिसर्वाग्निहोत्रद्रव्यस्कन्दनेऽप्येवम् ॥ २४ ॥

[ स्थालीभेदे तदधोमुखीभावे च प्रा० ]

**भिद्येत चेद्वापद्येत स्कन्नप्रायश्चित्तेनाभिमृश्य व्याहृतिभिश्चाद्भिरुपनिनीय कपालानि भस्मोद्वापे कुर्यात् ॥ २५ ॥**

यदि स्थाली विदीर्येत, अधोमुखी वा भवेत्, तदा स्कन्नं द्रव्यं पूर्वोक्तेन स्कन्नप्रायश्चित्तमन्त्रेणाभिमृश्य, व्याहृतिभिः स्कन्नस्योपरि अप आसिच्य भिन्नस्थालीखण्डानि भस्मराशौ क्षिपेत् ( १२।४।१।८ )। स्थालीभेदे वक्ष्यमाणं "भूमिर्भूमिमगादित्यभि मर्शनं भवति ( २५।५।२९ )। अधोमुखीभावे तूदकासेकान्तमेव। भस्मोद्वापशब्देन प्रत्यहं गार्हपत्यादिखरेभ्यो भस्मोद्धृत्य यो राशिः क्रियते स उच्यते ॥ २५ ॥

[ दर्शपूर्णमासादौ हविषि स्कन्ने प्रा० ]

**"भुवपतय" इति ( २।२ ) हाविर्यज्ञियम् ॥२६॥**

दर्शपूर्णमास-तद्विकारसम्बन्धिपुरोडाश-सान्नाय्य-मांसादिद्रव्यं स्कन्नं चेत् भुवपतय इत्यादिमन्त्रत्रयेण स्पृशेत्। अन्तःपरिधि स्कन्दने नैतत्प्रायश्चित्तम्। दर्शपूर्णमासौ तद्विकाराश्च हविर्यज्ञशब्देनोच्यन्ते ॥२६॥

[ सोमे हविषि स्कन्ने प्रा० ]

**"देवान्दिवमगन्निति ( ८।६० ) सोमे ॥२७॥**

सोमे हाविर्यज्ञियं स्कन्नमभि मृशेत्। देवयाज्ञिकास्तु रसरूपसोमद्रव्यस्कन्दनस्यैवं प्रायश्चित्तम्। सोमे हाविर्यज्ञस्कन्दने तु पूर्वोक्तमेव प्रायश्चित्तम्। तत्र भुवपतय इत्यभिमर्शनात्पूर्वं कालाहुति-वाचने अधिके इत्याहुः। कालाहुतिर्ब्रह्मकर्तृका। शिष्टं त्वध्वर्युकर्तृकम् ॥२७॥

**"ययोरोजसेति (८।५९) वोदकेनोपसिञ्चेत् ॥२८॥**

सोमे एव हाविर्यज्ञियं स्कन्नम्। सोममिति देवयाज्ञिकाः ॥ २८ ॥

[ अग्निहोत्रे हविषि स्कन्ने स्रुग्भेदे च प्रा० ]

**उन्नीतसर्वस्कन्दन-स्रुग्भेदयोस्तत्रैवासनम् ॥२९॥**

अग्निहोत्रार्थं द्रव्ये उन्नीते सति यस्मिन्प्रदेशे सर्वस्याज्यस्य स्कन्दनं स्रुग्भेदनं वा जायते तत्रैवाध्वर्युरुपविशेत् ॥२९॥

ततः किं कर्त्तव्यमित्याह—

**अन्यदुन्नीयान्योऽस्मै प्रयच्छेत्तेन होमः ॥३०॥**

होमकर्तुरन्यः कश्चित्सर्वस्कन्दने तस्यामेव स्रुचि, स्रुग्भेदे चान्यस्यां प्रतपनसंस्कृतायां स्थाल्या आज्यमुन्नीय होमकर्त्रे समर्पयेत् ( १२।४।३।८ )। तेन होमः। अन्येनान्यस्मिन्नुन्नीयमाने उन्नेष्यामीति प्रैषो न भवति ॥३०॥

इति द्वितीया कण्डिका ॥२॥

[ प्रथमाहुत्यनन्तरमाहवनीयानुगमने प्रा० ]

**पूर्वाहुतौ हुतायां चेदाहवनीयोऽनुगच्छेत्तदुक्तम् ॥ १ ॥**

अन्यहोमार्थमाहवनीयमुद्धृत्यानादिष्टं हुत्वा पुनरुद्धृत्योत्तराहुतिः कार्या (१२।४।३।२)। उत्तराहुतेरूर्ध्वमप्यनुगमनेऽप्येवमेव ॥ १ ॥

[ पक्षान्तरम् ]

**काष्ठꣳ हिरण्यं वाऽभिजुहुयाच्छ्रुतेः (१२।४।३।१) ॥ २ ॥**

अथवाऽऽहवनीयस्थाने काष्ठं हिरण्यं वा निधाय तदुपरि उत्तराहुतिं जुहुयात् ॥ २ ॥

[ त्रिवारमुद्धृतस्याप्याहवनीयस्यानुगमने प्रा० ]

**त्रिरुद्धृतश्चेदाहवनीयोऽनुगच्छेदुदक्स्थानान्युपलिप्य निर्मथ्य सकृदुद्धृते तस्मिन्त्सायं प्रातर्होममेके ॥ ३ ॥**

उद्धरणानन्तरमाहवनीयानुगमने तमुद्धृत्याध्वर्यवं कृत्वा पुनरुद्धृत्य होमः। एवं वारत्रयमुद्धृत आहवनीयः शाम्येच्चेत् पूर्वेभ्योऽग्निस्थानेभ्य उत्तरस्मिन्प्रदेशे कुण्डेष्वेव गार्हपत्याहवनीयदक्षिणाग्नीनां स्थानेषु पञ्चभूसंस्कारान्कृत्वा निर्मथ्य गार्हपत्यस्थापनम्। अत एव मन्थनोपदेशात्पूर्वं गार्हपत्यस्य समारोपः कार्यः। तत आहवनीयस्योद्धरणम्। पूर्वाहृतस्यैव दक्षिणाग्नेरुदङ् नयनम्। सायंहोमार्थं सकृदुद्धृते तस्मिन्विहारे सायं प्रातर्होममेके कुर्वन्ति। एके प्रातर्होमार्थं पुनरुद्धरन्ति। प्रातश्चेन्निमित्तं तदा प्रातर्होममात्रमेव तस्मिन्विहारे कुर्यात्॥३॥

[ गार्हपत्यानुगमने प्रा० ]

**(१) गार्हपत्येऽनुगते भस्मनाऽरणी सꣳस्पृश्य मन्थनम् ॥ ४ ॥**

यत्र कुत्रापि गार्हपत्यानुगमने प्रायश्चित्तमिदम्। अग्निहोत्रविषयतैवास्येति केचित् ॥ ४ ॥

**आहवनीयजागरणे वा तत एवोद्धरणम् ॥ ५ ॥**

आहवनीयस्य जागरणे विद्यमाने गार्हपत्योऽनुगच्छेच्चेदाहवनीयादेव गार्हपत्यस्योद्धरणं कुर्यात्। अस्मिन्पक्षे य उद्धृतः स आहवनीयः, यश्चाहवनीयेऽवशिष्टः स गार्हपत्य इति विपर्यास इत्यर्थः। होमान्ते गार्हपत्यस्य मन्थनम् ॥ ५ ॥

**आहृत्य वा ॥ ६ ॥**

अथवा सकलमप्याहवनीयं गार्हपत्यस्थाने आनीय तत एव पुनराहवनीयस्योद्धरणम्। होमान्ते गार्हपत्यस्य मन्थनम् ॥ ६ ॥

**उपलराज्यागताद्वा ॥ ७ ॥**

---

(१) सर्वस्य गार्हपत्यस्याहवनीयस्थाने भ्रान्त्योद्धरणे तं स्वस्थाने कृत्वा प्रायश्चित्तार्थं दक्षिणाग्निपूर्वकमा-
हवनीयमुद्धृत्याध्वर्यवं हुत्वोद्धरणं कुर्यात्। दक्षिणाग्निस्थाने सर्वोद्धरणेऽप्येवम्। इष्टिष्वप्येवम्। सर्वस्याहव-
नीयस्योल्मुकोद्वहने तं स्थाने स्थापयित्वाऽऽध्वर्यवं कृत्वा पुनरुद्वहनम्। सर्वस्याहवनीयस्य पशुश्रपणाद्यर्थंनय-
नेऽप्येवम्। सर्वस्याग्नीध्रीयस्योपयद्धोमार्थं होतृधिष्ण्येषु स्थापनेऽप्येवम्। एवं सर्वत्रैकदेशनिनयने विहिते सर्व-
नयने कृते ज्ञेयम्। उल्मुकयोर्विद्यमानयोराहवनीयानुगमने तयोरनुयाजार्थत्वादाहवनीयस्य गार्हपत्यादेवो-
द्धरणम्। उल्मुकानुगमनेऽनादिष्टहोमपूर्वकमुद्वहनम्। समासविस्मरणे आध्वर्यवमेव।

तत एवोद्धरणमित्यनुवर्त्तते। उपलानां तृणानां राज्या श्रेण्या (समुदायेन) ज्वलन्त्या गार्हपत्यस्थानमागतादग्नेः पुनरुद्धरणमाहवनीयस्य। अर्थात्पूर्वस्याहवनीयस्य पूर्वमेव परित्यागः, पुनरुद्धरणविधानात्। होमान्ते गार्हपत्यमन्थनम् ॥७॥

**निर्मन्थ्य वा ॥ ८ ॥**

गार्हपत्यं निर्मन्थ्य वा तत उद्धरणम् ( १२।४।३।८ )। अस्मिन्पक्षे आध्वर्यवं भवति। न चास्मिन्पक्षे होमान्ते मन्थनम्, कृतत्वात् ॥ ८ ॥

निर्मन्थ्यपक्षे प्रकारद्वयमाह—

**समारोह्यासमारोह्य वा पूर्वमुपशमय्य पूर्ववद्धोमः ॥ ९ ॥**

अरण्योराहवनीयं समारोप्याहवनीयमुपशमय्य गार्हपत्यं निर्मथ्य संस्थाप्य तत आहवनीयोद्धरणम् ( १२।४।३।९।१० )। अथवा समारोपं कृत्वा आहवनीयमुपशमय्येत्यादिर्द्वितीयः प्रकारः। पूर्ववदिति उदक् स्थानान्युपलिप्य गार्हपत्यं निर्मथ्य सकृदुद्धृते तस्मिन्विहारे सायंप्रातर्होमः। प्रातश्चेन्निमित्तं तदा प्रातर्होम एव। दक्षिणाग्निः पूर्वोद्धृत एवोदङ् नीयते ॥ ९ ॥

[ त्रिराहृतस्य दक्षिणाग्नेरनुगमने प्रा० ]

**त्रिराहृतो दक्षिणाऽग्निरनुगच्छेच्चेदनाहरणमस्य तदहरेके ॥ १० ॥**

एके शतकृत्वोऽप्युद्धरन्ति। अनाहरणपक्षे दक्षिणाग्निहोमलोपस्तत्साध्यत्वात् ॥१०॥

[ भ्रान्त्याऽऽहवनीयस्योद्धरणे ]

**जाग्रतमाहवनीयमभ्युद्धरेच्चेत्तदुक्तम् ॥ ११ ॥**

यदि अनुपशान्तमाहवनीयमुपशान्तभ्रान्त्या अभ्युद्धरेत् तदाऽऽध्वर्यवप्रायश्चित्तं कृत्वा भ्रान्त्योद्धृतगार्हपत्ये एव प्रक्षेपः कार्यः। भ्रान्त्योद्धृत आहवनीयः स्थापनात्प्राग्विज्ञातश्चेत्तदेदं प्रक्षेपणं सम्भवति ॥११॥

**पश्चान्निधाय पुरस्ताद्वोभयत्र होममेके ॥ १२ ॥**

तं भ्रान्त्योद्धृतमाहवनीयं स्थापनात्प्राग् विज्ञातं पूर्वोद्धृताहवनीयस्यापरस्मिन् प्रदेशे पूर्वप्रदेशे वा ( कुण्डमध्ये एव ) स्थापयित्वा चतुर्गृहीतमेकस्मिन्नग्नौ हुत्वा पुनश्चतुर्गृहीतेन द्वितीयेऽग्नौ जुहुयात्। उपमार्जनादि भक्षान्तं तन्त्रेण कुर्यात्। गार्हपत्यमध्ये एव प्रक्षिपेदित्येके। अत्राग्निद्वये होमो न युक्तः। प्रधानं हि होमः। अग्निश्चाङ्गम्। न चाङ्गानुरोधेन प्रधानावृत्तिर्युक्ता। तस्मादित्थं कुर्यात्। खातवतीं प्रणालिकासदृशीं समिधमग्निद्वयस्योपर्याधायैकमेव चतुर्गृहीत्वा तस्यां समिधि तथा होतव्यं यथा हुतं द्रव्यमुभयोरग्न्योः प्राप्नुयात्। एवमुभयत्र होमः कृतो भवति ॥१२॥

भ्रान्त्योद्धृतस्याग्नेः पूर्वोद्धृताहवनीयस्योपरि स्थापने ( अभिनिधाने ) कृते प्रायश्चित्तमाह—

**अभिनिधानेऽग्नयेऽग्निमते पुरोडाशः ॥ १३ ॥**

इष्टेरनन्तरमग्निहोत्रहोमः। इष्टिश्च तस्मिन्नेव विहारे। तदङ्गत्वात् ॥१३॥

[ प्रासङ्गिकम् ]

प्रायश्चित्तान्तरमाह—

**"समितमिति ( १२।५७-५८ ) वोपस्थानं द्वाभ्याम् ॥ १४ ॥**

[ गृहीतानुगमने प्रा० ]

गृहीतानुगमने त्वान्वग्निरित्याहुत्य ( १२।१७ ) ॥१५॥

"ममाग्न इत्यग्निं गृह्णातीति ( २।१।२ ) गृहीतस्य ( अग्न्यन्वाधानानन्तरम् ) आहवनीयस्यानुगमने एतदेव प्रायश्चित्तद्वयं विकल्पेन भवति । तच्चान्वग्निरित्याहुतेऽग्नौ कार्यम् । अग्न्यन्वाधाने कृते गार्हपत्योपशमे तु मन्थनमेव ॥१५॥

अनादेशे पुरोडाशः सर्वत्र ॥१६॥

अग्नये व्रतपतय इत्यादौ (२५।४।२७) हविर्द्रव्यस्यानादेशे ॥१६॥

[ अनुद्धृतेष्वग्निषु सूर्योदये जाते प्रा० ]

"गार्हपत्यादाहवनीयोद्धरणमनस्तमितानुदितयोरिति ( ४।१३।२ ) अनस्तमिते सूर्ये आहवनीयस्योद्धरणमुक्तम् । तदपराधे प्रायश्चित्तमाह—

अनुद्धृताभ्यस्तमये कुशबद्धे हिरण्ये पश्चाद्ध्रियमाण इध्मेनोद्धरेदार्षेयो ब्राह्मणः ॥ १७ ॥

अनुद्धृते आहवनीये सूर्यस्याभ्यस्तमये सति कुशबद्धे हिरण्ये गार्हपत्यस्य पश्चात्केनचिद् ध्रियमाणे इध्मेनापरिमितकाष्ठेन ऋषिसदृशो बहुविद् ब्राह्मण उद्धरणं कुर्यात ( १२।४।४।६ ) ॥१७॥

वैष्णव्याहुतिः ॥१८॥

एवमुद्धृत्य संस्थाप्य विष्णवे स्वाहेति चतुर्गृहीतं जुहुयात् पूर्णाहुतिवदाज्यं संस्कृत्य ॥१८।

अग्नये च सूर्यवते ॥१९॥

पुरोडाशोऽष्टाकपालः । इष्ट्यन्तेऽग्निहोत्रम् ॥१९॥

[ आहवनीयेऽनुद्धृते सूर्योदये जाते प्रा० ]

अभ्युदये रजतधारणं पुरस्तात् ॥२०॥

अनुद्धृते आहवनीये सूर्योदये जाते आहवनीयस्य पूर्वस्यां केन चिद्रजते ध्रियमाणे इध्मेनार्षेय उद्धरेत् ॥२०॥

वैश्यदेव्याहुतिः ॥२१॥

उक्तोऽर्थः ॥२१॥

सूर्याय च ज्योतिष्मते ॥२२॥

समानमुद्धरणम् ॥२३॥

अनुद्धृताभ्यस्तमयवदत्रापि इध्मेनोद्धरेदार्षेयो ब्राह्मण इत्यादि भवति ॥२३॥

वैश्वदेवी वोभयत्रापुरोडाशा ॥२४॥

अग्नये सूर्यवते, सूर्याय ज्योतिष्मते इति च यः पुरोडाश उक्तस्तद्रहिता केवला वैश्वदेव्याहुतिश्चतुर्गृहीतेन कार्या अनुद्धृताभ्यस्तमये अनुद्धृताभ्युदये च ॥२४॥

उभयानुगमने पुनराधेयं वा ॥२५॥

गार्हपत्याहवनीययोरुभयोरप्यनुगमने ज्ञाते यद्यस्तमयोऽभ्युदयो वा भवेत्तदा पुनराधेयं वा स्यात् । अथवाऽग्न्याधेयम् । एतच्चाग्न्योरनुगमनपरिज्ञानानन्तरमस्ते उदये च सति कार्यम्, नास्तमयोदयानन्तरमग्न्योरनुगमनपरिज्ञाने इति कर्कः ॥२५॥

**भेदेनाप्युपपात् ॥२६॥**

अन्यतरोपशान्तावपीदं पुनराधेयं स्यात् । एकस्याप्यग्नेरुपशमे उपपातस्य सत्वात् ॥२६॥

एवं प्राप्त आह—

**न सह प्रक्लृप्तेः ॥२७॥**

अन्यतरानुगमने न पुनराधेयम् । कुतः ? प्रक्लृप्तेः । गार्हपत्याहवनीययोरुत्पतेः सहैव प्रकल्पितत्वात् । तस्मादुभयानुगमनमेव निमित्तं पुनराधेयस्य । नान्यतरानुगमः ॥२७॥

इति तृतीया कण्डिका ॥ ३ ॥



[ मथ्यमानस्याग्नेर्जन्मनोऽसंभावनायामुद्धरणकाले समागते कल्पाः ]

**मथ्यमानश्चेन्न जायेत यमदूरात्पश्येत्तमाहृत्याभि जुहुयात् ॥ १ ॥**

उद्धरणकालात्प्राक् अग्नेर्जन्म न भविष्यतीति संभावनायां यमग्निं लौकिकं सन्निहितं चक्षुषा पश्येत्तमानीय गार्हपत्यस्थाने धृत्वा तत एवाहवनीयदक्षिणाग्नी उद्धृत्य जुहुयात् । होमान्ते तत्कालं मन्थनम् ॥ १ ॥

**ब्राह्मणहस्ते वा ॥ २ ॥**

गार्हपत्याहवनीयदक्षिणाग्निस्थाने त्रीन् ब्राह्मणान् प्रत्यङ्मुखानुपवेश्य तद्धस्तेषु परिस्तरणादिपर्युक्षणान्तं सर्वं कर्म कार्यं होमश्च । द्रव्यसंस्कारा लौकिकाग्निना । ब्राह्मणहस्तश्चाग्निविकारत्वेन विधीयते । ततश्चोत्तरसमिदाधानमन्त्रे "समिदसि समिद्धोमे ब्राह्मणहस्त दीदिहि समिद्धा ते ब्राह्मणहस्त दीद्यासमिति (४।१४।२०) विपरिणामः । इयं समित् अदृष्टार्थत्वाद् ब्राह्मणहस्तेऽपि दीयते । होमात्पूर्वा तु दृष्टार्थत्वादेव न भवति । इन्धनं हि तस्य प्रयोजनम् । न च तदनग्निषु सम्भवति ( ४।१४।१३ ) ॥ २ ॥

अस्मिन्पक्षे यजमानस्य व्रतमाह—

**वासानपनोदश्च ॥ ३ ॥**

ब्राह्मणहस्तेष्वग्निहोत्रे हुते सायं वसत्यर्थमागतो ब्राह्मणो नापनोद्यो यावज्जीवं संवत्सरं वा ॥ ३ ॥

आहवनीयेऽनुद्धृते सूर्योदये जाते प्रायश्चित्तमाह—

**अजकर्णे वा दक्षिणे ॥ ४ ॥**

प्रत्यग्नि अजान् स्थापयित्वा ब्राह्मणहस्तवत् तेषां दक्षिणकर्णे होमः । अत्रापि अजकर्ण दीदिहि अजकर्ण दीद्यासमित्यूहः । होमान्ते मन्थनम् ॥ ४ ॥

व्रतमाह—

**अभोजनं तस्य ॥ ५ ॥**

अजकर्णेषु हुतेऽजमांसं नाद्यात् । रागप्राप्तमांसभक्षणप्रतिषेधोऽयम् । यज्ञादौ भक्षणे तु न दोषः । यथाऽऽह्वः । "अजस्य मांसं नाश्नीयाद्वैधवर्जमजाहुतौ । पाणिहोमे नावरुन्ध्याद् ब्राह्मणं वासकाङ्क्षिणम् । दर्भासनेषु नासीत दर्भहोमे तदा कृते । अपो न निन्द्यात्ताभिश्च पादौ न क्षालयीत वै" इति ॥ ५ ॥

**कुशस्तंबे वा ॥ ६ ॥**

कुशसमूहे वा । समिन्मन्त्रे कुशस्तम्ब दीदिहि कुश दीद्यासमित्यूहः । होमान्ते मन्थनम् ॥ ६ ॥

**अनासनं तस्मिन् ॥ ७ ॥**

कुशस्तंबे होमे क्रियमाणे कुशासने अवैधं रागप्राप्तमुपवेशनं न कुर्यात् । यज्ञार्थे तु श्राद्धादावुपवेशनमर्थात् कुर्यात् ॥ ७ ॥

**अप्सु वा ॥ ८ ॥**

अग्नित्रयस्थाने अपः पात्रगता धृत्वा तासु होमः । उदकं पात्रस्थं कुशस्तंबं च गार्हपत्यस्थाने निधाय तत आहवनीयदक्षिणाग्नौ विहृत्य होमः । पयोऽधिश्रयणार्थं तु लौकिकाग्न्याहरणं सर्वपक्षेषु । आपो दीदिति समिद्धा व आपो दीद्यासमित्यूहः समिदसीति मन्त्रे कार्यः । होमान्ते मन्थनम् ॥ ८ ॥

**"नाद्भ्यो बीभत्सेतेति श्रुतेः ॥ ९ ॥**

अप्सु हवनपक्षे नापो निन्द्यात् ॥ ९ ॥

[ पूर्वमेवोद्धृतेष्वग्निषु अनुदितहोमपक्षे कृते सूर्योदये जाते प्रा० ]

**अहुताभ्युदित उन्नीयातमितोरासीत ॥ १० ॥**

अहुतेऽग्निहोत्रे सूर्योदये जाते होमार्थं चतुर्गृहीतस्योन्नयनं कृत्वाऽऽहवनीयसमीपे श्वासं निरुध्य ( यावत् ऊर्ध्वश्वासधारणं कर्तुं शक्यते तावत् ) उपविशेत् ॥ १० ॥

ततो यत्कर्तव्यं तदाह—

**हुत्वा भूरित्यनुमन्त्रणम् ॥ ११ ॥**

प्रथमामाहुतिं यथोक्तां हुत्वा भूरिति मन्त्रेण तस्या अनुमन्त्रणं कुर्यात् ॥ ११ ॥

**वरदानं च ॥ १२ ॥**

अध्वर्यवे । स्वयंहोमित्वे यस्मा इच्छेत्तस्मै दद्यात् । गार्हपत्यदक्षिणाग्निहोमात्प्रागुदयेऽप्येतदेव प्रायश्चित्तम् । अनादिष्टमिति केचित् ॥ १२ ॥

**सर्वनाशे हविषां दोषे वा तदुक्तम् ॥ १३ ॥**

अग्निहोत्रेष्ट्याद्यर्थस्य सर्वस्य हविषो नाशे = अपहारे विडालभक्षणादिना, दोषे = केश-कीट—स्वेदाश्रु-रक्त-मूत्रास्थि-मक्षिका-श्लेष्माद्युपघाते वा आध्वर्यवं कृत्वा "प्रधानद्रव्यव्यापत्तौ साङ्गावृत्तिरिति (१।७।२८) न्यायेन सर्वाणि हवींष्युत्पाद्यादितः कर्म कुर्यात् । अवत्तनाशे तूक्तम् । प्रधानयागावशिष्टनाशे तु स्वयमेव वक्ष्यति (२५।५।१४) ॥ १३ ॥

## आज्येन वा प्रतिसङ्ख्याय देवतेज्या ॥ १४ ॥

अथवा सर्वहविषां नाशे दोषे वा यावतीनां देवतानां हवींषि विनष्टानि तानि गणयित्वा विनष्टहविःसंबद्धानां देवतानामाज्येन यागं कुर्यात् । आज्यसंस्कारात्पूर्वं हविर्नाशे तस्मिन्नेव काले आज्यं संस्कृत्य यागः कार्यः । अत्र यदैव हविर्नष्टं तदैवाज्येन यागं कृत्वा तावदेव कर्म समापयेत् । नात्राङ्गानां क्रिया । देवतेज्येत्युक्तत्वात् ॥ १४ ॥

## पुनः क्रिया च ॥ १५ ॥

यावदुक्ताज्ययागसमाप्त्यनन्तरं तत्कालमेव पुनरादित आरभ्य कर्मापवर्गान्तं कर्म कुर्यात् । उपांशुयागस्त्वाज्येन न भवति ।

"अथवा दुष्टहविषां तस्मिन्कर्मणि देवताः । आज्येनेष्ट्वा विनोपांशुयागं, सर्वं समाप्यते । पुनस्तत्क्रियते सर्वमपवर्गान्तमादितः" इति ॥ १५ ॥

## भेदे विप्रक्लृप्त्युपपाताभ्याम् ॥ १६ ॥

एकैकहविर्विनाशेऽपीदं प्रायश्चित्तम् । हविषां पृथक् पृथगुत्पत्तेः । एकैकहविर्विनाशेऽप्युपपाताच्च ॥ १६ ॥

[ अग्निहोत्रार्थमुद्धृतेष्वग्निषु मार्जारमूषकादीनां मार्जारादिर्मध्यतो गमने प्रायश्चित्ता भावः ]

## अन्तरा गमने नाद्रियेत ॥१७॥

गार्हपत्यादीनामन्तरा गमने प्रायश्चित्तं न कुर्यात् ( १२।४।१।२ ) । एतच्चाग्निहोत्रविषयम् । दर्शपूर्णमासादावन्तरागमने त्वनादिष्टं कार्यम् ॥१७॥

## श्वैडक-वराहेषूदधारा प्राचीदं विष्णुरिति ( ५।१५ ) ॥ १८ ॥

श्वा-मेष-शूकराणां गार्हपत्यादीनामन्तरा गमने गार्हपत्यादाहवनीयं यावत् प्राचीमुदकधारां दद्यात् । एतदप्यग्निहोत्रविषयमेव ॥ १८ ॥

## भस्मनो वा ॥ १९ ॥

गार्हपत्यभस्मनो वा धारा देया ( १२।४।१।४ ) ॥ १९ ॥

## चक्रीवत्यग्नये पथिकृते ॥ २० ॥

चक्रीवान् रासभः । तस्मिन्नन्तरागते । एतच्च सर्वविषयमिति कर्कः ॥ २० ॥

## प्रज्ञातेष्ट्यतिपत्तौ च ॥ २१ ॥

प्रसिद्धानां दर्शपूर्णमासचातुर्मास्याग्रयणादीनामिष्टीनां कालातिक्रमे च पथिकृद्भवति । तत्र मुख्यकालातिक्रमे आध्वर्यवं, गौणकालातिक्रमे पथिकृत् । तदा न दर्शपूर्णमासाद्यनुष्ठेयम्, कालस्य गतत्वात् । अपरे तु मुख्यकालातिक्रममात्रे निमित्ते प्रायश्चित्तरूपेयमिष्टिः । अस्मिन्पक्षे पथिकृतं कृत्वा दर्शपूर्णमासादीनां गौणकाले करणम् ।

पौर्णमासेष्टेरमान्तं, दर्शेष्टेः पूर्णिमान्तं गौणः कालः । तत्रामायां पौर्णमासकरणे पौर्णमासदेवतापूर्वकं पृथक् यागाः । अङ्गानुष्ठानं तन्त्रेण । वृधन्वन्तावाज्यभागौ । यो यस्य काले क्रियते स तद्धर्मक एव भवतीति न्यायात् । तत ऊर्ध्वं गौणकालस्याप्यभावद्दर्शादीनामनुष्ठानं, तत्स्थाने पथिकृदेव । पिण्डपितृयज्ञस्तु स्वकाले एव, न गौणकाले । तदत्यये वैश्वानरेष्टिरेव । स्मार्ताग्नेर्वैश्वानरश्चरुः ।

चातुर्मास्यपर्वस्वपि आगाम्यागामिपर्वान्तं गौणः कालः । तत्र प्राग्वरुणप्रघासाद्वैश्वदेवपर्वाकरणे आध्वर्यवं कृत्वा वरुणप्रघासेन सह तन्त्रेण वैश्वदेवप्रयोगः । एवमाग्रयण-

स्यापि अग्रिमाग्रयणान्तं गौणः कालः। एवं सर्वत्रोह्यम्। अमायां दर्शेऽस्यकरणे पौर्णमासात्प्राक् यदहरिच्छेत्तदहः कुर्यात्पौर्णमासेष्ट्या सह वेति।

इष्ट्यसंभवे अग्नये पथिकृते स्वाहेति होमो वा। इष्ट्याहुत्योर्विकल्पोऽत्र शक्ताशक्तव्यवस्थयेति कारिकाकारः। एवं सर्वत्र ॥२१॥

[ स्तोत्रशस्त्रविपर्यासे स्वजनमरणे च प्रा० ]

## स्तोत्रमोहे ॥ २२ ॥

अन्यस्य स्थाने अन्यस्य गाने न्यूनाधिक्ये वा कालाहुतिवाचनपूर्वकं पथिकृत्। प्रगीता ऋचः स्तोत्रम् ॥ २२ ॥

## शस्त्रस्य च ॥ २३ ॥

शस्त्रस्य ऋक्सूक्तादेर्विपर्यासे विस्मरणे न्यूनाधिकशंसने च। अप्रगीता ऋचः शस्त्रम् ॥ २३ ॥

## जनमरणे च ॥ २४ ॥

पथिकृत् ॥ २४ ॥

## उपपातसामर्थ्यात्स्वजने ॥ २५ ॥

स्वकीयजनस्य पुत्रपौत्रादेर्मरणे पथिकृत्, न जनमात्रमरणे। उपपातो हि स्वजनमरणरूपः कादाचित्को भवति ॥ २५ ॥

## नित्यत्वाच्च ॥ २६ ॥

अपि च नित्यं जनमरणम्। कश्चित्कश्चित्प्रतिदिनं म्रियत एव ॥ २६ ॥

[ व्रतदिने मांसादिसेवने अश्रुपाते च प्रा० ]

## अग्नये व्रतपतये व्रत्येऽहनि मैथुनमाꣳसभोजनं चेत् ॥ २७ ॥

दर्शपूर्णमासे "अहनि माꣳसमैथुने वर्जयेत्" ( २।१।७ ) इत्युक्तम्, तदपचारे इदम्। सद्योऽग्न्यन्वाधानपक्षे नेदम् "अमायां तु शिलापिष्टपरान्नानि च वर्जयेत्" इत्यपचारे स्मार्त्तं प्रायश्चित्तम्। इष्ट्यसंभवे अग्नये व्रतपतये स्वाहेति जुहुयाद्वा। व्रत्यं दिनं पौर्णमासादिकम् ॥२७॥

## आहिताग्नेरार्त्यश्रुकरणेऽग्नये व्रतभृते ॥ २८ ॥

आहिताग्निग्रहणमिष्ट्यर्थमुद्धृताग्निप्रज्ञप्त्यर्थम्। व्रत्येऽहनीत्यनुवर्त्तते। आर्त्तिग्रहणान्नानन्दाश्रुकरणे। उद्धरणानन्तरं व्रत्येऽहनि दुःखनिमित्ताश्रुपाते ॥ २८ ॥

[ आहवनीयादीनां लौकिकाग्निसंसर्गे प्रा० ]

## संसर्गे नाद्रियेत ॥ २९ ॥

आहवनीयादीनां लौकिकवैदिकाग्निभिः संसर्गे प्रायश्चित्तस्यानाचरणम् ॥ २९ ॥

असन्तोषे तु प्रायश्चित्तमाह—

## अनुक्रोशेऽग्नये सꣳसर्गायाहुतिर्वा ग्रामाग्निना चेत् ॥ ३० ॥

लौकिकाग्निना चेद् गार्हपत्यादीनां संसर्गस्तदा हृदयासन्तोषे सति इष्टिः। इष्ट्यसंभवे अग्नये संसर्गाय स्वाहेति ॥ ३० ॥

[ आहवनीयादीनां परस्परं मिश्रणे प्रा० ]

## अग्नये विविचये मिथश्चेत् ॥ ३१ ॥

आहवनीयादीनां परस्परं मिश्रणे इष्टिराहुतिरनादरो वेति ॥ ३१ ॥

[ दावाग्निनाऽऽहवनीयादीनां मिश्रणे प्रा० ]

**अग्नये संवर्गाय प्रदव्याचेत् ॥३२॥**

दावाग्निना संसर्गेऽपि इष्ट्यादिं कुर्यात् ॥३२॥

[ वैद्युताग्निनाऽऽहवनीयादीनां संसर्गे प्रा० ]

**अग्नयेऽप्सुमते वैद्युनाचेत् ॥३३॥**

इष्ट्यादिः ॥३३॥

[ चाण्डालाग्निनाऽऽहवनीयादीनां संसर्गे प्रा० ]

**अग्नये शुचयेऽशुच्यायतनाचेत् ॥३४॥**

अशुचि अपवित्रं चाण्डालादिगृहमायतनं यस्य तस्याग्नेः संसर्गे इष्टिराहुतिरनादरो-वेत्यर्थः ( १२।४।४५ ) ॥३४॥

[ यमलजनने प्रा० ]

**भार्या-गोषु यमजनने मारुतं त्रयोदशकपालं निर्वपेत् ॥३५॥**

भार्यासु गोषु च। भार्याशुद्धौ यजनीयेऽहनि श्राद्धान्वारम्भणीयापूर्वकम्। अत्रैन्द्राग्न धर्मा भवन्ति ( ४।३।६ ) ॥३५॥

[ गेहदाहे प्रा० ]

**गेहदाहेऽग्नये क्षामवते पुरोडाशः ॥३६॥**

निवासगृहदाहेऽग्निगृहदाहे च। अत्र नैमित्तिकेष्टयोऽग्निहोत्रदर्शपूर्णमासाङ्गभूताः स्वामिनि प्रोषितेऽपि कार्याः। यमलजननेष्टि-गृहदाहेष्ट्यादयोऽनङ्गभूतास्तु स्वाम्यागमनपर्यन्त मुत्कृष्टव्याः। "नैमित्तिकस्तु जातेष्टिगृहदाहेष्टिकास्तथा। स्वाम्यागमनपर्यन्तमुत्कृष्टव्या ह्यशेषत" इत्युक्तेः। अयं च यजनीयेऽहन्यन्वारंभणीयापूर्वकः कार्यो, न तत्कालम्। नात्र कर्मोपपातः, किंतु पुरुषसंबन्ध्युपपात इति ॥३६॥

[ इष्ट्यारम्भानन्तरं हविर्निर्वापात्पूर्वं परं च चन्द्रोदयपरिज्ञाने प्रा० ]

चतुर्दश्यां दर्शेष्ट्यर्थमुद्धरणाद्युपक्रमे कृते, प्रातरमावास्यायामनुदिते सान्नाय्यदर्शे ष्ट्युपक्रमे कृते तदानीं चतुर्दशीसद्भावात्पूर्वस्यां दिशि चन्द्रोदये जाते हविर्निर्वापात् प्राक् ज्ञाते प्रायश्चित्तमाह—

**चन्द्रमसाऽभ्युदित आमावास्ये पुरस्तात्तद्व्रतः स्यात् ॥३७॥**

दर्शयागे प्रारब्धे पुरस्ताच्चन्द्रेणोदये कृते सति तत्पूर्वदिनकृतमेव भोजनं यस्य तथा विधो यजमानः स्यात्, तस्मिन्दिने पुनरशनं न कुर्यादुपवासं कुर्यादित्यर्थः। चन्द्रमसाभ्युदित इति कालक्रमोपलक्षणम्, चन्द्रदर्शनस्य तत्र प्रायिकत्वात। अनिरुप्ते हविष्येतत्। तत्र निर्वापा-त्प्राक् ज्ञाते पूर्वासादितपात्राणामुत्सर्गः। पिण्डपितृयज्ञात्प्राक् ज्ञाते तदहरुपोष्य द्वितीयेऽह्नि पिण्डपितृयज्ञः ॥३७॥

हविर्निर्वापानन्तरं चन्द्रोदयज्ञाने, निर्वापात्पूर्वमपि लङ्घनकरणाशक्तावाह—

**निरुप्ते व्रताशक्तौ वा त्रैधं तण्डुलान्विभज्य मध्यमानग्नये दात्रे, स्थविष्ठा-निन्द्राय प्रदात्रे, दधनि चरुमणिष्ठान्विष्णवे शिपिविष्टाय शृते चरुम् ॥३८॥**

निरुप्ते हविषि चेच्चन्द्रोदयज्ञानं, निर्वापात्प्रागपि चन्द्रोदयपरिज्ञाने उपवासाशक्तिर्वा-च्चेत् तदा निरुप्तस्याग्नेयहविषस्तण्डुलान् मध्यमस्थूलसूक्ष्मभेदेन त्रिधा विभज्य क्रमेण

पृथक् श्रपयेत् ( ११।१।४।२ )। अग्नये दात्रेऽष्टाकपालः पुरोडाशः। इन्द्राय प्रदात्रे दधनि चरुः। इतरस्य शृते दुग्धे चरुः। मध्यमाः किञ्चित् खण्डिताः। स्थविष्ठा अखण्डाः। अणिष्ठा अतिसूक्ष्माः। व्रताशक्तिपक्षे अनिरुप्ते हविषि अग्नये जुष्टं गृह्णामीत्यादिनिर्देशः ॥३८॥

[ उक्तप्रायश्चित्तस्य कर्मान्तरता ]

इदानीमिदं विचार्यते-किं तदेवेदं कर्म उत कर्मान्तरमिति। सूत्रेणैव पक्षः—

**संस्कारात्सान्नाय्यम् ॥ ३९ ॥**

तदेवेदं प्राकृतमामावास्यकं कर्म। संस्कारात्। यत्पूर्वं दर्शयागायोपकल्पितं संस्कृतं द्रव्यं तदेवेदं सान्नाय्यं प्रत्यभिज्ञायते। तत्साध्यत्वात्तदेवेदं कर्मेति ॥ ३९ ॥

सिद्धान्तयति—

**अन्यद्वेज्यायोगात् ॥४०॥**

अन्यदेवेदं प्रायश्चित्तरूपं कर्मान्तरं, न प्राकृतम्। यागान्तरयोगो ह्यत्र श्रूयते। "अग्निर्दाता इन्द्रः प्रदाता विष्णुः शिपिविष्ट" इति, तथा "दधनि चरुं शृते चरु"मिति। एवं पक्षद्वयोपन्यासे किं कर्मान्तरता युक्ता, उत प्राकृतस्यैव कर्मणो विकारः। तस्यैव विकार इति युक्तम्। तदेव हि प्रक्रान्तं कर्म प्रत्यभिज्ञायते। न चान्यकर्मान्तर मारब्धम्। तस्मात्तस्यैवेति कर्काचार्याः ॥४०॥

**तस्य तण्डुलापनयो वचनात् ॥ ४१ ॥**

तण्डुलग्रहणं दधिपयसोरुपलक्षणम्। वचनात्तस्य प्राकृतस्य कर्मणस्तण्डुलादीनां हविषां प्राकृतदेवताभ्यो विभागो देवतान्तरसंबन्धो नैमित्तिकः। चिन्तायाः प्रयोजनं-प्राकृतत्वे सति "कांस्य-वानस्पत्यमार्त्तिकैरभिचार-ब्रह्मवर्चस-प्रतिष्ठाकामा यथासङ्ख्यम्" इत्यादीनां गुणकामानां प्रवृत्ति ( २।३।५ )। पुनरप्यामावास्यं श्रुतौ विहितमेव। "अथ यदैव नोदेयादथोपवसेदिति ( ११।१।४।४ )। तेनोद्धरणादिब्राह्मणतर्पणान्तं पिण्डपितृयज्ञवर्जितं पुनः स्वकाले कर्तव्यम् ॥ ४१ ॥

ननु सान्नाय्ययाजिन इदं संभवति 'दधनि चरुं पयसि चरुमिति। असन्नयतः कथमत आह—

**प्रकृत्या पूर्वम् ॥ ४२ ॥**

प्रथमं हविः पुरोडाशलक्षणं प्रकृतमेव 'न प्रायश्चित्तरूपं कर्मान्तरम्। कुतः? यतो द्रव्यं तदेव पुरोडाशरूपम्। देवता अप्यग्निः। दात्र इति तु विशेषणमात्रं न भेदापादकम् इति ॥ ४२ ॥

एवं प्राप्ते सिद्धान्तयति—

**सर्वं वा निमित्तात् ॥ ४३ ॥**

सर्वमेव क्रियते। पूर्वमपि हि निमित्तम्। तत्र लौकिके दधिपयसी ग्राह्ये ॥ ४३ ॥

[ प्रतिपदि भ्रान्त्या दर्शयागोपक्रमे प्रा० ]

अथ भ्रान्त्या प्रतिपद्यामावास्योपक्रमे प्रायश्चित्तमाह—

**पश्चादभ्युदृष्ट आमावास्येनेष्ट्वा तदहर्वैव श्वो वाऽग्नये पथिकृत, इन्द्राय वृत्रघ्न एकादशकपालो, वैश्वानरश्च ॥ ४४ ॥**

पिण्डपितृयज्ञवर्जितां दर्शेष्टिं कृत्वा श्वो द्वितीयायां वा वैश्वानरो द्वादशकपालस्तृतीयः ( १।१।१।५।४ )। चन्द्रदर्शनं च शास्त्रीयं, न चाक्षुषमसंभवात् ॥ ४४ ॥

तिस्र इषवः शरा यस्य तत् ॥ ४५ ॥

**दण्डो वा ॥ ४६ ॥**

वंशमयः ॥ ४६ ॥

**प्राकृताश्चेच्छन् ॥ ४७ ॥**

पथिकृदादीन्प्रकृत्य या दक्षिणा विहितास्ताश्चेच्छया दद्यात्। यथाऽश्वमेधे पथिकृतः शतमानम्, राजसूये वैश्वानराय कृष्णं वासः, (५।५।६।१७) इन्द्राय वृत्रघ्ने चादकेना न्वाहार्यः ॥४७॥

**अनभ्युदृष्टस्यापि पशुकामस्य ॥ ४८ ॥**

इयं त्रिहविष्केष्टिर्भवति (११।१।५।११) ॥ ४८ ॥

इति चतुर्थी कण्डिका ॥ ४ ॥

[ उद्वासनकाले कपालविनाशे प्रा. ]

**उद्वास्यमानं चेत्कपालं नश्येदाश्विनः ॥ १ ॥**

द्विकपालः। तत्पूर्वमञ्जनपर्यन्तं नाशेऽनादिष्टमेव। अत्राश्विनस्य परतन्त्रमध्यपातित्वा त्सान्निपातिकान्यङ्गानि पुनः कार्याणि। आरादुपकारकाणामाघारप्रयाजाज्यभागा-दीनां सकृत्क्रिया। अग्न्यन्वाधानं न पुनः प्रवर्त्तते। शूर्पाग्निहोत्रहवण्युलूखलमुसलशम्या दृषदुपलोपवेषकृष्णाजिनप्रभृतीनि निवृत्तप्रयोजनानि पुनरासाद्यन्ते प्रोक्ष्यन्ते च। अकृत कार्याणि वज्रश्रृतावदानेडापात्रीस्रुवप्राशित्रादीनि तु न पृथगादसादनीयानि। इध्माधानं त्व त्रापकृष्य क्रियते। उपवाजन-सम्मार्गादीनामाहवनीयसंस्कारत्वादत्रैवानुष्ठानं सामिधेन्यनु वचन-तदर्थप्रैषावबाधनानां च। अनेन प्रकारेणेडान्त आश्विनः कार्यः। अनेन न्यायेन कर्म मध्ये या इष्टयो व्रातपतीयाद्या आपतन्ति ता अनुष्ठेयाः ॥ १ ॥

[ सायंप्रातयोः पृथग्वा दोहविनाशे प्रा. ]

**सायं प्रातर्दोहार्त्तावैन्द्रं पञ्चशरावमोदनं निर्वपेत्पुरोडाशं वा ॥ २ ॥**

सायंप्रातर्दोहयोर्विनाशे पञ्चभिः शरावैः परिमितमोदनं निर्वपेत् पुरोडाशं वा पञ्च-शरावम्। सान्नाय्यं प्रकृत्य ह्येतच्छ्रूयते। तेन न हविर्मात्रे, किन्तु सान्नाय्ये एवैतत्प्रायश्चित्तम्। अशक्तौ पूर्णाहुतिः ॥ २ ॥

"यस्योभयं हविरार्त्तिमार्च्छेदिति श्रुतेः सायंप्रातःकालीनोभयदोहार्त्तौ पञ्चशरावे प्राप्ते सिद्धान्तमाह—

**भेदेनाप्युपपातात् ॥ ३ ॥**

एकैकदोहविनाशेऽपि पञ्चशरावो भवति। एकविनाशस्याप्युपपातत्वात् ॥ ३ ॥

[ पञ्चशरावस्यौदनस्य सान्नाय्यविनाशे प्रायश्चित्तरूपत्वं, न प्रतिनिधिरूपता ]

किमयं पञ्चशरावः सान्नाय्यस्य प्रतिनिधिरुत सान्नाय्यविनाशे प्रायश्चित्तमिति सन्देहे पूर्वपक्षयति—

तत्प्रतिनिधिः ॥ ४ ॥

तस्य विनष्टस्य साम्नाय्यस्य प्रतिनिधिरयम ॥ ४ ॥

सिद्धान्तयति —

प्रायश्चित्तं वा देवताश्रुतेः ॥ ५ ॥

प्रायश्चित्तमेव पञ्चशरावो, न प्रतिनिधिः। ऐन्द्रमिति देवताश्रवणात्। प्रतिनिधौ देवताश्रवणं न स्यात्। नन्वैन्द्रमित्यनुवादः, प्राप्तत्वात्। मैवम्। अनुवादमात्रस्यानर्थकत्वात्। "तद्धैके महेन्द्राय कुर्वन्ती" ति महेन्द्रस्यापि देवतात्वेनान्यतरस्यानुवादानुपपत्तेश्च। प्रयोजनं विचारस्य, नैमित्तिकानन्तरं पुनः साम्नाय्यमुत्पाद्य यागः कार्य इति। अशक्ताविन्द्राय स्वाहेति पूर्णाहुतिः। "प्रायश्चित्तेष्वसामर्थ्ये कुर्यात्पूर्णाहुतिं बुध" इत्युक्तेः ॥ ५ ॥

चरू साम्नाय्यालाभे ॥ ६ ॥

विनष्टे साम्नाय्ये पञ्चशरावानन्तरं पुनर्दोहार्थं साम्नाय्यालाभे चरू भवतः। विनष्टस्याविनष्टस्य च वाचनिकः प्रतिनिधिरयम् ॥ ६ ॥

सायंदोहस्थाने वा पुरोडाशः ॥ ७ ॥

सायन्दोहस्य चालाभेऽष्टाकपालस्तदा भवेदैन्द्रः। प्रातर्दोहस्थाने तु चरुरेव ॥ ७ ॥

असाम्नाय्यवद्वा ॥ ८ ॥

साम्नाय्यालाभे असाम्नाय्यवत् त्रिहविष्कमामावास्यं भवति। आग्नेयः, वैष्णव उपांशु, ऐन्द्राग्नश्चेति ॥ ८ ॥

[ दुष्टस्य हविषः प्रतिपत्तिः ]

दुष्टस्य हविषोऽप्स्ववहरणम् ॥ ९ ॥

केशकीटादिभिर्बिडालाद्यवघ्राणास्पृश्यस्पर्शनादिभिश्च दुष्टं हविरप्सु क्षिपेत् ॥ ९ ॥

उष्णे वा भस्मनि ॥ १० ॥

प्रक्षेपः ॥ १० ॥

शिष्टभक्षप्रतिषिद्धं दुष्टम् ॥ ११ ॥

शिष्टैर्मन्वादिभिर्भक्षणे यत्प्रतिषिद्धं तद् दुष्टमिति दुष्टस्य हविषा लक्षणम् ॥ ११ ॥

[ हविषो विस्मृतौ सान्निपातिकैरङ्गैर्विस्मृतमनुष्ठाय पुनस्तस्यानुष्ठानम् ]

एकस्यानिष्टे तदुक्तम् ॥ १२ ॥

बहूनां हविषां मध्ये पुरुषापराधादेकेन संस्कृतेन हविषा यागेऽकृते तेन विस्मृतेन हविषा सर्वाङ्गोपेतेन (सन्निपत्योपकारकैरारादुपकारकैश्चाङ्गै) र्यागः कार्य इति पूर्वपक्षः ॥१२॥

सिद्धान्तयति—

सान्निपातिकानि वा तस्य ॥ १३ ॥

विस्मृतस्य हविषः सान्निपातिकान्येवाङ्गानि भवन्ति, नारादुपकारकाणि। पुरा ब्राह्मणतर्पणात्कर्मान्यथात्वनिमित्तमात्रमनादिष्टं हुत्वा विस्मृतेन हविषा यागं कुर्यात्। ब्राह्मणतर्पणादूर्ध्वं तेनैव हविषा सर्वाङ्गयुक्तं यागं कुर्यात् ॥ १३ ॥

[ प्रधानयागानन्तरं हविषि दुष्टे आज्येन स्विष्टकृदादीनामनुष्ठानम् ]

इष्टं चेदाज्येन शेषम् ॥ १४ ॥

कृतप्रधानयागं हविर्दुष्येत चेत् शेषं स्विष्टकृद्रूपं यागं ध्रुवातश्चतुर्गृहीतेनाज्येन कुर्यात्। स्विष्टकृदतिरिक्तानां प्राशित्रेडा-षडवत्त-चतुर्द्धाकरणादीनां लोप एव। आध्वर्यवं सर्वत्र ॥ १४ ॥

[ हविषो विस्मृतौ प्रधानयागात् समिष्टयजुषो वा पूर्वं विस्मृतं हविः संस्कृत्य तदनुष्ठानम्। समिष्टयजुरन्ते स्मृतं चेत्तत्कर्म समाप्य पुनर्विस्मृतस्याग्न्यन्वाधानादितोऽनुष्ठानम् ]

हविरन्तरणे प्राक्प्रधानेज्यायाः स्मृत्वाऽन्वाहरेत् ॥ १५ ॥

बहूनां मध्ये एकस्य हविषो भ्रान्त्या विस्मरणे प्रधानयागात्प्राक् स्मृत्वा अनादिष्टपूर्वकं विस्मृतं हविः सान्निपातकैरङ्गैः संस्कृत्य यागार्थं वेदिमध्ये आसादनाय पश्चादानयेत् ॥१५॥

प्राग्वा समिष्टयजुषः सꣳस्थाश्रुतेः ॥ १६ ॥

समिष्टयजुर्होमात्पूर्वं वा विस्मृतं स्मृत्वाऽन्वाहरेत्। समिष्टयजुषा यज्ञसंस्था-श्रवणात् ॥ १६ ॥

हुतं चेत्सꣳस्थाप्य तदेव पुनर्निर्वपेत् ॥ १७ ॥

समिष्टयजुरपि हुतं चेत् तदा प्रस्तुतं कर्म समाप्य अग्न्यन्वाधानाद्यपवर्गान्तं पुनः कुर्यात् ॥ १७ ॥

[ देवताऽनुयाज्यादिविपर्यासे प्रा० ]

देवताविपर्यासे पुष्कलं दत्वा यथानुपूर्व्यंकरणम् ॥ १८ ॥

आग्नेयस्यावदानक्रमे यदग्नीषोमोच्चारणं स देवताविपर्यासः। आग्नेययागेऽकृते स्वेनैव हविषा यदग्नीषोमीययागः क्रियते स क्रमविपर्यासः। अतस्तत्राध्वर्यवमेव। पुष्कलशब्दः सुवर्णपरिमाणवाचीति केचित्। सारद्रव्यमात्रवाचीत्यपरे। "किंचिद्दृष्टौ च पुष्कलमित्यादि ( यज्ञपा० २६ ) स्मृत्युक्तं च ग्राह्यम् ॥ १८ ॥

अवदान-याज्याऽनुवाक्यासु च ॥ १९ ॥

विपर्यासे एतदेव ॥ १९ ॥

[ जुह्वादिस्थे आज्ये दुष्टे पुनर्ग्रहणम् ]

स्रुच्ये दुष्टे पुनर्ग्रहणम् ॥ २० ॥

जुहूपभृद्ध्रुवास्थे आज्ये दुष्टे स्थालीतो धामनामेति पुनर्ग्रहणम्। प्रयाजानन्तरमौपभृते विनष्टे चतुर्गृहीतमेव ग्राह्यम्। श्वादिभिरवलीढे तु स्रुचामपि शुद्धिः कार्या ॥ २० ॥

ध्रुवाया वा "ततो यज्ञः प्रभवतीति श्रुतेः ॥ २१ ॥

तत्र स्थालीतो ध्रुवामाप्याय्याप्याय्य। अन्यथाऽसंभवात् ॥ २१ ॥

अदुष्टाद्वा नयनमेके ॥ २२ ॥

अदुष्टात्स्रुच्यादेवानयनमिच्छन्ति। अयं तृतीयः पक्षः ॥ २२ ॥

नोपभृतो ध्रुवायाम् ॥ २३ ॥

जौहवे दुष्टे ध्रुवाया उपभृतो वा ग्रहणम्। औपभृते दुष्टे जौहवाद्ध्रौवाद्वा ग्रहणम्। ध्रौवे तु दुष्टे जुह्वा एव ग्रहणं नोपभृतः ॥ २३ ॥

[ आज्यस्थालीस्थे आज्ये दुष्टे प्रा० ]

**आज्यस्थालीदोषे ऽन्यत् ॥ २४ ॥**

आध्वर्यवं हुत्वाऽन्यद् ग्राह्यम् ॥ २४ ॥

**अदोषो वा "न वै देवाः कस्माचन बीभत्सन्त" इति श्रुतेः ॥२५॥**

दुष्टेन हविषा यागाभिनिर्वृतौ कृतायां पश्चाद्दोषज्ञाने तत् कृतमेव कर्म अदुष्टेनैव हविषा कृतमिति जानीयात्, न पुनरावृत्तिं कुर्यात् ॥ २५ ॥

[ अधिके हविषि निरुप्ते तेनानुष्ठानाभावः ]

**अधिकं निरुप्य तच्च यजेत् ॥ २६ ॥**

मानसादपचारादधिके हविषि गृहीते तेनापि यागं कुर्यात् ॥ २६ ॥

**न वाऽचोदितत्वात् ॥ २७ ॥**

अविहितत्वान्नैव यजेत ॥ २७ ॥

[ प्रणीतास्कन्दने प्रा. ]

**"ऐतु राजा वरुणो रेवतीभिरस्मिन्त्स्थाने तिष्ठतु मोदमानः। अरिष्टा ऽअस्माकं वीरा मा परासेचि मत्पय" इति प्रणीता स्कन्ना अभिमृशेत् ॥२८॥**

सोमे कालाहुतिवाचनपूर्वकम् ।। २८ ॥

[ स्थाल्यादीनां भेदने प्रा. ]

**"भूमिर्भूमिमगान्माता मातरमप्यगात्। भूयाम पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति मृन्मयं भिन्नमभिमृशेत् ॥ २९ ॥**

स्थाल्युखा-कपालोपसर्जनी-कर्पर-पूतभृदाधवनीय-स्थाल्यादिकम् ॥ २९ ॥

[ घर्म्यभेदे प्रा. ]

**"य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः सन्धाता सन्धिं मघवा पुरूवसुरिष्कर्त्ता विहुतं पुनरिति च घर्म्यम् ॥ ३० ॥**

घर्मसंबन्धि-महावीर-पिन्वन-रौहिणकपालादि भिन्नं चेत्। चकाराद्भूमिर्भूमिमिति मन्त्रेण घर्म्यं (२६।७।४६) हस्तेन स्पृशेत् ॥ ३० ॥

इति पञ्चमी कण्डिका ॥ ५ ॥

घर्म्यभेदे एव विशेषमाह—

**परमेष्ठ्यादींश्च चतुस्त्रिंशतं जुहोति ॥ १ ॥**

चकारादभिमर्शनानन्तरं परमेष्ठिने स्वाहा प्रजापतये स्वाहेत्यादीन् (८।५४।५८) सलिलाय स्वाहेत्यन्तान् चतुस्त्रिंशत्सङ्ख्याकान् होमान् जुहुयादध्वर्युरादिष्टत्वात्। अनादेशे ब्रह्मणो विधानात् (२५।१४।३५)। अतो वक्ष्यमाणकालाहुतिरपि सवाचनाऽत्र भवति, कर्तृभेदात्। तेन पिन्वन-रौहिण-कपालभेदे ब्रह्मणः कालाहुतिहोमो वाचनं च। ततोऽध्वर्योरुक्मन्त्रद्वयेन भिन्नस्याभिमर्शनं चतुस्त्रिंशद्धोमश्चेति समुच्चयः ॥ १ ॥

[ घर्मदुहो गोर्मरणेऽदोहे च प्रा. ]

घर्मदुग्घवाले चादोहे चोदीच्या दोहस्थानेऽन्यस्याः शालाया वा पुरस्तात्प्राच्याः पुच्छकाण्डाद्दक्षिणेऽस्थनि हुत्वा दोहयेत् ॥ २ ॥

घर्मदुहो गोर्मरणे तस्या एवादोहे च घर्मदुघाया दोहस्थानप्रदेशेऽन्यस्या गोरुदङ्मुख्याः, अथवा पत्नी शालायाः पूर्वस्यां दिशि प्राङ्मुख्या अवस्थिताया गोः पुच्छदण्डाद्दक्षिणभागस्थेऽस्थनि परमेष्ठिने स्वाहेत्याद्याश्चतुस्त्रिंशतमाज्याहुतीर्हुत्वा तामेव गां दोहयेत्। अत्र पूर्वं ब्रह्मणः कालाहुतिहोमो वाचनं च। अत्र चोपविष्टस्य होमासंभवात्तिष्ठतैव होतव्यम् ॥ २ ॥

[ पृषदाज्यस्कन्दने प्रा. ]

पृषदाज्यस्कन्दने चैके ॥ ३ ॥

चतुस्त्रिंशद्धोममिच्छन्ति। भुवनपतय इत्यभिमर्शनं वा। सोमश्चेत्कालाहुतिः, अयाविष्ठेति होमोऽपि नित्यम् ॥ ३ ॥

[ सोमयागे उपपाते प्रा. ]

सोमेज्योपपाते चैकैकां यथाकालꣳ हुत्वा "यज्ञस्य दोह" इति (८।६२) वाचयति ॥ ४ ॥

सोमेज्यायां = सोमयागमध्ये यस्मिन्कस्मिंश्चित्कर्मणि सोमाङ्गे सोमाङ्गाङ्गे वा उपपाते परमेष्ठ्यादिचतुस्त्रिंशदाहुतीनां मध्ये "अथ यदि पण्यमानः अथ यदि क्रीतः" इत्यादि श्रुत्युक्ते (१२।६।१।६-३६) काले एकैकामाज्याहुतिं सकृद्गृहीतेनाज्येन हुत्वा यज्ञस्य दोह इति वाचयति यजमानम्। अयं होमो ब्रह्मकर्तृकः। वाचनं च ब्रह्मणा कार्यम्। आज्यसंस्कारोऽपि तदङ्गत्वाद्ब्रह्मणैव कार्यः ॥ ४ ॥

[ सोमयागे सुत्यासु उपपाते प्रा० ]

आग्नीध्रीये सुत्यासु ॥ ५ ॥

सुत्यासु वर्तमानासु कालाहुतिराग्नीध्रीये। आहवनीयापवादोऽयम् ॥ ५ ॥

[ यूपे ध्वाङ्क्षारोहणे प्रा० ]

"आ पवस्व हिरण्यवदित्युद्गातृहोमो ध्वाङ्क्षारोहणे यूपस्य ॥६॥

उद्गातृकर्तृको होम आहवनीये। पश्वादौ तु ब्रह्मकर्तृकः। अत्रापि कालाहुतिः ॥ ६ ॥

[ सोमयागे पृषदाज्यस्कन्दने प्रा० ]

पृषदाज्यस्कन्दने जुहुयादया विष्ठा जनयन्कर्वराणि स हि घृणिरुरुर्वराय गातुः स प्रत्युदैद्धरुणो मध्वो अग्रꣳ स्वायां यत्तन्वां तनूमैरयत स्वाहेति ॥७॥

[ घर्मदुहो गोर्व्याघ्रहनने प्रा० ]

घर्मधुक् शार्दूलहता चेत्स्पृतीर्जुहुयात् "चन्द्रात्ते मनः स्पृणोमि स्वाहा, सूर्यात्ते चक्षुः स्पृणोमि स्वाहा, वातात्ते प्राणान् स्पृणोमि स्वाहा, दिग्भ्यस्ते श्रोत्रꣳ स्पृणोमि स्वाहा, ऽद्भ्यस्ते लोहितꣳ स्पृणोमि स्वाहा, पृथिव्यै ते शरीरꣳ स्पृणोमि स्वाहेति ॥८॥

शार्दूलो व्याघ्रः। स्पृतिसंज्ञा आहुतयः षट्। सकृद्गृहीतेनाध्वर्युः। कालाहुतिश्चात्र ॥८॥

**हुत्वाऽन्यामाजतेति ब्रूयात् ॥ ६ ॥**

स्मृतिसंज्ञकाः षडाहुतीर्हुत्वा अन्यां गामानाय्य तां दोहयेत् ॥ ६ ॥

[ स्वयंहोमासामर्थ्ये ]

**स्वयꣳ होम्यशक्ता ऽउपासीत ॥१०॥**

"स्वयं वा जुहुयादुपवसथे नियम" (४।१५।३४-३५) इति पूर्वमुक्तम्। तत्र स्वयंहोमी यजमानोऽशक्तो अन्येन होमे क्रियमाणेऽग्निसमीपे उपविशेत् ॥१०॥

**उपसर्पणाशक्तावासन्नमधः ॥११॥**

अग्निसमीपं गमनासामर्थ्ये खट्वादेरुत्तीर्य खट्वासमीपे एव भूमावुपविशेत्। स्वयं होमासमर्थस्य समीप उपसर्पणम्। तत्राप्यशक्तस्य सतः शयनाच्चोपवेशनम्। "त्यागं तु सर्वथा कुर्यात्तत्राप्यन्यतरस्तयोः। उभावप्यसमर्थौ चेन्नियुक्तः कश्चन त्यजेत्" इति ॥११॥

इति षष्ठी कण्डिका ॥६॥



[ सायमग्निहोत्रहोमानन्तरं यजमाने मृते तदैव प्रातरग्निहोत्रहोमः ]

**सायमाहुत्याꣳ हुतायां चेद् दुर्बलः स्यात्तदैव प्रातराहुतिस्तस्यꣳस्याश्रुत-रग्निहोत्रस्य ॥ १ ॥**

सायंहोमानन्तरं प्रातराहुतिकालादर्वाक् यजमानस्य मरणसंभावनायां तदैव प्रातर्होमः कार्यः। "सायमादि प्रातरन्तमेकं कर्म प्रचक्षते" इति प्रातराहुत्याऽग्निहोत्रस्य समाप्तिविधानात् सायमुभौ होमौ तन्त्रेणेत्यर्थः ॥ १ ॥

[ अपकृष्य प्रातर्होमे कृते पुनर्जीवने न प्रातर्होमः ]

**जीवेच्चेत्पुनः काले ॥ २ ॥**

अपकृष्य प्रातर्होमे कृतेऽपि जीवेद्यदि तदा प्रभाते पुनः प्रातराहुतिः। कालस्य निमित्तत्वात् ॥ २ ॥

**न वा कृतत्वात् ॥ ३ ॥**

कृतत्वान्नैव प्रातःकाले प्रातराहुतिर्होतव्येति सिद्धान्तः ॥ ३ ॥

[ पौर्णमासेष्ट्यनन्तरं यजमाने मृते तदैव दर्शेष्टेरनुष्ठानम् ]

**पौर्णमासान्ते चामावास्यमग्निहोत्रवत् ॥ ४ ॥**

पौर्णमासेष्टौ कृतायां मरणशङ्कायां दर्शेष्टिरपि पिण्डपितृयज्ञवर्जिता कार्या। एवं चातुर्मास्यराजसूयादिष्वपि बोध्यम् ॥ ४ ॥

[ हविरानयनानन्तरं यजमानमरणे ]

**हविष्येषु चेदाह्रियमाणेषु मरणं दक्षिणाग्नावेनान्त्सन्दहेत् ॥ ५ ॥**

व्रीहियवादिषु गृहमध्यादानीतेषु मरणं चेत् एनान्हविष्यान्दक्षिणाग्नौ सन्दहेत् (१२।४।२५-१०) ॥ ५ ॥

**न वाऽयुक्तत्वात् ॥ ६ ॥**

न वा दक्षिणाग्नौ हविष्यान्संदहेत्। हविष्याणामविनियुक्तत्वात्। ग्रहणेन हि हविष्याणां विनियोगो, नाहरणमात्रेण ॥ ६ ॥

[ हविर्ग्रहणानन्तरं यजमानमरणे हविषां गार्हपत्ये दहनम् ]

**गार्हपत्ये ग्रहणादि प्रागासादनात् ॥ ७ ॥**

हविषो ग्रहणादारभ्य वेद्यामासादनात्प्राक् यजमानस्य मृतौ हवींषि गार्हपत्ये दहेत् ॥७॥

[ पात्रासादनान्तरं यजमानमरणे हविषामाहवनीये दहनम् ]

**आसादनाद्याहवनीये ॥ ८ ॥**

आसादनमारभ्य मरणे तानि हवींषि दहेदाहवनीये ॥ ८ ॥

[ कर्मण्यारब्धे यजमानमृतौ मरणान्तमेव कर्म ]

**मरणान्तं भवति ॥ ९ ॥**

आरब्धं कर्म मृते यजमाने मरणान्तं भवति । कर्त्तुरभावात् ॥ ९ ॥

**सꣳस्थाप्यं वा प्रक्रान्तत्वात् ॥ १० ॥**

अथवाऽऽरब्धं कर्म मृतेऽपि समापनीयमेव । आरब्धत्वात् । आरम्भश्च समाप्तेर्निमित्तम् । एवं पक्षद्वयेऽपि दर्शिते मरणान्तमेव भवतीति युक्तः पक्षः । न हि मृते यजमाने कर्म कर्तुं युज्यते ( १।४।४ ) ॥१०॥

[ अग्निहोत्रार्थं हविषि गृहीते यजमानमरणे तस्याहवनीये दाहः ]

**हविष्यवद्धौम्यम् ॥ ११ ॥**

अग्निहोत्रहोमार्थमपि द्रव्यं हविष्यवद् (२५।७।७) द्रष्टव्यम् ॥ ११ ॥

**सन्दीपनवतीः प्रत्यगन्यधिश्रयन्त्युखाः ॥ १२ ॥**

मरणानन्तरमपसव्येन सकृत्पञ्चभूसंस्कारान् कृत्वा सन्तापजाग्न्यर्थमाहवनीयदक्षिणाग्नी विहृत्य त्रिष्वपि अग्निषु गोमयचूर्णसूक्ष्मतृणयुक्तास्तिस्र उखाः पुत्रपौत्रादयोऽधिश्रयेयुः ॥ १२ ॥

**सन्तापजानग्नीनादाय सशरीरा दक्षिणा गच्छन्ति ॥ १३ ॥**

सशरीराः सपिण्डाः । अग्नीनुखास्थान् ॥ १३ ॥

**अनसा ॥१४॥**

मृतस्य शरीरं शकटेन वहेयुः, शाखान्तरात् ।

"सभ्याग्निमावसथ्यं च कृत्वा पात्रान्तरे क्वचित् । पृषदाज्यं घृतं दर्भांस्तिलान्पात्राणि सप्त च । हिरण्यानि घृतादिं च चन्दनादीन्धनानि च । अनस्येतानि कृत्वैव सपिण्डा दक्षिणां दिशम् । अनसा सह ते यान्ति यमसूक्तादि पाठकाः" ॥ १४ ॥

**वितानꣳ साधयित्वा समे बहुलतृणेऽन्तराग्नी चितिं चिनोति ॥ १५ ॥**

समे बहुलतृणे देशे कृतसकृत्पञ्चभूसंस्कारेषु खरेषु गार्हपत्यादीन् स्थापयित्वा गार्हपत्याहवनीययोर्मध्ये काष्ठैश्चितिं रचयेयुः ॥ १५ ॥

**उद्धृत्य क्षीरिणीः पुरुषाहुतीः ॥ १६ ॥**

प्रथमतश्चितिप्रदेशात् क्षीरयुक्ताः पुरुषनाम्नीः पुल्लिंगशब्दाभिधेया अर्काद्या ओषधीरुत्पाट्य गार्हपत्यादीन् स्थापयेत् ॥ १६ ॥

**विशाखा-शराश्वगन्धा-पृश्निपर्ण्यध्याण्डाश्च ॥ १७ ॥**

विशाखा = दूर्वा, शरो = मुञ्जः, अश्वगन्धा ( असगन्धा ), पृश्निपर्णी माषपर्णी, अध्याण्डा ढण्ढणिका । एताश्च चितिप्रदेशात्पूर्वमुद्धृत्य चितिं कुर्यात् ॥ १७ ॥

**केश-श्मश्रु-नख-लोमनिकृन्तनानि कृत्वा विपुरीषं चेच्छन् ॥१८॥**

लोमानि गुह्यकक्षादिस्थानि । इच्छन्नुदरं पाटयित्वा पुरीषरहितं कुर्यात् ॥१८॥

**केशादि निस्वाय सर्पिषाऽन्तरकृत्वा चितावेनमादधाति कृष्णाजिनमास्तीर्य-प्राक्शिरसम् ॥ १९ ॥**

विपुरीषकरणपक्षे पाटितमुदरमन्तरतः प्रक्षाल्य घृतेनान्तरकृत्वा प्राग्ग्रीवमुत्तर लोम कृष्णाजिनं चितावास्तीर्य मृतं यजमानं प्राक्शिरसमुत्तानं स्थापयेत् ॥ १९ ॥

[ इन्द्रियेषु सुवर्णखण्डप्रक्षेपः ]

**सप्तसु प्राणायतनेषु सप्त हिरण्यशकलान्प्रास्यति मुखे प्रथमम् ॥ २० ॥**

मुखे नासिकाद्वये चक्षुर्द्वये कर्णद्वये च । नासिकादिष्वप्यादौ दक्षिणे, ततो वामे इति क्रमः ॥ २० ॥

[ मृतस्याङ्गे पात्रप्रतिपत्तिः ]

**दक्षिणहस्ते जुहूꣳ सादयति घृतपूर्णाम् ॥ २१ ॥**

प्रागग्राम् । अस्मात्त्वमित्याहुत्यनन्तरमियमासादनीया (२५।७।४०) ॥ २१ ॥

**स्फ्यं च ॥ २२ ॥**

दक्षिणहस्ते (१२।५।२।७) । अस्य सादनं सर्वपात्रासादनान्ते कार्यम् । अधिकारादत्र लिखितम् ॥ २२ ॥

**उपभृतꣳ सव्ये ॥ २३ ॥**

रिक्तां प्रागग्राम् ॥ २३ ॥

**उरसि ध्रुवाम् ॥ २४ ॥**

रिक्तां प्रागग्राम् ॥ २४ ॥

**मुखेऽग्निहोत्रहवणीम् ॥ २५ ॥**

प्रागग्राम् ॥ २५ ॥

**नासिकयोः स्रुवौ ॥ २६ ॥**

एकः खादिर ऐष्टिकः, अपरो वैकङ्कतोऽग्निहोत्रहोमार्थः । द्वावपि प्रागग्रौ । दक्षिणस्यां वैकङ्कतं, खादिरं तु सव्यायाम् । अनयोरासादनमस्मात्त्वमित्याहुत्यनन्तरम् (२५।७।४०). आज्यग्रहणस्य प्रयोजनस्य विद्यमानत्वात् ॥ २६ ॥

**कर्णयोः प्राशित्रहरणे ॥ २७ ॥**

प्रागग्रे सादयेत् ॥ २७ ॥

**शिरसि चमसं प्रणीताप्रणयनम् ॥ २८ ॥**

प्रागग्रम् ॥ २८ ॥

**कपालानि चैके ॥ २९ ॥**

एके नेच्छन्ति । कपालान् शिरसि निदधति । अपरेऽप्सु क्षिपन्ति (२५।७।३५) ॥२९॥

**पार्श्वयोः शूर्पे ॥ ३० ॥**

एकमैष्टिकम् . द्वितीयं प्रतिप्रस्थातृसत्कम् । अकृतवरुणप्रघासस्य तु ऐष्टिकमेव द्विधा कृत्वाऽऽसादनीयम् ॥ ३० ॥

**उदरे पात्रीं समवत्तधानीं पृषदाज्यवतीम् ॥३१॥**

समवत्तं ध्रियतेऽनया सा इडापात्री उच्यते । तां पृषदाज्ययुक्तां कृत्वोदरे सादयेत् । समवत्तधानीमिति पात्र्यन्तरव्यावृत्त्यर्थमुक्तम् ॥ ३१ ॥

**शिश्ने शम्याम् ॥ ३२ ॥**

शिश्नसमीपे प्रागग्रां शम्यां सादयेत् ॥ ३२ ॥

**अरणी वृषणयोः ॥३३॥**

समीपे प्रागग्रे ॥३३॥

**अन्तरोरू यज्ञपात्राण्यन्यानि ॥३४॥**

उलूखल-मुसल-पिष्टपात्र्युपवेषाग्नि-श्रृतावदानादीनि यानि सन्ति । आवसथ्य-वरुणप्रघास-पश्वादिसम्बन्धीनि च । उलूखलमधोमुखं, शाखान्तरात् ॥३४॥

[ मृन्मयाश्ममयानां जले प्रतिपत्तिः ]

**अप्स्वभ्यवहरणं मृन्मयाश्ममयानाम् ॥३५॥**

**अयस्मयानि वा ब्राह्मणाय दद्यात् ॥३६॥**

एवं ताम्रलोहपित्तलमयादीनि ब्राह्मणाय दद्यात् (१२।५।२।१४) ॥३६॥

[ गवालम्भो वैकल्पिकः ]

**अनुस्तरणी चेत्पश्चात्कर्णमाहत्य हस्तयोर्वृक्कावङ्गेष्वङ्गानीति जातूकर्ण्यः ॥३७॥**

अनुस्तरणी गौरजा वाऽभिधीयते । अनयोरन्यतरा यदि भवेत्तदा तां गामजां वा कर्णप्रदेशस्य पश्चाद्भागे प्रहारेण मारयित्वा तस्याः कुक्षिगोलकौ मृतस्य हस्तयोर्निदध्यात् । प्रेतस्य हस्तपादाद्यङ्गेषु तस्या अङ्गानि निदध्यात् ॥३७॥

**न वाऽस्थिसन्देहात् ॥ ३८ ॥**

नवाऽङ्गेष्वङ्गानि निधेयानि । एकत्र दाहे इमान्यस्थीनि कस्येति सन्देहः स्यात् । अतस्तस्य मांसान्युत्कृत्य निदध्यात् ॥३८॥

**वपया मुखमवच्छाद्याग्निभिरा दीपयन्ति ॥३९॥**

अनुस्तरण्या वपया मृतस्य मुखमाच्छादयित्वा त्रिभिरग्निभिश्चितिं दीप्तां कुर्युः । "आहिताग्न्योश्च दम्पत्योर्यश्चादौ म्रियते शुचिः । तस्य देहः सपिण्डैस्तु दग्धव्यस्त्रिभिरग्निभिः । पश्चान्मृतस्य देहस्तु दग्धव्यो लौकिकाग्निना" इति । त्रिभिः न पञ्चभिरित्यर्थः । सभ्यावसथ्ययोस्तु उत्तरतः सप्तसु पञ्चसु वा प्रक्रमेषूत्सर्गः ॥३९॥

**आहुतिं जुहोति पुत्रो भ्राताऽन्यो वा ब्राह्मणोऽ "अस्मात्त्वमधि जातोऽसि त्वदयं जायतां पुनः । असौ स्वर्गाय लोकाय स्वाहेति (३५।२२) ॥४०॥**

सद्गृहीतेन जुह्वाऽऽहवनीये । सकलमन्त्रपाठः पत्न्या अप्यनूहप्रज्ञस्यर्थः । ब्राह्मण ग्रहणं पुत्रभ्रात्रोः क्षत्रियवैश्ययोर्व्युदासार्थमिति कर्कः ।

"अनयैवावृता नारी दग्धव्या या व्यवस्थिता । अग्निप्रदानमन्त्रोऽस्या न प्रयोज्य इति स्थितिः । अनाहिताग्निरेकेन लौकिकेनेतरे जनाः" ( छन्दो० प० ) । अनयैवावृता पात्रैरग्निभिरित्यर्थः ॥४०॥

**अनपेक्षमेत्योपस्पृशन्त्यपः ॥४१॥**

चिताप्रदेशमविलोक्य नद्यादिजलस्थानमागत्याप उपस्पृशेयुः । अपामुपस्पर्शनविधानम् "अथोदककर्म" ( पा० ३।१० ) इत्यादिगृह्यसूत्रोपलक्षणार्थम् ॥४१॥

इति सप्तमी कण्डिका ॥ ७ ॥

[ सञ्चयनम् ]

**सञ्चयनं चतुर्थ्यामयुग्मान् ब्राह्मणान् भोजयित्वा पलाशवृन्तेनास्थीनि परिवर्त्य परिवर्त्याङ्गुष्ठकनिष्ठिकाभ्यामादाय पलाशपुटे प्रास्यति ॥ १ ॥**

वक्ष्यमाणं सञ्चयनं कर्म दाहाच्चतुर्थ्यां तिथौ कार्यम् । तच्च पलाशादिपत्रमूलेनास्थीनि भस्मना गुप्तानि प्रकटानि कृत्वा तानि गृहीत्वा पलाशवटकदल्यादिपर्णपुटे प्रक्षिपेत् । एतद्ब्राह्मणभोजनं तदहर्विहितश्राद्धव्यतिरिक्तम् । तच्च "अस्थिसञ्चयनादर्वाक् आहिताग्नेर्द्विजन्मनः । अयुग्मान् भोजयेद्विप्रांस्तन्नवश्राद्धमुच्यते" इति ॥ १ ॥

**शम्यवकाः कर्दमं च श्मशाने ॥ २ ॥**

चशब्दात्प्रास्यति । शमीशब्देन शाखा तत्पत्रं वा । अवकाः शैवालः । कर्दमः कुथिता मृत्तिका । यत्तकर्दम इत्यपरे । श्मशानमस्थिसञ्चयः । भस्मकूट इत्यपरे ॥ २ ॥

**अक्त्वाऽस्थीनि सर्वसुरभिमिश्राणि दक्षिणपूर्वायतां कर्षूं खात्वा कुशानास्तीर्य वस्त्रावकृत्तं च हारिद्रं वागिति निवपत्यस्मिन् ॥ ३ ॥**

कर्पूरागुरुचन्दनकस्तूरिकाकेसरादिभिः सर्वैः सुगन्धिद्रव्यैर्मिश्राणि घृताक्तास्थीनि कृत्वा आग्नेय्यभिमुखकोणां कर्षूं खात्वा तत्राग्नेय्यग्रान् कुशानास्तीर्य हरिद्रारक्तं वस्त्रखण्डं कुशानामुपर्यास्तीर्य वागिति मन्त्रेणास्थीनि वस्त्रखण्डे क्षिपेत् ॥ ३ ॥

**एतद्वाजसनेयकम् ॥ ४ ॥**

एतत्कर्म वाजसनेयिशाखानुसारि । वक्ष्यमाणं तु शाखान्तरीयम् ॥ ४ ॥

**अनेन वा "त्वा मनसाऽनार्त्तेन वाचा ब्रह्मणा त्रय्या विद्यया पृथिव्यामक्षिकायामपाꣳ रसे निवपाम्यसाविति ॥ ५ ॥**

त्वा मनसेति मन्त्रेण वाऽस्थीनि निक्षिपेत् ॥ ५ ॥

[ पितृमेधशेषः ]

**श्मश्मानं चिकीर्षतः कुम्भेऽस्सञ्चयनम् ॥ ६ ॥**

श्मशानं पितृमेधः ( १३।८।१।१ ) स पूर्वमुक्तः ( २२।३-५ ) तं पितृमेधं कर्तुमिच्छतः कुम्भमध्येऽस्थिप्रक्षेपः। अस्मिन्पक्षे कुशादिप्रस्तरणं कुम्भे एव कार्यम्। चिकीर्षित इत्युक्तेः पितृमेध ऐच्छिकः ॥ ६ ॥

**निधानं च तूष्णीम् ॥ ७ ॥**

क्वचिद्गर्तं खात्वा कुम्भं निदध्यात्तूष्णीम्। कुम्भमध्येऽस्थिक्षेपे मन्त्रो भवत्येव ॥ ७ ॥

[ प्रोषितस्याग्नेः सायंप्रातर्होमे विशेषः ]

प्रोषितस्य मरणे श्रुते मृतशरीरस्यास्थ्नामागमनपर्यन्तं गृहे सायं प्रातर्होमे विशेषमाह—

**प्रोषितश्चेत्प्रेयात्प्राचीनावीती निवान्यां दुग्ध्वा दक्षिणतोऽधिश्रयणो द्वासने ॥ ८ ॥**

मृतवत्सां गां वत्सान्तरेण दुग्ध्वेत्यर्थः। अत्रावज्योतनलापःप्रत्यानयनोन्नयनप्रैष-चतुरुन्नयनादि न भवति। उद्वासनं सकृत् ॥ ८ ॥

**तत एव हरणम् ॥ ९ ॥**

गार्हपत्यस्य दक्षिणत एवाहवनीयं प्रति होमार्थं स्रुग्धारणं कुर्यात् ॥ ९ ॥

**अधस्तात्समिधं धारयन् ॥ १० ॥**

स्रुचोऽधस्तात्समिधं धारयन् स्रुवं हरति, नोपरिष्टात् ॥ १० ॥

**उदग्रान् कुशान्दक्षिणाग्रान्कृत्वा ॥ ११ ॥**

परिस्तरणकाले ॥ ११ ॥

**सकृद्धा पितृवत्पर्यस्य ॥ १२ ॥**

एकवारमेवापसव्येन दक्षिणामुखः पितृतीर्थेनाधोमुख्या स्रुचाऽऽहवनीयमध्ये प्रक्षिप्य वक्ष्यमाणं कुर्यात् (१२।५।१।६)। सकृद्ग्रहणेन द्वितीयाहुतेर्निरासः। अत्रोदिङ्गनोपमार्जन-प्राशनो-दुत्तरण-समिदाधानादि न कार्यम्। शरीरस्यास्थ्नां वा गृहागमनपर्यन्तं प्रतिदिनमेवं सायं प्रातर्होमः पुत्रादिभिः कार्यः। नान्यत् स्मार्तहोम-पक्षादि-पिण्डपितृयज्ञादिकं कुर्यात् ॥ १२ ॥

[ अस्थ्नामलाभे पर्णशरविधिः ]

**शरीराण्याहृत्य कृष्णाजिने पुरुषविधिं विधायोर्णाभिः प्रच्छाद्याज्येनाभिघार्य पूर्ववद्दाहः ॥ १३ ॥**

असन्निकृष्टग्रामान्तरमरणेऽस्थीन्याहृत्य कृष्णाजिने यथावदङ्गनिवेशेन पुरुषाकारं कृत्वा अग्नीन् विहृत्य सन्दीपनवत्पुखाधिश्रयणादिना दाहः (२५।७।१२) ॥ १३ ॥

अस्थ्नामप्यलाभे आह—

**शरीरनाशे त्रीणि षष्टिशतानि पलाशवृन्तानां कृष्णाजिने पूर्ववत् ॥ १४ ॥**

पुरुषविध्यादि। तेषामेव सञ्चयनं, पितृमेधश्च तैरेव ॥ १४ ॥

[ आग्रयणाकरणे प्रा० ]

**अनिष्ट्वाऽग्रयणेन नवस्याश्नीयाद् भुक्त्वा पतितस्य प्रतिगृह्य, विक्रि-याणयोर्वाऽयाज्यं याजयित्वा ऽविं प्रतिगृह्योभयादन्त्रा, यस्याग्निभिरन्यं याजयेद्युर्यो वा यजेत वैश्वानरं निर्वपेत् ॥ १५ ॥**

अत्र स्मार्तमपि प्रायश्चित्तं सर्वत्र कार्यम् ॥ १५ ॥

कृष्णं वासो दक्षिणा ॥१६॥

वैश्वानरस्य ॥१६॥

[ पुरोडाशदाहे प्रा० ]

पुरोडाशे क्षामेऽवशिष्टꣳ समाप्य तदेव पुनर्निर्वपेत् ॥१७॥

क्षामे दग्धे । समाप्याज्येन कर्मापवर्गान्तं कृत्वा तद्दैवत्यहविषा पुनरग्न्यन्वाधानादि-कर्मापवर्गान्तो याग कार्यः ॥१७॥

[ सकलस्य पुरोडाशस्य दाहे एव प्रायश्चित्तं नैकदेशदाहे ]

किमिदं सर्वस्य पुरोडाशस्य दाहे एव, नेत्याह—

एकदेशे दग्धेऽपि संयोगात् ॥१८॥

दाहसंयोगात् ॥१८॥

दर्शनाच्च ॥१६॥

"यदा तद्धविः सन्तिष्ठतेऽथ पुनर्निर्वपेत्" इति तेनैव हविषा समाप्तिं दर्शयति । तेन हविषा समापनं चैकदेशदाहे एवोपपद्यते ॥१६॥

एवं प्राप्ते आह—

न नित्यत्वात् ॥२०॥

नैकदेशदग्धे प्रायश्चित्तं, किं तु सर्वदाहे एव । एकदेशदाहस्य वर्जयितुमशक्यत्वेन नित्यत्वात् ॥२०॥

तर्हि दर्शनं किमर्थमत आह—

कर्मार्थं दर्शनम् ॥२१॥

तद्धविः सन्तिष्ठते इत्यत्र हविःशब्दो लक्षणया कर्मवाचकः । तद्धविष्कं कर्म आज्येन समापनीयमित्यर्थः ॥२१॥

इत्यष्टमी कण्डिका ॥ ८ ॥

[ उपाकृतस्य पशोः पलायने प्रा० ]

पशुश्चेदुपाकृतः पलायेत वायवे तमनुदिश्यान्यं तद्वयसमालभेत ॥ १ ॥

कृतोपाकरणः पशुर्यूपनियोजनात्प्राक् पलायेत यदि, तदा वायो एष ते पशुरित्येवं सङ्कल्प्यान्यं पशुं तद्वर्णं तद्वयस्कं पुनरुपाकृत्यालभेत। नियोगादूर्ध्वं प्राप्ताध्वर्यवं हुत्वा तेनैव यागः। अप्राप्तावाध्वर्यवं हुत्वाऽन्येन सदृशेन यागः ॥ १ ॥

उपलभ्य वायवे तम् ॥ २ ॥

उपाकृतं पशुमुपालभ्य वायवे आलभेत ॥ २ ॥

अनादरणं वा ॥ ३ ॥

अचोदितत्वान्न वाय्वर्थमालभेत, किं तूत्सृजेत् ॥ ३ ॥

[ प्रयाजात्प्राक् पशुमरणे ]

**प्राक् प्रयाजेभ्यश्चेन्नियुक्तो म्रियेतान्यमालभेत ॥ ४ ॥**

प्रवृत्तेषु प्रयाजेषु मृते नैव यागः ॥ ४ ॥

**पूर्वस्य वपां दक्षिणाग्नौ जुहुयात् ॥ ५ ॥**

प्राक् प्रयाजेभ्यो मृतस्य वपां निरूढादौ दक्षिणाग्नौ होतव्या ॥ ५ ॥

[ सोमे प्रयाजानुष्ठानात्प्राक् पशुमरणे ]

**सोमश्चेन्मार्जालीये ॥ ६ ॥**

प्राक्प्रयाजेभ्यो मृतस्य वपां जुहुयात् ॥ ६ ॥

तत्र मन्त्रमाह—

**ईजानाः पितरो ये पितामहा येऽनीजाना यज्ञियाः सोमपास्तेषामेष पशु रालब्धोऽग्नौ स्वाहा देवेभ्यः सुहुतो यमायेति ॥ ७ ॥**

**अनपनयो वाऽदुष्टत्वात् ॥ ८ ॥**

प्राक् प्रयाजेभ्यः स्वयं मृतस्य पशोः परित्यागो न कार्यः । अतस्तेनैव यागस्तदीयैव वपा होतव्या । नहि स्वयं मरणेन किमपि दुष्टम् । अत एव ज्ञापकाद्धिष्ण्येष्वग्निविहरणानन्तर मग्नयो धार्या इति गम्यते । अन्यथा मार्जालीयेऽग्न्यभावाद्धोमविधानानुपपत्तेः ॥ ८ ॥

[ पश्ववदानविनाशे हृदयनाशे चान्येन यागः ]

**अवदानहानौ नाद्रियेत ॥ ९ ॥**

नाशदोषापहारादिना पश्ववदानहानौ तत्स्थामन्यस्योत्पादनं नादरणीयम् (३।८।३।१६)॥९॥

अवदानत्वाविशेषाद्धृदयनाशे ऽप्यनादर इति प्राप्ते आह—

**हृदयनाशे त्वन्यमालभेतेत्येके "हृदयं पशुरिति श्रुतेः (३।८।३।१६) ॥ १० ॥**

हृदयनाशे सर्व एव पशुर्भ्रष्ट इत्यर्थः ॥१०॥

**सर्वेषां वाऽऽज्यस्य यजेत् ॥ ११ ॥**

वाशब्दः सूत्रद्वयोपात्तपक्षव्यावर्त्तकः । सर्वेषामावदानानां प्रत्येकं नाशे आज्यस्यैव यजेत् ॥ ११ ॥

**अर्थवादमात्रं पशुवचनम् ॥ १२ ॥**

हृदयमु वै पशुरिति वचनं हृदयस्यैवाग्रे ऽवद्यती ( ३।८।३।१५ ) त्यग्रताविधेरर्थवाद एव ॥ १२ ॥

[ मरणकाले पशोः शब्दकरणे प्रा० ]

**संज्ञप्यमानश्चेद्वाश्येताहुतिं जुहुयाद्यत्पशुर्मायुमकृतोरो वा पद्भिराहते । अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंऽहस" इति ॥ १३ ॥**

मार्यमाणः शब्दं कुर्याच्चेदाहवनीये सकृद् गृहीतं जुहोति ॥ १३ ॥

**"इमं मे वरुणेति च प्रत्यृचं द्वाभ्याम् ( २१।१-२ ) ॥ १४ ॥**

चः समुच्चये ॥ १४ ॥

[ पशूखायाः सान्नाय्योखायाश्च स्रवणे ]

**पशूखा चेत्स्रवेत्सान्नाय्योखा वा तामभिमन्त्रयेतोखाꣳ स्रवन्तीमगदामगन्म त्वष्टा वायुः पृथिव्यन्तरिक्षम् । यतस्रुतद्दुधुतमग्नौ तदस्तु न तत्प्राप्नोति निर्ऋतिः परस्तादिति ॥१५॥**

सोमे कालाहुतिश्च । भुवपतय इति स्कन्नप्रायश्चित्तं च सर्वत्र ॥१५॥

इति नवमी कण्डिका ॥ ९ ॥

---

[ यूपस्याङ्कुरोत्पत्तौ प्रा० ]

**यूपविरोहणेऽन्तस्तन्त्रꣳ सꣳस्थिते ऽहनि त्वाष्ट्रं बहुरूपमालभेत ॥ १ ॥**

अहर्गणे प्रायश्चित्तमिदं न त्वेकसुत्येषु । अहर्गणे तन्त्रमध्ये आर्द्रस्य निखातस्य यूपस्याङ्कुरोद्भेदे सति समाप्तेऽहनि त्वष्टृदेवत्यं चित्रवर्णं छागमालभेत ॥ १ ॥

[ अनूबन्ध्यायां गर्भवत्यां प्रा० ]

अनूबन्ध्यायां गर्भसन्देहे तत्सद्भावे चाह—

**अनूबन्ध्यायै वपामुत्खिद्यानुमर्शं गर्भमेष्टवै ब्रूयात् ॥ २ ॥**

अनूबन्ध्याया वपोत्खेदानन्तरमध्वर्युः शमितारं प्रति "अनुमर्शं गर्भमेष्टवै" इति पृच्छेत् । अवमृश्यावमृश्य गर्भमन्वेषय" इति प्रैषार्थः ॥ २ ॥

**दर्शने स्थालीं चैवोष्णीषं चोपकल्पयितवै ब्रूयात् ॥३॥**

गर्भस्य दर्शने सति "स्थालीं चैवोष्णीषं चोपकल्पयितवै" इति प्रेष्येच्छमितारमध्वर्युः। स्थाली गर्भरसश्रपणाय । उष्णीषं गर्भवेष्टनाय ॥ ३ ॥

**वपान्तेऽनपेक्षमध्वर्युः प्रेष्यति "निरुहैतं गर्भमिति ( ४।५।२।३ ) विरुज्य श्रोणी प्रत्यञ्चं निरूहितवै ब्रूयात् ॥ ४ ॥**

प्रैषद्वयमेतदतो मध्ये विरामः । गर्भस्यानेकत्वेऽप्यनूहः, प्रकृतित्वात् । वपायागान्ते आहवनीयप्रदेशात्संज्ञपनस्थानमेत्य एतं गर्भमुदरप्रदेशाद्बहिर्निष्काशये-त्याद्यप्रैषार्थः । श्रोणी विदार्य प्रत्यञ्चं समृद्धगर्भवन्निष्काशयेति द्वितीयप्रैषार्थः ॥ ४ ॥

**निरुह्यमाणमभिमन्त्रयत "एजतु दशमास्य" इति ( ८।२८ ) ॥ ५ ॥**

निष्काश्यमानम् ॥ ५ ॥

**पशुवदवदानं गर्भस्य ॥ ६ ॥**

हृदयादेः । तेन प्रकृतिवदुखाधिश्रयणादि सर्वं कार्यम् ॥ ६ ॥

**कण्ठं वाऽवकृत्य स्थाल्यां मेधस्रवणम् ॥ ७ ॥**

अनिष्पन्ने गर्भस्य कण्ठं वा छित्वा उपकल्पितायां स्थाल्यां गर्भरसं स्रावयेत् ॥७॥

**अवदानसहितमधिश्रित्योष्णीषवेष्टितं गर्भं पार्श्वतो निदधाति ॥ ८ ॥**

स्थालीस्थं मेधं वसावदानसंस्पृष्टमेव शामित्रेऽधिश्रित्य पार्श्वतो निदध्यात् ॥ ८ ॥

**अनभिघारितमवदानवद्धृत्वा दक्षिणतो मेधं निदधाति ॥ ९ ॥**

तं मेधमनभिघारितमेवान्तराग्नी हृत्वाऽवदानानां दक्षिणतो निदध्यात् ॥ ९ ॥

**प्रतिप्रस्थाता वशाऽवदानकाले प्रचरण्यां मेधमवद्यति ॥ १० ॥**

प्रचरणी पालाशी स्रुक् वसाहोमहवन्यतिरिक्ता ॥ १० ॥

**अवदानान्यनु जुहोति "यस्यै त" इति ( ८।२६ ) ॥ ११ ॥**

वसावदानहोमानन्तरं प्रतिप्रस्थाता मेधं जुहुयात् ॥ ११ ॥

**"अङ्गान्यहुता यस्य यस्या इति यथालिङ्गम् ॥ १२ ॥**

यस्यै त इति मन्त्रे पुंगर्भे यस्य तं मात्रेति, स्त्री गर्भे यस्यै तां मात्रेति विशेषः । गर्भद्वये गर्भबहुत्वे च ययोर्येषामित्याद्यूहश्च बोध्यः ॥ १२ ॥

**अविज्ञाते पुंवत् ॥ १३ ॥**

स्त्रीपुरुषरूपेण विज्ञाते गर्भे यस्य तं मात्रेत्येव प्रयोगः ॥ १३ ॥

**स्विष्टकृद्वनस्पत्यन्तरे प्रत्येत्य प्रतिप्रस्थाता प्रचरण्याᳬ सर्वमेधमवद्यति ॥१४॥**

वनस्पतियागानन्तरं स्विष्टकृद्यागात्पूर्वं प्रतिप्रस्थाता दक्षिणदेशे प्रत्यागत्य सर्वं गर्भरसमवद्यति, न किमप्यवशेषयेत् ॥ १४ ॥

**स्विष्टकृतमनु जुहोति "पुरुदस्म" इति ( ८।३० ) ॥ १५ ॥**

**स्विष्टकृदन्त उष्णीषवेष्टितस्य वृक्षासञ्जनं वाऽऽखूत्करोपकिरणं वा ॥१६॥**

**अनुव्याहारभयं त्वेतेषु ॥ १७ ॥**

एतेषु वृक्षासञ्जनादिपक्षेषु "वृक्ष एनं मृतमुद्धास्यन्ति" "अप्स्वेव मरिष्यति" ( ४।५।२।१३-१४ ) इत्यादिवैरिकर्तृकनिन्दाभयं भवति । अतो वक्ष्यमाणं पक्षान्तरं कुर्यात् । पक्षान्तरविधानार्थमेतदुक्तम् ॥ १७ ॥

पक्षान्तरमाह—

**समिष्टयजुरन्ते शामित्र एव जुहुयात्तिष्ठन्मरुत इत्यस्वाहाकृत्य (८।३१) ॥१८॥**

स्वाहेत्यनुच्चार्य ॥ १८ ॥

[ अग्निहोत्रे पात्रासादनानन्तरमाहवनीयानुगमने, होमात्प्राग्गार्हपत्यानुगमने च प्रा० ]

**"महीद्यौरित्यङ्गारैरभ्यूहति (८।३२) ॥ १९ ॥**

गर्भम् ॥ १९ ॥

**अग्निहोत्र आसन्नेषु चेत्पात्रेष्वाहवनीयोऽनुगच्छेद्गार्हपत्ये जुहुयात्प्राण उदानमप्यगादिति ॥ २० ॥**

होमात् प्राक् गार्हपत्यानुगमने आहवनीये होमः ॥ २० ॥

[ गार्हपत्यानुगमने ]

**गार्हपत्यश्चेदाहवनीयऽ उदानः प्राणमप्यगादिति ॥ २१ ॥**

होमात्प्राग्गार्हपत्येऽनुगते आहवनीये जुहुयात् ॥२१॥

[ दक्षिणाग्न्यनुगमने प्रा० ]

**दक्षिणाग्निश्चेद्गार्हपत्ये व्यान उदानमप्यगादिति ॥ २२ ॥**

[ पात्रासादनान्तरं सर्वेषामग्नीनां नाशे ]

**सर्वे चेत्तूर्णं मथित्वा प्रतिवातमुद्धृत्य वायव्यामाहुतिꣳ हुत्वा यथाऽनुपूर्व्यकरणम् ॥ २३ ॥**

आसन्नेषु पात्रेषु यदि सर्वेऽग्नयः शाम्येयुस्तदा शीघ्रं मथित्वा वातो यां दिशं प्रति गच्छेत्तस्यां दिशि आहवनीयमुद्धृत्य वायवे स्वाहेति हुत्वा पुनस्तमेवाग्निं प्राञ्चमुद्धृत्य दक्षिणाग्निं चोद्धृत्य यथावदग्निहोत्रक्रिया कार्या (११।५।३।११) ॥ २३ ॥

**निवातं चेत्पूर्ववन्मथित्वा प्राञ्चमुद्धृत्य गार्हपत्ये संस्कृत्य पश्चादाहवनीयस्य स्वयं पानम् ॥ २४ ॥**

वातस्याभावो निवातम् । वाताभावे सर्वाग्न्यनुगमने । संस्कृत्येति संस्कारविधानमहोमार्थत्वादभिहितम् । "गार्हपत्ये संस्कारा" (१।८।३४) इति होमार्थः संस्कारः । सोऽत्र न प्राप्नोति । आहवनीयस्य पश्चादुपविश्य स्वयं यजमानः पिबेत् । नैमित्तिकमिदं नाग्निहोत्रविकारे इति कर्कः ॥२४॥

[ अग्निहोत्रहोमस्य कालातिपत्तौ प्रा० ]

**अग्निहोत्रातिपत्तावाहुतिं जुहुयान्मनो ज्योतिर्जुषतामाज्यस्य विच्छिन्नं यज्ञꣳ समिमं दधातु या इष्टा उषसो या अनिष्टास्ताः सन्तनोमि हविषा घृतेन स्वाहेति ॥ २५ ॥**

सायंप्रातर्होमस्य कालातिक्रमे तत्स्थाने एकाहुतिः, कार्यातिपत्तित्वात् । अनेकदिन होमविच्छेदेऽप्येकैव । सायमग्निहोत्रे ऽहुते ऽनादिष्टं हुत्वा प्रातःकालोद्धरणात्प्राक् होतव्यं प्रातस्तन्त्रेण वा । प्रातरहुतं चेदनादिष्टं हुत्वा सायमुद्धरणात्प्राक् होतव्यम् । उद्धरणकालातिक्रमे मनस्वत्याहुतिः । होमत्रयेऽतिक्रान्ते तन्तुमतीष्टिः । "लुप्ते होमत्रये तद्वत्पौर्णमासादिषु त्रिषु । तथाऽऽग्रयणयुग्मे तु लुप्ते तन्तुमती भवेत्" इति पूर्णाहुतिं वा जुहुयादिति मानवे ॥ २५ ॥

इति दशमी कण्डिका ॥१०॥



[ सत्रं करिष्यामीति संकल्प्य तदकरणे विश्वजिद्यागः ]

**सत्रायाऽऽगूर्याशक्तौ विश्वजिताऽतिरात्रेण यजेत ॥१॥**

गुरी उद्यमे । सत्रं करिष्यामीति सङ्कल्प्य तदशक्तौ अतिरात्रसंस्थेन विश्वजिता प्राकृत दक्षिणेन यजेत ( १।४।७७ ) ॥ १ ॥

**सत्राङ्गं वाऽऽगूर्णमात्रश्रुतेः ॥ २ ॥**

अथवा सत्राङ्गं विश्वजिद्भवति । अतः कृतेऽपि सत्रे भवति । उद्यममात्रस्य निमित्त श्रवणात् । नहि कश्चिदनुद्यम्य करोति । आगूर्णमेव विश्वजितो निमित्तम् । एवं पक्षद्वये प्रदर्शिते सिद्धान्त उच्यते । सत्रे कृते न विश्वजित्, अपि तु कृते एव । आगूर्णस्य निमित्तस्य अकृते एव सत्वादिति कर्काचार्याः ॥ २ ॥

**निष्क्रयवादाच्च ॥ ३ ॥**

विश्वजिद्यागं प्रकृत्योच्यते । "सर्वेभ्यः पृष्ठेभ्यः सर्वेभ्यः स्तोमेभ्यः सर्वेभ्यश्छन्दोभ्य

आत्मानं निष्क्रीणीते। निष्क्रयश्चाकृते एव भवति। सत्रस्थाने विश्वजितं कृत्वा तेनात्मानं निष्क्रीणीत इत्यर्थः ॥ ३ ॥

[ दीक्षितानामर्द्धोत्थाने प्रा० ]

दीक्षितानां चेत्साम्युत्थानं जायेत सोमं विभज्य तेनैव सर्ववेदसेन सर्व पृष्ठेन यजेरन् ॥ ४ ॥

सत्राय दीक्षितानां सत्रं नैव समापयाम इति बुद्धिर्जायेत चेत् तदा सोमोपलक्षितं धान्यघृतादिद्रव्यमात्मीयमात्मीयं पृथक्कृत्य सर्वस्वदक्षिणेन सर्वपृष्ठेन पृथक् पृथग्यजेरन् ॥४॥

क्रीते विभागश्रुतेः ॥ ५ ॥

क्रीते सोमे विभागो नाक्रीते। विभागश्रवणात् ( ताण्ड्य० ९ ३ )। न चाक्रीतस्य विभागः संभवति ॥ ५ ॥

उपपाताद्वोभयतः ॥ ६ ॥

वाशब्दः पक्षव्यावृत्तौ। क्रीते चाक्रीते च सोमे साम्युत्थाने विश्वजिद्भवति। सोम क्रयात्पूर्वमप्युपपातात् ॥ ६ ॥

विभागः क्रियागुणत्वात् ॥ ७ ॥

यद्यत्र सोममपभज्येत्यनेन सोमस्य विभागो विधीयते। सोमस्य क्रियागुणत्वात्। इतरसाधारणद्रव्यवद्यागार्थत्वात् ॥ ७ ॥

[ दक्षिणानयनानन्तरमुद्गात्राद्यपच्छेदे ]

अनीतासु चेद्दक्षिणासूद्गात्रपच्छेदोऽदक्षिणꣳ सꣳस्थाप्य पुनराहारः ॥ ८ ॥

अध्वर्यु-प्रतिप्रस्थातृ-प्रस्तोतृद्गातृ-प्रतिहर्तृ-सुन्वतां परस्परमन्वारब्धानां गमनं विहितम् ( ९।६।२७ )। तत्र प्रातःसवने यदि प्रस्तोत्रा सह कृतान्वारम्भ उद्गाता विभक्तो भवेत् तदा तं क्रतुमदक्षिणं समाप्य पुनः करणम् ॥ ८ ॥

प्रस्तोता चेद् ब्रह्मणे वरं दत्वा पुनर्वरणम् ॥ ९ ॥

प्रातःसवने माध्यन्दिने वा सवनेऽन्वारब्धः प्रस्तोता विसृजेच्चेत् पुनः प्रस्तोतुर्वरणम् ॥ ९ ॥

प्रतिहर्त्ता चेत्सर्ववेदसं देयम् ॥ १० ॥

वेदो धनम्। तच्च क्रत्वर्थतया निर्दिष्टव्यतिरिक्तम्। अन्यथा क्रतुसमाप्त्यसिद्धेः ॥ १० ॥

युगपच्चेद्विरोधाद्विकल्पः ॥ ११ ॥

उद्गातृप्रतिहर्त्रोर्युगपदपच्छेदे प्रतिहर्त्रपच्छेदनिमित्तं सर्वस्वदानं प्राप्नोति उद्गात्रपच्छेदनिमित्तमदक्षिणं समापनं प्राप्नोतीति विरोधे समुच्चयासंभवाद्विकल्पः ॥ ११ ॥

पूर्वदौर्बल्यमानुपूर्व्ये प्रकृतिवत् ॥१२॥

उद्गातृप्रतिहर्त्रोरेव विच्छेदस्य क्रमे सति यदा पूर्वमुद्गात्रपच्छेदः पश्चात्प्रतिहर्त्रपच्छेदस्तदा पूर्वनिमित्तस्य दुर्बलत्वम्, यः पश्चादपच्छिन्नस्तदपच्छेदनिमित्तमेव प्रायश्चित्तम्। उत्पन्नस्यापि पूर्वप्रायश्चित्तज्ञानस्योत्तरेण बाधितत्वात्। यथा प्राकृतं "कौशं बर्हिरिति (१।४—) ज्ञानं पूर्वमुत्पन्नमपि पाश्चात्येन वैकृतेन शरमयं बर्हिर्भवतीति ज्ञानेन बाध्यते ॥१२॥

यस्मिन्नहन्युद्गात्रपच्छेदोऽहर्गणे तस्यावृत्तिः ॥१३॥

द्विरात्रादावहर्गणे यस्मिन्नहनि यस्यां सुत्यायामुद्गातृविसर्गस्तदैकमहरदक्षिणं कृत्वा तस्मिन्नहनि व्युत्क्रामतेत्यत आरभ्यावृत्तिर्भवति, न तु सकलस्याहर्गणस्य ॥१३॥

[पत्न्यां रजस्वलायां ज्योतिष्टोममध्ये प्रा०]

पत्न्युदक्या दीक्षारूपाणि निधाय सिकतास्वासीतोपस्रवणात् ॥१४॥

ज्योतिष्टोमादौ रजस्वला स्त्री दीक्षाभिव्यञ्जकानि परिधानीयोत्तरीयवस्त्र-शङ्कु-मेखलो-ष्णीषादीनि शुद्धानि कृत्वा निधायारक्तविरमणादुप विशेत् ॥१४॥

तिष्ठेत्सन्धिवेलयोः ॥१५॥

सिकतास्वेव तिष्ठेत् ॥१५॥

वेदिसमीपे सुत्यासु ॥१६॥

सुत्यासु वर्त्तमानासु वेदिसमीपे सिकतास्वेव तिष्ठेत् ॥१६॥

त्रिरात्रान्ते गोमूत्रमिश्रेणोदकेन स्नापयित्वा परिधानादि करोति सान्निपातिकम् ॥१७॥

पदार्थजातम्। नाराद्रुपकारकं दीक्षणीयाभूम्युल्लेखनादि ॥१७॥

प्रजातायाश्च दशरात्रादूर्ध्वꣳ स्नानादि ॥१८॥

कर्ममध्ये प्रसूतायाः ॥१८॥

न गर्भिणीं दीक्षयेदित्येकेऽयज्ञिया गर्भा" इति श्रुतेः (४।५।२।१०) ॥१९॥

नानूबन्ध्याप्रकरणात् ॥२०॥

अनूबन्ध्यां प्रकृत्य श्रूयते—"अयज्ञिया गर्भा" इति। अतो न सार्वत्रिकमेतत्। तत्रापि चायमर्थवादो मन्त्रस्तुत्यर्थः। अतस्तत्रापि न किंचिदेतत् ॥२०॥

[दीक्षितस्यामनोज्ञस्वप्नदर्शने प्रा०]

दीक्षितोऽमनोज्ञꣳ स्वप्नं दृष्ट्वा जपेत् "पर्यावर्त्ते दुःस्वप्नात्पापः स्वप्नादभूत्यै ब्रह्माऽहमन्तरं करवे परः स्वप्नमुखा कृधीति ॥२१॥

पूर्वं कालाहुतिवाचने ॥२१॥

[दीक्षितस्य रेतस्कन्दने प्रा०]

इन्द्रियꣳ स्कन्नमद्भिरुपसिञ्चेद्यो मेऽद्य पयसो रसः पदि दोषादुदपिथः। अग्निहोत्रमिव सोमेन तमहं पुनराददे" इति ॥२२॥

दीक्षितः स्कन्नस्य रेतस उपर्युदकं निनयेत्कालाहुतिवाचनपूर्वकम् ॥२२॥

[दीक्षितस्य जलतरणे प्रा०]

उदकं चेत्तरेत्तदभिमन्त्रयेदुन्दतीर्बलं धत्तौजो धत्त सहो धत्त मा मे दीक्षां मा तपो निर्बधिष्ठेति ॥२३॥

तडागनद्यादिस्थमुदकं तरेच्चेद्दीक्षितः ॥२३॥

[ दीक्षितस्योपरि अववर्षणे प्रा० ]

अववृष्टश्च ॥२४॥

उपरि मेघोदकेन सिक्तोऽनेनैव मन्त्रेणाभि मन्त्रयेत् ॥२४॥

[ दीक्षितस्यामेध्यदर्शने प्रा० ]

अमेध्यं दृष्ट्वा सूर्यमुपतिष्ठेताबद्धं मनो दरिद्रं चक्षुः सूर्यो ज्योतिषाᳫं श्रेष्ठो दीक्षे मा मा हासीदिति ॥२५॥

अमेध्यं पुरीषादिकं दीक्षितो दृष्ट्वा कालाहुतिवाचनपूर्वम् ॥२५॥

[ दीक्षितस्याङ्गे शोणितोत्पत्तौ प्रा० ]

शोणितं चेत्कुर्याद्रुद्रियाभ्योऽद्भ्यः स्वाहेति जुहुयात् ॥२६॥

यत्नेन स्वदेहाद्रुधिरं निष्काशयेच्चेद्दीक्षितः । कालाहुतिवाचने चात्र । अध्वर्युः सकृद्गृहीतेनाहवनीये ॥२६॥

[ दीक्षितस्य निष्ठीवने प्रा० ]

निष्ठीवेच्चेद् बीभत्साभ्योऽद्भ्यः स्वाहेति ॥२७॥

कालाहुतिवाचने च ॥२७॥

[ दीक्षितस्य धावने प्रा० ]

धावेच्चेद्वायवे स्वाहेति ॥२८॥

कालाहुतिवाचने च ॥२८॥

स्विद्याच्चेत्तपस्याभ्योऽद्भ्यः स्वाहेति ॥२९॥

कालाहुतिवाचने च । स्वेदं प्राप्नुयाच्चेत् ॥२९॥

[ दीक्षितस्य दिवा स्वापे प्रा० ]

स्वप्याच्चेत्प्रजापतये स्वाहेति ॥३०॥

दिवा । कालाहुतिवाचने च ॥३०॥

[ दीक्षितस्याश्रुपाते प्रा० ]

आर्त्यश्रुकरणे तृप्राभ्योऽद्भ्यः स्वाहेति ॥३१॥

दीक्षितकर्तृके दुःखेनाश्रुपाते । कालाहुत्यादि ॥३१॥

[ दीक्षितस्य वमने प्रा० ]

छर्द्याविष्टः पयः पीत्वोदकं वा छर्दयीत निष्ठ्यूतवद्धोमः ॥ ३२ ॥

छर्दिर्वमनम् । पत्न्या अप्येषु निमित्तेषु । एतान्येव प्रायश्चित्तानि । सूर्योपस्थाना-द्यमन्त्रम् ॥ ३२ ॥

[ दीक्षितस्य चमसादौ मूत्रादिसम्पर्के प्रा० ]

वयसाऽप्रस्तुते चमसेऽन्तरिक्षेण पतति यातुधानप्रबोधितश्चमसं यमभ्यचुश्च्युतदग्निष्टच्चुन्धतादिह पुनः स्वाहेति ॥ ३३ ॥

पक्षिणा चमसस्योपरि मूत्रादिस्रवणे कृते होमः ॥ ३३ ॥

[ दीक्षितस्योपाकृतचमसे मूत्रादिसंसर्गे प्रा० ]

**अभ्युपाकृतचमसमुपस्थे कृत्वा ऽग्न आयाहि वीतये गृणानो हव्यदातये । नि होता सत्सि बर्हिषि स्वाहेति ॥ ३४ ॥**

सदसो निष्काशिते चमसे स्तोत्रस्योपाकरणे कृते सति वयसाऽवप्रस्रुते तं चमसमुपस्थे कृत्वा होमः । पूर्वसूत्रं त्वनुपाकृतविषयम् ॥ ३४ ॥

**आग्नीध्रीये वा "हिरण्यगर्भ" इत्यृचा (१३।४) ॥ ३५ ॥**

आहवनीये वेति विकल्पः । कालाहुतिवाचनेऽत्रापि पूर्वं कार्यं ॥ ३५ ॥

इत्येकादशी कण्डिका ॥ ११ ॥



[ हुतस्याहुतस्य च सोमस्य संसर्गे प्रा० ]

**हुताहुतसꣳसर्गेऽङ्गारमन्तःपरिधि निर्वर्त्य कुशतरुणेन जुहोति—"हुतस्य चाहुतस्य चाहुतस्य हुतस्य च । पीतापीतस्य सोमस्येन्द्राग्नी पिबतꣳ सुतमिति वषट्कृते ॥ १ ॥**

हुतस्य सोमस्य ग्रहचमसादिस्थस्याभक्षितेन सोमेन सह संसर्गे, अहुतस्य वा ग्रहादिस्थस्य हुतेन चमसादिस्थहुतावशिष्टबिन्दुपातादिना संसर्गे सति परिधिसमीपे एव होमसमर्थमङ्गारमग्नेः पृथक्कृत्य संसृष्टं सोममङ्गारे वषट्कारानन्तरं जुहुयादध्वर्युः ॥ १ ॥

**चुक्रुते स्वाहेत्यनुवषट्कृते ॥ २ ॥**

तमेव संसृष्टं सोमं कुशतरुणेनैव ॥ २ ॥

**सꣳसर्गकाले वोपपातसामर्थ्यात् ॥ ३ ॥**

न वा वषट्कारानुवषट्कारान्ते होमः, किन्तु हुताहुतसोमसंसर्गकाले एव । नैमित्तिकस्योपपातकालता न्याय्या ॥ ३ ॥

**तस्य भक्षणं "मा यजमानं तमो विदन्मर्त्विजो मा यः सोममिमं पिबा सꣳसृष्टमभयं क्रतुमिति ॥ ४ ॥**

भक्षणं भक्षाधिकारिणामध्वर्योश्च । पूर्वं कालाहुतिवाचने च ॥ ४ ॥

[ सोमस्य वर्षाम्बुमिश्रणे ]

**अवघृष्टभक्षणमिन्दुरिन्दुमवागात्तस्य त इन्दविन्द्रपीतस्येन्द्रियावतो गायत्रच्छन्दसः सर्वगणस्य सर्वगण उपहूतस्योपहूतो भक्षयामीति ॥ ५ ॥**

ग्रहचमसादिस्थसोमस्य वर्षाम्बुमिश्रस्य ( उपरि वर्षणेन ) स्वकाले एव भक्षणं भक्षाधिकारिणामनेन मन्त्रेण ॥ ५ ॥

**त्रिष्टुप्छन्दसो जगच्छन्दस इति यथासवनम् ॥ ६ ॥**

पूर्वमन्त्रे गायत्रच्छन्दस इत्यस्य स्थाने त्रिष्टुप्छन्दसः जगच्छन्दसः इति क्रमेण माध्यन्दिन तृतीयसवनयोः पठनीयमिति विशेषः ॥ ६ ॥

अच्छन्दसमेके ॥ ७ ॥

गायत्रच्छन्दसः एवमादि पदवर्जितं मन्त्रं पठन्ति ॥ ७ ॥

[ चमसस्य भूमौ पतने प्रा० ]

पतितं चमसमालभते ऽस्कन्पर्जन्यः पृथिवीमस्कन् गामृषभो युवा । अस्कन्नेमा विश्वा भूतानि प्र स्कन्नाजायताꣳ॰ हविरिति ॥ ८ ॥

चमसस्थं स्कन्नं चेदालभते ।

चमसस्थसोमादन्यसोमस्कन्दने तु पूर्वोक्तमेव देवान्दिवमगन्निति । पूर्वं कालाहुति-वाचने च ॥ ८ ॥

[ चमसादिस्थसोमस्य श्वाद्यवघ्राणे ]

उत्तरपूर्वे जुहोत्युपरवे चमसं दुष्टं प्रजापतये स्वाहेति ॥९॥

अमेध्यपात-श्वावघ्राणादिना दुष्टं चमसस्थं सोममधिषवणफलकमुदुह्योपरवे जुहु-यात् । पूर्वं कालाहुतिवाचने च ॥ ९ ॥

[ चमसातिरिक्तसोमस्य श्वाद्यवघ्राणे ]

अथ येऽन्येऽनादिष्टास्तान् खरे जुहुयादग्नये वैश्वानराय स्वाहेति ॥ १० ॥

चमसव्यतिरिक्ताः सोमाः । खरे ग्रहसादनार्थे कृते । पूर्वं कालाहुति वाचने च ॥ १० ॥

[ नाराशंसानां शोषणे ]

नाराशꣳ॰सश्चेदुपवायात्तदुक्तम् ॥ ११ ॥

वै शोषणे । शुष्येत् । पूतभृतश्चमसान्, (९।५।२२) "सावित्र-पात्नीवत-हारियोजना-नुपक्षीणानाग्रयणात्" (९।५।२१) इत्युक्तत्वात्तत एवाप्याययेयुः । उत्तरेण सह विकल्पार्थं पुनरुक्तिः ॥ ११ ॥

पक्षान्तरमाह—

अन्त्याद्वा ग्रहात्स्तोकमासिच्य भक्षयेयुः ॥ १२ ॥

आग्रयणोऽन्त्यो ग्रह उच्यत इति कर्कः । तस्मादल्पं सोमं शुष्के नाराशंसेऽवनीय वा भक्षयेयुः ॥ १२ ॥

कलशश्चेदुपवायात्क्षीरासेचनमेके ॥१३॥

उपवायात=शुष्येत् ॥१३॥

हिरण्यवद्वोदकम् ॥१४॥

अथवा द्रोणकलशे शुष्के सुवर्णसंयुक्तमुदकं निनयेत् ॥१४॥

[ पूतभृति उपक्षीणे प्रा० ]

उन्नयने च ॥१५॥

उन्नयन्त्यस्मादित्युन्नयनं पूतभृत् । तस्मिन्नुपक्षीणेऽपि पयो हिरण्यवदुदकं वा सिञ्चेत् ॥ १५ ॥

[ सोमाभिषवपाषाणभेदने प्रा० ]

**अद्रिभेदने मारुतेन ब्रह्मसाम्ना स्तुवीरन् ॥ १६ ॥**

सोमाभिषवार्थपाषाणस्य भेदने मरुल्लिङ्गास्वृत्सु ब्रह्मसाम्ना स्तुवीरन्। कालाहुतिवाचने च पूर्वम् ॥ १६ ॥

**चतुस्त्रिꣳशद्धोमश्च ॥ १७ ॥**

चतुस्त्रिंशदाहुतीनां होमश्चाध्वर्युकर्तृकोऽद्रिभेदने (२५।६।१) ॥ १७ ॥

[ सोमस्यापहरणे ]

**सोमापहरणे विधावतेच्छतेति ब्रूयात् ॥ १८ ॥**

शत्रुणा सोमापहरणे कृतेऽध्वर्युर्यजमानपुरुषान्प्रेष्येत्। त्वरया गच्छत, अन्वेषयत इति प्रैषद्वयार्थः ॥ १८ ॥

[ अपहृतस्य सोमस्यालाभे ]

**अदर्शनेऽरुणपुष्पाण्यर्जुनान्यभिषुणुयात् ॥ १९ ॥**

अपहृतसोमस्याप्राप्तौ सोमान्तरस्य चाप्राप्तौ अरुणपुष्पवन्ति तृणानि अभिषवपूर्वकं सोमकाले नियुञ्जीत। "शष्पं बालतृणं घासो यवसं तृणमर्जुनम्" ( अम० २।४।१६७ ) इत्यभिधानादर्जुनशब्दस्तृणविषयः। अस्य श्रुतप्रतिनिधित्वात्सोमशब्देनोपलक्षणम् ॥ १९ ॥

अन्यदपि यदिष्यते तदाह—

**श्येनहृतं, पूतीकानादारानरुणदूर्वा, हरितकुशान्पूर्वालाभे पूर्वालाभ उत्तरान् ॥२०॥**

खदिरादेर्बहुकालीनवृक्षस्य ये वल्लीरूपा अङ्कुरा उत्पद्यन्ते तच्छ्येनहृतम्। पूतीका = रोहित तृणम्। आदारानिति पूतीकानित्यस्यैव व्याख्यानम्। पूतीका आदारा इति पर्याय इत्यर्थः। सोमालाभे अर्जुनानि, तदलाभे श्येनहृतम् इत्यादिक्रमेणोत्तरानभिषुणुयात् (४।५।१०।१-६) ॥२०॥

**एकां गां दत्वा समाप्य पुनर्यज्ञः ॥२१॥**

अपहृतसोमद्रव्ये यज्ञे गोशतस्थाने एकां गां दक्षिणां दत्वा तं यज्ञं बर्हिरादीपनान्तं समाप्य पुनरन्यं सदक्षिणं यज्ञं कुर्यात्। अत्र गोरेव सङ्ख्यासम्बन्धः। यां गां तामेकाम्। अतश्च हिरण्य-वासोऽश्वादीनामनिवृत्तिः (२५।१४।३०) ॥ २१ ॥

**अवभृथान्ते वा श्रुतिसामर्थ्यात् । २२ ॥**

अवभृथादेवोदेत्य पुनर्दीक्षेतेति श्रुतेरुदयनीयकृत्वैवावभृथान्ते एव पुनर्यज्ञः ( ४।५। १०।६ ) ॥२२॥

[ द्रोणकलशभेदने प्रा० ]

**कलशभेदने वषट्कारनिधनं ब्रह्मसाम ॥२३॥**

द्रोणकलशभेदने कालाहुतिवाचने स्कन्दनप्रायश्चित्तं च देवान्दिवमिति। वसतीवर्येकधनादिभेदने तु कालाहुतिभिन्नाभिमर्शनादि, कलशान्तरे पुनर्ग्रहणं च ॥२३॥

**अनुलिप्सध्वमिति प्रेष्यति ॥ २४ ॥**

अध्वर्युः प्रतिप्रस्थात्रादीन्। कलशभेदने सति स्कन्नं सोमं ग्रहीतुमिच्छतेति प्रैषार्थः ॥२४॥

यदनुलभेरंस्तदेकधनैरभ्युन्नीय प्रभावयन्तः प्रचरेयुः ॥ २५ ॥

यत्परिमाणं सोमं प्राप्नुयुस्तदेकधनस्थजलैरभ्युन्नयनेनोपरिसेचनेन बहुलं कृत्वा सर्वेषु द्रोणकलशसंबन्धिकार्येषु प्रापयन्तः सर्वं द्रोणकलशसोमकार्यं तेन सोमेन कुर्युः ॥ २५ ॥

आग्रयणाद्वाऽनुपलभमानेषु पूर्ववत् ॥ २६ ॥

अप्राप्तेषु सोमेषु आग्रयणादादाय एकधनैरभ्युन्नीय पूर्ववत्प्रभावयन्तः प्रचरेयुः ॥२६॥

आनीतासु चेद्दक्षिणासु भेदनं पूर्ववद्दत्वा तथैव यज्ञः (४।५।१०।७) ॥२७॥

दक्षिणास्वानीतासु अदत्तासु द्रोणकलशभेदे एकां गां दत्वाऽवभृथानन्तरमेव पुनर्यज्ञ आदित आरभ्याऽऽदीप्य प्रवेशनान्तः कार्यः ।

"भिद्येत दक्षिणादानात्प्राग्द्रोणकलशो यदि । सोमापहारवत्तत्र पुनरावर्त्तयेत्क्रतुम् । भिद्येत दक्षिणादानादुत्तरं कलशस्तथा । ब्राह्मणाच्छंसिन स्तोत्रं वर्षानिधनमेव चेति ॥ २७ ॥

इति द्वादशी कण्डिका ॥१२॥

---

[ सोमातिरिक्ते प्रा० ]

प्रातःसवनाच्चेत्सोमोऽतिरिच्येत तमुन्नीयोपाकरणमस्ति सोमोऽअयमिति॥१॥

उक्थ्यग्रहोन्नयनानन्तरं चमसेष्वपि पूर्णेषु सोमः पूतभृत्येवावशिष्येत चेत् तमतिरिक्तं सोमं विभागेन दशसु चमसेषून्नीय तृणाभ्यां होतृचमसमुपस्पृश्य "अस्ति सोमो अयमिति मन्त्रेण स्तोत्रोपाकरणं कुर्यात् । कालाहुतिवाचने चात्र ॥ १ ॥

मरुत्वतीषु गायत्रेण स्तुवीरन् ॥ २ ॥

उपाकरणानन्तरमुद्गातारो मरुत्वतीष्वृक्षु गायत्रेण स्तुवीरन् ॥ २ ॥

ऐन्द्रावैष्णवꣳ होता शꣳसति ॥ ३ ॥

शस्त्रं स्तोत्रानन्तरं शंसेत् ॥ ३ ॥

यस्मात्स्तोमादतिरिच्येत स एव कार्यः सर्वत्र ॥ ४ ॥

यस्मात्त्रिवृत्पञ्चदशसप्तदशैकविंशादेः स्तोमात्सोमोऽतिरिच्येत स एव स्तोमः प्रायश्चित्तार्थे स्तोत्रेऽपि कार्यः । न केवलं प्रातः सवने, किन्तु माध्यन्दिनसवने तृतीयसवने चेति ॥ ४ ॥

माध्यन्दिनाच्चेत्पूर्ववदुपाकरणम् ॥ ५ ॥

माध्यन्दिनसवनस्यान्तिमोक्थ्यचमसोन्नयनानन्तरं पूतभृति सोमोऽवशिष्येत । चेत्सोमादि दशसु चमसेष्वित्यादि प्रातः सवनवत्कुर्यात् ॥ ५ ॥

"बण्महाँऽ असीति (३३।३९) बृहतीष्वादित्यवतीषु गौरीवितेन स्तुवीरन् ॥६॥

उपाकरणानन्तरं बृहतीच्छन्दस्कास्वादित्यशब्दयुक्तासु ऋक्षु गौरीवितेन नाम्ना साम्ना स्तुवीरन्नुद्गातारः ॥ ६ ॥

पूर्ववद्धोता ॥ ७ ॥

ऐन्द्रावैष्णवं शंसति (२५।१२।३) ॥ ७ ॥

**तृतीयसवनाच्चेद्विष्णोः शिपिविष्टवतीषु गौरीविलेन ॥ ८ ॥**

तृतीयसवनस्थान्तिमचमसोन्नयनानन्तरं पूतभृति सोमोऽवशिष्येत चेत्तं सोमं दशसु चमसेषु विभज्य अस्ति सोमो अयमिति स्तोत्रोपाकरणं कुर्यात् ।

तत उद्गातारो विष्णुप्रतिपादिकासु शिपिविष्टशब्दवतीष्वृक्षु गौरीवितेन साम्ना-स्तुवीरन् ॥८॥

**एतत्कृत्वोक्थ्यं वा गृहीत्वा विगृह्णीयात् ॥९॥**

एतत्प्रायश्चित्तं कृत्वा पूतभृति सोमातिरेके पूतभृत एवोक्थ्यस्थाल्यामुक्थ्यं गृहीत्वा ऽऽसाद्य ततो विगृह्णीयाद्वा । उक्थ्यविग्रहादीनां पूर्वोक्तप्रायश्चित्तेन समुच्चयस्य विकल्पः ॥९॥

**उक्थ्याच्चेत्षोडशी कार्यः ॥ १० ॥**

उक्थ्यसंस्थाश्चेत्तृतीये सवने सोमोऽतिरिच्येत तदा सोमस्योपयोगाय षोडशी कार्यः । उक्थ्यसंस्थः प्रारब्धोऽपि निमित्तवशात्षोडशिसंस्थः कार्य इत्यर्थः ॥ १० ॥

**षोडशिनश्चेदतिरात्रः ॥ ११ ॥**

षोडशिसंस्थक्रतोः सोमोऽतिरिच्येत चेत् षोडशिसंस्थः प्रारब्धोऽपि अतिरात्रसंस्थः कार्यो निमित्तवशात् ॥ ११ ॥

**अतिरात्राच्चेद् बृहत् ॥ १२ ॥**

अतिरात्रसंस्थात्प्रारब्धादाश्विनार्थं चमसेषून्नीतेषु पूतभृति सोमोऽवशिष्येत चेत्तदु-पयोगाय विष्णोः शिपिविष्टवतीष्वृक्षु बृहत्साम कार्यम् ॥ १२ ॥

**महाव्रतमेके यथोक्तम् ॥ १३ ॥**

अतिरात्रातिरिक्ते सोमे तदुपयोगाय महाव्रतं साम यथा गवामयने उक्तं (१३।२।२०) तथाऽत्र कुर्वन्त्येके ॥ १३ ॥

**अप्तोर्यामो वा ॥ १४ ॥**

अथवा अतिरात्रात्सोमातिरेके अतिरात्रसंस्थः प्रारब्धोऽपि ज्योतिष्टोम अप्तोर्याम-संस्थः कार्यः ॥ १४ ॥

**अन्त्याच्चेत्तस्यैवावृत्तिर्नातिरेकोऽस्तीति श्रुतेः ॥१५॥**

अप्तोर्यामादतिरिच्येत चेत्तस्यैवावृत्तिः कार्या । न ह्याप्तोर्यामात्परं संस्थान्तर मस्त्यतिरिक्तविनियोगाय ॥ १५ ॥

सर्वेषु सवनेषु सोमातिरेके पक्षान्तरमाह—

**पूर्वात्सवनादतिरिक्तस्योत्तरे सम्पावनमेके तं निकामयमानोऽभ्यतिरिच्यत इति श्रुतेः (४।५।१०।८) ॥१६॥**

प्रातःसवनातिरिक्तस्य माध्यन्दिने, माध्यन्दिनातिरिक्तस्य सायंसवने, एवं पूर्वपूर्व सवनातिरिक्तं सोममुत्तरकालीनसवनसोममध्ये एव प्रक्षिपन्त्येके । कुत एतत्? श्रुतः । तमुत्तरसवनसोमं नितरामभिलष्यन् ( उत्तरसवनसोमाभिप्राप्तये ) पूर्वसवनसोमोऽवशिष्टो भवतीति श्रुत्यर्थः । कालाहुतिवाचने चात्र पूर्वं भवत एव ॥ १६ ॥

अस्मिन्पक्षे तृतीयसवने सोमेऽतिरिक्ते किं कर्त्तव्यं, तत उत्तरस्य सवनस्याभावादित्याह—

तृतीयसवनाचेद्धारियोजनेऽवनीय होमः ॥१७॥

तृतीयसवनाच्चेत्सोमोऽवशिष्टः स्यात्तदा द्रोणकलशस्थं सोमं हारियोजनमध्ये प्रक्षिप्य जुहुयात् ॥१७॥

अस्मृतावृजीस्याप्स्ववहरणम् ॥१८॥

हारियोजनमध्ये प्रक्षेपास्मरणे अतिरिक्तं सोममृजीषमध्ये प्रक्षिप्य मज्जनसमयेऽप्सु क्षिपेत्। कालाहुतिवाचने च पूर्ववत् ॥१८॥

[ दीक्षितस्य ज्वरादौ ]

दीक्षितश्चेदुपतप्येतोप्धानां येनेच्छेत्तेन चिकित्सेत् ॥१९॥

ज्वरादिनाऽभिभूयेत चेत्प्रथमव्रते (७।४।२१,२४) प्रक्षिप्तानां व्रीहियवाद्योषधीनां शुण्ठीपिप्पल्यादिसर्वसुरभीणां च मध्ये वैद्यो येनेच्छेत्तेन ज्वरादीनां प्रतिकारं कुर्यात् ॥ १९ ॥

आग्नीध्रमेनं नयतेति ब्रूयात्कृतं चेत् ॥ २० ॥

दीक्षितस्य ज्वराद्युत्पत्तिसमये आग्नीध्रशाला निष्पादिता चेत्तदाऽध्वर्युर्यजमान पुरुषान्प्रति आग्नीध्रमेनं नयतेति प्रेष्येत् ॥ २० ॥

अकृतेऽप्यविशेषात् ॥ २१ ॥

अकृतेऽप्याग्नीध्रे आग्नीध्रमेनं नयतेति वक्तव्यमेव, विशेषाश्रवणात् (३।६।१।३९) ॥२१॥

नन्वाग्नीध्राभावात्कथं नयनमित्यत आह—

तद्देशे वासः ॥ २२ ॥

यस्मिन्देशे आग्नीध्रं भविष्यति तत्र दीक्षितस्य वासो रोगनिवृत्तिं यावत् ॥ २२ ॥

वासतीवरमुदकमाचामेदित्येके चात्वालगताभ्यः ॥ २३ ॥

चात्वालगताभ्यो वसतीवरीभ्य उदकमादायाचामेत् ॥ २३ ॥

तत्र मन्त्रमाह—

"आपः प्रजापतिर्यज्ञो यज्ञस्य भेषजमसीति ॥ २४ ॥

अनुसवनमेनमालभेरन् "वसव एतद्वः प्रातःसवनं तद्रक्षध्वं तद् गोपायध्वं तद्वो मा व्यवच्छैत्सीदिति ॥ २५ ॥

ज्वराद्यभिभूतं यजमानं सर्वेषु सवनान्तेषु सर्वे ऋत्विजः स्पृशेयुः प्रशास्तः प्रस्तुहीत्यनन्तरम् ॥ २५ ॥

रुद्रा आदित्या इत्युत्तरयोः सवनयोः ॥ २६ ॥

वसव इत्यस्य स्थाने रुद्रा आदित्या इति क्रमेण सवनद्वये ऊह्यम् ॥ २६ ॥

[ सत्रे दीक्षितमरणे ]

म्रियेत चेन्निर्मन्थ्येन दग्ध्वा शामित्राद्वाऽस्थीन्युपनह्य नेदिष्ठमुपदीक्ष्य तेन सह यजेरन् ॥ २७ ॥

चिकित्स्यमानोऽपि म्रियेत चेत्स्वारणिभ्यां तदानीमेव मथितेनाग्निना, शामित्रैकदेशेन

वा श्रौतस्मार्तविधिरहितं दाहमात्रं कृत्वा तस्यास्थीनि कृष्णाजिने बध्वा दीक्षितस्यान्तिकतमं पुत्रादिकं प्रतिनिधित्वेन दीक्षयित्वा तेन सह सत्रिणो यजेरन् सत्रं समापयेयुः । प्रवासगत-न्यायेन नेदिष्ठिनो गृहे नित्यानि कर्माणि भवन्ति । परार्थप्रवृत्तत्वान्नित्यानां न निवृत्तिः । पत्नी च मृतस्यैव, न नेदिष्ठिनः ॥ २७ ॥

**सत्रगणयज्ञे सहत्वशब्दात् ॥ २८ ॥**

एतत्पूर्वसूत्रोक्तं सत्रे गणयज्ञे च भवति ॥ २८ ॥

एकयजमानके दीक्षितमरणानन्तरं किं कर्त्तव्यमित्याह—

**एकयज्ञे दर्शपूर्णमासवत् ॥ २९ ॥**

कर्त्तुरभावान्मरणान्तमेव । तस्य सन्दीपनवत्युखाद्यधिश्रयणादि कुर्यात् । पत्नीमरणेऽप्येवम् ॥२९॥

**एतत्कृत्वा राजानमभिषुत्यागृहीत्वा ग्रहान्दक्षिणपूर्वस्यां वेदिस्रक्त्यां यामेन स्तुवीरन् ॥ ३० ॥**

**तिसृषु पराक्षु सार्पराज्ञीषु ॥ ३१ ॥**

एतत्पूर्वोक्तं म्रियेत चेन्निर्मन्थ्येनेत्यादिकं यथोपदिष्टं कृत्वा सौत्येऽहनि सोमाभिषवं कृत्वा ग्रहान् अगृहीत्वैव वेदेर्दक्षिणेंऽसे तिसृषु पराङ्मुखीषु आयङ्गौरित्याद्यासु ऋक्षु यामेन ( साम्ना ) स्तुवीरन् दक्षिणामुखाः प्राचीनावीतिन उद्गातारः ॥ ३१ ॥

**मार्जालीये वा ॥ ३२ ॥**

मार्जालीयसमीपे वा स्तुवीरन्निति विकल्पः ॥ ३२ ॥

**स्तुते मार्जालीयं त्रिः परियन्त्यपसव्यꣳ सव्योरूनाघ्नाना स्तोत्रिया जपन्तः ॥ ३३ ॥**

स्तोत्रिया आयङ्गौरित्याद्याः ॥ ३३ ॥

**"अग्न आयूꣳषि पवस" इति (१९।१९) प्रतिपद्भवति ॥ ३४ ॥**

अस्मिन् सुत्याहे । पवमानस्य प्रथमा ऋक् प्रतिपदुच्यते ॥ ३४ ॥

[ सत्रिणां कर्मापवर्गादारभ्य, पुत्राणां पितुर्मरणादारभ्य संवत्सरेऽस्थियज्ञः ]

**संवत्सरेऽस्थीनि याजयेयुः ॥ ३५ ॥**

प्रयोजकव्यापारेण प्रयोज्यव्यापारो लक्ष्यते । अस्थीनि यजेरन्नित्यर्थः । निषादस्थपतिं याजयेदित्यत्र निषादस्थपतिर्यजेतेतिवत् । तेन संवत्सरेऽतीते यान्यस्थीन्युपनह्य दग्धानि स्थापितानि, तानि यजेरन्नित्यर्थः कर्कमते । एतदयुक्तमिति मीमांसकाः । अचेतनानामस्थ्नां कर्तृत्वासंभवात् । न चाकर्तुरधिकारः । तस्माज्जीवतामेवायं यागः । अस्य च कर्मणो मृतोपकारार्थत्वम्, याजयेयुरिति परस्मैपदात् । तस्मात् सत्रिणः समाप्तसत्राः पुत्रादयो वा याजका इति ॥ ३५ ॥

मरणात्कर्मापवर्गाद्वा संवत्सरेऽस्थियज्ञ इत्यनियमे प्राप्ते आह—

**कर्मापवर्गादसंभवान्मरणस्य ॥ ३६ ॥**

कर्मसमाप्तेरारभ्य संवत्सरेऽतीतेऽस्थियज्ञो न मरणादारभ्य । तथात्वे द्वादशसंवत्स-

रादौ सत्रमध्ये एव संवत्सरः पूर्येत, तदा च तन्मध्ये एवास्थियज्ञ आपद्येत । तच्चायुक्तमसं-भवात् । अत्र यदा सत्रिणस्तदा कर्मापवर्गादारभ्य वत्सरे, यदा पुत्रादयस्तदा मरणादारभ्यैति व्यवस्था सूत्रान्तरे ॥ ३६ ॥

**अपरिमितस्तोमेन यजेरन् ॥३७॥**

ज्योतिष्टोमे हि स्तोमपरिमाणमुक्तम् । इहापरिमितस्तोमोऽभिधीयते ॥ ३७ ॥

**त्रिवृद्बहिष्पवमानेन वा ॥ ३८ ॥**

त्रिवृत्स्तोमकेन बहिष्पवमानेनास्थियज्ञे स्तुवीरन् ॥ ३८ ॥

**सप्तदशमन्यत् ॥ ३९ ॥**

बहिष्पवमानातिरिक्तमाज्यस्तोमादिजातं सप्तदशस्तोमकं तदा भवति ॥ ३९ ॥

[ ग्रहाणां ग्रहणम् ]

**मैत्रावरुणाग्रान् ग्रहान् गृह्णीयात् ॥ ४० ॥**

मैत्रावरुणग्रहप्रथमानैन्द्रवायवान् ग्रहान् गृह्णीयात् ( १२।६।२९ ) ॥ ४० ॥

**प्रातिनिधिको याजमानं कुर्यात् ॥ ४१ ॥**

नह्यस्थ्नां कर्तृत्वं संभवति ॥ ४१ ॥

**दीक्षणीया-पुरुषसंस्काराशीर्वर्जम् ॥ ४२ ॥**

दीक्षणीयेष्टिः, पुरुषसंस्कारोऽभ्यञ्जनपावनादिः । आ वो देवास इत्याद्या आशिषः॥४२॥

**समासेऽस्थीनि सपात्राण्यरण्ये निवपेयुः ॥ ४३ ॥**

अस्थियज्ञे ॥ ४३ ॥

**पुनर्दाहो वाऽयुक्तत्वात्पात्राणाम् ॥ ४४ ॥**

वाशब्दः पूर्वपक्षनिरासार्थः । अस्थ्नां पात्रैरग्निभिश्च पुनर्दाहः । पात्राणां तु शरीरेण सहादग्धत्वात् । पात्राणां प्रतिपत्तिरूपत्वाच्च । अत एव नष्टस्य पात्रस्य पुनर्नोत्पत्तिः, किंत्व-त्रादिष्टमेव ( २५।७।२१ ) ॥ ४४ ॥

**ततः सञ्चयनादि ॥ ४५ ॥**

पुनर्दाहानन्तरमस्थिसञ्चयनप्रभृति सर्वमौर्ध्वदेहिकं स्मार्तं भवति ॥ ४५ ॥

इति त्रयोदशी कण्डिका ॥१३॥

---

पूर्वं साग्निचित्येऽनग्निचित्ये चाहर्गणे साधारणेन दीक्षितमरणे उक्तम् । इदानीं साग्निचित्यविषये उच्यते—

**उखां चेद्बिभ्रन्म्रियेत सोपकरणमाहिताग्न्यावृता दग्ध्वा नेदिष्ठ्यग्निं चित्वा तमस्मा अनुदिशेदित्येके ॥ १ ॥**

साग्निचित्ये ऽहर्गणे ऽनेकयजमानके उखाधारणं कुर्वन् दीक्षितो म्रियेत (१२।३।५।२) चेत्तं मृतमग्निपात्ररूपोपकरणयुतं सन्दीपनवत्यधिश्रयणादिकयाऽऽहिताग्निक्रियया (२५।७।१२) दग्ध्वा नेदिष्ठ्यग्निं चित्वा क्रतुं कृत्वा तत्क्रतुफलं मृताय दद्यादित्येके कथयन्ति । अत्र

सत्रार्थं साधारणीकृतेभ्योऽग्निभ्य एकदेशं मृतस्य भागभूतमादाय तस्याग्निभिः पात्रैश्च दाहः । नानागार्हपत्यपक्षे तु गार्हपत्यः पृथगेव ॥ १ ॥

**न कर्मफलासंभवात् ॥ २ ॥**

यत्पूर्वं फलदानमुक्तं, तन्न । कर्मफलदानासंभवात् । न हि कर्मफलं दातुं शक्यते । अस्यामूर्तत्वेनानुपादेयत्वात् ॥ २ ॥

**उपदीक्षी स्वेष्वग्निषु नखनिकृन्तनाद्युद्वादनान्तꣳ सान्निपातिकम् ॥ ३ ॥**

कर्म कुर्यात् । उपदीक्षी नेदिष्ठी (७।२।८।४।११) ॥ ३ ॥

**तेषूपह्वमिष्ट्वाऽग्नीन्त्सꣳ सृजेत ॥ ४ ॥**

उद्वादनान्ते दीक्षिता उपह्वयध्वम् इत्येवमनुज्ञां प्रार्थ्याग्नीन्संसृजेत् । ततस्तेन सह यजेरन् ॥ ४ ॥

**अनाहिताग्निश्चेत्तेष्वेवेत्येके वैश्वानरं निर्वपेद्यस्याग्निभिरन्यं याजयेयु रिति वचनात् (२५।८।२६) ॥ ५ ॥**

नेदिष्ठी अनाहिताग्निश्चेत् सत्रिणामग्निष्वेव नखनिकृन्तनाद्युद्वादनान्तं कुर्यात् । तदा च सत्रान्ते वैश्वानरं चरुं कुर्यात् । यस्याग्निभिरन्यं याजयेयुर्वा यजेदिति श्रुतेः (२५।८।२६) । तस्य चायमेव विषय इत्यभिप्रायः ॥ ५ ॥

**नाश्रुतेः ॥ ६ ॥**

नैतदेवं सत्रिणामग्निषु नेदिष्ठी कुर्यादिति । न ह्येवं श्रूयते ॥ ६ ॥

वैश्वानरस्य तर्हि को विषय इत्यत आह—

**आपदि वैश्वानरः ॥७॥**

देशभङ्गादावापत्काले व्याकुलतया एकप्रदेशे निहितेषु बहूनामग्निषु भ्रान्ततया परकीयेषु यागानुष्ठाने उभयोर्वैश्वानरः । तस्मादनाहिताग्नेः पुत्रादेरधिकारः ॥ ७ ॥

[ संसवे विशेषः ]

**समानजनपदसꣳसवे महारात्रे प्रातरनुवाकमुपाकृत्य पूर्वः पूर्वः कर्म प्रवर्तयेत् ॥८॥**

समाने एकस्मिन् जनपदे देशे सुत्ययोः सन्निपतनं संसवः । परस्परं द्वेषं कुर्वाणयोर्यजमानयोः सुत्ययोरन्होर्यत्सन्निपतनं स संसव इत्यर्थः । एकस्मिन्देशे गिरिनद्याद्यव्यवधाने क्रियमाणकर्मज्ञानविषये विद्विषाणयोरेकस्मिन्नहनि सुत्ययोः सन्निपाते सति अर्द्धरात्रे प्रातरनुवाकमुपाकृत्य इतरकर्त्रपेक्षया प्रथमः प्रथमः सन् कर्म सत्वरं कुर्यात् । प्रकृतौ वयसां वदनात्पूर्वं प्रातरनुवाकोपाकरणं विहितम् । इह तु मध्यरात्रे कर्त्तव्यम् ॥ ८ ॥

**सुसमिद्धहोमः ॥ ९ ॥**

**सꣳस्थोत्तरं च कुर्यात् ॥ १० ॥**

यद्येकेनाग्निष्टोम आरब्धस्तत्परकीययागायेक्षया स्वकीये यज्ञे संस्थाधिक्यं कुर्यात् । उक्थ्ये षोडशी, षोडशियज्ञे, ह्यन्येनात्यग्निष्टोमः कार्यः । अत्यग्निष्टोमे आरब्धे उक्थ्यः, उक्थ्ये षोडशी, षोडशियज्ञे, अतिरात्रः, अतिरात्रे वाजपेयः, वाजपेये अप्तोर्याम इति ॥ १० ॥

इच्छन्वृषण्वती प्रतिपत् ॥१०॥

अत्र संसवे पवमानस्य प्रथमा ऋक् वृषन्शब्दयुक्ता कार्या न वा । देवयाज्ञिकास्तु इच्छन्निति पदं पूर्वसूत्रे योजयित्वा संस्थाधिक्ये विकल्पमाहुः । कर्कमते तु संख्याधिक्यं नियमेन, वृषण्वती प्रतिपद्विकल्पेन ॥१०॥

अनुसवनं वा ॥११॥

अनुशब्दः प्रतिशब्दस्यार्थे । प्रतिसवनं वृषण्वती, न बहिष्पवमान एवेति विकल्पः ॥११॥

बृहद्रन्तरपृष्ठः ॥१२॥

अयं संसवसोमो बृहद्रथन्तरपृष्ठो भवति ( तां० ९।४ ) ॥१२॥

तौरश्रवसे माध्यन्दिने पवमाने तदावपनश्रुतेः ॥१३॥

तुरश्रवा नाम ऋषिस्तेन दृष्टे सामनी माध्यन्दिने पवमानस्तोत्रे एव प्रक्षेप्तव्ये—प्रयोज्ये । तत्रैव तयोरावापः श्रूयते ॥१३॥

आभीकमभिनिधनमाभीशवानि चैके ॥१४॥

माध्यन्दिने पवमाने आभीकम्, अभिनिधनम्, अभीशवानि च सामान्येके आवपन्ति ॥१४॥

प्रातःसवने जुहोति संवेशायोपवेशाय गायत्र्यै छन्दसेऽभिभूत्यै स्वाहेति ॥१५॥

अध्वर्युः सकृद्गृहीतेनाज्येनागन्तुकत्वादन्ते एकामाहुतिं जुहोति ॥१५॥

त्रिष्टुभे जगत्या इत्युत्तरयोः सवनयोः ॥१६॥

मन्त्रे विशेषः ॥१६॥

विहवीय–सजनीय–कयाशुभीयानि होता शꣳसति ॥१७॥

विहवशब्दोऽस्मिन्नस्तीति विहवीयं 'ममाग्ने वर्चः, ( ८।७।१५ ) एवं सजनीयं 'यो जात एव प्रथमः ( २।६।७ ) कयाशुभीयं कया शुभा सवयस इति ( २।३।२४ )। एतानि सूक्तानि बहिष्पवमानस्तोत्रसमनन्तरं होता शंसेत् ॥१७॥

साख्यमरणमिच्छन्तः प्राजापत्यर्चा जुहुयुः ॥ १८ ॥

अध्वर्यूद्गातृब्रह्मगृहपतयः परकीययज्ञस्याध्वर्य्वादेः सख्युर्मरणमिच्छन्तः ( तत्राध्वर्युरध्वर्योः, होता होतुः, उद्गातोद्गातुः, ब्रह्मा ब्रह्मणः, गृहपतिर्गृहपतेः ) जुहुयुः ॥१८॥

होमकानाह—

प्रातःसवनेऽध्वर्युर्माध्यन्दिने होतोद्गाता तृतीयसवने ॥ १९ ॥

जुहोति ॥ १९ ॥

अनुसवनं ब्रह्मा गृहपतिश्च ॥ २० ॥

जुहुतः ॥ २० ॥

सर्वमरणमिच्छन्तः सर्वेऽनुसवनम् ॥ २१ ॥

जुह्वति ॥ २१ ॥

[ संस्रवापवादः ]

**नद्यन्तरेऽसंस्रवो गिरिभिच्चेत् ॥ २२ ॥**

नदीव्यवधाने संस्रवनिमित्तमर्धरात्रे प्रातरनुवाकमुपाकृत्येत्यादिक न भवति, सा नदी क्वचित्प्रदेशे गिरिं भित्वा निःसृता भवति चेत् ॥२२॥

**गिरौ ॥२३॥**

गिरौ व्यवधायके न संस्रवः ॥ २३ ॥

**रथाह्ने च ॥ २४ ॥**

यावन्तं देशमह्ना रथो गच्छति स रथाह्नस्तदन्तरेऽपि न संस्रवः ॥२४॥

**सर्वत्राविद्विषाणाम् ॥२५॥**

न संस्रवः ॥२५॥

**विद्वेषेऽप्ययं वायुर्महान्त्समुद्र इति श्रुतेः (शाङ्खा० १३।६।२३) ॥ २६ ॥**

अन्यतरविद्वेषे गिरिनद्यादिव्यवधानं विनापि न संस्रवः। अयं वायुः सदा समुद्रं शोषयितुमिच्छति, समुद्रश्च सदा महान् बहुलस्नेहपरः। वायुकृतद्वेषेण समुद्रस्य न किमपि हीयते। एकस्मिन्द्वेषं कुर्वाणेऽपि इतरस्य किमप्यनिष्टं न भवति ॥२६॥

[ सोमदाहे प्रा० ]

**सोमदाहे यथास्वं वृत्तान्तान्धारयेयुः ॥२७॥**

वृत्तस्य कर्मणोऽन्तान् एतावत्कृतमेतावन्न कृतमिति स्वस्वपदार्थान् स्मरेयुः। अन्यथा-ऽग्निदाहाकुलतया विस्मरणादेव शिष्टक्रतुसमापनं दुःशकं स्यात् ॥२७॥

**प्रतिनिधाय यथापूर्वं यज्ञेन चरेयुः ॥२८॥**

प्रशान्ते दाहे श्येनहृतादिप्रतिनिधिद्रव्यं सम्पाद्यावशिष्टेन यज्ञेन यथापूर्वं ( २५।१२। १७-१९ ) चरेयुः ॥ २८ ॥

**पञ्च गा दत्वा प्राग्द्वादश्याः पुनर्यज्ञः ॥ २९ ॥**

अवभृथार्थं यज्ञं समाप्य द्वादशभिरहोभिः पूर्वमेव पुनः स एव यज्ञः कार्यः। अत्र हिरण्यादीनामनिवृत्तिः, पूर्वोक्तन्यायात् ॥ २९ ॥

**तत्र तद्दद्याद्यत्पूर्वस्मिन्दास्यन्त्स्यात् ॥३०॥**

पुनर्यज्ञे कृत्स्नां दक्षिणां दद्यात् ॥३०॥

[ सत्रे सोमदाहेऽपीदमेव प्रा० ]

**सत्रेऽप्यविशेषात् ॥३१॥**

सत्रेऽपि सोमदाहे इदमेव प्रायश्चित्तम् ॥३१॥

[ सत्रेऽपि सोमदाहे दानम् ]

**दानं प्रायश्चित्तसंयोगात् ॥३२॥**

सत्राणामदक्षिणत्वात् दानाप्राप्तावपि पञ्च गा दत्वेत्येतद्दानं प्रवर्तत एव ॥३२॥

**न वाऽदक्षिणत्वात् ॥३३॥**

अदक्षिणानि हि सत्राणि (१२।१।८) ॥३३॥

[ सत्रे सोमदाहे यदहः सोमदाहस्तस्यैव पुनरनुष्ठानम् ]

**तस्य त्वह्नः पुनराहारः ॥३४॥**

सत्रेऽपि यस्मिन्नहनि सोमदाहो जातस्तस्यैवाह्नः पुनः प्रयोगो न सकलस्य । अहीनेषु यत्राहनि सोमदाहस्तदह्नः पञ्च गा दत्वा तस्यैवाह्नः पुनः प्रयोगः ॥३४॥

[ अनादिष्टप्रायश्चित्तस्य ब्रह्मकर्तृकत्वम् ]

**ब्रह्मा प्रायश्चित्तानि जुहुयादनादिष्टानि ॥३५॥**

**ब्रह्मा विलिष्टꣳ सन्दधातीति श्रुतेः (१२।६।१।७) ॥३६॥**

यद्‌ दुरितं तद्‌ ब्रह्मा शमयति ॥३६॥

**त्रिवेदसंयोगाच्च त्रिवेदसंयोगाच्च ॥३७॥**

अनादिष्टानां त्रिवेदेन ब्रह्मणा संयोगात् । वेदत्रयविहितकर्मणो हि ब्रह्मणः संयोगः । त्रीन् वेदानधीते वेद वा त्रिवेदो ब्रह्मा इति । द्विरभ्यासः पूर्ववत् ॥३७॥

इति चतुर्दशी कण्डिका ॥ १४ ॥

इति श्रीमन्महर्षिकात्यायनप्रणीते श्रौतसूत्रे सरलाख्यायां वृत्तौ प्रायश्चित्तनिरूपणात्मकः पञ्चविंशोऽध्यायः ।



# षड्विंशोऽध्यायः ।

## प्रवर्ग्यनिरूपणम् ।

[ महावीरसंभरणम् ]

**दीक्षासु महावीरान्त्संभरति ॥ १ ॥**

दीक्षासु वर्त्तमानासु महावीरान् करोति । महावीरग्रहणं पिन्वन-रौहिणकपालाना-मप्युपलक्षणम् । एतच्च "दीक्षितो ऽयं ब्राह्मण" ( ७।४।११ ) इति प्रैषानन्तरं कार्यम् । अनेक-दीक्षापक्षे तु यदहरिच्छेत्तदहः कुर्यात् ॥ १ ॥

[ महावीरनिर्माणदेशः ]

**अन्तःपात्यदेशे संभारान्निदधाति ॥ २ ॥**

महावेदेः पश्चिमप्रान्तोऽन्तःपात्यः । तत्र वक्ष्यमाणान् संभारान् निदध्यात् ॥२॥

संभारानाह—

[ महावीरसंभाराः ]

**मृदं, वल्मीकवपां, वराहविहतं, पूतीकानजापयो, गवेधुकाः कृष्णाजिनमभ्रिं चोत्तरतः ॥ ३ ॥**

मृदं = मृत्पिण्डमतिचिक्कणं भाण्डादिनिर्माणयोग्यं कुम्भकारसंस्कृतम्, उपदाभिः कृतो मृत्सञ्चयो वल्मीकस्तस्य त्रपेव वपा मध्यवर्त्ती लोष्टस्ताम् । वराहेण विहतमुत्खातां मृत्तिकाम् । पूतीकान् रोहिषपुष्पाणि । अजादुग्धम् । गवेधुकाः = जलसन्निहितमहातृणजानि शुष्काणि फलानि । एतान्प्राक्संस्थानुदक्संस्थान्वा निधाय एतेषामुत्तरतः कृष्णाजिनमभ्रिं चासादयेत् ॥३॥

[ महावीरनिर्माणप्रकारः ]

**"देवस्य त्वेत्यभ्रिमादायौदुम्बरीं (३७।१) वैकङ्कतीं वाऽरत्निमात्रीᳬ सव्ये कृत्वा दक्षिणेनालभ्य जपति "युञ्जत" इति (३७।२) ॥ ४ ॥**

**मृदमादत्ते पिण्डवद्देवी द्यावापृथिवी" इति (३७।३) ॥ ५ ॥**

उखासंभरणमृत्पिण्डवत् दक्षिणेन साभ्रिणा, सव्येन केवलेनेत्युभाभ्यां (१६।२।२७) पाणिभ्यां मृत्पिण्डमादत्ते ॥ ५ ॥

**कृष्णाजिने निदधात्युत्तरतः ॥ ६ ॥**

उत्तरतः स्थापिते प्राग्ग्रीवे उत्तरलोम्नि कृष्णाजिने मृत्पिण्डं निदध्यात्तूष्णीम् ॥ ६ ॥

**"देव्यो वम्र्य" इति (३७।४) वल्मीकवपाम् ॥ ७ ॥**

मृत्पिण्डस्योत्तरतः कृष्णाजिने एव निदधाति । निधानं तूष्णीम् । आदानं मन्त्रेण सर्वत्र ॥ ७ ॥

**"इयत्यग्र" इति (३७।५) वराहविहतम् ॥ ८ ॥**

आदत्ते ॥ ८ ॥

"इन्द्रस्यौज स्थेति ( ३५।६) पूतीकान् ॥ ६ ॥

"मखायेति (३७।६) पयः" ॥१०॥

अजादुग्धं पात्रस्थं मन्त्रेणादाय तूष्णीं कृष्णाजिने निदध्यात् ॥११॥

तूष्णीं गवेधुकाः ॥११॥

तूष्णीमादाय तूष्णीमेव निदधाति ॥१०॥

संभृतानभिमृशति "मखायेति (३७।६) ॥१२॥

सकृत्पठितेन मखायत्वेति मन्त्रेण संभृतान् संभारान् युगपदभिमृशेत् (१४।१।२।१४)॥१२॥

कृष्णाजिनं परिगृह्योत्तरतः परिवृतं गच्छन्ति "प्रैतु ब्रह्मणस्पतिरिति (३७।७) ॥१३॥

अध्वर्यु-प्रतिप्रस्थातृ-नेष्टृन्नेतारः कृष्णाजिनं ससंभारं समन्ताद्धस्तेनादायान्तःपात्यादुत्तरस्यां दिशि पूर्वनिर्मितं परिवृतं ( ७।२।७ ) गच्छेयुः । मन्त्रपाठः सर्वेषाम् ॥१२॥

परिवृते निदधाति संभारानुद्धतावोक्षिते सिकतोपकीर्णे प्राग्द्वारे मखायेति (३७।७) ॥१४॥

उद्धतमुल्लिखितम् । अवोक्षितमद्भिरभ्युक्षितम् । एतत्संस्कारद्वयं पञ्चभूसंस्कारेभ्योऽधिकम् । परिवृतमध्ये अष्टादशाङ्गुलसमचतुरस्रमेकाङ्गुलोच्चमेकं खरं निर्माय तत्र पञ्चभूसंस्कारान् तदधिकं संस्कारद्वयं च कृत्वा सिकता उपकीर्य तत्र संभारान्स्थापयेदध्वर्युः ॥१४॥

सम्भारैः सꣳ० सृजति "मखायेति (३७।७) ॥१५॥

अध्वर्युर्वल्मीकवपा-वराहविहत-पूतीकैर्मृत्पिण्डं संयोजयेत् ॥१५॥

मृदमादाय "मखायेति (३७।७) महावीरं करोति ॥ १॥६

महावीरनिष्पत्तिपर्याप्तं मृत्पिण्डमादाय मन्त्रेण महावीरं कुर्यात् ॥१६॥

कीदृशं महावीरमित्यपेक्षायामाह—

[ महावीरप्रमाणम् ]

प्रादेशमात्रमूर्ध्वमासेचनवन्तं मेखलावन्तं मध्यसङ्गृहीतमूर्ध्वं मेखलायास्त्र्यङ्गुलम् ॥१७॥

ऊर्ध्वमुच्चं प्रादेशमात्रम् । आसिच्यतेऽस्मिन्नित्यासेचनं गर्त्तस्तद्युक्तम् । मेखला रास्ना, तद्युक्तम् । मध्यप्रदेशे सङ्कुचितम् = उलूखलवन्मुष्टिग्रहणयोग्यम् । मेखलाया ऊर्ध्वं त्र्यङ्गुलम् । अतश्च प्रादेशमात्रस्योपरिभागेऽ त्र्यङ्गुलं परिशिष्य ततोऽधस्तान्मेखला कार्येत्यर्थः ॥१७॥

निष्ठितमभिमृशति "मखस्य शिर" इति (३७।८) ॥१८॥

निष्ठितं निष्पन्नं सव्यहस्तस्थं दक्षिणेनाभिमृशेत् । ततस्तं भूमौ स्थापयेत् खसन्निधौ ॥१८॥

आदानमेके ॥१९॥

महावीरकरणार्थं मृदादानमेके मखस्य शिर इति मन्त्रेण कुर्वन्ति । निष्ठिताभिमर्शनं तु तूष्णीमित्यर्थाल्लभ्यते ॥१९॥

**एवमितरौ प्रतिमन्त्रम् ॥२०॥**

तूष्णीं मृदमादाय मखाय त्वेति द्वितीयं महावीरं कुर्यात्, मखस्य शिर इति अभिमर्शनं च । ततः पुनरपि तथैव तृतीयं महावीरं कुर्यात् ॥२०॥

[ रौहिणकपालनिर्माणम् ]

**स्रुक्पुराकृती पिन्वने रौहिणकपाले परिमण्डले ॥२१॥**

रौहिणयोर्वक्ष्यमाणपुरोडाशयोरर्थे द्वे कपाले वर्तुले कुर्यात् ॥२१॥

[ उपशयसंज्ञिकाया मृदो निधानम् ]

**मृदमुपशयां निदधाति ॥२२॥**

अवशिष्टां मृदमुपशयसंज्ञिकां प्रायश्चित्तार्थं स्थापयेत् । संज्ञाकरणं संव्यवहारार्थम् ॥२२॥

**गवेधुकाभिः श्लक्ष्णयति "मखायेति (३७।८) प्रतिमन्त्रम् ॥२३॥**

त्रिभिर्मन्त्रैः प्रतिमन्त्रं त्रीन्महावीरान् बह्वीभिर्गवेधुकाभिर्घर्षणेन सुकुमारान्कुर्यात् । श्लक्ष्णं च मृन्मार्ष्टीकरणम् । एतदेव तासां सम्भरणप्रयोजनम् ॥२३॥

**अश्वशकृता धूपयत्यश्वस्य त्वेति (३७।९) प्रतिमन्त्रम् ॥२४॥**

दक्षिणाग्न्यग्निना दीप्तेनाश्वपुरीषेण प्रतिमन्त्रं त्रीन्महावीरान्धूपयेत् ॥२४॥

**उखावदग्निः ॥२५॥**

अत्र धूपनेऽग्निरुखावद्भवेत् । तत्र ह्युक्तं "सप्तभिरश्वशकृद्भिरुखां धूपयति दक्षिणाग्न्यादीप्तैरेकैकेन" इति (१६।४।१-१३) ॥२५॥

[ महावीरदहनम् ]

**प्रदहनं च "मखायेति (३७।८) प्रतिमन्त्रम् ॥२६॥**

चशब्दादुखावत्करोति । परिवृते हस्तमात्रं चतुरस्रमवटं खात्वा तत्र श्रपणमास्तीर्य तत्र महावीरान् न्युब्जान्निधाय पिन्वने रौहिणकपाले च न्युब्जे निधाय श्रपणेनाच्छाद्य दक्षिणाग्न्यग्निना दीपयतीत्यर्थः ॥२६॥

[ अग्निपक्वानां महावीराणामग्नितो निष्काशनम् ]

**पक्वानुद्धरत्यृजवे त्वेति (३७।१०) प्रतिमन्त्रम् ॥ २७ ॥**

उखावदित्यनेन "दिवैव प्रदहनोद्धरणे" ( १६।४।१७ ) इत्येतदपि लभ्यते । उद्धपामीत्यध्याहारः, साकाङ्क्षत्वात् ॥ २७ ॥

[ महावीरेषु अजापयस आसेकः ]

**अजापयसाऽवसिञ्चति "मखायेति (३७।१०) प्रतिमन्त्रम् ॥ २८ ॥**

अजादुग्धेन महावीरान् सिञ्चेत् । अत्र सिञ्चामीत्यध्याहारः । एतदेवास्य सम्भरणप्रयोजनम् । इति महावीरसम्भरणम् ॥२८॥

**तूष्णीं पिन्वनादीनां करणाभिमर्शनश्लक्ष्ण-धूपन-प्रदहनोद्धरणावसेचनानि ॥२९॥**

इति प्रथमा कण्डिका ॥ १ ॥



अथ प्रवर्ग्यमाह—

[ प्रवर्ग्यानुष्ठानम् ]

**उपसदा चरिष्यंश्चरिष्यन्प्रवर्ग्येण चरति सप्रवर्ग्ये ॥ १ ॥**

अत्र वीप्साश्रवणात् प्रत्यहं सायंप्रातः प्रागुपसदः प्रवर्ग्यचरणं कर्त्तव्यम्। प्रथमयज्ञे प्रवर्ग्यचरणस्य वैकल्पिकत्वात्सप्रवर्ग्ये इत्युक्तम् ॥ १ ॥

**अपिहितद्वारे प्रवर्ग्यचरणम् ॥ २ ॥**

कपाट-पट-वस्त्रादिनाऽपिहितानि द्वाराणि यस्य तस्मिन् विमिते कुर्यात् ॥ २ ॥

**पत्न्यदर्शनम् ॥ ३ ॥**

सन्निधानेऽपि सति पत्नी प्रवर्ग्यस्य महावीरस्य दर्शनं न कुर्यात् ॥ ३ ॥

**अननूक्तिभिश्च ॥ ४ ॥**

न विद्यतेऽनूक्तिरनुवचनं वेदाध्ययनं येषां ते, अवैदिका इत्यर्थः। तैरपि प्रवर्ग्यस्य दर्शनं न कार्यम् ॥ ४ ॥

[ प्रवर्ग्ये यावदुक्तकर्मानुष्ठानम् ]

**यावदुक्तम् ॥ ५ ॥**

यावदुच्यते तावदेव कुर्यान्नाधिकम्। अपूर्वत्वात्। नास्य काऽपि प्रकृतिरस्ति ॥५॥

**परिघर्म्यमौदुम्बरम् ॥ ६ ॥**

घर्मसंबन्धिपात्रजातमुदुम्बरवृक्षजं कुर्यात् ॥ ६ ॥

**मौञ्जं त्रिवृद्रज्जव्यम् ॥ ७ ॥**

घर्मे सर्वं रज्जुसंबन्धि मुञ्जमयं त्रिगुणं च कार्यम् ॥७॥

आसन्दीविवानमपि मौञ्जं प्राप्नोति तत्रापवादमाह—

**बाल्वजं विवानमासन्द्यौदुम्बर्या (१) स्कन्धमात्र्याः ॥ ८ ॥**

यजमानस्कन्धप्रमाणाया औदुम्बर्या आसन्द्या बल्वजमयं विवानं = विवानरज्जुः स्यात् ॥ ८ ॥

[ पात्रासादनम् ]

**पूर्वेण गार्हपत्यं प्राचः कुशानास्तीर्य पात्रासादनं द्वन्द्वम् ॥ ९ ॥**

अत्र पूर्वं द्वारापिधानं शान्तिकरणं कुशास्तरणं पात्रासादनमिति क्रमः ॥ ९ ॥

**उपयमनीं महावीरम् ॥ १० ॥**

उपमनीसंज्ञामौदुंबरीं बाहुप्रमाणां महापुष्करां स्रुचमौदुम्बरीं महावीरं चासादयति ॥ १० ॥

**परीशासौ ॥ ११ ॥**

सन्दंशाकारावौदुम्बरावासादयेत् ॥ ११ ॥

---

(१) परिघर्म्यमौदुंबरमित्यनेनासन्द्या अप्यौदुम्बरीत्वे सिद्धे अरत्निमात्राङ्गीत्वप्राप्त्यर्थं पुनरौदुंबर्या इत्युक्तम्। दृष्टा हि ज्योतिष्टोमे औदुम्बरी अरत्निमात्राङ्गी (७।९।२७)। अतोऽप्यत्राप्यरत्निमात्राङ्गी भवतीति।

पिन्वने ॥ १२ ॥

आसादयेत् । तच्च महदध्वर्योः । इतरत्प्रतिप्रस्थातुः ॥ १२ ॥

रौहिणकपाले ॥ १३ ॥

आसादयेत् ॥ १३ ॥

रौहिणहवन्यौ च स्रुचावनुत्कीर्णे ॥ १४ ॥

रौहिणपुरोडाशहोमार्थे अखाते औदुम्बर्यौ स्रुचावासादयेत् ॥१४॥

स्थूणामयूखम् ॥१५॥

स्थूणा च मयूखश्चेति तत्तथोक्तमौदुम्बरम् । सर्वो द्वन्द्वो विभाषयैकवद्भवतीत्येक वचननिर्देशः । गोबन्धनार्थाः स्थूणा मयूखम् ॥ १५ ॥

धृष्टी ॥१५॥

औदुम्बरावुपवेषौ ॥१६॥

शतमाने ॥१७॥

एकं रजतशतमानं, द्वितीयं सुवर्णशतमानम् । रत्तिकाशतेन शतमानम् ॥ १७ ॥

मुञ्जप्रलवान्विकङ्कतशकलान्विꣳशतिं प्रादेशमात्रान् ॥१८॥

मुञ्जप्रलवाः शरतृणानि ॥ १८ ॥

स्रुवं मुञ्जवेदम् ॥१९॥

स्रुवमौदुम्बरं, मुञ्जमयं वेदं = कुशमुष्टिं चासादयेत् ॥१९॥

धवित्राणि परिधींश्च ॥२०॥

धूनोत्येभिरिति धवित्राणि = कृष्णाजिनखण्डनिर्मितास्त्रयो व्यजनाः । परिधय औदु-म्बरा बाहुमात्राः ॥२०॥

रज्जुसन्दानम् ॥२१॥

रज्जुर्गोबन्धनार्था अजाबन्धनार्था च । सन्दानशब्देन दोहनकाले गोः पादबन्धनार्था रज्जुः । रज्जू च सन्दानं चेति ॥२१॥

आसन्दीं कृष्णाजिनम् ॥२२॥

आसन्दीं पूर्वोक्ताम् । कृष्णाजिनं च यत् प्राङ् महावीरसंभरणे उपयुक्तम् ॥२२॥

अभ्रिꣳ सिकताः खरार्थाः ॥२३॥

अभ्रिं प्रागुपयुक्तामेव । खरार्थाः = खरनिवापार्थाः ॥२३॥

अर्थवच्च ॥२४॥

स्फ्यः, पवित्रच्छेदनानि, पवित्रे, अग्निहोत्रहवणी, आज्यस्थाली, प्रभूतमाज्यम् , शूर्पम् , पात्री, पिष्टम् , उपसर्जनीपात्रम् , उपशया, इतरौ महावीरौ, होतृषदनम् , मौञ्जः कूर्चः, औदुम्बरी समित् ॥२४॥

प्रोक्षणीः संस्कृत्योद्यम्योत्थायाऽऽह ब्रह्मन्प्रचरिष्यामो, होतरभिष्टुहि, प्रस्तोतः सामानि गायेति ॥२५॥

[ महावीरप्रोक्षणं त्रिः ]

**ब्रह्मणाऽनुज्ञातो "यमाय त्वेति (३७।११) महावीरं प्रोक्षति ॥२६॥**

प्रचरणीयं महावीरं "यमा त्वा मखाय त्वा सूर्यस्य त्वा तपसे" इति सकृत्प्रोक्षेत् ॥ २६ ॥

**प्रतिमन्त्रं वा वाक्यभेदात् ॥२७॥**

वाशब्दोऽवधारणे। अतस्त्रिः प्रोक्षणं, न सकृत् ॥ २७ ॥

**परिघर्म्यं च तूष्णीम् ॥२८॥**

घर्मसम्बन्धिपात्रजातमासादितं तूष्णीं प्रोक्षति प्रतिपात्रम् ॥ २८ ॥

[ स्थूणानिखननम् ]

**पूर्वया द्वारा स्थूणामयूखं निर्हृत्य दक्षिणतो निखनति होतुः सन्दर्शने ॥२९॥**

शालायाः पूर्वद्वारे स्थूणां मयूखं च निष्काश्य शालाया दक्षिणस्यां दिशि खनति होतुः सन्दर्शने गार्हपत्यसमीपे उपविष्टो होता। तत्र निखातां स्थूणां मयूखं च पश्चात् तस्मिन् स्थाने निखनेदित्यर्थः ॥२९॥

[ खरयोर्निवपनम् ]

**गार्हपत्याहवनीया उत्तरेण खरौ निवपति ॥३०॥**

अरत्निमात्रात्परतः। खरश्चाष्टादशाङ्गुलमितः समचतुरस्र एकाङ्गुलोच्चः। तत्र पञ्चभूसंस्कारान् कृत्वा सिकतोपकिरणं कार्यम् ॥३०॥

**दक्षिणतोऽनुभित्युच्छिष्टखरम् ॥३१॥**

दक्षिणद्वारस्य पूर्वद्वार्याः स्थूणासमीपे भित्तिसंलग्नमुच्छिष्टखरं निवपति ॥३१॥

[ सम्राडासन्दीस्थापनम् ]

**पूर्वेणाहवनीयꣳ सम्राडासन्दीं पर्याहृत्य दक्षिणतः प्राचीमासादयति राजासन्द्या उत्तरतः ॥३२॥**

सम्राडासन्दी घर्मासन्दी। पर्याहृत्य = नीत्वा। सोमासन्द्या उत्तरतः आहवनीयस्य दक्षिणतः प्राङ्मीषामासादयति ॥३२॥

**कृष्णाजिनमस्यामास्तृणाति ॥३३॥**

**तस्मिन्नभ्युपशये निदधाति ॥३४॥**

कृष्णाजिने ॥३४॥

**महावीरौ च ॥३५॥**

द्वितीयतृतीयौ ॥३५॥

**अवच्छादयेद्वा ॥ ३६ ॥**

आसन्द्यां स्थापितौ तौ महावीरौ वस्त्रादिनाऽऽच्छादयेत्र वा ॥ ३६ ॥

**अन्यो वा परिघर्म्ययोजनमध्वर्योः कालसम्पत्तेः ॥ ३७ ॥**

अध्वर्योरन्यः प्रतिप्रस्थाता परिघर्म्ययोजनं स्थूणामयूखनिर्हरणादि आसन्द्यां महावीरासादनान्तं कुर्यात्। वाऽध्वर्युः, कुतः? अध्वर्योः कालसम्पत्तेः। होतरभिष्टुहीति

प्रेषितो होता ऽभिष्टौति । तत्र होत्रा ऽभिष्टवे क्रियमाणे "अञ्जन्तीत्युच्यमाने देवस्त्वेत्यनक्ति-महावीरम्" (२६।३।३८) सर्ठ० सीदस्वेत्युच्यमाने मुञ्जप्रलवान् द्विगुणानादीप्य" (२६।३।३) इत्यादिकोऽध्वर्युकर्तृककर्मणः कालसम्पत्तिनियमोऽस्ति (१४।१।३।१३)। अतो महावीराञ्ज-नादिकस्याध्वर्युकर्तृकत्वानुरोधेन विरोधात् स्थूणामयूखनिर्हरणादिकं प्रतिप्रस्थाता कुर्यादिति भावः । तदुक्तम् "वचनविरोधाभ्यामन्यः (१।८।३०) इति ॥३७॥

[ महावीराञ्जनम् ]

**अञ्जन्तीत्युच्यमाने "देवस्त्वेत्यनक्ति ( ३७।११ ) महावीरमाज्यर्ठ० संस्कृत्य ॥३८॥**

आज्यसंस्कारश्च पूर्णाहुतिधर्मकः (४।१०।५) ॥ ३८ ॥

[ रजतशतमानस्य खरे उपगूहनम् ]

**रजतशतमानं खर उप गूहति "पृथिव्याः सꣳस्पृश" इति ( ३७।११ ) ॥३९॥**

खरे सिकतामध्ये नीचैः प्रवेशयति ॥ ३९ ॥

इति द्वितीया कण्डिका ॥२॥



**शुक्रं गायेति प्रेष्यति ॥ १ ॥**

प्रस्तोतारम् ॥ १ ॥

**पत्नी शिरः प्रोर्णुते ॥ २ ॥**

पत्नी स्वयमेव स्वकीय शिर आच्छादयति सचक्षुष्कम् (१४।१।३।१६)। यथा घर्मो न दृश्यते । पत्न्यदर्शनमिति प्रागुक्तस्य विशेषविधानमिदम् ॥ २ ॥

[ मुञ्जप्रलवानां दीपनम् ]

**"सर्ठ०सीदस्वेत्युच्यमाने मुञ्जप्रलवान् द्विगुणानादीप्य, प्रतिदिशं खरे करोति ॥ ३ ॥**

मुञ्जप्रलवाः शरतृणानि । तान् द्विगुणान्मध्यमोटनेन द्विगुणीकृतान् गार्हपत्ये प्रदीप्तान् कृत्वा सुर्वासु दिक्षु खरे करोति ॥ ३ ॥

**तेषु महावीरमाज्यवन्तमर्चिरसीनि ( ३७।११ ) ॥ ४ ॥**

तेषु मञ्जप्रलवेषु संस्कृताज्यपूर्णं महावीरं स्थापयेत ॥ ४ ॥

**"अनाधृष्टेति ( ३७।१२ ) वाचयति प्रादेशमध्यधि धारयन्तम् ॥ ५ ॥**

महावीरस्योपर्युपरि प्रादेशं धारयन्तं यजमानं पञ्चवाक्यात्मकमपि मन्त्रं सकृदेव वाचयत्यध्वर्युः ॥ ५ ॥

**प्रतिदिशमेके ॥ ६ ॥**

अनाधृष्टा पुरस्तात्, पुत्रवती दक्षिणतः, इत्येवमादि महावीरमध्यधि प्रतिदिशं प्रादेशं धारयन्तं यजमानं वाचयेत्, विधृतिरुपरिष्टादिति मन्त्रमध्ये प्रादेशं धारयन्तं वाचये-दित्येके वदन्ति ॥ ६ ॥

"विश्वाभ्यो मेति ( ३७।१२ ) दक्षिणत उत्तानं पाणिं निदधाति ॥ ७ ॥

महावीरस्य दक्षिणतो भूमावुत्तानं पाणिं निदध्याद्यजमानः (१४।१।३३५,२४) ॥ ७ ॥

"मनोरश्वेति ( ३७।१२ ) प्रादेशमुत्तरतः ॥८॥

धृष्टिभ्यां भस्मना परिकीर्याङ्गारैश्च विकङ्कतशकलैः परिश्रयति त्रयोदशभिः प्रागुदग्भिः "स्वाहा मरुद्भिरित्यधिकं (३७।१३) दक्षिणतो, द्वौ मन्त्रेण ॥९॥

अध्वर्युरुपवेषाभ्यां गार्हपत्यस्य भस्मना महावीरं परितो भस्मविक्षेपं कृत्वा, धृष्टिभ्यामेव गार्हपत्याङ्गारैश्च परिकीर्य महावीरस्य सर्वतोऽङ्गारान्निधाय प्रागग्रैरुदगग्रैश्च त्रयोदशभिर्विकङ्कतशकलैर्महावीरं परिश्रयति = अङ्गाराणामुपरि निदधाति । तत्र प्रथमौ द्वौ प्रागग्रौ मन्त्रेण । इतरानेकादश तूष्णीमुपर्युपरि निदधाति । तत्र तृतीयचतुर्थावुदगग्रौ, पञ्चमषष्ठौ प्रागग्रौ, सप्तमाष्टमावुदगग्रौ, नवमदशमौ प्रागग्रौ, एकादशद्वादशावुदगग्रौ, अधिकं त्रयोदशमवशिष्टं दक्षिणतः ॥ ९ ॥

सुवर्णशतमानेनापि दधाति "दिवः सᳬस्पृश" इति ( ३७।११ ) ॥ १० ॥

महावीरम् ॥१०॥

इति तृतीया कण्डिका ॥ ३ ॥



चन्द्रं गायेति च प्रेष्यति ॥ १ ॥

चशब्दादपिधानसमकालमेव प्रस्तोतारं प्रेष्यति । घर्मस्य तन्वौ गायेति वक्ष्यमाणः प्रैषश्चात्रैव भवति वचनात् ॥ १ ॥

कृष्णाजिनावकृत्तैर्द्वैविंत्रैरुपवाजयतित्रिभिर्दण्डवद्भिर्मधुमध्विति (३७।१३) ॥ २ ॥

महावीरं परितः प्रकीर्णानङ्गारान्दीपनाय हस्तग्रहणदण्डयोग्यैस्त्रिभिर्व्यजनैरुपवाजयति ॥ २ ॥

एकं प्रयच्छति प्रतिप्रस्थात्रे ऽपरमाग्नीध्रे ॥ ३ ॥

उपवाजनानन्तरमध्वर्युस्तेषां मध्ये द्वौ दद्यात्, तृतीयं स्वहस्ते एव परिशेषयेत् ॥ ३ ॥

धून्वन्तस्त्रिस्त्रिः परिक्रामन्ति पितृवद्देववच्च ॥ ४ ॥

चन्द्रसामसमाप्तौ अध्वर्युप्रतिप्रस्थात्रग्नीधो धवित्रैरङ्गारान्धून्वन्तो महावीरं परिक्रामन्ति । अप्रदक्षिणं प्रदक्षिणं च त्रिस्त्रिः ॥ ४ ॥

रुचिते वोत्तरम् ॥ ५ ॥

उत्तरं देववत्परिक्रमणं "रुचितो घर्म इत्याह" इति वक्ष्यति ( २६।४।११ ) । तदा वा कुर्यान्नेदानीम् । पूर्वं त्विदानीमेव । तदवसरं तु स्वयमेवाचार्यो वक्ष्यति "परिक्रम्योपतिष्ठतेऽकृतं चेदिति ( २६।४।१३ ) ॥ ५ ॥

**अर्चिषि प्राप्ते सुवर्णशतमानं निधायाज्येन महावीरं परिषिञ्चति स्रुवेण प्रतिप्रणवम् ॥ ६ ॥**

वीजनेन प्रदीप्तत्वादर्चिषि प्राप्ते महावीरे सुवर्णशतमानमपनीय होतुरभिष्टवस्य प्रवणे प्रवणे संस्कृताज्येन स्रुवेण महावीरं परिषिञ्चेत् = महावीरस्य परित आज्यं क्षिपेत् ॥ ६ ॥

**रौहिणावधिश्रयति तूष्णीं ग्रामपिष्टानाम् ॥ ७ ॥**

लौकिकपिष्टानां रौहिणौ पुरोडाशावधिश्रयेत्प्रतिप्रस्थाता ॥ ७ ॥

**आज्यधर्माः स्थानापत्तेः ॥ ८ ॥**

"चक्षुषी वा एते यज्ञस्य यदाज्यभागौ चक्षुषी रौहिणौ" (श॰४।२।२।५२) इति श्रुतेः रौहिणयोराज्यभागस्थानापन्नत्वाद्रौहिणयोराज्यधर्मा निर्वपणाद्यवेक्षणान्ता भवन्ति ॥ ८ ॥

**औषधधर्मा वा संस्कारशब्दात् ॥ ९ ॥**

वाशब्दः पक्षव्यावृत्तौ । औषधधर्मा एव पौरोडाशिका भवन्ति नाज्यधर्माः । संस्कारशब्दात् । संस्कारो ह्ययं रौहिणावधिश्रयतीति । यत्तु स्थानापत्तिरुक्ता सोऽर्थवादः ॥ ९ ॥

**"ईडे द्यावापृथिवी" इत्युच्यमाने परिधीन्परिधाय, रौहिणाऽ उद्वास्य स्रुचो रादसादयत्याहवनीयाद्दक्षिणोत्तरे ॥ १० ॥**

रौहिणौ पुरोडाशौ रौहिणहवन्योः स्रुचोः पुरोडाशपात्रीस्थानीययोरुद्वास्य स्रुक्स्थावेव तावासादयति प्रतिप्रस्थाता । रौहिणनिर्वापादिरौहिणासादनान्तं विरोधात्प्रतिप्रस्थाता कुर्यात् ॥ १० ॥

**"अग्नस्वतीमित्युच्यमाने रुचितो घर्म इत्याहोपोत्तिष्ठन् ॥ ११ ॥**

अध्वर्युः ॥ ११ ॥

**घर्मस्य तन्वौ गायेति प्रेष्यति ॥ १२ ॥**

प्रस्तोतारम् । (लाट्या॰ १।६।२५) । एतच्च चन्द्रसामगानानन्तरं प्राक् पितृवत्परिक्रमणाद्भवतीति प्रागेवोक्तम् (२६।४।१) ॥ १२ ॥

**परिक्रम्योपतिष्ठन्तेऽकृतं चेद्गर्भो देवानामिति ( ३७।१४ ) ॥ १३ ॥**

देववत्परिक्रमणं पूर्वं न कृतं चेदिह कृत्वा ब्रह्महोत्रध्वर्य्वग्नीत्प्रतिप्रस्थातृप्रस्तोतारः सयजमाना घर्ममुपतिष्ठन्ते गर्भो देवानामित्यादिना नमस्ते अस्तु मा मा हिंꣳसीरित्यन्तेन मन्त्रेण ( ३७।१३–२० ) ॥ १३ ॥

**अपोर्णोति पत्नीशिरः ॥ १४ ॥**

पत्न्याः शिरः पत्नीशिरोऽध्वर्युरुद्घाटयति (१४।१।४।१६) ॥ १४ ॥

**"त्वष्टृमन्त" इत्येनां ( ३७।२० ) वाचयति महावीरमीक्षमाणाम् ॥१५॥**

अध्वर्युः ॥१५॥

**"अहः केतुनेति ( ३७।२१ ) दक्षिणꣳ० रौहिणं जुहोति ॥१६॥**

रौहिणहवन्यां स्रुचा सर्वहुतम् ॥१६॥

**मन्त्रक्रमेणोत्तरम् ॥१७॥**

द्वितीयं रौहिणं "स्वाहा रुद्राय" ( ३८।१५ ) इति जुहोति ॥१७॥

"रात्रिरिति ( ३७।२२ ) सायम् ॥१८॥

अपराह्णकालीने प्रवर्ग्यचरणे रात्रिः केतुनेति द्वावपि रौहिणौ यथाकालं जुहुयात्। 'स्वाहा रुद्राय" (२६।६।११) इत्येतत्कर्मणोऽनन्तरं चायं होमः। तत्रापि रात्रिरिति मन्त्रस्य पुनः पाठोऽस्ति ॥१८॥

इति चतुर्थी कण्डिका ॥ ४ ॥

"देवस्य त्वेति ( ३८।१ ) रज्जुसन्दानमादायेडऽ एहीति ( ३८।२ ) गामाह्वयति नाम्ना च त्रिरुच्चैरपरेण गार्हपत्यं गच्छन् ॥१॥

घर्मदुघायां गोर्बन्धनार्था पाशवती रज्जुः। तस्या एव पश्चात्पादनियोजनार्थं सन्दानमादाय गार्हपत्यस्य पश्चाद्गच्छति। इड एहीत्यादिवाक्यत्रयेण घर्मदुघां गामाह्वयति। ततो गोर्नाम्ना च उच्चैस्त्रिवारमाह्वयति। नाम चात्र व्यावहारिकम् ॥ १ ॥

धेनुं गायेति प्रेष्यति ॥२॥

प्रस्तोतारम् (लाट्या० १।६।२६) ॥२॥

"अदित्यै रास्नेति ( ३८।३ ) गां पाशेन प्रतिमुच्य स्थूणायां बध्वा "पूषासीति ( ३८।३ ) वत्समुत्सृजति ॥३॥

आगताया गोः शृङ्गयो रज्जुपाशं प्रोतयित्वा तूष्णीं बध्वा मन्त्रेण गवा सह संयोगार्थं तदीयं वत्समुत्सृजेत् ॥३॥

सन्दाय "घर्माय दीष्वेति ( ३८।३) वत्समुन्नयति ॥४॥

संसृष्टे एव वत्से धेनुं पश्चिमपादयोः सन्दानेन नियोजनेन बध्वा गोस्तनेभ्यो वत्सं पृथक्कुर्यात् ॥४॥

"अश्विभ्यां पिन्वस्वेति (३८।४) पिन्वने दोग्धि ॥५॥

मृत्तिकानिर्मिते स्रुक्पुष्कराकारे पात्रे गां दुह्यात् ॥५॥

"स्वाहेन्द्रवदिति (३८।४) विप्रुषोऽभिमन्त्रयते ॥६॥

पिन्वनेन पतितान्दुग्धबिन्दूनभिमन्त्रयेत् ॥६॥

"यस्ते स्तन" इति (३८।५) स्तनमालभते ॥७॥

जातावेकवचनम्। तेन सर्वेषामालम्भोऽत्र, युगपच्छक्यत्वात् ॥७॥

एवं प्रतिप्रस्थाताऽजामयूखे तूष्णीम् ॥८॥

दोग्धि। इयांस्तु विशेषः। पाशप्रतिमोकः, मयूखे बन्धनम्, बर्करोत्सर्गः, सन्दानम्, वर्करोन्नयनम्, पिन्वने पात्रे दोहनम्, विप्रुषां विलोकनम्, स्तनालम्भश्चेति ॥ ८ ॥

पयो गायेति प्रेष्यति ॥९॥

प्रस्तोतारम् ॥९॥

"उत्तिष्ठ ब्रह्मणस्पत" इत्युच्यमान उपोत्तिष्ठति ( शाङ्खा० ५।१०।९ ) ॥१०॥

गोसमीपादध्वर्युः ॥१०॥

उपद्रव पयसेत्युच्यमाने (शाङ्खा० ५।१०।६) गच्छत्युर्वन्तरिक्षमिति (३८।७) ॥११॥

गोसमीपाद्धिमिते गार्हपत्यं प्रति गच्छत्यध्वर्युः प्रतिप्रस्थाता च ॥११॥

परीशासावादत्ते "गायत्रं छन्दोऽसीति प्रतिमन्त्रम् (३८।८) ॥१२॥

अध्वर्युः ॥१२॥

वसिष्ठशफौ गायेति प्रेष्यति ॥१३॥

प्रस्तोतारम् (लाट्या० १।६।३२) ॥१३॥

ताभ्यां महावीरं परिगृह्णाति "द्यावापृथिवीभ्यां त्वा परिगृह्णामीति (३८।८) ॥१४॥

ताभ्यां परीशासाभ्याम् ॥१४॥

उद्यम्य, मुञ्जवेदेनोपमृज्योपयमन्योपगृह्णात्यन्तरिक्षेणो- पयच्छामीति (३८।८) ॥१५॥

परीशासगृहीतं महावीरं भूमेरुत्थाप्योपमृज्य उपयमनीं स्रुचं घर्मस्याधस्ताद् धारयति मन्त्रेण ॥१५॥

अजापयसाऽवसिच्य शान्ते गोः पयोऽवनयतीन्द्राश्विनेति (३८।८) ॥१६॥

ततस्तस्य महावीरस्य मध्येऽजापयोऽवसिच्य शान्ते महावीरे गोः पयः क्षिपेत् ॥१६॥

"प्रैतु ब्रह्मणस्पतिरित्युच्यमाने (शाङ्खा० ५।१०।१४) "समुद्राय त्वेति (३७।६) वातनामानि जपति गच्छन्नाहवनीयम् ॥१७॥

इति पञ्चमी कण्डिका ॥२७॥



"स्वाहा "घर्मायेत्युपयमन्याऽऽसिञ्चति घर्मे (३८।९) ॥ १ ॥

उपयमन्या अधो धृतत्वात्तत्र घर्ममध्यात् पतितं पयो घृतं वा पुनरुपयमन्या स्रुचा घर्मे आसिञ्चति ॥ १ ॥

"स्वाहा घर्मः पित्र" इति (३७।९) जपित्वाऽतिक्रम्याश्राव्याह घर्मस्य यजेति ॥ २ ॥

प्रेष्यति ॥ २ ॥

वषट्कृते जुहोति "विश्वा आशा" इति (३७।१०) ॥ ३ ॥

घर्मम् ॥३॥

"दिवि धा" इति (३८।११) त्रिरुत्कम्पयति ॥ ४ ॥

ऊर्ध्वं कम्पयति महावीरम्। सकृन्मन्त्रेण द्विस्तूष्णीम् ॥ ४ ॥

"स्वाहाऽग्नय" इत्यनुवषट्कृते (३८।११) ॥ ५ ॥

जुहोति ॥ ५ ॥

"अश्विना घर्ममिति (३८।१२) ब्रह्माऽनुमन्त्रयते ॥ ६ ॥

अध्वर्युः। हुतं द्रव्यमिति कर्कः। घर्ममित्यपरे। पात्रस्थमित्यपरे ॥ ६ ॥

"अपातामिति (३७।१३) यजमानः ॥ ७ ॥

पूर्ववदेवानुमन्त्रयते ॥ ७ ॥

"इषे पिन्वस्वेति ( ३७।१४ ) पिन्वमानमनुमन्त्रयते ॥ ८ ॥

पिन्वमानं पात्रमध्ये इतस्तत उच्छलन्तं हुतं द्रव्यमध्वर्युः। घर्ममित्यन्ये ॥ ८ ॥

"घर्मासीत्युत्क्रामत्युत्तरपूर्वार्द्धम् (३८।१४) ॥ ९ ॥

ऐशानीं दिशं प्रत्युद्गच्छत्यध्वर्युः ॥ ९ ॥

"अमेन्यस्मे" ऽइति ( ३८।१४ ) खरे करोति ॥१०॥

परीशासगृहीतमेव महावीरमाहवनीयस्योत्तरतः खरे आसादयेत् ॥१०॥

विकङ्कतशकलैर्जुहोति घर्मे न्यज्य न्यज्य "स्वाहा पूष्णे शरस" इति (३७।१५) प्रतिमन्त्रम् ॥११॥

विकङ्कतशकलैर्घर्मस्थमाज्यं जुहुयात्। किं कृत्वा—घर्ममध्ये शकलं प्रवेश्य तत्स्थेनाज्येन नितरामक्त्वा अक्त्वा ॥११॥

हुत्वा हुत्वा प्रथमपरिधा उपश्रयति ॥१२॥

शकलैराज्यं हुत्वा हुत्वा प्रतिहोमं तत्तच्छकलं प्रथमपरिधौ निदध्यात् ॥१२॥

चतुर्थमहुतमुदङ्ङीक्षमाणमाणो दक्षिणतो बर्हिष्युपगूहति ॥१३॥

चतुर्थं शकलमहुतमेवोदीचीं दिशं विलोकयन् वेदेर्दक्षिणभागे आतिथ्याबर्हिषि प्रवेशयति ॥१३॥

सप्तमं च सर्वलेपाक्तं दक्षिणेक्षमाणः प्रतिप्रस्थात्रे प्रयच्छति ॥१४॥

सप्तमं च शकलमहुतं सर्वमपि मूलतोऽग्रपर्यन्तं महावीरस्थघृतलेपेनाक्तं दक्षिणां दिशमीक्षमाणः प्रयच्छेत् ॥१४॥

तꣳ स उत्तरतः शालाया उदञ्चं निरस्यति ॥१५॥

स प्रतिप्रस्थाता तं शालाया उत्तरत उदगग्रं भूमौ क्षिपेत् ॥१५॥

"स्वाहा सञ्ज्योतिषेत्युपमन्यामासिञ्चति ( ३८।१६ ) घर्म्यम् ॥१६॥

परीशासाभ्यां घर्ममुत्थाप्य उपयमनीस्रुक्-पुष्करस्योपर्यधोमुखं कुर्यात् ॥१६॥

रौहिणं जुहोति ॥१७॥

मन्त्रक्रमेणोत्तरमिति यत्प्रागुक्तं तस्यायं मन्त्रक्रमप्राप्तो होमकालः। अतोऽहः केतुनेति द्वितीयं रौहिणं प्रातर्जुहोति रात्रिरिति सायम् ॥१७॥

उपश्रितानि च प्रहरति ॥१८॥

मध्यमपरिधौ निहितानि पञ्च शकलानि चाहनीये प्रक्षिपेत् ॥१८॥

अग्निहोत्रावृता हुत्वा वाजिनवद्भक्षयन्ति "मधु हुतमिति (३८।१६) ॥१९॥

अग्निहोत्रस्य आवृता इतिकर्त्तव्यतया ( प्राप्तघर्मं सूर्यं ज्योतिषमिति समिधमाधाय

सूर्यो ज्योतिः, सजूरिति वा, सायं घर्मे अग्निज्योतिषमिति समिधमाधाय अग्निज्योतिरिति ) मन्त्रसहितया उपयमन्यामानीतं घर्म्यं हुत्वा समुपहूय वाजिनवत् (४।४।१६,१०।१।२५) घर्मर्त्विजो भक्षयेयुः ॥१६॥

**उच्छिष्टखरे मक्षाल्योपयमनीं निदधाति ॥२०॥**

क्वचित् स्थापयेत् ॥२०॥

**अत्र वोपश्रितप्रहरणम् ॥२१॥**

प्रथमपरिधौ निहितानां परिधीनामत्र वाऽऽहवनीये प्रक्षेपो न प्राक् ॥२१॥

**सꣳसाद्यमानायानुवाचयति ॥२२॥**

**सꣳसाद्यमानेभ्य इत्येके ॥२३॥**

**"सूयवसाद्भगवतीत्युच्यमाने (शा० ५।१०।३३ ) यवसोदके धेनवे प्रयच्छन्त्येके ॥२४॥**

घर्मदुघायै तृणोदके भक्षणार्थं निवेदयन्ति । एके न प्रयच्छन्ति ॥२४॥

**सर्वमासन्द्यां करोति ॥२५॥**

पात्रजातमनाशाय स्थापयेत् ॥२५॥

**"अभीममिति ( ३८।१७ ) महावीरम् ॥२६॥**

प्रचरणीयम् । इतराणि पात्राणि तूष्णीम् । अत्र शान्तिकरणं द्वारोद्घाटनं च ॥२६॥

**सकृदासादनप्रोक्षणे खर-स्थूणा-मयूख-कृष्णाजिनाभ्युपशयासन्दीनाम् ॥२७॥**

खरार्थसिकतानां स्थूणादीनां च सकृत् प्रथमे प्रवर्ग्यचरणे एवासादनप्रोक्षणे भवतः ॥२७॥

**आवृत्तिर्वा प्रधानकालत्वात् ॥२८॥**

प्रतिप्रवर्ग्यचरणमेवावृत्तिर्न सकृत् । आसादनप्रोक्षणयोः प्रधानकालीनत्वेन प्रधानस्योपकारकत्वात् । तेन प्रतिप्रधानमावृत्तिः ॥२८॥

इति षष्ठी कण्डिका ॥६॥



**उपसदन्ते प्रवर्ग्योत्सादनम् ॥ १ ॥**

उपसत्समासान्ते (८।३।१६) प्रवर्ग्योत्सादनसंज्ञं कर्म कुर्यात् (१४।३।१।१) ॥ १ ॥

**अन्तःपात्ये परिघर्म्यं निधाय दक्षिणेन निर्हृत्योच्छिष्टखरम् ॥ २ ॥**

अन्तःपात्यसमीपे वेदिमध्ये घर्मपात्रजातं निधाय उच्छिष्टखरमपि शालामध्यादुत्थाप्य दक्षिणेन द्वारेण निष्काश्य तत्रैव स्थापयेत् ॥ २ ॥

**आहवनीये त्रीञ्छालाकान्प्रदीप्य प्रदीप्याग्नीध्रो धारयति शतरुद्रियवत्प्रतिलोमं प्रमाणेषु ॥ ३ ॥**

शलाकानां समूहः शालाकः । तेन तिसृभिः शलाकाभिरेकः । तथाविधान् त्रीन् शालाकान् हस्ते गृहीत्वा तेषां मध्ये एकं शालाकं शालाद्वार्ये आहवनीये प्रदीप्याग्नीध्रो मुखमात्रे आहवनीयस्योपरि स्थापयेत् (१८।१।२-४) । ततो वक्ष्यमाणे होमे जाते द्वितीयं शालाकं प्रदीप्य

नाभिदघ्ने आहवनीयस्योपरि स्थापयेत्। ततो होमान्ते तृतीयं शालाकं प्रदीप्य जानुमात्रे आहवनीय स्योपरि स्थापयेत्। मुखमात्रादिप्रमाणं च यजमानस्यैव (१।१०। )॥ ३॥

**चतुर्गृहीतेनाभिजुहोति "या ते घर्म दिव्या शुगिति (३७।१८) प्रतिमन्त्रम्॥४॥**

एकमेव चतुर्गृहीतमाज्यं विभज्य तृतीयांशं तृतीयांशमग्नीधा धृतानां तिसृणां शालाकानां प्रदीप्तानामुपरि जुहुयादध्वर्युस्तिष्ठन्। हुत्वा हुत्वा क्षिपेदध्वर्युः, तं तं शालाकमपि आहवनीये एव क्षिपेत्॥ ४॥

**प्रास्य तृतीयमुपविश्य॥ ५॥**

अध्वर्युस्तृतीयं शालाकमाहवनीये प्रक्षिप्योपविश्य सर्वं चतुर्गृहीतशेषं जुहुयात्। अत्रोपविश्येति विधानात्पूर्वो होमस्तिष्ठता कार्यः॥ ५॥

**"क्षत्रस्य त्वेति (३८।१९) निष्क्रमणं पुरस्तात्पत्नीमन्तर्धाय॥ ६॥**

अध्वर्युः पत्नीमन्तर्धाय शालातो निष्क्रामेत्॥ ६॥

**साम प्रेष्यत्यवभृथवत्॥ ७॥**

यथाऽवभृथे साम गाय, साम ब्रूहि इति वा प्रेषणमुक्तं (१०।८।१६) तथाऽत्रापि प्रस्तोतारं प्रेष्येत्॥७॥

**देशाः॥ ८॥**

देशाश्चावभृथवत्प्रतिपत्तव्याः (१०।८।१७)। तेन प्रथममन्तःपात्यदेशे, ततोऽर्द्धमार्गे, तत उत्सादनदेशे सामप्रेषणम्॥ ८॥

**निधनं च॥ ९॥**

अवभृथवदेव (१०।८।१८)। सर्वे निधनमुपयन्तीत्यर्थः॥ ९॥

**उत्सादनदेशं गच्छन्ति॥ १०॥**

उत्सादनं महावीरादीनां परित्यागः (१४।३।१।१५)। तस्य देशोऽग्निचयने परिष्यन्दो विहितः। स च जलपरिवृतो द्वीपो निर्जलो भूभागः॥ १०॥

**अनग्ना उत्तरवेदिम्॥ ११॥**

अनग्निचित्ये उत्तरवेदिरेवोत्सादनदेशः॥ ११॥

**त्रिः परिषिच्याचिक्रददिति ( ३८।२२ )॥ १२॥**

उत्सादनदेशे उत्तरवेदौ सामगानानन्तरं तं देशं परितो जलसेकं कृत्वा वक्ष्यमाणं कर्म कुर्यात्॥ १२॥

**मन्त्रक्रमेण वा॥ १३॥**

मन्त्रक्रमेण वोत्सादनदेशं परिषिञ्चेदिदानीम् (१४।३।१।२५)। तमवसरं स्वयमेव सूत्रकारो वक्ष्यति-"अत्र वा परिषेचनम्" ( २६।७।३५) इति॥ १३॥

**नाभिस्पृशं प्रवृञ्जनीयं निदधाति "चतुःस्रक्तिरिति ( ३७।२० )॥ १४॥**

उत्तरवेदेर्मध्यभागः प्रादेशविस्तृत एकाङ्गुलोच्चो नाभिः। नाभेः पुरस्तात् नाभिस्पृष्टमेव प्रथमं महावीरमासादयेत्॥ १४॥

प्राञ्चावितरौ ॥ १५ ॥

पूर्वसादितमहावीरात्प्राक्संस्थावितरौ महावीरौ निदध्यान्मन्त्रावृत्या ॥ १५ ॥

उपशयां च तूष्णीम् ॥ १६ ॥

महावीरघटनावसरे परिशेषितां मृदं च महावीरेभ्यः पुरस्तान्निदध्यात् ॥ १६ ॥

परीशासावभितः ॥ १७ ॥

महावीरादिकमभितः स्थापयेत् ॥ १७ ॥

रौहिणहवन्यौ चावकृष्टे बर्ह्ये ॥ १८ ॥

रोहिणहवन्यौ स्रुचौ परीशासाभ्यां बहिःप्रदेशे परीशासापेक्षया किंचित्पश्चान्नीचैर धोभागे स्थापयेत् ॥ १८ ॥

अभ्रिमुत्तरतः ॥ १६ ॥

रौहिणहवन्यावुत्तरतोऽभ्रिं सादयेत् ॥ १६ ॥

आसन्दीं दक्षिणतः ॥ २० ॥

रौहिणहवन्योरेव । सम्राडासन्दीम् ॥ २० ॥

कृष्णाजिनमुत्तरतः ॥ २१ ॥

अग्नेः ॥ २१ ॥

सर्वतो धवित्राणि ॥ २२ ॥

आसादितपात्राणां दक्षिणतः पश्चादुत्तरतश्चैकैकम् ॥ २२ ॥

परिधींश्च ॥ २३ ॥

धवित्रवदासादयेत् ॥ २३ ॥

रज्जुसन्दानं वेदमुपयमन्यामाधाय पश्चात् ॥ २४ ॥

उपयमन्यां स्रुचि रज्जुसन्दानं वेदं च निधाय आसादितपात्रगणस्य पश्चात्तां प्रागग्रां निदध्यात् ॥ २४ ॥

पश्चात् पिन्वने चाभितो दण्डम् ॥ २५ ॥

उपयमनीमुखस्य पश्चाद्भागे दीक्षादण्डमभितः पिन्वने स्थापयेत् ॥ २५ ॥

स्थूणामयूखं पश्चात् ॥ २६ ॥

पिन्वनयोः । दक्षिणतः स्थूणामुत्तरतो मयूखम (१४।३।१।२२) ॥ २६ ॥

रौहिणकपाले च ॥ २७ ॥

स्थूणामयूखयोः पश्चात् (१४।३।१।२२) ॥ २७ ॥

धृष्टी च ॥ २८ ॥

रौहिणकपालयोः पश्चादुपवेषौ ॥ २८ ॥

मध्येऽन्यत् ॥ २६ ॥

अन्यद् घर्मोपयुक्तं स्रुवमौञ्जादि आसादितपात्राणां मध्ये स्थापयेत् ॥ २६ ॥

खरा उत्तरतः ॥ ३० ॥

सर्वपात्राणामुत्तरतः प्रचरणीयौ खरावासादयेत् ॥ ३० ॥

दक्षिणतो मार्जालीयदेशं बहिर्वेद्युच्छिष्टखरम् ॥ ३१ ॥

मार्जालीयधिष्ण्यस्य दक्षिणतो वेदेर्बहिर्भागे उच्छिष्टखरमासादयेत् ॥ ३१ ॥

आसेचनवन्ति पयसः पूरयति "घर्मैतत्त"इति ( ३१।८ ) ॥३२॥

पयस इति षष्ठी तृतीयार्थे। महावीरत्रयं, द्वे पिन्वने, उपयमनी, स्रुवः, एतानि सप्त गर्त्तयुक्तानि पात्राणि पयसा पूरयेन्मन्त्रावृत्या ॥ ३२ ॥

शेषं व्रतमिश्रं दीक्षिताय प्रयच्छति ॥ ३३ ॥

प्रवर्ग्योत्सादनावशिष्टं पयोव्रतमिश्रं कृत्वा दद्यात्। अत्र शेषमध्ये व्रतस्य प्रक्षेपो, न व्रतमध्ये शेषस्य ॥ ३३ ॥

प्रत्तं चेत्केवलम् ॥ ३४ ॥

प्रागेव सकलं व्रतं दत्तं चेत् केवलं प्रवर्ग्योत्सादनावशिष्टं पयो दद्यात्। एतच्च पयोदानं व्रतकाले एव ॥ ३४ ॥

अत्र वा परिषेचनम् ॥ ३५ ॥

उत्तरवेदेः कार्यमचिक्रददिति त्रिः (१४।३।१।२५) ॥ ३५ ॥

वार्षाहरेष्टाहोत्रीये सामनी गायेति प्रेष्यति ॥ ३६ ॥

वार्षाहरठ० साम गायेति प्रेषिते तद्गानानन्तरम् इष्टाहोत्रीयठ० साम गायेति प्रेष्यति प्रस्तोतारम् ॥ ३६ ॥

चात्वाले मार्जयन्ते सपत्नीकाः "सुमित्रिया न" इति ( ३८।२३ ) ॥३७॥

पत्न्या अपि मार्जनं मन्त्रपाठश्च ॥ ३७ ॥

"उद्वयमित्युत्क्रामन्त्युत्तरपूर्वार्द्धम् ( ३८।२४ ) ॥ ३८ ॥

ऐशानीं दिशं प्रत्युद्गच्छति यजमानः ॥ ३८ ॥

अनपेक्षमेत्यैधोऽसीति (३८।२५) समिधमादायाहवनीयेऽभ्यादधाति "समिदसीति (३८।२५) ॥३९॥

पश्चादवलोकनमकृत्वा ॥ ३९ ॥

पत्नी च गार्हपत्ये तूष्णीम् ॥ ४० ॥

समिधमादधाति ॥ ४० ॥

प्रवृञ्जनीयौ शतमानौ ब्रह्मणे ददाति ॥ ४१ ॥

रजतसुवर्णमयौ ॥ ४१ ॥

घर्मदुघामध्वर्यवे ॥४२॥

यजमानव्रतदुघाᳬ होत्रे (१४।३।१।३४) ॥ ४३ ॥

पत्न्या उद्गात्रे ॥ ४४ ॥

पत्न्या व्रतदुघामुद्गात्रे दद्याद्यजमानः ॥ ४४ ॥

**अग्नीधेऽजाम् ॥ ४५ ॥**

**घर्मभेदे यथोक्तम् ॥ ४६ ॥**

भूमिर्भूमिम्, य ऋते चिदभिश्रिषः, (२५।५।२८,३०) इति मन्त्राभ्यां भिन्नस्याभिमर्शनं परमेष्ठ्यादि चतुस्त्रिंशदाहुतिहोमश्चेति प्रागुक्तं (२५।५।२६-३०) तत्कुर्यादित्यर्थः। उक्तस्याप्यत्र प्रस्तावो विशेषविधानार्थः ॥४६॥

तमेव विशेषमाह—

**उच्चावचान्यं कुर्यात् ॥४७॥**

उच्चावदिति (१६।७।१६) मन्त्ररहितक्रियामात्रेणार्थवत्कुर्यात्। प्रायश्चित्तहोमानन्तरं भग्नं महावीरमुपशयां च पिण्डाऽन्यया मृदा सह संसृज्य तूष्णीं महावीरकरणमजापयसोऽवसेकान्तमुत्पादनार्थं (१४।३।२।२१) कुर्यात् ॥ ४७ ॥

**अभिन्नेन चरेत् ॥ ४८ ॥**

द्वितीयतृतीयपुरोडाशयोर्मध्येऽन्यतरेण दृढेन प्रचरेत्। नूतनं नूत्पादनार्थं निदध्यात् ॥४८॥

**"स्वाहा प्राणेभ्यः साधिपतिकेभ्य" इति ( ३६।१ ) पूर्णाहुतिमाद्यामुत्तमां च "मनसः काममाकूतिमिति ( ३६।४ ) ॥ ४६ ॥**

आद्यामन्तिमां च पूर्णाहुतिं पूर्णाहुतिधर्मेण जुहुयात्। अन्याः पृथिव्यै स्वाहेत्याद्याः (३६।१-३) श्रोत्राय स्वाहेत्यन्ता मध्यवर्तिन्यो विंशतिराहुतयः सकृद्गृहीतैर्जुहुयादित्यर्थः ॥४६॥

**"प्रजापतिः संभ्रियमाण" इति (३६।५) च यथाकालम् ॥ ५० ॥**

संभ्रियमाणाद्यवस्थायां महावीरभेदे प्रजापतये स्वाहेत्याद्या आहुतीर्यथाकालं जुहुयात्सकृद्गृहीतैः ॥ ५० ॥

**"सविता प्रथमेऽहन्निति (३६।६) च प्रत्यहम् ॥ ५१ ॥**

सविता प्रथमेऽहन्नित्येतद्विहिताऽप्येकैकाहुतिः प्रत्यहं होतव्या सकृद्गृहीतेन। प्रथमेऽहनि घर्मभेदे सविता प्रायश्चित्तदेवता। एवमेव द्वादशसु दिवसेषु वाक्ययोजना। उपसत्प्रवृद्धावेता आहुतयः पुनरारभ्यावर्त्तन्ते ॥ ५१ ॥

**अवकाश्यस्य प्रवृञ्ज्यात् ॥ ५२ ॥**

"ज्ञातप्रियानूचानानवकाशयेदिति (६।७।१६) सूत्रितम्। ज्ञात उत्तमकुलत्वेन। प्रियो वल्लभः। अनूचानो विद्वान्। एते त्रय अवकाशशब्दवाच्याः। अवकाश एवावकाश्यस्तस्य यज्ञे प्रवर्ग्यं कुर्यात्, न सर्वस्य (१४।२।२।४४) ॥ ५२ ॥

**न प्रथमयज्ञे ॥ ५३ ॥**

अवकाश्यस्यापि प्रथमप्रयोगे न प्रवृञ्ज्यात्। "प्रथमयज्ञेऽप्येके" इति (८।२।१६) शाखान्तरात्प्रथमयज्ञेऽपि विकल्पेन प्रवर्ग्य इति देवयाज्ञिकाः ॥ ५३ ॥

**"यावती द्यावापृथिवी" इति (३८।२६) दधिघर्मग्रहणम् (१०।१।२१) ॥ ५४ ॥**

सपचित्रायामग्निहोत्रहवण्यां स्थालीमुखेन निनयनम्। नात्रावदानधर्माः (१४।३।१।३०) ॥ ५४ ॥

"मयित्य दिति (३८।२७) भक्षणम् ॥५५॥

हुतशेषस्य धर्मर्त्विजः (१४।३।१।३१) कुर्युः (१०।१।२५) ॥ ५५ ॥

"त्विषः संवृगिति (३८।२८) महाव्रतीये ॥ ५६ ॥

महाव्रतीयेऽहनि त्विष इति मन्त्रो भक्षणे ॥ ५६ ॥

चात्वाले मार्जनम् ॥ ५७ ॥

भक्षयितारः कुर्युः ॥ ५७ ॥

शान्तिकरणमाद्यन्तयोः स्वाध्यायदर्शनात्स्वाध्यायदर्शनात् ॥५८॥

प्रवर्ग्यस्यादावन्ते च ऋचं वाचमित्यध्यायेन (३६।१-२४) शान्तिकरणं कुर्यात्। स्वाध्याये प्रवर्ग्यमन्त्राणामादौ अस्याध्यायस्य दर्शनात्। एतच्च द्वाराऽपिधानोत्तरकालऽ आदिमम्, पात्राणामासन्द्यामासादनानन्तरमन्तिमम्। द्विरभ्यासोऽत्राध्यायसमाप्तिसूचनार्थः ॥ ५८ ॥

सप्तमी कण्डिका ॥ ७ ॥

इति कात्यायनसूत्रे षड्विंशोऽध्यायः ॥२६॥

इति श्रीमन्महर्षिकात्यायनप्रणीते श्रौतसूत्रे विद्याधरशर्मविरचिताय सरलाख्यायां वृत्तौ षड्विंशोऽध्यायः

समाप्तं चेदं कात्यायनीयं श्रौतसूत्रम्।

श्रीहरिः

# कात्यायनश्रौतसूत्रस्य अकारादिक्रमेण सूत्रानुक्रमणिका

## अ

इति पूर्वार्द्धस्य सूचीपत्रं समाप्तम् ।

# उत्तरार्द्धस्य सूचीपत्रम् ।

फ



ब



भ

इति शम्।

॥ श्रीः ॥

व्रजजीवन प्राच्यभारती ग्रन्थमाला

५२

# शुल्बसूत्रम्

## कात्यायनमहर्षिविरचितम्

काशीविश्वविद्यालयाध्यापकेन काशीस्थजोषीराम-
मटरूमल्लगोयेनका-संस्कृतमहाविद्यालयाध्यापकेन
च श्रीविद्याधरशर्मणा विरचितया सरलया
वृत्त्या सहितम् ।
तेनैव संशोध्य सम्पादितम् ।




चौखम्बा संस्कृत प्रतिष्ठान
३८ यू० ए० बंगलो रोड, जवाहरनगर
दिल्ली ११०००७

# भूमिका।

भगवतः करुणार्णवस्य परमेश्वरस्यासीमानुकम्पया साम्प्रतमिदं कात्यायनशुल्बसूत्रं सरलया वृत्या परिबृंहितमध्येतृमनस्तोषाय मुद्रितपूर्वं सत्प्रकाश्यते।

ग्रन्थोऽयं कात्यानश्रौतसूत्रात्पृथग्भूतोऽपि परिशिष्टेष्वन्तर्गतः तेनैव च महर्षिणा प्रणीतः। अल्पीयानप्ययं ग्रन्थोऽतिकठिनो बहुभिर्व्याख्यातृभिर्व्याख्यातोऽपि तत्वबुभुत्सायां तिरोहित इवात्मानं गोपायतीति प्रायो विदितमेव। अत एव च पूर्वतनैर्व्याख्यानैर्बहुभिर्मण्डितोऽप्ययं सरलां व्याख्यामपेक्षत एवेति मन्यमानोऽस्य व्याख्याने प्रवृत्तोऽभवम्।

अस्य ग्रन्थस्य मदुपलम्भगोचरं व्याख्याचतुष्टयं पूर्वमेव प्रथितम्। तत्रादिमं कर्काचार्यकृतं भाष्यम्, द्वितीयं महीधरकृतम्, तृतीयं रामचन्द्रवाजपेयिकृतम्, तुरीयं गङ्गाधरनिर्मितम्। रामचन्द्रवाजपेयिकृता कारिकाऽपि सूत्रानुसारिणी वृत्यभिधाना काचन वर्त्तते। कर्कभाष्यं वाराणस्यां चौखम्भामुद्रणालये मुद्रितम्। रामचन्द्रवाजपेयिकृतं व्याख्यानं त्रिंशद्वर्षेभ्यः पूर्वं पण्डितपत्रे मुद्रितं, तदसम्पूर्णमेव। मया तु पूर्वोक्तेभ्यश्चतुर्भ्यो व्याख्यानेभ्यः सारमादाय तत्र च नातीवोपयुक्तानंशान् परित्यज्य सरलशब्दसन्दर्भितेयं वृत्तिरारचिता। मन्ये ग्रन्थोऽयमिदानीं मत्कृतया वृत्या सनाथीकृतोऽध्येतॄणां किञ्चनावश्यं सौकर्यमापादयेदिति।

## ( शुल्वपरिचयः )

श्रौतसूत्रे हि अग्निहोत्र-दर्शपूर्णमास-पशु–चातुर्मास्यादिषु हविर्यज्ञेषु, ज्योतिष्टोमादिसोमयागेषु च तत्कर्मोपयुक्तस्थानापेक्षायां सत्यां तेषु तेषु प्रकरणेषु वेदिराम्नाता। तस्याश्च स्वरूपं यावदपेक्षितं तदपि यथास्थानं निरूपितम्। एवं चयनादिष्वपि परिमाणविशेषविशिष्टेष्टकाविशेषसाध्यस्थण्डिलवत्सु इष्टकानामुपधानप्रकारः, (१) स्थण्डिलस्यायामतो विस्तारतश्च प्रमाणं, तदनुसारेण सौमिकवेदेर्वर्द्धनं, तदुपयोगितया प्रक्रमविवर्द्धनं, द्वितीयादिषु चयनेषु यदा स्थण्डिलस्वरूपविवृद्धिस्तदनुरोधेन इष्टकाविवर्द्धनं च तत्तत्प्रकरणे एव

(१) इष्टकानां प्रमाणं सङ्ख्यादिकं च इष्टकापूरणसूत्रतोऽवगन्तव्यम्।

सूत्रकारेण समाम्नातम्। तेषां ये विशेषा अवश्यनिरूपणीया आसन्, यथा —अग्न्याधाने गार्हपत्याहवनीययो स्थानं निरूप्य वितृतीये दक्षिणाग्ने स्थानमुक्तम्। वितृतीयस्वरूपं तु न तत्र स्पष्टीकृतम्। एवं चातुर्मास्येषु रथ-युग-शम्याप्रमाणानि वेदेर्विकल्पेनाम्नातानि; रथादीनां स्वरूपं न तत्र निरूपितम्। तथा चयने सुपर्णचितेः स्वरूपं सुस्पष्टतया निरूपितम्, द्रोणचिदादीनां नाम्ना परमुपादानं कृतम्, तेषां स्वरूपादिकं न तत्र स्पष्टमपि। एवं चयनादिषु विवृद्धौ केनोपायेन कियता प्रमाणेन कियत्या च सङ्ख्यया इष्टकादयो वर्द्धनीयाः, तदनुसारेण वा विवृद्धिः कथं सम्पादनीया, इत्यादिकं तत्र तत्र सूत्रकारेण न निरूपितम्, ते च विशेषा अनिरूपिता अज्ञाताश्च उत्तरक्रतुषु अनुष्ठाने वैकल्यमापादयन्ति इति तेषामपि निरूपणमवश्यमापतितमिति मन्वानेन सूत्रकारेणायं श्रौतसूत्रपरिशिष्टरूपो ग्रन्थो निरमायि। अनेनाऽपि अनिरूपिताः केचनावशिष्टाः पदार्थाः समपीपदन्, तामपि त्रुटिं पूरयितुमेतद्ग्रन्थान्ते काश्चन कारिकाः सूत्रकारेण रचिताः, यासां नाम श्लोकशुल्बमिति, यासु कारिकासु तत्र तत्र वेदिनिर्माणार्थं निखातस्य शङ्कोः प्रमाणं प्रक्रमस्याङ्गुलादेर्मुद्गरादीनां च परिमाणं सुस्पष्टमुपवर्णितम्। एवं श्रौतसूत्रापेक्षितपदार्थसमर्पकोऽयं ग्रन्थस्तत्र ज्ञानविशेषं सम्पिपादयिषुभिरवश्यमध्येतव्य इति मत्वाऽस्यापि मुद्रणं कृतम्।

बौधायनापस्तम्बाभ्यामपि शुल्बसूत्रमारचितम्। आपस्तम्बमहर्षिकृतं शुल्बसूत्रं प्रायशो बहुत्राक्षरशः संवदत्यनेन सूत्रेण। तस्य च व्याख्यात्रयमुपलभ्यते। एकं कपर्दिस्वामिकृतं भाष्यम्, अन्यत् करविन्दस्वामिकृतम्, अपरं च सुन्दरराजकृतम्। बौधायनीयशुल्बसूत्रं द्वारिकानाथयज्वकृतव्याख्यया युतं पण्डितपत्रे मुद्रितम्। इतरे च सूत्रकाराः शुल्बसूत्राण्यरीरचन्न वा इत्यत्र तूष्णीं भाव एव शरणं यावदन्यतरनिश्चायकप्रमाणोपलम्भम्।

सूत्रकारस्य समयः, एतत्कृता ग्रन्थाः, अस्य रचना शैली इत्यादिकं तु श्रौतसूत्रभूमिकायामेव मया निरूपितमिति नात्र पिष्टं पिष्यते। दर्शपूर्णमास—सोमयागीयानां वेदीनां चित्राणि तेषां निर्माणप्रकारः, चयने च यावन्तः प्रकाराः, तेषां स्वरूपावेदकानि चित्राणि, तेषां रचनारीतयश्च श्रौतसूत्रेणैव साकं मुद्रिता इति तत एव ते सर्वेऽवगन्तव्याः।

एवमीश्वरकृपया निर्मितस्यास्य विषये येभ्योऽहमधमर्णोऽतितरां, तेषां मध्ये प्रथमतोऽस्मत्तातपादानां सर्वतन्त्राणामपरेषां कात्यायनानां जगत्पूज्यचरणानामस्मद्गुरुभूतानां विद्वल्ललामभूतानां महामहोपाध्यायानां श्री १०८ प्रभुदत्तशास्त्रिणामाहिताग्नीनां चरणकमलेऽस्मदनुग्रहैकपरायणे अन्यत्कर्तुमनीशानः केवलं मनःकुसुमेनानवरतमर्चयामि, यत्प्रज्ञापारावारेऽनवरतमुल्लसन्त्या वैदिकविद्यावीचिपरम्पराया लेशमात्रमधिगम्य प्रभुरभवमेतद्व्याख्याकरणे।

ग्रन्थस्यास्य विलेखने येषामुपकार आसीत्, तेभ्यः श्रीमद्भ्यः श्रीचन्द्रशेखरझामहोदयेभ्यः काशीस्थजोधीराममटरूमल्लगोयेनकासंस्कृतमहाविद्यालयाध्यापकेभ्यो ज्यौतिषाचार्येभ्यो महतीं कृतज्ञतां प्रकटयामि।

ग्रन्थस्यास्य मुद्रणविषये महान्तमपि व्ययभारमविगणय्य गैर्वाणीवाणीग्रणिभ्यो धार्मिकग्रन्थोद्धरणेऽनवरतमाविष्कृतादरेभ्यो वैदिकपथप्रतिष्ठापने निबद्धकक्षेभ्यः सुरभारतीसेवायामेव समर्पितनिजकरणत्रयेभ्यः, तदेव च परं पुरुषार्थं मन्वानेभ्यो विनयावनम्रेभ्यो गुणैकनिधिभ्यः सनातनधर्मकर्मयजीवितेभ्यः श्रेष्ठिवर्येभ्यः श्रीगौरीशङ्करगोयेनकामहोदयेभ्यो महतीमाशीःपरम्परां हृदयेन वितरामि, प्रार्थयामि च भगवन्तं लोकगुरुमुमापतिम्, सुरभारतीसमुद्रणैकफलेन इतोऽप्यधिकैश्वर्येण तादृशा चायुषा समेधयत्वेनमिति।

येषां गुरुचरणानामसीमकृपया ग्रन्थोऽयं निर्विघ्नेन परिसमाप्तिमवाप, तेषामेव श्रीविश्वनाथसदृशानामस्मत्तातपादानां महामहोपाध्यायानामग्निहोत्रिणां श्री १०८ मतां प्रभुदत्तशास्त्रिणां चरणकमलयोरेव ग्रन्थमिमं समर्पयामि, तेन च मन्ये भगवान् विश्वेश्वरोऽपि प्रीतो भवेदिति।

शोधनादिव्यापारेऽत्यन्तं जागरूकेण स्थितवतोऽपि मम बह्व्योऽशुद्धयस्तथैव स्थिताः। अतो विद्वज्जनान् विनम्रः प्रार्थये—पुनर्मुद्रणावसरे ते साक्षिगोचरीभूता अशुद्धीर्मह्यं निवेद्य मामनुगृह्णन्त्विति, मयापि इतोऽप्यधिकतरमवहितेन ताः समीकरिष्यन्त इति।

विदुषामनुचरः—

विद्याधरशर्मा।

पृष्ठाङ्कः सूत्राङ्कः



इति प्रथमा कण्डिका ।



इति द्वितीया कण्डिका ।

श्रीगणेशाय नमः।

## सरलवृत्तिसहितम्

# कात्यायन-शुल्बसूत्रम्



जगदम्बावलम्बाय निरालम्बाय शूलिने।
जगत्त्रयकुटुम्बाय नमः साम्बाय शम्भवे ॥१॥
जनकं ज्ञानदं नत्वा प्रभुदत्ताग्निहोत्रिणम्।
तद्दर्शितपथो कुर्वे वृत्तिं शिशुविबोधिनीम् ॥२॥
श्रीमत्कात्यायनप्रोक्तशुल्बसूत्रं यथामति।
व्याख्यातुमेष यत्नस्तत्प्रीयतां परमः पिता ॥३॥

**रज्जुसमासं वक्ष्यामः ॥ १ ॥**

रज्ज्वा (१) समस्यते सङ्क्षिप्यते यः प्रदेशः स रज्जुसमासः(२)।

---

(१) रज्जुलक्षणं श्लोकशुल्बे–
"अजीर्णा ग्रथिनी सूक्ष्मा समा श्लक्ष्णा त्वरोमशा।
रज्जुर्मानाधिका कार्या अध्वरे योगमिच्छता।
शाणी वा बाल्वजी चैव वैणवी वा विधीयते।
रज्जुस्तूभयतःपाशा त्रिवृता यज्ञकर्मणि।
रज्जुर्मुञ्जमयी कार्या शणैस्तु परिमिश्रिता।
कात्यायनो वदत्येवमखोडा कुशबल्कजैः।"
इति (श्लो. शु. १०-१२)। अखोडा = अरोमशा।

(२) "रज्जुशब्देन तत्साध्यं क्षेत्रमुच्यते। समास एकीकरणम्। तेन तुल्यप्रमाणातुल्यप्रमाणानां क्षेत्राणामेकीकरणं वक्ष्यामः" इत्यर्थो गङ्गाधरभाष्ये। रज्जोः समासः = सम्यगसनं क्षेत्रानुगुणतया धारणमिति वृत्तिः।

समासो व्यासादेरप्युपलक्षकः (१)। रज्ज्वा सङ्क्षिप्यते विस्तार्यते च यथा, (२) तं प्रकारं कथयिष्याम इति भावः ॥ १ ॥

आदौ दिक्साधनमाह—

**समे शङ्कुं निखाय, शङ्कुसम्मितया रज्ज्वा मण्डलं परिलिख्य, यत्र लेखयोः शङ्क्वग्रच्छाया निपतति तत्र शङ्कू निहन्ति सा प्राची ॥ २ ॥**

समे = मुकुरजठरवत्समीकृते देशे (३) शङ्कुं निखाय, (४) शङ्कुसम्मितया = शङ्कौ सम्यक् मितया (५) प्रक्षिप्तया धारितया रज्ज्वा मण्डलं = वृत्तं परिलिख्य = कृत्वा, लेखयोः (६) मण्डलपूर्वापरदिग्गतयोर्लेखयोः यत्र = यस्मिन् प्रदेशे शङ्कोरग्रस्य छाया पूर्वाह्णे पश्चिमरेखायां प्रविशति, अपराह्णे च पूर्वरेखायां निःसरति, तत्र =

---

(१) "समचतुरस्रं चिकीर्षन्" (३।४) इत्यादिना व्यासादिरपि वक्ष्यते, अतः समासग्रहणमेतच्छास्त्रप्रतिपाद्यसकलविषयस्योपलक्षणम्।

(२) "वेणुना मिमीते" (आप. शु. ४। १२) इति वेणोर्मानसाधनत्वेनाभिहितेऽपि इह रज्जूपादानमृज्वर्थम्। "नान्यत्सूत्राद्दृजुर्भवेत्" (श्लो. शु. ३) इति वचनात्, "त्रिपुरुषां रज्जुं मित्वा" (का. श्रौ. १६।८।१) इति स्वसूत्राच्च।

(३) समत्वं जलनैव संभाव्यम्। "न जलात्समम्नयत्स्यात्" (शुल्ब. ३) इति वचनात्।

(४) शङ्कुलक्षणम्—

"षडङ्गुलपरीणाहं द्वादशाङ्गुलमुच्छ्रितम्।
जरठ (दृढं) चाव्रणं चैव शङ्कुं कुर्याद्विचक्षणः।" (श्लो. शु. ६)

तथा—

"एकतक्ष ऋजुस्तीक्ष्णः खादिरः सममायतः।
शङ्कुः कार्यस्तु शुल्वज्ञैस्तस्यार्द्धं गमयेन्महीम्।" (श्लो. शु. ८)

तथा—

"प्रादेशमात्रो हविर्यज्ञे पूर्वलक्षणलक्षितः।
शङ्कुरामशिराः कार्यस्तस्याप्यर्द्धं निखापयेत्।" इति (श्लो. शु. ९)।

आमशिरा आर्द्रशिराः।

(५) डुमिञ् प्रक्षेपे (५।४) इत्यस्य क्तान्तस्य प्रयोगः। यद्वा 'मा माने' (२।५२) इत्यस्य प्रयोगः। तदा शङ्कुतुल्यया द्वादशाङ्गुलया रज्ज्वेत्यर्थः।

(६) मण्डले लेखैकत्वेऽपि लेखयोरिति द्विवचनं पूर्वापरदिगभिप्रायम्।

स्थलद्वये एकैकं शङ्कुं (१) निखनेत्; तयोः शङ्कोरुपरि नीता रज्जुः प्राची = पूर्वापरा दिग्भवति। प्राक्शङ्कुः प्राची, पश्चिमशङ्कुः प्रतीची। प्राचीशब्दस्य ससम्बन्धिकत्वात् प्रतीच्यपि लक्ष्यते ॥ २ ॥

उदीचीसाधनमाह—

**तदन्तरं रज्ज्वाऽभ्यस्य, पाशौ कृत्वा, शङ्क्वोः पाशौ प्रतिमुच्य, दक्षिणाऽऽयम्य, मध्ये शङ्कुं निहन्त्येव-मुत्तरतः सोदीची ॥ ३ ॥**

तयोः = निखातयोः शङ्कोरन्तरम् = अन्तरालम् अन्तराल-मितां भुवं रज्ज्वा मित्वा, तां रज्जुम् अभ्यस्य = द्विगुणीकृत्य, द्विगुणी-कृतरज्ज्वोरन्तयोः पाशौ कृत्वा (२) तौ पाशौ शङ्क्वोः प्रक्षिप्य, द्विगुणी-कृतरज्जुमध्यं कृतचिह्नं दक्षिणस्यां दिश्याकृष्य यत्र रज्जुमध्यमा-पतति, तत्र मध्ये मध्यचिन्हेन स्पृष्टे भूभागे शङ्कुं निहन्ति सा दक्षिणा दिक्। एवमुत्तरस्यां दिशि द्विगुणितरज्जुमाकृष्य मध्यभागे शङ्कुं निहन्ति मुद्गरेण, (३) सा उदीची दिग्भवति ॥ ३ ॥

क्षेत्रसाधनाय परिभाषामाह—

**रज्ज्वन्तयोः पाशौ करोति ॥ ४ ॥**

अन्यत्रापि क्षेत्रमानार्थं या रज्जुरुपादीयमाना भवेत्, तत्र सर्वत्रापि रज्जुमात्रे तस्या अन्तयोः पाशौ कुर्यान्नियमेन ॥ ४ ॥

---

(१) चिन्हेनाप्यर्थसिद्धेः शङ्कुनिखननं "तच्छङ्कुं निहन्ति" (श. ब्रा. ३।५।१।१) इति श्रुत्यनुरोधेन।

(२) यथा रज्जोर्मानं न हीयते तथा पाशौ करणीयौ—

"यथा न क्षीयते मानं यथा च न विवर्द्धते।
यथा च रमते दृष्टिस्तथा योगं समाचरेत्।" (श्लो. शु. १९)

(३) मुद्गरलक्षणं च—

"चतुरस्रं मुद्गरं तत्षोडशाङ्गुलमायतम्।
अविद्धं क्रमणीयं च दारुमध्याच्च निर्मितम्।" (श्लो. शु. १०)

अविद्धं काष्ठान्तरेण। क्रमणीयं शङ्कुहननरूपक्रमणार्हम्।

तथा—

"द्विवितस्तिप्रमाणस्तु खादिरो मुद्गरस्तथा।
शङ्कुस्तेन निखातव्यस्तस्मात्तस्य परिग्रहः।" (श्लो. शु. ७) इति।

मानार्थं गृहीतायां रज्ज्वां चिन्हस्थानान्याह—

### श्रोण्यंसे-निरञ्छन-सङ्ख्यासमासभङ्गेषु लक्षणानि ॥ ५ ॥

वेद्यादेर्नैर्ऋत्य-वायव्यकोणौ श्रोणी, आग्नेयैशानकोणावंसावुच्येते। निरञ्छनं वक्ष्यमाणलक्षणम् ( १।१२ )। सङ्ख्ययोः प्रमाणरज्ज्वभ्यासरज्ज्वोर्यः समासः = संयोग एकीकरणम्, तस्य भङ्गो = विभागः संख्यासमासभङ्गः। अर्थाद् द्विगुणरज्ज्वा मध्ये यो बिन्दुः स एव सङ्ख्यासमासभङ्गपदवाच्यः। इष्टक्षेत्रायाममिता रज्जुः, तावत्परिमाणा द्वितीया रज्जुरभ्यासरज्जुरित्युच्यते। श्रोणी च अंसौ च निरञ्छनं च सङ्ख्यासमासभङ्गश्च, तेषु लक्षणानि = चिन्हानि कुर्यात्। अत्र श्रोण्यादिपदानि श्रोण्यादिमापकरज्जुपराणि। तेन क्षेत्रमानार्थं क्षेत्रद्विगुणां रज्जुमादाय तत्र श्रोणिचिह्नम्, अंसचिह्नं, निरञ्छनचिह्नं सङ्ख्यासमासभङ्गचिह्नं च कुर्यादित्यर्थः ॥ ५ ॥

### प्राच्यन्तयोः शङ्कू निहन्ति ॥ ६ ॥

प्राची पूर्वा दिक्। अन्तः प्रतीची। प्राची च अन्तश्च प्राच्यन्तौ, तयोः शङ्कू निहन्यात्। इष्टक्षेत्रे यावती प्राची इष्यते, यथा—दर्शपौर्णमासवेदिः "त्र्यरत्निं प्राचीम्" ( २।६।१ ) इत्यनेन त्र्यरत्निदीर्घा विहिता, यथा च ज्योतिष्टोमवेदिः "पुरस्तात्षट्त्रिंशति" (८।३।८) इति षट्त्रिंशत्प्रक्रमदीर्घा विहिता, तत्र सर्वत्र तावत्याः पूर्वापरान्तयोः शङ्कू निखनेदिति भावः ( १ ) ॥ ६ ॥

कोणेषु शङ्कुनिखननमाह—

### श्रोण्यंसयोश्च ॥ ७ ॥

श्रोणिद्वयेंऽसद्वये च शङ्कू निखन्याद्वक्ष्यमाणविधिना। सर्वत्र क्षेत्रमापने कोणेषु शङ्कुनिखननमिति भावः ॥ ७ ॥

---

( १ ) "समे शङ्कुं निखाय" ( १।२ ) इत्यादिना यत्प्राच्यन्तयोः शङ्कुनिखननमुक्तं तत्प्राचीसाधनार्थम्। अत्र पुनरन्यत्रापि इष्टक्षेत्रे प्राच्यन्तयोः शङ्कुद्वयं निखेयमित्येतदर्थमिदमुक्तम्। अतो न पुनरुक्तिः।

श्रोण्यंससाधनमाह—

## शङ्कोः पाशौ प्रतिमुच्य निरञ्छनेन गृहीत्वा दक्षिणपूर्वां दिशꣳ हरन्ति ॥ ८ ॥

"प्राच्यन्तयोः शङ्कू निहन्ति" ( १।६ ) इत्यनेन यौ पूर्वापरौ शङ्कू निहतौ, तयोः शङ्क्वोर्द्विगुणिताया रज्ज्वा अन्तयोः कृतौ पाशौ प्रतिमुच्य वक्ष्यमाणलक्षणेन निरञ्छनसंज्ञकेन चिन्हेन रज्जुं गृहीत्वा आग्नेयीं दिशं प्रति आकर्षेत्, तत्रांसचिन्हे शङ्कुर्देयः। एवं कृते सति क्षेत्रप्रमाणतिर्यङ्मानीकं पादोनक्षेत्रप्रमाणपार्श्वमानीकं सपादक्षेत्रप्रमाणाक्ष्णयाकं त्र्यस्रि क्षेत्रं समुत्पद्यते। इदं च त्र्यस्रिक्षेत्रसमुत्पादनमंससाधनार्थम्। प्रदर्शितपार्श्वमानीरूपायां रज्ज्वामेव अंससाधनार्थं शङ्कुं दद्यात् इति "प्रमाणार्द्धे समचतुरस्रस्य शङ्कुः" ( १।१६ ) इत्यादिना स्वयमेव वक्ष्यति। अत्र निरञ्छनचिह्नमंसचिह्नसमीपवर्ति कर्त्तव्यम् ( १ ) ॥ ८ ॥

## एवमुत्तरतः ॥ ९ ॥

एवं = शङ्कोः पाशौ प्रतिमुच्य निरञ्छनेन रज्जुं गृहीत्वा उत्तरत ईशान्यां रज्जुमाकृषेत्, तत्रोत्तरांसचिन्हेऽपरः शङ्कुर्देयः। अत्राप्युत्तरांससाधनाय पूर्ववत् त्र्यस्रि क्षेत्रमुत्पद्यते ॥ ९ ॥

## विपर्यस्येतरतः ॥१०॥

इतरशब्देन क्षेत्रस्य पश्चिमप्रान्त उच्यते। विपर्यस्येत्यनेन रज्जुपाशयोर्विपर्यास उच्यते। तेनायमर्थः। इतरतः = पश्चिमभागे विपर्यस्य = रज्जुपाशौ परिवर्त्य पूर्वशङ्कुपाशं प्रतीचीशङ्कौ, प्रत्यक्पाशं च पूर्वशङ्कौ प्रक्षिप्य निरञ्छनेन नैर्ऋत्यकोणे रज्जुमाकृष्य तत्र शङ्कुर्देयः, सा दक्षिणा श्रोणिः। एवं वायव्यकोणे चाकृष्य शङ्कुर्देयः, सा उत्तरा श्रोणिः। एते शङ्कवः प्राच्यन्तयोरित्यादिसूत्रद्वयेनोक्ताः (६-७)। तेन पूर्वोक्तप्रकारं त्र्यस्रि क्षेत्रमुत्पद्यते श्रोणिसाधनार्थम्। पाशविपर्यासेन निरञ्छनचिह्नं प्रत्यक्श्रोणिचिह्नसमीपवर्ति भवति ॥१०॥

---

(१) महति क्षेत्रे एकेन रज्जुप्रसारणस्य कर्तुमशक्यत्वाद्धरन्तीति (मूले) बहुवचनम्।

## स समाधिः सर्वत्र ॥११॥

सर्वत्र = समदीर्घचतुरस्रक्षेत्रेषु "रज्ज्वन्तयोः पाशौ करोति" (१।३) इत्यादिना स = पूर्वोपदिष्ट एव प्रकारः समाधिः = साधनोपायो बोध्यः ॥११॥

समचतुरस्रे निरञ्छनलक्षणमाह—

## प्रमाणमभ्यस्याभ्यासचतुर्थे लक्षणं करोति तन्निरञ्छनम् ॥ १२ ॥

प्रमाणम् = इष्टक्षेत्रप्रमाणमितां रज्जुम् अभ्यस्य = द्विगुणं कृत्वा अभ्यासस्य = अभ्यस्तरज्ज्वाः (कृतचतुर्भागायाः) चतुर्थे = प्रमाणरज्जुसंनिकृष्टे चतुर्थे भागे सङ्ख्यासमासभङ्गसमीपे चिन्हं कुर्यात् न त्वन्ते, तत् निरञ्छनसंज्ञकं भवति। निरञ्छ्यते आकृष्यते रज्जुरनेनेति निरञ्छनं क्षेत्रायामरज्जुः। अत्र प्रमाणरज्ज्वा अभ्यासरज्ज्वाश्च चत्वारश्चत्वारो भागाः कार्याः। तेन सा रज्जुरष्टधा विभक्ता भवति। तत्र प्रमाणरज्जुसन्निकृष्टे अभ्यासरज्जुचतुर्थे भागे निरञ्छने कृते एकतः पञ्चांशा, अपरतस्त्रयोंऽशा भवन्ति। तत्र भागत्रयात्मिका रज्जुः तिर्यङ्मानीशब्देन, पञ्चभागात्मिका रज्जुरक्ष्णयाशब्देन व्यवह्रियते। एतच्चानुपदमेव वक्ष्यति ॥ १२ ॥

## अक्ष्णया तिर्यङ्मानीशेषः ॥ १३ ॥

त्रिभागा रज्जुस्तिर्यङ्मानी। तस्याः शेषस्तिर्यङ्मानीशेषः = पञ्चभागा रज्जुः, सा अक्ष्णया इत्युच्यते। अक्षिवत् क्षेत्रं नयतीत्यक्ष्णया। तिर्यक् प्रमाणं मीयतेऽनया सा तिर्यङ्मानी। अक्ष्णया कर्णं इत्यनर्थान्तरम्। यत्र प्रमाणरज्जुश्चतुर्भागा, तिर्यङ्मानी च त्रिभागा. तत्राक्ष्णया रज्जुः पञ्चभागा भवतीत्यर्थः॥ १३ ॥

दीर्घचतुरस्रे महावेदि-पत्नीशाला-सदआदौ निरञ्छनस्य लक्षणमाह—

## प्रमाणार्द्धं वाऽभ्यस्याभ्यासषष्ठे लक्षणं करोति तन्निरञ्छनम् ॥ १४ ॥

अथवा (१) प्रमाणस्य = इष्टक्षेत्रायामप्रमाणरज्ज्वा अर्द्धं प्रमाणमभ्यस्य = द्विगुणीकृत्य प्रमाणरज्ज्वां वर्द्धयित्वा अभ्यस्तरज्जुं षोढा विभज्य प्रमाणरज्जुसंलग्ने षष्ठेंऽशे चिन्हं करोति, तन्निरञ्छनम् ।
यथा—सोमयागे षट्त्रिंशद्धस्तदीर्घा महावेदिः, तत्र प्रमाणरज्जुः षट्त्रिंशद्धस्तदीर्घा, तदर्धमष्टादश, तत्राष्टादशहस्तवृद्धौ चतुष्पञ्चाशद्धस्तमिता रज्जुः सम्पद्यते, तत्राभ्यस्तरज्जौ षोढा विभक्तायां हस्तत्रयात्मक एकैको भागो भवति, तत्र षष्ठेंऽशे चिन्हे दीयमाने ऊनचत्वारिंशद्धस्तेषु चिह्नं भवति, तन्निरञ्छनम् । पञ्चदशहस्तात्मकाः पञ्च भागा अवशिष्टा भवन्ति । अत्रापि प्रमाणरज्जुः षट्त्रिंशद्धस्तदीर्घा, तिर्यङ्मानी रज्जुः पञ्चदशहस्तदीर्घा, अक्ष्णयारज्जुरेकोनत्रिंशद्धस्तदीर्घेति बोध्यम् ॥१४॥

**अक्ष्णया तिर्यङ्मानीशेषः ॥१५॥**

पूर्वोक्तायां चतुःपञ्चाशद्धस्तदीर्घायां रज्ज्वां पञ्चदशहस्ता रज्जुस्तिर्यङ्मानी । तस्याः शेषः = एकोनचत्वारिंशद्धस्तदीर्घा रज्जुः अक्ष्णया इत्युच्यते ॥१५॥

समचतुरस्रस्य श्रोण्यंसस्थानमाह—

**प्रमाणार्द्धे समचतुरस्रस्य शङ्कुः ॥१६॥**

अभीप्सितस्य समचतुरस्रस्य = क्षेत्रस्य यत् प्रमाणम् = आयामः, तस्यार्द्धे (श्रोण्यंसपरिच्छेदाय) शङ्कुर्देयः, स चाभ्यासरज्जोरर्द्धे देयः । यथा—हस्तमिते क्षेत्रे हस्तार्द्धे इति । समास्तुल्याश्चत्वारोऽस्रयः कोणा यस्य तत्समचतुरस्रम् ॥ १६ ॥

दीर्घचतुरस्रस्य श्रोण्यंससाधनमाह—

**शास्त्रवदर्धे दीर्घचतुरस्रस्य ॥१७॥**

---

(१) "वाशब्दो दीर्घचतुरस्र-विषमदीर्घचतुरस्रयोरेव विकल्पावबोधको, न चतुरस्रस्यापि, असंभवात् । अत्रोदाहरणेनैव व्याख्या । यथा—द्वादशाङ्गुलायामे षडङ्गुलविस्तारमिते दीर्घचतुरस्रे द्वादशाङ्गुलायामप्रमाणार्द्धं षडङ्गुलानि, तान्यभ्यस्य वर्द्धयित्वा, तस्य षडङ्गुलमिताभ्यासस्य षष्ठेंऽशे प्रमाणरज्जुसन्निकृष्टाभ्यासषष्ठांशे सङ्ख्यासमासभङ्गादेकाङ्गुले पाशात्पञ्चमाङ्गुले इत्यर्थः" इति गङ्गाधरभाष्ये ।

दीर्घचतुरस्रस्य क्षेत्रस्य यावान् विस्तारः शास्त्रे उक्तः, तदर्धे तिर्यङ्मानचिह्नं रज्ज्वां कुर्यात्। यथा—ज्योतिष्टोमे महावेद्याः श्रोणिः त्रिंशद्धस्ता त्रयस्त्रिंशद्धस्ता वा विहिता (का. श्रौ. ८।३।६-१०)। तत्र त्रिंशद्धस्तपक्षे सार्द्धषोडशसु हस्तेषु चिन्हं कृत्वा तत्र शङ्कुं निखन्यात्। दीर्घचतुरस्रे विस्तारस्यानियतत्वादिदमुक्तम् ॥ १७ ॥

## शकटमुखस्य चैवम् ॥१८॥

सचयने सोमयागे शकटमुखाकृतिं त्र्यस्रां चितिं विकल्पेन वक्ष्यति, (४।५) सैव चितिः शकटमुखशब्देनोच्यते। चयनयागे शकटमुखाकारस्य त्र्यस्रिक्षेत्रस्य शास्त्रोक्तविस्ताराद्धे श्रोण्यर्थं शङ्कुं दद्यात्। इदं च चिन्हं श्रोणिसाधनाय, त्र्यस्रिक्षेत्रेऽसाभावात् ॥ १८ ॥

## एतेन प्राग्वꣳश-वेदिमानानि व्याख्यातानि ॥ १९ ॥

एतेन समचतुरस्र-दीर्घचतुरस्र-त्र्यस्रिक्षेत्रसाधनेन प्राग्वंशानां हविर्द्धानादिमण्डपानां वेदीनां च मानानि व्याख्यातानि = उक्तानि बोद्धव्यानि, अर्थात् तेषामप्यर्द्धे शङ्कुर्देयः। प्राक् = प्रागग्रो वंशः = पृष्ठ-वंशः = मध्यबलो यस्य मण्डपादेः स प्रागग्रः। (यस्य वंश-स्योपरि दक्षिणत उत्तरतश्च वंशाः प्रोता भवन्ति स मध्यमो वंशः पृष्ठवंश इत्युच्यते) तत्र सोमयागे पत्नीशाला, विमितं, हविर्द्धान-मण्डपः, आग्नीध्रमण्डपः, मार्जालीयमण्डपश्चेत्येते प्राग्वंशा भवन्ति। तत्र पत्नीशाला-ऽऽग्नीध्र-मार्जलीयाः पञ्चहस्तमिताः, तदर्धं सार्द्ध-हस्तद्वयात्मकं, तत्र शङ्कुः। विमितं (१) दशारत्निदीर्घम्, तदर्धे शङ्कुः। हविर्धानमण्डपो दशहस्तदीर्घः, तदर्धे शङ्कुः। वेदिश्च। ऐष्टिकी, सौमि-की, वारुणप्रघासिकी च। ऐष्टिकी वेदिस्त्र्यरत्निदीर्घा, सौमिकी षट्त्रिं-शदरत्निदीर्घा, वारुणप्रघासिकी सप्तारत्निदीर्घा षडरत्निदीर्घा वा। तदर्धे शङ्कुः ॥ १९ ॥

## शालामानं च ॥२०॥

ज्योतिष्टोमे "शालां वा" (७।१।१९) इति सूत्रेण विमितेन सह शाला विकल्प्यते। तस्याः शालाया मानं च दीर्घचतुरस्ररज्जु-कथनेन व्याख्यातम्। शाला च—

---

(१) "विमितं चतुरस्रं स्याद्दशारत्निप्रमाणतः" इति निगमपरिशिष्टम्।

"विंशत्यरत्निः शाला स्यात्तदर्धेन तु विस्तृता" ( निग. प. )
इति दीर्घचतुरस्रा भवति, तदर्धे शङ्कुः । इयमपि प्राग्वंशा कार्या ॥२०॥

## तत्रोदीची प्राचीवत् ॥ २१ ॥

"उदीचीनवꣳशामेव शालां मिन्वन्ति" इति सत्रेषूदीचीनवंशा शाला विहिता । तत्रोदीची प्राचीत्वेन व्यवहर्तव्या । "प्राच्यन्तयोः शङ्कू निहन्ति" ( १।६ ) इत्यादि यदुक्तं, तदुदीच्यां कर्तव्यमित्यर्थः । शालाया उदगायतत्वादादावुदगग्ररज्जुन्यासं कृत्वा शङ्कुं निहत्य पश्चात्तिर्यङ्मानं साध्यमिति यावत् । सत्रेषु सप्तसप्ततिशतारत्निदीर्घा शाला विहिता, तदर्धं पञ्चाशीतिररत्नयः, तत्र शङ्कुः ॥ २१ ॥

## सदसश्चैवम् ॥२२॥

सोमयागे सदोऽभिधानो मण्डपोऽष्टादशारत्निदीर्घो नवारत्निविस्तृतो दीर्घचतुरस्र उदग्वंशो विहितः ( का. श्रौ ८।६।२ )। तत्रापि शालावत् उदीची प्राचीत्वेन व्यवहर्तव्या । सदोमण्डपस्य दैर्घ्ये विस्तारे चान्येऽपि पक्षाः सन्ति, ते तत एवावगन्तव्याः ( का. श्रौ. ८।६।६ )॥ २२ ॥

परिभाषामाह—

## अपरिमितं प्रमाणाद् भूयः ॥२३॥

यत्र सूत्रकृता अपरिमितशब्दः प्रयुक्तः, यथा—वरुणप्रघासे वेदिमुपक्रम्य "अपरिमिता वा" ( का. श्रौ. ५।३।१४ ) इति, यथा च दीक्षासु "द्वादश दीक्षा अपरिमिता वा" ( ७।१।२४ ) इत्यादौ, तत्र सर्वत्र प्रमाणात् = उक्तमानात् भूयः अधिकं मानं ग्राह्यम् । अपरिमितशब्दः पूर्वोक्तप्रमाणादधिकप्रमाणे रूढोऽवगन्तव्यो, न तु न परिमिता अपरिमिता इति नञ् समासेन विगृह्य प्रमाणाभाववाचक इत्यर्थः (१) । अधिकप्रमाणता च एकेनैव सम्पादनीया, न तु द्वित्रा

(१) अपमितां वेति यदिष्टिवेदावुक्तम्, (२।६।१) अपरिमितेष्टक इति च यच्चयनेऽप्युक्तम्, ( १७।७।२८ ) एतद् द्वयं विना उक्तमानाधिकवाची अपरिमितशब्दः । इष्टिवेद्यां चयने च मानाभावार्थोऽपरिमितशब्दः ।

दिना, अनवस्थाप्रसङ्गात् । तेन "द्वादशदीक्षा अपरिमिता वा" इत्यत्र त्रयोदश दीक्षा अपरिमितशब्दार्थः । एवं सर्वत्रोह्यम् ॥२३॥

एवं सर्वत्र प्राप्तौ व्यवस्थामाह—

**प्रमाणे शास्त्रं प्रमाणं निर्ह्रासविवृद्ध्योः ॥ २४ ॥**

प्रमाणे = मानेऽपेक्षिते ( शुल्ब ) शास्त्रमेव प्रमाणं नान्यत् ।

यथा—"पञ्चारत्निः पञ्चदशपर्यन्तः सोमे" ( का. श्रौ. ६।१।२६ ) इत्यादिना यूपस्यारत्निना परिमाणमुक्तं ज्योतिष्टोमे, अश्वमेधे च "एकविंशतिरश्वमेधे" ( का. श्रौ. ६।१।३२ ) इति, अत्र यूपपरिमाणस्य वृद्धौ ह्रासे च शास्त्रोक्ते एव ह्रासवृद्धी ग्राह्ये, न स्वेच्छया । यथा वाऽष्टविधादिचयने पुरुषमात्राभ्युच्चयेन वृद्धिः । यथा च सौत्रामणीवेद्यां सौमिकीवेदीतो ह्रासः । अयं च ह्रासः प्रक्रमतृतीयमानेनैव कार्य इति वक्ष्यते ( २।१५ ) ॥ २४ ॥

**योगश्च ॥ २५ ॥**

योगो नाम युक्तिः, साऽप्याश्रयणीया । युक्त्या ह्रासवृद्धी विधेये, नाधिकन्यूने (१) ॥ २५ ॥

दक्षिणाग्निस्थानमाह सूत्रयुग्मेन—

**इतरस्य वितृतीये दक्षिणत इत्येतद्वक्ष्यामः ॥२६॥**

"इतरस्य वितृतीये दक्षिणतः" (का०श्रौ० ४।८।१८) इति दक्षिणाग्निं प्रकृत्योक्तम्, तद् विविच्य वक्ष्यामः । अग्निहोत्रशालायां पश्चिमभागे गार्हपत्यस्थानं सार्द्धत्रयोदशाङ्गुलकर्कटकभ्रमणेन वृत्तं (२) निर्माय तन्मध्यात् पुरस्तात् एकादशप्रक्रमव्यव-

---

(१) अत एव चतुर्भागादिबृहत्यन्तानामिष्टकानां न तुल्यो ह्रासः । तत्र योगो युक्तिरेव प्रमाणम् । अत एव देवयाज्ञिकैरिष्टकानिर्माणपद्धतौ पुरुषे पुरुषद्वात्रिंशांशं वर्द्धयित्वा तत इष्टकायन्त्रनिर्माणमभिहितम् ।

(२) "परिमण्डलधिष्ण्यं गार्हपत्यस्य, चतुरस्रमाहवनीयस्य । अर्द्धचन्द्र इव दक्षिणाग्नेः; सभ्यावसथ्ययोर्गार्हपत्यवत्" इति (निग० प०)। कर्काचार्यास्तु "अग्न्यन्वाधानमध्वर्युर्यजमानो वा" ( २।१।२ ) इति सूत्रे आहवनीयप्रमाणं बाहुपरिमितमाह ।

हिते (१) द्वादशप्रक्रमव्यवहिते वा देशे आहवनीयमध्यं कल्पयेत्। आहवनीयश्च चतुर्विंशत्यङ्गुलसमचतुरस्रः। एवमग्न्यायतनद्वयमुक्त्वा पश्चादिदमुक्तम् "इतरस्य वितृतीये दक्षिणतः" (का. श्रौ. ४।८।१८) इति। इतरस्य दक्षिणाग्नेः स्थानं गार्हपत्यस्य पुरस्ताद् वितृतीये दक्षिणतः कर्तव्यमिति तदर्थः। तं वितृतीयार्थं विविच्य वक्ष्यामः ॥२६॥

प्रतिज्ञातमाह—

**गार्हपत्याहवनीययोरन्तरꣳ षड्धा सप्तधा वाऽऽगन्तुसमं त्रेधा विभज्यापरवितृतीयलक्षणेन दक्षिणाऽऽयम्य तस्मिन्नग्निः ॥ २७ ॥**

गार्हपत्यश्चाहवनीयश्च गार्हपत्याहवनीयौ। तयोरन्तरम् = अन्तरालम्, तच्च अष्टौ, एकादश द्वादश वा प्रक्रमाः। (प्रक्रमो द्वादशाङ्गुलः) तदन्तरालं क्रमेण चतुः-पञ्च-षड्हस्तात्मकम्, तन्मितां रज्जुमादाय, तां च षड्धा सप्तधा वा कृत्वा, उभयत्रापि आगन्तुसमम् = आगन्तुना-वर्द्धितभागेन समं = सह यथा तथा, अर्थात् षड्धापक्षे षष्ठं भागं विवर्ध्य, सप्तधापक्षे सप्तमं भागं विवर्द्ध्य वर्द्धितभागसहितां तां मध्यरज्जुं त्रेधा विभज्य = त्रिभागां कृत्वा, तत्र तृतीये तृतीये भागे चिह्नं कृत्वा अपरवितृतीयलक्षणेन = अपरे पश्चिमे भागे तृतीये यत् लक्षणं चिन्हं तद् धृत्वा, रज्जुप्रान्तपाशौ गार्हपत्याहवनीयमध्यस्थितशङ्क्वोर्निधायापरवितृतीयचिन्हं दक्षिणा = दक्षिणस्यां दिश्याकृष्य = तस्मिन्नग्निः, आकृष्टतृतीयभागचिन्हस्पृष्टे भूभागे दक्षिणाग्निः, दक्षिणाग्नेर्मध्यशङ्कुरित्यर्थः ॥ २७॥

उत्करस्थानमाह—

**विपर्यस्योत्तरत उत्करः ॥ २८ ॥**

विपर्यासः पाशयोः, उत्तरत आकर्षः। तेनायमर्थः। विपर्यस्य = षोढा सप्तधा वा विभक्तागन्तुभागसहितवर्द्धितत्रिभागचिन्हितरज्जुपाशौ विपरीतौ कृत्वा पूर्वतृतीयभागचिन्हमुदगाकृष्य गार्हपत्याह

---

(१) प्रक्रमो द्वादशाङ्गुलः—

"आधाने पदिकं कुर्यात्सोमे तु द्विपदो भवेत्।
अग्नौ तु त्रिपदं कुर्यात् प्रक्रमं याज्ञिको बुधः।" (श्लो० शु० ३४)

वनीययोरन्तरालमितां रज्जुं षड्धा सप्तधा वा कृत्वा तावन्तमपरं भागं संवर्द्ध्य त्रेधा विभज्य आहवनीयसन्निकृष्टतृतीयभागकृतचिन्हेनोदगाकृष्य तच्चिह्नस्पृष्टभूभागे उत्करः कार्यः, उत्करमध्यं कार्यं मित्यर्थः। परिसमूहिततृणधूलिपुञ्ज उत्करः, तत्स्थानं कार्यम्। तच्च त्र्यङ्गुलकर्कटकभ्रामणेन वृत्तमेकाङ्गुलगर्त्तवच्च कार्यम् ॥२८॥

पक्षान्तरमाह—

अपि वाऽन्तरत्रिभागोनया रज्ज्वा पूर्वार्द्धे सम
चतुरस्रं कृत्वा श्रोण्यामग्निः ॥ २९ ॥

अपि वा = अथवा अन्तरे = गार्हपत्याहवनीययोर्मध्ये या रज्जुः, सा त्रिभागेन स्वतृतीयांशेन ऊना कार्या। तया च करण्या आहवनीयमध्यात्प्रत्यक् समचतुरस्रं कर्त्तव्यम्। तस्य चतुरस्रस्य श्रोण्यां = दक्षिणश्रोण्यामग्निः = दक्षिणाग्निः कार्यः, तन्मध्यं कार्यमित्यर्थः।

अत्राष्टप्रक्रमाधानपक्षे प्रक्रमस्य च पादमात्रत्वकरणे दक्षिणाग्निखरस्य अर्द्धचन्द्राकृतेररत्निमात्रस्य परिशिष्टोक्तस्य पूर्वाग्रं वेदिमध्ये पततीति गार्हपत्यखरपूर्वभागादष्टसु पादेषु आहवनीयखरपश्चिमभागः कर्त्तव्यः। एकादश-द्वादशपरिमितप्रक्रमपक्षे तु गार्हपत्याहवनीययोरन्तरमेव तावन्मातव्यम् ॥ २९ ॥

विपर्यस्योत्तराꣳस उत्करः ॥ ३० ॥

विपर्यस्य = वैपरीत्येन चतुरस्रं कृत्वा तस्य चतुरस्रस्योत्तरांसे उत्करः कार्यः। विपर्यासवचनात्पश्चिमार्द्धे गार्हपत्यमध्यात्पुरस्तादग्निद्वयान्तरालमितरज्ज्वो स्त्रत्रिभागोनया करण्या चतुरस्रं कर्त्तव्यं, तदुत्तरांसे चोत्करः कार्यः ॥ ३० ॥

इति प्रथमा कण्डिका ॥ १ ॥

---

चातुर्मास्ययागे वरुणप्रघासाख्ये द्वितीयपर्वणि दक्षिणोत्तरे द्वे वेदी भवतः, तत्र दक्षिणा प्रतिप्रस्थातुः, उत्तरा अध्वर्योः (का. श्रौ. ५।४।३२)। तत्र उत्तरवेदेः प्रमाणं "रथमात्र्युत्तरा" इति (का. श्रौ. सू. ५।३।११) रथात्मकमुक्तम्। रथमानं च तत्र नोक्तम्। अत आह—

## अङ्गुलै रथसम्मितायाः प्रमाणम् ॥ १ ॥

वरुणप्रघासपर्वणि रथसम्मितायाः उत्तरवेदेः प्रमाणमङ्गुलैः कृत्वा वक्ष्याम इति सूत्रशेषः ॥ १ ॥

## तत्राष्टाशीतिशतमीषा ॥ २ ॥

रथे प्रागपरायतः काष्ठविशेष ईषा। अत्र ईषाशब्देन वेदेः पूर्वापरायामो लक्ष्यते। तेन वरुणप्रघासपर्वणि उत्तरवेदेः पूर्वपश्चिमायामः अष्टाशीत्यधिकशताङ्गुलपरिमितो भवतीति सूत्रार्थः। चतुरङ्गुलन्यूनाष्टहस्तमिति यावत् ॥ २ ॥

## चतुःशतमक्षः ॥ ३ ॥

रथस्य पश्चाद्भागे तिर्यग्गतं काष्ठमक्षशब्देनोच्यते। अत्र अक्षशब्देन वेदेः श्रोणिप्रदेशो लक्ष्यते। अतश्च वरुणप्रघासीयोत्तरवेदेः पश्चाद्भागः चतुरङ्गुलाधिकशताङ्गुलमितो भवतीति सूत्रार्थः। अष्टाङ्गुलाधिकं हस्तचतुष्टयमित्यर्थः ॥ ३ ॥

## षडशीतिर्युगम् ॥ ४ ॥

वृषस्कन्धोपरि दीयमानं काष्ठं युगशब्देनोच्यते। अत्र युगशब्देन वेद्याः पूर्वभागो लक्ष्यते। तेन वारुणप्रघासिक्या उत्तरवेदेः पूर्वभागः षडशीत्यङ्गुलो भवति, दशाङ्गुलोनाश्चत्वारो हस्ता इत्यर्थः। एवं प्रकारेण रथमात्री वेदिः साधनीया। पक्षान्तराण्यपि कातीयश्रौतसूत्रोक्तानि ( अ. ५ कं. ३ सू. २८ ) बोध्यानि ॥ ४ ॥

वरुणप्रघासे आहवनीयस्थानापन्ना उत्तरवेदिः "शम्यामात्रीम्" ( का. श्रौ. सू. अ. ५ कं. ३ सू. २८ ) इति शम्यामात्री उक्ता। शम्या प्रमाणं च तत्र नोक्तं, तदत्राह—

## चत्वारोऽष्टकाः शम्या ॥ ५ ॥

चतुर्गुणिता अष्टसङ्ख्या द्वात्रिंशद्भवति। तेन द्वात्रिंशदङ्गुला ( अष्टाङ्गुलाधिकहस्तमिता ) शम्या भवतीति सूत्रार्थः। शम्याशब्देन युगच्छिद्रप्रवेश्यं काष्ठं रथाङ्गमुच्यते। इह वेदिमानकृत्काष्ठं लक्ष्यते ॥५॥

पितृमेधे 'दिक्स्रक्ति (१) पुरुषमात्रं मिमीते" इत्युक्तम् (का. श्रौ.

---

( १ ) दिक्षु स्रक्तयः कोणा यस्य तत् दिक्स्रक्ति, दिक्कोणं चतुरस्रमित्यर्थः

सू. २१।२।८')। अत्र ग्रन्थे विदिक्स्रक्तेः समचतुरस्रस्य प्रकार उक्तः (१।१६)। इदानीं दिक्स्रक्तिताकरणार्थमिदमाह—

**पैतृक्यां द्विपुरुषं चतुरस्रं कृत्वा करणीमध्येषु शङ्कवः स समाधिः ॥ ६ ॥**

पैतृक्यां = पितृमेधवेदौ विंशतिशताङ्गुलकपुरुषमितसमचतुरस्रस्य क्षेत्रस्य अक्ष्णयारज्ज्वा द्विपुरुषक्षेत्रफलकं समचतुरस्रं तिलन्यूनसप्ततिशताङ्गुलमितं कृत्वा तस्य पार्श्वमानीद्वय-तिर्यङ्मानीद्वयरूपाणां दिक्चतुष्टयगतानां चतसृणां करणीनां मध्येषु शङ्कुचतुष्टयं दद्यात्, सूत्रचतुष्टयं च पातयेत्, तद्दिग्गतकोणकं पुरुषमात्रं समचतुरस्रं भवति, स समाधिः = क्षेत्रमापनमित्यर्थः। कथं दिक्स्रक्तिता स्यादित्याक्षेपे ह्येवं समाधानं भवतीत्यर्थः।

– विंशतिशताङ्गुलः पुरुषः। पुरुषक्षेत्रफलकं चतुरस्रं १४४०० अङ्गुलमिताभिः करणीभिर्निष्पद्यते। तस्य चतुरस्य द्वे रेखे पार्श्वमानीशब्दाभिधेये, द्वे च तिर्यङ्मानीशब्दाभिधेये। मध्ये एका तिर्यग्दत्ता रज्जुः अक्ष्णया ( कर्ण ) शब्दाभिधेया। तत्प्रमाणया अक्ष्णया रज्ज्वा यच्चतुरस्रमुत्पद्यते तद् द्विपुरुषक्षेत्रफलकं भवति। तच्च चतुरस्रं दिक्कोणकं सम्पाद्यमिति ॥६॥

अत्र ग्रन्थे व्यवहारार्थं पञ्च रज्जुसंज्ञा आह—

**करणी, तत्करणी, तिर्यङ्मानी, पार्श्वमान्यक्ष्णया चेति पञ्च रज्जवः ॥ ७ ॥**

करणी, तत्करणी, तिर्यङ्मानी, पार्श्वमानी, अक्ष्णया, एताः पञ्च रज्जूनां संज्ञाः। क्रियते क्षेत्रं निष्पाद्यते अनया सा करणी, प्राचीसूत्ररूपा मध्यरज्जुः, समचतुरस्रे प्राचीमध्यरेखामिता रज्जुः प्रमाणरज्जुः करणी नाम। तदिति क्षेत्रद्वैगुण्यत्रैगुण्यादि सामान्येनोच्यते। तेन तत् क्षेत्रद्वैगुण्यादि क्रियतेऽनया सा तत्करणी, द्विकरणी, त्रिकरणी चतुष्करणी इत्यादि। ततश्च द्वे क्षेत्रे समस्य एकत्र करोति सा द्विकरणी। एवं त्रिकरणी-चतुष्करण्यादयः। तिर्यक् ण्यंसस्वरूपं मीयतेऽनया सा तिर्यङ्मानी। प्राच्यन्तयोस्तिर्यग्वर्तमानं रज्जुद्वयमक्षिवत् क्षेत्रं नयति इत्यक्ष्णया कर्णसूत्रं तिर्यग्दत्ता मध्यरज्जुः। तस्यां दत्तण्यं चतुरस्रमच्छिद्वयसदृशं भवति ॥७॥

सोमयागे—"यजमानदशपद्यां वा" ( ५।३। ) इत्यनेन दशपदा उत्तरवेदिर्भवतीत्युक्तम् । अत्र तस्या वेदेः करणीमाह—

**पदं तिर्यङ्मानी, त्रिपदा पार्श्वमानी, तस्याक्ष्णया-रज्जुर्दशकरणी ॥ ८ ॥**

यस्य क्षेत्रस्य तिर्यङ्माना = दक्षिणोत्तरायता रज्जुः पदम् = एकपदपरिमिता अर्थाद् द्वादशाङ्गुलप्रमाणा भवति, पार्श्वमानी च त्रिपदा = पदत्रयपरिमिता सार्द्धहस्तायता भवति, तस्याक्ष्णयारज्जुः दशकरणी = दशपदक्षेत्रफलकस्य चतुरस्रस्य करणी = निष्पादिका किञ्चिदधिकषट्त्रिंशदङ्गुलरूपा भवति, तस्याक्ष्णयारज्ज्वा दशपद-फलकं क्षेत्रं निष्पाद्यत इत्यर्थः ॥८॥

अग्नौ चत्वारिंशत्पदा उत्तरवेदिर्विहिता, तत्साधनमाह—

**द्विपदा तिर्यङ्मानी, षट्पदा पार्श्वमानी, तस्याक्ष्णया रज्जुश्चत्वारिंशत्करणी ॥ ९ ॥**

यस्मिन् क्षेत्रे तिर्यङ्मानी = दक्षिणोत्तरा रज्जुर्द्विपदा, पार्श्वमा-नी = प्रागायतं सूत्रं च षट्पदा, तस्याक्ष्णयारज्जुः = कोणसूत्रं च-त्वारिंशत्करणी = चत्वारिंशत्पदक्षेत्रफलकस्य चतुरस्रस्य साधिका सत्र्यंशपदषट्कमिता भवति, तया रज्ज्वा निष्पादितं क्षेत्रं चत्वा-रिंशत्पदफलकं भवतीत्यर्थः ॥ ९ ॥

उत्तरवेदिः षड्विधा—शम्यामात्री, वितृतीया, अपरिमिता, युगमात्री, दशपदा, चत्वारिंशत्पदा चेति । तत्रान्त्ये वेदी उक्ते २।८-९।वितृतीया चोत्तरवेदिर्वेदेः क्षेत्रफलतृतीयांशेन भवति । अपरि-मिता च "अपरितं प्रमाणाद् भूयः" (का० शु० १।२३) इत्यनेनावगता। शम्यामात्री युगमात्री चेत्यवशिष्टं (१) वेदिद्वयप्रमाणं "षडशीति-र्युगम्, चत्वारोऽष्टकाः शम्या" ( का०शु० २।४-५ ) इति सूत्राभ्यां रथमात्रीवेदीप्रसङ्ग एवोक्तमित्याह—

**उपदिष्टं युगप्रमाणꣳ शम्याप्रमाणं च दर्शनात् ॥ १० ॥**

---

( १ ) सोमे चयने च युगमात्री उत्तरवेदिः श्रूयते, (५।३।३०) शम्यामात्री च वरुणप्रघासे (५।३।२९) ।

युगप्रमाण–शम्याप्रमाणयोर्वेद्योः श्रुतौ दर्शनात् तत्प्रमाणं पूर्वमुपदिष्टम् ( २।४–५ ) ॥ १० ॥

क्षेत्रमापनार्थं किञ्चिदाह—

**दीर्घचतुरस्रस्याक्ष्णया रज्जुस्तिर्यङ्मानी पार्श्वमानी च यत्पृथग्भूते कुरुतस्तदुभयं करोतीति क्षेत्रज्ञानम् ॥११॥**

दीर्घचतुरस्रस्य क्षेत्रस्य या तिर्यङ्मानी, साऽन्यत्र करणीत्वेन पृथग्भूता सती यत्प्रमाणकं समचतुरस्रं करोति, तथा दीर्घचतुरस्रस्य क्षेत्रस्य या पार्श्वमानी साऽन्यत्र करणीत्वेन पृथग्भूता सती यत्प्रमाणकं समचतुरस्रं करोति, तदुभयमपि मिलितं दीर्घचतुरस्रस्याक्ष्णया रज्जुः करोति इति क्षेत्रज्ञानं = क्षेत्रमानप्रकारो ज्ञातव्यः (१) ॥ ११ ॥

अथ द्वैगुण्यादिक्षेत्रप्रकारमाह—

**समचतुरस्रस्याक्ष्णया रज्जुर्द्विकरणी ॥ १२ ॥**

समचतुरस्रस्य क्षेत्रस्य याऽक्ष्णया = कर्णसूत्रभूता रज्जुः, सा द्विकरणी = द्विगुणक्षेत्रस्य प्राचीसूत्रप्रमाणमित्यर्थः (२) ॥१२॥

---

(१) यथा–"पदं तिर्यङ्मानी, त्रिपदा पार्श्वमानी, तस्याक्ष्णया रज्जुर्दशकरणीति दीर्घचतुरस्रमुक्तम् । तत्र पदप्रमाणा तिर्यङ्मानी पदक्षेत्रफलकं चतुरस्रं करोति, पार्श्वमानी तु त्रिपदा, सा च नवपदक्षेत्रफलकं चतुरस्रं करोति, एवमुभयं मिलित्वा दशपदक्षेत्रफलकं चतुरस्रं जातं, तच्च दीर्घचतुरस्रस्य पदमात्रतिर्यङ्मानी–त्रिपदपार्श्वमानीभ्यां जातस्याक्ष्णयारज्जुरेव करोतीति ज्ञेयम् । तिर्यङ्मान्याः पार्श्वमान्याश्च वर्गौ कृत्वा तावेकीकृत्य तस्य मूले समानीते दीर्घचतुरस्रस्य कर्णसूत्रमानमेव भवति" इति महीधरः ।

(२)—यथा—"हस्तमात्रे समचतुरस्रे चतुर्विंशत्यङ्गुलमिता प्रमाणरज्जुः, ततश्चतुर्विंशत्या चतुर्विंशत्या गुणिता षट्सप्तत्यधिका पञ्चशती भवति, सा द्विगुणिता द्वापञ्चाशदधिकैकादशशती, तस्या मूलं किञ्चिन्न्यूनचतुस्त्रिंशदङ्गुलानि, तान्येव द्विहस्तसमचतुरस्रस्य मानम्"इति महीधरः । त्रिहस्तादौ एकहस्तवर्गं त्रिगुणादिं कृत्वा तत्तन्मूलानयनेन तत्तदायामप्रमाणं बोध्यम् । यथा–त्रिहस्ते ४१ अङ्गुलानि ५ यवा इति ।

द्विकरणीसाधने प्रकारान्तरमाह—

**करणीं तृतीयेन वर्धयेत्तच्च स्वचतुर्थेनात्मचतुस्त्रिंशोनेन सविशेष इति विशेषः ॥ १३ ॥**

करणीं = क्षेत्रायामं तृतीयेन = स्वतृतीयांशेन वर्धयेत्, तदिति सामान्ये नपुंसकम्। तत् = तं तृतीयांशं स्वचतुर्थेन = स्वस्य तृतीयांशस्य यश्चतुर्थो भागः, तेन वर्धयेत्। किं भूतेन स्वचतुर्थेन, आत्मचतुस्त्रिंशोनेन = आत्मनः = चतुर्थांशस्य यश्चतुस्त्रिंशो भागः, तेन ऊनेन = हीनेन रहितेन, अर्थात् स्वचतुस्त्रिंशांशहीनचतुर्थभागेन तृतीयांशं वर्धयेत्। सविशेषो = भेदकः, करणी-द्विकरण्योरिति विशेषः। द्विकरणीसाधकं प्रकारान्तरमित्यर्थः (१) ॥ १३ ॥

त्रिकरणीसाधनमाह—

**प्रमाणं तिर्यग्द्विकरण्यायामस्तस्याक्ष्णयारज्जुस्त्रिकरणी॥१४**

त्रिगुणीकर्तुमिष्टस्य क्षेत्रस्य करणी प्रमाणशब्देनोच्यते। प्रमाणं = त्रिगुणीकर्तुमिष्टस्य क्षेत्रस्य करणीरूपं, तिर्यक् = तिर्यङ्मानीत्वेन प्रसार्य, द्विकरणी = पूर्वोक्तं द्विकरणीमानम् एकहस्तस्याक्ष्णयारूपम्

---

(१) अत्र रामवाजपेयिनः। "यथा—द्वादशाङ्गुलकरणीकं समचतुरस्रं द्विगुणीकर्तुमिष्यते, तस्य करणी तृतीयांशेन वर्द्धितषोडशाङ्गुला भवति। स च तृतीयोऽशश्चतुरङ्गुलात्मकः स्वकीयतुरीयांशेनाङ्गुलेन स्वचतुस्त्रिंशभागेन वर्द्धनीयः। अत्राङ्गुलस्य उदरदेशमिताश्चतुस्त्रिंशत्तिला अवयवाः कथ्यन्ते। तत्र तिलोनसप्तदशाङ्गुला द्विकरणी भवति। या पूर्वं समचतुरस्रस्याक्ष्णया द्विकरणी उक्ता, सा कियती भवतीति स्वरूपज्ञापनार्थमिदं सूत्रम्" इति।

महीधरः। "यथा—हस्तमितसमचतुरस्रस्य करणी चतुर्विंशत्यङ्गुलरूपा। सा च द्विगुणीक्रियते यदा, तदा तां तृतीयांशेन वर्धयेत्। चतुर्विंशतेस्तृतीयांशोऽष्टावङ्गुलानि, एवं द्वात्रिंशदङ्गुलानि जातानि। स तृतीयांशोऽष्टाङ्गुलात्मकः स्वचतुर्थेनाङ्गुलद्वयेन पुनर्वर्द्धितः, तदा चतुस्त्रिंशदङ्गुलानि। स्वचतुर्थेन कीदृशेन—आत्मचतुस्त्रिंशोनेन। एवमङ्गुलद्वयस्य चतुस्त्रिंशो भागो यूकात्रयं लिक्षाषट्कं किंचिदूनं बालाग्रं च, तावता हीनेनाङ्गुलद्वयेन तृतीयो भागो वर्द्धितः। एवं च द्विहस्तकरण्येतावती सम्पन्ना—त्रयस्त्रिंशदङ्गुलानि, सप्त यवाः, चतस्रो यूकाः, द्वे लिक्षे, किंचिन्न्यूनं बालाग्रमिति। किं बहुना—तिलद्वयोनानि चतुस्त्रिंशदङ्गुलानि द्विहस्तकरणीत्यर्थ" इति।

आयामः = पार्श्वमानीत्वेन प्रसार्य; एवं क्षेत्रे त्रिकोणे कृते तस्य क्षेत्रस्याक्ष्णयारज्जुः त्रिकरणी स्यात्, हस्तमात्राणि त्रीणि चतुरस्राणि सङ्क्षिपतीत्यर्थः (१) ॥१४॥

त्रिकरणीकथनस्य प्रयोजनमाह—

**तृतीयकरण्येतेन व्याख्याता ॥१५॥**

एतेन त्रिकरणीकथनेन तृतीयकरणी अपि व्याख्याता। "प्रक्रमतृतीयेनावृत्तेन" (१६।२।२) इति सौत्रामण्यामुक्तम्। तत्र प्रक्रमस्य तृतीया भागः प्रक्रमतृतीयं न भवति, किन्तु या करणी प्रक्रमक्षेत्रतृतीयांशं समचतुरस्रं करोति, सा प्रक्रमतृतीयशब्देनोच्यते, सैव तृतीया करणी। "वितृतीये यजेत" वितृतीयं वै सौत्रामणी" इति श्रूयते। तत्र तया तृतीयकरण्या प्रक्रमत्वेन कल्पितया या वेदिर्मीयते सा सामवेदस्तृतीयांशरूपा स्यात् (२) ॥१५॥

एवं त्रिकरणीकथनेन कथं तृतीयकरणी व्याख्यातेति स्पष्टयितुं सूत्रत्रयमाह—

**प्रमाणविभागस्तु नवधा ॥ १६ ॥**

प्रमाणस्य = प्रक्रमरूपस्य विभागो नवधा विधेयः। "द्वादशाङ्गुलं पदम्" "द्विपदः प्रक्रमः" (श्रौ सू. ३४)। प्रक्रममितया रज्ज्वा क्षेत्रं चतुरस्रीकृत्य, तस्य तिर्यङ्मान्यौ पार्श्वमान्यौ च त्रेधा विभज्य, पूर्वापरायतं दक्षिणोत्तरायतं च सूत्रद्वयं दद्यात्। एवं नवधा विभागो भवति। एकको भागः पदपदक्षेत्रकलकः स्यात् ॥ १६ ॥

**करणी तृतीयं नवभागः ॥१७॥**

---

(१) महीधरः "यथा—हस्तमिता तिर्यङ्मानी, किंचिदूनचतुस्त्रिंशदङ्गुलांमिता पार्श्वमानी, तयोरग्रं प्रापिता कर्णरज्जुस्त्रिकरणी त्रिहस्तक्षेत्रस्य करणी साधिका। तया साधितं समचतुरस्रं त्रिहस्तं भवतीत्यर्थः।"

(२) अत्र प्रक्रमशब्देन प्रक्रमपरिमितस्थलमापिका रज्जुरभिधीयते, न तु प्रक्रमः। तदुक्तौ प्रक्रमस्य विभागकरणमेव प्राप्नुयात्। स च दैर्घ्ये विस्तारे चोभयत्र कर्तव्यो भवतीति नवमांशे पर्यवस्यति। तत्र च यागानुष्ठानं प्राप्नुयात्। तत्तु नेष्टम्। अतः प्रक्रममितं यत्क्षेत्रं, तस्य यस्तृतीयोऽशस्तन्मापिका या रज्जुस्तया मानं कृत्वोत्तरवेदिनिष्पादनीयेति।

करण्याः = प्रक्रमरूपायास्तृतीयं = तृतीयो भागः पदरूपः करणीभूय चतुरस्रं कुर्वन् नवभागो भवति। नवमं भागं पदं सङ्क्षिपतीत्यर्थः ॥१७॥

## नव भागास्त्रयस्तृतीयकरणी ॥१८॥

प्रक्रमरूपकरणीत्रयस्य समचतुरस्रस्य ये त्रयो नव भागाः सा तृतीयकरणी। सा चेत्थं कार्या। पदमितया करण्या समचतुरस्रं कृत्वा तत्कर्णसूत्रं पदद्विकरणीरूपं पार्श्वमानीं कृत्वा पदमितकरणीमेव च तिर्यङ्मानीं विधाय ताभ्यां दीर्घचतुरस्रे कृते तत्कर्णरज्जुस्तृतीयकरणी। सा च करणीभूय समचतुरस्रं कुर्यात्, तत्र त्रयो नव भागाः सङ्क्षिप्यन्ते ॥१८॥

एवं "तृतीयकरण्येतेन व्याख्याता" (२।१५) इति प्रतिज्ञातं सूत्रत्रयेण निरूप्य तृतीयकरण्याः प्रयोजनं सूत्रद्वयेनाह—

## सौत्रामण्यां प्रक्रमार्था ॥१९॥

सौत्रामणीयागे प्रक्रमकथनाय तृतीयकरणी उक्ता। सौत्रामण्यां तृतीयकरणीरूपप्रक्रमेण सोमवद्वेदिर्मिता सती सौमिक्या वेदेस्तृतीयांशरूपा स्यात् ॥१९॥

## त्रिकरणी समासार्था ॥२०॥

त्रिकरणी तृतीयकरणी येयं पूर्वमुक्ता सा समासार्था = त्रयाणां प्रक्रमनवभागानां सङ्क्षेपार्था। तया विना नवभागत्रयस्य संक्षेप्तुमशक्यत्वात्। अतः प्रक्रमनवभागत्रयमेव सौत्रामणीप्रक्रम इत्यर्थः ॥२०॥

उक्तं चतुरस्रसमासं निगमयति—

## तुल्यप्रमाणानां समचतुरस्राणामुक्तः समासः ॥२१॥

तुल्यं प्रमाणं येषां तानि तुल्यप्रमाणानि हस्तादिरूपाणि। तादृशानां समचतुरस्राणां समासः संक्षेप एकीकरणप्रकार उक्तः ॥२१॥

एवं तुल्यप्रमाणानां समचतुरस्राणां समासमुक्त्वाऽतुल्यप्रमाणानां समचतुरस्राणां समासमाह—

नानाप्रमाणसमासे ह्रसीयसः करण्या वर्षीयसोऽ-
पच्छिन्द्यात्तस्यादण्यारज्जुरुभे समस्यतीति
समासः ॥२२॥

नानाप्रमाणानां = भिन्नप्रमाणानां समचतुरस्राणां समासे = संक्षेपे कार्ये ह्रसीयसो = ह्रस्वतरस्य समचतुरस्रस्य (अष्टाङ्गुलादेः) करण्या वर्षीयसो = वृद्धतरस्य (द्वादशाङ्गुलादेः) करणीं पार्श्वमानीं तिर्यङ्मानीं वाऽपच्छिन्द्यात् = ह्रस्वकरणीमानेन दीर्घकरणीं कोणतो मित्वा विदारयित्वाऽवशिष्टं चतुरङ्गुलादिभागं जह्यात्। तस्य ह्रस्वकरणीमानेन छिन्नस्य दीर्घक्षेत्रस्य अक्ष्णयारज्जुः करणीभूय अन्यच्चतुरस्रं कुर्वती उभे = वृद्धह्रस्वतरे क्षेत्रे समस्यति संक्षिपति इति समासः = अतुल्यप्रमाणसमचतुरस्रसंक्षेपप्रकारः (१) ॥२२॥

इति कात्यायनशुल्बसूत्रवृत्तौ चतुरस्रादिक्षेत्रनिरूपणी द्वितीया कण्डिका ॥२॥

---

एवं ह्रस्वमहतोः क्षेत्रयोः समासं निरूप्य महत्क्षेत्रात् ह्रस्वक्षेत्रस्य पृथक्करणं कथं विधातव्यमित्याह—

चतुरस्राच्चतुरस्रं निर्जिहीर्षन् यावन्निर्जिहीर्षेत्तावदुभयतो
ऽपच्छिद्य शङ्कू निखाय पार्श्वमानीं कृत्वा पार्श्वमानी
सम्मितामक्ष्णयां तत्रोपसर्ठ०हरति समासे
ऽपच्छेदः सा करण्येव निर्ह्रासः ॥१॥

तत्र बृहत्प्रमाणकसमचतुरस्रस्य एकपार्श्वगतकोणाभ्यां संमुखभुजयोरल्पचतुरस्रभुजतुल्ये रेखे अपच्छिद्य तच्छेदनबिन्दुद्वये शङ्कू निखाय, शङ्कुमूलयोर्बृहत्समचतुरस्रभुजतुल्यसूत्रं बद्ध्वा बृहच्चतुरस्रभुजतुल्यदैर्घ्यम् अल्पसमचतुरस्रभुजविस्तारं दीर्घचतुरस्रमुत्पादयेत्। तत्र एककोणाद् बृहत्समचतुरस्रभुजतुल्यां रेखां तथा

(१) महीधरः—यथा—द्वादशाङ्गुलकरणीकमेकं चतुरस्रं, तत्राष्टाङ्गुलकरणीकं समसितव्यं, तत्र द्वादशाङ्गुलकरण्यां कोणादारभ्याष्टाङ्गुलेषु चिन्हं कुर्यात्। चतुरङ्गुलानि यक्त्वा चिन्हादारभ्याभिमुखकोणान्तं कर्णसूत्रं दत्वा तन्मितकरण्या यच्चतुरस्रान्तरं क्रियते, तत्र ह्रस्वमहतोः क्षेत्रयोः समासः स्यात्। एवमन्ययोरपि ह्रस्वमहतोः क्षेत्रयोःसमासप्रकारो बोध्यः।

स्थापयेत्, यथा तदग्रं संमुखपार्श्वमान्यां लगति। ततस्तद्योगबिन्दोः कोणदिग्गतभुजपर्यन्तं पार्श्वमानीखण्डं यत्, तत्र यत्समचतुरस्रं तदेवाभीष्टम्, अर्थात् बृहत्प्रमाणाल्पप्रमाणसमचतुरस्रयोरन्तररूपम्(१)।

यथा—

अ. क. ग. च. बृहत्प्रमाणकसमचतुरस्रात् इ. उ. व. र. अल्पप्रमाणकसमचतुरस्रमपनेतव्यम्, तदा अ. क. कोणाभ्याम् अ. प. क. म. रेखे अल्पप्रमाणकसमचतुरस्रभुजतुल्ये छित्वा प. म. छेदनबिन्दुद्वये शङ्कू निखाय प. म. शङ्कुमूलगता रेखा कार्या। एवं सति अ. क. म. प. दीर्घचतुरस्रं निष्पद्यते। यत्र अ. क. प. म. रेखे दीर्घचतुरस्रभुजतुल्ये, अ. प., क. म. रेखे च अल्पचतुरस्रभुजतुल्ये आसाते, ततः अ. क. भुजतुल्यां रेखां क. कोणबिन्दोस्तथा स्थापनीया, यथा तदग्रं प. म. रेखायां ल. बिन्दौ भवेत्। एवं सति ल. म. रेखानिमित्तं समचतुरस्रं यत्, तदेव बृहच्चतुरस्राल्पचतुरस्रयोरन्तररूपं भवितुमर्हति॥१॥







(१) "चतुरस्रात् = महतः समचतुरस्रात् चतुरस्रं = ह्रस्वं समचतुरस्रं निर्जिहीर्षन् = निर्हर्तुमिच्छन् पृथक्कर्तुमिच्छन् यावत् = यत्प्रमाणं समचतुरस्रं निर्जिहीर्षेत् = पृथक्कर्तुमिच्छेत्, तावत् = तत्प्रमाणां करणीमुभयतो महच्चतुरस्रपार्श्वमान्योरपच्छिद्य = श्रोणित आरभ्याङ्कयित्वा चिन्हद्वये शङ्कू निखाय पार्श्वमानीं कृत्वा शङ्कुद्वयप्रसारितां महच्चतुरस्रकरणीभूतां रज्जुं पार्श्वमानीत्वेन परिकल्प्य पार्श्वमानीसंमितां तामेव रज्जुमक्ष्णयां = कर्णसूत्रं तत्र = अधस्तिर्यङ्मान्यामुपसंहरति = एकतरशङ्कौ रज्जुपाशं निक्षिप्य तां रज्जुं तिर्यङ्मान्यामधः कर्णसूत्रत्वेन प्रसारयति स समासेऽपच्छेदः = समासे क्षेत्रद्वयस्यैक्ये कृते सति अपच्छेदस्त्याज्योंऽशः, तस्यां रज्जौ तिर्यङ्मानीस्पृष्टायां त्रिकोणे जाते त्रिकोणबहिर्भूतो यो महाचतु-

दीर्घचतुरस्रस्य समचतुरस्रीकरणोपायमाह—

**दीर्घचतुरस्रꣳ समचतुरस्रं चिकीर्षन्मध्ये तिर्यगपच्छि-द्यान्यतरंद्विभज्येतरत्पुरस्ताद्दक्षिणतश्चोपदध्या च्छेषमागन्तुना पूरयेत्तस्योक्तो निर्ह्रासः ॥२॥**

अत्र आयामार्द्धविस्तारं चतुरस्रं दीर्घचतुरस्रपदेन व्यवह्रियते। दीर्घचतुरस्रं विस्तारद्विगुणायामं चतुरस्रं समचतुरस्रं कर्तुमिच्छन् मध्ये तिर्यग्रज्जुं प्रसार्यापच्छिद्य = विभज्य आयामस्य तुल्यं भागद्वयं कृत्वा (तद्भागचिह्नात् तिर्यङ्मानीसूत्रप्रसारणेन द्वे समचतुरस्रे कृत्वा) अन्यतरद् विभज्य = तत्र एकतरस्य समचतुरस्रस्य पुनस्तथैव भागद्वयकरणेन द्वे दीर्घचतुरस्रे विधाय, इतरत् = भागद्वयं पुरस्ताद्दक्षिणतश्चोपदध्यात् = एकं भागं दीर्घचतुरस्ररूपं पूर्वत्र अविभक्तसमचतरस्रे तिर्यगायामं कृत्वा योजयेत्, अन्यं भागं दक्षिणस्यां प्रागायामं कृत्वा योजयेत्, शेषम् समचतुरस्रे क्रियमाणे न्यूनमाग्नेयकोणगतमष्टमांशमागन्तुना = अध्याहृतेनाष्टमांशेन पूरयेत्।

नन्वेवं समचतुरस्रमधिकं जातम्, अष्टमांशस्याध्याहृतत्वात्, अत आह—तस्योक्तो निर्ह्रासः—तस्यागन्तोरंशस्य निर्ह्रासः = त्यागः कार्यः, स च त्यागप्रकार उक्तः "चतुरस्राच्चतुरस्रं निर्जिहीर्षन्" इति सूत्रे (३।१)।

यथा—अ. इ. उ. क दीर्घसमचतुरस्रमास्ते। अ इ. दैर्घ्यरेखायाः ख. बिन्दौ भागद्वयकरणेन, ततश्च ख ङ रेखाकरणेन च क. ख, ङ ई, इति समचतुरस्रद्वयं जातम्। तत्र ङ. ई. समचतुरस्रस्य ग. बिन्दौ तथैव भागद्वयकरणेन ङ. ग. घ. इ. इति दीर्घचतरस्रद्वयं जायते। ततः घ. इ. दीर्घचतुरस्रं अ. छ. रूपेण निवेशितं, यथा अ. च रेखा अ. क. रेखा एकैव भवेत्। एवं सति ख छ. ख. ङ, रेखाऽपि एकैव स्यात्। ततः च. छ., ग. घ. रेखयोः ख. मार्गे वर्द्धनेन क. च. प. घ. समचतुरस्रं जातम्। यत्र

---

रस्रनिर्यङ्मानीभागः सोऽपच्छेदः = त्यक्तांशः, सा करणी = त्रिकोणान्तःपाती तिर्यङ्मानीभागः करणी, तया करण्या कृतमन्यच्चतुरस्रं ह्रस्वक्षेत्रे महतः पृथक्कृते शेषक्षेत्रं भवति। एष निर्ह्रासः = महत्क्षेत्राद् ह्रस्वस्य पृथक्करणोपायः" इति महीधर व्याख्या।

ख. प. लघुसमचतुरस्रमधिकमिति तु स्पष्टम्। ततः ख. प. बृहत्सम-चतुरस्रात् ख. प. समचतुरस्रस्य निह्रासेन (१) यत्समचतुरस्रं तत अभीष्टदीर्घसमचतुरस्रमिति ॥२॥




एवं विस्तारद्विगुणायामदीर्घचतुरस्रस्य समचतुरस्रकरण प्रकारमुक्त्वा इदानीं विस्तारद्विगुणाधिकायामदीर्घचतुरस्रस्य सम-चतुरस्रसाधनोपायमाह—

**अतिदीर्घं चेत्तिर्यङ्मान्याऽपच्छिद्याऽपच्छिद्यैकसमासेन समस्य शेषं यथायोगमुपसठंहरेदि त्येकसमासः ॥ ३ ॥**

अतिदीर्घं = विस्तारद्विगुणाधिकायामं दीर्घचतुरस्रं चेत् तदा तिर्यङ्मान्या दक्षिणोत्तररज्वा पार्श्वमानीसूत्रमपच्छिद्य अपच्छिद्य =

---

(१) निह्रासप्रकारश्च (२)—बृहत्समचतुरस्रात् लघुसमचतुरस्रं निर्ह्रातु-मिच्छन् बृहत्समचतुरस्रसंमुखभुजयोः लघुसमचतुरस्रभुजतुल्ये रेखे छित्वा तच्छेद-नबिन्दुद्वयगतपार्श्वमानीरूपप्रसारणेन बृहत्समचतुरस्रभुजतुल्यपार्श्वमानीकं लघु-समचतुरस्रभुजतुल्यतिर्यङ्मानीकं च दीर्घचतुरस्रं जायते। तत्र एककोणात् बृहत्स-मचतुरस्रभुजतुल्यसूत्रं तथाऽक्ष्णयारूपेण प्रसारयेत्, यथा तदग्रं संमुखपार्श्व-मानीमंलग्नं भवेत्। एवं सति तत्संयोगबिन्दोः अभीष्टकोणगततिर्यङ्मानीपर्यन्तं यत् संमुखपार्श्वमानीखण्डं तद्रूपकरण्या निर्मितं समचतुरस्रं चिकीर्षितं समचतु-रस्रं भवितुमर्हति।

पुनः पुनर्विभज्य विभज्य तत्तच्छेदनबिन्दुतः तिर्यङ्मानीसूत्रप्रसारणेन समचतुरस्राणि कृत्वा तानि एकसमासेन (द्विकरणी—त्रिकरणीत्यादिविधानेन) समस्य = संयोज्य, अर्थात् तेषां योगतुल्यं समचतुरस्रं यथायोगं यया कयाऽपि युक्त्या उपसंहरेत् = समस्येत् एकी कुर्यात् इत्येकसमासः = एकसमचतुरस्रीकरणोपायः । यथा—

अ. इ. उ. क. दीर्घचतुरस्रं यस्य समचतुरस्रकरणमभीष्टम्, तदा अ. क. तिर्यङ्मानीतुल्यानि अ. क, ग. च, च. प, खण्डानि कृत्वा तत्तद्बिन्दुतः ग. ल, च. व, प. र, तिर्यङ्मानीरेखाकरणेन क. ग, ल. च, व. प, इति त्रीणि समचतुरस्राणि जातानि । शिष्टं च र. इ. दीर्घचतुरस्रं भवेत् । ततः उक्तसमचतुरस्राणां योगतुल्यं समचतुरस्रं त्रिकरणीविधानरीत्या (१) त. थ. द. ध. तुल्यं विधाय, शिष्टस्य च र. इ. मितस्य दीर्घचतुरस्रस्य तुल्यं समचतुरस्रं दीर्घचतुरस्रमिति पूर्वसूत्रोक्तप्रकारेण ट. ठ. ड. ढ. तुल्यं कृत्वा ततोऽनयोर्विहितसमचतुरस्रयोर्योगतुल्यं समचतुरस्रं "नानाप्रमाणसमासे" (२।२२) इत्यादिशास्त्रेण (२) ए. ऐ. ओ. औ तुल्यं निष्पादयेत् । एवम् इदमेव समचतुरस्रमतिदीर्घचतुरस्रतुल्यं निष्पन्नम् ॥ ३ ॥



---

(१) अत्र त्रिकरणीविधानमाह—समचतुरस्रस्य अक्ष्णयारज्जुर्द्विकरणी भवति, अर्थात् तादृशकरण्या विहितं समचतुरस्रमभीष्टसमचतुरस्राद् द्विगुणं भवति । अत्र अभीष्टसमचतुरस्रप्रमाणतुल्या तिर्यङ्मानी, द्विकरणी पार्श्वमानी, तत्र अक्ष्णया रज्जुस्त्रिकरणी भवति ।

(२) अत्र भिन्नप्रमाणयोः समचतुरस्रयोः समासप्रकारमाह—यत्र अल्पप्रमाणं तिर्यङ्मानं, बृहत्प्रमाणं पार्श्वमानं, तत्र अक्ष्णयारज्जुः करणी । अनया करण्या यत्समचतुरस्रं, तत् तयोर्भिन्नप्रमाणसमचतुरस्रयोर्योगतुल्यं भवितुमर्हति ।










इदानीं समचतुरस्रस्य विषमचतुरस्रस्य च दीर्घचतुरस्रकरण-प्रकारमाह—

**समचतुरस्रं दीर्घचतुरस्रं चिकीर्षन्मध्येऽक्ष्णयाऽपच्छिद्य विभज्येतरत्पुरस्तादुत्तरतश्चोपदध्याद्, विषमं चेद्यथायोगमुपसंहरेदिति व्यासः ॥४॥**

समचतुरस्रं दीर्घचतुरस्रं = विस्तारद्विगुणायामं कर्त्तुमिच्छन् मध्ये अपच्छिद्य = अर्थात् कर्णरूपया अक्ष्णयया विभज्य, अग्निकोणाद् वायव्यकोणान्तं सूत्रप्रसारणेन भागद्वयं कृत्वा, अपच्छिन्नमंशं पुनर्विभज्य = नैर्ऋतकोणादक्ष्णयार्द्धं यावद् भागद्वयं कृत्वा त्रिकोणद्वयं समुत्पादनीयम्, तत्र इतरत् = एकं त्रिकोणं पुरस्तात् = पूर्वस्यां योजयेत्, अपरं च उत्तरस्यां योजयेत्, तथा सति द्विकोणं विस्तारद्विगुणायामं दीर्घचतुरस्रं स्यात्। क्षेत्रज्ञानमात्रमेवात्र प्रयोजनम्।

यथा—अ. इ. उ. क. समचतुरस्रस्य दीर्घचतुरस्रकरणमभीष्टम्, तदत्र इ. क. अक्ष्णयया इ. क. अ, इ. क उ, इति विभागद्वयं कृत्वा तत्र इ. क. उ, त्रिभुजे ख अक्ष्णयादलबिन्दोः उ कोणपर्यन्तं ख उ. सूत्रप्रमाणेन इ ख. उ, उ. ख. क, इति त्रिभुजद्वयं जातम्। तत्र इ. ख. उ, त्रिभुजं इ. ग. उ, रूपेण तथा स्थापितं यथा इ. उ अक्ष्णया इ. अ. रूपा स्यात्, ख. कोणश्च ग. बिन्दुगतो भवेत्। एवमेव उ. क. ख, त्रिभुजमपि अ. क. घ. रूपेण तथैव स्थापनीयम्। ततः इ. ग. घ. क. चतुर्भुजं दीर्घाख्यं जातम्। इ. ग. विस्तारस्य इ. ख. दैर्घ्यार्द्धसमत्वात् (१)।




विषमचतुर्भुजस्य दीर्घचतुरस्रकरणप्रकारमाह—विषमं चेदिति।

विषमचतुर्भुजस्य दीर्घचतुरस्रं कर्तुमिच्छन् यथायोगं यथासंभवमुपसंहरेत्, कुर्यादित्यर्थः। अर्थात् विषमचतुरस्रस्य समचतुरस्रत्वं विधाय ततः पूर्वोक्तविधिना दीर्घचतुरस्रत्वं कुर्यादित्येवमुपसंहारः (व्यासः समासः)।

यथाऽत्र कल्प्यताम्—अ. इ. उ क. विषमचतुर्भुजमास्ते, यत्र अ. क. भुजात् इ. उ भुजो द्विगुणः; अ ग. विस्तारमानं च अ क. समम्, तदाऽत्र अ. ग, क. घ. तिर्यङ्मानीसूत्रप्रसारणेन अ. क. घ.

---

(१) अत्र त्रिभुजस्थापने विधीयमाने अ ग; अ. घ. रेखाद्वयमपि एकैव रेखेति दीर्घतुचरस्रसमुत्पादने नान्यथात्वेन अभिनव्यम्।

ग. एकं समचतुरस्रम्, तथा अ. ग इ, क. घ. उ त्रिकोणद्वयं चेत्येवं त्रीणि क्षेत्राणि जायन्ते। तत्र अ. ग इ त्रिकोणं क. उ त. रूपेण तथा निवेशितं यथा अ. इ. रेखा क उ. रूपेण तिष्ठति, ग. कोणश्च त. बिन्दुगतश्च भवेत्। एवं सति अ. ग. उ. त. चतुर्भुजमपि पूर्वोक्तविषमचतुर्भुजतुल्यमेवेति स्पष्टमेव। ततः क. त. रेखायाः ट. दलबिन्दुतः ट. च. तिर्यक्सूत्रप्रसारणेन क. घ. च. ट. ट. च. उ. त. इति चतुर्भुजद्वयं जातं, तत्र ट. च उ त. चतुर्भुजस्य अ. प. फ. क. रूपेण निवेशनेन ट. च, प फ, रेखयोः ब. बिन्दुं यावद्वर्धनेन यत् प. ब. च. ग. समचतुर्भुजं जातं, तत्र फ. ब ट. क. समचतुरस्रम् उद्दिष्टसमचतुरस्रापेक्षयाऽधिकम्। तस्य "चतुरस्राच्चतुरस्रम्" (३।१) इति निर्ह्रासप्रकारेण निर्ह्रासे कृते यत् समचतुरस्रं, तत् उद्दिष्टविषमचतुर्भुजसममिति स्पष्टमेव। ततस्तस्य दीर्घचतुरस्रत्व-करणं पूर्वोक्तयुक्त्या स्पष्टमेव। एवं सति विषमचतुरस्रस्य दीर्घ-समचतुरस्रत्वं निष्पन्नम् ॥ ४ ॥




नियमविशेषमाह –

## प्रमाणं चतुरस्रमादेशादन्यत् ॥५॥

प्रमाणे वक्तव्ये अनादेशे समचतुरस्रमेव प्रमाणं भवति, यथा धिष्ण्यानाम्। आदेशे तु अन्यत् प्रमाणं मण्डलादि भवति, यथा—गार्हपत्यादिखरेषु। सोमयागे मृदा निर्मिताः स्वल्पवेदिका अष्टादशाङ्गुलसमचतुरस्राश्चतुरङ्गुलोच्चा अग्नीनामाश्रयभूता धिष्ण्या इत्युच्यन्ते ॥५॥

पूर्वमुक्तानां करणीनां क्षेत्रफलं वक्तुमुपक्रमते—

**द्विप्रमाणा चतुःकरणी, त्रिप्रमाणा नवकरणी, चतुः प्रमाणा षोडशकरणी ॥६॥**

द्वे प्रमाणे यस्याः सा द्विप्रमाणा करणी। तया द्विहस्तप्रमाण-करण्या कृतं समचतुरस्रं चतुःकरणी = चतुर्हस्तक्षेत्रफलकं स्यात्। एवं त्र्यरत्निकरण्या कृतं समचतुरस्रं नवारत्निक्षेत्रफलकं भवति। चतुर-रत्निकरण्या कृतं समचतुरस्रं षोडशारत्निक्षेत्रफलकं भवति। एतत्क्षेत्र-प्रदर्शनम् ॥६॥

यदुक्तं तदेवानुक्तोदाहरणेऽपि बोधयितुं विशदयति—

**यावत्प्रमाणा रज्जुर्भवति तावन्तस्तावन्तो वर्गा भवन्ति तान्समस्येत् ॥७॥**

यावत् प्रमाणा रज्जुः समचतुरस्रीकरणार्थं करणी क्रियते तावन्तस्तावन्तो वर्गास्तत्क्षेत्रफलरूपाः स्युः। वर्गो नाम सदृशाङ्क गुणनम्। यथा पञ्च पञ्चगुणाः पञ्चविंशतिः पञ्चवर्गाः। तेन पञ्चगुणा करणी रज्जुः करणी कृता यत्समचतुरस्रं करोति तत्पञ्चविंशति क्षेत्रफलकं स्यात्। एवं षड्गुणया कृतं षट्त्रिंशत्क्षेत्रफलकमित्यादि ज्ञेयम् ॥७॥

वर्गस्य मूलाङ्कादधिकत्वेन दर्शनात् अर्धादिमानया रज्ज्वा कृतं समचतुरस्रमर्धादितोऽधिकप्रमाणं विज्ञाय अतिकारुणिकेन सूत्रकृता ये गणितं न विदुस्तान्प्रत्येतदुच्यते—

**अर्धप्रमाणेन पादप्रमाणं विधीयते ॥ ८ ॥**

अर्धमानया रज्ज्वा यत् क्षेत्रं समचतुरस्रीक्रियते तस्य अर्द्ध-मेता या रज्जुः, तया करण्या यावत्समचतुरस्रीक्रियते तावतः क्षेत्रस्य पादः = तुरीयो भागो भवति ॥ ८ ॥

**तृतीयेन नवमोंऽशः ॥ ९ ॥**

एवं करणीतृतीयेन भागेन करण्या कृतं समचतुरस्रं तत्करणी चतुरस्रान्नवमोंऽशो भवति त्र्यंशगुणात्, त्र्यंशो हि नवमोंऽशः ॥ ९ ॥

## चतुर्थेन षोडशी कला ॥१०॥

करणीचतुर्थांशेन करण्या कृतं समचतुरस्रं षोडशांशक्षेत्रफलकं भवति ॥१०॥

पादस्य नवमांशस्य षोडशांशादेश्च पृथुक्षेत्रादपकर्षः कथं कर्तव्य-स्तदाह—

## एष निर्ह्रासस्तस्य पुरस्तादुक्तं शास्त्रम् ॥११॥

एष निर्ह्रासः = अल्पक्षेत्रसाधनम्। तस्य निर्ह्रासस्य क्षेत्रात् क्षेत्रान्तरानयनस्य शास्त्रं "चतुरस्राच्चतुरस्रं निर्जिहीर्षन्" (३।१) इत्यादि पूर्वमुक्तम् ॥११॥

## यावत्प्रमाणा रज्जुर्भवतीति विवृद्धेर्ह्रासो भवति ॥१२॥

"अर्द्धप्रमाणेन पादप्रमाणम्" (३।८) इत्यादिना यः क्षेत्रस्य ह्रास उक्तः स कस्य, इत्यपेक्षायाम् "यावत्प्रमाणा रज्जुर्भवति तावन्तो वर्गा भवन्ति" (३।७) इति सूत्रेण या क्षेत्ररूपा वृद्धिरुक्ता, तस्या विवृद्धेरयं ह्रासो भवति। यथा—करणीचतुर्थांशेन चतुरस्रे कृते करण्या षोडशांशस्य समास इत्यादि ॥ १२ ॥

चतुरस्रस्य मण्डलकरणमाह—

## चतुरस्रं मण्डलं चिकीर्षन्मध्यादंसे निपात्य पार्श्वतः परिलिख्य तत्र यदतिरिक्तं भवति तस्य तृतीयेन सह मण्डलं परिलिखेत्स समाधिः ॥ १३ ॥

चतुरस्रं क्षेत्रं मण्डलं = वृत्तं कर्तुमिच्छन् मध्यात् = चतुर्भुज मध्यात् अंसे = चतुर्भुजकोणे सूत्रं निपात्य दत्वा = चतुरस्रे करण-सूत्रद्वये दत्ते सूत्रयोः संयोगस्थलं मध्यं स्यात्। ततो मध्यादारभ्य अंसान्तं पातिते अक्षण्यार्द्धरूपे सूत्रे पार्श्वतः = पार्श्वमानेन करण्य-र्धेन अङ्कयित्वा यदतिरिक्तम् = अङ्कनादधिको भागो भवति ( तं त्रेधा विभज्य ) तस्य शिष्टस्य तृतीयेनांशेन सह करण्यर्द्धं संवर्द्ध्य तन्मा-

नेन मण्डलं परिलिखेत्, स समाधिः = चतुरस्रस्य मण्डलकरण-प्रकारः (१) ॥ १३ ॥

मण्डलस्य चतुरस्रीकरणमाह—

**मण्डलं चतुरस्रं चिकीर्षन् विष्कम्भं पञ्चदश भागान्**
**कृत्वा द्वावुद्धरेच्छेषः करणी ॥ १४ ॥**

मण्डलं = वृत्तक्षेत्रं चतुर्भुजं चिकीर्षन् विष्कम्भं = वृत्तव्यासं पञ्चदश भागान् = अष्टादश भागान् कृत्वा द्वौ भागौ उद्धरेत् = त्यजेत्, शेषः = त्रयोदशभागरूपः करणी। तत्करणीकृतं समचतुरस्रं वृत्ततुल्य क्षेत्रफलं स्यात ॥ १४ ॥

इति समासनिरूपणी, तृतीया कण्डिका ॥३॥

---

अग्निचितीनिरूपयति—

**द्रोणचिद्रथचक्रचित्कङ्कचित्प्रउगचिदुभयतः**
**प्रउगः, समुह्यपुरीष इत्यग्नयः ॥१॥**

कात्यायनश्रौतसूत्रे षोडशेऽध्याये सुपर्णचितिश्चतुरस्रा विहिता, द्रोणचिदादयश्चानुक्ता अत्रोच्यन्ते। द्रोणश्च तुरस्रः। तदाकारा त्रितिर्द्रोणचित्। रथचक्रं वृत्तम्, तदाकारा वृत्ता चिती रथचक्रचित्। कङ्का = वको गगन उड्डीयमानः। तदाकारा चितिः कङ्कचित्। प्रउगः = शकटाङ्गं शकटस्याग्रभागःत्र्यस्रि, तदाकारा चितिः प्रउगचित्। उभयतस्त्र्यस्राकारा मध्यस्थूला चितिरुभयतः प्रउगचित्। अन्यत आनीय समूह्यः = समूहीकृतः पुञ्जीकृतः पुरीषं = मृत्तिका, तदिव चितिः स मह्यपुरीषचिदित्युच्यते। एतेऽग्नयः = यत्राग्निः प्रणीयते तानीष्टकाचितिस्थानानि बोध्यानि (२)। अत्रा-

---

(१) यथा—षोडशाङ्गुलस्य चतुरस्रस्य मध्यादंमान्तं कर्णसूत्रमेकादशाङ्गुलं भवति। तत्र पार्श्वमानार्धं ष्टाङ्गुलैश्छिन्ने कृते शेषमङ्गुलत्रयम्। तत्तृतीयो भागोऽङ्गुलम्। तत्सहितनाष्टाङ्गुलमानेन नवाङ्गुलरज्ज्वा मध्याद्वृत्ते कृतेऽष्टादशाङ्गुलं वृत्तं भवति। तच्च षोडशाङ्गुलचतुरस्रतुल्यक्षेत्रफलकं भवतीति।

(२) अग्निशब्देन इष्टकाभिः सम्पादितमग्न्याधारभूतं स्थण्डिलमुच्यते चितिः, चयनम्, अग्निचयनम् इत्यपि तस्यैव पर्यायाः।

नुक्ते शाखान्तरविहिते श्येनचित् अलजचितो अपि ऊह्ये। श्येनाकारा चितिः श्येनचित्। अलजः पक्षी, तदाकारा चितिरलजचित् ॥१॥

एवमग्नीनुद्दिश्य क्रमेण तेषां क्षेत्रसमासं विवक्षुर्द्रोणचिदाकार-साधनमाह—

**द्रोणे यावानग्निः सपक्षपुच्छविशेषस्तावत्समचतुरस्रं कृत्वा द्रोणदशमा त्रिभागा वृन्तमित्येके ॥२॥**

पक्षौ च पुच्छं च विशेषश्च पक्षपुच्छविशेषाः (१)। तैः सहितः सपक्षपुच्छविशेषः। द्रोणे द्रोणाकारे चतुरस्रेऽग्निक्षेत्रे कर्तव्ये पक्ष-पुच्छ-विशेषसहितो यावानग्निः = यावदग्निस्थानं सार्द्धसप्तपुरुषात्मकं, तत्प्रमाणकं चतुरस्रं कृत्वा तावत् नानाप्रमाणसमासविधिना समस्य, समसितस्य समचतुरस्रस्य द्रोणस्य दशमांशो वृन्तं वृन्ताकारं दण्डाकारं स्वल्पचतुरस्रं याजनीयमित्येके आचार्या अभिप्रयन्ति। एकग्रहणाद्विकल्पः ॥२॥

वृन्तकरणप्रकारं तद्योजनविधिं चाह—

**तद्दशमेनापच्छिद्यापच्छिद्यैकसमासेन समस्य निर्हृत्य सर्वमग्निं तथाकृतिं कृत्वा पुरस्तात्पश्चाद्वोपदध्यात् ॥३॥**

तत् = पूर्वोक्तं सार्धसप्तपुरुषात्मकं पक्षपुच्छविशेषयुतं समचतुरस्रमग्निक्षेत्रं समचतुरस्रं कृत्वा तस्य समचतुरस्रक्षेत्रभुजस्य दशमेन = दशमांशेन तिर्यङ्मानीं पार्श्वमानीं च दशधा अपच्छिद्यापच्छिद्य = विभज्य शतांशीकृत्य तत्र तिर्यङ्मान्योः पार्श्वमान्योर्वा प्रथमविभागान्तयो रज्जुप्रसारणेन चतुरस्रक्षेत्रभुजप्रमाणपार्श्वमानीकं तद्दशमांशतिर्यङ्मानीकं यदनिदीर्घक्षेत्रं दशमांशरूपं जायते

(१) चितिरियं सार्द्धसप्तपुरुषात्मिका, तत्र मध्ये द्विपुरुषायामं द्विपुरुषविस्तारं चतुरस्रं स्थण्डिलं निर्माय तत्संलग्नमेव दक्षिणपश्चिमोत्तरेषु त्रिष्वपि एकैकपुरुषविस्तारं दक्षिणोत्तरपार्श्वयोः सारत्निकैकैकपुरुषायाम, पश्चिमे च सवितस्तिकपुरुषायामं स्थण्डिलत्रयं निर्मातव्यम्। स्थण्डिलमिदं प्राङ्मुखं मन्तव्यम्। तस्य दक्षिणोत्तरयोर्ये स्थण्डिले, तयोः क्रमाद्दक्षिणोत्तरौ पक्षौ इति संज्ञा। पश्चिमस्य च पुच्छमिति व्यवहारः, मध्यभागस्य चात्मेति। अस्या एव चितेः सुपर्णचितिरिति नाम।

तत् एकसमासेन समस्य समचतुरस्रीकृत्य, एकीकृत्य, निर्हृत्य = "अतिदीर्घं चेत्" इत्युक्तविधिना (३।३) पृथक् कृत्वा, शिष्टं सर्वमग्नि तथाकृतिं = द्रोणाकारं कृत्वा निर्हृतंदशमांशं पुरस्तात्पश्चाद्वोपदध्याद्योजयेत् । अवशिष्टं चतुरस्रभुजपार्श्वमानीकं स्वदशमांशोनचतुरस्रं तत् = पूर्वोक्तभुजप्रमाणतिर्यङ्मानीकं नवभागात्मकं क्षेत्रं दीर्घचतुरस्राख्यं तथाकृतिं द्रोणाकृतिं समचतुरस्ररूपं कृत्वा तस्य समचतुरस्रस्य पुरस्तात्पश्चाद्वा वृन्तरूपं समचतुरस्रमुपदध्यात् योजयेत् मेलयेदिति यावत् ॥३॥

## मण्डलेऽप्येवम् ॥४॥

मण्डले = मण्डलाकारायां रथचक्रचितौ कङ्कचितावपि वृन्ताधानपक्षे = एवम् पूर्ववत् पक्षपुच्छसमासेन चतुरस्रं कृत्वा तद्दशमांशमपहृत्य चतुरस्रं पूर्वोक्तविधिना कृत्वा तमपि वृत्तं विधाय पुरस्तात्पश्चाद्वा योजयेत् । क्षेत्रदशमांशं वृन्तं "मण्डलं चतुरस्रं चिकीर्षन्" ( ३।१४ ) इत्यादिना वृत्तं सम्पाद्य पुरस्तात्पश्चाद्वोपदध्यात् । पक्षपुच्छविशेषसहितस्यात्मनोऽपि मण्डलता "मण्डलं चतुरस्रं चिकीर्षन्" (३।१४) इत्यनेनैव सम्पादनीयेति ॥४॥

प्रउगचितिमाह—

## प्रउगे यावानग्निः सपक्षपुच्छविशेषस्तावद् द्विगुणं समचतुरस्रं कृत्वा यः पुरस्तात्करणीमध्ये शङ्कू यौ च श्रोण्योः सोऽग्निः ॥५॥

प्रउगसंज्ञके त्र्यस्रेऽग्निक्षेत्रे कर्तव्ये यावत्प्रमाणकमग्निक्षेत्रं पक्षपुच्छविशेषसहितं, तत्प्रमाणकं समचतुरस्रं कृत्वा तद् द्विकरण्या द्विगुणितं कृत्वा समचतुरस्रं पुनर्विधाय तस्य द्विगुणरूपसमचतुरस्रक्षेत्रस्य करणीमध्ये पुरस्ताद्यः शङ्कुः, श्रोण्योश्च यौ शङ्कू, तच्छङ्कुत्रयमूलेषु सूत्रं निपात्य यत् त्र्यस्रिक्षेत्रं द्विगुणसमचतुरस्रार्धरूपं जायते सेयं प्रउगचितिः ।

अथाऽत्र अ. इ. उ, प्रउगक्षेत्रम् , यत्र क. तिर्यङ्मानीदलबिन्दुः, ततः अ. क, सूत्रप्रसारणेन अ. क. इ, अ. क. उ, इति त्र्यस्रिद्वयं

जातम्, तत्र अ. क. इ, त्र्यस्रि क्षेत्रस्य अ. ग. उ, रूपेण स्थापनेन अ. ग. उ. क, दीर्घचतुरस्रं प्रउगक्षेत्रसममिति स्पष्टमेवेति ॥५॥




उभयतः प्रउगचितिमाह—

## उभयतःप्रउगे तावदेव दीर्घचतुरस्रं कृत्वा करणीमध्येषु शङ्कवः स समाधिः ॥६॥

उभयतःप्रउगेऽग्नौ कर्तव्ये यावानग्निः, तत्प्रमाणकं सपक्षपुच्छं चतुरस्रं कृत्वा अथ तत्प्रमाणकमेव समचतुरस्रं तत्र पुरस्ताद्वर्धयित्वा विस्तारद्विगुणं दीर्घचतुरस्रं निष्पाद्य, ततस्तिर्यङ्मान्योः पार्श्वमान्योश्च मध्येषु चत्वारः शङ्कवो निखेयाः। तत्र सूत्रचतुष्के दत्ते = उभयतस्त्रिकोणा चितिर्भवति, स समाधिश्चितिप्रकारः ॥६॥

प्रउगस्य चतुरस्रीकरणोपायमाह—

## प्रउगं चतुरस्रं चिकीर्षन्मध्ये प्राञ्चमपच्छिद्य विपर्यस्येतरत उपधाय दीर्घचतुरस्रसमासेन समस्येत्स समाधिः ॥७॥

प्रउगं = त्रिकोणं चतुरस्रं = समचतुरस्रं कर्तुमिष्यते चेत् तदा मध्ये प्राञ्चं = पूर्वभागमपच्छिद्य = विभज्य तिर्यङ्मानीं द्विधा कृत्वा, ततः पूर्वत्रिकोणाग्रं यावत् सूत्रप्रसारणेन त्रिकोणद्वयं

जायते; तत एक त्रिकोण विपर्यस्य विपरीतं = पश्चिममुखं कृत्वा तथा निदध्यात् यथा पूर्वप्रउगक्षेत्रभुजोऽक्ष्णाया भवेत्। एवं कृते त्रिकोणद्वयसंयोगेन यद्दीर्घचतुरस्रं जायते तत्प्रउगक्षेत्रतुल्यम्। तद्दीर्घचतुरस्रं समचतुरस्रं कुर्यात्। एवं प्रउगक्षेत्रस्य समचतुरस्रीकरणं निष्पन्नम्, स समाधिः त्रिकोणस्य समचतुरस्रकरणप्रकारः ॥ ७ ॥

उभयतः प्रउगस्य चतुरस्रीकरणोपायमाह

**उभयतः प्रउगं चेन्मध्ये तिर्यगपच्छिद्य पूर्ववत्समस्येत् ॥८॥**

यदि उभयतः प्रगउं = त्रिकोणं समचतुरस्रं कर्तुमिष्यते तदा उभयतः त्र्यस्रिद्वययोगसूत्रस्य चतुरस्राकारस्य उभयतः प्रउगक्षेत्रस्य अक्ष्णयासूत्रद्वयप्रसारणेन उक्तक्षेत्रे चत्वारि त्र्यस्रिक्षेत्राणि उत्पाद्य एकैकं त्र्यस्रिक्षेत्रं स्वपार्श्वगतत्र्यस्रिक्षेत्रादितरतो विपर्यस्य तथा स्थापयेत् यथा प्रउगक्षेत्रभुजः अक्ष्णयारूपो भवेत्। एवं सति दीर्घचतुरस्रद्वययोगेन प्रउगक्षेत्रं लघ्वक्ष्णयार्द्धमतिदीर्घं बृहदक्ष्णया दीर्घचतुरस्रमुभयतःप्रउगक्षेत्रतुल्यं भवति। तद्दीर्घचतुरस्रं पूर्ववत्समचतुरस्रं कुर्यात्। एवमुभयतः प्रउगक्षेत्रस्य समचतुरस्रीकरणं निष्पन्नम्। अत्र अ. इ. उ. क. उभयतः प्रउगक्षेत्रम्, अ. उ, बृहदक्ष्णया, क. इ, लघ्वक्ष्णया, अ. उ. ग. प, अतिदीर्घसमचतुरस्रमुभयतःप्रउगक्षेत्र सममिति ॥ ८ ॥



## एतेनैव त्रिकर्णसमासो व्याख्यातः पञ्चकर्णानां च प्रउगेऽपच्छिद्य ॥ ६ ॥

एतेनैव प्रकारेण त्रिकर्णसमासः त्रिभुजाकारप्रउगक्षेत्रस्य समचतुरस्रीकरणप्रकारो व्याख्यातो भवतीत्यर्थः। यथा-प्राक् तिर्यङ्मानीकप्रमाणात् द्विगुणितपश्चात्तिर्यङ्मानीकं तुल्यपार्श्वमानीकद्वयं यत् समचतुरस्रं, ( वेदिरूपं ) तत् अंसाभ्यां पश्चात्तिर्यङ्मानीमध्यं यावत् सूत्रद्वयप्रसारणेन त्रीणि त्र्यस्राणि जायन्ते। तत्र त्र्यस्रिद्वयमूर्ध्वमुखम्, एकं चाधोमुखम्। ततः तेषां त्र्यस्रीणां समचतुरस्रीकरणं पूर्ववत्




यथाऽत्र अ. इ. उ. क, वेदीरूपं क्षेत्रम्, यत्र अ. इ, प्राक्तिर्यङ्मानीकम् उ. क, पश्चात्तिर्यङ्मानीकम्, अ क, इ. उ, पार्श्वमानीद्वयं, ग मध्यबिन्दुः। अ. ग, इ. ग, सूत्रप्रसारणेन अ. क. ग, क. इ. ग, इ. ग. उ, इति त्रिभुजत्रयं जायते। एवं पञ्चानां त्र्यस्रिक्षेत्राणां समचतुरस्रीकरणप्रकारो भवितुमर्हति। तत्र पञ्चापि त्र्यस्राणि समानि चेत् तदा द्वयोर्द्वयोस्त्र्यस्रिक्षेत्रयोर्योगेन उभयतः प्रउगक्षेत्रद्वयम्, एकं त्र्यस्रि क्षेत्रं च भवितुमर्हति। ततः पूर्ववत् उभयतः प्रउगक्षेत्रद्वयं समचतुरस्रीकृत्य शिष्टं त्रिभुजं च पूर्ववदेव समचतुरस्रीकुर्यात्। ततस्तेषां समचतुरस्राणां योगरूपमेकं समचतुरस्रं निष्पादयेदिति। एवं पञ्चकर्णानां समचतुस्रीकरणप्रकारो निष्पद्यते। यदि त्र्यस्रिक्षेत्राणि विषमानि स्युस्तदा पृथक् पृथक् प्रउगक्षेत्रसमचतुरस्रीकरणरीत्या पञ्चापि समचतुरस्राणि निष्पाद्य तानि एकसमासेन समस्येत्।

अत्र द्वयोर्द्वयोस्त्र्यस्रिक्षेत्रयोर्योगेन एकैकमुभयतः प्रउगक्षेत्रं, शिष्टं च त्र्यस्रिक्षेत्रमेकमिति ॥६॥



**एककर्णानां द्विकर्णानां च समचतुरस्रेऽपच्छिद्य ॥१०॥**

एककर्णानां = तुल्यकर्णानां पञ्चानां त्र्यस्रीणां प्रउगेऽपच्छिद्योक्त रीत्या समासः। द्विकर्णानां च समचतुरस्रे वृद्धकरणीमपच्छिद्य नाना प्रमाणेत्युक्तविधिना समासः कार्यः ॥ १० ॥

इति शुल्बवृत्तौ चितिनिरूपणी चतुर्थी कण्डिका ॥४॥

---

"द्विपुरुषां रज्जुं मित्वा" (१६।८) इत्यादिना प्रथमाग्निक्षेत्रस्य सप्तविधस्य साधनं श्रौतसूत्रे उक्तम्। अतोऽत्र द्वितीयादिषु अष्टविधाद्यग्निक्षेत्रेषु पुरुषाभ्युच्चयं वक्तुमुपक्रमते—

**उत्तरेषु पुरुषोच्चयेनैकशतविधादित्येतद्व्याख्यास्यामः ॥१॥**

श्रौतसूत्रे (१६।८।१) सार्द्धसप्तपुरुषात्मकमग्निमुक्त्वा "उत्तरेषु पुरुषोच्चयेनैकशतविधात्" (१६।८।२०) इति यदुक्तम्, एतत्पुरुषोच्चयविधानं विविच्य कथयिष्यामः। उत्तरेषु द्वितीयादिषु चयनेषु एकशतविधान्तेषु एकैकपुरुषवृद्ध्या अग्निक्षेत्रं निर्मातव्यम्। तत्राद्योऽग्निः सार्द्धसप्तपुरुषक्षेत्रफलकः सप्तविधः। द्वितीयोऽष्टविधः, तृतीयो नवविधः, इत्याद्येकशतविधपुरुषपर्यन्तं पञ्चनवतिः। अश्वमेधे च द्वावन्यौ द्विगुण-त्रिगुणसंज्ञौ वक्ष्यमाणौ। एवं सप्तनवतिरग्निचयनभेदाः। एवं पुरुषोच्चयो य उक्तस्तं वक्ष्यामः (१) ॥ १ ॥

---

(१)। द्वितीयादिषु चयनेषु पञ्चनवतितमचयनं यावत्प्रतिचयमेकैकपुरुषवृद्ध्याऽग्निक्षेत्रस्य मानं कर्तव्यम्। प्रथमपुरुषे सार्द्धसप्तपुरुषप्रमाणमग्निक्षेत्रम्, द्वितीये अष्टपुरुषप्रमाणं, तृतीये नवपुरुषप्रमाणम्, एवं पञ्चनवतितमे चयने एकाधिकं शतं पुरुषा भवन्ति। अर्धपुरुषमानं तु सर्वत्राधिकमस्त्येव। इदमेव विशेषशब्देन अधिमानशब्देन च व्यवह्रियते। तस्यापि प्रतिचयनं स्वसप्तमभागेन वृद्धिर्भवत्येव। अन्तिमे चयने तस्याप्येकोत्तरशतं स्वसप्तमभागा भवन्ति। अग्निक्षेत्रवदेव द्वितीयादिषु चयनेषु वेदिप्रमाणमपि वर्द्धनीयम्। इष्टकानां च सर्वासां प्रमाणं वर्द्धनीयम्, न तु तासां सङ्ख्याधिक्यमाश्रित्य क्षेत्रपूरणम्।

तत्रादावाश्वमेधिकं चयनद्वयमाह—

**आद्योऽग्निर्द्विगुणस्त्रिगुणो भवतीति सर्वसमासः ॥२॥**

आद्यः प्रथमोऽग्निः सार्द्धसप्तपुरुषक्षेत्रफलको द्विगुणो द्विकरण्या द्विगुणः, त्रिकरण्या त्रिगुणश्च इत्येवं सर्वसमासः = सर्वस्य पक्ष-पुच्छसहितस्य क्षेत्रस्य समासः कर्त्तव्यः। अयमर्थः—सार्द्धसप्त पुरुषक्षेत्रफलकः, एवं पञ्चदशपुरुषात्मकः सार्द्धद्वाविंशतिपुरुषात्मकश्चाग्निर्भवितुमर्हति। तत्र आत्मादिविशेषविधानमाह—तत्र यथा पूर्वाग्नौ पुरुषचतुष्टयात्मक आत्मा निर्दिष्टः स च द्विपुरुषरज्ज्वा संभवितुमर्हति, तथाऽत्रापि द्विपुरुषरज्ज्वा निर्मितसमचतुरस्रस्य क्षेत्रस्य-अक्ष्णयारूपया द्विकरण्या निर्मितं समचतुरस्रं क्षेत्रमष्टपुरुषात्मकं द्विगुणक्षेत्रस्य आत्मा भवितुमर्हति। एवं त्रिकरण्या रज्ज्वा निर्मितं समचतुरस्रं द्वादशपुरुषात्मकं त्रिगुणक्षेत्रस्यात्मा भवितुमर्हति। अथ च आद्याग्नेः पक्षौ सपञ्चमांशपुरुषात्मकौ निर्दिष्टौ, तथाऽत्रापि। तौ च पुरुषविस्तारेण सपञ्चमांशपुरुषदैर्घ्येण निष्पन्नौ; तथाऽत्रापि द्विगुणपुरुषपञ्चमांशयुतपुरुषद्वयतुल्यौ। एवं द्विगुण-त्रिगुणाग्नेरात्मादिविधानं च निष्पद्यते ॥ २ ॥

आद्योऽग्निर्द्विगुणस्त्रिगुण एकविंशतिविधो वा" (का. श्रौ. २०।४।१५) इत्यश्वमेधे उक्तम्। तत्र द्विगुणत्रिगुणावग्नी उक्तौ। अथैकविंशतिविधमाह—

**एकविंशतिविधो भवतीति पुरुषाभ्यासः ॥ ३ ॥**

अश्वमेधे "एकविंशतिविधो भवति" इत्युक्तम्। तत्र पुरुषाभ्यासः कार्यः। प्राकृतसप्तविधसार्धपुरुषात्मकेऽग्नौ एकैकपुरुषाभ्यासेनाष्टविधादिषु जायमानेषु चतुर्दशपुरुषाभ्यासेनैकविंशतिविधः सम्पादनीयः। तद्यथा—सार्धसप्तपुरुषात्मकेऽग्नौ एकपुरुषप्रक्षेपेणाष्टविधः, द्विपुरुषाभ्यासेन नवविधः, त्रिपुरुषाभ्यासेन दशविधः, एवं क्रमेण एकैकपुरुषवृद्ध्या चतुर्दशपुरुषाभ्यासेन एकविंशतिविधोऽग्निर्भवति ॥ ३ ॥

पुरुषाभ्यासप्रकारमेवाह—

**पुरुषाभ्यासे यावानग्निः सपक्षपुच्छविशेषस्तावत्समचतुरस्रं कृत्वा तस्मिन् पुरुषप्रमाणमवदध्यात् ॥ ४ ॥**

पुरुषाभ्यासे कर्तव्ये यावान् पूर्वोक्तोऽग्निः सार्धसप्तपुरुषात्मकः सपक्षपुच्छविशेषः पक्षाभ्यां पुच्छेन विशेषेण = अधिमानेन च सहितः तत्प्रमाणं समचतुरस्रं नानाप्रमाणसमासविधिना कृत्वा तस्मिन् समचतुरस्रीकृतेऽग्नौ पुरुषप्रमाणं = पुरुषप्रमाणं क्षेत्रमवदध्यात् = नानाप्रमाणसमासविधिनैव प्रक्षिपेत्। एवं सार्द्धाष्टपुरुषात्मकं चतुरस्रं स्यात्। तद्यथा—सार्द्धसप्तपुरुषात्मकेऽग्नौ पुरुषचतुष्टयात्मकं समचतुरस्रं पुरुषद्वयरज्जुरूपकरण्या निर्मितमात्मपदवाच्यम्। षडरत्निदीर्घं पञ्चारत्निविस्तृतं क्षेत्रद्वयं पक्षपदवाच्यम्। सार्द्धपञ्चारत्निदीर्घं पञ्चारत्निविस्तृतं क्षेत्रं पुच्छपदवाच्यम्। एतेषां योगेन सार्द्धसप्तपुरुषात्मकमग्निक्षेत्रं भवति। अतः पक्षरूपं दीर्घचतुरस्रद्वयं पूर्वोक्त प्रकारेण समचतुरस्रीकृत्य द्विकरण्या द्वयमप्येकसमासेन समस्य, एवं पुच्छरूपदीर्घचतुरस्रमपि समचतुरस्रीकृत्य द्वयमपि आत्मरूप पुरुषचतुष्टयात्मकसमचतुरस्रेण तयैव दिशा समस्येत्। एवं निष्पन्नं समचतुरस्रं सार्द्धसप्तपुरुषात्मकं भवति। ततस्तस्मिन् समचतुरस्रे पुरुषप्रमाणं = पुरुषमात्रदैर्घ्यविस्ताराभ्यां निर्मितं समचतुरस्रमवदध्यात् = समस्येत् समस्य चतुरस्रीकुर्यात्, तदा सार्द्धाष्टपुरुषफलकं समचतुरस्रं भवितुमर्हति। एवमेकपुरुषाभ्यासो निष्पन्नः। एवमेव द्वित्र्यादिपुरुषाभ्यासप्रकारो बोध्यः ॥ ४ ॥

द्वितीये चयने कियान् पुरुषभागः प्रक्षिप्त इत्याशङ्कायां तत्र क्षिप्तं पुरुषमानं पृथग्दर्शयति—

## समस्तं पञ्चदश भागान् कृत्वा द्वावेकसमासेन समस्येत्स पुरुषः ॥ ५ ॥

समस्तं = पुरुषाभ्यासविशिष्टं समचतुरस्रं सार्द्धाष्टपुरुषफलकं पञ्चदश भागान् समान् कृत्वा अर्थात् तिर्यङ्मानीं पार्श्वमानीं वा पञ्चदशधा विभज्य तत्तद्विभागान्तेभ्यः सूत्रप्रसारणेन पञ्चदशांशतिर्यङ्मानीकानि समचतुरस्रभुजपार्श्वमानीकानि पञ्चदश चतुरस्राणि उत्पाद्य तत्र द्वौ भागौ उक्तदीर्घपञ्चदशचतुरस्रे चतुरस्रद्वयमेकसमासेन समस्य समचतुरस्रीकुर्यात्, स पुरुषः = तत् पुरुषप्रमाणमित्यर्थः। अत्र पञ्चदशांशोऽष्टाङ्गुलविस्तारं विंशत्यधिकशताङ्गुलदीर्घं क्षेत्रं दीर्घचतुरस्रात्मकं भवति। तद् द्वयं समचतुरस्रीकृतपुरुषप्र-

माणां द्वितीयचयने वर्धते । आ एकशतविधादेवमेव पञ्चदशभागद्वयेन वृद्धिर्भवति । तद् द्वितीयचयनादौ पञ्चदशभागद्वयमर्धाष्टमविभाग-रूपं भवति तत्समचतुरस्रं पुरुषद्वयात्मकमवधेयम् । अतस्तत्करणी पुरुषः स्यादिति । अर्थात् एतादृशेन पुरुषप्रमाणेन "द्विपुरुषां रज्जुं मित्वा" इत्यादिना आद्याग्नौ आत्मादिनिर्माणवत् आत्मादिकं निर्मेय-मिति । एवमेव द्वित्रादिपुरुषाभ्यासविशिष्टे सार्द्धनव-सार्द्धदशा-दिफलके समचतुरस्रेऽपि पुरुषप्रमाणमभ्युपगन्तव्यमिति ॥ ५ ॥

पुरुषप्रमाणस्य पृथग्दर्शने प्रयोजनमाह—

## तस्य दशमेन पादमात्री भवति, पञ्चमेन बृहती ॥६॥

तस्य समचतुरस्रीकृतस्य पुरुषप्रमाणस्य दशमेन = दश-मांशेन पादमात्री इष्टका स्यात् । पुरुषकरणी दशमो भागः पद्ये-त्यर्थः । करणीक्षेत्रफलशततमो भाग इति यावत् । पञ्चमेन = पुरुष करणीपञ्चमभागेन क्षेत्रफलपञ्चविंशतिभागेन बृहती नामेष्टका स्यात् । पद्या-बृहत्योः कथनमन्यासामिष्टकानामप्युपलक्षणम् ॥ ६ ॥

पुरुषवर्द्धने द्वितीयं प्रकारमाह—

## पुरुषं वा पञ्चमेनोभयतोऽपच्छिद्य पञ्च भागान्त्समस्य तृतीयं तृतीयं निर्हृत्य पुरुषप्रमाणेऽवदध्या दित्यपरम् ॥७॥

अथवा पुरुषं = पुरुषप्रमाणकं समचतुरस्रं पञ्चमेन = पञ्चम-भागेन अपच्छिद्य विभज्य पुरुषप्रमाणकक्षेत्रस्य तिर्यङ्मानीं पार्श्व-मानीं च पञ्चधा विभज्य पञ्चविंशतिं कोष्ठान् कृत्वा तन्मध्ये पञ्च-भागान् पञ्चकोष्ठान् समस्य समचतुरस्रीकुर्यात् । ततः तृतीयं तृतीयं निर्हृत्य = पञ्चकरणीकृतं चतुरस्रं त्रिधा कृत्वा स्वतृतीयभागं तत्स्मात्स्वसमचतुरस्रादपहृत्य निष्काश्य शिष्टं भागद्वयं समतुरस्रो कृत्य तस्मिन्पुरुषप्रमाणे क्षेत्रे समस्येत् नानाप्रमाणसमासविधिना समचतुरस्रीकुर्यात् । तत्समचतुरस्रं पुरुषप्रमाणकमभ्युपगन्त-व्यम् । तस्य करणी पुरुषप्रमाणमित्यर्थः । सोऽष्टविधादौ पुरुषो भवति । अस्मिन्नपि पक्षे पुरुषक्षेत्रस्य पञ्चमो भागश्चतुर्विंशत्यङ्गुल-विस्तारो विंशतिशताङ्गुलदीर्घश्च चतुरस्रो भवति । तस्मात्तृतीये भागे

निष्काशिते षोडशाङ्गुलविस्तारं विंशतिशताङ्गुलदीर्घं क्षेत्रं भवतीति तावदेवायाति। तस्य दशमेन पादमात्री पञ्चमेन बृहतीत्यत्रापि समानः ॥ ७ ॥

पुरुषं पञ्चदश भागान् कृत्वेत्यत्र पञ्चदशमो भागः कियान् भवतीति स्पष्टयितुमाह—

पञ्चदशभागोऽष्टाङ्गुलम् ॥८॥

पुरुषकरण्याः पञ्चदशो भागोऽष्टाङ्गुलात्मकः स्यात्। तद् द्वयं षोडशाङ्गुलविपुलं विंशतिशताङ्गुलदीर्घं क्षेत्रम्। तदावापे कृते पुरुषो वर्द्धितो भवति ॥ ८ ॥

वितस्त्यङ्गुलपदशब्दानां लोकप्रसिद्धानां मानमाह—

पञ्चारत्निर्द्विदशवितस्तिर्विंशतिशताङ्गुलः पुरुष इत्येतस्माद् द्वादशाङ्गुलं पदमिति च ॥९॥

पञ्चारत्नयो यस्य, दश वितस्तयो यस्य, विंशतिशतमङ्गुलानि यस्य स पुरुष इत्यरत्न्यादिमानमेतस्मात्पुरुषाद् ज्ञेयम्। पदं च द्वादशाङ्गुलमित्यपि ज्ञेयम् ॥ ९ ॥

पुरुषवर्द्धने तृतीयं प्रकारमाह—

पुरुषं वा सप्तमेनोभयतोऽपच्छिद्य सप्त भागान्त्समस्य सप्तमभागमङ्गुलं निर्हृत्य पुरुषप्रमाणेऽवदध्यादित्यपरम् ॥१०॥

अथवा पुरुषं = पुरुषप्रमाणकं समचतुरस्रक्षेत्रं सप्तमेन स्वसप्तमांशेन उभयतोऽपच्छिद्य विभज्य सूत्रप्रसारणेन एकोनपञ्चाशत् सम कोष्ठान् निष्पाद्य तन्मध्ये सप्त भागान् पुरुषसप्तमांशरूपान् समस्य समचतुरस्रीकृत्य सप्तमभागमङ्गुलं निर्हृत्य = सप्तमभागेनाङ्गुलसप्तमांशेन सहितमङ्गुलमेकविंशतिशताङ्गुलदीर्घं क्षेत्रं समचतुरस्रीकृत्य=समसितसप्तमांशरूपसमचतुरस्रात् निष्काश्येत्यर्थः। शिष्टं समचतुरस्रीकृत्य तस्मिन् पुरुषप्रमाणके क्षेत्रेऽवदध्यात् = समस्य चतुरस्रीकुर्यात इत्यपरं पुरुषविधानम्। अयमर्थः। अङ्गुलसप्तमांशसहितां सप्तदशा

ङ्गुलविस्तारां विंशतिशताङ्गुलदीर्घां भूमिं दार्घचतुरस्ररूपां समचतुरस्रीकृत्य सप्तमांशसहितमङ्गुलं तस्मात् सप्तमभागकृतचतुरस्राद्पनीय शेषं समचतुरस्रीकृत्य नानाप्रमाणसमासविधिना पुरुषप्रमाणक्षेत्रे आवपेत्। स वर्द्धितसार्द्धसप्तमांशः पुरुष इति। अस्मिन्नपि पक्षे पूर्वप्रकारद्वयोक्तमेवायाति। तथाहि—पुरुषक्षेत्रस्य सप्तमो भागोऽङ्गुलसप्तमभागयुक्तसप्तदशाङ्गुलविस्तारं विंशतिशताङ्गुलदीर्घक्षेत्रं, तस्मात् सप्तमभागेऽङ्गुलेऽपनीते षोडशाङ्गुलविस्तारं विंशतिशताङ्गुलदीर्घं क्षेत्रमवशिष्यत इति। तद्दशमांशेन पादमात्री भवतीत्याद्यपि समानम्। नवविधादिष्वप्येवमेव बोध्यम् ॥१०॥

अधिमानरूपाणामरत्निवितस्तीनां पुरुषे प्रक्षेपो न कार्य इत्याह—

**नारत्निवितस्तीनाꣳ समासो विद्यते सङ्ख्यायोगात्॥११॥**

अरत्निवितस्तीनां समासः=पुरुषमध्ये प्रक्षेपो नास्ति। अधिमानभूता या अरत्नि-वितस्तयः, तासां पृथग्वर्द्धनस्योक्तत्वात्पुरुषाणामेव वर्द्धनं, नारत्न्यादीनाम्। कुतः? संख्यायोगात्=अष्टानवतिविधे चयने "चतुर्दशारत्नीन् दक्षिणे पक्ष उपदधाति चतुर्दशोत्तरे चतुर्दश वितस्तीः पुच्छ उपदधाति" इति श्रुत्याऽरत्न्यादिषु वर्द्धं नार्थसंख्यायोगः पृथगुच्यते। अतः सप्तविधे एकविंशतिविधेऽष्टानवतिविधे एकशतविधे पुंसामेवोच्चयो, नारत्न्यादीनामिति (१) ॥११॥

एकशतविधप्रकारदर्शनेऽष्टानवतिविधे एवाग्नौ तदधिक साधिमानपुरुषत्रयस्य विविच्य निवेशनमाह—

**अथ त्रिपुषाꣳ रज्जुं मिमीते ताꣳ सप्तधा समस्यति तस्यै चतुरो भागानात्मन्नुप दधाति त्रान्पक्षपुच्छेषु ॥१२॥**

त्रिपुरुषां=त्रिपुरुषमितफलसाधनकां रज्जुं मित्वा तया रज्ज्वा त्रिपुरुषफलकं चतुरस्रं विधाय तत् सप्तधा विभज्य चत्वारो भागा अष्टनवतिविधाग्नेरात्मनि षट्पञ्चाशत्पुरुषात्मके प्रक्षेप्याः। एकैको

(१) अत्र रामचन्द्रवाजपेयिनः—ये त्वेतसूत्रार्थमजानन्तः शुद्धपुरुषमात्रवृद्धिमाहुः, ते श्रुतिं विप्लावयन्ति इत्युपेक्ष्याः। न ह्यनेन सूत्रेणाधिमानस्य वृद्धिरेव निषिध्यते किन्तु पुरुषमध्ये क्षेपमात्रं निषिध्यते, पृथग्वर्धनं तु स्यादेवेति।

भागः अरत्निवितस्तिरहिते चतुर्दशपुरुषात्मके अष्टानवतिविधाग्नेः पक्षपुच्छे ज्ञेय्यः। एवं सति पुरुषसप्तमांशेन पञ्चगुणेन सहितः सप्त-पञ्चाशत्पुरुषा एकशतविधाग्नेरात्मा भवति। पुरुषसप्तमांशेन त्रिगु-णेन सहितश्चतुर्दशपुरुषः प्रत्येकं पक्षौ पुच्छश्च भवति। एवं सर्वयोगेन एकशतपुरुषात्मक एकशतविधोऽग्निः। ततः पक्षपुच्छेषु स्वकीयार-त्निवितस्तिवर्द्धनेन अष्टोत्तरशतपुरुषात्मक एकशतविधोऽग्निर्भवतीति अरत्निवितस्तिवर्द्धनं पृथगुक्तम् ॥१२॥

इति शुल्ववृत्तौ पुरुषोच्चयनिरूपणी पञ्चमी कण्डिका ॥५॥

---

**यथाऽग्निवेदीष्टकाप्रमाणं वर्द्धत इत्येतद्वक्ष्यामः ॥१॥**

"यथाऽग्नि वेदीष्टकाप्रमाणं (१६।८।२१) इति यत् श्रौतसूत्रे उक्तं, तद्वक्ष्यामः = वृद्धिप्रकारं कथयिष्याम इत्यर्थः। कल्पसूत्रस्या-यमर्थः। वेदिश्च इष्टकाश्च वेदीष्टकाः, तासां प्रमाणं यथाऽग्नि = अग्निमानमनतिक्रम्य अग्निक्षेत्रप्रमाणं यथा वर्द्धते तथा वेदि प्रमाणमिष्टकाप्रमाणं च वर्द्धते। वेदिवृद्धिं विना वर्द्धितस्याग्नेर्मानाऽ-संभवात्। अवर्द्धिताश्चेष्टका वर्द्धितमग्निक्षेत्रं न पूरयन्ति इति वेदे रिष्टकानां च यथाऽग्नि वर्द्धनं भवति ॥१॥

वेदिवर्धनं प्रक्रमवर्धनेनैव भवतीति चरमे चयने प्रक्रममाह—

**या करणी चतुर्दश प्रक्रमान्त्संक्षिपति त्रींश्च प्रक्रमसप्तम भागान्त्स एकशतविधे प्रक्रमः ॥ २ ॥**

या करणी चतुर्दश क्षेत्राणि, त्रीन् = त्रिगुणितान् प्रक्रमसप्तम भागान् प्रक्रमपरिमितक्षेत्रसप्तमांशांश्च सङ्क्षिपति एकीकरोति समचतुरस्रीकरोति तादृशकरणीरूपः प्रक्रम एकशतविधेऽग्नौ अन्तिमे चयने बोध्यः (१)। तत्साधनप्रकारो यथा—प्रक्रमद्वय

---

(१) इष्टकानिर्माणप्रकारः। पूर्वं यजमानेनोर्ध्वबाहुना प्रपदोच्छ्रितेन वा समं वंशं मिनुयात् स पुरुषः। तस्य पुरुषप्रमाणस्य द्वात्रिंशांशं तत्र वर्धयित्वा वंशं तावत्प्रमाणं कुर्यात्। "ह्रसते पाकशोषाभ्यां द्वात्रिंशद्भागमिष्टका। तस्मादार्द्रप्रमाणं तु कुर्यान्मानाधिकं बुधः" इति श्लोकशुल्बे वचनादार्द्राणा-मिष्टकानां पाकात् शोषाच्च द्वात्रिंशांशो ह्रासो भवति। "इष्टका पाक-शोषाभ्यां

त्रिंशन्मात्रा तु हीयते" ( का० शु० कं० ९ सू० २३ ) इति वचनान्तराच्च पुरुषे पुरुषद्वात्रिंशांशं वा त्रिंशांशं वा वर्द्धयित्वा इष्टकायन्त्रनिर्माणं कुर्यात्। रामचन्द्र-वाजपेयिनस्तु " अयं द्वात्रिंशांशह्रासः पादभागाविषयः। तेन पद्यायां द्वौ द्वात्रिंशांशौ, जङ्घामात्र्यां त्रयो द्वात्रिंशांशाः, बृहत्यां वक्रासु च चत्वारो द्वात्रिंशांशा वर्द्धनीयाः। एवमर्द्धबृहतीनां त्रिग्राहिण्यां च ह्रासादिकमूह्यमित्याहुः। ततस्तं वंशं दशधा विभज्य चिन्हानि कुर्यात्। एवं तस्य वंशस्य दशमो भागः पदसंज्ञको भवति, पदस्य द्वादशांशोऽङ्गुलमिति। अत्रेष्टकाश्चतुर्दशविधा भवन्ति। पद्या, अर्द्धपद्या, पादोनपद्या, जङ्घामात्री, अध्यर्द्धा, अर्द्धोत्सेधा पद्या, अर्द्धोत्सेधा अर्द्धपद्या, पादभागा, त्रिग्राहिणी, अर्धपादभागा, बृहती, वक्रा, अर्द्धबृहती, चतुर्भागा, इति। तत्र द्वादशाङ्गुलसमचतुरस्राः पद्याः, द्वादशाङ्गुदीर्घाः षडङ्गुविस्तृताः अर्द्धपद्याः, द्वादशाङ्गुलसमचतुरस्राः एकेन पादेन ( कोणेन ) न्यूनाः =त्रुटिताः पादोनपद्याः, अष्टादशाङ्लसमचतुरस्रा जङ्घामात्र्यः, अष्टादशाङ्गुलदीर्घा द्वादशाङ्गुलविस्तृता अध्यर्द्धाः,द्वादशाङ्गुलसमचतुरस्रास्त्र्यङ्गुलोच्चा द्व्यङ्गुलोच्चा वा अर्द्धोत्सेधापद्याः, द्वादशाङ्गुलदीर्घाः षडङ्गुविस्तृतास्त्र्यङ्गुलोच्चा द्व्यङ्गुलोच्चा वा अर्द्धोत्सेधा अर्द्धपद्याः, षडङ्गुलसमचतुरस्राः पादभागाः, चतुर्विंशत्यङ्गुलदीर्घाः अष्टादशाङ्गुलविस्तारास्त्रिग्राहिण्यः, षडङ्गुलदीर्घास्त्र्यङ्गुलविस्तृता अर्द्धपादभागाः, चतुर्विंशत्यङ्गुलसमचतुरस्रा बृहत्यः, चतुर्विंशत्यङ्गुलदीर्घा द्वादशाङ्गुलविस्तृता अर्द्धबृहत्यः, त्र्यङ्गुलसमचतुरस्राश्चतुर्भागा इति। उच्चता तु षडङ्गुलमिता सर्वासां चतुरङ्गुलमिता वा। अर्धोत्सेधापद्याऽर्द्धोत्सेधार्द्धपद्ययोस्तु द्व्यङ्गुलं त्र्यङ्गुलं वोच्चत्वम्। वक्राणां प्रमाणसाधनोपायस्त्वेवम्। पूर्वमर्द्धव्यासेन व्याममात्रप्रमाणं वृत्तं विलिख्य तन्मध्ये चतुर्विंशत्यङ्गुलं समचतुरस्रं साधयित्वा तस्य कोणेषु कोणादारभ्य वृत्तं यावद्रेखाः कुर्यात्, एवं चतुरस्रस्य दिश आरभ्य वृत्तं यावत् रेखा दद्यात् , एवं कृते अष्टौ वक्रा विभागा जायन्ते। एतादृशं क्षेत्रं विलोक्य वक्रदारुघट्टनेन वक्रेष्टकानां प्रमाणं निष्पादनीयम्। सर्वासु इष्टकासु अङ्गुलिकाष्ठादिना त्रीणि त्रीणि चिन्हानि कार्याणि। तानि च चिन्हानि वक्राणि, ऋजूनि, तिरश्चालिखितानि च तासु तास्विष्टकासु कार्याणि। तत्र वक्राणि चिन्हानि ⌣ ⌣ ⌣ एतादृशानि भवन्ति। ऋजूनि च ।।। एतादृशानि, तिरश्चालिखितानि च --- एतादृशानि कार्याणि। अथेष्टकानां सङ्ख्या—तत्र एकादश सहस्राणि एकशतं च सप्तत्यधिकं समग्रा इष्टकाः १११७०। तत्र दश सहस्राणि अष्टौ शतानि च लोकम्पृणाः १०८००। त्रीणि शतानि सप्तत्यधिकानि यजुष्मत्यः। ( शतपथे तु दर्भस्तंब-दूर्वेष्टका-स्वयमातृण्णा-कूर्मोलूखलाद्याः पञ्चविंशसङ्ख्या इष्टका आसां मध्येऽधिकाः पठित्वा त्रीणि शतानि पञ्चनवतिर्यजुष्मत्य उक्ताः। एताः पञ्चविंशतिरिष्टकास्तिस्रो नैर्ऋत्यश्चोक्तसङ्ख्यातोऽधिकाः)। उक्तेष्टकानां मध्ये नव सहस्राणि द्वे शते द्वाषष्ट्यधिके ९२६२ पादभागाः तत्र वक्रालिखिताः पादभागाः १७३२, ऋज्वालिखिताः पादभागाः ७५३०। अर्द्धपादभागाः

तिर्यङ्मानीकं सप्तप्रक्रमपार्श्वमानीकं दीर्घचतुरस्रं चतुर्दशप्रक्रमफलकं निर्माय तत्समचतुरस्रीकुर्यात् । तेन चतुर्दशफलकं समचतुरस्रं स्यात् । एवं त्र्यङ्गुलसप्तमांशयुतपञ्चदशाङ्गुलविस्तारं षट्त्रिंशदङ्गुलदीर्घचतुरस्र प्रक्रमक्षेत्रस्य त्रिगुणितसप्तमांशरूपं समचतुरस्रीकुर्यात् । ततोऽनयोः समचतुरस्रयोः समासे या करणी सा चतुर्दश प्रक्रमान् त्रींश्च प्रक्रमसप्तमभागांश्च सङ्क्षिपति । अतः सैव करणी एकशतविधेऽग्नौ प्रक्रमः (१) ॥ २ ॥

---

षट् शतान्यष्टसप्तत्यधिकानि । तत्र—वक्रालिखिता अर्द्धपादभागाः २६२, ऋज्वालिखिता अर्द्धपादभागाः ४१६ । चतुर्भागा द्वादश । तत्र वक्रालिखिताश्चत्वारः, ऋज्वालिखिता अष्टौ । पद्याः सप्तशतानि सप्तसप्तत्यधिकानि । तत्र—पूर्णोत्सेधाः पद्याः ७५९, अर्द्धोत्सेधाः पद्याः १८ । अर्द्धपद्या अष्टाशीतिशतम् । तत्रार्द्धोत्सेधा द्वादश । तत्र चतस्रस्तिरश्चालिखिताः, अष्टौ ऋज्वालिखिताः । तिरश्चालिखिताः सप्तविंशतिः । तासां मध्ये चतस्रोऽर्द्धोत्सेधाः, त्रयोविंशतिः पूर्णोत्सेधाः । शेषा ऋज्वालिखिताः, वक्रालिखिते अर्धपद्ये द्वे इति । जङ्घामात्र्यः ५०, त्रिग्राहिण्यः ७०, वक्राः ८, अध्यर्द्धाः १११, बृहत्यः ६ वा ७, अर्द्धबृत्यः ४, पादोने २ इति ।

इयमिष्टकानां सङ्ख्या उपधानकालीना । निष्पादनकाले सर्वा इष्टका उक्तसङ्ख्यातोऽधिकाः कारयितव्याः । यथा भेदनादिनाऽल्पा न भवेयुः ।

( १ ) अयमर्थः—त्रिपदकरणीकसमचतुरस्रस्य यः सप्तमोऽशः षट्त्रिंशदङ्गुलायामोऽङ्गुलसप्तमांशसहितपञ्चाङ्गुलविस्तारो भूभागः कृतः, पञ्चदशाङ्गुलानि त्रिसप्तमभागयुतानि विस्तारे षट्त्रिंशदङ्गुलान्यायामे भवन्ति । तं चतुरस्रीकृत्य या करणी चतुर्दशगुणं त्रिपदकरणीकं संक्षिपति तत्करणीके चतुरस्रे नानाप्रमाणसमासविधिना तं प्रक्षिपेत् । तत्क्षेत्रस्य करणी एकशतविधे चयने प्रक्रमवाच्या । तेन प्रक्रमेण प्रकृतिवद्वेदिः साध्या । स चान्तिमचयनप्रक्रमः, किंचिदूनसप्तत्रिंशदधिकशताङ्गुलप्रमितो भवति । तच्चैवं विधेयम् । पूर्वमग्निक्षेत्रं सार्द्धसप्तपुरुषात्मकं समचतुरस्रीकृतं स्वसप्तमभागेन द्वितीयचयने वर्द्धयेत् । एवं तृतीयादिष्वपि एकैकोच्चयेन स्वसप्तमभागवृद्धिः । तृतीये द्वौ सप्तमभागावधिकौ, चतुर्थे त्रयः, पञ्चमे चत्वारः, षष्ठे पञ्च, सप्तमे षट् । अष्टमे प्रथमक्षेत्रस्य द्विकरणी । एवं क्रमेण पञ्चनवतितमे चयने चतुर्णवतिः सप्त भागाः वर्द्धन्ते । तत्साधनोपायस्तु—प्रथमे चयने पद्याप्रमाणेन पृथक् चतुर्दश चतुरस्राणि संसाध्य तानि नानाप्रमाणसमासविधिना एकीकृत्य चतुर्दशकरणीकमेकं चतुरस्रं साधयेत् । ततः पद्याप्रमाणक्षेत्रं सप्तधा विभज्य तस्य त्रीन् भागान् समस्य = चतुरस्रं कृत्वा तत्सप्तमभागत्रयसाधितं चतुरस्रं चतुर्दशकरणीके चतुरस्रे नानाप्रमाणसमासविधिनाऽऽवपेत् । तदावापे कृते यावच्चतुरस्रं जायते सैकशतविधे पद्याभिर्दक्षिणोत्तरं पूर्वापरं वा पङ्क्तिस्था-

एवमेकशतविधे प्रक्रमप्रमाणमुक्त्वा द्वितीये चयने प्रक्रमप्रमाण माह—

**द्वितीये वा सप्तसु प्रक्रमेषु प्रक्रममवधाय तस्य सप्तम भागेन प्रक्रमार्थः ॥ ३ ॥**

द्वितीयेऽष्टविधेऽग्नौ सप्तसु प्रक्रमेषु प्रक्रमपरिमितकरण्या निर्मितेषु सप्तसु समचतुरस्रेषु एकं प्रक्रमम् = एकप्रक्रमक्षेत्रफल मवधाय प्रक्षिप्य समस्य समचतुरस्रीकृत्य तादृशस्य प्रक्रमस्य सप्तमभागेन प्रक्रमार्थः कार्यः। अर्थात् तस्य समचतुरस्रस्य सप्तमभागेन सप्तमांशेन अतिदीर्घचतुरस्रेण यत्समचतुरस्रं स प्रक्रमः। अर्थात् तस्य क्षेत्रस्य करणीरज्जुर्द्वितीयेऽष्टविधेऽग्नौ प्रक्रमो बोध्यः (१)। तेनेदं फलितम्। आद्येऽग्नौ यस्त्रिपदः प्रक्रमः, तत्र तस्यैव प्रक्रमस्य सप्तमांशवर्द्धनेन द्वितीयस्याग्नेः प्रक्रमः। एवं द्विगुणितप्रक्रमसप्तमांशवर्द्धनेन नवविधेऽग्नौ प्रक्रमः। एवं त्र्यादिगुणितसप्तमांशवर्द्धनेनैव दशविधाद्यग्नौ प्रक्रमो बोध्य इति (२) ॥ ३ ॥

एवं द्वितीये चयने प्रक्रमवर्द्धनमुक्त्वा पुनरपि तदर्थं प्रकारान्तरमाह—

**प्रक्रमेण वा सप्तसप्तमभागेन प्रक्रमार्थः ॥४॥**

---

पिताभिरेकः पुरुषः। एवंविधेन पुरुषेण द्विपुरुषां रज्जुं मित्वेत्यादिकल्पोक्त विधिनाऽऽत्मपक्षपुच्छादिकं साध्यम्। एवं विधाभिस्तिसृभिः पद्याभिः पूर्वापरस्था पिताभिरेकः प्रक्रम इति।

(१) महीधरः। "अयमर्थः—त्रिपदप्रक्रमक्षेत्रं सप्तधा विभज्य स्वसप्तभागं चतुरस्रीकृत्य प्रक्रमक्षेत्रे भावपेत् नानाप्रमाणसमासविधिना। ततः सप्तमांशाधिकप्रक्रमक्षेत्रकरण्या द्वितीयचयने प्रक्रमकार्यं कर्तव्यम्। नवविधे तृतीये चयने प्रक्रमक्षेत्रस्य द्वौ सप्तमभागौ प्रक्रमक्षेत्रमध्ये प्रक्षेप्यौ, चतुर्थे त्रयः, पञ्चमे चत्वारः, षष्ठे पञ्च, सप्तमे षट्, अष्टमे चयने प्रक्रमक्षेत्रद्विकरण्या समचतुरस्रं कृत्वा तस्य सप्तमो भागः प्रक्रमक्षेत्रमध्ये आवपनीयः। चतुर्थे द्विकरण्या साधितस्य सप्तमो भागः, पञ्चमे चतुःकरण्या साधितस्य सप्तमो भागः, षष्ठे पञ्चकरण्या साधितस्य सप्तमो भागः, सप्तमे षष्ठकरण्या साधितस्य सप्तमो भाग इत्यादि"।

(२) अयमर्थः—त्रिपदप्रक्रमप्रमाणानि सप्त समचतुरस्राणि समस्यैकं समचतुरस्रं कृत्वा तत्र त्रिपदप्रक्रमचतुरस्रमावपेत्। ततस्तस्य वर्द्धितक्षेत्रस्य यः सप्तमो भागः, तं समचतुरस्रीकृत्य तत्करण्या प्रक्रमकार्यं द्वितीये चयने विधेयम्।

यद्वा सप्तमभागसहितेन प्रक्रमेण प्रक्रमकार्यं द्वितीये चयने कार्यम् ॥ ४ ॥

## एवमेवैकशतविधात् ॥५॥

यथाऽष्टविधे द्वितीयचयने एकसप्तमांशवृद्धिरुक्ता। एवम् आ एकशतविधात् नवविधादेकशतविधचयनपर्यन्तं द्वित्र्यादयोऽभ्य-स्तसप्तमांशाः प्रक्रमक्षेत्रे वर्धनीयाः ॥ ५ ॥

अन्तःपात्य-गार्हपत्ययोर्वृद्धिं प्रतिषेधति—

## नान्तःपात्यगार्हपत्ययोर्वृद्धिर्भवति तावदेव योनिर्भवति न वै जातं गर्भं योनिरनुवर्द्धत इतिश्रुतेर्वृद्धे-रत्यन्तप्रतिषेधः ॥६॥

अन्तःपात्यगार्हपत्ययोर्वृद्धिर्न भवति। उख्याग्निस्थाने कृता व्या-ममात्रविस्तारा मण्डलाकारा गार्हपत्यचितिर्गार्हपत्यशब्देनोच्यते। तस्मात्पूर्वभागे वेद्यन्तपर्यन्तं प्रक्रमत्रयपरिमितो भूभागोऽन्तःपात्य शब्दे-नोच्यते। अत्र चयने प्रक्रमस्त्रिपदः। तयोर्द्वितोयादिचयनेषु अग्निक्षेत्र-वेदीष्टकावत् वृद्धिः प्राप्ता, सा निषिध्यते। कुतः? तावदेव योनिर्भ-वति। अन्तःपात्यसहिता गार्हपत्यचितिः श्रुतावग्नेर्योनित्वेनोक्ता। तावत्क्षेत्रं योनिर्भवति। भवतु योनिस्तथापि वृद्धिः कथं वार्यत इत्याह— न वै जातमिति। जातं गर्भमनु = गर्भोत्पत्तेः पश्चात् योनिर्न वर्द्धते। यावद्योनौ गर्भः स्थितस्तावद् गर्भवृद्ध्यनुसारेण योनिर्वर्द्धते। गर्भो-त्पत्यनन्तरं गर्भ एव वर्द्धते न योनिः, इति श्रुत्या उक्तत्वात् अन्तः पात्य—गार्हपत्यचित्योरत्यन्तं वृद्धिप्रतिषेधः ॥ ६ ॥

तुल्यप्रमाणानां द्वित्रादिपरार्द्धपर्यन्तानां समचतुरस्राणां द्विकरण्याद्युपायेन समासविधिरुक्तस्तस्य दुष्करत्वात्सुगमोपायेन करणीमाह—

## यावत्प्रमाणानि समचतुरस्राण्येकीकर्तुं चिकीर्षेदेकोनानि तानि भवन्ति तिर्यग्द्विगुणान्येकत एकाधिकानि त्र्यस्त्रिर्भवति तस्येषुस्तत्करोति ॥ ७ ॥

यावत्प्रमाणानि यावत्सङ्ख्याकानि समचतुरस्राणि समानानि

चतुरस्राणि = एकीकर्तुमिष्टानि एकोनानि एकरहितसंख्याकानि, तानि द्विगुणानि कृत्वा एकपङ्क्तौ तथा स्थापयेत् यथा सर्वेषामाधार-रेखा एकरेखायां स्युः। ततस्तां सर्वाधारयोगरूपरेखां तिर्यङ्मानीं कुर्यात्। एवं एकाधिकानामिष्टसंख्याकचतुर्भुजानां च एकपङ्क्तौ स्थापनेन या योगरूपाऽऽधाररेखा तत्प्रमाणौ भुजौ कुर्यात्। एवमाभ्यां भुजाभ्यां तस्यां तिर्यङ्मानीरूपाधाररेखायां यत् त्र्यस्रिक्षेत्रं भवति तस्य इषुः भुजद्वययोगजातशीर्षकोणबिन्दोः आधारार्द्धं यावत् लम्बसूत्रस्यार्द्धं, सा करणी भवति, तया करण्या कृतं समचतुरस्रमभी-ष्टचतुरस्राणि समस्यति।

अत्र आधाराग्रबिन्दुद्वयलम्बादूर्ध्वबिन्दुगतवृत्ते विहिते आधारो ज्यारूपः, लम्बार्धं तु शररूपम्, इत्यतो लम्बादूर्ध्वस्य इषुत्वमन्वर्थ-कमिति ध्येयम् ॥ ७ ॥

यूपैकादशिन्यां वेदिवद्र्धनं वक्तुं प्रतिजानीते—

## यथायूपं वेदिवर्धनमित्येतद्वक्ष्यामः ॥ ८ ॥

"यथायूपं वेदिवद्र्धनम्" ( ८।८।२१ ) इति यत्कल्पकारेणोक्तं तद्वक्ष्यामः वेदिवर्धनविधिं कथयामः। "यूपैकादशिनी चेद्रथाक्ष मात्राण्यन्तराणि, पूर्वार्धं वा समं विभज्य" ( ८।८।७ ) इति एकादशयूपानां स्थानान्युक्त्वोक्तं 'यथायूपं वेदिवर्द्धनम्' इति। यथायूपशब्देन वेदेः पूर्वभागे द्वादशाङ्गुलवृत्तरूपमेकादशयूपानां स्थौल्यमुच्यते। "चतुःशतमक्षः" ( २।३ ) इति शुल्बकृता उक्तत्वात् चतुरधिकशताङ्गुलप्रमितानि रथाक्षमात्राणि। दश यूपान्तरालानि च यथा भवन्ति तथा वेदिः कर्त्तव्या। वेदिवर्धनं विना "अन्तर्वेदि मिनोति" (का. श्रौ. ६।२।८) इत्ययमर्थोऽन्यथा कृतः स्यात्, कतिपय यूपानां वेद्यसंस्पर्शात् (१) ॥ ८ ॥

---

(१) अयं भावः ज्योतिष्टोमे कल्पकारेण एकः पशुः, ऐकादश वा पशवो विहिताः। एकादशपशुपक्षेऽपि एकस्मिन्यूपे एकादशानां पशूनां नियोजनम्, एकादशसु यूपेषु वेति पक्षद्वयमुक्तम्। तत्र यूपैकादशिनीपक्षे वेदेः पूर्वभागं चतुर्विंशत्यरत्निमितमेकादशधा समं विभज्य तत्रैकादश यूपान्निखनेदित्येकः पक्षः। प्रतियूपं रथाक्षमानानि चतुरधिकशताङ्गुलमितानि दशसङ्ख्याकानि यूपा-न्तरालानि कृत्वा तत्र एकादश यूपान्निखनेदिति द्वितीयः पक्षः। तत्र पूर्वार्द्धसम-विभागपक्षे वेदिवृद्धिर्न भवति।

वेदिवर्द्धनं प्रतिज्ञातं, तच्च प्रक्रमसाध्यम्। अतो यूपैकादशिन्यां यूपानां रथाक्षमात्रान्तरालपक्षे वेदिसाधनार्थं प्रक्रमप्रमाणमाह—

**या रज्जुरेकादशोपरवान्त्संक्षिपति दश च रथाक्षांस्तस्या यश्चतुर्विंशो भागः स प्रक्रमः ॥ ९ ॥**

या रज्जुरेकादश संख्याकानुपरवान् = यूपगर्तान् द्वादशाङ्गुलप्रमाणान्, तथा दश रथाक्षान् = चतुरधिकशताङ्गुलप्रमितानि दशसंख्याकानि यूपान्तरालानि च संक्षिपति = मिनोति, एतावदायता रज्जुः पञ्चविंशत्यङ्गुलाधिकाऽष्टाचत्वारिंशदरत्निमिता भवति। तस्या यश्चतुर्विंशो भागः तृतीयभागसहितमेकमर्द्धाङ्गुलं द्वावरत्नी, स प्रक्रमः = यूपैकादशिन्यामेतावत् प्रक्रमप्रमाणमित्यर्थः ॥ ९ ॥

तेन वेदिमानं कुर्यादित्याह—

**तेन वेदिं निर्माय द्वादशाङ्गुलं पुरस्तादपच्छिद्य तद्यूपावट्याच्छङ्कोः पुरस्तात्प्राञ्चमवधाय तस्मिन्यूपान्मिनोति ॥ १० ॥**

तेन वर्द्धितप्रमाणेन पूर्वोक्तेन प्रक्रमेण वेदिं निर्माय "षट्त्रिंशत्प्रक्रमा प्राची" (का. श्रौ. ८।३।८) इत्यादिविधिना विरच्य पुरस्ताद् = वेदेः पूर्वभागे द्वादशाङ्गुलं = द्वादशाङ्गुलप्रमाणविस्तारमपच्छिद्य = अर्थात् वेदिपूर्वभागेशानकोणादारभ्याग्नेयकोणपर्यन्तं द्वादशाङ्गुविस्तारं द्वासप्तत्यधिकैकादशशताङ्गुलमितदीर्घमतिदीर्घचतुरस्ररूपं दक्षिणोत्तरायतं वेदिक्षेत्रं छित्वा तं छिन्नं भागं यूपावट्यात् = यूपावटे गर्ते भवो यूपावट्यः, तस्मात् शङ्कोः प्राञ्चं = पूर्वापरायतमवधाय = संयोज्य तस्मिन् = छिन्ने = पूर्वापरतया संयोजिते वेदिभागे रथाक्षमात्रान्तरालान् गर्तान् खात्वा तेषु प्राक्संस्थान् यूपान मिनोति। एवं कृते एकादशापि यूपा वेद्यन्तरे निवेशिताः स्युः, प्राची च यूपपङ्क्तिः कृता भवति इति पूर्वपक्षः ॥ १० ॥

सिद्धान्तमाह—

**पार्श्वयोर्वाऽर्द्धमन्तर्वेदीति श्रुतेरर्धकान् ॥ ११ ॥**

वाशब्दः पूर्वपक्षं व्यावर्तयति । पार्श्वयोः = यूपावटस्य शङ्कोर्दक्षिणोत्तरपार्श्वयोरर्धकान् = अर्धार्धान् पञ्च पञ्च यूपान् मिनुयात्, न पूर्वभागे । पार्श्वयोरर्धकानित्युक्ते मध्यमे यूपावटे प्रथमोऽर्थात्सिद्धः । एवमेकादश यूपान् दक्षिणोत्तरपङ्क्त्या मिनुयात् । एवं च पूर्वोक्तो वेद्यपच्छेदो न कार्यः । कुतः? अर्धमन्तर्वेदीति श्रुतेः । यूपस्यार्द्धमन्तर्वेदि, अर्द्धं बहिर्वेदि भवति इति शाखान्तरश्रुतेः । यूपगर्तो द्वादशाङ्गुलवृत्तः । स च गर्तोऽर्द्धं वेद्यां निखातव्योऽर्द्धं बहिः । एवं कृते वेदिवर्द्धनं सार्थकं भवति, एकादश यूपानां वेदिस्पर्शश्च स्यात् । पूर्वपक्षसूत्रे कथिता प्राची यूपपङ्क्तिस्तु तीव्रसुति यागे भवति (१) ॥ ११ ॥

मतान्तरमाह—

**एके प्रथमौ प्रकृतिवत् ॥ १२ ॥**

एके आचार्याः प्रथमोत्तमौ = आद्यन्तौ यूपौ प्रकृतिवत् = वेदिगतार्द्धौ कार्यौ, नत्र अन्ये बहिर्वेदि कार्या इतीच्छन्ति । अतो विकल्पः ॥ १२ ॥

वर्द्धितावर्धितयूपैकादशिन्या वेदेर्नामधेयमाह—

**सैषा शिखण्डिनी वेदिर्भवति ॥ १३ ॥**

सा एषा यूपैकादशिनीयुक्ता वेदिर्वर्द्धिताऽप्यवर्द्धिताऽपि शिखण्डिनीत्युच्यते ॥ १३ ॥

इति वेदीष्टकावृद्धिनिरूपणी षष्ठी कण्डिका ॥ ६ ॥



**भवन्ति चात्र श्लोकाः ॥ १ ॥**

अत्र सूत्रोक्तेऽर्थे श्लोका अपि केचन सन्ति शुल्बकारकृता एव ॥१॥

ते यथा—

**द्विहस्ते लक्षणं कुर्यात्रिहस्तो मध्यमः शिरः ॥**
**शिरः पश्चाद्वितस्तिः स्यात्पूर्वार्धे हस्त एव च ।**
**सार्धहस्ते च पाशः स्याद्वेदिः स्यात्पौर्णमासिकी ॥ २ ॥**

---

(१) अस्ति तीव्रसुदभिधानः कश्चिद्यागः । तत्र यूपैकादशिनीपक्षे यागान्तरवद्दक्षिणोत्तरा यूपपङ्क्तिर्न भवति, किन्तु पूर्वापरायता भवति । तथाऽग्निष्ठ एवान्तर्वेद्यर्द्धगतो भवति । अन्ये तु बहिर्वेदिगता वचनाद्भवन्ति । अतश्च तदर्थमपि वेद्यपच्छेदो न कार्य इति रामचन्द्रवाजपेयिप्रभृतयः ।

संख्याज्ञः परिमाणज्ञः समसूत्रनिरञ्छकः।
सम्भूमौ भवेद्विद्वान् शुल्बवित् परिपृच्छकः ॥ ३ ॥

संख्याप्रतिपादकं गणितशास्त्रं, तज्ज्ञः। परिमाणं मानविधिः, तज्ज्ञः। समसूत्रेणाकर्षणकर्ता। परिपृच्छकः शिल्पादीनाम् ॥३॥

न जलात्सममन्यत् स्याद्वान्यद् वृत्तात्भ्रमा भवेत्।
नान्यद् दूरं भ्रमादूर्ध्वं नान्यत्सूत्रादृजुर्भवेत् ॥ ४ ॥

शतयोजनस्थमप्यभ्रान्तानां न दूरम्। यथा भ्रान्तिगोचरीकृतमासन्नमपि दूरम् ॥४॥

तिर्यङ्मान्याश्च सर्वार्थैः पार्श्वमान्याश्च योगवित्।
करणीनां विभागज्ञो नित्योद्युक्तश्च कर्मसु ॥ ५ ॥

सर्वार्थैः = सर्वप्रयोजने करणीनां करणीतत्करण्यदण्यादीनाम् ॥५॥

शास्त्रबुद्ध्या विभागज्ञः परशास्त्रकुतूहलः।
शिल्पिभ्य स्थपतिभ्यश्चाप्याददीत मतीः सदा ॥ ६ ॥
षडङ्गुलपरीणाहं द्वादशाङ्गुलमुच्छ्रितम् ।
जरठं चाव्रणं चैव शङ्कुं कुर्याद्विचक्षणः ॥ ७ ॥
द्विवितस्तिप्रमाणस्तु खादिरो मुद्गरस्तथा ।
शङ्कुस्तेन निखातव्यस्तस्मात्तस्य परिग्रहः ॥ ८ ॥

षडङ्गुलद्वादशाङ्गुलयोर्विकल्पोऽल्पबृहत्क्षेत्रसाधनव्यवस्थितः। परिणाहोऽधःशिरा, विस्तारो वा। जरठं दृढम् ॥८॥

एकतक्ष ऋजुस्तीक्ष्णः खादिरः सम आयतः।
शङ्कुः कार्यस्तु शुल्बज्ञैस्तस्यार्धं गमयेन्महीम् ॥ ९ ॥

एकत एव तक्षणेन सूक्ष्मीकरणार्थं तनूकृतः। खादिर इति सारकाष्ठोपलक्षणार्थम्। अर्धमिति दृढस्थितियोग्यतोपलक्षणार्थम् ॥९॥

प्रादेशमात्रो हविर्यज्ञे पूर्वलक्षणलक्षितः।
शङ्कुरामशिराः कार्यस्तस्याप्यर्धं निखापयेत् ॥१०॥

आमशिरा आर्द्रशिराः ॥१०॥

चतुरस्रं मुद्गरं तत् षोडशाङ्गुलमायतम्।
अविद्धं क्रमणीयं च दारुमध्याच्च निर्मितम् ॥११॥

अविद्ध काष्ठान्तरेणाप्रोतम्। क्रमणीयं शङ्कुहननरूपक्रमणार्हम् ॥११॥

अजीर्णा ग्रथिनी सूक्ष्मा समा श्लक्ष्णा त्वरोमशा।
रज्जुर्मानाधिका कार्या अध्वरे योगमिच्छता ॥१२॥

शाणी वा बाल्वजी चैव वैणवी वा विधीयते।
रज्जुस्तूभयतःपाशा त्रिवृता यज्ञकर्मणि ॥१३॥

रज्जुर्मुञ्जमयी कार्या शणैस्तु परिमिश्रिता।
कात्यायनो वदत्येवमखोडा कुशबल्वजैः ॥१४॥

अखोडा = अखण्डा ॥१४॥

नवके लक्ष्णं कुर्यात् त्रीणि कुर्यात्त्रिषु त्रिषु।
उत्तमो नवकः पाशः सदसो मानमुच्यते ॥१५॥

प्रथमं नवारत्निषु चिन्हं श्रोणिमानार्थम्, ततस्त्र्यरत्निषु श्रोणिभागे निरञ्छनार्थम्, पुनस्त्र्यरत्निष्वंसनिरञ्छनार्थम, ततोऽपि त्र्यरत्निष्वंसार्थम, ततो नवसु पाश एव ॥१५॥

पञ्चदशस्वेकविंशं त्रिकमपरं च परतस्त्रिकं चापि।
द्वादशसु पाश उत्तम इति सोमे रज्जुमानमिति ॥१६॥

पञ्चदशसु श्रोणिनिरञ्छनार्थं चिन्हम्, ततश्चिन्हादेकविंशति प्रक्रमेष्वायमनार्थं संख्यासमासभङ्गचिन्हम्, ततस्त्रिषु प्रक्रमेषु निरञ्छनचिन्हम्, ततोऽपि त्रिष्वंससमानयनार्थं चिन्हम्, (चतुर्विंशतिप्रक्रमा हि प्राची) ततो द्वादशसु पाश एवेति चतुष्पञ्चाशत्प्रक्रमा रज्जुः प्रमाणार्द्धं वाऽभ्यस्येति कथिता ॥१५॥

पदस्याक्ष्णया, तिरश्ची याऽनयोरक्ष्णया भवेत्।
सौत्रामण्यां निमातव्या वेदिः स्यात्सोमवत्तया ॥१७॥

पदक्षेत्रस्याक्ष्णया पार्श्वमानी, तिरश्ची = तिर्यङ्मानी, तयोरक्ष्णया तृतीयकरणी सौत्रामण्यां प्रक्रम इत्यर्थः। एवं च परिशिष्ट-

कृतोऽपि त्रिपदप्रक्रमतृतीयांश एव सौत्रामण्यां प्रक्रमक्षेत्रमिष्टमिति गम्यते। केचित्तु "सोमे तु द्विपदो भवेत्" इति यः परिशिष्टे द्विपदः सौमिकः प्रक्रम उक्तः, तत्तृतीयभागसंक्षेपिकां तृतीयकरणीमाहुः, तन्न। पदस्याद्यण्येत्यादिपरिशिष्टवाक्यान्तरविरोधापातात्। तेन चयनवेदिरपि सोमवेदिरेव। अग्निः सोमाङ्गमित्युक्तत्वात्। तत्र यः प्रक्रमस्त्रिपदस्तस्य तृतीयभागसंक्षेपिका या करणी सैव सौत्रामण्यां प्रक्रमः। चयनानन्तरं च तदङ्गत्वेनापि श्रुतौ सौत्रामणी पठितेति सैव वेदिः प्रस्तुता। द्विपदप्रक्रमस्त्वनग्निकसोमवेदेर्विषय इति ॥१७॥

नीहारेण घनैर्वाऽपि ज्योतिषामभ्रदर्शने।
अप्सु दीपं प्रगृह्णीयाद्यावत्समसि दर्शनम् ॥१८॥
प्रमाणं च प्रमेयं च यच्चान्यद्वस्तुसंज्ञकम्।
सर्वं तच्छास्त्रतो ज्ञात्वा यज्ञे सिध्यन्ति याज्ञिकाः ॥१९॥
यथा न क्षीयते मानं यथा च न विवर्धते।
यथा च रमते दृष्टिस्तथा योगं समाचरेत् ॥२०॥
अरत्निश्चतुरस्रश्च पूर्वस्याग्नेः खरो भवेत्।
रथचक्राकृतिः पश्चाच्चन्द्रार्ध इव दक्षिणः ॥२१॥
अग्नीनां तु खरः कार्यो मेखलात्रयसंयुतः।
द्वादशाङ्गुल उच्छ्राये विस्तारे चतुरङ्गुलः ॥२२॥
तन्तुः पुष्करनालस्य षड्गुणः परिवेष्टितः।
वत्सतर्यास्त्रिहायण्या बालेन सदृशो भवेत् ॥२३॥
त्रयस्त्रिहायणीबालाः सर्षपार्धं प्रचक्षते।
द्विगुणं सर्षपं विद्याद्यवः पञ्च तु सर्षपाः ॥२४॥
अङ्गुलस्य प्रमाणं तु षड्यवाः पार्श्वसंस्थिताः।
चतुर्विंशाङ्गुलोऽरत्निर्वितस्तिर्द्वादशाङ्गुलः ॥२५॥
व्यामस्यात्र प्रमाणं तु चतुर्न्यूनं शताङ्गुलम्।
पुरुषस्य प्रमाणं तु विंशतिस्तु शताधिका ॥२६॥

विंशतिशताङ्गुलः पुरुषः, तत्पञ्चमोऽशोऽरत्निः, चतुररत्निर्व्यामः।

अरत्नि चतुर्विंशो भागोऽङ्गुलम्, अरत्न्यर्धो वितस्तिः, अङ्गुलस्य षष्ठोंऽशो यवोदरविस्तारः, तस्य पञ्चमोंऽशः सर्षपः तस्यार्द्धं सर्षपार्द्धम्, तस्य तृतीयोंऽशस्त्रिहायणीबालः, तस्य षष्ठोंऽशः पुष्करतन्तुरिति सङ्क्षिप्तोऽर्थः ॥ २६ ॥

हिरण्यशकलार्थे तु हिरण्यं यस्य नोच्यते ।
कृष्णलेनैव तद्व्याख्या यज्ञे सिद्ध्यति याज्ञिकी ॥२७॥
कृष्णलं त्रियवं मानं ताम्रायसमतः परम् ।
सुवर्णार्धं च माषाणां सुवर्णाश्च त्रिसप्तति: ॥२८॥
त्रीणि चैव सहस्राणि दद्याद् बहुसुवर्णके ।
भूयः स्थपतितो ज्ञात्वा संज्ञास्त्वन्यासु मानवित् ।
स्वर्णकारो यथाऽभ्यासास्तथा भूयो विवर्धते ॥२९॥
ह्रसते शोषपाकाभ्यां द्वात्रिंशद्भागमिष्टका ।
तस्मादार्द्रप्रमाणं तु कुर्यान्मानाधिकं बुधः ॥३०॥
अज्ञात्वा शुल्बसद्भावं यज्ञे सौत्रामणीसुते ।
वेदिं ये कर्त्तुमिच्छन्ति गिरिं भिन्दन्ति ते नखैः ॥३१॥
दण्डरज्ज्वर्द्धमभ्यस्य षष्ठे त्वर्धस्य लक्षणम् ।
तथैव चेतरत्रापि तिर्यङ्मानं यदृच्छया ॥३२॥
यावत्प्रमाणा रज्जुः स्यात्तावानेवागमो भवेत् ।
आगमार्द्धे भवेच्छङ्कुस्तदर्द्धे च निरञ्छनम् ॥३३॥

आगमोऽभ्यासभागः, आगमार्द्धे शङ्कुः श्रोण्यंसार्थः, अन्तरर्द्धे संख्यासमासभङ्गागमार्द्धचिह्नयोरन्तराले निरञ्छनचिह्नम् ॥ ३३ ॥

आधाने पदिकं कुर्याद् द्विपदः सौमिको भवेत् ।
अग्नौ च त्रिपदं कुर्यात् प्रक्रमं याज्ञिको बुधः ॥३४॥
कृत्तिका श्रवणः पुष्यश्चित्रास्वात्योर्यदन्तरम् ।
एतत्प्राच्या दिशो रूपं युगमात्रोदिते पुरः ॥३५॥

षडशीत्यङ्गुलं युगमात्रं यदोदितं कृत्तिकादिनक्षत्रमाकाशमारोहति, तदा तदुपलक्षिता प्राची ज्ञेया ॥ ३५ ॥

पञ्चाशच्छङ्करा: पश्चात्पूर्वे देयास्त्रिसप्तति: ।
दक्षिणे तु प्रदातव्या दश पञ्च च सप्त च ॥३६॥

शंस्यश्चतुर्विंशतिपार्श्वभागश्चतुर्दशैराविलिखेत्तु मध्यम् ।
तथैव चाष्टद्विगुणैरथर्यस्त्रिंशाङ्गुरायम्य हरेत्तृतीयम् ॥३७॥

अग्नेरुदक् सार्द्धनवाङ्गुले मध्यं ततो लिखेत् ।
वृत्तमेकोनविंशत्या प्राची ज्या मध्यगा भवेत् ।
उदगर्द्धं विहायार्वाक् खरोऽग्नेर्दक्षिणस्य तु ॥३८॥

दक्षिणाग्निस्थानादुत्तरतः सार्द्धेषु नवाङ्गुलेषु मध्यं प्रकल्प्य तत एकोनविंशत्यङ्गुलमितव्यासार्द्धेन वृत्तं कृत्वा तन्मध्ये प्राची रेखारूपा कार्या, तया वृत्तं द्विधा विभक्तं भवति, तत उत्तरभागमपहाय दक्षिणभागेऽरत्निमितो दक्षिणाग्निखरो विधेयः ॥३८॥

सूत्रदोषदरिद्रस्य गूढमन्त्रस्य धीमतः ।
समाप्तेयं क्रिया शौल्वी कात्यायनमहात्मनः ॥३९॥

सूत्रस्य ग्रन्थविशेषस्य दोषा असामञ्जस्यादयः, तैर्दरिद्रस्य रहितस्य, गूढत्वेन स्वं प्रभावमाख्यापयतो धीमतः शौल्वी क्षेत्रमानसम्बन्धिनी । शुल्व माने । शुल्वनं शुल्वः । तस्येदमित्यण् । टिड्ढेति ङीप् ॥३९॥

इति कातीयशुल्वसूत्रवृत्तौ सप्तमी कण्डिका ॥ ७ ॥

इति श्रीमन्महामहोपाध्यायाहिताग्नि पं० श्री १०६ प्रभुदत्तशर्मसुत-श्रीविद्याधरशर्मकृता कात्यायनकृतशुल्वसूत्रवृत्तिः समाप्ता ।

शमिति ।



# कातीयशुल्बसूत्राणामकारादिक्रमेण सूचीपत्रम् ।

पञ्चाशच्छर्कराः पश्चात्पूर्वं देयास्त्रिसप्ततिः ।
दक्षिणे तु प्रदातव्या दश पञ्च च सप्त च ॥३६॥

शंस्यश्चतुर्विंशतिपार्श्वभागश्चतुर्दशैराविलिखेत्तु नयम् ।
तथैव चाष्टद्विगुणैरथर्यस्त्रिशद्भिरायम्ध हरेत्तृतीयम् ॥३७॥

अग्नेरुदक् सार्द्धनवाङ्गुले मध्यं ततो लिखेत् ।
वृत्तमेकोनविंशत्या प्राची ज्या मध्यगा भवेत् ।
उदगर्द्धं विहायार्वाक् खरोऽग्नेर्दक्षिणस्य तु ॥३८॥

दक्षिणाग्निस्थानादुत्तरतः सार्द्धेषु नवाङ्गुलेषु मध्यं प्रकल्प्य तत एकोनविंशत्यङ्गुलमितव्यासार्द्धेन वृत्तं कृत्वा तन्मध्ये प्राची रेखारूपा कार्या, तया वृत्तं द्विधा विभक्तं भवति, तत उत्तरभागमपहाय दक्षिणभागेऽरत्निमितो दक्षिणाग्निखरो विधेयः ॥३८॥

सूत्रदोषदरिद्रस्य गूढमन्त्रस्य धीमतः ।
समाप्तेयं क्रिया शौल्वी कात्यायनमहात्मनः ॥३९॥

सूत्रस्य ग्रन्थविशेषस्य दोषा असामञ्जस्यादयः, तैर्दरिद्रस्य रहितस्य, गूढत्वेन स्वं प्रभावमाख्यापयतो धीमतः शौल्वी क्षेत्रमानसम्बर्द्धिनी । शुल्ब माने । शुल्बनं शुल्बः । तस्येदमित्यण् । टिड्ढेति ङीप् ॥३९॥

इति कातीयशुल्बसूत्रवृत्तौ सप्तमी कण्डिका ॥ ७ ॥

इति श्रीमन्महामहोपाध्यायाहिताग्नि पं० श्री १०६
प्रभुदत्तशर्मसुत-श्रीविद्याधरशर्मकृता कात्या-
यनकृतशुल्बसूत्रवृत्तिः समाप्ता ।

शमिति ।



# कातीयशुल्बसूत्राणामकारादिक्रमेण सूचीपत्रम् ।





**चौखम्बा संस्कृत प्रतिष्ठान**

**दिल्ली**